# काव्यप्रकाशः

[सङ्केतः; सङ्केतः (रुय्यकः) ; बालचित्तानुरञ्जनी; काव्यादर्शः; विवेकः; दीपिका; दर्पणः; साहित्यचूडामणिः; सम्प्रदायप्रकाशिनी; मधुमती; विस्तारिका; सारबोधिनी; काव्यप्रदीप; काव्यप्रकाशखण्डनम्; आदर्शः; सुधासागरः; विवरणम् संस्कृत व्याख्या समलंकृता]

## पञ्चमः खण्डः


**डा० ज्योत्स्ना मोहन**

श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृत विद्यापीठ,

नई दिल्ली-११००१६



NAG PUBLISHERS

**नाग प्रकाशक**

११ए०/यू०ए० जवाहर नगर, दिल्ली-७

# विषयानुक्रमणिका

## पञ्चम उल्लासः

# अथ नवम उल्लासः

गुणविवेचने कृतेऽलंकाराः प्राप्तावसरा, इति संप्रति शब्दालंकारानाह

**(सू० १०३) यदुक्तमन्यथावाक्यमन्यथान्येन योज्यते ।**

**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥ ७८ ॥**

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । तत्र पदभङ्गश्लेषेण यथा—

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो

वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।

युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः

सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥ ३५२ ॥

---

सङ्केतः

लोकोत्तरोऽयं सङ्केतः कोऽपि कोविदसम्मतः ।

शब्दस्याडम्बरो यत्र भूषणत्वेन निश्चितः ॥

यदुक्तमिति । अन्येन अन्यथोक्तं वाक्यं अन्येन अन्यथा योज्यते इत्यन्वयः । श्लेषेणेति काक्वेति च हेतौ तृतीया । तथा श्लेषकाकुभ्याम् ।

तत्रेति । पदानां भङ्गाभङ्गाभ्यां या श्लेषवक्रोक्तिः तत्रेत्यर्थः ।

नारीणामिति । चेज्जनासि तन्नारीणामनुकूलमाचरसि इति योगः । नारीणां स्त्रीणाम्, भङ्गे तु न अरीणाम् । वामाः स्त्रियः प्रतिकूलाश्च । हितकृत् हितं करोति कृन्तति च । बलं शक्तिः बलः दैत्यश्च । तदभावेन प्रसिद्धात्मा दुर्बलः बिडौजाश्च । मतं अभीष्टम् । अत्र अभङ्गभङ्गाभ्यां उक्तिप्रत्युक्ती ।

### सङ्केतः (रुय्यकः)

[नारीणामिति] नारीणां स्त्रीणां, न अरीणामित्यन्यथायोजनम्। वामानामननुकूलानां स्त्रीणाञ्च। हितं करोति हितं कृन्ततीति च। अबलानां वनितानां दुर्बलानाञ्च। बलाभावेन प्रसिद्धात्मा दुर्बलः, बलाख्यस्य दैत्यस्याभावेन विनाशेन प्रसिद्ध इन्द्रः। मतमभिमतम्।

### बालचित्तानुरञ्जनी

अथ सप्तमोल्लासव्याख्या [नवमोल्लासव्याख्या]

गुणविवेकानन्तरमलङ्काराणां कः प्रस्ताव इत्यत आह गुणेति। तददोषौ शब्दार्थौ—इत्यादिनिर्देशक्रमेणालङ्कारनिरूपणस्यायमेवावसर इत्यर्थः।

**पठन्ति शब्दालङ्कारान् बहूनन्यान्मनीषिणः**
**परिवृत्तिसहिष्णुत्वान्न ते शब्दैकभागिन॥ इति**

**ते च वक्रोक्त्यनुप्रासौ यमकं श्लेष इत्यपि।**
**चित्रञ्च पञ्चमं षष्ठोऽप्यभ्यासः पुनरुक्तिवत्॥ इति।**

यदुक्तं तदन्येनान्यथोक्तम्, अन्येनान्यथा योज्यते इति आवृत्या योज्यम्। श्लेषो वक्ष्यते। काकुरुक्ता। अन्येन जनेन अन्यथोक्तं यद्वाक्यं अन्येन श्लेषेण काक्वा वान्यथा योज्यते सा वक्रोक्तिरित्यर्थः। तथा द्विधेत्येतद् व्याकरोति तथेति। श्लेषो द्विविधः। भग्नपदोऽभग्नपदश्च। तत्र भग्नपदश्लेषेण वक्रोक्तिमुदाहरति तत्रेति। नारीणामङ्गनानाम्। अनुकूलमाचरसि चेत् जानासि ज्ञातेति लोके व्यवह्रियसे। अरीणामनुकूलं नाचरसि चेत् तर्हि जानासि इत्यन्यथा कुर्वाणो द्वितीय आह कश्चेतन इति। चेतनः कः वामानां प्रतिकूलानां प्रियमादधाति, न कोऽपीत्यर्थः। एवं च नारीणामित्यस्य पदस्य न वैरिणामिति पदभङ्गे अन्यथा योजना। प्रतिकूलार्थं वामानामिति पदं अङ्गनार्थत्वेनान्यथा कुर्वन् आद्य आह हितकृदिति। भवान् अबलानां स्त्रीणां नैव हितकृत्, न हितकारी भवतीत्यर्थः। हितकारिवाचकं हितकृदिति पदं हितं कृन्तति छिनत्ति इत्यर्थपरतया अङ्गनावाचकम्। अबलापदं बलाभावपरतया चान्यथा कुर्वन् द्वितीय आह युक्तमिति। बलस्य सामर्थ्यस्य अभावेन प्रसिद्ध आत्मा यस्य तस्य दुर्बलस्य हितकर्तनं हितच्छेदनं किं युक्तम्? न युक्तमित्यर्थः। सामर्थ्यवाचकबलपदं बलासुरवाचकतया अन्यथा कुर्वन् आद्य आह सामर्थ्यमिति। भवतः इन्द्रमतविच्छेदं विधातुं कुतः सामर्थ्य मित्यर्थः।

### काव्यादर्शः

'उपकुर्वन्ति तम्' इत्यादिना रसस्याङ्गिनो यद् अङ्गं शब्दार्थौ तदाश्रिता अलंकारा रसमुपकुर्वन्तीति सामान्यं लक्षणमुक्तम्, अथ विशेषमाह—शब्दालंकारानिति। अर्थापेक्षया शब्दस्य प्रतीतेरन्तरङ्गत्वात् प्रथमं शब्दालंकारनिर्देशः। तत्र—

**वक्रोक्तिरनुप्रासो यमकं श्लेषोऽथ चित्रं च।**
**पुनरुक्तवदाभासः शब्दालंकरणानि षट्॥**

अन्यथेति । अन्यार्थघटनया । तथेति । यथा श्लेषेण काक्वा वाक्यस्य योगः, तथा वक्रोक्तिरपि ताभ्यां युक्ता द्विधा ।

'नारीणां स्त्रीणां, 'न अरीणाम्' इत्यन्यथा प्रयुक्तम् । 'जानासि' इत्येकस्योक्तिः । 'कश्चेतनः' इत्यन्यस्य । 'वामानाम्' प्रतिकूलानां स्त्रीणां च । 'हितकृद्' पुनराद्यस्योक्तिः । हितं करोति कृन्तति च । 'अबलानाम्' स्त्रीणां दुर्बलनां च । 'बलाभावेन प्रसिद्धात्मनो' दुर्बलस्य दैत्यस्य विनाशेन प्रसिद्धात्मन इन्द्रस्य । तुर्यपाद आद्यस्योक्तिः । 'पुरंदरस्य मतभिमतं तस्यच्छेदम् ॥'

## दीपिका

उल्लाससङ्गतिमाह वृत्तिकृत्—गुणेति । विवेचने विशेषलक्षणे । अलङ्कारा इति । गुणसामान्यलक्षणा-नुषङ्गेण कृतसामान्यलक्षणाः कृतप्रायशब्दार्थालङ्काररूपसामान्यविशेषलक्षणाश्च । करणीयविशेषलक्षणान्तराय प्राप्तावसरा इति । परिशिष्टतया शब्दालङ्कारानिति ।

अन्तरङ्गाश्रिततयाऽलङ्कारेभ्यो विशेषं विवक्षन् सर्वालङ्काराधिष्ठानतया प्रथमं वक्रोक्तिमाह—यदिति । अथ च कारिकाप्रथमार्धेन सामान्यलक्षणश्लेषेण काक्वा वेति विशेषलक्षणं सूच्यते । एवमन्यत्राप्येवंविधे बोध्यम् । अन्यथान्याभिप्रायेणान्यथा योज्यते प्रकारान्तरेण सङ्गस्यते ।

नारीणां स्त्रीणामिति केनचिदुक्ते नारीणां शत्रूणामिति कल्पनयाऽन्यदुत्तरमाह—कश्चेतन इति । वामानां प्रतिकूलानामिति विवक्षायामभङ्गेन वनितानामिति कल्पितम् । कृदिति । डुकृञ् करणे, कृती च्छेदन इत्यनयोः क्विपि तुल्यं रूपम् । अबलानां स्त्रीणां दुर्बलानाञ्च । बलं सामर्थ्यं तदभावेन प्रसिद्धात्मा दुर्बलः; बलनामदैत्यनाशेन विख्यातात्मा महेन्द्रश्च ।

## दर्पणः

एवं गुणान्निरूप्य तत्प्रस्तावे सामान्यतो लक्षितानामलङ्काराणां विशेषलक्षणप्रस्तावं दर्शयति वृत्तिकृत् गुणविवेचन इति । प्राप्तरसवा [प्राप्तावसरा] तदोषारिति [तददोषाविति] सामान्यलक्षणोद्दिष्टत्वात् । शब्दाल-ङ्काखनु [शब्दालङ्काराणां] तु प्रत्ययात्, प्रथमं शब्दस्य बुद्धिविषयत्वात् । तत्रैव वैदग्ध्ये विशेषाश्रयद्धेन [विशे-षाश्रयत्वेन] प्रथम वक्रोक्ति लक्षयति यदुक्तमिति । केनचिदन्यथा अस्यार्थत्वेनोक्तं वाच्यमन्येनान्यानुत्वेन यत् योज्यते सा च वक्रोक्तिरिति सामान्यलक्षणभागस्य संबन्धः । तच्चान्यथा योजनं श्लेषेण कांकारा [काक्वा] संभवतीति ।

तथेति । तथाविधोपाधिद्वययोगात् सा वक्रोक्तिर्द्विविधेति विशेषनिर्देशः । श्लेषस्य सभंगाभंगरूपेण द्वैविध्यात् ।

क्रमेणोदाहरणद्वयं दर्शयन्नाह तत्रेति । नारीणामिति अत्र नारीणामिति पदं केनचित् स्त्रीणामित्यर्थे नियो-ज्यमाना स्त्रीत्वं ते [स्त्रीत्वं बोध्यते] केनचिदुक्ते पदभंगेन न विवृणामित्यने [न अरीणामित्यने] घटयित्वा, अन्य उत्तरमाह कश्चेतन इति वामानां प्रतिकूलानां, एवं ददितवश्यैत रामानां स्त्रीणामिति कल्पयित्वा दुरहितत्वादित्यादि

हितकृत् हितकर्त्ता च्छेत्ता च, अबलानां स्त्रीणां दुर्बलानाञ्च। बलं सामर्थ्यं, तदभावेन प्रसिद्धार्थो दुर्बलः ! बलनामा दैत्यविनाशविख्यातार्था महेन्द्रश्च।

## साहित्यचूडामणिः

क्वणन्माणिक्यमञ्जीरमेखलाङ्गदकङ्कणाम्।
कवीनां रसनारङ्गे नृत्यन्तीं भारतीं भजे॥

अथ शब्दैकविषयानलङ्कारान् प्रचक्ष्महे।
यावतः प्राहुराचार्याः संक्षेपेण चिरन्तनाः॥

तत्रापि यमकादीनामस्पृष्टरससम्पदाम्।
काव्यानां गडुभूतत्वाद् दिङ्मात्रमुपवर्ण्यते॥

को नाम रसिको लोके लावण्यामृतवर्षिणि।
कपोलफलके तन्त्रयाः कुर्यादिरण्डकुण्डलम्॥

पठन्ति शब्दलङ्कारान् बहूनन्ये मनीषिणः।
परिवृत्तिसहिष्णुत्वान्न ते शब्दैकभागिनः॥

ते च वक्रोक्त्यनुप्रासौ यमकं श्लेष इत्यपि।
चित्रं च पञ्चमः षष्ठश्चाभासः पुनरुक्तवत्॥ इति।

यदुक्तमिति। अन्येन जनेनान्यथोक्तमन्येनान्यथा योज्यते इत्यावृत्त्या योज्यम्। श्लेषो वक्ष्यते। काकुरुक्ता। पदभङ्गेति। श्लेषो हि द्विधा भग्नपदोऽभग्नपदश्च। यत्र भट्टोद्भटमर्यादया क्रमेण शाब्दत्वमार्थत्वं च समर्थयिष्यते।

नारीणामिति। अङ्गनानामनुकूलमाचरसि चेत् जानासि ज्ञातेति लोके परिगृह्यसे। तदेतदरीणां वैरिणामनुकूलं नाचरसि चेदित्यन्यथा कुर्वाण आह— कश्चेतन इति। एवञ्च नारीणामित्यस्य न वैरिणामिति पदभङ्गेनान्यथा योजना। वामानां प्रतिकूलानामित्येतद् महिलार्थतयान्यथा क्रियते— हितकृदिति। भवान् महिलानां न हितकारी। अथ करोत्यर्थ कर्तनार्थत्वेनाङ्गनार्थं दुर्बलार्थतया चान्यथा करोति—युक्तमिति। बलस्य शरीरसारभूतस्याभावेन प्रसिद्धात्मनामित्येतद् बलस्यासुरविशेषस्य पराजयेन प्रख्यातः स्वभावो यस्येति पुरन्दरातया विषर्यस्यन्नाह—सामर्थ्यमिति।

## सम्प्रदायप्रकाशिनी

उल्लासयोः सङ्गतिमाह वृत्तिकारः—गुणविवेचने कृत इत्यादिना।

प्रतीतौ प्राथम्यादिहोल्लासे शब्दालङ्कारनिरूपणम्। तत्राप्युक्तान्यथाकरणलक्षणाया विच्छित्तेः स्थूलत्वादादौ वक्रोक्तिं लक्षयति—यदुक्तमन्यथेत्यादि। एकेनान्याभिप्रायेणोक्तं वाक्यमितरः श्लेषेण काक्वा

वा यदितरार्थपरतया योजयति, सा वक्रोक्तिः श्लेषकाकुमूलतया द्विधा ज्ञेया। तत्र श्लेषवक्रोक्तिः सभङ्गाभङ्गपद-निबन्धनतया द्विधेति त्रिभेदैषा।

तत्र सभङ्गपदां श्लेषवक्रोक्तिमुदाहरति—नारीणामिति। यदि नारीणामनुकूलतामाचरसि तदा त्वमभिज्ञोऽसीति कयाचिदुक्ते, अरीणामनुकूलं नाचरसीत्युक्तमिति कृत्वा परिहासपरो दयितोऽन्यथयितुमाह—कश्चेतनो वामानां प्रतिकूलानां प्रियमादधातीति। वामाः स्त्रिय इति कृत्वा सा तदप्यन्यथयति—तर्ह्यबलानां हितकृन्न भवानिति। अबला बलरहिता इति, हितं कृन्ततीति हितकृदिति च कृत्वा स पुनस्तरामन्यथयति—किं बलाभावप्रसिद्धात्मनो हितकर्तनं युक्तमिति। बलोऽसुरस्तदभावेन प्रसिद्धः शक्र इति कृत्वा सा भूयोऽप्यन्यथयति—पुरन्दरमतच्छेदं विधातुं भवतः सामर्थ्यं कुत इति। अत्र विच्छित्तिर्वाक्यमात्रे स्फुटमेव पर्यवसिता व्यङ्ग्योऽर्थस्तु न कश्चित् प्रतीयत इति चित्रोदाहरणत्वेन प्रागुपादानम्। अनुप्रासादीनां तु रसानुगुणत्वेन व्यङ्ग्यसंस्पर्श इति सामनन्तर्यम्। इतरथा तु वर्णालङ्काराणामेव प्राथम्यं युक्तम्।

### मधुमती

अथ प्राप्तावसरतया अलङ्कारान् निरूपयिष्यन्, आदौ प्राधान्यविवक्षया शब्दालङ्कारान् निरूपयति—शब्देति।

यदुक्तमिति। अन्यतात्पर्येणोक्तं वाक्यं यत् अर्थान्तरे योज्यते सा वक्रोक्तिः। अन्यथा योजने च क्वापि श्लेषः, क्वापि काकुः निमित्तमित्यर्थः। तथेति। तथा च यत्पुरस्कारेण योजनं तदेव वक्रोक्तेः भेदकमित्यर्थः।

ननु—

> "धन्या केयं स्थिता ते शिरसि? शशिकला, किं नु नामैतदस्याः?
> नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः?
> नारीं पृच्छामि नेन्दुं, कथयतु विजया न प्रमाणं यदीन्दुः,
> देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः॥"

इत्यादौ वक्रोक्तिरधिका स्यात्। श्लेषकाक्वन्यतरांभावात्। न चेयं न वक्रोक्तिः, अर्थान्तरयोजनस्यापि सत्त्वात् वक्रोक्तित्वावश्यम्भावात् इति चेत्—न। अत्रापि शब्दश्लेषसत्त्वात्। अर्थभेदेन शब्दभेदः इत्यभ्युपगमात्। तदिहापि सर्वनाम्नां अनेकार्थवाचिनां सुरसरित्परत्वाभिप्रायेण प्रयुक्तानां चन्द्रकलापरतया योजनम्, तथा 'नारीं पृच्छामि' इत्यत्र नारीविषयकप्रश्नपरतया प्रयुक्तस्य तदुद्देश्यकप्रश्नपरतया योजनमिति श्लेषवक्रोक्तित्वमेवास्येति ध्येयम्।

नारीणामिति स्त्र्यभिप्रायेण प्रयुक्तस्य न अरीणां इति योजितम्, वामनामिति पदं प्रतिकूलार्थतया प्रयुक्तं स्त्रीरूपार्थे योजितम्। अबलापदं स्त्रीरूपेऽर्थे, कृदिति पदं करणेऽर्थे च प्रयुक्तं बलाभावकृन्तनयोः योजितम्। बलाभावपदं च बलशून्यार्थे प्रयुक्तं असुरविशेषाभावे योजितम्। अत्र च सर्वत्रपदभङ्गश्लेषनिबन्धना योजना द्रष्टव्या।

## विस्तारिका

अलङ्कारनिरुक्तावसर एव संगतिः। प्रतिबन्धकीभूतशिष्यजिज्ञासान्तराभावात्। तदाह—गुणविवेचन इति। सम्प्रत्यर्थालङ्कारनिरुक्तेः प्राक्। काव्यलक्षणे शब्दस्य प्रागुपादानेन तदलङ्कारस्यैव प्रथमं जिज्ञासितत्वात्। तदाह—शब्दालङ्कारानिति।

तत्रोक्तिवक्रतायाः स्फुटं शब्दालङ्कारतेति प्रथमं वक्रोक्तिमाह—यदुक्तमित्यादि। वक्तृश्रोतृनिर्वाह्योऽयमलङ्कारः। वक्तुरन्याभिप्रायकं श्रोत्रान्यथा समर्थितमित्यर्थः। अन्येनेत्यनेन स्वोक्तेरन्यथाकरणे द्वितीयापह्नुतौ नातिप्रसङ्गः। अपह्नुतिर्यथा—

**काले वारिधराणमपतितया नैव शक्यते स्थातुम्।**
**उत्कण्ठितासि तरले नहि नहि सखि पिच्छिलः पन्थाः॥**

अत्र पत्यभिप्रायकं स्ववचनं पतनाभावेन स्वेनैव समर्थनात्।

श्लेषेण वक्तुरविवक्षितेन शब्दस्य शक्यान्तरेण। तथेति। ताभ्यामुपाधिभ्यामित्यर्थः। तदाह—श्लेषवक्रोक्तिरित्यादि।

नारीणामित्यादि। नारीणां स्त्रीणाम् अनुकूलमाचरसि, यदि जानासि विज्ञोऽसि। विज्ञ एव स्त्रीणामनुकूल इत्यर्थः। तेन नार्यभिप्रायकमिदं वचनं विपक्षाभिप्रायकेण वामानामित्यनेन योषिदभिप्रायेणाबलानामित्यनेन तत्पुनरोजोभावतात्पर्यकेण बलाभावेत्यनेन तदपि बलपदस्यासुरत्वेन पुरन्दरपदेनान्यथा योजितम्। नारीणामिति स्त्रीणां पदं भागम्, न वैरिणाम्, अभावस्यावबोधनात् श्लेषः। वामाः स्त्रियो विपक्षाश्च। हितकृदिति करोतिकृन्तत्यो रूपम्। अबलाः स्त्रियो बलशून्याः। बलमोजो बलोऽसुरभेदश्च।

अत्र नारीमामिति पदमुपजीव्य प्रदत्तानां श्लेषान्तराणाम्, स एव मूलमिति तेनैव व्यवहारः।

## सारबोधिनी

प्राप्तवसरा इति। तेनालङ्कारनिरुक्ताववसर एव सङ्गतिरिति व्यक्तमुक्तं शब्दालङ्कारानिति। काव्यलक्षणे शब्दस्य प्रागुपादानादिति शेषः। शब्दचित्रमर्थचित्रमिति यच्चित्रभेदद्वयमुक्तं तस्य भेदा उल्लासाभ्यां वक्तव्या इत्यपि ध्वनितम्। यदुक्तमिति वक्तृश्रोतृनिर्वाह्योऽयमलङ्कारः। अन्यथा अन्याभिप्रायेण वक्तुरन्याभिप्रायकं वाक्यमन्येन श्रोत्राऽन्यथा समर्थितमित्यर्थः। अन्यनेति। तेन स्वोक्ते स्वयमन्यथाकरणेनापह्नतौ नातिव्याप्तिः। यथा—

**काले पयोधराणामपतितया नैव शक्यते स्थातुम्।**
**उत्कण्ठिताऽसि तरले नहि नहि पिच्छिलः पन्थाः॥**

अत्र पत्यभिप्रायकं स्ववचनं पतनाभावे स्वेनैव समर्थनात्। श्लेषेण वक्तुरविवक्षितेन शब्दस्य प्रतिपाद्यान्तरेण। तथा ताभ्यामुपाधिभ्यामित्यर्थः। तदाह श्लेषेत्यादि।

नारीणामित्यादि। नारीणां स्त्रीणां अनुकूलमाचरसि चेत् यदि जानासि विज्ञोऽसि। विज्ञ एव स्त्रीणामनुकूल इत्यर्थः। यद्वा जानासीत्यादि उत्तरदातुरेव वचनम्। तेन नार्यभिप्रायकमिदं वचनं विपक्षाभिप्रायेण अबलानामित्यनेन तत्पुनरोजोऽभावतात्पर्यकेण बलाभावेत्यनेन तदपि बलपदस्यासुरपरेण पुरन्दर इत्यनेन पदेनान्यथा योजितम्। नारीणामिति स्त्रीणां पदभङ्गेन वैरिणामभावस्य बोधनात् श्लेषः। वामाः स्त्रियो विपक्षाश्च। हितकृदिति करोतिकृन्तत्यो रूपम्। अबलाः स्त्रियो बलशून्याश्च। बलभोजो बलोऽसुरभेदश्च। अत्र नारीणामिति पदभङ्गमुपजीव्य प्रवृत्तानां श्लेषान्तराणां स एव मूलमिति तेनैव व्यवहारः।

**काव्यप्रदीपः**

एवं गुणे विवेचितेऽलंकारा विवेचनीयाः। तत्र सामान्यलक्षणं गुणविवेचने एवोक्तम्। शब्दालंकारार्थालंकारोभयालंकाररूपविशेषलक्षणत्रयं चार्थलभ्यमिति। तेषां विशेषलक्षणेषु वक्तव्येषु काव्यलक्षणे शब्दस्य प्राथम्यात्तदलंकारविशेषलक्षणे वक्तव्ये प्रथमं वक्रोक्तिं लक्षयति—

**यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते।**
**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा॥ १॥**

वक्त्रान्याभिप्रायेणोक्तमन्येनान्यार्थकतया योज्यते संगम्यते सा वक्रोक्तिरित्यर्थः। श्लेषेण काक्वा चेति योजना। हेतुमुखेन विशेषलक्षणद्वयम्। तथा द्विधेति विभागः। श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति द्विधेत्यर्थः। श्लेषश्च द्विधा—सभङ्गपदोऽभङ्गपदश्च। तत्र सभङ्गश्लेषेण यथा—

**'नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो**
**वामानां हितमातनोति हितकृन्नैवाबलानां भवान्।**

**युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः**
**सामर्थ्यं भवतः पुरंदरमतच्छेदं विधातुं कुतः॥'**

अत्र नारीणामिति पदं स्त्रीणामित्यभिप्रायेणोक्तम्। श्रोता तद्भङ्क्त्वा न शत्रूणामित्यर्थतया योजयित्वाह— कश्चेतन इत्यादि। अत्र वामानामिति शत्रूणामित्यर्थो वक्तुरभिप्रेतः। स्त्रीणामित्यर्थतया योजयित्वान्य आह—हितकृदित्यादि। अथान्योऽबलानामिति दुर्बलार्थतया हितकृदिति हितकृन्तनार्थतया योजयित्वाह—युक्तं किमित्यादि। अथान्यो बलाभावप्रसिद्धात्मार्थपदमिन्द्रार्थतया योजयित्वाह—युक्तं किमित्यादि। अथान्यो बलभावप्रसिद्धात्मार्थपदमिन्द्रार्थतया सामर्थ्यमित्यादि। अत्र नारीणामबलानामिति पदे सभङ्गे।

**काव्यप्रकाशखण्डनम्**

अलङ्कारे विवेचनीये लक्षणशब्दस्य प्रागुपादानात् तथैवाकाङ्क्षासत्त्वात् शब्दालङ्कारानादावाह—

**यदुक्तमन्यथा [प. ४३.१] वाक्यमन्यथाऽन्येन योज्यते।**
**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा॥** (सू. का. ७८)

वक्तृ-श्रोतृनिर्वाह्योऽयमलङ्कारः। अन्यथा अन्यप्रकारेण वक्तुरन्याभिप्रायकं वाक्यं श्रोत्राऽन्यथा समर्थितमित्यर्थः। अन्येनेति तेन स्वोक्तौ अन्यथाकरणे अपह्नुतौ नातिव्याप्तिः। श्लेषेण वक्तुरविवक्षितेन शब्दस्य शक्यान्तरेण तथा काक्वा। तथा च श्लेषवक्रोक्तिः, काकुवक्रोक्तिश्चेति निर्गलितार्थः।

### आदर्शः

'प्राप्तावसराः' प्राप्तसमयाः। काव्यलक्षणोद्देशक्रमेण गुणनिरूपणानन्तरम् अलङ्कारनिरूपणे आकाङ्क्षोदयेन उपोद्घातस्यैवात्र सङ्गतित्वात्। शब्दालङ्कारानिति, 'शब्दार्थौ' इत्युक्तक्रमवशात्।

यदुक्तमिति। अन्यथा अन्याभिप्रायकमुक्तं यद् वाक्यमन्येन जनेन उक्तवाक्यश्लेषेण स्ववाक्यकाक्वा वा अन्याभिप्रायकं योज्यते योजनया प्रकाश्यत इत्यर्थः। अन्यदीयं प्रत्युत्तरं तद्वाक्यश्लेषस्य स्ववाक्यकाकोर्वा साहाय्यादन्यथायोजनाप्रतीतिकृदित्यर्थः। 'तथा द्विधा' तादृशी द्विधा। तद् व्याचष्टे—श्लेषवक्रोक्तिरिति। श्लेषश्चसभङ्गाभङ्गरूपः। तत्राद्यमाह—नारीणामिति। परिहसतोरुक्तिप्रत्युक्ती इमे। तत्र स्त्रीणामनुकूलमाचरामीत्येकेनोक्ते परिहस्य तदन्यः प्रशंसति नारीणामिति। जानासि विज्ञोऽसि। स्त्रीणामित्यभिप्रायकमिदं वाक्यं नारीणामित्यत्र श्लेषवशादरीणां नेत्यभिप्रायकं स्वपत्युत्तरेण योजनया प्रत्याययति—कश्चेतन इति। एतदुत्तरस्य वामानां शत्रूणामित्यर्थकत्वात् पूर्ववाक्ये अरीणां नेति योजनाप्रतीतिः। एवं सर्वज्ञ बोध्यम्। एतद् वाक्यमेव पुनर्वामानां नारीणामित्यभिप्रायकम् पूर्ववक्ता प्रत्याययंस्तदेवानुमोदते—हितकृदिति। अबलानां स्त्रीणां हितकरणाभिप्रायकमिदं वाक्यं पुनरन्यो बलशून्यानां हितकरणाभिप्रायकं योजयंस्तं पृच्छति—युक्तमिति। अत्र कृदिति कृती च्छेदने इत्यभिप्रायकमिदं वाक्यं बलस्य बलासुरस्याभावो यस्मात्तादृशस्य इन्द्रस्य मतच्छेदनाभिप्रायकं पूर्ववक्ता पुनर्योजयंस्तमधिक्षिपति—सामर्थ्यमिति। अत्र हितपदस्य मतार्थकत्वं 'हि गतौ' सर्वे गत्यर्था मत्यर्था इत्यनुशासनाद् बोध्यम्।

### सुधासागरः

एवं गुणे विवेचितेऽलङ्कारा विवेचनीयाः। तत्र सामान्यलक्षणं गुणविवेचने एवोक्तम्। शब्दालङ्कारार्थालङ्कारोभयालङ्काररूपविशेषलक्षणत्रयं चार्थलभ्यमिति तेषां विशेषलक्षणेषु वक्तव्येषु शब्दस्य प्राथम्यात्काव्यलक्षणे प्रागुपादानाच्च तदलङ्कारविशेषलक्षणे वक्तव्ये 'वक्रोक्तिः काव्यजीवितम्' इति कैश्चिदभिहितत्वेन वक्रोक्तेः चारुत्वातिशयादुक्तिवक्रतायाः स्फुटं शब्दालङ्कारत्वाच्च प्रथमं वक्रोक्तिं लक्षयति—यदुक्तमित्यादि। वक्त्राऽन्याभिप्रायेणोक्तमन्येनान्यार्थकतया योज्यते सङ्गम्यते सा वक्रोक्तिरित्यर्थः। वक्तृश्रोतृनिर्वाह्योऽयमलङ्कार इति भावः। 'श्लेषेण कक्वा वा' इति हेतुमुखेन विशेषलक्षणद्वयम्। 'सा तथा द्विधा' इति विभागः। श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति द्विविधेत्यर्थः। श्लेषश्च द्विधा। सभङ्गपदोऽभङ्गपदश्च। तदेतदुक्तं तथेतीत्यादि।

तत्र सभङ्गपदश्लेषेण यथा—नारीति।

शार्दूलविक्रीडितं छन्दः। अत्र नारीणामिति पदं स्त्रीणामित्यभिप्रायेणोक्तम्, श्रोता तद्भङ्ग्या न शत्रूणामित्यर्थतया योजयित्वाऽऽह—कश्चेतन इत्यादि। अत्र वामनामिति शत्रूणामित्यर्थो वक्तुरभिप्रेतः। स्त्रीणामित्यर्थतया योजयित्वाऽन्य आह हितकृदित्यादि। अथान्यो बलाभावप्रसिद्धात्मपदमिन्द्रार्थतया योजयित्वा आह सामर्थ्यमित्यादि। अत्र नारीणामबलनामिति पदे सभङ्गः। यद्यपि वामादिपदे न भङ्गस्तथापि नारीणामिति पदभङ्गमुपजीव्य प्रवृत्तानां श्लेषान्तराणां स एव मूलमिति तेनैव व्यवहार इति बोध्यम्।

अभङ्गश्लेषेण यथा

**अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।**

**त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥ ३५३ ॥**

---

**सङ्केतः**

दारुणेति प्रथमान्ततया रौद्रा, तृतीयान्ततया काष्ठेन । केन काष्ठेनेति योगः । सत्त्वरजस्तमांसि गुणः ।

**सङ्केतः (रुय्यकः)**

दारुणा क्रूरा । नैष्यतीति काक्वैष्यतीत्यर्थे प्रतिपत्तिवचने ।

**बालचित्तानुरञ्जनी**

अपदभङ्गश्लेषेण वक्रोक्तिमुदाहरति अभङ्गेति । ईदृशी दारुणा क्रूरा बुद्धिः तव केन निर्मिता दत्ता ? क्रूरार्थं दारुणेति पदं काष्ठार्थपरतया अन्यथा कुर्वन् द्वितीय आह त्रिगुणेति । सत्त्वरजस्तमोमयी बुद्धिः श्रूयते न क्वचिद् दारुमयी काष्ठमयी श्रूयत इत्यर्थः ।

**काव्यादर्शः**

'दारुणा' क्रूरा । 'त्रयो गुणाः' सत्त्वरजस्तमोलक्षणा यस्याः । अत्राद्येऽर्धे 'दारुणा' इति प्रथमान्तं प्रक्रान्तं, श्लेषभङ्ग्या तृतीयान्ततयोत्पादितभङ्गेन ।

**विवेकः**

अहो इत्यादि—दारुणा क्रूरा बुद्धिस्तव केनेदृशी निर्मितेत्युक्ते, दारुणा केन इति तृतीयापरतया बुद्ध्वा प्राह त्रिगुणेति । सत्त्वरजसतमोलक्षणगुणत्रयात्मिका बुद्धिर्न पुनः क्वचिद्दारुमयीति । अतो नेयं दारुणा करणभूतेन निर्मितेत्यर्थः ।

**दीपिका**

दारुणा क्रूरेति विवक्षिते काष्ठेनेति काल्पयित्वाह-त्रिगुणेति । त्रिगुणोऽत्राशुग्राहित्वरूपप्रज्ञात्वापूर्वोल्लेखदशालित्वरूपप्रतिभात्वस्थिरसंस्कारस्वरूपमेधात्वात्मकोऽतिशयः । त्रिगुणा सात्त्विकी राजसी तामसीत्येके ।

**दर्पणः**

अत्रोदाहरणेऽपि वामानामित्यारभ्य भङ्गश्लेष संभवेऽपि वैषम्याय पुनरत्रोदाहरति । [अहो इति] अत्र दारुणा...रेणेति विवक्षिते काष्ठेनेति कल्पयित्वाह त्रिगुणेति । त्रयो गुणाः सत्वरजस्तमांसि ।

### साहित्यचूडामणिः

अथाभङ्गश्लेषेणोदाहरति—अहो इति । दारुणा भीषणेत्येतद् दारुभूतेन करणेनेत्यन्यथाक्रियते । त्रिगुणा सत्त्वरजस्तमोमयी ।

### सम्प्रदायप्रकाशिनी

अथाभङ्गश्लेषः—अहो केनेति । अत्र क्रूरा केन निर्मितेति विवक्षिते केन दारुणा काष्ठेनेति कृत्वान्यथयति—बुद्धिः सत्त्वादिगुणत्रयात्मिका न तु दारुमयी ।

### मधुमती

अभङ्गश्लेषे तदुदाहरति—अहो केनेति । दारुणा इति प्रथमतृतीययोः श्लेषः ।

### विस्तारिका

अहो इत्यादि । दारुणा हिंस्रा काष्ठेनेति च । सूक्ष्मग्राहित्वमाशुग्राहित्वं गृहीतग्राहित्वं वेति गुणत्रयम् । धान्येन धनवानित्यत्रेव तृतीयायां अभेद एवार्थ इत्याह—दारुमयीति ।

### सारबोधिनी

अहो इति । दारुणा हिंस्रा काष्ठेन च । त्रिगुणा सत्त्वरजस्तमोमयी । अत्र दारुणपदस्य दारुणेत्यस्य दारुमयत्वेनान्यथायोजनम् ।

### काव्यप्रदीपः

अभङ्गमात्रपदेन श्लेषेण यथा—

'अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥'

अत्र दारुणेति क्रूरेत्यर्थकत्वेन वक्तुरभिप्रेतं काष्ठेनेत्यर्थेनान्यो योजितवान् ।

### काव्यप्रकाशखण्डनम्

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥

अस्यार्थः—दारुणा हिंस्रा काष्ठेन च । त्रिगुणा सत्त्वरजस्तमोमयी । अत्र दारुणत्वपदस्य दारुमयत्वेनान्यथा योजनम् ।

### आदर्शः

अहो केनेति । दारुणा कठिना । त्रिगुणा सत्त्वादिगुणत्रयान्तमाधीना ।

### सुधासागरः

अभङ्गामात्रपदेन श्लेषेण यथा—'अहो' इति ।

अत्र दारुणेति क्रूरेत्यर्थकत्वेन वक्तुरभिप्रेतः, काष्ठेनेत्यर्थेनान्यो योजितवान् ।

काक्वा यथा—

**गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम्।**

**अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ॥ ३५४॥**

---

सङ्केतः

काक्वेति। काकुशब्दव्युत्पत्तिः तृतीयोल्लासे कृता। वाक्यस्य साकांक्षत्व-निराकांक्षत्वाभ्यां काकुः द्विधा-निराकांक्षा साकांक्षा चेति। यस्मात् वाक्यात् यादृशः सङ्केतेनार्थः प्रतीयते, न तादृगेव, किन्तु न्यूनाधिकः, प्रमाणबलेन निर्णययोग्यः तद्वाक्यं साकांक्षम्। अन्यथा तु निराकांक्षम्। वक्तुराकांक्षा वाक्ये उपचर्यते। सा च प्रस्तावशात् निर्णीयते। विशिष्टविषयता चास्याः प्रस्तावादेव वाच्या। गुरुजनेत्येतद्वाक्यं नायिकया आगमननिषेधायोक्तं कदाचित्। तत्सख्या तु काकुप्रयोगेण विधिपर्यन्तत प्राप्तिम्।

विषयोऽपि—अर्थान्तरं, तदर्थगत एव विशेषः, तदर्थाभावो वा इति त्रिधा। तत्र—

**'देशस्सोऽयमरातिशोणितजलैः यस्मिन् ह्रदाः पूरिताः'** इत्यत्र साकाङ्क्षाकाकुप्रभावात् ततोऽप्यधिकं कुरुत इति अर्थान्तरे गतिः।

**"स यस्य दशकन्धरं कृतवतोऽपि कक्षान्तरे**

**गतः स्फुटमवन्ध्यतामधिपयोधि सान्ध्यो विधिः।**

**तदात्मज इहाङ्गदः प्रहित एव सौमित्रिणा**

**क्व स क्व स दशानने ननु निवेद्यतां राक्षसाः॥"**

इत्यत्र 'तदात्मज इहाङ्गदः' इति साकाङ्क्षया काक्वा स्वगता बालिपुत्रत्वोचिता विशेषाः अर्प्यन्ते॥

**'निर्वाणवैरदहनाः प्रशमादरीणाम्'**

इत्यत्र साकाङ्क्षया काकुः भवनाभावमाह। अत्र भवन्तीति वचनोच्चारणं तु अर्थे सम्भावनां विदधत् अभावस्य निषेधात्मनः विषयं भवनलक्षणं अर्पयति। न भवन्त्येवेत्यर्थः।

"अभिप्रायवान् पाठधर्मः काकुः।

स नालङ्कारी स्यात्।" इति यायावरीयस्तु स्थवीयः। शब्दस्पृष्टत्वेन अर्थान्तरप्रतीतिहेतुत्वात्। गुणीभूतव्यङ्ग्यभेद एवायम्। यदाह ध्वनिकारः—

**"अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते।**

**सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता॥"**

इति। तन्मते काकुवक्रोक्तिः नालङ्कारः। यथा च पाठधर्मत्वं काकोः तथा भरतात् ज्ञेयम्।

**'वस्तुस्वाभाव्यात् काकुः श्रुतमर्थमनादृत्य अर्थान्तरं वक्ति' इत्येके ॥**

अन्ये तु एवमाहुः—इह यैषा प्रथमेन संवित् स्पन्दनेन प्राणोल्लासनया वर्णादिविशेषविहीना वाक् जन्यते, सा नादरूपा सती हर्षादिचित्तवृत्तिं विधिनिषेधाद्याशयं वा तत्कार्यलिङ्गतया तादात्म्येन वा गमयति। दृश्यते हि मृगश्वादेरपि नादश्रुतौ भी-रोष-शोकादिप्रतिपत्तिः। नादात् चित्तवृत्त्याद्यनुमानमिति भावः। ये त्वेते वर्णविशेषाः ते तन्नानारूपसामान्यात्मकवाक्तन्तुग्रन्थिमया इव प्राच्यप्रयत्नातिरिक्तनिमित्तान्तरापेक्षाः। त एव अन्यत्राप्यभिप्रेते अन्यथाऽपि प्रयोक्तुं शक्याः। अत एव दृष्टव्यभिचाराः। नादस्तु झटित्युद्भिन्नमुखरागपुलकस्थानीयः नान्यथा कर्तुं पार्यते इति अनन्यथासिद्धः अन्यथासिद्धं शब्दार्थं बाधत एव। यथा 'भीरु! न मे भयम्' इत्युक्ते अन्यप्रकारतां वाक्यार्थस्य विशेषणार्पणेन विधत्ते।

वामनस्तु—'सादृश्याल्लक्षणा वक्रोक्तिः' इति वक्रोक्तिलक्षणमाह।

### बालचित्तानुरञ्जनी

वक्रोक्तिमुदाहरति काक्वेति। हे सखि! गुरुपरतन्त्रतया दूरतरं देशं गन्तुमुद्यतः असौ प्रियः नैवैष्यति नागमिष्यति इति नायिकोक्तौ तत्सखी काक्वा अन्यथयति। मधुकरकुलेन कोकिलैश्च मनोहरे वसन्तसमये नैवैष्यति। नकारशिरसि काकुप्रयोगात् सर्वप्रकारमेष्यत्येवेत्यर्थः।

### काव्यादर्शः

'नैष्यति' इति काक्वा एष्यत्येव। एतद् वाक्यं नायिकया आगमननिषेधपरत्वेनोक्तम्। तत्सख्या तु काकुप्रयोगेण विधिपर्यन्ततां प्रापितम्। काकुवशाद्धिविधिनिषेधयोर्विपरीतार्थसंक्रान्तिः। यायावरीयस्तु 'अभिप्रायवान् पाठधर्मः काकुः स कथमलंकारी स्याद्' इति न काकुवक्रोक्तिमाह। वक्रोक्ति-शब्दश्चालंकारसामान्य-वचनोऽपीहालंकारविशेषे संज्ञितः।

### विवेकः

गुर्वित्यादि—नैष्यतीति निषेधपरत्वेन नायिका, काक्वैष्यत्येवेत्यर्थः सख्याः प्रतिवचने। अयमलङ्कार-मार्गक्रमः पद्यवद् गद्येऽपि द्रष्टव्यः।

### दीपिका

नैष्यति। निषेधपरं नायिकोक्तौ। सखीप्रतिवचने पुनः 'काक्वा' एष्यतीत्येतत् परम्। अस्याश्च शब्दान्वयव्यतिरेकानुविधायितया शब्दालङ्कारता।

### दर्पणः

नैष्यतीत्यागमनस्य निषेधतात्पर्येण नायिकायोक्तं प्रतिवचने पुनः सख्या काक्वा एष्यत्येवार्थे घटितम्। न चायमर्थालङ्कारः। शब्दार्थव्यतिरेकानुविधायित्वात् [शब्दार्थयोर्व्यतिरेकानुविधायित्वात्] एवमन्यत्रापि ज्ञेयम्।

### साहित्यचूडामणिः

अथ काक्वोदाहरति-गुर्विति। नैष्यतीति नायिकोक्तौ प्रत्युतागमनं न संभवीत्याकूतम्। सख्युक्तौ तु नकारशिरसि काकुप्रयोगात् सर्वाकारमेष्यत्येवेति।

### सम्प्रदायप्रकाशिनी

अथ काकुवक्रोक्तिः—गुरुपरतन्त्रेति। अत्र दूरं गन्तुमुद्यत इत्येतन्नैष्यतीति काक्वा नासौ परतन्त्रतां गमिष्यतीत्यन्यथात्वं नीयते।

### मधुमती

गुरुजनेति। अत्र आगमनाभावपरतया प्रयुक्तस्य वाक्यस्य काक्वा आगमनियमे योजना कृता।

### विस्तारिका

गुरुजनपरतन्त्रेति। प्रवासं जिगमिषौ नायके नायिकायाः सख्याश्च वचनप्रतिवचने। देशं विषयान्तरम्, न तु ग्रामम्। सुरभिसमये वसन्तकाले।

### सारबोधिनी

काकुवक्रोक्तिमुदाहरति गुरुजनेति। नायिकाया नैष्यतीति निषिद्धे तत्सखी काक्वाऽन्यथा योजयत्ति नैष्यतीति, एष्यत्येव। अनुप्रासं लक्षयति वर्णसाम्यमिति। यमकेऽतिव्याप्तिरित्यत आह स्वरवैसादृश्येऽपीति। अत्र स्वरसादृश्यं न प्रयोजकम्, कुलालकलत्रमित्यादिष्वपि दर्शनात्। यमके तु समानानुपूर्वीकत्वनियमः। अत एव यमके वक्ष्यति "वर्णानां सा पुनः श्रुतरि" ति।

### काव्यप्रदीपः

काकुवक्रोक्तिर्यथा—-

**'गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।**
**अलिकुलकोकिलललिते सखि नैष्यति सुरभिसमयेऽसौ॥'**

अत्र नैष्यतीति नायिकया निषेधाभिप्रायेणोक्तं सख्या तु नैष्यति अपि त्वेष्यत्येवेत्यर्थकतया काक्वा योज्यते

इयं च न वाकोवाक्यमात्रे किं तु स्वतोऽप्यन्येनोक्तस्यान्यथायोजनमात्रे न्यायसाम्यात्। यथा मम—

**'कृष्णो वैरिविमर्दने हरिपदप्रीत्यर्जने त्वर्जुनः**
**पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्चलैः।**
**रक्तः सज्जनसंगमेषु करणश्रेणीमणे श्रीधर**
**स्थाने वर्णचतुष्टयस्य भुवने भर्ता भवान्गीयते॥'**

अत्र वर्णचतुष्टयस्य भर्ता श्रीधर इति सार्वलौकिकं वाक्यमन्यथा श्लेषादिनास्माभिः समर्थितम् । एवमन्यप्यूह्यम् ।

### काव्यप्रकाशखण्डनम्

**गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।**
**अलिकुलकोकिलललिते नैष्यति सखि ! सुरभिसमयेऽसौ ॥**

गुरुपरतन्त्रतया गुर्वाधीनतया बत कष्टे दूरतरं बहुदिवसगम्यं देशं जनपदं गन्तुं यातुं उद्यतः कृतोद्योगः वसन्तसमये असौ नायको नैष्यति नायास्यति । कीदृशे ? अलिकुलं भ्रमरसमूहः कोकिलः पिकः तेन ललिते सुन्दरे । सखीति सम्बोधनपदम् । नायिकया नैष्यतीति निषिद्धे, तत्सखी काक्वा अन्यथयति-नैष्यति ? अपि तु एष्यत्येवेत्यर्थः ।

### आदर्शः

गुरुजनेति । अत्र गुरुवाक्यप्रोषितपतिशोचनाभिप्रायकं पूर्वार्द्धवाक्यं पत्न्याः । सखी तु स्ववाक्यकाक्वा तद्वाक्यं कामाकुलत्वेन विषादाभिप्रायकतया परार्द्धस्ववाक्येन योजयन्ती तामाश्वासयति—अलिकुलेति । नैष्यति अपि त्वेष्यत्येव । अत्र शिरश्चालनसहकृता स्ववाक्यकाकुः ।

### सुधासागरः

काकुवक्रोक्तिर्यथा—'गुरुजनेन'-ति ।

गाथा छन्दः । अत्र नैष्यतीति नायिकया निषेधाभिप्रायेणोक्तं सख्या तु नैष्यत्यपि तु एष्यत्येवेत्यर्थकतया काक्वा योज्यते । अत एव सोत्साहं पृच्छति-'सखि सुरभिसमये' इति ।

अत्र प्रदीपकारः । इयं च न वाक्यमात्रे, किन्तु स्वतोऽप्यन्येनोक्तस्यान्यथायोजनमात्रे न्यायसाम्यात् । यथा मम—

**कृष्णो वैरिविमर्दने हरिपदप्रीत्यर्जने त्वर्जुनः**
**पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्चलैः ।**

**रक्तः सज्जनसङ्गमेषु करणश्रेणीमणे श्रीधर**
**स्थाने वर्णचतुष्टयस्य भुवने भर्त्ता भवान् गीयते ॥**

अत्र वर्णचतुष्टयस्य भर्त्ता श्रीधर इति सार्वलौकिकं वाक्यमन्यथा श्लेषादिनास्माभिः समर्थितम् । एवमन्यदप्यूह्यमित्याह ।

## (सू. १०४) वर्णसाम्यमनुप्रासः

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः।

---

### सङ्केतः

वर्णेति। वर्णस्य एकस्यानेकस्य घटपटेत्यादिशब्दरूपरहितस्य साम्यं सादृश्यम्। स्वरेति। स्वरव्यञ्जनसादृश्ये यमकं स्यात् इति वर्णसाम्यमुक्तम्। एकस्यैव पुनःपुनः निबन्धसाम्यं आवृत्तिरित्यर्थः। प्रकृष्ट इति। अदूरान्तरित इति शेषः।

### बालचित्तानुरञ्जनी

एवं वक्रोक्तिमभिधाय अनुप्रासं लक्षयति वर्णेति। व्याकरोति स्वरेति। स्वराणामचां वैसादृश्ये वैलक्षण्येऽपि यद् व्यञ्जनानां हलां हलां सादृश्यं तदिह वर्णसादृश्यं विवक्षितम् स्वरसाम्ये वैचित्र्याभावादित्यर्थः। अनुप्रासशब्दं निर्वक्ति रसेति।

### काव्यादर्शः

प्रकृष्ट इति अदूरान्तरितः।

### विवेकः

अथावृत्तिनिबन्धनेऽलङ्कारे लक्षयितव्ये वर्णमात्रावृत्तिनिबन्धनतया रसानुगुणत्वेनान्तरङ्गत्वाञ्च यमकात् प्रथममनुप्रासं लक्षयति वर्णसाम्यमिति। एकवर्णकृतेनापि साम्येनायमिष्यत इति समासेन निर्देशः। वर्णाश्च यद्यपि स्वरा व्यञ्जनानि च तथापि स्वरसाम्यमचारुत्वान्न गण्यत इत्याह व्यञ्जनसदृशत्वमिति। अर्थनैरपेक्ष्यात्तु शब्दालङ्कारता स्फुटैव। अन्वर्थतां दर्शयति रसादीति—अनुशब्दोऽनुगमार्थः। अनुगमश्च रसबन्धाभिनिवेशिनः कवेश्चेतसि प्रयत्नान्तरं विना स्वयमेवागत्याहंपूर्विकाया अनुप्रवेशात्।एवं 'प्र' शब्दः प्रकर्षार्थः। प्रकर्षोऽपि पूर्ववर्णजात्यनुगमेन सहृदयहृदयावर्जनरूपो द्रष्टव्यः।

### दीपिका

सम्प्रत्यावृत्तिनिबन्धेष्वलङ्कारेषु लक्षणीयेषु साङ्गतयाऽन्तरङ्गत्वेन प्रथममनुप्रासमाह—वर्णसाम्यति। पूर्वपूर्ववर्णानुभवजनितसंस्कारयोग्यसमानवर्णनिबन्ध इत्यर्थः। तदुक्तम्—पूर्वानुभवसंस्कारबोधिनी यद्यदूरता इति। एकस्य द्वयोस्त्रिचतुरादीनाञ्ज साम्यादनुप्रासो भवति। समानवर्णविन्यासः साम्यं सारूप्यम्, कण्ठताल्वाद्येकस्थानीयमपि यकारजकारादीनां साम्यं श्रुत्यनुप्रासाख्यमित्यन्ये। साम्यमेव वर्णानामतिशयलेशाधानबोधास्वादोत्कर्षकमित्यलङ्कृतिपदास्पदतामापद्यते। यमकेऽतिव्याप्तिं निरस्यति-स्वरेति। अपिना स्वरसादृश्यस्य क्वचित् सम्भविनोऽपि प्रयोजकता निरस्यते। न चैवं यमके, तस्य स्वरव्यञ्जनसमुदायशरीरत्वात्। अनुप्रास इति

लक्ष्यपदस्य प्रत्येकमवयवाप्रवृत्त्या निर्वक्ति—रसाद्यनुगत इति । अन्विति भागनिरुक्तिः, रसाद्यनुगतः रसाविष्टस्य कवेः पृथक्प्रयत्नमन्तरेणैव सुसन्निवेशः सहृदयहृदयतन्मयीभावप्रकर्षेणास्वादाङ्कुरोत्कर्षकत्वञ्च प्रशब्दनिरुक्तिः । प्रकृष्ट इति । प्रकर्षश्च पूर्वापरवर्णैकजातीयतया भावकहृदयावर्जकत्वम् 'आस' इत्यस्य न्यास इति वर्णवचनान्तरापेक्षया विशिष्टो । विन्यास इत्यर्थः ।

**दर्पणः**

इदानीयनकाद्वयपेक्षया [इदानी यत् काव्यापेक्षया] रसानुगुण्यभूयस्त्वात् प्रथममनुनि लक्षयिसुस्तत् [प्रथममनुप्रासं लक्षयस्तत्] सामान्यलक्षणमाह वर्णेति । सामान्यं सारूप्यं चैकस्थानोच्चार्यत्वेन वर्णानां साम्ये श्रुत्यनुप्रासो अनुप्रासविशेषत्वेन परिगृहीतो भवति । यदुक्तं मम साहित्यदर्पणे ।

**उच्चार्यत्वामुदेकत्रस्थाने वानुवदादिके ।**

**सादृश्यं व्यञ्जनस्यैतत् श्रुत्यनुप्रास उच्यते ॥ इति ॥**

**[उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके ।**

**सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥]**

स्वरवैसादृश्येऽपीत्यनेन यमककाव्यव्यवच्छेदकसादृश्याभावे तदभावादपिशब्देन क्वचित् स्वरसाम्यसंभवेऽपि नानुप्रासप्रयोजकत्वं व्यञ्जनानां सादृश्यं न तुरमित्यादाविरस्वनानां [?] तत्र वैचित्र्याननुभवात् । ध्वनिनामनिर्वक्ति रसादीति । अयमाशयः—रसाद्यमगमं [रसाद्यनुगमं] विनाऽनुप्रासस्य नालङ्कारता । यदुक्तं ध्वनिकृता—

शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धनात् ।

सर्वेस्वेरप्रभेदेषु [सर्वेष्वेव] प्रभेदेषु नानुप्रासः प्रकाशकः ॥ इत्यादि ।

तद्भेदानाह च्छेक इति । नियतेति । रसस्वरूपविशेषात्ममकमाधुर्यादिगुणव्यञ्जकत्वेन येषां वर्णानां नियम उक्तः, तद्गतस्तन्निष्ठो व्यापारो व्यञ्जनाख्यः वर्तन्ते प्रवर्तन्ते रसप्रतीतिप्रकर्षे वर्णा अनयेति व्युत्पत्या वृत्तिरित्यर्थः । छेकानुप्रास इति चायेगव्यवच्छेदपरं नाम । विदग्धप्रयोजयत्वस्यान्यत्रापि संभवात् ।

इत्यं द्विधा विभक्तयोरनुप्रासयोर्विशेषलक्षणमवतारयति किं तयोरिति सोऽनुप्रासः अर्थादिति सामान्यलक्षणे । वर्णपदेन व्यञ्जनस्य विवक्षितत्वात् ।

**साहित्यचूडामणिः**

अनुप्रासं लक्षयति—वर्णेति स्वराणामचां वैलक्षण्येऽपि यद् व्यञ्जनानां हलां सादृश्यं तदिह वर्णसाम्यं विवक्षितम् । इह खल्वर्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति । तथार्थपौनरुक्त्यं प्ररूढं दोषः । शब्दपौनरुक्त्ये व्यञ्जनपौनरुक्त्यमनुप्रासः स्वरव्यञ्जनपौनरुक्त्यं च प्ररूढं दोषः । शब्दपौनरुक्त्ये व्यञ्जनपौनरुक्त्यमनुप्रासः स्वरव्यञ्जनपौनरुक्त्यं च यमकं, केवलस्वरपौनरुक्त्यम् अचारुत्वान्न गण्यते [अलंकारसूत्रम्] । यथाह—

"नानर्थवन्तोऽनुप्रासा न चाप्यसदृशाक्षराः।" इति।

अनुप्रासशब्दं निर्वक्ति—रसादीति।

## सम्प्रदायप्रकाशिनी

अथ प्राथम्याद् वर्णालङ्कारप्रस्तावः—वर्णसाम्यमिति। स्वरनैरपेक्ष्येण व्यञ्जनमात्रसाम्यं वर्णसाम्यम्।

तदेतदाह—स्वरवैसादृश्य इति। लक्ष्यं निर्वक्ति—रसाद्यनुगत इति। आदिशब्देन भावादयो गृह्यन्ते। रसभावाद्यनुसारी 'मूर्ध्नि वर्गान्त्यगा' इत्याद्यनतिलङ्घनेन प्रकृष्टो वर्णानां विनिवेशोऽनुप्रास इत्यर्थः।

## मधुमती

वर्णसाम्यमिति। एकस्य द्वयोः बहूनां वा वर्णानां साम्यमित्यर्थः। तावन्मात्रं यमकेऽपि गतम्, अत आह—स्वरेत्यादि। स्वरवैसादृश्येऽपि अज्वैसादृश्येऽपीत्यर्थः। यमकस्य तु स्वरसादृश्य एव संभवः 'सा पुनश्श्रुतिः' इत्यभिधानात्। पर्यवसितमाह—व्यञ्जनसदृशत्वमिति। एवं च लाटानुप्रासे नाव्याप्तिः, तत्रापि व्यञ्जनसाम्यसत्त्वात्। अनुप्रासपदव्युत्पत्तिमाह—रसेति। रसविषयो व्यापारः योजनाविशेष इत्यर्थः। गत इतीति। तथाच द्वन्द्वोत्तरवर्तितया गतपदस्य उभयत्रान्वयः इति भावः।

## विस्तारिका

अत्र नैष्पतीत्यनागमनाभिप्रायेण नायिकयाभिहितम्। न एष्यति, अपि तु तथेति ध्वनिविकारेणागमने सख्या योजितम्।

वर्णेति। वर्णानां साम्यं समानेन धर्मेण सम्बन्धः। स च गुणक्रिययोरन्यतरः। तत्र गुणेषु वर्णेषु गुणाभावात् श्रुतिरूपः क्रियारूपः। सजातीयश्रुतिविषयत्वमित्यर्थः। श्रुत्या साजात्यं च प्रकारीभूतधर्मेण कत्वगत्वादिना। तेन व्यञ्जनसाम्यमेवानुप्रासत्वनियामकम्।

यमकेऽतिव्याप्तेराह—स्वरवैसादृश्येत्यादि। अत्र स्वरसादृश्यं न प्रयोजकम्, 'कुलालकलत्रम्' इत्यादिष्वपि दर्शनात्। यमके तु समानानुपूर्वकत्वनियमः। अत एव यमके वक्ष्यति 'वर्णानां सा पुनः श्रुतिः' इति। साम्यमिति। तत्त्वं तु समानश्रुतिमत्त्वमित्यर्थः। सम्भवत् स्वरसादृश्यं तु तत्प्रकर्षकम्। एतद्व्यञ्जयितुमेव व्यञ्जनसाम्यमित्यपहाय वर्णसाम्यमित्यभिहितम्। न कमलं कमलं पदमम्भसीत्यादौ द्वयोः सङ्कर एव। अनतिव्यवहिततया पुनः श्रुतिर्यमकस्यासङ्कीर्णमुदाहरणम्। अर्थदूरतायामेवास्य विषयत्वात्। तदुक्तं दण्डिना-पूर्वानुभूतसंस्कारबोधनीयव्यहारतेति। तथा च सदृशज्ञानसंस्कारोद्बोधकं वर्णसाम्यमनुप्रास इत्यर्थः पर्य्यवस्यति।

अनुप्रासपदस्य योगार्थमाह—रसाद्यनुगत इत्यादि। अनोरर्थोऽनुगतः, प्रस्य प्रकृष्टः, निरुपसर्गस्यास्ते रासो न्यासः।

### सारबोधिनी

साम्यमिति। तत्त्वं तु समानश्रुतिमत्वमित्त्यर्थः। संभवत्स्वरसादृश्यं तु तत्प्रकर्षकम्। अत एव व्यञ्जन-साम्यमित्यपहाय वर्णसाम्यमित्युक्तम्। रसादीति। अनुशब्दोऽनुगमार्थः। प्रशब्दः प्रकर्षार्थः। आसशब्दो न्यासार्थः। अनुगमनं रसादेः, प्रकर्षश्च सहृदयहृदयावर्जकत्वेनेति।

### काव्यप्रदीपः

अथावृत्तिनिबन्धनेष्वलंकारेषु लक्षणीयेषु रसानुगुणतयानुप्रासः प्रथमं लक्षणीयः। स द्विधा—वर्णानुप्रासः पदानुप्रासश्च। तत्राद्यो वाचकवर्णमात्रावृत्तौ द्वितीयस्तु वाचकपदावृत्ताविति वस्तुगतिः। तत्राद्यं लक्षयति—

### वर्णसाम्यमनुप्रासः

अव्यवधानेन वर्णमात्रविन्यासो वर्णानुप्रास इत्यर्थः। शब्दसाम्यत्वमनुप्राससामान्यलक्षणमित्यर्थाल्ल-भ्यते। वर्णपदं व्यञ्जनपरम्। अतो व्यञ्जनवैसादृश्ये विरिञ्चिपदादौ नातिव्याप्तिः। न चेष्टैव सा। तत्रानुप्रासशब्दार्थ-स्याभावात्। रसादिभिरनुगतः प्रकृष्ट आसो न्यासो ह्यनुप्रासशब्दार्थः। न च स्वरमात्रसादृश्ये रसानुगमः, न वा सहृदयहृदयावर्जकत्वलक्षणः प्रकर्षः।

### काव्यप्रकाशखण्डनम्

**वर्णसाम्यमनुप्रासः, (का. ७९, प्र० पा०)** यमकेऽतिव्याप्तिवारणार्थमाह—स्वरवैसादृश्येऽपि व्यञ्ज-नसाम्यमनुप्रासः। अत्र स्वरसादृश्यं न प्रयोजकं कुलालकलत्रमित्यादिष्वपि दर्शनात्। यमके तु सामानानुपूर्वीकत्वं प्रयोजकम्।

### आदर्शः

अनुप्रासालङ्कारमाह—वर्णसाम्येति। स्वरसादृश्यमुत्कर्षायैव, क्वचित्तद्वैसादृश्येऽपि। यथा—'कुपित-कपिकपोलक्रोडताम्रः शशाङ्कः' इत्यत्र। क्वचित्तु स्वरसादृश्यं विना अनुप्रास एव न भवति। यथा 'धूतचूतप्रसूनः' इत्यादौ। तथा च स्वरमात्रसादृश्यं स्वरवैसादृश्येऽपीत्यस्य व्यावर्त्तनीयं बोध्यम्। संज्ञाव्युत्पत्तिमाह—रसदा-दीति।

### सुधासागरः

अथावृत्तिनिबन्धनेष्वलङ्कारेषु लक्षणीयेषु रसानुगुणतयाऽनुप्रासः प्रथमं लक्षणीयः। स द्विधा, वर्णानुप्रासः पदानुप्रासश्च। तत्राद्योऽवाचकवर्णमात्रावृत्तौ, द्वितीयस्तु वाचकपदावृत्ताविति वस्तुगतिः। तत्राद्यं लक्षयति—'वर्णसाम्ये'-ति।

(सू० १०५) छेकवृत्तिगतो द्विधा।

छेकाः विदग्धाः। वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः। गत इति छेकानुप्रासो वृत्त्यानुप्रासश्च।

किं तयोः स्वरूपम्, इत्याह—

(सू० १०६) सोऽनेकस्य सकृत्पूर्वः

अनेकस्य अर्थात् व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः। उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥ ३५५॥

---

**सङ्केतः**

पूर्वः छेकानुप्रासः। अनेकस्येति। अयं भावः—यत्र अनेकं व्यञ्जनं द्वित्र्यादिव्यञ्जनसमुदायः सकृत् एकवारं आवर्त्यते तत्र छेकानुप्रासः इति। ततोऽरुणेति। अत्र रु रि, न्द न्दी, ण्ड ण्डु इत्याद्यनेकव्यञ्जनं सकृदावृत्तम्। कामपरिक्षामकामिनी इत्यत्र तु कामेत्यनेकस्य व्यञ्जनस्य द्विरावृत्तत्वात् वृत्त्यनुप्रासः।

**सङ्केतः (रुय्यकः)**

ततोऽरुणेति। अत्र (क-रि-रु-रे-न्द-न्दी) क-रि-ह-रे-न्दीत्यादेरनेकस्य सकृत् सादृश्यम्।

**बालचित्तानुरञ्जनी**

अस्य द्वैविध्यप्रतिपादकं सूत्रमुपादाय व्याकरोति छेकेति। छेकाश्च वृत्तयः ताः गतः प्राप्त इति समासः। छेकगतानुप्रासः वृत्तिगतानुप्रासश्चेति अनुप्रासो द्विविध इत्यर्थः। उभयोः स्वरूपं किमित्याशङ्कायां आद्यस्वरूपप्रतिपादकं सूत्रमुपाद्य व्याकरोति किं तयोरित्यादिना। पूर्वः आद्यः छेकानुप्रास इत्यर्थः। अर्थात् सामर्थ्यात्।

उदाहरति तत इति। अरुणस्य यः परिस्पन्दः चलनं तेन मन्दीकृतं वपुर्यस्य एवं विधश्चन्द्रः स्मरक्षीणकान्ताकपोलपाण्डुतां दध्रे। अत्र परिस्पन्दमन्दीत्यत्र नकारदकारात्मकस्य व्यञ्जनसमुदायस्य सकृत् सादृश्यं कामक्षामेति ककारमकाररूपस्य गण्डपाण्ड्वति णकारडकाररूपस्य सादृश्यमिति मन्तव्यम्।

### काव्यादर्शः

वृत्तिरिति रसानुगुण औचित्यवान् शब्दाश्रयो व्यापारः । अनेकस्यार्थादिति । यद्येकस्यैव रेफादेर्वर्णस्यैकवारमेकेन रेफादिना सादृश्यमुपनिबध्यते ततः किं वैचित्र्यं स्यादिति भावः ।

'ततोऽरुणे'ति । अत्र रु-रि-न्द-न्दीत्यादेरनेकस्य सकृत् साम्यम् । पर इति । वृत्त्यनुप्रासः । यथा ममैव—

**दूरागाधभवान्धकूपकुहरक्रामत्तमः कर्दम—**
**क्रोडान्तः परिलीनदीनवपुषः पाठीनपोतानिब ।**

**जन्तून् यस्त्वरितं निजोद्धरकरैरुद्धृत्य लोकंपृणैः**
**प्रोणन्निर्मलशर्मवारिभिरभिप्रेयाय भूयात् स वः ॥**

—अत्रैकस्यानेकस्य च द्विरावृत्तिः । अनेकस्यासकृद्, यथा-'सर्वाशारुधिदग्धवीरुधि सदा सारंगबद्धक्रुधि' इत्यादेरनेकस्य बहुकृत्वः । वृत्त्यनुप्रास इति । वर्तन्तेऽनुप्रासभेदा अस्यामिति वृत्तिः उपनागरिका परुषा कोमलेति मसृणदीप्तमध्यमवर्णनीयोपयोगित्वात् । तद्विषयोऽनुप्रास उपनागरिकाद्यनुप्रासः ।

### विवेकः

छेकवृत्तिगतो द्विधेति सूत्रप्रतीकं व्याचष्टे, छेका विदग्धा इति । आलयवर्तिनः पक्षिणश्छेकास्तेषामविरतप्रौढत्वादित्यन्ये । सोऽनेकस्य सकृत् पूर्वः एकस्याप्यसकृत् परः—इति यथाक्रममाह—तत्राद्यो यथा ततोऽरुणेत्यादि । एवं(?) तनुकृतेन साम्येन स्थानानुप्रासो यथा—(का. आ. १/५३) 'एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः । तदाप्रभृति धर्मस्य लोकेऽस्मिन्नत्सवोऽभवति ॥' इति । अत्र ऋटुरषा मूर्धन्या (पा. २/१/९) इति षकाररेफौ मूर्धन्यौ, इचुयशास्तालव्या (पा. १/१/९ वृः) इति चकारयकारौ तालव्यौ, लृतुलसा दन्त्या (पा. १/१/९ वृः) इति दकारलकारौ दन्त्यौ प्रथमपादे समानस्थानौ । एवं द्वितीयपादे 'प्राप्तवानि' ति 'कारेण 'न'कारस्य समानस्थानत्वात् 'ब्राह्मणे'ति वकारहकारव्यवहितेन मकारेण, ऊपूपध्मानीयानमोष्ठ(१/१/९ वृत्ति) इति वचनाद् । अत्रैव रेफस्य 'ण' कारेण समानस्थानत्वमित्यादिकं स्वयमूहनीयम् । ग्रन्थकृता तु रूपकृतेनैव साम्येन कृतमपि साम्यमुपगृहीतमिति न पृथगुदाहृतम् ।

### दीपिका

सामान्यतो लक्षितमनुप्रासं विभजते—छेकेति । नियतेति । मधुरादिरसानुगुण्यनियतमसृणवर्णादिवर्णगतो व्यापारो बोधनाख्यः । वर्तन्ते प्रवर्तन्ते रसोत्कर्षेण वर्णा अनयेति व्युत्पत्त्या वृत्तिः, तदुपोद्वलकतया तदाश्रयानुप्रासो वृत्त्यनुप्रासः । एवं छेकैः प्रचुरप्रयोज्यतया तदाश्रितच्छेकानुप्रासः । गत इति कारिकापदं स्वाश्रयेणोपलक्षितनामकत्वप्रतिपत्तिपरमित्याह—छेकानुप्रासो वृत्त्यनुप्रासश्चेति ।

एवं विभागसूत्रं व्याख्याय लक्षणसूत्रावतरणिकामाह वृत्तिकृत्—किं तयोरिति स्वरूपं लक्षणम् ।

अर्थादिति । व्यञ्जनसाम्यस्यानुप्रासतया ध्रौव्यात् । अनेकस्येति । अनेनाकाङ्क्षितमंशं वर्णसाम्यमित्यनुकृष्य पूरणीयमित्यभिप्रेत्याह—सादृश्यमिति । एवमुत्तरसूत्रेऽपि योज्यम् ।

तत इति । अत्र 'न्द न्दो ण्ड ण्डु' इत्यनेकव्यञ्जनस्यैकवारसादृश्यनिबन्धः ।

## दर्पणः

अनेकस्येति । साकाङ्क्षपदम् । 'वर्णसाम्यमनुप्रास' इति सामान्यलक्षणस्थितेन साम्यपदेन पूरयित्वा विवृणोति सादृश्यमिति । एवमुक्तसूत्रे । तत इति अत्र नकारदकारयोः संयुक्तयोरेकवारं सादृश्यमेवं "गण्डपाण्डुता" मित्यत्रापि णकारदकारयोः ।

## साहित्यचूडामणिः

छेकपदमप्रसिद्धं व्याचष्टे—विदग्धा इति । गृहचराः पक्षिमृगादयः छेका इति केचित् । वृत्तिः रसविषयो व्यापारः । अत्र तु तद्वती वर्णरचना वृत्तिः । सा च परुषवर्णारब्धत्वात् त्रिधा । अनुप्रासानामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया पारुष्यलालित्यमध्यमत्व-स्वरूपविवेचनाय वर्गत्रयव्युत्पादनार्थं तिस्रोऽनुप्रासजातयो वृत्तय इत्युक्ताः वर्त्तन्तेऽनुप्रासजातय आस्विति । यथ भामहः (उद्‌भटः)—

**सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।**
**पृथक् पृथगनुप्रासमुशन्ति कवयस्तथा ॥**

[का. सा. सं. १] इति । ननु जातिमति जातेर्वृत्तिरिति शास्त्रशय्या । तत् कथं जातौ जातिमतो वृत्तिरिति चेत् । न । "लोकोत्तरे हि गाम्भीर्ये वर्त्तन्ते पृथिवीभुजः" इत्युक्तवत् तदनुग्रहस्यैवात्र वृत्तिशब्दार्थत्वात् । तस्माद् वृत्तयोऽनुप्रासायमानाः । यदुक्तं "जातिर्जातिमतो नान्ये'ति' ।

## सम्प्रदायप्रकाशिनी

तं विशेषतो लक्षयति— छेकवृत्तीति ।कश्छेकः का वृत्तिरित्यत आह—छेका विदग्धा इत्यादि । नियतेति । यथावन्नियतेषु वर्णेषु रसविषयो योऽयं व्यञ्जनव्यापारः सा वृत्तिरित्यर्थः । द्वन्द्वान्तश्रुतविशेषणद्वारा प्रत्येकाभिसम्बन्धी द्विरूप इत्याह—गत इत्यादि । छेकवृत्त्युपलक्षितत्वात् तथा व्यापदिश्यत इत्यर्थः ।

तयोः स्वरूपजिज्ञासायामाह—किं तयोरिति ।

सोऽनेकस्येति । सकृदित्यत्र साम्यमित्यनुषज्यते । अनेकस्य वर्णस्य सकृत् साम्यं छेकानुप्रास इत्यर्थः ।

व्याचष्टे—अनेकस्येत्यादि । अर्थात् प्राकरणिकत्वरूपात् ।

ततोऽरुणेति । अत्र कामकामिनीत्यनेकस्य सकृत् साम्यम् ।

## मधुमती

ततोऽरुणेति । अत्र नकारदकारयोः णकारडकारयोश्च संयुक्तत्वेनानेकयोः सकृत् एकवारं आवृत्त्या छेकानुप्रासः इत्यर्थः ।

## विस्तारिका

विभजते—छेकेति। एकत्वशङ्काव्युदासाय द्विधेति।

नियतागुणविशेषव्यञ्जकत्वेन परिगणिता वर्णास्तद्गतस्तन्निष्ठो व्यापारः सहकारी, अनुपूर्वीविशेषः, स एव वृत्तिः। गतो ज्ञातः, अर्थादाभ्यामुपाधिभ्याम्। तदाह—छेकानुप्रास इति।

स इति। द्विविधोऽनुप्रासः। अनेकस्येति। प्रकृतत्वाद् वर्णस्यानुयोगिसाकांक्षत्वाच्च साम्यमिति सुबन्ते तदाहार्यादिति। अर्थात् स्वरसाम्यस्यानियामकत्वात्। पूर्वपदार्थमाह—छेकेत्यादि।

केचिदत्रानेकधेत्यनेन साम्यविशेषणम्। अनेकधा स्वरूपतः क्रमतश्च। तेन जरा राजेत्यत्र क्रमभेदेनास्याविषय इत्याहुस्तन्न, अत्रापि तत्प्रसक्तेरिष्टत्वात्।

ततोऽरुणेत्यादि। अरुणस्य सारथेरेव, न तु सूर्यस्य। तस्यापि स्पन्देन, न तु विशेषोद्यमेन, शान्तवीर्यस्यैव समुचितत्वात्। मन्दो विरुचिः। वपुरिति। यस्य शरीरस्य तथाविधं सौन्दर्यमासीत्। शशीति। रुचिविभवविनाशे शशस्य कलङ्कस्य व्यक्तत्वात्। कामिनीगण्ड इव पाण्डुः। एवमेव वैरिपराभवयोः स्वोपाये यस्याप्युपमेयताप्राप्तिः। प्रभातवर्णनेयं व्यासपादानाम्।

अत्र स्पन्दमन्दीत्यत्र कामकामीत्यत्र च नकारदकारयोः, ककारमकारयोरप्यनेकस्य सकृत्साम्यम्।

## सारबोधिनी

नियतरसविशेषव्यञ्जकत्वेन परिगणिता वर्णाः तद्गतस्तन्निष्ठो व्यापारः सहकारी, आनुपूर्वीविशेषः स एव वृत्तिः। गतो ज्ञातः। अर्थात् आभ्यामुपाधिभ्याम्। तदाह छेकानुप्रास इत्यादि।

ततोऽरुणेति। स्पन्दमन्दीत्यत्र कामकामिनीत्यत्र नकारदकारयोः ककारमकारयोरप्यनेकस्य सकृत् साम्यम्।

## काव्यप्रदीपः

तं विभजते—

**छेकवृत्तिगतो द्विधा।**

छेकगतो विदग्धाश्रितः। तैश्च प्रचुरमेतत्प्रयोगात्। वृत्तिगतो वृत्त्याश्रितः। तदुपोद्बलकत्वात्। वृत्तिश्च मधुरादिरसानुगुणनियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यञ्जनाख्यः।

तयोर्लक्षममाह—

**सोऽनेकस्य सकृत्पूर्वः—**

अनेकस्य व्यञ्जनस्य सकृदेकवारं साम्यं पूर्वश्छेकानुप्रासः। उदाहरणम्—

**'ततोऽरुणपरिस्यन्दमन्दीकृतवपुः शशी।**

**दध्रेकामपरिक्षामकामिनीगण्डपाण्डुताम्॥'**

## काव्यप्रकाशखण्डनम्

**छेकवृत्तिगतो द्विधा। (,, द्वि० पा०)**

छेका विदग्धाः। वृत्तिर्मधुररसादिव्यञ्जिका तत्तदानुपूर्वीरूपा। गतो ज्ञातः। आभ्यामुपाधिभ्यामित्यर्थः। छेकानुप्रासो वृत्त्यनुप्रासश्चेति द्विधा ज्ञेयः। किं तयोः स्वरूपमित्याह—

**सोऽनेकस्य सकृत्पूर्वः, (,, तृ० पा०)**

अनेकस्य अर्थाद् व्यञ्जनस्य सकृदेकवारं साम्यं छेकानुप्रासः। यथा—

**ततोऽरुणपरिस्पन्दमन्दीकृतवपुः (प० ४३. २) शशी।**
**दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥**

ततस्तदनन्तरं शशी चन्द्रः कामेन कन्दर्पेण परिक्षामा कृशा या कामिनी तस्या यो पाण्डो गल्लात् परप्रदेशस्तद्वत् पाण्डुतां पाण्डरवर्णतां दध्रे धृतवान्। कीदृशः? अरुणस्य सूर्यस्य परिस्पन्देनोदयेन मन्दीकृतं म्लानतां नीतं वपुः शरीरं यस्य सः। मन्द-सपन्दीत्यत्र काम-कामिनीत्यत्र नकार-दकारयोः ककार-मकारयोप्यनेकस्य सकृत् साम्यम्।

## आदर्शः

छेकावृत्तिगत इति। गतः सम्बन्धी। तथा च छेकानां विदग्धानां सम्बन्धी वक्तुर्वैदग्ध्यमात्रप्रतिपादक इत्यर्थः। स्फुटरसादिरहितनीरसत्वे तद्बोध्यम्। रससत्त्वे तु वृत्तिसम्बन्धी। वृत्तिर्हि रसनिष्ठगुणव्यञ्जना तज्जनकतया तत्सम्बन्धीत्यर्थः। रसविषयइति, रसनिष्ठगुणव्यञ्जने रसस्यापि विषयीकरणात्। गत इत्युत्कीर्त्त्य तद्वशात् संज्ञाद्वयमाह—छेकानुप्रास इति।

सकृदिति, सकृदपीत्यर्थः। बहुशस्तु सुतरामिति भावः। पूर्वश्छेकानुप्रासः।

ततोऽरुणेति। प्रातश्चन्द्रवर्णनमिदम्। अत्र स्पन्दमन्दीति गण्डपाण्ड्वति च संयुक्तानेकवर्णसकृत्त्वम्। कामक्षामकामिनीति(c)अनेकवर्णासकृत्त्वम्। एवं ततोऽरुणपरिस्पन्दमन्द इन्दुरसुन्दर' इति करणे संयुक्तानेकवर्णानामप्यसकृत्त्वं बोध्यम्। प्रातश्चन्द्रवर्णनाञ्च न स्फुटरसभावादिरिति न वृत्त्यनुप्रासः किन्तु वक्तुर्वैदग्धीमात्रव्यञ्जनाच्छेकानुप्रासः।

## सुधासागरः

स्वरवैसदृश्येऽपीत्यादि। अयमाशयः—अव्यवधानेन वर्णमात्रविन्यासे वर्णानुप्रासः। शब्दसाम्यन्तु अनुप्राससामान्यलक्षणमित्यर्थाल्लभ्यते। वर्णपदं व्यञ्जनपरमतो व्यञ्जनावैसादृश्ये विरिञ्चिरित्यादौ नातिव्याप्तिः। न चैष्टैव सा, तत्रानुप्रासशब्दार्थस्याभावात्। रसादिभिरनुगतः प्रकष्ट आसो न्यासो ह्यनुप्रासशब्दार्थः। न च स्वरमात्रसादृश्ये रसानुगमो, न वा सहृदयहृदयावर्जकत्वलक्षणः प्रकर्ष इति। विभजते—'छेके'-ति।

छेका इत्यादि । गतपदस्य द्वन्द्वोत्तरवर्त्तित्वेनोभयत्राप्यन्वय: । अयं भाव:-छेकगतो विदग्धाश्रित: । तैश्च प्रचुरमेतत्प्रयोगात् । वृत्तिगतो वृत्त्याश्रित:, तदुपोद्बलकत्वात् । वृत्तिश्च 'मधुरादिरसानुगुणनियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यञ्जनाख्य' इति ।

किन्तयो: स्वरूमित्याहेति । तयोराद्यलक्षणमाहेत्यर्थ: ।

अनेकस्य व्यञ्जनस्य सकृदेकवारं साम्यं पूर्वश्छेकानुप्रास इत्यर्थ: ।

उदाहरणम्—'ततोऽरुणे'-ति । स्पष्टम् । अत्र णकारडकारयो: ।

(सू० १०७) एकस्याप्यसकृत्परः ॥ ७९ ॥

एकस्य अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः ।

(सू० १०८) माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।

(सू० १०९) ओजः प्रकाशकैस्तैस्तु परुषा

उभयत्रापि प्रागुदाहृतम् ।

(सू० ११०) कोमला परैः ॥ ८० ॥

परैः शेषैः । तामेव केचित् ग्राम्येति वदन्ति । उदाहरणम्-

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।

अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ३५६ ॥

---

सङ्केतः

एकस्येति । असमुदायरूपस्य केवलस्येति यावत् । तस्य असकृत् बहुकृत्वः सादृश्ये चारुत्वम्, अनेकस्य तु द्विः बहुकृत्वो वा ।

तत्र वृत्त्यनुप्रासे । उभयत्रापि उपनागरिकापरुषयोः । प्राक्—'अनङ्गरङ्गे'त्यादौ, 'मूर्ध्नामुद्वृत्ते'त्यादौ च । अत्र—अनङ्गरङ्गेत्यत्र एकस्य गकारस्य बहुवारमावृत्तिः ।

ग्राम्येति नाम्नि तात्पर्यम् । न तु दुष्टत्वे । न हि सर्वं ग्राम्यं दुष्टमेव । ग्राम्यमपि किमपि रम्यं भवतीति नामान्तरतत्परता खलु । अपसारयेति । अत्र वर्णसमुदायस्य बहुवारमावृत्तिः ।

बालचित्तानुरञ्जनी

द्वितीयस्वरूपप्रतिपादकं सूत्रमुपादाय व्याकरोति एकस्येति । उक्तसमुच्चयार्थः अपिशब्दादिति । अशक्तत्वं निश्चिनोति अपि शब्द इत्याह द्विरिति । ननु कीदृशी वृत्तिः कतिविधेत्यत आह तत्रेति । माधुर्यव्यञ्जकैः 'मूर्ध्नि वर्गान्त्यगा' इत्यादिप्रतिपादितैर्वर्णैः युक्ता उपनागरिकावृत्तिः । तथा चोक्तम्—

स्वरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोगभिः ।
स्पर्शैर्युतां च मन्यन्ते उपनागरिकां बुधाः ॥ इति ।

ओजप्रकाशकैः 'योग आद्य तृतीयाभ्यामित्यादिनिर्णीतैः वर्णैर्युक्ता परुषा वृत्तिरित्यर्थः। उभयत्रापि किमुदाहरणमित्याकाङ्क्षायामाह उभयत्रेति। नागरिका वैदर्भी। तस्या उदाहरणम्—

**अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।**

**कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तितानि॥ इति**

परुषा गौडी। तस्या उदाहरणम्

**मूर्ध्नामुद्वृत्ताविरलगलगलद्रक्तसंसक्तधारा**

**धौतेशङ्घ्रि प्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।**

**कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां**

**द्रोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः॥**

इत्युदाहृतमित्यर्थः।

वृत्त्यन्तरप्रतिपादकं सूत्रमुपादाय व्याकरोति कोमलेति। परैर्माधुर्यौजोव्यतिरिक्तैः प्रत्यायकैर्वर्णैः युक्ता कोमला नाम वृत्तिः। अस्या एव संज्ञान्तरं केचिदाहुरित्याह तामिति।

**शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया।**

**ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः॥ इति।**

उद्भटादयः कोमलामेव ग्राम्येति वदन्तीत्यर्थः। कोमला पाञ्चाली। तामुदाहरति अपसारयेति। अत्र रेफस्य लकारस्य बहुलकृत्वः सादृश्यात् वृत्त्यनुप्रासः।

## काव्यादर्शः

तत्रेति। वृत्त्यनुप्रासे। वर्णैरिति शिरसि निजवर्गान्त्ययुक्तैः कादिभिर्मान्तैरटवर्गैः। उपनागरिकेति। नागरिकाया विदग्धाया उपमिता। सा च शृङ्गारादौ। परुषेति। यदुक्तम्—

**शषाभ्यां रेफसंयोगैष्टवर्गेण च योजिता।**

**परुषा नाम वृत्तिः स्याद् ह्व-ह्व-ह्याद्यैश्च योजिता॥**

सा च रौद्रादौ। कोमला तु हास्यादौ! वृत्तयश्च रसादितात्पर्येण निवेशिताः कामपि च्छायामावहन्ति। रसादयो हि शब्दार्थशरीरस्य काव्यस्य जीवितम्। यच्च 'वृत्तयः काव्यमातृकाः' इत्युक्तं मुनिना, तत्र रसोचितश्चेष्टाविशेष एव वृत्तिः, यदाह— 'कैशिकी श्लक्ष्णनेपथ्या शृङ्गार[र] ससंभवा' इत्यादि॥

'प्राग्' इति 'ततोऽरुणे'त्यादौ। 'तामेवे'ति। वैदग्ध्यविहीनस्वभावसुकुमाराऽपरुषग्राम्यवनितासादृश्यात्। एवमनेकस्य सकृदावृत्तौ छेकानुप्रासः, एकस्यानेकस्य चासकृदावृत्तौ वृत्त्यनुप्रासः॥

## विवेकः

अत वृत्त्यनुप्रासं लक्षयति—एकस्यापीति। रसविषयव्यापारवती नियतवस्तुरचनेह वृत्तिः। सा च त्रिधेत्याह—तत्रेति वृत्त्यनुप्रासे। माधुर्यव्यञ्जकैरित्यादि सूत्रम्। नागरिकयोपमिता उपनागरिका 'अवादयः क्रुष्टाद्यर्थे तृतीयये'ति (पा. १/२/७८) समासः। द्वितीया तु परुषवर्णारब्धत्वात् परुषा। ओज इति—तद्वृत्तिद्वयोपयुक्तेभ्योऽन्यैर्वर्णैः कोमलैरारब्धत्वात्। कोमला परैरिति सूत्रप्रतीकम्। तामेवेति ह्लादिभ्यः परेः कोमलामेव। अत्यन्तकान्त्यभावाद्वैदग्ध्यविहीनस्वभावग्राम्यवनितासादृश्याच्च ग्राम्येति केचिन्मन्यन्ते। आसु च वृत्तिषु तुल्यव्यञ्जनन्यासमुपनागरिकाऽनुप्रासादिरूपं भिन्न-भिन्नमनुप्रासं कवयो रचयन्ति यदाह (का. अ. सा. सं. १/७)—'सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु। पृथक् पृथगनुप्रासमुशन्ती'ति। तदित्थमनुप्रासानामेव दीप्तमसृणमध्यवर्णवर्णनीयोपयोगितया परुषत्वललितत्वमध्यमत्वस्वरूपविवेचनाय वर्गत्रयसम्पादनार्थं तिस्रोऽनुप्रासजातय एव वृत्तय इत्युक्ताः, वर्तन्तेऽनुप्रासभेदा आस्विति कृत्वा।

## दीपिका

द्विरिति। ध्रुवीकृतस्यैकस्यानेकस्य वा व्यञ्जनस्य ततोऽन्याभ्यां द्वाभ्यामेकाभ्यामनेकाभ्याञ्चेत्यर्थः। एवं बहुकृत्व इत्यपि व्याख्येयम्। उपलक्षणं चैतत्। तेनैकव्यञ्जनस्यैकधासादृश्येऽपि ज्ञेयम्। वृत्तीनामनुप्रासविशेषलक्षणावतारस्तत्रेति। तत्रेति वृत्त्यनुप्रासे। नागरिकया मसृणपथ्यरचनयोपनीतोपनागरिका, परुषवर्णावयवा परुषा प्रागिति। अनङ्गरङ्गेति, मूर्ध्नामुद्वृत्तकृत्तेत्यादि च। कोमलाऽनन्त्यन्तपरुषावर्णावयवा। शेषैरुपनागरिकापरुषयोरनुपयुक्तैः प्रसादानुगुणैः।

ग्राम्येति। अत्यन्तकान्तिराहित्येन ग्राम्यनारीसाम्यात्। एता एवेति। तास्वासां प्रायिकत्वात्। तासाञ्च शब्दविन्यासापृथग्रूपत्वाद् विन्यासमात्रे च नातिशयिनि विलक्षणनामायोगात्।

## दर्पणः

एकस्यापीति। अयमर्थः। न केवलमनेकव्यञ्जनस्य द्विबहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः। कपित्वे। [किन्त्वे] कस्यापि किञ्चापि [?] शब्दस्य काकाक्षिन्यायेनोभयत्र संबन्धः। तेन न केवलचकारो हेयमित्यादि च। एकस्य व्यञ्जनस्यत्सकृत्सादृश्यं तस्याप्येतद्ग्रन्थकारमते एकव्यञ्जनसादृश्यामध्येऽन्तःपातः। वृत्त्यनुप्रास इति सूत्रस्थपदार्थः।

## साहित्यचूडामणिः

एकस्यापीति। "अन्यथा तु वृत्त्यनुप्रासः" (अलंकारसू० ६) इति सूत्रस्थित्या पूर्वस्माद् वैपरीत्यमस्य लक्षणम्। उक्तसमुच्चयार्थोऽयमपिशब्द इत्याह—अपिशब्दादिति। असकृत्त्वं निश्चिनोति—द्विर्बहुकृत्वो वेति।

अथ वृत्तिं विविनक्ति—माधुर्येति। "मूर्ध्नि वर्गान्त्यगा" इत्यादि प्रतिपादितैः उपनागरिका नागरिकयोपमिता। "उपादयः क्रुष्टाद्यर्थे तृतीया" (२-२-१८ वा०) इति समासः। यदाहोद्भटः [का. का. सं. १]

**सरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोगिभिः।**
**स्पर्शैर्युतां च मन्यन्त उपनागरिकां बुधाः॥ इति।**

ओजःप्रकाशकैरिति । योग आद्यतृतीयाभ्यामि'ति निर्णीतैः ।

प्रागिति । 'अनङ्गरङ्गे'ति 'मूर्ध्नामुद्वृत्ते'ति च । कोमलेति । प्रसादप्रत्यायकैः कोमला नाम वृत्तिः । तां कोमलमेव केचिदुद्भट्टादयो ग्राम्येति वदन्ति । यथाह—

**शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया।**

**ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः॥ [का. सा. सं. १] इति।**

अपसारयेति । अत्र रेफस्य लकारस्य बहुकृत्वः सादृश्याद् वृत्त्यनुप्रासः सारादेर्व्यञ्जनसमुदायस्य चासकृत् सादृश्यात् ।

**सम्प्रदायप्रकाशिनी**

अथ वृत्त्यनुप्रासः—एकस्यापीति । एकस्यानेकस्य च व्यञ्जनस्य मुहुः साम्यं वृत्त्यनुप्रासः ।

तदेतद् व्याचष्टे—एकस्यापिशब्दादिति । द्विर्बहुकृत्वो वेति । उभयथापि सकृत्त्वाभावो दर्शितः ।

ननु वृत्त्युपलक्षितोऽयमनुप्रास इत्युच्यते, किंरूपास्ताः कियत्श्चेत्यत आह—माधुर्येत्यादि । 'मूर्ध्नि वर्गान्त्यगा' इत्यादिना प्राक् प्रदर्शितैर्माधुर्यव्यञ्जकैर्वर्णैरुपलक्षिता चेत् सा वृत्तिरुपनागरिकेष्यते हृदयावर्जने नागरिकाकल्पेयमिति कृत्वा । 'योग आद्यतृतीये' त्यनुशासनानुसाराद् ओजः प्रकाशकैर्वर्णैरुपलक्षिता परुषा ।

वृत्तिद्वयमिदं गुणप्रस्तावे प्रसङ्गादुदाहृतमित्यनुस्मारयति—उभयत्रापीति ।

कोमला परैरिति । परैः अमधुरैः । अपरुषैः प्रसादविशेषप्रकाशकैरित्यर्थः ।

अस्याः संज्ञान्तरमाह—तामेवेति । तामिमां ग्राम्यकल्पतया ग्राम्येति चाहुः । अतो वृत्त्यन्तरभ्रमो न कार्य इति यावत् । तत्र माधुर्यप्रकाशकत्वेन मधुरवर्णविषयप्रसादप्रकाशकत्वेन चोपनागरिकैवोदाहृता 'अनङ्गरङ्गे'ति, 'परिम्लानमि'ति च । अत माधुर्यौजोविषयत्वेनैवोदाहरणमनुस्मारितम् । प्रसादविशेषप्रकाशकत्वादनुदाहृतचरीमिमामुदाजिहीर्षुराह—उदाहरणमिति ।

अपसारयेति । अत्र हि वर्णा नातिकोमलपरुषाः ।

**मधुमती**

वृत्तिविभागमाश्रित्य अनुप्रासं विभजते- तत्रेति । तथा च उपनागरिकापुरुषे वृत्तिविशेषौ, तद्गततया अनुप्रासेऽपि भिन्न इत्यर्थः । परैः शेषैः । माघुर्यौजोव्यतिरिक्तस्थले इति भावः । एवं च यत्र माधुर्यौजसी तत्र यद्यपि प्रसादोऽस्त्येव, तथापि तद्व्यञ्जकैरेव तस्यापि व्यञ्जनम् । यत्र तु हास्याद्भुतभयानकेषु प्रसादमात्रं तत्र कोमलेत्यर्थः । यद्वा— माधुर्यौजोव्यञ्जकवर्णरचनाभिन्ना वर्णरचना कोमलेत्यर्थः । तथा च— सर्वत्र रसे प्रसादो व्यज्यते । अत एव 'अपसारय घनसारं' इत्यत्र विप्रलम्भे कोमलामुदाजहार न हास्यादिषु । तथा च— कोमला सर्वसाधारणी, उपनागरिकापरुषे तु नियते इति द्रष्टव्यम् ।

## विस्तारिका

एकस्येत्यादि। असकृदिति व्याचष्टे द्विरित्यादि। अत्रैकेनापि सकृत्साम्ये वृत्तित्वमिच्छन्ति। यथा 'व्याधूतचूताङ्कुर' इत्यत्र ताकारस्य, तन्न, अस्या गुणव्यञ्जकनियतवर्णगतत्वनियमात् ताकारस्य माधुर्यादिव्यञ्जकत्वेनापरिगणितत्वात्। छकारादिविशेषव्यपदेशे चानुप्रासत्वसामान्यम्। द्विधेत्यस्यैकत्वसन्देहव्यवच्छेदकत्वेन व्याख्यातत्वात्। अन्यथाधिकसंख्याव्यवच्छेदकत्वे लाटानुप्रासेऽनुप्रासत्वाभावप्रसङ्गात्। किन्त्वेकस्य संकृत्साम्ये नाधिकचमत्कार इति विदग्धाप्रयोज्यत्वानुच्छेदकत्वेन संगृहीतमिति भावः।

वृत्तिं विभजते—माधुर्येत्यादि। सज्जनया चतुरया नागरिकया स्त्रिया उपमिता उपनामरिका।

ओज इत्यादि। तैः वर्णैः परुषा, तद्वर्णघटितत्वात्। उभयत्रोपनागरिकायां परुषायां च। प्रागिति। अनङ्गरङ्गेत्यादि। प्रौढच्छेदेत्यादि। एवं कोमलेत्यपि। एवं परैरित्यादि। ग्राम्या अविदग्धस्त्रीतुल्या।

अपसारयेत्यादि। असंयुक्तह्रस्वा घोषाः, रकारबाहुल्यात् कोमला।

## सारबोधिनी

एकस्यापीति। अत्रैकस्य सकृत् साम्येऽपि वृत्तित्वमिच्छन्ति। यथा 'व्याधूतचूताङ्कुरे'त्यादौ। वृत्तिं विभजते माधुर्येति।

## काव्यप्रदीपः

द्वितीयं लक्षयति—

**एकस्याप्यसकृत्परः॥ २॥**

अपिशब्दादनेकस्यापि। असकृद्विर्बकृत्वो वा। वस्तुतस्तु च्छेकानुप्रासभिन्नं लक्ष्यम्। अन्यथैकस्य सकृदावृत्तेरसंग्रहापत्तेः। एवं चैकस्य वर्णस्य सकृदसकृद्वा अनेकस्य त्वसकृत्सादृश्यं वृत्त्यनुप्रास इति पर्यवसन्नम्।

तत्र

**माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते।**

यथा—'अनङ्गरङ्गप्रतिमं—' इत्यादि।

**ओजः प्रकाशकैस्तैश्च परुषा**

यथा—'मूर्ध्नामुद्वृत्त—' इति।

**कोमलाऽपरैः॥ ३॥**

अपरैरोजोमाधुर्यव्यञ्जकातिरिक्तैः प्रसादवद्भिरक्षरैः। एनामेव केचिदतिशयितकान्तिराहित्येन ग्राम्यस्त्रीसाम्याद्ग्राम्येति वदन्ति। उदाहरणम्—'अपसारय' इत्यादि।

## काव्यप्रकाशखण्डनम्

**एकस्याप्यसकृत्परः ॥ (का. ७९, च.पा.)**

अपिशब्दादनेकस्य व्यञ्जनस्य वा द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः । वृत्तिर्विभजते । तत्र—

**माधुर्यव्यञ्जकैर्वर्णैर्वैदर्भी रीतिरिष्यते ।**
**ओजःप्रकाशकैर्गौडी पाञ्चाली तैस्तथा परैः ॥ (मू. का. ८०)**

सर्वत्र प्रागुदाहृतम्—'अनङ्गरङ्गप्रतिम'मित्यादिना, 'मूर्ध्नामुद्वृत्तकृत्ये'त्यादिना, 'अपसारय घनसार'मित्यादिना च ।

## आदर्शः

एकस्यापीति । 'परः' वृत्त्यनुप्रासः । अपिशब्दादिति । तथा च काव्यस्य स्फुटरसवत्त्वे एकस्यानेकस्य वा असकृत्त्वे वृत्त्यनुप्रासत्वम् किन्त्वनेकस्य सकृत्त्वे रसानुपकारकत्वात् सरसकाव्येऽपि न वृत्त्यनुप्रासत्वं किन्तु छेकानुप्रासत्वमेव । एकस्य सकृत्त्वे तु क्वापि नानुप्रासत्वमिति निष्कर्षः ।

उभयत्रेति । अङ्गरङ्गेत्यादिकमुपनागरिकायां मूर्द्धामुद्वृत्तेति परुषायामुदाहृतिमित्यर्थः ।

अपसारयेति । अत्र सानुस्वारत्वेन रेफस्य लघुत्वाभावात् न माधुर्यव्यञ्जकत्वम् ।

## सुधासागरः

द्वितीयं लक्षयति—'एकस्ये'ति ।

एकस्येत्यादिवृत्तिः स्पष्टार्था । यत्तु श्रीवत्सलाञ्छनभट्टाचार्यैरुक्तम्—'अत्रैकस्य सकृत्साम्येऽपि वृत्त्यनुप्रासमिच्छन्ति । यथा—'व्याधूतचूताङ्कुरेत्यादौ'इति ।' तत्प्रामादिकम् । तत्र 'ऊत ऊत' इत्यस्य छेकाभासत्वात् । न ह्येकस्य व्यञ्जनमात्रस्य सकृदावृत्तौ कश्चिच्चमत्कारोऽनुभूयते । एवं च प्रदीपकारैर्वृत्तिं व्याख्याय यदुक्तम्—'वस्तुतस्तु छेकानुप्रासभिन्नं लक्ष्यम्, अन्यथैकस्य सकृदावृत्तेरसङ्गतापत्तेः । एवं चैकस्य वर्णस्य सकृदसकृद्वाऽनेकस्य त्वसकृत्सादृश्यं वृत्त्यनुप्रास इति पर्यवसन्नम्' इति तदीर्ष्यामात्रम् । न खलु वाग्देवतावतारवृत्तिकारोक्तं ब्रह्मणाऽप्यतिवर्त्तितुं शक्यमित्यसकृदावेदितमस्माभिस्तत्र तत्रेति सुधीभिर्द्रष्टव्यम् ।

तत्र वृत्त्यनुप्रासे ।

उभयत्रापीति । अष्टमोल्लासे माधुर्यौजसोर्व्याख्यावसरे 'अनङ्गरङ्गप्रतिम'-मित्यादि । 'मूर्ध्नामुद्वृत्तकृते'त्यादि चोदाहृतमिति भावः ।

परैः शेषैरित्यादि ओजोमाधुर्यव्यञ्जकातिरिक्तैः प्रसादवद्भिरक्षरैः । एनामेव केचिदतिशयितकान्तिराहित्येन ग्राम्यस्त्रीसाम्याद् ग्राम्येति वदन्तीति भावः । उदाहरणम्—अपसारयेत्यादि ।

## (सू० १११) केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।

**एतास्तिस्रो वृत्तयः वामनादीनां मते वैदर्भीगौडीपाञ्चाल्याख्या रीतयो मताः ॥**

---

### सङ्केतः

रीतयः इति । एतेन रीतयो वृत्त्यात्मिकाः इति फलति ।

### बालचित्तानुरञ्जनी

उपनागरिकापरुषाकोमला वृत्तयोऽनुप्रासस्याङ्गभूताः । एतासां काव्यात्मभूताभिः वैदर्भ्यादिभिरेकत्वमुक्तवान् तदुपसङ्ग्रहार्थं यत्सूत्रं तदुपादाय व्याकरोति केषामिति ।

### विवेकः

एवञ्च यद्यपि भामहादिभिर्वृत्त्यनुप्रासादिभ्यो नाभ्यधिकव्यापारा इति न पृथग्वृत्तयः कश्चितास्तथापि वामनादिभिः प्रयुक्तत्वाद्दर्शयति केषाञ्चिदिति । मृग्यतेऽन्विष्यते यदि वा गम्यते महाकविपदवी- लाभार्थिभिरनयेति रीतिर्मार्गः, रीङ् गताविति धात्वनुसारात् । अस्याश्च विदर्भगौडपञ्चालदेशेषु तत्रत्यैः कविभिर्यथास्वरूपमुपलब्धत्वाद्देशसमाख्या, न पुनर्द्रव्यवद्देशैः किञ्चिदुपक्रियते काव्यानाम् । तत् समग्रैर्गुणैरुपेता वैदर्भी रीतिरिष्यते । ओजः कान्तिश्च यस्यां स्तः सा माधुर्यस्याभावादसमग्रगुणा गौडीया समासबहुलाऽत्युल्वणपदा चेत्यर्थः । एवमोजःकान्त्यभावाच्छ्लथा विच्छाया च माधुर्यसौकुमार्योपपन्ना पाञ्चालो रीतिरिति (का. अ. सू. वृ. १/२/१०-१३) ।

### दीपिका

रीतिमार्गः । रीङ्गतावित्यतो रीयतेऽनयेति व्युत्पत्या । वैदर्भीत्यादिनामविशेषस्तु तद्देश्येषु कविषु प्रायेणोपलम्भात् । प्रसादव्यञ्जककोमलप्रायवर्णमयी वैदर्भी, ओजोव्यञ्जकपरुषप्रायवर्णमयी गौडी, माधुर्यव्यञ्जकमसृणप्रायवर्णमयी पाञ्चाली ।

### दर्पणः

वैदर्भीत्यादीनामनिवेशः तत्तद्देशेषु कविषु प्रायेणोपलंभात् [?] प्रसादव्यञ्जककोमलवर्णमयी ओजोव्यञ्जकपरुषप्रायवर्णमयीं गौडी । माधुर्यव्यञ्जमसृणप्रायवर्णमयी पाञ्चाली ।

### साहित्यचूडामणिः

प्रसङ्गेन रीतिमालोचयति—केषाञ्चिदिति । एता उपनागरिका परुषा कोमला । माधुर्यादीनां गुणानामुचितवृत्त्यर्पणप्रवीणानां ललितदीप्तमध्यमवर्णनीयविषयाणां विदर्भगौडपञ्चालदेशहेवाकप्राचुर्येण त्रैविध्यम् । सैव रीतिर्गुणसमुदाययोरिति यावत् । जातिर्जातिमतो नान्या, समुदायश्च समुदायिभ्यो नान्य इति रीतिवृत्तयो न गुणालङ्कारव्यतिरिक्ता इति रहस्यम् । यदाह [ध्वनिकारः] —

रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।
औचित्यवान् यस्ता एता वृत्तयो द्विविधाः स्थिताः ॥

शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः ।
वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन् काव्यलक्षणे ॥

अस्फुटस्फुरितं काव्यतत्त्वमेतद् यथोदितम् ।
अशक्नुवद्भिर्व्याकर्तुं रीतयः संप्रवर्तिताः ॥ इति ।

तत्र शब्दगता वृत्तय एता उपनागरिकानागरिकाग्राम्याः । अर्थगतास्तु कैशिक्यादयः प्रसिद्धाः ।

**सम्प्रदायप्रकाशिनी**

या एता बहिरङ्गतरस्य वर्णालङ्कारस्याङ्गभूता एव वामनादिभिवैदर्भीप्रमुखा रीतयः काव्यात्मत्वेनोक्ताः । तस्यायमुपहासावसर इत्याह—केषाञ्चिदिति । एता इति अङ्गतां साभिनयं दर्शयति ।

व्याचष्टे—एतास्तिस्र इत्यादि । कथं वर्णालङ्काराङ्गभूतो वर्णधर्मः काव्यात्मत्वेन सिद्धान्तितो मुग्धैरिति यावत् । एवं वृत्तित्रयोदाहरणमुखेन वृत्त्यनुप्रासस्त्रिभेदक इति स्पष्टमुपदिष्टम् ।

**मधुमती**

वामनादीनां मतमाह—केषाञ्चिदिति । तत्र उपनागरिका वैदर्भी, परुषा गौडीया कोमला पाञ्चाली, इति द्रष्टव्यम् । तत्र शृङ्गरादौ वैदर्भी, वीरादौ गोडी, रसानां प्रकाशरूपतया प्रतीतिस्थगत्वे न तद्बाधात् सर्वत्र पाञ्चाली इति द्रष्टव्यम् ।

**विस्तारिका**

वामनादीनामित्यस्य रीतित्वमभिधायात्मत्ववादिनामित्यर्थः ।

**काव्यप्रदीपः**

**केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ।**

वामनादीनां मते एता एव यथाक्रमं वैदर्भीगौडीपाञ्चाल्यो रीतय उच्यन्ते ।

**आदर्शः**

वैदर्भीगौडीयेति । तेनोपनागरिकानुप्रासो वैदर्भी, रीतिः, परुषानुप्रासो गौडीया, कोमलानुप्रासः पाञ्चाली ।

**सुधासागरः**

एता इत्यादि । वामनादीनां मते एता एव यथाक्रमं वैदर्भी गौडी पाञ्चाल्यो रीतय उच्यन्ते इत्यर्थः ।

## (सू० ११२) शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ८१ ॥

शब्दगतोऽनुप्रासः शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात्। लाटजनवल्लभत्वाच्च लाटानुप्रासः। एष पदानुप्रास इत्यन्ये।

---

### सङ्केतः

शाब्दस्त्विति। न तु वार्ण इति भावः। तात्पर्यमात्रतः इति यमकव्यवच्छेदार्थम्। तात्पर्यं—अन्यपरत्वम्। तेनैव भेदोऽत्र, न तु शब्दार्थस्वरूपेण। अन्वयमात्रभेदादिति। अनन्वये शब्दैक्यं औचित्यात् आनुषङ्गिकम्। न तु नियतम्। ततश्च—तत्र हंस इव हंस इति, हंसो मरालः इति वा कृते न दोषः। अत्र तु शब्दार्थयोरैक्यमेव।

### बालचित्तानुरञ्जनी

एवं वार्णमनुप्रासमभिधाय शाब्दमनुप्रासमाह शाब्दस्त्विति। व्याकरोति। तात्पर्यमात्रस्य भेदे सति शब्दार्थपौनरुक्त्यं लाटानुप्रास इति लक्षणम्। मात्रशब्देन शब्दार्थयोरभेदस्वीकारात् यमकव्यावृत्तिः। तात्पर्यार्थस्य भिन्नत्वात् पौनरुक्त्यनिवृत्तिरिति द्रष्टव्यम्। अस्यैव संज्ञान्तरमाह एष इति। यदाह उद्भटः

**स्वरूपार्थविशेषेऽपि पुनरुक्तिफलान्तरम्।**
**शब्दानां वा पदानां वा लाटानुप्रास इत्यपि॥**

### काव्यादर्शः

शाब्दस्त्विति। शब्दाः पुनः सदृशा। लाटानुप्रासः। तात्पर्यमन्यपरत्वं, तस्मादेव भेदो, न शब्दार्थाभ्यामन्वयमात्रेण भिन्ना। इत्यर्थः। अन्य इति वामनादयः।

### विवेकः

एवं वर्णानुप्रासं लक्षयित्वा शब्दानुप्रासामाहं शाब्दस्त्विति। लाटजनवल्लभत्वादित्यनेनात्युल्वणत्वादयं नान्यानुप्रासवत् सर्वेषां रञ्जक इति दर्शयति यदाह वामनः— 'उल्वणस्तु न श्रेयानि'ति (का. अ. सू. वृ. ४/१/९)। तात्पर्यमनन्यपरत्वं तदेव भिद्यतेऽत्र न पुनः शब्दार्थस्वरूपम्, अतएव यमकाद्भेदः। अयञ्चोपलभ्यमानसुप्तिङ्तानांपदार्थनाम्।

### दीपिका

एवमर्थानुसन्धानविरहिवर्णमात्रवृत्तिरूपमनुप्रासं लक्षयित्वा शब्दार्थावृत्तिशरीरं लाटानुप्रासमाह—शाब्दस्त्विति। शब्द्यते सूच्यतेऽनेनेति शब्दः प्रातिपदिकादिः, तदाश्रितः शाब्दः। 'तुः' पूर्वतो व्यतिरेकसूचकः। पौनरुक्त्या द्विनिरुक्तिभेद इति तात्पर्यपदविवृतिः। अन्वयेति। वाक्यार्थानुसंधाने विशेषप्रतीतिर्न तु पदार्थमात्रानुसन्धान इत्यर्थः। तद्भेदं तल्लक्षणम्।

## दर्पणः

शब्द्यते ध्वन्यतेऽर्थोनेनेति शब्दः प्रातिपदिकादिः । तदाश्रितोऽनुप्रासविशेषः । त्तः [?] पूर्वोक्तवर्णमात्रवृत्तिव्यतिरेकसूचकः । तात्पर्यमात्रेण न तु स्वरूपेण अनुस्य भेदे [अनुप्रासभेदे] । एतेनास्य स्वरूपव्यञ्जनसमुदायपौनरुक्तथेऽपि यमकाद्वैलक्षण्यम् । तात्पर्यभेदादेकचनानुपुनरुक्ति दोंषः ।

अन्वयेति । पदार्थानामनुयानन्तरमेव भेदप्रतीतेरित्यर्थः ।

## साहित्यचूडामणिः

एवं वर्णमुक्त्वा शाब्दमनुप्रासमाह—शाब्दस्त्विति ।

शब्दार्थयोरभेदेऽपि समयग्रहणादिना भेदाभावेऽपि पार्यन्तिकवाक्यार्थमात्रभेदादयमनुप्रासः शाब्दः, लाटदेशदृष्टत्वात् तत्समाख्या यथा विदर्भादिषु दृष्टतया रीतीनां वैदर्भ्यादिसमाख्या । तत्त्वतस्तु देशनिर्देशैर्न किञ्चिदुपक्रियते काव्यानाम् ।

यदाहोद्भटः—**स्वरूपार्थाविशेषेऽपि पुनरुक्तिः फलान्तरात् ।**
**शब्दानां वा पदानां वा लाटानुप्रास इष्यते ।। इति ।**

यच्च सूत्रे "तात्पर्यभेदवत् तु लाटानुप्रासः" (अ० सू० ९) इति । तत्रानुपलक्ष्यमाणसुप्तिङन्ताः शब्दाः, तेष्वेवोपलक्ष्यमाणेषु पदानि ।

## सम्प्रदायप्रकाशिनी

इत्थं वर्णानुप्रासं निरूप्य शब्दानुप्रासं प्रस्तौति—शाब्दस्त्विति । शब्दगतोऽयमनुप्रासः । ननु शब्दसाम्ये सत्यर्थैक्यात् पौनरुक्त्यं प्राप्तमित्यत उक्तं तात्पर्यमात्रतो भेदे सतीति । तात्पर्यमात्रेति कथनान्नार्थभेदः । अर्थभेदे यमकत्वप्राप्तेः ।

व्याचष्टे—शब्दगत इत्यादि । शब्दगत इति निरुक्त्या संज्ञा नियमिता । शब्दार्थयोरिति यमकाद् व्यावृत्तिर्दर्शिता । अन्वयमात्रेति पौनरुक्त्यं परिहृतम् । लाटजनेत्यवैचित्र्यादसार्वजनीनता द्योतिता । शब्दानुप्रास इति संज्ञा । इमम् अनिपुणाः केचित् पदानुप्रास इत्याहुस्तद् दूषयिष्यत इत्यभिप्रायेणाह—एष पदानुप्रास इति ।

## मधुमती

लाटानुप्रासं लक्षयति—शाब्दस्त्विति । यद्यप्यत्र शब्दार्थयोः पुनर्वचनात् अर्थालङ्कारताऽपि संभाव्यते । तथापि पर्यायान्तरेण तदर्थाभिधाने नायमिति शब्दान्वयव्यतिरेकानुविधायितया शाब्द इत्युक्तम् । अत एव चात्र कल्पितपदत्वमपि नास्तीति प्रागुक्तम् । यमके तु एकार्थत्वाभावात् । नातिव्याप्तिः, तदिदमाह—अन्वयमात्रेति । न पदार्थभेदादिति भावः । ननु पदानुप्राप्सेऽतिव्याप्तिः अत आह—एष इति । तथा च संज्ञामात्रभेदात् नातिव्याप्तिरिति भावः ।

## विस्तारिका

शाब्द इत्यादि। शब्द्यते प्रकाश्यतेऽनेनेति शब्दः। पदं प्रातिपदिकं च। लाटो देशविशेषस्तत्स्थः कविस्तत्प्रियत्वात् तथा। अनुप्रासो वर्णसाम्यमेव। तुर्भिन्नक्रमः। लाटानुप्रासव्यवहारः पुनः शाब्दः शब्दगतः, न वर्णनिष्ठः। ततो वृत्तिच्छेकाभ्यामस्य भेदः।

मिश्रास्तु साम्यमनुवृत्त्य तद्विशेषणीभूतस्यापि शाब्दपदस्यानुप्रासलिङ्गग्रहणम्, विधेयतया तस्य प्राधान्यादिति वदन्ति, तन्न, अविशेषमपहाय तद्विषये यस्य लिङ्गग्रहणमित्युक्तेर्निर्युक्तिकत्वात्। शब्दगतोऽयमनुप्रास इति विवृण्वता ग्रन्थकृतैवानुप्रासेन सह समन्वितत्वाच्च।

लाटानुप्रासस्वरूपमाह—भेद इत्यादि। तात्पर्यविषयतावच्छेदकमात्रभेदान्मात्रपदेन शब्दार्थयोरैक्यमावेदितुम्।

तद्वक्ष्यति—शब्दार्थयोरभेद इत्यादि। अनुप्रासाधिकारे पुनरनुप्रासग्रहणम्, उत्तरत्र तदधिकारनिवृत्त्यर्थम्।

ननु यमकस्य नानुप्रासभेदत्ता, भिन्नार्थानुसन्धानेन रसव्यवहिताऽनुप्रासपदयोगविरहात्, रसाद्यनुगमाभावात्। तुकारोऽनुप्रासाद् व्यतिरेकसूचकः। तेनायमलङ्कारात् पृथगेवेति मिश्राः, तन्न; अस्याननुप्रासत्वे लाटानुप्रास इत्यत्रानुप्रासपदादर्थानुपस्थितिप्रसङ्गात्, शक्तिग्रहाभावात्। अत एव 'लाटानुप्रासेन सहानुप्रासः पञ्चधा मतः' इत्यनुप्रासस्य पञ्चविधत्वमुक्तं प्राचीनैः।

यत्त्वनुप्रासयमकभेदो गड्डुरिका प्रवाहेणेति तन्न; उक्तयुक्त्यानुप्रासताया अप्रसङ्गात्। अन्य इति। प्रातिपादिकनिर्वाहकत्वेऽपि पदानुप्रासाभिधायोग्यत्वात्।

## सारबोधिनी

एवं वर्णानुप्रासं लक्षयित्वा शब्दानुप्रासं लक्षयित्वा शब्दानुप्रासं लक्षयति शाब्दस्त्विति। शब्द्यते प्रकाश्यते अनेनेति शब्दः। पदं प्रातिपदिकम्। तुर्भिन्नक्रमः। लाटानुप्रासः पुनः शाब्दः शब्दगतो न वर्णनिष्ठः। ततश्छेकवृत्तिभ्यामस्य भेद इति। तात्पर्यमात्रत इति। मात्रशब्देन शब्दार्थयोरभेदस्वीकारात् न यमकेऽतिप्रसक्तिः। तत्र भिन्नार्थकत्वस्वीकारात्तु अर्थे सतीति स्मर्तव्यम्।

## काव्यप्रदीपः

शब्दानुप्रासमाह—

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः॥ ४॥**

शब्दसारूप्यव्यापारवान् शब्दः प्रातिपदिकादिस्तद्गतः शाब्दः। भेद इति तात्पर्यमन्वयभेदस्तन्मात्राद्भेदे। न तु स्वरादर्थाद्वा। तथा च भिन्नतात्पर्यतुल्यार्थशब्दसादृश्यं शब्दानुप्रासः। स तु लाटानुप्रास उच्यत इत्यर्थः। तुशब्दो वर्णानुप्रासस्य लाटीयत्वव्यवच्छेदकः। यत्तु—"पुनरुक्तव्यवच्छेदाय 'भेदे तात्पर्यमात्रतः इत्युक्तम्" इति व्याख्यानं तदसत्। मात्रशब्दस्याप्रयोजकतापत्तेः।' एष एव कैश्चित्पदानुप्रास उच्यते। सोऽयं पदस्य नाम्नो वेति

द्विविध तत्र सविभक्तिकस्य यत्रावृत्तिः स आद्यः। अन्यादृशस्तु द्वितीयः। तयोराद्योऽनेकस्य पदस्यैकस्यैव वा पदस्येति द्विविधः। अन्त्यस्तु त्रिविधः। आवृत्तेरभिन्नसमासस्थतया, भिन्नसमासस्थतया, एकस्याः समासस्थत्वे सत्यपरस्या असमासस्थतया च समासं विनास्यासंभवादिति पञ्चप्रभेदा इति कारिकया प्रतिपादितम्।

## काव्यप्रकाशखण्डनम्

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः। (मू० का० ८१, उ०)**

पूर्वं तु वर्णानुप्रासो दर्शितः, अयं तु शब्दानुप्रासः। शाब्दः शब्दगतोऽनुप्रासः। शब्द्यते प्रकाश्यते अनेन। शाब्दश्च पदं प्रातिपदिकं च। लाटानुप्रासः पुनः शाब्दः शब्दगतो न वर्णगत इत्यर्थः। अतः च्छेकवृत्तिभ्यामस्य भेदः।

## आदर्शः

इत्थं वर्णानुप्रासप्रभेदमुक्त्वा शब्दानुप्रासमाह—शाब्दस्त्विवति। तात्पर्येति उद्देश्यविधेयभावेन यत् तात्पर्यं तद्विषयार्थमात्रतो भेदेऽपीत्यर्थः। मात्रपदादर्थव्यवच्छेदः, स च यमकव्यावृत्तये कृत इति बोध्यम्। शब्दार्थयोरिति। शब्दयोरर्थयोश्चेत्यर्थः। शब्दश्च पदम्। तयोर्भेदे तु वक्ष्यमाणं यमकमेवेति बोध्यम्।

## सुधासागरः

शब्दगतोऽनुप्रास इत्यादि। शब्द्यते-प्रकाश्यतेऽनेनेति शब्दः शब्दनारूपव्यापारवान् प्रातिपदिकादिः, तद्गतः शाब्दः। भेदे इति। तात्पर्यमन्वयभेदस्तन्मात्राद् भेदे न तु स्वरादर्थाद्वा। तथा च भिन्नतात्पर्यकतुल्यार्थक-शब्दसादृश्यं शब्दानुप्रासः, स तु लाटानुप्रास उच्यते इत्यर्थः। तुशब्दो वर्णानुप्रासस्य लाटीयत्वव्यवच्छेदकः।

यत्तु पुनरुक्तत्वव्यवच्छेदाय 'भेदे तात्पर्यमात्रत' इत्युक्तमिति व्याख्यानम्, तदसत्। मात्रशब्दस्याप्रयोजकतापत्तेः। एष एव कैश्चित्पदानुप्रास उच्यते। सोऽयं पदस्य नाम्नो वेति द्विविधः। तत्र सविभक्तिकस्य यत्रावृत्तिः स आद्यः। अन्यादृशस्तु त्रिविधः। तयोराद्योऽनेकस्य पदस्यैकस्यैव का पदस्येति द्विविधः। अन्त्यस्तु त्रिविधः। आवृत्तेर्भिन्नसमासस्थतयाऽभिन्नसमासस्थतया एकस्याः समासस्थत्वे सत्यप्यपरस्या असमासस्थतया च। समासं विनाऽस्याऽसम्भवादिति पञ्चप्रभेदा इति कारिकया प्रतिपादितमिति भावः।

(सू. ११३) पदानां सः

स इति लाटानुप्रासः । उदाहरणम्

**यस्य स सविधे दयिता दवदहनस्तुहिनदीधिस्तस्य ।**

**यस्य स सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥ ३५७ ॥**

---

### सङ्केतः

एष च पञ्चधेति तान् क्रमेणाह—पदानामिति । यस्येति । अत्र पूर्वार्धे दवदहनः विधेयः, तुहिनदीधितिः अनुवाद्यः । एतदेव उत्तरार्धे विपरीततया ज्ञेयम् । यथा वा—

'न्यायशालिनि भूपाले सङ्ग्रही नावसीदति ।

विपरीते पुनस्तत्र सङ्ग्रही नाऽवसीदति ।'

पूज्यानामिदम् । स्थानद्वयेऽप्यत्र बहूनां पादानां सकृदावृत्तिरुक्ता । असकृत्तु स्वं यथा—

'सन्ति सन्तः किं न सन्ति सन्ति चेत्तन्निवेद्यताम् ।

किं कुप्यन्ति न कुप्यन्ति ते कुप्यन्ति किमीदृशाः ॥'

### सङ्केतः (रुय्यकः)

दवदहन इति— अत्र विध्यनुवादयोः परिवृत्तिः ।

### बालचित्तानुरञ्जनी

कथं पदानुप्रासत्वमस्येत्यत आह पदानामिति । तच्छब्दार्थमाह स इति ।

कदाचित् पदानामपि लाटानुप्रासः संभवतीत्यर्थः । उदाहरति यस्येति । यस्य पुरुषस्य सविधे निकटे, दयिता नास्ति तस्य तुहिनदीधितिश्चन्द्रः दवदहनः दावाग्निर्भवति । यस्य सविधे निकटे दयिता अस्ति तस्य पुनर्दवदहनः तुहिनदीधितिर्भवति । अत्र अन्वयमात्रभेदादयामनुप्रासः ।

### काव्यादर्शः

स च पञ्चधा । तत्राद्यो भेदः पदानामिति । 'यस्य न' इति । अत्र यत् पूर्वार्धे दवदहनत्वं विधेयं तुहिनदीधि[ति] त्वं चानुवाद्यं, तद् द्वयमप्युत्तरार्धे विपरीतं ज्ञेयम् । यस्य निकटे प्रिया अस्ति तस्य वनवह्निरपि शीतल इत्यर्थः । अत्र बहूनां पदानां शब्दार्थयोरभेदे सकृत्साम्यम् ।

### दीपिका

पदानामिति सुपतिङन्तसमुदायस्येति । यस्येति । अत्राद्येऽर्धे 'तुहिनदीधिति पदम्' अनूद्यार्थम् । द्वितीये तु विधेयार्थम् । स इति ।

### दर्पणः

यस्येति । अत्रात्येऽर्द्धे [अत्राद्येऽर्द्धे] तुहिनदीधितिर्द्वीदहनः [र्दवदहनः], द्वितीये दवदहनस्तुहिनदीधितिरिति संबन्धः ।

### साहित्यचूडामणिः

पदानां स इति । कदाचित् पदानां सः लाटानुप्रासः सम्भवी । यस्येति । अस्त्रीकस्य तु दावानलश्चन्द्र इत्यन्वयमात्रप्रभेदादयमनुप्रासः प्रवर्तते ।

### सम्प्रदायप्रकाशिनी

पदानामिति । सङ्ख्याप्रधानकोऽयं विभक्त्यर्थः । स लाटानुप्रासो बहूनां पदानां साम्ये सम्भवति ।

यस्येति । अत्र द्वितीयचतुर्थपादयोः पादन्युद्देश्यविधेयभावविपर्यसनेन भिन्नतात्पर्याणि ।

### मधुमती

अमुं विभजते—पदानामिति । अत्र बहुनवचनेन वाक्यावृत्तिमभिप्रैति । । यस्येति । अत्र वाक्यावृत्तिः पदार्थसाम्यं च । उद्देश्यविधेयभावः परं ज्ञेयः । अत्र च उद्देश्यविधेयव्युत्क्रमनिर्देशरूपाविमृष्टविधेयांशो न दोषः । एवं विधानुप्रासस्य निरवकाशत्वेन बलवत्त्वात् ।

### विस्तारिका

विभजते—पदाणां स इति । अत्र वर्णवचनेन वाक्यवृत्तिमभिप्रैति । यस्येत्यादि । अत्रैकवाक्ये तुहिनदीधितेर्दवदहनत्वम् । अन्यत्र च दवदहने तुहिनदीधितित्वं विधेयमिति पदपदार्थयोरैक्येऽप्यनूद्यत्वविधेयत्वे तात्पर्यविषयतावच्छेदके भिन्न एवेति सर्वत्रैवमनुसन्धेयमिति ।

### सारबोधिनी

यस्येत्यादि । दवदहनतुहिनदीधित्योरुद्देश्यविधेयभावविपर्यासेन तात्पर्यादन्वयभेदः । अत एव न पुनरुक्तता ।

### काव्यप्रदीपः

तत्राद्यमाह—

**पदानां सः**

पदानामिति बहुवचनमनेकोपलक्षणम्। अन्यथा द्वयोः पदयोरावृत्तौ षष्ठभेदापत्तेः। उदाहरणम्—

**'यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।**

**यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य॥'**

अत्र यद्यपि पूर्वार्धे दवदहनशब्दस्य परार्धे तुहिनदीधितशब्दस्यार्थान्तरसंक्रमितवाच्यत्वान्नार्थभेदस्तथापि शब्दार्थमात्रेणोदाहरणम्। यद्वा अवशिष्टपदावृत्तेरेवोदाहरणं द्रष्टव्यम्।

**काव्यप्रकाशखण्डनम्**

**पदानां सः,**

लाटानुप्रासः। प्रागुदाहृतम् 'यस्य न सविधे दयिते'त्यादि।

**आदर्शः**

'पदानाम्' अनेकपदानाम्। यस्य नेति। (अत्र) पूर्वार्द्धे तुहिनदीधितिरपि तापकत्वाद्दवदहनः परार्द्धे तु दवदहनोऽपि तुहिनदीधितिर्दुःखाजनकत्वादिति तात्पर्यविषयस्योद्देश्यविधेयभावेनान्वयस्य भेदः। पदार्थानान्तु न भेदः। यस्येत्याद्यनेकपदानामयमनुप्रासः।

**सुधासागरः**

तत्राद्यमाह—पदानामिति। पदानामिति बहुवचनमनेकोपलक्षणम्, अन्यथा द्वयोः पदयोरावृत्तौ षष्ठभेदापत्तेः। उदाहरणं—यस्येति। गाथा छन्दः। अत्र पूर्वार्धे तुहिनदीधितौ दवदहनत्वं विधेयम् उत्तरार्धे तु दवदहने तुहिनदीधितित्वम्, यद्यप्येव पुर्वात्तरार्धयोर्दवदन तुहिनदीधित्योरर्थान्तरसङ्क्रमितवाच्यत्वान्नार्थभेदः तथापि शक्यार्थमात्रमादायोद्देश्यविधेयभावाविपर्यासेन तात्पर्यभेदान्वयभेदः। यद्वा, अविशिष्टपदावृत्तेरेवादाहरणम्। तथा च समुच्चयाभावेन चकारस्त्वर्थकतया समर्थनायो न च पुनरुक्ततेति।

(सू० ११४) पदस्यापि

अपिशब्देन स इति समुच्चीयते । उदाहरणम्

**वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।**

**सुधाकारः क्व नु पुनः कलङ्कविकलो भवेत् ॥ ३५८ ॥**

---

### सङ्केतः

पदस्य सकृदावृत्तिर्यथा—वदनमिति । अत्र वदनं सुधाकरत्वेनोक्त्वा पुनर्निषेधः न युक्तः इति चेत्—न । वर्णनीयस्य अत्यन्तोत्कर्षाय स्वोक्तस्यापि तिरस्कारः न दूषणम्, प्रत्युत भूषणमेव । तद्वा—'तस्याः सत्यं वक्त्रं सुधाकरः, न तु इन्दुः सुधाकरः' इति काक्वा व्याख्येयम् । असकृद्यथा—

**'दुःखाभावः सुखं नेह सुखं यत्तन्न वा सुखम् ।**
**सुखं तत्परमार्थेन यद्विहाय सुखं सुखम् ॥'**

स्वामिदम् ।

### बालचित्तानुरञ्जनी

न केवलं बहूनामेव पदानाम् अपितु एकस्यापीत्याह पदस्यापीति । स इति । लाटानुप्रासः । तदुदाहरति वदनमिति । तस्याः वरवर्णिन्याः सुन्दर्या वदनं सुधाकरः । सत्यं निश्चितम् । निष्कलङ्कः सुधाकरः क्वान्यत्र भवेत् इति । तात्पर्यार्थभेदात् सुधाकरपदस्य एकस्यानुप्रासः ।

### काव्यादर्शः

सुधाकर इति पदस्य सकृदावृत्तिः । अत्रैकः सुधाकरशब्दो वदनौपम्येन उपात्तः । द्वितीयस्तु भवनक्रियां प्रति कर्तृत्वेनेति तात्पर्यभेदः । 'अत्राक्षपत्रनयने नयने निमील्य' इत्यादौ तु विभक्तावर्थभेदेऽपि बहुतरशब्दार्थयोरभेदेऽन्वयमात्रभेदाल्लाटानुप्रास एव, न यमकम् । 'काशाः काशा इवाभान्ति' इत्यादौ तु अनन्वयेन लाटानुप्रासस्य संकरः । लाटानुप्रासे च शब्दैक्यं साक्षादेव प्रयोजकं शब्दालंकारत्वात् । अनन्वये चार्थमात्रगतत्वेन व्यवस्थितेः शब्दैक्यमौचित्याद् आनुषङ्गिकम् ।

### दीपिका

एकार्थसम्बन्धिनोरससुच्चेयता । वदनमिति । अत्र चन्द्रवाचिनः सुधाकरपदस्य पूर्वार्धे विधेयार्थतोत्तरे त्वनूद्यार्थता । विकलो हीनः । श लाटानुप्रासः । अवृत्तिः समासाभावः ।

### दर्पणः

पदस्यापीति । पदानां स इति पूर्वत्रस्थितिः । एवञ्चायं लाटानुप्रासो बहुपदनिष्ठश्चेति द्विधेत्यर्थः ।

## साहित्यचूडामणिः

पदस्यापीति। न केवलं पदानामेव यावदेकस्यापि पदस्यायमनुप्रासः।

वदनमिति। अत्र सुधाकरपदस्य कदाचिद् वदनसामानाधिकरण्याद् अन्यदा कलङ्कवैकल्यानौचित्याच्चान्वयः।

**"लोचने तव चकोरलोचने! वारुणीमदविलासचारुणी।"**

इत्यादौ विभक्त्यादेरपौनरुक्त्येऽपि शब्दार्थपौनरुक्त्यमात्रेण लाटानुप्रासत्वम्। ननु

**"त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव।"**

इत्यादावनन्वयेनास्य विषयापहारापत्तिः, अनेन वा तस्येति चेत्। न। अन्योन्यापेक्षशब्दार्थगतत्वेनार्थमात्रगतत्वेन च व्यवस्थितेः भिन्न विषयत्वात्।

## सम्प्रदायप्रकाशिनी

एकस्याप्याह—पदस्यापीति।

अन्तरितं समुच्चेयं स्मारयति—अपिशब्देनेति।

वदनमिति। अत्र वदनमेव सुधाकरः, निष्कलङ्कः सुधाकरः क्वान्यत्रेति तात्पर्यभेदः। इत्थं पदनिबन्धनौ द्वौ भेदौ।

## मधुमती

अपिशब्देनेति। समुच्चीयते संबध्यते इत्यर्थः। 'पदानां सः' इत्यत्रस्यैव तत्समुच्चेयत्वात्। वदनमिति। अत्र सुधाकरः पूर्वार्धे विधेयः, उत्तरार्धे तु उद्देश्यः इति तात्पर्यभेदात् = अन्वयभेदात् पदतदर्थयोरभेदाच्च।

## विस्तारिका

अत्र बहूनि पदपदार्थयोः पुनरुक्तानि।

अपिशब्देनेत्यादि। एकविशेष्यान्वयित्वरूपसाहित्यसूचनात्।

वदनमित्यादि।

**शीतकाले सुखस्पर्शा ग्रीष्मकाले च शीतला।**
**भर्तृभक्ता च या नारी विज्ञेया वरवर्णिनी॥**

वदनं सुधाकरत्वेन निरूप्य विशिनष्टि—सुधाकरः क्व नु पुनरिति।

अत्र सुधाकरस्यैकस्य विधेयत्वानूद्यत्वाभ्यां पूर्ववदेव तात्पर्यविषयतावच्छेदकभेदः। अत्र सुधाकरपदस्यैकस्य साम्यम्।

### सारबोधिनी

पदस्यापीति। तेन बहुपदारब्धत्वेऽप्ययं भवतीति दर्शितम्। यथा वदनमिति। अत्र प्रथमसुधाकरपदस्य विधेयपरत्वं द्वितीयस्यानुवाद्यपरत्वम्।

### काव्यप्रदीपः

द्वितीयभेदमाह—

**पदस्यापि**

अपिशब्देन स इति समुच्चीयते। यथा—

'वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः।
सुधाकरः क्व नु पुनः कलङ्करहितो भवेत्॥'

### काव्यप्रकाशखण्डनम्

**पदस्यापि (का० ८२, प्र० पाठ)**

उदा० वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत्॥

तस्या परवर्णिन्या उत्तमाङ्गनायाः, वदनं मुखं सुधाकरश्चन्द्रः इति सत्यं यथार्थम्। पुनः सुधाकरः चन्द्रः कलङ्कविकलो इति सत्यं यथार्थम्। पुनः सुधाकरः चन्द्रः कलङ्कविकलो लाञ्छनमलिनः तस्या वदनं क्व भवेन्न भवेदित्यर्थः।

### आदर्शः

पदस्यापीति। एकपदस्यापीत्यर्थः। अपिशब्देनेति, अपिशब्दान्तेनेत्यर्थः, तेन पदस्येति षष्ठ्यन्तस्याकाङ्क्ष्या तत्सम्बन्धिनः स इत्यस्य समुच्चयो बोध्यः, यथाश्रुते तु षष्ठ्यन्तोत्तरापिशब्देन प्रथमान्तसमुच्चयाव्युत्पत्तेः स्वपूर्ववर्त्तिसमानाकारकसमुच्चयस्यैव व्युत्पत्तिसिद्धत्वात्।

वदनमिति। अत्र पूर्वार्द्धेन वदने सुधाकरं रूपयित्वा तत्रैव परार्द्धेन संशेते सुधाकरः क्व न्विति। अस्या वदनं तावत् कलङ्कशून्यम्, सुधाकरः पुनः क्व न्वेवं भवेदित्यर्थः। यद्वा, कलङ्केन विकलो निकृष्टः सुधाकरः क्व नु भवेत् अकलङ्के अस्या मुखे रूपणे सुदूरपराहत एव भवेदित्यर्थः। अत्र सुधाकररूपैकपदमात्रानुप्रासः।

### सुधासागरः

द्वितीयभेदमाह—'पदस्यापी'-ति।

अपिशब्देन स लाटानुप्रासः समुच्चीयते। उदाहरणम्-वदनमिति। वरवर्णिनी उत्तमा स्त्री। स्पष्टमन्यत्। अत्र प्रथमसुधाकरपदस्य विधेयपरत्वं द्वितीयस्यानुवाद्यपरत्वमिति बोध्यम्।

(सू० ११५) वृत्तावन्यत्र तत्र वा ।

नाम्नः स वृत्त्यवृत्त्योश्च

एकस्मिन् समासे भिन्ने वा समासे समासासमासयोर्वा नाम्नः प्रातिपदिकस्य न तु पदस्य सारूप्यम् । उदाहरणम्—

**सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।**

**पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥ ३५९ ॥**

**(सू० ११६) तदेवं पञ्चधा मतः ॥ ८२ ॥**

---

### सङ्केतः

वृत्तौ इति एकस्मिन् समासे, अन्यत्र तत्र वा इति भिन्ने वा समासे, वृत्त्यवृत्त्योः इति समासासमासयोः इति च ज्ञेयम् । सितकरेति । अनेकस्य नाम्नः सकृदावृत्तिरेषा । असकृदावृत्तिः स्वयमूह्या । एकस्य नाम्नः सकृदसकृदावृत्तिर्यथा—

विश्वसृष्टिकरो विश्वपालको विश्वघातकः ।
विश्वज्ञो विश्वविख्यातो देवदेवः पुनातु वः ॥

इदं स्वम् । 'नेत्रेब्जनेत्रे तव' इत्यादौ तु विभक्त्यादौ वाच्यापौनरुक्त्येऽपि बहुतरशब्दार्थपौनरुक्त्यात् लाटानुप्रास एव । यमकस्येव अस्यापि प्रायेण भेदाः स्युः ।

### बालचित्तानुरञ्जनी

एवं प्रसङ्गादस्य पदानुप्रासतां प्रदर्श्य शब्दानुप्रासतापक्षं शिक्षयितुमाह वृत्ताविति । वृत्तिः समासः । वृत्तावित्येकस्य विवक्षितत्वात् एकस्मिन् समास इत्यर्थः । तत्रेति वृत्तिपरामर्शः अन्यत्र तत्रेति । भिन्ने समास इत्यर्थः । वृत्त्यवृत्त्योः समासासमासयोरित्यर्थः । सूत्रं व्याकरोति एकस्मिन्नति । प्रातिपदिकस्येत्यनेन लुप्तविभक्तिकं पदं गृह्यते । केवलस्य प्रातिपदिकस्य प्रयोगाभावात् । पदस्येति । श्रूयमाणविभक्तिस्येत्यर्थः । उदाहरति सितेति । विभाकरस्य सूर्यस्य आकार इवाकारो यस्य तस्य संबोधनम् । धरणिधर भूपते ! तव चण्डकिरणवत् रुचिरा कान्तिर्यस्याः सा कीर्तिः । पौरुषाकारसंपत् सापि कमला छत्रचामरादिचिह्ना प्रसिद्धा लक्ष्मीश्चास्ति नान्यस्य । अत्र कर-करशब्दयोः एकत्र समासे सादृश्यम् । विभाविभाकरेत्यत्र विभाशब्दयोर्भिन्ने समासे सारूप्यम् । पौरुषकमला कमलेत्यत्र कमलाशब्दयोः समासासमासयोः । आद्यस्य समासे द्वितीयस्यासमासे त्रैविध्यम् । पदविषयस्य लाटानुप्रासस्य द्वैविध्यस्य उक्तत्वात् छेकानुप्रासः वृत्त्यनुप्रासश्च । अनेन सह पञ्चविधत्वमित्युपसंहरति तदेवमिति ।

## काव्यादर्शः

नाम्नः सारूप्ये त्रिविधमाह—वृत्ताविति। तत्र वृत्तौ तस्मिन्नेव समासेऽन्यत्र वा वृत्तौ भिन्ने समासे। वृत्त्यवृत्त्योरिति। एकं नाम कृतसमासं, अन्यञ्च अकृतसमासं, तयोः साम्यम्॥ स इति लाटानुप्रासः। एतदेवाह—एकस्मिन्नति। प्रातिपदिकस्येति। 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति संज्ञितस्य। क्रमाद् यथा—'सितकरे'ति। कश्चिद् राजानमाह 'हे क्षितिप, ते भास्करसदृशचन्द्ररश्मिमनोज्ञप्रभा शुभ्रा कीर्तिः, तथा पौरुषश्रीः, सा चोत्कृष्टा लक्ष्मीस्तवैव, अन्यस्य नास्ति।' अत्र 'सितकरकर' इत्येकस्मिन् समासे, तथा 'रुचिविभा विभाकराकारा' इति भिन्ने समासे, तथा 'पौरुषकमला' इति पूर्वेण समासे, 'कमला सापि' इत्यसमासे नाम्नः साम्यम्। यथा वा—'श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासः' इति। अत्र प्रथमो जगच्छब्दः शासनक्रियाकर्मभावाभिधानपरः, अन्यश्च निवाससंबन्धाभिधानपर इति तात्पर्यभेदे परेण समासे। नाम्न इति जातावेकवचनम्। तेनैकस्यानेकस्य नाम्नः सकृदसकृच्चावृत्तिः। तत्रैकस्य सकृदावृत्तौ दर्शितम्। एकस्यासकृद्, यथा—

**दशरश्मिशतोपमद्युतिं यशसा दिक्षुर दशस्वपि श्रुतम्।**
**दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः॥**

अनेकस्य सकृद्, यथा—

**जयति क्षुण्णतिमिरस्तिमिरान्धैकवल्लभः।**
**वल्लभीकृतपूर्वाशः पूर्वाशातिलको रविः॥**

तिमिरान्धा घूकवर्जाः पक्षिणः।

अनेकस्यासकृद्, यथा—

**'वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसंकाशकाशाः**
**काशाभा भान्ति तासां न च पुलिनगताः स्त्रीनदीहंसहंसाः।**
**हंसाभाम्भोदे' ति।**

## विवेकः

अनुपलभ्यमानन्तमात्राणान्तु समासे ऐकपद्ये सति परतन्त्र एव, भिन्ने समासे स्वतन्त्रः, समासासमासयोः स्वतन्त्रोऽस्वतन्त्रश्चेति त्रिधेति सूत्रकारः परिगणयति।

तेदवमिति। मत इति लाटानुप्रासः। 'ये च पादयमकस्य भेदास्ते पादानुप्रासस्या' पि द्रष्टव्याः। तथाच 'पादानुप्रासः पादयमव'दिति वामनः (का. अ. सू. वृ. ४/१/१०)।

## दीपिका

सितेति। अत्र करेति प्रातिपदिकवृत्तिरेकत्र समासे विभेत्यस्य भिन्ने कमलेत्यस्य समासपदभावयोः।

उपसंहारसूत्रम्—तदेवमिति। पञ्चधेति। पदानां पदस्य चेति द्वौ प्रातिपदिकस्य भेदत्रयमिति। अत्र च पदादिमध्यान्तादिगततया भेदान्तरमपि ज्ञेयम्। पादानुप्रासःपादयमकवदिति वचनात्। अयं चान्यैरुभयालङ्कारतयोक्तोऽपि शब्दविशेषान्वयव्यतिरेकानुविधायितया शब्दालङ्कारमध्ये लक्षितः।

वर्णानामिति बहुवचनमविवक्षत्रितम्, द्वयोरपि वर्णयोरावृतौ यमकाङ्गीकारात्। नानाकारेण कान्तभ्रूराराधितमनोभुवा। "विविक्तेन विलासेन ततक्ष हृदयं नृणाम्" इत्यादौ स्वरैकव्यञ्जनवृत्तावपि केचिद् यमकमामनन्ति। अर्थद्वारा भिन्ना अर्थ भिन्नाः, भिन्नार्था इत्यर्थः।

## दर्पणः

वदनमिति। विकलो हीनः। अत्र चन्द्रवाची प्रथमः सुधाकरशब्दो विधेयार्थो द्वितीयस्तदनुवाच्यार्थः। [द्वितीयस्तदनुवादार्थः] एवमस्य भेदद्वयमुक्तवा पुनः प्रकारान्तेरेण भेदत्रयमाह वृत्ताविति। एकत्र समासोदाहरणम्। शितकरेति भिन्नसमासे, रुचि रविभा विभाकरेति समासासमासयोः। पौरुषकमला कमलेति पौरुषं पुरुषकार एव श्रीर्यस्या इत्यर्थः।

उपसंहरति तदेवमिति। अर्थभिन्नानां अनुद्धारा [अनुप्रासद्वारा] भिन्नानामित्यर्थः। वर्णानामिति। बहुवचनमविवक्षितम्। तेन वर्णद्वयावृत्तावपि यमकम् बोद्धव्यम्।

क्वचि.....ईश्वरा साधनं विना" इत्यादौ ससुरैकव्यञ्जनावृत्तावप्येतदिच्छन्ति।

## साहित्यचूडामणिः

कारिकायां व्युत्क्रमेणोक्तं क्रमेण व्याचष्टे—एकस्मिन्नति तत्रेत्यस्य टीका। भिन्न इत्यन्यत्रेत्यस्य। अर्थाद् वाकारस्यापि स्थानचलनम्। प्रातिपदिकस्येति। सुबन्तत्वे पदत्वम् अन्यथा प्रातिपादिकत्वं सुपो लोपात्।

सितेति। अत्र करशब्दयोरेकत्र समासे सादृश्यम्। विभाकराकारेत्यामन्त्रितम्। विभाशब्दयोर्भिन्ने समासे सादृश्यम्। पौरुषकमला पुरुषकारसम्पत्, कमला सा च छत्रचामरादिचिन्हा प्रसिद्धा लक्ष्मीश्च कमलाशब्दयोः प्रथमः समासे, अन्यस्त्वसमास इति त्रैविध्यम्।

**पञ्चधेति। पदविषयस्य द्वैविध्यस्योक्तत्वात्॥**

## सम्प्रदायप्रकाशिनी

अथ प्रातिपदिकनिबन्धनाः—वृत्तावन्यत्रेत्यादि। तत्रान्यत्र वेति क्रमः। सोऽयं प्रातिपदिकसाम्यनिबन्धनो लाटानुप्रासः एकसमासगतत्वेन भिन्नसमासगतत्वेन समासासमासगतत्वेन च त्रिधा सम्भवति।

तदेतद् व्याचष्टे—एकस्मिन्नित्यादि। न तु पदस्येति वदता पदानुप्रास इति व्यवहृतवन्तो मन्दा इति सूचितम्। न च प्रातिपदिकनिबन्धनतायां पदानुप्रासः, अतः शब्दानुप्रास इत्येवं प्रेक्षावतां व्यवहारः, येन वर्णानुप्रासव्यावृत्तिरपि भवति, पदप्रातिपदिकनिबन्धनभेदद्वयोपसंग्रहोऽपि सम्पद्यते।

सितकरेति। अत्र करकरेत्येकत्र समासे, रुचिरविभा विभाकरेति भिन्ने, पौरुषकमला कमलेति समासासमासयोः।

प्रस्तावं निगमयति—तदेवमिति।

## मधुमती

प्रकृतानुप्रासभेदान्तरमाह-वृत्तावन्यत्रेत्यारभ्य वृत्त्यवृत्त्योश्चेत्यन्तेन। नाम्न इति। यद्यपि—केवलप्रातिपदिकस्य प्रयोगाभावात् न तस्यावृत्तिः, तथापि—लुप्तविभक्तिकस्यैव प्रयोगेण तावन्मात्रपुरस्कारेण प्रातिपदिकस्येत्युक्तम्। सितकरेति। अत्र च करकरेति एकस्मिन् समासे, विभाविभेति भिन्ने समासे कमलाकमलेति समासासमासयोश्चेति द्रष्टव्यम्।

यद्यपि—'भेदे तात्पर्यमात्रतः' इत्यभिधानेन शब्दतदर्थाभेदे सति अयं अनुप्रासः इति लभ्यते। न चात्र सोऽस्ति, कमलापदेन लक्ष्म्याः, कमलपदेन च पद्मस्याभिधानेन अर्थभेदात् शब्दभेदाच्च। न च पौरुषकमलपदं बहुव्रीहिसिद्धं लक्ष्मीवाचकमेवेति वाच्यम्। तस्य अनावृत्तेः, एकदेशभूतस्य च अनर्थकत्वात् इति। तथापि—यथा सार्थानर्थकशब्दावृत्तौ यमकत्वम्, तथा लाटानुप्रासत्वमपि। न चैवं यमकाभेदः, एकार्थत्वाभावनियतसमानाकारशब्दावृत्तिः यमकम्, तदनियतथाविधशब्दावृत्तिः लाटानुप्रासः इति भेदात्। 'भेदे तात्पर्यमात्रतः इत्यस्यापि अत्रैव तात्पर्यात्।

उपसंहरति—तदेवमिति। एकानेकपदगतत्वेन पदानुप्रासस्य द्वौ भेदौ। एकसमास—भिन्नसमास—समासासमासगतत्वेन प्रातिपादिकानुप्रासस्य त्रयो भेदाः एवं च मिलित्वा पञ्चधेत्यर्थः।

## विस्तारिका

वृत्ताविति। वृत्तिर्युक्तार्थता। समासस्य तद्धितस्यापि ग्रहणम्। तदुक्तम्—

**विशेष्यस्य विशेषेण मिलितं युक्तमुच्यते।**
**समासाख्यं तदेव स्यात् तद्धितोत्पत्तिरेव वा॥ इति।**

तेन "त्वयि दृष्टायां बाले नयनवतां नयनमुत्सवं प्राप" इत्यत्रापि व्याप्तिः।

भिन्नत्वमेकनिरूप्यमिति सूत्रे पाश्चात्यमपि तत्रेति पदं प्रथमं व्याचष्टे—एकस्मिन्नति। एकत्र तद्धितप्रयोगे लाटानुप्रासहेतुर्द्धिःप्रयोगासम्भवेन पञ्चधा विभाजकत्वाभावात् समासपदेन वृत्तेर्विवरणम्।

नन्वस्याद्यन्तस्य नामत्वे पदादस्य न भेद इत्याह—नाम्नः प्रातिपदिकस्येति। प्रत्ययरहितस्य प्रकृतिभागस्य प्रातिपदिकत्वात्। तदाह—न तु पदस्येति। सारूप्यमित्यनुवृत्तस्य साम्यमित्यस्यार्थः।

सितकरेत्यादि। सितकरस्य चन्द्रस्य करो रश्मिः, विभाकरः सूर्यः, तस्येवाकारः शरीरं यस्य। यद्वा विभाकरस्याकारः शरीरी। विभाकरेति सम्बुद्धिः। तत्र हेतुमाह—धरणिधरेति। ध्यानधरणाय विभाकरावतारेत्यर्थः। पौरुषं विद्यासौन्दर्यादिकम्, तदुपार्जिता कमला सम्पत्तिः। द्वितीयकमलापदस्य प्रशस्तसम्पत्तिरर्थः। एवकारेणन्यस्येत्यनेन चायोगान्ययोगव्यवच्छेदः। ननु द्वितीयकमलापदस्य प्रशस्तसम्पत्तिपरत्वे पदार्थतावच्छेद-

कभेदान्न लाटानुप्रासतेति चेन्मैवम् प्रशस्तसम्पत्तित्वस्य तात्पर्यविषयतावच्छेदकत्वात्। 'तदितरार्थभेदस्यैव भेदे तात्पर्यमात्रता' इत्यनेन विवक्षितत्वात्। अर्थान्तरसङ्क्रमितवाच्यस्यासङ्कीर्णोदाहरणं तु व्यवधानेन पुनः प्रयोगे मन्तव्यमिति चेन्न, द्वितीयकमलापदत्वे लाटानुप्रासता न स्यात्। न च प्रकृत्यंशमादाय तथा, पदानुप्रासस्तु सुधाकरपदयोरपि तत्त्वप्रसङ्गात्। वस्तुतस्तु पौरुषं कमलमाश्रयो यस्या सा तथाऽधिष्ठानाच्चेष्टा नृपाख्यसम्बन्धः। कमला कमलवती मत्वर्थीया। अन्वयादत्रापि स एव सम्बन्धः। स्त्रीप्रत्ययतद्धितप्रत्ययप्रकृत्योः कमलभागयोरनुप्रासः।

अत्रैकत्वसमासे करयोर्भिन्ने विभेति भागयोः समासासमासयो रक्तकमलयोः साम्यम्।

तेनेत्यादि। अयं लाटानुप्रासः। "मन्दं हसन्तः पुलकं वहन्तः" इयत्र, "केशः काशस्तवकविकासः" इत्यत्र च पदान्तपदयोरन्त्यानुप्रासेन पृथक्, छेदादिनैव गतार्थत्वात्। अन्यथा 'रुचिरविभा विभाकराकार' इत्यत्राप्यन्ताद्यानुप्रासान्तरत्वप्रसङ्गात्। तालुवदाद्येकस्थानोच्चार्यत्वसाधर्म्येण सहृदया मन्देन श्रुतिसुखावहत्वाच्छ्रत्यनुसारत्वमिच्छन्ति। यथा "विरूपाक्षस्य जयिनीः" इत्यत्र जययोस्तालव्यत्वेन श्रुत्यनुसारता। तत्रैकस्थानोच्चार्यत्वेऽपि वर्णत्वाव्यापकत्वादिसाम्यस्यैव प्रयोजकत्वात्, अन्यथा 'तस्या न भवति विरह' इत्यत्रापि तकारलकारयोः प्रसङ्गात्, उभयोरपि दन्त्यत्वात्। न चैवम्, साम्याननुभवात्।

नन्वस्य कथमलङ्कारता? कथितपदत्वेन दोषत्वादुत्कर्षाकर्षत्वयोर्विरोधात्। न चैतदतिरिक्तस्य विषयः, प्रमाणाभावात्, अन्यथानुपपत्त्यैवोपयुक्तौ प्रयोगात्। यथा 'जक्षुर्बिसं धृतविकासि विसप्रसूना' इयमपरामर्शयोग्ये विषय एव, पुनः प्रयोगस्य कथितपदत्वात्। अन्यथानुपपत्त्यैवोपयुक्तोपयोगात्, यथा 'जक्षुर्बिसम्' इत्यादौ बिसपदस्य कथितत्वं 'धृतपरिस्फुटतत्प्रसूना' इति पाठे तत्पदेन परामर्शसम्भवात्। अथैवं 'वदनं वरवर्णिन्याः' इत्यत्र तु 'स तु कस्मात् कलङ्केन हीनः' इति पाठे सुधाकरपरामर्शे समानत्वादिति मैवम्, तदः प्रयोगे विशिष्टस्य वदनसुधाकरस्य परामर्शः स्यात्, प्रकृतत्वात्। तत्र च कलङ्काभावस्य स्वभाविकत्वेनोपादानासम्भवात्। न च प्रधानस्य सुधाकरस्य परामर्शो न वदनस्येति वाच्यम् निराकाङ्क्षत्वात्। अत एव 'भाति मुखमिन्दुरस्या यस्य ज्योत्स्नाभिराप्लुता जगती' इत्यत्राभवन्मतयोगः। यत्रपदेन परामृश्यस्यारोपितेन्दोर्मुखज्योत्स्नासम्भवात्।

## सारबोधिनी

सूत्रे पाश्चात्यमपि तत्रेति पदं प्रथमं व्याचष्टे एकस्मिन्निति। ननु स्वाद्यन्तस्य नामत्वे पदादस्य न भेद इत्यत आह नाम्नः प्रातिपदिकस्येति। प्रत्ययरहितस्य प्रकृतिभागस्य प्रातिपदिकत्वात्। तदाह न तु पदस्येति। पौरुषकमलेति। नन्वत्र द्वितीयकमलभाग्य पदत्वे नामानुप्रासता न स्यात्, न च प्रकृत्यंशपादाय तथा। तदा पदानुप्राससुधाकरपदयोरपि तत्त्वप्रसङ्गादिति चेन्न। पौरुषं कमलं यस्याः सा तथा। कमला कमलवतीत्यर्थः। मत्वर्थीयाच्प्रत्ययत्, तथा च स्त्रीप्रत्ययतद्धितप्रत्ययप्रकृत्योः कमलभागयोरनुप्रासः। अत्रैकत्र समासे करयोर्भिन्ने समासे विभेति भागयोः, समासासमासयोस्तु कमलयोः साम्यम्। तदेवमिति। अयं लाटानुप्रासः।

## काव्यप्रदीपः

नाम्नः प्रकारत्रयमाह—

**वृत्तावन्यत्र तत्र वा।**

नाम्नः सवृत्त्यवृत्त्योश्च

वृत्तिनिरूपितप्रकारत्रये नाम्न एव लाटानुप्रास इत्यर्थः, उदाहरणम्—

**'सितकरकररुचिरविभा विभाकराकारधरणिधर कीर्तिः।**
**पौरुषकमला कमला सापि तवैवास्ति नान्यस्य॥'**

पौरुषकमला पौरुषलक्ष्मीर्लक्ष्मीश्च तवैवेत्यर्थः। यत्तु—पौरुषं कमलमाश्रयो यस्याः सा पौरुषकमला' इति व्याख्यानं तदयुक्तम्। अर्थभेदेनानुदाहरमापत्तेः। अत्र करकरेत्येकसमासः, विभा विभेति भिन्नौ समासौ, कमला कमलेति पूर्वस्य समास उत्तरस्यासमासः, इति त्रयाणामुदाहरणम्।

तदेवं पञ्चधा मतः॥ ५॥

व्यङ्ग्यातम्।

**काव्यप्रकाशखण्डनम्**

**वृत्तावन्यत्र तत्र वा।** („ द्वि० पा०)

**नाम्नः स वृत्त्यवृत्त्योश्च,** („ तृ० पा०)

एकस्मिन् समासे भिन्ने वा समासे समासासमासयोर्वा नाम्नः प्रातिपदिकस्य न तु पदस्य सारूप्यम्। प्रत्ययरहितस्यैव प्रातिपदिकत्वात्। यथा—

**सितकररुचिरविभा विभाकराकार धरणिधव कीर्त्तिः।**
**पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य॥**

हे विभाकराकार सूर्य—(प. ४४, १) सदृश! धरणेः पृथिव्या धव स्वामिन्! तव कीर्तिः अस्ति वर्त्तते। कीदृशी? सितकरश्चन्द्रस्तस्य करः किरणस्तद्वत् रुचिरा मनोहरा विभा कान्तिर्यस्याः। पौरुषकमला पौरुषलक्ष्मीः, कमला लक्ष्मीः साऽपि प्रसिद्धा तवैवास्ति नान्यस्य पुंस इत्यर्थः।

**तदेवं पञ्चधा मतः॥ (का. ८२, च० पा०)**

लाटानुप्रासः।

**आदर्शः**

इत्थं विभक्त्यन्तस्य पदत्वेन तदावृत्त्या द्विविधं लाटानुप्रासमुक्त्वा समासैकदेशस्य नाममात्रत्वेन विभक्त्यन्तसमुदायरूपत्वाभावास्तत्र त्रिविधं तमुदाहरति—वृत्तौ इति, वृत्तौ समासे। तत्रैव त्रैविध्यमाह—अन्यत्रेत्यादि। उदाहरिष्यमाणश्लोकस्य क्रमानुरोधात्तत्र वेत्यादिक्रमेणैवेदं व्याचष्टे—एकस्मिन्नति। वृत्त्यवृत्त्योश्चेतीत्यस्य व्याख्या—समासासमासयोरिति न तु पदस्येति, विभक्त्यन्तात्मकस्य पदस्य तथात्वे पूर्वोक्तद्विविधपदानुप्रासान्तर्भावापत्तेरिति भावः। सितकरेति। व्याख्यातमिदं दोषोल्लासे (३१२ श्लो०)। अत्र

सितकरकरेत्येकसमासैकदेशपदस्य तस्यैवैकदेशे, रुचिरविभाविभाकरेति भिन्नसमासैकदेशस्य समासान्तरैकदेशे, पौरुषकमला कमलेति समासस्यैकदेशस्यासमासे आवृत्तिः । अत्र च पौरुषमेव कमलमधिष्ठापद्मं यस्या इति यत् पूर्वं व्याख्यातं तादृशार्थकत्वाभिप्रायेण नेदमुदाहरणम्, तदा पदार्थभेदेन यमकत्वस्यैव प्रसक्तेः । किन्तु पौरुषलक्ष्मीरेव लक्ष्मीरित्यर्थकत्वाभिप्रायेणेदमुदाहृतमिति मन्तव्यम् ।

तदेवं पञ्चधेति, पदानां पदस्य एकसमासे भिन्नसमासे समासासमासयोश्चेति पञ्चविधो लाटानुप्रास इत्यर्थः ।

**सुधासागरः**

नाम्नः प्रकारत्रयमाह—नाम्न इति ।

वृत्तिनिरूपितप्रकारत्रये नाम्न एव लाटानुप्रास इत्यर्थः । तदेतदुक्तमेकस्मिन्नित्यादि । प्रातिपदिकस्य प्रत्ययरहितस्येत्यर्थः, प्रकृतिभागस्य प्रातिपदिकत्वात् । अत एवोक्तं न तु पदस्य सुप्तिङन्तस्य पदत्वात् । यद्यपि भेदेन प्रातिपदिकस्य । प्रयोगाभावान्न तस्यावृत्तिः, तथापि लुप्तविभक्तिकस्यैव प्रयोगेण तावन्मात्रपुरस्कारेण प्रातिपदिकस्येत्युक्तमिति तत्त्वम् । उदाहरणम्—'सितकरे'-ति ।

हे विभाकराकार प्रचण्डप्रताप धरणिधर राजन् सितकरस्य चन्द्रस्य कराः किरणास्तद्वद्रुचिरा विभा दीप्तिर्यस्याः सा तादृशी कीर्तिः । पौरुषेण विद्यया शौर्यादिना कमला लक्ष्मीः सापि तवैवास्ति नान्यस्येत्यर्थः । यत्तु पौरुषकमलमाश्रयोयस्याः सा पौरुपकमलेति व्याख्यानम्, तदयुक्तम् । कमलपदेन पद्मस्य कमलापदेन लक्ष्म्या अभिधानादर्थभेदेन शब्दभेदेन चानुदाहरणत्वापत्तेः । अत्र करकरेत्येकसमासः विभाविभेति भिन्नौ समासौ कमलाकमलेति पूर्वस्य समास उत्तरस्यासमास इति त्रयाणामुदाहरणं व्याख्यातम् ।

**(सू० ११७) अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः। यमकम्।**

समरसमरसोऽयमित्यादावेकेषामर्थवत्त्वे, अन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुम् इति, अर्थे सतीत्युक्तम्। सेति 'सरो रस' इत्यादि वैलक्षण्येन तेनैव क्रमेण स्थिता।

---

**सङ्केतः**

वर्णानामिति। स्वरसहितानामिति शेषः। तथा 'सूत्रे लिङ्गवचने अतन्त्रे' इति न्यायात् वर्णस्य वर्णयोश्च पुनः श्रुतौ यमकत्वम्। परं—वर्णस्य पादान्तरगतत्वेन पुनः श्रुतौ वैचित्र्याभावात्, तस्मिन्नेव पादे पुनःश्रुतिः कार्या। पुनःश्रुतिः आवृत्तिः। वर्णस्य पादादिमध्यान्तेष्वावृत्तिर्यथा—

**'नानाशं शङ्करो मम।' इति**

वर्णयोः वर्णानां च तस्मिन्नेव पादे पादान्तरे वा आवृत्तिः स्वयमूह्या। यमौ द्वौ यमजातौ, तत्प्रतिकृतिः यमकम्। तेन एकस्याक्षरस्य द्वयोः बहूनां वा अन्यत् सदृशं निरन्तरं सान्तरं वा शोभाजनकं अलङ्कारः।

अनर्थकत्व इति।

**'मधुपराजिपराजितमानिनी—-**

**जनमनस्सुमनस्सुरभिश्रियम्।'**

इत्यादौ द्वयोरनर्थकत्वे वेति शेषः। न च तदर्थ एव शब्दः पुनः प्रयुज्यते, पौनरुक्त्यप्रसङ्गात् इति। सामर्थ्यलब्धेऽप्यर्थभिन्नत्वे, यत्र स एवार्थः पुनर्वक्तुमिष्टः स्यात् 'अहो मध्यमहो मध्य'मित्यादौ, बन्धबन्धुरत्वादिना च प्रयुक्त एव शब्दः पुनः प्रयुज्यते—

**'उदेति सविता ताम्रस्ताम्र एवास्तमेति च।'**

इत्यादौ, तच्च पौनरुक्त्यदोषाभावात् यमकत्वं प्रसज्यंतेति अर्थभिन्नानां इत्युक्तम्। तथा—दन्तौष्ठ्यौष्ठ्य—वकारबकारादिवर्णभेदे, लघुप्रयत्नतरालघुप्रयत्नतरकृते च भेदे संयुक्तयोः सजातीययोः वर्णयोः वास्तवे विशेषे यमकबन्धो न विरुध्यते। लोकप्रतीत्या तत्रापि श्रुतितुल्यत्वात्। तत्र स्वयं यथा—

**'यथा नश्यन्ति विघ्नानि यथा नश्श्यन्ति न द्विषः।**

**तथा कुरु गुणलम्ब! कृपालं वससदा मनः॥'**

अत्र 'नश्यन्ति' इत्यत्र एकत्र एकः शकारः, अन्यत्र द्वौ। तथा एकत्र 'लम्बः' ओष्ठ्यः, अन्यत्र 'लंबः' दन्त्योष्ठ्यः। 'गुणालम्बे'त्यत्र लकारः लघुप्रयत्नतरः। कृपां लातीति 'कृपालं' इत्यत्र तु अलघुप्रयत्नतरः। तथा नकारणकाराभ्यां अस्वरमकारनकाराभ्यां विसर्गभावाभावाभ्यां च न विरोध इत्यन्ये। यथा—

'अप्रमाणमप्रमानं अङ्गीकुर्वन् गुणव्रजम्।
देवदेव! समक्षोऽसि' साधूनामध्वनि व्रजन्॥

इत्यादि। लोकादन्यदप्यूह्यम्।

## सङ्केतः (रुय्यकः)

समरेति संग्रामे तुल्यरसः।

## बालचित्तानुरञ्जनी

इदानीं यमकं लक्षयति अर्थे सतीति। भिन्ना अर्था येषां ते। वाहिताग्न्यादित्वात् परनिपातः। तत्तु लाटानुप्रासव्यावृत्त्यर्थम्। तत्र भिन्नार्थत्वाभावात्। साम्येऽपि क्रमव्यत्ययान्न यमकम्। येनैव क्रमेण पूर्वं श्रुतिः तेनैव क्रमेण पुनः श्रुतिर्यमकमिति।

## काव्यादर्शः

यमौ द्वौ समजातौ तत्प्रतिकृति यमकम्। 'समरे'ति। अत्र प्रथमः समरशब्दः सार्थको, द्वितीयस्तु अनर्थकः।'मधुपराजिपराजितमानिनी' इत्यादौ तु उभयेषामनर्थकत्वम्। न च तदर्थस्यैव शब्दस्य शक्यमुच्चारणं पुनरुक्तदोषादिति सामर्थ्यलब्धेऽप्यर्थभेदेऽर्थभिन्नग्रहणाद् 'अहोमध्यमहोमध्यम्' इत्यादौ। तथा 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादौ च पौनरुक्त्यदोषाभावेऽपि न यमकत्वम्। सेति, तुल्यक्रमेत्यर्थः। तेन 'सरो रस' इत्यादेः प्रतिलोमानुलोमादीनां च यमकत्वनिवृत्तिः। श्रुतिग्रहणं 'तनुमतोऽनुमतः सचिवैर्ययौ' इत्यादीनामसाधुत्वार्थम्। अत्र हि विसर्गस्य उत्वादौ कृते सत्यपि क्रमे तुल्यश्रुतित्वं नास्ति। तथा लोकप्रतीतितुल्यत्वपरिग्रहार्थं च तेन दन्त्यौष्ठ्यौष्ठ्यवकार-बकारादिवर्णभेदे लघुप्रयत्नलघुप्रयत्नतरकृते च भेदे संयोगस्थयोः सजातीययोर्व्यञ्जनयोर्वास्तवे विशेषे यमकबन्दधो न विरुध्यते। यथा—

तस्यारिजातं नृपतेरपश्यदवलम्बनम्।
ययौ निर्झरसंभोगैरपरश्यदपबलं वनम्॥

'अवलम्बनं' पार्ष्णिग्राहासादरादि-प्रपातपानीयास्वादैः। पानीयानि तनूकुर्वन्। 'अबलं' सैन्यरहितम्। 'वनं' काननम्। अत्रैकत्र व—वौ दन्त्यौष्ठ्यौ, अपरत्र तु ओष्ठदन्त्यौष्ठ्यौ। 'अपश्यद्' इत्येकत्र एकः शकारः, अपरत्र द्वौ।एवमन्यदपि। केचिच्च 'नकार—णकारयोरस्वरमकारनकारयोर्विसर्जनीयस्य भावाभावयोरपि न विरोधः' इत्याहुः। यथा—

वेगं हे तुरगाणां जयन्नसावेति भङ्गहेतुरगानाम्॥
नयाशु च रथं धीरसमीरसमरंहसम्।
द्विषतां जहि निःशेषं पृतनाः समरं हसन्॥

**द्विषतां मूलमुच्छेत्तुं राजवंशादजायथाः।**

**द्विषद्भ्यस्त्रस्यसि कथं वृकयूथादजा यथा॥**

वर्णानामिति। बहुवचनमतन्त्रम्। तेन वर्णस्य वर्णयोश्चावृत्तिः यमकम्। वर्णस्य च पदान्तरगतत्वेनावृत्तिर्न वैचित्र्यकृदिति तस्मिन्नेव पादे आवृत्त्यन्तरविचित्रितायां नैरन्तर्येणावृत्तौ यमकत्वम्। यथा—

**नानाकारेण कान्तभ्रूराराधितमनोभवा।**

**विविक्तेन विलासेन ततक्ष हृदयं नृणाम्॥**

मध्यान्तयोरपि—

**'उदाररचनारोचिर्भासुरा राजते कथा' इति॥**

वर्णयोः, यथा—

**भ्रमर द्रुमपुष्पाणि भ्रम प्रीत्यै पिबन् मधु।**

**का कन्दकुसुमे प्रीतिः काकुं दत्त्वा विरौषि यत्॥**

तस्मिन्नेव पादे, यथा—

**हन्त हन्तररातीनां धीर धीरर्पिता तव।**

**कामं कामन्दकेर्नीतिरस्या रस्या दिवानिशम्॥**

**विवेकः**

अथावृत्तिप्रकर्षात् यमकं लक्षयति अर्थे सतीति। एकार्थतायामर्थपौनरुक्त्यं प्ररूढं दोषः। तात्पर्यमात्रभेदे तु लाटानुप्रासतेत्यत्रोक्तम् (अ. स. पृ. २७-२८) अर्थभिन्नानामिति। विभिन्नार्थता च यद्यप्यर्थसद्भाव एव सम्भवति तथापि सार्थकनिरर्थकानां केवलनिरर्थकानामावृत्त्या च व्याप्तिमाशङ्क्यार्थे सतीत्युक्तमित्याह। समरेत्यादि समरे संग्रामे तुल्यरस इति। 'शमरतेऽमरतेजसि पार्थिवे' (र. व. ९/४) इत्युभयेषां निरर्थकत्वेऽपि द्रष्टव्यम्। एवमपि 'सरो रस' इत्यादावतिव्याप्तिरत उक्तं सेतीति। एवमावृत्त्या वर्णाः स्थाननियमेन यम्यन्त इति यमकमन्वर्थं नाम। तथाच "पदमनेकार्थमक्षरं वाऽऽवृत्तं स्थाननियमेन यमक"मिति (का. अ. सू. वृ ४/१/१) वामनः।

एवं वर्णावृत्तावपि सजातीयनैरन्तर्य एव यमकमुद्भासत इत्याशयवानाह वर्णानामिति। कविशक्तिश्चानेन प्रकाशत इति तन्मात्रनिबन्धनचमत्कारास्पदत्वमत्रालङ्कारतायां बीजम्। बाहुल्येन छन्दोविषयत्वमवगन्तव्यम्। तदुक्तम्—(रु. का. अ. ३/१) तुल्यश्रुतिक्रमाणामन्यार्थानां मिथस्तु वर्णानाम्। पुनरावृत्तिर्यमकं प्रायश्छन्दांसि विषयोऽस्य॥ इति। तच्च समस्तपदावृत्ति तद्भागावृत्तिरूपञ्चेति प्रथमं द्विधा भूयो बहुप्रकारम्। तत्र पादाद्यावृत्तौ यदा प्रथमपादो द्वितीयपादेन तुल्यरूपस्तदा मुखं नाम यमकं, यदा तु तृतीयेन सन्दंशश्चतुर्थेनावृतिर्नाम। एवं द्वितीयपादो यदा तृतीयेन तदा गर्भश्चतुर्थेन तु सन्दष्टकम्। तृतीयस्तु यदा चतुर्थेन तदा पुच्छः। यदा त्वावृत्तिः प्रथमद्वितीयतृतीयचतुर्थेषु सर्वेष्वपि पादेषु तदा पंक्तिः—इति पादावृत्तिरूपाः शुद्धभेदाः सप्त (रु. का. अ. ३/३/७७)। अथ द्वौ सङ्कीर्णौ। तत्र मुखपुच्छयोः संयोगे युग्मकं, गर्भावृत्त्योर्योगे परिवृत्तीति (रु. का. अ ३.१३)

## दीपिका

एतच्चाव्यापकमित्याशङ्क्य कारिकाप्रतिकान्तरयोजनेनाह—वृत्तिकृत्—समरेति। समरसो भयोद्वेगादिराहित्येनाप्रतिहतोत्साहः। अनर्थकत्वं शमरतेऽमरते जसीत्यादौ। द्वयोरप्यनर्थकत्वेत्विति शेषः। एतच्च यथायोगं वक्ष्यमाणप्रकारसम्पृक्तसार्थकानर्थकोभयरूपभेदत्रयसूत्रणापरं द्रष्टव्यम्। तेनैव क्रमेण स्वरादिविपर्यासरहितेन। यथोक्तम्—'स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम्' इति।

## दर्पणः

भिन्नानामनित्यस्यार्थे सतीत्येतद्विना व्याप्तिं दर्शयन् विवृणेति समरेति। समो वपुषि सङ्गत्याघातादीनामपि(?) मन्थुनातिरिक्तो वसो रागायस्य(?) अत्र द्वितीयसमवायस्य निरर्थकत्वमुपलक्षणम् चैतत् द्वयोरप्यनर्थकत्वं यथा-समवतामवतां धुरि स्थित इत्यादौ। सेति। नानुप्रासाद्विविनक्ति। सेति तेनैव क्रमेणे-त्यनेन एतदलङ्कारप्रयोजकेषु वर्णेषु स्वरादि भेदाभावो सूचितः। किञ्चास्य भिन्नानामित्यनेन लाटानुप्रासाद्विवेकः। पूर्वार्थपूर्व्या [?] वर्णावृत्तिः। स्थानविशेषेषु यम्यत इति यमकमनुर्थनामन......मकम्।

## साहित्यचूडामणिः

अथ यमकं लक्षयति—अर्थ इति। अर्थभिन्नानां भिन्नार्थानाम्, आहिताग्न्यादिपाठात्। यदाह भामहः [काव्या. २.१७]

> **तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम्।**
> **वर्णानां यः पुनर्वादो यमकं तन्निगद्यते॥ इति।**

स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम्। इति सूत्रम् [अ० सू०—७]

नन्वर्थभिन्नानामित्येतावत्युक्ते 'समरसमरसोऽयमि'त्यादौ यमकत्वं न स्यादित्यव्याप्तिर्लक्षणदोषः येन प्राथमिकस्यैव समरशब्दस्यार्थवत्त्वं न द्वितीयस्य, सम एकरूपो रसः प्रीतिर्यस्येति सकारावधौ तस्यार्थवत्त्वाभावात्।

उभयोरर्थवत्त्वभावे कथं भिन्नार्थत्वमित्याशङ्क्याह—अर्थे सतीति। स्मरामि तां स्मरामितामित्यादिवद् यत्र द्वयोरर्थवत्ता तत्र मुख्यं नार्थवत्त्वम्। तेनैव क्रमेणेति। येनैव क्रमेण पूर्वश्रुतिः, तेनैव पुनः श्रुतिरिति प्रकाशयितुं सेत्यनुभूतार्थविषयस्य तद्वृत्तस्य प्रयोगः। अन्यथा पिकः कपिः जारा राजा रसः सरः हरः रह इत्यादावपि यमकावप्रसङ्गः, पुनःश्रुतित्वाविशेषात्। एतेन,

> **आवृत्तिमेव संघातगोचरां यमकं विदुः।**

इत्यादि प्रत्युक्तम्।

## सम्प्रदायप्रकाशिनि

अथ शब्दसाम्यप्रस्तावाद् यमकम्—अर्थे सतीत्यादि। अर्थभेदेन भिन्नानां शब्दानां पुनःश्रुतिर्यमकम्। अर्थभिन्नानामिति लाटानुप्रासो व्यावर्तितः। यम्यमानस्यांशस्य क्वचिदनर्थकत्वाल्लक्षणमव्यापकं स्यात्। अत उक्तम्—अर्थे सतीति। यदा वर्णविन्यासवैपरीत्येऽपि पुनःश्रुतित्वं भवति तदातिव्याप्तिर्मा भूदिति सेत्युक्तम्।

तदेतद् व्याचष्टे—समरसमरसेत्यादि । अत्र हि समरसमरेति यमकम् तत्र समरशब्दोऽर्थवान् । द्वितीया तु समरश्रुतिर्निरार्थवती, समरस इत्युत्तरवर्णसहितस्यैवार्थवत्त्वात् । एवंविधे विषयेऽर्थभिन्नानामितीयदेव यदि लक्षणं क्रियेत, तदा स्यादव्याप्तिः । अतोऽर्थे सतीत्युक्तमित्यर्थः । सरो रस इत्यादौ तु भिन्नार्थत्वेऽपि पुनःश्रुतिसद्भावेऽपि नास्ति यमकत्वं, पुनःश्रुतेर्वैरूप्यात् । अत उक्तं—सेति । सा तेनैव क्रमेण स्थिता ।

### मधुमति

यमकालङ्कारं लक्षयति—अर्थे सतीति । वर्णानां इति बहुवचनेन 'विविधधववनानानागगर्धर्घनाना'

इत्यादावनुप्रासत्वमेव । न तु यमकत्वमित्युक्तं भवति । स्वरसादृश्येऽपि लाटानुप्रासाङ्गीकारात् । अर्थे सति इत्यस्य व्यावर्तनीयमाह समरेति । इदमुपलक्षणम्—'कुरवकारवकारणतां ययुः' इत्यादौ अनर्थकशब्दावृत्तावपि यमकसत्त्वात् । एकार्थत्वाभावनियतममानाधिकरणशब्दावृत्तिर्यमकमित्यर्थः । तेन विशिष्टव्यतिरेकात् भिन्नार्थकयोः सार्थकानर्थकयोः अनर्थकयोर्वा शब्दयोरावृत्तौ न दोषः । अत एव—'अत्र लक्षणद्वये तात्पर्यम् । इदं तु सार्थकमात्रयमकलक्षणम्' इति भास्करमतं अपास्तम् । अननुगमात्, अनुगमे वा तस्यैव लक्षणत्वापत्तेः । न च—यथाश्रुतमूलस्वरसात् अनर्थकशब्दावृत्तौ लाटानुप्रास एव न यमकमिति वाच्यम् । "पौरुषकमला कमला" इत्यनुरोधेन 'भेदे तात्पर्यमात्रतः' इत्यस्य अन्यथाकरणम्, 'कुरवकारवकारणतां ययुः' इत्यनुरोधेन 'अर्थे सति' इत्यादेर्वा अन्यथाकरणम्, इत्यस्य नियन्तुमशक्यत्वात् । एवं च उभयत्रापि यथाविवक्षित एवार्थः इति द्रष्टव्यम् ।

### विस्तारिका

अर्थे सतीति । अर्थे अभिधेये । पुनः श्रुतिरिति । श्रुतिसाम्यं प्रयोजकम्, तेन वर्णभेदेन श्रुत्येकत्वं यमकम् । तदुक्तम्—यमकादौ भवेदैक्यं डलयो रलयोर्बवोः । शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः । सबिन्दुकाबिन्दुकयोः स्यादभेदकल्पनम् । यथा 'भुजलतां जडताम्' इत्यत्र डलयोरभेदेऽपि यमकं भवति । अर्थभिन्नानामित्येकार्थकभिन्नानामित्यर्थः । तथा चैकार्थत्वाभावनियतसमानाधिकरणशब्दावृत्तिरिति लक्षणमिति भावः । तेन लाटानुप्रासे न प्रसङ्गः । उभयोरेकस्य वा निरर्थकत्वेऽप्रसङ्गश्च । तेनैव क्रमेण स्थिता पूर्वानुपूर्वी सजातीयानुपूर्वीविषयिका ।

### सारबोधिनी

पुनःश्रुतिरिति । अत्र श्रुतिसाम्यं प्रयोजकम् । तेन वर्णभेदे श्रुत्येकत्वेऽपि यमकं यथा—भुजलतां जडतामबला जनः इति लकारडकारयोः । तदुक्तम्-लोर्डसोरलोस्तथेति [?] तथेति श्रुतिसाम्यमित्यर्थः । अर्थभिन्नानामिति । एकार्थकभिन्नानामित्यर्थः । तेन लाटानुप्रासे न प्रसङ्गः । उभयोरेकस्य वा निरर्थकत्वे सङ्ग्रहश्च । तेनैव क्रमेण स्थिता पूर्वानुपूर्वी सजातीयानुपूर्वविषयिका ।

## काव्यप्रदीपः

**अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः। यमकं**

अर्थभिन्नानां भिन्नार्थानामित्यर्थः। एतच्च लाटानुप्रासेऽतिव्याप्तिवारणाय। तन्मात्रे च कृते समरसमरसोऽयमित्यादौ द्वितीयाद्यावृत्तेरर्थाभावादव्याप्तिः स्यादत उक्तम् 'अर्थे सति' इति। यद्यर्थस्तदा भिन्न इत्यर्थः। वर्णानामिति बहुवचनमविवक्षितम्। द्वयोरपि यमकव्यवहारात्। सेति पूर्वेणैव क्रमेण स्थितेत्यर्थः। अतः सरो रस इत्यादौ नातिप्रसङ्गः। एवं च समानार्थत्वाभाववत्समानानुपूर्वीकानेकवर्णावृत्ति यमकमिति लक्षणं द्रष्टव्यम्।

## काव्यप्रकाशखण्डनम्

**अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः। (का. ८३, पू०) यमकम्,**

अर्थभिन्नानामित्येकार्थभिन्नानामित्यर्थः। तेन लाटानुप्रासे न प्रसङ्गः। उभयोरेकस्य वा निरर्थकत्वे संग्रहः। अत्र श्रुतिसाम्यं प्रयोजकम्। तेन वर्णभेदे श्रुत्येकत्वेऽपि यमकम्। यथा—'समरसमरसोऽय'मित्यादेः, सेति सरोरस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिततया।

## आदर्शः

यमकालङ्कारमाह—अर्थे सतीति। लाटानुप्रासव्यवच्छेदार्थं भिन्नानामित्यवश्यं वाच्यम्, ततश्च 'शमरतेऽमरतेजसी'त्यादौ पदद्वयैकदेशवर्णैर्निरर्थकैर्यमकेऽव्याप्तिः स्यादतोऽर्थे सतीत्युक्तम्। तथा चार्थसत्त्वे एवार्थघटितं लक्षणम् अर्थासत्त्वे पुनः श्रुतिमात्रमेवेति लक्षणद्वयेऽभिप्रायः। यद्यपि लक्षणद्वयपक्षे सत्यन्तवैयर्थ्यं तथाऽपि सत्यन्तबलादेव निरर्थकानामिति लक्षणप्राप्त्या तत्सार्थकत्वं बोध्यम्। अनुगमस्तु एकार्थभिन्नानामित्येवंलक्षणेनेत्यभिप्रायः। समरेति। समरेऽभीतत्वेन समरसः समानरस इत्यर्थः। अत्र समरपदं सार्थकं समरसपदैकदेशो निरर्थकः। इदमप्युपलक्षणं द्वयोर्निरर्थकत्वेऽपीत्यपि बोध्यम्। इत्यादिवैलक्षण्येनेति, इत्यादितो वैलक्षण्येनेत्यर्थः।

## सुधासागरः

समरसोऽयमित्यादि। अयमाशयः—अर्थभिन्नानां भिन्नार्थानामित्यर्थः, एतच्च लाटानुप्रासेऽतिव्याप्तिवारणाय। तन्मात्रे च कृते 'समरसमरसोऽयम्' इत्यादौ द्वितीयावृत्तेरर्थाभावादव्याप्तिः स्यात्, अत उक्तम् 'अर्थे सतीति'। यद्यर्थस्तदा भिन्न इत्यर्थः। वर्णानामिति बहुवचनमविवक्षितम्, द्वयोरपि यमकव्यवहारात्। सेति। पूर्वेणैव क्रमेणेत्यर्थः। अतः सरो रस इत्यादौ नातिप्रसङ्गः। एवं समानार्थकत्वाभाववत्समानानुपूर्वीकानेकवर्णावृत्तिर्यमकमिति लक्षणं द्रष्टव्यम्।

(सू० ११८) पादतद्भागवृत्ति तद्यात्यनेकताम्॥ ८३॥

प्रथमो द्वितीयादौ द्वितीयस्तृतीयादौ तृतीयश्चतुर्थे प्रथमस्त्रिष्वपीति सप्त। प्रथमो द्वितीये तृतीयश्चतुर्थे प्रथमश्चतुर्थे द्वितीयस्तृतीये, इति द्वे। तदेवं पादजं नवभेदम्। अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे।

द्विधा विभक्ते पादे प्रथमादिपादादिभागः पूर्ववत् द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्विति विंशतिर्भेदाः। श्लोकान्तरे हि नासौ भागावृत्तुः। त्रिखण्डे त्रिंशत् चतुःखण्डे चत्वारिंशत्।

प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगते, आद्यार्धादिभागे यम्यते, इत्याद्यन्वर्थतानुसरणेनानेकभेदम् अन्तादिकम् आद्यन्तिकम् तत्समुच्चयः, मध्यादिकम् आदिमध्यम् अन्तमध्यम् मध्यान्तिकं तेषां समुच्चयः। तथा तस्मिन्नेव पादे, आद्यादिभागानां मध्यादिभागेषु, अनियते च स्थाने, आवृत्तिरिति प्रभूततमभेदम्। तदेत्काव्यान्तर्गडुभूतम् इति नास्य भेदलक्षणं कृतम्।

---

सङ्केतः

तदेवं पादजं नवभेदमिति। प्रथमस्य क्रमेण—द्वितीय—(मुखं) तृतीय—(सन्दशः) चतुर्थौ (आवृत्तिः) पादैः सह, द्वितीयस्य तृतीय—(गर्भः) चतुर्थाभ्यां (सन्दष्टकं), तृतीयस्य चतुर्थेन (पुच्छं) च सादृश्ये षड्भेदाः। चतुष्पादसादृश्ये (पङ्क्तिः) सप्तमो भेदः। अन्ये च द्वेयमके (युग्मकं, परिवृत्तिः) इति नवेति। अत्र 'प्रथमस्त्रिष्वपी'ति भेदवर्जपादस्य सकृदावृत्त्या भेदाः ज्ञेयाः। तेन—प्रथमो द्वितीयतृतीययोः द्वितीयचतुर्थयोः तृतीयचतुर्थयोः, एवं द्वितीयः तृतीयचतुर्थयोः इति चतुर्भेदी सत्यपि न गणिता। अर्धेति द्वे अप्यर्धे सदृशे। श्लोकेति द्वावपि श्लोकौ सदृशौ इत्यर्थः।

प्रथमपादादीति। प्रथमपादस्यादिभागः स तथा। द्वितीयादयश्च ते पादाश्च तेषां आदिभागाः तेषु यथा। प्रथमपादादिभागः इत्यत्र आदिशब्दः प्रथमादिपादादिभागः इत्येवंरूपतया ज्ञेयः। ततः ग्रन्थो युज्यते। अन्यथा तु दशभङ्गी नोतिष्ठते। यद्वा आदिशब्दं विनाऽपि पुर उक्तस्य इति शब्दस्य प्रकारार्थता ज्ञेया। ततश्च ग्रन्थोक्तं युज्यते इति ज्ञेयम्।

श्लोकान्तरे हीति। अत्र हि भागस्य आवत्यमानत्वे न वैचित्र्यमिति आवृत्तिः नेष्टा, न तु असम्भवादेव। चत्वारिंशदिति। द्वित्रिचतुष्खण्डपादभेदानां केवलानामेव मेलने उक्तसंख्या युज्यते। द्विकादियोगे तु वर्धतेऽपि।

प्रथमपाददीति। प्रथमपाददिगतान्त्यार्धरूप:, आदिशब्दाच्च आदिमध्यान्तरूप: भाग: इत्यर्थ:। अन्तादिकमिति। अत्र अन्तशब्देन अग्रेतन: अन्तादिकनामा यमकभेद: 'भीमो भीमसेन:' इति न्यायेन गृह्यते। तत: अन्तादिकादिमिति लभ्यते। यद्वा—अन्तादिकादिकं इति पाठ:। यद्वा—यमकस्य जातिनामेदम्। अग्रतस्तु व्यक्तिनामानि। तत्समुच्चय इति। तयो: अन्तादिकाद्यन्तकयो: समुच्चय: योग: इत्यर्थ:। तेषां मध्यादिकादीनाम्। आद्यादीत्यादिशब्दात् मध्यान्तभागानां, मध्यादीत्यादिशब्दात् अन्तादिभागेषु।

गडुभूतमिति। काव्यवपुष: रसोपचयस्य भङ्गहेतुत्वात् यमकं गडूयते इति भाव:।

## बालचित्तानुरञ्जनी

यमकविभागप्रतिपादनपरं सूत्रमुपादत्ते पादेति। तत् यमकं पादवृत्ति पादभागवृत्ति चेति द्विविधम्। तच्च प्रत्येकमनेरूपतां यातीत्यर्थ:। तत्र पादवृत्तेर्नव भेदानाह प्रथम इति।

प्रथमद्वितीयपादयोरैक्ये मुखाख्यं यमकम् (१)

प्रथमतृतीययोरैक्ये संदंशाख्यं यमकम् (२)

प्रथमचतुर्थयोरैक्ये आवृत्त्याख्यं यमकम् (३)

द्वितीयतृतीययोरैक्ये गर्भाख्यं यमकम् (४)

द्वितीयचतुर्थयोरैक्ये संदष्टकाख्यं यमकम् (५)

तृतीयचतुर्थयोरैक्ये पुच्छाख्यं यमकम् (६)

चतुर्णामैक्ये पङ्क्त्याख्यं यमकम् (७)

प्रथमचतुर्थयोर्द्वितीयतृतीययोश्चैक्ये परिवृत्ताख्यं यमकम् (८)

प्रथमद्वितीययोस्तृतीयचतुर्थयोश्चैक्ये युग्माख्यं यमकम् (९)

एवं नव।

अत्रैव भेदद्वयमाह अर्द्धेति। पादानां परस्परं वैलक्षण्ये सत्यपि एकाक्षरत्वेन पूर्वापरार्द्धयोरैक्ये अर्द्धविवृत्याख्यं यमकम् (१०), समानवर्णत्वेन श्लोकद्वयोरैक्ये श्लोकावृत्त्याख्यं यमकम् (११)

एवं एकादशपादवृत्तिभेदान् प्रदर्श्य पादभागवृत्तिभेदान् प्रदर्शयति द्विधा विभक्तेति। श्लोके प्रथमादयस्ते पादाश्च। द्वेधा विभक्तानां तेषां आदिभाग: पूर्ववत् पादयमकन्यायेन, द्वितीयादयश्च ते पादाश्च तेषामादिभागेषु अन्तभाग: प्रथमादिपादान्तभाग: द्वितीयादिपादान्तभागेषु च यम्यते। एवं चत्वार:, आद्यन्तभेदात्। आद्यन्तयो: संबन्धाच्च दश आवृत्तिद्वयं चेति विंशति:। पादानां द्विधा विभागे एकस्मिन्पद्ये चत्वारो भागा भवन्ति। तत्र प्रथमपाददिभागद्वितीयपाददिभागयोरैक्ये एक यमकम्। प्रथमपादान्त्यभागद्वितीयपादान्त्यभागयोरैक्ये द्वितीयम्। प्रथमपादान्त्यभागयोरैक्ये चतुर्थम्। प्रथमपाददिभागस्य अन्त्यभागत्रयेणैक्ये पञ्चमम्। प्रथमपादद्वितीयपाददिभागपेक्षया आदित्वेन तस्येतरापेक्षया अन्त्यत्वेनेतरयोरैक्ये षष्ठम्। द्वितीयपाददिभागस्य द्वितीयपादान्त्यभागेनैक्ये सप्तमम्। प्रथमभागस्य चतुर्थभागेन द्वितीयभागस्य तृतीयेन ऐक्ये अष्टमम्। प्रथमभागस्य

द्वितीयभागेन तृतीयभागस्य चतुर्थभागेनैक्ये नवमम्। प्रथमद्वितीयभागयोरेकाक्षरत्वे ऐक्ये अर्द्धवृत्त्याख्यं दशमम्। एवमुत्तरार्द्धेऽपि दशेति विंशतिः। ननु श्लोकावृत्तौ भागनिबन्धनो भेदः किमिति नोच्यत इत्यत आह श्लोकान्तर इति। श्लोकान्तरे आवर्त्यमानस्य भागस्य अप्रतीयमानत्वेन चमत्कारकारित्वादिति भावः। पादानां त्रिधा विभागे उक्तक्रमेणासंबंधे त्रिंशद्‌भेदा भवन्तीत्याह त्रिखण्ड इति। चतुर्द्धा विभागे चत्वारिंशद्‌भेदा भवन्तीत्याह चतुःखण्ड इति। एवं शुद्धभेदानभिधाय भागनिबन्धनान् यमकभेदनाह विभजते पाद तद्भागेति। पादः पद्यचतुर्थांशः।

प्रथमादीति। प्रथमश्चासौ पादश्च प्रथमपादः आदौ येषां ते प्रथमपादायः तेषु गतानि च तानि अन्तार्द्धानि तेषामादिः भागः द्वितीयः पादः। आदौ येषां तेषु गतानि यान्यपरार्द्धानि तेषामादिभागो यम्यते इत्यन्वर्थाश्रयणात् अन्तादिकं नाम यमकम्। एवं प्रथमपादगतोऽन्त्यभागः द्वितीयः पादगतादिभागः उत्तपरपादान्तभागेन यम्यते तदा आद्यन्तकं नाम यमकमित्याद्यनेकप्रकारमित्यर्थः। तत्समुच्चय इति। पूर्वपादान्तभागस्य उत्तरपादादिभागे पूर्वपादादिभागस्य उत्तरपादान्ते च यमनात् तयोः अन्तादिकादद्यन्तयोः समुच्चयो भवतिः। एवं पादविभागस्य पादान्तरादिभागे यमनात् पादमध्यादिकं नाम यमकम्। आदिभागस्य मध्यभागे यमनादादिमध्यं नाम यमकम्। तयोरेकः समुच्चयः। अन्तभागस्य मध्यभागे यमनादन्तमध्यम्। मध्यभागस्य अन्त्यभागे यमने मध्यान्तिकम्। एतयोरेकः समुच्चयः। सर्वेषामेकः समुच्चय इति चत्वारः समुच्चया इत्यर्थः। इत्थं पादान्तरभागापेक्षया पादभागभेदाः प्रदर्शिताः। इदानीमेकस्मिन्नेव पादे भागभेदानाह तथेति अस्य भेदः किमिति न लक्ष्यत इत्यत आह तदेतदिति। गुडर्ग्रन्थिः।

### काव्यादर्शः

यमकं च पादे, तस्य च भागेषु भवद् अनेकमित्याह—पादतद्भागेति। समस्तपादे वृत्तितया नियतानियतरूपपादैकदेशवृत्तितया च पूर्वं द्विधा। तत्र समस्तपादवृत्तियमकभेदनाह—प्रथमो द्वितीयादाविति। आदिशब्दात् तृतीयचतुर्थपादग्रहः। यथा। एतानि क्रमाद् मुखसंदंशावृतिसंज्ञानि। द्वितीयस्तृतीयादाविति। आदिशब्दाच्चातुर्थपादग्रहः। इमे क्रमाद् गर्भसंदष्टकसंज्ञे। तृतीयश्चतुर्थे प्रथमस्त्रिष्वपीति तृतीयचतुर्थयोः पादयोः साम्ये तथा चतुर्ष्वपि पादेषु साम्ये, यथा। एते क्रमात् पुच्छपङ्क्तिसंज्ञे। प्रथमो द्वितीये, तृतीयश्चतुर्थे इति। यथा। एतद् युग्मकम्। प्रथमस्तुर्ये, द्वितीयस्तृतीये, यथा। इदं परिवृत्तसंज्ञम्। एतानि नवापि पादजानि। पादत्रयगतत्वेन तु यमकं नाभिमतमिति प्रथमो द्वितीयतृतीययोर्द्वितीयचतुर्थयोस्तृतीयचतुर्थयोः, द्वितीयस्तृतीयचतुर्थयोरिति चत्वारो भेदा न दर्शिताः। अर्धावृत्तिः श्लोकावृत्तिश्च यथा। इमे समुद्गकमहायमकाख्ये। समस्तपादजं यमकं प्रदर्श्य पादभागवृत्तिं दर्शयितुमाह—द्विधा विभक्त इति। प्रथमपादस्यादिभागः प्रथमपादस्यार्धीकृतस्य प्रथममर्ध द्वितीयार्धपादादिभागेषु द्वितीयतृतीयतुर्यपादानामादिभागेष्वावर्त्यमानं क्रमाद् मुखसंदंशावृतिसंज्ञानि त्रीणि यमकानि करोति। पूर्ववदिति। समस्तपादावृत्तियमकक्रमेणेत्यर्थः। यथा—अन्तभाग इति अन्तभागेष्विति च पदे साकाङ्क्षत्वात् प्रथमपादशब्दं द्वितीयादिपादशब्दं च यथाक्रममनुवर्तयतः, ततोऽत्रापि पूर्वोक्तनामकं भेदत्रयमन्तभागावृत्तौ सत्यां लक्षितम्, यथा शेषं च पादस्यादिभागावृत्तिसत्कभेदसप्तकमन्तभागावृत्तिसत्कभेदसप्तकं च। इति-शब्देन प्रकारार्थेन सूच्यते, यथा एतानि गर्भसंदष्टकपुच्छपङ्क्तियुग्मकपरिवृत्तिसमुद्गकसंज्ञानि क्रमेण। एवम-

न्तभागवृत्तेरपि सप्त भेदा द्रष्टव्याः। तदेवं द्विधा विभक्ते पादे पादस्यादिभागावृत्त्यान्तभागावृत्त्या च प्रत्येकं दश दश यमकानि स्युः, उभयं विंशतिः, न द्वाविंशतिरित्याह—श्लोकान्तरे हीति। भागावृत्तेः श्लोकान्तरेऽसंमतत्वात्। त्रिखण्डे त्रिंशत् [इति]। आदिमध्यान्तरूपेषु त्रिभागेषु प्रत्येकं दशकस्य भावात् पूर्वोक्तसंज्ञानि त्रिंशद् यमकानि। एवं चतुर्धा विभक्तेऽपि पादे आदिमध्यममध्यान्तरूपभागचतुष्टये प्रत्येकं दशकतया चत्वारिंशत्। आद्यभागं पादान्तरस्याद्यभागे मध्यं मध्येऽन्त्यमन्त्ये एव भागे आवर्तयेद्-इत्युक्त्वा अन्यत्र देशे आवृत्तौ यमकान्याह—प्रथमपादादिगतान्त्यार्धादिभाग इति। प्रथमपाद आदिर्येषामित्यादि-शब्दाद् द्वितीयतृतीयपादयोर्ग्रहः, न चतुर्थस्यापि पादचतुष्टयेनैव श्लोकस्य समाप्तत्वात्। पञ्चमपादस्य चाभावात् नार्धावृत्तिरपि। प्रथमपादादीन् गतमाश्रितमन्त्यार्धमादिर्यस्य, च चासौ भागश्च। अन्तयार्धादि। इत्यादिशब्दात् तृतीयतुर्यपादग्रहः। द्वितीयपाद आदिर्येषां, आदिशब्दात् तृतीयतुर्यपादग्रहः। द्वितीयपादादीन् गतमाश्रितमाद्यर्धमादिर्यस्य च चासौ भागश्च। अर्धादिइत्यादिशब्दात् तृतीयतुर्यांशग्रहः। तथा इत्यादि इति आदि-शब्दाद् द्विधाकृते पादे प्रथमपादादिगताद्यर्धभागो द्वितीयपादादिगतान्त्यार्धभागे यम्यत इत्यन्वर्थाद् आद्यन्तकम्। तथा त्रिखण्डे पादे प्रथमपादगतादितृतीयभागो द्वितीयपादादिगतान्त्यतृतीयभागे यम्यत इत्यन्वर्थः। तथा प्रथमपादादिगतमध्यांशो द्वितीयपादादिगतादिभागे यम्यत इत्यन्वर्थः। तथा प्रथमपादादिगतादिभागो द्वितीयपादादिगतमध्यभागे यम्यत इत्यन्वर्थः। तथा प्रथमपादादिगतान्त्यभागो द्वितीयपादादिगतमध्यांशे यम्यत इत्यन्वर्थः। तथा प्रथमपादादिगतमध्यांशो द्वितीयपादादिगतान्त्यांशे यम्यत इत्यन्वर्थः। तथा प्रथमपादादिगत मध्यांशो द्वितीयपादादिगतान्त्यांशे यम्यत इत्यन्वर्थश्च गृह्यते। तेन क्रमाद् आद्यन्तकं मध्यादिकं आदिमध्यं अन्तमध्यं मध्यान्तकं च यमकं सिद्धम्। अनेकभेदमन्तादिकमिति वक्ष्यमाणभेदत्रयेऽन्ताद्योर्यमनात् सामान्येन संज्ञेयम्। विशेषवती त्वन्ताद्योः क्रमेण यमनाद् अन्तादिकमिति। आद्यन्त्योः क्रमाद् यमनाद् आद्यन्तकमिति। तद्द्वययोगे तत्समुच्चय इति। केचित्तु 'अन्तादिकम् इति अन्तादिकाद्यन्तकतत्समुच्चयमध्यादिकादिमध्यादीनां सर्वेषामपि सामान्येन संज्ञेयम्' इत्याहुः। अन्ये तु अत्र लक्षणवाक्येऽशेषभेदसंग्रहपरमादिशब्दत्रयं दृष्ट्वान्तादिकमित्यत्रापि अन्तादिकमित्यादिशब्दं संभावयन्ति, अन्तादिकप्रभृत्यशेषसंज्ञास्वीकाराय। स च लेखकवैगुण्याद् मूलप्रतौ भ्रष्ट इति मन्यन्ते। तत्र द्विखण्डे पादेऽन्तरादिकभेदाः प्रथमपादान्त्यार्धस्य द्वितीयपादस्याद्यर्धेनावृत्तौ व्यस्ताख्यामन्तादिकं, यथा। तृतीयपादान्त्यार्धतुर्यपादाद्यर्धयोरैक्ये द्वितीयं व्यस्ताख्यं यथा। तद्द्वययोगे तृतीयसमस्ताख्यं, यथा। द्वितीयपादान्त्यार्धस्य तृतीयपादाद्यर्धेनैक्ये तुर्यं मध्याख्यं, यथा। समस्तमध्ययोर्योगे पञ्चमं वंशाख्यं यथा। प्रथमपादस्याद्यर्धे तुर्यपादान्त्यार्धेन सहावृत्ते वंशे च सति षष्ठं चक्रकाख्यमन्तादिकं, यथा। इत्यन्तादिकभेदाः षट्। प्रथमपादान्त्यार्धस्य तृतीयपादाद्यर्धेनावृत्तौ केचित् संभवन्तोऽप्यन्तादिकभेदा न हृद्या इति न गणिताः। द्विखण्ड एव पादे आद्यन्तकभेदाः। प्रथमपादाद्यर्धद्वितीयपादान्त्यार्धैक्ये तथा तृतीयपादाद्यर्धस्य तुर्यपादान्त्यार्धेनैक्यं द्विभेदं व्यस्ताख्यमाद्यन्तकं, यथा एतद्द्वययोगे तृतीयं समस्ताख्यमाद्यन्तकं, यथा। द्वितीयाद्यार्धे तृतीयान्त्यार्धेनावृत्तं चतुर्थं मध्याख्यं, यथा। मध्यसमस्ताद्यन्तकयोगेवंशः पञ्चमः, यथा। प्रथमान्तार्धं तुर्याद्यर्धेनावृत्तं वंशश्च चक्रकाख्यं, यथा। इत्याद्यन्तकं षोढा॥ प्रथमपादस्याद्यर्धं तृतीयपादान्त्यार्धेनावृत्तं आद्यन्तक यमकं कुरुत इत्यादयः संभवन्तोऽपि भेदा न गणिताः। एवं मध्यादिकादयोऽप्यहृद्यत्वात्। अथ द्विषण्ड एव पादे समस्तान्तादिकसमस्ताद्यन्तकयोगेऽर्धपरिवृत्तिसंज्ञ एक एव भेदः, तत्समुच्चयः, यथा। अथ त्रिखण्डे प्रथमद्वितीयतृतीयपादानामन्त्यस्तृतीयो भागो द्वितीयतृ-

तीयतुर्यपादानामाद्ये तृतीये भागे यम्यमानः षडन्तादिकमकानि करोति, यथा । एतानि क्रमाद् द्विर्व्यस्तसमस्तमध्य-वंशचक्रकाख्यानि पूर्ववत् । एवं त्रिखण्ड एव पादे आद्यन्तकभेदा अपि षड्, यथा । समस्तान्तादिकसमस्ताद्यन्त-कयोर्योगेऽर्धपरिवृत्त्याख्य एकविध एव, तत्समुच्चयः, यथा । इति त्रयोदश भेदाः । एवं मध्यादिकभेदा अपि पूर्वोक्ताख्याः षड्, यथा एवमादिमध्यभेदा अपि पूर्वोक्ताख्याः षड् यथा । समस्त मध्यादिकसमस्तादिमध्ययो-र्योगेऽर्थपरिवृत्त्याख्य एक एव, तत्समुच्चये, यथा । एवमेतेऽपि त्रयोदश । एवमन्तमध्यभेदा अपि पूर्वोक्ताख्या एव षड्, यथ एवं मध्यान्तके भेदेऽपि पूर्वोक्ताख्याः षड्, यथा समस्तान्तमध्यसमस्तमध्यान्तकयोर्योगेऽर्धपरिवृत्तिनामा एक एव, तत्समुच्चयः, यथा । एवमेतेऽपि त्रयोदश । तथा समस्तमध्यादिकसमस्तादिमध्यसमस्तान्तमध्यसमस्त-मध्यान्तकानां युगपद् योगेऽर्धपरिवृत्तिप्रायोऽन्योऽपि एको भेदः, यथा । एवं त्रिखण्डे पादेऽन्तादिकादयश्चत्वारिं-शद् भेदाः । तथा चतुर्धा विभक्ते पादे षड्भेदमन्तादिकं षड्भेदमाद्यन्तमेकविधस्तत्समुच्चय एते त्रयोदश भेदा हृद्या इति स्वीक्रियन्ते । शेषाश्च मध्यादिकादयः संभवन्तोऽपि न हृद्या इति न गण्यन्ते । इदानीं तत्रावृत्तिमाह— तस्मिन्नेव पाद इति । आद्यादि-इत्यादिशब्दाद् मध्यादिग्रहः । मध्यादि-इत्यादिशब्दाद् मध्यान्तग्रहः । ततश्च द्विधा विभक्ते पादे आद्यभागः, तत्रैव पादेऽन्त्यभागेन सहावृत्त एकपादावृत्तौ द्विपादावृत्तौ त्रिपादावृत्तौ चतुष्पादावृत्तौ च सत्यां पादसमुद्गकसंज्ञं यमकं जनयति । तत्र यदैकपादावृत्तिस्तदा व्यस्तरूप एको भेदः, एकश्च पादश्चतुर्थ एव बोद्धव्यः, तस्यैवैकस्य शोभादृष्टेः । न त्वन्यत् प्रथमपादादि त्रयं, यथा । यदा च द्विपादावृत्तिस्तदा षड् भेदाः यथा । एषु च प्रथमचतुर्थषष्ठा भेदा अनन्तरितरूपाः । यदा च त्रिपादावृत्तिस्तदा चत्वारो भेदाः, यथा एषां च मध्ये प्रथमचतुर्थावनन्तरितौ । द्वितीयतृतीयौ त्वन्तरितानन्तरितौ । चतुरावृत्तौ च समस्तरूप एको भेदः, यथा । इमे च व्यस्तादयः सर्वे द्वादश । रुद्रटेन तु व्यस्तरूपस्य चतुर्भेदत्वात् पञ्चदशोक्ताः । अथ त्रिधा विभक्ते शब्दे आद्यादि-भागस्तत्रावृत्तौ मध्याद्यंशे यम्यमानो दर्श्यते । तथा हि आद्यंशो मध्यांशोनादिभागोऽन्तभागेन मध्यभागोऽन्तभागेन च सहावृत्त आदिमध्यं, आद्यन्तं, मध्यान्तं च क्रमाद् यमकं, यथा तदुक्तम्—

**स्थानाभिधानाभाञ्जि त्रीण्यन्यानि सन्ति यमकानि।**
**आदिर्मध्येऽन्तमध्योऽन्ते च तत्र परिवृत्तः ॥**

तत्रेति तस्मिन्नेव पादे इत्यर्थः । एषु च पादसमुद्गकवत् प्रत्येकं द्वादश भेदाः । तथा हि आदिमध्यस्यैक-पादावृत्तौ चतुर्थपादगत्वेन व्यस्तरूप एको भेदः, यथा । द्विपादावृत्तौ षडभेदाः, यथा एषु प्रथमचतुर्थषष्ठा अनन्तरि-तरूपा, द्वितीयतृतीयपञ्चमाश्चान्तरिताः । त्रिपादावृत्तौ चत्वारो भेदाः, यथा । एषु च प्रथमचतुर्थावनन्तरितौ, द्वितीयतृतीयौ त्वन्तरितौ । चतुष्पदावृत्तौ समस्तरूप एको भेदः, यथा । एते चादिमस्य व्यस्तादयो द्वादश भेदा दर्शिताः । अनेन क्रमेण आद्यन्तस्य मध्यान्तस्य च प्रत्येकं द्वादश भेदा ज्ञेयाः । तदेवं त्रिखण्डे तत्रावृत्तौ आदिमध्या-न्तमध्यान्तानां षट्त्रिंशद् भेदा दर्शिताः । चतुर्धा विभक्ते तु पादे आद्यभागः क्रमेण द्वितीयादौ, द्वितीयस्तृतीयादौ, तृतीयश्चतुर्थे भागे, इत्येकावृत्तिभेदा वक्त्रसंदंशाद्यन्तकमध्यसंदष्टकशिखानामानः षड् यथा । द्विरावृत्त्या मालाका-ञ्चीसमुद्गकसंज्ञाः, यथा । त्रिरावृत्तिर्यमकतत्त्वविदां नेष्टा । चतुरावृत्त्या पङ्क्तिसंज्ञ एको भेदः, यथा । एते च दश व्यस्तभेदाश्चतुर्थैकपादगतत्वेन पादद्वयगतत्वेनान्तरितभेदास्त्रिंशत् । अनन्तरितभेदाश्च त्रिंशत् । पादत्रयगतत्वेना-न्तरितभेदा विंशतिः । अन्तरितानन्तरित भेदाश्च विंशतिः । पादचतुष्टयगतत्वे दश समस्तभेदाः । ततश्च वक्त्रा-दीनां चतुर्धा विभक्ते पादे तत्रावृत्तौ विंशत्यधिकं शतं भेदाः । षट्खण्डे षष्टिरित्यनुक्तेः षट् खण्डे पादे

यमकमनभिमतमिवास्य ग्रन्थकृतः, अन्यैस्तु कृत्वार्धशश्च भागानिहापि सर्वं तथा रचयेदित्यनेन षट्खण्डेऽपि यमकत्वं सूचितम्। अनियतेचेति आदिमध्यान्तलक्षणाद् देशाद्, अर्धत्रिभागादिलक्षणाद् देशाद्, लक्षणाद् अवयवाच्च यद् विलक्षणं तद् अनियतं स्थानं भूयस्तमभेदम्। तदेतदिति। कविशक्तिख्यापनमात्र पायत्वाच्च काव्यगडुभूता। यमकं हि पृथग्यत्ननिर्वर्त्यं शब्दविशेषान्वेषणेन साध्यमानं रसभङ्गायेति सुकुमारमतीनां पुरुषार्थेषु प्रवर्त्तनाय रच्यमानं न सुखोपायः। यल्लोलटः—

**यमकानुलोमतदितरवक्त्रादिभिदा हि रसविरोधिन्यः।**
**अभिमानमात्रमेतद् गड्डरिकादिप्रवाहो वा॥**

### विवेकः

पादानां नवभेदत्वमित्याह—प्रथमो द्वितीयादावित्यादि। अर्धावृत्तिस्तु समुद्रकं श्लोकावृत्तिर्महायमकमिति द्वे यमके (३/१६)। अथ पादभागावृत्तिप्रकाराः कथ्यन्ते। तत्र पादे द्विधा विभक्ते विंशतिर्भेदाः (रु. का. अ. ३/२१, २२)।

श्लोकावृत्तिप्रकारो भागावृत्तौ न सम्भवतीति पादावृत्तिवत् प्रथमपादार्धवद्भागावृत्त्या दशैव प्रकाराः। एवं द्वितीयभागस्यापि दशेति। त्रिधा विभक्ते पादे पूर्ववर्त्तिंशत् (रु. का. अ. ३/४८)। चतुर्धा विभक्ते चत्वारिंशदित्याह पादे प्रथमादि पादादिभाग इत्यादि। प्रथमपादगतोऽन्तोऽर्धभागो यदा द्वितीयपादगतस्यार्धभागस्यादौ यम्यते तथा तृतीयपादार्धस्यादिभूतो भागश्चतुर्थपादार्धभागस्यान्ते यम्यते तदाऽऽन्तादिकम्। यदा तूभयरूपमप्येतदेकश्लोके यम्यते तदोभयस्य समुच्चयनात् समुच्चय इत्याह प्रथमपादादिगतान्त्यार्धेत्यादि। प्रथमपादस्य मध्यं यदा द्वितीयाधीन्तयोर्यम्यते तदा मध्यादिकं चतूरूपम्। तत्र च द्वयोस्त्रयाणां चुतर्णामपि वा प्रकाराणां समुच्चयेऽयं त्रिधेत्याह—समुच्चय इति। तदमी पादभागावृत्तौ पादान्तरभागावृत्तौ प्रकाराः। यदा तु यस्यैव पादस्यादिमध्यान्तभागास्तस्मिन्नेव पादे ते परस्परं परिवृत्त्या यम्यन्ते तदा स्थाननियमेनानन्तप्रकारत्वमित्याह तथा तस्मिन्नेव पाद इत्यादि। अमीषां चोक्ताप्रकारामामन्यैलङ्कारैः कृतमपि लक्षणं नीरसत्वादत्र न कृतमित्याह तदेतत् काव्यान्तर्गडुभूतमिति। **'गडुः पृष्ठगुडे कुब्जे' इति कोषकारः।** तत्र मुखं यथा—**चक्रन्द हतारं चक्रं दहताऽरम्। खड्गेन तवाजौ राजन्नरिनारी।** (रु. का. अ. ३/४)॥ हे राजन् तव खड्गेणारं चक्रमरीणां समूहं दहता अरं शीघ्रं हताऽरिनारी चकन्देति। एतञ्च युग्मकोदाहरणेनोपदर्शितमिति संदंशमुदाहरति ग्रन्थकारः। एवमन्यत्रापि ग्रन्थकर्तुरभिप्राय उन्नेयः।

### दीपिका

पूर्वानुपूर्व्या वर्णावृत्तिस्थानविशेषेषु यम्यत इति यमकमन्वर्थनामकथनम्। तद् यमकं पादतद्भागवृत्ति सत् प्रकारवैचिश्येणानेकतां बाहुल्यं याति। प्रथमो द्वितीयादाविति। आवर्तत इति शेषः। पादावृत्तौ यदि प्रथमद्वितीययोरैक्यं तदा मुखं नाम, प्रथमस्य तृतीयेनैक्ये सन्देशः, तुर्येण वृत्तिनाम। द्वितीयस्य तृतीयेन गर्भः, चतुर्थेन सन्दष्टकम्। तृतीयस्य तुर्येण पुच्छम्। प्रथमस्य द्वितीयादिभिरेकत्रैक्ये सप्त शुद्धाः। विमिश्रेण तु मुखपुच्छयोगे युग्मकम्, गर्भवृत्तिभागे, परिवृत्तिः। प्रथमो द्वितीये तृतीयश्चतुर्थे इत्यत्रेतिशब्दः प्रकारसूचकः। एवमुत्तरत्रापि पादजं पादावृत्तिरूपम्।

पादतद्भागेति कारिकाप्रतीकेन पादद्विपदावृत्तिश्चतुर्णमेव पादानामवृत्तिरूपगृहीतेत्याह—अर्धावृत्तिः श्लोकावृत्तिश्चेति । यथायथं समुद्गकमहायमकनामके ।

पादभागवृत्तिप्रकारानाह—द्विधेति । प्रथमादीनां पादानामादिभागः । पूर्ववत् पदावृत्तिवत् । द्वितीयादीनां पादानामादिभागेषु वर्तत इति दशैव, प्रथमादीनामन्तभागो द्वितीयादीनामन्तभागेष्वित्यपि दश, तेन विंशतिः ।

ननु पूर्ववद्भेदगणने प्रत्येकमेकादशतया तयोर्द्वाविंशतिर्न विंशतिरित्याहश्लोकान्तरेष्विति । श्लोकावृत्तिवत् श्लोकान्तरे पादाद्यन्तविभागवृत्तिर्न पेशलेति शिष्टैराम्नातेत्यर्थः । पादे त्रिखण्डे कृते पूर्ववन्मध्यभागावृत्तिप्रकारदशकानुप्रवेशात्त्रिंशत् । पादे चतुःखण्डे कृते चत्वारिंशत् । पञ्चादिखण्डकल्पना त्वनुष्टुभादिपादे न सम्भवतीत्यसार्वत्रिकतया नाद्रियते । एवं गद्येऽपि यथायोगं भागकल्पनया प्रकारता अन्वयः । प्रथमादिपादानामर्धरूपेऽर्धस्य वा भागः, द्वितीयादीनां पादानामित्यादावर्धरूपार्धस्य विभागे यम्यते नियम्यत इत्यादीनां प्रकाराणामन्वर्थताऽनुसारेण नामविशेषनिवेशनायां प्रभूततमप्रकारं यमकम् तेष्वेवान्वर्थनामकप्रकारेषु किञ्चिदाह अन्तादिकमिति । प्रथमादिपादानामन्तभागस्य द्वितीयादिपादामन्तादिभागेष्वावृत्तावन्तादिकम्, द्वितीयादिपादानामन्तभागस्य द्वितीयादिपादानामन्तादिभागेष्वावृत्तावन्तादिकम्, द्वितीयादिपादानामादिभागस्य तुर्यादिपादान्तभागेष्वावृत्तावाद्यन्तिकम् । द्वयोरप्यनयोरेकत्र मिश्रणे समुच्चयः ।

एवं प्रथमादिपादमध्यभागस्य द्वितीयादिपाददिभागयमने मध्यादिकम् । तथा प्रथमादिपादान्तभागस्य द्वितीयादिपादमध्यभागवृत्तावन्तमध्यकम् । प्रथमादिमध्यभागस्य तु द्वितीयादिपाददिभागावृत्तौ मध्यादिकम् । अत्र च द्वयोस्त्रयाणां चतुर्णां वा मिश्रणे समुच्चय इत्याह तेषामिति । एकस्यैव पादस्यादिभागो मध्यभागे, मध्यभागोऽन्तभागोऽन्तभागे, एवमित्यादावावर्तत इत्याह—तस्मिन्नेवेत्यादि भागेष्वित्यन्तम् । एते च भागकल्पनया स्थाननियमेनावृत्तिप्रकाराः । क्वचित्तु स्थानानियमेनावृत्तिर्यता "सुवदनावदनासवसम्भृतादरसंहत" इत्यादि । अत्र हि प्रथमाकारायमनेन प्रथमादिभागायमनमित्यादिदर्शनादस्यानन्त्यमित्याह—अनियते च स्थाने आवृत्तिरिति ।

प्रभूततमभेदमिति । ननु तेषां भेदानां किमिति विशेषलक्षणानि न कृतानीत्याह तदेतदिति । अन्तर्गडुभूतस्य प्रायः रसानुपकारकतया वास्तवकाव्यङ्गताविरहात्, किन्तर्हि गड्डुरिकाप्रवाहपतितैर्महाकविभिरपि सर्गबन्धादिषूपनिबन्धाल्लेशतो दर्शितमिति भावः । दिङ्मात्रमित्यसारविस्तरभीत्येत्यर्थः ।

## दर्पणः

तद्भेदानाहं पादेषु पादभागेषु वर्तनात् यमकमनेकप्रकारमित्यर्थः ।

प्रथमः पादः द्वितीयादाविति । क्वचित् द्वितीयपादस्थाने, क्वचित् तृतीयपादस्थाने, क्वचिच्चतुर्थपादस्थाने आवर्तत इति शेषः । एवं द्वितीय इत्यादावपि ज्ञेयम् ।

१. प्रथमस्त्रिष्वपीतिच एकः प्रकारः ।

२. तत्र यदि प्रथमद्वितीययोरैक्ये तदा सुखं नाम, [मुखं नाम]

३. प्रथमतृतीययोरैक्ये संदशः,

४. प्रथम चतुर्थयोरावृत्तिर्नाम,

५. द्वितीययोगेर्ग [र्वी]...द्वितीय चतुर्थयोः सन्दष्टकम्,

६. तृतीयचतुर्थयोर्गुच्छः,

७. प्रथमस्य द्वितीयादिभिरेकत्रैक्ये पतिरिति सप्त शुद्धाः। मिश्रणे तु मुखप्रच्छ [पुच्छ] योगे युग्मकम्, (२ + ६)

गर्भ्वीवृत्तियोगे परिवृत्तिः (५ + ४)।

प्रथमो द्वितीये द्वितीयश्चतुर्थ इति। अत्र इति शब्द एकप्रकारद्योतकः। एवमुत्तरत्रापि। इह पादवृत्तिद्वचनेन पादद्वितीयरूपार्द्धवृत्तेः समुकनाम्नः,

पादचतुष्टयरूपश्लोकावृत्तेश्च महायमकनाम्नश्चेति यमकत्वस्योपग्रह [?] इत्याह अर्धावृत्तिरिति।

इदानीं पदभागवृत्तिप्रकारानाह द्विधेति। पूर्ववदिति। समनन्तररर्दार्शतपादभेदगणना च न [व] धा...विभक्त पादानाप्यात्यभाग [प्याद्यभाग] नात्यभागानां च भेदगणनायां विंशतिभेदा इत्यर्थः।

ननु प्रथमपादाद्यभागस्य द्वितीयपादात्य (१) भागे तथा तृतीयचतुर्थपादाद्ययो रावृत्तिः (२)।

एवं द्वितीयपादाद्यभागस्य तृतीयचतुर्थपादाद्यभागयोः, (३)।

तृतीयपादाद्यभागस्य चतुर्थपादाद्यभागे। ४

प्रथमपादाद्यभागस्य त्रिष्वपीति सप्त। + ३ = (७)

एवं पुनरेकत्र श्लोके क्वचित् प्रथमपादाद्यभागस्य द्वितीयपादाद्यभागे,

तृतीयपादाद्यभागस्य चतुर्थपादाद्याभागे आवृत्तिः।

क्वचिच्चैकत्र प्रथमपादाद्यभागस्य चतुर्तपादाद्यभागे [व] (९)

द्वितीयपादाद्यभागस्य तृतीयपादाद्यभाग इति न [च] भेदः।

तथा आद्यार्द्धभागस्य द्वितीयार्द्ध भाग इत्येकः (१०)

एवमेकत्र श्लोकेऽपि ये पादचतुर्थस्याद्यभागस्ते

द्वितीयश्लोकस्य पादचतुष्टस्याद्याद्यभापेष्वित्येकादश भेदाः। (१० + ११)

एवमन्तिमभागानामपीति द्वाविंशति भेदास्तु। (२१ + १ = २२)

कथं युक्तं विंशतिभेदा इत्यत आह श्लोकान्तरे हीति भागावृत्तिः। श्लोकान्तरे द्ववस्थतया [ह्यव्यवस्थतया] चमत्काराभावात् न प्राचीनैः कुलतेति [गणितेति] भावः। त्रिखण्ड इति। पदानां त्रिधा विभागे, चतुःखण्डे चतुर्धाविभागे वञ्चादिखण्डकन्यानां यं च [?] स्तोकानामक्षरामां दूरस्थितानामावृत्ति.....सरत्र चमत्काराधायिनीति तदगणनम्। एवंगत्येति। यथायोगं गकल्पनया [गणनया] चमत्कारातिशयाधाने यमकप्रकारा उन्नेयाः।

प्रथमादीति । [प्रथमेति] प्रथमादिपादानाममन्त्यार्द्धरूपो भागोऽर्द्धस्य वा भागः, द्वितीयादीनां पदानां [पादानां] मत्यादौ अर्धरूपे भागेऽर्द्धस्य वा भागे यस्य तेन निबध्यत इत्यादीनां प्रकाराणां अनुर्थताया [अन्वर्थतया] आत्मानुगमनस्यानुसरणेन नाम विशेषनिवेशनायां बहुतरप्रकारं यमकमित्यर्थः ।

तेष्वेवात्मानुनामकप्रकारेषु किञ्चिदाह-अन्तादिकमिति । प्रथमादिपादानामन्तभागस्य द्वितीयादिपादानामन्त्यभागेष्वावृत्तावन्तादिकम् ।

तृतीयादिपादानामन्त्यभागस्य तृतीयादिपादान्तभागे आवृत्तौत्वात्यन्तिकम् ।

द्वयोरप्यनयोरेकत्रमिश्रणे समन्वयः ।

एवं प्रथमादिपादमध्यभागस्य, द्वितीयादिपदादि भागयमकमध्यादिकं, प्रथमादिपादाद्यभागस्य द्वितीयादिमध्ययमने आदिमध्यम् ।

तत्रप्रथमादिपादान्त्यभागस्य द्वितीयादि पादपादमध्यवृत्तौ अन्तमध्यप्रथमपादादीनां मध्यस्य द्वितीयादिपादान्त्यवृत्तौ मध्यान्तकम् ।

अत्र च द्वयोस्त्रयाणां च मिश्रणे त्रिधा समुच्चय इत्याह—एषामिति [तेषामिति ।] एकस्यैव पादस्यादिभागो मध्यभागश्चान्तभागे एवमन्त आदाविति वर्तत इत्याह तस्मिन्नेवेत्यादि भागेष्वित्वत्यन्तम् । एते च भागकलानयात् स्थाननियमेनावृत्तिप्रकाराः । क्वचित् स्थानानियमेनावृत्तिः यथा—यमवतामवतां धुरि स्थितं इति ।

तत्र प्रथमाक्षरासुयमनेनान्त्य पादादिवभाग यमनं इत्यादि गमनाममुकस्यानन्त्यमित्याह [गणनायां यमकस्यानन्तमित्याह] अनियतेति चेति । अनियते भागस्थानादि नियम वाहते [?] मन्तर्गडुभूतं गडू तद्रतग...वदसार भावप्रायः । [इत्यभिप्रायः] ।

तदुक्तं ध्वनिकृता—

**यमकादिर्ति वन्वेषु पृथग्यलोऽस्य जायते ।**
**शक्तस्यापि रसाकृत्वं तस्मादेषां न विद्यते ॥** इत्यादि ।

**[यमकादिनिबन्धेषु पृथग्यत्नोऽस्य जायते ।**
**शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते ॥]**

अत एव महाकवयोऽयत्र शक्तिप्रदर्शनार्थ पूर्वमहाकविविप्रहानुबोधेन [प्रबन्धानुरोधेन मन्तपर्वतापि [दि]वर्णनस्थाने कृताभिनिवेशा दृश्यन्ते । तदनुसारेणैवास्माभिः प्रदेशतो [प्रवेशतो] भेदख्यापनं कृतमित्यर्थः । मुख्याख्यं यमकं (२) युग्मको वा वृत्या उदाहृतं भविष्यतीति संदंशमुदाहरति ।

## साहित्यचूडामणिः

अस्य च विभागमनन्तप्रकारमासूत्रयितुमाह—पादेति । प्रथमः पादो द्वितीये चतुर्थे च, तृतीयश्चतुर्थे । तथा प्रथमस्त्रिष्वपि द्वितीयतृतीयचतुर्थेषु यौगपद्येन यम्यते ।

सप्तेति । प्रथमस्य त्रयः, द्वितीयस्य द्वौ, तृतीयस्यैकः प्रथमस्य यौगपद्यादेक इति । द्विधेति । पादचतुष्कस्य प्रत्येकं द्वैधीकरणे । पूर्ववत् पादभेदवत् । आदिपदेस्तत्प्रकारबाहुल्यमुन्मीलयते । प्रथमस्य पादस्य प्राथमिकः खण्डः क्रमादुपरितनपादत्रयादिखण्डेषु यम्यत इत्यादि । श्लोकान्तरे भागावृत्तिर्नास्ति, चमत्कारविशेषाभावात् पादान्तरे पुनरस्त्येवेति भावः । अन्वर्थतेति । गुणनार्थो हि यमिः यथा 'यमौ कुशलवावि'-ति । अन्तादिकमिति । पूर्वपादान्तोत्तरपादादिभागयोर्यमनात् । तद्विपर्ययादाद्यन्तिकम् । एवमन्यत्रापि । गड्ः शरीरे मेदोग्रन्थिः । यदाह [ध्वनिकृत्] —

> यमकादिनिबन्धेषु पृथग् यत्नोऽस्य जायते ।
> शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते ॥
>
> रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
> अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः ॥ इति ।

## सम्प्रदायप्रकाशिनी

एवं सामान्यलक्षणमुक्त्वा विशेषानाह—पादतद्भागेत्यादि । तद् यमकं पादवृत्ति पादभागवृत्ति चेति द्विधाभूय पुनरवान्तरविशेषवैचित्र्येण वैविध्यं भजते ।

तत्र तावत् पादवृत्ति सप्तधा सम्भवतीति दर्शयति—प्रथमो द्वितीयादावित्यादि । प्रथमः पादो द्वितीयादिषु त्रिषु यम्यत इति त्रयो भेदाः । तत्र यदा प्रथमो द्वितीये यम्यते तदामुखं नाम यमकम् । यदा तृतीये तदा सन्दंशः । चतुर्थे आवृत्तिः । यदा द्वितीयस्तृतीये तदा गर्भः । चतुर्थे सन्दष्टकम् । यदा तृतीयश्चतुर्थे तदा पुच्छः । यदा तु प्रथमस्त्रिष्वपि तदा पङ्क्तिः । त एते पादावृत्तिरूपाः सप्त । अथ द्वौ सङ्कीर्णावाह—प्रथमो द्वितीय तृतीय इत्यादि । यदा तु प्रथमतृतीययोः पटिपाट्या द्वितीयचतुर्थयोर्यमनं तदा युग्मकम् । यदा तु प्रथमद्वितीययोश्चतुर्थतृतीयाभ्यां तदा परिवृत्तिः । इमौ संकीर्णौ । इत्थं नव । अर्धावृत्तिः । श्लोकावृत्तिश्चेत्येकादश ।

अथ पञ्चभागवृत्तिविशेषान् विवेचयति—द्विधा विभक्त इत्यादि । यदा पादानां द्विभागक्रिया तदा प्रथमो भागः पादावृत्तिन्यायेन यम्यत इति नवविधः, अर्धयोर्भागस्यैकरूपयमनेऽमनेऽर्धावृत्तिन्यायेनैक इति भागनिबन्धनः प्रतिभागं दशविधः । इत्थं च सति द्विधा विभक्तेषु पादेषु विंशतिः । ननु श्लोकावृत्तावपि किं न भागनिबन्धनो भेद इत्यत आह—श्लोकान्तरे हीति । इत्थं त्रिखण्डे त्रिंशत् । चतुःखण्डे चत्वारिंशत् । एते शुद्धाः ।

अथ भागनिबन्धनाः सङ्कीर्णाः—प्रथमपादादीति । यदा तु प्रथमस्य पादस्यान्त्यार्धरूपो भागो द्वितीयस्याद्यार्धरूपे यम्यते तदान्त आदौ यम्यत इत्यन्वर्थाश्रयणादन्तादिकम् । एवमादिभागस्यान्तभागेनाद्यन्तिकम् । यदानयोरर्धद्वये समावेशस्तदा द्विधा समुच्चयः । एवं पादमध्यभागस्य पादान्तरादिभागैर्यमने मध्यादिकम् । आदिभागस्य मध्यभागैरादिमध्यम् । अन्तभागस्य मध्यभागैः अन्तमध्यम् । मध्यभागस्यान्तभागैर्मध्यान्तकम् । प्रतिस्वं द्वैरूप्ये चत्वारः समुच्चयाः । त एते पादभागानां पादान्तरभागपेक्षया भेदाः । अथैकस्मिन्नेव पादे वैचित्र्यमाह—तस्मिन्नेवेत्यादि । यदा त्वेकैकत्र पादे आदिमध्यान्तभागानां नियतानियतक्रमतया यमनं, तदैतद् यमकं प्रभूततमभेदम् । तथा हि—पादावृत्तिनिबन्धनाः प्रभूततमाः । पादभागानां पादान्तरभागनिबन्धनाः प्रभूततराः ।

एकैकत्र तु पादे भागानां मिथोयमननिबन्धनास्तु प्रभूततमा एव। तर्हि को लक्षणकरणहेतुरित्यत आह—तदेतत् काव्येत्यादिना। गडुः श्वयथुः।

## मधुमती

यमकं विभजते—पादेति। अत्र पादावृत्तौ—(१) द्वितीयस्य प्रथमतुल्यत्वे मुखम्। (२) तृतीयस्य तत्तुल्यत्वे सन्दंशः। (३) चतुर्थस्य तथात्वे आवृत्तिः। (४) द्वितीयस्य तृतीयतुल्यत्वे गर्भः। (५) चतुर्थस्य तत्तुल्यत्वे सन्दष्टकम्। (६) चतुर्थस्य तृतीयतुल्यत्वे पुच्छम्। (७) सर्वस्य प्रथमतुल्यत्वे पङ्क्तिः इति सप्त शुद्धभेदाः। प्रथमो द्वितीय इति। तथा च—(८) मुखपुच्छयोर्योगे युग्मकम्। (९) गर्भावृत्त्योर्योगे परिवृत्तिः इति द्वौ सङ्कीर्णभेदौ। एवं नव॥ अर्धावृत्तिरिति। अनयोश्च यथासङ्ख्यं (१०) समुद्गकं (११), महायमकं इति संज्ञा।

अथ पादभागावृत्तौ यमकप्रकारानाह—द्वेधेति। प्रथमादीत्यादिपदेन द्वितीय-तृतीय-चतुर्थपादपरिग्रहः। तथा च प्रथमपादाद्यभागः द्वितीय-तृतीय-चतुर्थपादाद्यभागेषु क्रमेण यम्यते इति त्रिधा (३)। द्वितीयपादाद्यभागश्च तृतीयच्चतुर्थपादाद्यभागयोः यम्यते इति द्विधा। (५)। तृतीयपादाद्यभागश्च चतुर्थपादाद्यभागे यम्यते इति एकः (६) प्रथमापादाद्यभागः त्रिष्वप्याद्यभागेषु युगपत् यम्यते इत्यपरः (७)—एवं सप्त शुद्धभेदाः। प्रथमपादाद्यभागतुल्यः द्वितीयपादाद्यभागः, तृतीयपादाद्यभागतुल्यः चतुर्थपादाद्यभागः, एतयोः सङ्करः एकः (८), प्रथमपादाद्यभागतृतीयपादाद्यभागयोः तुल्यत्वे द्वितीयपादाद्यभागचतुर्थपादाद्यभागयोश्च तुल्यत्वे सङ्करः अपरः (९) इति आहत्य नव। अर्धावृत्त्या समं दश (१०)। एवमेव अन्त्यभागोऽन्त्यभागेष्विति आहत्य विंशतिर्भेदाः (२०)। ननु अर्धावृत्तिवत् कुतोऽत्र श्लोका वृत्तिर्नोक्ता? इत्यत आह—श्लोकेति। तथा च भागावृत्तौ भागनिबन्धना भागिनः श्लोकस्य आवृत्तिर्न भवत्येवेति भावः। त्रिखण्डे इति। एवं च श्लोकपादानां त्रिधा विभागे त्रिंशत्त्वम् (३०)। चतुर्धा विभागे तु चत्वारिंशत्त्वमित्यर्थः (४०)।

इदानीं सङ्कीर्णभेदानाह—प्रथमेति। अत्रापि आदिशब्देन द्वितीय-तृतीय-चतुर्थपरिग्रहः। अन्त्यार्धादीत्यादिपदेन आद्यमध्यमयोः। एवमग्रेऽपि। अन्वर्थतेति। यम्यते नियम्यते आवृत्त्येति अनुगतार्थतेत्यर्थः। तथाहि—यदा प्रथमपादगतान्त्यभागः द्वितीयादिपादाद्यभागे यम्यते तदा अन्त्य आदौ यम्यत इति अन्त्यादिकम्। यदा तृतीयपादगतादिभागः चतुर्थपादान्त्यभागे यम्यते तदा आद्यन्तिकम्। यदा तु उभयमप्येकत्र पद्ये यम्यते तदा द्वयोः समुच्चयः। एवं पूर्वपादमध्यभागस्य उत्तरपादाद्यभागे यमनात् मध्यादिकम्। आद्यभागस्य मध्यभागे यमने आदिमध्यकम्। आदिभागस्य मध्ये यमनात् आदिमध्यान्तयोः एकत्र समुच्चयः। अन्त्यभागस्य मध्यभागे यमने अन्त्यमध्यकम्। मध्यभागस्य अन्त्यभागे यमने मध्यान्तिकम्। तयोरेकत्र समुच्चयः। सर्वेषां एकत्र समुच्चयश्चेति चत्वारः समुच्चयाः। एकपादस्यैव भेदानाह—तथेति। अनियते चेति। एतच्च पादभेदेऽपि द्रष्टव्यम्।

नन्वेवं प्रभूततमभेदसत्त्वे तेषामवश्यं वक्तव्यत्वे च तावतामप्यभिधानं युक्तमेव इत्यत आह—गडुभूतमिति। गडुः ग्रन्थिः ग्रहो वा। गडुरिव गडुः। चमत्कारानाधायकः इत्यर्थः।

## विस्तारिका

विभजते—पादतद्भागेत्यादि। पादः पद्यचतुर्थांशः। तद् यमकम्।

तत्र विकल्पे यमकमाह—प्रथमो द्वितीयादावित्यादि। प्रथमद्वितीयादिभिः पदैः पादाभिधानं प्रथमो द्वितीयादौ यम्यत इत्यन्वयः। समुच्चयेनाह—त्रिष्वपीति। सतेति। प्रथमपादस्य विकल्पेनावृत्तौ त्रीणि, द्वितीयस्य द्वे, तृतीयस्यैकम्, प्रथमस्य त्रिषु समुच्चयेऽप्येकमिति सप्तता। पादानां पादयमकानाम्। नवेति। पूर्वपूर्वपादयमनं व्युत्क्रम्य, न परस्य यमनमिति प्रथमद्वितीयतृतीयचतुर्थसंयमनेन भेदान्तरे। [अत्र ग्रन्थपातः]

## सारबोधिनी

तत्र विकल्पेन यमनमाह प्रथमो द्वितीयपादावित्यादि। प्रथमाद्वितीयादिभिः पादैः पादाभिधानं प्रथमो द्वितीयादौ नियम्यत इत्यन्वयः। समुच्चयेन यमनमाह त्रिष्वपीति। प्रथमेति। प्रथम पादस्य विकल्पेनावृत्तो त्रीणि, द्वितीयस्य द्वे, तृतीयस्य चैकं, प्रथमस्य त्रिषु समुच्चयेऽप्येवमिति सप्तता। पादानां पादयमकानां अर्धावृत्ति श्लोकवृत्तिभ्यामेकादशभेदता। अत्रेदं बोध्यम्। यमकं तावत् समस्तपादावृत्तिरूपं तद्भागावृत्तिरूपञ्चेति प्रथमं द्विधाभूय बहुप्रकारम्। तदेतदाह प्रथम इत्यादिना। तत्र पादावृत्तौ यत्र प्रथमपादो द्वितीयपादेन तुल्यरूपस्तदा मुखं नाम यमकम्। यदा तृतीयेन तदा संदंशः, यदा चतुर्थेन तदावृत्तिः एव यदा द्वितीयस्तृतीयेन तदा गर्भः, यदा चतुर्थेन तदा सन्दष्टकम्, तृतीयस्तु यदा चतुर्थेन तदा पुच्छम्, यदा तु प्रथमः सर्वत्र तदा पङ्क्तिरिति पादावृत्तिरूपाः शुद्धभेदाः। समेत्य तत्र मुखपुच्छयोः संयोगे युग्मकम्, गर्भावृत्त्योर्योगे परिवृत्तिरिति। तदेवं पादानां नवभेदत्वम् अर्द्धावृत्तिः समुद्गमकम्। श्लोकवृत्तिर्महायमकमिति पादद्वयमर्द्धपादचतुष्टयं श्लोक इत्यनयोः पादरूपता।

श्लोकावृत्तिप्रकारो भागावृत्तौ न संभवति, यतो व्यवधानेन द्विचतुरक्षरावृत्तौ न चमत्कार इति। त्रिखण्डे चरणस्य भागत्रये। चतुःखण्डे चरणभागचतुष्टये कृते प्रथमादिपादादिभाग इत्यादि पूर्वतनमत्र योज्यम्। अन्वर्थता अनुगतार्थतायोग इत्यर्थः। त्रिखण्डचतुःखण्डादिकं यमनमाह अन्तादिकमित्यादि। गडुर्ग्रन्थिः।

## काव्यप्रदीपः

तदेतद्विभजते—

**पादतद्भागवृत्ति तद्यात्यनेकताम्॥ ६॥**

प्रथमपादो यदि द्वितीये पादे यम्यते तदामुखं नाम यमकम्। तृतीये चेत्तदा संदंशः। चतुर्थे चेत्तदा आवृत्तिः। एवं द्वितीयपादश्चेतृतीये तदा गर्भः। चतुर्थे चेत्संदष्टकम्। तृतीयश्चेच्चतुर्थे तदा पुच्छम्। प्रथमस्त्रिषु चेत्तदा पङ्क्तिः। महायमकमिति केचित्। पादत्रययमकं तु न चमत्कारकारि अतो न प्रयुक्तम्। इत्येकैकपादावृत्तौ सप्त भेदाः। प्रथमो द्वितीये तृतीयश्चतुर्थ चेत्तदा युग्मकम्। इत्येकैकपादावृत्तौ सप्त भेदाः। प्रथमो द्वितीये तृतीयश्चतुर्थे चेत्तदा युग्मकम्। प्रथमश्चतुर्थे द्वितीयस्तृतीये चेत्तदा परिवृत्तिः। इत्यर्धाभ्यासमृते पादद्वयावृत्तौ द्वयमिति नव भेदाः। अर्धावृत्तिस्तु समुद्रः। श्लोकावृत्तिर्महायमकम्। तदुभयमपि पादावृत्तिविशेष एवेत्येकादश पादयमकभेदाः। पादभागवृत्ति बहुभेदम्। तथा हि—द्विधा विभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्व-द्वितीयादिपादेष्वाद्यभागेष्वेव यदि यम्यन्ते तदा पर्ववन्मुखादयो दश भेदाः। श्लोकान्तरे भागावृत्तिर्न स्वदत इति श्लोकावृत्तिस्थानीय एकादशो भेदो भागवृत्तौ नास्ति। एवं प्रथमादिपादानामन्त्यभागस्य द्वितीयादिपादान्त्यभागे-ष्वेव यमने पूर्ववद्दश भेदाः। एवं द्विखण्डीकृतेषु पादेषु विंशतिः, त्रिखण्डीकृतेषु त्रिंशत्, चतुःखण्डीकृतेषु चत्वा-

रिंशद्भेदाः स्थानापरविर्तिनो भवन्ति । अथ स्थान परिवर्तनभेदाः— प्रथमादिपादानामन्त्यादिभागा द्वितीयादिपादानामाद्यादिभागेषु यम्यन्त इत्याद्यन्वर्थतानुसारेणान्ताद्यादियमकादयः प्रभेदा भवन्ति तुल्यार्थेत्यर्थः । तथाहि— द्विखण्डे यथा प्रथमपादस्यान्त्यमर्धं द्वितीयपादस्याद्यार्धे चेद्यम्यते तदान्तादियमकम् । प्रथमभाग एव चेदन्त्यभागे तदाद्यन्तयमकम् । एवं प्रथमपादस्याद्यान्तभागौ द्वितीयस्यान्तादिभागयोर्यदि यम्येते तदाद्यन्तान्तादियमकयोः समुच्चयः । अत्र त्रिखण्डचतुःखण्डयोः पूर्वपादमध्यभाग उत्तरपादस्यादिभागे यदि यम्यते तदा मध्यादियकमम् । पूर्वस्यादिभागश्चेत्तदुत्तरपादस्य मध्यभागे तदादिमध्यममकम् । पूर्वस्य मध्यादिभागौ चेदुत्तरस्याद्यमध्ययोस्तदा मध्याद्यादिमध्ययोः समुच्चयः । एव प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत्तदान्त्यमध्यम् । पूर्वस्य मध्यभागश्चेदिद्वितीयस्यान्त्यभागे तदा मध्यान्तिकम् । पूर्वस्यान्त्यमध्यभागौ चेद्द्वितीयस्य मध्यान्त्यभागयोस्तदान्त्यमध्यमध्यान्तयोः समुच्चयः । यद्यपि पूर्वस्यादिभागं उत्तरस्यान्त्यभागे चेत्तदाद्यान्त्यकमन्त्यभागस्त्वाद्यभागे चेत्तदान्तादिकमित्यादि प्रकारद्वयं संभवति तथापि द्विखण्डान्तर्गतमेव तदिति पृथङ्ग गण्यते । सर्वेषां चैषामपरः समुच्चयः । इति भिन्नपादे यमने प्रभेदाः । एवं तस्मिन्नेव पादे आद्यादिभागाना मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्याः । सर्वे चैते नियतस्थानविवक्षया स्थानयमकभेदाः । अनियतेषु स्थानेष्वावृत्तेरिति अस्थानयमकभेदा अपि बहवो भवन्तीति प्रभूततममेदं यमकम् । तदेतत्काव्ये गडुभूतमिति नास्य लक्षणं कृतम् ।

## काव्यप्रकाशखण्डनम्

**पादतद्भागवृत्ति तद्यात्यनेकताम् ॥ (का० ८३, उ०)**

पादः चतुर्थांशः, तद्भागस्तदर्द्ध-तदर्द्धादिरूपः । क्रमेणोदा०—यथा—

**अचल एष विभर्ति निरन्तरं मृदुलतामहतीरसभावनम् ।**
**वहति चात्र वने युवतीगणो मृदुलतामहतीरसभावनम् ॥**

## आदर्शः

पादतद्भागेति । तद् यमकं पादवृत्ति तद्भागवृत्ति चेत्यतोऽनेकतां यातीत्यर्थः । तत्र पादावृत्त्या एकादशविधत्वं दर्शयति—प्रथम इति, पाद इति शेषः । द्वितीयादौ इति, आवर्त्तत इति शेषः । द्वितीये तृतीये चतुर्थे चेति त्रिविधम् । द्वितीयस्तृतीयादाविति । द्वितीयस्य प्रथमे आवृत्तिस्तु प्रथमस्य द्वितीये आवृत्तिरूपैवेति पूर्वत्रैविध्य एव तत्प्रवेशात्तदपहायैव द्वैविध्यमिदं दर्शितम् । एवमुत्तरत्रापि बोध्यम् । प्रथमस्त्रिष्वपीति—पादचतुष्टयं सममित्यर्थः । प्रथमो द्वितीये तृतीयश्चतुर्थ इत्येवं मिलितमेकम्, एवमुत्तरत्रापि मिलनं बोध्यम् । अर्द्धावृत्तिरिति । इदं प्रथमस्य तृतीये द्वितीयस्य चतुर्थे मिलनेनावृत्तिरूपम् । श्लोकावृत्तिस्तु पूर्वश्लोकीयपादचतुष्टयस्यैव परश्लोकीयपादचतुष्टये आवृत्तिरूपम् अत इदमपि पादावृत्तिरूपमेव । 'इत्यमेकादशधा पादावृत्तिमुक्त्वा भागावृत्तिमाह—द्विधेति । पादस्य द्विधा विभक्तत्वे एकपादीयादिभागानामन्यपादीयादिभागेष्वेकपादीयान्त्यभागानामन्यपादीयान्त्यभागेषु च एवं रीत्या यमने तद्द्वैगुण्येन द्वाविंशतिविधत्वप्रसक्तावाह—श्लोकान्तरे हीति । अत उक्तं—विंशतिरिति । एवं पादस्य त्रिखण्डादित्वे एवं रीत्या भागं प्रति दशवृद्ध्याऽनेकविधत्वमित्याह—त्रिखण्ड इत्यादि ।

एवं सजातीयाभागस्य सजातीयभागे आवृत्तिमुक्त्वा विजातीयभागानामपि दशधा आवृत्तिं तत्समुच्चयेन चाधिकामपि दर्शयति—प्रथमपादादीति। अन्वर्थतानुसारेणैव नामान्याह—अन्त्यादिकमिति। अन्त्यस्यादौ यमने अन्त्यादिकं दशविधम्। एवमाद्यस्य आद्ये यमने आद्यन्तिकमपि तावत्, तदुभयसत्त्वे तु तत्समुच्चयः। एवं मध्यादिकादावपि बोध्यम्। इत्थं भिन्नपादयमनमुक्त्वा एकस्मिन्नपि पादे एकभागस्यापरभागे यमनमाह—तथा तस्मिन्नेवेति। अनियमेनाप्येकदेशे यमनमाह—अनियते च स्थान इति। 'गडुः' विषमग्रन्थिः।

## सुधासागरः

तदेतद् विभजते—प्रथमो द्वितीयादावित्यादि।

अयमर्थः—प्रथमपादो यदि द्वितीयपादे यम्यते तदा मुखं नाम यमकम्। तृतीये चेत्तदा सन्दंशः। चतुर्थे चेत्तदा आवृत्तिः। एवं द्वितीयः पादश्चेत्तृतीये तदा गर्भः। चतुर्थे चेत्तद। सन्दष्टकम्। तृतीयश्चेच्चतुर्थेतदा पुच्छम्। प्रथमस्त्रिषु चेत्तदा पङ्क्तिर्महायमकमिति केचित्। पादत्रययमकन्तु न चमत्कारकारि, अतो न प्रयुक्तमित्येकैकपादावृत्तौ सप्त भेदाः। प्रथमो द्वितीये तृतीयश्चतुर्थे चेत्तदा युग्मकं नाम यमकम्। प्रथमश्चतुर्थे द्वितीयस्तृतीये चेत्तदा परिवृत्तिः। अर्धाभ्यासमृते पदद्वयवृत्तौ द्वयमिति नव भेदाः। आवृत्तिस्तु समुद्गः। श्लोकावृत्तिर्महायमकम्। तदुभयमपि पादावृत्तिविशेष एवेत्येकादश पादयमकभेदाः। पादभागवृत्ति बहुभेदम्। तथाहि द्विधा विभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्ववत् द्वितीयादिपादेष्वाद्यभागेष्वेव यदि यम्यन्ते तदा पूर्ववन्मुखादयो दश भेदाः श्लोकान्तरे भागावृत्तिर्न स्वदत इति श्लोकावृत्तिस्थानीय एकादशो भेदो भागावृत्तौ नास्ति। एवं प्रथमादिपादानामन्त्यभागस्य द्वितीयादिपादान्त्यभागेष्वेव यमने पूर्ववद् दशभेदाः। एवं द्विखण्डीकृतेषु विंशतिः। त्रिखण्डीकृतेषु त्रिंशतिः। चतुःखण्डीकृते चत्वारिंशद् भेदाः स्थानापरिवर्त्तिनो भवन्ति। अथ स्थानपरिवर्त्तनभेदाः। प्रथमादिपादानामन्त्यादिभागाः द्वितीयादिपादानामाद्यादिभागेषु यम्यन्ते इत्याद्यन्वर्थतानुसारेणान्ताद्यादियमकादयः प्रभेदा भवन्ति। तथा हि द्विखण्डे यथा—प्रथमपादस्यान्त्यमर्धं द्वितीयपादस्याद्यर्धे चेद् यम्यते तदान्तादिकं यमकम्, प्रथमभाग एव चेदन्त्यभागे तदाद्यन्तयमकम्। एवं प्रथमंपादस्याद्यन्तभागौ द्वितीयस्यान्तादिभागयोर्यदि यम्येते तदाद्यन्तान्तादियमकयोः समुच्चयः। अत्र त्रिखण्डचतुःखण्डयोः पूर्वपादमध्यभाग उत्तरपादस्यादिभागे यदि यम्यते तदा मध्यादियमकम्। पूर्वस्यादिभागश्चेदुत्तरपादस्य मध्यभागे तदाऽऽदिमध्ययमकम्। पूर्वस्य मध्यादिभागौ चेदुत्तरस्याद्यमध्ययोस्तदा मध्याद्यादिमध्ययोः समुच्चयः। एवं प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत् तदाऽन्त्यमध्यम्। पूर्वस्य मध्यभागश्चेद् द्वितीयस्यान्त्यभागे तदा मध्यान्तिकम्, पूर्वस्यान्त्यमध्यभागौ चेद् द्वितीयस्य मध्यान्तभागयोस्तदाऽन्त्यमध्यान्तयोः समुच्चयः। यद्यपि पूर्वस्यादिभागे उत्तरस्यान्त्यभागे चेत्तदाऽऽद्यन्तकम् अन्त्यभागस्त्वाद्यभागे चेत्तदान्तादिकमिति प्रकारद्वयं सम्भवति, तथापि द्विखण्डान्तर्गतमेव तदिति पृथङ् न गण्यते। सर्वेषां चैषामपरः समुच्चय इति भिन्नपादे यमने प्रभेदाः। एवं तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्याः। सर्वे चैते नियतभागस्थानविवक्षया भागस्थानयमकभेदाः, नियतेषु भागस्थानेष्वावृत्तेरिति। भागानपेक्ष्य नियतस्थानयमकभेदा अपि बहवो भवन्तीति प्रभूततमप्रभेदं यमकम्। तदेतत् काव्यान्तर्गडुभूतमिति नास्य भेदलक्षणं कृतमित्यर्थः। गडुग्रन्थिः। यथेक्षुदण्डग्रन्थिश्चर्वणेन रसनिःसरणे व्यवधायकस्तथा काव्येऽपि यमकं गूढार्थानुसन्धानविलम्बेनास्वादविच्छेदादिति भावः। गडुर्ग्रह इति प्रदीपकाराः। अजागलकुच इति क्वचित्। अत्र दिङ्मात्रामुदाह्रियते। तत्रैकपादाभ्यासेषु सन्दंशो यथा—सन्नारीति।

**सन्नारीभरणोमायमाराध्य विधुशेखरम्।**

**सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय॥ ३६०॥**

---

**सङ्केतः**

सन्नारीति। सतीः नारीः बिभर्ति पुष्णाति या उमा तां याति स तथा। सन्ना अरीणां इभा यत्र तथाविधः रणः यस्य सः। अमायः निर्दम्भः। आराध्येति। सदनक्रियापेक्षया पूर्वकालता। तत इति प्रथमान्तं तसन्तं वा। अत्र प्रथमः पादः तृतीये पादे यमितः।

**सङ्केतः (रुय्यकः)**

सन्नारीति—सती साध्वीर्नारीर्बिभर्ति पोषयति या उषा तां याति सम्बध्नाति यः, सन्ना अरीभा शत्रूणां गजा यत्र तथाभूतो रणो यस्य, तथा अमायो मायाशून्यः, ततः सार्वभौमो भवेति। विना अयं एन अपराधं नयतां स्वस्थानं (स्वस्थानां) प्रापयता, असु-खादिना प्राणभक्षकेन, विना विगतपुरुषः, यमेनान्तकेन, ऊनयता हानिं कुर्वता, सुखान्यत्ति भक्षयति यस्तेन। महाजन उत्तमलोकः। अदीयत अखण्ड्यत। मानसात् चितात्। अरं द्रुतम् महान् उत्सवान् अजन्ति क्षिपन्ति ये दुर्जनास्तान्नुदति यः, यतमानानामुद्युक्तानां सादमवसादं राति ददाति। यदिति दानक्रियाविशेषणम्। महाजनो यमेन नयता मानसादखण्ड्यतेति सम्बन्धः।

**बालचित्तानुरञ्जनी**

उक्तप्रकारेण भेदानामानन्त्येन उदाहरणाशक्तेः यथाशक्ति उदाह्रियत इत्याह दिगिति। प्रथमतृतीययो-रैक्ये यमकमुदाहरति सदिति। हे राजन्। सतीः नारीः बिभर्ति या उमा पार्वती तां पाति सम्बध्नाति यः तं पार्वतीविशिष्टमित्यर्थः। विधुश्चन्द्रः शेखरे यस्य तं आराध्य शक्ताः। अरीणामिभाः गजाः यस्मिन् तादृशे रणे यस्य अमायो दंभरहितः सन् ततः त्वं पृथिवीं जय।

**काव्यादर्शः**

तत्र प्रथमपादस्तृतीयेनावृत्तः, यथा 'सन्नारी'ति। 'सतीः साध्वीर्नारीर्बिभर्ति पोषयति या उमा तां याति संबध्नाति यः शिवः। तथा सन्ना अरीभाः शत्रुगजा यत्र यथाभूतो रणो यस्य। अमायो निर्दम्भः।' संदंशः। एवं शेषा अपि षड् भेदा उदाहार्याः।

**विवेकः**

सन्नारीति सतीः साध्वीर्नारीबिभर्ति पोषयति या उमा तां याति संबध्नाति यस्तं विधुशेखरमाराध्य सन्ना आरीभाः शत्रुगजा यत्र तथाभूतो रणो यस्य तथाऽमायो मायाशून्यस्ततः पृथिवीं जय सार्वभौमो भवेति। आवृत्ति-र्यथा—**कलङ्कमुक्तं तनुमध्यनामिका स्तनद्वयी च त्वदृते न हन्त्यतः। न याति भूतं गणने भवन्मुखे कलङ्कमुक्तं तनुमध्यनामिका॥** (का. आ. (३/५९)। कलमव्यक्तमधुरमुक्तं वचनम्। स्तनद्वयी च तनुमध्यस्य नामिकाऽतिगु-

प्तत्वात्। त्वामृते पुरुषं कं न हन्ति न वशीकरोति अपि तु सर्वमेव। अतो जितेन्द्रियेषु भवन्मुखे भवदादिके प्रथमगणनीये त्वयि सतीत्यर्थः। कलङ्कमुक्तं निर्दोषम्। भूतस्य बहुविषयत्वात्तनुमधि शरीरमधिकृत्य भूतमना-मिकाऽङ्गुलिर्न याति, परस्य त्वत्सदृशस्याभावात्। निर्दोषो हि लोक ऊर्ध्वयाऽङ्गुल्या निर्दिश्यते। गर्भो यथा (का. आ. ३/६०)—यशश्च ते दिक्षु रजश्च सैनिका वितन्वतेऽजोपम दंशितायुधाः। वितन्वतेजोऽपमदं शितायुधा द्विषाञ्च कुर्वन्ति कुलं तरस्विनः॥ अजः स्वयम्भूस्तत्सदृशेत्यामन्त्रणे। तव सैनिका दंशितायुधाः कवचितायुधा युधा संग्रामेण करणभूतेन यशो रजश्च वितन्वते। वितनु विशेषेण सूक्ष्ममतेजस्तेजोरहितमपगतमदं द्विषां च कुलं शितायुधास्तरस्विनः कुर्वन्ति। संदष्टकमं यथा—(का. आ. ३/६१) बिभर्ति भूमेर्वलयं भुजेन ते भुजङ्गमोऽमा स्मरतो मदञ्चितम्। शृणूक्त्वमेकं स्वयमेत्य भूधरं भुजङ्गमो मा स्मरतो मदञ्चितम्॥ ते तव भुजेन अमा सह भुजङ्गमः शेषाख्यो भूमेर्वलयं बिभर्ति। मत् मत्तः शास्त्रादिकं स्मरतः सकाशादुक्तमेकमञ्चितं पूजितं शृणु। किं तदित्याह स्वयमात्मीयं भूधरमवेत्य मदीयबलेन सेयं पृथिवी धार्यत इति मत्वा रतः सन् चितमुपचितं मदं मा स्म गमः। पुच्छो यथा—स्मरानलो मानविवर्धितो यः स निर्वृतिन्ते किमपाकरोति। समन्ततस्तामरसेक्षणे न समन्ततस्तामरसे क्षणेन॥ (का. आ. ३/६२)। अरसे नीरसे समन्ततः सर्वतः समं समकालं ततो विस्तीर्णः स्मराग्निर्मानविवर्धितस्ते यः स निर्वृतिं तत्क्षणेन किं नापकरोति अपि तु निर्वृतिमपाकरोत्येव। पंक्तिर्यथा—(का. आ. ३/७) समान या समाऽनया समानयासमानया। समानया स माऽनया समानयासमानया॥ हे समान वयस्य या स्त्री समा सदृशी प्राणसमा वा अनया नयरहिताऽविनयवतीति यावत्। यसनं यासः, समानौ यासमानौ यस्यास्तथाभूतया। समानया पूजासहितया स त्वं मा माम् अनया एतया समानय सङ्गमय असमानया अनुपमया। पादत्रयावृत्तिरूपन्तु यमकं नातिसुन्दरमिति महाकविभिरनादृतं प्राक्तनैरलङ्कारकारैरपि बहुभिरुपेक्षितमिति नेह वितन्यते।

## दीपिका

मुख्याख्यं यमकं युग्मकोदाहृत्योहतं भविष्यतीति सन्दंशमुदाहरति—सन्नारिति। एवमन्यत्रापि वृत्तकृ-दभिप्राय उन्नेयः। सतीर्नारी बिभर्ति या तामुमां याति गच्छति यं तं विधुशेखरमाराध्य पृथिवीं जय। सन्ना अवसादं गता अरीणामिभा यत्र तथाविधो रणो यस्येति विग्रहः। तृतीये पादेऽमायो मायाशून्यः।

## दर्पणः

सन्वारीति [सन्नारीति] एवमन्यत्रापि वृत्तिकृदभिप्राय उन्नेयः। सतीनां नारीणां, भरणं पोषणं, यथा यथाभूता स्व मां याति गच्छति. आयतेरायस्तं विधुशेखरं आबाध्य [आराध्य] पृथ्वीं जय। तृतीयपादे सन्ना अतसादं गता अरीणामिभाः यत्र तथाभूतो रणो यस्येति विग्रहः। अमायो मायारहितः।

## साहित्यचूडामणिः

तत्र प्रथमतृतीयपादयोर्यथा—सन्नारीति। सतीर्नारीः। बिभ्राणामुमां याति अयत इति वा सन्नारीभरणो-मायः तं विधुशेखरमाराध्य सन्नारीभरणः नष्टशत्रुगजसमर इति।

### सम्प्रदायप्रकाशिनी

दिङ्मात्रं चेति । यस्यापि वृत्तौ प्रस्तावः कृतस्तदपि साकल्येन नोदाह्रियत इति भावः ।

सन्नारीति । साध्वीं नारीं बिभर्ति पुष्णाति या उमा गौरी तां यातीति सन्नारीभरणोमायः तं विधुशेखरमाराध्य सन्ना व्यापादिताः अरीणांमिभरणा गजयुद्धानि येन स त्वम् अमायो मायारहितः पृथिवीं जय । अयं प्रथमपादस्य तृतीये गमनलक्षणः सन्दंशः । षडन्ये शुद्धाः पादावृत्तिभेदा द्रष्टव्याः ।

### मधुमती

अत्र किञ्चिदुदाहर्तुं प्रवृत्तः प्रथमं सन्दंशमुदाहरति—सन्नारीभरण इति । सतीः साध्वीः नारीः बिभर्ति रक्षति या उमा तां अयते यातीति सन्नारीभरणोमायः तं इति विधुशेखरविशेषणम् । सन्नाः अवसन्नाः नष्टाः अरीणां इमाः हस्तिनः यत्र, ईदृशः रणः यस्य इति, अमायः मायारहितः इति च द्वयं त्वं इत्यस्य विशेषणम् । यद्यपि दलयोः विभक्तिभेदात् वैषम्यम् । तथापि विभक्तेः अविवक्षित्वात् तद्विनाकृतसमुदायवृत्त्या यमकत्वमिति बोद्धव्यम् ।

### सारबोधिनी

सन्नारीति । विधुशेखरमाराध्य ततः आराधनतः पृथिवीं जयेत्यर्थः । सतीं नारीं बिभर्ति पुष्णातीति या उमा तमयते प्राप्नोति । सन्ना अवसन्ना । अरीणां इभा हस्तिनो यत्र तथाभूतो, विधुविशेखरमाराध्य, तत आराधनतः पृथिवीं जयेत्यन्वयः । सती नारी बिंभर्ति उमा तां पातीति रणो यस्येति युष्मदर्थ विशेषणम् । अमायमकैतवं यथा स्यात्तथा आराध्येति सम्बन्धः ।

### काव्यप्रदीपः

तूदाह्रियते । तत्रैकपादाभ्यासे संदंशो यथा—

**'सन्नारीभरणोमायमाराध्य विधुशेखरम् ।**
**सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥'**

### आदर्शः

सन्नारीति । त्वं विधुशेखरम् आराध्य आराधय । राधिरत्र पञ्चम्यन्तो दैवादिकः । ततोऽनन्तरं त्वं पृथिवीं जय । कीदृशं विधुशेखरम् ? सतीर्नारीर्बिभर्ति पालयतीति सन्नारीभरणा तादृशीमुमां याति पत्नीत्वेन प्राप्नोतीति यातेः क-प्रत्ययः तादृशम् । त्वं कीदृशः ? सन्ना अवसन्ना अरीणामिभा यस्मात्तादृशो रणो यस्य तादृशः । अमायो मायायुद्धरहितः, बलेनैव जयत्वात् । अत्र प्रथमपादस्य तृतीयपादे यमनम् ।

### सुधासागरः

सतीः नारीः बिभर्त्ति तादृशी या उमा तामयते प्राप्नोति यस्तं विधुशेखरं 'शिमाराध्य हे अमाय मायाशून्य निष्कपट ततस्तदाराधनात् त्वं सन्ना अवसन्ना अरीणामिभा यत्र तादृशो रणो यस्य तथाभूतः सन् पृथिवीं य सार्वभौमो भवेत्यर्थः ।

**विनायमेनो नयतासुखादिना विना यमेनोनयता सुखादिना।**

**महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम्॥ ३६१॥**

---

### सङ्केतः

विनेति। एनः अपराधं विना स्वस्थानं नयता प्रापयता असु-खादिना प्राणविनाशिना। विना विशिष्टपुरुषयुक्तेन यमेन ऊनयता हानिं कुर्वाणेन सुखादिना सुखभक्षकेण अयं महाजनः अदीयत अखण्ड्यत। अरं शीघ्रं मानसात् मानसमाक्रम्य। 'मानसादिति'ति पञ्चमी 'प्रासादात् प्रेक्षते' इतिवत् कर्मणि। महान्-उत्सवान् अजन्ति-क्षिपन्ति इति महाजाः खलाः, तान् नुदतीत्येवंशीलः। यतमानानां सोद्यमानां सादं खेदं राति इति, क्रियाविशेषणमिदम्। तथा यमेन मानसं आक्रम्य महाजनः अखण्ड्यत। यथा सोद्यमाः स्विद्यन्ते इत्यर्थः। अत्र प्रथमो द्वितीये, तृतीयश्चतुर्थे च पादे, पादो यमितः।

### बालचित्तानुरञ्जनी

प्रथमद्वितीययोः, तृतीयचतुर्थयोश्चैको यमकमुदाहरति विनेति। विःपक्षी गरुडसंज्ञकः तेन तत्सदृशेनेत्यर्थः। ऊनयता, ऊनं हीनं कुर्वता। असून् प्राणान् खादति भक्षयति। तेन एनः अपराधं विना स्वस्थानं अप्रापयता सुखानि अत्ति विनाशयति। तेन यमेन अयं योगे महान्तं अजं नुदति हिनस्ति महान् उत्सवान् अजन्ति लुम्पन्ति ये दुर्जनाः तान् नुदति क्षिपतीति वा महाजनोदी महाजनः उत्तमश्लोकः मानसात् चित्तात् अरं शीध्रं यतमानानां सादमवसादं राति ददाति। यथा तथा अदीयत। अखण्डायतन यमैन महाजनश्चलचित्तः कृत इत्यर्थः।

### काव्यादर्शः

प्रथमद्वितीययोस्तृतीयचतुर्थयोः पादयोरावृत्तौ, यथा 'विनाय'मिति। कश्चित् कंचिदाह। 'यमेन महाजनं नयता आत्मसमीपं प्रापयता ऊनयता ऊनं कुर्वताऽसुखादिना प्राणभक्षकेण सुखमत्तीति सुखादिना क्लेशदायकेनायं महाजनोऽदीयताखण्ड्यत। किंभूतो, विना सत्पुरुषः।' किमपराधेनेत्याह—'एनोऽपराधं विना, निरपराध इत्यर्थः। कीदृशो महाजनो, मानमहंकारं सादयति क्षिपति। अरं अत्यर्थम्। तथा महं उत्सवं अञ्जन्ति क्षिपन्ति ये दुर्जनास्तान् नुदति। यतमानानां मरणक्रियाव्यावृत्तानां सादम् अनध्यवसायं राति ददातीति खण्डनक्रियाविशेषणम्।' युगमकम्। एवं प्रथमचतुर्थयोर्द्वितीययोरावृत्तौ ज्ञेयम्।

अर्धावृत्तिः, यथा—

**सा रक्षतादपारा ते रसकृद् गौरबाधिका।**
**सारक्षतादपारातेरसकृद् गौरवाधिका॥**

सा देवी त्रायताम् अनन्ता तव रागकृद् अभिमतं वस्त्वित्यर्थः। वाग् उत्कृष्टतेः। अपगतविपक्षाद्। अविरतम्। गौरवेणाधिका

### विवेकः

युग्मकं यथा विनेति—विना अयम् एनः अपराधं नयता स्वस्थानं प्रापयता असुखादिना प्राणभक्षकेण विना विहगपुरुषः यमेनान्तकेन ऊनयता हानिं कुर्वता सुखादनिना सुखमत्ति भक्षयति यस्तेन महाजन उत्तमपुरुषः अदीयत अखण्डयत मानसात् चित्तात् अरं द्रुतम्। [महाजनोदी] महान् उत्सवान् अजन्ति क्षपयन्ति ये दुर्जनास्तान् नुदति यः, यतमानानामुद्युक्तानां सादमवसादं राति ददाति। यमेन नयता मानसादखण्ड्यतेति सम्बन्धः। परिवृत्ति-र्यथा (का. आ. ३/५६)—कलापिनां चारुतयोपयान्ति वृन्दानि लापोढघनागमनाम्। वृन्दानिलापोढघनागमानां कलापिनां चारुतयोऽपयान्ति॥ के पानीये लपनशीला हंसास्तेषां वृन्दानि चारुतयोपयान्ति सङ्गच्छन्ते, लापेन परस्परसंलापमात्रेणोढः प्राप्तो घनो निरन्तर आगम आगमनं येषां, वृन्दानिलो वात्या तेनापोढा निरस्ता घनानां आगमा यैस्तैषां कलापिनां मयूराणां च आरुतयः समन्ततः केका अपयन्ति अपगच्छन्ति समुद्गकं यथा—अनेकपा-दभ्रमदभ्रसालं मान्येदृशामभीरुपतत्तिकूटम्। अनेकपादभ्रमदभ्रसालं मान्ये दृशा भीरु पतत्तिकूटम्॥ (स. क. आ. १८७ पृ.) अनेकेषु पादेषु प्रत्यन्तपर्वतेषु भ्रमन्त्यभ्राणि मेघा एव सालो वरणः प्राकारो यत्र। मान्याः पूजार्हा ईदृशा यथा दृश्यन्ते तथैव मनोहारिणः अमीरवो भयरहिताः पतत्रिकूटाः पतत्रिसंघा यत्र। अनेकपा हस्तिनस्तेषामदभ्र उत्कटो यो मदस्तं भरन्ति धारयन्तीति मूलविभुजादित्वात् कः (पा ३/२/५)। अनेकपादभ्रमदभ्रा साला वृक्षा यत्र। मानः शृङ्गारभावस्तदर्हा मान्या। मान्ये भीर्विति सम्बोधनद्वयम्। दृशा [नयनेन] त्रिकूटं पर्वतम् आलोकयेति शेषः।

### दीपिका

युग्मकं यथा विनेति। एनोऽपराथं नयता स्वस्थानं गमयता विना विहगपुरुषो यमेन मानसाच्चित्तादरं द्रुतमदीयताखण्ड्यत। असुखादिना प्राणभक्षकेनोनयता हानिं कुर्वता सुखादिना सुखं भक्षयता च्छेदयता। महाजनो महात्मेति विनेत्यस्य विशेषणम्। महानुत्सवानजन्ति क्षिपन्ति ये दुर्जनास्तन्नोदनशीलः। यत्नवतां यतमानानां सादमवसादं एति ददातीति यथा 'अदीयत' क्रियाविशेषणम्।

### दर्पणः

युग्मकं यथा विनेति। प्रथमपादे—विना यमेन इति पदत्रयं [पदद्वयं ?] द्वितीयपादे विनेति विहगेनेति। पुरुष इति समस्तं पदम्। अयं विना विहगपुरुषः [विहगपुरुषेण] यमेन मानसाच्चित्तात् अरं शीघ्रं अदीयत अखण्डयत इति संबन्धः। एनोऽपराधं विना नयता स्वस्थानं गमयता अमुखादिना प्राणभक्षके सुखादिना ऊनयता मारणेन सुखादिहीनं कुर्वतेति यमस्य विशेषणत्रयम्। महन् उत्सवान् अञ्जन्ति क्षिपन्ति ये दुर्जनाः तन्वोदनशीलाः द्वितीयपादे महोजनो महान्वेति च विहगपुरुस्य विशेषणद्वयम्। यतमानानां यत्नवतां सादमवसादं वाभिददातीति यतमानसादरं यथा स्यादित्यदीयत इति क्रियाविशेषणम्।

### साहित्यचूडामणिः

प्रथमो द्वितीये तृतीयश्चतुर्थ इत्येतद् यथा— विनेति। मरणाद् बिभ्यतः कस्यचिदुक्तिः। अयमपराधं विना नयता मारयता असुखादिना प्राणानिन्द्रियाणि च खादितुं शीलवता। विनेति विशब्दो वैफल्ये, निष्फलो नाभवन् यमेन कृतान्तेन ऊनयता ऊनं कुर्वता सुखमानन्दमत्ति नाशयतीति सुखादित्वात् सुखादिना सम्मदं प्रमुखं जनयता

तेनायं महाजनः अदीयत अखण्ड्यत मानसात् चित्तद् अरं झटिति महताम् अजानां क्षेपाणामुपक्षेपाणां नोदी मरणव्यरिक्तदुरिक्तदुरितदुरिहारक्षमः। यतमानतया यत्नयोगितया सादरमास्थासहितं कृत्वेति।

### सम्प्रदायप्रकाशिनी

विनायमेव इति। विना ऋते। अयमसौ। एनः अपराधम्। नयता अपनयता। असुखादिना प्राणमक्षकेण। विन पुंविहगकल्पः यमेन अन्तकेन। ऊनयता ऊनं कुर्वता। सुखादिना सुखादलशीलेन। महाजनः सर्वएवायं लोकः। अदीयत अखण्ड्यत। मानसान्मनसः। अरं क्षिप्रम् महाजनोदी महानुत्सवान् अजन्ति भक्षयन्ति ये महाजाः खलाः तेषा नोदनशीलः। यतमानसादरं यतमानानां सादं राति ददाति यत् कर्मेति क्रिया विशेषणमिदम्। महाजनोदी अयं महाजनः एनो विना नयता असुरवादिना उनयता सुखादिना यतमानसादरं यथा भवति तथा अरं मानसाद् विनृकल्पोऽदीयत। इदं प्रथमतृतीययोः द्वितीयचतुर्थाभ्यां युग्मकम्। एवं परिवृत्तिर्ज्ञेया।

### मधुमती

युग्मकमुदाहरति— विनेति। एनः विना अयं महाजनः यमेन अरं शीघ्रं मानसात् अदीयत अखण्ड्यत। कीदृशेन यमेन? विना विहगतुल्येन, असु-खादिना प्राणभक्षकेण सुखादिना ऊनयता सुखहानिं कुर्वता, तथा नयता स्वस्थानं प्रापयता। यतमानानां उद्योगिनां सादं अवसादं रातीति यतमानसादरमिति क्रियाविशेषणम्। महाजनः कीदृशः? महाजनोदी महान्—उत्सवान् उत्साहान् वा अजन्ति—क्षिपन्ति ये दुर्जनाः तान् नुदतीत्यर्थः। यद्वा-महेषु-उत्सवेषु, अजनोदी-द्वागघातकः इत्यर्थः।

### विस्तारिका

श्रीवत्सलाञ्छनस्तु।

अयं महाजनो महापुरुषो यमेन मानसं चित्तम्, तदेव मानसं सरः, तस्मादरं शीध्रं यतमानानां रक्षितुं प्रयत्नवतां सादं खेदं राति यथा तथा, अदीयत प्राणवियुक्तस्तदिति भावः। कीदृशेन यमेन? विना पक्षिरूपेण तत्त्वातु नयता हानिं कुर्वता। अन्यद् रमातन्दटीप्पणीवन्नेयम्। नयतेत्यस्य स्वस्थानं प्रापयतेत्यर्थः। मानैषीदित्यन्वयः।

### सारबोधिनी

विनायमिति। अयं महाजनो महापुरुषो यमेन मानसं चित्तं तदेव मानसं सरः तस्मादरं शीघ्रम्। अदीयत अखण्डयत। मनः संयोगध्वंसो मरणम्। तत्कृतमिति पर्यवसितोऽर्थः। एनो विना अपराधादते नयता स्थानं प्रापयता, असुखादिना प्राणभक्षकेण। विना पक्षिणेति। ऊनयता हानिं कुर्वता, असुखादिना सुखभक्षकेन। महमुत्सवम् अतिक्षिपति। खलः तन्नोदयितुं शीलमस्येति। महाजनोदीयत मानानां रक्षितुं प्रयत्नवतां सादमवसादं राति ददाति। खण्डनक्रियाविशेषणम्।

### काव्यप्रदीपः

द्विपदाभ्यासे यमकं यथा—

'विना यमेनोनयतासुखादिना विनायमेनो नयता सुखादिना।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम्॥'

## आदर्शः

विनाऽयमिति। मृतं जटायुषं दृष्ट्वा रामं प्रति लक्षणस्येयमुक्तिः। अयं 'वि-ना' विपुरुषः पुंपक्षी जटायुः 'एनः' अपराधं विना 'यमेन' 'मानसात्' मनसः 'अरम्' अत्यर्थम् 'अदीयत' अखण्डयत अत्यन्तध्वस्तमनः संयोगः कृतः, अमार्यतेत्यर्थः। यमेन कीदृशेन? 'नयता' स्वपुरं प्रापयता। 'असुखादिना' प्राणघातनेन, 'सुखादिना' 'ऊनयता' हीनं कुर्वता, आदिना सुखकारणपरिग्रहः। इति पूर्वार्द्धार्थः। वि-ना कीदृशः? महाजनः तथा महाजनोदी—अज क्षेपणे, षुद प्रेरणे इत्याभ्यां महाक्षेपकक्षेपीत्यर्थः, महाप्रहर्त्तुरपि प्रहत्तेति यावत्। तन्नोदनक्रियाविशेषणमाह—यतमानेति। 'यतमानस्य' स्वरक्षापरहिंसाप्रयत्नवतः 'सादम्' अवसादं 'राति' ददाति तादृशनोदीत्यर्थः। अत्र प्रथमो द्वितीये तृतीयश्चतुर्थं आवृत्तः।

## सुधासागरः

द्विपादाभ्यासे युग्मकं यथा—विनेति।

एनो विना अपराधमन्तरेण सुखादिना ऊनयता विषयभोगमसहिष्णुना प्राणभक्षकेण। अत एव नयतां स्वस्थानं प्रापयतां यमेन कृतान्तेन महानुत्सवान् अजन्ति क्षिपन्ति महाजा ये दुर्जनास्तान्नोदितुं दूरीकर्त्तुं शीलमस्येति महाजनोदी, अत एव महाजनो महापुरुषः यं विना पक्षिपुरुषः हंसाख्यो जीव इति यावत्। मानसं चित्तमेव मानसं सरः तस्मादरं शीघ्रं यतमानानां रक्षितुमिच्छताम् सादमवसादं राति ददातीति यतमानसादरं यथा स्यात्तथा अदीयत अखण्डयत। केचित्तु। विना पक्षितुल्येनेति यमविशेषणतया व्याकुर्वन्ति। आत्ममनसोः संयोगध्वंसो मरणम्, तत्कृतमिति पर्यवसितोऽर्थः।

**स त्वारम्भरतोऽवश्यमबलं विततारवम्।**

**सर्वदा रणमानैषीदवानलसमस्थितः ॥ ३६२ ॥**

**सत्त्वारम्भरतोऽवश्यमवलम्बितारवम्।**

**सर्वदारणमानैषी दवानलसमस्थितः ॥ ३६३ ॥**

---

**सङ्केतः**

स त्वेति। सः प्रक्रान्तः महापुरुषः पुनः आरं शत्रुसमूहं, दुर्बलं दीर्घाक्रन्दं भरात् अवशे वर्तमानं सर्वकालं रणं प्रापयामास। अलसं अवान् अगच्छन्। शीघ्रगामी इत्यर्थः। अस्थीनि तस्यति विच्छिनत्तीति अस्थितः। सत्त्वेन ये आरम्भाः तेषु रतः, सर्वथा आश्रितं तरुत्वग्वसनं येन आरेण सर्वेषां यो दारणः मानः तं इच्छति। दवाग्निना समं स्थितं यस्य।

**सङ्केतः (रुय्यकः)**

सत्त्वारम्भेति (सम्बन्धतेति)। स तु महापुरुषः आरं शत्रूसमूहं भरतः भरात् अवश्यं वशेऽवर्त्तमानम्, अबलं बलरहितम् विततारवं दीर्घाक्रन्दं सर्वदा सर्वकालं रणं संग्राममानैषीत् प्रापयामास। अवान् (अगच्छन्) अलसम् अपि तु त्वरितं गच्छन् अस्थितः अस्थीनि तस्यति उपक्षिणोत्यस्थितः। तत्र "अत्वसन्तस्य चाधातो" रिति निषेधाद् दीर्घाभावः। सत्त्वेन ये आरम्भास्तत्र रतः अवश्यं सर्वथा (समलम्बित) अवलम्बितमाश्रितं तारवं तरुत्वग्वसनं येन तथाभूतं सर्वेषां दारुणो यो मानस्तमिच्छति, दवानलेन दावाग्निना समं स्थितं यस्य।

**बालचित्तानुरञ्जनी**

श्लोकावृत्तिमुदाहरति सत्वेति। सत्त्वप्रधानेषु आरम्भेषु कार्येषु रतः निरतः अवश्यं सर्वदा अबल गजतुरगादिशून्यं विततारवं विस्तृताक्रोशं यथा सर्वेषां दारणः विनाशकः यः गर्वः तमेषितुं शीलवान् दावानलेन समं सदृशं स्थितं स्थितिर्यस्या इत्येकः श्लोकः। अन्यस्तु स वर्णनीयो नेता तु अलसं आलस्यं विशिष्टं यथा तथा अवान् अगच्छन्। अस्थीनि स्यति खण्डयति। असन्तवेऽपि धातुत्वादुपधादीर्घभावः। एवंविधः सन् भरतः आरम्भात् सन्नाहात् अवश्यं अविधेयं सत् अलम्बितानि वस्त्रतया स्वीकृतानि रवाणि वल्कलानि येन तत् अरीणां समूहः आरं सर्वदा नित्यं रणं युद्धं अनैषीत् आनीतवानिति।

**काव्यादर्शः**

श्लोकावृत्तिः यथा—'स त्वे' ति। 'स तु पूर्वप्रक्रान्तो राजा शत्रुसमूहं भरात् वशेऽवर्तमानं बलरहितं दीर्घाक्रन्दं सर्वकालं संग्रामं प्रापयामास। अवान् अलसं, अपि तु त्वरितं गच्छन् अस्थीनि तस्यति उपक्षिणो

अस्थितः । 'अन्त्वसन्तेत्यधातोः' इति वर्जनाद् दीर्घाभावः । सत्त्वेन, न तु कुसृत्या, ये आरम्भास्तेषु रतः । अवश्यं निश्चितम् । अवलम्बितं आश्रितं तारवं तरुत्वग्वसनं येन् शत्रुसमूहेन । सर्वेषां दारणो ये मानस्तमिच्छति, अत एव दवाग्निना समं स्थितं यस्य' । शब्दश्लेषाच्चास्य महायमकस्य भेदः । शब्दश्लेषे हि एके नैव प्रयत्नेन वाक्यद्वय-मुच्चार्यते, इह तु द्वाभ्यां वर्णनीयवस्तुद्वयं च नास्तीति ।

### विवेकः

महायमकं यथा—स त्वारमिति । स तु महापुरुष आरं शत्रुसमूहं भरतः भरात् अवश्यं वशेऽवर्तमानम् अबलं बलरहितं वितताारवं दीर्घाक्रन्दं सर्वदा सर्वकालं रणं संग्राममनैषीत् प्रापयामास । अवान् अलसम् अस्थितः अपि तु त्वरितं गच्छन् । यद्वा अस्थितः अस्थिनी तस्यति उपक्षिणोतीत्यस्थितः, अत्र 'अत्वसन्तस्य चाधातो'रिति (पा. ६/४/१४) निषेधात् दीर्घत्वाभावः । सत्त्वेति—सत्त्वेन य आरम्भास्तद्रतः अवश्यं सर्वदाऽवलम्बितमाश्रितं तारवं तरुत्वग्वसनं येन तथाभूतं सर्वेषां दारणो यो मानस्तमिच्छति दवानलेन दवाग्निना समं स्थितं यस्येति । एवं पादावृत्त्यैव पादार्धादिमध्यादिवृत्तिः । त्रिप्रकाराणामपि महायमकं वर्जयित्वा व्यपेताव्यपेतत्वेनोदाहरणानि द्रष्ट-व्यानि ।

### दीपिका

महायमक यथा—सत्त्वेति । स तु महात्मा, आरमरिसमूहम्, भरतो भरादवश्यमनायत्तमबलं दुर्बलं वितताारवं दीर्घाक्रान्तं सर्वदा सर्वकालं रणं संग्राममनैषीत् प्रापयामास । अलसं कर्तव्यतामूढमवानवगच्छन् अपि तु त्वरितं गच्छन् । अस्थीनि तस्यति तक्ष्मणोतीत्यस्थितः "अत्वसन्तस्य चाधातोः सौ" इति निषेधाद्दीर्घाभावः । अवश्यं नियतं सत्त्वं बलं तस्यारम्भे रतः, अवलम्बितमाश्रितं त्नारवं तरुवनं येनेत्यारमित्यस्य विशेषणम् । सर्वेषां दारणो यो माश्चित्तोन्नतिस्तदेषणशीलो दवानलेन शत्रुभिर्दुःसहतया समं स्थितं स्थितिर्यस्य ।

### दर्पणः

महायमकं यथा—सत्वेति । सन्त महान्वा आरं अरेः समूहं, भवतो भावान् अवश्यमनायातु अबलं दुर्बलं वितताावरं दीर्घाक्रन्द्रं, सर्वदा रणं अनैषीत् प्रापयामास । आनसमावान [अनलसमावान्] अपि तु त्वरित गच्छन् अस्थीनि तस्यति [?] उत्क्षीणोतीत्यस्थितः । अन्धसंतस्यचाधातो [अत्वसन्तस्यचाघातो] साविति विशेषदीर्घः । नास्ति अवश्यं नियतं नियतं सत्वेनारभेवमः अवलम्बितमाश्रितं नावरं [तारवम्] तुरुवणं येन इत्यावविशेषणं सर्वेषा दारणो यो मानश्चिन्तोन्वतिः [?] तदेषणशीलः दाराननेन समं स्थितं स्थितिर्थस्य ।

### साहित्यचूडामणिः

श्लोकावृत्ति यथा—सत्त्वेति । सत्त्वप्रधानेष्वारम्भेषु कार्येषु निरतः अवश्यं सर्वथा अबलं गजतुरगादि-शून्यं वितताारवं विस्तृताक्रोशं सर्वेषां दारणो विनाशनो यो मानो गर्वः तमेषितुं शीलवान् दावानलसमः दावपाव-कसदृशः स्थितः स्थास्नुरित्येकः श्लोकः । अन्यस्तु—स त्विति वर्णनीयः आरम् अरीणां समूहं भरतः सन्नाहात् अवश्यम् अविधेयं सत् अवलम्बितानि वस्त्रतया स्वीकृतानि तारवाणि वल्कलानि येन तत् सर्वदा नित्यं रणं समरम्

आनैषीदानीतवान् अवान् अगच्छन् । वातिर्गतिकर्माअलसमित्यालस्यविशिष्टम् आगच्छन् । अस्थीनि तस्यतीत्य-स्थितः सबुन्तत्वेऽपि धातुत्वाद् दीर्घाभावः । सात्त्विकोद्योगनिरतः सर्वविनाशाहङ्कारकौतूहली दवाग्निसदृशः शीघ्र-गामी मर्मभेदी स वर्णनीयो नृपतिः अविधेयं फलशून्यं विकटाक्रन्दं परिगृहीतवल्कलमरिसमूहं सर्वकालंरणमानीतवान् । इति श्लोकद्वयार्थः ।

## सम्प्रदायप्रकाशिनी

अथ श्लोकावृत्तिः—सत्वारम्भेति । युगलकम् । स तु वर्ण्यमानो नायकस्तु आरं शत्रुसमूहं भरतः भारात् अवश्यमवशवर्तिनम् अबलं बलरहितं विततारवं दीर्घस्वनं सर्वदा अनिशं रणं युद्धम् आनैषीत् अगमयत् अवान् अगच्छन् अलसं सतन्द्रम् अस्थितः अस्थीनि तस्यतीति अस्थ्नां खण्डयितेत्येकदा श्लोकार्थः । अन्यदा च सत्त्वारम्भरतः सत्त्वगुणोपलक्षितेष्वारम्भेषु अनुरक्तः अवश्यं सर्वथा अलम्बिततारवं परिगृहीततरुविकारभूतव-त्कलं सर्वदारणमानैषी सर्वेषां दारणानां मानं मान्यतामिच्छन् सः दवानलसमस्थितः दावाग्निसदृश स्थितिकः । अलसमवान् अस्थितः अवश्यं सत्त्वारम्भरतः सर्वदारणमानैषी दवानलसमस्थितः स तु अवश्यम् अवलम्बिततार-रवम् आरं सर्वदा भरतो रणमानैषीत् । एवमर्धावृत्तिरुदाहर्तव्या ।

## मधुमती

अथ महायमकमुदाहरति—स त्वेति । स तु वर्ण्यमानः आरं अरिसमूहं भरतः भारात् अवश्यं अनायत्तं अबलं बलरहितं वितताखं विस्तृतसिंहनादं सर्वदा सर्वक्षणं रणं सङ्ग्रामं अनैपीत् प्रापयामास । कीदृशः ? अलसं अर्थात् युद्धपराङ्मुखं मन्दं यथातथा अवान् अगच्छन्, तथा अस्थितः अस्थीनि तस्यति उपक्षिपतीत्यर्थः । रौद्र इति यावत् । 'तसु उपक्षये' इति धात्वनुसारात् । अथावृत्तस्यायमर्थः—सत्त्वेन यः आरम्भः तत्र रतः, अवश्यं निश्चितं अवलम्बितं तारवं तरुत्वं येन तत् तथा । सर्वदारणाः यो मानः तं इच्छतीति—सर्वदारणमानैषी । तथा दवानलस-मस्थितः दावाग्नितुल्यः इति ।

## विस्तारिका

भरतोऽतिशयेन । अवश्यं निश्चयेन । आर विशेषयति—अलम्बिततारबमिति । अवलम्बितं तारवं तरूणां समूहो येन । पलाय्य वनं गतमित्यर्थः । पुनर्विशेषणं वा अवलम्बिततारवम् अवश्यं वश्यतापन्नं च । कथं भूतः, सर्वं दारयतीति सर्वदारणो यो मानस्तदैषी । सत्त्वगुणेन आरम्भे रतः तत्परः । अवान् अगच्छन्, अलसं यथा तथा अस्थितः, अस्यति क्षिपतीत्यस्थितः । अथ च दवाग्निना समस्तुल्यः स्थितः स्थिरः । घोषपरे सकारे विसर्जनी-यलोपः ।

## सारबोधिनी

सत्त्वेति—स तु प्रकृतो राजा, आरं अरिसमूहम् । सर्वदा सर्वकालम् । रणं समरमनैषीदित्यन्वयः । भरतो गौरवातिशयः । अवश्यं निश्चयेन आरं विशेषयति । अवलम्बेति । अवलम्बितमाश्रितम् । तारवं तरुसमूहो येन तथा अलसं यथा स्यात्तथा अवान् अगच्छन् । त्यतस्यति उत्क्षिपतीसुयस्थितः । "तउपक्षयउ" इति धात्वनुसारात् ।

धातुनिषेधादुपधादीर्घाभावः । पक्षे सत्त्वेन प्रथमगुणेन य आरम्भस्तत्र रतः सत्त्वगुणेनैव सर्वेषां क्रियामारभते । अवश्यं पश्यतामनापन्नं अबलं सैन्यशून्यं विततो विस्तृत आरवः शब्दो यस्य तं सर्वं दारयति यो मानस्तमिच्छुः दवानलेन दावाग्निना समस्तुल्यः स्थितः स्थिरः । अघोषपरे सकारे वा विसर्जनीयस्य लोपः । यद्वा समं स्थितं यस्यति समासः ।

## काव्यप्रदीपः

श्लोकाभ्यासे महायमकं यथा—

**'सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम् ।**
**सर्वदारणमानैषी दवानलसमस्थितः ॥**

**सत्वारं भरतोऽवश्यमबलं विततारवम् ।**
**सर्वदा रणमानैषीदवानलसमस्थितः ॥'**

## आदर्शः

श्लोकावृत्तिमुदाहरति—स त्वारम्भेति । प्रबन्धे राजान्तरवर्णनानन्तरं भरतवर्णनमिदम् । तथा च स त्विति तुशब्दः पूर्ववर्णितराजव्यवच्छेदे । स तु भरतो राजा 'आरम्' अरिसमूहम् 'अवश्यं' स्ववशतामनापन्नम् 'अबलं' स्वापेक्षया दुर्बलम् 'विततारवं' विस्तृतार्त्तरावं 'सर्वदा अरणं' त्यक्तरणञ्च यथा स्यात्तथा 'अवलम्बिततारवम्' आश्रिततरुत्वम् 'आनैषीत्' प्रापयामासेत्येतत्क्रियाविशेषणमबलादित्रयम् । तरुतलप्रेषणेन दुर्बलं कृतवान् इत्यर्थः । राजा कीदृशः ? 'अलसं' यथा स्यात्तथा 'अवान्' अगच्छन् सत्वरगामीत्यर्थः 'वा गतिगन्धनयोरि'त्यस्य, तथा 'अस्थितः' शत्रूणामस्थितक्षकः; ड-प्रत्ययान्तस्य तक्षणोते रूपमिदम् । भरतः कीदृशः ? अवश्यं नियतं सत्वारम्भे सात्विकक्रियारम्भे यज्ञादौ रतः न केवलं शत्रुमारणात्तामस इत्यर्थः । अत्र सत्वेति पृषोदरादित्वादेकत-कारलोपाद् यमकमक्षुण्णम् । तथा सर्वेषां दारणो हृदयविदारको यो मानः आधिक्येन पूज्यत्वं तदिच्छुः । दवानल-समानं स्थितं (स्थितिः) परदाहकत्वमर्यादा यस्य तादृशः ।

## सुधासागरः

श्लोकाभ्यासे महायमकं यथा—'स त्वे'-ति ।

अस्थीनि तस्यति क्षिपतीत्यस्थितः रौद्र इति यावत् । 'तसु उपक्षेपे' इति धात्वनुसारात् । स तु प्रकृतो राजा भरतो गौरवातिशयेन । भरत इति राज्ञो नामेति केचित् । अवश्यं निश्चयेन न गच्छतीत्यवान् अलसम् अवान् शीघ्रं गन्तेत्यर्थः । वा गतिगन्धनयोरिति धातुः । केचित्तु अलसमर्थाद् युद्धपराङ्मुखमवान् अगच्छन्नित्याहुः । तादृशः सन् अवलम्बोऽस्यास्तीत्यवलम्बि ससहायम् । अत एव ततारवं विस्तृतसिंहनादम् । केचित्तु अबलं सैन्यरहितमिति व्याचक्रुः । आरं अरिसमूहम् सर्वदा रणमानैषीत् सङ्ग्रामं प्रापयामासेत्यर्थः । अथावृत्तपदस्यार्थः—कीदृशो राजा सत्त्वेनारम्भः सात्त्विकं कर्म तत्र रतः सक्तः । कीदृशम्, आरम् अवश्यं वश्यतामनापन्नम्, अत एवावलम्बितमाश्रितं तारवं तरोर्भावोऽनम्रत्वं येन तथाभूतम् । पुनः कीदृशो राजा, रणे मानमिच्छतीति तादृशः, तथा दवानलेन दवाग्निना समस्तुल्यः स्थितः स्थिर इति ।

**आनन्तमहिमव्याप्तविश्वां वेधा न वेद याम्।**
**या च मातेव भजते प्रणते मानवे दयाम्॥ ३६४॥**

---

### सङ्केतः

अनन्तेति। अत्र द्विधा पादविभागे अन्तर्भागे अन्तर्भाग आवृत्तः। वेधाः यां न वेद न वेत्ति। या च नम्रे मानवे दयां कृपां भजते इति।

### सङ्केतः (रुय्यकः)

वेधाः प्रजापतिर्न (वेद) वेत्ति यां मानवे पुरुषे दयां कृपाम्। यस्यानतः प्रणतः अयस्य शुभावहस्य विधेर्दानात् नयस्य अत्ययं न गच्छत्ययं शिवमीहितं (मोहितं) यस्याः शिवे हरे हिताम् अनुकूलां स्मरेण कामेनामितामपरिच्छिन्नां (स्मरामि) ध्यायामि ताम्।

### बालचित्तानुरञ्जनी

अथ खण्डयमकेषु द्वितीयपादान्तभागस्य तुरीयपादान्तभागे यमकमुदाहरति अनन्तेति। वेधाः ब्रह्मा अनन्तेन महिम्ना व्याप्तं विश्वं यया तां न वेद। या च मातेव प्रणते नम्रे मनुष्ये दयां कृपां भजते कुरुते।

### काव्यादर्शः

द्विखण्डे पादेऽन्तभागावृत्तेः सप्तसु भेदेषु मध्याद् द्वितीयो भेदः, यथा—'अनन्ते'ति। 'वेधाः प्रजापतिः। न वेत्ति यां प्रणते पुरुषे दयां कृपाम्।' अन्त्यार्धसंदष्टकम्। एवमन्येऽपि भेदा उदाहार्याः।

### विवेकः

तत्र व्यपेतं संदष्टकं यथा अनन्तेत्यादि। अनन्तो विष्णुतस्य महिमा माहात्म्यं तेन व्याप्तम्, अनन्तैर्महिमभिर्व्याप्तं वा विश्वं ययेति वेधाः प्रजापतिः न वेद वेत्ति यां, स एव चेन्न जानाति तदाऽन्यस्य सम्भावनाऽपि नास्तीति। या च मातेव प्रणते प्रह्वे मानवे पुरुषे दयां कृपां भजते पोषयतीति।

### दीपिका

पादार्धवृत्तिप्रकारास्तु केचन पादावृत्त्युदाहृत्यैव गतार्थप्राया इति पादान्त्यार्धवृत्तिसन्दष्टकं वैशद्यार्थमुदाहरति—अनन्तेति। यां देवां वेधाः प्रजापतिर्न वेद तत्त्वतो न वेत्ति, या च प्रणते मानवे मातेव दयां भजते।

### दर्पणः

पादान्त्यार्द्धवृत्तिमुदाहरति अनन्तेति। यां देवीं, वेधा विधाता तन्वतो [मन्वतो] नवे दया त् प्रणत मानवे दयां कृपां कुरुते, आत्यन्तगमकव्यपेतं यथा पदानत [यदानत] इति। यस्यामानतः प्रणतः अयश्रुभावहविधेति

[अयं शुभावहविधेति] वि...वं रयाति [न याति] न गच्छति अयमेषः शिवं शुभं ईहितं चेष्टितं यस्याः शिवे भगवति हि तामनुकूलां स्मरेण कामेन अभितां [अमितां] अपरिच्छिन्नां स्मरामि तां देवीम्।

### साहित्यचूडामणिः

अथ पादखण्डयमकेषु द्वितीयपादान्तभागस्य तुरीयपादान्तभागे सारूप्यं यथा—अनन्तेति। यां वेधा न वेद अद्यापि ब्रह्मा न जानाति या च प्रणते मानवे मनुष्ये दयां कृपां कुरुते।

### सम्प्रदायप्रकाशिनी

अत्र भागावृत्तिनिबन्धनम्—अनन्तमहिमेति। वेधा न वेद यां यां ब्रह्मापि न वेद या च मानवे प्रणते दयां भजते। इदं द्वितीयचतुर्थयोः सन्दष्टकम्।

### मधुमती

पदार्थावृत्तिप्रकारेषु सन्दंशमुदाहरति—अनन्तेति। यां अनन्तमहिमव्याप्तजगतीं दुर्गां वेधाः अपि न वेद, या च प्रणते मानवे दयां भजते। अस्य—

**'तमांसि ध्वंसमायान्ति यस्याः स्तुत्यादरेण वः।**
**तस्याः सिद्ध्यै धियां मातुः कल्पन्तां पादरेणवः॥'**

इतितत्र्त्य पञ्चमश्लोकेनान्वयः।

### विस्तारिका

भागावृत्तिमुदाहरति—अनन्तेति। यां दुर्गां देवीं वेधा ब्रह्मा न वेद। या च प्रणते मानवे दयां वात्सल्यं भजते।

अत्र द्वितीयचतुर्थपादाभ्यां द्वयोर्यमनम्।

### सारबोधिनी

अनन्तेति। यां दुर्गां वेधा ब्रह्मा न वेद स्वरूपतो न जानाति। या च प्रणते मानवे दयां भजते। सन्दष्टकमिदम्।

### काव्यप्रदीपः

द्विखण्डेषु भिन्नपादे पादभागाभ्यासेषु द्वितीयपादान्त्यभागस्य चतुर्थपादान्त्यभागे यमने संदष्टं यथा—

**'अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम्।**
**या च मातेव भजते प्रणते मानवे दयाम्॥'**

## आदर्शः

भागावृत्तिमुदाहरति—अनन्तेति यदानत इति च। युग्मकमिदम्। ताम् अर्थाद् दुर्गां स्मरामि, यां वेधा अपि न वेद न जानाति, यतोऽनन्तमहिमव्याप्तविश्वां या च प्रणते मानवे मातेव दयां भजते।

## सुधासागरः

द्विखण्डेषु भिन्नपादे पादभागभ्यासेषु द्वितीयपादान्तभागस्य चतुर्थपादान्तभागे यमने सन्दष्टं यथा—'अनन्ते'ति। अनन्तमहिम्ना व्याप्तं विश्वं यया तादृशीं यां दुर्गां वेधा न वेद ब्रह्माऽपि स्वरूपतो न जानाति, या च प्रणते मानवे दयां भजतेऽनुकम्पां करोतीत्यर्थः।

**यदानतोऽयदानतो न यात्ययं न यात्ययम्।**
**शिवेहितां शिवे हितां स्मरामितां स्मरामि ताम्॥ ३६५॥**

---

### सङ्केतः

यदानत इति। यस्याः आनतः प्रणतः अयस्य शुभावहस्य दैवस्य दानतः दानात् न्यायातिक्रमं न गच्छत्यसौ शिवं ईहितं यस्याः तां, शिवे हरे हितां अनुकूलां बराभिलाषां स्मरेण अमितां ध्यायामि ताम्। अत्र पादमध्य एव आद्यन्तकम्।

### बालचित्तानुरञ्जनी

अथ सर्वपादेषु भागानामन्त्यभागेषु यमकमुदाहरति यदानत इति। यस्यै आनतः प्रणतः अयं श्लोकः अपस्य शुभावहस्य विधे अमितः वितरणात् नयात्ययं नीतिव्याख्या तां न याति न प्राप्नोति। शिवं ईहितं यस्याः सा शिवे हरे हितां अनुकूलां स्मरामि। ता स्मरेण कामेन अमितां अपरिच्छिन्नां अलौकिकशृङ्गारामित्यर्थः। तां गौरीं स्मरामि चिन्तयामि।

### काव्यादर्शः

तत्रैव पादेऽन्तभागेन सह चतुष्पदावृत्तौ पादसमुद्गकाख्यं, यथा—'यदानत' इति। 'यस्या आनतः प्रणतः। अयस्य शुभावहस्य दैवस्य दानतो नयस्य पाड्गुण्यस्यात्ययं न गच्छत्ययम्। शिवम् ईहितं यस्याः। शिवे हरेऽनुकूलां स्मरेण कामेनामितां अपरिच्छिन्नां ध्यायामि ताम्।

### विवेकः

आद्यन्तयमकं व्यपेतं यथा—यदानत इति यस्या आनतः प्राणतः अयस्य शुभावहस्य विधेर्दानान्नयस्य अत्ययं न याति गच्छत्ययं पुरुषः। शिवमीहितं यस्याः शिवे हरे हितामनुकूलां स्मरेण कामेन अमितामविच्छिन्नाम्।

### दीपिका

आद्यान्तं यमकमप्येवं यथा यदानत इति। यस्यामानतः प्रणतोऽयस्य शुभावहविधेर्दानाद् न यात्ययं नीतिविप्लवं न याति न गच्छत्ययं लोकः शिवमीहितं यस्यास्तां शिवे भगवति हितामनुकूलां स्मरेण कामेनामिता-मपरिच्छिन्नां स्मरामि चिन्तयामि। अन्तादिमुक्तम्।

### साहित्यचूडामणिः

अथ सर्वपादेष्वादिभागान्त्यभागेषु यमकं यथा— पदानत इति। यस्यै प्रणतः अयः शुभावहो विधिः तस्य वितरणात् नयात्ययं नीतिव्यत्यासं न याति न प्राप्नोति अयं पुमान् शिवेहितां कल्याणचेष्टां शिवे परमेश्वरेऽनुकूलां स्मारामिताम् अमितस्माराम् अलौकिकशृङ्गारां, स्मरामि चिन्तयामि तां देवीम्।

### सम्प्रदायप्रकाशिनी

यदानत इति। यदानतः यस्यै प्रणतः अयदानतः शुभावहविधिदानात् नयात्ययं विनयात्ययं न याति न गच्छति अयमसौ। शिवेहितां कल्याणसमीहितां शिवे शङ्करे हिताम् आप्तां स्मरामितां कामेनापरिच्छिन्नां स्मरामि अनुचिन्तयामि तां गौरीम्। अयमर्धावृत्तिस्थानीयो दशमो भागवृत्तिभेदः समुद्गकाख्यः।

### मधुमती

आद्यन्तकयमकं अव्यपेतं यथा—यदानत इति। यस्या आनतः यदानतः। अय-दानतः शुभावहविधिदा-नतः, नयात्ययं नीतिनाशम्, नः याति, शिवे कल्याणे हितां शिवेहितां शिवं—शोभनं ईहितं = चेष्टा यस्या ताम्, शिवेन ईहितां वा, स्मरामितां मन्मथपूर्णाम्। तां स्मरामि इत्यर्थः।

### विस्तारिका

एकत्रैव पादे यमनमाह—यदानत इति। यस्यां पार्वत्यामानतो नयस्य नीतेरत्ययं नाशं न याति, तां स्मरामि। अयः शुभावहो विधिस्तस्य दानात्। नीत्यविनाशे हेतुरयम्। शिवेन शङ्करेण ईहितामन्विताम्, पक्षे शिवे कल्याणे हिताम्। स्मरेण कामेनामितां शिवनिमित्तमपरिच्छिन्नस्मरभावाम्।

### सारबोधिनी

यदानत इति। यस्यां दुर्गायां मानतोऽयं जनो न यस्य नीतेरत्यय विनाशं न याति। तां स्मरामि। अयं शुभावहो विधिस्तस्य दानात्। नित्यविनाशे हेतुरयं शिवेन शङ्करेण ईहितां अर्थिताम्, पक्षे शिवे कल्याणे हितां शिवदात्री स्मरेण कामेन मिताम्। आद्यन्तयमकमिदम्।

### काव्यप्रदीपः

अस्मिन्नेवाद्यन्तकं पादे यथा—

> 'यदानतोऽयदानतो न यात्ययं नयात्ययम्।
> शिवे हितां शिवेहितां स्मरामि तां स्मरामिताम्॥'

### काव्यप्रकाशखण्डनम्

यथा—

> यदानतोऽयदानतो नयात्ययं न यात्ययम्।
> शिवेहितां शिवे हितां स्मरामितां स्मरामि ताम्॥

### आदर्शः

तथा यदानतो यस्यामानतोऽयं तां कीदृशीं स्मरेणामितां प्राप्तां 'अम भ्रमे' त्यागेर्गत्यर्थस्य रूपमिदम्। अत एव शिवे महेशे ईहितं कामचेष्टा यस्यास्तादृशीम्। तथा अस्माकं शिवे कल्याणे हितामनुकूलाम्।

अत्राऽऽद्यश्लोके द्वितीयपादान्त्यभागस्य चतुर्थपादान्त्यभागे आवृत्तिः परश्लोके तु तत्र तत्रैव पादे पादे आद्यन्तिकम्।

## सुधासागरः

एकस्मिन्नेवाद्यन्त्यकं पादे यथा—'यदानतोऽये'-ति। यस्यां भगवत्यामानतोऽयं जनः अयस्य दानतः तयैव पार्वत्या शुभावहविधेर्दानात् नयात्ययं न याति नीतेर्विनाशं नाधिगच्छति। शिवेन शङ्करेण ईहिताम् अर्थितां शिवे कल्याणे हितां शुभदाम्। स्मरेण कामेन अमिताम् अपरिच्छिन्नस्मरभावान्तां परमेश्वरीं स्मरामीत्यर्थः।

**सरस्वति प्रसादं मे स्थितिं चित्तसरस्वति।**
**सरस्वति कुरु क्षेत्रकुरुक्षेत्र सरस्वति॥ ३६६ ॥**

---

### सङ्केतः

सरस्वतीति। हे वाणि ! चित्ताब्धौ स्थिते ! मे प्रसादं सर गच्छ, स्थितिं स्वति सुष्ठु अतिशयेन कुरु। क्षेत्रमेव कुरुक्षेत्रं तत्र सरस्वति नदीरूपिणि ! इति सम्बोधनमेतत्। अत्र पूर्वार्धे आद्यन्तकम्। उत्तरार्धे तु आद्यन्त-कान्तादिकसमुच्चयः।

### सङ्केतः (रुय्यकः)

सरस्वती वागीश्वरी चित्तसमुद्रे स्थितिं मयि प्रसादं सर गच्छ सुष्ठ्वतिशयेन च कुरु क्षेत्रं शरीरमेव कुरुक्षेत्रं तत्र सरस्वत्याख्ये नदि।

### बालचित्तानुरञ्जनी

अथ सवर्णभेदमुदाहरति सरस्वतीति हे सरस्वति। क्षेत्रं शरीरं तदेव कुरुक्षेत्रं तस्य सरस्वति नदीविशे-षभूते मे चित्तमेव सरस्वान् समुद्रः। तत्र स्थितां "सरस्वती सरिद्भेदे भूवाग्देवतायोरपि। स्त्रीरत्ने चापगायाञ्चे" त्यभिधानात्। हे सरस्वति स्त्रीरत्नभूते इत्यर्थः। अस्मिन् पक्षे स्थितिं कुरु प्रसादं कुर्वित्यर्थः। अत्र प्रथमतृतीययो-रादिभाग तृतीयचतुर्थयोर्यम्यत इति साङ्कर्यम्।

### काव्यादर्शः

तृतीयं समस्ताख्यमाद्यन्तकं, यथा—'सरस्वती'ति। वागीश्वरि चित्तसमुद्रे स्थिते मयि सर गच्छ प्रसादं मे कुरु। सुष्ठु अतिशयेन च। शरीरमेव कुरु क्षेत्रम्।' तत्र सरस्वत्याख्ये नदि। अत्रैव 'कुरुक्षेत्रे' ति तृतीयपाद-स्यान्त्यार्धं तुर्यपादाद्यर्धेन यम्यते इति द्वितीयं व्यस्ताख्यमन्तादिकम्।

### विवेकः

अव्यपेतं यथा—सरस्वतीत्यादि—हे सरस्वति वागीश्वरि प्रसादं प्रीतिं सर गच्छ। सु सुष्ठु [अति] अतिशयेन च। तथा मे मम चित्तसरस्वति मनः समुद्रे स्थितिं पदं कुरु। क्षेत्रं शरीरमेव कुरुक्षेत्रं तत्र सरस्वत्याख्ये नदीशरीरे। नित्यावस्थानात् सरस्वतीनदीसादृश्येनामन्त्रणम्।

### दर्पणः

अन्तादिकयुक्तमात्यन्तव्यपेतं यथा—सरस्वतीति। सरस्वती वागीश्वरीति संबोधनपदम्। तृतीयपाद-गतं सरस्वतीतिपदं मुनि[?] सुतरामतिशयेन प्रसाद प्रसन्नातां [कुरु] यच्छ। मे मम चित्तसरस्वति चित्तसमुद्रे

स्थितिं कुरुक्षेत्रं शरीरमेव कुरुक्षेत्रं देशविशेषः। तत्र सरस्वती नदीविशेषरूपे युगके [युग्मके] रीत्या [?] पादार्द्धपरिवृत्ता।

### साहित्यचूडामणिः

अथ सङ्कीर्णभेदो यथा—सरस्वतीति ! सरस्वति ! वाग्वादिनि ! चित्तसरस्वति हृदयसमुद्रे स्थिते। क्षेत्रं शरीरं तदेव कुरुक्षेत्रं समन्तपञ्चकप्रदेशः तस्य सरस्वति ! नदीविशेषभूते ! मे प्रसादं कुरु। ततश्च सर प्रसर स्वति अधिकतरम्। उत्कर्षार्थम् उपसर्गद्वयप्रयोगः।

### सम्प्रदायप्रकाशिनी

अथ भागावृत्तिषु सङ्कीर्णाः। सरस्वति। वागीश्वरि चित्तसरस्वति हृत्समुद्रे स्थिते, मम प्रसादं कुरु। सर उपगच्छ। कथं, सु सुष्ठु अति अतिशयेन च। क्षेत्रकुरुक्षेत्रसरस्वति शरीररूपे कुरुक्षेत्रे सरस्वत्याख्यसरिद्भूते।

### मधुमती

व्यपेतमुदाहरति—सरस्वतीति। हे सरस्वति मम चित्तसरस्वति चित्तसमुद्रे स्थितिं कुरु। प्रसादं सु अति सर गच्छ। कथंभूते ! क्षेत्रकुरुक्षेत्रसरस्वति ! क्षेत्रं—इदं शरीरमेव कुरुक्षेत्रं, तत्र सरस्वतीनदीरूपे !। अत्र च समुद्रत्वेन रूपिते चित्ते नदीसम्बन्धस्य युक्तत्वमिति भावः।

### विस्तारिका

सरस्वतीति। हे सरस्वति ! वाग्देवि ! प्रसादं स्वस्ति, सर सुष्ठु अतिशयेन गच्छ। मे चित्तसरस्वति चित्तसमुद्रे स्थितिं कुरु। हे क्षेत्र ! कुरुक्षेत्रसरस्वति, क्षेत्रं शरीरमेव कुरुक्षेत्रं देशविशेषस्तत्र सरस्वति सरस्वत्या-ख्यनदीरूपे।

### सारबोधिनी

सरस्वतीति। हे सरस्वति ! वाग्देवि ! प्रसादं स्वति सर। सुष्ठु अतिशयेन सर गच्छ। मे मम चित्तसरस्वति चित्तसमुद्रे स्थितिं कुरु। क्षेत्रं शरीरं तदेव कुरुक्षेत्रम्। तत्र सरस्वती नदी विशेषः।

### काव्यप्रदीपः

प्रथमपादाद्यभागस्य द्वितीयादिपादानामन्त्याद्यभागेषु यमने पूर्वार्धे आद्यन्तकमुत्तरार्धे आद्यन्तान्ताद्ययोः समुच्चयो यथा—

**'सरस्वति प्रसादं मे स्थितिं चित्तसरस्वति।**
**सरस्वति कुरु क्षेत्र कुरुक्षेत्रसरस्वति॥'**

### काव्यप्रकाशखण्डनम्

तारतारतरैरेतैरुत्तरोत्तरतो रुतैः ।
रतार्त्ता तित्तिरी रौति तीरे तीरे तरौ तरौ ॥

एवं अर्द्धावृत्ति-श्लोकावृत्तिभेदा द्रष्टव्याः ।

### आदर्शः

सरस्वतीति । अत्र परार्द्धस्थं सरस्वतीति सम्बोधनम् । हे सरस्वति स्वतिप्रसादं शोभनमतिप्रसादं मे मह्यं सर गच्छ । 'स्वत्यतीव च पूजने' इति कोषः । तथा हे क्षेत्रकुरुक्षेत्रसरस्वति मच्छरीरात्मककुरुक्षेत्रस्थसरस्वतीनाम-नदि, मम चित्तसरस्वति चित्तसागरे स्थितिं कुरु नद्याः सागरस्थित्यौचित्यात् । 'सरस्वान् सागरोऽर्णवः' इत्यमरः । अत्राद्यान्तिकयोरन्त्यादिकयोश्च समुच्चयः ।

### सुधासागरः

प्रथमपादाद्यभागस्य द्वितीयादिपादानामन्ताद्यभागेषु यमने पूर्वार्धे आद्यन्तिकम्, उत्तरार्धे आद्यन्तान्ताद्ययोः समुच्चयो यथा—सरस्वतीति ।

हे सरस्वति वाग्देवि प्रसादं स्वति सष्ठु अतिशयेन सर गच्छ हे क्षेत्र कुरुक्षेत्रसरस्वति क्षेत्रं शरीरं तदेव कुरुक्षेत्रं तत्र सरस्वति नदी तद्रूपे मे मम चित्तसरस्वति चित्तसमुद्रे स्थितिं कुरु । नद्याः समुद्राऽवस्थानमुचितमिति भावः ।

**ससार साकं दर्पेण कन्दर्पेण ससारसा।**
**शरन्नवाना बिभ्राणा नाबिभ्राणा शरन्नवा॥ ३६७॥**

---

### सङ्केतः

सकलश्लोके आद्यन्तकान्तादिकयोगे यथा—ससारेति। ससार प्रवृत्ता सार्धं दर्पेण कामेन च सारसैर्युक्ता काशं नूतनशकटा धारयन्ती न विद्यते, न वीनां भ्राणः शब्दः यत्रासौ = अबिभ्राणा = नाविभ्राणा, अपि तु पक्षिध्वनियुक्ता शरत् ऋतुविशेषः नवा प्रकृष्टा।

### सङ्केतः (रुय्यकः)

ससार जगाम साकं दर्पेण (कन्दर्पेण) कामेन च ससारसा लक्ष्मणाख्य (लक्ष्यणाख्य ?) पक्षियुक्ता शरं काण्डं नवानि अनांसि शकटानि यस्यां बिभ्राणा धारयन्ती वीनां भ्राणः शब्दो विद्यते यस्यां तथाभूता न। अपि तु पक्षिशब्दयुक्ता शरत् ऋतुविशेषः नवा नूतना।

### बालचित्तानुरञ्जनी

अथार्थद्वयेऽपि प्रथमादिभागे द्वितीयान्तभागे द्वितीयप्रथमान्तभागे द्वितीयादिभागे च यम्यत इत्येतदुदाहरति ससारेति। सारसैः पक्षिविशेषैः सह वर्तत इति सारसा। शरं काशं बिभ्राणा नव कर्द्दमाभावान्नूतन अनः शकट यस्यां सा, वीनां पक्षिणां भ्राण शब्दः स न विद्यते यत्र सा अविभ्राणा सा न भवतीति। नाविभ्राणा नवा नतना शरद् ऋतुः दर्पेण साकं संसार आजगाम।

### काव्यादर्शः

समस्तान्तादिकसमस्ताद्यन्तकयोर्योगेऽर्धपरिवृत्तिः, यथा—'ससारे' ति। 'ससार प्रववृते सार्धं दर्पेण कामेन च ससारसा लक्ष्मणाख्यपक्षियुक्ता। शरं काण्डम्। नवानि अनांसि शकटानि यस्याम्। बिभ्राणा धारयन्ती। वीनां भ्राणः शब्दो विद्यते यस्याम्। तथाभूता न, अपि तु पक्षिशब्दयुक्ता शरद् ऋतुः। नवा नूतना'। एवं मध्यादिकादिमध्यान्तमध्यमध्यान्तकतत्समुच्चया उदाहार्याः।

त्रिखण्डे तत्रैव पादे आदिमध्यं, यथा—

**स रणे सरणेन नृपो बलिताबलितारिजनः।**
**पदमापदमात् समतेरुचितं रुचितं च निजम्॥**

स संग्रामे प्रयाणेन हेतुना बलवत्त्वेन वेष्टितारिजनः। पदं राज्यलक्षणम्। उपशमाद् हेतोः। अनुरूपं अभीष्टं च।

आद्यन्तं, यथा—

**घनाघ नायं न नभा घनाघनानुदारयन्नेति मनोऽनु दारयन्।**
**सखेऽदयं तामविलास खेदयन्नहीयसे गोरथवा न हीयसे ।।**

एतत् पथिकस्य प्रावृषि सुहृदाह । बहुपाप, श्रावणो मासो वार्षुकमेघान् विस्तारयन् न नायमेति । मनोऽर्थाद् विरहिणां पश्चात् स्फोटयन् निर्दयं तां कान्तां निर्लील उद्वेजयन् सर्पवद् आचरसि । यद्वा, कियत् तव एतद् बलीवर्दाद् न्यूनो न भवसि ।

मध्यान्तं, यथा—

**असतामहितो महितो युधि सारतया रतया।**
**स तयोरुरुचे रुरुचे परमेभ्वते भवते ।।**

'अननुकूलोऽत एव पूजित उत्कृष्टतया बलवत्तया तदेकसत्कया । कश्चिद् वीरः प्रसिद्धया विस्तीर्णकान्तये प्रीतिमुत्पादितवान् । प्रकृष्टगजयुक्ताय । तुल्यम् ।

### विवेकः

समस्तान्तादियोगादर्धपरिवृत्तिर्यथा ससारेत्यादि—ससार प्रसृता साकं सार्धं दर्पेण कन्दर्पेण कामेन च ससारसा सह सारसैः पक्षिविशेषैर्वर्तते या सा । शरं काण्डं बिभ्राणा धारयन्ती, नवानि अनांसि शकटानि यस्यां सा नवानाः । नाविभ्राण वीणां भ्राणः शब्दः स्रोऽविद्यमानो यस्यां, न तथाभूता, अपि तु पक्षिशब्द युक्ता । शरत् ऋतु विशेषः नवा नूतना ।

### दीपिका

आद्यन्तिकं व्यपेतं यथा ससार जगाम साकं सह दर्पेण सारसैः पक्षिभिर्युक्ता शरं काण्डं बिभ्राणा पुष्टिं पाकलक्षणां नयन्ती । नवाना नवान्यनांसि शकटानि यस्याः । शरद् नवा नूतना । न विद्यते वीणां पक्षिणां भ्राणः शब्दो यत्र तथाभूता ।

### दर्पणः

वात्यन्तदिकसमुच्चये [अन्त्यादिकसमुच्चये] यथा—ससारसेति । नवा नूतना शरत् दर्पेण दर्पविशिष्टेन कन्दर्पेण साकं ससार संसार सारसैः पक्षिभि; सहिता शरं काण्डं बिभ्राणा दधती नवालि अनांसि शकदानि [?] यस्यां वीनां पक्षिणां भ्राणे षमणेत [भ्रमणे] अतस्तु वस्वधामहित स्वराजनीरागमनांद्‌भवांश्च [?] वर्षाश्च । स्वरुचितरवाहनवाहवपुष [?] स्त च हरेश्चोपमा घटत इत्यादौ शब्दयोर्घटपटयोर्विनैकप्रयत्वेन निरस्यन्तो नोंपपद्यते तयोरेकारत्वेन तथांगीकारे एक एव कुलालः एकावगवं [एकवारं] घटपटमेकया सामग्रया निष्पादयेत् । नन्वेवं तथासति भेदव्यवहारोच्छेदप्रसङ्गात् ।

## साहित्यचूडामणिः

अर्धद्वयोऽपि प्रथमादिभागो द्वितीयान्तभागे, प्रथमान्तभागो द्वितीयादिभागो यम्यते । यथा—ससारेति । (ससार) प्रससार । शरद् ऋतुविशेषः । दर्पेण मानेन, कन्दर्पेण मन्मथेन च साकं समम् । ससारसा सारसाख्यविहङ्गमसहिता । नवानाः नवं कर्दमशान्त्या नूतनं शकटं यस्याम् । शरं काशं बिभ्राणा धारयन्ती । वयसः पक्षिणस्तेषां भ्राणः शब्दः स न विद्यते यस्याम् इत्यबिभ्राणा तादृशी न भवति । पुनर्निषेधो विधौ विश्राम्यति । नवेति ससार वा नवा इति सन्देहः ।

## सम्प्रदायप्रकाशिनी

ससारेति । ससार जगाम । साकं सह । दर्पेण कन्दर्पेण च । ससारसा सारससहिता । शरं नलम् । नवानाः नूतनशकटा । बिभ्राणा दधती । नाविभ्राणा अवीनाम् उरभ्राणां भ्राणः शब्दो न विद्यते यस्यां सा । ईदृशी शरद् ऋतुविशेषः ससारेति समन्वयः ।

## मधुमती

अर्थपरिवृत्तिमुदाहरति—ससारेति । दर्पेण कन्दर्पेण साकं शरत् संसारेत्यन्वयः । ससारसा पक्षिविशेषयुक्ता पद्मयुक्ता वा, शरं काशाख्यां तृणकाण्डं बिभ्राणा, नवाना पथि कर्दमाभावात् नूतनशकटयुक्ता, वीनां = पक्षिण भ्राणः = शब्दः बिभ्राणः, अविद्यमानः बिभ्राणः यत्रासौ अबिभ्राणा, नाबिभ्राणा सदाविहगशब्दवतीत्यर्थः ।

## विस्तारिका

ससारेति । शरत् ससार समाययौ । कं ब्रह्माणं दर्पयति, तेन दर्पेण च साकम् । ससारसा सारसः पक्षिभेदः, तैः सहिता, नवानः शकटं यत्र । शरं काण्डं विभ्राणां, न विद्यते वीनां पक्षिणां भ्राणः शब्दो यत्र, पश्चान्नञ्योगः । नवा नूतना ।

अत्र प्रथमपादस्यान्त्यार्द्धभागो द्वितीयपादस्याद्यार्द्धभागे, आद्यभागोऽन्त्यभागे यम्यते । एवं तृतीयपादस्यान्त्यादिभागौ चतुर्थापादस्याद्यान्त्यभागयोर्यम्येते इति ।

## सारबोधिनी

ससार सेति । शरत्ससार प्रससार । साकं कन्दर्पेण दर्पेण च, कं ब्राह्मणं दर्पितवान् यस्तेन । सारसाः पक्षिभेदाः तैः सहिताम् । नवमनः शकटम् यत्र । शरं काण्डं बिभ्राणा । न विद्यते वीनां पक्षिणां भ्राणः शब्दो यत्र । पश्चान्नञा योगः । नवा नूतना ।

## काव्यप्रदीपः

द्वयोराद्यन्तान्तादिकयोः समुच्चयो यथा—

'संसार साकं दर्पेण कंदर्पेण संसाररसा।
शरन्नवाना बिभ्राणा नाविभ्राणा शरं नवा॥'

### आदर्शः

ससारेति। 'नवा' नवीना 'शरत्' ससार आगता, कन्दर्परूपेण दर्पेण साकं सहेत्यर्थः। 'स-सारसा' सपद्मा 'सारसं सरसीरुहम्' इति कोषः। 'नवाना' नवम् अनः शकटं यस्यां तादृशी; वर्षापगमे शकटप्रवृत्तेः। 'बिभ्राणा' वीनां पक्षिणां भ्राणः शब्दो यस्यां तादृशी, शरदि पक्षिशब्दबाहुल्यात्। शरं शरकाण्डं नाबिभ्राणा किन्तु बिभ्रणैव। नञ्द्वयेनयोगव्यवच्छेदः, तदानीं शरकाण्डस्यावश्यम्भावेनायोगाभावात्। अत्राद्यान्तिकयोरन्त्यादिकयोश्च समुच्चयः।

### सुधासागरः

द्वयोराद्यन्तान्ताद्ययोः समुच्चयो यथा—ससारेति।

शरद् दर्पेण कन्दर्पेण साकं कामेन सहावतीर्णा, किम्भूता ससारसा सारसं कमलं पक्षिभेदो या तद्युक्ता, नवम् अनः शकटो यत्र सा नवानाः बिभ्राणा वीनां पक्षिणां भ्राणः शब्दो यस्यां सा तादृशी, शरं शरकाण्डम् अबिभ्राणा न, किन्तु दधानैव नवा नूतनेत्यर्थः।

चतुःखण्डे पादे द्वितीयभागस्य तृतीयभागे यमनं यथा इति प्रदीपकाराः प्राहुः, तदज्ञानविजृम्भितम्, न ह्युदाहरणे वर्णत्रयात्मकद्वितीयभागस्य पुनः श्रुतिः, न वा भागान्तरकल्पनाऽपि सम्भवति, वर्णस्य सिद्धत्वेन भागत्वाभावात्, किन्तु भागमनपेक्ष्यानियतस्थानयमकभेदा अपि भवन्तीति सूचनाय पादेष्वाद्यवर्णद्वयानन्तरं वर्णत्रयावृत्तियमकमिदमुदाहृतं श्रीवृत्तिकारैरिति तत्त्वम्।

**मधुपराजिपराजित-मानिनीजनमनः सुमनः सुरभि श्रियम्।**

**अभृत वारितवारिजविप्लवं स्फुटितताम्रतताम्रवणं जगत्॥३६८॥**

**एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम्॥**

---

**सङ्केतः**

मधुपेति। अत्र अनियते स्थाने आवृत्तिः।

**सङ्केतः (रुय्यकः)**

भ्रमराणां राज्या (पराजितं) परिभूतं मानिनीजनस्य मनो याभिस्तथाभूता याः सुमनसः पुष्पाणि तासां (सुरभिश्रियम्) सौगन्धलक्ष्मीं जगत् कर्त्तु अभूत। वारितः वारिज एव विप्लवो यत्र, स्फुटितानि विकसितानि ताम्राणि लोहितानि (ततानि) विस्तीर्णानि आम्रवणानि यत्र।

**बालचित्तानुरञ्जनी**

एवं द्विखण्ड उदाहरणान्यभिधाय चतुःखण्ड उदाहर्तुमाह मध्विति। वारितः निवारितः वारिजानां कमलानां विप्लवो यत्र, स्फुटितानि विकसितानि ताम्राणि ततानि विस्तृतानि आम्रवर्णानि चूतवनानि यस्य तत् जगत्। मधुपानां भ्रमराणां राज्या पङ्क्त्या पराजितो मानिनीजनस्य मानो याभिस्तासां सुमनसां सुरभिश्रियं सौरभ्यलक्ष्मीं अभृत दध्रे। अत्र खण्डचतुष्टयेषु द्वितीयखण्डः तृतीयखण्डे यम्यते।

**विविधधववना नागगर्धागतनाना-[?]**
**विविततगगनानामज्जज्जनाना।**
**शशरुरुवलना नावबन्धुं धुनाना**
**मम हितततनानाननस्वस्वनाना॥**

बलभद्रं प्रति श्रीकृष्णेन समुद्रपरिसरभूर्वर्ण्यते। विविधानि धवानां वृक्षविशेषाणां वनानि यस्यां सा, नागेषु गर्धेन सर्पभक्षणाभिलाषेण आगतैः वृद्धैः समृद्धैः[?] नानाविधैः विभिः पक्षिभिः विततं व्याप्तं गगनं यस्याः सा, अनामेन अनमनेन मज्जन्तः जना यस्यां सा। अविद्यमाना नरः यस्यां सा अना, समासान्तविधेरनित्यत्वात् नधृतश्चेति कबभावः। यद्वा अविद्यमानः अः विष्णुः, यस्यां सा अना। शशानां रुरूणां बलनं विलासो यस्यां सा। नौ आवयोः अबन्धुं शत्रुं धुनीते धुनाना मम हितं तनोतीति हिततना अनाननः अमुखः स्वस्य स्वन एव अनः प्राणो यस्यां सा। इत्याद्यन्यदप्युदाहार्यमित्याह एवमिति।

## काव्यादर्शः

अनियते स्थाने, यथा—'मधुपे'ति। 'भ्रमरपङ्क्त्या पराभूतं मानिनीजनस्य मनः यकाभिः तथाभूताः सुमनसः पुष्पाणि तासां सौगन्ध्यलक्ष्मीं जगत् कर्तृ अभृत। वारिता वारिजा एव विप्लवो यत्र। स्फुटितानि। विकसितानि ताम्राणि लोहितानि ततानि विस्तीर्णानि आम्रवणानि यत्र'। अत्र च देशविभागेनावृत्तिः, नाप्यवविभागेन, यतो द्रुतविलम्बितं द्वादशाक्षरमेतद् वृत्तम्। अर्धं चात्र षडक्षराणि, त्रिभागश्च चत्वार्यक्षराणि। अथ च प्रथमाक्षर-द्वयमुक्त्वा त्रीण्यक्षराणि यमकितानीति अनियतस्थानत्वम्। अस्यदिति। यथा—'विविधधव[व]नाना नोंगगर्ध-द्धनाने'त्यादौ॥

## विवेकः

मध्ययमकं यथा मधुपेति—'भ्रमरराज्या परिभूतं मानिनीजनस्य मनो याभिस्तथाभूता याः सुमनसः पुष्पाणि तासां सौगन्ध्यलक्ष्मीं जगत् कर्तृ अभृत। वारितो वारिज एव विप्लवो यत्र। स्फुटितानि विकशितानि ताम्राणि लोहितानि ततानि विस्तृतानि आम्रवणानि यत्र' (रु. सं. ५६ पृ०)। अन्यदिति यथा—विविधधवचना नागगर्द्धर्द्धनानाविविततगगनाऽनामज्जज्जनाऽना। शशरुरुललना नावबन्धुं धुनाना मम हि हि हितनाऽनाननस्व-स्वनाना॥(का. आ. सू. वृ. ४/१/२)। 'विविधानि धवानां वनानि यस्यां नागान् हस्तिनो गृध्यन्ति ये ऋद्धा महान्तो नानाप्रकारा वयः पक्षिणो व्यालादयस्तैर्विततं व्याप्तं गगनं यस्याम्। अनामेन अनमनेनैव मज्जन्तो जना यत्न। अविद्यमाना नरः पुरुषा यस्याम्। शशानां रुरूणाञ्च मृगभेदानां ललनं कीड़नं यत्र। नौ आवयोः। अबन्धुं शत्रुं [धुनाना] धुनयन्ती। मम हि यस्मात् हितं तनोति [या] अनाननोऽमुखो यः स्व आत्मीयः स्वरः स एवानः प्राणो यस्या इति हरिप्रबोधे हरिणा हलधरं प्रति समुद्रविकटा भूर्वर्ण्यते (रु. स. ५७ पृः)। अनया वर्णयमकालया पदयमकमालाऽपि व्याख्याता (का. अ. सू. वृ. १/४/२)।

## दीपिका

उक्तरूपभागानियमेन पादगमेकपादगतमध्ययमकं यथा—मधुपेति। मधुपराज्या भ्रमरश्रेण्या पराजितां निर्मानीकृताम्। मानिनीजनमनोभिस्तासां सुमनसां कुसुमानां सुरभिश्रियं सौगन्ध्यलक्ष्मीं जगदभृत। वारितपङ्कजो-पप्लवं स्फुटितानि विकसितानि ताम्राण्यालोहितानि ततानि विस्तीर्णान्याम्रवणानि यत्र। एवमिति। उक्तदिशा वर्णयमकान्तरं पादयमकञ्च "तन्वां तन्वां न सम्माति तस्याः लावण्यसञ्चयः" इत्यादि स्थितमाकरेषु प्रसिद्धम्।

## दर्पणः

तदुक्तं-अयमेव हि भेदहेतुश्च यद्विरुद्धधर्माध्यासः कारणभेदश्चेति।

किञ्च—यद्युभयानुप्रतिपादनसमीहया उक्तः एकदा शब्दः यस्योच्चारणसंभवस्तदा घटसहस्रं चिकीर्षुः कुलालोऽपि एकदा तन्निर्वाहयेत्।

तदुक्तमाचार्यश्रीमन्वद्योतकरचरणैः [श्रीमदुद्योतकरचरणैः ?] "क्रमबुद्धित्वाद्वाच" इति। तेनैकत्रैव शब्दे नानाविषयानामाभिधानं स्वसुसामग्रीवशेन [?] क्रमशः तज्जीवनमिति वादिनां मतमेवाश्रयितुमुचितम्।

किन्त्वत्र मते प्रथमं विरुद्धाया द्वितीयाभिधाया उज्जीवनमनुपपन्नमिति द्वितीयाभिधाननाम्ना जनस्थाने भ्रान्तमित्यादाविवात्रापि व्यञ्जनैव वृत्तिपादिश्यते । एवं ध्वनितं द्वे प्रकरणादिनियम स्थले । तस्मादेव शब्दात् उच्चारणादिसामग्रीसहकृतात् व्यापारान्तरेण सभङ्गाभङ्ग शब्दान्तरलम्बार्थप्रतीतिः [?] । यत्र तु येन ध्वस्तेत्यादौ प्रकरणादिनियमो नास्ति तत्र द्वयोरर्थयोरभिधानसंशयः । यत्र तु शब्दपरिवृत्तावतुहानिः [वर्थहानि] तत्र शब्दशक्तेर्मूलत्वेन शब्दश्लेषः । यत्र शब्दपरिवर्तनेऽपि तदर्थक्षतिस्तत्रार्थप्रभामात्र प्रत्येव शब्दोपयोगादर्थश्लेषता ।

येत्वाहुः "प्रतिप्रसूते शब्द शब्दान्तर" मिति । तदयुक्तं प्रतिप्रसूतशब्दाननुभवात् अनर्थभूतशब्दनानुप्रतीतौ [शब्देनाप्रतीतो] चातिप्रसङ्गात्, भिन्नवाचकादि्भन्नावाच्योत्पतिनियमाभावाच्च ।

एवं वर्णाङ्गत्वन श्लेषस्य प्राचीनास्वरोधेन [प्राचीनानुरोधेन] व्यवहारः । तद्वस्तु यत्र येन ध्वस्तेत्यादैः जनस्थान इत्यादावपि व्यञ्जनानङ्कीकारप्रसङ्गः । "कृदिज्ञेषु च वक्षतो त्यादौ [हृदि ज्ञेषु वक्ष्यतीत्यादौ] व्यथाद्वयेषामपि[?] मेदिनीभूतमित्यादौ स्वार्थस्य प्रथमं बुद्धयारोहः, तत्राभिधा अन्यत्र व्यञ्जना ।

एवमेव हि तुल्योगितालङ्कारे द्वयोरपि प्रकृतयोरेकधर्माभिसम्बन्धे वैवक्षिकमुपमेयभावमङ्गीकुर्वते प्राच्याः ।

न खलु तत्र द्वयोर्ब [हूनां] वा कस्यचिदपमेयत्वं कस्यचिदुपमानत्वं निद्धरियितुं शक्यम् । किन्तु यदा यस्य प्रथमं बुद्धया वो हस्तस्योपमेयता [बुद्ध्यावगतस्योपमेयता] अन्यस्योपमानतेति सङ्गतिः ।

किञ्चात्रैवमेतमेतत्प्रकृतो वर्णादिगतत्वेनाष्टविधत्वं श्लेषस्यासमीचीनमिति चण्डिदासपण्डिताना [मुक्ति] रसत् । तथाहि ।

वर्णादिगतत्वेन वृत्तिकृता यान्युदाहरणानि [प्रस्तुतानि] तेष्वेव केषाञ्चिद्वयञ्जनवृत्तिविषयत्वं, केषाञ्चि...श्लेषविषयत्व, न तु वर्णादिगतत्वेन श्लेषस्याष्टविधत्वं नास्ति ।

तथावणीभूते विधो सूचितरे भस्मानुलेपनश्मशाने च ।

चिरावासस्या....न मुरता तथा[?] इत्यत्र प्रकरणाभावात् किं महादेवो वाच्य उत कश्चि....विद्रोवेति सन्देहः । तेनात्र विधूविधिशब्दयोरुकारेकारयो र्नौकावरूपत्वा [रेकरूपत्वा] द्वस्तुश्लेतषः । "येन ध्वस्तेत्यादौ च विभक्तिसमासयोर्वैलक्षण्ये न [वैलक्षण्येन] पदश्लेषः । "योऽसकृत्परगोत्राणाम्" इत्यत्र लिङ्गश्लेषः ।

महेत्यादि भीमानुयपाद्ययोर्न [?] कृता प्रकृतत्वं तेन ध्वनिविषयत्वाभावात् भाषाश्लेषः ।

शतकोटिदतामित्यत ददातिद्वयो [?] प्रत्यययोश्च श्लेषः । रयार्थद्विभावीरुपाक्षपदे [?] प्रसेवणादित्यत्र किमहं नन्दितानन्दकः स्यामिति कस्यचिद्भक्तस्य वचनं उत कस्यचिद्भक्तस्यानन्दितानन्दितागमनविशेषत्वं स्यादिति वचनमिति सन्देहः । तेन न्नस्यां [?] स्यादिति प्रत्ययश्लेषः । सर्वस्वं हरेत्यत्र चार्थद्वयस्य संदेहास्पदत्वात् विभक्तिश्लेषः "दधते श्लेस्य [?] परां शोभामहो मधुरता हत" इत्यत्र...पप्रत्ययकप्रत्यययोः 'अवधूत' इत्यत्र धाधातोः पक्षे बहुवचन, पक्षे च धाधातोरेकवचनमिति वचनश्लेषः ।

तदेवमभिधाद्वयसन्देह प्रयोजनश्लेषालङ्कारविषयोऽविध [रिह] वर्णादिश्लेषस्य सद्भावस्य दर्शनादविचार्य प्राचीनावक्षेपकारीति उपजीव्यैः सह अलं बहुना विवादेन ।

नन्वेवं येन ध्वस्तेत्यादावपि यस्यार्थस्य प्रथमं बुद्ध्यारोहः स वाच्योऽस्तु, अपरस्तु, व्यंग्योऽस्तु। किंत्वंत्रापि श्लेषालङ्कारकल्पनयेति चेन्नैवम्। इह हि द्वयोरर्थयोः संशयज्ञानविषयत्वात् अनिर्धारितत्वम्। 'भद्रार्थत' [भद्रात्मन] इत्यादौ, हृदि ज्ञेषु वक्ष्यतीत्यादौ च निर्धारितत्वात् वृत्तिद्वयकल्पनाभावेऽसङ्गतिः।

यत्तु चण्डिदासपण्डितैरुक्तं "व्यथा द्वयेषा" मित्यादौ उभयाभिधानं वेति तत् संध्यावन्दनवेलायां युक्ताहमिति मन्यते। खण्डनवेलायां दण्डमुत्यस्य [म्य] धावतीत्याभाणकमनुकरोति क्वचिदभिधा द्वयाङ्गीकारे भद्रार्थन [भद्रात्मन] इत्यादावावपि विसपदाद्वयभिधात्व येन।

### साहित्यचूडामणिः

पादानां चतुष्खण्डतायां सर्वत्र द्वितीयखण्डानां तृतीयखण्डे यमनं यथा—मधुपेति। मधुपानां भृङ्गाणां राज्या पङ्क्त्या पराजितं कदर्थितं मानिनीजनमनः मनस्विनीलोकचित्रं याभिस्ताभिः सुमनोभिः पुष्पैः सुरभि सुगन्धि जगद्। वारितवारिजविप्लवं वारितो निरस्तः वारिजानां विप्लवो विनाशो येन, स्फुटितानि विकसितानि ताम्राणि शोणानि ततानि विस्तीर्णानि आम्रवणानि चूतकाननानि यत्र तादृक्षं जगत् श्रियमभृत शोभामवहत्।

### सम्प्रदायप्रकाशिनी

अथैकस्मिन् पादे—मधुपराजीति। भ्रमरपङ्क्त्या पराजितं मानिनीजनस्य मनो याभिस्तासां सुमनसां पुष्पाणां सुरभिश्रियं सौरभ्यलक्ष्मीं जगदिदं लोकोऽयमधारयत्। कीदृग् जगत्, वारितवारिजविप्लवं निवारितपद्मोपप्लवं, तथा स्फुटितताम्रतताम्रवणं विकसितारुणविततचूतारामं च।

तदेतत् कवेः शक्तिमत्त्वमात्रप्रकाशनफलं, न तु सहृदयहृदयावर्जकमित्यभिप्रायेणोपसंहरति—एवं वैचित्र्येत्यादि।

### मधुमती

मध्ययमकमुदाहरति—मधुपराजीति। जगत् श्रियं अभृत दध्रे। कीदृशम्? मधुपराज्या भ्रमरमालया पराजितानि मानिनीजनानां मनांस्येव सुमनसः ताभिः सुरभि। प्रतीतमितरत्।

### विस्तारिका

मधुपेति। जगत् स्थलीम्। सुरभिश्रियं वसन्तलक्ष्मीम् अमृत दधार। मधुपवत्या श्रेण्या पराजितं मानिनीजनमनो याभिस्तथाभूताः सुमनसः पुष्पाणि यत्र सुरभौ पद्ये। वारि जलं तस्माज्जायते उत्पद्यते यस्तादृशो वारिजानां कमलानां विप्लवो विपत्तिर्यत्र जगति। स्फुटितं विकसितं ताम्रं रक्तवर्णनम्, ततं विस्तृतमाम्रवणं यत्र।

अत्र प्रथमद्वितीयपादयोरादिभागः स्वस्वमध्यमभागेन यम्यते।

एवमिति। पादार्धसार्धयोर्यमानं यथा "तन्व्यां तन्व्यां न सम्माति तस्या लावण्यसञ्चयः" इत्यत्र तन्व्यां कृशतनौ।

## सारबोधिनी

एतानि द्विखण्डोदाहरणानि । चतुःखण्डे उदाहरति मधुपराजीति । जगत् कर्तृ । सुरभिश्रियं वसन्तलक्ष्मी-मभृत दधार । मधुपानां राज्या श्रेण्या पराजितं मानिनीजनमनो याभिस्तथाभूताः सुमनसः पुष्पाणि यत्र सुरभौ, यद्वा तथाभूतानां सुमनसां पुष्पाणां सुरभिश्रियं सौरभ्यलक्ष्मीमित्यर्थः । किंभूतं जगत् । वारि जलम् तस्माज्जायते उत्पद्यते यस्तादृशो वारिजानां कमलानां विप्लवो नाशो यत्र । स्फुटितं विकसितम् ताम्रं रक्तवर्णमं ततं विस्तृतं आम्रवणं यत्र ।

## काव्यप्रदीपः

चतुःखण्डे पादे द्वितीयभागस्य तृतीयभागे यमनं यथा—

**'मधुपराजिपराजितमानिनीजनमनः सुमनः सुरभिश्रियम् ।**

**अमृत वारितवारिजविप्लवं स्फुटितताम्रतताम्रवणं जगत् ॥'**

## आदर्शः

मधुपेति । वसन्तकालवर्णनमिदम् । जगत् श्रियम् अभृत । कीदृशं जगत् ? मधुपराज्या भ्रमरश्रेण्या पराजितं त्याजितमानं मानिनीजनानां मनो यत्र तादृशम् उद्दीपिकया भ्रमरश्रेण्या मानिनीनां मनःक्षोभणात् । सुमनोभिः पुष्पैः सुरभि सुगन्धि । तथा वारितो वारिजानां शिशिरकृतविप्लवो यत्न तादृशम् । तथा स्फुटितं प्रफुल्लम् अत एव ताम्रं तं विस्तृतम् आम्रवणं यत्न तादृशम् । अत्र तत्र तत्रैव पादे भागानियमेन भागावृत्तेः समुच्चयः ।

## सुधासागरः

जगत् कर्तृमधुराज्या भ्रमरमालया पराजितं मानिनीजनानां मनश्चित्तं यैः तादृशानि सुमनांसि पुष्पाणि यत्र तथाभूतस्य सुरभेर्वसन्तस्य श्रियं लक्ष्मीम् अभृत दधार । किंभूतं जगत्, वारितस्तुषारापगमने निवारितः वारिजानां कमलानां विप्लवो विध्वंसो यत्र तथाभूतम् । स्फुटितं विकसितं ताम्रं पल्लवोद्‌भवैरारक्तं ततं विस्तीर्णं च आम्राणां चूतानां वनं यत्र तथाभूतमित्यर्थः ।

यत्तु श्रीवत्सलाञ्छनभट्टाचार्यप्रभृतिभिर्व्याख्यातम् वारि जलं तस्माज्जायत उत्पद्यते यस्तादृशो वारिजानां कमलानां विप्लवो नाशो यत्रेति । तदसमञ्जसमिति सुधीभिर्ध्येयम् । इदमेव यमकमाद्ये यथा—

**नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।**

**मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः ॥**

(सू० ११९) वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः ।
शिलष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥ ८४ ॥

'अर्थभेदेन शब्दभेदः' इति दर्शने 'काव्यमार्गे स्वरो न गण्यते' इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यत् युगपदुच्चारणेन शिलष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः। स च वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानां भेदादष्टधा ।

---

**सङ्केतः**

शब्दभेद इति । यथा 'करः' इत्यत्र पाणिशुण्डाद्यर्थभेदेन शब्दभेदः, न तु वर्णभेदेन । सर्वेष्वप्यर्थेषु वर्णानामेकस्वरूपत्वात् ।

ननु स्वरभेदात् भिन्नस्वरूपापह्नवाभावे न श्लेषः स्यात् इत्याशङ्क्याह—काव्यमार्गे इति । भेदात् भङ्गात् । अभङ्गस्तु नवमो भेदः अनन्तरं वक्ष्यते ।

**सङ्केतः (रुय्यकः)**

अन्यदिति । यथा—

विविधधववना नागगर्द्धर्द्धनानाविविततगगनानाममज्जज्जनाना ।
शशरुरुललना नावबन्धुन्धुनाना मम हि हिततनानाननस्वस्वनाना ॥

विविधानि धवानां वनानि यस्यां, नागान् हस्तिनो गृध्यन्ति ये ऋद्धा महान्तो नानाप्रकारा वयः पक्षिणो व्यालादयस्तैर्व्याप्तं गगनं यस्याम् । अनामेन अनमनेनैव मज्जन्तो जना यत्र, अविद्यमाना नरः पुरुषा यस्यां, शशानां रुरूणाञ्च मृगभेदानां ललनं क्रीडनं यत्र, नौ आवयोः, अबन्धुं शत्रुं धूनयन्ती मम हि यस्मात् हितं तनोति, अनाननोऽमुखो यः स्वः स्वनः स एवानः प्राणो यस्या इति हरिणा हलधरं प्रति समुद्रा विकटा भूर्वर्ण्यते ।

**बालचित्तानुरञ्जनी**

नन्वेकरूपाणामपि शब्दानामनेकार्थाभिधानासामर्थ्याङ्गीकारात् श्लेषशब्दार्थस्य शब्दद्वयनिष्ठत्वनियमः कथमित्याशङ्क्याह अर्थेति । अर्थभेदेन हेतुना शब्दानामपि भेद इति दर्शने श्लेषोपमालङ्कारो नान्यत्रेत्यर्थः । नन्विन्द्रशत्रुप्रभृतौ वाक्ये उच्चारणवेलायां कदाचिदुदात्तः कदाचिदन्य इति स्वरस्य भेदकत्वाङ्गीकारात् कथमेकशब्दत्वमित्याशङ्क्याह काव्यमार्ग इति । अक्षरादिभिरित्यादिशब्दार्थं कथयन् व्याकरोति स चेति ।

### काव्यादर्शः

काव्ये इति। उदात्तादीनां युगपदुच्चारयितुमशक्यत्वात्। वचनानामिति। एकवचनद्विवचनबहुवचन-रूपाणाम्।

### विवेकः

आवृत्तिवैपरीत्याद् यमकान्तरं श्लेषमाह वाच्येति। इहानेकार्थस्य युगपद्विवक्षायां द्वयी गतिः। अर्थभेदेन शब्दा भिद्यन्ते न चेति। तत्राद्य एव दर्शन एतत् सम्भवतीत्याह अर्थभेदेनेति। यद्यपि शब्दस्य प्रतीतावेकतावशा-यातनाम्नि शब्दभेदः शब्दार्थयोस्तादात्म्यमिति च विरोधाद्बाधितमेव तथापि शब्द्यते प्रतिपाद्यतेऽनेनार्थ इत्यानुपूर्वी-विशेषविशिष्टवर्णसमूहलक्षणस्य शब्दस्यार्थभेदेन प्रतिपादकत्वोपाधिवशादौपाधिकं भिन्नत्वमिति भावः। तथा च वैयाकरणः 'त्रिधा शब्दा भिद्यन्ते रूपतः स्वरूपतोऽर्थतश्चेत्याहुः। एवमपि स्वरभेदेन भिन्नप्रयत्नोच्चार्यत्वाद्यु-गपदुच्चारणमनुपपन्नमित्यत आह काव्यमार्ग इति। एवञ्च यद्यप्येकवक्तकत्वादुच्चारणस्यैक्यं तथापि विषयाधी-नभेदेन तस्य भेदादत्राप्यनेनास्याः क्रियाया एककालाभि- सम्बन्धः सम्भवतीत्यभिप्रेत्याह युगपदुच्चारणेनेति। श्लिष्यन्तीति व्याचष्टे भिन्नं स्वरूपमपह्नुवत इति। तदयमर्थः। समानरूपानेकशब्दप्रतिपत्त्यनुकूलेनैकेन प्रयत्नादि-रूपेण व्यापारेण यत्र तदर्थक्रियाकारित्वाद्भिन्ना अपि शब्दा एकरूपतया प्रतिभासन्ते स श्लेष इति। अयञ्चाक्ष-रादिभेदादष्टधा। अक्षरादीनि दर्शयति वर्णेत्यादि। तत्र प्रत्ययग्रहणेनैव लब्धे विभक्तिपदस्य पुनरुपादानं विशेषतश्चारुत्वातिशयप्रकाशनार्थम्। तत्र विभक्त्यादिवशाद्यत्र भिन्नानां वर्णानामैकरूप्यं स वर्णश्लेषः।

### दीपिका

वाच्यभेदेनेति।

> **"वसुधामहित सुराजित नीरागमना भवांश्व वर्षाश्च।**
> **अवचितवराहवपुषस्तव च हरेश्चोपमा घटते॥"**

इत्यादावेकशब्दाश्रितनानाविषयाभिधावादे द्वयोरप्यभिधयोः स्वसामग्रीसाचिव्येन क्रमश उज्जीवनमि-त्येके। शब्दभेदमाश्रित्य तन्त्रेणोच्चारितयोः शब्दयोः क्रमेण स्वार्थबोधनमित्यपरे। तत्राद्ये शब्दान्वयव्यतिरेकानु-विधायितया ध्वनिविषयपरिहारेणार्थद्वयप्रतिपत्तौ शब्दश्लेषः, अन्यथा त्वर्थश्लेषः। द्वितीये तु यत्र शब्दपरिवृत्तिसहिष्णुता तत्रार्थश्लेषः। तत्राद्ये प्रथमं निरुद्धाया द्वितीयाभाधियाः पुनरुत्थानाभावेन "जनस्थाने भ्रान्तम्" इत्यादाविवात्रापि द्वितीयार्थे व्यञ्जनं व्यापारः। द्वितोये तु पक्षे भिन्नयोः शब्दयोः कथमेकदा निष्पत्तिः ? उभयार्थप्रतिपादनसमीहया वक्तुः प्रवृत्तत्वादिति चेत्तर्हि घटसहस्रं चिकीर्षुः कुलाल एकदा सर्व कर्तुं शक्नुयात्।

यदाहुरत्रभवन्त उद्योतकराचार्याः—क्रमवृत्तित्वाद् वाच इति। प्रतिप्रसवपक्षस्तु पूर्वमेव दूषितः ! तस्माद् घटपटादिशब्दवद्भिन्ना एव सभङ्गाभङ्गरूपाः समानश्रुतयः शब्दा अनेकार्थप्रतिपादकानेकप्रयत्नोच्चार्या इति प्रकरणादिवशेन प्रथमप्रत्ययेयार्थवाचकस्यैव शब्दस्यार्थान्तरे शक्त्यन्तरमङ्गीकार्यम्। प्रकरणाद्यभावे तु सन्देहतः।

इदमेव काव्यप्रस्थाने स्वरभेदादेः शब्दभेदकत्वानङ्गीकृतितात्पर्यम्, अन्यथा साऽपि निर्मूला स्यात्। एवमेव वक्ष्यमाणेषु सर्वेषु श्लेषोदाहरणेष्वपि। ग्रन्थकारस्तु प्राचीनप्रसिद्धिव्यामोहेन तन्त्रोच्चारणमङ्गीकृतवान्, अन्यथा 'भद्रात्मनः' इत्यादौ 'जले स्थले चान्तरिक्षे' इत्यादाविव 'न स्यादपि भूः' इति सम्प्रदायः।

दर्शन इत्यनन्तरं प्रामाणिक इति शेषः। एकशब्ददर्शने हि शब्दश्लेष इत्यभिधानमनर्थप्रायं स्यात्- भिन्नशब्दयोरेव हि श्लेषः संयोगः प्रसिद्धः।

ननु विधा शब्दा भिद्यन्ते—स्वरूपतः स्वरतोऽर्थतश्च। ततश्च भङ्गश्लेषादौ स्वरभेदात् कथमैक्यमि- त्याह—काव्येति। स्वरः श्लिष्टशब्दभेदनिश्चयप्रत्यायको नाङ्गीक्रियते, व्यञ्जनामार्गालोचनदशायाम्, अन्यथाऽर्थान्तरप्रत्ययाभावप्रसङ्गादित्यर्थः। नय इति नीयते यथाकथञ्चन व्यामृष्यानेनेति नयः प्राचीनमार्गः। भिन्ना निश्चितभेदाः।

## दर्पणः

ननु सभङ्गश्लेषादौ शब्दयोर्भिन्नप्रयत्नोच्चार्यत्वांत् कथं तथाविध विच्छित्तिविशेषस्यालङ्कारत्वमित्यत आह काव्यमार्ग इति। "स्वरस्य शब्दभेदकतानङ्गीक्रियत" इति नये एवं विधानीत्यङ्गीकारे चेत्यर्थः।

अक्षरादिभिरिति। सूत्रपदस्याक्षरशब्दार्थोऽस्तु इति। आदिशब्दसंगृहीतानि पदानि विभक्तयादियोगेन वर्णानामेकारविकारत्वे [वर्णानामेकारोकारत्वे] वर्णश्लेषता।

## साहित्यचूडामणिः

इदानीम् श्लेषमुन्मेषयति—वाच्येति। अर्थभेदेन स्वयमपि भिन्नाः शब्दा युगपत् पृथक् प्रयासशून्यं भाषणमुच्चारणं स्पृशन्ति।

नन्वेकरूपाणामपि शब्दानामनेकार्थाभिधानसामर्थ्यमङ्गीचक्रे कैश्चित्। तत् कथं श्लेषशब्दार्थस्य शब्द- द्वयनिष्ठत्ववैयात्यमित्याशङ्क्याह—अर्थेति। अर्थभेदेन हेतुना शब्दानामपि भेद इति दर्शने श्लेषोऽयमलङ्कारः, नान्यत्रानुपपत्तिशङ्का। नन्विन्द्रशत्रुप्रभृतौ उच्चारणवेलायां कदाचिदुदात्तस्वरः, अन्यदान्य इति वेदे स्वरस्य भेद (व)त्त्वाङ्गीकारे शब्दैकत्वपारिशेष्येण श्लिष्यमाणशब्दद्वयासिद्धेरयं न संघटत इति चेत् तत्राह—काव्यमार्ग इति। शब्दार्थ निश्चिनोति—भिन्नमिति।

क्षीरनीरन्यायेन सम्भवतोऽपि भेदस्यापलापः श्लेषः।

## सम्प्रदायप्रकाशिनी

अथ शब्दविच्छित्तिप्रस्तावाच्छ्लेषः—वाच्यभेदेनेत्यादि। 'प्रत्यर्थं शब्दनिवेशना' इति न्यायाद् अर्थभे- देन भिन्ना शब्दाः यत्रोच्चारणे यद् भिन्न स्वरूपं निह्नुवते स श्लेषालङ्कारः।

व्याचष्टे—अर्थभेदेनेत्यादि। ननु एकवृन्तगतफलद्वयनयेन एक एव शब्दो नानार्थप्रतिपादने प्रभवतीति कथं वाच्यभेदात् शब्दभेदः, भेदाभ्युपगमेऽपि अर्थभेदात् स्वरसन्निवेशो भिन्न इति कथं युगपदुच्चारणार्हतेत्याश- ङ्क्यार्थभेदेनेत्याद्युक्तम्। यत् तावद् 'अर्थभेदेन शब्दभेद' इति दर्शनं तदाश्रयणे शब्दभेदः। स्वरभेदः। काव्यमार्गे

न गण्यत इति न्यायबलाच्च युगपदुच्चारणोपपत्तिः । अतो भिन्न स्वरूपं यदपह्नुवते स श्लेषालङ्कारः । अक्षरादीनि विभज्याह—स च वर्णपदेत्यादि । एभिरष्टधा वर्णश्लेषः । पदश्लेष इत्यादि ।

## मधुमती

वाच्येति । अत्र श्लेषः इति लक्ष्यनिर्देशः । शिलष्यन्ति इति लक्षणम् । असौ इति लक्ष्यानुवादो विभागार्थः । तथा च एकोच्चारणापह्नुतभेदत्वं लक्षणमित्यर्थः । ननु अविजातीयाकारयोः एकस्यैवैकोच्चारणगोचरत्वेन स्वरूपभेदापह्नवः अनुपपन्नः, समानाकारस्य स्वरूपभेदाभावात् अत आह—वाच्यभेदेनेति । एवं च अर्थभेदेनैव भेद इति लभ्यते । तथा च समानाकारतायामेवं एकोच्चारणगोचरत्वं, न त्वन्यथा । इयान् भेदः—यत् वर्णश्लेषादौ आदेशादिवत् नैकाकारत्वम् । अक्षादिपदे तु आजनिक्येव समानाकारता इति । तदेतत् वृत्तिकारो व्याचष्टे—अर्थभेदेनेति । अनेकव्यक्तिवाचिनः शब्दाः एकदा तावतीः व्यक्तीः नोपस्थापयितुमुत्सहन्ते । 'सकृदुच्चारितात् शब्दात् सकृदर्थप्रतीतिः ।' इति व्युत्पत्तेः । आवृत्तौ तु सिद्धः शब्दभेदः इत्यर्थः ।

ननु शब्दसाम्ये श्लेषत्वमित्यनुपपन्नम् । 'अस्वापफललुब्धे'त्यादौ समासभेदेन स्वरभेदात् शब्दभेदस्य आवश्यकत्वात् इत्यत आह—काव्येति । तथाच स्वरवैसादृश्येऽपि आकासाम्यमात्रमुपादाय श्लेषत्वमिति भावः ।

विभजते—स चेति । अत्र प्रत्ययपदं गोबलीवर्दन्यायेन विभक्त्यतिरिक्तप्रत्ययपरमिति बोध्यम् ।

## विस्तारिका

वाच्यभेदेनेत्यादि । शब्दा यत्र शिलष्यन्ते, स श्लेषः । अनुगृहीतभिन्नस्वरूपत्वंश्लेषणम्, विजातीयदोषाद् भेदाग्रहेऽयमलङ्कार इत्याह युगपदित्यादि । युगपद्भाषणमेकोच्चारणम्, तस्य स्पर्शस्तद्विषयत्वम् । आनुपूर्वीवैजात्येनैवमुच्चारणमिति न तत्र प्रसङ्गः । तदेकत्वे कथं भेद इत्यत आह—वाच्येत्यादि । अर्थभेदस्य शब्दभेदकत्वात् । वाच्यः शब्दोच्चारणानन्तरं प्रत्येयः, न त्वभिधेयः । तेन 'श्वेतो धावति' इत्यत्र नाव्याप्तिः । अन्यथा श्वेतगुणवत्समीपदेशस्थकुक्कुरयोरेकस्यापि वाच्यताविरहेण श्लेषो न स्यात्, गुणवति श्वेताशब्दस्य लाक्षणिकत्वात् । लक्षणया लुङ्प्रत्यायकत्वेन रूढितुल्यता ।

ननु कथमेकप्रयत्नोच्चारणेनानेकशब्दोत्पादनमनेकार्थं प्रतिपिपादयिषेत्? घटसहस्रं चिकीर्षोः कुलालस्यैकदा तन्निष्पादनप्रसङ्गात् । मैवम्, एकेन निषेकेण यमयोरिवैकेनोच्चारणेनानेकस्य शब्दस्योत्पत्तेः । समवाय्यसमवायिनां युगपदसम्पातेन घटानां नैकदोत्पत्तिः, शब्देषु पुनरभिन्ना एते इति न तत्तदर्थबोधकत्वावच्छेदकभेदेन वर्तमानः स्वरूपभेदः शब्दानां तन्त्रोच्चारणेन दोषेण न गृह्यत इति श्लेषः । अर्थद्वयप्रतीत्यनन्तरं गृह्यमाणेन किञ्चित् कुरुते, कथमन्यथा श्वेतो धावतीत्यादिभ्यः सकृदुच्चरितेभ्यः शिलष्टेभ्यो युगपदनेकार्थावगमः? न चावृत्त्या पुनरननुसन्धानात् सकृदुच्चरितस्य सकृदर्थप्रत्यायननियमस्तु विरतव्यापारस्य विरोधको न पुनर्युगपदनेकार्थप्रत्यायनस्य, तस्यानुभवसिद्धत्वात् ।

मिश्रास्तु—एकस्यैव वर्णसमूहस्यार्थभेदेन शक्तिभेदाद् भेदमाहुः, तन्न, अन्योन्याभावस्याव्याप्यवृत्तित्वापत्तेः । स्वरूपस्यैकत्वे 'भिन्नं स्वरूपमपह्नुवते' इति ग्रन्थविरोधाच्च । अभिधाया नियन्त्रणे च न व्यञ्जनावसरः । तस्मान्नानार्थे पुष्टे यत्रानेकत्र प्रकरणमवतरति, तत्र श्लेषः । यत्र क्रमशस्तत्रावृत्तिस्तत्रैव व्यञ्जनेति व्यवस्थितिः ।

अर्थभेदेनेत्यादि । तदुक्तम्—

**क्रमन्यूनातिरिक्तत्वस्वरवाचः श्रुतिस्मृती ।**
**पदावधारणोपायान् बहूनिच्छन्ति सूरयः ॥ इति ।**

नन्वेवं स्वरभेदेनोच्चरितानां कथं भेद इत्यत आह—काव्यमार्ग इत्यादि । न गण्यते, स्वरमन्मदृत्यैवोच्चार्यते । अन्यथा श्लेषभङ्गप्रसङ्गात् । श्लेषस्य चमत्कारितायाः सर्वजनसिद्धत्वेनापलपयितुमशक्यत्वमिति । युगपदिति । तन्त्रेणेत्यर्थः । अक्षरपदार्थो वर्णः । आदिशब्दार्थमाह— पदेत्यादि । पदं सुप्तिङन्तम् । लिङ्गं पुस्त्वादि । भाषा संस्कृतप्राकृतादिः । प्रकृतिः प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्ता, प्रत्ययविधानावधिर्वा । प्रत्ययो विभक्तोतरः । विभक्तिः सुप् तिङ् । वचनं त्रिकविभक्तीनामेकैको भागः । प्रत्ययविभक्त्योः पृथगुपादानं वैचित्र्यभेदात् । इह हि द्वयो गतिः—वाचकस्वरूपभेदावगमादनन्तरमर्थद्वयावगमोऽर्थद्वयावगमानन्तरं वाचकस्वरूपभेदश्च । तत्राद्ये भङ्गश्लेषे अमी अष्टौ प्रकाराः । द्वितीये पुनर्भङ्गे प्रकारान्तरम्, तद्वक्ष्यति—भेदाभावात् प्रकृत्यादेरित्यादि ।

## सारबोधिनी

श्लेषं लक्षयति वाच्येति । शब्दा यत् श्लिष्यन्ति स श्लेषः । अगृहीतभिन्नस्वरूपत्वं श्लेषणम् । दोषाद्भेदाग्रहेऽयमलङ्कारः । तत्र को दोष इत्याह युगपदिति । युगपद्भाषणं एकोच्चारणम् तस्य स्पर्शि तद्विषयत्वम् । तथा च स एव दोष इत्यर्थः । तथा च शब्दानां भिदा भेदस्तन्त्रोच्चारणेन दोषेण न गृह्यत इति शेषः । अर्थभेदप्रतीत्यनन्तरं गृह्यमाणस्तु भेदो न किञ्चित् कुरुते । वाच्यभेदेनेति । त्रिधा शब्दा भिद्यन्ते स्वरूपतः स्वरतोऽर्थतश्चेति वैयाकरणाः । वाच्यः शब्दोच्चारणानन्तरं प्रत्येयो न त्वभिधेयः । तेन श्वेतो धावतीत्यत्र नाव्याप्तिः । अन्यथा श्वेतगुणवत्समीपदेशस्थकुक्कुरयोरेकस्यापि वाच्यताविरहेण श्लेषो न स्यात् गुणवति श्वेतशब्दस्य लाक्षणिकत्वात् । अत्राभिधाया अनियन्त्रणेन न व्यञ्जनावसरः । तस्मान्नानार्थेषु श्लिष्टेषु यत्रानेकत्र युगपत् प्रकरणादिकमवतरति नावतरति वा तत्र श्लेषः । यत्र क्रमेण तत्रावृत्तिः, यत्रैकदैव तत्र व्यञ्जनेति व्यवस्थितिः । नन्वेवं स्वरभेदेनोच्चारितानां कथं भेदाग्रह इत्यत आह काव्यमार्ग इति । न गण्यते स्वरमनादृत्यैवोच्चार्यते । अन्यथा श्लेषभङ्गप्रसङ्गात् । श्लेषस्य चमत्कारितायाः सर्वजनसिद्धत्वेनापलपितुमशक्यत्वादिति । स चेति अक्षरपदार्दस्तु वर्णः । आदिशब्दार्थमाह पदेत्यादि । लिङ्गं पुंस्त्वादि । भाषा संस्कृतप्राकृतादि । यद्यपि प्रत्ययग्रहणादेव विभक्तेरपि ग्रहणम् तथापि तत्राधिकं चारुत्वं प्रतिभासत इति पृथगुपात्तम् । प्रत्ययो विभक्तिः सुप्तिङ्वचनं त्रिकविभक्तीनामेकैको भागः । अत्र सभङ्गश्लेषे इमेऽष्टौ प्रकाराः । अभङ्गश्लेषे पुनः प्रकारान्तरं तद्वक्ष्यति भेदाभावात् प्रकृत्यादेरिति ।

## काव्यप्रदीपः

एवं वैचित्र्यसहस्त्रैः स्थितमन्यदप्यूह्यम् ।

**वाच्यप्रभेदभिन्ना यद्युगपद्भाषणस्पृशः ।**
**श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥ ७ ॥**

'अर्थभेदेन शब्दभेदः' इति नयेन भिन्नाः शब्दाः 'काव्यमार्गे स्वरो न गण्यते' इति नयेन युगपदुच्चारण-विषयतया यच्छिलष्यन्ति भिन्नं स्वरूपमपह्नुवते एकवृन्तगतफलद्वयन्यायेन यत्रार्थद्वयप्रतीतिः स श्लेष इत्यर्थः । अक्षरादिभिरिति वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनभेदादष्टधा श्लेष इत्यर्थः ।

### काव्यप्रकाशखण्डनम्

**वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः ।**
**श्लिष्यन्ति शब्दाः श्लेषोऽसौ [अक्षरादिभिरष्टधा ।।]** (का. ८४)

अर्थभेदेन शब्दभेद इति दर्शने काव्ये स्वरो न गण्यते;—इति च नये वाच्यभेदेन भिन्ना अपि यद् युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः । ननु अनुगृहीतभिन्नस्वरूपत्वं श्लेषणं दोषाद् भेदाग्रहे अयमलङ्कारस्तत्र को दोष इत्यत आह—युगपदिति । युगपद्भाषणमेकोच्चारणमेव तस्य स्पर्शस्तद्विषयत्वम्, तथा च स एव दोष इत्यर्थः । तथा च शब्दानां मिथोभेदस्तत्रोच्चारणेन दोषेण न गृह्यत इति स श्लेषः । अर्थप्रतीत्यनन्तरं गृह्यमाणस्तु भेदौ न किञ्चित् कुरुत इति वाच्यभेद [प० ४४, २] इति । वैयाकरणैस्त्रिविधाः शब्दा भिद्यन्ते—रूपतः, स्वरतः, अर्थतश्चेत्युच्यते । वाच्यः शब्दोच्चारणानन्तरं प्रत्येयो न त्वभिधेयः । तेन श्वेतो धावतीत्यत्र नाव्याप्तिः । अन्यथा श्वेतगुणवत् कुक्कुरसमीपदेशस्थयोरेकस्यापि वाच्यताविरहेण श्लेषो न स्यात् । गुणवति श्वेतशब्दस्य लाक्षणिकत्वात् अत्राभिधा, अनियन्त्रणेन व्यञ्जनावसरः । तस्मान्नानार्थेषु यत्र युगपत् प्रकरणादिकमवतरति तत्र श्लेषः, यत्र क्रमेण तत्रावृत्तिः, यत्रैकत्रैव तत्र व्यञ्जनेति व्यवस्थितिः । यथा—

**महत्या गदया युक्तः सत्यभामासमन्वितः ।**
**भवान् वा भगवान् वाऽपि गतो भेदः परस्परम् ।।**

### आदर्शः

श्लेषालङ्कारमाह—वाच्येभेदेनेति । वृत्तावेवास्य स्फुटा व्याख्या । अर्थभेदेनेति । नैयायिकमत एव एकस्य शब्दस्यानेकेऽर्थाः, दर्शनविशेषे तु यावन्तोऽर्थास्तावन्त एव शब्दाः एकेनैव प्रयत्नेनोच्चर्यन्ते एकप्रयत्नो-च्चार्यत्वरूपदोषात्तु तद्भेदाग्रह इति मतं दर्शितमनेन । नन्वर्थभेदे उदात्तादिस्वरोऽपि भिद्यते, तथा च स्वरभेदे तदनुकूलोच्चारणप्रयत्नभेदात् कथमेकप्रयत्नाच्चार्यत्वमत आह—काव्यमार्ग इति । भिन्नं स्वरूपमिति श्लिष्यन्ती-त्यस्य व्याख्या । स्वभेदं न ग्राहयन्तीत्यर्थः । स श्लेष इति, तादृशसंश्लेषणमेव श्लेषालङ्कार इत्यर्थः। अक्षरादि-भिरिति व्याचष्टे—स चेति । तत्र पदयोरेकवर्णकृतवैरूप्येऽपि व्याकरणकृतकार्यवशादैकरूप्यं वर्णश्लेषः । तमुदाहरति—

### सुधासागरः

श्लेषं लक्षयति—वाक्येति ।

अर्थभेदेनेत्यादि । 'अर्थभेदेन शब्दभेद' इति नयेन भिन्नाः शब्दाः 'काव्यमार्गे स्वरो न गण्यते' इति नयेन युगपदुच्चारणविषयतया यत् श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते, एकवृन्तगतफलद्वयन्यायेन यत्रार्थद्वयप्रतीतिः स

श्लेष इत्यर्थः। श्लेष इति लक्ष्यनिर्देशः। श्लिष्यन्तीति लक्षणम्। असाविति लक्ष्यानुवादो विभागार्थः। अयमाशयः—शब्दाः पदानि यतः श्लिष्यन्ति स श्लेषः। अगृहीतभिन्नस्वरूपत्वं श्लेषत्वम्। दोषाद्भेदाग्रहेऽयमलङ्कारः। को दोष इत्यत्राह युगपदिति। युगपद्भाषणम्—एककण्ठताल्वाद्यविधातानुकूलयत्नः तत्स्पर्शस्तद्विषयत्वं दोष इत्यर्थः। श्वेतो धावतीत्यादौ हि समुदाय एकोच्चारणानुकूलकविकौशलेनैक इव गृह्यते, इतः श्वेत्युच्चारणे तदयोगात्। वाच्यः प्रकृते बोध्यः। तथा च श्वेतादिशब्दानां गुणवाचकतया गुणिनि लक्षणाङ्गीकारेण श्वेतपदाभिधेयत्वासत्त्वेऽपि न क्षतिः। न चार्थान्तरे व्यञ्जनैवास्त्विति वाच्यम्, प्रकरणादीनां तुल्यत्वेनैकत्र नियन्त्रणाभावात्। तस्मान्नानार्थेषु यत्रानेकत्र प्रकरणादिकं युगपदवतरति नावतरति वा तत्र श्लेषः। यत्र क्रमेण तत्रावृत्तिः। यत्र त्वेकत्रैव तत्र व्यञ्जनेति स्थितिः। उक्तं चेदमस्माभिर्द्वितीयोल्लासे 'भद्रात्मन' इत्यादिव्याख्यानावसरे। अर्थभेदेनेति। 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति प्राचां मते इत्यर्थः। अर्थभेदग्रहोत्तरं शब्दभेदग्रहस्तु अकिञ्चित्कर इति बोध्यम्। ननु समासभेदेन श्लेषे उदात्तानुदात्तादिस्वरभेदे भेदग्रहो दुरपह्नव इत्यत्राह—काव्यमार्ग इति। अन्यथा श्लेषोच्छेदापत्तेः। श्लेषस्य चमत्कारितायाः सर्वजनसिद्धत्वेनापलपितुमशक्यत्वात्। तथा च एकोच्चारणापह्नुतभेदकभिन्नार्थकसदृशनानाशब्दत्वं श्लेषत्वमिति फलितम्।

अत्र केचित् 'नन्वेकोच्चारणेन सदृशनानाशब्दोत्पत्तिर्दुर्घटा, च चानेकार्थप्रतिपिपादविषयोच्चारणात्तथा, नानाघटचिकीर्षातः कपालादिसंयोगादेकस्मान्नानाघटोत्पत्त्यापत्तेः। अत्र चक्रवर्त्तिनः—घटादेः समवाय्यसमवायिभेदान्न तथा, तदैक्यात्तत्सम्भव इत्याहुः। तच्चिन्त्यम्। सामग्र्यैक्ये कार्य्यैक्यात्, भेदे मानाभावाद्गौरवाच्च। एकस्मादपि शब्दात् 'सकृदुच्चरित' इत्यादिनियमसत्त्वे आवृत्त्या नानार्थबोधः सम्भवति, आवृत्तिः पुनरनुसन्धानमिति तत्कृतानुपूर्वीभेदाद् वृत्तिभेदाच्च पदभेद इत्याहुः। तदपि न रमणीयम्। आवृत्त्यङ्गीकारे एकवृतगतफलद्वयन्यायानुपपत्त्या श्लेषस्य दुरुपपादत्वात्, यत्रानेकत्र क्रमेण प्रकरणादिकमवतरति तत्रावृत्तिरिति सिद्धान्तात्। अपरे तु द्वितीयक्षणे शब्दजशब्दोत्पत्त्या पदभेदः सम्भवतीत्याहुः। तदपि मौनिमात्रविदित-श्लेषाव्यापकमिति न रमणीयम्। वयन्तु वस्तुत एकः शब्दः सकृदुच्चरितः सकृदर्थं गमयति न त्वेकोच्चारणापह्नुतभेदोऽपीतिश्लिष्टस्योभयत्र तात्पर्यग्राहकसद्भावेऽभावे वा एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वादुद्बुद्धस्वस्वसंस्कारेण द्वयोर्युगपदुपस्थितिस्ततश्च सकृदित्यादिनियमवशात्सदृशनानाशब्दबोधः, तदेतदुक्तं श्रीवाग्देवतावतारैः—'विद्वन्मानस हंस' इत्यादावखण्डपदश्लेषे इति युक्तमुत्पश्यामः। एवं चैकोच्चारणेन सदृशनानाशब्दोत्पत्तिर्दुर्घटेति रिक्तं वचः।

यत्तु जयरामन्यायपञ्चाननैरुक्तम्—इदन्तु बोध्यम्, यत्रैकस्यैव शब्दस्य शक्यलक्ष्योभयपरत्वन्तत्रार्थश्लेष एव पदस्य परिवृत्तिसहत्वे। यस्य चैकस्य समुदायस्य बोधितार्थस्य तेन रूपेण नार्थान्तरबोधनं तत्र न श्लेषः। यथा 'वैदेहीति'त्यत्र, 'देवं हिमकराङ्कितम्' इत्यत्र च, एकत्र केवलमर्थप्रयुक्तभेदाभावात्, रूपतोऽपि भेदात्। यदाहुर्वैयाकरणाः—त्रिधा शब्दो भिद्यते, रूपतः स्वरतोऽर्थतश्चेतीति। तच्चिन्त्यम्। तथा सति श्रीवाग्देवतावतारोक्तसखण्डपदश्लेषोच्छेदापत्तेः, रूपभेदाभावस्योपपादितत्वाच्चेति सुधीभिः परिभावनीयम्।

क्रमोणोदाहरणम्—

अलंकारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ।। ३६९ ।।

---

सङ्केतः

विधाविति ।अत्र विधुः विधिश्चेति उकारेकारयोर्वर्णयोः भङ्गे श्लेषः । अलङ्कारसर्वस्वमते तु—अत्र अर्थापत्तिलङ्कारः । तथाहि—विधौ वक्रे यदा ईश्वरस्यापि ईदृशी दशा दृश्यते, तदा अर्थादन्येषां ईदृग् दशा सिद्धैवेति । संसृष्टिरपि ।

सङ्केतः (रुय्यकः)

विधाविति । विधुर्विधिश्चेत्युकारेकारयोः श्लेषः ।

बालचित्तानुरञ्जनी

वर्णभेदात् श्लेषालङ्कारभेदमुदाहरात अलङ्कार इति । शङ्काकरं भयङ्करं यन्मनुष्यकपालं स एवालङ्कारः । विशीर्णाङ्गो भृङ्गी परिजनः । वृद्ध एको वृषभो धनम् । वक्रे विधौ बालचन्द्रे मूर्ध्नि स्थितवति सकलदेवानामिन्द्रादीनां गुरोरपि स्थाणोरीश्वरस्येयमवस्था, वक्रे विधौ प्रतिकूले दैवे मूर्ध्नि स्थितवति वयं के पुनः ? अत्र विधुर्विधिरिति द्वयोरुकारेकारयोः श्लेषः, विधाविति यौगपद्येनोक्तत्वात् ।

काव्यादर्शः

'अलंकार' इति । अत्र स्थाणुपक्षे-विधुश्चन्द्रो विधिश्च दैवमित्युकारेकारयोरक्षरयोर्भङ्गेन श्लेषः ।

विवेकः

अलङ्कार इत्यादि—अलङ्कारः शङ्काकरनरकपालमिति विधेयाविमर्शता चिन्त्या । विधाविति—अत्र विधुर्विधिश्चेत्युकारेकारयोः सप्तमीवशात् सारूप्यम् । एवं प्रत्यर्थवर्णान्तरवशादपि द्रष्टव्यम् । पदश्लेषे त्वस्या-न्तर्भावः कैश्चिदुक्तः, स्थूलदृशं वर्णभेदादेवार्थभेदात् तद्व्यतिरिक्तस्य प्रकृतिप्रत्ययभागस्य [च] साधारण्यात् ।

## दीपिका

अक्षरशब्दार्थः वर्णेत्यनेनादिशब्दार्थश्च पदेत्यादिना व्याचष्टे—स चेति । प्रत्ययग्रहणेनैव विभक्तिसंग्रहे गोबलीवर्दन्यायेन पृथगुक्तिः । यद्वा प्रत्यनान्तरसाध्यविच्छित्तिसम्भवादित्येके । तन्न, विभक्तिशब्देनात्र सुप्तिङन्ताभिधानस्यैव स्फोरयिष्यमाणत्वात् । विभक्त्यादिविभागेन वर्णनामेकाकारत्वे वर्णश्लेषः । यथा विधाविति ।

## दर्पणः

यथोदाहृते—"अलङ्कारः शङ्केत्यादौ । विधाविति । विधौ चन्द्रे विधातरि वा । अत्र विधुविधिशब्दोत्तरस्थितयोरुकारकारयोः सप्तमीविभक्तियोगादौकाररूप [?] एकारोरिकारः ।

## साहित्यचूडामणिः

अथैनं रुद्रटदृष्ट्या विभजते—स इति । वर्णादीनां भेदादष्टविधः ।

अलंकार इति । विधौ वक्रे प्रतिकूलस्वाभावे विधातरि मूर्ध्नि स्थितवतीति लोकोक्तिः, तत्त्वतस्तु विधौ बालचन्द्रे कुटिलाकारे मौलौ स्थितवतीति । अत्र विधिर्विधुरिति द्वयोः श्लेषः, विधाविति यौगपद्येनोक्तत्त्वात् ।

## सम्प्रदायप्रकाशिनी

क्रमेणोदाहरति—अलङ्कार इत्यादिना । शङ्काकरम् एतद्योगी किमभिगम्यो न वेति शङ्काकृदित्यर्थः । विधौ कर्मणि । वक्रे अभिलषितार्थपरिपन्थिनि । मूर्ध्नि स्थितवति परिपाकोन्मुखतया प्रत्यासन्ने । अन्यदा विधौ चन्द्रे । अत्र विधिविधुशब्दयोः सप्तमीविभक्तावन्त्यवर्णयोः श्लेषः ।

## मधुमती

वर्णश्लेषमुदाहरति—अलङ्कार इति । अत्र विधौ इति विधिविधुशब्दयोः सप्तम्येकवचने सारूप्यमित्यर्थः ।

## विस्तारिका

अलङ्कार इत्यादि । विशीर्णाङ्ग खञ्जः । शृङ्गी नन्दी, अतिजरद्गवत्वेन मूल्याल्पत्वम् । तिष्ठतीति स्थाणुर्नित्यः । विधौ चन्द्रे दैवे च । वक्रे कुटिले विरुद्धफले च ।

अत्रौकारतां प्राप्तवतीरिकारोकारयोः श्लेषणमिति तदवधान एवार्थद्वयावगमः । एतेन युगपदेनकशब्दोच्चारणं वर्णानामभेदात् शक्तिशक्यतावच्छेदकयोर्भेदादर्थभेदः ।

## सारबोधिनी

अलङ्कार इत्यादि । विधौ चन्द्रे अथ च दैवे । मूर्ध्नि मस्तके अथ च सर्व परिभूय स्थिते । वक्रे कुटिले अथ विरुद्धफलप्रदे । अत्रौकारतां प्राप्तवतोरिकारोकारयोः श्लेषणम् ।

**काव्यप्रदीपः**

अथ वर्णश्लेषो यथा—

**'अलंकारः शङ्काकरनरकपालं परिजनो**
**विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुदवयाः ।**
**अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-**
**र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥'**

अथ विधावित्यत्र विधिविधुशब्दयोरिकारोकारयोर्भेदाद्वर्णश्लेषः ।

**आदर्शः**

(१) अलङ्कार इति । वक्रे कुटिले विधौ चन्द्रे मूर्ध्नि स्थितवति सति सर्वामरगुरोः स्थाणोर्महेशस्यापीयमवस्था, वयममी पुनर्विधौ भाग्ये मूर्ध्नि वक्रे प्रतिकूले स्थितवति सति सुतरां तादृशावस्थाप्राप्तियोग्या एवेत्यर्थः । विधाविति शब्दैक्याद्विधुभाग्ययोः, वक्र इति शब्दैक्यात् कुटिलप्रतिकूलयांश्चैकत्वाभ्यासादिदमुपपादनीयम् । स्थाणोरवस्थामाह—अलङ्कार इति । शङ्का अशुचित्यशङ्का, भृङ्गिनामा विशीर्णाङ्ग कश्चित् परिजनः । गतवया एको वृषश्च वसु धनमिति । अत्र विधुविधिशब्दान्त्यस्वरात्मकैकवर्णभेदेऽपि सप्तम्यापैकरूप्यम् ।

**सुधासागरः**

अक्षरादिभिरिति व्याचष्टे—स चेत्यादि । स श्लेषो वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचन-भेदादष्टधेत्यर्थः । तत्र वर्णश्लेषो यथा—अलङ्कारेति ।

शिखरिणी छन्दः । विधौ चन्द्रे दैवे च मूर्ध्नि स्थितवति सर्व परिभूय स्थिते च, वक्रे कुटिले विरुद्धफलप्रदे च सति, सर्वामरगुरोः सकलदेवश्रेष्ठस्य स्थाणोः महेश्वरस्यापीयं वक्ष्यमाणरूपावस्था भवति, वयं पुनरमी कोटकल्पाः के न केपीत्यर्थः । अवस्थां दर्शयति-अलङ्कारो भूषणं शङ्काकरं भयप्रदं नरकपालम्, परिजनः सेवकलोको विशीर्णानि बुभुक्षावशात्स्वयमेव भक्षितानि अङ्गानि स्वावयवानि येन तथाभूतो भृङ्गी गणविशेषः । वसु द्रव्यं च वृषभः सोऽप्येकः, सोऽपि बहुवयाः जरत्तर इत्यर्थः ।

**पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव।**
**विलसत्करेणुगहनं संप्रति सममावयोः सदनम्॥ ३७०॥**

---

### सङ्केतः (रुय्यकः)

[पृथुकार्तस्वरमिति] पृथुकानां बालानां ये आर्त्ताः स्वरास्तेषां पात्रं, पृथनि कार्त्तस्वरस्य सुवर्णस्य पात्राणि भाजनानि च यत्र। भुवि उषितो। भूषितोऽलङ्कृतश्च। विलसत्कैः गर्त्तसम्बन्धिभिः। '(रेणुभिः) पांशुभिर्गहनं, विलसन्तीभिः करेणुभिर्व्याप्तञ्च।

### बालचित्तानुरञ्जनी

पदश्लेषमुदाहरति पृथुकेति। दरिद्रस्य वचनम्। देव हे राजन्! आवयोर्गृहं सदृशम्। पृथुकानां बालकानां दुःखितस्वराणाम् पात्रं स्थानम्। पृथूनि स्थूलानि, कार्तस्वरस्य सुवर्णस्य पात्राणि भाजनानि यत्र। भुवि उषितः भूषितः अलङ्कृतश्च। बिलसदो मूषकाः, तेषां कुट्टितैः रेणुभिर्व्याप्तं, विलसन्तीभिः करेणुभिः गहनम्। पृथुकविशिष्टस्यार्तपदस्य पृथुविशिष्टकार्तस्वरपदस्य च श्लेषः। एवमितरत्रापि द्रष्टव्यम्।

### काव्यादर्शः

पृथुकानां बालानां ये आर्ताः स्वरास्तेषां पात्रं पृथुनि कार्तस्वरस्य भाजनानि यत्रेत्यादिपदानां भङ्गः।

### विवेकः

यत्र तु पदभङ्गे विभक्तियोगसमासयोगौ विभक्तौ भवतः स पदश्लेषः—यथा पृथुकार्तस्वरपात्रमित्यादि प्राग्व्याख्यातमेव।

### दीपिका

अत्र हि विधु विधिशब्दयोरेकदेशयोरिकारोकारयोः सप्तमीविभक्तियोगादौकाररूप एकरूपो विकारः। अस्य च केचित् पदश्लेषान्तर्भावमाहुः। विभक्त्यादिश्लेषाभावादेववर्णाधीनत्वाच्च। नेति ग्रन्थकृदभिसन्धिः। यत्र पदभङ्गे विभक्तिसमासवैलक्षण्यप्रतीतिः स पदश्लेषः प्रागेव व्याख्यातः।

### दर्पणः

यत्र पदभंगे विभक्तिसाम्यवैलक्षण्यप्रतीतिः स पदश्लेषः। यथा—पृथ्वीति [पृथु + इति]। अस्यार्थः प्रागेव व्याख्यातः। विभक्त्यादिवैलक्षण्याभावे च प्रकृति श्लेषः यथा हृदिज्ञेवुच वक्ष्यतीत्यादौ स्त्रीनपुंसकाद्यैक-लिङ्गश्लेषः यथा तटीति हधातोः [कृधातोः] परस्मैपदे द्विवचन हितं श्रेयः, ईहितं वाञ्छितम्।

### साहित्यचूडामणिः

पृथुकेति । व्याख्यातम् । पृथुपदविशिष्टकार्तस्वरपात्रस्य, पृथुकशब्दविशिष्टार्तस्वरस्य च पदयोः श्लेषः । एवमुत्तरत्रापि ।

### सम्प्रदायप्रकाशिनी

पृथुकेति । व्याख्यातं प्राक् । अत्र पृथुकार्तस्वरमिति पृथुकानामार्तस्वर इति पदानाम् ।

### मधुमती

पृथुकेति । पृथुकार्तस्वरपात्रं इत्यत्र पृथु कार्तस्वरमयं—हेममयं पात्रं यस्मिन्नति, पृथुकानां बालानां आर्तस्वरस्य पात्रं स्थानमिति च पदभङ्गेन समासभेदेन च भिन्नयोरपि सारूप्यप्रतिभासः ।

### विस्तारिका

पृथुकार्तेति । आवयोस्तव मम च पृथु स्थूलं कार्तस्वरस्य सुवर्णस्य पात्रं घटादिकं यत्र । पृथुकानां शिशूनाम् आर्तस्वरस्य क्षुत्प्रभवकातरोच्चारणस्य पात्रमधिकरणं च भूषायुक्तः सकलपरिजनो दासादिको यत्र । आस्तरणाभावाद् भूमावुषितश्च । करेणवो हस्तिनो हस्तिन्यो वा । विले गर्ते सीदन्ति इति विलसत्का उन्दुरास्तेषां रेणवस्तैर्गहनमित्यपि ।

ननु 'पृथुकार्त' इत्यादौ वाक्यत्वेन कथं पदश्लेषता ? मैवम्, वैयाकरणनैयायिकादिनये समासे वृत्त्यन्त-रोपगमेन पदत्वात्, वृत्तिमत एव तत्त्वात् । वृत्तिविषयतावच्छेदकभेदादर्थभेदः ।

### सारबोधिनी

पृथुकार्तेति । व्याख्यातं सप्तमे ।

### काव्यप्रदीपः

पदश्लेषो यथा—

**'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।**
**विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥'**

अत्र पृथुकानां बालानामार्तस्वरस्य पात्रम् । पक्षे पृथु बहुलं कार्तस्वरस्य पात्रं यत्रेत्यादिक्रमेण पदभेदा-त्पदश्लेषोऽयम् ।

### आदर्शः

पदश्लेषमाह—पृथुकेति । न्यूनाधिकवर्णकयोःपदयोर्भेदेऽपि मिलनादैकरूप्यं तत्त्वम् । पृथुकेति, व्याख्यातमिदं दोषोल्लासे (३८८ पृः) । अत्र पृथुकादिपदानां न्यूनाधिकवर्णानां भेदेऽपि मिलनादैकरूप्यम् ।

### सुधासागरः

अत्र विधावित्यत्र विधिविधुशब्दयोरिकारोकारयोरौकारतां प्राप्तयोर्भेदाद् वर्णश्लेषः । पदश्लेषो यथा—पृथुकेति ।

व्याख्यातमिदं सप्तमोल्लासे । अत्र पृथुकानां बालानामार्त्तस्वरस्य पात्रं पक्षे पृथु विपुलं कार्त्तस्वरस्य पात्रं यत्रेत्यादि क्रमेण पदभेदात्पदश्लेषोऽयम् ।

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी

ध्यानलम्बनतां समाधिनिरतैर्नीते हितप्राप्तये।

लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती

युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ ३७१ ॥

एष वचन श्लेषोऽपि ।

---

सङ्केतः

भक्तीति । 'भवे भवे त्वद्दर्शनं भूयात्' इत्यादिप्रकारेण भक्तिप्रह्वाणां विलोकनयाच्चावती । दृक्पक्षे—भक्तावलोकने स्नेहवती । नीलोत्पलस्य स्पर्धिनी कृष्णतया चारुतया च । हितप्राप्तये नीते । नीता च ईहितप्राप्तये । महानिधी इति प्रथमायां 'रो रे लोपः' इति लोपः दीर्घश्च । वचनेति । अत्र स्त्रीक्लीबलिङ्गयोः द्विवचनैकवचनयोश्च शिलष्टता इत्यर्थः ।

सङ्केतः (रुय्यकः)

भवतीति । नीलेहितप्राप्तये इति च महानिधी इति च वचनश्लेषोऽपीति—अत्र नपुंसकस्त्रीलिंगयोर्द्विवचनैकवचनयोश्च श्लेषः ।

बालचित्तानुरञ्जनी

लिङ्गश्लेषमुदाहरति भक्तीति । हरेः नेत्रे तनुर्वो युष्माकं संसारार्त्तिशमनं कुरुताम् । कीदृशी नेत्रे भक्तिप्रह्वकर्मकविलोकनप्रणयिनी, कीदृशी तनुश्च, भक्तिप्रह्वकर्तृकविलोकनप्रणयिनी । नीलोत्पलस्पर्द्धित्वं नेत्रपक्षे संनिवेशवैशिष्ट्येन तनुपक्षे श्यामत्वादिमात्रेण । नेत्रपक्षे हितप्राप्तये अनुकूलार्थसिद्धये नीते । तनुपक्षे नीता ईहितप्राप्तये । नेत्रपक्षे महानिधी इति द्विवचनम् । पक्षे महानिधिः । ढ्रलोप इति दीर्घः । लक्ष्मीदृशोः रसिकतां तन्वती । नेत्रपक्षे कुरुतामिति लोट् परस्मैपदद्विवचनम् । तनुपक्षे आत्मनेपदैकवचनम् । अत्र नपुंसकस्त्रीलिङ्गयोः श्लेषः । एकवचनद्विवचनयोश्च श्लेष इत्याद्यूह्य इति ।

काव्यादर्शः

'भक्ती' ति । अत्र 'नीता' इति ईहितप्राप्तये इति च स्त्रीनपुंसकलिङ्गयोः श्लेषः ।

**'महानिधिः' इति चैकवचनद्विवचनश्लेषोऽपि । भाषाश्च—**

**संस्कृतप्राकृतमागधपिशाचभाषाश्च शौरसेनी च।**

**षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः ॥ इति षट्।**

### विवेकः

'स्त्रीनपुंसकानां शब्दानां यत्र यत्र वचनलघुत्वदीर्घत्वसमासैः सारूप्यं स लिङ्गश्लेषो यथा भक्तीत्यादि । नीतेहितप्राप्तये इति च महानिधी इति च वचनश्लेषोऽपी'ति ।

### दीपिका

स्त्रीनपुंसकादीनां यत्र दीर्घत्वसमासादिभिरैकरूप्यं स लिङ्गश्लेषः । यथा भक्तीति नीतेहितस्य श्रेयसः प्राप्तये नीता ईहितस्य वाञ्छितस्य प्राप्तये, तनुपक्षे महानिधिरिति विसर्गस्य रसिके रेफे परे लोप उपधादैर्घ्यञ्च । कुरुतामिति परस्मैपदद्विवचनात्मनेपदैकवचनयोरैकरूप्यम् ।

एवं प्रणयिनी इत्यादावपि स्त्रीलिङ्गैकवचननपुंसकद्विवचनयोरित्याह—एष इति । एवं भाषाश्लेषाद्याद्युदाहरणेऽपि पदश्लेषादियोगो ज्ञेयः । यत्र सभङ्गाभङ्गरूपेणैकभाषासङ्गतिः स भाषाश्लेषः ।

### दर्पणः

कुरुतामिति [भवतीति] पक्वाः [प्रह्वाः] प्रवणाः, मात्मानेपदे एकवचनञ्च ।

अत्र प्रणयिनीत्यादौ नपुंसकलिङ्गद्विवचनस्त्रीलिङ्गैकवचनयो रयोक्तया [एकोक्त्या] द्विवचनश्लेषोऽपीत्याह एष इति । एवं भाषाश्लेषादुदाहृतौ पदादिश्लेष योगोज्ञेयः ।

### साहित्यचूडामणिः

भक्तीति । विलोकनं प्रति नेत्रपक्षे भक्तिग्रहाः कर्मभूता तनुपक्षे तु कर्तारः । नीलोत्पलस्पर्धित्वं सन्निवेशादिवैशिष्ट्येन श्यामलिममात्रेण च । नपुंसकपक्षे हितप्राप्तये अनुकूलार्थसिद्धये, अन्यथा पुनरीहितस्याभिलषितस्य प्राप्तये ।

महानिधी रसिकतामित्यत्र तनुविशेषणैकवचनत्वे "ढ्रलोपे—(६-३-१११) इति दीर्घः । कुरुतामिति लोटि परस्मैपदे द्विवचनम्, आत्मनेपदे पुनरेकवचनम् ! वाकारः समुच्चये ।

### सम्प्रदायप्रकाशिनी

भक्तिप्रह्वेति । भक्तिप्रह्वानां विलोकने प्रणययुक्ते इति नेत्रापेक्षया नपुंसकलिङ्गद्विवचनं, प्रणययुक्तेति तन्वपेक्षया स्त्रीलिङ्गैकवचनम् । एवमुत्तरत्रापि । नीते हितप्राप्तये, नीता ईहितप्राप्तये इति च । निधी रसिकतां, निधिः रसिकतामिति च सन्धेरैकरूप्यम् । कुरुतामिति नेत्रापेक्षया परस्मैपदद्विवचनं, तन्वपेक्षयात्मनेपदैकवचनम् । कर्त्रभिप्रायत्वं वैवक्षिकम् । तनुर्वेति वाशब्दः समुच्चये, न तु विकल्पे । न ह्यन्तरतोऽभिमतार्थमाशास्ते, अपि तु प्रतिपत्तिदार्ढ्येनोभयतोऽपि । अत्र लिङ्गश्लेषः स्फुटः ।

लाघवाय श्लेषान्तरमप्युदाहृतमित्याह—एष वचनेति । नानयोर्लिङ्गवचनयोर्नित्यसंसृष्टता, विविक्तविषयतायाः सुलभत्वात् ।

### मधुमती

लिङ्गश्लेषमुदाहरति—भक्तीति। हितप्राप्तये ध्यानालम्बनतां नीते इति नेत्रपक्षे, ईहितप्राप्तये नीता इति तनुपक्षे। महानिधी इति नेत्रपक्षे; महानिधिः रसिकतामिति तनुपक्षे—'ढ्रलोपे पूर्वस्य दीर्घेऽणः' इति दीर्घः। कुरुतामिति एकवचनद्विवचनयोः श्लेषः। अत्र नीते इति निधि इति च वर्णश्लेषः। शेषेषु लिङ्गश्लेषः इति बोद्धव्यम्।

### विस्तारिका

भक्ति इत्यादि। वाकारः समुच्चये। भक्तिः परानुरक्तिः। विलोकनस्य कर्म कर्ता च। स्पर्धमत्त्वर्थी-याभ्यां रूपं नीलोत्पलेति। तनुपक्षे ताच्छिल्ये णिनिः। नीते नीता च, हितमीहितं च, निधी निधिश्च तन्वती इति नेत्रपक्षे ओकारस्येकारताप्राप्तिः।

अत्र स्वरूपसाम्येन नपुंसकस्त्रीलिङ्गयोः श्लेषः। आनुपूर्व्या एकत्वेऽपि स्त्रीनपुंसकाभ्यामर्थद्वयावगम इति तन्मूलयोर्व्यवहारः।

एष इति। वचनयोर्द्वित्वैकत्वाभिधानादनयोस्तत्सहकारेण लिङ्गेन तद्बोधनात्। एवं स्त्रीत्वादावपि। अत एवामी सर्वे लिङ्गार्था इति।

### सारबोधिनी

भक्तीति। वाकारः समुच्चये। भक्तिप्रह्वो विलोकनस्य कर्म कर्ता च। नीलोत्पलेति। तनुपक्षे ताच्छील्ये णिनिः। नीते नीता च। हितं ईहितम् च। निधी निधिश्च। तन्वतीति। नेत्रपक्षे औकारस्य ईकारताप्राप्तिः। तनुपक्षे ङीप् च। कुरुतामिति। नेत्रपक्षे परस्मैपदद्विचनम्। तनुपक्षे आत्मनेपदैकवचनम्। अत्र रूपसामान्येन नपुंसकस्त्री-लिङ्गयोः श्लेषः। आनुपूर्व्या एकत्वेऽपि स्त्रीनपुंसकाभ्यामर्थद्वयावगम इति तन्मूलको व्यवहार इति। एष इति। द्विवचनैकवचनयोः सारूप्यादिति शेषः।

### काव्यप्रदीपः

लिङ्गवचनयोः श्लेषो यथा-

> 'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
> ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये।
>
> लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
> युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः॥'

अत्र प्रणयिनी इति स्त्रियां प्रथमैकवचनं नपुंसके तद्द्विवचनं चेति लिङ्गवचनोयः श्लेषः। एवमग्रेऽप्यूह्यम्।

## आदर्शः

(३,८) लिङ्गश्लेषं वचनश्लेषञ्चैकत्रैवोदाहरति—भक्तीति। विभिन्नलिङ्गयोर्विभिन्नैकद्वयादिवचनान्तयोश्चैकरूप्यं तत्त्वद्वयम्। हरेर्नेत्रे नेत्रद्वयं तनुर्वा युष्माकं भावर्त्तिशमनं कुरुताम्। पञ्चम्याः (लोटः) परस्मैपदद्विवचने आत्मनेपदैकवचने चेदं रूपम्। नेत्रयोस्तनोश्च विशेषणान्याह—भक्तिप्रह्वेति। भक्तिप्रह्वो भक्तिनम्रः। नेत्रपक्षे तत्कर्मकं तनुपक्षे तु तत्कर्तृकं विलोकनम्, तत्र प्रणयिनी वत्सले वत्सला च। नीलेति नेत्रपक्षे आकारस्य वर्णस्य च, तनुपक्षे तु वर्णस्यैव साम्यम्। ध्यानेति। नेत्रपक्षे समाधिनिरतैर्योगिभिर्ध्यानालम्बनतां ध्येयतां हितस्य प्राप्तये नीते, नेत्रयोरपि ध्येयतत्वात्। तनुपक्षे तु ईहितस्य वाञ्छितस्य प्राप्तये तथातां नीतां। महानिधी महाश्रयौ महानिधिर्महाश्रयश्च। रेफे परे विसर्गस्थानीयस्य रेफस्य लोपे दीर्घः। लक्ष्मीदृशो रसिकतां तन्वाने तन्वाना च। उभयस्यैव लक्ष्म्या हर्षेण दृश्यमानत्वात्। अत्र महानिधी इति विना सर्वत्रैव नपुंसकलिङ्गस्त्रीलिङ्गयोरैकरूप्यम्। एकद्विवचनान्तयोरैकरूप्यं तु सर्वत्रैव, तदाह—एष एव चेति। अत्र च महानिधी इत्यत्र कुरुतामित्यत्र च लिङ्गश्लेषं विनापि वचनश्लेषः। 'हरिस्तन्नाम चाघनुत्' इत्यादौ वचनश्लेषं विना लिङ्गश्लेषो बोद्धव्यः।

## सुधासागरः

लिङ्गवचनयोः श्लेषो यथा— भक्तीति।

शार्दूलविक्रीडितं छन्दः। वाशब्दः समुच्चये, हरेर्विष्णोर्नेत्रे चक्षुषी तनुश्च युष्माकं भवार्त्तिशमनं कुरुतामित्यन्वयः। उभयोः श्लिष्टविशेषणान्याह किम्भूते नेत्रे, भक्त्या ये प्रह्वा—नम्रास्तेषां विलोकने सदयावलोकने प्रणयोऽनुरागो ययोस्ते भक्तिप्रह्वविलोकनप्रणयिनी भक्तविलोकनकर्तृणी इत्यर्थः। तनुपक्षे भक्तिप्रह्वानां विलोकनप्रणयो दर्शनानुरागो यस्यां सा, भक्तावलोकनकर्मभूतेत्यर्थः। नीलोत्पलस्पर्द्धिनी इन्दीवरानुकारिणी, तनुपक्षे नीलोत्पलं स्पर्द्धितुं शीलं यस्याः सेति, ताच्छील्ये णिनिः। समाधिनिरतैर्योगिभिर्हितप्राप्तये शुभावाप्तये ध्यानलोकनतां ध्यानगोचरतां नीते प्रापिते। पक्षे ईहितप्राप्तये वाञ्छितसिद्धये ध्यानालोकनतां नीता। लावण्यस्य सौन्दर्यस्य महानिधी अपरिमिताधारभूते। पक्षे निधीति ढ्रलोपदीर्घः, लक्ष्मीदृशोः रसिकतां तन्वतीति शत्रन्तनपुंसकस्य द्विवचनम्। तनुपक्षे स्त्रियामेकवचनम्। कुरुतामिति परस्मैपदद्विवचनमात्मनेपदैकवचनं चेति द्रष्टव्यम्। अत्र प्रणयिनीति स्त्रियां प्रथमैकवचनं नपुंसके तद्द्विवचनं चेति लिङ्गवचनयोः श्लेषः।

एवमग्रेऽप्यूह्यम्। एष वचनश्लेषोऽपि।

**महदे सुरसन्धम्मे तमवसमासङ्गमागमाहरणे।**

**हरबहुसरणं तं चित्तमोहमवसर उमे सहसा ॥ ३७२ ॥**

### सङ्केतः

महदे इति। हे उमे! महदे! उत्सवदे! आगमाहरणे आगमानपलापिनि! सुरैः सन्धा सन्धानं यस्य तादृशं समासङ्गं विषयप्रसङ्गं अब रक्ष। यद्वा—आगमस्य स्वीकारे समासङ्गं विघ्नं रक्ष। तथा बहुसरणं बहुव्यापकं चित्तमोहं अवसरे काले हर स्फोटय इति संस्कृतपक्षः। प्राकृतपक्षे तु—हे हरवधु! शम्भुपत्नि! मम देहि रसं धर्मे तमोवशां आशां गमागमात् भवात् हर स्फोटय। तथा नः अस्माकं शरणं त्वं, चित्तमोहः अपसरतु मे सहसा बलेन। प्राकृतत्वात् चित्तमोहमित्यत्र क्लीबत्वम् एवं संस्कृतस्य अपभ्रंशादिभाषाश्लेषोऽपि ज्ञेयः।

### सङ्केतः (रुय्यकः)

महदे उत्सवदे, सुरैः सन्धानं यत्र, (मे मम) तम् अव रक्ष, समासङ्गम्, आगमाहरणे आम्नायस्वीकारे, हर निवारय, बहु प्रभूतम् (सरणं) प्रसरणं यत्र तम्, चित्तस्य मोहमज्ञानम्, अवसरे काले उमे गौरि सहसा झगित्येव। अस्यार्थः—मम देहि रसं धर्मे तमोवशाम् आशां गमागमात् संसारात्, हरणः, हरबन्धु शभुपत्नि, शरणं त्वं चित्तमोहः अपसरतु मे, सहसा बलेन।

### बालचित्तानुरञ्जनी

संस्कृतप्राकृतवचनभाषाश्लेषमुदाहरति महद इति। हे महदे उत्सवदे, उमे गौरि, मे मम सुराणां देवानां संधा संधानं सम्यग्ज्ञानं यत्र तं आगमानां वेदशास्त्रादीनाम्, आहरणे स्वीकारे समासंग संसक्ति, अव रक्ष। किं च बहुसरणं अधिकप्रसारं तादृशं वित्तमोहम्, अवसरे उचितकाले, सहसा शीघ्रं, हर क्षपय इति संस्कृतभाषा। हरबहु वारं वारं रितं त्वं सरणं शरणं, मह मम धर्मे रतिं प्रीतिं देसु दिश्यतु अस्माकम्। तमवसं तमोवशां तमोगुणयुक्तां असं आसां इच्छां। गमागमा गमागमात् संसारान् हर अपनय। मे मम चित्तमोहं चित्तमोहः मोहशब्दस्य गुणवादित्वात् क्लीबे गुणगा इति सूत्रेण पक्षे नपुंसकत्वम्। सहसा बलेन। अवसरउ अपसरतु इति प्राकृतभाषा द्वयोः श्लेषः।

### काव्यादर्शः

तासां भिन्नार्थत्वे युगपदुक्तिः श्लेषः। तत्र संस्कृतप्राकृतयोः, यथा—'महे' ति। कश्चित् ध्यानानीतां गौरीं प्रत्याह। 'महदे उत्सवप्रदे सुरे सन्धा प्रतिज्ञा यत्र, देवविषयमित्यर्थः। मम तमुत्कृष्टम्। अवरक्ष। समासङ्ग अभिप्रेतं आगमाहरणे आगमस्वीकारे। तथा हर निवारय। बहु प्रभूतं सरणं प्रसरणं यत्र तं चित्तस्य मोहमज्ञानं, अवसरे काले उमे गौरि सहसा झगित्येव'। प्राकृतेऽन्योर्थः। 'मम देहि रसं धर्मे तमोवशां तमः परिभूतामाशां गमागमात् संसाराद् हर। ण इति नः। तथा हे हरवधु शम्भुपत्नि शरणं त्वम्। चित्तमोहोऽपसरतु मे सहसा।' 'चित्तमोह' मिति 'गुणाद्याः क्लीवे' इति प्राकृते नपुंसकत्वम्। एवं संस्कृतपैशाच्योः संस्कृतशौरसेन्योः संस्कृताप-

भ्रंशयोः श्लेषो ज्ञेयः । तथा अर्थैक्ये द्विचतुःपञ्चषण्णां भाषाणां युगपदुक्तौ व्यादिभाषाश्लेषोऽपि । तत्र द्वियोगे पञ्चदश, त्रियोगे विंशतिः, चतुर्योगे विंशतिः, पञ्चयोगे षट्, षड्योगे एकः । सर्बमीलने भाषाश्लेषस्य सप्तपञ्चाशद् भेदा भवन्ति । एते च पूर्वोक्ते भाषाश्लेषभेदेऽभिन्नार्थत्वेऽपि सप्तपञ्चाशद् भेदा भवन्ति । एते च पूर्वोक्ते भाषाश्लेषभेदेऽभिन्नार्थत्वेऽपि द्रष्टव्याः ॥

संस्कृतंप्राकृतयोर्योगः, यथा—

**सरले सहास—रागं परिहर रम्भोरु मुञ्च संरम्भम् ।**
**विरसं विरहायासं वोढुं तव चित्तमसहं मे ॥**

एवं संस्कृतमागध्योः संस्कृतपैशाच्योः संस्कृतशौरसेन्योः संस्कृतापभ्रंशयोश्च ज्ञेयम् । एवं द्वियोगान्तरे त्रिचतुःपञ्चयोगेषु चोदाहार्यम् । षड्योगे, यथा—

**अलोलकमले चित्तं ललामकमलालये ।**
**पाहि चण्डि महामोहभङ्गभीमवलामले ॥**

'हे चण्डि देवि रक्ष । अचपललक्ष्मि मनः प्रधानपद्मालये । महामोहस्य जन्म-लक्षाभ्यस्ताया अविद्याया भञ्जने यदुग्रं बलं तेन अकलङ्के ।

### विवेकः

महानिधिस्ततो रसिकतामिति सन्निधेः 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (पा. ६/३/१११) इति दीर्घत्वे रूपं स्फुटमेव । एवं कुरुतामित्यात्मनेपदे तामिति झेरन्त्यादेशे च तुल्यं रूपम् । वचनश्लेषोऽपीति द्विवचनैकवचनयोः । सारूप्याद्यत्र भिन्नभाषाणां वाक्यानि यावदर्थमुच्चार्यन्ते स भाषाश्लेषो यथा—महदे इत्यादि । 'महदे उत्सवदे सुरसन्धं सुरैः सन्धानं यत्र मे मम तम् अव रक्ष । समासङ्गम् । आगमाहरणे आम्नायस्वीकारे, हर निवारय बहु प्रभूतं सरणं प्रसरणं यत्र तम् । चित्तस्य मोहमज्ञानं, अवसरे काले, उमे गौरि, सहसा झगित्येव । अन्योऽर्थः—-मम देहि रसं धर्मे तमोवशामाशां गमागमात् संसारात् हर नः हरवधु शम्भुपत्नि शरणं त्वं चित्तमोहः अपरसरतु मे सहसा बलेन' (रु. सं. ५७ पृ:) ।

### दीपिका

तत्राद्यो यथा महेति । महदे उत्सवदे सुरसन्धं देवसहितं मे मम तं समासङ्गम् आग्रहम् आगमाहरणे विद्योपादाने, अव रक्ष । उमे गौरि अवसरे समये बहुसरणं तं चित्तमोहं हृदयतमो हर अपनय । एतञ्च संस्कृते । प्राकृते तु-मह मम देसु दत्तां रसं रतिं धम्मे धर्मे तमवसं तमोवशाम् आसं आशां गमागमा गमागमात् संसारात् । हर अपनय । बहुप्रकृष्टमास्तरणं शरणं तम् हरबहु हरवधु इति वा । चित्तमोहं चित्तमोहः, प्राकृते लिङ्गनियमाभावात् । अवसरउ अपसरतु । मे मम सहसेति । द्वितीयं यथा—

**"चारुसमीरणरमणे हरिणकलङ्ककिरणावली सविलासा ।**
**आरब्धराममोहा वेलासूले विभावरी परिहीणा ॥'**

लेशः शरीरादीनां वेशः, अर्थभेदेन चात्र भाषाभेदमात्रत्वेन श्लेषत्वमङ्गीक्रियते ।

## दर्पणः

एकत्रानेकाभाषासङ्गतौ भाषाश्लेषो यथा महदे इति । महदे उत्सवदेहे, उमे पार्वति मे म [मे मम] आमाहरणे [आगमाहरणे] विद्यादाने, तं समागम [समासङ्गं] समासक्ति अव रक्ष स्थिरीकुर्वित्यर्थः । स्वरसंधमिति [सुरसंधम्मे इति । सुरैर्देवैः, संधा संधानम्, येन विद्यारम्भस्य स्वर्गव्यापिहेतुत्वात्, अवसरे, बहुसरणं बहुप्रसारितम्, चित्तमोहं चित्तभ्रमं, हर अपनयेति संस्कृते ।

प्राकृते तु मह मम, मह्यमित्यर्थे चतुर्थे षष्ठी । देहि, रसं धर्मे तमवसं तमोवशां आसं आशां, समागमात् [संगमागम] संसारात्, धनादिगृहगमागमाभ्यां, विशीष्टार्था इत लः [?] हरवधूपवणं तं [त्वं] चित्तमोहःअपसरतु मे महसा [महदा] मोहशब्दात् प्राकृतरसात् [प्राकृतवशात्] लिङ्गविपर्ययः ।

यस्तु चण्डिदासपण्डितैः—

"चारसमीचरणरमणे हरिणकलङ्कं किरलावली सविलासा" इत्यादि भाषाश्लेषे । विभक्त्यादिवैलक्षण्याभावे च प्रकृतिश्लेषः । यथा 'हृदि ज्ञेषु च वक्ष्यति' इत्यादौ ।

उदाहृतं तदयुक्तं अनुद्वयाभावात् । अत एव मम साहित्यदर्पणे तथाविधोदाहरणे शब्दैरेकविधैरेव भाषास्वविद्यास्वपि[?]' वाक्यं यत्र भवेत्सोऽयं भाषासम इतीष्यतीति भिन्नोऽलङ्कारः उक्तः ।

## साहित्यचूडामणिः

महदे इति । हे उमे ! गौरि ! महदे उत्सवदे । आगमानमाम्नायानामाहरणामानयनं यथा । मे मम सुरसन्ध सुराणां देवानां सन्वेव सन्धा प्रतिज्ञा यत्र समासङ्गो भक्तिः तम् अव पालय । किञ्च बहुसरणमनेकप्रसरणं चित्रमोहं हृदयाकालुष्यम् अवसरे तदुचिते काले हर क्षपयेति संस्कृतम् । प्राकृतं तु—

**मम दत्स्व रसं धर्मे तमोवशमाशां गमागमाद्धरैताम् ।**
**हरवधु ! शरणं त्वं चित्तमोहोऽऽपसरतु मे सहसा ॥ इति ।**

हे हरवधु ! त्वं मे शरणं । मम धर्मे रसं प्रीतिं दत्स्व वितर । गमागमात् संसारात् तमोगुणधांनामिच्छां हर अपनय । चित्रस्य मोहः सहसा अपसरतु । प्राकृतत्वाल्लिङ्गव्यत्यासः ।

## सम्प्रदायप्रकाशिनी

महदेति ।

**मह्यं देहि रसं धर्मे तमोवशामाशां गमागमद्धर नः ।**
**हरवधु ! शरणं त्वं चित्तमओघोऽपसरतु मे सहसा ॥**

पुंल्लिङ्गानामपि प्रकृते क्वचिन्नपुंसकलिङ्गत्वमभ्यनुज्ञायते । तेन चित्तमोहमिति नपुंसकता । भो हरवधु, मह्यं धर्मे रसं देहि । तमोवशामविवेकपरतन्त्रामाशां लिप्सां गमागमात् प्रवृत्तिपौनः पुन्यात् हर अपनय, नः निराशान्

कुर्वित्यर्थः। त्वं शरणम्। सहसा सद्यः मे चित्तमओघः चिदावरणानां तमसां प्रवाहोऽपसरतु। संस्कृतापेक्षया महदे उत्सवदे, सुरसन्धं येन सुरैः सन्धानं दैवानुकूल्यं, तम् अव रक्ष। समासङ्गम् आसक्त्यतिशयम्। आगमाहरणे शास्त्राणां स्वीकरणे। हर अपनय। बहुसरणं विविधसंसारयोगिनम्। तमनुभवैकगोचरं दुःखदायिनम्। चित्तमोहं मनोभ्रमम्। अवसरे यथोचितकाले। उमे भवनि। सहसा बलेन। भो महदे उमे आगमाहरणे सुरसन्धं मे समासङ्गमय। बहुसरणं तं चितमोहमवसर सहसा हर।

## मधुमती

भाषाश्लेषमुदाहरति—महदे इति। हे उमे ! महदे उत्सवदे ! मे समासङ्गं आगमाहरणे वेदस्वीकारे अब रक्षेत्यन्वयः। कीदृशम्? सुरसन्धं सुरेण = देवेन सन्धा—सन्धानं यत्र स तथा इत्यर्थः। तं चित्तमोहं अवसरउ अपसारय। कीदृशम्? बहुसरणं विविधसञ्चारप्रवर्तकम्, सहसा झटितीत्यर्थः। प्राकृतपक्षे—सहसा गमागमात् संसारात्। अत एव तमोवशां इत्युक्तम्। हरवधु ! इति सम्बोधनम्। स्पष्टमन्यत्।

## विस्तारिका

महदे इति। हे उमे ! पार्वति ! महदे महमुत्सवं ददातीति तत्सम्बोधनम्। आगमाहरणे वेदविद्योपादाने। समासङ्गं संसक्तिम्। अव रक्षस्व। सुरसन्धं सुराणां देवानां सन्धानं यस्मादसङ्गत्तादृशम्। आसङ्गं ज्ञानमित्यर्थः। मे मम बहुधा सरणं प्रसरणं यस्य तादृशं चित्तमोहं हर। तं प्रसिद्धम्। अवसरे यदावधानं स्यात् तदा। इति संस्कृतपक्षः।

प्राकृतपक्षे—हे हरवधु पार्वति ! चक्षुर्मह मम देसु देहि। रसमौत्सुक्यं धम्मे धर्मे। तमवसं तमोवशाम् अज्ञानान्धानामित्यर्थः। आसम् आशाम्, हर, गमागमाद् गतगतरूपात् संसारात् णे नः अस्माकम्। सरणं तं शरणं त्वं चित्तमोहम्। प्राकृते लिङ्गानियमाच्चित्तमोहः। अवसरउ अपसरतु। मे मम। सहसा झटिति।

अत्र संस्कृतप्राकृतयोर्भाषयोः श्लेषः

## सारबोधिनी

महदे इति। मम देहि रसं धर्मे तमोवशाम् आशां गमागमात् हर नः। हरवधु शरणं त्वं चित्तमोहोऽपसरतु मे सहसा। अत्र संस्कृतप्राकृतयोर्भाषयोः श्लेषः एतत् प्राकृते। संस्कृते तु, महदे उत्सवदात्रि सुराणाम् संधा संधानं ज्ञानं यत्र तं मे अव रक्ष। समासङ्गम् समासक्तिम्। आगमाहरणे वेदविद्योपादाने हर अपनय। बहुधा सरणं यस्य तं प्रसिद्धम्। चित्तमोहम् अवसरे यथा शब्दावधानम्। उमे दुर्गे सहसा शीघ्रम्। अत्र प्राकृतसंस्कृतभाषयोः श्लेषः।

## काव्यप्रदीपः

भाषाश्लेषो यथा—

**'महदे सुरसंधं मे तमव समासङ्गमागमाहरणे।**
**हर बहुसरणं तं चित्तमोहमवसर उमे सहसा॥'**

अत्र प्राकृते ॥

'मम देहि रसं धर्मे तमोवशामाशां गमागमात् हर नः ।
हरवधु शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥'

इत्यर्थकानि पदानि । संस्कृतपक्षे तु—महदे उत्सवदे सुरेण संधा संधानं यस्मात्तं आगमाहरणे समासङ्गमव । बहुसरणं संसाररूपं यस्मात्तं चित्तमोहमवसरे उमे हर सहसा इत्यर्थकानि पदानि ।

### आदर्शः

भाषाश्लेषमाह—महदे इति । अर्थभेदेऽपि संस्कृतप्राकृतादिभाषयोरेकरूप्यं तत्वम् । भाषासमावेशे तु [भाषासमे तु] नार्थभेदः । अत्र संस्कृतप्राकृतयोर्विभिन्नः पदविच्छेदोऽवधेयः । तथा हि—संस्कृतपक्षे 'महदे' इति, 'सुरसन्धम्' इति, 'मे' इति, 'तम्' इति, 'अव' इति, 'समासङ्गम्' इति, 'आगमाहरणे' इति, 'हर' इति, 'बहुसरणम्' इति, 'तम्' इति, 'चित्तमोहम्' इति, 'अवसर' इति, 'उमे' इति, 'सहसा' इति च पदविच्छेदः । तदर्थश्च—हे महदे उत्सवदात्रि ! आगमस्य वेदस्याऽऽहरणे स्वीकरणे तं प्रसिद्धं मे मम समासङ्गम अब रक्ष जनयेति यावत् । कीदृशं समासङ्गम् ? सुरसन्धं सुरान् सन्धत्ते संसर्गिणः कुरुते इत्यातः क-प्रत्ययः, सुरगणसहचारित्वकारकमित्यर्थः । तथा तं प्रसिद्धं चित्तमोहम् अवसरे मृत्युकालरूपे सहसा हर अपनय । कीदृशं चित्तमोहम् ? बहुसरणं निषिद्धानिषिद्धबहुविषयगामिनम् । प्राकृतपक्षे पदविच्छेदस्तु—'मह' इति, 'देसु' इति, 'रसम्' इति, 'धम्मे' इति, 'तमवसम्' इति, 'आसम्' इति, 'गमागमा' इति, 'हर' इति, 'णे' इति, 'हरबहु' इति, 'सरणम्' इति, 'तम्' इति, 'चित्तमोहम्' इति, 'अवसरउ' इति, 'मे' इति, 'सहसा' इति च । तदीयं संस्कृतञ्च—

मम देहि रसं धर्मे तमोवशामाशां गमागमाद्धर नः ।
हरवधु ! शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥

इति बोध्यम् । तदर्थश्च—हे हरवधु ! मम धर्मे रसं देहि, गमागमात् संसारात् तमोवशमाशां नोऽस्माकं हर । त्वं मे शरमं रक्षित्री । सहसा मे चित्तमोहोऽपसरत्विति । अत्र सहसापदं भाषासमावेशः । [भाषासमः] सर्वमन्यदर्थभेदेऽपि भाषाद्वये समानमिति भाषाश्लेषः ।

### सुधासागरः

भाषाश्लेषो यथा—महदेसुरेति ।

संस्कृतपक्षे हे उमे गौरि मम आगमाहरणे विद्योपार्जने तं समसङ्गम् अव रक्ष, अवसरे तं चित्तमोहं सहसा हर, आगमाहरणे कीदृशे, महदे उत्सवदायके सम्बोधनविशेषणमप्येतत् । कीदृशं समासङ्गम्, सुरैः देवैः सन्धानं मिलनं यस्मात्तादृशम्, चित्तमोहम्, बहु अनेकधा सरणं प्रसरणं यस्य तम्, बहु सरणं संसारो यस्मादिति वाऽर्थः ।

अत्र प्रकृतपक्षे हे हरवधु पार्वति त्वं शरणं मम, धर्मे रसं देहि पुण्ये प्रीतिमुत्पादय, नोऽस्माकं गमागमात् संसारात्, तमोवशामाशां हर, मे चित्तमोहः सहसा झटिति अपरसरतु दूरीभवत्वित्यर्थः । इति संस्कृतप्राकृतयोर्भाषयोः श्लेषः ।

**अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति।**

**सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥ ३७३ ॥**

---

### सङ्केतः

वक्ष्यतीति। वहिवच्योरिदं रूपम्। कृत् इति करोतिकृन्तत्योः प्रकृत्योः।

### सङ्केतः (रुय्यकः)

वक्ष्यतीति—धारयिष्यति कथयिष्यतीति चेति वहिवच्यो रूपम्। कृदीति—कृन्तति करोति च।

### बालचित्तानुरञ्जनी

प्रकृतिश्लेषमुदाहरति अयमिति। अमित्राणां शत्रूणां सुहृदां च। सामर्थ्यं कृन्तति करोतीति च कृत् नृपात्मजः। सर्वाणि शास्त्राणि हृदि हृदये ज्ञेषु विद्वत्सु च वक्ष्यति धारयिष्यति [कथयिष्यति च]। अत्र वक्ष्यतीति लृटि वहतेः वक्तेश्च प्रकृत्योः श्लेषः। सामर्थ्यकृदित्यत्र क्विपि करोतेः कृन्ततेश्च प्रकृत्योः श्लेषः।

### काव्यादर्शः

'वक्ष्यती'ति धारयिष्यति कथयिष्यति च। अत्र वहिवच्योः कृन्तति—करोत्योश्च प्रकृत्योर्भङ्गः। स्यति—क्विप्प्रत्ययो च तावेव उभयत्रापि।

### विवेकः

प्रत्ययागमोपपदैरेकैर्यत्र भिन्नानां प्रकृतीनां सारूप्यं स प्रकृतिश्लेषो यथा—अयमित्यादि। अत्र वक्ष्यतीति धारयिष्यति कथयिष्यति चेति बहिवच्यो रूपम्। कृदिति कृन्तति करोति चेति प्रकृतिश्लेषः।

### दीपिका

यत्र प्रत्ययाद्यभेदेन भिन्नप्रकृतिकानामपि पदानां सारूप्यं स प्रकृतिश्लेषः। यथा अयमिति। अत्र वक्ष्यति धारयिष्यति चेति वहिवच्योः, कृदिति कृन्तति करोति चेति कृतिकृञोश्चैकरूप्यम्।

### दर्पणः

यत्र प्रत्यक्षादिभेदाभावे भिन्नप्रकृतिकानां पदानां सारूप्यं स प्रकृतिश्लेषः। यथा अयमिति। अत्र साधाचरिष्यति वदिष्यतीति चरहिवच्छोः[?] सामर्थ्यादित्यत्र चकारत्वेन प्रत्ययद्वारा पदसारूप्यम्।

### साहित्यचूडामणिः

अयमिति । ज्ञेषु विद्वत्सु वक्ष्यतीति वहतेर्वक्तेश्च लृटि रूपम् । सामर्थ्यं कृन्तति करोतीति च सामर्थ्यकृदित्युभयथा प्रत्यय इति प्रकृत्योः श्लेषः ।

### सम्प्रदायप्रकाशिनी

अयं सर्वाणीति । हृदि वक्ष्यति धारयिष्यति, ज्ञेषु विद्वत्सु वक्ष्यति कथयिष्यतीति लृटि वहिवच्योः प्रकृतेरैकरूप्यम् । अमित्राणां सामर्थ्यं कृन्तति, मित्राणां सामर्थ्यं करोति चेति सामर्थ्यकृत् । अत्र कृन्ततिकरोत्योः क्विपि सारूप्यम् । इत्थं तिङ्सुप्प्रकृत्यपेक्षया प्रकृतिश्लेषो द्विधा दर्शितः ।

### मधुमती

प्रकृतिश्लेषमुदाहरति—अयमिति । अत्र बहिवच्योः करोतिकृन्तत्योश्च सारूप्यम् ।

### विस्तारिका

अयमिति । वक्ष्यतीत्यत्र वहिवच्योर्लृटि तुल्यं रूपम् । सामर्थ्यकृदित्यत्र च कृन्ततिकरोत्योः प्रकृत्योः श्लेषः । हृदि ज्ञेषु पण्डितेषु ।

### सारबोधिनी

अयमिति । अत्र वक्ष्यतीत्यत्र वहिवच्योः, सामर्थ्यकृदित्यत्र कृन्ततिकरोत्योः प्रकृत्योः श्लेषः ।

### काव्यप्रदीपः

प्रकृतिश्लेषो यथा—

**'अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति।**
**सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥'**

अत्र वक्ष्यतीति बहिवच्योर्लृटि कृदिति कृन्ततिकरोत्योः क्विपि तुल्यं रूपमिति प्रकृतिश्लेषौ ।

### आदर्शः

(५) प्रकृतिश्लेषमाह—अयमिति । प्रत्ययैक्ये प्रकृतेर्भेदेऽप्यैकरूप्यं तत्त्वम् । अयमिति । राजपुत्रे जाते ज्योतिर्विद उक्तिरियम् । अयं राजपुत्रः सर्वाणि शास्त्राणि हृदि वक्ष्यति, अत्र वह धातुः । ज्ञेषु पण्डितेषु वक्ष्यति; अत्र वच धातुः, प्रत्ययस्त्वेकः । तथा मित्राणाममित्राणाञ्च सामर्थ्यकृत् सामर्थ्यस्य कारकश्छेत्ता च । अत्र कृञ्-कृतीधातू, प्रत्ययश्चैकः ।

### सुधासागरः

प्रकृतिश्लेषो यथा—अयं सर्वाणीति । स्पष्टम् ।

**रजनिरमणमौलेः पादपद्मावलोक-**
**क्षणसमयपराप्तापूर्वसम्पत्सहस्त्रम्।**
**प्रमथनिवहमध्ये जातुचित्त्वत्प्रसादा-**
**दहमुचितरुचिः स्यान्नन्दिता सा तथा मे॥ ३७४॥**

---

### सङ्केतः

सहस्त्रं इति क्रियाविशेषणम्। सहस्त्रशब्दश्च बाहुल्यार्थः। स्यां इति स्यात् इति च। नन्दतीति नन्दिता, नन्दिनो गणविशेषस्य च भावः नन्दिता इति च आख्यातकृत्तद्धितप्रत्यययानां भेदः।

### सङ्केतः (रुय्यकः)

[पादनक्षचनिकक्षणसमयाव्यप्ता प्रर्वसन्या]...सहस्त्रमिति क्रियाविशेषणम्। स्यां स्यादिति च नन्दयतीति नन्दिता नन्दिनो गणविशेषस्य भाव इति तद्धितकृत्प्रत्यययोः।

### बालचित्तानुरञ्जनी

प्रत्ययश्लेषमुदाहरति रजनीति। रजनिरमणश्चन्द्रः मौलौ यस्य तस्य पादपद्मावलोकने यः क्षणसमयः उत्सवकालः, तेन पराप्तं प्राप्तं अपूर्वं संपत्सहस्त्रं यस्मिन् कर्मणि, जातुचित् कदाचित्, प्रमथनिवहमध्ये प्रमथगणमध्ये उचितरुचिः अहं नन्दिता स्याम्। तथा च तत्प्रसादान्मे नन्दिनो भावः नन्दिता स्यात्। अत्रोत्तमपुरुषप्रथमपुरुषप्रत्य-ययोः तृच्तल्प्रत्यययोश्च श्लेषः।

### काव्यादर्शः

प्रत्ययश्लेषः, यथा—'रजनी'ति। 'सहस्त्रम्' इति क्रियाविशेषणम्। 'स्यां स्याद्' इति च। नन्दतीति 'नन्दिता' नन्दिनो गणविशेषस्य च भाव इति तृच्—त—प्रत्यययोः श्लेषः।

### विवेकः

प्रकृतिप्रत्ययसमुदायानां भिन्नानां यत्र प्रत्ययः सारूप्यं स प्रत्ययश्लेषो यथा रजनीत्यादि। पादेनेत्यादिना सहस्त्रंपर्यन्तेन क्रियाविशेषणम् स्यां स्यादिति, च नन्दयतीति नन्दिता नन्दिनो गणविशेषस्य भाव इति च तद्धितकृ-त्प्रत्यययोः' (रु. सं. ५७ पृ.)। तत्र तु नन्दिता नन्दनः स्यां सा चोचिता रुचिस्तथा स्यादिति सम्बन्धः। तृन्प्रत्यये तु अहमुचितरुचिः स्यां नन्दिता मम स्यादिति।

### दीपिका

प्रत्ययद्वारा पदसारूप्यं प्रत्ययश्लेषो यथा रजनीति। पादपद्मावलोक एव क्षण उत्सवस्तत्समये पराप्तं प्राप्तमपूर्वमाश्चर्यभूतं सम्पत्सहस्रं सुखबाहुल्यं यत्रेति। क्रियाविशेषणम्। विसर्गान्तपाठे तु कर्तृविशेषणम्। प्रथमनिवहमध्ये गणसमूहमध्ये। अत्र स्यात् स्यामिति प्रथमोत्तमपुरुषैकवचनयोः सन्धावेकरूपता। अत्र च प्रत्ययांशगतमेकसन्धावैकरूप्यमिति प्रत्ययश्लेषत्वमित्येके। प्रत्ययकृतं वास्तवमेकत्वं नास्ति, किन्तर्हि पदसन्धि-कृतमिति पदश्लेष इत्यपरे।

एतञ्च (एवञ्च) नत्वा (पदा ?) वापोद्वापेनापि पदत्वव्यवस्था न स्यात् अन्यथा वक्ष्यतीत्यादौ सर्वत्र पदश्लेष एव स्यात्।

एतावांस्तु भेदः—क्वचिदेकाकारमेव पदं भवति, क्वचित्तु पदं कृत्वा पश्चादुपाधियोगेनैकाकारं भवतीति। नन्दितेति। तृचि नन्दिनो गमस्य भाव इति तलि चैकरूप्यम्। तत्र च तृचि नन्दकः स्याम्। सा च मे उचिता रुचिस्तथा स्यादिति।

क्वचित्तु—'अहमुचितरुचिः स्याम्। तथा सा नन्दिता मम स्यादित्यर्थः।

### दर्पणः

प्रत्ययश्लेषो यथा [रजनीति] पदापद्मावलोक एव। क्षण उत्सवस्तस्य समवाये प्रथमा [प्रमथाः] शिवगणाः, अहमुचितकविः [अहमुचितरुचिः] संदात्तानन्दकः स्यां तथा सति समनन्दितानन्दित्वं नन्दिनान्या गणनैकत्वं स्यादिति वा। अत्र स्यां स्यादिति च प्रत्यययोः संधिवदैक्यरूप्यम्। नन्दितेति च तृचि तानि चैकरूपं सुप्तिहोः: सारूप्यम्।

### साहित्यचूडामणिः

रजनीति। रजनिरमणमौलेः इन्दुशेखरस्य पादपद्मेत्यादि क्रियाविशेषणम्। क्षण उत्सवः। अहं नन्दिता स्यामिति तृचि रूपम्। अथ च तथा सति मे नन्दिता स्यात् नन्दिनः शैलादेर्भावः स्यादिति तल्प्रत्यये रूपमिति प्रत्यययोः श्लेषः।

### सम्प्रदायप्रकाशिनी

रजनिरमणेति। प्रथमार्धं क्रियाविशेषणम्। स्यामित्येकदोत्तमपुरुषः। अन्यदा स्यादिति प्रथमपुरुषः। नन्दितेत्येकदा तृन्। आनन्दशीलः कदा स्यामित्यर्थः। अन्यदा नन्दिनो भावो नन्दितेति तल्। नन्दित्वं कदा स्यादित्यर्थः।

### मधुमती

प्रत्ययश्लेषमुदाहरति—रजनीति। सहस्रमित्यन्तं स्यादिति क्रियाविशेषणम्। 'सहस्रः' इति पाठः सुगमः। अहं नन्दिता स्याम् इत्यत्र नन्दतीति तृचि रूपम्। सा मे नन्दिता स्यादित्यत्र नन्दिनो भावः इत्यर्थः। तथाच तृचः तलश्च सारूप्यम्।

### विस्तारिका

रजनीत्यादि। अवलोकनमेव क्षण क्षण उत्सवस्तत्समये तत्काले प्राप्तापूर्वसम्पत्सहस्रं यथा स्यात् तथा। प्रमथो गणभेदस्तस्य निवहः समूहस्तन्मध्येऽहं स्याम्। तथासति सानन्दिता आनन्दित्वं गणाधिपत्वं च स्यात्। जातु कादचित्। उचिता रुचिः प्रीतिर्दीप्तिश्च।

अत्रैकत्रैव तिङिस्यादित्युत्तमपुरुषप्रथमपुरुषैकवचनयोः प्रत्ययो श्लेषः।

### सारबोधिनी:

प्रत्ययश्लेषमुदाहरति रजनीत्यादि। अवलोकनमेव क्षण उत्सवः। तत्समये तत्काले। प्राप्तापूर्वसंपत्सहस्रं यथा स्यात्तथा। प्रमथो गणभेदस्तन्मध्येऽहं स्यां सैव मम नन्दिता नन्दित्वम् गणाधिपत्वं स्यात्। जातुचित् कदाचित्। उचिते उचिता वा रुचिः प्रीतिर्दीप्तिश्च। अत्रैकत्र तिङ्गि उत्तमपुरुषप्रथमपुरुषैकवचनयोः प्रत्यययोः श्लेषः। केचित्तु स्यामित्युत्तमपुरुषः स्यादिति प्रथमपुरुषः। नन्दितेति तृजन्तः, नन्दिनो गणविशेषस्य भावः, तलन्तश्च। तथा च त्वत्प्रसादात् कदाचिदपि मे नन्दिनो भावः स्यात्तथा। एवं सति अहमुचितरुचिः स्याम् तया रुच्या नन्दिता नन्दनः स्यामिति योजना।

### काव्यप्रदीपः

विभक्तेर्वैचित्र्यविशेषहेतुतया पृथगुपादानात्प्रत्ययपदं तदतिरिक्तपरम्। तच्छलेषो यथा—

**'रजनिरमणमौलेः पादपद्मावलोक-**<br>
**क्षणसमयपराप्तापूर्वसंपत्सहस्रम्।**<br>
**प्रमथनिवहमध्ये जातुचित्त्वत्प्रसादा-**<br>
**दहमुचितरुचिः स्यान्नन्दिता सा तथा मे॥'**

अत्र नन्दितेति तृचि तलि च रूपम्। तेनाहं नन्दिता नन्दकः स्याम्। तथा सा नन्दिता नन्दिनो भावो मे स्यादित्यर्थः।

### आदर्शः

(६) प्रत्ययश्लेषमाह—रजनीति। प्रकृत्यैक्ये आख्यातकृत्तद्धितप्रत्ययभेदेऽप्यैकरूप्यम् तत्त्वम्। महेशगणमध्ये तिष्ठासोः कस्यचिदुक्तिरियम्। अहं तत्प्रसादात् रजनिरमणमौलिप्रसादात् प्रथमनिवहमध्ये जातुचित् कदाचित् उचितरुचिर्योग्यदीप्तिः स्याम्। अहं कीदृशः? नन्दिता आनन्दकर्त्ता; तथा रजनिरमणमौलेः पदापद्मावलोकरूपस्य उत्सवस्य समये पराप्तं प्राप्तम् अपूर्वं सम्पत्सहस्रं येन तादृशः, सहस्रमिति पाठे तु स्यामिति क्रियाया विशेषणम्। तथा सा प्रसिद्धा नन्दिता नन्दिनामगणाधिपत्यं मे स्यात्। अत्र अस-धातुरेकः यात्-यां-प्रत्ययभेदः सन्धावैकरूप्यम्। तथा नन्दितेत्यत्र नन्द-धातुरेकः 'अव्यवहितात्ततस्तृच्प्रत्ययस्य कृत्प्रत्ययव्यवहितात्ततस्तद्धितप्रत्ययस्य भेदः, रूपश्चैकम्।

### सुधासागरः

अत्र वक्ष्यतीति वहिवच्योर्लृटि कृदिति कृन्ततिकरोत्योः क्विपि तुल्यं रूपमिति प्रकृतिश्लेषौ । विभक्ति-वैचित्र्यविशेषहेतुतया पृथगुपादानात् प्रत्ययपदं तदतिरिक्तपरम्, तत् श्लेषो यथा—राजनीति ।

रजनिरमणमौलेः श्रीचन्द्रशेखरस्य पादपद्मयोरवलोकनमेव क्षणः उत्सवः तस्य समये तत्काले पराप्तं प्राप्तमपूर्वसम्पत्सहस्रं यथा स्यात्तथा, प्रमथा गणाः तेषां निवहः समूहः तन्मध्ये जातुजित् त्वत्प्रसादादहमुचिता रुचिर्दीप्तिः यस्य यथाभूतः सन् नन्दिता नन्दकः स्याम्, एवं सति सा प्रमथगणमध्यगणनैव मे मम नन्दिता नन्दित्वं स्यात् गणाधिपत्वं भवेदित्यर्थः । अत्र नन्दितेति तृचि तलि च रूपमिति प्रत्ययश्लेषः ।

सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः।
नयोपकारसाम्मुख्यभायासि तनुवर्तनम्॥ ३७५ ॥

---

### सङ्केतः

सर्वेति हे हर शम्भो ! त्वं सर्वस्व सर्वस्वम्। त्वमेव संसारोच्छेदतत्परः सन् नयोपकारयोः सांमुख्यं शरीरवर्तनं आयासि आगच्छसि। अन्यच्च—हर स्फोटय, भव सम्पद्यस्व, नय निवारय, आयासि खेदकारि वर्तनं तनु प्रथय। इति सुप्तिङ्विभक्त्योः भेदः। अत्र प्रकरणादिना नियमाभावे श्लेषः, न तु ध्वनिः।

### सङ्केतः (रुय्यकः)

हे हर त्वं सर्वस्य सर्वस्वम्, त्वं भवः संसारस्तस्य छेदे तत्परः मुक्तिप्रदः नयोपकारयोः साम्मुख्यं शरीरवर्त्तनमायासि आगच्छसि। अपरोऽर्थः हर अपहर भव सम्पद्यस्व नय निवारय आयासि खेदकारि वर्त्तनं तनु विस्तारय। अत्र सुप्तिङोः। प्रकरणादिनाऽभिधाया अनियमेन श्लेषो न तु ध्वनिः।

### बालचित्तानुरञ्जनी

विभक्तिश्लेषमुदाहरति सर्वेति। हे हर, त्वं सर्वस्य सर्वस्वम् संसारछेदतत्परश्च। नयस्य नीतेः उपकारस्य च सांमुख्यं आयासि आगच्छसि। तनुवर्त्तनं शरीरवृत्तिं च आयासि। अपरोऽर्थः-सर्वस्य सर्वस्वं पश्वादिकं हर अपहर। त्वं छेदतात्परो भव, उपकारसांमुख्यं नय, आयासोऽस्यास्तीत्यायासि वर्त्तनम् तनु विस्तारय। 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहमि'ति न्यायेन सर्वस्वापहारादिना अनुग्रहं कुर्वित्यर्थः। अत्र सर्वत्र सुप्तिङ्विभक्त्योः श्लेषः।

### काव्यादर्शः

'सर्वस्व'मिति। 'हे हर सर्वस्व त्वं सर्वस्वम्। भवः संसारः, तच्छेदनिष्ठः। नयोपकारयोः सांमुख्यं शरीरवर्तनम्। आयासि [आ]गच्छसि'। अपरोऽर्थः। 'हर अपहर, भव संपद्यस्व, नय निवारय। आयासि खेदकारि। वर्तनं वृत्तिं विस्तारय'। अत्र 'स्याद्' इत्याद्योर्विभक्तयोः। वचनश्लेषे तूदाहृतम्।

### विवेकः

यत्र सुपां तिङां वा मिथः सर्वस्वं, त्वं भवः संसारस्तस्य च्छेदे तत्परः मुक्तिप्रदः नयोपकारयोः साम्मुख्यं शरीरवर्तनमायासि आगच्छसि। अपरोऽर्थः—हर अपहर भव सम्पद्यस्व नय निवारय आयासि खेदकारि वर्तनं वृत्तिं तनु विस्तारय। अत्र सुप् तिङोः प्रकरणादिनाऽभिधाया अनियमेन श्लेषो न तु शब्दशक्तिमूलो ध्वनिः' (रु. सं. ५८ पृ:)।

## दीपिका

सुप्तिङो सारूप्यं विभक्तिश्लेषो यथा-सर्वस्वमिति । हर भगवन् सर्वस्य जनस्य स्वं सर्वस्वं भवस्य संसारस्य च्छेदपरो यतो नयोपकारयोः साम्मुख्यं तनुवर्तनं शरीरवृत्तिम् आयासि आगच्छसीत्येकोऽर्थः । अन्यस्तु त्वं सर्वस्य सर्वस्वं हर नय । छेदस्तत्परो भव । आयासि खेदकारि उपकारसामुख्यं नय विरचय, वर्तनं जीवनं तनु विस्तारय । क्रियासमभिहारे पञ्चमी (लोट्) मध्यमैकता । अत्र प्रकरणादिना नियमाभावान्न शब्दशक्तिमूलध्वनिः ।

## दर्पणः

विभक्तिश्लेषो यथा सर्वस्वमित्यादि । हे हर सदाशिव त्वं नन्दिनाम्ना गणेन एकत्वं [लब्ध्वा] सर्वश्च [सर्वस्य] सर्वस्वं भवस्य संसारस्यच्छेदे तत्परः । यतः तन्ववर्त [तनुवर्तनम्] शरीरवृत्तिं नयोपकारयोः सांमुख्यं । आयासा [आयासी] त्येकोऽर्थः ।

त्वं सर्वस्य सर्वस्वं हर अर्पय, च्छेदे तत्परो भव उपकारसांमुख्यं नय अपनय । उपकारसंमुखो भवेत्यर्थः । वर्तनं वृत्तिमायासि । खेदयुक्तं तत्वं विस्तारय ।

अस्य च [अत्र च] स्वरन्ततिङ्न्तत्वेन प्रत्ययान्तरसाध्य चमत्कारविशेषाधानात् प्रत्ययश्लेषोगगना [गणना] ।

## साहित्यचूडामणिः

सर्वस्वमिति । अत्र खलनिन्दापरमेश्वरस्तुत्यभयशालिनि सर्वत्र सुप्तिङ्रूपविभक्तयोः श्लेषः । हरेत्यामन्त्रितं लोटो रूपं च । भवेति कदाचिल्लोटि अन्यदा भवस्य संसारस्य छेदे तत्पर इति । नयेत्यपि लोटि, उपकारेण सह साम्मुख्यम् आयासि आढौकसे आयासयितृ च । तन्वित्यपि लोटि, तनोः शरीरस्य वर्तनं च ।

## सम्प्रदायप्रकाशिनी

सर्वस्वमित्यादि । सर्वं स्वम् अपहर, छेदनतपरो भूयाः, उपकारसाम्मुख्यमायासवद् देहवर्तनं यथा भवति तथापनयेत्येकदा । अन्यदा भो हर त्वं सर्वस्वं, त्वमेव संसारच्छेदतत्परः, नीतेरुपकारस्य च यथा साम्मुख्यं तथा शरीरवृत्तिमनुप्रयासीति । अत्र हरेत्यादौ तिङ्सुब् विभक्ती श्लिष्टे । अनयोः प्रत्ययत्वाविशेषोऽपि वाक्यविषयत्वाद् भेदान्तरत्वम् । वचनश्लेषः प्रागुदाहरणेदर्शितः । इत्थं सभङ्गपदत्वे अष्टधा ।

## मधुमती

विभक्तिश्लेषमुदाहरति—सर्वस्वमिति । हे हर ! त्वं सर्वस्य स्वं सर्वस्वम् । तथा भवच्छेदतत्परः संसारच्छेदानुकूलयत्नवान् । तथा नयोपकारयोः सांमुख्यं आयासि आगच्छसि । कीदृशम् ? तनुवर्तनम् तन्वाश्रितं वर्तनं यस्येति मध्यमपदलोपः । अथ च—सर्वस्य सर्वस्वं हर अपहर । तथा छेदतत्परः भव । उपकारसांमुख्यं नय । आयासि आयासकारि तनु विस्तारय । अत्र सुप्तिङोः सारूप्यात् विभक्तिश्लेषः ।

## विस्तारिका

सर्वस्वमिति। हे हर ! महादेव ! त्वं सर्वस्य सर्वस्वम्। सर्वस्य संसारस्य छेदो विनाशः। नयो नीतिः। दुःखात् त्राणमुपकारः, तद्विषयं साम्मुख्यम् आयासि गच्छसि। तनोः शरीरस्य वर्तनं स्थितिर्यस्मात् साम्मुख्यात्। पक्षे दस्युं सम्बोध्येयमुक्तिः। त्वं सर्वस्य सर्वस्वं हर चोरय। त्वं छेदतत्परो भव ! उपकारविषयं साम्मुख्यम् इच्छां नय अपसारय। आयासि आयासयुक्तं तनोर्वर्तनं जीविकां तनु विस्तारय।

अत्र सुप्तिङोर्विभक्त्योः श्लेषः।

## सारबोधिनी

यत्र च सुपां तिङां च सारूप्यं स विभक्तिश्लेषः तमुदाहरति सर्वस्वमिति। हे हर महादेव। त्वं सर्वस्य सर्वस्यम्। भवस्य संसारस्य छेदो विनाशः। नयो नीतिः। दुःखार्तानामुपकारस्तद्विषयं सांमुख्यं उत्साहम्। आयासि आगच्छसि। तनोः शरीरस्य वर्तनं स्थितिर्यस्मात् सांमुख्यात् पक्षे दस्युं संबोध्येयमुक्तिः। त्वं सर्वस्य सर्वस्वं हर चोरय। छेदतत्परो भव। उपकारविषयकं सामुख्यमिच्छां नय अपसाराय। वर्तनं तनु विस्तारय। आयासि आयासयुक्तं वर्तनविशेषणम्। सुप्तिङ्वभक्त्योः श्लेषः।

## काव्यप्रदीपः

विभक्तिश्लेषो यथा—

**'सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः।**

**नयोपकारसांमुख्यमायासि तनुवर्तनम्॥'**

अत्र हरभवेत्यनयोः संबोधनत्वक्रियापदत्वाभ्यां सुप्तिङ्विभक्त्यन्तत्वम्। एवमायासीत्यादिक्रियापदत्वे च विभक्तिश्लेषः। एवमन्यत्राप्यूह्यम्।

## आदर्शः

(७) विभक्तिश्लेषमाह—सर्वस्वमिति। सुप्तिङ्विभक्तिभेदेऽपि नामधात्वोरैकरूप्यं तत्वम्। शिवं प्रति तद्भक्तस्य पुत्रं प्रति दस्योश्चोक्तिरियम्। भक्तपक्षे—हे हर ! त्वं सर्वस्य जनस्य सर्वस्वं भवस्य संसारस्य छेदतत्पराश्च। नयोपकारयोः साम्मुख्यं प्राप्तिर्यस्मात् तादृशं तनुवर्त्तनं शरीरस्थितिमायासि आगच्छसि। दस्यु-पक्षे—त्वं सर्वस्य सर्वस्वं हर छेदतत्परो भव; उपकारसाम्मुख्यं नय अपनय तद्विमुखो भवेत्यर्थः। आयासि परायासकारकं वर्त्तनं स्थितिं तनु विस्तारय। अत्र हर भव नय आयासि तन्वित्यत्र लुप्तसुब् विभक्तिर्लुप्ताख्यात-विभक्तिश्च, रूपन्त्वेकम्।

## सुधासागरः

विभक्तिश्लेषो यथा—सर्वस्वमिति ।

हे हर त्वं सर्वस्य सर्वस्वम्, भवस्य संसारस्य छेदे तत्परः मुक्तिप्रदः, तनोः शरीरस्य वर्त्तनं स्थितिर्यस्मात्तादृशं नयोपकारयोः साम्मुख्यं उत्साहं आयासि आगच्छसि, पक्षे दस्युं सम्बोध्येयमुक्तिः, त्वं सर्वस्वं हर चोरय, छेदतत्परो भव, उपकारसाम्मुख्यं नय दूरीकुरु, आयासि आयासयुक्तं वर्त्तनमाचरणं तनु विस्तारय श्रमजितो भवेत्यर्थः । अत्र हर भवेत्यनयोः आयासीत्यस्य च सुप्तिङ्विभक्त्यन्तत्वेन विभक्तिश्लेषः ।

**(सू० १२०) भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत्।**

नवमोऽपीत्यपिर्भिन्नक्रमः। उदाहरणम्—

**योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः।**
**शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते॥ ३७६॥**

अत्र प्रकरणादिनियमाभावात् द्वावप्यर्थौ वाच्यौ॥

---

### सङ्केतः

प्रकृत्यादेरिति। अभङ्गश्लेषः इत्यर्थः।

य इति। गोत्रशब्दः गिरिवंशार्थः। गोत्रेति कुलपर्वतयोः पक्षाः पतत्राणि स्ववर्ग्याश्च। क्षणः महः निश्चयश्च। शतकोटिदः शतकोटीनां दाता शतकोटिना = वज्रेण छेदकश्च। विबुधाः देवाः पण्डिताश्च।

### सङ्केतः (रुय्यकः)

गोत्रशब्दः कुलपर्वतयोः, पक्षा वर्ग्याः पतत्राणि च। क्षण उत्सवश्च क्षतं कोटीर्ददाति यः शतकोटिना वज्रेण द्यति खण्डयति च, विबुधाः पण्डिता देवाश्च।

### बालचित्तानुरञ्जनी

एवं रुद्रटाद्युक्तानष्टौ भेदानुदाहृत्य तदधिकोऽपि भेदः कश्चिदुत्प्रेक्षितुं शक्यत इत्याह भेदाभावादिति। प्रकृतिप्रत्ययश्लेषादेर्मध्ये एकस्य भेदस्याभावात् मेलकरूपः। अयं नवमोऽपि स्यादित्यर्थः। उदाहरति य इति। स विबुधेन्द्रः राजते। विबुधाः देवाः विद्वांसश्च। स इति कः ? यः असकृत् परेषामुत्कृष्टानां पर्वतानां पक्षाणां गरुतां छेद एव क्षणः उत्सवः तत्र क्षमः, पक्षे शत्रुकुलानां पक्षाः स्ववर्गाः तेषां छेदक्षणक्षमः, शतकोटिं वज्रं ददाति असुरेषु क्षिपतीति शतकोटिदः, तस्य भावस्तत्ता तां बिभ्रत्। नन्वत्र कस्यचिदर्थस्य वाच्यत्वं अस्तु किमनेन श्लेषोक्तिक्ले-शेनेत्यत आह अत्रेति। अत्र द्वयोरपि प्राकरणिकत्वात् एकत्राभिधाया नियन्त्रणाभावात् अर्थद्वयस्यापि वाच्यत्वेन श्लेष एवाङ्गीकर्तव्य इति भावः।

### काव्यादर्शः

एषां प्रकृत्यादीनामविशेषेऽपि श्लेषः स्यादित्याह—भेदाभावादिति। प्रकरणादिना चाभिधाया अनिय-न्त्रितत्वात् श्लेष एव, न तु ध्वनिः। नवमोऽपीति। अभङ्ग शब्दश्लेष इत्यर्थः। अभङ्गत्वेन च पूर्वस्मादस्य भेदः। 'गोत्र' शब्दः 'कुलपर्वतयोः। 'पक्षा' वर्ग्याः पतत्राणि च। 'क्षण' उत्सवः। शतं कोटिं च ददाति, शतकोटिना वज्रेण द्यति खण्डयति च। 'विबुधाः' पण्डिता देवाश्चेत्यभङ्गः शब्दश्लेषः।

## विवेकः

नवमः श्लेषप्रकारो यथा—य इत्यादि । 'अत्र गोत्रशब्दः कुलपर्वतयोः, पक्षा वर्ग्याः पतत्राणि च । क्षण उत्सवश्च, शतकोटिदः शतं कोटोर्ददाति यः, शतकोटिना वज्रेण द्यति खण्डयति च, विबुधाः पण्डिता देवाश्च' (रु. सं. ५८ पृः) । अत्रापि न प्रकरणादिकं नियमकमस्ति येन ध्वनिसम्भावना स्यादिति ।

## दीपिका

भेदाभावादुभयत्र संहतसारूप्यात् । प्रकृत्यादेरित्यादिना प्रकृतवचनादिसंग्रहः ।

ननु कारिकायां भेद इत्यनन्तरमपि शब्दो न युक्त इत्याह—नवमोऽपीति । पूर्व समुच्चयेन योजतेति शेषः । नैवं सून्ने प्रतीतिरित्याह—अपिर्भिन्नक्रमोऽर्थसङ्गत्य येक्षया क्रमभेदेन योजनीय इत्यर्थः ।

परगोत्राणां शत्रुवंश्यानां पक्षच्छेदाय सहायनाशाय क्षणेनाविलम्बेन क्षमः । शतानि कोटीश्च ददाति वितरति विबुधेन्द्रो बुद्धिमत्तम इति राजपक्षे । अन्यत्र तु विबुधेन्द्रो देवेन्द्रः शतकोटिना वज्रेण द्यति खण्डयति यः पराणामसाधारणानां गिरीणां पक्षच्छेदक्षणाय पतत्रलवनोत्सवाय । अत्र गोत्रशब्दे लिङ्गभेदेऽपि तत्कृतरूपविपर्यासाभावान्न क्षतिः । ध्वनिरित्याशङ्कां निराचष्टे—अत्रेति ।

इह भिन्नप्रयन्नोच्चार्यशब्दश्लेषस्य जतुकाष्ठन्यायेन संयोग इति शब्दश्लिष्टता । अभिन्नप्रयलोच्चार्यस्थले त्वेकेनैवोच्चारणेनैकवृन्तगतफलद्वयन्यायेनार्थयोः श्लिष्टः स्यात् । यत्र चार्थानुसन्धानमन्तरेणेदं श्लिष्टवैचित्रयं नानुसन्धीयत तत्रार्थालङ्कार एवायम् ।

## दर्पणः

न केवलमेव प्रकृतिप्रत्ययादीनां भिन्नत्वेऽष्टौ प्रकाराः श्लेषस्य । तेषामभावेऽपि नवमश्च प्रकार इत्याह भेदाभावादिति । भेदाभावात् पक्षद्वयेऽपि सहजसारूप्यात् । अपरिति । अत्र समुच्चयार्थोऽपिशब्दर्भिन्नक्रमः । सूत्रे नवलोऽपीति [नवमोऽपीति] क्रमभेदेन योजनीय इत्यर्थः ।

परगोत्राणां शत्रुवंशानां उत्तममौलनाञ्च [उत्तमकुलानाञ्च] पक्षच्छेदे सहायनाशे, क्षणेनाविलम्बेन क्षमः पक्षाणां पतत्राणां वनरूपे [?] उत्सवेन संमतश्च शतं कोटिशश्च ददाति वितरति । शतकोटिना वज्रेण द्यतीति च शतकोटीदः । विबुधानां पण्डितानां देवानाञ्च । प्रकृतिश्लेषे रहिवच्योः [?] प्रकृत्योरन्यथाभावः एवं प्रत्ययादिश्लेषेऽपि ।

इह तु परगोत्रादिशब्दानामर्थद्वयप्रतिपादनेऽपि समानरूपता स्वाभाविकी । गोत्रशब्दे तु लिङ्गभेदेऽपि उत्कटरूपविपर्यासाभावा नुक्षतिः [न क्षतिः] । अस्य च भेदस्य प्रत्ययांशस्य च भेदात् प्रकृतिश्लेषेनापि गतार्थत्वेनास्यास्माभिः साहित्यदर्पणे पृथग्लक्षणं कृतम् । अस्य च ग्रन्थकारस्य गोत्रादिशब्दानां राजेन्द्रोभयपक्षसारूप्यं सहनमित्येव यथाकथञ्चिद्भेदनिर्देशोऽभिमतः ।

## साहित्यचूडामणिः

अथ रुद्रटोक्ताद् भेदाष्टकादधिकोऽपि कश्चिदुत्प्रेक्षितुं शक्य इत्याह—भेदाभावादिति ।

य इति। परगोत्राणां शत्रुवंशानां प्रतिभटभूतानां शैलानां च। पक्षो बलं गरुच्च, तच्छेद एव क्षण उत्सवः नियमो वा तत्र क्षमः। शतकोटिमपरिमितमर्थं ददाति, अथ शतकोटिना दम्भोलिना द्यति खण्डयति इति शतकोटिदः। तद्भावं बिभ्रत्। अत्र शतकोटिद इति न कश्चिदुक्तेष्वेकतमो भेदः। मेलकपक्षस्तु नवमं प्रकारं प्रयोजयिष्यति।

नन्वत्र कस्यचिदर्थस्य वाच्यत्वमन्यस्य च व्यङ्ग्यत्वमस्तु। अलमनेन श्लेषशब्देनेति चेत् अत्राह—तत्रेति।

### सम्प्रदायप्रकाशिनी

अभङ्गत्वमाह—भेदाभावादित्यादि। भेदस्य भङ्गरूपस्याभावः।

अपिशब्दं समुच्चयशिरसि निवेशयितुमाह—नवमोऽपीत्यादि।

योऽसकृदिति। गोत्रा गिरयः, गोत्राणि कुलानि च। पक्षा गरुतः, स्ववर्ग्याश्च। शतकोटिना वज्रेण खण्डयतीति, शतानां कोटीर्ददातीति च शतकोटिदः। विबुधानामनिमिषाणां विदुषां चेन्द्रः। अत्र गोत्रादिपदेष्वभङ्गश्लेषः।

नन्वत्र प्राकरणिकत्वेन नायकः प्रतीयते कथमयं श्लेष इत्यत आह— अत्र प्रकरणादीति। ताटस्थ्येनोक्तेः प्रकरणाद्यभावः।

### मधुमती

नन्वेवं अक्षरादिपदश्लेषो न स्यात्, उक्तप्रकाराभावात् अत आह—भेदेति। प्रकृत्यादेः इति पञ्चमी। तेन प्रकृत्यादेः नवमोऽपि भेदो मतः इत्यन्वयः। हेत्वाकाङ्क्षायामाह—भेदाभावादिति। भेदेषु उक्तभेदेषु अभावात् अन्तर्भावाभावात् इत्यर्थः। वस्तुस्तु—प्रकृत्यादेरिति षष्ठी। तथाच श्लेषः प्रकृत्यादिभेदे दृष्टः, अत्र तु तेषां अभेदेऽपि श्लेषः इति नवमत्वम्। भेदस्तु आकारवैलक्षण्यम्। तेन अर्थभेदात् शब्दभेदाङ्गीकारात् अत्रापि प्रकृतिभेदः इत्यपास्तम्। आकारवैलक्षण्याभावात्। व्यक्तिभेदस्य न्यायलभ्यत्वात्।

य इति। यः असकृत् परगोत्राणां प्रतिवादिकुलानां अथ च उत्कृष्टपर्वतानां, पक्षस्य प्रतिज्ञायाः अथ च पक्षतेः चेद एव क्षणः उत्सवः, तस्मिन् समर्थः शतकोटिं ददाति अथ च वज्रेण खण्डयति तस्य भावः तत्ता, तां बिभ्रत् सः विबुधेन्द्रः विद्वदिन्द्रः अथ च देवेन्द्रः राजते इत्यर्थः। ननु ईदृशस्थले द्वितीयार्थस्य व्यङ्ग्यत्वमुक्तमिति तद्विरोधः इत्यत आह—अत्रेति। तथाचात्र अभिधानियमत एव तथा। अन्यत्र तु श्लेषत्वमेवेत्यर्थः।

ननु प्रकृत्यादिश्लेषे शब्दश्लेषत्वमुचितम्, न तु प्रकृतेः, गोत्रादिवदस्याभेदादिति अलङ्कारसर्वस्वकारादिमतमाशङ्कते—नन्वित्यादिना।

इह द्विविधः श्लेषः—सभङ्गः अभङ्गश्च। तत्र सभङ्गश्लेष एव शब्दश्लेषस्य विषयः। यत्र उदात्तादिस्वरभेदेन भिन्नप्रयत्नोच्चार्यतया भिन्नयोः शब्दयोः जतुकाष्ठन्यायेन श्लेषः। अभङ्गश्लेषस्तु अर्थश्लेषस्य विषयः।

## विस्तारिका

योऽसकृदिति । विबुधानां पण्डितानां च इन्द्रः प्रभुः श्रेष्ठश्च । परगोत्राणां श्रेष्ठगिरीणां शत्रुः सन्ततीनां च । पक्षः पतत्रम्, अनुकूलश्च । पक्षच्छेदे क्षणेनाप्लकालेन क्षमः समर्थः । शतकोटिर्वज्रं कोटिशतं वा । शतकोटिना द्यति खण्डयति, कोटिशतं ददाति च ।

अत्र प्रकृतिप्रत्यययोरभेदेऽप्यर्थभेदादेव वाचकस्वरूपभेदः । एष एव वाऽभङ्गश्लेषः । अत्रार्थद्वयप्रतीत्यनन्तरमेव स्वरूपभेदग्रह इति व्याख्यातमेव ।

अर्थान्तरस्य व्यङ्गताशङ्कां निराचष्टे—प्रकरणादिनियमाभावादिति ।

## सारबोधिनी

भेदाभावादिति । पूर्वोक्तभेदकाभावे यत्रार्थद्वये तात्पर्यमवगम्यते स नवमोऽपि प्रकारः श्लेषस्येत्यर्थः । योऽसकृदिति । विबुधानां देवानां पण्डितानाञ्च इन्द्रः प्रभुः श्रेष्ठश्च । परगोत्राणां श्रेष्ठगिरीणाम्, शत्रुसन्ततीनाञ्च, पक्षः पतत्रमनुकूलश्च, पक्षच्छेदे क्षणेन अल्पकालेन क्षमः समर्थः । शतकोटिर्वज्रं कोटिशतञ्च, शतकोटिना द्यति खण्डयति, कोटिशतं ददाति च । एष चाभङ्गश्लेषः । अर्थान्तरस्य व्यङ्ग्यताशङ्कां निराचष्टे प्रकरणादिनियमाभावादिति ।

## काव्यप्रदीपः

**भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत् ।**

नवमोऽपीत्यपिर्भिन्नक्रमः । उदाहरणम्—

**'योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः ।**
**शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥'**

अत्रैकार्थमात्रनियतप्रकरणाद्यभावाद्द्वावप्यर्थौ वाच्यावेवेति 'भद्रात्मनो दुरधिरोहतनोः—' इत्यादिवन्न ध्वनित्वम् । ननु श्लेषस्तावद्द्विधा सभङ्गपदोऽभङ्गपदश्च ।

## काव्यप्रकाशखण्डनम्

अभङ्गश्लेषो यथा—

**योऽसकृत् परगोत्राणां पक्षच्छेदक्षणक्षमः ।**
**शतकोटिदतां बिभ्रद् विबुधेन्द्रः स राजते ॥**

स विबुधेन्द्रः पण्डितश्रेष्ठः राजते शोभते । स कः ? यः असकृद् वारंवारं परगोत्राणां शत्रुसन्तानानां पक्षस्य बलस्य च्छेदे नाशे क्षणेनैव क्षमः समर्थः । छेदरूपे क्षणे उत्सवे क्षमो योग्य इति कश्चित् । शंतकोटीर्ददातीति शतकोटिदस्तस्य भावस्तत्ता तां बिभ्रद् धारयन् । पक्षे—स विबुधेन्द्रो देवश्रेष्ठः इन्द्रो राजते शोभते । यः परगोत्राणां परे शत्रवो ये गां पृथिवीं त्रायन्त इति गोत्राः पर्वतास्तेषां पक्षस्य च्छेदः कर्त्तनं तेन यः क्षण उत्सवः तत्र क्षमो योग्यः ।

शतकोटिना वज्रेण द्यति खण्डयतीति शतकोटिदस्तस्य भावः शतकोटिदता तां बिभ्रद् दधान इत्यर्थः। अत्र अभिधानियन्त्रणाभावात् द्वावप्यर्थौ वाच्यौ। अयं शब्दश्लेषः। अत्र शब्दाः परिवृत्तिं न सहन्ते।

## आदर्शः

भेदाभावादिति। प्रकृत्यादेरित्यत्र प्रकारवाच्येवादिशब्दः। तेन तत्प्रकाराक्षरादेरित्यर्थः। भेदाभावात् अक्षरादिप्रभेदाष्टकाभावादित्यर्थः। नवमोऽपीति। स च समानवर्णकाखण्डपदश्लेषरूपो बोध्यः।

योऽसकृदिति। यो राजा य इन्द्रश्च परगोत्राणां शत्रुकुलानां प्रकृष्टगोत्राणामचलानाञ्च पक्षस्य सहायस्य पतत्रस्य च छेदे क्षणात् क्षमः, शतस्य कोटेश्च दातृतां शतकोटिना वज्रेण खण्डकतां च बिभ्रत्। विबुधानां पण्डितानां देवानां च इन्द्रः प्रभुः स राजत इत्यर्थः। अत्र शतकोटिदताम् इत्यंशे पदश्लेषः, सर्वत्रान्यत्राखण्डपदैर्नवमः श्लेषः।

नन्वत्रैकार्थे प्राकरणिकतया वाच्येऽन्योऽर्थो व्यङ्ग्य एवेत्यत 'उल्लास्य कालकरवाल' इत्यादिवदुपमा-ध्वनिरेवायं न तु श्लेष इत्यत आह—अत्रेति।

## सुधासागरः

नवमोऽपीत्यपिर्भिन्नक्रम इति। पूर्वभेदकाभावे यत्रार्थद्वये तात्पर्यमवगम्यते स नवमोऽपि प्रकारः श्लेषस्येत्यर्थः। उदाहरणम्—योऽसकृदिति।

योऽसकृत् मुहुः, परगोत्राणामुत्कृष्टगिरीणां प्रतिवादिवंशानां च, पक्षः पतत्रं मतं च तस्य छेदे खण्डने क्षणेनाल्पकालेन क्षमः समर्थः, शतकोटिर्वज्रं कोटिशतं च शतकोटिना द्यति खण्डयति कोटिशतं ददाति च तस्य भावः शतकोटिदता तां बिभ्रत् दधानो विबुधानां देवानां पण्डितानां च इन्द्रः प्रभुः स राजते शोभत इत्यर्थः।

अर्थान्तरस्य व्यङ्ग्यताशङ्कां निराचष्टे-अत्र प्रकरणेत्यादि। अत्रैकार्थमात्रनियतप्रकरणाद्यभावात् द्वावप्यर्थौ वाच्यावेवेति 'भद्रात्मनो दुरधिरोहतनोः' इत्यादिवत् (द्वितीयार्थमादाय) न ध्वनित्वमित्यर्थः। अयमाशयः—

**ननु स्वरितादिगुणभेदात् भिन्नप्रयत्नोच्चार्य्याणां तदभावादभिन्नप्रयत्नोच्चार्याणां च शब्दानां बन्धेऽलंकारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्यर्थालंकारमध्ये परिगणितोऽन्यैरिति कथमयं शब्दालंकारः।**

---

### सङ्केतः

स्वरितादीति समाहारोदात्तानुदात्ताः। भिन्नेति। भिन्नाभिन्नप्रयत्नोच्चार्यत्वं क्रमेण शब्दार्थश्लेषयोः हेतुः इत्यर्थः। अन्यैः उद्भटाद्यैः। अयं योऽसकृदित्यादिः। कष्टत्वादीति।

### बालचित्तानुरञ्जनी

ननु स्वरितोदात्तादिगुणवैलक्षण्यात् केचिद् भिन्नप्रयत्नोच्चार्याः अन्ये तस्य स्वरितादेरभेदात् अभिन्नप्रयत्नोच्चार्याश्च, तत्र पूर्वत्र शब्दश्लेषस्य यत्र प्रायो पदभङ्गः, उत्तरत्र आर्थत्वं यत्र न पदभङ्गः, उभयविधोऽपि अयमुपदेरलङ्कारान्तरस्य प्रतिभामुत्थापयति। अतश्चास्यार्थालङ्कारत्वमपि युक्तम् न शब्दालङ्कारत्वमेवेति उद्भटमतमाशङ्कते नन्विति।

### काव्यादर्शः

ननु स्वरितेति। स्वरितोदात्तादिस्वरभेदात्प्रयत्नभेदे शब्दश्लेषो यत्र प्रायेण पदभङ्गो भवति। यत्र तु स्वरितादिगुणभेदो नास्तीत्यभिन्नप्रयत्नोच्चार्यत्वे सति प्रयत्नादिसाम्याद् अभङ्गपदत्वेऽर्थश्लेषः। एष च प्राप्तेष्वलंकारान्तरेष्वारभ्यमाणबाधकत्वात् तत्प्रतिभोत्पत्तिहेतुरिति द्विप्रकारोऽप्ययं श्लेषोऽर्थालंकार इति केचित्। यथा—

> **रक्तच्छदत्वं विकचा वहन्तो नालं जलैः संगतमादधानाः।**
> **निरस्य पुष्पेषु रुचिं समग्रां पद्मानि रेजुः श्रमणा यथैते॥**

—अत्र 'रक्तच्छदत्वम् इत्यादौ अर्थद्वयाश्रितत्वाद् अर्थश्लेषः। 'नालम् इत्यादौ च शब्दद्वयाश्रितत्वाच्छब्दश्लेषः प्रयत्नादिभेदाच्च प्रातीतिक एव शब्दभेदः, ततश्च 'रक्तच्छदे'त्यत्र एकवृन्तगतफलद्वयन्यायेन अर्थद्वयस्य शब्दे श्लिष्टत्वम्। 'नालम्' इत्यत्र तु जतुकाष्ठन्यायेन स्वयमेव शब्दयोः श्लिष्टत्वमित्युभयरूपोऽप्ययमर्थालंकारः, तद् निषेधयन्नाह—इहेति।

### विवेकः

अथ परमतं निराचिकीर्षुराशङ्कते नन्विति—इह केचिदुदात्तादिस्वरभेदात् प्रयत्नादिभेदात् युगपत् प्रयोक्तुं न शक्यन्ते परस्परच्छायाऽनुकारिणश्च भवन्ति तद्विषयोऽर्थभेदेन कृतोऽर्थलेषः 'अर्थभेदेन शब्दभेदा'दिति, शब्दान्यत्वे शब्दश्लेषो यत्र प्रायेण पदभङ्गाभवन्ति। केचित् पुनरुदात्तादिस्वरैक्यात् प्रयत्नादिसाम्याच्च तन्त्रेण प्रयोक्तुं शक्यन्ते। तदुत्थं सभङ्गपदत्वं नास्तीत्येकवृन्तगतफलद्वयन्यायेनार्थद्वयस्य शब्दश्लिष्टत्वादर्थश्लेषः सङ्क-

लनया तूभयश्लेषो यथा "रक्तच्छदत्वं विकचा वहन्तो नालं जलैः सङ्गतमादधानाः। निरस्य पुष्पेषु रुचिं समग्रां पद्मा विरेजुः भ्रमणा यथैव ॥ अत्र रक्तच्छदत्वमित्यादावर्थश्लेषः, नालमित्यादौ शब्दश्लेषः, उभयघटनायान्तभय-श्लेषः" (अ. स. श्लेष-प्र:)। एष च नाप्राप्तेषूपमादिष्वारभ्यमाणस्ततस्तद्बाधकत्वात्तत्प्रतिभामुत्पादयति। न त्वत्रो-पमादयोऽलङ्काराः, अन्यत्र लब्धसत्त्वाकत्वात् यथा स्वयञ्चत्यादि—न केवलं हिमाद्रेस्तथाभूतस्य त्वं सुता यावत् स्वयमेवंभूतेति 'च' शब्दः। गौरीपक्षे किशलयद्रक्ताभ्यां दीप्यमानाभ्यां कराभ्यां शोभिता सुखेन फलं यत्राप्तुं शक्यते तत्र लुब्धानामीहितं प्रददाति। 'प्रातःसन्ध्यापक्ष उज्ज्वलसूर्यमरीचिभिः शोभिता स्वापफले विश्रान्तौ यो न लुब्धस्तद्विषये हितं प्रददाति। अत्र प्रथमार्धे स्वरादिसामर्थ्यादर्थश्लेषता। उत्तरार्धे तु सुबादिभेदाच्छब्दश्लेषता। तथाहि—आस्वापेत्यादावैकपद्ये 'थाथघञ्क्ताजबित्रकाणा'मिति (पा. ६/२/१४४) सूत्रेणान्तोदात्तत्वं लघुप्रयत्न-त्वञ्च। अन्तपदे थाथादिस्वरेणान्तोदात्तत्व' मिति (ल. वृ)। अत्र चोपमाप्रतिभोत्पत्तिहेतुः श्लेष इति। तथाचोक्तम्—'एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम्। स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्टमिहोच्यते ॥ अलङ्कारान्तरगतां प्रतिभां जनयन् पदैः। द्विविधैरर्थ शब्दोक्ति बन्धः श्लिष्टं प्रतीयताम् ॥ (का० आ० स० ४.५०-५१) इति ॥

## दीपिका

तस्य च सर्वत्रैवालङ्कारान्तरत्वविच्छित्यनुग्राह्यतया निरवकाशत्वादन्यापवादरूपेणानेनैवार्थेनैवंविधस्थले व्यपदेशो ज्यायानिति ये मन्यते तत्पक्षमुपन्यस्यतिनन्विति। स्वरित उदात्तानुदात्तमिश्रणकारः। [गुण इति] वर्णधर्मः स्वरविशेषः। भिन्नेति। स्वराणां विजातीययत्नसाध्यत्वात्। अलङ्कार इत्यादि बहुब्रीहिः। प्रतिभाविच्छितिरुपत्ति-निर्वाहः।

## दर्पणः

वाच्यो सन्दिग्धाभिधेयभावो। एतेन ध्वनिव्यवच्छेदः। इहये सभङ्गः शब्दश्लेषः, अभंगश्चार्थश्लेष इत्याचक्षते, द्वावप्यलङ्कारमध्ये लक्षयन्ति। अस्य चालङ्कारान्तरविविक्तविषयतायासंभवात् विद्यमानेष्वलङ्कारान्ते-ष्वपक्षत्वेन[?] तद्वारा बोधकतया गतेनैव व्यपदेशः तत्पक्षानुपन्यस्य दूषयति नन्विति।

अवितम [स्वरित] उदात्तादिमिश्रणकारः तद्गुणोऽवधर्मः स्वरविशेषः [तद्गुणो वर्णधर्मः स्वरविशेषः] तद्भेदादिभिन्नप्रयत्नोच्चार्याणां स्वरभेदस्य प्रयत्नभेदसाध्यत्वात् अलङ्कारान्तरस्य प्रतिमा विच्छित्तिः, हृदि स्थिताया उत्पत्तेर्निर्वाहस्य हेतुर्यस्येति विग्रहः। यथासंख्यं शब्दयोर्जतुकाष्ठन्यायेन योगादर्थश्लेषः। अनयोरेकत्र शब्दे एकवृन्तगतफलद्वयन्यायेन श्लिष्टत्वात्।

## साहित्यचूडामणिः

अथोद्भटमर्यादया चोदयति—

नन्विति। स्वरितोदात्तादिगुणवैलक्षण्यात् केचिद् भिन्नप्रयत्नोच्चार्याः, अन्ये तस्य स्वरितादेरभेदाद् अभिन्नप्रयत्नोच्चार्याश्च।

तत्र पूर्वत्र शाब्दत्वं श्लेषस्य यत्र प्रायेण पदभङ्गः, उत्तरत्रार्थत्वं यत्र न पदभङ्गः । उभयविधोऽप्ययमुपमादेरलंकारान्तरस्य प्रतिभामुत्थापयति । अतश्चास्यार्थालंकारत्वं युक्तं, न शब्दालङ्कारत्वमिति । परिहरति—उच्यत इति । सामान्येन काव्यव्यवहारे शाब्दार्थत्वेन निबन्धनं निश्चेतव्यं, यदनुगुणोऽयमत्रत्यो विभाग इत्याकूत्याह—इह हीति । न केवलमलंकार एवायं नियमः, यावद् गुणदोषयोरपीत्याह—

## सम्प्रदायप्रकाशिनी

अथ शब्दैकालङ्कारतामस्य समर्थयितुं विचारमारभते—ननु स्वरितेत्यादिना । श्लेषस्तावद् द्विरूपः सभङ्गपदोऽभङ्गपदश्चेति । तत्र प्रतीतिवैषम्यमनुपश्यामः । तथा हि—यदा सभङ्गपदत्वं तदा प्रत्यर्थं स्वरितादिगुणभेदादुच्चारणे प्रयत्नभेदः । अतः शब्द एव भेदसमधिगमाच्छब्दश्लेषो युक्तः । अभङ्गपदत्वे तुं स्वरभेदाभावादुच्चारणे प्रयत्नैक्यमिति न शब्दतो भेदावगमः, अपि तु एकवृन्तगतफलद्वयन्यायेनार्थतः । अतोऽयमर्थश्लेषो युक्तः । इत्थं द्वैरूप्यसम्भवाद् द्विविधोऽयमर्थालङ्कारमध्ये गणितश्चिरन्तनैः अतः कथमयं शब्दालङ्कारः । कथं च शब्दालङ्कारप्रस्तावे सङ्गच्छते । किञ्च नियमेनासावलङ्कारान्तरप्रतिभोत्पत्तिहेतुस्तेषां मतः । तव तदपि नेष्टमित्याक्षेपनिष्कर्षः ।

## मधुमती

स्वरभेदाभावात् अभिन्नप्रयत्नोच्चार्यतया शब्दाभेदात्, अर्थयोः एकवृन्तगतफलद्वयन्यायेन श्लेषः, अर्थभेदेन शब्दभेदाभावात् । न चाक्षादिपदे प्रकृत्यादिभेदो, न वा स्वरादिभेदः । तथा च यो यदाश्रितः स तदलङ्कारः । अलङ्कारालङ्कार्यभावस्य लोकवदाश्रयाश्रयिभेदेनोपपत्तेः इति आखण्डलार्थः ।

अलङ्कारान्तरप्रतिभोत्पत्तिहेतुरित्यनेन अलङ्कारान्तरापवादकत्वमस्येति प्रतिपादितम् ।

## विस्तारिका

नहीति । स्वरितं स [अत्र टीकाग्रन्थस्त्रुटितः] ति पाठेऽपि स्यादेव श्लेष इति । शब्दान्वयव्यतिरेकवित्यर्थः । श्लेष एवायम् ।

## सारबोधिनी

नन्विति । स्वरितः समाहारः स्वरः । आदिपदादुदात्तानुदात्तौ । आश्रयस्य विजातिभ्यो व्यवच्छेदकत्वेन गुणत्वम् । स्वरभेदात् प्रयत्नभेदः । उच्चार्याणां उच्चारणयोग्यानाम् । श्लेषभङ्गभयेन प्रकृतेऽनादृतानामिति । यथा 'पृथकार्त्तस्वरे'त्यादौ समासभेदेन स्वरभेदात् विजातीयोच्चारणयोग्यत्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन यः श्लेषः स शब्दश्लेषस्य विषयः । यत्र स्वराभेदादभिन्नप्रयत्नोच्चार्ये 'योऽसकृदि'त्यादौ शब्दाभेदादेकवृन्तगतफलद्वयन्यायेन श्लेषः सोऽर्थश्लेषस्य विषयः । किञ्चास्यलङ्कारान्तरविविक्तविषयताऽसंभवाद्विद्यमानेष्वलङ्कारान्तरेषु अपवादत्वेन तद्बाधते इत्यलङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वमिति कथमयं शब्दालङ्कार एव। अन्यथा अर्थालङ्कारत्वाभावे सामानाधिकरण्याभावात् बाध्यबाधकता न स्यादिति पूर्वपक्षार्थः ।

### काव्यप्रदीपः

तत्राद्यः शब्दश्लेषः स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्यतया भिन्नानां शब्दानां बन्धे जतुकाष्ठन्याया-च्छब्दयोरेव शिष्टत्वात् । द्वितीयस्त्वर्थश्लेषः स्वरितादिगुणाभेदादेकप्रयत्नोच्चार्यतया शब्दभेदाभावादेकवृन्तगत-फलद्वयन्यायेनार्थयोरेव श्लिष्टत्वात्। यद्यपि 'अर्थभेदेन शब्दभेदः' इति नयेन द्वितीयेऽपि शब्दस्य भेदस्तथाप्युपपत्त्या शब्दभेदप्रतीतावप्येकताध्यवसायान्नास्ति शब्दभेदः । स एव निरवकाशतया सर्वालंकारबाधक इत्यलंकारान्तराणां प्रतिभामात्रमुत्पादयति न तु तत्पर्याप्तिम् । यथा—

**'स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।**
**प्रभातसंध्येवास्वापफललुब्धे हितप्रदा ॥'**

अत्र पूर्वार्धेऽभङ्गपदः द्वितीयार्धे सभङ्गपदः श्लेषः । द्वयमप्युपमाप्रतिभोत्पत्तिहेतुः । साधर्म्याभावेन तस्याः प्ररोहाभावात् । यदुक्तम्—

**'एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम् ।**
**स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते ॥**

**अलंकारान्तरगतां प्रतिभां जनयत्पदैः ।**
**द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम् ॥'इति ।**

### आदर्शः

ननु सभङ्गश्लेषः शब्दश्लेषः, तत्र भङ्गेन विभिन्नप्रयत्नोच्चरितयोः स्वरभेदेन भिन्नयोः शब्दयोः श्लिष्ट-त्वात् । अभङ्गश्लेषस्त्वेकप्रयत्नोच्चार्य एक एव न श्लिष्टः, तदभेदादर्थश्लेष एवासौ, तथा एतद्द्वयमप्यर्थालङ्कारा-न्तरज्ञानाज्ञाप्यत्वेन अर्थालङ्कार एव परैरुच्यते। तत् कथं त्वया शब्दालङ्कार एवामुच्यते इत्याशङ्क्ते—नन्विति—'स्वरितं' समाहारस्वरः । तदादिर्गुणो धर्मः स्वरूपस्तदादिभेदादित्यर्थः । अलङ्कारान्त-रेति । अलङ्कारान्तरमर्थालङ्कारस्तत्प्रतिभा तज्ज्ञानम् उत्पत्तेर्ज्ञानोत्पत्तेर्हेतुर्यस्य श्लेषस्य तादृश इत्यर्थः । अर्थालङ्का-रज्ञानज्ञेय इति वर्तुलार्थः। एवमेव वारंवारमीदृशलिखनस्यार्थो बोध्यः शब्दश्लेषोऽर्थश्लेषश्चेति। भिन्नाभिन्नप्रयत्नोच्चार्यत्वे यथासंख्यं बोध्यम् ।

### सुधासागरः

ननु श्लेषस्तावत् द्विधा सभङ्गपदोऽभङ्गपदश्च । तत्राद्यः शब्दश्लेषः, स्वरितादिगुणभेदात् भिन्नप्रयत्नो-च्चार्यतया भिन्नानां शब्दानां बन्धे जतुकाष्ठन्यायात् शब्दयोरेव श्लिष्टत्वात् । द्वितीयस्त्वर्थश्लेषः, समासाभावेन स्वरितादिगुणाभेदादेकप्रयत्नोच्चार्यतया शब्दभेदाभावादेकवृन्तगतफलद्वयन्यायेनार्थयोरेव श्लिष्टत्वात्। यद्यपि 'अर्थभेदेन शब्दभेदः' इति नयेन द्वितीयेऽपि शब्दभेदः, तथाऽप्युपपत्त्या शब्दभेदप्रतीतावपि ततः पूर्वमेकताध्यव-सायान्नास्ति शब्दभेदः । स एष (श्लेषस्थलेऽश्यमलङ्कारान्तरप्रतिभासत्वात्) निरवकाशतया सर्वालङ्कारबाधक इत्यलङ्काराणां प्रतिभोत्पतिहेतुः, अलङ्कारान्तरस्य प्रतिभा आभासमात्रं न तु स्वस्मिन् विश्रान्ततया चमत्कारित्वं सा

उत्पत्तिहेतुर्यस्य प्रतिभा आभासमात्रं न तु स्वस्मिन् विश्रान्ततया चमत्कारित्वं सा उत्पत्तिहेतुर्यस्य श्लेषस्येति विग्रहः । अलङ्कारान्तराणां प्रतिभामात्रमुत्पादयति न तु तत्पर्याप्तिमित्यर्थः । यथा 'स्वयं च पल्लवाताम्र' इत्यादौ पूर्वार्धेऽभङ्गपदो द्वितीयार्धे सभङ्गपदः श्लेषः । द्वयमप्युपमाप्रतिभोत्पत्तिहेतुः साधर्म्याभावेन तस्याः प्ररोहाभावात् । इवादिश्रवणवशादापाततः साम्यं प्रतीयते न तु तस्य विश्रान्तिः शब्द स्यार्थधर्मत्वाभावेन साम्याभावादिति भावः । यदुक्तं—[का. सा. सं. ४ वर्गे] —

एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम् ।
स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते ॥

अलङ्कारान्तरगतां प्रतिभां जनयत् पदैः ।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम् ॥ इति ।

उच्यते—इह दोषगुणालंकाराणां शब्दार्थगतत्वेन यो विभागः सः, अन्वय-व्यतिरेकाभ्यामेव व्यवतिष्ठते। तथाहि—कष्टत्वादिगढत्वाद्यनुप्रसादयाः, व्यर्थत्वादिप्रौढ्याद्युपमादयस्तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते।

---

### सङ्केतः

एते त्रयोऽपि शब्दगतत्वेन दोषगुणालङ्काराः। व्यर्थत्वादीति। एते त्रयस्तु अर्थगतत्वेन दोषगुणालङ्काराः।

तद्भावेति। अयं भावः—गोत्रादिशब्दप्रयोगे अलङ्कारः, तदर्थकवंशशैलादिप्रयोगे तु न, इति तद्भावत-दभावानुविधायित्वेन अन्वयव्यतिरेकाभ्यां शब्दालङ्कार एवात्र। अर्थालङ्कारे तु शब्दाः परिवृत्तिं सहन्ते। अर्थस्तु तदवस्थ एवेति।

### बालचित्तानुरञ्जनी

परिहरति उच्यत इति। सामान्येन काव्यव्यवहारे शाब्दत्वार्थत्वनिबन्धनं निश्चेतव्यम् यदनुगुणोऽयम-त्रत्यो विभाग इत्याशयेनाह इहेति। न केवलामलङ्कार एवायं नियमः यावद्गुणदोषयोरपीत्याह दोषेति। उद्देशानु-गुण्याद्दोषगुणालङ्काराणामित्युक्तिः। आश्रयाश्रयिभावनिबन्धनतायामपि अन्वयव्यरिकेयोरवर्जनीयत्वस्य वक्ष्यमाणत्वादन्वयव्यतिरेकाभ्यामित्युक्तम्। कष्टत्वादीनां यथान्वयव्यतिरेकाभ्यामेव शब्दार्थगतत्वेन व्यवस्था तथा श्लेषस्यापीति प्रतिपादयितुमाह तथाहीति। कष्टत्वं शाब्दो दोषः। गाढत्वं गुणः। उपमालङ्कार इति, तन्सजा-तीयपरिग्रहार्थं सर्वत्रादिपदम्। प्रौढिगाढत्वयोर्गुणत्वं पराभ्युपगमेन, स्वमते तयोरोजस्यन्तर्भावात्।

### काव्यादर्शः

शब्दगतत्वेनार्थगतत्वेन च यो विभागो व्यवस्था दोषादीनां, सोऽन्वयव्यतिरेकाभ्यामेव। सति तस्मिन् भवतीत्यन्वयः, असति तु न भवतीति व्यतिरेकः। एतदेव तथा हि—इत्यनेन व्याचष्टे। कष्टत्वादयः शब्ददोषा, गाढत्वादयः शब्दगुणाः, अनुप्रासादयः शब्दालंकारा, व्यर्थत्वादयोऽर्थदोषाः, प्रौढ्यादयोऽर्थगुणा, उपमादयोऽर्थालं-काराः शब्दार्थगतत्वेन व्यवस्थाप्यन्ते, ततोऽयमर्थालंकार इति न वाच्यं, अन्वयव्यतिरेकाभ्यां शब्दगतत्वेन प्रतीय-मानत्वात्। तथा हि 'परगोत्राणाम्' इत्यत्र गोत्रादिशब्दप्रयोगेऽलंकारः, गिर्यादिप्रयोगेतु नेति शब्दालंकार एवायम्।

### विवेकः

एतच्च विचार्यमाणं न युक्तमित्याह—इहेति। न हि भास्वत्करविराजितेत्यर्थ श्लेषः, यतो वैचित्र्मलङ्कारः, कविप्रतिभासंरम्भगोचरश्चार्थोऽलङ्कारः, लोकवदाश्रयाश्रयिभावेन तयोर्व्यवस्थितेः। न चात्रार्थः संरम्भगोचरः, न हि भानुदीप्यमानादिशब्दप्रयोगेऽलङ्कारोत्रेति शब्दान्वयव्यतिरेकानुविधायिनोऽस्य शब्दालङ्कारत्वमेव न्याय्यमित्याह न त्वाद्यस्येति। अभङ्गसभङ्गकृतस्त्वनयोः शब्दश्लेषयोर्भेदः।

## दीपिका

उच्यत इति । समाधानोपायकम् । कष्टत्वं श्रुतिकटुता, गाढत्वं वर्णदार्ढ्यम् व्यर्थत्वमपुष्टत्वं पौनरुक्त्यं वा, प्रौढिर्व्याससमासादिरूपा । परवीक्षणे अर्थगुणस्तद्भावः शब्दार्थयोरन्वयस्तदभावस्तयोर्व्यतिरेकः । अनुविधायित्वं तदधीनमन्वयव्यतिरेकित्वम् ।

## दर्पणः

सिद्धान्तमाह उच्यत इति । कष्टत्वं श्रुतिकटुवा गाढत्वं बन्धदैर्ध्यं व्यर्थमपुष्टार्थत्वं पौनरुक्त्यं वा प्रौढतः शब्दैः प्रागुक्तरीत्या गुणत्वेनाङ्गीकृतौ शब्दार्थौ, अनुविधायित्वात् तदधीनस्यान्वयव्यतिरेकानुविधायित्वात् ।

## साहित्यचूडामणिः

दोषेति । उद्देशानुगुण्याद् दोषा गुणालङ्काराणामित्युक्तिः । अन्वयव्यतिरेकाभ्यामेवेति । आश्रयाश्रयिभावनिबन्धनतायामपि तयोरवर्जनीयत्वस्य वक्ष्यमाणत्वात् । कष्टत्वं शाब्दो दोषः । गाढत्वं गुणः । अनुप्रासोऽलङ्कारः । एकस्य व्यर्थत्वमार्थो दोषः । प्रौढिर्गुणः । उपमा अलंकारः । तज्जातीयपरिग्रहार्थं सर्वत्रादिपदप्रयोगः । प्रौढिगाढत्वयोर्गुणत्वं पराभ्युपगमेनैव । स्वपक्षे तयोरोजनस्यन्तर्भावात् । तत्र दुष्टत्वस्य "कार्तार्थ्यं कर्हि लप्स्यत" इति तद्भावः । "आह्लादं लभते कदेति" तदभावः । "मालतीदाम लङ्घितं भ्रमरैरि'ति" "मालतीमाला लोलालिकललीलायां इति च यथा गाढत्वस्य तद्भावतदभावौ । एवं "रावणो लोकरावणः" "लोकनादन" इत्यनुप्रासस्य । इत्थं व्यर्थतादावप्यूह्यम् ।

## सम्प्रदायप्रकाशिनी

परिहरति—उच्यते इह दोषागुणेत्यादिना । इह हि न केवलमलङ्काराणां, यावता दोषादीनां सर्वेषामेव धर्माणां यो विभागः, स तत्तच्छब्दार्थान्वयव्यतिरेकाभ्यामेव व्यवस्थितिं लभते । यत्र शब्दे सति ये दोषगुणादयः सन्ति, असति तु न सन्ति, ते शब्दान्वयव्यतिरेकानुविधानाच्छब्दधर्माः । एवमर्थान्वयव्यतिरेकानुविधायिनश्चेदर्थधर्मा इतीयमेव विभागव्यवस्था, न पुनरुच्चारणप्रयत्नभेदाभेदनिबन्धना । तमिमं विभागं दृष्टान्तेन हृदयङ्गमीकरोति—तथा हि कष्टत्वेत्यादि । कष्टत्वं श्रुतिकटुत्वम् । आदिशब्दात् च्युतसंस्कृत्यादेः शब्ददोषान्तरस्य परिग्रहः । गाढत्वं शब्दगुणः । आदिशब्दाल्ललितत्वादेः शब्दगुणान्तरस्य, अनुप्रासादाय इत्यादिशब्दाद् यमकादेः शब्दालङ्कारान्तरस्य । त एते हि शब्दे सति सन्ति, असति तु न सन्तीति शब्दभावाभावानुविधायित्वाच्छब्दधर्मा इत्येव व्यवस्थाप्यन्ते । व्यर्थत्वमपुष्टत्वमर्थदोषः । प्रौढिर्वैदग्ध्यमर्थगुणः । आदिशब्दात् साभिप्रायत्वादीनां परिग्रहः । उपमादय इत्यादिशब्दात् रूपकादेरर्थालङ्कारान्तरस्य । एतेऽपि ह्यर्थान्वयव्यतिरेकानुविधानादर्थधर्मतया व्यवस्थाप्यन्ते ।

## मधुमती

प्रागुक्तयुक्त्या अर्थभेदात् शब्दभेदावश्यकत्वे सत्याह—इहेति । तथा च—यदन्वयव्यतिरेकानुविधायी यो गुणोऽलङ्कारो दोषो वा, स तस्येति भावः ।

### विस्तारिका

एतावता शब्दालङ्कारत्वं व्यवस्थापितम् ।

अलङ्कारान्तरमाह—न चायमिति । अयं श्लेषः । उपमाप्रतिभाप्रतीतिः, तस्याः सम्पादकः । पूर्ववद् बहुव्रीहिः । न तु श्लेषस्य नोपमासाधकत्वम् ।

### सारबोधिनी

अलङ्कारान्तरप्रतिभा आभानमात्रम्, न तु स्वस्मिन् विश्रान्ततया चमत्कारित्वम् । न तु स्वस्मिन् विश्राम इति । कष्टत्वं श्रुतिकटुता । गाढत्वमोजः । वर्णसाम्यमनुप्रासः । एते शब्दस्य दोषगुणालङ्काराः । व्यर्थत्वमपुष्टार्थता । प्रौढिर्व्यासससमासरूपा । साधर्म्यमुपमा । एते अर्थस्य दोषगुणालङ्काराः । तत्पदेन शब्दार्थानुत्कर्षः । भावोऽन्वयः । अभावो व्यतिरेकः । श्लेषस्य क्वैतद्दृष्टमित्याह तथाहीति ।

### काव्यप्रदीपः

द्विविधोऽप्यलंकारसर्वस्वकारादिभिरर्थाश्रितत्वेनार्थालंकारमध्ये पठितस्तत्कथं शब्दालंकारमध्ये पठ्यते इति । उच्यते—दोषगुणालंकाराणां शब्दार्थगतत्वेन यो विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते । यत्र हि पर्यायान्तरपरिवृत्तिसहत्वं नास्ति तस्य शब्दगतत्वम्, यत्र तु तत्सहत्वं तत्रार्थगतत्वम् । यथा कष्टत्वादयो दोषाः, गाढत्वादयो गुणाः, अनुप्रासादयोऽलंकाराः शब्दगताः । पर्यायान्तरेण तदर्थोपस्थापने तेषामसंभवात् ।

### आदर्शः

इदं परोक्तमर्थालङ्कारत्वबीजमयुक्तम्, किन्त्वन्वयव्यतिरेकानुविधानामेव बीजमित्याह—उच्यत इहेति । कष्टत्वादिति । कष्टत्वं श्रुतिकटुत्वं तदादिः शब्ददोषः । गाढत्वमुद्धतवर्णविन्यासस्तदादिः परोक्तः शब्दगुणः । अनुप्रासः शब्दालङ्कार । तथा व्यर्थत्वमपुष्टार्थत्वं तदादिरर्थदोषः । प्रौढत्वं 'परार्थे वाक्यरचने' त्यादिचतुर्विधप्रौढिरूपोजोगुणः तदादयोऽर्थगुणाः परोक्ताः । उपमादयोऽर्थालङ्काराः । 'तद्भावतदभावौ' तदन्वयव्यतिरेकौ, तदनुविधायित्वादित्यर्थः । अतोऽर्थालङ्कारज्ञानज्ञेयत्वेपि शब्दान्वयव्यतिरेकानुविधायित्वात् श्लेषः शब्दालङ्कार एवेति साधयितुम्

### सुधासागरः

द्विविधोऽप्यलङ्कारसर्वस्वकारादिभिरर्थाश्रितत्वेनार्थालङ्कारमध्ये पठितः तत्कथं शब्दालङ्कारमध्ये पठित इति । समाधत्ते उच्यत इत्यादि । अयमर्थः दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते । यत्र हि पर्यायान्तरपरिवृत्तिसहत्वं नास्ति तस्य शब्दगतत्वं यत्र तु तत्सहत्वं तत्रार्थगतत्वम्, यथा कष्टत्वादयो दोषा, गाढत्वादयो गुणाः अनुप्रसादयोऽलङ्कारा शब्दगताः, पर्यायान्तरेणापि तदर्थोपस्थापने तेषामसम्भवात् । व्यर्थत्वाद्योदोषाः प्रौढत्वादयो गुणाः उपमादयोऽलङ्काराश्चार्थगताः, पर्यायान्तरेणापि तदर्थोपस्थापने तेषां सम्भवादिति ।

स्वयं च पल्लवाताम्रभास्वत्करविराजिता। इत्यभङ्गः

प्रभातसंध्येवास्वापफललुब्धेहितप्रदा ॥ ३७७ ॥ इति सभङ्गः

इति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नम् न त्वाद्य-स्यार्थश्लेषत्वम्। अर्थश्लेषस्य तु स विषयः, यत्र शब्दपरिवर्त्तनेऽपि न श्लेषत्व-खण्डना। यथा

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।

अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥ ३७८ ॥

---

सङ्केतः

स्वयं चेति। गौरीपक्षे—गौरीयं पल्लववत् आताम्रभावद्भ्यां कराभ्यां शोभते। सुखेन आप्तुं यन्न शक्यं फलं तत्र लुब्धानां ईहितं प्रदत्ते। सन्ध्यापक्षे तु—भास्वत्कराः सूर्यकराः। स्वापफलं विश्रान्तिः। लुब्धे इति सप्तम्यन्तम्। अभङ्गः अर्थश्लेषतया उद्भटस्य यः संमतः। न त्विति। न हि अभङ्गत्वमात्रं अर्थालङ्कारताहेतुः। किन्तु अन्वयव्यतिरेकाविति।

तर्हि अर्थश्लेषस्य को विषयः? इत्याह—स्तोकेनेति। तुलायाः कोटिः अग्रम्। एतेन—'अलङ्कारान्तर-विविक्तो नास्त्येव श्लेषः' इति यदुक्तं परैः तत् परिहृतम्। केचित् अत्रापि तुल्ययोगितामाहुः।

बालचित्तानुरञ्जनी

उद्भटीयमेवोदाहरणद्वयमेकत्र पद्येनोपादत्ते स्वयं चेति। अत्र पार्वतीवर्णने प्रकरणात् प्रातः संध्याश्लेषः। गौरीपक्षे पल्लवताम्राभ्यां भास्वद्भ्यां कराभ्यां विराजिता। संध्या तु पल्लववदाताम्रै र्भास्वतः सूर्यस्य करैः किरणैर्विराजिता। गौरीपक्षे सुखेन आप्तुं लब्धुं योग्यमस्वापं, एवंविधं यत्फलं मोक्षलक्षणम् तत्र लुब्धानामभिला-षवतां प्राणिनामीहितं प्रददातीति। अन्यत्रास्वापफलं मोहालस्यादौ अलुब्धस्तस्य हितप्रदा। अत्र पूर्वार्द्धेऽभङ्ग-श्लेषः। उत्तरार्द्धे सभङ्गश्लेषः। अत्र द्वयोरपि शब्दैकसमाश्रयत्वेन शाब्दत्वमुपपन्नमित्याह द्वावपीति। नन्वत्रास्वापेत्यादौ स्वापेत्यत्र यद्येकपद्यं तदा थाथघञ्क्ताजबित्रकाणाम् [अष्टाध्यायी ६-२-१४४] इति सूत्रेणा-न्तोदात्तत्वं लघुप्रयत्नत्वं असु आप इति भिन्नपदत्वे तु "ततपुरुषे तुल्यार्थतृतीयसप्तम्युपमानाव्ययद्वितीयाकृत्याः" [अ. ६-२-२] पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं गुरुप्रयत्नत्वं च शब्दभेदात् शाब्दत्वमुत्तरार्द्धे। पूर्वार्द्धे तु तदभावा-दार्थमित्यत आह न त्विति। भास्वत्करशब्दयोः सूर्यकिरणादिपरिवर्त्तने श्लेषाभाव इत्यभिप्रायः। तर्हि अर्थश्लेषस्य को विषयस्तत्राह अर्थेति।

उदाहरति यथेति । स्तोकेनोन्नतिमायाति स्तोकेन अधोगतिमायाति । अहो आश्चर्यम् । तुलायाः कोटिरग्रं तस्य खलस्य च समाना वृत्तिः । अत्र स्तोकादिस्थाने अल्पादिपदप्रयोगेऽपि न श्लेषस्योपमाप्रतिभोत्पत्तिहानिः । तथा च "स्वयं च पल्लवाताम्र" इत्यादौ शब्दालङ्कारत्वेऽपि श्लेषोपमालङ्कारयोः प्रतीतत्वात् साङ्कर्यमिति भावः ।

## काव्यादर्शः

यच्चाभङ्गत्वमात्रेण अर्थश्लेषत्वमभिमतम् उद्भटस्य तदपि नैवोपपन्नमित्याह 'स्वयं चे'ति । गौरीपक्षे—किसलयवद् दीपमानाभ्यां कराभ्यां शोभते । सुखेनाप्तुं यन्न शक्यं फलं यत्र तु लुब्धानामीहितं प्रददाति । अभङ्गः शब्दश्लेष इति । योऽर्थश्लेषतया उद्भटस्य संमतः । न त्वाद्यस्येति । 'स्वयं च' इत्यस्य अभङ्गत्वमात्रेण अर्थश्लेषत्वं नोपपन्नमित्यर्थः ।

## विवेकः

अर्थश्लेषस्येति यथा स्तोकेनेत्यादि—अत्रान्योपचयापचययोरुद्गमानुद्गमादिशब्दपरिवर्तेऽपि तुलाकोटिखलधर्मयोरर्थयोः श्लिष्टत्वमप्रतिहतमेव । यदप्युक्तमलङ्कारान्तरप्रतिभोत्पत्तिहेतुः श्लेष इति तदपि न युक्तमित्याह न चेति वैपरीत्यं दर्शयति । एतदुपपादयन्नाह तथाहीत्यादि । अथवा न्यायपरोक्षायामुपमारूपकमेव (उद्भट-(विवेक) विवृति ३९ पृ:) । तथाहि श्लेषस्तावदुपमाऽऽदिव्यतिरिक्तेऽपि विषये प्राप्तप्रतिष्ठो यथा देव त्वमित्यादि । पाता रक्षिता अलं पर्याप्तं पातालं रसातलञ्च । आशाः प्रत्याशा दिशश्च । चामरस्य मरुत्, अमराणां मरुतां वायूनाञ्च [भूमिः] । अत्र त्वमेव पातालमित्याकारपाश्चात्यत्वञ्चामरस्य मरुद्भूमिरित्याकारात् पौरस्त्येऽक्षरे श्लिष्टमिति वर्णश्लेषता । न चात्र श्लेषस्य पृष्ठेऽलङ्कारान्तरस्योत्थापनमस्ति । एवमुपमाऽपि यथा गुणादिसाम्ये तथा शब्दमात्रसाम्येऽपि दृश्यते । यथा सकलेत्यादि सह कलकलेन वर्तते सकला कला यस्येति चेति । अत्रैव प्रामाणिकसम्मतिं दर्शयति तथाहीति । इहापि शब्दालङ्कारमध्ये । उदाहृतञ्च यथा—यदनेकपयोधिभुजस्तवैव सदृशोऽस्य हीनसुरतरभसः । ननु वलिजितः कथं ते तदसौ सदृशः सुराधिकृतः ॥ वसुधामहित सुराजित नीरागमना भवांश्च वर्षाश्च । सुरजितवराहवपुस्तव च हरेश्चोपमा घटते ॥'

## दीपिका

उपमाप्रतिभोत्पत्तिहेतुरिति चोभयत्र बहुव्रीहिरेवमुत्तरत्राप्येवं ज्ञेयम् । अत्र श्लेषस्य सामान्यनिर्वाहकतया तदङ्गता, न तु सामान्यस्य तन्निर्वाहकतेति न तस्य मुख्यतया स्यात् । यथेति ।

ननु गुणक्रियासाम्येनैवोपमात्वम्, न चात्र तथा, शब्दमात्रे साम्येऽप्युपमाया अलङ्कारस्य सुलभापदेशमात्रत्वात् । तथा हि—'साधर्म्यमुपमा' इत्येवाविशिष्टं सूत्रम्, वास्तवसाभ्र एवोपमा सिद्धा, न चात्र तथा, स्वरूपशब्दमाहात्म्यमात्रेणैवोपक्षेपादिति चेन्मैवम्, तावताऽपि बाध्यभूतोपमाऽङ्गीकारात् ।

तदेव लक्ष्यान्तरदर्शनेनाङ्गीकारयति—तथा हीति । सकलकलं ध्वनिसहितं सम्पूर्णावयवं च । यदि युक्तेरप्रतिषिद्धत्वादेवंविधभेदमङ्गीकुरुषे, तदा तत्राप्यङ्गीकुरु, द्वयोरप्यनयोराग्रहमन्तरेण विशेषाभावात् । क्वचित् कण्ठत एवोच्यते । तदाहतथा हीति । इहापीति शब्दालङ्कारगणनायाम् । सम्भवतो न व्यावर्तते इत्यर्थः । ततश्चैवंविधयोरनयोरुभयालङ्कारतेति भावः । तदुदाहृतिस्तु समुच्चयस्य 'बसुधामहित' इति पूर्वत्र ।

**दर्पणः**

स्वयञ्चेति । न केवलं सा गौरी तथाविधस्य हि मात्रेः स्वतास्वरं[स्वरितस्वरं] चैवं विधेत्यर्थः । भास्वद्भ्यां कान्तिमद्भ्यां कराद्भ्यां, भास्वतः सूर्यस्य करैः रश्मिभिः आस्वापे दुरापे, फले, लुब्धानामोहितं वाञ्छितं अस्वापेन अस्वपलेन यत् फलं तत्र जले हितं वाञ्छितं वा ।

सुवर्णादिप्रकर्षापकर्षसूचिकाशलाका तुलाकोटिः । अत्र स्तोकादिस्थाने, मूल्यादिनिवेश पिनध्वार्थताहानिः । स्वयं चेत्यादौ तु सुतासुतादिस्थाने कान्तिमदादिति तु न तथेत्यर्थः ।

अधुनालङ्कारान्तरबाधकत्वमस्य निरस्यन्नाह नचेति । अयं [?] स्वयं चेत्यादौ स्तोकेनेत्यादौ चानुभूयमानो विच्छित्तिविशेषः ।

**साहित्यचूडामणिः**

औद्भटीयमेवात्रोदाहरणद्वयमुपादत्ते—स्वयं चेति । न केवलमुक्तरूपस्य हिमाद्रेस्तनया, यावत् स्वयमप्येवंविधेति प्रकरणावसेयोऽर्थः । गौरीपक्षे किसलयवदारक्ताभ्यां भास्वद्भ्यां कान्तिमद्भ्यां पाणिभ्यां विराजिता, सुखेनाप्तुं लब्धुमशक्यं यत् फलं तत्र लुब्धनामभिलाषवतामभिमतं प्रददाति । सन्ध्यापक्षे तु किसलयवदातम्रैरुदयारुणिमशालिभिः भास्वतः सूर्यस्य करैः किरणैर्विराजिता, स्वापफले आलस्यादौ यो न लुब्धः तस्मिन् हितमनुकूलत्वं प्रददाति । अत्र पूर्वार्धे श्लेष आर्थः उत्तरत्र शाब्दः । अत्रास्वापादौ यद्यैकण्द्यं तदा थाथादिस्वरेणान्तोदात्तत्वं लघुप्रयत्नत्वं च, यदा च पदद्वयं तदा किं आद्ये "तत्पुरुषे तुल्यार्थ" (६-२-२) इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं गुरुप्रयत्नत्वं च। द्वावपीत्यर्थद्वयगामिनौ । न पुनः पाश्चात्यः सभङ्गश्लेष एव, पूर्वार्धे भास्वत्करशब्दयोरपि सूर्यकिरणादिना परिवर्तने श्लेषाभावाद् ।

**सम्प्रदायप्रकाशिनी**

इत्थं प्रकृतेऽपि व्यवस्था युक्तेति प्रसिद्धोदाहरणपुरस्सरमाह—स्वयं च पल्लवेत्यादि । भास्वद्भ्यामुद्द्योतमानाभ्यां कराभ्यां पाणिभ्यामित्येकदा । भास्वतः सूर्यस्य करैः किरणैरित्यन्यदा । सुखेनाप्तुं शक्यं स्वापं, तथाविधं न भवतीत्यस्वापं दुर्लभं यत् फलं कैवल्यादि तत्र लुब्धानां महात्मनामीहितप्रदेत्येकदा । अन्यदा तु स्वापस्य निद्रायाः फलं स्तैमित्यादि, तत्र यो लुब्धो न भवति तस्मिन् जने हितप्रदेति । अत्र भास्वत्करेत्यभङ्गश्लेषः । अस्वापफललुब्धे हितेति सभङ्गः । तदेतदुभयं शब्दैकान्वयव्यतिरेकानुविधायीति शब्दालङ्कार एव, न पुनराद्यस्याभङ्गपदत्वमात्रादर्थश्लेषता ।

**मधुमती**

स्वयं चेति । प्रवालवत् आताम्राभ्यां भास्वद्भ्यां कराभ्यां विराजिनी, अथ च पल्लवाताम्रैः विवस्वतः किरणैः विराजिता । इत्यभङ्गः इति । अत्र 'भास्वत्कर' पदस्य तथाविधत्वादिति भावः । प्रभातेति । अस्वापं दुरापं यत् फलं मोक्षः तत्र लुब्धानां ईहितप्रदा परमेश्वरी । स्वापः निद्रा, तत्फलं दुरितं तत्र अलुब्धे हितप्रदा प्रतस्सन्ध्या ।

अत्र प्रथमे कर्मधारयसमासे आद्युदातत्वम्, द्वितीये षष्ठीतत्पुरुषे अन्तोदात्तत्वमिति स्वरभेदेन सभङ्गश्लेषत्वमिति भाव: । उपपन्नमिति । तदन्वयव्यतिरेकानुविधायित्वादिति भाव: ।

नन्वेवं अभङ्गश्लेषस्यापि शब्दान्वयव्यतिरेकानुविधायितया शब्दश्लेषत्वे अर्थश्लेषो निर्विषय: स्यादित्यत आह—अर्थश्लेषस्य त्विति । उदाह्रियमाणे स्वल्पपदाद्युपादानेऽपि न श्लेषत्वखण्डनेत्यर्थ: ॥ यदुक्तम्—'अलङ्कारान्तरप्रतिभोत्पत्तिहेतु:' इति, तद्दूषयति—न चेति ।

## विस्तारिका

"प्रभातसन्ध्येव" इत्यादौ श्लेषोपस्थितताया: साजात्यविरहेण सजातीयधर्मसम्बन्धविरहा़दित्याह—तथा हीति ।

## सारबोधिनी

स्वयं चेति । न केवलं तस्या: स्वामिन एष प्रभाव: स्वयमप्येवमित्यर्थ: । भास्वान् दीप्तिमान् सूर्यश्च । करो हस्तो रश्मिश्च, अस्वापोऽनिद्रा दुरापश्च । फलमलक्ष्मीविगम: स्वर्गमोक्षादिकञ्च । फललुब्धे जने हितप्रदा । फलं लुब्धस्य ईहितस्य वाञ्छितस्य च । शब्दैकेति । अन्वयव्यतिरेकाभ्यामिति शेष: । ननु भवन्मते तर्ह्यर्थश्लेषो निर्विषय: स्यादित्यत आह । अर्थेति ।स्तोकेनेति । उन्नतिमूर्ध्वप्रसरणमहङ्कारञ्च । अधोगतिम् अध: पातं पादपतनादि च । तुला घट: कोटिरग्रञ्च । अत्राल्पेनोद्रेकमायातीति पाठेऽपि स्यादेव श्लेष इत्यर्थ श्लेषोऽत्र ।

## काव्यप्रदीप:

उदाहृते च 'स्वयं च पल्लव—' इत्यादौ द्वयोरप्यर्धयो: शब्दपरिवृत्त्यसहतया द्वयोरपि शब्दालंकारत्वमेवोचितम् । न त्वाद्यस्याप्यर्थालंकारत्वम् । नन्वेवमर्थश्लेष: किं नास्त्येव । क एवमाह । कस्तर्हि तस्य विषय: । यत्र पदपरिवर्तनेऽपि न श्लेषभङ्ग: । यथा—

**'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।**
**अहो सुसदृशी वृत्तिस्तुलाकोटे: खलस्य च ॥'**

## काव्यप्रकाशखण्डनम्

**स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।**
**अहो सुसदृशी वृत्ति: तुलाकोटे: खलस्य च ॥**

उन्नतिं ऊर्ध्वगतिं पक्षे आनन्दम्, अधोगतिं नम्रतां दु:खं च, अहो इत्याश्चर्ये । अत्र अल्पेनोद्रेकमायातीति पाठे भवति [प. ४५, १] श्लेष: ।

## आदर्शः

उदाहरणमाह—इयञ्चेति। क्वचित्तु स्वयञ्चेति पाठः। अत्र प्रबन्धगम्या पार्वती विशेष्या। कीदृशी ? प्रभातसन्ध्येव पल्लववदाताम्रेण भास्वता दीप्यमानेन करेण पाणिना, पक्षे तु पल्लवे आताम्रेण भास्वतः सूर्यस्य करेण रश्मिना विराजितेत्यर्थः। अत्रार्द्धे भास्वत्करशब्दयो रखण्डत्वेनार्थश्लेषस्तैरुक्तः। अस्वापे सुखालभ्ये दुरापे फले लुब्धानामीहितस्य वाञ्छितस्य प्रदात्री। पक्षे तु स्वापो निद्रा अस्वापो जागरणं तद्रूपफललुब्धे जने जागरण-रूपहितप्रदा, प्रभाते जागरणात्। अत्र सु आपेति भङ्गेन शब्दश्लेषस्तैरुक्तः। शब्दान्वयव्यतिरेकानुविधानात्तु द्वयोरपि शब्दश्लेषत्वमाह—द्वावपीति।

## सुधासागरः

पार्वतीवर्णनमिदम्, पल्लववत् आताम्रो भास्वान् दीप्तिमान् यः करो हस्तः तेन विराजिनी विराजमाना, प्रभातसन्ध्येव अस्वापंदुरापं यत् फलं मोक्षादिकं तल्लुब्धे हितप्रदा, प्रभातसन्ध्याऽपि पल्लववदाताम्रो यो भास्वतः सूर्यस्य करः किरणः तद्विराजनी, अस्वापो निद्राविरहः तत्फलं स्नानसन्ध्यादि तल्लुब्धेहितप्रदा, यद्वा,स्वापलुब्धे नरे हितप्रदा। अत्राद्यार्धे भास्वत्करेत्यत्राभङ्गश्लेषः, द्वितीयेऽस्वापेत्यत्र सभङ्गश्लेषः। द्वावपीत्यादि। द्वयोरप्यर्थयोः शब्दपरिवृत्त्यसहतया द्वयोरपि शब्दालङ्कारत्वमेवोचितं न त्वाद्यस्याप्यर्थालङ्कारत्वमित्यर्थः।

न चायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः अपि तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा। तथाहि—यथा 'कमलमिव मुखं मनोज्ञमेतत्कचतितराम्' इत्यादौ गुणसाम्ये क्रियासाम्ये, उभयसाम्ये वा, उपमा। तथा 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादौ शब्दमात्रसाम्येऽपि सा युक्तैव। तथा ह्युक्तं रुद्रटेन

"स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किन्तु।

आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः॥" इति।

---

**सङ्केतः**

द्विविधस्यापि परेष्टश्लेषस्य अलङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वं दूषयति—न चेति। अयं 'स्वयं चे'त्यादिः। प्रतिभेति। प्रतिभा—अर्थस्य आभासमात्रं, न तु प्ररोहः निर्वाहश्चेति यावत्।

यथा गुणक्रियासाम्ये उपमा, तथा शब्दसाम्येऽपि स्यात् इति निर्णेतुमाह—तथाहीति। सकलेति। सह कलकलेन वर्तते यत्, सकलाः कलाः विद्यन्ते यत्र, सकलैः कलावि(ब)द्भिः कलम्, सकलं च तत् कलं च-इत्यादिविग्रहः पक्षद्वये यथायोगं योज्यः। शब्दमात्रसाम्येऽपीति। एतेन—उद्भटेष्टं 'शब्दमात्रसाम्ये शब्दश्लेषत्वम्' इति निरस्तम्।

इहापि शब्दालङ्कारप्रकरणे। एतेन—शब्दमात्रसाम्येऽपि उपमात्वं सिद्धम्।

**सङ्केतः (रुय्यकः)**

सह कलकलेन वर्तते (यत्) सकलाः कला यस्य च। इहापीति शब्दालंकारमध्ये। पाता रक्षिता (अलं) पर्याप्तम् आशा दिशः आस्थाश्च, चामरस्य मरुत् अमराणां मरुतां वायूनाम् (च)।

**बालचित्तानुरञ्जनी**

नन्वत्र श्लेषस्योपमाप्रतिभोत्पत्तिहेतुत्वात् श्लेष एव नोपमा, श्लेषस्य सर्वालङ्कारापवादकत्वादित्याशङ्क्याह न चेति। देव त्वमेव पातालमित्यादौ केवलश्लेषस्य सावकाशत्वस्य दर्शनात् श्लेषस्य सर्वालङ्कारापवादकत्वाभावेन साङ्कर्यमेवेति भावः। केवलं श्लेषः उपमाप्रतिभोत्पत्तिहेतुर्न किन्तु उपमापि श्लेषप्रतिभोत्पत्तिहेतुरित्यपिपदपदार्थः। ननु स्वयं च पल्लवाताम्रेत्यादौ शब्दालङ्कारसमर्थनादुपमायाश्चार्थालङ्कारत्वेन शब्दालङ्कारत्वाभावान्न साङ्कर्यमित्याशङ्क्य उपमायाः शब्दालङ्कारत्वं समर्थयितुमाह तथाहीत्यादिना। मनोज्ञमिति गुणसाम्यम्। कचतीति क्रियासाम्यम्। कच दीप्तौ। यद्यप्यत्रार्थालङ्कारत्वं तथाप्यत्र शब्दालङ्कारत्वमप्यङ्गीकर्तव्यमित्याह तथेति। कलकलेन कोलाहलेन सह वर्त्तत इति सकलकलं पुरं जातं संप्रति सितांशुबिम्बमिव। तदपि सकलाः कला यत्र। अत्र पुरस्य चन्द्रबिम्बस्य च शब्दसाम्यं न त्वर्थसाम्यमिति शब्दालङ्कारत्वमप्यङ्गीकर्त-

व्यमिति भावः। स्वकपोलकल्पितमित्याशङ्क्य संमतिमाह तथेति। प्राचुर्यादर्थालङ्कारावुपमासमुच्चयौ क्वचित्तु शब्दसाम्ये तौ शब्दालङ्कारावपि भवतः। पुरं सुधांशुबिंबमिति पाठे समुच्चयालङ्कारो द्रष्टव्यः।

### काव्यादर्शः

तर्हि अर्थश्लेषस्य निर्विषयत्वमित्याह—अर्थश्लेषस्येति। अर्थश्लेषः, यथा—'स्तोकेने'ति। अत्र हि स्तोकोन्नत्यादीनां शब्दानां स्थाने स्वल्पोच्चैस्त्वादिशब्दा यदि निवेश्यन्ते तथापि न श्लेषत्वक्षतिः। 'स्वयं च' इत्यत्र तु दीप्तप्राणिशब्दौ यदि निवेश्येते तदा श्लेषत्वकथाऽपि न स्यात्। यच्च श्लेषस्य द्विविधस्य अलंकारान्तराणां प्रतिभोत्पत्तिहेतुत्वं तेन उक्तं तदपि नैवेत्याह—न चेति। अयमिति। 'स्वयं च' इत्यादिः। अत्र हि श्लेषप्रतिभोत्पत्तिहेतुरुपमा, श्लेषस्य तु प्रतिमानमात्रेणैवावस्थानम्, उपमैव प्रधानेत्यर्थः। तेन श्लेषाय उपमा, न तु श्लेषेण।

ननु, शब्दसाम्यमेव 'स्वयं च' इत्यादौ दृश्यते, न त्वर्थसाम्यमित्याशङ्क्य शब्दसाम्येऽपि तां समर्थयितुमाह—तथा हीति। 'कमलमिव' इति 'कचति' इति दीप्यते। यथात्र मनोज्ञत्वगुणदीपनक्रियासाम्ये उभयसाम्येवोपमा उद्भटस्यापि संमता, तथा शब्दमात्रसाम्येऽपि दृश्यते, यथा—'सकलकलम्' इत्यादौ शब्दश्लेषतया संमते परस्य। सह कलकलेन वर्तन्ते, सकलाः कला यस्य च।

### विवेकः

एवञ्च 'पल्लवाताम्रे'त्यादौ नोपमाप्रतिभोत्पत्तिहेतु श्लेषत्वं किन्तु सङ्करत्वमेव न्याय्यम्। अथवा न्यायपरीक्षायामुपमारूपकमेव (उद्भट-(विवेक) विवृति ३९ पृः)। तथाहि श्लेषस्तावदुपमाऽऽदिव्यतिरिक्तेऽपि विषये प्राप्तप्रतिष्ठो यथा देव त्वमित्यादि। पाता रक्षिता अलं पर्याप्तं पातालं रसातलञ्च। आशाः प्रत्याशा दिशश्च। चामरस्य मरुत्, अमराणां मरुतां वायूनाञ्च [भूमिः]। अत्र त्वमेव पातालमित्याकारपाश्चात्यत्वञ्चामारस्य मरुद्भूमिरित्याकारात् पौरस्त्येऽक्षरे श्लिष्टमिति वर्णश्लेषता। न चात्र श्लेषस्य पृष्ठेऽलङ्कारान्तरस्योत्थापनमस्ति। एवमुपमाऽपि यथा गुणादिसाम्ये तथा शब्दमात्रसाम्येऽपि दृश्यते। यथा सकलेत्यादि सह कलकलेन वर्तते सकला कला यस्येति चेति। अत्रैव प्रामाणिकसम्मतिं दर्शयति तथाहीति। इहापि शब्दालङ्कारमध्ये। उदाहृतश्च यथा—यदनेकपयोधिभुजस्तवैव सदृशोऽस्य हीनसुरतरभसः। ननु वलिजितः कथं ते तदसौ सदृशः सुराधिकृतः॥ बहुधामहित सुराजित नीरागमना भवांश्च वर्षाश्च। सुरजितवराहवपुषस्तव च हरेश्चोपमा घटते॥'

### दीपिका

उपमाप्रतिभोत्पत्तिहेतुरिति चोभयत्र बहुब्रीहिरेवमुत्तरत्राप्येवं ज्ञेयम्। अत्र श्लेषस्य सामान्यनिर्वाहकतया तदङ्गता, न तु सामान्यस्य तन्निर्वाहकतेति न तस्य मुख्यता स्यात्। यथेति।

ननु गुणक्रियासाम्येनैवोपमात्वम्, न चात्र तथा, शब्दमात्रे साम्येऽप्युपमाया अलङ्कारस्य सुलभापदेशमात्रत्वात्। तथा हि—"साधर्म्यमुपमा" इत्येवाविशिष्टं सूत्रम्, वास्तवसाभ्र एवोपमा सिद्धा, न चात्र तथा, स्वरूपशब्दमाहात्म्यमात्रैणैवोपक्षेपादिति चेन्नैवम्, तावताऽपि बाध्यभूतोपमाऽङ्गीकारात्।

तदेव लक्ष्यान्तरदर्शनेनाङ्गीकारयति—तथा हीति। सकलकलं ध्वनिसहितं सम्पूर्णावयवं च। यदि युक्तेरप्रतिषिद्धत्वादेवंविधभेदमङ्गीकुरुषे, तदा तत्राप्यङ्गीकुरु, द्वयोरप्यनयोराग्रहमन्तरेण विशेषाभावात्। क्वचित् कण्ठत एवोच्यते। तदाह—तथा हीति। इहापीति शब्दालङ्कारगणनायाम्। सम्भवतो न व्यावर्तेते इत्यर्थः। ततश्चैवंविधयोरनयोरुभयालङ्कारतेति भावः। तदुदाहृतिस्तु समुच्चयस्य 'वसुधामहित' इति पूर्वत्र।

**दर्पणः**

उपमेत्यादौ श्लेषेत्यादौ पूर्ववद्बहुब्रीहिः। एवं सर्वत्रैवंविधे ज्ञेयम्। अत्र श्लेषसाम्यनिर्वाहकता न तु साम्यस्य तन्निर्वाहकतेद्युपमाया एवाङ्गित्वेन व्यपदेशो भवितुं युक्तः। प्रधानेन व्यपदेशा भवन्तीत्युक्तनयात्।

ननु शब्दहेतुकस्य साम्यंस्य वास्तवत्वाभावाद्रपि तत्कथमुपमेत्याह तथाहीति। कमलमिवेत्यादौ मनोज्ञ-त्वगुणसाम्यं मुखं चन्द्रं इव शोभत इत्यत्र क्रियासाम्यं निर्द्धति [निर्द्धारिते] वृषभ इव तृप्त इत्यत्रोभयसाम्यम्।

**साहित्यचूडामणिः**

फलितमर्थमाह—नन्विति। तर्हि कथमर्थश्लेषस्य विषय इति चेत् तत्राह—स्तोकेनेति। अत्र शब्दपरि-वर्तनेऽपि न श्लेषखण्डना। एवमर्थालङ्कारत्वमस्य निराकारि। [उद्भटोक्तेन]

अथ—

**अलङ्कारान्तरगतां प्रतिभां जनयत् पदैः।**
**द्विविधैरर्थशब्दोक्ति विशिष्टं तत् प्रतीयताम्॥**

इति न्यायेन यन्मूलोऽयमर्थालंकारत्वभ्रमः, तदुपमाद्यलंकारान्तरप्रतिभोत्पत्तिहेतुत्वमाहस्तयितुमाह—नचेति। अयं प्रकृतोदाहरणयुगलवर्ती। अपित्विति। उक्तार्थवैपरीत्येन श्लेषप्रतिभोत्पत्तिनिमित्तमुपमादि, येन शब्दालंकारत्वोपपत्तिरिति भावः। उक्तमर्थमुदाहरणेन शोधयति—कमलमिवेति। मनोज्ञत्वं गुणः। कचनं क्रिया। वाकारेण सर्वथोपमायां साम्येन भाव्यं, तत्प्रतिपादनं तु बहुप्रकारमिति प्रत्याय्यते। तेनेति। येनोपमायां साम्यमात्रे निर्बन्धः।

सकलकलमिति। कलकलेन सह वर्त्तते अथ च सकलाः कला यत्र। शब्दमात्रेति। पुरस्य चन्द्रबिम्बस्य च साम्यं शब्दोल्लेखमात्रलक्षणमपि द्वयोरुपमां प्रयोजयतीति किं तस्यार्थत्वनिर्बन्धेन। यथा—बाले चोद्यानमालेयं सालकाननशोभिनी॥ इति।

अत्र रुद्रटोक्ति संवादायोद्घाटयति—स्फुटमिति। प्राचुर्यादर्थालंकारावेवोपमा समुच्चयश्च। क्वचित् तु शब्दमात्रादपि तौ निर्वाह्यौ। तस्माद् इहापीति शब्दालंकारपक्षेऽपि भवतः। 'पुरं सुधांशुबिम्बं चे' ति, 'बाला चोद्यानमाला चे'ति पाठे समुच्चयालङ्कारः।

**सम्प्रदायप्रकाशिनी**

ननु तह्यर्थश्लेषस्य विषयापहार इत्यत आह—अर्थश्लेषस्य त्विति। परिवर्तनेऽपीति तदन्वयव्यतिरेका-नुविधानाभाव उक्तः।

उदाहृत्य दर्शयति—स्तोकेनेत्यादि। स्तोकेन, दत्तेनार्थेनेति शेषः। अत्र हि स्वल्पेनेत्यादिपर्यायपरिवर्तनेऽपि नार्थयोः श्लेषः खण्ड्यते।

इत्थमभङ्गपदस्यापि शब्दालङ्कारतां व्यवस्थाप्यालङ्कारान्तरप्रतिभोत्पत्तिहेतुतापि नास्तीत्युपक्रमते—न चायमुपमेत्यादिना। अयमिति प्रकृतोदाहरणद्वयस्थं परामृशति। 'स्वयं च पल्लवे'ति 'स्तोकेनोन्नतिमि'त्यनयोर्हि श्लेष उपमा च प्रतीयते। तत्रोपमाप्रतिभोत्पत्तिहेतुस्तद्बाधकः श्लेष इति चिरन्तनाः। तत् तथा न भवतीति प्रतिज्ञाय, कथं तर्हीत्यत आह—अपि तु श्लेषेत्यादि। इह न श्लेषालङ्कारः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुः श्लेषबाधिकोपमैव, उपमालक्षणसम्भवादिति यावत्। ननु गुणक्रियासाम्ये सत्युपमा, शब्दसाम्ये तु श्लेषः प्रकृतोदाहरणे तूभयसाम्यसम्भवात् कथमुपमैवेति शङ्कां प्रसिद्धोदाहरणप्रदर्शनेनोन्मूलयति—तथा हि यथेत्यादिना। मनोज्ञमिति गुणसाम्ये। कचतितरामिति क्रियासाम्ये तदुभयसाम्ये वा। यथेयमुपमा केवलगुणक्रियासाम्यहेतुका, तथा 'सकलकलमि'त्यादौ कलकलसहितं पुरं बिम्बं तु निश्शेषकलायुक्तमिति शब्दमात्रसाम्येऽपि, पूर्वाचार्याणां तथाभ्युपगमादिति शेषः। अभ्युपगमं दर्शयति—तथाह्युक्तमिति।

स्फुटमर्थेति। इहापीति। गुणक्रियासाम्यरहिते केवलशब्दसाम्यवति सकलकलमित्यादावित्यर्थः। उपमासमुच्चययोरर्थालङ्कारयोः सतोरपि शब्दसाम्यमात्रात् प्रवृत्तिदर्शनादुपमायास्तथानभ्युपगमे समुच्चयस्याप्यनभ्युपगमः। प्रसजेदिति सूचितम्। एवं गुणक्रियासाम्यशब्दसाम्ययोरुपमाप्रयोजकत्वं सामानयोगक्षेमम्।

## मधुमती

कमलमिवेति। अत्र मनोज्ञत्वं गुणः। कचति इति क्रिया। 'कच दीप्तौ' इति धात्वनुसारात्। 'कुचती'त्यपि पाठः। तथेति। सकलाः कलाः यत्रेति सुधांशुबिम्बपक्षे। कलकलसहितेति पुरपक्षे। अत्र अन्यधर्मसाधारण्याभावेऽपि सकलकलशब्दवाच्यवत्त्वमेव साधारणे धर्मः प्रतीयते। तावतैवोपमासिद्धेः। साधारणधर्मस्य शब्देनानुपादानात् लुप्तोपमेयमित्यन्यदेतत्।

ननु गुणक्रियासाम्यमेव उपमाप्रयोजकम्, तत्र साधर्म्यस्य वास्तवत्वात्, शब्दसाम्ये तु न तथा। तस्य अवास्तवत्वात् इति चेन्न। शब्दघटितोक्तधर्मस्य अत्रापि वास्तवत्वात्। शब्दान्यत्वविशेषणस्य गौरवपराहतत्वात्। अन्यथा अत्र उपमाप्रतिभामपि श्लेषो नोत्पादयेत्, उक्तातिरिक्तसाधारणधर्माभावात्। न च तस्य शब्दानुपात्तत्वे प्रमेयत्वादिकमेवादाय उपमाप्रतिभा स्यादिति वाच्यम्। तस्य कवितात्पर्यविषयत्वात्। अन्यथा 'सकल'मित्येवोपाददीत।

वस्तुतस्तु श्लेषस्यैवात्र उपमानिर्वाहकत्वेन उपमाङ्गत्वम्, न तूपमायाः श्लेषाङ्गत्वम्। श्लेषात्पूर्वं साम्याप्रतीतेः। साधारणधर्माभावात् इति उपमाया एव अङ्गित्वेन व्यपदेशो युक्तः, 'प्रधानेन व्यपदेशा भवन्ती'ति न्यायात्।

न च 'उपमाप्रतिभोत्पत्तिहेतुः न श्लेषः' इत्याकरविरोधः। उपमाहेतुरेव, न तु उपमाप्रतिभोत्पत्तिहेतुः इति तदर्थात्। उपमया च श्लेषप्रतिभामात्रं क्रियते। इवशब्दप्रयोगेण तस्यैव कविप्रतिभागोचरत्वाच्च।

ननु शब्दालङ्कारयोर्मध्ये नाङ्गाङ्गिभावः आद्रियत इति, तत्कथमत्र श्लेषोपमयोरङ्गाङ्गिभावः? यद्यप्युपमा अर्थालङ्कारः, तथापि प्रकृते शब्दपरिवर्तनासहत्वेन तस्या अपि शब्दालङ्कारत्वमेवेति चेत्—न। अर्थानुसन्धान-

विरहिणि अनुप्रासादावेव तथा स्वीकारात्। अत एव चित्रयमकयोः शब्दालङ्कारयोः अङ्गाङ्गिभावं दशमे वक्ष्यति। "सत्पक्षाः मधुरगिरः" इत्यादौ तु द्वितीयार्थस्य सूच्यत्वेनैव विवक्षितत्वेन उपमाकल्पनायां मानाभावात्, प्रकरणेन धार्तराष्ट्रादिशब्दानां च हंसाद्यर्थे नियमनात् न श्लेषः इति तत्र नाङ्गाङ्गिभावचिन्तनम्।

## विस्तारिका

कमलमिवेत्यादि। मनोज्ञत्वं गुणः। कचति बध्नाति वशीकरोति इति क्रिया। उभययोगेन चोभयसाम्यम्। सकलकलमिति। कलकलशब्दयुक्तम्। सकलाः सर्वाः षोडशकलाः षोडशभागा यस्य तं च। शब्दमात्रेति। सकलकलत्वयोरेकशब्दवाच्यत्वेन धर्मेण सजात्यमित्यर्थः। हिर्हेतौ। तस्मादुक्तं शब्दसाजात्यं रुद्रटेन ग्रन्थकारेण। समानो धर्मः। इह शब्दालङ्कारमध्ये।

## सारबोधिनी

उपमाप्रतिभेति पूर्ववद्बहुब्रीहिः। ननु श्लेषस्य नोपमासाधकत्वम् प्रभातसन्ध्येवेत्यादौ श्लेषोपस्थितयोरर्थयोः सजातीयधर्मत्वविरहादित्यपेक्षायामाह तथा हीति। कमलमिवेति। मनोज्ञत्वं गुणः। कचति बध्नाति वशीकरोतीति क्रिया। उभययोगे चोभयसाम्यम्। सकलेति। कलकशब्दयुक्तं सकलाः सर्वाः कला यत्र तच्च। शब्दमात्रेति। तेनोपमायाः शब्दालङ्कारत्वे सिद्धे सामानाधिकरण्येन श्लेषनिर्वाह्यत्वं सिद्धमित्यभिप्रायः। सकलकलकलकलत्वयोरेकशब्दवाच्यत्वेन धर्मेण साजात्यमित्यर्थः।

## काव्यप्रदीपः

अत्र स्तोकेनेत्यादिपदस्थानेऽपादिपदप्रक्षेपेऽपि न श्लेषभङ्गः। यच्चोक्तम्—'स्वयं चेत्यादावुदाहृते उपमाप्रतिभोत्पत्तिहेतुः श्लेषः' इति तदप्ययुक्तम्। प्रत्युतोपमैवात्र श्लेषप्रतिभोत्पत्तिहेतुः। तद्बाधकत्वात्। तथाहि साधर्म्याभावेनोपमायाः प्ररोहाभावादेव तावन्नोपमा बाध्या। यतः 'कमलमिव मुखं मनोज्ञमेतत्कचतितराम्' इत्यादौ मनोज्ञत्वस्य गुणस्य दीप्तिरूपायाः क्रियाया वा उभयोर्वा साम्ये यथोपमा निर्वहति तथा 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' इत्यादावपि शब्दमात्रसाम्येनापि सा युक्तैव। साधर्म्यमात्रस्योपमाप्रयोजकत्वात्। तस्य चार्थरूपस्येव शब्दरूपस्याप्यविशेषेण संभवात्। तथा ह्युक्तं रुद्रटेन—

**'स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किं तु।**
**आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः॥' इति।**

## काव्यप्रकाशखण्डनम्

इत्यर्थश्लषोऽयम्। एवम्—

**'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव।'**

एततपुरं नगरं सकलकलं कलकलेन कोलाहलेन सहितं जातम्। किमिव? सुधांशुबिम्बमिव। तदपि कीदृशम्? सकलाः समस्ताः कलाः चन्द्रकला यत्र तादृशं संपूर्णमित्यर्थः। इत्यादौ श्लेषप्रतिभाहेतुरुपमा, न तु

उपमाप्रतिभोत्पत्तिहेतुः श्लेषः । यतः श्लेषस्यैव साम्यनिर्वाहकता, न तु साम्यस्य श्लेषनिर्वाहकता । श्लेषबन्धतः प्राक् साम्यस्य अनुपस्थितेः । अत्र सकलकल एव साधारणो धर्मः । अथवा सकलकलत्वयोरेशब्दवाच्यत्वेन साजात्यमित्यर्थः ।

## आदर्शः

नन्वेवमर्थश्लेषोच्छेद इत्यत्राह—अर्थश्लेषस्य त्विति । स्तोकेनेति । 'तुलाकोटिः' मानतुलाग्रभागः । अत्र उन्नतिशब्दस्थाने उच्छ्रायोत्पतनादिशब्दानाम्, अधोगतिशब्दस्थाने नमन-पतनादिशब्दानाञ्च दानेऽपि नार्थश्लेषहानिः ।

इत्थम् 'इयञ्च पल्लवे'त्यादौ पूर्वार्द्धे अभङ्गश्लेषत्वेनार्थश्लेषत्वं तदुक्तं निषिध्य शब्दान्वयव्यतिरिकानुविधानच्छब्दश्लेषत्वे साधिते उपमाज्ञानज्ञेयत्वेन तत्रार्थश्लेषत्वमपि तदुक्तं खण्डयति—न चायमुपमाप्रतिभेति । न चायमुपमाज्ञानज्ञेयः किन्तु वैपरीत्यमेवेत्याह—अपि त्विति । श्लेषाधीनमुभयवाचकशब्दरूपसाधर्म्यज्ञानं तेन चोपमाज्ञानमित्यर्थः उभयवाचकैकशब्दोऽपि साधर्म्यं भवतीति साधयति—तथा हीति । कचति दीप्यते । गुणसाम्य इति । मनोज्ञत्वमत्र गुणः । कचनक्रियाविवक्षावशादेकतरेणोभयेन वा साम्यम् । इदमर्थसाम्यं दृष्टान्तयित्वा शब्दसाम्यं दृष्टान्तयति—तथा सकलकलमिति । सकला कला यस्य तादृशं चन्द्रबिम्बम् । पुरन्तु कलकलशब्दसहितम् । उभयवाचकैकशब्दोऽपि साधर्म्यं भवतीत्यत्र रुद्रटोक्तमपि प्रमाणयति—तथा ह्युक्तमिति । इहापि शब्दालङ्कारमध्येऽपि उपमासमुच्चयौ सम्भवत इत्यर्थः । अत्रोपमायां शब्दमात्रसाम्यं सकलकलमिति दर्शितमेव ।

**'तवाधरे च रागोऽभूद् रम्भोरुहृदये च मे ।'**

इति रक्तिमनुरागयोः श्लिष्टं रागपदं साधर्म्यम् ।

## सुधासागरः

न चैवमर्थश्लेषः किं नास्त्येव ? क एवमाह । कस्तर्हि तस्य विषयः ? यत्र पदपरिवर्त्तनेऽपि न श्लेषभङ्गः । तदेतदुक्तमर्थस्येत्यादि । उदाहरति—स्तोकेनेति ।

उन्नतिम् ऊर्ध्वप्रसरणम् अहङ्कारं च । अधोगतिमधःपातं पादपतनादि च । स्पष्टमन्यत् । अत्र स्तोकेनेत्यादिपदस्थानेऽल्पादिपदप्रक्षेपेऽपि न श्लेषभङ्ग इति द्रष्टव्यम् ।

नचेत्यादि । यच्चोक्तं 'स्वयं चेत्यादावुदाहृते उपमाप्रतिभोत्पत्तिहेतु श्लेष' इति, तदप्ययुक्तम्, प्रत्युतोपमैवात्र श्लेषप्रतिभोत्पत्तिहेतुः, तद्बाधकत्वात् । तथा हीत्यादि । साधर्म्याभावेनोपमायाः प्ररोहाभावादेव तावन्नोपमा बाध्या, यतः 'कमलमिव मुखं मनोज्ञमेतत् कचतितराम्' इत्यादौ मनोज्ञत्वस्य गुणस्य दीप्तिरूपायाः क्रियाया वा उभयोर्वासाम्ये यथोपमानिर्वहति, तथा 'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव' इत्यादावपि शब्दमात्रसाम्ये ऽपि सा युक्तैव, साधर्म्यमात्रस्योपमाप्रयोजकत्वात्, तस्य चार्थरूपस्येव शब्दरूपस्याप्यविशेषेण सम्भवादित्यर्थः । उक्तं हि रुद्रभट्टेन 'स्फुटमर्थालङ्कारावित्यादि' अथात्र साधर्म्यसम्भवेऽपि, नोपमा, साधारणधर्मप्रयोग एवेति वैजात्याद्वक्तव्यम्, तदपि न युक्तम्, पूर्णोपमाया निर्विषयत्वापत्तेः, साधारणधर्माप्रयोगे त्वपूर्णत्वात् तदेतदुक्तं-तदेतदिति ।

व्याख्यातं च मधुमत्यां रविभट्टाचार्यैः—अलङ्कारान्तरप्रतिभोत्पत्तिहेतुरिति यदुक्तं तत् दूषयति-न चेत्यादि ।

कमलमिवेति । अत्र मनोज्ञत्वं गुणः कचतीति क्रिया 'कच' दीप्ताविति धातुः । तथेति सकलाः कला यत्रेति सुधाबिम्बपक्षे,

तथेति सकलाः कला यत्रेति सुधांशुबिम्बपक्षे, कलकलसहितमिति पुरपक्षे, अत्रान्यधर्मसाधारणाभावेपि सकलकलशब्दवाच्यत्वमेव साधारणो धर्मः प्रतीयते तावतैवोपमासिद्धेः, साधारणधर्मस्य शब्देनानुपादानात् लुप्तोपमेयमित्यन्यदेतत् । ननु गुणक्रियासाम्यमेवोपमाप्रयोजकं तत्र साधर्म्यस्य वास्तवत्वात्, शब्दसाम्ये तु न तथा, तत्र तस्यावास्तवत्वात् इति चेत्, न । शब्दघटितोक्तधर्मस्यात्रापि वास्तवत्वात् शब्दान्यत्वविशेषणस्य गौरवप्रतिहतत्वात्, अन्यत्रोपमाप्रतिभामपि श्लेषो नोत्पादयेत् उक्तातिरिक्तसाधारणधर्माभावात्, न च तस्य शब्दानुपात्तत्वे प्रमेयत्वादिकमेवादायोपमाप्रतिभा स्यादिति वाच्यम्, तस्य कवितात्पर्याविषयत्वात्, अन्यथा सकलकलमित्येव नोपाददीत । वस्तुतः श्लेषस्यैवात्रोपमानिर्वाहकत्वेनोपमाङ्गत्वं न तूपमायाः श्लेषाङ्गत्वं श्लेषात्पूर्वं साम्याप्रतीतेः, अत एवाङ्गित्वेन व्यपदेशो युक्तः प्राधान्येन व्यपदेशा भवन्तीति न्यायादिति । केचित् पुनः तदन्यथा व्याचक्षते, तथा हि यत्र साधारणधर्मोद्धारेऽपि उपमा सम्भवतीति प्रसिद्धत्वात् स उपमाविषयः, न चात्र तथेत्याक्षेपार्थः । अयं पूर्णोपमाविषयो न स्यादिति । यद्वा, श्लेषस्योपमाबाधकत्वायैतदङ्गीक्रियते तथा श्लेषस्योपमाबाधकत्वे पूर्णोपमा निर्विषयैव स्यात्, कमलमिव मुखं मनोज्ञमेतदित्यत्र मनोज्ञवत्वस्य सम्बन्धिभेदान्नानात्वेनार्थश्लेषस्वीकारादिति समाधानार्थ इति ।

न च 'कमलमिव मुखम्' इत्यादिः साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम् पूर्णोपमाया निर्विषयत्वापत्तेः ।

देव त्वमेव पातालमाशानां त्वां निबन्धनम् ।

त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ।। ३७९ ।।

इत्यादिः श्लेषस्य चोपमाद्यलंकारविविक्तोऽस्ति विषय इति । द्वयोर्योगे, संकर एव । उपपत्तिपर्यालोचन तु, उपमाया एवायं युक्तो विषयः । अन्यथा विषयापहार एव पूर्णोपमायाः स्यात् ।

---

**सङ्केतः**

शून्य इति । 'चारुत्वादिधर्माप्रयोगे उपमा, तत्प्रयोगे तु श्लेषः' इति हि परस्याशयः ।

ननु—यदि पूर्णोपमायाः निर्विषयत्वभिया भवद्भिः शब्दसाम्येऽप्युपमात्वं स्मृतं, तर्हि श्लेषस्य निर्विषयता स्यादित्याह—त्वमेव देवेति । 'त्वमेव' इत्यत्र एवकारनिर्देशात् पाता अलं इति व्याख्या । तेन न रूपकाशङ्का । आशाः दिशः आस्थाश्च । एतेन पृथ्वी लब्धा । चामरेण बीजने चामरमरुतां भूमिः, तथा अमराणां मरुतां च भूमिः, स्वर्गः ।

द्वयोरिति । 'स्वयं चे'त्यादौ अस्मदभीष्टा श्लेषप्रतिभोत्पत्तिहेतुः उपमा यदि ते न रोचते, तदा तवापि मते—अन्यत्र लब्धसत्ताकयोः द्वयोर्योगे सङ्करः स्यादेव । अयं 'स्वयं चे'त्यादिः । तत्सिद्धमेतत्—'गुणक्रियासाम्ये उपमा, शब्दसाम्ये तु श्लेषः' इति विशेषस्यानभिधानात् शब्दसाम्यमपि उपमायाः विषयः । श्लेषस्य तु उपमया विरहितः इति, 'स्वयं चे'त्यादौ उपमैवेति ।

**बालचित्तानुरञ्जनी**

ननु मनोज्ञत्वादिसाधर्म्यरहितस्तु उपमाया विषयोऽस्त्वित्याशङ्क्याह न चेति । कमलमिव मुखमित्यादि साधारणप्रयोगस्य श्लेषविषयत्वे दशमोल्लासे उपमाभेदकत्वेन प्रतिपादयिष्यमाणस्य पूर्णोपमालङ्कारस्य निर्विषयत्वं स्यादित्यर्थः । ननूक्त उपमाविषयत्वे श्लेषस्य निर्विषयत्वं स्यादित्याशङ्क्य श्लेषस्य विषयान्तरं दर्शयति देवेति । राज्ञः ईश्वरस्य च श्लेषः । हे देव त्वमेव अलं पाता रक्षिता पातालं रसातलं च आशानां मनोरथानां निबन्धनं कारणम् । आशानां दिशां निबन्धनं अन्तरिक्षम् । त्वमेव च अमराणां देवानां मरुतां च भूमिः स्वर्गश्च । एवं एकोऽपि लोकत्रयात्मकः । अत्र नोपमालङ्कारः । इवशब्दादिप्रयोगाभावात् । नापि तुल्ययोगितादीपके प्रस्तुतभिन्नत्वेनाप्रतीतेः । नापि रूपकमापाततः पातालाद्यप्रतीतेः अर्थान्तरप्रतीत्या तत्प्रतीतेर्बाधितत्वादिति विविक्तोऽयं विषयः

श्लेषस्येति भावः। एवमुपमाश्लेषयोर्भिन्नविषयत्वेन अनयोरेकत्र समावेशे सङ्कर एव वक्ष्यमाणलक्षणोऽलङ्कारः। न पुनरेक एव उपमाश्लेषः। शब्दालङ्कारतैव युक्तेति भावः।

एवं च 'स्वयं च पल्लवाताम्रे'त्यादि सङ्करालङ्कारस्य विषय इति प्रौढि प्रतिपादितम्, विचार्यमाणे उपमाया एवायं विषय इति प्रतिपादयितुमाह उपपत्तीति। उपपत्तिर्युक्तिः। विपक्षे बाधक उक्त एवेत्याह अन्यथेति।

### काव्यादर्शः

'इहापि' इति शब्दालंकारमध्ये। न च साधारणधर्मप्रयोगशून्ये उपमा भविष्यति, मनोज्ञत्वादिसाधारण-धर्मसहिते तु श्लेष इति वाच्यम्, यतः पूर्णोपमाया निर्विषयत्वं स्यात्। तर्हि यदाऽस्माकं मते पूर्णोपमाया निर्विषयत्वं तथा भवतां श्लेषस्य निर्विषयत्वमित्याशङ्क्याह—'देव त्वम्' इति। पाता अलं पर्याप्तं, आशा आस्था दिशश्च। चामरस्य मरुत अमराणां, मरुतां वायूनां च। उपमादि-इति आदि-शब्दाद् विरोधैकदेशविवर्तिरूपकादयः समान-न्यायाः संगृहीताः। अत्रोपमाद्यलंकारविविक्तः शब्दश्लेषस्य विषयः कल्पयत इति द्वयोरप्यन्यत्र लब्धसत्ताकयोरे-कत्र योगे संकरतैव प्राप्तेत्याह—द्वयोरिति। तस्मात् 'स्वयं च' इत्यादौ संकर एव स्याद् उद्भटपक्षे, अस्माकं तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा एवाभिप्रेता—इत्याह—उपमाया एवेति। अयमीति 'स्वयं च' इत्यादिकः।

### विवेकः

न च यत्र शब्दमात्रसाम्य उपमा तल श्लेषत्वमिति वक्तुं युक्तं, पूर्वोपमाया निर्विषयत्वप्रसङ्गात्। गुणादिसादृश्ये सा भविष्यतीति चेत्, न अर्थविषयस्य निर्विषयत्वापत्तेः।

### दीपिका

इह केचिदाहुः—यत्र साधारणपदोद्धारेऽपि नोपमाभङ्गः स एव तद्व्यपदेश विषयः, यथा 'कमलमिव' इत्यादि। एवं पुरचन्द्रयोःसाम्यस्याप्रसिद्धेरित्याह—न चेति। निर्विषयत्वं तद्विषयबहिर्भावः। उभयत्रैव हि साम्य-पदोद्धारे पूर्णोपमापरित्यागः। स चैवमुपमाऽन्तरे तु पुरचन्द्रमण्डलयोरपि कथञ्चित् सम्भवति।

यद्वा कमलमिवेत्यत्राप्यर्थश्लेषोऽप्यस्ति, मनोज्ञत्वस्य प्रतिसम्बन्धिभिन्नत्वादिति। शब्दार्थश्लेषग्रस्त-विषयतया श्लेषवाध्यताऽङ्गीकारे सर्वत्रैव पूर्णोपमाव्यपदेशो त्रिरवकाशतामासादयो दित्यर्थः।

एवं तर्हि श्लेषविषयापह्नवः स्यादिति चेदहा—देवेति। पाता रक्षिता, अलमत्यर्थं पर्याप्तः, पातालं नागलोकः, आशानां निबन्धनं धनादिप्रार्थनाविषयो दिशां प्रतिष्ठा च। चामराणां बालव्यजनानाम्, मरुत् पवनः पक्षान्तरे तु त्वं चेति। चः समुच्चये। अमराणां देवानाम्। मरुतां प्रवहादिवायुस्कन्धानाम्। अमरमरुतां देववायू-नामित्येके।

यद्यप्यत्र त्वमेव पातालादि चेत्यादिरूपकं विद्यते, तथापि विविक्तविषयताऽभिहिता, तस्य व्यङ्ग्यता-द्वाराऽलङ्कारापेक्षया प्रस्तुताधिकारप्रवृत्तेः, यत्नेनाभिव्यक्तस्यापि रूपकस्य श्लेषगुणाभावे तन्मुख्यताया अत्र निर्वि-वादत्वात्। 'येन ध्वस्तमनोभवेन' इत्यादौ तु स्पष्टमेव विविक्तविषयत्वम्। द्वयोरुपमाश्लेषयोर्योगे सति। स्वयं

चेत्यादौ सङ्कर एवाङ्गाङ्गिभावरूपः। न च शब्दालङ्कारविषये नायमस्तीती वाच्यम्, अर्थानुसन्धानविरहिण्यनुप्रासादावेव तथाऽङ्गीकारात्।

ननु श्लेषप्रतिभोत्पत्तिहेतुरुपमेति पूर्वमुक्तम्, तत् कथं सङ्कर इत्युच्यते—उपपत्तीति। अङ्गाङ्गिभावसङ्करः एकस्याङ्गत्वमन्यस्याङ्गित्वम्। यस्य चाङ्गित्वं तद्द्वारा व्यपदेशः। तच्चात्र युक्तिमुखेनोपमाया एव व्यवतिष्ठत इति तन्मुखेन पूर्वं व्यपदेशो युक्त इति न किञ्चिदनुपन्नमिति भावः। केयमुपमामुख्यतायामुपपत्तिरिति शङ्कायां पूर्वोक्तामेव तां लेशतः स्मारयति—अन्यथेति। विषयापहार इति निर्विषयत्ववद् व्याख्येयम्।

**दर्पणः**

सकलकलं कोलाहलध्वनिभिः सहितञ्च। आचार्यसम्मतिमाह तदुक्तमिति [तथाहयुक्तमिति ?] इह शब्दालङ्कारमध्ये, किं च [किन्तु] यदि शब्दसाम्ये सा नास्ति कथं "स्वयं चेत्यादौ पूर्वपक्षिणा बाध्यभूतोऽयमङ्गीक्रियत इत्यादि प्रपञ्चितमस्मत्साहित्यदर्पणे पूर्णोपमाया इत्यादेः।

पूर्णोपमाया इत्यादि। अयमाशयः यद्यपि सकलकलेत्यादौ शब्दश्लेषविषये नोपमा। कमलमिवमुखं मनोज्ञमित्यादौ मनोज्ञत्वादिधर्मस्य प्रतिसंबन्धि भेदादनुश्लेविषयेऽपि [अथश्लेषविषयेऽपि] सा न स्यात्। तेन को नाम पूर्णोपमाया विषय इति विषयः स्थादिति।

न चैवं श्लेषरूपदेशस्य सर्वत्रैव भाव इत्याह। अन अत्यर्थ, पाता रक्षिता अधोत्तरणं च आशानां प्रत्याशानां दिशां च, चामरस्य व्यजनस्य मरुत्पवनस्य च समुच्चये. अमरमरुतां देववायूनाम् अमराणां अमररहितानां देवानाञ्च।

यद्वा अत्राभिव्यक्तस्यापि रूपकस्य श्लेषगुणीभावे श्लेषस्य मुख्यता [अमुख्यता] निर्विवादेति भावः।

वस्तुतस्त्वत्र पातालत्वादिरूपणस्य राज्ञो लोकत्रयात्मकत्वरूपणहेतुत्वात् श्लिष्टशब्दनिबन्धनं परम्परितरूपकमेव।

यत्र तु "येन ध्वस्तेत्यादौ द्वयोरर्थयोर्वाच्यत्वे नियमः। संपष्ट [सुस्पष्ट] एव श्लेषविविक्तो विषयः। न च तत्र तुल्ययोगिता तस्यां द्वयोरर्थयोर्वाच्यत्वनियमा भावादिति विज्ञेयम् मम साहित्यदर्पणात्। द्वयोरुपमानक्षणयोगे स्वयं च पल्लवेत्यादावित्यादावित्यर्थः।

नेनु पूर्वं श्लेषप्रतिभोपमेत्युक्तं तत्कथं सङ्कर इत्युच्यते इत्याह उपपत्तीति। अङ्गाङ्गिभावसंकरे एकस्याङ्गत्वमेकस्याङ्गित्वम्। यस्य चाङ्गित्वं तत्वा व व्यपदेशः [तत्वेन व्यपदेश] तच्चात्र युक्तिमुखेनोपमायामेव व्यवतिष्ठत इति तन्मुखेन व्यपदेश एव। सर्वं श्लेषप्रतिभोत्पत्तिहेतुरूपमैवेत्यनेनोक्त इति न किञ्चदनुपपन्नमिति भावः। अत्र च हेतुं पूर्वोक्तमेव नेशतः [अंशतः] स्मारयति अन्यथेति।

न केवलमुपमाविषयश्लेषस्य वाक्यत्वं किन्त्वलङ्काराणामपीति दर्शयति नचेति। अप्सु प्रतिबिम्बतः इन्दुः अबिन्दः गणन्तो [गलन्तो] लावण्यबिन्दवो यस्यः। अत्र गललंबत्प्रेक्षा [गलल्लावण्योत्प्रेक्षा] गर्भ्वाकारात् [गर्भाकारात्]।

## साहित्यचूडामणि

ननु यत्र मनोज्ञत्वकचनादिसाधर्म्यप्रयोगः तत्र श्लेष एव। अन्यः पुनरुपमाया विषय इत्याशङ्क्याह—नचेति। पूर्णा लुप्तेत्युपमाप्रभेदो दशमे समर्थयिष्यते।

ननु पूर्णोपमाया इव श्लेषस्यापि निर्विषयत्वप्रसङ्ग इत्यत्राह—देवेति। पाता रक्षिता अलं पर्याप्तं कृत्वा, पातालं नागलोकश्च। आशानां मनोरथानां निबन्धनं दिङ्निबन्धनमन्तरिक्षं च। चामरमरुतां प्रकीर्णकपवनानां भूमिरास्पदम् अमरमरुद्भूमिः स्वर्गश्च अमराणां विशेषतो मरुद्गणस्य च भूमिः।

द्वयोर्योग उपमाश्लेषयोरेकत्र सन्निपाते सङ्कर एव वक्ष्यमाणालङ्कारः, न पुनरेक एवोपमा श्लेषो वा। ननु कथं श्लेषप्रतिभोत्पत्तिनिमित्तत्वादुपमायां पर्यवसानमिति चेत् तत्राह—उपपत्तीति। उपपत्तिर्युक्तिः। तत्पर्यालोचने पुनरुपमाया एव गोचरी भवितुमर्हति। विपर्यये बाध उक्त एवेत्याह—अन्यथेति। व्याख्यातम्।

## सम्प्रदायप्रकाशिनी

ननु साधारणधर्मः शब्दार्थश्लेषात्मेति तद्वान् श्लेषस्य विषयोऽस्तु, तच्छून्यस्तूपमाया इत्यत आह—न च कमलमिवेत्यादि। शब्दार्थश्लेषरूपसाधारणधर्म शून्यः 'कमलमिव मुखमि'त्येतावानेव सन्दर्भो विषय इति न वक्तुं युक्तम्। कुत इत्यत आह—पूर्णोपमाया इति। ननूपमायाः सम्भवति श्लेषविविक्तो विषयोः। श्लेषस्य विषय उपमाद्यलङ्कारविविक्त एव। तथा न तावदिहोपमा रूपकादि वा। तदात्मकत्वोक्त्या लोकत्रयस्यापि प्राकरणिकत्वात् प्राकरणिकाप्राकरणिकत्वाविवक्षणान्नोपमा। नापि रूपकम्, अभेदस्य साध्यत्वात्। रूपके हि सिद्धतयारोपः। एकस्योपपत्त्या त्रयात्मकस्योक्तेर्न विरोधः। अत एकोऽपीत्यनुक्तिः। विशेष्ये पृथगुपादानाद् न ध्वनिः। इत्थं कविसंरम्भाच्छ्लेषस्य विविक्तविषयता सम्भवति यतः, अतः 'स्वयं च पल्लवे'त्यादौ सावकाशयो-र्द्वयोर्योगात् सङ्कर एव, नतु श्लेषस्योपमाबाधकत्वम्। सूक्ष्मोपपत्तिपर्यालोचने तु न सङ्करः, अपि तूपमाया एवायं विषयः। का सोपपत्तिरित्यत आह—अन्यथा विषयेत्यादि। अन्यथा सङ्करभ्युपगम इत्यर्थः।

## मधुमती

नन्वेवं श्लेषोऽपि निर्विषयः स्यात्, तथा च तद्व्युत्पादनविरोः इत्यत आह—देव त्वमेवेति।

ननु राज्ञः लोकत्रयात्मकत्वं असम्भवि इति निदर्शनालङ्कारः, तदाक्षिध उपमालङ्कारश्च। न च—सदुभयसत्त्वेऽपि तन्न चमत्कारि, किन्तु श्लेष एव असाङ्कर्याभिधानमप्येततपरमेवेति वाच्यम्। तर्हि "योऽसकृत्पर-गोत्राणां" इत्यादिप्रागुदाहृते एवासाङ्कर्ये, व्यर्थं तदुदाहरणान्तरगवेषणया। अथ' पृथगर्थद्वयप्रतीत्या वाक्यभेदभयेन उपमाकल्पनेन तत्त्यागः, तर्हि प्रकृतत्यागोऽपि क्रियताम्। समाधानापि तुल्यमेवेति, समुच्चयालङ्कारसत्त्वाच्च। मैवम्—अत्र 'लोकत्रयात्मकः' इत्यत्र लोकवाचकत्रयवाच्यः इत्यर्थः। स च श्लेषं विना नेति असाङ्कर्यं तथाविधम्, अर्थालङ्कारस्याभावादिति।

द्वयोरिति। लुप्तोपमायां उपमा, अत्र तु श्लेष-इति पृथक् क्लृप्तयोरनयोः साङ्कर्येऽपि न श्लेषेण उपमाबाधः।

मूलयुक्तिमाह—उपपत्तीति। उपमासामान्यस्य श्लेषव्यतिरिक्तविषयत्वेऽपि पूर्णोपमारूपोपमाविशेषस्य निर्विषयत्वं स्यात्, श्लेषेण व्यापनात्। तथा च "सावकाशनिरवकाशयोः निरवकाशं बलीयः" इति न्यायात् पूर्णोपमैवात्रेति भावः।

## विस्तारिका

न तु येन नाप्राप्तन्यायेन श्लेषस्योपमाबाधकत्वम्। श्लेषदन्यत्र च तस्याविषय इत्याह—कमलमिवेत्यादि। अत्रापि साधारणधर्मस्य मनोज्ञत्वस्यार्थत्वमस्त्येवेत्याह—प्रयोगेति। मनोज्ञादिपदसत्त्व एवार्थभेदेन शब्दभेदाच्छब्दश्लेषत्वम्, अन्यथा त्वर्थश्लेषत्वसम्भवादिति भावः।

पूर्णेति। उपमानोपमेय-इवादिशब्दसाधारणधर्माणां शाब्दत्वे पूर्णा। निर्विषयत्वेति। साधारणधर्मोपादाने शब्दार्थश्लेषान्यतरप्रसङ्गात्।

ननु श्लेषस्यापि निर्विषयत्वप्रसङ्ग इत्याह—देवेत्यादि। देव हरे ! नृपते च। पातालमधोभुवनम्। अलमत्यर्थम्, पाता रक्षिता च। आशानां दिशां निबन्धनम्, नियमस्थानं भूर्लोकस्तत्रैव दिङ्नियमात्। पक्षे—आशानां धनादिलिप्सानां निबन्धनं कारणम्। चकारो भिन्नक्रमः। अमरमरुद्भूमिश्चेत्यन्वयः। अमराणां देवानां मरुदेव या भूमिः स्थितिहेतुः, स्थिरवायोरुपर्येव देवानां स्थितेः। पक्षे चामरं प्रकीर्णकम्, तत्रभूतो वायुस्तद्विषयः। चामरे बीज्यमान इत्यर्थः। लोकोऽनुवनं जनश्च। विष्णोस्त्रिभुवनमयत्वं वेदादिगम्यम्। राजसु कश्चन रक्षिता, कश्चिद् यन्ता, कोऽपि सुखी। अस्य तु नृपस्य त्रैरूप्येण जनत्रितयात्मकत्वम्।

उपमादीति। नन्वत्रापि विष्णुरिव नृपति-सरित्साम्यावगमे कथं विविक्तता ? मैवम्; प्रकरणादिनियमाभावेन द्वयोर्वाच्यत्वेनोपमानोपमेयताविरहात्। अथैवमुभययोगे परस्परविरोधेनास्वादानुदयप्रसङ्ग इत्याह—द्वयोरित्यादि। सङ्करोऽङ्गाङ्गीभावः। उपमादेश्चमत्कारेणाङ्गित्वं श्लेषस्याङ्गतेत्यर्थः। यथा 'कमलमिव मुखं मनोज्ञम्' इत्यादौ।

ननु नास्योत्कर्षकता, किन्तु स्वरूपघटकतैव। अनेन विना पूर्णोपमास्वरूपानुपपत्तेरित्यत आह—उपपत्ति इति। उपपत्तिर्युक्तिः, अत एव युक्तो युक्तिसिद्धः।

ननूपमायामस्य विषयो मास्तु, अलङ्कारान्तरे तु विरोधादावयं बाधकः स्यादित्याह—न चेति।

## सारबोधिनी

उपमाद्यलङ्कारविविक्त इति। अत्रेवादिशब्दाभावात् प्रकरणादिनियामकाभावात् द्वयोर्वाच्यत्वेन श्लेष एव नोपमेत्यर्थः। परस्परं विविक्त इति विषयत्वेन द्वयोरवस्थितिः सिद्धा। ततो यत्र क्वचिदेकत्रावस्थानं तत्र संकर एवेत्याह द्वयोरिति। ननु न युक्तमुक्तं यत् द्वयोर्योगे संकर इति, शब्दार्थालङ्कारविषयेऽङ्गाङ्गीभावालंकारस्यानङ्गीकारादिति चेन्न। अर्थानुसंधानविरहिण्यनुप्रासादावेव तथानङ्गीकारात्। निष्कृष्टमाह उपपत्तिरिति। श्लेषस्यैव साम्यनिर्वाहकता, न तु साम्यस्य श्लेषनिर्वाहकत्वम्। श्लेषबन्धतः प्रथमं साम्यस्यासंभवादुपमाया अङ्गित्वेन व्यपदेशो ज्यायान् 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायात् दूषणान्तरमाह अन्यथेति।

## काव्यप्रदीपः

अथात्र साधर्म्यसंभवेऽपि नोपमा। साधारणधर्मप्रयोगशून्यो हि 'कमलमिव मुखम्' इत्येतावन्मात्रादिरुपमाविषयः। अत्र तु शब्दरूपसाधारणधर्मप्रयोग एवेति वैयात्यद्वक्तव्यं तदपि न युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेः। साधारणधर्मप्रयोगे उपमात्वाभावात् तदप्रयोगे त्वपूर्णत्वात्। तदेतदुक्तम्—न च कमलमिव मुखमित्यादि। साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेरिति। केचित्पुनस्तदन्यथा व्याचक्षते—तथा हि यत्र साधारणधर्मोद्धारेऽप्युपमा संभवति प्रसिद्धत्वात्स उपमाविषयो न चात्र तथेत्याक्षेपार्थः। अयं पूर्णोपमाविषयो न स्यादिति। यद्वा श्लेषस्योपमाबाधकत्वायैतदङ्गीक्रियते तथा श्लेषस्योपमाबाधकत्वे पूर्णोपमा निर्विषयैव स्यात्। 'कमलमिव मुखं मनोज्ञमेतत्' इत्यत्र मनोज्ञत्वस्य संबन्धिभेदान्नानात्वेनार्थश्लेषस्वीकारादिति समाधानार्थः। नन्वेवं श्लेषस्य निर्विषयत्वम् असंकीर्णस्थलाभावादिति चेत्, न।

'त्वमेव देव पातालमाशानां त्वं निबन्धनम्।

त्वं चामरमरुद्भूमिरेको लोकत्रयायसे॥'

इत्यादावलंकारान्तरासंकरात्। तथाहि—न तावदत्रोपमा। इवाद्यप्रयोगगात्। नापि तुल्ययोगितादीपके। नापि पातालादिना रूपकं वाच्यम्। व्यङ्ग्यस्य तस्य संभवेऽपि वाच्यपेक्षयैवासंकरगवेषणमिति। किं च 'येन ध्वस्तमनोभवेन' इत्यादौ नास्त्येव किंचिदलंकारान्तरमित्युपमाश्लेषयोर्विभक्तोदाहरणसंभवाद्बाध्यबाधकभावानुपगमे द्वयोर्योगे संकर एवेति वरमभ्युपगन्तव्यम्। उपपत्तिपर्यालोचने तु उपमाया एवायं विषयो न श्लेषस्येत्युक्तमेव। उपपत्तिश्चेयम्—व्यपदेशाः प्राधान्ये न संभवन्तीति वस्तुस्थितिः। प्रधानं चात्रोपमा। श्लेषस्य तन्निर्वाहकस्य तदङ्गत्वात्। नहि श्लेषं विना समानशब्दवाच्यत्वलक्षणं साधर्म्यमुपमानिर्वाहकं निर्वहति। उपमा तु न श्लेषाङ्गम्। श्लेषप्रतीतिं बिना तत्प्रतीत्यभावेन तदनुपकारकत्वादिति। यदि चोपमाव्यवहारवारणाय साधारणधर्मप्रयोगशून्य उपमाविषय इति स्वीकर्तव्यं तदा पूर्णोपमाया निर्विषयत्वमेव स्यादिति। तदेतदुक्तम्—'अन्यथा पूर्णोपमाया निर्विषयत्वापत्तेः' इति।

## आदर्शः

ननु मनोज्ञत्वं कचनञ्च कमलमुखयोर्विभिन्नव्यक्तिकत्वान्नैकमुभयसाधारणम्, अतस्तदुभयवाचकं मनोज्ञादिपदमेव तत्र साधर्म्यम्, शब्दसाधर्म्ये च श्लेष एवालङ्कारः उपमा तु तन्निर्वाहकत्वेनैवोपात्तानालङ्कारः; उपमालङ्कारस्तु अनुपात्तमनोज्ञत्वादिके 'कमलमिव मुखमि'त्यादावेवेत्यत उपमाश्लेषयोरेकत्र समावेश एव नास्ति कथं श्लेषज्ञानज्ञेयत्वमुपमाया इत्याशङ्क्ते —न चेति। पूर्णोपमाया इति, उपमानोपमेय- साधारणधर्म-यथेवाद्युपमाप्रतिपादकानां चतुर्णामुपादाने हिं पूर्णा, साधारणधर्मानुपादान एव उपमास्वीकारे तु तन्निर्विषयत्वापत्तेरित्यर्थः। तथा च तन्निर्विषयत्वापत्तिभिया साधारणधर्मोपादानेऽपि उपमा स्वीकार्या। मनोज्ञत्वत्वादिना अनुगमेन मनोज्ञत्वादीनां साधर्म्यं भविष्यति। तथा चानुपात्तसाधर्म्यान्तरे 'सकलकलमि'त्यादौ श्लिष्टशब्द एव साधर्म्यम्। तथा च श्लेषज्ञानज्ञाप्यैवोपमा श्लेषस्तु तत्र नालङ्कार इति साधितम्।

ननु क्वचित् साधर्म्यज्ञाने सत्युपमा ज्ञायन्त; क्वचिदुपमायां ज्ञातायामपि तदुपपादकतया साधर्म्यं ज्ञायत इति कथं साधर्म्यज्ञानाधीनमेवोपमज्ञानं येनोपमासङ्कीर्णस्य श्लेषस्यानलङ्कारत्वं स्यादित्यतः पृथक् सिद्धयोर्द्वयोः इयञ्चेत्यादौ वरं सङ्कीर्णत्वमेवास्त्वित्यभ्युपगन्तुम् उपमाऽसङ्कीर्णं पृथक्सिद्धं श्लेषं दर्शयति—देव त्वमेवेत्यादि । इदमुपमाविनिर्मुक्तश्लेषोदाहरणम् । हे देव एकस्त्वं लोकत्रयात्मकः । यतस्त्वमेव पातालम् अलं पालयिता श्लेषात् पाताललोकः । तथा आशानाम् अर्थिप्रत्याशानां त्वं निबन्धनं श्लेषादाशानां दिशां निबन्धनं ज्ञापको भूलोक इत्यर्थः, तत्रैव दिङ्निबन्धनात् । तथा चामरीयमरुतां त्वं भूमिराश्रयः । श्लेषादमराणां मरुद्गणानाञ्च त्वं भूमिराश्रयश्चेत्यर्थः । इत्यादिः श्लेषस्य चेति । उपमायास्तु कमलमिव मुखमित्यादिरेव श्लेषविभक्तो विषयः । श्लेषं विनैव मनोज्ञत्वत्वादिना अनुगमेन साधर्म्यत्वसम्भवादिति पृथक्सिद्धयोर्द्वयोः इयञ्चेत्यादिना मिलनमेव न त्वेकतरस्यानलङ्कारत्वम् । श्लेषस्य तु शब्दान्वयानुविधानात्तथापि शब्दालङ्कारत्वमक्षुण्णमेवेत्यभिप्रायेणाह—द्वयोर्योग इति । नन्वेवमपि पूर्णोपमाविषयाभावयादनुपपत्तिरेव, अलङ्कारद्वयमिलने वक्ष्यमाणसङ्करालङ्कारस्यैवोदयादुपमाश्लेषयोरेकतरस्यापि तत्राभावात् । न च कमलमिव मुखमित्यादावेव मनोज्ञत्वत्वादिना अनुगमे तत्साधर्म्यमादायैव श्लेषविनिर्मुक्तायाः पूर्णोपमायाः सम्भवेनानुपपत्यभावप इति वाच्यम्, अनुगमकस्य मनोज्ञत्वत्वस्य मनोज्ञपदादनुपस्थितेः, प्रकारीभूतमनोज्ञत्वव्यक्तिद्वयस्यैव मनोज्ञशब्दादुपस्थित्वा तस्य श्लिष्टत्वानपायेन सङ्करालङ्कारापत्या पूर्णोपमाया विषयापहारादित्यत्त आह—उपपत्तीति । पूर्णोपमाविषयपहारपरीहारार्थम् इयञ्चेत्यादौ श्लेषस्यालङ्कारत्वानङ्गीकार एवोपपत्तिस्तदाह—अन्यथेति ।

## सुधासागरः

नन्वेवं श्लेषस्य निर्विषयत्वमसङ्कीर्णस्थलाभावात्तथा च तद्व्युत्पादनविरोध इत्यत आह—न चेति ।

हे देवा हे विष्णो हे राजन्, त्वमेव पातालमधोभुवनं अलमत्यर्थं पाता रक्षित च, त्वमाशानां दिशां निबन्धनं नियमस्थानं भूलोक इति यावत्, तत्रैव दिङ्नियमात् । पक्षे आशानां धनाभिलाषाणाम् निबन्धनं कारणम्, चकारो भिन्नक्रमः । त्वममरमरुद्भूमिः, अमराणां देवानां गरुतां मरुद्गणानां भूमिः स्थितिहेतुः स्वर्गलोक इति यावत् । स्थिरवायोरूपर्येव देवानां स्थितेः, पक्षे चामराणां मरुत् वातः तस्य भूमिः विषयः । एवमेको लोकत्रयात्मकः लोको भुवनं जनश्च, विष्णोर्भुवनमयत्वं श्रुतिसिद्धम्, राजा च कश्चन रक्षिता कश्चन दाता कश्चन सुखी, अयं तु त्रिरूपतया जनत्रयात्मक इत्यर्थः । न चात्र राज्ञो लोकत्रयात्मकत्वेन रूपेण पातालत्वादिरूपणमङ्गमिति परम्परितरूपकमिति वाच्यम्, विद्वन्मानहंसेत्यादौ मनसि मानसत्वारोपे स्वच्छत्वस्य, राज्ञि हंसत्वारोपे मोदावहत्वस्य प्रतीतेः परम्परितत्वस्य स्वीकारात् । इह राज्ञि पातालत्वादिरूपणे प्रयोजनामादुक्तश्लेषे एव कवेस्तात्पर्यात् । प्रदीपकारास्तु नापि पातालदिना रूपकं वाच्यम् व्यङ्ग्यस्य तस्य सम्भवेऽपि वाच्यापेक्षयैवासङ्करगवेषणमित्याहुः । न चात्रोपमा, इवाद्यप्रयोगात् । नापि तुल्ययोगितादीपके, प्रकरणादिनियामकाभावादित्यादि ध्येयम् । मूलयुक्तियाह-उपपत्तीति । उपपत्तिपर्यालोचने तूपमाया एवायं विषयो न श्लेषस्येत्युक्तमेव । उपपत्तिश्चेयम्—व्यपदेशाः प्राधान्येन सम्भवन्तीति वस्तुस्थितिः, प्रधानं चात्रोपमा, श्लेषस्य तन्निर्वाहकस्य तदङ्गत्वात्, न हि श्लेषं विना समानशब्दवाच्यत्वलक्षणं साधर्म्यं उपमानिर्वाहकं निर्वहति, उपमा तु न श्लेषाङ्गम्, श्लेषप्रतीतिं विना तत्प्रतीत्यभावेन तदनुपकारकत्वादिति । यदि चोपमाव्यवहारवारणाय 'साधारणधर्मप्रयोगशून्य उपमाविषय' इति स्वीकर्त्तव्यं तदा पूर्णोपमाया निर्विषयत्वमेव स्यादिति तदेतदुक्तम्—अन्यथेत्यादि ।

न च 'अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका' इत्यादौ विरोधप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः। नह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषः, द्वितीयार्थस्य प्रतिभातमात्रस्य प्ररोहाभावात्। न च विरोधाभास इव विरोधः, श्लेषाभासः श्लेषः। तदेवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलंकारान्तरमेव।

---

### सङ्केतः

यथा उपमाबाध्यत्वं श्लेषस्य, तथा अलङ्कारान्तरबाध्यत्वमपि तस्य स्यात् इति उद्भटेष्टं अन्यदपि दूष्यते—न चेति। अप्सु प्रतिबिम्बितः इन्दुः अबिन्दुः। तद्वत् सुन्दरी। द्वितीयार्थः न बिन्दुः अबिन्दुः इति अन्योऽर्थः। न चैकार्थप्रतिभासमात्रे श्लेषः, किन्तु अर्थद्वयप्ररोहे स्यात् इत्याशयेनाह—न च विरोधेति। यथा विरोधाभासः विरोधः, न तथा श्लेषाभासः। श्लेषः इत्यर्थः।

### सङ्केतः (रुय्यकः)

अप्सु इन्दुः अबिन्दुः तद्वत् सुन्दरी।

### बालचित्तानुरञ्जनी

न केवलमुपमालङ्कारेण श्लेषस्य बाधः, अपि तु विरोधालङ्कारेणापीति प्रतिपादयितुमाह न चेति। इयं स्त्री नित्यं गलन्तः लावण्यबिन्दवो यस्याः। अबिन्दुसुन्दरी बिन्दुरहितसुन्दरीति विरोधः। परिहारस्तु अप्सु प्रतिबिम्बित इन्दुः अबिन्दुस्तद्वत् सुन्दरी। चकचकाय मानलावण्यत्वं साधर्म्यं बिन्दुराहित्यं च व्यङ्ग्यम्। अत्र श्लेषस्य प्रतिभोत्पत्तिहेतुत्वात् विरोधालङ्कारेण श्लेषो बाध्यत इत्यर्थः। अत्र हेतुमाह नहीति। अत्र पद्ये अबिन्दुशब्दश्लेषः अभिधया अर्थद्वयं न प्रतिपादयति। तत्र हेतुः द्वितीयेति। द्वितीयार्थबिन्दुराहित्यरूपस्य प्रतिभातमात्रस्य व्यञ्जनव्यापारमात्रलभ्यस्य प्ररोहाभावेनाभासस्यापि श्लेषत्वमस्तु विरोधाभासस्य विरोधत्ववदित्याशङ्क्याह न चेति। आभासताव्यतिरेकेण विरोधालंकाराभावात् तदाभासस्य तथात्वेऽपि श्लेषाभासस्य श्लेषत्वम् उभयार्थारोहे सत्येव श्लेषत्वाङ्गीकारादिति भावः। एवमेव रूपकादिनापि श्लेषो बाध्यत इत्युपसंहारव्याजेनाह तस्मादिति।

### काव्यादर्शः

उदाहरणान्तरम् उद्भटसंमतं दूषयन्नाह—न चेति। अबिन्द्विति। 'अप्सु प्रतिबिम्बित इन्दुरबिन्दुः, तद्वत् सुन्दरी'। यस्य अबिन्दुभिः सौन्दर्यं नास्ति तस्याः कथं लावण्यबिन्दवः प्रसरेयुरिति विरोधः प्रधानः। अत्र हि श्लेषस्य प्रतिभानमात्रं, न तु प्ररोह इत्याह—न ह्यत्रेति। द्वितीयार्थस्येति। न बिन्दुरबिन्दुरित्येवं रूपस्य।

ननु, द्वितीयार्थप्ररोहेण किं प्रयोजनं, तावतैव-श्लेषत्वसिद्धेः। तद् न, एवं हि श्लेषाभासत्वं श्लेषस्य लक्षणं स्यात्। न चैतत् संमतमिति प्रतिपादयन्नाह-न चेति। यथा विरोधाभासो विरोधः, न तथा श्लेषाभासः श्लेषः। उभयार्थप्ररोहे हि श्लेष इत्यर्थः।

### विवेकः

अथास्मदुपदर्शितशब्दश्लेषवदुपमाविरहितोऽर्थश्लेषस्य विषयः कल्प्यते, तद्वयोरप्यन्यत्रलब्धसत्ताकयोरेकत्र सन्निपाते सङ्करतैव प्राप्तेति 'गुणक्रियासाम्यमुपमा' 'शब्दसाम्यन्तु श्लेष' इति विशेषणस्यानभिधानाच्छाब्दसाम्यमप्युपमाय विषयः। श्लेषस्य तूपमाविरह इति 'पल्लवे'त्यादावुपमैव न्याय्या। एवञ्च 'अबिन्दुसुन्दरी'त्यादौ विरोधप्रतिभोत्पत्तिहेतुः श्लेषः'इति यदुक्तं (उ. वि. ?) तदपि न सम्यगित्याह न चेति। अप्सुप्रतिबिम्बितो य इन्दुस्तद्वत् सुन्दरी नित्यञ्च गलन्तो लावण्यबिन्दवो यस्याः। अविद्यमानबिन्दुः कथं स बिन्दुरिति शब्दालङ्कारविरोधः, श्लेषस्य तु तेन बाधितत्वात् प्रतिभानमात्रं न तु प्ररोहः। विरोधस्याभासत्वादेवालङ्कारता, इतरथा तस्य दुष्टत्वात्।

### दीपिका

एतदमुपमाविषये श्लेषस्य बाध्यतामुपपाद्यलङ्कारान्तरविषयेऽप्युपपादयति। अप्सु प्रतिबिम्बित इन्दुरबिन्दुः। गलदित्युत्प्रेक्षागर्भकम्। बिन्दुरहितानां कथं बिन्दवो गलन्तीति विरोधः। उपपत्तिमाह—नह्यत्रेति। प्रतिपादको निष्कम्प्रतीतिकारकः, प्ररोहाभावादिति। यत्र हि विरुद्धार्थप्रतीतेराभानमाविर्भावोऽन्त्यतयैव प्राकरणिकप्रतीत्योन्मूलनम्, तत्रैव विरोधालङ्कार इति, अन्यथा दोषप्रसङ्गात्। श्लेषाभाषः श्लेष इति। तथा सति पुनरुक्तवदाभासादावतिप्रसङ्गादित्यर्थः।

### दर्पणः

एवञ्च या चाबिन्दसुन्दरी तस्याः कथं विद्धं [विरुद्धं] गगनमिति [निरोधाभासः। उपपत्तिमानक्षत्रेति।

**[?]**

### साहित्यचूडामणिः

अथालङ्कारान्तरेष्वपि युक्तिमेनां योजयिष्यन् विरोधे तावदाह—नचेति। अप्सु सलिले प्रतिफलन्निन्दुरबिन्दुः तद्वत् सुन्दरी। कचकचायमानलावण्यत्वं साधर्म्यम्। बिन्दुराहित्यं च व्यङ्ग्यम्। विरोधे न श्लेषस्य प्रतिभेत्यत्र युक्तिमाह—नहीति। अर्थद्वयप्रतिपादक इति। प्रतिपादनमभिधानम्। द्वितीयस्येति। बिन्दुराहित्यरूपस्य व्यञ्जनव्यापारमात्रलब्धस्य। प्ररोहाभावाद् अभिधावैचित्र्यलक्षणालंकारपर्यन्तं प्रसर्पणाभावात्। नन्वयं विरोधेऽपि समः समाधिरित्यत्राह—नचेति। अभासताव्यतिरेकेण न विरोधोऽलंकारः। न चैष न्यायः श्लेषे।

### सम्प्रदायप्रकाशिनी

इत्थं प्रकृतोदाहरणादावुपमाबाधकत्वं श्लेषस्य निरस्यालङ्कारान्तरबाधकत्वमपि नास्तीति दर्शयति—न चाबिन्दुसुन्दरीत्यादि । अप्सु इन्दुः अबिन्दुः इन्दोः प्रतिबिम्बमित्यर्थः तद्धि सातिशयसुभगम् । अत्राबिन्दु बिन्द्विति योऽयं विरोधाभासः न स श्लेषेण बाध्यते, अपि तु श्लेषप्रतिभोत्पत्तिहेतुना विरोधेन श्लेष एव बाध्यते । कथमित्यत आह—न ह्यत्रार्थद्वयेति । बिन्दुर्न भवति भवति चेत्यर्थद्वयम् । न हि तत्प्रतिपादकोऽत्र श्लेषः, बिन्दुर्न भवतीत्यस्यार्थस्य प्ररोहाभावात् । अतः श्लेषाभासोऽयमिति यावत् । ननु विरोधश्लेषयोर्द्वयोराभसत्वे कथमन्यतर इत्यत आह—न च विरोधाभास इत्यादि । विरोधालङ्कारस्य हिं विरोधाभासत्वमेव लक्षणं न तु श्लेषस्य श्लेषभासत्वमित्यर्थः । निगमयति—तस्मादेवमादावित्यादि ।

### मधुमती

अबिन्द्विति । अप्सु इन्दुः अबिन्दुः, तद्वत् सुन्दरी इत्यर्थः । अथ च अबिन्दुः = बिन्दुरहिता, गलल्लावण्यबिन्दुका चेति विरोधः । न हीति । तथा च अत्र प्रधानं विरोधालङ्कारः श्लेषप्रतिभानम् त्रं उत्पादयति, न तु वैपरीत्यम् । श्लेषस्य विरोधोपसर्जनत्वेन अप्राधान्यात् । शिलष्टत्वं विना विरोधाभासस्यैवासम्भ वात् । न चेति । चमत्कारप्रयोजकत्वादिति भावः । श्लेषाभासस्यालङ्कारत्वे विरोधवत् श्लेषस्य अनलङ्कारतापत्तेश्चेति ज्ञेयम् । यत्र तु न प्राधान्यविवक्षा, तत्र अनुग्राहकलक्षणः अलङ्कारः इति स्मर्तव्यम् ।

### विस्तारिका

अबिन्द्वति । न विद्यते बिन्दुर्यस्यामर्थलावण्यस्य, तथापि सुन्दरी । लावण्यबिन्दोरभावगणनाभ्यां विरोधः । पक्षेऽप्सु य इन्दुः प्रतिबिम्बितचन्द्रः स इव सुन्दरीत्याभासः ।

विरोधेति । अत्रापि बहुव्रीहिः । न चेत्यन्वेति । विरोधनिर्वाह्यो न श्लेषः, किन्तु श्लेषसाध्यो विरोध इत्यर्थः ।

विनिगमकमाह—न हीति । प्रतिपादकोऽन्वयबोधकः । द्वितीयस्य बिन्दुभावस्य, प्रतिभातमात्रस्य उपस्थितमात्रस्य प्ररोहोऽन्वयः ।

### सारबोधिनी

न केवलमुपमायाः श्लेषबाधकता किंतु विरोधस्यापीत्याह न चाबिन्दुसुन्दरीत्यादि । गलल्लावण्यबिन्दुका बिन्दुरहिता वेति विरोधः । तत्परिहारस्तु अप्सु प्रतिबिम्बितो य इन्दुस्तद्वत्सुन्दरीत्यर्थः । विरोधेति । अत्रापि पूर्ववद् बहुव्रीहिः । अपि त्विति । विरोधनिर्वाह्यो न श्लेषः, किन्तु श्लेषसाध्यो विरोध इत्यर्थः । विनिगमकमाह नहीति । प्रतिपादकः अन्वयबोधक इत्यर्थः । यत्र ह्यर्थद्वयस्य समकक्षत्वं स श्लेषस्य विषय इति भावः । द्वितीयस्य बिन्दुरहितस्याभासमात्रस्योपस्थितमात्रस्य प्ररोहोऽन्वयबोधः नत्वर्थद्वयोपस्थितावेव श्लेषोऽस्त्वित्यत आह न चेति । विरोधाभासो विरोध इत्यन्वयः । श्लेषप्रतिभेति भिन्नपदम् । बहुव्रीहौ हि अलंकारान्तरविशेषणत्वे हेतुरिति

पुल्लिगप्रयोगो न स्यात्। उत्पत्तिहेतुरर्थालङ्कारान्तरस्यालंकारान्तरमेव साधीयः, कुतः सा यस्मात् श्लेषप्रतिभा तदुत्पत्तिरिति योजनमिति टीकाकृतः।

**काव्यप्रदीपः**

न केवलमुपमाया एव श्लेषबाधकत्वं किं त्वलंकारान्तरस्यापि। 'अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका' इत्यत्र विरोधालंकारस्य। नह्यत्रार्थद्वयप्रतिपादकशब्दस्य श्लेषः। बिन्दुसाहित्यरूपस्य द्वितीयार्थस्य प्रतिभामात्रविषयस्य प्ररोहाभावात्। नन्वप्ररूढोऽपि श्लेषालंकार आस्तां विरोधाभासवदिति चेत्, भवेदेवम् यदि विरोधाभासस्य विरोधित्वमिव श्लेषाभासस्य श्लेषत्वमनुमतं कस्यापि भवेत्। न त्वेवम्। तस्मादेवंविधे विषये श्लेषप्रतिभोत्पत्तिहेतुरलंकारान्तरं प्राधान्यात्।

**'अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका।'**

इत्यादौ श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः, न तु विरोधप्रतिभोत्पत्तिहेतुः श्लेषः। श्लेषे हि अर्थद्वयस्य अन्वयबोधविषयत्वम्। इह त्वेकस्यैव, अन्यस्य तूपस्थितिमात्रम्।

**आदर्शः**

अयैवमनिष्टापत्तिभयेन माऽस्तु उपमासङ्कीर्णश्लेषो मा चास्तु उपमाज्ञानज्ञाप्यः श्लेषः अन्यालङ्कारज्ञानज्ञाप्यतया तु श्लेषोऽर्थलङ्कारः स्यादित्यतस्तदपि खण्डयति—न च अबिन्दुसुन्दरीति। अप्सु प्रतिबिम्बित इन्दुः अबिन्दुः इन्दुप्रतिबिम्बः, तद्वत् सुन्दरी, गलन् लावण्यबिन्दुर्यस्थास्तादृशी प्रतिरोमकूपं दृश्यमानस्य दीप्यमानत्वस्य बिन्द्वाकारत्वेन बिन्दुत्वाध्यासः। अत्र अबिन्द्वित्यत्र बिन्दुशून्यत्वं श्लेषलभ्योऽर्थः, तमादाय च विरोधः, स च श्लेषज्ञानज्ञेय एव न तु तज्ज्ञानज्ञेयः श्लेष इति समुदायार्थः। तत्र हेतुमाह—न ह्यत्रेति। तदा विरोधज्ञानज्ञेयः श्लेषः स्याद् यदि श्लेषलभ्योऽर्थः शब्दानुभवविषयः स्यात् स एव तु नेत्यर्थः। 'प्ररोहः' पार्यन्तिकोऽनुभावः। नन्वत्र विरोधोऽपि न पार्यन्तिकानुभवविषयः किन्त्वाभासरूप एव सः, तद्वत् श्लेषोऽप्याभासरूप एवालङ्कारः, स एव विरधाभासज्ञानज्ञेयः स्यादित्यतः श्लेषाभासस्यालङ्कारत्वेन केनाप्यनभ्युपगम्यमानत्वमाह—न च विरोधाभास इवेति। विरोधाभाससाधारणो विरोधालङ्कारः सर्वैः स्वीकृतः, श्लेषस्तु श्लेषाभाससाधारणतया केनापि न स्वीकृत इत्यर्थः। एवञ्च श्लेषो नालङ्कारान्तरज्ञानेनापि ज्ञेय इत्याह—तस्मादेवमादिष्विति। अत्र चालङ्कारान्तरमित्यस्य विशेषणं श्लेषप्रतिभोत्पत्तिहेतुरिति यथोक्तबहुब्रीहावनुपपन्नं पुंलिङ्गत्वानुपपत्तेः, तत्पुरुषे तु श्लेषप्रतिभाज्ञेयत्वरूपोऽर्थो न घटते अतोऽत्र हेत्विति पाठमेव चक्रवर्त्ती कल्पयति। तच्च क्वापि पुस्तके न दृश्यते इत्यतोऽत्र 'को हेतुः कारणं किं वे'त्यत्रेव हेतुपदं कार्यपरमेव अलङ्कारान्तरपदञ्च तज्ज्ञानपरं तथा चालङ्कारान्तरज्ञानं श्लेषप्रतिभोत्पत्तिजन्यमित्येवार्थः।

**सुधासागरः**

न केवलमुपमाया एव श्लेषबाधकत्वं किन्त्वलङ्कारान्तरस्यापीत्याह—न च अबिन्दुसुन्दरीत्यादि। गलल्लावण्यबिन्दुका बिन्दुरहिता चेति विरोधः, तत्परिहारस्तु अप्सु प्रतिबिम्बितो य इन्दुः तद्वत्सुन्दरीत्यर्थः। विरोधे-

त्यादि। तथा चात्र विरोधालङ्कारेण श्लेषो बाध्यत इत्यर्थः। विनिगमकमाह—न हीत्यादि। न ह्यत्रार्थद्वयप्रतिपादकशब्दस्य श्लेषः, बिन्दुसाहित्यरूपस्य द्वितीयार्थस्य प्रतिभामात्र विषयस्य प्ररोहाभावादित्यर्थः। न च विरोधाभास इवेत्यादि। अयमाशयः—ननु अप्ररूढोऽपि श्लेषालङ्कारोऽङ्गं विरोधाभासवदिति चेत्, भवेदेवं यदि विरोधाभासस्य विरोधित्वमिव श्लेषाभावस्य श्लेषत्वमनुमतं कस्यापि भवेत्, नत्वेवम्, तस्मादेवंविधे विषये श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरम्।

तथा च—

सद्वंशमुक्तामणिः ॥ ३८० ॥

नाल्पः कविरिव स्वल्पश्लोको देव महान् भवान् ॥ ३८१ ॥

अनुरागवती संध्या दिवसस्तत्पुरः सरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥ ३८२ ॥

आदाय चापमचलं कृत्वाहीनं गुणं विषमदृष्टिः ।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥ ३८३ ॥

इत्यादावेकदेशविवर्तिरूपकश्लेषव्यतिरेकसमासोक्तिविरोधत्वमुचितम् न तु श्लेषत्वम् ।

---

सङ्केतः

कानि तानि एवमादिवाक्यानि ? इत्याह—तथा चेति । वंशः कुलं, स एव वंशः वेणुः । श्लोकः यशः ग्रन्थोऽपि तत्पुरस्सरः इति । आयान्त्या इव सन्ध्यायाः कामीव दिवसः पुरः सम्मुखं सरति इति व्याख्या । न तु अग्रे दिनं, पृष्ठतश्च सन्ध्या यातीति । एवं हि कदाऽपि न सङ्गमः स्यात् । आदायेति । अचलं शैलं, निश्चलं च । अहीनं आदिशेषं, न हीनं च । विषमा त्रिरूपा चञ्चला । अच्युतः । विष्णुः गतिशून्यश्च ।

एकदेशेति । भामहोक्तैकदेशविवर्तिरूपकस्य मम्मटमते परम्परितसंज्ञा । अत्र वर्णनीयस्य राज्ञः मुक्तामणित्वरूपणान्यथानुपपत्त्या वंशस्य गोत्रस्य वेणुत्वरूपणं साक्षादनुक्तमपि श्लेषबलादवगम्यते इति एकदेशविवर्तित्वम् । 'सद्वंशे' त्यत्र एकदेशविवर्तिरूपकम् । 'नाल्पः कविरिवे'त्यत्र श्लेषव्यतिरेकौ । 'अनुरागवती सन्ध्ये' त्यत्र समासोक्तिः । 'आदाये'त्यत्र तु विरोधः ।

सङ्केतः (रुय्यकः)

वंशः कुलम् स एव वंशो वेणुः । श्लोकः कीर्त्तिश्च । अनुरागौ लौहित्यमभिष्वङ्गश्च, पुरः अग्रतोऽग्रे च सरति । अचलं पर्वतं निश्चलञ्च, अहीनं सर्पाणामिनं, न हीनञ्च । विषमा विरूपा अस्थिता च, अच्युतः कृष्णो गतिहीनश्च ।

## बालचित्तानुरञ्जनी

यदुक्तं तद्दर्शयितुमाह तथा चेति। स शुद्धः वंशः अन्वय एव वेणुः तस्य मुक्तामणिः। अत्र वंशशब्दे श्लेषः मुक्तामणिरूपकस्याङ्गम्, अतः एकदेशविवर्तिरूपकेण श्लेषो बाध्यत इत्यर्थः। व्यतिरेकेण बाधामाह नाल्प इति। हे देव! महान् भवान् स्वल्पः कविरिव अल्पश्लोको न भवति। श्लोकः पद्यं यशश्च। अत्र श्लेषो व्यतिरेकस्योपकारक इति व्यतिरेकेण श्लेषो बाध्यत इत्यर्थः। समासोक्त्या बाधमाह अनुरागेति। संध्या अनुरागवती। अनुरागो लौहित्यम् तद्वती संध्या दिवसश्च तत्पुरः सरः संध्याभिमुखः, तथापि संध्यादिवसयोः समागमो न। दैवगतिश्चित्रा। अहो आश्चर्यम्। चित्रा विचित्रा। अत्र पूर्वप्रवृत्तिनायिका[?] सा अनुरागवती स्नेहवती तदभिमुखश्च नायक इति प्रस्तुतार्थ गम्यमानत्वेन द्वयोरर्थयोर्वाच्यत्वाभावात् श्लेषः समासोक्त्यलङ्कारेण बाध्यत इत्यर्थः। विरोधाभासेन बाधमाह आदायेति। यः विषमदृष्टिस्त्रिलोचनः अचलं पर्वतं चापमादाय अहीनां भुजगानां इनं स्वामिनं गुणं कृत्वा अच्युतः श्रीकृष्ण एव शरो यस्य एवं विधः सन् लक्ष्यमभाङ्क्षीत् तस्मै नमः। अचलं निश्चलं, हीनं विकलं, विषमा लक्ष्यविमुखी दृष्टिर्यस्य, अच्युतः शरः, अगलितशरः इत्याद्यर्थान्तरस्य प्रतिभानमात्रसिद्धत्वेन वाच्यत्वाभावात् श्लेषो विरोधाभासेन बाध्यत इत्यर्थः। निगमयति इत्यादाविति।

## काव्यादर्शः

'संद्वंशे'ति। वंशः कुलं, स एव सद्वंशो वेणुः। यथा 'विद्वन्मानसे' त्यत्र राज्ञो हंसरूपणान्यथानुपपत्त्या विद्वन्मानसस्य मानससरस्त्वं रूप्यते साक्षादनुक्तमपि, एकदेशविवर्ति चेदं रूपकं मानसस्य मानससरस्त्वरूपणायाः साक्षादनुक्तत्वाद्, एवमत्रापि वर्ण्यमानस्य मुक्तामणित्वरूपणान्यथानुपपत्त्या वंशस्य क॰ .स्य वेणुत्वरूपणमनुक्तमपि गम्यते, एकदेशविवर्तित्वं च पूर्ववद् उद्भावनीयमेकस्मिन् देशे विशेषेण वर्तनात्। एकदेशविवर्तिरूपकस्य चास्य परंपरिरूपकत्वं काव्यप्रकाशकारमते।

'श्लोकः कीर्तिश्च'। अत्रोपमेयस्य प्राकरणिकत्वेनोपमानाद् आधिक्यमिति व्यतिरेकेऽष्टमो भेदः। श्लोकशब्दः श्लिष्टः।

'अनुरागो लौहित्यं अभिष्वङ्गश्च। आगच्छन्त्या इव सन्ध्यायाः कामुकवद् दिवसः परः संमुखं सरतीति व्याख्येयम्, न तु पदातिन्यायेन अग्रे दिवसो गच्छति संध्या पश्चादिति। एवं हि वर्षशतैरपि समागमो न भवतीति किं चित्रम्।' अत्र संध्यादिवसयोरुपमेययोः 'अनुरागवती' इत्यादिश्लिष्टविशेषणमहिम्ना नायकयोरुपमानयोर्व्यवहारप्रतीतिरिति समासोक्तिलंकारः।

'अचलं पर्वतं निश्चलं च। अहीनां सर्पाणां इनं स्वामिनं, हीनं च। विषमा त्रिरूपाऽस्थिरा च। अच्युतः कृष्णो गतिशून्यश्च।' एषु चतुर्षु चत्वारोऽलंकाराः, न तु श्लेषस्य सर्वालंकारेषु प्रतिभानमात्रम्।

## विवेकः

एवमादाविति—तत्र श्लेषप्रतिभोत्पत्तिहेतोरेकदेशविवर्ति रूपकं यथा सद्वंशेति। वंशः कुलं, वंशो वेणुः, तदिह सद्वंश एव सद्वंश इत्यारोपपूर्वको मुक्तामणेरारोपः। श्लेषव्यतिरेको यथा नाल्प इत्यादि। श्लोकः पद्यं कीर्तिश्च। समासोक्तिर्यथा अनुरागेत्यादि, अनुरागः सन्ध्याऽरुणिमाऽभिलाषश्च पुरोऽग्रे जगतः सरति। "यद्यपि

वामनाभिप्रायेणायमाक्षेपस्तथापि भामहाभिप्रायेण प्रसिद्धिं पुरस्कृत्य समासोक्तिरित्युक्तवान्" (ध्व. आ. लोचन ३७ पृ: द्र:) । विरोधो यथा आदायेत्यादि । अचलं पर्वतं निश्चलञ्च अहीनं सर्पाणामिनमहीनञ्च, विषमा विरूपा अस्थिरा च । अच्युतः कृष्णो गतिशून्यश्च । लक्ष्यमभाङ्क्षीदिति त्रिपुरभेदे ।

## दीपिका

वंशः कुलं वेणुश्च । अत्रैकदेशविवर्तिरूपकम् । श्लेषे तु पद्यं कीर्तिश्च अत्र श्लेषव्यतिरेकः । अनुरागोऽनुगतलौहित्यमासक्तिश्च । पुरोऽग्रे सरति [पुरःसरः] । "अहो दैवगतिश्चित्रा तथापि न समागमः" इत्युत्तरार्धस्य क्वचित् पाठः । अत्र समासोक्तिः ।

अचलं पर्वतं निश्चलञ्च । अहीनां नागानामिनं धनुषोऽन्यूनप्रमाणं च । विषमा दुर्दशाऽस्थिरा च । दृष्टिश्चक्षुस्तद्व्यापाराश्च । अच्युतो नारायणोऽनिर्गतश्च । लक्ष्यं शरव्यं त्रिपुराख्यं सैन्यसंख्याविशेषश्च । आभाङ्क्षीद् विध्वस्तवान् जितवांश्च । अव विरोधः ।

## दर्पणः

द्वितीयस्य विरुद्धस्य यथा भासनं विश्रान्तिः । प्ररोहः श्लेषप्रतीतेति तिर्यं [यत्] पदं, समासे लिङ्गासङ्गतेः । वंशं कुलं रेणुश्च [वेणुश्चं] । अत्रैतन्मम रूपकम् । परम्परितं एकदेशविवर्तयितुमतान्तरमाश्रित्योक्तं श्लोकः कीर्तिः यस्य च [सः] अत्र श्लेषव्यतिरेकः ।

अनुरागो अनुगतं लौहित्यमासक्तिश्च । अचलं शैलं निश्चलश्च । अत्र समासोक्तिः ।

अहीनां नागानामीनं स्वामिनञ्च । द्वितीये पक्षे हीनं धनुषोन्मूलनप्रमाणं विषमा दुर्दशा अस्थिरता च, दृष्टिः चक्षुस्तव्द्यापारद्धा अच्युतो नारायणः अनिर्गतश्च । लक्ष्यं शख्य भूतं त्रिपुरदैस्यम् सैन्यसंख्याविशेषः । अत्र विरोधः ।

## साहित्यचूडामणिः

इतोऽपि बहुष्वलंकारेषु दर्शयितुमाह—तथाचेति । सन् विशुद्धोऽन्वय एव वेणुः तस्य मुक्तामणिः । एतदेकदेशविवर्ति रूपकमित्यौद्भटाः । परम्परितमित्यपरे । भविष्यति चैतत् पद्यम् ।

यशश्च श्लोकः । अत्र व्यतिरेकोऽलङ्कारः ।

अनुरागवतीति । अनुराग आरुण्यं स्नेहविशेषश्च । तस्याः सन्ध्यायाः पूर्वं प्रवृत्तः, नायिकायाः प्रत्यासन्नवर्ती च । अत्र समासोक्तिलंकारः ।

आदायेति । अहीनां भुजङ्गानामिनं स्वामिनं, हीनं विफलं च । विषम त्रित्वसंख्याना लक्षविमुखी च दृष्टिर्यस्य । अच्युतो लक्ष्मीपतिः अगलितश्च शरो यस्य । अत्र विरोधोऽलंकारः । एवं—

**ते गच्छन्ति महापदं भुवि परा भुतिः समुत्पद्यते**
**तेषां तैः समलंकृतं निजकुलं तैरेव लब्धा क्षितिः ।**

**तेषां द्वारि नदन्ति बाजिनिवहास्ते भूषिता नित्यशो**
**ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥**

इत्यत्र श्लेषप्रतिभोत्पत्तिहेतुर्व्याजस्तुतिलंकारः । श्लेषमात्रतात्पर्ये तुष्टेन रुष्टेन वेति चाटुकवाक्यबन्धस्य वैयर्थ्यप्रसङ्ग एव । यथा ममैव—

**कालोऽयं हीनपुन्नागः केसरी वर्तते वने ।**
**प्रकाशन्ते नखा यस्य पलाशमुकुलच्छलात् ॥**

इत्यत्रापह्नुतिरलंकारः । इत्याद्यूह्यम् ।

### सम्प्रदायप्रकाशिनी

एवमादाविति यदुक्तं तद् दर्शयितुमाह—सद्वंशेति । अत्र वंशशब्दे श्लेषो मुक्तामणित्वरूपणेऽङ्गम् । तथा हि—कथं मुक्तामणित्वमित्याकाङ्क्षायां वंशस्य वंशत्वादिति श्लेषो रूपकमवस्थापयति । अत एकदेशविवर्तिरूपकेणेह श्लेषो बाध्यते । तथा 'नाल्पः (श्लोक ? कविः) यशसः पद्यस्य च प्रतिपादकः श्लोकशब्दश्लेषो महानिति व्यतिरेकाङ्गमिति श्लेषमूलो व्यतिरेक एव । अनुरागवतीत्यत्र विशेष्यांशे शब्दद्वयाभावादप्राकरणिकोऽर्थो व्यङ्ग्य एव । अतो न श्लेषः । श्लेषे द्वयोर्वाच्यत्वनियमात् । अतो विशेषणांशे प्रतीतस्य श्लेषस्य बाधिका समासोक्तिरेव । तथा 'आदाय चापमि' त्यत्र शैलरूपं चापमादाय अहीश्वरं गुणं कृत्वा विष्णुशरस्त्रिलोचनो लक्ष्यमभाङ्क्षीदिति वास्त्वार्थातिरिक्तो योऽयं निश्चलं चापं गृहीत्वा गुणं हीनं कृत्वा दृष्टि-सौष्ठवरहितः सन्नमुक्तशर एव लक्ष्यमभाङ्क्षीदिति विरोधाभासः, स श्लेषमाभासयन् स्वयमलङ्कारत्वेनावतिष्ठते ।

### मधुमती

इत्यादाविति । 'सद्वंशमुक्तामणिः' इत्यत्र 'वंश एव वंशः, तत्र मुक्तामणिः, इति वंशे वंशत्वारोपणस्य मणितारोपहेतुत्वात् एकदेशविवर्तिरूपकम् । एतच्च अलङ्कारसर्वस्वमते । एतन्मते तु परम्परितरूपकमेव । 'एकदेशविवर्ति हीदमन्यैरभिधीयते' इति वक्ष्यमाणत्वात् ।

'नाल्पः कविरिव' इत्यत्र श्लेषव्यतिरेकः । उपमानापेक्षया उपमेयोत्कर्षप्रतीतेः व्यतिरेकात्, तस्य च श्लोकः = यशः पद्यं चेति श्लोकशब्दश्लेषप्रयुक्तत्वात् ।

'अनुरागवती सन्ध्या' इत्यादौ समासोक्तिः । श्लिष्टविशेषणबलात् नायकवृत्तान्तप्रतीतेः ।

'आदाय चापं'इत्यादौ विरोधः ।

सर्वत्र चात्र श्लिष्टश्लोकादिपदसामर्थ्यादेव तत्तदलङ्कारसिद्धिरिति श्लेषस्य उपसर्जनतैव । यदि च उपसर्जनत्वेऽपि श्लेष एवोक्तोदाहरणेषु, तदा यथायथं शब्दार्थश्लेषाभ्यामेव व्यापनात् पुनरुक्तवदाभासः अलङ्कार एव न स्यात् । न चेष्टापत्तिः । स्वयं तत्परिगणनविरोधात् । यदि च श्लेषसत्त्वेऽपि पुनरुक्तवदाभासादेव चमत्कारः, श्लेषस्य तु प्रतिभामात्रम् इत्युच्यते, तदा प्रकृतेऽपि तुल्यम् । अत एव पर्यायोक्ते शब्दघटितसाधारणधर्ममूलको-

पमादावपि न श्लेषः । समासोक्त्यप्रस्तुतप्रशंसादौ तु द्वितीयार्थस्य अनभिधेयतयैव नास्य गन्धोऽपीति सर्वमवदातम् ।

## विस्तारिका

नन्वर्थद्वयोपस्थितावेव श्लेषता इत्यत आह—न चेति । विरोधाभासो विरोध इवेत्यन्वयः । तस्माच्चमत्कारानुदयात् । उपसंहरति—तस्मादिति । एवमादौ 'स्वयं च' इत्यत्र 'अबिन्दु' चालङ्कारान्तरं पूर्णोपमादि श्लेषे प्रतिभोत्पत्तेस्तदुत्थापनस्य हेतुः । साधर्म्याकाङ्क्षायामुपमायां विरोधे विरुद्धार्थाकांक्षायां च तत्प्रसवादिति नेयं श्लेषप्रतिभेति भिन्नपदं प्रतिभाज्ञानमुत्पत्तिः, अर्थादलङ्कारान्तरस्य अलङ्कारान्तरे साधीयः । यस्मात् श्लेषप्रतिभा तदुत्पत्तिहेतुरिति योजनमिति टीकाकृतः ।

ननु यत्रार्थान्तरस्य प्ररोहस्तत्र श्लेषोऽस्त्वित्यत आह—तथा चेति । वंशोऽन्वयो वेणुश्च । श्लोको यशः पद्यं च । अत्रान्यकवितो व्यतिरेकः । अन्यः कविरिव भवान्न स्वल्पश्लोक इत्यन्वयः ।

अनुरागेत्यादि । अनुरागो रक्तिमा प्रेमवश्यता च ।

आदायेति । अचलं पर्वतं निष्क्रियं च । अकारश्लेषादहीनं सर्पराजम्, तद्भावापक्षे हीनं निकृष्टं च । विषमाऽयुग्मा स्थिरीकृत्य लक्ष्ये समर्पिता च । अच्युतो विष्णुर्गुणादनिर्गश्च । लक्ष्यं शरव्यं शतसाहस्रीरूपं च ।

'सद्वंश'इत्यत्रैकदेशवर्तित्वं रूपकम् । वंशोऽन्वयाय एव वेणुरित्येकदेशे श्लिष्टतया विशेषणपरिवर्तनादीनि । साम्प्रदायिकदिशा नवीनमते श्लिष्टपरम्परितं नान्य इत्यादौ व्यतिरेकः । अनुरागवतीत्यादौ समासोक्तिः, आदायेत्यादौ विरोधः, क्रियाशून्यचापादिनानत्यभेदेन विरोधात् । न त्विति । तस्यामीषां स्वरूपनिर्वाहकत्वात् ।

## सारबोधिनी

एवमादिष्विति यदुक्तं तद्दर्शयति तथा च सद्वंशेति । वंशोऽन्वयो वेणुश्च । अत्र वंशशब्दस्य श्लेषो मणित्वारोपरूपकस्याङ्गम् । श्लिष्टपरंपरितरूपकस्य एकदेशविवर्तीति व्यवहारो भामहादीनाम् । सद्वंश एव सद्वंश इत्यारोपपूर्वको मणेरारोपः । नाल्प इति । श्लोकः पद्यं यशश्च । अत्रापि श्लेषो व्यतिरेकोपकारकः । अनुरागेति । अनुरागः सन्ध्यारुणिमा च अभिष्वंगश्च । अत्रापि समासोक्तेरुपकारकः श्लेषः । द्वितीयार्थे प्रकरणाद्यभावान्न श्लेष इति । अचलं पर्वतं निष्क्रियं च । अकारप्रश्लेषादहीनां इनं प्रभुं तदभावपक्षे हीनं निकृष्टं च । विषमा अयुग्मा । स्थिरीत्यलक्ष्येन समर्पिता च [?] । अच्युतो विष्णुः चापादनिर्गतश्च । लक्ष्यं शरव्यं शतसाहस्री च । अर्थान्तरस्य प्रतिभातमात्रस्य प्ररोहाभावात् विरोधाभास एव न श्लेषः । न तु श्लेषत्वमिति । श्लेषेण तेषां निर्वाहान्न तु तैः श्लेषो निर्वाह्यत इति ।

## काव्यप्रदीपः

तथा च 'सद्वंशमुक्तामणिः' इत्यत्र परम्परितश्लिष्टरूपके रूपकं प्रधानम् । वंशशब्दे श्लेषस्तु वेणुकुलयो रूपकोपयोगितया तदङ्गमिति श्लेषप्रतिभोत्पत्तिहेतु रूपकमेव व्यपदेश्यम् । 'नाल्पः कविरिव स्वल्पश्लोको देव महान्भवान्' इत्यत्र श्लेषव्यतिरेके व्यतिरेके एव प्रधानं श्लेषस्तु तन्निर्वाहक इति तत्प्रतिभोत्पत्तिहेतुर्व्यतिरेकः ।

'अनुरागवती संध्या दिवसस्तत्पुरः सरः।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥'

इत्यत्र समासोक्तिरलंकारः। अभिधाया नियमने श्लेषस्यासंभवात्।

'आदाय चापमचलं कृत्वाहीनं गुणं विषमदृष्टिः।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥'

इत्यत्र विरोध एवालंकारः श्लेषस्तु तदङ्गमात्रम्। अप्ररोहात्।

'कवीनां संतापो भ्रमणमभितो दुर्गतिरिति
त्रयाणां पञ्चत्वं रचयसि न तच्चित्रमधिकम्।
चतुर्णां वेदानां व्यरचि नवता वीर भवता
द्विषत्सेनालीनामयुतमपि लक्षं त्वमकृथाः ॥'

अत्र मदीये पद्ये काव्यलिङ्गस्य श्लेषोऽङ्गमिति श्लेषप्रतिभोत्पत्तिहेतुः काव्यलिङ्गम्। तस्मादलङ्कारान्तर-प्रतिभोत्पत्तिहेतुः श्लेष इति रिक्तं वचः।

### काव्यप्रकाशखण्डनम्

तथा 'सद्वंशमुक्तामणिः'—सद्वंशः समीचीनं कुलं स एव वंशो वेणुस्तत्र मुक्तामणिरित्यर्थः।

'नाल्पः कविरिव [स्वल्प] श्लोको देव! महान् भवान्।'

अनुरागवती सन्ध्या दिवसस्तत्पुरः सरः।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥

सन्ध्या प्रातः सन्ध्या अनुरागवती लौहित्यवती प्रेमवती च। दिवसो दिनं तस्याः सन्ध्यायाः पुरः सरोऽग्रेसरः संमुखश्च। अहो आश्चर्ये। दैवगतिः विधातृरीतिः, चित्र-विचित्रा, तथापि समागमः संयोगो नेत्यर्थः। इत्यादौ परम्परितरूपकस्य व्यतिरेकसमासोक्तिषु श्लेषस्य निर्वाहकता, न तु श्लेषे विश्रान्तिरिति।

### आदर्शः

तथात्वम् अलङ्कारान्तरे परम्परितरूपकादावपि घटयाते—सद्वंशेति। सत्कुलमेव सद्वेणुस्तत्र मुक्ता-मणिः वंशेऽपि मणिविशेषोत्पत्तेः। अत्र परम्परितरूपकम् एकदेशविवर्त्तीति परोक्तनाम्ना दर्शितम्। नाल्पः कवि-रिवेति। श्लोकः पद्यं यशश्च। अत्र श्लेषव्यतिरेकः। अनुरागेति। सन्ध्या सायंसन्ध्या अनु दिवसस्य पश्चात् रागवती रक्तिमवती, सा पुरःसरी यस्य दिवसस्तादृशः। श्लेषादनुरागयुक्तनायिकापुरःसरनायकलाभः। तथाप्य-समागमे विस्मयादाह—अहो दैवेति। अत्र श्लेषसमासोक्तिः।

आदायेति। यो हरो लक्षं त्रिपुररूपमभाङ्क्षीद् बिभेद तच्चित्रम्, अतस्तस्मै नमः। किं कृत्वाऽभाङ्क्षीत्? अचलं हिमालयं चापमादाय अहीनमहिपतिं वासुकिं गुणं कृत्वा। हरः कीदृशः? विषमदृष्टिस्त्रिलोचनः। अच्युतो

विष्णुः शरो यस्य तादृशः। अत्र चलनरहितं चापम् आदाय गुणञ्च हीनं छिन्नं कृत्वा लक्ष्ये समदृष्टिरहितः अस्खलितशरो लक्षसंख्यमभाङ्क्षीदिति श्लेषविरोधः। इत्यादाविति। परम्परितरूपकमेव। एकदेशविवर्त्ति-रूपकं परैरुच्यते। उक्तोदाहरणेषु यथासंख्यामिदमलङ्कारचतुष्टयं बोध्यम्। 'नयः' मतम्।

### सुधासागरः

तथा च सद्वंशमुक्तामणिरित्यत्र परम्परितश्लिष्टरूपके रूपकं प्रधानम्, वंशशब्दे श्लेषस्तु वेणुकुलयोः रूपकोपयोगितया तदङ्गमिति श्लेषप्रतिभोत्पत्तिहेतू रूपकमेव व्यपदेश्यम्।

नाल्पः कविरिवेत्यत्र श्लेषव्यतिरिके व्यतिरेक एव प्रधानम्, श्लेषस्तु तन्निर्वाहक इति तत्प्रतिभोत्पत्तिहे-तुर्व्यतिरेकः। 'अनुरागवती' इत्यत्र समासोक्तिरलङ्कारः, अभिधायाः नियमने श्लेषस्यासम्भवात्।

आदाय चापमित्यादि। विषमाऽयुग्मा दृष्टिर्यस्य तादृशो यः शिवः, पक्षे विषमा लक्ष्ये स्थिरीकृत्य न समर्पिता दृष्टिर्येन तादृशो यो धन्वी, अचलं पर्वतं निष्क्रियं चापमादाय अहीनां सर्पामाम् इनं प्रभुं गुणं प्रत्यञ्चां कृत्वा, पक्षे हीनं—निकृष्टम्—चित्रामाश्चर्यम्। अच्युतः श्रीविष्णुः शरो यस्य, पक्षे अच्युतः चापादनिर्गतः शरो बाणो यस्य तथाभूतः सन् लक्ष्यं त्रिपुररूपं शरव्यं शत सहस्रीरूपं च अभाङ्क्षीत् तस्मै महाधानुष्काय नम इत्यर्थः। गाथा छन्दः।

शब्द श्लेष इति चोच्यते, अर्थालंकारमध्ये च लक्ष्यते, इति कोऽयं नयः। किं च वैचित्र्यमलंकार इति य एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रता, इति सैवालंकारभूमिः। अर्थमुखप्रेक्षित्वमेतेषां शब्दानामिति चेत् अनुप्रासादीनामपि तथैवेति तेऽप्यर्थालंकाराः किं नोच्यन्ते। रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वेऽपि ह्यनुप्रासादीनामलंकारता। शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता। अर्थगुणदोषलंकाराणां शब्दापेक्षयैव व्यस्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम्। 'विधौ वक्रे मूर्ध्नि' इत्यादौ च वर्णादिश्लेषे, एकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतामित्येवमादि स्वयं विचार्यम्।

---

### सङ्केतः

अथ पूर्वोक्तस्य 'ननु स्वरिते'त्यादिपरोक्तपूर्वपक्षस्योपहासं करोति—शब्दश्लेषः इति। य एवेति शब्दः अर्थो वा। सैव विचित्रता। एतेन 'स्वयं चे'त्यादौ शब्द एव कविप्रतिभासंरम्भगोचरः इति परमतेऽपि शब्दश्लेषता न तु अर्थश्लेषता इत्युक्तम्। रसादीति। रसादिव्यञ्जकं स्वरूपं यस्य वाच्यविशेषस्य। अनुप्रासादीनामपि शब्दालङ्कारता अर्थापेक्षैवेति तेऽपि अर्थालङ्काराः किं न स्युः। गुणदोषतेति। शब्दगुणदोषाः अपि अर्थगुणदोषत्वेन किं नोच्यन्त इति भावः। संस्कृतादिषड्भाषाणां अर्थाभेदे युगपदुक्तिः भाषाश्लेषः इत्येके।

तत्र संस्कृतस्य प्राकृतभाषया श्लेषो यथा—

**"सरले! सहसा रागं"**
**परिहर रम्भोरु! मुञ्च संरम्भम्।**

**विरसं विरहायासं**
**वोढुं तव चित्तमसहं मे॥"**

एवं अन्यभाषाणामपि द्वित्र्यादिश्लेषः ग्रन्थान्तरात् ज्ञेयः।

वर्णा इति। लिपयः। तासामेव खड्गाद्याकारोल्लासनासम्भवात्, लिपीनां च श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन प्रतीतेः, अत्र वाचक शब्दालङ्कारता न लिप्यलङ्कारता।

### बालचित्तानुरञ्जनी

'स्वयं च पल्लवे'त्यादौ शब्दश्लेषः अर्थालङ्कार एव [न] शब्दालङ्कार इति कस्यचिन्मतं दूषयति शब्दश्लेष इति। शब्दश्लेषस्यार्थालङ्कारकथनं व्याहतमित्यर्थः। ननु न व्याहतं, शब्दश्लेषस्यालङ्कारत्वासम्भवेनान्यत्रोक्तत्वात् इत्याशङ्क्याह किं चेति। वैचित्र्यरूपस्यालङ्कारस्य कविविवक्षया शब्दस्यार्थस्य वा संभवात्।

'स्वयं च पल्ल्वे' त्यादौ शब्द एव कविप्रतिभासंरंभगोचर इति शब्दालङ्कारतैव युक्तेति भावः। नन्वनुप्रासगोचराणां शब्दानामर्थमुखप्रेक्षित्वं कथमित्यत आह रसेति। रसादिव्यञ्जकत्वं स्वरूप यस्य च चासौ वाच्यविशेषश्चेति विग्रहः। उक्तामुपपत्तिं अलंकार इव गुणदोषयोः सञ्चारयति शब्देति। शब्दस्य गुणदोषालङ्काराः शब्दापेक्षयैव प्रवृत्ताः इति शब्दगतत्वेनोच्यन्तामित्यतिप्रसङ्ग इति भावः। अतिप्रसङ्गान्तरमाह विधाविति। शब्दभेदेऽपि, विधि-विधुरिति शब्दयोर्भेदे सत्यपीत्यर्थः।

## काव्यादर्शः

तथा स्ववचनविरोधोऽपीत्याह—शब्दश्लेष इति। य एवेति, शब्दोऽर्थो वा। तत्रैवेति शब्देऽर्थे वा। 'वैचित्र्यम्' इत्यत्र 'स्वयं च पल्लवाताम्रा' इत्यादावपि शब्द एव कविप्रतिभासंरम्भगोचर इति शब्दालंकारतैव। न चार्थमुखप्रेक्षित्वमेव शब्दानामर्थालंकारनिबन्धनमित्याह—रसादीति। यच्चैकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं संमतम् उद्भटस्य तदपि न युक्तमित्याह—'विधौ चक्र' इति। विचार्यमिति न तु झगित्येवासूयितव्यम्। यत्र तु प्रस्तुताभिधेयपरत्वेऽपि वाक्यस्य श्लिष्टपदमहिम्ना लक्ष्यमाणोपक्षेप्यार्थनिष्ठं संसूचकत्वं तत्र शब्दशक्तिमूलो वस्तु ध्वनिः, यथा—'रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु' इत्यादौ।

## विवेकः

[किञ्चैकप्रयत्नोच्चार्याणा]—(का. आ. सा. सं. ४/५०) मित्येतत् सामर्थ्याच्छब्दानामित्यवगमने आक्षेपे भवदनुमतेऽर्थश्लेषे भवतैव शब्दानां श्लिष्टताऽभ्युपगतैवेत्यर्थोक्तिविशिष्टं श्लिष्टं प्रतीयतामित्यन्तः शून्यमेव। अपरञ्च तन्मत एव दूषणमुत्पादयति। शब्दश्लेष इति। चेति। तस्मादेवंविधे विषये शब्दालङ्कारत्वमेव युक्तम्। अथ शब्दशक्तिमूलोऽत्रालङ्कारो न तु शब्दस्यालङ्कार इति चेदत्राह, वैचित्र्यमिति। अर्थमुखेति—एवञ्च सत्यतिप्रसङ्ग इत्याह अनुप्रासादीनामपीति। न चैषामर्थोन्मुखत्वं नास्तीति वाच्यमित्याह रसादिव्यञ्जकेत्यादि। किञ्च 'शब्दार्थौ सहितौ काव्यम्' (भा. का. अ. १/१६)। ततोऽनयोः परस्परसव्यपेक्षयोस्तुल्यैवापेक्षेति यथा शब्ददोषादीनामर्थपिक्षयाऽर्थगतत्वं तथाऽर्थदोषादीनामपि शब्दगतत्वं प्राप्नोतीत्याह शब्दगुणेत्यादि। किञ्च यदैकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं तदाऽतिप्रसङ्ग इत्याह विधावित्यादि। स्वयं विचार्यमेतद्विद्विद्भिर्नत्व[स्म]दुक्तमित्येतावतैव झगित्याश्रयणीयमित्यूहनीयमिति।

## दीपिका

एवं व्यपदेशे श्लेषः सर्वालङ्कारबाधक इति दूषयित्वा 'स्वयं च'इत्यादावर्थालङ्कारत्ववादिमते पुनरपि सिंहवत् परिवृत्त्यात्रलोक्य दूषणमाह—शब्देति। यो हि यदाश्रयः स एव तत्सम्बन्धितया व्यपदिश्यते, ततश्च शब्दश्लेषेण व्यपदेशादर्थालङ्कार्यालङ्कारभावस्य लोकवदाश्रयाश्रयित्वनयेन शब्दालङ्कारत्वमाक्षिप्यत इत्यर्थालङ्कारमध्ये गणनम्। अयमपरोऽस्य विशेषः। "स्वयमपि लिखितं स्वयं न वाचयति" इत्याभाणकमनुकरोतीत्यर्थः।

शब्दभङ्गस्थले शब्दयोः श्लिष्यमाणतया शब्दमूलत्वेन शब्दश्लेषता, न तदलङ्कारतयेत्याशङ्क्याह—किञ्चेति। शब्दयोर्वैचित्र्यं लोकोत्तरविच्छित्तिः। कवेः प्रतिभास्फूर्तिस्तस्याः संरम्भः सरभसमाविष्करणम्। तद्गोच-

रश्चात्र शब्द एव मुख्यतया तस्यैवात्रैवंविधवैचित्र्यबोधोपायत्वेन कविप्रतिभयोट्टङ्कनात्। भूमिराश्रयो धर्मीति यावत्।

नन्वेवंधिस्य वैचित्र्यस्यार्थानुसन्धानमन्तरेणानुपलम्भ इति शब्दमूलत्वेऽप्यर्थाश्रयत्वमेवेति तदलङ्कारतैव श्रेयसीत्याशङ्क्ते—अर्थेति। अर्थमुखप्रेक्षित्वं तदनुसन्धानगम्यवैचित्र्यैकतया। अत्रातिप्रसङ्गमाह—अनुप्रासादीनामिति।

नन्वनुप्रासादीनां शब्दश्रुतिमात्रगम्यस्वरूपाणामर्थोन्मुखता कुतस्त्येत्याह—रसादीति। अन्यथा वृत्तिविरोधादिदोषस्योक्तत्वादिति भावः। तदनुसन्धानानुसन्धेयरूपतामात्रेण तद्धर्मताऽङ्गीकारमात्रेण केवलमतिप्रसङ्ग। किन्तर्हि शब्दगुणदोषेष्वपीति बहुविप्लवः स्यादित्याह—शब्देत्यादि उच्यन्तामित्यन्तम्। अर्थस्य गुणाः प्रसादादयः, दोषा अश्लीलादयः। नहि शब्दानुसन्धानमात्रेणानुसन्धेयाः, किन्तर्हि तथाविधार्थप्रतिपाद्याः। एवमर्थस्यापरि गुणस्तत्सदृशाः प्रौढ्यादयः प्रसादादयो वा दोषाश्चाधिकादयोऽलङ्कारश्चोपमादयः शब्दापेक्षस्थितितया तदनुसन्धानान्तरेणागम्या इति शब्दधर्माः सर्वे चोभयधर्माः स्यु। यच्चोक्तमेकप्रयत्नोच्चार्यत्वेऽर्थश्लेषोऽन्यत्र तु शब्दश्लेष इति तत्राप्यतिव्याप्तिमाह—विधाविति। एकप्रयत्नोच्चार्यत्व इति। औकारस्यावैषम्याच्छब्दभेदे भवताऽपि शब्दश्लेषतयाऽङ्गीकृते। एवमादीति तदनुसन्धानयोग्यतया तद्धर्माङ्गीकारे सर्वेषामेव रसादिधर्मता स्यादित्यादि विचार्य विचारविषये यथायोगमुपयोज्यम्।

### दर्पणः

इदानीं प्रभातसन्धेरित्यादौ [प्रभातसन्ध्येनेत्यादौ] सभङ्गस्यार्थालङ्कारप्रकरणे लक्षणस्य [लक्षितस्य] स्वयं चेत्यादौ अभङ्गस्यानुश्लेविषयताया अयुक्तां पुनर्युक्तन्तरैर्द्रढयति शब्देति। वैचित्यं लोकोत्तरविच्छित्तिः। यत्र शब्दोऽर्थो वा। प्रतिभा [नवनोन्मेषाशालिनी] नवनवोमधोल्लेखशालिनी बुद्धिः तस्याः संरस्तः [संरंभः] सरभसप्रतीतिवेशः, तस्य गोचरो विषयः, तत्र शब्देऽर्थेवा भूमिराश्रयः। एवञ्चाशब्द एव वैचित्यम् इत्यस्य शब्दालङ्कारत्वमेव वैचित्यमेवालङ्कारः। यो हि यदाश्रितः स तदलङ्कार इति प्रत्यक्षाङ्गीकृतादपि न्यायादिति भावः।

नन्वेवं विधस्य वैचित्र्यस्यार्थाननुसंधानादेवोपलंभादस्यालङ्कारत्वमित्याशङ्क्य परिहरति। मुखे प्रेक्षित्वं तत्म [तदनु] संधानगम्यवैचित्ययुक्तत्वं अनुप्रासादीनामर्थमुखपेक्षित्वे युक्तिमाह रसादीति। न चैवमलङ्कारेष्वेवातिप्रसङ्गः। अपि तर्हि गुणादारपीत्याह [गुणादयोऽपीत्याह] शब्देति। शब्दस्य गुणः परोक्ताः श्लेषप्रसादादयः।

यच्चोक्तमेकप्रयत्नोच्चार्यत्वेऽनुश्लेषो [अर्थश्लेषो] ऽन्यत्र तु शब्दश्लेष इति तत्राह विद्याविति। शब्दभेदे भवतापि शब्दश्लेषतयाङ्गीकृते। एवमाद्वीति। उक्तप्रकारादन्यदपि सभंगाभंगयोर्द्वयोरपि शब्दश्लेषत्वेलङ्कारान्तराणां च श्लेषबाध्यते युक्तिजातम्।

### साहित्यचूडामणिः

अथ जितकाशितया प्रमेयं च (युग) लप्रयोगेण व्याघातपर्यवसायितयोपसंहरति—शब्देति। अर्थालंकारः शब्दश्लेषश्चेति यत् प्रतीतिपारुष्यं तदन्याय्यमिति भावः। इतोऽपिसामान्यतो युक्तिं वक्तुमुपक्रमते—किञ्चेति। उक्तिगतं वैचित्र्यमलंकारः तस्य भङ्गीभणितिरूपत्वात्, यत् प्रतीतिपरमार्थतया समर्थनीयम्। सैवेति। अत्र च

श्लेषवाच्यभागादपि शब्दांशः कवेः संरम्भविषयः। तत्र प्रमाणं पर्यायपरिवर्तनसहिष्णुत्वम् इति शब्द एवात्रालङ्कारस्थानम्। चोदयति—अर्थेति। नहि कदाचिन्निरर्थकानां शब्दानां श्लेषौचित्यम्। परिहरति—अनुप्रासादीनामिति। तथैवेति। अर्थमुखप्रेक्षणीयत्वस्वभावः। नहि कदाचिन्निरर्थकानां शब्दानाम् अनुप्रासौचित्यमपि वक्तुं शक्यत्वात् तस्मादतिप्रसङ्गो दोषः। ननु कथं सार्थकत्वनैयत्यमनुप्रासगोचराणां शब्दानामिति चेत् तत्राह—रसादीति। वाच्यविशेषेति।

**"शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः।"**
**"दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥"**

इत्यादौ शृङ्गारादिरसप्रकटनप्रगल्भस्य विभावप्रभृतेरभिधेयविशिष्टस्याभिधायकभावेनाभिगुम्फितानां शब्दानामनुप्रासौचित्यं, नान्येषाम्। अलंकारतेति। शाब्दत्वविशिष्टा। उक्तामुपपत्तिमलङ्कार इव गुणदोषयोरपि संचारयति—शब्दगुणेति। शब्दालङ्कारस्यैव पक्षीकृतत्वात्। अर्थगतयोस्तु गुणदोषयोरलङ्कारस्यापि।

अथैकप्रयत्नोच्चार्याणामर्थश्लेषविषयत्वं व्यभिचरतीत्याह—विधौ वक्र इति। शब्दभेदेऽपि विधिर्विधुरिति शब्दयोर्भेदे सत्यपि।

### सम्प्रदायप्रकाशिनी

इत्थं नालङ्कारान्तरबाधकत्वं श्लेषस्य, प्रत्युत बाध्यत्वमेवेति सामर्थ्य यदस्यार्थालङ्कारमध्ये गणनं तत् सुतरामसाम्प्रतमित्याह—शब्दश्लेष इत्यादि। चकारौ वचनलक्षणक्रिययोरेककर्तृकतामाहतुः। भवद्भिरेव शाब्दत्वमभ्युपगम्यापि यदर्थालङ्कारमध्ये लक्ष्यते अयं को नयः। व्याहतेरतिप्रकाशत्वान्न्यायशङ्कैव नास्तीत्यर्थः। स्थूलदृशापि तावत् पश्येत्याह—किञ्च वैचित्र्यमित्यादि। इतिर्हेतौ। यतो वैचित्र्यमलङ्कारः, अतो वैचित्र्यवदेव कवेः संरम्भगोचरः। इह तु शब्दान्वयव्यतिरेकानुविधानाच्छब्द एव वैचित्र्यवानिति शब्दसंघट्टन एव कविः संरभते। अतः श्लेषालङ्कारस्य शब्द एव भूमिर्नार्थः।

चोदयति—अर्थमुखेति। वैचित्र्यशालिनामप्येषां शब्दानामर्थैकपारतन्त्र्यात् प्रधानभूतार्थालङ्कारतया श्लेषः किं नेष्यत इत्याक्षेपनिष्कर्षः। परिहरति—अनुप्रासादीनामित्यादि। रसानुगतप्रकृष्टन्यासरूपत्वादनुप्रासस्याप्यर्थमुखप्रेक्षित्वमित्येवमादिभिः किमपराद्धं, यतः श्लेषसाधर्म्ये सत्यप्यर्थालङ्कारा नोच्यन्त इत्युपालम्भः। नानुप्रासादीनां साक्षादर्थमुखप्रेक्षित्वमनुपयाम इत्यत आह—रसादिव्यञ्जकेत्यादि। एते हि रसभावाद्यभिव्यञ्जनानुगुणमूर्ध्निवर्गान्त्यगेत्यादिनानुशिष्टचरं स्वरूपं यथा साक्षादपेक्षन्ते। तथा रसाद्यभिव्यञ्जकं धीरोदात्ताद्यर्थविशेषं नियमेनापेक्षन्ते। एवमर्थसव्यपेक्षत्वेऽप्यनुप्रासादीनामलङ्कारता शब्दालङ्कारत्वमेवेत्यर्थः। योऽयं शब्दार्थालङ्कारविषयत्वेनातिप्रसङ्गः, स दोषगुणयोरपि न्यायसाम्यात् प्रसजेदित्याह—शब्दगुणेत्यादि। अर्थापेक्षयैवेति। न ह्यर्थापेक्षामन्तरेण गुणानां वा दोषत्वं दोषाणां वा गुणत्वम्। कथमितरथा क्वचिद् गुणा एव दोषतां दोषा एव गुणतामनुप्रपद्यन्ते। प्रतियोगितया सिद्धमप्यविस्मरणाय पुनराह—अर्थगुणेत्यादि। किञ्चाभङ्गपदत्वे सत्यभिन्नप्रयत्नोच्चार्यत्वादर्थश्लेषत्वं सभङ्गपदत्वे तु वैपरीत्यमिति यदेतद्विभागलक्षणं कृतं तदप्यनैकान्तिकमित्याह—विधौ वक्र इत्यादि। वर्णादीति। 'भक्ति प्रह्वे'त्यादौ वचनादिश्लेषे च। तत्र हि शब्दो भिन्नः उच्चारणप्रयत्नस्त्वेकरूप इति सोपहासं निगमयति—एवमादि स्वयमिति।

"ये ह्यलङ्कारसर्वस्वे श्लेषालङ्कारपारगाः।
पूर्वपक्षविदस्ते स्युरिह श्लेषेऽधिकारिणः ॥"

अत इह विशिष्य रन्तव्यं विवेचकैः ।

## मधुमती

उक्तं खण्डयति—शब्दश्लेष इति। यस्य वैचित्र्यं कविप्रतिभासंरम्भगोचरः स एवालङ्कारस्थानम्। 'स्वयं च पल्लवाताम्रेत्यादौ शब्द वैचित्र्यमेव तादृक्। तस्यैव कविप्रतिभया मुख्यतया उट्टङ्कनात् इति शब्दालङ्कारत्वमेवोचितम्। विसदृशशब्दद्वयबन्धे वैचित्र्याभावात् इति ।

अभिन्नप्रयत्नोच्चार्यत्वस्य अर्थश्लेषताप्रयोजकत्वे 'अलङ्कारः शङ्का—विधौ वक्रे मूर्ध्नि' इत्यादावपि त्वदभ्युपगतशब्दश्लेषे अर्थश्लेषत्वं स्यात् इत्याह—विधावित्यादि ।

## विस्तारिका

ननु भवतु शब्दश्लेषः, अलङ्कारत्वं पुनरर्थयोरेव । तदप्रतीतौ शब्दमात्राच्चमत्कारानुदयादित्याह—शब्दश्लेष इत्यादि । कोऽयम् इति । अर्थालङ्कारत्वे शब्दश्लेषस्याकिञ्चित्करत्वम्, अर्थश्लेषस्यैव वक्तुमुचितत्वात् । तस्य च निराकृतत्वादिति । शब्दवैचित्र्येण शब्दश्लेषत्ववचनम्, अलङ्कारत्वं पुनरर्थस्यैवेत्यत आह-किञ्चेति । वैचित्र्यं श्लेषणरूपं कविप्रतिभासंरम्भः, स्फूर्तिस्तद्गोचरः, तेनोत्पादितः । स च शब्दश्लेषणरूपोऽलङ्कारः शोभा ।

अन्यमुखनिरीक्षकत्वेनास्य नालङ्कारतेत्याह—अर्थेत्यादि । शब्दगुणदोषेत्यादि । शाब्दस्यौजः प्रभृतीनामर्थस्यौजस्वित्वेनैव गुणता । एवं श्रुतिकटुत्वादीनां दोषत्वम्, न तु प्रमाणान्तरादुपस्थितानां माधुर्यादीनां गुणानामपि सुकुमारशब्दापेक्षित्वमित्यर्थगुणदोषाणां शब्दमुखनिरीक्षकत्वम् । तेऽपीति । अर्थश्च शब्दश्चेति समासः ।

अभिन्नप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वमित्यत्र दूषणान्तरमाह—'विधौ वक्रे' इत्यादि । शब्दभेदे विधुविधिरूपत्वे । स्वयं विचार्य तत्त्वमस्मत्पक्षत्वेन विद्वेषः कार्य इत्यर्थः ।

## सारबोधिनी

ननु भवतु शब्दश्लेषः अलङ्कारत्वं पुनरर्थयोरेव, तदप्रतीतौ शब्दमात्राच्चमत्कारानुदयादित्यत आह शब्दश्लेष इति । कोऽयमिति । अर्थालङ्कारत्वे शब्दस्याकिंचित्करत्वम् । अर्थश्लेषस्यैव वक्तुमिचित्वात् तस्य च निराकृतत्वादिति शब्दवैचित्र्येण शब्दश्लेषत्ववचनम् । अलङ्कारत्वं पुनरर्थस्यैवेत्यतो दोषान्तरमाह किं चेति । वैचित्र्यं श्लेषणरूपं कविप्रतिभासरंभः स्फूर्तिः तद्गोचरस्तेनेत्यादितः । स च शब्दश्लेषरूपः अलङ्कारः । शब्दगुणदोषेति । शब्दस्योजः प्रभृतीनामर्थस्योजस्वित्वेन गुणता एवं श्रुति कटुत्वादिर्दोषस्याप्यर्थसुकुमारत्वादेव दोषत्वमित्येषामर्थमुखप्रेक्षित्वम् । अर्थगुणेति । शब्दार्थयोः काव्यत्वादिति भावः । यद्वा अपुष्टार्थत्वादीनां शब्दादुपस्थितानामर्थानां मुख्यानुपकारित्वादिना दोषत्वम् न तु प्रमाणान्तरादुपस्थितानां माधुर्यादीनां गुणानामपि सुकुमारशब्दपेक्षित्वमित्यर्थगुणदोषामपि शब्दमुख निरीक्षकत्वम् । तेऽपीति । अर्थश्च शब्दश्चेति समासः ।

अभिन्नप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वमित्यत्र दूषणान्तरमाह विधौ वक्रे इत्यादि। शब्दभेद इति। विधिविधुरूपत्वा-दिति शेषः। स्वयं विचार्यम्, न त्वस्मत्वपक्षे द्वेषः कार्यः इति।

## काव्यप्रदीपः

किं च 'प्रभातसंध्येव' इत्यादौ शब्दश्लेषस्यार्थालंकारत्वमिति वचनं भवतां विरुद्धम्। शब्दानाश्रितत्वे तेन व्यपदेशस्य न्याट्यत्वात्। अपि च यस्य वैचित्र्यं कविप्रतिभासंरम्भगोचरः स एवालंकारस्थानम्। 'स्वयं च पल्लवाताम्र'—इत्यादौ शब्दवैचित्र्यमेव तादृक्। तस्यैव कविप्रतिभयोट्टङ्कनादिति शब्दालंकारत्वमेवोचितम्। ननु श्लेषोऽर्थमुखप्रेक्षकः। नह्यर्थप्रतीतिं विना श्लेषस्य चमत्कारित्वं संभवो वेत्यार्थालंकारत्वं श्लेषस्येति चेत्, न। एवं ह्यनुप्रासस्याप्यर्थालंकारत्वं स्यात्। रसादिव्यञ्जकस्वरूपवाच्यसव्यपेक्षत्वेन ह्यनुप्रासस्यालंकारता। अन्यथा वृत्तिविरोधादिदोषस्य वक्ष्यमाणत्वात्। किंचैवं शाब्दयोर्गुणदोषयोरप्यार्थत्वं स्यात्। तयोरप्यर्थापेक्षयैव तथाभा-वात्। शृङ्गारादौ हि माधुर्यादिर्गुणः कष्टत्वादिर्दोषो, वा। यच्चोक्तम् 'एकप्रयत्नोच्चार्थशब्दवत्त्वेऽर्थश्लेषत्वम्' इति, तदप्ययुक्तम्। 'विधौ वक्रे—' इत्यादौ वर्णादिशब्दभेदेऽप्यर्थश्लेषत्वापत्तेरित्यादि स्वयमपि विचार्यम्।

## आदर्शः

ननूपाधिभेदादुभयमुच्यत इत्यत आह—किञ्चेति। 'प्रतिभासंरम्भ'-स्तत्पर्याप्तिः। 'अलङ्कारभूमिर'लङ्का-रत्वज्ञानविषयः। अतोऽत्र श्लेषघटिते सर्वत्रार्थालङ्कार एव विचित्रतेति स एवालङ्कार इति भावः। नन्वनुप्रासस्या-र्थापेक्षैव नास्तीत्यत्राह—रसादीति। अर्थो रसादिव्यञ्जकस्तद्बोधकञ्चानुप्रासविशिष्टं पदमित्यर्थः। एवञ्चार्थापेक्षाशब्दापेक्षाविचार्यत्वे गुणदोषादावप्येवमव्यवस्था स्यादित्याह—शब्दगुणेति। एकप्रयत्नोच्चा-र्यत्वेऽर्थश्लेषत्वं यदुक्तं वर्णश्लेषे तदव्याप्ति(तदतिव्याप्ति ?) माह—विधाविति।

## सुधासागरः

अत्र विरोधाभास एवालङ्कारः। श्लेषस्तु तदङ्गमात्रम्, अप्ररोहात्। तस्मादलङ्कारान्तरप्रतिभोत्पत्तिहेतुः श्लेष इति रिक्तं वचः। किञ्च 'प्रभातसन्ध्येव' इत्यादौ शब्दश्लेषस्यार्थालङ्कारत्वमिति वचनं भवतां विरुद्धम्, शब्दानाश्रितत्वे तेन व्यपदेशस्य न्याय्यत्वात्।

अपि च यस्य वैचित्र्यं कविप्रतिभासंरम्भगोचरः स एवलङ्कारस्थानम्। 'स्वयं च पल्लवाताम्र' इत्यादौ शब्दवैचित्र्यमेव तादृक्, तस्यैव कविप्रतिभया मुख्यतयोट्टङ्कनादिति शब्दालङ्कारत्वमेवोचितमिति। अर्थमुखे-त्यादि। अयमाशयः—ननु श्लेषोऽर्थमुखप्रेक्षकः, न ह्यर्थद्वयप्रतीतिं विना श्लेषस्य चमत्कारित्वं सम्भवो वा इत्यर्थालङ्कारत्वं श्लेषस्येति चेत्, न। एवं तह्यनुप्रासस्याप्यर्थालङ्कारत्वं स्यात्। रसादिव्यञ्जकस्वरूपवाच्यसव्यपे-क्षत्वेन ह्यनुप्रासस्यालङ्कारता, अन्यथा वृत्तिविरोधादिदोषस्य वक्ष्यमाणत्वात्। किञ्चैवं शाब्दयोर्गुणदोषयोरप्यार्थत्वं स्यात्, तयोरप्यर्थापेक्षयैव तथाभावात्। शृङ्गारादौ माधुर्यादिर्गुणः कष्टत्वादिर्दोषो वा। यच्चोक्तमेकप्रयत्नोच्चार्य-शब्दवत्त्वेश्लेषत्वमिति, तदप्ययुक्तम्, 'विधौ वक्र' इत्यादौ वर्णादिशब्दभेदेऽप्यर्थश्लेषत्वापत्तेरित्यादि स्वयमपि विचार्यमिति।

(सू० १२१) तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥ ८५ ॥

सन्निवेशविशेषण यत्र न्यस्ता वर्णाः खड्गमुरजपद्माद्याकारमुल्लासयन्ति तच्चित्रं काव्यम्। कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते। उदाहरणम्—

मारारिशक्ररामेभमुखैरासाररंहसा।
साराब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥ ३८४ ॥

माता नतानां संघट्टः श्रियां बाधितसम्भ्रमा।
मान्याऽथ सीमा रामाणां शं मे दिश्यादुमादिमा ॥ ३८५ ॥

(खड्गबन्धः)

---

सङ्केतः

विचित्रमिति। चित्रसादृश्यात् आश्चर्यहेतुत्वाद्वा विचित्रम्।

मारारीति। मारारिः शम्भुः। रामः हली। इभमुखः विनायकः। आसारसदृशेन वेगेन। आदिजा सर्वेषामाद्या। 'आदिमे'ति पाठान्तरम्।

एतेन श्लोकद्वयेन खड्गबन्धः। स्थापना यथा—द्राढिकान्तरे साधारणो माशब्दः। तस्य दक्षिणतः अधः-क्रमेण वर्णाश्चतुर्दश। शिखायां साधारणः साशब्दः। ऊर्ध्वक्रमेण वामतः चतुर्दशैव (तावन्त एव) यावन्माशब्दः साधारणः। एतत् फलम्। तस्यैव माशब्दस्य दक्षिणतः निस्सरणक्रमेण, वामतश्च प्रवेशक्रमेण वर्णाः सप्त सप्त। एषा द्राढिका। ततः माशब्दादूर्ध्वक्रमेण गण्डिकायां वर्णत्रयी। उपरि माशब्दः साधारणः। तस्य दक्षिणतो वामतश्च तथैव चत्वारश्चत्वारो वर्णाः। एतच्च कुलकम्। ततः तस्य माशब्दस्य उपरि वर्णद्वयम्। एतत् मस्तकम्। सा-मा-मा-शब्दाः द्विपञ्चकृत्वः द्विरावृत्ताः।

सङ्केतः (रुय्यकः)

माराररिर्हरः, रामो हलधरः, इभमुखो गणपतिः, एभिरासारसदृशेन, रंहसा वेगेन प्रक्रान्त आरब्धः स्तवो यस्याः, तेषामार्त्तेर्हरणे शक्ता। प्रणतानां माता श्रियां संघट्टः, बाधितः यथा सम्भ्रमो यया मान्या। अथ समुच्चये, रामाणां वरवर्णिनीनां सीमा मर्यादा शं कल्याणं समादिशतु उमा आदिमा सर्वेषामाद्या। अनेन श्लोकद्वयेन खड्गबन्धः प्रस्तारो यथा...

## बालचित्तानुरञ्जनी

अथ चित्रालंकारं लक्षयति तच्चित्रमिति। यस्मिन् पद्ये वर्णानां संनिवेशविशेषेण खड्गाद्याकृतिहेतुता तत् चित्रमिति योजना। वर्णानां खड्गाद्याकृतिहेतुता न घटते इत्याशङ्क्योक्तं संनिवेशविशेषेणेति। संनिवेशितलिप्यक्षररचनाविशेषेणेत्यर्थः। पद्यं व्याकरोति यत्रेति। उल्लासयन्ति सम्पादयन्ति। अस्य कष्टकाव्यत्वादिमात्रमेवोदाह्रियत इत्याह कष्टेति। खड्गबन्धमुदाहरति मारेति। मारस्य कामस्यारिः हरः, शक्रः इन्द्रः, रामो बलभद्रः, इभमुखो विनायकः, एतैः आसारस्य रंहसा वेगेन। सारमुत्कृष्टं यथा स्यात्तथा आरब्धः स्तवः स्तोत्रं यस्याः सा। नित्यं तेषामार्तिः पीडा तन्निराकरणसमर्था। नतानां जनानां माता। संघट्टो लोकोपरोधः, तेन श्रीः संपत् येषां तेषां महिषाद्यसुराणां बाधितः संरंभो यया सा। मान्या, रामाणां ससीमा अवधिसहिता, आदिमा पुरातना, उमा गौरी मे शं सुखं दिश्यात् दद्यात्।

## काव्यादर्शः

तच्चित्रमिति। यद्यपि लिप्यक्षराणां खड्गादिसंनिविष्टत्वं, तथापि श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन तेषां लोके प्रतीतेर्वाचकशब्दालंकारत्वम्।

'मारारिः शिवः। रामो मुशली। इभमुखो विनायकः। आसारतुल्येन वेगेन। सार उत्कृष्टः। तेषां माराप्रिभृतीनां आर्तिः पीडा। संघट्टः समूहः श्रियाम्। संभ्रमो मोहः। मान्या पूज्या। रामाणां वरवनितानाम्। सीमा पर्यन्तभूः। ततोऽन्या रूपवती न कापीत्यर्थः आदिजा सर्वेषामादिमा।'

एतेन श्लोकद्वयेन खड्गः।

तथा हि द्राढिकान्तरे साधारणो मा-शब्दः। तस्य दक्षिणतोऽधः क्रमेण वर्णाश्चतुर्दश 'न्यस्येत्। ततः शिखायां साधारणः सा-शब्दः। ऊर्ध्वक्रमेण वामतश्चतुर्दशैव यावन् मा-शब्दः साधारणः। एतत् फलम्। तस्यैव मा-शब्दस्य दक्षिणपार्श्वे निःसरणक्रमेण वामतश्च प्रवेशक्रमेण वर्णाः सप्त सप्त। एषा द्राढिका। ततो मा-शब्दाद् ऊर्ध्वक्रमेण गण्डिकायां कार्या वर्णत्रयी। उपरि मा-शब्दः साधारणः। तस्य दक्षिणतो वामतश्च तथैव चत्वारो वर्णाः। एतच्च कुलकम्। ततस्तस्य मा शब्दस्य उपरि वर्णद्वयम्। एतद् मस्तकम्॥ सा-मा म शब्दा द्विपञ्चकृत्वो द्विरावृत्ताः॥

## विवेकः

तच्चित्रमिति यद्यपि लिप्यक्षराणां खड्गादिसन्निवेशित्वे चित्रत्वं तथापि श्रोत्राकाशसमवेतवर्णात्मकशब्दभेदेन तेषां लोकप्रतीतेः शब्दाश्रयत्वम्। एतञ्च बहुभिर्भेदैर्भिद्यमानमनन्तवात् परिसंख्यातुमशक्यं यदाहुः—(रुद्रट का ५/२-५) तच्चक्रखड्गमुषलैर्बाणासनचापशूलहलैः। चतुरङ्गपीठविरचितरथतुरगगजादिपदपाठैः॥ अनुलोमप्रतिलोमैरर्धभ्रममुरजसर्वतोभद्रैः। इत्यादिभिरन्यैरपि वस्तुविशेषाकृतिप्रभवैः॥ भेदैर्विभिद्यमानं संख्यातुमनन्तस्मिन्नैतदलम्। यन्नाम नाम यत् स्यात्तदाकृतिर्लक्षणं मतं तस्य। तल्लक्ष्यमेव दृष्ट्वाऽवधार्यमखिलं ततोऽन्यदपि॥ इति। अतः शिष्यव्युत्पत्तये दिङ्मात्रमुदाहरति। "मारारिः परमेश्वरः शक्र इन्द्रः रामो हलायुधः,इभमुखो गणपतिः, एभिरासारसदृशेन रंहसा वेगेन सारमुत्कृष्टमारब्धः स्तवो यस्याः, तदार्तेस्तेषामार्तेर्हरणे क्षमा शक्ता

नतानां प्रणतानां माता श्रियां संघट्टः, बाधितः सम्भ्रमो यया। मान्या अथ समुच्चये रामाणां वरवर्णिनीनां सीमा पर्यन्तभूः शं कल्याणं मे दिश्यात् समादिशतु उमा गौरी आदिमा सर्वेषामग्र्या।

## दीपिका

वर्णानामिति। तथाविधवर्णविन्यासवशेनैव तादृशो लिपिविन्यासो निर्वहतीति वर्णान्वयव्यतिरेकार्थविधायितया शब्दाश्रितमिति भावः। अलङ्कारताबीजं चात्र कविनैपुण्याविष्कारवशेन विस्मयावेशः प्राचीनदिशा समाश्रयणीयः। सम्यक्कविविवक्षितनिर्वाहौपयिकतया निवेशो विरचनं सन्निवेशः। तस्य विशेषौ यथास्वं प्रतिनियतः। तेन हेतुना न्यस्ता वर्णा धर्मिणो यत्रालङ्कारे खड्गमुरजपद्मादीनामाकारसदृशसंस्थानं तत्तद्विशेषव्यपदेशविषयमुल्लासयन्ति निर्वाहयन्ति तच्चित्रनामालङ्करणम्। कष्टं क्लेशनिर्वाह्यं नीरसतया वैमनस्यदं वा काव्यं कविनिर्वाह्यम्।

यद्वा कष्टेन प्राचीनगौरवयन्त्रणादुःखेन काव्यनाम्ना व्यपदेश्यं कष्टकाव्यम्। दिङ्मात्रमेतद्विषये व्युत्पत्त्याधानं यावता निर्वहति तावतेत्यर्थः।

मारस्य कामस्यारिः परमेश्वरः शक्र इन्द्रः। रामो हलायुधः। इभमुखो गणेशः। एभिरासारसदृशरंहसा। तेषा स्तुवतामार्तिः पीडा।

नतानां भक्तानां माता श्रियां सम्पदां संघट्टः सम्मेलनस्थानं बाधितसम्भ्रमा निरुद्वेगा रामाणां नारीणां सीमा परमोत्कर्षः शं कल्याणमादिमा आदिशक्तिः। अद्रिजेति क्वचित् पाठः।

अनेन श्लोकद्वयेन खड्गः प्रस्तीर्यते। ताजि (कर्णि)कान्तरे 'मा' शब्दं विन्यस्य तिर्यगधःक्रमेण 'रा' शब्दादि हकारान्तं वर्णचतुर्दशकं न्यसेदित्येका धारा। ततः शिखायां सेति श्लिष्टं ततस्तिर्यगूर्ध्वक्रमेण 'रा' शब्दादि क्षान्तं वर्णचतुर्दशकं न्यस्यापरधारां कुर्यादित्येषा पट्टिका। माशब्दस्तु पूर्व 'मा' शब्दप्रविष्टः।

एवमपरमपि माशब्दं तत्र प्रविष्टं कल्पयित्वा तस्य दक्षिमापार्श्वे तिर्यक्क्रमेण 'ट्ट' इत्यन्तं वर्णसप्तकं न्यस्य वामपार्श्वे तिर्यग्विलोमेन 'श्रि' करादि 'भ्र' कारान्तं वर्णसप्तकं लिखेत्। माशब्दस्तु पूर्ववदित्येषा द्राढिका। ततोऽपरं 'मा' कारं तत्र कल्पयित्वा तदुपरि 'न्या' शब्दादि 'सी' शब्दान्तं गण्डिकायां लिखेत्। ततः त्सरुमध्ये 'मा' शब्दं बिन्यस्य तन्मध्ये 'रा' कारादि 'श' मित्यन्तं वर्णचतुष्टयं न्यस्य वामतो विलोमेन 'मे दिश्यात्' इति लिखेत्। माशब्दकः पूर्व एवेति शेषः। अन्तिमवर्णाभ्याञ्च फलकमिति खड्गनिष्पत्तिः।

## दर्पणः

संप्रति रसानुपकारकमपि करितिस्तेषु [कविभिस्तेषु] प्रसन्तेषु [प्रसक्तेषु] शक्तिप्रदर्शनार्थमुपनिबद्धत्वात् प्राचीनैरेवालङ्कारमध्ये लक्षितं चित्रं निरूपयति तच्चित्रमिति अस्य चालङ्कारतायां तथाविधकविनैपुण्याविष्कारवशेन विस्मयावेशां यथाकथंचिद्बीजं, सन्निवेशः सम्यगभिमतनिर्वाहौपयिकतया वचनं न्यस्ता इत्यतः पूर्वं भूम्यादाविति शेषः[?]। आकारं सदृशं संस्थानं, उल्लासयन्ति प्रकाशयन्ति, कष्टं क्लेशनिर्वाह्यम्। नीरसतया सहृदयानामनवर्ज्जकम्। मारक्ष्य कामस्यारिः परमेश्वरः, शक्रः इन्द्रः, रामो हलायुधादिः इभमुखो गणेशः एभिः सा सारसदृशबंहसासारं यथा स्यात्तया नितमारब्धः स्तवो यस्यास्तेषां स्तुरता [?] मार्ति पीडा।

नतानां भवतानां माता श्रिया संपादाम्, संघटुः [संघट्टः] सम्मेलनस्थानं, बाधिता संभमा निरुद्धोद्वेगा, मान्या पूज्या अबलानां नारीणां [?] सीमा परमोत्कर्षः, शं कल्याण, [आदिमा] आदिजा आदिशक्तिः, अत्रिजेति क्वचिपाठः ।

अनेन श्लोकद्वयेन खङ्गः प्रस्तार्थते ।

डाडिकान्तरे [?] माशब्दं विन्यस्य तिर्भगधः क्रमेण वाशब्दादि [राशब्दादि हकारान्त] वर्णचतुर्दशकम् । न्यसेदित्येकाधारततः । स्येति [सेति] शिखायां श्लिष्टः । ततत्स्तिर्यग्ध्वं क्रमेण वाशब्दादि [राशब्दादि] यान्तं [मान्तं] वर्णचतुर्दशकम् विन्यस्यापरं पूर्यादित्येषा पट्टिका । माशब्दस्तु पूर्वं माशब्दप्रविष्टः. एवंमपरमपि माशब्द तत्रैव प्रविष्टं कल्पयित्वा तस्य तस्य दक्षिणापाश्र्वे तिर्यक्क्रमेणेत्यादि ह इत्यन्तं वर्णसप्तकं न्यस्य वामपार्श्वे तिर्यग्विलोमेन श्रीकरादि एकारान्तं वर्णसप्तकं न्यस्येत् । माशब्दस्तु पूर्ववदित्येका डाडिका ततोऽपरं माकारान्तं कल्पयित्वा त्खरुमध्ये माशब्दं विन्यस्य तद्दक्षिणे शकारादि गमित्यन्तं [?] वर्णचतुष्टयं वामत्रो मे दिश्यादिति लिखेत् । माशब्दः पूर्वक एव इति त्सरुः । अन्तिमवर्णाभ्यां गं च न कमिति खड्गनिष्पत्तिः ।

### साहित्यचूडामणिः

अथ चित्रालङ्कारं लक्षयति—तच्चित्रमिति । वर्णशब्देन तदनुस्मारिकाणां लिपीनामाक्षेपः ।

**लिपिरेखानुसन्धेया खड्गाद्याकृतिकल्पना ।**
**शब्दात्मकेषु वर्णेषु गौण्या वृत्त्या प्रवर्तते ॥**

इत्युक्तत्वात् ।

सन्निवेशविशेषेण नियमवत्तया शब्दान्तरपरिवृत्त्यसहिष्णुना । खड्गमुरजेति ।

"यन्नाम नाम यत् स्यात् तदाकृतिर्लक्षणं तस्य ।'

इति रुद्रटोक्तयुक्त्या लोकप्रसिद्धं खड्गाद्याकारम् उल्लासयन्ति अनुस्मारयन्ति ।

मारारीति । माराररीश्वरः, रामो जामदग्न्यः, इभमुखो विनायकः, तैः आसारस्य वेगवतो वर्षस्य रहंसा वेगेन । सारमुत्कृष्टं कृत्वा आरब्धः स्तवो यस्याः । नतानां जनानां माता । सङ्घट्टो लोकोपरोधः तेन श्रीः सम्पद् येषां तेषां महिषादीनाम् । बाधितसंभ्रमा शमितव्यामोहा । अथेति समुच्चये । सीमा रामाणामङ्गनानामवधिभूता । आदिजा पुरातनी । उमा गौरी मे शं सुखं दिश्यात् । अयं खड्गबन्धः ।

### सम्प्रदायप्रकाशिनी

अथ शब्दविच्छित्तिप्रस्तावाच्चित्रं—तच्चित्रं यत्रेति ।

ये हि श्रोत्राकाशसमवायिनस्ताल्वोष्ठपुटव्यापारेणाभिव्यज्यन्ते, न तेषां खड्गाद्याकृतिहेतुत्वमित्यत आह—सन्निवेशविशेषेणेति । रेखापरिकल्पिततत्तत्खड्गादिसंस्थानेनेत्यर्थः । विशेषविवेचनसङ्कोचहेतुमाह—कष्टं काव्यमित्यादि ।

मारारीति। मारारिः शिवः, शक्र इन्द्रः, रामो बलभद्रादिः, इभमुखो विनायकः, एभिः। आसाररंहसा साराब्धस्तवा धारासंपातवेगेनोत्कृष्टं प्रक्रान्तस्तुतिः। नित्यं तेषामार्तेर्हरणक्षमा। नतानां माता। श्रियां सङ्कटः सम्मिश्रीभावस्थानम्। बाधितसम्भ्रमा शमितव्यामोहा। मान्या माननीया। अथ सीमा रामाणां स्त्रीसृष्टेरवधिः। शं सुखं मे दिश्यात्। उमा गौरी। आदिजा विरिञ्चिसृष्टेः प्राक् सिद्धा। खड्गबन्धोऽयम्। खड्गस्य हि फलकं मूलं, मुष्टिः ऊर्ध्वं, फलकसन्धानपालिका द्राढिका, मुष्टिकाण्डः खण्डिका, उपरिचक्रं गञ्जनकं, शङ्कुः शिरः। तत्र प्रस्तारः— द्राढिकामध्ये माकारः साधारणः। वर्णाश्चतुर्दश सव्यधारायामधोधः। कोणे साकारः साधारणः। धारान्तरे चतुर्दशकमूर्ध्वोर्ध्वम्। माकारः श्लोकसमाप्तिः। द्राढिकाया मध्याद् दक्षिणाग्रावधि सप्तकम्। सव्याग्रतो मध्यमावधि च सप्तकम्। तत् श्लोकार्धम्। खण्डिकायां त्रयम्। गञ्जनकमध्ये माकारः साधारणः। ततो दक्षिणाग्रावधि चतुष्कम्। सव्याग्रान्मध्यमावधि चतुष्कम्। शिरसि वर्णद्वयमिति युगलकसमाप्तिः।

### मधुमती

तच्चित्रमिति। यत्र पद्ये घटकानां वर्णानां विन्यासविशेषेण खड्गाद्याकारता तत् चित्रम् इत्यर्थः।

मारारीति। मारारिः महेशः शक्रः इन्द्रः रामः जामदग्न्यः इभमुखः गणेशः, तैः आसाररंहसा धारासम्पातसदृशवेगेन सारं उत्कृष्टं यथा भवति तथा आरब्धः स्तवः यस्याः सा तथा। प्रतीतमितरत्।

### विस्तारिका

तच्चित्रमिति। ननु क्रमिकवर्णानां कथं खड्गादिकारतेत्यत आह—सन्निवेशविशेषेणेति। लिखिताक्षराणां तथाभावात्। तेन सहाभेदोपचारेण खड्गादिबन्धानां वर्णाश्रयता। खड्गादीत्यादिपदात् पद्ममुरजादिपरिग्रहः। तदुक्तमग्निपुराणे—

**अनेकधावृत्तवर्णविन्यासैः शिल्पकल्पना।**
**तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते॥ इति।**

अस्यानन्तप्रकारत्वम्। तदप्युक्तम्—

**बाणबाणासनव्योमखड्गमुद्गरशक्तयः।**
**मृदङ्गपद्मशृङ्गाटदम्भोलिमुसलाङ्कुशाः॥**
**पदं रथस्य नागस्य पुष्करिण्यसिपत्रिकाः।**
**एते बन्धास्तथा चान्येऽप्येवं ज्ञेयाः स्वयं बुधैः। इति।**

खड्गाद्याकारो लेखः खड्गादिचित्रमिति रसभावेनानेकात्मकतया तथात्वम्, कविशक्तिप्रकटनेनैव चमत्काराभासोत्पत्तेः। यत्रालङ्कारे उल्लासयन्ति। कष्टं क्लेशनिर्वाह्यम्।

मारेत्यादि। उमा शं मे दिश्यादित्यन्वयः। मारारिर्महेशः। शक्र इन्द्रः। रामस्त्रयम्। इभमुखो गणेशः। एतैः। आसारो धारासम्पातः तद्वद्वेगेनाविच्छेदेन। सारं यथा स्यात्तथा यद्वा सार उत्कृष्ट आरब्धः स्तवः। नतानां माता जननी वत्सला। श्रियां सम्पदां सङ्कटः सर्वासां सहवासात् संकीर्णस्थानम्। मान्या पूज्या। रामाणां रमणीयानां

सीमा। ततः परं रमणीयता नान्यत्रेति उमात्वे हेतुः। अद्रिजेति, आदिमेति सम्यक्पाठः, जनन्या उमेति निषेधेन तथा प्रसिद्धेः।

अनेन श्लोकद्वयेन खड्गः प्रस्तीर्यते। पट्टिकान्तरे माशब्दं प्रयुज्य तिर्यगधःक्रमेण राशब्दादि हकारान्तं चतुर्दश वर्णान् लिखेदित्येका धारा। ततः शिखायां सा इति श्लिष्टम्, तेन तिर्यगूर्ध्वक्रमेण राशब्दादि क्षकारान्तं विन्यस्यापरां धारां कुर्यादित्यन्यपट्टिका। माशब्दस्तु पूर्वमाशब्दे प्रविष्टः। एवमपरमपि माशब्दं तत्र प्रविष्टं कल्पयित्वा तस्य दक्षिणापार्श्वे ता इत्यादि ट्ट इत्यन्तं विन्यस्य वामपार्श्वे तिर्यग्विलोमेन श्रिकारादि भ्रकारान्तं वर्णसप्तकं लिखेत्। माशब्दस्तु पूर्ववदित्येका ताडिका, ततोऽपरं माकारं तत्र कल्पयित्वा तदुपरि न्याशब्दादि सीशब्दान्तं गण्डिकाकारो लिखेत्। तत्स्तसरुमध्ये माशब्दं विन्यस्य तन्मध्ये राकारादि शमित्यन्तवर्णचतुष्टयं विन्यस्य वामतो विलोमेन मे दिश्याद् इति लिखत्। माशब्दः पूर्वत्रैवेति त्सरुः पूर्ववर्णद्वयाभ्यां तु गञ्जनमिति खड्गनिष्पत्तिः।

## सारबोधिनी

तच्चित्रमिति। ननु वर्णना कथं खड्गाद्यकारतेत्याह सन्निवेशविशेषेणेति। लिखिताक्षराणां तथाभावात्तेन सहाभेदोपचारेण खड्गादिबन्धानां वर्णाश्रयता। यत्रालंकारे। कष्टेति। कष्टेन निर्वाह्यं काव्यं कष्टकाव्यम्। मारारीति। उमा पार्वती, मे मम शं शुभं दिश्यादित्यन्वयः। मारारिः शिवः, शक्रः इन्द्रः, इभमुखो गणेशः, एतैः सारं यथा स्यात्तथा आरब्धस्तवा, आसारो धारासंपातः, तद्वद्वेगेनाविच्छेदप्रसारेण श्रियां संपदां संघट्टः सर्वासां सहवासात् संकीर्णस्थानम्। आदिमेति। आदिरित्यर्थः। अनेन पद्यद्वयेन खड्गप्रस्तारः। यथा पट्टिकांतर्माशब्दं विन्यस्य तिर्यगूर्ध्वं क्रमेण राशब्दादिक्षकारान्तं चतुर्दशवर्णकं विलिखेदित्येका। धारातः शिखायां सेति श्लिष्टं तत्स्तिर्यगधः क्रमेण राशब्दादिकारातं चतुर्दशवर्णकं विलिख्यापरां धारां कुर्यादिति पट्टिका। माशब्दस्तु माशब्दे प्रविष्टः। एवमरमपि माशब्दं तत्र प्रविष्टं कल्पयित्वा तस्य दक्षिणपार्श्वेता इत्यारभ्य ट्ट इत्यन्तं वर्णसप्तकं विलिख्य वामपार्श्वे तिर्यग्विलोमेन श्रिकारादिभ्रकारान्तं वर्णसप्तकं लिखेत्। माशब्दस्तु पूर्ववदेवेत्येका नाडिका, ततोऽपरं तत्र माकारं कल्पयित्वा तदुपरि न्याइत्यादि सीकारान्तं गंडिकायां लिखेत्। ततस्तरुमध्ये माशब्दं लिखित्वा ततस्तत्पार्श्वेनाकारादिशमित्यन्तं वर्णचतुष्टयं विलिख्य दक्षिणेनानुलोमेन वामतो विलोमेन मे दिश्यात् इति लिखेत्। मा शब्दस्तु पूर्वदेवेति त्सरुः। दिशब्देन गंजनं माशब्दस्तु तिष्ठ इति [?] खड्गनिष्पत्तिः।

## काव्यप्रदीपः

चित्रं लक्षयति—

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता॥ ८॥**

यद्यपि वर्णानामाकाशगुणानां खड्गाद्याकृतिहेतुत्वमसंभवि तथापि विन्यस्तवर्णानुमापिका लिपयः संनिवेशविशेषवत्त्वेन यत्र खड्गाद्याकारमुल्लासयन्ति तच्चित्रमिति विवक्षितम्। तर्हि लिपिनिष्ठत्वाच्छब्दालंकारत्वं न स्यादिति चेत्, न। तादृशवर्णविन्यासं विना तादृशलिपिविन्यासाभावात्। शब्दान्वयव्यतिरेकयोरभग्नत्वात्। लिपेर्वर्णाभेदस्य लोकप्रसिद्धिमाश्रित्य शब्दालंकारत्वमिति कश्चित्। तथापि शृङ्गारादिरसानुपकारकस्य कथमलं-

कारकत्वमिति चेत्, कविनैपुण्यवशेन विस्मयोपकारत्वादिति गृहाण । श्लेषनिर्वाह्यं चैतत् । न च तादृशं रसोपकारकमिति दिङ्मात्रमुदाह्रियते ।

तत्र खड्गबन्धो यथा—

'मारारिशक्ररामेभमुखैरासाररंहसा ।
साराब्धस्तवा नित्यं तदार्तिहरणक्षमा ।।

माता नतानां संघट्टः श्रियां बाधितसंभ्रमा ।
मान्याथ सीमा रामाणां शं मे दिश्यादुमाद्रिजा ।।'

न्यासो यथा—ताडिकायां प्रथमं माशब्दं विन्यस्य तदूर्ध्वमारोहक्रमेणैकस्यां धारायां चतुर्दशवर्णान्, अग्रे श्लिष्टं सेति वर्णम्, ततोऽपरधारायामवरोहक्रमेण चतुर्दश, मेति प्रथमेन माशब्देन श्लिष्टम्, तद्दक्षिणपार्श्वे निष्क्रमणक्रमेण सप्त, वामपार्श्वे प्रवेशक्रमेण सप्त, ततो माशब्दौ श्लिष्टौ, एषा अद्रिका । माशब्दादधः क्रमेण वर्णत्रयम् । एषा गण्डिका । तदधो मेति । तद्दक्षिणपार्श्वे निष्क्रमणक्रमेण चतुष्टयम्, वामपार्श्वे प्रवेशक्रमेण चतुष्टयम्, ततो माशब्दः श्लिष्टः । एतद्गञ्जनकम् । ततो माकारादधः शेषवर्णद्वयं न्यसेत् । एतन्मस्तकमिति ।

### काव्यप्रकाशखण्डनम्

अत्र चित्रभोदानाह—

**तच्चित्रं यत्र वर्णानां पद्मा (खड्गा) द्याकारहेतुता ।। (का० ८५, उ०)**

ननु वर्णानां कथं खड्गाद्याकारतेति चेत्, न । संनिवेशविशेषेण यत्र न्यस्ता वर्णाः पद्मखड्गाद्याकारतामुल्लासयन्ति, लिखिताक्षराणां तथात्वात्, तेन सहाभेदोपचरेण । खड्गादिबन्धानां वर्णाश्रयता यत्रालङ्कारे तत् । कष्टं काव्यमेतत् ।

### आदर्शः

अलङ्कारसामान्यस्यैव चित्रत्वेऽपि चित्रसंज्ञकमलङ्कारमनेकविधमाह—तच्चित्रमिति । खड्गाद्याकृतीति, खड्गाकारादीत्यर्थः । एवमेव वृत्तावपि व्याख्येयम् । तेनाऽऽकारविशेषाभावेऽपि सर्वतोभद्रादेश्चित्रत्वम् । तत्र खड्गबन्धमाह—मारारीति । श्लोकद्वयेनात्रान्वयो बन्धश्च । आदिजा नित्या, पाठभेदादद्रिजा वा, उमा मे मम शं कल्याणं दिश्यात् । कीदृशी ? मारारिः कामारिः शिवः, शक्र इन्द्रः, रामा रामत्रयम्, इभमुखो गणेशः, तैः आसाररंहसा कणावृष्टिरीत्या सारं यथा स्यात्तथा आरब्धस्तवा, यतस्तेषामर्त्तिहरणक्षमा । नतानां माता, श्रियां शोभानां संघट्टः यन्त्रणस्थितिस्थानं शोभाबाहुल्यात् । तथा बाधितः सम्भ्रमो भयं यथा तादृशी, मान्या । अथ समुच्चये । रामाणां स्त्रीणां सीमा आधिक्यस्य पात्री काष्ठापन्ना ।

अत्र मुष्टेरुपर्यधः शाखाद्वयवान् खड्गो लेख्यः । तत्रोपरिशाखामध्यचतुष्पथे प्राथमिको 'मा' कारो लेख्यः, खड्गवामे च 'रारी'त्यादय उपर्युपरिक्रमेण चतुर्दश वर्णाः खड्गोपरि 'सा' कारस्तदन्तिमः । ततस्तमेव साकारमारभ्य 'रारब्धे'त्यादयश्चतुर्दश वर्णा अधोऽधःक्रमेण क्षान्ताः खड्गदक्षिणे लेख्याः । चतुष्पथमध्यगो 'मा'कारस्त-

दन्तिम:, ततस्तमेव 'मा'कारमारभ्य खड्गदक्षिणशाखायां 'तानते'त्यादय: सप्त वर्णा:, खड्गवामशाखायाञ्च 'श्रियामि'त्यादय: सप्त वर्णा:, चतुष्पथमध्यगो माकारस्तदन्तिम:। ततस्तमेव माकारमारभ्याधोऽध:क्रमेण 'न्याथसी'ति त्रयो वर्णा मुष्टौ लेख्या:, अधश्चतुष्पथमध्ये च 'मा'कार:। ततस्तमेव 'मा'कारमारभ्य तद्दक्षिणशाखायां 'रामाणां शम्' इति चत्वारो वर्णा:, वामशाखायाञ्च 'मे दिश्यादु' इति चत्वारो वर्णा:, चतुष्पथमध्यगो माकारस्तदन्तिम:। ततो मुष्टेरध: त्सरुके 'दिजा' इति 'द्रिजा' इति वा वर्णाद्वयं लेख्यमिति वर्णविन्यास:। तस्य संस्थानञ्च लिखित्वाऽत्रैव दर्शितमवधेयम्। इति खड्गबन्ध:।

## सुधासागर:

चित्रं लक्षयति—तच्चित्रेति।

सन्निवेशेत्यादि। अयम्भाव:—यद्यपि वर्णानामाकाशगुणानां खड्गाद्याकृतिहेतुत्वसम्भवि, तथापि विन्यस्तवर्णानुमापिका लिपय: सन्निवेशविशेषत्वेन यत्र खड्गाद्याकारमुल्लासयन्ति तच्चित्रमिति विवक्षितम्। तर्हि लिपिनिष्ठत्वात् शब्दालङ्कारत्वं न स्यादिति चेत्, न। तादृशवर्णविन्यासं विना तादृशलिपिविन्यासाभावात् शब्दान्वयव्यतिरेकयोरभग्नत्वादिति। लिपेर्वर्णाभेदस्य लोकप्रसिद्धिमाश्रित्य शब्दालङ्कारत्वमिति कश्चित्। तथाऽपि शृङ्गारादिरसानुपकारकस्यास्य कथमलङ्कारत्वमिति चेत्, कविनैपुण्यवशेन विस्मयोपकारकत्वादिति गृहाण। श्लेषनिर्वाह्यं चैतत्। न च तादृशं रसोपकारकमिति दिङ्मात्रमुदाह्रियते। तत्र खड्गबन्धो यथा—मारारीति।

उमा परमेश्वरी मे शं कल्याणं दिश्यात्, किम्भूता ? मारारि: शिव: शक्र: इन्द्र: राम: परशुरामादि: इभमुखो गणेश: एतैरासारो धारासम्पात: तद्वत् रंहसा वेगेन अविच्छेदेनेति यावत्, सारं यथा स्यात्तथा, यद्वा सार उत्कृष्ट आरब्ध: स्तव: स्तोत्रं यस्या: सा तादृशी, नित्यमनवरतं तदार्तिहरणक्षमा तेषां स्मरारिप्रभृतीनां या आर्त्ति: पीडा तस्या: हरणे दूरीकरणे क्षमा समर्था, नतानां नम्राणां माता वत्सला, श्रियां सङ्घट्ट: सर्वासां साहचर्यात् सङ्घीर्मस्थानम्, मान्या शिवादिभि: सर्वैर्माननीया, अथशब्द: समुच्चये। रामाणां रमणीयानां सीमा अवधि: अत: परं रमणीयता नान्यत्रेति तात्पर्यम्, आदिमा सर्वादिभूतेत्यर्थ:।

अनेन युग्मेन खड्गप्रस्तारो यथा—नाविकायां प्रथमं माशब्दं विन्यस्तं कल्पयित्वा तदूर्ध्वमारोहक्रमेणैकस्यां धारायां राशब्दादिहकारान्तं वर्णचतुष्कं लिखेत्, खड्गस्याग्रे च सा इति वर्णो विन्यास्य:, तत्र अपर: 'सा' इति वर्ण: प्रविष्ट:। ततोपराधारायामवरोहक्रमेण 'रा' इत्यादीन् 'क्ष' इत्यन्तान् चतुर्दशवर्णान् विन्यसेत्। मूले मेति प्राथमिकेन प्राथमिकेन माशब्देन श्लिष्टम्, एवमपरमपि माशब्दं तत्र प्रविष्टं कल्पयित्वा तद्दक्षिणापार्श्वे निष्क्रमेण श्रिकरादिभ्रकारान्तं वर्णसप्तकं लिखेत्, माशब्दौ श्लिष्टौ, खड्गस्य एकस्यामुपरिशाखायां निष्क्रमणक्रमेण 'ता' इत्यादीन् 'ट्ट:' इत्यन्तान् सप्तवर्णान् विन्यसेत्। माशब्दादध:क्रमेण न्याथसीति वर्णत्रयं लिखेत्, एषा गरिडका, तदधो मेति, तद्दक्षिणपार्श्वे निष्क्रमेण क्रमेण राकारादि-शमित्यन्तं वर्णचतुष्टयं विलिख्यं वामपार्श्वे प्रवेशक्रमेण मेकरादि दुकारान्तं वर्णचतुष्टयं लिखेत्, ततो माशब्द:श्लिष्ट:। एतत् खड्गजनकम्, माकारादध: शेषं 'दिमा' इति वर्णद्वयं लिखेत् एतन्मस्तकमिति खड्गनिष्पत्ति:। अनभिज्ञबोधनाय तत्र तत्र चित्राकारोऽपि लिख्यतेऽस्माभि:—

शरं शरकाण्डं लति गृह्णतीति शरला शरत्, जयतीति शेषः। दन्त्यपाठे सरला मेघादिकौटिल्यरहितेत्यर्थः। किम्भूता बहुलारम्भाणां नानाकुसुमलम्पटानाम्, अत एव तरलानां चञ्चलानाम् अलिबलानां भ्रमरसैन्यानामरावो यत्र सा तादृशी। बारलभिर्हंसीभिर्बहुला बहुहंसीकेत्यर्थः अमन्दः उद्युक्ताः करं लान्तीति करलाः राजानः, यद्वा करला राजधनग्राहिणो मार्गेऽधिकृता जना यस्यां सा तादृशी अबहुलेन शुक्लपक्षेणमला, तद्वदमला वा। यद्वा, बहुले कृष्णपक्षेऽप्यमला, स्वच्छाकाशतया तारकादिभिः प्रकाशनादिति भावः।

सरला बहुलारम्भतरलालिबलारवा।

वारलाबहुलामन्दकरलाबहुलामला॥ ३८६ ॥(मुरजबन्धः)

---

### सङ्केतः

शरलेति। शरं लातीति शरला। बहुलारम्भेण तरलानां अलिबलानां आरवः यत्र। वारलाभिः हंसीभिः बहुला। करान् लान्तीति करलाः मापाः। अमन्दाः विजिगीषवः करलाः यस्याम्। अबहुलेन शुक्लपक्षेण अमला निर्मला।

एषः मुरजबन्धः। स्थापना यथा—पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमादिपादेभ्यः प्रथमपादाद्यक्षराणि चत्वारि। चतुर्थादिपादेभ्यः पञ्चमादीनि चत्वारि गृहीत्वा प्रथमः पादः। द्वितीयात् प्रथमं, प्रथमात् द्वितीयतृतीये, द्वितीयतृतीयाभ्यां चतुर्थे, चतुर्थात् तृतीयद्वितीये, तृतीयाच्च पादात् प्रथममक्षरं गृहीत्वा द्वितीयः पादः। द्वितीयादष्टमं, प्रथमात् सप्तमषष्ठे, द्वितीयतृतीयाभ्यां पञ्चमे, चतुर्थात् षष्ठसप्तमे, तृतीयादष्टमं च गृहीत्वा तृतीयः पादः। चतुर्थादिभ्यः प्रथमादीनि, प्रथमादिभ्यः पञ्चमादीनि पादेभ्योऽक्षराणि गृहीत्वा चतुर्थः पादः इति।

### सङ्केत (रुय्यकः)

सरलेति—बहुलारम्भस्तरलानां चपलानां अलिबलानां भ्रमरसैन्यानामारवः शब्दो यत्र वारलाभिर्हँसीभिर्बहुलाऽमन्दा तद्युक्ता करं शुण्डं लान्ति ये ते भूषा यत्र, अबहुलेन शुक्लपक्षेण निर्मला, बहून् वा लातीति बहुला या सा शरत् प्रक्रान्ता। एष मुरजः। तथा हि पादचतुष्टयेन पंक्तिचतुष्टये कृते प्रथमादिपादेभ्यः प्रथमाद्यक्षराणि चत्वारि चतुर्थादिपादेभ्यः पञ्चमषष्ठसप्तमाष्टानि गृहीत्वा प्रथमः पादः। द्वितीयात् प्रथमं प्रथमाद्द्वितीयतृतीयौ द्वितीयतृतीयाभ्यां चतुर्थ चतुर्थाद् द्वितीयतृतीयौ तृतीयात् पादात् प्रथमं वर्णं गृहीत्वा द्वितीयः पादः। द्वितीयादष्टमं प्रथमात् सप्तमषष्ठौ द्वितीयतृतीयाभ्यां पञ्चमी चतुर्थात् षष्ठसप्तमौ तृतीयादष्टमं गृहीत्वा तृतीयः पादः। चतुर्थादिभ्यः प्रथमादीनि प्रथमादिभ्यः पञ्चमादीनि गृहीत्वा चतुर्थः पादः।

### बालचित्तानुरञ्जनी

मुरजबन्धमुदाहरति सरलेति। अत्र शरत् वर्ण्यते। सरला अवक्रा, बहुलारम्भतरलानां प्रचुरसंरंभचञ्चलानां, अलिबलानां भ्रमरसैन्यानां, आरवः आसमन्तात् झङ्कारः यस्यां सा, वारलाभिः हंसीभिः बहुला करं बलिं लाति आदत्त इति करलाः राजानः अमन्दा उद्युक्ता राजानो यस्या सा। अबहुले शुक्लपक्षे, अमला निर्मला, एवंविधा शरत् संक्रान्तेत्यर्थः।

### काव्यादर्शः

'सरले' ति सर्वभाषाभिरमागधिकाभिः शरद्वर्णनोऽयं श्लोकः। 'सरलो दीर्घः। आ समन्तात् प्रभूतेन आरम्भेण चपलानां भ्रमरसैन्यानां आरवः शब्दो यस्याम्। वारलाभिर्हंसीभिर्बहला अमन्दा रणं प्रति सोद्योगाः।

करण्डं लान्तीति करला राजानो यस्याः। अबहुलेन शुक्लपक्षेण निर्मला। बहुत्वाल्लातीति बहुला शरत् प्रक्रान्ता॥ एष मुरजबन्धः। तथा हि पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमादिपादेभ्यः प्रथमपादाद्यक्षराणि चत्वारि, चतुर्थादिपादेभ्यः पञ्चमादीनि चत्वारि गृहीत्वा प्रथमपादः। द्वितीयपादाद् आद्याक्षरं, द्वितीयतृतीयपादाभ्यां चतुर्थपञ्चमाक्षरे, चतुर्थपादात् तृतीयद्वितीये, तृतीयात् पादात् प्रथमं चाक्षरं गृहीत्वा द्वितीयपादः। द्वितीयाद् अष्टमं, प्रथमात् सप्तमषष्ठे, द्वितीयतृतीयाभ्यां पञ्चमे, चतुर्थात् षष्ठसप्तमे, तृतीयाद् अष्टमं गृहीत्वा तृतीयपादः। चतुर्थात् प्रथमं, तृतीयाद् द्वितीयं, द्वितीयाद् तृतीयं, प्रथमात् चतुर्थपञ्चमे, पुनर्द्वितीयात् षष्ठं, तृतीयात् सप्तमं, चतुर्थाद् अष्टमं च गृहीत्वा चतुर्थः पादः।

### विवेकः

अनेन श्लोद्वयेन खड्गबन्धप्रस्तारः। तथा द्राढिकाऽन्तरे 'मा' शब्दं तिर्यगधोऽधः क्रमेण वर्णचतुर्दशकं धारायां न्यसेद्यावत्-'मा' शब्दं श्लिष्टम्, एतत्फलकम्। तस्यैव 'मा'-शब्दस्य दक्षिणपर्श्वे निष्कामक्रमेणाक्षरसप्तकम्, ततोऽपरपार्श्वात् 'मा' शब्दान्तिकप्रवेशक्रमेण वर्णसप्तकम्। एषा द्राढिका। ततो 'मा'-शब्दादारभ्योर्ध्वक्रमेण गान्तिकार्थं वर्णत्रयम्। तदुपरि 'मा'शब्दः। तद्दक्षिणपार्श्वेऽन्यक्षरचुष्टयम्। अपरपार्श्वे च 'मा' शब्दान्तिकं-वर्णचतुष्टयम्। एतन्मुकुलक्रम्। ततः श्लिष्टस्य 'मा' शब्दस्योपरि वर्णद्वयम्। एतन्मस्तकम्। सरलेति—बहुलारम्भः, तरलानां चपलानामलिबलानां भ्रमरसैन्यानामारावः शब्दो यत्र। वारलाभिर्हंसीभिर्बहुलाऽमन्दातद्युक्ताः [करला] करं दण्डं लान्ति ये ते भूपा यत्र। अबहुलेन शुक्रापक्षेणामलानिर्मला बहून् वा लातीति बहुला या सा शरत् प्रक्रान्ता। एष मुरजबन्धः। तथाहि पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमद्वितीयतृतीयचतुर्थपादेभ्यो यथाक्रमं प्रथमादीन्यक्षराणि चत्वारि चतुर्थतृतीयद्वितीयप्रथमपादेभ्यः पञ्चमषष्ठसप्तमाष्टमानि च गृहीत्वा प्रथमः पादः। द्वितीयात् प्रथमं, प्रथमादिद्वतीय- तृतीयौ, द्वितीयतृतीयाभ्यां चतुर्थपञ्चमी, चतुर्थात् तृतीयद्वितीयौ तृतीयात् पदात् प्रथमं वर्णञ्च गृहीत्वा द्वितीयः पादः। द्वितीयादष्टमं प्रथमात् सप्तमषष्ठी, द्वितीयतृतीयाभ्यां पञ्चमी, चतुर्थात् षष्ठसप्तमौ, तृतीयादष्टमश्च गृहीत्वा तृतीयः पादः। चतुर्थादिभ्यः प्रथमादीनि प्रथमादिभ्यः पञ्चमादीनि गृहीत्वा चतुर्थः पाद इति प्रस्तारः।' (रु. सं. ५८-५९ पृ.)

### दीपिका

सरलेति पक्रान्तशरद्विशेषणम्। बहुलारम्भो महारम्भस्तरलानामलिबलानां भ्रमरवृन्दानामरावो यत्र। वारलाबहुला हंसीप्राया। करं लान्तीति करला राजानस्तेऽमन्दा उद्योगिनो यत्र। बहुले कृष्णपक्षे अमला नक्षत्रादिभिर्नेति शेषः। क्रमेण पङ्क्तिचतुष्टये कृते प्रथमद्वितीयपादानां यथाक्रमं प्रथमद्वितीयतृतीयवर्णानां चतुर्थपादस्य चतुर्थपञ्चमयोस्तृतीयद्वितीयचतुर्थपादानां षष्ठसप्तमाष्टमानां ग्रहणे प्रथमपादः। द्वितीयात् प्रथमं प्रथमाद् द्वितीयतृतीयौ द्वितीयतृतीयाभ्याञ्च चतुर्थे चतुर्थाद् द्वितीयतृतीयौ तृतीयात् प्रथमं गृहीत्वा द्वितीयतृतीयाभ्यां पञ्चमौ चतुर्थात् षष्ठसप्तमौ तृतीयादष्टमं गृहीत्वा द्वितीयपादः। द्वितीयादष्टमं प्रथमात् सप्तमषष्ठौ द्वितीयतृतीभ्यां पञ्चमौ चतुर्थात् षष्ठसप्तमौ तृतीयादष्टमं गृहीत्वा तृतीयपादः। चतुर्थतृतीयसप्तमषष्ठाः ? प्रथमद्वितीयतृतीयान् प्रथमाच्चतुर्थपञ्चमौ द्वितीयतृतीयचतुर्थेभ्यः षष्ठसप्तमाष्ठमान् गृहीत्वा तुरीयः पादः प्रस्तारे मुरजसिद्धिः।

## दर्पणः

सवलामद्धो, [सरलाबह्निति] सरं लाति ददातीति रेति [?] प्राक्तान्तरशरद्विशेषणम् । तब्दलारंभो महारंभः । तरलानां अलिबलानां भ्रमरविंदानां [भ्रमरवृन्दानां] लाखो यत्र । वारणा [वारला] बहुला हंसी प्रायाकरं लान्तीति कबला [करला] राजा च स्त्रे कवलाऽमन्दा उज्जयोगिना यत्र । बहुले कृष्णपक्षेऽपि नक्षत्रादिति रमणा [?] । अत्र पादचतुष्टयेनाधः क्रमेण पंक्तिचतुष्टये कृते प्रथमद्वितीयतृतीयानां यथाक्रमं प्रथमद्वितीय तृतीयानां वर्णानां चतुर्थपादस्य चतुर्थपञ्चमयोः, तृतीय-द्वितीय प्रथमपादानां च षष्ठसप्तमाष्टमानां ग्रहणे प्रथमपादः । द्वितीयात् प्रथमद्वितीयतृतीयौ द्वितीयतृतीयाभ्यां च चतुर्थम् । चतुर्थात् द्वितीयौ तृतीयाच्च प्रथमं गृहीत्वा द्वितीयः पादः । तृतीयादष्टमं प्रथमात् सप्तमषष्ठी, द्वितीयतृतीयाभ्यां पञ्चमं, चतुर्थात् षष्ठसप्तमौ द्वितीयादष्टमं गृहीत्वा तृतीयः पादः ।

चतुर्थतृतीयद्वितीयेभ्यः प्रथमद्वितीयतृतीयादि, प्रथमाच्चतुर्थपञ्चमी, तृतीयद्वितीयचतुर्थेभ्यः षष्ठसप्तमाष्ट-माद्यक्षराणि गृहीत्वा तुरीयः पादः इति प्रस्तावे [प्रस्तरे] खरजसिद्धिः [मुरजसिद्धिः] ।

## साहित्यचूडामणिः

सरलेति । बहुलारम्भतरलानां प्रचुरसंरम्भचञ्चलानामलिकुलानां भृङ्गपरिकराणाम् आरवो झङ्कारो यस्याम् । बारला हंस्यः ताभिर्बहुला । करं बलिं लान्ति आददत इति करला राजानः । अमन्दाः सन्नाहवन्तः करला यस्याम् । अबहुलेन शुक्लेन पक्षेणामला विशदा शरद् । असौ मुरजबन्धः ।

## सम्प्रदायप्रकाशिनी

सरलेति । सरला अवक्रा । बहुलारम्भः प्रभूतोपक्रमः तरलानां चञ्चलानामलिबलानां भ्रमरसैन्यानामारवो यत्र सा । वारलाभिहंसीभिर्बहुला । अमन्दा उद्योगिनः करलाः करं लान्तीति दण्डग्राहिणो भूपा यस्यां सा । बहुलमला बहुलपक्षेऽपि निर्मला, मेघाभावात् । शरद्वर्णनमिदं मुरजबन्धः । यत्र पादैश्चतुर्भिः पङ्क्तिचतुष्कम् । पादसङ्घयो-रक्षरचतुष्कयोः प्रथमपङ्क्तेरादितोऽन्ततश्च रेखाद्वयेनैका वधा । स प्रथमः पादः । द्वितीयपङ्क्त्यादि यावत् तृतीयपङ्क्त्याद्येकं मुखम् । यत्र प्रथमायाः पङ्क्तेर्द्वितीयतृतीययोः, द्वितीयायास्तृतीयायाश्चतुर्थयोः, चतुर्थ्यास्तृ-तीयद्वितीययोश्च रेखा भवन्ति । स द्वितीयः पादः । द्वितीयपङ्क्त्यन्तादि यावत् तृतीयपङ्क्त्यन्तं द्वितीयं मुखम् । रेखा पूर्ववैलोम्येन । स तृतीयः पादः । चतुर्थपङ्क्तेरादितोऽन्ततश्च प्रथमवधावैलोम्येन वधान्तरम् । स चतुर्थः पादः ।

## मधुमती

सरलेति । शरदिति प्रकरणात् । सरला ऋजुः मेघादिकौटिल्याभावात् । तथा बहुलारम्भाणां तरलानां भ्रमसैन्यानां आरावः यत्र । वरटा = वारला = हंसी तद्वत् बहुला अवदाता । अमन्दकरला करं लान्तीति करलाः = भूपाः यत्र तथा । एवं च अमन्दाः उद्योगिनः करलाः यत्र तथा । अबहुलामला शुक्लपक्षनिर्मलेत्यर्थः ।

### विस्तारिका

शरलेति। शरं काण्डं लाति गृह्णाति। प्रक्रान्तायाः शरदो विशेषणम्। शरदि शराणां सम्पत्तिः। बहुलारम्भाणां तरलानां चालिबलानाम् आरवो यत्र। वारलाभिः हंसीभिर्बहुला बहुलरवेत्यर्थः। मन्दा अनुद्यता अमन्दास्तदितरे करला जाता इत्यत्र करो राजस्वम्, तल्लाति गृह्णाति। बहुले कृष्णपक्षेऽप्यमला, तारादिभिः। प्रकाशनात्।

अत्र पादचतुष्टयेनाधः क्रमेण पंक्तिचतुष्टये कृते प्रथमद्वितीयतृतीयपादानां यथाक्रमं प्रथमद्वितीयतृतीयवर्णानां चतुर्थस्य पादस्य चतुर्थपञ्चमयोस्तृतीयद्वितीयचतुर्थपादानां षष्ठसप्तमाष्टमानां ग्रहणे प्रथमः पादः। द्वितीयात् प्रथमम्, प्रथमाद् द्वितीयतृतीयौ द्वितीयतृतीयाभ्यां चतुर्थम्, चतुर्थात् तृतीयद्वितीयौ, तृतीयात् प्रथमं गृहीत्वा द्वितीयः पादः। द्वितीयादष्टमम्, प्रथमात् सप्तषष्ठौ, द्वितीयतृतीयाभ्यां पञ्चमौ, चतुर्थात् षष्ठसप्तमौ, तृतीयादष्टमं गृहीत्वा तृतीयः पादः। चतुर्थद्वितीयतृतीयेभ्यः प्रथमद्वितीयतृतीयान्, प्रथमात् चतुर्थसप्तमौ, द्वितीयतृतीयचतुर्थेभ्यः षष्ठसप्तमाष्टमान्यक्षराणि गृहीत्वा चतुर्थः पादः। मुरजसिद्धिः।

### सारबोधिनी

सरलेति। शरदत्र वर्ण्यते। सरला अवक्रा। यद्वा सरं लातीति सरला। बहुलारंभाणां तरलानां चालिबलानामारवो यत्र। वारलाभिः हंसीभिर्बहुला बहुलवारलेत्यर्थः। मंदा अनुद्धता अमन्दे करला जना यत्र, करो राजस्वं तं लान्तीति गृह्णन्ति, बहुले कृष्णपक्षेऽप्यमत्ता ताराभिः प्रकाशनात्। अत्र पादचतुष्टयेऽधः क्रमेण पंक्तिचतुष्टये कृते प्रथमद्वितीयतृतीयापादानां यथाक्रमं प्रथमद्वितीयतृतीयवर्णानां, चतुर्थपादस्य चतुर्थपंचमयोः तृतीयद्वितीयप्रथमपादानां षष्ठसप्तमाष्टमानां ग्रहणे प्रथमः पादः। द्वितीयात् प्रथमं, प्रथमात् द्वितीयतृतीयौ। द्वितीयतृतीयाभ्यां पंचमौ। चतुर्थात् षष्ठसप्तमौ। तृतीयादष्टमं गृहीत्वा तृतीयः पादः। चतुर्थद्वितीयतृतीयेभ्यः प्रथमद्वितीयतृतीयान्, प्रथमाच्चतुर्थपंचमौ, द्वितीयतृतीयचतुर्थेभ्यः षष्ठसप्तमाष्टमानि चाक्षराणि गृहीत्वा चतुर्थः पाद इति मुरजबन्धः (सिद्धः।)

### काव्यप्रदीपः

मुरजबन्धो यथा—

**'सरला बहुलारम्भतरलालिबलारवा।**
**वारलाबहुलामन्दकरला बहुलामला॥'**

अथ न्यासः—प्रथमपादस्य वर्णाष्टकं पङ्क्तिक्रमेणाभिलिख्य तेषामधोऽधोऽपरपादत्रयवर्णान्यपङ्क्तिक्रमेण विलिखेत्। तत्र चैतच्छ्लोकोत्थापनमार्गेण रेखायां दत्तायां मुरजाकारता भवति।

### आदर्शः

मुरजबन्धमाह—शरलेति। अत्र शरद् विशेष्या प्रबन्धगम्या। शरत् कीदृशी? शरला शरकाण्डोद्गमवती। ला आदाने। बहुलारम्भाणां (प्रचुरसंरम्भाणां) तरलानामलिबलानामारवो यस्यां तादृशी। वारला हंस्यो

बहुला यस्यां तादृशी। अमन्दाः परचक्राक्रमणसोद्योगाः करलाः करग्राहिणो राजानो यस्यां तादृशी। बहुले कृष्णपक्षेऽप्यमला।

अत्र पङ्क्तिचतुष्टयेन पादचतुष्टयं लेख्यम्। पादानामाद्यान्तिमवर्णान् विहाय पादद्वयीयद्विद्विवर्णैमुरज-त्रयाकारः। एवमपरपादद्वयेऽपीति षण्मुरजाः। अस्य संस्थानमपि लिखित्वा दर्शितमबधातव्यम्।

### सुधासागरः

अथ न्यासः—प्रथमपादस्य वर्णाष्टकं पङ्क्तिक्रमेणाभिलिख्य तेषामधोऽपरपादत्रयवर्णान् पङ्क्तिक्रमेण विलिखेत्। ततः प्रथमपादप्रथमाक्षरपार्श्वत एकैकवर्णाधिकसङ्ग्रहेण चतुर्थचरणचतुर्थाक्षरपर्यन्तं दक्षिणतो रेखां कुर्यात्। एवमुत्तरपार्श्वे चरमचरणतृतीयाक्षरपर्यन्तम् ईशानादारभ्य विदिक्ष्वेमेव कुर्यात्। ततो दिग्विदिक्षु रेखाष्टके दत्ते मुरजत्रयाकारो भवति।

पद्मबन्धो यथा—'भासत' इति।

हे प्रतिभासार महाबुद्धे बत विस्मये, ते सभा भासते, किम्भूता रसैराभाता शोभिता रसिकेति यावत्। अहता विभा दीप्तिर्यस्याः। यद्वा हताऽविभाऽदीप्तिर्यस्याः निर्दोषेति यावत्। क्वचित् हतारिभेति पाठः। भावित-श्चिन्ततः आत्मा परमात्मा यया तादृशी, वादे शास्त्रविचारे शुभा कुशला देवाभा देवतुल्येत्यर्थः।

**भासते प्रतिभासार रसाभातहतविभा।**

**भावितात्मा शुभा वादे देवाभा बत ते सभा ॥ ३८७ ॥**

**(पद्मबन्धः)**

---

### सङ्केतः

भासत इति । हे प्रतिभासार वादे रसेन आ समन्तात् भाता दीप्ता हता अविभा अशोभा यया वादे भावितात्मा एकाग्रचितः शुभा प्रशस्या देवैः वादिभिः विद्वद्भिः आभा यस्या । बत इति आश्चर्ये ।

एष अष्टदलपद्मबन्धः । स्थापना यथा—भा शब्दः कर्णिकास्थाने । ततः अक्षद्वयेन एकं दिग्गदलं, निर्गमप्रवेशाभ्यां भाशब्दं यावत् । ततो निःसरणक्रमेण विदिग्दलं चाक्षरद्वयेन प्रवेशक्रमेण । ततः स एव भाशब्दः । ततोऽक्षरद्वयेन दिग्दलम् । ततोऽक्षरद्वयेन विदिग्दलम् । निर्गमेण तावतैव दिग्दलम् । प्रवेशेन भाशब्दं यावत् । पुनर्भाशब्दः निर्गमेण च तावदक्षरद्वयं इत्यादिना क्रमेण दलाष्टकं उत्पाद्यमिति । विदिग्दलवर्णानां द्विः, भाशब्दस्य च अष्टकृत्वः आवृत्तिः ।

खड्गादीत्यादिशब्दात् मुसल-धनुः-बाण-चक्र-शक्ति-शूल-हल-स्वस्तिकादयः, तथा एकद्वित्र्यादिवर्ण-स्वर-व्यञ्जन-स्थान-पाद-अर्थ-श्लोक-गत-प्रत्यागतादयः चित्रभेदाः ज्ञेयाः ।

### सङ्केतः (रुय्यकः)

भासेत इति । हे प्रतिभासार प्रज्ञातिशयोत्कृष्ट रसनाभाता समन्ताद्दीप्ता हता आविभा आशोभा यया भावितात्मा एकाग्रीकृतहृदयो वाद एव देवैर्विजिगीषुभिः पण्डितैराभा यस्याः । बतेत्याश्चर्ये निपातः । एषोऽष्टद-लपदम् । तथा हि प्रथमक्षरमत्र कर्णिकास्थाने ततोऽक्षरद्वयेनैकं दलं, निःसरणक्रमेण तावतैव भागेन द्वितीयं दलं, प्रवेशक्रमेण यावच्च कर्णिकाक्षरम्, एवं दिग्दलान्यक्षरद्वयमितानि निर्गमप्रवेशाभ्याम्, विदिग्लानि तु प्रवेशेनैव ।

### बालचित्तानुरञ्जनी

पद्मबन्धमुदाहरति भासत इति । हे प्रतिभासार प्रज्ञया श्रेष्ठ ! राजन् तव रसेन प्रीतिरूपेण आभाता शोभिता अहता अप्रतिहता, अविभा अदीप्तिर्यस्याः सा, भावितः एकाग्रीकृतः आत्मा हृदयं यया सा, भावितः, वादे तत्त्वकथायां...भासते ।

### काव्यादर्शः

भासते इति । 'हे प्रज्ञातिशयोत्कृष्टवादे रसेन आसमन्तात् भाता दीप्ता हताऽविभाऽशोभा यया भावितात्मा एकाग्रीकृतहृदया वादे एव देवैर्विजिगीषुभिः पण्डितैराभा यस्या ।' 'बते'त्याश्चर्ये निपातः । एषोऽष्टदलपद्मः । तथा भा-शब्दः कर्णिकास्थाने, ततोऽक्षरद्वयेनैकं दिग्दलं निर्गमप्रवेशाभ्यां भा-शब्दं यावत् । ततोऽक्षरद्वयेन विदिग्दलं निर्गमेण तावतैव दिग्दलं प्रवेशेन भा-शब्दं यावत् । पुनर्भा-शब्दो निर्गमेण च तदेवाक्षरद्वयमित्यादिना क्रमेण

दलाष्टकमुत्पाद्यम्। एवं दिग्दलानि निर्गमप्रवेशाभ्यां उत्पाद्यानि, विदिग्दलानि तु प्रवेशेवैति दिग्दलवर्णानां द्विभाशब्दस्य चाष्टकृत्व आवृत्तिः प्रस्तारे।

## विवेकः

भासत इति। 'हे प्रतिभासार प्रज्ञाऽतिशयोत्कृष्ट रसेनादरेणाभाता समन्ताद्दीप्ताऽहताऽप्रतिहताऽऽविभा शोभा यया। भावितात्मा एकाग्रीकृतहृदया वाद एव देवैर्विजिगीषुभिः पण्डितैराभा यस्याः। बतेत्याश्चर्ये निपातः। ते तव सभा। एषोऽष्टदलपद्मबन्धः। तथाहि प्रथमक्षरमत्र कर्णिकास्थाने ततोऽक्षरद्वयेनैकं दलं, निःसारणक्रमेण तावतैव भागेन प्रवेशक्रमेण द्वितीयं दलं, यावता कर्णिकाऽक्षरम्। ततस्तावतैव तृतीयं निःसरणक्रमेन तदेवाक्षरद्व-यम्। एवं दिग्दलान्यक्षरद्वयमितानि निर्गमप्रवेशाभ्यामुत्पाद्यानि। विदिग्दलानि तु प्रवेशेनैव। तदिह दिग्दलेषु निर्गमप्रवेशाभ्यां शिलष्टाक्षरत्वं विदिग्दलेषन्यथा कर्णिकाऽन्तरन्तु शिलष्टमेव' (रु. सं. ५९ पृः)।

## दीपिका

हे प्रतिभासार वादे रसेनाभाता हता अविभा अशोभा यस्यां सा भावितात्मा एकाग्रीभूतहृदया शुभा शोभना देवाभा देवसदृशी बत विस्मये तव सभा भासते। अत्र कर्णिकायां भाशब्दं विन्यस्यापराक्षरद्वयं यत्र तत्र दिग्दले दत्त्वा विदिग्दलेन प्रवेश्य भाशब्दादुपरि वर्णद्वयाभ्यां दिग्दले निर्गमप्रवेशौ। पुनः कोणे भाशब्दोपरितनवर्णद्वयं दत्त्वा दिशा प्रवेश्य निर्गम्य च विदिशा निर्गमप्रवेशौ प्रथमदिग्दलेनेत्यष्टदलपद्मविस्तारः।

## दर्पणः

हे प्रतिभासार वादे रसेनाभतो हतां। अविभा अशोभा यस्यां सा भारितार्था [भावितात्मा] एकाग्रीकृत-हृदया, शुभा शोभना, देवाभा देवसदृशी। बत विस्मये। तव सभा भासते।

अत्र कर्णिकायां भाशब्दं विन्यस्य अपराक्षरद्वयं दत्वा दिशा प्रविश्य निर्गम्य च विदिशा प्रविश्य दिशा नि...मप्रवेशौ। ततो विदिशं निर्गम्य प्रथमदिशा प्रवेशेऽष्टदलपद्मप्रस्तारः।

## साहित्यचूडामणिः

भासत इति। हे प्रतिभासार ! प्रज्ञाविशेषानुप्राणानारसेन प्रीतिरूपेण आभाता परितः शोभिता। हताविभा तिरस्कृतनिस्तेजस्का। भावितात्मा संस्कृतान्तःकरण। शुभा वादे वचने कल्याणी। देवाभा सुपर्वसदृशी। ते सभा भासते। बतेत्यद्भूते। एतदष्टदलं पद्मम्।

## सम्प्रदायप्रकाशिनी

भासत इति। हे प्रतिभासार प्रज्ञयोपादेयभूत। रसाभाता रसेन समन्तादुपशोभिता; हताविभा निराकृता-ज्ञाना। भावितात्मा सत्संस्कारोपरञ्जितहृदया। वादे शुभा विजिगीषायां तत्त्वमीमांसायां चाव्याकुला। अतएव देवाभा सुधर्मासदृशी। तव सभा भासते त्वदीया समज्या विभाति। बतेति कौतुके। अयं पद्मबन्धः। कर्णिकाया-

माद्यक्षरं दलेषु द्वे द्वे इति सप्तदशकम्। दिग्दलेषु यथायोगं निर्गमप्रवेशौ। विदिग्दलेषु क्रमप्राप्तः प्रवेशो निर्गमो वा।

### मधुमती

भासत इति। हे प्रतिभासार ! ते सभा भासते इत्यन्वयः। कीदृशी ? रसाऽऽभाता रसैः = शृङ्गारादिभिः आभाता आदीप्ता, तथा हताविभा हतारिदीप्तिः, तथा भावितात्मा शास्त्रवासनासंस्कृतात्मा, तथा वादे शुभा, तथा देवाभा देवसदृशी। बतेति हर्षे।

### विस्तारिका

भासत इत्यादि। हे प्रतिभासार। तव सभा भासते, रसेनाभाता रसिकाः। हता गता अविभा अदीप्तिर्यस्याः। भावितो वशीकृत आत्मा यया। तत्त्वबुभुत्सुयुगलस्य कथा वादस्तत्र शुभा निपुणा। देवाभा देवतुल्या। बत हर्षे विस्मये वा।

अत्र कर्णिकायां भाशब्दं विन्यस्य तदुपरि दिग्दले सते इति, दक्षिणपार्श्वतस्तु सारेति, अधश्च तत्र भावीति, वामपार्श्वतो वादे इति द्वौ द्वौ क्रमशो न्यसेत्। प्रथमदिग्दलदक्षिणकाक्षराद्विनिर्गमः। पुनस्तस्मिन् क्रमेण प्रवेशश्च। कोणरत्लेषु तु क्वचित् प्रवेशः, क्वचन निर्गमो वा। प्रथमादन्ये भाशब्दास्तत्र प्रथमभशब्द एव प्रविष्टः सप्तमदशवर्णैः त्रिंशन्निर्वहणमिति वैचित्र्यम्। एष पद्मबन्धः।

### सारबोधिनी

भासत इति। हे प्रतिभासार ते तव सभा भासते रसेनाभाता रसिका इत्यर्थः। हता अविभा अदीप्तिर्यस्याः, भावितो वशीकृत आत्मा यया। वादे शुभा देवाभा वा देवतुल्या। बत हर्षे विस्मये वा। अत्र कर्णिकायां भाशब्द विलिख्य तदुपरिदिग्दले सते इति। दक्षिणपार्श्वतः तत्र सारेति। अधश्च तत्र तावीति वामपार्श्वतोऽपि, तत्र वादे इति द्वौ द्वौ क्रमशो लिखेत्। प्रथमदिग्दलदक्षिणकोणदलादारभ्य चतुर्षु कोणेषु प्रतीति (?) त्माशु इति बत इति वर्णान् प्रदक्षिणक्रमेण लिखेत्। दिग्दलेष्वनुलोमप्रतिलोमाभ्यां कर्णिकाक्षराद्विनिर्गमः पुनस्तस्मिन् क्रमेण प्रवेशश्च। कोणदलेषु क्वचित्प्रवेशः क्वचिन्निर्गमो वा। प्रथमादन्यो भाशब्दस्तु भाशब्द एव प्रविष्टः। सप्तदशवर्णैस्त्रिंशतो निर्वाह इति वैचित्र्यम्। स एव पद्मबन्धः।

### काव्यप्रदीपः

पद्मबन्धो यथा—

> 'भासते प्रतिभासार रसाभाताहताविभा।
> भावितात्मा शुभा वादे देवाभा बत ते सभा॥'

अस्य न्यासः—कर्णिकायां भा इति, पूर्वपत्रे निर्गमक्रमेण सते इति, आग्नेयपत्रे प्रवेशनक्रमेण प्रति इति, ततो भेति कर्णिकास्थलस्थं शिलष्टम्। ततो दक्षिणपत्रे निष्क्रमणक्रमेण सारेति वर्णद्वयं ततस्ताभ्यां कर्णिकास्थेन वर्णेन प्रवेशक्रमेण शिलष्टं रसाभेति वर्णत्रयम्। एवमग्रेऽपि दिक्पत्रस्य कर्णिकायाश्च वर्णाः सर्वत्र शिलष्टा इति।

**काव्यप्रकाशखण्डनम्**

**भासते प्रतिभा [प. ४५, २] सार रसाभाताहताविभा।**
**भावितात्मा शुभा वादे देवाभा बत ते सभा॥**

पद्मबन्धः। अस्यार्थः—हे प्रतिभासार! तव सभा भासते रसेनाभाता रसिकेत्यर्थः। हताऽविभा अदीप्तिर्यस्याः। भावितो वशीकृतः आत्मा यया सा। वादे शुभा। देवाभा देवतुल्या। बत हर्षे।

**आदर्शः**

पद्मबन्धमाह—भासत इति। बत हर्षे। हे प्रतिभासार! ते तव सभा भासते दीप्यते। कीदृशी? देवाभा देवतुल्यदीप्तिः। रसाभाता रसैराभाता। हताविभा अविभा विभाभावः हततत्का। भावितात्मा प्रवर्त्तितबुद्धिः। 'आत्मा यत्नो धृतिर्बुद्धिरि'ति कोषः। वादे उद्ग्राहे शुभा। अत्र चतुर्दिक्षु विततमष्टदलपद्मं लेख्यम्। तत्कर्णिकायाम् आद्यो भाकारस्ततो दले दले निर्गमप्रवेशरीत्या द्वौ द्वौ वर्णौ लेख्यौ, किन्तु दिग्दलेषु निर्गमः प्रवेशश्च। प्राच्यदले त्वादौ निर्गमः श्लोकान्त एव प्रवेशः। अन्यदिग्दलेषु निर्गमानन्तरमेव प्रवेशः। आग्नेयवायव्यकोणयोः प्रवेश एव ईशाननैऋतकोणयोर्निर्गम एव इति। अस्य संस्थानमपि लिखितं द्रष्टव्यम्।

**सुधासागरः**

अस्य न्यासो यथा कर्णिकायां 'भा' इति। पूर्वपत्रे निर्गमक्रमेण 'सते' इति। आग्नेयपत्रे प्रवेशनक्रमेण 'प्रति' इति। ततो 'भा' इति कर्णिकास्थं शिलष्टम्। ततो दक्षिणपत्रे निष्क्रमणक्रमेण 'सार' इति वर्णद्वयम्। ततस्ताभ्यां कर्णिकास्थेन वर्णेन च प्रवेशक्रमेण शिलष्टं 'रसाभा' इति वर्णत्रयम्। एवमग्रेऽपि दिक्पत्रस्य कर्णिकायाश्च वर्णाः सर्वत्र शिलष्टा इति। आकारोऽपि लिखितः।

**रसासार रसा सारसायताक्ष क्षतायसा।**

**सातावात तवातासा रक्षतस्त्वस्त्वतक्षर ॥ ३८८ ॥**

(सर्वतोभद्रम्)

संभविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधतीति न प्रदर्श्यन्ते ॥

---

**सङ्केतः**

रसेत्यादि। हे सार स्थिर ! रसासार रसवेगवद्वर्षन् ! आयताक्ष पृथुनेत्र ! सातं-सुखं अवतीति सातावः, तं सामस्त्येन अततीति सातावात ! अतक्षर वृद्धिदायक ! तव रक्षतः सतः सा रसा भूः अतासा विगतापक्षया अस्तु। क्षतः अयः यैः ते क्षतायाः खलाः, तान् स्यति या सा तथा। तवैवेत्थम्। तुः अवधारणे।

अत्र न केवलं अधोधः क्रमेण स्थितानां पादानां प्रातिलोम्येन स्थितिः, यावदर्धभ्रमस्यापि। तत्र हि—प्रथमादिपादानां प्रथमैः, चतुर्थतृतीयद्वितीयप्रथमपादानां अष्टमैश्चाक्षरैः प्रथमः पादः। एवं द्वितीयसप्तमैः तृतीयषष्ठैः चतुर्थपञ्चमैश्च द्वितीयतृतीयचतुर्थपादाः। इह स सर्वत्र तदेवोलभ्यते इति अर्थभ्रमस्याप्यवस्थानात् सर्वतोभद्रम्।

अन्ये इति। स्वं वर्णच्युतं यथा—

"नृपदितिजामरप्रभुनताङ्घ्रियुगो जलदद्युतिर्विभुः
पृथुभुजगाधिपस्फुटफणासुभगः कमठारिजित्तथा।
शिवसुखसम्पदेऽव्यय विलासगृहं निखिलैनसां हरो
घनविधुतावनीं हरतु नः सकलः कलिलावलीं जिनः॥"

अत्र श्रीपार्श्ववर्णने सिद्धिच्छन्दसि प्रतिपादं आद्याक्षरद्वयस्य अन्त्याक्षरसप्तकस्य च च्युतौ प्रमिताक्षरावृत्तेन, तथा आद्याक्षरसप्तकस्य अन्त्याक्षरद्वयस्य च्युतौ द्रुतविलम्बितवृत्तेन च तस्यैव वर्णनम्।

एवं बिन्दु-मात्रा-अर्धमात्राच्युतानि क्रिया-कारक-पाद-संज्ञा-संबन्ध गुप्तानि प्रश्नोत्तर-प्रहेलिका-गोमूत्रिका-तुरगपदादीनि कण्ठाभरणादिग्रन्थेभ्यः ज्ञेयानि।

**सङ्केतः (रुय्यकः)**

हे साररसासार उत्कृष्टाभिलाषस्य वेगवद्वर्ष आयताक्ष विस्तीर्णनयन सात सुखस्वभाव अवाताचपल अतक्षर अतक्षम् [अनल्पं] राति वृद्धिं ददाति यस्तादृश "तक्षू त्वक्षू तनूकरणे" तव रक्षतः सतः सा रसा भूः अतासाऽस्तु नास्ति तास उत्क्षेपो यस्य, "तसू उत्क्षेपे।" क्षत आयः अर्थागमोपायो यैस्तान् स्यति विनाशयति। अरक्षतामशोभना भूः, तव तु रक्षतः (अवतु रक्षतु) ईदृक् अस्तु इति। "तु" शब्दो व्यतिरेके। अत्र न केवलमधोऽधः

क्रमेण स्थितानां पादानां प्रातिलोम्येन व्यवस्थिर्तिर्यावदर्द्धभ्रमस्यापि। तत्र हि प्रथमादिपादाद्याक्षरणि चत्वारि चतुर्थादिपादान्त्याक्षराणि चेति प्रथम। पादः। प्रथमादियावद्द्वितीयाक्षराणि चत्वारि चतुर्थादिपादसप्तमा (सप्ता) क्षराणि चेति द्वितीयः पादः। प्रथमादियावत्तृतीयाक्षराणि एवं चतुर्थादियावत् षष्ठाक्षराणि तृतीयः पादः। चतुर्थपञ्चमौ चतुर्थः पादः। इह च सर्वं तदेवोपलभ्यते इत्यर्द्धभ्रमस्याप्यवस्थानात् सर्वतोभद्रम्।

### बालचित्तानुरञ्जनी

सर्वतोभद्रमुदाहरति रसेति। हे रसासार उत्कृष्टः यो रसः शृङ्गारः, तस्य आसारः वेगवद्वर्षः आयताक्ष विस्तीर्णनेत्र। सात सुखमास्स्व। अवात अचल अतक्षर अतक्षं बुद्धिं राति ददाति तस्य [सम्बुद्धौ] हे राजन्! रक्षतस्तव तु सा प्रकृतरसा भूः क्षतायसा क्षतः आयः अर्थावगमो यैः शत्रुभिस्तान् स्यति नाशयति या सा। सातावात सातं नाशितं अवातं अज्ञानं येन तादृश। न विद्यते तास उपक्षयो यस्याः सा। अस्तु भवतु। तक्षू त्वक्षू तनूकरणे। तसु उपक्षये। अरक्षतः अशोभनास्तु रक्षतस्तव तु एवं विधास्तु इति तु शब्दार्थः। रसे आसां आशिकां [?] ददाति रसा [?] अक्षिणी यस्य तस्य संबोधनम्। सारसायताक्ष, सातं नाशितं अवातमज्ञानं येन तस्य संबोधनम्। सातावात सातेन सुखेन आवातः प्राप्त इति वा। ननु अर्थभ्रमादयोऽन्येऽपि भेदाः सन्ति ते किमिति न प्रदर्श्यन्त इत्यत आह संभविन इति।

### काव्यादर्शः

'रसे' ति। कोऽपि राजानमाह, यथा—'हे सार तव रक्षतः पालयतः सा रसा पृथ्वी। सारसास्तु। आयताक्षविस्तीर्णनयन। क्षत आयोऽर्थागमो यैस्तान् स्यति विनाशयति। सातं सुखं। अवति रक्षति अतति नित्यमुद्यमं भजते। नास्ति तास उपक्षयो यस्याः। तक्षणं तक्षस्तनूकरणं न तक्षोऽतक्षो वृद्धिस्तां राति'। 'रक्षतस्तु' इति 'तु' शब्दो व्यतिरेके; अत्र न केवलमधोऽधः क्रमेण स्थितानां पदानां प्रातिलोम्येनापि स्थितिर्यावद् अर्धभ्रमस्यापि। तत्र हि प्रथमादिपादाद्यक्षराणि चतुर्थतृतीयद्वितीयप्रथमपदाष्टमाक्षराणि च प्रथमाः प्रथमपादः। प्रथमादिपादद्वितीयाक्षराणि च चतुर्थादिपादसप्तमाक्षराणि च द्वितीयपादः। एवं तृतीयषष्ठाक्षरैस्तृतीयः पादः, चतुर्थपञ्चमैश्चतुर्थः पादः। इह च सर्वं [त]दैव उपलभ्यत इति अर्धभ्रमस्याप्यवस्थानात् सर्वतोभद्रम्। यदुक्तम्—

तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः॥

अन्ये इति, मुशलधनुर्बाणशक्तिहलशूलस्वस्तिकनागपाशचक्रादयः। स्वरव्यञ्जनस्थानगतिनियमेऽन्येऽपि चित्रप्रकाराः संभवन्ति। तत्र स्वरनियमे, यथा—

**जय मदन—गजदमन वरकलभगतगमन**

**गतजननगदमरण भवभयगतरशरण। ह्रस्वैकस्वरम्॥**

ह्रस्वत्रिस्वरं, यथा—

**क्षितिविजितस्थितिविहितव्रतरतयः परगतयः।**

**उरु रुरुवुर्गुरु दुधुर्वुर्युधि कुरवः स्वमरिबलम्॥**

एवं दीर्घैकस्वरादिनियमेऽपि। व्यञ्जनचित्रं 'ननो न नुन्न' इत्यादौ। एवं द्वित्र्यादिव्यञ्जननियमोऽपि 'भूरिभिर्भरिभिः' इत्यादौ। स्थानमुरः—कण्ठादि तच्चित्रं, यथा 'अगगाङ्गागककाका' इत्यादौ कण्ठस्थानम्। एवं द्वित्र्यादिस्थाननियमेऽपि। गतिर्गतप्रत्यागतादिका, तच्चित्रं, यथा—

**वारणागगभीरा सा साराऽभीगगणारवा।**
**कारितारिवधा सेनाऽनासेधा वरितारिका॥**

'करिगिरिदुर्विगाहा उत्कृष्टा। अभीगानां अप्राप्तभयानां भटसमूहानां जयध्वनिना युक्ता। विहितशत्रुक्षया। स्वार्थेणिग्। अविद्यमान आसेधा यस्याः। 'मया सह युध्यध्वम्' इति वरिताः प्रार्थिता अरयो यया। सा यदूनां सेना द्विषतां बलं प्रयाता इति पूर्वेणाभिसंबन्धः। अत्र अयुक्पादयोर्गतिर्युक्पादयोः प्रत्यागतिरर्धे, ते एवेति पादगतप्रत्यागमः। एवं अर्धगतप्रत्यागतश्लोकगतप्रत्यागतार्धभ्रमतुरगपदगोमूत्रिकादीनि। तथा मात्रार्धमात्राबिन्दुवर्णगतत्वेन च्युतं चतुर्धा। तत्र मात्राच्युतं, यथा—

**नियतगम्यदृश्यं भवति किल त्रस्यतो रणोपान्तम्।**
**कान्तो नयनानन्दी बालेन्दुः खे न भवति सदा॥**

अत्र मात्राया इकाररूपायाश्च्यवनेऽन्य एवार्थो भवति। यथा कलत्रस्य तोरणनिकटं राजपथो गन्तुं द्रष्टुं वा अशक्यो भवति, कुलवधूत्वात्। वेश्या हि हट्टं गच्छन्ति च। अत्र च मात्रापगमेऽपि अकारान्तत्वावस्थितिरुच्चारणार्थत्वाद् अकारस्य मातृकायामपि। तथा 'न्दु' इत्यत्र नकारो व्यञ्जनं च्युतमित्यर्थमात्राच्युतमपि। तथा च सत्यर्थान्तरं स्यात्। यथा काचित् सखीमाह—'हे मुग्धे कान्तो वल्लभो नयनानन्दी क्लेशेन भवति, तस्माद् मा एनं तिरस्कार्षी'रिति शेषः। बिन्दुच्युतं यथा—'सहंसानली तारा' इति 'सह कासेन विकासेन' इत्यपि। वर्णच्युतं यथा—

**सितनृशिरः स्रजा [च] रविमौलिशिरोमणिभूषणैस्तया**
**शिखिरुचिरार्धदृक् पृथुललाटतटे तिलकक्रिया च सा।**
**स्फुटविकटाट्टहासललितं वदनं स्मितपेशलं च तद्**
**अभिनवमीश्वरो बहति वेषमहो तुहिनाद्रिजार्धयुक्॥**

अत्र गौरीश्वरवर्णने सिद्धिच्छन्दसि प्रतिपादमाद्याक्षरद्वयपातेऽन्त्याक्षरसप्तकच्युतौ चेश्वररूपवर्णनमेव प्रमिताक्षरावृत्तेन, यदि वा आद्याक्षरसप्तकच्युतौ अन्त्याक्षरद्वयपाते च गौरीवर्णनं द्रुतविलम्बितवृत्तेन।

गूढं च क्रियाकारकसंबन्धपादविषयत्वेन चतुर्धा ज्ञेयं, यथा—

**पिबतो वारि तवास्यां सरिति शरावेण पातितौ केन।**
**वारि शिशिरं रमण्या रतिखेदादपुरुषस्येव॥'**

'अपुरुषस्य पथे' ति । क्रियात्र गोपिता । शीतलं जलं प्रातरेव अपुः पपुरिति प्रकटम् । कोऽपि कंचि-दाह—शरावेण पात्रेण पिबतः केन पातितौ । कौ इति साकाङ्क्षत्वात् कर्मात्र गूढमिति । कारकगूढमपि—हे एण शरौ बाणौ इति प्रकटम् ॥

संबन्धगूढं, यथा—

**न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि।**
**अस्थानरुदितैरेभिलरमालोहितेक्षणे ॥**

**अत्र 'न मे चेत आगोरसाभिज्ञम्' इति संबन्धगूढम् ॥**

पादगूढं, यथा—

**द्युवियद्गामिनी तारसंरावविहितश्रुतिः । हैमेषु माला शुशुभे ॥**

अत्र विद्युतामिव संहतिरित्यस्य गूढत्वम् । एवं प्रश्नोत्तरप्रहेलिकाश्च । यथा—

**उद्यन् दिवसकरोऽसौ किं कुरुते कथय मे मृगायाशु।**
**कथयानिन्द्राय तथा किं करवाणि क्षणि तु कामः ॥**

अन्यः प्रतिप्रश्नपूर्वमुत्तरमाह—

**अहिणवकमलदलारुणि णमोणुफुरन्तेण केण !**
**जाणिज्जइ तरुणीअण हुणिद्धा भणु अहरेण ॥**
**मूर्खत्वात् पाशवेन इन्द्रस्तस्मै मनुष्याय मह्यम् ॥**

'स्निग्ध भणे' त्यन्तस्य प्रश्नत्रयोस्योत्तरम् । 'अहरेणे' ति हे एण अहः । अहरेऽनिन्द्र अण शब्दं कुरु । 'अधरेणे' ति, एतदनेकभाषमनेकवक्तृकं च ॥

प्रहेलिका, यथा—

**पयस्विनीनां धेनूनां ब्राह्मणः प्राप्य विंशतिम्।**
**ताभ्यो दश स विक्रीय गृहीत्वैकां समागतः ॥**

धेन्वा ऊनाम् । एवमन्येऽपि प्रकारा अभ्यूह्याः ।

## विवेकः

रसासारेति—'हे साररसासार उत्कृष्टाभिलाषस्य वेगवद्वर्ष, आयताक्ष विस्तीर्णनयन, सात सुखस्वभाव, अवात अचपल, अतक्षर त्रक्षु त्वक्षू तनुकरणे । अतक्षं वृद्धिं राति ददाति यस्तथाभूत, तव रक्षतः सतः सा रसा भूः । अतासा नास्ति तास उत्क्षेपो यस्याः । तसु उत्क्षेपे । [क्षतायसा] क्षत आय अर्थागमोपायो यैस्तान् स्यति विनाशयति । अस्तु भवतु । अरक्षतामशोभना भूः । तुशब्दो व्यतिरेके । अत्र न केवलमधोऽधः क्रमेण स्थितानां पादानां प्रतिलोम्येन व्यवस्थितिर्यावदर्धभ्रमस्यापि । तत्र हि प्रथमादिपादाक्षराणि चत्वारि,

चतुर्थतृतीयप्रथमापादान्त्याक्षराणि चेति प्रथमः पादः । प्रथमादि यावत् द्वितीयाक्षराणि चत्वारि चतुर्थादिपादसप्तमाक्षराणि चेति प्रथमः पादः । प्रथमादि यावत् द्वितीयाक्षराणि चत्वारि चतुर्थादिप.दसप्तमाक्षराणि चेति द्वितीयः पादः । प्रथमादि यावत् तृतीयाक्षराणि चतुर्थादि यावत् षष्ठाक्षराणि चेति तृतीय पादः । चतुर्थपञ्चमैश्चतुर्थः पादः । इह च सर्वं तदेवोपलभ्यत इत्यर्धभ्रमस्याप्यवस्थानात् सर्वतोभद्रम् ॥' (रु. स. ५९-६० पृ)

सम्भविनोऽप्यन्य इति यथा—स त्वं मानविशिष्टमाजिरभासादलम्ब्य भव्यः पुरो लब्धाऽघक्षयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मुदा । मुक्त्वा काममपास्तभीः परमृगव्याधः सनादं हरेरेकोघैः समकालमभ्रमुदयारोपैस्तदा तस्तरे (शिशु. व. १९/१२०) ॥ श्रीवत्सो रोमावर्तन्तस्य भूमिर्वक्षः, हरेर्नादं सिंहनादं मुक्त्वेति सम्बन्धः । अत्र मुक्त्वा काममित्यास्तरणक्रियाविशेषणम् । अनेन श्लोकेन कविकाव्यनामाङ्कितषडक्षरचक्रप्रस्तारः । तथाहि प्रथमपादस्य नवाक्षराणि धारारूपतयाऽधोऽधःक्रमेण न्यसेत् । ततो नाभौ 'र' शब्दसाधारणं ततोऽधोऽधः क्रमेनैवापराणि नवाक्षराणीति प्रथमपादेनारद्वयम् । तत एतद्दक्षिणपार्श्वे तिर्यगावर्तेनेव क्रमेण द्वितीयपादं साधारणशब्दसहितं विन्यास्यारद्वयम् । एवमेतद्दक्षिणे तिर्युगुर्ध्वक्रमेण न्यस्तेन तृतीयपादेनारद्वयमित्येवं षड़राः । ततस्तृतीयपादाद् 'परे' शब्दं साधारमारभ्यारमध्ये चतुर्थपादस्य यथाक्रमं द्वितीयतृतीयौ पञ्चमषष्ठावष्टमनवमावेकादशद्वादशौ चतुर्दशपञ्चदशौ सप्तदशाष्टदशौ वर्णौ विन्यसेत् । तेन समस्तश्चतुर्थपादो नेमिर्भवति । ततो धारास्थितपादत्रये प्रतिपादं चक्रक्रमेण तृतीयाक्षरग्रहणात् षष्ठोच्चारणाञ्च माघकाव्यमिदं शिशुपालवधमिति कविकाव्यनामलाभः । एवमन्येऽपि चित्रप्रकारा उन्नेयाः । न तु काव्यरूपतां दधतीति काव्यस्य निरतिशयानन्दसम्पादकत्वात् ।

इह जातिगतिरीतिप्रभृतयः शब्दालङ्काराश्चतुर्विंशतिरिति भोजराजः (स. क. आ. २/३-५) (हेम. काव्य. अ. विवेक २९५ पृ) । तत्र संस्कृतप्राकृतादिर्जातिः । गद्यपद्यमिश्रादिर्गतिः । विदर्भादीनां वाक्यविरचनावर्त्म रीतिरित्यादीनि लक्षणानि । तथाचोक्तम्—इह शिष्टानुशिष्टानां शिष्टानाञ्चैव सर्वथा । वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥ इदमन्ध तमः कृत्स्नं जायते भुवनत्रयम् । यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ (का. आ. १/३/४) गतयो या इमास्तिस्त्रो द्रुतमध्यविलम्बिताः । लयान् पदगते प्राहुस्तान् गीते गीतवेदिनः ॥ रीतयो वाङ्मयप्राणा हृदयं तस्य वृत्तयः । रचनाऽऽदित्रयं मूर्तिरनुप्रासस्तु जीवितम् ॥ उक्तयो दैवतं छायामुद्राभणितयो भृतिः । पठितिः श्रव्यता प्रेक्षाऽभिनयोऽध्ययनं धृतिः ॥ श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रियम् । वाकोवाकेन कृष्यन्ते मनांसि महतामपि ॥ विनयेन विना का श्रीः का निशा शशिना विना । विना यमकचित्राभ्यां कीदृशी वाग्विदग्धता ॥ गूढ़ागूढ़चतुष्पादा वादिनां वादशान्तये । प्रश्नोत्तरं दग्धसुष्टि विदग्धमुखमण्डनम् ॥ क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे । परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥ (का. आ. ३/९७) यथामति यथाशक्ति यथोचित्यं यथारुचि । कवेः पात्रस्य चैतासां प्रयोग उपपद्यते ॥ (स. क. आ. २/२६) यादृग्गद्यविधौ बाणः पद्यबन्धे न तादृशः । गत्यां गत्यामियं देवी भिन्नरूपा सरस्वती ॥ संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव वाऽपरः । शक्यो रचयितुं पाश्चिदपभ्रंशेन जायते ॥ (स. क. आ. २/१०) पैशाच्या शोरसेन्याऽन्यो मागध्याऽन्यो निबध्यते । द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन ॥ (स. क. आ. २/११) कश्चिद्गद्येन पद्येन कश्चिन्मिश्रेण शक्यते । निबद्धः कश्चन द्वाभ्यां कश्चित्तु पथिभिस्त्रिभिः ॥ संस्कृतेनैव केऽप्याहुः प्राकृतेनैव केचन । साधारण्यादिभिः केचित् केचन म्लेच्छभाषया (स. क. आ. २/७) ॥ न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् । संकीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥ (स. क. आ. २/८) वदन्ति संस्कृतं देवाः प्राकृतं किन्नरादयः । पैशाचाद्यं पिशाचाद्या मागधं हीनजातयः ॥ (स. क. आ.

२/९) केऽभूवन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः । काले श्रीसाहसाङ्कस्य के न संस्कृतवादिनः ॥ (स. क. आ. २/१५) नात्यन्तं संस्कृतेनैव नात्यन्तं देशभाषया । कथां गोष्ठीषु कथयन् लोके बहुमतो भवेत् ॥ (स. क. आ. २/१२) शृण्वन्ति लटभं लाटाः प्राकृतं संस्कृतद्विषः । अपभ्रंशेन तुष्यन्ति स्वेन नान्येन गुर्जराः ॥ (स. क. आ. २/१३) ब्रह्मन् विज्ञापयामि त्वां स्वाधिकारजिहासया । गौडस्त्यजतु वा गाथामन्या वाऽस्तु सरस्वती ॥ (का. मी. ३३ पृ. स. क. आ. २/१४) द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव । संस्कारपूतेन वरं वरेण्यं वधूं सुखार्थाभि-निबन्धनेन ॥ (कु. सं. ७/९०) एतद्रोम्ला (?) सुरभिकुसुमं ग्राम्यमेतन्न धेयं धत्ते शोभां विरचितमिदमानमेतदस्य (?) । मालाकारो रचयति यथा साधु विज्ञाय कालं योज्यं काव्येष्ववहितधिया तद्वदेवाभिधानम् ॥ गिरः श्रव्या दिव्याः प्रकृतिमधुराः प्राकृतधुराः सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम् । (विभिन्नाः पन्थानः किमपि कमनीयाश्च त इमे निबद्धाः किं यत्तेषां स खलु निखिलेऽस्मिन् कविवृषा ॥) विदग्धानामीष्टे मगधमथुरावासिभणितिर्निबद्धा यस्तेषां स इह कविराजो विजयते ॥ (बा. रा. १/११; स. क. आ. २/१६)

## दीपिका

हे साररसासार ! उत्कृष्टरसाभिलाषस्य वेगवद्दृष्टे आयताक्ष ! दीर्घनयन ! सात ! सुखमय ! अचपल ! अतक्षम् अतनूकृतिं रातीति तव भवतो रक्षतः । अस्तु भवतु । रसा भूः । अतासा अनुत्क्षेपा । क्षतः अस्तः आयो धनागमो यैस्तानस्यति नाशयतीति क्षतायसा । इदं सर्वतोभद्रम् । प्रतिपादं प्रतिलोमेऽपि स एव पाठः ।

अधः क्रमेण पङ्क्तिचतुष्टये कृतेऽधः क्रमेण पाठे प्रथमादि प्रथमैरुपर्य्युपरिपाठे तुर्याद्यन्तिमैः प्रथमः पादः । एवं द्वितीयसप्तमैः द्वितीयस्तृतीयषष्ठैस्तृतीयश्चतुर्थपञ्चमैस्तुर्य इत्यादिवैचित्र्यमत्र प्रतिपादितम् । एवं प्रतिपादं वर्णचतुष्टयद्वयस्याध उपरि क्रमेणावृत्तावर्धभ्रमोऽपि ।

सम्भविनोऽपीति ।

**तच्चक्रखड्गमुसलैर्बाणासनशूलशक्तिहलैः ।**
**चतुरङ्गपीठविरचितरथतुरगगजादिपादपीठैः ॥**

**अनुलोमप्रतिलोमैरर्धभ्रममुरजसर्वतोभद्रैः ।**
**इत्यादिभिरन्यैरपि वस्तुविशेषाकृतिप्रभवैः ॥**

**भेदैर्विभिद्यमानं संख्यातुमनन्तमस्मि नैतदलम् ।**
**तस्मादेतस्य मया दिङ्मात्रमुदाहृतं कवयः ॥**

**यन्नाम नाम यत्स्यात्तदाकृतिर्लक्षणं मतं तस्य ।**
**तल्लक्ष्यमेव दृष्ट्वावधार्यमखिलं ततोऽन्यदपि ॥"**

इति रुद्रटोक्तदिशा शक्तिमात्रं कवेस्तद्विषये नैपुण्यमात्रम्, न तु काव्यरूपतां दधति, अत्यन्तनीरसत्वात् ।

## दर्पणः

हे सार रसासार, उत्कृष्टस्याभिलाषस्य वेगवृष्टे, आयताक्ष दीर्घनयन, सा तं मुखं, अयः अवात अचपल अतक्षमतानुकृतिरासीद ददांसीत्यतक्षरतव स्त्वतंक्षरसारसारसाभूः । अत साऽनुपक्षे पातु अत आयः धनागमो यैः तानस्यति नाशयतीति । क्षतायसा । इह सर्वतोभद्रे प्रतिपादं प्रतिलोमेऽपि स एव पाठः । अधः क्रमेण च पंक्तिचतुष्टये कृतो अबोधः क्रमेण पाठे प्रथमादि प्रथमैरुपर्युपरि परिपाठे, तुर्याद्यमैः प्रथमपादः । एवं द्वितीयसप्तमे द्वितीयतृतीयषष्ठे तृतीयचतुर्थपञ्चमैस्तुर्यः इत्यादि वैचित्र्यम् ।

अत्र प्रतिपादं वर्णचतुष्टयतया ध उपरि क्रमेणावृत्तावद्धभमोऽपि अनेके चक्रतुरगगजादिबन्धा न काव्यस्वरूपतां दधाति नीरसत्वादिति भावः ।

## साहित्यचूडामणिः

हे साररसासार उत्कृष्टशृङ्गारादिप्रसरणातिशय ! आयताक्ष विशाललोचन ! सात सुखस्वभाव ! अवात अतरळ ! अतक्षर तक्ष्णोतिस्तनूकरणार्थः, तक्षं राति ददातीति तक्षरः तद्व्यक्तिरिक्त ! क्षतः खण्डितः आयो वार्तायतिर्यैः तानरातीन् स्यति नाशयतीति क्षतायसा अतासा अनुप्रक्षया सा प्रक्रान्ता रसा भूमिः तव रक्षतस्त्रायमाणस्य अस्तु यथोक्ता भवत्वित्याशीः । इदं सर्वतोभद्रम् ।

अत्र चित्रबन्धे न निर्बन्धो न्याय्य इत्याह—सम्भविनोऽपीति ।

## सम्प्रदायप्रकाशिनी

रसासारेति । रसा भूः । सारस्योत्कृष्टस्य रसस्य आसार धारासम्पातभूत । सा तादृशी । आयताक्ष दीर्घनयन । क्षतायसा शमितक्लेशा । सात मुखात्मक । अवात अचपल । तव ते । अतासा 'तसु उपक्षये' अनुपक्षया । रक्षतस्तु अवतः पुनः । अस्तु भूयात् । 'तक्षू तनूकरणे', अतक्षं वृद्धिं रातीत्यतक्षर । हे साररसासार आयताक्ष सात अवात अतक्षर रक्षतस्तव तु सा क्षतायसा रसा अतासास्तु । इदं सर्वतोभद्रम् । यत्र पादैश्चतुर्भिः पङ्क्तिचतुष्कम् । अनुलोमप्रतिलोमपाठाभ्यां सैव पादस्थितिः । चतुर्ष्वपि पादेषु प्रथमपादादारभ्य आद्यैरधोधश्चतुर्भिः अन्त्यपदादारभ्योत्तरोत्तरैरन्त्यैश्चतुर्भिः प्रथमः पादः । एवं द्वितीयैः सप्तमैश्च द्वितीयः । तृतीयैः षष्ठैश्च तृतीयः । चतुर्थैः पञ्चमैश्च चतुर्थः । क्रमव्युत्क्रमाभ्यां च श्लोकस्य द्विर्लेखे (?) प्रथमैरक्षरैः प्रथमः पादः । तथा द्वितीयतृतीयचतुर्थैर्द्वितीयतृतीयचतुर्थाः । तथाष्टमैराद्यः । सप्तमषष्ठपञ्चमैर्द्वितीयतृतीयचतुर्थाः इत्यादि वैचित्र्यं ज्ञेयम् ।

एवं चक्रादयो बन्धविशेषा बहवः सम्भवन्ति । तेषु शक्तिमत्त्वमात्रप्रदर्शनाय कविना दिङ्मात्रेण रन्तव्यं, न तु तत्र काव्यधीः कार्येत्याह—सम्भविनोऽप्यन्य इत्यादि ।

## मधुमती

रसासारेति । तव रक्षतः पालयतः रसा पृथिवी वक्ष्यमाणविशेषणवतीत्यर्थः । रसासार पृथिवीश्रेष्ठ ! इति सम्बोधनम् । तथा सारसायताक्ष पद्मदीर्घलोचन ! इत्यपि सम्बोधनमेव । रसा कीदृशी ? क्षतायसा 'अयः शुभावहो

विधिः ।' क्षतः अयः येन स तथा, तं स्यति नाशयति इति क्षतायसा । शुभावहविधिमुक्तेति यावत् । तथा तासः, उपक्षयः नास्ति यस्याः ला अतासा । 'तसु उपक्षये' इति धात्वनुसारात् । सातावात सातं नाशितं अवातं = अज्ञानं येन तादृश ! 'वा गतिगन्धनयोः' इति धातोः गत्यर्थतया 'गत्यर्थाः सर्वे ज्ञानार्थाः' इति न्यायात् । अतक्षर अतक्षं = अनल्पं राति = ददातीति, प्रचुरपद ! 'तक्षू त्वक्षू तनूकरणे' इति धात्वनुसारात् । इदं च संबोधनमेव ।

एते च यथाक्रमं खड्ग-मुरज-पद्म-सर्वतोभद्रबन्धाः । एषां उद्धरणप्रकारः काव्यदर्पणे अनुसन्धेयः ।

## विस्तारिका

रसासारेति सम्बोधनम् । हे पृथवीश्रेष्ठ ! रक्षतस्तव रसाऽस्तु, सारसं पद्मं तद्वद् दीर्घनेत्र ! क्षतो यः शुभावहो विधिर्यस्य तं स्यतीति रसाविशेषणम् । यद्वा धनागमः आयः क्षतो नष्टः, स एव येषां तान् स्यति नाशयति अतासा न विद्यते तास उत्क्षेपो यस्याः, अचलेत्यर्थः । अवात अचपल ! ज्ञानं तनूकरणं तक्षस्तं राति प्राप्नोति तदितरः । तुः पुनरर्थे ।

र सा सा र र सा सा र । सा य ता क्ष क्ष ता य सा ।

सा ता वा त त वा ता सा । र क्ष त स्त्व स्त्व त क्ष र ।

इति पदच्छेदः । सर्वतोभद्रबन्धोऽयम् ।

अत्र सर्वतोभद्रे प्रतिपादं प्रतिलोममपि स एव पाठः । अधःक्रमेण पङ्क्तिचतुष्टये कृतेऽधः क्रमेण पठितैः पदानां प्रथमैर्वर्णैरूर्ध्वक्रमेण पठितैरष्टमैश्च प्रथमः पादः । एवमूर्ध्वक्रमेण पाठे द्वितीयैरधःक्रमेण च सप्तमैर्द्वितीयः, तृतीयैः षष्ठैश्च तृतीयः चतुर्थैः पञ्चमैश्चतुर्थः, क्रमाभ्यां पाठे प्रथमैः प्रथमः पादः, द्वितीयादिभिर्द्वितीयादिः । एवं प्रथमपादेऽप्यनुलोमाभ्यां प्रथमः, द्वितीयादौ द्वितीयादिः । अयमर्धभ्रमणोऽपि ।

सम्भाविनोऽपीति । तदुक्तं रुद्रटेन—

**तच्चक्रखड्गमुसलैर्बाणासनशूलशक्तिहलैः ।**
**चतुरङ्गपीठविरचितरथतुरगगजादिपादपीठैः ॥**

**अनुलोमप्रतिलोमैरर्धभ्रममुरजसर्वतोभद्रैः ।**
**इत्यादिभिरन्यैरपि वस्तुविशेषाकृतिप्रभवैः ॥**

**भेदैर्विभिद्यमानं संख्यातुमनन्तमस्मि नैतदलम् ।**
**तस्मादेतस्य मया दिङ्मात्रमुदाहतं कवयः ॥**

**यन्नाम नाम यत्स्यात्तदाकृतिलक्षणं मतं तस्य ।**
**तल्लक्ष्यमेव दृष्ट्वावधार्यमखिलं ततोऽन्यदपि ॥ इति ।**

कवेस्तद्विषयकं नैपुण्यं शक्तिः, न तु काव्यस्वरूपतामिति । अत्यन्तनीरसत्वादिति ।

एकार्थतेवेति । वस्तुतो नैकार्थत्वमापाततस्तथा भानम्, अन्यथा पौनरुक्त्यापत्तेः ।

अर्थान्तरसंक्रमितवाच्येऽतिप्रसङ्गवारणाय विभिन्नेत्यादि । विभिन्नो विजातीय आनुपूर्वी । तत्र च नानुपूर्वीभेद इति नातिप्रसङ्गः ।

### सारबोधिनी

रसासारेति । संबोधनम् । हे पृथ्वीश्रेष्ठरक्षतस्तव रसा अस्तु । सारसः पक्षिभेदः । जलजमिति वा । तद्वद्दीर्घनेत्रक्षतः अयं शुभावहो विधिः यस्य तं स्यातीति रसाविशेषणम् । यद्वा धनागमः आयः, यद्वा क्षतायसा क्षतलौहयुद्धाभावात् । अतासा न विद्यते तास उपक्षयो यस्याः । सातं नष्टं आवातं अज्ञानं यस्य । वागतीत्यादिधात्वनुसारात् सर्वेगत्यर्था ज्ञानार्था इति । तनूकरणं तक्षणं राति प्राप्नोति । तदितरस्तु पुनरर्थे । अत्र प्रतिपादं प्रतिलोमे स एव पाठः । तथा च क्रमेण पंक्तिचतुष्टये कृते उपर्यधो वा क्रमेण पठितैश्चतुर्णा पादानां चतुर्भिः प्रथमैर्वर्णैरष्टमैश्च प्रथमः पादः, द्वितीयैः सप्तमैश्च द्वितीयः, तथा तृतीयैः षष्ठश्च तृतीयः, चतुर्थैः पञ्चमैश्च चतुर्थ इति सर्वतोभद्रसिद्धिः ।

संभविनोऽन्येऽपीति । तदुक्तमग्निपुराणे—

**"बाणबाणासनव्योमखड्गमुद्गरशक्तयः ।**
**मृदङ्गसप्तश्रृङ्गाटदम्भोलिमुशलांकुशाः ॥" इत्यादि ।**

### काव्यप्रदीपः

सर्वतोभद्रं यथा—

**'रसासार रसा सारसायताक्षक्षतायसा ।**
**सातावात तवातासा रक्षतस्त्वस्त्वतक्षर ॥'**

अस्य पादचतुष्टये पूर्ववत्पङ्क्तिचतुष्टयेन लिखिते प्रतिलोमादिपाठेन स एव श्लोकः । संभविनोऽप्यन्ये भेदा न दर्शिताः । एते हि शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधति अतिनीरसत्वादिति ।

### काव्यप्रकाशखण्डनम्

**रसासार रसा सारसायताक्ष क्षतायसा ।**
**सातवात[त] वातासा रक्षतस्त्वस्त्वतक्षर ॥**

सर्वतो भद्रः । अस्यार्थः—रसासारेति सम्बोधनम् । हे पृथ्वि[सार]! रक्षतस्तव रसाऽस्तु । सारसः पक्षिभेदः जलजमिति वा तद्वद्दीर्घनेत्र ! क्षतः अयः शुभावहो विधिर्यस्य तं स्यतीति रसाविशेषणम् । सातवात सातं नष्टं, अवातं अज्ञानं अज्ञानं यस्य । वा गतीत्यादिधात्वनुसारात्, ये गत्यार्थास्ते ज्ञानार्थाः । तनूकरणं तक्षः तं राति प्राप्नोति तदितर ! तु पुनरर्थे । एवमन्येऽपि खड्गबन्धादयोऽनुसत्तव्याः ।

### आदर्शः

सर्वतोभद्रबन्धमाह—रसासारेति । हे रसासार भूमौ मुख्य, हे सारसायताक्ष पद्मदीर्घनयन, हे सातवात, साते सुखे अवात अचञ्चल अलोलुप इति यावत्, हे अतक्षर, अतक्षम् अनल्पं रासि ददासि तादृश, तव तु रसा पृथ्वी

अतासा अनुपतापा अस्तु । 'सारसं सरसीरुहम्' इति, 'शर्म-सात-सुखानि च' इति कोष: । 'तक्षू त्वक्षू तनूकरणे'; 'रा ला दाने' 'तसु उपतापे' इति धातव: तव कीदृशस्य ? रक्षत: पालयत: । रसा कीदृशी ? क्षतायसा क्षतो नाशित आय उपचय: अय: शुभावहो विधिर्वा यैस्तान् स्यति अन्तं प्रापयति तादृशी, आयस्य अयस्य वा नाशकनाशिके-त्यर्थ: । अत्र पङ्क्तिचतुष्टयेन लिखनम्, अनुलोमप्रतिलोमाभ्यां प्रतिपादपाठ: । ऊर्द्धर्वाधश्च प्रतिपादवर्णै: पाठ: ।

**सुधासागर:**

सर्वतोभद्रं यथा—रसासारेति ।

हे रसासार पृथ्वीश्रेष्ठ हे सातवात सातं खण्डितमवातमज्ञानं यस्य वा, वातेर्गत्यर्थत्वात् ज्ञानार्थत्वम् । अतक्षमनल्पं राति ददातीत्यतक्षरस्तस्य सम्बोधनं हे अतक्षर दानवीर, 'तक्षू त्वक्षू तनूकरण' इति धातु: । रक्षत: रक्षाङ्कुर्वतस्तव रसा पृथिवी सारसायताक्ष क्षतायसा सारसं पद्मं तद्वदायते विस्तीर्णे अक्षिणी नेत्रे येषां ते च ते क्षतया: क्षतशुभावहविधयो दुर्जनास्तान् स्यति नाशयतीति तथोक्ता: । 'षोऽन्तकर्मणि' इति धातु: । तु पुन: अतासा अनुपक्षेपा 'तसु उपक्षेपे' धातु: । अस्तु स्थिरा निरुद्रवा भवत्वित्यर्थ: ।

अस्य पादचतुष्टये पङ्क्तिचतुष्टयेन लिखिते प्रतिलोमादिपाठेन स एव श्लोको भवति । लिखितं च तथैव—

र सा सा र र सा सा र

सा य ता क्ष क्ष ता य सा

सा ता वा त त वा ता सा

र क्ष त स्त्व स्त्व स क्ष र

सम्भविनोऽप्यन्ये भेदा न दर्शिता: । एते हि शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधत्यतिनीरसत्वादिति उक्तं चाग्निपुराणे ।

**बाणबाणासनव्योमखड्गमुद्गरशक्त्य: ।**
**मृदङ्गपद्मश्रृङ्गारदम्भोलिमुसलाङ्कुशा: ॥**

इत्यादिबन्धा ऊह्या: ।

(सू० १२२) पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ॥

एकार्थतेव

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन मुखे भासनं पुनरुक्तवदाभासः । स च

(सू० १२३) शब्दस्य

सभङ्गाभङ्गरूपकेवलशब्दनिष्ठः । उदाहरणम्—

अरिवधदेहशरीरः सहसा रथिसूततुरगपादातः ।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥ ३८९ ॥

---

**सङ्केतः**

आमुख इति । न तु परमार्थत इत्यर्थः । एतेन पर्यवसानान्यथात्वं लब्धम् ।

अरीति । अरिवधदा ईहा चेष्टा येषां शरिणां धानुष्काणां, तान् ईरयति यः स तथा । सूतः बन्दी, प्रेरितार्थोऽपि । स्थिरतायां अवनितलतिलकः अगः मेरुः सन् सतां आनत्या भाति । अत्र 'देह-शरीर' शब्दौ सार्थकौ सभङ्गौ सन्तौ, 'सारथि-सूत' शब्दौ सार्थकानर्थकौ सभङ्गाभङ्गौ सन्तौ, तथा 'दान-त्याग' शब्दौ अनर्थकौ सभङ्गौ सन्तौ, पुनरुक्तवदाभासौ ।

**सङ्केतः (रुय्यकः)**

[अरिवधदा] अरीणां वधं ददती ईहा येषां तादृशाः शरिणो धानुष्कास्तानीरयन्ति ये, सूता वन्दिनः, सतामानत्येत्युक्ततया स्थिरतायामगः पर्वततुल्यः । अङ्गनेष्वारामा उपवनानि । अत्रैकार्थतया प्रतिभातौ देहशरीरशब्दौ सार्थकौ सभंगो, सारथिसूतशब्दौ सार्थकावभंगौ, दानत्यागशब्दावनर्थकौ सभंगौ, अंगनारामा इत्येतावनर्थकावभंगी, देहशरीरवदिह शब्दयोर्भंगाभावात् ( भंगभावात्) ।

**बालचित्तानुरञ्जनी**

एवं विभजते स चेति । स पुनरुक्तवदाभासः सभङ्गशब्दनिष्ठः अभङ्गशब्दनिष्ठश्चेति द्विविधः । तत्राद्यमुदाहरति अरीति । अरीणां शत्रूणां वधं ददाति इति तादृशी ईहा इष्टं येषां ते तादृशाः ये शरीणः शरवन्तो धानुष्काः तान् ईरयति प्रेरयति । सहसा शीघ्रं रथिभिः रथारूढैः सूतं प्रेरितं तुरङ्गपादातं येन । सतां महापुरुषाणां आनत्या प्रणमेन उपलक्षितः । स्थिरतायां अगः पर्वतः अवनितलतिलकः राजा भाति । अत्र देहशरीरयोः सारथिसूतयोः दानत्यागयोः शब्दयोः निरर्थकयोः पुनरुक्तवदाभासः ।

### काव्यादर्शः

आमुखे इति, न पुनः परमार्थतः पर्यवसानेऽन्यार्थत्वमित्यर्थः । अर्थपौनरुक्त्यं दोषः; आमुख्यावभासनं तु पुनरुक्तवदाभासोऽलंकारः । अर्थपौनरुक्त्यादेवाश्रितत्वाद् अर्थालंकारोऽयमिति केचिद् इत्याशङ्क्याह—शब्दस्य [इति ।] शब्दालंकारोऽयमित्यर्थः ।

'अरिवधदा ईहा चेष्टा येषाम्, एवं भूतान् शरिणो धानुष्कान् ईरयति यः । सूतो बन्दी । सतामानत्या हेतुभूतया । स्थिरतायां सत्यामगः पर्वततुल्यः ।

### विवेकः

ग्रन्थकृता तु केषाञ्चिदेवानौचित्यचारतन्त्र्याद्दोषाभावमात्रपर्यवसायित्वं केषाञ्चिदुक्तष्वेवान्तर्भावः केषाञ्चित्तु रसप्रकाश एवावरणत्वमिति प्राचीनानामनुसारेण पञ्चैव लक्षिताः । यदाहुः । (रु. का. अ. २/१३) वक्रोक्तिरनुप्रासो यमकं श्लेषस्तथा चित्रम् । शब्दस्यालङ्काराः श्लेषोऽर्थस्यापि सोऽन्यस्तु ।

अधुना शब्दार्थालङ्कारयोः प्रघट्टान्तराल उभयालङ्कारममुं लक्षयते पुनरूक्तेति । यथा चास्यैवमन्येषामप्यलङ्काराणामुभयलङ्कारत्वं तदग्रे वक्ष्यति । लाटानुप्रासयमकाभ्यां भेदं दर्शयति विभिन्नेति । भिन्नरूपता च सार्थकादनर्थकाद्वा शब्दान्तरादित्याह भिन्नरूपेति । एकोऽर्थो ययोस्तावेकार्थौ तयोर्भाव एकार्थत्वं तेनेव न तु वस्तु) भूतेनेत्यर्थः । एतेन पर्यवसानेऽन्यथात्वं दर्शयति, इतरथा दुष्टत्वापत्तेः । न चैवमस्यादुष्टत्वमात्रं तदतिरिक्तस्य कविशक्तिव्युत्पत्तिप्रकाशकस्य वैचित्र्यस्य सद्भावात् । भिन्नरूपौ शब्दौ यत्रैकार्थत्वभ्रमात् पुनरुक्ताविव भासेते स पुनरुक्तवदाभासो नामालङ्कार इत्यर्थः । शब्दस्येति सूत्रप्रतीकः । केवल ग्रहणेनार्थनिरासः अरीत्यादि अरीनां वधं ददती ईहा येषां तादृशाः शरिणो धानुष्कास्तानीरयन्ति ये सूता वन्दिनः" (रु. सं. ६० पृ) ।

### दीपिका

एकार्थतेव । इवशब्देनाभासमात्रं प्रदर्श्यते । सार्थकानर्थकेति । यथायोगं वक्ष्यमाणभेदानुक्तप्रकारसूत्रणम् । मुखे आपाततः । स च इत्युत्तरसूत्रावतारः ।

अरिवधदा ईहा यत्र यथाभूतं शरीरमस्येति विग्रहः । साहसा बलेन सन्ति रथिनः सभङ्गे यथा—अरीति । सूतास्तुरगाः पादातानि च यस्य । सदा सर्वदा अनत्याऽगः । अनमनेन स्थिरतया, अगः पर्वतः । इत्थं प्राकरणिकार्थदेहादिप्रतिभासने पुनरुक्तमिव शरीरादिशब्दैः प्रतिभासते ।

### दर्पणः

संप्रति शब्दानुगतत्वेन शब्दान्नालङ्कारयोर्मध्ये [शब्दार्थालङ्कारयोर्मध्ये] पुनरुक्तवदाना [पुनरुक्तवदाभासं] लक्षयति । एकानुतेव [एकार्थतेव] आपाततः पुरुक्तवदवभासनात् शब्दानां सार्थकत्वानर्थकत्वे वक्ष्यमाणोदाहरणेषु स्पष्टः । स पुनरुक्तवदाभासः ।

शब्दस्येति । सूत्रम् । अस्यार्थः सभंगाभंगेत्यादि ।

अरीति । अविधदा [दग्ध] ईहा चेष्टा यस्य स तथाभूतं शरीरं यस्याः । सहसेत्यव्ययपदम् त्वरितार्थम् । तेन युक्ता मुखादयो यस्य, सदा सर्वदा, अनत्या अनमनेन, अगः, अत्र 'देह शरीर' इत्यत्र, सारत्यसूत [सारथिसूत] इत्यत्र च प्रप्रथमयोरनर्थकत्वं, द्वितीययोः सार्थकत्वं, नार्थत्याग इत्यत्र द्वयोरनर्थकत्वम् । अत्र देहादिशब्दानां शरीरादिपदयोगे पुनरुक्तवदाभासत्वं स्फुटमेव ।

### साहित्यचूडामणिः

पुनरुक्तवदिति । इवशब्देन लक्ष्यगतो वति प्रत्ययो व्याख्यायते । यत् सूत्रं "पुनरुक्तवदाभासमभिन्नवस्त्विवोद्भासि- [भिन्नरूपपदम्"---का० सा० सं० १/१] इति । सार्थकानर्थकेति । न खलु—

**तदाप्रभृति निस्सङ्गो नागकुञ्जरकृत्तिभृत् ।**
**शितिकण्ठः कालगलत्सतीशोकानलव्यथः ॥**

इत्यत्र शितिकण्ठशब्दापेक्षया पौनरुक्त्याशालिनः कालगलच्छब्दस्यार्थवत्ता शत्रन्ततया पदान्तत्वात् । नन्वन्यपौनरुक्त्यप्रतिभासपरमार्थत्वे किमित्येतद् दोषकक्ष्यामतिक्रम्य भूषणमध्यमध्यास्त इति चेन्न । तात्पर्यानुसरणे पौनरुक्त्यप्रतिभाया एव निवर्त्यमानत्वात् ।

एनं विभजते—स चेति ।

शब्दस्येति । शब्दालंकारतयोद्दिष्टत्वात् । सभङ्गाभङ्गेति श्लेच्छायया विभागः । उभयाश्रयतयापि वक्ष्यमाणत्वात् ।

अरिवधेति अरीणां शत्रूणां वधं ददती ईहा चेष्टा येषां तादृशां ये शरिणः शरवन्तः धानुष्काः तानीरयति प्रेरयतीति, सहसा सद्यः रथिभिः स्यन्दनारूढैः सूतं तुरगपादातं यस्य, सदानत्या सतां महापुरुषाणां प्रणामेन अगः स्थिरतायां स्थैर्ये पर्वतभूतः । अत्र देहशरीरयोः सारथिसूतयोर्दानत्यागयोः सभङ्गयोर्निरर्थकयोरेव पौनरुक्त्यप्रतिभा ।

### सम्प्रदायप्रकाशिनी

एवं शब्दालङ्कारान् लक्षयित्वा उभयालङ्कारं पुनरुक्तवदाभासं लक्षयति—पुनरुक्तवदाभास इत्यादि । विभिन्नाकारेषु सार्थकेषु अनर्थकेषु वा शब्देषु यदेतत् प्रमुखे पौनरुक्त्यावभासनं, स पुनरुक्तवदाभासः ।

स च शब्दस्य शब्दमात्रस्य सम्भवति ।

सभङ्गश्लेषनिष्ठमुदाहरति—अरिवधदेहेत्यादि । अरिवधं ददातीति अरिवधदा ईहा इच्छा येषां तादृशान् शरिणो धानुष्कान् ईरयति प्रेरयति सोऽयमवधदेहशरीरः । सहसा झटिति रथिभिः सूताः सुष्ठु प्रोतास्तुरगाः पादाताश्च येन सः । सदानत्या साधुभ्यः प्रणामेन । स्थिरतायामगः स्थैर्ये पर्वतः अवनितलतिलको भाति । अत्र देहशरीरसारथिसूतदानत्याग इत्येते एकार्थतयावभासन्ते । अत्र देहशरीरशब्दौ सभङ्गौ सार्थौ । सारथिसूतशब्दौ अभङ्गौ सार्थौ । तथा दानत्यागशब्दौ अनर्थकौ सभङ्गौ ।

## मधुमती

पुनरुक्तवदिति। 'यस्य न सविधे दयिता' इति लाटानुप्रासे अतिव्याप्तिवारणाय विभिन्नेति। तत्र तु समानशब्दस्यैवावृत्तेः न दोषः। घटः कलशः इत्यादावतिव्याप्तिवारणाय इवेति। इवशब्दवाच्यसादृश्स्य भेदघटि-तया तत्र च तदभावात्। न च 'नवतरुतरुरक्तः' इत्यादावव्याप्तिः। समानाकारशब्दानियतत्वस्य विवक्षितत्वात्। एवं च प्रतीयमानानेकपुनरुक्तत्वेन शाब्दत्वमिति स्थितम्। तत्र उभयोः सार्थकत्वे निरर्थकत्वे च अविशिष्टम्।

विभजते—सचेति।

तत्र सभङ्गमुदाहरति—अरिवधेति। अरीणां वधं ददातीति अरिवदधा ईहा चेष्टा येषां तादृशाः ये शरिणः शरवन्तः तान् ईरयति प्रेरयतीति अरिवधदेहशरीरः। सहसा शीघ्रं रथिभिः सूतैः वन्दिभिः: तुरगपदातैश्च वर्तते यः स तथा। यद्वा—रथिकप्रेरिताः तुरगपदाताः यस्य सः। सतां आनत्या प्रणामेनोपलक्षितः, स्थिरतायां अगः पर्वतः भूतलतिलकः भाति इति। अत्र देह-शरीपदयोः सारथिसूतपदयोः दानत्यागपदयोश्च आपाततः पौनरुक्त्यावभासः।

## विस्तारिका

एकार्थतेवेत्यत्र इवेन नौपम्यस्य प्रतिपादकता, किं त्वाभासीभूतैकार्थताया एवाभिन्नत्वम्, तेन विभिन्ने-त्यादौ विशेषणे स्त्रीत्वोपपत्तिः। तदाह—पुनरुक्तेत्यादि। पुनरुक्तस्येव पुनरुक्तवद् आभासो ज्ञानम्।

सार्थकानर्थकेति। वक्ष्यमाणलक्ष्यसमन्वयसूचनम्। मुखे आपाततः। स चेत्याभासानुकर्षणम्।

विभजते—शब्दस्य तथा शब्दार्थयोरिति। केवलेत्यनेनार्थव्यावर्तनम्, शब्दस्यैवान्वयव्यतिरेकानुविधा-नात्।

अरिवधेत्यादि। अवनितलतिलकः स्थिरतायां सदा भाति। अरिवधं ददातीति अरिवधदा ईहा यस्य तं शरीरिणं बाणवन्तम् ईरयति अपसारयतीति नृपविशेषणम्। सहसा बलेन विशिष्टः, रथिभिः रथाधिपैः सुष्ठु उताः सम्बद्धास्तुरगाः पादाताश्च यस्य। अनत्या अनम्रतया, अगः पर्वतः।

अत्र पदभङ्गेन सिद्धानां देहादिशब्दानामपाततः पुनरुक्तवदाभासनम्।

## सारबोधिनी

पुनरुक्तवदाभासं लक्षयति पुनरुक्तवदित्यादि। अर्थान्तरसंक्रमितवाच्ये यस्य मित्राणि मित्राणीत्यादा-वतिप्रसंगात् तद्वारणाय विभिन्नेति। विभिन्न आकारो विजातीयानुपूर्वीक इत्यर्थः। तत्र च नानुपूर्वीभेदः। सार्थका-नर्थकेति। वक्ष्यमाणलक्ष्यसमन्वयसूचनम्। मुखे आपातत इत्यर्थः। पुनरुक्तस्येव पुनरुक्तवत्। आभासो ज्ञानम्। विभजते शब्दस्येति, तथा शब्दार्ययोरिति च। केवलेनेत्यनेनार्थव्यावर्तनम्। अरिवधेति। अवनितलतिलकः स्थिरतायां सदा भाति। अरिवधदा ईहा चेष्टा येषां तादृशा ये शरिणस्तान् ईरयति। अपसारयेति। नृपविशेष-णम्[?] सहसा बलेन विशिष्टः सदा सहसा झटिति, रथिभिः सुष्ठु ऊताः संबद्धा तुरंगा अत्र पदभंगेन सिद्धानां देहादिशब्दानामापाततः पौनरुक्त्यभानम्।

### काव्यप्रदीपः

**पुनरुक्तवदाभासो विभिन्नकारशब्दगा।**

**एकार्थतेव।**

एकार्थतेति एकार्थत्वावभासयोग्यशब्दतेत्यर्थः। एतच्च यमकलाटानुप्रासयोरतिव्यापकमतो विशिनष्टि—विभिन्नाकारशब्दगेति।

स चार्थ द्विविधः—शब्दमात्रस्य शब्दार्थयोश्च। तयोराद्यमाह—

**शब्दस्य**

शब्दमात्रत्येत्यर्थः। अयमपि द्विधा—सभङ्गशब्दनिष्ठोऽभङ्गशब्दनिष्ठश्च। तयोराद्यो यथा—

**'अरिवधदेहशरीरः सहसारथिसूततुरगपादातः।**
**भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥'**

अत्र देहशरीरशब्दयोः पुनरुक्तत्वधीः। सभङ्गौ च सौ। अरिवधदा ईहा यत्र तादृशान् शरिण ईरयतीत्यर्थकत्वात्, एवं सारथिसूतशब्दयोः। सहसा हठेन रथिना सुष्ठु उतं तुरगपादातं यस्येत्यर्थकत्वात्, दानत्यागयोश्च सदा नत्या भाति स्थिरतायामागः पर्वत इवेत्यर्थकत्वात्, सभङ्ग पुनरुक्तवदाभासः। शब्दमात्रालंकारत्वं चोभयोरपि शब्दयोः पर्यायपरिवृत्त्यसहवात्।

### काव्यप्रकाशखण्डनम्

शब्दार्थोभयवृत्तित्वेन उभयोरलङ्कारयोर्मध्ये पुनरुक्तवदाभासं लक्षयति।

**पुनरुक्तवदाभासो विभिन्नकारशब्दगा।**

**एकार्थतेव, शब्दस्य,**

विभिन्नरूपसार्थकानर्थकशब्दनिष्ठं पुनरुक्तस्येव पुनरुक्तवत् आभासो ज्ञानं एकार्थत्वेनापाततो भा[स] नं पुनरुक्तवदाभआसः। अर्थान्तरसङ्क्रमितेऽतिव्यातिवारणाय विभिन्नाकारेति विजातीयानुपूर्वीक इत्यर्थः। तत्र च नानुपूर्वीभेदः।

### आदर्शः

पुनरुक्तवदाभासालङ्कारमाह—पुनरुक्तेति। विभिन्नाकारशब्दगामिनी एकार्थतेवशब्दस्यायमलङ्कार इत्यर्थः। 'मुखे' आपाततः। शब्दस्येति व्याचष्टे—स च शब्दस्येति। अरिवधदेहेति। अवनितलतिलको भवान् सदाऽनत्या परप्रणिपातेन विना भातितराम्। कीदृशः अरथिसूततुरागपादातो रथ्यादिरहितोऽपिअरिवधदा ईहा यस्य तादृशं शरीरं यस्य तादृशः, स्वयमेव सहसा तेषां विहन्तेत्यर्थः। स्थिरतायामगः पर्वतः। अत्र देह-शरीर-सार्रथि -सूत-दान-त्यागपदानि पुनरुक्तप्रायाणि।

### सुधासागरः

एकार्थतेवेति । एकार्थत्वावभासयोग्यशब्दतेत्यर्थः । एतच्च यमकलाटानुप्रासयोरतिव्यापकमतो विशिनष्टि—विभिन्नाकारशब्दगेति । तदेतदुक्तम्—भिन्नरूपेत्यादि ।

च चायं द्विविधः । शब्दमात्रस्य शब्दार्थयोश्च । तयोराद्यमाह—सचेति ।

शब्दमात्रस्येत्यर्थः । अयमपिद्विधा—सभङ्गशब्दनिष्ठोऽभङ्गशब्दनिष्ठश्च । तयोराद्यो यथा—अरीति ।

अवनितलतिलकः सदानत्यागः भाति शोभते, कीदृशः, अरिवधदा शत्रुविनाशिनी ईहा चेष्टा येषां तादृशाये शरिणः काण्डीरास्तानीरयतीत्यरिवधदेहशरीरः । सहसा शीघ्रं रथिभिः सुष्ठु ऊतं सम्यग्योजितं तुरगपादातं तुरङ्गाणां पदातीनां च समुदायो यस्य स तथोक्तः । स्थिरतायामगः पर्वततुल्य इत्यर्थः ।

अत्र देहशरीरपदयोः सारथिसूतपदयोर्दानत्यागपदयोश्चापाततः पौनरुक्त्यावभासः । सभङ्गाश्चैते शब्दा इति सभङ्गशब्दनिष्ठः पुनरुक्तवदाभासः । शब्दमात्रालङ्कारत्वं चोभयोरपि शब्दयोः पर्यायपरिवृत्त्यसहत्वात् ।

**चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।**
**तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः ॥ ३९० ॥**

### सङ्केतः

चकासतीति । अङ्गनेषु आरामाः उपवनानि येषां ते तथा अत्र 'अङ्गना रामा' इत्येतौ शब्दौ अनर्थकौ । 'देहशरीरा' दिशब्दवत् भङ्गाभावात् अभङ्गौ च । केचित्—अस्य अर्थपौनरुक्त्याश्रितत्वात् अर्थालङ्कारतामाहुः । वयं तु—अर्थ[illegible] रुक्त्याश्रितत्वेऽपि शब्दवैचित्र्यात् शब्दालङ्कारतां ब्रूमः ।

### बालचित्तानुरञ्जनी

द्वितीयमुदाहरति चकासतीति । शोभनं मनो यस्य राज्ञः पार्श्ववर्तिनः अङ्गनारामाः अङ्गणेषु अजिरेषु आरामः क्रीडावनानि येषाम् । कौतुकं उत्सवविशेषः तद्रूपानन्ददायिनः विबुधाः विद्वांसः चकासति शोभन्ते । अत्राङ्गनारामयोः निरर्थकयोः कौतुकानन्दयोः निरर्थकसार्थकश्चन्द्रमुखे [?] पौनरुक्त्यम् इदानीं प्रसङ्गादुभयालङ्कारत्वमप्याह तथा चेति ।

### काव्यादर्शः

अङ्गनेषु आरामा उपवनानि । अत्रैकार्थतया प्रतिभातौ देह—शरीरशब्दौ अनर्थकौ सभङ्गौ, सारथि-सूतशब्दौ तु सार्थकौ अभङ्गौ । तथा दान-त्याग शब्दौ अनर्थकौ सभङ्गौ, अङ्गना-रामा इत्येतौ त्वनर्थकौ अभङ्गौ, देहशरीरादिशब्दवन्निजेनैव रूपेणावस्थितयोरनयोर्भङ्गाभावात् । उपलभ्यमानसुपामपि शब्दानामामुखे पौनरुक्त्यं प्रतिभासत इत्यभिसंधाय 'तस्य' इत्युदाहृतम् । सुमनसः शोभनचित्तस्य । सुमनसो देवा विबुधाश्च । त एवेत्येकार्धताभ्रमः । एतत् सुबन्ता पेक्षया, तिङ्न्तापेक्षया यथा—

**सत्त्वं सम्यक् समन्मील्य हृदि भासि विराजसे ॥**

'हृदि विगत-रजोविकारे हृदि सत्त्वाख्यं गुणं प्रकाश्य शोभसे' । अत्र भासि-विराजसे-शब्दौ सार्थकौ अभङ्गौ ।

### विवेकः

पादातं पतिसमूहः सारथिप्रभृतिभिः सह वर्तत इति सतामानत्या हेतुभूतयः स्थिरतायां सत्यमागः पर्वतः स अवनितलतिलको भाति । चकासतीत्यादि । "अङ्गनेष्वारामा उपवनानि अङ्गनाभिः शोभनाश्च । अत्रैकार्थतथा प्रतिभातौ देहशरीरशब्दौ सार्थकौ सभङ्गौ, प्रतिभासेते इति पौनरुक्त्यसम्भावना । सारथिसूतशब्दौ सार्थकावभङ्गो दानत्यागशब्दावनर्थकौ सभङ्गौ, अङ्गनारामा इत्येतावनर्थकावभङ्गौ देहशरीरादिवदिह शब्दयोर्भङ्गाभावात् ।" (रु. सं. ६० पृ:) निजनैव रूपेणैवावस्थितयोरनयो"रुपलभ्यमानसुपामपि शब्दानामुपरि शब्दार्थपौनरुक्त्यमुदाहरति तस्येति । सुमनसः शोभनचित्तस्य राज्ञः सुमनसो देवा विबुधाश्च । तत एवात्रैकार्थताभ्रमः ।" (रु. सं. ६० पृ:)

### दीपिका

अभङ्गे यथा—चकासतीति। अङ्गनाभिरारमन्ते ये ते विबुधा: पण्डिता:, कौतुकेनापूर्ववस्तुदर्शनेन आनन्दस्य सन्तोषस्य हेतव:। सुमनस: प्रशस्तहृदया:। आपातत: पुनरङ्गना रामा इति कौतुकानन्देति सुमनसो विबुधा इति चैकार्थमिवावभासते। अत्र चान्यतमस्यापि शब्दस्य परिवर्तने न तथा प्रतिभास इति शब्द मात्रालङ्कारोऽयम्।

### दर्पण:

एवं सभङ्गे उदाहरति चकासतीति। अङ्गनाभि: प्रशस्तनारीभि: आरमन्ति ये कौतुकेन गीतादिविषयाभोगेन आनन्द: सन्तोष: स्वमनस: स्वचेतस:, विबुधा: पण्डिता: रामादिशब्दानां कामिन्याद्यर्थत्वेन पुनरुक्ताभास:।

### साहित्यचूडामणि:

चकासतीति। अङ्गनेषु अजिरेषु आरामा: आक्रीडा: कौतुकमुत्सवविशेष: तद्रूपानन्ददायिन:। अत्राङ्गना-रामयो: कौतुकानन्दयोश्च निरर्थकसार्थकयोरामुखे पौनरुक्त्यम्। सुमनस: साधुहृदया:। विबुधा विद्वांस:। अनयोर्निरर्थकयोरेवाभङ्गयो: पौनरुक्त्यप्रतिभा।

### सम्प्रदाप्रकाशिनी

चकारसतीति। रामा मनोरमा:। सुमनस: साधुचित्तस्य। अत्राङ्गनारामा: सुमनसो विबुधा इत्यभङ्गपदनि-बन्धन:।

### मधुमती

अभङ्गमुदाहरति—चकासतीति। रामा: मनोरमा:। कौतुकजनित: आनन्द: कौतुकानन्द:। सुमनस: शोभनचित्तस्य। अत्र अङ्गना-रामापदयो: सुमनो-विबुधपदयोश्च आपातत: पौनरुक्त्यप्रतीति:।

### विस्तारिका

अभङ्गपदनिष्ठमुदाहरति—चकासतीति। अङ्गनासु रमन्त इत्यङ्गनारामा:, विरहशून्या:। कौतुकेन विवाहसूत्रेण य आनन्द: सुखं तद्धेतव:। धनवत्तया अविरहसुखशालिनो विबुधा: पण्डिता:। सुमनस: सुष्ठुविषये मनांसि येषाम्।

अत्राङ्गनादिपदान्यखण्डान्येवेति।

### सारबोधिनी

अभङ्गपदंनिष्ठमुदाहरति चकासतीति। अङ्गनासु रमन्त्यङ्गनारामा: विरहशून्या:, कौतुकेन विवाहसूत्रेण य आनन्द:। विबुधा: पण्डिता:, सुमनस: सुष्ठुविषयेषु मनांसि येषाम्। अत्राङ्गनादिपदान्यखण्डान्येव।

**काव्यप्रदीप:**

अभङ्गशब्दनिष्ठो यथा—

**'चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।**
**तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः ॥'**

अत्राङ्गनारामाशब्दयोः रुयर्थकतया पुनरुक्तधीः । वस्तुतस्तु अङ्गने आरमन्ति अङ्गनानामारामा इति वार्थ इति न पुनरुक्तिः । न चात्र सभङ्गः । शब्दमात्रालंकारत्वं चैकस्यापि परिवृत्त्यसहत्वात् । एवं कौतुकानन्दशब्दयोः सुमनसोबिबुधाः शब्दयोश्च द्रष्टव्यम् ।

**काव्यप्रकाशखण्डनम्**

केवलं शब्दनिष्ठः । यथा—

**चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।**
**तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्त्तिनः ॥**

अङ्गनासु रमत इत्यङ्गना रामाः विरहशून्याः कौतुकेन विवाहसूत्रेण यः आनन्दः । विबुधाः पण्डिताः सुमनसः । अत्राङ्गनादिपदान्यखण्डान्येव ।

**आदर्श:**

अभङ्गशब्दोऽपि दर्शयति—चकासतीति । तस्य राज्ञः पार्श्वपरिवर्त्तिनो विबुधाः पण्डिताः चकासति दीप्यन्ते । कीदृशाः, अङ्गनारामाः अङ्गन एवाऽऽरमन्ते, अप्रवासिन इत्यर्थः ।कौतुकस्य प्रहेलिकाद्यूतादेरानन्दस्य हेतवः सुमनसः शोभनचित्ताः । अत्र अङ्गनारामा— कौतुकानन्द-सुमनोविबुधपदानि पुनरुक्तप्रायाणि ।

**सुधासागरः**

अभङ्गशब्दनिष्ठो यथा—चकासेति ।

तस्य राज्ञः पार्श्ववर्त्तिनः सेवकाः सन्ति शोभन्ते । किम्भूताः अङ्गनासु रमन्ते इत्यङ्गनारामा विरहशून्याः । कौतुकेन विवाहसूत्रेण य आनन्दस्तत्र हेतवः, सुष्ठु मनांसि येषान्ते सुमनसः । विबुधाः पण्डिता इत्यर्थः ।

अत्राङ्गनारामापदयोः स्त्र्यर्थकतया, कौतुकानन्दशब्दयोः सन्तोषार्थकतया, सुमनसो विबुधा इत्यनयोर्देवार्थकतया पुनरुक्तधीः । न चाङ्गनादिपदानि सभङ्गानि, शब्दमात्रालङ्कारत्वं चैकस्यापि परिवृत्त्यसहत्वात् । प्रदीपकारास्तु—एवं कौतुकानन्दशब्दयोरपीत्याह । तच्चिन्त्यम् । अनयोः क्वचिदप्यर्थे पर्यायत्वादर्शनात् ।

(सू० १२४)तथा शब्दार्थयोरयम्॥ ८६ ॥

उदाहरणम्—

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः।

तेजो धाम महः पृथुमनसामिन्द्रो हरिर्जिष्णुः॥ ३९१ ॥

अत्रैकस्मिन् पदे परिवर्त्तिते नालंकार इति शब्दाश्रय, अपरस्मिंस्तु परिवर्तितेऽपि स न हीयते, इत्यर्थनिष्ठ इत्युभयालंकारोऽयम्।

**इति काव्यप्रकाशे शब्दालंकारनिर्णयो नाम नवम उल्लासः॥**

---

**सङ्केतः**

तन्विति। तनुः कृशोऽपि। कुञ्जरः श्रेष्ठार्थोऽप्युत्तरपदे। रक्तः रञ्जितः। खरः कठोरः। तेजोधाम्नां महः उत्सवभूतः, तेजोगृहं वा। पृथुमनसां महसा वा पृथुमनसां इन्द्रः स्वामी। जिष्णुः जेता। हरिः सिंहः।

एकस्मिन्निति। तनुकुञ्जरादिपदे अनेकार्थे इत्यर्थः। अपरस्मिन्निति। एकार्थे वपुरादिपदे इत्यर्थः।

**इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते नवमोल्लासः।**

**सङ्केतः (रुय्यकः)**

उपलभ्यमानसुपामपि शब्दानामुपरि पौनरुक्त्यं प्रतिभासते इत्यभिसन्धायोदाहृतं तथेति। सुमनसः शोभनचित्तस्य राज्ञः, सुमनसो देवाः विबुधाश्च—तत एवात्रैकार्थताभ्रमः। तनु स्वल्पं, करिकुञ्जरा वारणश्रेष्ठाः "वृन्दारकनागकुञ्जरैः पूज्यमान"—मिति समासः। रक्ताश्छुरिता। बहुलमपि पुनरुक्तवदाभासे (क्तावभासे) लक्ष्यत इत्युक्तं तेजं इत्यादि। तेजसो धामाश्रयस्तेजस्विनस्तेषां मह उत्सवः इन्द्रः स्वामी, हरिः सिंहः, जिष्णुर्जयनशीलः।

**इति नवम उल्लासः।**

**बालचित्तानुरञ्जनी**

यथा केवलस्य शब्दस्यालङ्काराः तथा शब्दार्थयोरुभयोरपीत्यर्थः। तदुदाहरति तन्विति। तनु कृशं वपुर्यस्य। अजघन्यः श्रेष्ठः। करिकुञ्जराः गजश्रेष्ठाः तेषां रुधिरं तेन रक्ताः खरा नखरा यस्य सः। तेजसो धाम स्थानभूतः। महसा पृथुमनसां सत्त्वोद्रिक्तानां इन्द्रः श्रेष्ठः हरिः सिंहः जिष्णः जयशीलः। अत्र तनुवपुषोः करिकुञ्जरयोः तेजोधाममहसां इन्द्रहरिजिष्णूनां च पौनरुक्त्यम्। अत्र शब्दालङ्कारत्वं कथमित्याशङ्क्याह अत्रेति। एकस्मिन् पद इति। तनुकुञ्जररुधिरादावित्यर्थः। अपरिस्मिन् इति। वपुःकरितेजःप्रभृतावित्यर्थः।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीसरस्वतीतीर्थविरचितायांशब्दालङ्कारनिर्णयो नाम नवम उल्लासः।**

## काव्यादर्शः

'तनु स्वल्पम्। करिकुञ्जरा गजश्रेष्ठाः। वृन्दारकनागकुञ्जरैः पूज्यमानम्' इति समासः। बहूनामपि पुनरुक्तवदाभासो लक्ष्यते—'तेज' इति। 'तेजसो धामानि आश्रयाः तेजस्विनः, तेषां मह उत्सवः। इन्द्रः स्वामी। हरिः सिंहः। जिष्णुर्जयनशीलः। अत्रैकेति। तनुशब्दपरिवृत्तौ कृशशब्दे सति नायमलंकार इति शब्दालंकारः, शब्दान्वयव्यतिरेकात्। वपुः शब्दपरिवृत्तौ अङ्गशब्दे च न हीयतेऽलंकार इति अर्थालंकारोऽयम्। एवं 'करिकुञ्जर' इत्यत्रापि कुञ्जर शब्दपरिवृत्तौ पुंगवशब्दे सति नायमलंकार इति शब्दालंकारः। करि-शब्दस्थाने तु गजशब्दे सति न क्षीयतेऽलंकार इति अर्थालंकारोऽयम्। 'रुधिर-रक्त' इत्यत्रापि रक्त-शब्दपरिवृत्तौ लिप्त शब्दे सति अर्थनिष्ठ-त्वम्। एवं च शब्दभेदेऽर्थानामभिन्नत्वे इव पुनरुक्ताभासः, शब्दार्थयोश्चाभेदे तात्पर्यमात्रभेदे लाटानुप्रासः, भिन्नार्थानां च श्रुतिक्रमैक्ये यमकम्—इति विवेकः॥

**इति भट्टश्रीसोमेश्वरविरचिते काव्यादर्शे काव्यप्रकाशसंकेते नवम उल्लासः।**

## विवेकः

"तथा शब्दार्थयोरयमिति सूत्रप्रतीकः। यथा तनुवपुरित्यादि—तनु स्वल्पं करिकुञ्जरा वारणश्रेष्ठाः 'वृन्दारकनागकुञ्जरैः पूज्यमान'मिति (पा. २/१/६२) समासः। रक्ताश्छुरिताः। (रु. स. ६० पृ.) विभिन्नाकारशब्द-गेति समासे संख्या न विवक्षितेति भिन्नरूपाणां बहूनामपि शब्दानामभिधेयत्वभ्रमे पुनरुक्तवदाभासः। लक्ष्यतो दर्शयति तेज इत्यादि" (रु. स. ६० पृ.)। तेजसो धामान्याश्रयास्तेजस्विनस्तेषां मह उत्सवः। इन्द्रः स्वामी, हरिः सिंहः, जिष्णुः जयशीलः। अत्रैकस्मिन्नति—पदपरिवृत्त्या सहिष्णुत्वमसहिष्णुत्वञ्चैवानयोरलङ्कारयोर्निमित्ते। तदिह तनुशब्दपर्यायसूक्ष्मादिशब्दोपादानेऽलङ्कारता न प्रसरतीति शब्दाश्रितत्वं, वपुः शब्दपर्याये तु शरीरादि-शब्देऽप्युपात्तेऽलङ्कारता घटत इति तत्रार्थलङ्कारता। एवं करिकुञ्जर इत्यत्र कुञ्जरशब्दः श्रेष्ठादिना परिवर्तनं न सहते, करिशब्दस्तु सहत एव, तथा तेजोधाम इत्यादावपि। एवं तिङन्तापेक्षया पुनरुक्तवदाभासो द्रष्टव्यः। यथा भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः। जगन्त्यपि सदाऽपायादव्याच्चेतोहरः शिवः॥ (श्रीकण्ठस्तवे अ. सं. २२ पृः)।

**इति महासान्धिविग्रहकश्रीश्रीधरविरचिते काव्यप्रकाशविवेके नवम उल्लासः।**

## दीपिका

सम्प्रति पुनरुक्तवदाभासस्योभयालङ्कारत्वमत्रैव दर्शयति-तथेति। तनुवपुः कृशशरीरोऽयमप्यन्यः कृश-शरीरादृष्टपूर्वपराक्रमशाली करिणां जृम्भतां कुञ्ज राणां रुधिरेण रक्तान्युज्ज्वलीकृतानि खराणि तीव्राणि नखराणि यस्य। तेजसः पराक्रमस्य धामाश्रयो महसा दीप्त्या पृथुतुङ्गं मनो येषां तेषामिन्द्रः श्रेष्ठः। हरिः सिंहः। जिष्णुर्जय-शीलः। मुखतस्तनुवपुःशब्दौ करिकुञ्जरशब्दौ रुधिररक्तशब्दौ तेजोधाम महःशब्दा इन्द्रजिष्णुहरिशब्दाश्चैकार्थ-वदाभासन्ते।

एकस्मिन्निति। तनुकरिरक्तादीनां स्थाने कृशहन्तिलोहितादिविन्यासे। अपरस्मिन्नति। वपुःकुञ्जररुधि-रादिस्थाने शरीरगजशोणितादिविन्यासे।

केचित्तु शब्दान्वयव्यतिरेकानुविधानमेकदेशे समुदाये चेति तदविशिष्टमेवेति शब्दालङ्कार एवायमित्याहुः ।

एवं "कुपतिमपि कलत्रवल्लभम्" इत्यादौ विरोधालङ्कारादिस्थले मृग्यम् । प्राचीनप्रसिद्ध्याऽर्थालङ्कृतिमध्ये गणनमिति सर्वमनाकुलम् ॥

**इति काव्यप्रकाशदीपिकायां शब्दालङ्कारविवेको नाम नवम उल्लासः ।**

**दर्पणः**

न केवलमयं शब्दमात्रालङ्कारः शब्दालङ्कारोऽपीत्यर्थः [अर्थालङ्कारोपीत्यर्थः]

तन्विति । अत्रापाततः तनुवपुषोः, करिकुञ्जरयोः रुधिररक्तयोः, धाममहमोः, इन्द्रहरिजिष्णूनां पौनरुक्त्याभासः ।

इन्द्रहरिजिष्णूना पौनरुक्तयाभासः द्रुतस्त, [?]कुशशरीरयोप्यायमिन्द्रियविक्रमशालिभ्योऽन्यः कवीनां प्रसस्त इस्तरतां कुञ्जराणां रुधिरेण रक्ताः शोणाः खरा नखरा यस्य तेजसः पराक्रमस्य धाम्ना आश्रयेण महस्सदीभ्याहुगतेजसामिन्द्रः श्रेष्ठ हरिः सिंहः जिष्णुर्नयनशील इत्यर्थः ।

अत्र श्लोके शब्दालंकारस्य पुनरुक्तवदाभासादस्य सद्भावं द्योतयति । अत्रैक स्मिनतनुकरविरक्तादौ अन्यस्मिन् वपुः कुञ्जररुधिरादौ, एवं चास्य शब्दमात्रानिष्ठत्वे यहुदाहरणद्वयं अरिवधेत्यादि चकासतोत्यादि च, अत्र सदा न त्याग इति विबुधा सुमनस इति च दानत्यागयोः सुमनोविबुधयोरपि शब्दयोः परिवृत्तिसहत्वात् प्रकृतिविषयं, उक्तरीत्यातु अरिवधदेहशरीर इत्याद्यारभ्योभयालंकारात्वात् ।

एवमेवास्य साहित्यदर्पणेऽस्यालंकारस्य शब्दनिष्ठत्वमुक्ता—

भुजंगकुण्डलीव्यक्त शशीशुभ्रांशुशीतगुः ।

जगन्त्यपि सदापाय देव्याच्छेतो [?] हरः शिरः ॥ इत्यत्र भुजंगकुण्डलीत्यत्र प्रथमस्यैव परिवृत्तिसहत्वं हरः शिरः इति द्वितीयस्य, शशिशुभ्रांशिवत्यत्र द्वयोरपि अतिसादनत्याग इत्यत्र द्वयोरपीति शुद्धद्वयपरिवृत्तिसहत्वासहत्वाभ्यामस्योभयालंकारत्वमुक्तम् ।

**इति महापात्रश्रीविश्वनाथकविराजकृतौ काव्यप्रकाशदर्पणे शब्दालंकारनिर्णयोनाम नवम उल्लासः ।**

**साहित्यचूडामणिः**

उभयालंकारत्वमप्यस्याह—तथेति । यथा केवलस्य शब्दस्य तथा शब्दार्थयोरुभयोरप्ययमलङ्कारः ।

तनुवपुरिति । अल्पशरीरः । करिकुञ्जरा गजश्रेष्ठाः । 'वृन्दारक—' (२.१.६१) इत्यादिना समासः । रुधिरेण रक्ताः पाटलाः । तेजसो धाम स्थानभूतः । पृथुमनसां सत्त्वोद्रिक्तानामिन्द्रः श्रेष्ठः । हरिः सिंहः । जिष्णुर्जयशीलः । अत्र तनुवपुषो करिकुञ्जरयोः तेजोधाममहसाम् इन्द्रहरिजिष्णूनां च पौनरुक्त्यस्फुरत्ता ।

एकस्मिन् पद इति । तनुकुञ्जरधामहर्यादौ । अपरस्मिन्निति । वपुःकरितेजः प्रभृतौ । अतश्चायमुभयालङ्कार इति सिद्धम् ॥

**इत्थं प्रणीतानि परीक्ष्य पूर्वैरुक्तानुसारीणि विभूषणानि ।**
**यदेवमन्यत् परिवृत्तिरेखा-पराङ्मुखं तत् स्वयमूहनीयम् ।**

**इति साहित्यचक्रवर्ति-लौहित्यभट्टगोपालविरचितायां**
**साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां नवम उल्लासः ॥ ९ ॥**

### सम्प्रदायप्रकाशिनी

शब्दार्थनिबन्धनमाह—तथा शब्दार्थयोरिति ।

तनुवपुरिति । तनुवपुः कृशदेहः । करिकुञ्जराः करिश्रेष्ठाः । रुधिररक्ताः शोणितारुणाः । तेजोधाम तेजोनिकेतनम् । जिष्णुर्जयशीलः । अत्र तनुवपुःकरिकुञ्जररुधिररक्तेत्यादौ शब्दार्थयोर्भिन्नार्थतेवावभासः ।

अस्योभयालङ्कारतां विविच्य दर्शयति—अत्रैकस्मिन्नित्यादि । एकस्मिन् श्लिष्टे । अनेन शब्दान्वयव्यतिरेकानुविधायित्वं दर्शितम् । अपरस्मिन् अश्लिष्टे । न स हीयत इत्यनेन शब्दाश्रयत्वविरहः । अत उभयालङ्कारोऽयम् ।

**इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-**

**पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिचक्रवर्तिध्वनिप्रस्थानपरमाचार्य-**

**काव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम-**

**योगीश्वरश्रीमत्त्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकवि-**

**श्रीविद्याचक्रवर्तिकृतौ सम्प्रदायप्रकाशिन्यां काव्यप्रकाशबृहट्टीकायां नवम उल्लासः ।**

### मधुमती

न केवलमयं शब्दालङ्कार इत्याह—तथेति ।

तनुवपुरिति । तनुशब्दः अल्पवाची । कुञ्जरशब्दः श्रेष्ठवाची । रक्तशब्दः अरुणवाची । धामशब्दः गृहवाची । इन्द्रशब्दः ईश्वरवाची । हरिशब्दः सिंहवाची । जिष्णुशब्दः जेतृवाची । अत्र तनु-कुञ्जर-रक्त-धामादि-शब्दाः परिवर्तनं न सहन्ते । वपुः करि-रुधिरादिशब्दास्तु तत् सहन्ते इति उभयथाऽलङ्कारत्वमिति ॥

**इति श्रीरत्नपाणिसूनुरविभट्टाचार्यविरचितायां काव्यप्रकाशटीकायां मधुमत्यां नवमोल्लासः समाप्तः ।**

## विस्तारिका

तथेति । न केवलं शब्दमात्राश्रयः, अयं पुनरुक्तवदाभासः ।

तनुः शरीरं कृशश्च । अजघन्योऽप्रमेयबलः । करिणो गजाः प्रशस्तशुण्डाः । रक्तं रुधिरं रक्तो वर्णविशेषश्च । तेजो बलविशेषः परोत्कर्षाक्षमता च । धाम तेजः स्थानं च । महस्तेजो बलविशेषश्च । हरिरिन्द्रः सिंहश्च । जिष्णुः सुरेन्द्रो जयशीलश्च ।

हरिः सिंहो जिष्णुर्जयशीलः । तनुवपुः कृशशरीरः । करिणां प्रशस्तशुण्डानां कुञ्जराणां रुधिरैः शोणितै रक्ताः शोणरक्ताः खरास्तीक्ष्णा नखा यस्य । तेजसः परोत्कर्षक्षमताया धाम स्थानम् । महो बलविशेषस्तेन पृथु प्रशस्तं मनो येषां तेषामिन्द्रः श्रेष्ठः ।

अस्यालङ्कारस्य शब्दार्थाश्रयतामुपपादयति—अत्रैकैकेत्यादि । एकैकस्मिन् तनुकरिरक्ततेजोधामहरिजिष्णुरूपे । नायमिति । कृशादिपदोपादाने तदभावात् । तेन शब्दानामन्वयव्यतिरेकानुविधानात् तदाश्रयता । अपरस्मिन्नति वपुःकुञ्जररुधिरमहः स्वरूपे न स हीयत इति । उभयं शब्दोऽर्थश्च ।

ननूभयालङ्कारत्वे कथमत्र शब्दालङ्कारान्तःपाठ इति चेन्मैवम्, प्रथमोपस्थितत्वेनात्रैव लक्षितत्वात् । शशिशुभ्रांशुरित्यादौ पुनरर्थमात्राश्रयतेति ।

**इति परमानन्दचक्रवर्तिकृतकाव्यप्रकाशविस्तारिकायां शब्दालङ्कारविवेचनो नाम नवम उल्लासः ।९ ।**

## सारबोधिनी

तनुवपुरिति । तनुः शरीरं कृशश्च अजघन्यः अप्रमेयबलः, करिणो गजाः, प्रशस्तशुण्डाश्च । रक्तं रुधिरं, रक्तो वर्णविशेषः विशिष्टश्च । तेजो बलविशेषः परोत्कर्षाक्षमता च । धाम तेजः, स्थानं च । हरिरिन्द्रः सिंहश्च । जिष्णुरिन्द्रो जयशीलश्च । तनुवपुः कृशशरीरः । करिणां प्रशस्तशुंडानां कुंजराणां रुधिरैः शोणितैः रक्ताः शोणिताः शरास्तीक्ष्णा नखा यस्य । तेजसः परोत्कर्षाक्षमतया धाम स्थानं महो बलविशेषस्तेन पृथु प्रशस्तं मनो येषां तेषामिन्द्रः श्रेष्ठः । एकस्मिन्नति । तनुकुञ्जररक्तेत्यादिरूपे । अन्यस्मिन् वपुः करिरुधिरादिरूपे ।

**इति काव्यप्रकाशटीकायां सारबोधिन्यां नवम उल्लासः ।**

## काव्यप्रदीपः

उभयालंकारं द्वितीयमाह—

**तथा शब्दार्थयोरयम् ॥**

यथा—

**'तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।**

**तेजोधाम महः पृथुमनसामिन्द्रो हरिर्जिष्णुः ॥'**

अत्र तनुवपुः शब्दयोः पुनरुक्तधीः। तद्विरहस्तु तनुशब्दस्याल्पार्थकत्वात्। अयं चोभयालंकारः। तनुशब्दस्य पर्यायपरिवृत्त्यसहत्वात्। एवं करिकुञ्जरयोः, तेजोधाममहः शब्दानां इन्द्रहरिजिष्णुशब्दानां तदाभासत्वमुभयालंकारत्वं च द्रष्टव्यम्। यद्यप्युभयालंकारोऽत्र प्रकृतस्तथापि शब्दमात्रालंकारस्यैव तद्‌भेदस्यात्रप्रकरणेऽवश्यवक्तव्यतया तत्रसङ्गादुभयालंकारत्वानपायाच्चोभयालंकारभूतोऽप्ययमत्रोक्तः। उभयालंकारान्तराणां तु न कोऽपि भेदः शब्दमात्रालंकार इति न तान्यत्र पठितानीति सर्व रमणीयम्।

**इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे शब्दालंकारनिर्णयो नाम नवम उल्लासः।**

## काव्यप्रकाशखण्डनम्

तथा शब्दार्थयोरयम्॥ (का. ८६, च. पा.)

यथा—तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः।

तेजोधाम महः पृथुमहसामिन्द्रो हरिर्जिष्णुः॥

अस्यार्थः—तनुः शरीरं कृशश्च। अजधन्यः अप्रमेयबलः। करिणो गजाः प्रशस्तशुण्डाश्च। [प. ४६, १] रक्तं रुधिरं रक्तो वर्णविशेषनिष्ठश्च। तेजो बलविशेषः परोत्कर्षाक्षमता च। धाम तेजः स्थानं। महस्तेजो बलविशेषश्च। हरिरिन्द्रः सिंहश्च। जिष्णुः कपीन्द्रोजयनशीलश्च। तनुवपुः कृशशरीरः। करिणां प्रशस्तशुंण्डानां कुञ्जराणां रुधिरैः शोणितैः रक्ताः शोणाः स्वरास्तीक्ष्णा नखा यस्य। तेजसः परोत्कर्षाक्षमतायाः धाम स्थानम्, महो बलविशेषस्तेन पृथु प्रशस्तं मनो येषां तेषामिन्द्रः श्रेष्ठः। अत्रैकस्मिन् पदे तनुविरक्तेत्यादिरूपे परिवत्रिते नालङ्कार इति शब्दालङ्कारः। अपरस्मिन् वपुः कुञ्जरादिरुधिरूपे परिवत्रितेऽपि स न हीयत इत्यर्थनिष्ठः। इत्युभयालङ्कारोऽयं शब्दार्थयोर्मध्ये कथितः॥

**॥ इति पादशाह-श्रीअकब्बरसूर्यसहस्रनामाध्यापकश्रीशत्रुञ्जयतीर्थकरमोचनाद्यनेकसुकृतविधापक-महोपाध्यायश्रीभानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादशाहश्रीअकब्बरप्रदत्तषु (खु) स्फहमापराभिधानमहोपाध्यायश्रीसिद्धिचन्द्रगणिविरचिते काव्यप्रकाशखण्डने नवम उल्लासः॥**

## आदर्शः

शब्दमात्रगतमेनमुक्त्वा शब्दतदर्थगतमप्येनमाह—तथा शब्दार्थयोरिति। तनुवपुरिति। असौ हरिः सिंहस्तनुवपुरपि स्वल्पशरीरोऽपि तेजोधाम तेजसामाश्रयः, महः पृथुमनसां स्वतेजः पुष्टमनसामन्य इन्द्रो विलक्षणः प्रभुः जिष्णुर्जयशीलः। करिकुञ्जराणां हस्तिश्रेष्ठानां रुधिरेण रक्तः शोणः खरः प्रचण्डो नखरो यस्य तादृशः।

अत्रैकस्मिन्निति। तनु-कुञ्जर-रक्त-धाम-हरि-जिष्णुपदानि परिवृत्त्यक्षमाणि, वपुरादिपदानि तु परिवृत्तिक्षमाणि।

यद्यप्यरिवधदेहेत्यादावपि शरीरादिपदानि परिवृत्तिक्षमाणीत्यविशेषः, तथापि दान-त्यागपदयोः परिवृत्त्यक्षमत्वात्तदंश एव शब्दमात्रालङ्कारोदाहरणं तदिति मन्तव्यम्।

**इति श्रीमहेश्वर-न्यायालङ्कार-भट्टाचार्यकृतकाव्यप्रकाशादर्शे नवमः शब्दालङ्कारप्रतिबिम्बः।**

**सुधासागरः**

उभयालङ्कारं द्वितीयमाह—तथेति । स्पष्टम् । उदाहरति—तन्विति ।

सिंहवर्णनमिदम् । असौ हरिः सिंहो जिष्णुर्जयशीलोऽस्ति, किम्भूतः तनुवपुः कृशशरीरोऽप्यजघन्यः अप्रमेयबलः । कुञ्जरशब्दः श्रेष्ठवाची करिकुञ्जराणां गजश्रेष्ठानां रुधिरैः शोणितैः रक्ताः लोहितवर्णाः खरास्तीक्ष्णा नखरा यस्य स तथोक्तः । तेजसः, परोत्कर्षाक्षमतायाः धाम स्थानं यन्महस्तेन पृथु विपुलं सगर्वमिति यावत् मनो येषान्तेषामिन्द्रः श्रेष्ठ इत्यर्थः ।

अत्र तनु-कुञ्जर-रक्त-धाम-हरि-जिष्णुशब्दाः परिवृत्तिं न सहन्ते । वपुः-करि-रुधिरेन्द्रशब्दास्तु तां सहन्ते इत्युभयालङ्कारत्वं पुनरुक्तवदाभासत्वं च द्रष्टव्यम् । यद्यप्युभयालङ्कारोऽत्र न प्रकृतस्तथाऽपि शब्दमात्रालङ्कारस्यै-तद्भेदस्यात्र प्रकरणेऽवश्यवक्तव्यतया तत्प्रसङ्गादुभयालङ्कारत्वानपायाच्चोभयालङ्कारभूतोऽप्ययमत्रोक्तः । उभयालङ्कारान्तराणान्तु न कोऽपि भेदः शब्दमात्रालङ्कार इति न तान्यत्र पठितानीति सर्वरमणीयम् ।

**इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षितभीमसेनकृते काव्यप्रकाशविवरणे सुधासागराऽऽख्ये शब्दालङ्कार निर्णयो नाम नवम उल्लासः ॥९ ॥**

# अथ दशम उल्लासः

अर्थालङ्कारानाह—

(सू० १२५) साधर्म्यमुपमा भेदे

उपमानोपमेययोरेव न तु कार्यकारणादिकयोः साधर्म्यं भवतीति तयोरेव समानेन धर्मेण संबन्ध उपमा । भेदग्रहणमनन्वयव्यवच्छेदाय ॥

---

सङ्केतः

पारेऽलङ्कारगहनं सङ्केताध्वानमन्तरा ।
सुधियां बुद्धिशकटी कथङ्कारं प्रयास्यति ॥

अथ द्राषष्टिं उपमाद्यर्थालङ्कारानाह । तत्रापि उपमैव प्रकारवैचित्र्येण अनेकालङ्कारबीजमिति पूर्वं उपमा उच्यते ।

एषा च अर्थालङ्कारत्वेन प्राच्यैरुक्तत्वात् उक्ता । यावता त्वेषा श्रौतीरूपेवादिशब्दपरावर्तासहन-अन्य-शब्दपरावर्तसहनाभ्यां अन्वयव्यतिरेकित्वेन उभयालङ्कृतिः । अत एवासौ पुनरुक्तवदाभासरूपोभयालङ्कारसमीपे प्रोक्ता । श्रीभोजोऽपि एवमेवोक्तवान् ।

साधर्म्यमिति । समानौ धर्मौ ययोः तौ सधर्माणौ । सधर्मणौर्भावः साधर्म्यम् । समानधर्मसम्बन्धः । तच्च प्रतीतयोः उपमानोपमेययोरेव, न कार्यकारणादिकयोः, असम्भवात् । सत्त्व-ज्ञेयत्व-प्रमेयत्वादिसाधर्म्यभावेऽपि तयोर्नोपमा, हृद्यत्वाभावात् । उपमेति । उपमितिः—समगुणद्वारेण उपमेयस्य उपमानसदृशीकरणं उपमा । उप = समीपे मीयते = क्षिप्यते स्वसादृश्यप्रापणात् उपमेयं येन तत् उपमानम् । किञ्च—हृद्यतया कविना यदुत्कृ-ष्यते तत् उपमानम् । अन्यत् उपमेयम् । न तु प्रसिद्धमप्रकृतं वा उपमानं, अन्यदुपमेयमिति । एवं हि—

"ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥" इत्यत्र

चन्द्रादेः प्रसिद्धस्योपमेयत्वम्, कामिनीगण्डादेरप्रसिद्धस्योपमानत्वं च न स्यात् ।

एवं प्रकृताप्रकृतत्वेऽपि कविविवक्षैव अङ्गीकार्या चन्द्रगण्डयोः उपमानोपमेयत्वप्रसिद्धौ सत्यामपि वक्त्वा प्रसिद्धिविपर्यासेन औपम्यस्य कल्पितत्वात् विपर्यासोपमा । एवंविधकाव्येषु न सामान्योपमीति श्रीभोजः ।

क्वचित् अहृद्यस्यापि साधर्म्यस्य उपमात्वं यथा—हास्यादौ 'शूर्पकर्णः' 'कुम्भोदरः' इत्यादि ।

भेदे इति । प्रायः शब्दार्थाभ्यां, 'पुरुषः पुरुषो यथा' इत्यादिदर्शनात् क्वचिदर्थेन च अस्यां भिन्ने उपमानोपमेये । अनन्वये तु शब्दार्थाभ्यां, क्वचिच्च अर्थेन उपमानोपमेययोः अभेद एव । यथा—'रविरिव रविः' इति, 'रविः सूर्य इव' इति च । उपमानोपमेययोः शब्दार्थद्वारेण स्वगतो भेदः, न धर्मद्वारेण । धर्मद्वारकभेदे हि व्यतिरेकालङ्कारत्वं स्यात्, न तु उपमालङ्कारत्वम् । उपमानोपमेययोर्भेदः शब्दार्थद्वारकः यथा उपमायामस्ति, तथा समानधर्मद्वारेण अभेदोऽप्यस्ति । यदाहुः—

**'यत्र किञ्चित् सामान्यं, कश्चिच्च विशेषः,**
**स हि विषयः सदृशतायाः ।'**

इति । तदर्थ—उपमाऽभेदे इति अत्र सूत्रे अकारप्रश्लेषो ज्ञेयः । ततश्च 'भेदोभेदाप्रधान्ये उपमा' इति लब्धम् ।

उपमायाः वाचकाश्च—इव, वा, यथा इत्यव्ययानि; तुल्यार्थवाचिनः प्रतिपक्ष-प्रत्यनीकादयः प्रतिबिम्ब-प्रतिच्छन्दादयश्च शब्दाः; कल्पवादिप्रत्ययाः, स्पर्धते जयति अनुकरोति इत्यादयः क्रियाः, चन्द्रमुखीत्यादि समासाश्च ।

### सङ्केतः (रुय्यकः)

उपमानस्य चन्द्रादेर्विशेषणान्युपमानस्य (विशेषणोपमानयोः) विशेषरूपतया व्यवस्थापकाः ।

### बालचित्तानुरञ्जनी

अथ शब्दानलङ्कारानुक्त्वा आर्थान् वक्तुमुपक्रमत इति उल्लासयोः सङ्गतिमाह अर्थेति । तत्रापि अनेकालङ्कारबीजभूतत्वात् पूर्वमुपमालक्षणमिति भावः । ननु किंसंबन्धि किमेतत् साधर्म्यमुपमेत्यर्थः । साधर्म्यस्यानेकानेकविषयत्वात् भेदग्रहणमतिरिच्यत इत्याशङ्क्याह भेद इति ।

### काव्यादर्शः

शब्दालंकारानुक्त्वा अर्थालंकारान्—

**'उपमाऽनन्ययोत्प्रक्षो ससंदेहोपमोपमा ।**
**रूपकापह्नुती श्लेषः समासोक्तिर्निदर्शना ।**
**तथाऽन्योक्तिरतिशयोक्तिश्च वस्तूपमा द्विधा ।**
**दृष्टान्तो दीपकं मालदीपकं तुल्ययोगिता ।**

**व्यतिरेको द्विधाऽऽक्षेपो विशेषोक्तिर्विभावना।**
**जातिरर्थान्तरन्यासो यथासंख्यं विरोधमुक्।**

**व्याजस्तुतिः सहोक्तिश्च परिवृत्तिर्विनोक्तितः।**
**भाविकं काव्यलिङ्गं च पर्यायोक्तमुदात्तवत्।**
**समुच्चयोऽथ पर्यायः परिकरोऽनुतानतः।**

**व्याजोक्तिः परिसंख्याऽयोन्योत्तरे कारणस्त्रजा।**
**सूक्ष्मसाराऽसंगतयः समाधिर्विषमं समम्।**

**अधिकं प्रत्यनीकं च मीलितैकावली स्मृतिः।**
**भ्रान्तिमांश्च प्रतीपे द्वे सामान्यं च विशेषवत्।**
**अतद्गुणस्तद्गुणो व्याघातसंसृष्टिसंकराः॥**

एतान् द्वाषष्टिं क्रमेणाह—साधर्म्यमिति। समानो धर्मो ययोस्ते सधर्मणी तयोर्भावः। उपमैव प्रकारवैचित्र्येण अनेकालंकारबीजभूतेति प्रथम निर्दिष्टः [ष्टा]। उपमानेति। उप समीपे मीयते क्षिप्यते स्वसादृश्यप्रापणाद् उपमेयं येन तत् प्रसिद्धम् उपमानम्। यत्तु तेन समीपे क्षिप्यते सौन्दर्यादिगुणयोगित्वेन तत्र प्रकरणेऽप्रसिद्धं वदनादि तद् उपमेयम्। 'इन्दुमुखी' इत्यादौ प्रसिद्धं चन्द्रादि उपमानं, अप्रसिद्धं तु मुखादि उपमेयम्।

ननु च—

**ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।**
**नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता॥**

—इत्यादौ कामिनीगण्डादेरप्रसिद्धस्याप्युपमानत्वं, चन्द्रादेश्च उपमेयत्वं दृश्यते। सत्यम्, अत्रापि कामयते प्रियमिति यौगिकत्वाश्रयेण कामिनीशब्दात् प्रतीयमानहृदयस्थितदुर्लभमनोहारिप्रियतमाया गण्डश्चन्द्रादपि अधिकचमत्कारितया प्राधान्येन प्रसिद्ध इति कविविवक्षावशादेव प्रसिद्ध्यप्रसिद्धी अङ्गीक्रियते। येऽपि प्राकरणिकमुपमेयं, अप्राकरणिकमुपमानमिति आद्रियन्ते तैरपि कवि प्रसिद्धिरङ्गीकार्यैव। तेन सत्त्वत्रेयत्वप्रमेयत्वादिसाधर्म्ये नोपमा। तथा 'कुम्भ इव मुखम्' इत्यादि शृङ्गारादौ च। हास्यादौ तु न दोषः। कार्यकारणादिकयोः साधर्म्यस्य असंभवाद् उपमानोपमेययोरेव साधर्म्यं भवतीति तयोरेव समानधर्मेण संबन्धे उपमा। साधर्म्यं च देशादिभिर्भिन्नानां गुणक्रियादिसाधारणधर्मवत्त्वमित्याह—भेदग्रहणमिति। भेदे हि एकस्यैव उपमानोपमेयत्वेऽनन्वयो वक्ष्यते। तत्र देशेन उपमानोपमेययोर्भेदः, यथा 'मथुरेव पाटलिपुत्रामाढ्यजनपदम्।' कालेन यथा 'वसन्त इव हेमन्तः कामिनीसुखहेतुः।' गुणेन, यथा 'गौरीव श्यामा सुभगा।' क्रियया, यथा 'नृत्तमिव गमनमस्याः सविलासम्।' जात्या, यथा 'विप्र इव क्षत्रियः श्रोत्रियः।' द्रव्येण, यथा 'शिव इव केशवः पूज्यः।' समवायेन, यथा 'विषाणित्वमिव दंष्ट्रित्वं हिंस्रम्।' अत्र 'समासकृत्तद्धितेषु संबन्धाभिधानम्' इति वचनात् समवायस्य संभवाद् यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्व-तलाविति त्वप्रत्ययेन समावायस्याभिधानम्। तस्य च सत्यप्येकत्वे उपाधिनिबन्धनं भेदकल्पनम्। ततश्च विषाणोपाधिकः समवाय उपमानं, दंष्ट्रोपाधिकस्तु उपमेयः। अभावेन, यथा 'मोक्ष इव

समाधौ दुःखाभावः'। मोक्षे दुःखाभाव इव समाधौ दुःखाभाव इत्यर्थः। धर्मो मनोज्ञत्वादिः उपमावाचका इव-वा-तथाशब्दाः। यदुक्तम्—

इव-वद्-वा-यथा-शब्दाः समान-निभ-संनिभाः।
तुल्य-संकाश-नीकाश-प्रकाश-प्रतिरूपकाः।
प्रतिपक्ष-प्रतिद्वन्दि-प्रत्यनीकविरोधिनः।
सदृक्-सदृश-संवादि-सजातीयानुवादिनः।
प्रतिबिम्ब-प्रतिच्छन्द-सरूप-सम-सप्रभाः।
सलक्षण-सदृक्षाभाः सपक्षोपनतोपमा।
कल्प-देशीय-देश्यादि प्रख्य-प्रतिनिधी अपि।
सवर्ण-तुलितौ शब्दौ ये च तुल्यार्थवाचिनः।
समासश्च बहुब्रीहिः शशाङ्कवदनादिषु।
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति।
आक्रोशत्यवजानाति कदर्थयति निन्दति।
विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति।
तस्य पुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति।
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति।
तस्य चानुकरोतीति शब्दाः सादृश्यसूचिनः॥

उपमानादिचतुष्टयं यत्र प्रयुज्यते सा पूर्णोपमा। यथा 'वागर्थाविव संपृक्तौ' इत्यादि। उपमानस्य चन्द्रादेर्विशेषणा उपमानतया विशेषरूपया व्यवस्थापकाः।

## विवेकः

अथार्थालङ्काराणां प्रस्तावः। तत्र चोपमेव प्रकारवैचित्र्येणालङ्कारबीजभूतेति तामेव प्रथमं निर्दिशति साधर्म्यमिति। अर्थप्राप्तं व्याचष्टे उपमानोपमेययोरेवेति—उपमीयते सादृश्यमानीयते येनोद्भूतगुणेनान्यत्तदुपमानं, यदु पमीयते सादृश्यमानीयते न्यूनगुणं तदुपमेयम् (का. आ. सू. वृ. ४/२/१)। अत एव पार्थेन धनुर्धरान्तर-

मुपमीयत इत्याहुः। विवक्षया तु यथा चन्द्र इव मुखं कामिन्यास्तथा मुखमिव चन्द्रो यामिन्या इत्यपि। न कार्यकारणादिकयोरिति—आदिपदेन वाच्यवाचकलक्ष्यलक्षकस्वस्वामिप्रभृतीनां परिग्रहः। समानस्य सादेशे रूपमिति व्याचष्टे समानेनेति। तद्धितार्थमाह सम्बन्ध इति। तदुक्तं 'यत्र किञ्चित् सामान्यं कश्चिद्विशेषः स विषयः सदृशताया इति' (अ. स. ३१ पृ.)। उपमितिरुपमा 'आतश्चोपसर्गे' (पा. ३/३/१०६) इति स्त्रियां भावे अङ्। कविप्रतिभोत्थापितचारुत्वातिशययोगित्वं सर्वत्रालङ्कारतायां बीजम्, अत एव गौरिव गवयः, समुद्रः कुण्डिकेवेत्येवमादौ नालङ्कारता। ननु चोपमानमुपमेयश्च परमार्थतः पृथग्भूतमेव तत्किं भेदग्रहणेनेत्यत आह—अनन्वयव्यवच्छेदायेति।

## दीपिका

उल्लाससङ्गतिमाह वृत्तिकृत्—अर्थालङ्कारेति। शब्दालङ्कारादनन्तरं प्रकान्तमित्यर्थः। आहेति—विशेषेण लक्षयतीत्यर्थः। प्रकारवैचित्र्येणानेकालङ्कृतिजीवातुत्वात् प्रथममुपमां लक्षयति—साधर्म्येति। सधर्माणां भावः साधर्म्यम्। चातुर्वर्ण्यादित्वात् ष्यञ्। प्रथमं तावत् सर्वगतसामान्येनाविशिष्टमेव लक्षणमिति न प्रत्यक्षाद्युपनीत साधर्म्येऽतिव्याप्तिः। एवमन्यत्राप्येवंविधस्थले बोद्धव्यम्।

ननु साधर्म्यमिति सम्बन्धप्रतिपादकं पदम्, स च सम्बन्धिद्वयनिष्ठः। न च तत्प्रतिपादितम्, तच्च कुतो ज्ञेयमित्याशङ्क्य सामर्थ्यलभ्यमेव तदित्याह—उपमेति। उपमानेति प्रकृतप्रकरणप्रत्यायकं तत्समानगुणक्रियमुपमानं चन्द्रादिसमानक्रियागुणमप्रकृतप्रत्याय्ययोत्कर्षाधिकरणम्, प्रकृतमुपमेयं वदनादि। कार्यकारणादिकयोरिति। साधर्म्ये सति तयोरपि तदन्तर्भावादित्यर्थः। समानेनेति सदृशेनेत्यर्थः। सदृश्यञ्च 'कमलमिव सुरभि मुखम्' इत्यादौ साजात्यम्।

> **"पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।**
> **आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥"**

बिम्बप्रतिबिम्बभावे समानाकारत्वम्।

> **"साऽलङ्कृति मृदुवचोरचनाऽभिरामं माधुर्यधुर्यमवलम्बितसौकुमार्यम्।**
> **कान्तामुखेन्दुसुभगं कविसूक्तिसारं जागर्ति सन्ततरसं सुकविप्रणीतम्॥"**

एवमादौ तु समानशब्दनिवेद्यत्वम्।

ननु भिन्नयोरेव साधर्म्यं इति भेद इत्यनर्थकमिति, अनन्वये त्वेकस्यैवाऽऽहार्यभेदमादाय साधर्म्यमुपमानोपमेयता चोपनिबध्यते। तद्व्यवच्छेदकं चात्र पारमार्थिकभेदपरं भेदग्रहणमित्यर्थः।

## दर्पणः

एवं शब्दालङ्कारान्निर्णाय प्रस्तुतमर्थालङ्कारलक्षणमवतारयति वृत्तिकृत् अर्थालङ्कारानिति। आह विशेष इत्यर्थः। प्रथममलङ्कारजीवभूतत्वादुपमां लक्षयति साधर्म्यमिति। समानधर्मयोर्भावः साधर्म्यम् चातुर्वण्यादित्वात् स्वार्थे यन्। अत्र संबन्धिनावनुपात्तादमपि [पात्तावपि] साधर्म्यलभ्यादित्याह उपमानोपमेययोरिति। चन्द्र इव मुखं

शोभत इत्यादौ प्रकृतस्य मुखादेरुत्कर्षाधायकत्वं चन्द्राद्युपमानं मुखादि चोपमेयं न कार्यकारणादिनुयोरिति [तयोरिति] क्वचित् पितेरपुत्रोवित्वानित्यादौ [पितेव पुत्रः सगुणः स आसीत्] साधर्म्योपनिबन्धे सति तयोरप्यु-पमानोपमेयाव्यतिरेकादिति भावः ।

**मल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुनैर्मही ।**
**तस्तार शरघाव्याप्तैः सक्षौद्रपटलैरिव ॥**

बिम्बप्रतिबिम्बभावे समानाकारत्वमेव साधर्म्यम् । "सकलकलं पुरमेतत्" इत्यादौ च शब्ददेत्यत्वं [शब्दवेद्यत्वम्] । भेदेति । अयमर्थः । अनुमे [अनन्वये] यद्यपि तात्विको भेदो नास्ति । तथाप्याहार्य इति ।

**साहित्यचूडामणिः**

**वन्दे वाणीं रसोत्कर्षमहोत्सवविहारिणीम् ।**
**सर्वाङ्गीण-समुन्मीलदमूल्य-मणि-भूषणाम् ॥**

**उपमानन्वयौ पूर्वमुपमेयोपमा ततः ।**
**अथोत्प्रेक्षा ससन्देहरूपकापह्नवा इति ॥**

**श्लेषः सह समासोक्त्या द्विविधा च निदर्शना ।**
**अप्रस्तुतस्तुतिः पञ्चभेदा सातिशयोक्तिका ॥**

**प्रतिवस्तूपमा पश्चादुभे दृष्टान्तदीपके ।**
**तुल्ययोगो व्यतीरेकः सहाक्षेपा विभावना ॥**

**विशेषोक्तिर्यथासङ्ख्यं न्यासश्चार्थान्तरस्य यः ।**
**विरोधोऽथ स्वभावोक्तिव्याजस्तुतिसहोक्तयः ॥**

**विनोक्तिपरिवृत्ती द्वे भाविकं काव्यलिङ्गकम् ।**
**पर्यायोक्तमुदात्तं च द्विप्रकारः समुच्चयः ॥**

**पर्यायश्चानुमानं च पश्चात् परिकरश्च यः ।**
**व्याजोक्तिपरिसङ्ख्ये द्वे माला कारणपूर्विका ॥**

**अन्योन्यमुत्तरं सूक्ष्मसारासङ्गतयः पृथक् ।**
**समाधियुक्तं च समं विषमं च सहाधिकम् ॥**

**प्रत्यनीकं मीलितं च क्रमादेकावलीत्यपि ।**
**स्मरणभ्रान्तिमन्तौ च प्रतीपं च द्विधा ततः ॥**

सामान्यं च विशेषश्च तद्गुणातद्गुणावपि ।
व्याघातश्चेत्यलङ्कारा येषां संसृष्टिसङ्करौ ॥

इति षष्टिश्चतस्रश्च भूषाः काव्यार्थसम्पदः ।
वाचः सर्वापि वैचित्री यदन्तः पर्यवस्यति ॥

न साधर्म्येण स्वचितो वर्गशः क्रियते क्रमः ।
स्वातन्त्र्यादुद्धरीकर्त्तुमेकैकस्य चमत्क्रियाम् ॥

आसां भेद प्रभेदे च तदुन्नेये च विस्तरे ।
न समस्ति यदन्तस्तद्बहिरप्यस्ति न क्वचित् ॥

अथ शब्दालङ्कारानुक्त्वा क्रमादर्थान् वक्तुमुपक्रमते—अर्थेति । आदौ तावद्

यतः सर्वेष्वलङ्कारेषूपमा जीवितायते ।
रूपकादिलङ्कारवर्गोऽयमतएव हि ॥

तत्रपञ्चतयाख्यातः कैश्चित् तत्त्वार्थदर्शिभिः । इति

व्यक्तिविवेकयुक्त्या सर्वालङ्कारजीवितभूतां भट्टवामनाद्युपलालितामुपमामाह—साधर्म्यमिति । यत् सूत्रम्—"उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वमुपमा" [अ० सू० १२] इति । यत्र किञ्चित् सादृश्यं कश्चिच्च्व विशेषः, स विषयः साधर्म्यस्य ।

ननु किंसम्बधि किमेतत् साधर्म्यमित्यपेक्षायामाह—उपमानेति ।

साधर्म्यस्वभावादेव तत्सम्बन्धिनोरुपमानोपमेययोः सिद्धिः । यतः साधर्म्यलक्षणः सम्बन्धः सम्बन्ध्यन्तरयोः कार्यकारणादिकयोर्न संघटते । तत्सूत्रे तु तथोपादानमन्यतात्पर्येण व्याख्यातम् । ननु सादृश्यादयो भ्रान्तिगोचरा इति केषांचित् पक्षः । यथाहुः—

संसृज्यन्ते न भिद्यन्ते स्वतोऽर्थाः पारमार्थिकाः ।
रूपमेकमनेकं तु तेषु बुद्धेरुप्लवः ॥ प्र० वा. ३.८७ इति ।

तत् कथमुपमाद्यलङ्कारचिन्तेति चेत् । न । स्थैर्यस्यार्थक्रियायाश्च विद्यमानत्वात् । यथा चाहुः—

क्रियासम्बन्धसामान्यद्रव्यदिक्कालबुद्धयः ।
सतां स्थैर्योपयोगार्थमेकानेकाश्रया मताः ॥ इति ।

किञ्च काव्यवहारे सत्यासत्यत्वनिरूपणमनुपयोगमित्यास्माकीनः पन्थाः । भेदग्रहणमनन्वयं व्यवच्छेदतुमित्याह—अनन्वयेति ।

## सम्प्रदायप्रकाशिनी

सङ्गतिमासूत्रयति—अर्थालङ्कारानिति ।

प्रकारवैचित्र्येण बह्वलङ्कारबीजभूतामुपमां प्रथमतो लक्षयति—साधर्म्यमुपमा भेद इति । उपमानोपमेययोर्भेदप्रतीतौ यत् साधर्म्यं, स उपमालङ्कारः ।

व्याचष्टे—उपमानोपमेययोरित्यादि । साधर्म्येणोपमानोपमेययोराक्षेप इत्याह—तयोरेवेति । कार्यकारणयोर्न ह्येकधर्मता । आदिशब्दात् ज्ञाप्यज्ञापकयोर्विधर्मता । साधर्म्यपदं निर्वक्ति—समानेन धर्मेणेति । ननु साधर्म्यग्रहणादेव सम्भावनादिरूपोत्प्रेक्षाव्यवच्छेदः सिद्धः, भेदपदेन किं व्यावर्त्यत इत्यत आह—भेदग्रहणमित्यादि । अनन्वये हि साधर्म्यसम्भवेऽप्येकस्यैवोपमानोपमेयत्वमिति नास्ति भेदः ।

## मधुमती

अथेदानीं प्राप्तावसरतया अर्थालङ्कारे निरूप्ये बहुविषयतया प्राधान्यं विवक्षित्वा प्रथमं उपमां निरूपयति—साधर्म्यमिति । 'उपमानोपमेययोः साधर्म्यं उपमा' इति अलङ्कारसर्वस्वकारमतं दूषयति—उपमानेति । न त्विति । कार्यकारणभावसम्बन्धपुरस्कारेणेति शेषः । तथा च अर्थत एव प्राप्तेः उपमानादिग्रहणं व्यर्थमिति भावः । भेदेति । तत्र अनन्वये एकस्यैव उपमानत्वात् उपमेयत्वाच्चेति भावः । अधिकगुणश्चेति वत्तया सम्भाव्यमानं उपमानम् । निकृष्टगुणवत्तया सम्भाव्यमानं उपमेयम् इति बोद्धव्यम् ।

## विस्तारिका

श्रीदुर्गायै नमः ॥ श्रीकृष्णं नमामः ॥ छ ॥

अवसरतो निरूप्यमाणानामर्थालङ्काराणामुपजीव्यत्वेन प्रथममुपमां लक्षयति—साधर्म्यमिति । समानो धर्मो ययोः, अर्थादुपमानोपमेययोः, तौ सधर्माणौ, तयोर्भावः साधर्म्यम् । समानधर्मनिरूपितः सम्बन्ध उपमा । समासोत्तरवर्तिभाववाचितद्धितप्रत्ययस्य 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति न्यायेन सम्बन्धाभिधायकत्वात् । तद्वक्ष्यति—समानेन धर्मेण सम्बन्ध इति । सामर्थ्यलब्धसम्बन्धिद्वयमाह—उपमानोपमेययोरेवेति । सादृश्यसम्बन्धस्य प्रतियोग्युपमानमनुयोग्युपमेयम् । अस्य च साधर्म्यस्योपमानमुपमेयश्च द्वावप्यनुयोगिनौ । नेत्यादि । साधर्म्यविवक्षायां तु तयोरप्युपमेत्यर्थः ।

समानेति । तद्द्वारक एव तयोः सम्बन्धः, साक्षादिति भावः । धर्मो गुणः क्रिया च, न जातिः । तदा 'घट इव पटो द्रव्यम्' इत्यत्र द्रव्यत्वेनोपमिति प्रसङ्गात् । न चेष्टापत्तिः, अनुगमकस्य भेदानवगमकत्वात् । उपमितेर्भेदगर्भत्वात् । अत एव समानेन सजातीयेन, न त्वेकेनेति पर्यवस्यति । 'घट इव' इत्यत्र तु घटे पटे च द्रव्यत्वावगमः । अस्य च साधर्म्यस्योपमानमुपमेयश्च द्वावप्यनुयोगिनौ । 'चन्द्र इव मुखम्' इत्यत्र यज्जातीयधर्माश्रयश्चन्द्रस्तज्जातीयधर्माश्रयो मुखमित्युभयविशेष्यकप्रतीतेः । न च चन्द्रनिष्ठधर्मसजातीयधर्माश्रयो मुखमिति प्रकृतिविशेष्यक एव प्रत्ययः । तथा सति 'हंसीव धवलश्चन्द्रः' इत्यादौ प्रतीतिमान्थर्यविरहेण दोषो न स्यात् । हंसीनिष्ठधवलत्वसजातीयधवलत्ववत्तया चन्द्रस्य प्रतीतौ सकलसहृदयानुभवसिद्धं प्रतीतिमान्थर्यं न स्यात् । उभयविशेष्यकत्वे तु पुंस्त्वान्वितधवलपदार्थस्य हंस्यामनन्वयेन चन्द्रमात्रान्वये विवक्षितप्रतीत्यनुपपत्तेर्दोषः सम्भवतीति ध्येयम् । 'चन्द्र

इव मुखमाह्लादकम्' इत्यत्र त्वाह्लादकपदस्योभयान्वयित्वेऽपि नपुंसकस्य मुखपदस्य लिङ्गग्रहणम् 'नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम्' इति पाणिन्यनुशासनात्। वस्तुतस्तु समानधर्मस्य प्रथममुपमानेन तत उपमेयेनान्वय इति क्रमिकान्वये नपुंसकमनपुंसकेनेत्यादिन्यायस्यानवतारः। विशेषणस्य युगपद्विशेष्यद्वयान्वयेन संख्यानियमात् 'चन्द्र इव मुखमाह्लादकम्' इत्यादिप्रसिद्धोपमायां प्रसिद्धिवशादेवाध्याहारेण द्रागेव चन्द्रादावाह्लादकत्वाद्यवगमे यथाह्लादकश्चन्द्रस्तथामुखमित्यादिप्रतीत्या मान्थर्यान्न दोषः; न वार्थीत्वप्रसङ्गः, प्रसिद्धिवशाद्धर्मोपस्थितौ तूपपत्तिपर्यालोचनासहत्वात्। 'चन्द्रेण तुल्यं मुखमाह्लादकम्' इत्यादौ तु सदृशादिपदानां पर्यालोचनयैवोपमानतागमकत्वमिति तत्र तत्रार्थ्येवेति। अप्रसिद्धोपमायां तु हंसीवेत्यादावुपात्तस्य धवलपदस्योभयत्र साधर्म्यानवगमकत्वाद् दोष एवेत्यवधेयम्। अत्र सम्बन्धत्वेन सजातीयधर्मनिरूपितः सम्बन्धः इवाद्यर्थः। 'राज्ञः पुरुषः' इत्यादौ स्वस्वामिभावादिः। आह्लादकत्वाद्युपादाने तु तस्यैव निरूपकत्वम्, यथाह्लादकश्चन्द्रस्तथाह्लादकं मुखमिति प्रतीतेः।

**पाण्ड्योमंसार्पितलम्बहारस्तप्ताङ्गरागो हरिचन्दनेन।**
**आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥**

इत्यत्र विशिष्टोपमायां हारनिर्झरयोरातपहरिचन्दनयोरविशेषणयोः सजातीयशुक्लरक्तगुणसम्बन्धविशेष्ययोरपि सजातीयधर्मसम्बन्धः समानधर्मः। एवमेव बिम्बप्रतिबिम्बभावः। एवम् "सकलकलं पुरमेतद् जातं सम्प्रति सुधांशुबिम्बम्" इत्यादौ शब्द एव गुणः, तया वाच्यवाचकत्वाख्यस्वरूपसम्बन्धेनोपमानोपमेययोर्वृत्तेर्धर्मत्वात्।

ननूपमानोपमेययोरेव साधर्म्यसम्भवे भेदग्रहणमनर्थकमित्याह—भेदग्रहणमित्यादि। "नितम्बिनी सैव नितम्बनीव" इत्यादावनन्वये एकस्यैवोपमानत्वमुपमेयत्वं चेति पारमार्थिकभेदविरहात्। न च सोऽप्युपमैवेति वाच्यम्, तत्र साम्यचमत्कारकत्वाभावात्, उपमानन्तरव्यवच्छेदस्यैव तथात्वात्।

न च तत्र धर्मस्यैकत्वे सजातीयताविरहेण नोपमाप्रसङ्ग इति वाच्यम्, धर्मिभेदस्येव धर्मभेदस्यापि काल्पनिकत्वेन सजातीयताऽनपायात्। तस्मात् साधर्म्यशब्दस्यारोपितानारोपितसाधारणसमानधर्मसम्बन्धमात्रपरत्वेऽपि साधर्म्यनिबन्धन एवायमलङ्कार इति मन्तव्यम्।

न च तत्र धर्मस्यैकत्वे भेदकल्पनायामप्युपमानत्वं कल्पनीयमिति लाघवादुपमानत्वमेव कल्प्यते, न भेद इति मिश्रमतम्, तदसत्, असति भेदे उपमानत्वाप्रतीतेः। प्रकृतस्याप्रकृतत्वाभावादुपमानत्वस्याप्रकृतत्वघटितत्वात्। 'पाणिरिवास्याः पाणिः' इत्यत्र दक्षिणवामतात्पर्यकत्वे तात्त्विकभेदादुपमैव। एवं 'रामरावणयोर्युद्धम्' इत्यादौ युगभेदविवक्षायामुपमैव, अन्यथाऽनन्वय एवेति रूपके साधर्म्यस्य व्यङ्ग्यत्वाव्यतिरेकेऽपि वैधर्म्यस्याप्युक्तिरिति। तयोर्व्यवच्छेदाय वाच्यमवैधर्म्यमिति। साम्यस्य विशेषणद्वयं यद् विश्वनाथेनोपन्यस्तं तदशुद्धम्, तत्र तत्राङ्गभूतायां तस्यान्तत्वानपायात्। अन्यथा सङ्करोच्छेदप्रसङ्गात्।

### सारबोधिनी

अवसरतोऽर्थालङ्कारे लक्षयितव्ये चारुत्वोत्कर्षात् प्रथममुपमां लक्षयति साधर्म्यमिति। समानो धर्मो ययोरर्थादुपमानोपमेययोस्तौ सधर्माणौ तयोर्भावः साधर्म्यम्। समानधर्मनिरूपितः संबन्धः स एवोपमा। समासोत्तरभाववाचितद्धितप्रत्ययस्य सम्बन्धाभिधायकत्वात्। तद्वक्ष्यति, समानेन धर्मेण सम्बन्ध इति।

### काव्यप्रदीपः

अथार्थालंकारा लक्षणीयाः। ते च

'उमानन्वयस्तद्वदुपमेयोपमा ततः।
उत्प्रेक्षा चापि संदेहो रूपकापह्नुती तथा॥

श्लेषस्तथा समासोक्तिः प्रोक्ता चैव निदर्शना।
अप्रस्तुतप्रशंसातिशयोक्ती परिकीर्तिते॥

प्रतिवस्तूपमा तद्वद्दृष्टान्तो दीपकं तथा।
तुल्ययोगितया चैव व्यतिरेकः प्रकीर्तितः॥

आक्षेपो विभावना च विशेषोक्तिस्तथैव च।
यथासंख्यमर्थान्तरन्यासः स्यातां विरोधवत्॥

स्वाभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तिवत्।
विनोक्तिपरिवृत्ती च भाविकं काव्यलिङ्गवत्॥

पर्यायोक्तमुदात्तं च समुच्चय उदीरितः।
पर्यायश्चानुमानं च प्रोक्तः परिकरस्तथा॥

व्याजोक्तिपरिसंख्ये च विज्ञेये हेतुमालया।
अन्योन्यमुत्तरं सूक्ष्मसारौ तद्वदसंगतिः॥

समाधिश्च समेन स्याद्विषमस्त्वधिकेन च।
प्रत्यनीकं मीलितं च स्यातामेकावली स्मृता॥

भ्रान्तिमांस्तु प्रतीपेन सामान्यं च विशेषवत्।
तद्गुणातद्गुणौ चैव व्याघातः परिकीर्तितः॥

संसृष्टिसंकरौ चैवमेकषष्टिरुदीरिताः॥'

तेष्वनेकालंकारमूलभूतत्वेन सौकुमार्यातिशयाच्च प्रधानमुपमां प्रथमं लक्षयति—

साधर्म्यमुपमा भेदे

ननु साधर्म्यस्य प्रतियोग्यनुयोगिनिरूप्यतया तदनभिधाने न्यूनत्वं लक्षणवाक्यस्येति चेत्, न। आक्षेपादुपमानोपमेयरूपयोस्तयोर्लाभात्। न च प्रतियोग्यनुयोगिमात्राक्षेपेऽतिप्रसङ्गः। उपमानोपमेये विनान्यस्य कार्यकारणादिमात्रस्य साधर्म्याभावात्। एवं चोपमानोपमेययोः समानेन धर्मेण संबन्ध उपमेति लक्षणम्। अत्र चोपमानोपमेययोराक्षेपः साधर्म्यप्रतिपत्तिमात्रफलको न तु व्यावर्तकः। नन्वेवं भेद इत्यनुपादेयम्। तस्याप्याक्षेपादेव लाभसंभवात्। नह्यभेदे सादृश्यात्मकं साधर्म्यमिति चेत्, न। साधर्म्यपदस्यारोपितानारोपितसाधारणसमानधर्मसंबन्धमात्रपरत्वेनारोपितसाधर्म्यनिबन्धनस्यानन्वयालंकारस्य व्यवच्छेद्यत्वात्, 'अलंकारत्वे सति' इत्यपि पूरणीयम्। साधर्म्यमात्रस्योपमात्वाभावात्।

### काव्यप्रकाशखण्डनम्

अर्थार्थालङ्कारनाह—चारुत्वोत्कर्षात् प्रथमं उपमां लक्षयति।

साधर्म्यमुपमा भेदे, (का. ८७, प्र० पा०)

समानौ धर्मौ ययोः अर्थादुपमानोपमेययोः, तौ सधर्माणौ, तयोर्भावः साधर्म्यम्। समानधर्मनिरूपितः सम्बन्धः। स एव उपमा समासोत्तरभाववाचिप्रत्ययस्य संबन्धाभिधायकत्वात्। यद्वा समानैर्बहुभिर्धर्मैः संबन्धः साधर्म्यम्। वस्तुतस्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमुपमेति निर्गलितार्थः। भेदग्रहणमनन्वयव्यवच्छेछाय।

### आदर्शः

उपमालङ्कारमाह—साधर्म्यमिति। भेद इति उपमानोपमेययोर्भेद इत्यर्थः। उपमानोपमेयलाभश्चार्थवशादित्याह-उपमानेति। न कार्यकारणयोरिति। उपमानोपमेयत्वेनाविवक्षितयोः कार्यकारणयोरेव नेत्यर्थः। तथात्वेन विवक्षणे तु कार्यकारणयोरपि भवति। यथा पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यो भवतः पितेव' (रघु० ५/३४), यथा वा वक्ष्यमाणे 'भणितिरिव मतिर्विमले'त्यत्र भणितिमत्योः कार्यकारणयोः साधर्म्यमाह। तयोरेव समानेनेति। तदुभयसाधारणेन धर्मेणोपमानस्य सम्बन्ध इत्यर्थः। 'चन्द्र इव मुखमि'त्यत्र हि चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमिति प्रतीतिः। अत्र च चन्द्रप्रतियोगिकसादृश्यस्य इवशब्दार्थत्वेऽपि चन्द्रनिष्ठं यत् सादृश्यप्रतियोगित्वं सैवोपमा लाघवात् न तु सादृश्यांशोऽपीत्यभिप्रायेण सम्बन्धपर्यन्तानुधावनम्, एतच्चाग्रे उपमायाः श्रौतार्थत्वविभागेन व्यक्तीभविष्यति। न च सादृश्यमेव इव-शब्दार्थः, प्रतियोगितांश्च संसर्गमर्यादयैव लभ्यते इति वाच्यम्, अव्ययानामन्विताभिधायित्ववादिनामेषां मते चन्द्रप्रतियोगिकत्वविशिष्टसादृश्यस्यैव इवादिशब्दवाच्यत्वात्। एतच्चाग्रे व्यक्तीभविष्यति। तथा च समानेन धर्मेण तयोरेव सम्बन्ध इति नान्वयः, किन्तु तयोरेव समानेन धर्मेण उपमाने सादृश्य प्रतियोगिताख्यः सम्बन्ध उपमेत्येवार्थः। अनन्वयेति, 'नितम्बिनी सैव नितम्बिनीवे'ति वक्ष्यमाणानन्वयालङ्कारव्यवच्छेदायेत्यर्थः।

### सुधासागरः

अथ प्राप्तावसरतयाऽर्थालङ्कारा निरूपणीयाः। ते च—

उपमाऽनन्वयस्तद्वदुपमेयोपमा ततः ।
उत्प्रेक्षा च ससन्देहो रूपकापह्नुती तथा ॥

श्लेषस्तथा समासोक्तिः प्रोक्ता चाथ निदर्शना ।
अप्रस्तुतप्रशंसाऽतिशयोक्ती परिकीर्त्तिते ॥

प्रतिवस्तूपमा तद्वद् दृष्टान्तो दीपकं तथा ।
तुल्ययोगितया चैव व्यतिरेकः प्रकीर्त्तितः ॥

प्रकीर्त्तितस्तथाऽऽक्षेपस्तथैव च विभावना ।
विशेषोक्तिर्यथासङ्ख्यं तथैव परिकीर्त्तितम् ॥

अथ चार्थान्तरन्यासविरोधाभाससंज्ञकौ ।
स्वभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तियुक् ॥

विनोक्तिरपरिवृत्ती च भाविकं काव्यलिङ्गवत् ।
पर्यायोक्तमुदात्तं च समुच्चय उदीरितः ॥

पर्यायश्चानुमानं च प्रोक्तः परिकरस्तथा ।
व्याजोक्तिपरिसंख्ये च विज्ञेये हेतुमालया ॥

अन्योन्यमुत्तरं सूक्ष्मसारौ तद्वदसङ्गतिः ।
समाधिश्च समेन स्याद् विषमस्त्वधिकेन च ॥

प्रत्यनीकं मीलितं च स्यातमेकावलीस्मृती ।
भ्रान्तिमांस्तु प्रतीपेन सामान्यं च विशेषवत् ॥

तद्गुणातद्गुणौ चैव व्याघातः परिकीर्त्तितः ।
संसृष्टिसङ्करौ चैवमेकषष्टिः क्रमोदिताः ॥

आद्यक्षरसम्बन्धेन तु—

उ-अ-व-स-पा शराऽ-वाशा-दिग-ग्नियुतभू-गजाः ।
रू नि श्ल आ य मी ए भूसंख्यास्त द भ का द्विकाः ॥

तेष्वनेकालङ्कारमूलभूतत्वेन सौकुमार्यातिशयाच्च प्रधानमुपमां प्रथमं लक्षयतिसाधर्म्यमिति । समानो धर्मो ययोरर्थादुपमानोपमेययस्तौ सधर्माणौ तयोर्भावः साधर्म्यम् समानधर्मनिरूपितः सम्बन्धः, स एवोपमा, समासोत्तरवर्तिभाववाचितद्धितप्रत्ययस्य 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति न्यायेन सम्बन्धाभिधायकत्वात्, यद् वक्ष्यति समानेन धर्मेण सम्बन्ध इति ।

उपमानोपमेययोः साधर्म्यमुपमेत्यलङ्कारसर्वस्वकारमतं दूषयन् सामर्थ्यलब्धसम्बन्धिद्वयमाह-उपमानोपमेययोरेवेति । अत एव 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः' इत्यप्पय्यदीक्षितादीनामुपमालक्षणं कुवलयानन्दखण्डने खण्डितमस्माभिः । अधिकगुणवत्तया सम्भाव्यमानमुपमानम् निकृष्टगुणवत्तया सम्भाव्यमानमुपमेयमिति बोध्यम् । समानेन धर्मेणेति । एकवचनमविवक्षितमिति बोध्यम्, अन्यथा यत्किञ्चिद्धर्मेण साजात्यस्य सर्वत्र सुलभत्वादतिप्रसङ्गः स्यात् । अत्र चन्द्र इव मुखमित्यत्र यज्जातीयधर्माश्रयश्चन्द्रस्तज्जातीयधर्माश्रयो मुखमित्युभयविशेष्यिकैव प्रतीतिर्न तु चन्द्रनिष्ठधर्मसजातीयधर्माश्रयो मुखमिति प्रकृतविशेष्यक एव प्रत्ययः । तथा सति 'हंसीव धवलश्चन्द्र' इत्यादौ प्रतीतिमान्थर्यविरहेण दोषो न स्यात्, उभयविशेष्यकत्वे तु पुंस्त्वान्वितधवलपदार्थस्य हंस्यामन्वयेन चन्द्रमात्रान्वये विवक्षितप्रतीत्यनुपपत्तेर्दोषः सम्भवतीति ज्ञेयम् ।

ननूपमानोपमेययोरेव साधर्म्यसम्भवे भेदग्रहणमनर्थकमित्यत आह—भेदग्रहणमित्यादि । 'नितम्बिनी सैव नितम्बिनीव' इत्यादावन्वये एकस्यैवोपमानत्वमुपमेयत्वं चेति पारमार्थिकसाधर्म्यविरहाव्यवच्छेद इति भावः । न च तत्राप्युपमैवेति वाच्यम्, तत्र साधर्म्यस्य चमत्कारित्वाभावात् । न च तत्र धर्मस्यैकत्वे सजातीयताविरहेण नोपमाप्रसङ्ग इति वाच्यम्, धर्मिभेदस्येव धर्मभेदस्यापि काल्पनिकत्वेन सजातीयताऽनपायात् । तस्मात् साधर्म्यशब्दस्योरोपितानारोपितसाधारणसमानधर्मसम्बन्धमात्रपरत्वेऽपि अनारोपितसाधर्म्यनिबन्धन एवोपमालङ्कार इति मन्तव्यम् । अत एव प्रदीपकारैर्व्याख्यातम्-ननु प्रतियोग्यनुयोगिनिरूप्यतया तदनभिधाने न्यूनत्वं लक्षणवाक्यस्येति चेन्न, आक्षेपादुपमानोपमेयरूपयोस्तयोर्लाभात् । न च प्रतियोगिमात्राक्षेपादेव लाभसम्भवात् 'भेद'—इत्यनुपादेयम्, न ह्यभेदे सादृश्यात्मकं साधर्म्यमिति चेत् । न । साधर्म्यपदस्यारोपितानारोपितसाधारणसमानधर्मसम्बन्धमात्रपरत्वेनारोपितसाधर्म्यनिबन्धनस्यानन्वयालङ्कारस्य व्यवच्छेद्यत्वादिति ।

इदमत्र तत्त्वम्—उपमानोपमेययोर्भेदश्चतुर्धा, उपात्तोऽनुपात्त आरोपितस्तिरोहितश्चेति । तत्राद्ये वाच्योपमा, द्वितीये व्यङ्ग्योपमा, 'उल्लास्य कालकरवाल' इत्यादाविव, तृतीयेऽनन्वलङ्कारः, चतुर्थे रूपकमिति । सर्वेष्वप्यलङ्कारलक्षणेष्वलङ्कारत्वे सतीति विशेषणं विवक्षितमिति बोध्यम्, अन्यथा लोष्ठः पाषाणः, स्थाणुर्वा पुरुषो वा, अस्थिवद्दधिवत्कीर्त्तिरित्यादावपि रूपकाद्यलङ्कारः स्यात् । तर्हि वाग्देवतावतारैर्ग्रन्थकृद्भिः किमिति नोक्तमिति चेत् । तत्र तत्रोपादाने महद् गौरवं स्यादिति, अत एवालङ्कारसारोद्धारेऽस्माभिर्जयदेवाद्युक्तलक्षणस्थलक्ष्मीपदं खण्डितमिति द्रष्टव्यम् । अथोपमां विभजते—पूर्णेति ।

## (सू० १२६) पूर्णा लुप्ता च

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा, एकस्य द्वयोस्त्र-याणां वा लोपे लुप्ता ।

---

### सङ्केत:

उपमानं उपमेयं साधारणो धर्म: उपमाप्रतिपादकश्चेति यत्र स्यु: सा पूर्णा । एषां क्रमेण एकद्वित्रिलोपे लुप्ता ।

### बालचित्तानुरञ्जनी

विभागमाह पूर्णेति । उपमानमुपमेयं साधारणो धर्म: उपमाप्रतिपादका इवादयश्च, तेषां चतुर्णा कण्ठोक्तौ पूर्णोपमा । तेषामेकद्वयादे: शास्त्रीये स्वारसिके वा लोपे लुप्तोपमेत्यर्थ: ।

### काव्यादर्श:

श्रुत्यैवेति । अभिधाव्यापारेण । यथा षष्ठी यत उत्तरा तदेव विशिनष्टि श्रुत्यैव संबन्धमुभयाधारमभिधत्ते, तथैव अयं यथा-इवादिरुपमानोपमेययोरेकतरस्मिन्नपि अविश्रान्त: श्रौतेन रूपेणोभयाधारमुपमानोपमेयभावं द्योत-यतीति श्रौती । तत्सद्भावे, यथा-इव-वा-सद्भावे । तथैवेति, 'श्रौती'त्यर्थ: । इवार्थे वतेर्विहितत्वाद् इव-शब्दव-च्छ्रौतेन रूपेणोभयानुयायितयोपमानोपमेयत्वावगति: ।

### विवेक:

अस्य च पूर्णत्वलुप्तत्वादिभेदाद्बहुविधत्वं यथा चिरन्तनालङ्कारकारैरुक्तं तथैव दर्शयति । तत्रोपमाना-दीनां चतुर्णामुपादाने पूर्णा । तत: साधारणधर्मस्योपमानस्य चोपमाद्योतकस्य चेत्येकस्य धर्मोपमाद्योतकयोर्धर्मोप-मानयोरुपमानयोरुपमाद्योतकोपमेययोर्वेति द्वयो:, धर्मादीनामन्यतराणामिति त्रयाणां लोपे लुप्ता ।

### दीपिका

उपमां सामान्यतो लक्षयित्वा भेदलक्षणार्थमाह—पूर्णेति । लक्ष्यपदप्रत्यालोचनेनैव लक्षणलाभ इत्यत आह—उपमानेति । उपमाप्रतिपादका इवादिशब्दा: । एकस्य चतुर्षुपमेयं त्यक्त्वा कस्यचिद् द्वयोस्त्रयाणां वेति । वृत्तिरत्र द्वयमेव लक्ष्यदर्शनादग्रे प्रपञ्चयिष्यति । लोपेऽनुपादाने ।

### दर्पण:

तद्भेदानाह पूर्णेति । उपमाप्रतिपादकमिवादि । एकस्येति । एषां वर्णानां [चतुर्णां] मध्य इत्यर्थ: ।

नो पश्चलक्षणवशात् [अनुच्चारणवशात्] अनुपादानाद्वा। श्रुतिः शब्दः श्रूयत इति व्युत्पत्त्या। तेन साक्षान्निवेदिता श्रौती। वैयाकरणरीत्या समासाभावो वाक्यम्। यत्परायत्तः परमुपात्तः [यदन्तरमुपात्ताः] उपमानविशेषणानि उपमानान्तरप्रयुक्तानि तुल्यादिपदसाधारणानि। ऐते यतैवादयः।

समानं सादृश्यंनक्षत्र [?] मुभयगतमपि श्रुतिमात्रेणैव। पुनस्तुल्यादिशब्दवदन्नानुसंधान [दर्थानुसंधान] मवान्तरव्यापारीकृत्य प्रतिपादयन्ति।

## साहित्यचूडामणिः

विभागमाह—पूर्णेति। उपमानमुपमेयं साधारणो धर्मः उपमाप्रतिपादका इवादयश्चेति चतुर्णां कण्ठोक्तौ पूर्णा। तेषामेकद्व्यादेः शास्त्रीये स्वारसिके वा लोपे लुप्ता।

## सम्प्रदायप्रकाशिनी

द्वैरूप्यमस्या दर्शयति—पूर्णा लुप्ता चेति।

व्याचष्टे—उपमानोपमेयेत्यादि। उपमीयते सादृश्यं नीयते येन उत्कृष्टगुणेन तदुपमानम्। यत् पुनरुपमीयते सादृश्यं नीयते निकृष्टगुणं वस्तु, तदुपमेयम्। उभयत्र दत्तपदः साधारणो धर्मः। इवादय उपमाप्रतिपादकाः। एषां चतुर्णामपि शब्दसमर्पितत्वे पूर्णा। एष्वेकद्वित्र्यनुपादाने त्रिधा लुप्ता। एवं पूर्णै का लुप्तास्तिस्र इति सामान्यतश्चतुर्धा।

## मधुमती

विभजते—पूर्णेति।

## विस्तारिका

विभजते—पूर्णेत्यादिना। पूर्णा उपमा तु सर्वावयवा, लुप्ता अनुपात्त यत्किञ्चिदङ्गा।

एकस्य द्वयोरित्यादि। उपमानादीनां चतुर्णां मध्ये त्रयाणामुपमानेतरेषामिति तत्रैव वक्ष्यामः। लोपे अनुपादाने। तच्च क्वचिद् न्यायकृतम्, क्वचनानुशासनिकमिति यथायथं दर्शयिष्यामः।

## सारबोधिनी

सामर्थ्यलब्धसंबन्धिद्वयमाह उपमानोपमेययोरिति। समानेन धर्मेणेति समासे बहुभिर्धर्मैरिति बोध्यम्। अन्यथा यत्किञ्चिद्धर्मसाजात्यस्य सर्वत्र सत्त्वादतिप्रसङ्ग स्यात्। अत्र चन्द्र इव मुखमित्यत्र सज्जातीयधर्माश्रयश्चन्द्रः तज्जातीयधर्माश्रयो मुखमित्युभयविशेष्यकैव प्रतीतिर्न तु चन्द्रनिष्ठधर्मसजातीयधर्माश्रयो मुखमिति प्रकृतिविशेष्यक एव प्रत्ययः। तथा सति 'हंसीव धवलश्चन्द्र' इत्यादौ प्रतीतिमान्यर्थविरहेण दोषो न स्यात्। हंसीनिष्ठधवलत्वसजातीयधवलत्ववत्तया चन्द्रप्रतीतावनुभवसिद्धं प्रतीतिमान्थर्यं न स्यात्। उभयविशेष्यकत्वे तु पुंस्त्वान्वितधवलपदार्थस्य हंस्यामनन्वयेन चन्द्रमात्रान्वये विवक्षितप्रतीत्यनुपपत्तेर्दोषः सम्भवतीति ध्येयम्। चन्द्र इव मुखमाह्लादकमित्यत्र तु आह्लादकपदस्योभयगामित्वेऽपि नपुंसकस्य मुखपदस्य लिङ्गग्रहणम् 'नपुंसकमनपुंस-

केने'त्याद्यनुशासनात्। ननु उपमानोपमेययोरेव साधर्म्यसम्भवे भेदग्रहणमनर्थकमित्यत आह भेदग्रहणमिति। 'नितम्बिनी सैव नितम्बिनीवे'त्यादावनन्वये पारमार्थिकभेदविरहात् तद्व्यवच्छेदः। न च तत्राप्युपमैवेति वाच्यम्, तत्र साधर्म्यस्य चमत्कारित्वाभावात्, उपमानान्तरव्यवच्छेदस्यैव चमत्कारित्वात्। न च तत्र धर्मस्यैकत्वे सजातीयताविरहेण नोपमाप्रसङ्ग इति वाच्यम्। धर्मिभेदस्येव धर्मभेदस्यापि काल्पनिकत्वेन सजातीयतानपायात्। पाणिरिवास्याः पाणिरित्यत्र दक्षिणवामतात्पर्यकत्वे तात्त्विकभेदादुपमैव। एवं 'रामरावणयोर्युद्धं रामरावणयोरिवे'त्यत्रापि युगभेदविवक्षायामुपमा, अन्यथा अनन्वय एव। अत्र केचित्-रूपके साधर्म्यस्य व्यङ्ग्यत्वं व्यतिरेके वैधर्म्यस्याप्युक्तिरिति तयोर्व्यवच्छेदाय वाच्यमवैधर्म्यं चेति साधर्म्यस्य विशेषणद्वयं देयमित्याहुः।

## काव्यप्रदीपः

एनां विभजते—

पूर्णालुप्ता च

यत्रोपमानोपमेयसाधारणधर्माणामुपमाप्रतिपादकशब्दस्य चोपादानं सा पूर्णा। एतच्चतुष्कमध्ये एकस्य द्वयोस्त्रयाणं वानुपादानं यत्र सा लुप्ता।

## काव्यप्रकाशखण्डनम्

**पूर्णा लुप्ता च,**

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा। एकस्य द्वयोस्त्रयाणां वाअनुपादाने लुप्ता।

## आदर्शः

तस्य द्वैविध्यमाह—पूर्णेति। लोप इति, अनुपादान इत्यर्थः।

## सुधासागरः

उपमानेत्यादि। यत्रोपमानोपमेयसाधारणधर्माणामुपमाप्रतिपादकशब्दस्य चोपादानं सा पूर्णा। एतच्चतुष्कमध्ये एकस्य द्वयोस्त्रयाणां वाऽनुपादानं यत्र सा लुप्तेत्यर्थः। तयोः पूर्णां विभजते साग्रिमेति।

(सू० १२७) साग्रिमा।

**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ ८७ ॥**

अग्रिमा पूर्णा।

यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युमाविशेषणा-न्येते तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत् संबन्धं प्रतिपादयन्तीति तत्स-द्भावे श्रौती, उपमा। तथैव "तत्र तस्येव" इत्यनेनेवार्थे विहितस्य वतेरुपादाने।

---

### सङ्केतः

उपमानविशेषणाः पद्मादेः उपमानतया विशेषरूपया व्यवस्थापकाः। श्रुत्यैव अभिधाव्यापारेण। यथा-षष्ठी यस्याग्रे तं विशिनष्टि, न पुनस्तत्र विश्राम्यति, अतश्च सा श्रुत्यैव सम्बन्धं द्विष्ठं ब्रूते; तथैवायं इवादिः उपमानोपमेययोरेकतरस्मिन्नप्यविश्रान्तः श्रुत्या द्विष्ठं उपमानोपमेयभावं वक्तीति तत्सद्भावे यथेवादिभावे श्रौती। तथैवेति। श्रौतीत्यर्थः। इवार्थे विहितो वतिः इववत् ज्ञेयः।

### सङ्केतः (रुय्यकः)

षष्ठीवदिति—यथा षष्ठीवद् उत्तरा तदेव विशिनष्टि। श्रुत्यैव च सम्बन्धमुभयाधारमभिधत्ते। तथैवायं यथेवादिः (यथैवादिः)। सममेव साम्यं साधारणो धर्मः। तुल्यता द्विष्ठरूपसादृश्यम्।

भुजंगः कामुकः अम्बररत्नं सूर्यः।

### बालचित्तानुरञ्जनी

पूर्णायाः पुनरपि द्वैविध्यमाह साग्रिमेति।

ननु यथेववादिशब्दानां तुल्यादिशशब्दानां चोपमानविशेषणत्वस्य अवि- शिष्टत्वादियं श्रौती इयमार्थीति व्यवस्था कथमित्याशङ्क्याह यथेति। यथेववादिशब्दानां उभयैकसंबन्धप्रत्यायकत्वे दृष्टान्तमाह षष्ठीवदिति। यथा राज्ञः पुरुष इति राज्ञि तिष्ठन्ती षष्ठी पुरुषमप्याक्षिपन्ती तदुभयनिष्ठं संबन्धं समर्पयति, एवं यथेवादयोऽपि। यथा च तत्र शब्दशक्तेर्महिमा न पर्यनुयोगमर्हति, एवमत्रापीत्यर्थः। श्रौतीमभिधाय तद्धितेऽपि तां योजयति यथेवेति। यथा इव प्रयोगे वाक्ये श्रौती उपमा तथैव वाक्यार्थे 'तत्र तस्येवे' त्यनेन सूत्रेण विहितस्य वतिप्रत्ययस्य तद्धितस्योपादानेन विशेषात् श्रौती उपमेत्यर्थः। तुल्यादिशब्दोपादाने आर्थीं प्रतिपादयितुमाह तेनेति। तुल्यादिशब्दानां 'तेन तुल्य' मित्यादौ।

## काव्यादर्शः

'तेन' इति चन्द्रेण तुल्यं मुखम्। 'तद्' इति चन्द्रबिम्बं तुल्यं मुखस्य।

## विवेकः

श्रुतिनिरन्तरार्थनिष्ठः शब्दव्यापारस्तत्प्रतिपादिता श्रौती तद्विपरीता त्वार्थीति पूर्णा द्विधा। प्रत्येकं वाक्य-समासतद्धितगम्येति षोढा।

ननूपमेयेन साक्षादसम्बन्धात् यथेवादीनां प्रयोगे कथं श्रौतीत्वमित्याशङ्क्याह—यद्यपीति। उपमानविशे-षणानि उपमेयस्य विशेषरूपतया व्यवस्थापकानि। परिहरति—तथापीति। शब्दशक्तिस्वाभाव्येन प्रतिपादकत्वे दृष्टान्तमाह—षष्ठीवदिति। यथा राज्ञः पुरुष इत्यादौ षष्ठौ यत उत्तरा तदेव विशिनष्टि सम्बन्धश्चोभयाश्रयमभिधत्ते तथेदमपि लुप्तविभक्तिकमव्ययमेकत्रापि विश्रान्तमुभयाश्रयं सम्बन्धमभिव्यनक्ति। कथं पुनरत्र राज्ञ एव षष्ठी न पुरुषात्? उच्यते—इह तावदेकस्य प्राधान्येऽन्यस्योपसर्जनत्वमाश्रयणीयं तुल्यत्वे 'सम्बन्धाभावात्। तत्र न प्रधानं पुरुषादि गुणानुरोधेन प्रवर्तितुमर्हति। उपसर्जनन्तु राजादि। यथा प्रधानानुग्रहस्तथा मौनं (गौणं) निवर्तयति स्वरूपास्थितौ प्रधानार्थत्वसिद्धेः। अतोऽप्रधाने सम्बन्धस्याधिकः पदन्यास इति तत्र षष्ठी भवति। सा चैकत्वात् सम्बन्धस्य पुरुषगतत्वमभिधत्ते। एवं तद्धितेष्वपि द्रष्टव्यमित्यलं प्रसक्तानुप्रसक्तेन। यत्तु "यथेवशब्दौ सादृश्यव्यतिरेकिणा"विति (भा. का. अ. २/३१) भामहेनोक्तं तदुपलक्षणत्वेन व्याख्येयम्। अत्रापि नियमेन मा-योगान्वितस्तदनुकारितया प्रतिमस्तुलया .धृतत्वात्तुल्यः, एवंकृत-(भूत) प्रतिबिम्ब प्रतिच्छायः सद्दृक्ष-सदृशादिशब्दानामप्यवान्तरविशेष प्रतिपाद्यमानार्थवैचित्र्यसमर्पकत्वेनान्वेयाः।

## दीपिका

प्रभेदमुक्त्वा तत्प्रभेदद्वयमाह—सेति। श्रूयत इति श्रुतिः शब्द, तेन साक्षादेव द्योतिता श्रौती, तदितरा आर्थी। वाक्यं वैयाकरणभाषया समासाभावः। अग्रिमा पूर्णा, समनन्तरसूत्रे प्रथममुपात्तत्वात्। यत्परा यतः परमुपात्तास्तस्यैवोपमानताप्रतीतिरिति। यद्यप्येते यथेवादिशब्दा उपमानविशेषणान्युपमानानन्तरप्रयुक्ततुल्यादिप-दसाधारणानि, तथापि समर्थसादृश्यलक्षणं श्रुत्यैव श्रुतिमात्रेणैव प्रतिपादयन्ति। न पुनस्तुल्यादिशब्दवदर्थानुसन्धा-नान्तरव्यापारका इति योजना।

तद्धिते श्रौती व्युत्पादयति—तथेतिं। यथेववादीनामुपादान इत्यर्थः।

साम्यपर्यालोचनयेति। साम्यं समानधर्मयोगस्तस्य पर्यालोचनोपमानोपमेयधर्माणामभेदप्रतीतिः 'कम-लसदृशं सुरभि मुखम्' इत्यादौ हि कमलमिव मुखं सुरभीत्यादिवत् झटित्येव द्वयोरपि सौरभ्यान्वयो न प्रतीयते, किन्तु कमलसदृशमति विचारान्तरमेव।

## दर्पणः

तद्धिते श्रौतीं दर्शयति तथैवेति। तथा यथा इवादीनामुपादान इत्यर्थः [इवादीनामनुपादान इत्यर्थः] वतेस्तदर्थेविहितत्वादिति भावः।

### साहित्यचूडामणिः

अग्रिमा आद्या पूर्णा । यदुद्भटाः—

**यथेवशब्दयोगेन सा श्रुत्यान्वयमर्हति ।**
**सदृशादिपदाश्लेषादन्यथेत्युदिता द्विधा ॥ [का. सा. सं. १.१६] इति ।**

वाक्यं विग्रहरूपम् । पदानां विशेषणविशेष्यभावपर्यवसायि सामर्थ्यं समासः । यथेववाशब्दानां सद्भावे श्रौती । उपमानेति । उपमानमुपमानतया विशिषन्ति व्यवच्छिन्तीति कृत्वा । ननु कथमेकत्र शृङ्खलितानामिवादीना-मौभयिकसंबन्धप्रत्यायन-प्रागल्भ्यमिति चेदाह—षष्ठीवदिति । यथा राजपुरुष इति राजनिष्ठा षष्ठी पुरुषमप्या-क्षिपति तदुभयनिष्ठं संबन्धं च समर्पयति एवमिवादयोऽपि । यथाहुः-शब्दशक्तेर्महिमा न पर्यनुयोगमर्हतीति । एवमत्रापि । वाक्यवत् तद्धितेऽपि योजयति—तथैवेति । यद्वदिवप्रयोगे वाक्ये श्रौती एवमिवार्थे 'तत्र तस्ये'ति विहितस्य वतिप्रत्ययस्योपादाने अविशेषात् ।

### सम्प्रदायप्रकाशिनी

पूर्णां षोढा दर्शयति—साग्रिमेत्यादि । वाक्ये समासे तद्धिते चेति त्रिषु विषयेषु श्रौती आर्थी चेति प्रतिस्वं द्विधा भिद्यमाना षोढोपजायत इत्यर्थः ।

तत्रेवादिपदोपादाने श्रौतत्वमाक्षेपपुरस्कारेण प्रतिष्ठापयति—यथेवेत्यादि । यथेववादयो हि शब्दा यतः पराः श्रूयन्ते तस्यैव शब्दस्यार्थं उपमानतया नियमेन प्रतीयत इत्युपमानस्यैव भेदका एते, उपमेयाभिसम्बन्धस्त्वार्थ इति यद्यपि प्रतिभासस्तथापि साधर्म्यस्यैकत्वात् शब्देनैव साधर्म्यं प्रतिपादयन्ति । शब्दशक्तेः खल्वयं महिमा—यन्नियमेनोपमानविशेषणाश्च भवन्तीवादयः । द्विष्ठमपि सम्बन्धं श्रुत्यैव प्रतिपादयन्ति षष्ठीवत् । यथा षष्ठी नियमेनोपसर्जनविशेषणभूतापि राज्ञः पुरुष इत्यादौ द्विष्ठमपि सम्बन्धं श्रुत्यैवावगमयति । अत्र श्लोकः—

**"भेदैकत्वेऽपि नियते षष्ठीवदिववादयः ।**
**द्विष्ठं श्रुत्यैव सम्बन्धं गणयन्ति स्वभावतः ॥"**

इत्थञ्च सति यथेवादिप्रयोगो यदा तदोपमा श्रौत्येवेति सिद्धम् । अथ यदा तद्धिते श्रौती, तदा साक्षादि-वाद्यभावेऽपि तदर्थवत्युपादानाद् भवतीत्याह—तथैवेत्यादि । 'तत्र तस्येव' (५-१-११६) इतिवार्थे योऽयं वतिर्वि-धीयते तस्येवादिसमान्यायत्वात् तत्सद्भावेऽपि श्रौत्येव । इत्थं वाक्यसमासयोः साक्षादुपादानमिवादेः, तद्धिते तु तदर्थवतिसद्भाव इति सर्वत्र श्रौतत्वे प्रयोजकमिवाद्येवेति बोद्धव्यम् ।

### मधुमती

अग्रिमापदस्य लुप्तापरत्वभ्रमं निवारयति—अग्रिमेति । तथा च अग्रिमा पूर्णा इत्यर्थः । एवं च पूर्णोप-मायाः वाक्य-समास-तद्धितेषु प्रत्येकं श्रौत्यार्थीत्वभेदात् षट्त्वमिति भावः ।

शङ्कते—यथेति । यत्पराः यत्समभिव्याहृताः । उपमानविशेषणानि उपमानभेदकानि । एवं च—स्वसम-भिव्याहृतपदार्थस्य उपमानत्वम्, तत्प्रतियोगिकसादृश्यवाचकत्वं च उभयोः तुल्यमेवेति, कथं इवादिप्रयोगे श्रौती-

त्वम्? कथं वा तुल्यादिप्रयोगे अर्थीत्वम्? इति आक्षेपार्थः। समाधत्ते—तथापीति। इवादिशब्दस्य पृथक्प्रयोगाभावेन उपमानवाचकसमभिव्याहारेणैव प्रयोगात्, तदर्थान्वितस्वार्थबोधकत्वस्यैव विभक्तेरिव व्युत्पत्तिसिद्धत्वात्। सादृश्योपमानयोः प्रतियोग्यनुयोगि भावरूपसम्बन्धस्य च तत एव प्रतीतेः। अत एव—'चन्द्र इव मुखम्' इत्यत्र चन्द्रशब्दस्य प्रथमान्तत्वात् कथं सम्बन्धप्रतीतिः? —इत्यपास्तम्। व्युत्पत्तिबलादेव सम्बन्धभानात्। अत एव—'भूतले घटो न' इत्यत्र घटशब्दस्य प्रथमान्तत्वेऽपि व्युत्पत्तिबलादेव सम्बन्धभानम्। अत एव—यत्र न तादृशी व्युत्पत्तिः तत्र अभावादिपदवद्धटाभावादिपदादेव षष्ठीसमाससिद्धं तद्भानमिति सिद्धान्तः। तथा च इवादिशब्दानां उक्तरीत्या सम्बन्धवाचकत्वात् तत्प्रयोगे शाब्दत्वमित्यर्थः। अत एव तदनुरूपं दृष्टान्तमाह—षष्ठीवदिति। स्वातन्त्र्येण प्रयोगाभावः, सम्बन्धवाचकत्वं च षष्ठ्यां यथा इत्यर्थः।

### विस्तारिका

अग्रिमा सूत्रे प्रथममुपात्ता। अग्रिमेत्यनेनैव लब्धेः सेति सुखार्थम्।

श्रौत उपमानोपमेययोः समानधर्मसम्बन्धो यत्र शब्दादवसीयते सा।

तथा वाक्यमैकपद्यानापन्नामाकाङ्क्षादिमदनेकं पदम्। सा कथं स्यादित्याह आह—यथेवेति। यत्परा यदुत्तरं श्रूयमाणाः। तस्यैव तदर्थस्यैव, न तु तत्पूर्वतामनापन्नस्य पदार्थस्य। एते यथेवादयो विशेषणानि। यज्जातीयगुणवानिन्दुप्रभृतिरिति प्रतीतेः। तर्हीवादयः किं प्रतिपादयन्तीत्यत आह—सम्बन्धमिति। स च व्याख्यात एव। षष्ठीवदिति। स्वपूर्वस्य प्रतियोगित्वावगमकत्वात्।

ननूपमानविशेषणत्वे कथं सम्बन्धाभिधायितासम्बन्धे प्रतियोगिनो विशेषणत्वनियमादित्यत आह—शब्दशक्तिमहिम्नेति। इवादीनामव्ययानां तथात्वेऽपि विशेषणत्वस्वभावादिति। यद्यपि-तथापिशब्दयोः सङ्गतिः।

श्रौतीत्वं व्युत्पादयति—श्रुत्यैवेति। श्रुत्यैव, न तु कथं सदृशमित्याकाङ्क्षितधर्मापेक्षयापि। तत्सद्भावे इवाद्युपादानेऽपि।

नन्विवादीनां प्रयोगे श्रौती, तुल्यादीनां चार्थीति कथं नियमः? द्वयोः सादृश्यवाचकत्वेन तुल्यत्वादिति चेत्, अत्रोच्यते-इवादिप्रयोगे प्रतियोग्यनुयोगिसमानधर्मबोधकानां समानविभक्तिकत्वेन परस्परशब्दान्वयेनानुपपत्तिः। यथा 'कमलमिव मुखं सुरभि' इत्यादौ कमले मुखे च द्रागेव सौरभान्वयात्। 'चन्द्रेण तुल्यं मुखमाह्लादकम्' इत्यादौ तु चन्द्रेण सह नाह्लादकत्वान्वयः शाब्दः, विभक्तिभेदात्। किन्तु कथं तुल्यमित्याकाङ्क्षायामार्थ एवेति श्रौत्यार्थीविवेकः।

'कमलं मुखं च तुल्यं सुरभि' इत्यत्र विभक्तिसाम्येऽप्युपमानोपमेयभावो न शब्दश्रवणमात्रेणावगम्यते, किन्तु प्रकृतत्वात् प्रकृतत्वपर्यालोचनयैवेति नेयं श्रौतीति भावः। उपमानोपमेयोभयविशेष्यकत्वेऽपि प्रतियोग्यनुयोगिभाव उपमानोपमेययोः, गुणप्रधानभावात् प्रकृतत्वेनोपमेयस्य प्राधान्यादिति।

नन्विवादीनां सादृश्याभिधाने चन्द्रादौ च कथं भेदेन तद्वैशिष्ट्यान्वयः? विभक्त्यर्थान्तरभावं विना नामार्थयोस्तदनुपपत्तेः, मैवम्, अव्ययादन्यत्रैव तन्नियमात्; अन्यथा 'घटः पटो न' इत्यत्र घटान्योन्याभावयोर्भेदान्वयो न स्यात्।

तद्धितमात्रेन श्रौतीत्वमित्याह—तत्रेत्यादि । तत्रेति सप्तम्यन्तात् । तस्येति षष्ठ्यन्तादिवार्थे वतिरित्यर्थः । इवार्थः सादृश्यम् ।

### सारबोधिनी

विभजते पूर्णेत्यादि । लोपेऽनुपादाने सेति वाक्यमैकपद्यानापन्नमाकाङ्क्षादिमदनेकं पदम् । नन्विवादि-शब्दा उपमानविशेषणानि तद्गतमेवातिशयं वक्तुमर्हन्ति विशेषणान्तरवत् न च पुनरुपमेयगतं साधर्म्यमसम्बन्धा-दिति शङ्कते यथेववादीति । समाधत्ते तथापीति । शब्दशक्तिस्वाभाव्यादित्यर्थः । तत्र दृष्टान्तमाह षष्ठीवदिति । यथा राज्ञः पुरुष इत्यत्र राजनि श्रूयमाणा षष्ठी तमेव विशेषयन्ती स्वस्वामिभावादिसम्बन्धं पुरुषगतमपि प्रतिपादयति उभयवृत्तिसम्बन्धस्यैकत्वात् तथेदमपि लुप्तविभक्तिकमव्ययपदमेकत्र विश्रान्तमप्युभयाश्रयं सम्बन्धमभिव्यन-क्तीत्यर्थः । सम्बन्धः साधर्म्यम् । श्रौतीत्वं व्युत्पादयति श्रुत्यैवेति । न तु कथं सदृशमित्याकाङ्क्षितधर्मापेक्षयापि । तत्सद्भावे यथेववादिसद्भावे ।

ननु इवादीनां प्रयोगे श्रौती, तुल्यादीनां चार्थीति कथं नियमः, द्वयोः सादृश्यवाचकत्वेन तुल्यत्वात् इति । उच्यते-इवादिप्रयोगे प्रतियोग्यनुयोगिसमानधर्मबोधकानां समानविभक्तिकत्वेन परस्परशब्दान्वये नानुपपत्तिः । यथा—'कमलमिव मुखमाह्लादकमि'त्यादौ कमले मुखे च द्रागेवाह्लादकत्वान्यात् । चन्द्रेण तुल्यं मुखमाह्लादक-मित्यादौ तु चन्द्रेण सह नाह्लादकत्वान्वयः शाब्दः, विभक्तिभेदात् । किन्तु कथं तुल्यमित्याकाङ्क्षायामार्थ एवेति श्रौत्यार्थीविवेकः । कमल मुखं च तुल्यं सुरभि इत्यत्र विभक्तिसाम्येऽपि उपमानोपमेयभावो न शब्दश्रवणादवग-म्यते किन्तु प्रकृतत्वाप्रकृतत्वपर्यालोचनयैवेति नेयं श्रौतीति भावः । उपमानोपमेययोर्विशेष्यकत्वेऽपि प्रतियोग्यनु-योगिभावः उपमानोपमेययोर्गुणप्रधानभावात्, प्रकृतत्वेनोपमेयस्य प्रधान्यादिति । इवादीनां सादृश्याभिधाने चन्द्रादौ मुखादौ च कथं भेदेन तद्वैशिष्ट्यान्वयः । भेदार्थकविभक्त्या अर्थान्तर्भावं विना नार्थयोस्तदव्युत्पत्तेः । मैवम् । अव्ययादन्यत्रैव तन्नियमात् । अन्यथा घटः पटो नेत्यत्र घटान्योन्याभावयोर्भेदान्वयो न स्यात् । तद्धितमात्रेण श्रौतीत्वमित्याह तत्रेत्यादि । तत्रेति सप्तम्यन्तात्, तस्येति षष्ठ्यन्तादिवार्थे वतीत्यर्थः ।

### काव्यप्रदीपः

तयोः पूर्णा विभजते—

**साग्रिमा ।**

**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ।। १ ।।**

अग्रिमा प्रथमोद्दिष्टा । पूर्णेत्यर्थः । वाक्यं विग्रहः । तेनोपमानादिपदानि चत्वार्यपि यत्रासमस्तानि भिन्न-विभक्तिकानि सा वाक्यगा । यत्र तु तेषु कयोरपि समासः सा समासगा । तद्धितेनोपमाप्रतिपादकेन तु सममुपमा-नवाचिन्याः प्रकृतेर्न समासो नापि विग्रह इति तृतीय उपमाभेदः । त्रिविधाप्येषा श्रौत्यार्थीभेदात्प्रत्येकं द्विधेति षड्विधा पूर्णेत्यर्थः । श्रौतत्वं चोपमानोपमेययोः साधारणधर्मसंबन्धरूपायास्तस्याः शाब्दबोधविषयत्वम् । अर्था-पत्तिगम्यत्वं चार्थत्वम् । तत्र यथेववादिशब्दानां, 'तत्र तस्येव' इत्यनेनेवार्थे विहितस्य वतेश्चोपादाने श्रौती ।

## काव्यप्रकाशखण्डनम्

**साग्रिमा।**

**श्रौत्यार्थी च भवेद् वाक्ये समासे तद्धिते तथा॥ (का. ८७)**

यथे[व] वादिशब्दा यत्परास्तस्यैव श्रुत्यैव उपमानताप्रतीतिरिति। यथे[व] वादिंशब्दसत्त्वे श्रौती तथैव 'तत्र तस्येवे'त्यनेन इवार्थे [प. ४६, २] विहितस्य वतेरुपादाने। सदृशतुल्यादिशब्दप्रयोगे 'सरसिजमिदमाननं च तस्याः सम'मित्यादौ प्रकृताप्रकृतपर्यालोचनयैव उपमानोपमेयप्रतीतिरित्यार्थी, 'तद्वत्तेन च तुल्य'मित्यादिना विहितस्य वतेः स्थितौ। 'इवेन नित्यसमासो विभक्त्यलोप' इति नित्यसमासे इवशब्दप्रयोगे समासगा। समासानुशासनप्रयोजन मग्निरिव राजा इत्यादौ।

## आदर्शः

साऽग्रिमेति सूत्रैकदेशः। उक्तयोः पूर्णालुप्तयोरग्रोक्तत्वेन पूर्णा। सा द्विविधेत्याह—श्रौत्यार्थी चेति। द्विविधैव सा वाक्यसमासतद्धितगामित्वभेदात्षड्विधा भवतीत्याह—भवेद् वाक्ये इत्यादि। तत्र श्रौतीत्वं ग्राहयति—यथेववादीति। आदिपदाद् व-शब्दपरिग्रहः। तत्सद्‌भावे श्रौतीत्यग्रेऽन्वयः। यत्परा इति, यत्परभावेनैव स्वार्थान्वयबोधका इत्यर्थः, तेन 'तथा मुखं यथा चन्द्रः' इत्यत्र यथाशब्दस्य चन्द्रात् पूर्वं मुखाच्च परतः पातेऽपि चन्द्र एवोपमानताप्रतीतिः, अन्वयबोधे चन्द्रपरभावेनैव यथाशब्दस्योपमानताप्रत्यायकत्वनियमात्।

ननु तस्यैवोपमानताप्रतीतिरित्युक्त्या अन्यस्योपमानता न प्रतीयते इत्येवार्थो लभ्यते, तच्च कथमुपमायाः श्रौतीत्वसाधकम्? तुल्यादिपदोपादाने यत्राऽऽर्थीत्वमुपमाया वक्ष्यते तत्राप्यन्यस्योपमाप्रतीत्यभावेनाविशेषादिति चेत्, न; तस्योपमाप्रतीतिरेवेत्येवमेवकारयोजनया उपमाप्रतीत्ययोगव्यवच्छेदलाभात्। तुल्यादिपदोपादाने तु उपमाप्रतीत्ययोगोऽप्यग्रे दर्शयिष्यते। तथा यच्छब्दोपादाने अन्तरा बाधोपस्थितिं विना यत्प्रतीत्यवश्यम्भावरूपो यत्प्रतीत्ययोगव्यवच्छेदः सोऽर्थस्तद्वाच्य एवेति व्याप्तिदर्शनमनेन कृत्वा उपमायाः शब्दवाच्यत्वं साधितम्। न चोपमानतायाः प्रतीत्ययोगव्यवच्छेदेऽपि कथमुपमायास्तथात्वसिद्धिरिति वाच्यम्, उपमाननिष्ठायाः सादृश्यप्रतियोगिताया एवोपमानतात्वमुपमान(मात्व ?)ञ्चेति सिद्धान्तेन तयोरभेदादुपमानतायाः श्रौतीत्वमेवोपमायाः श्रौतीत्वम्।

तादृश्या उपमाया इवादिवाच्यत्वरूपं श्रौतीत्यवं साधयितुं चन्द्र इव मुखमित्यादौ चन्द्रपदोत्तरं प्रकारीभूतार्थकविभक्तिभिन्नप्रथमाविभक्तिसत्त्वे चन्द्रोपमाप्रतीत्यनुपपत्तिं वाक्यमध्य एव कण्टकं यद्यपीत्यादिनाऽऽशङ्क्य तथापीत्यादिना समाधित्सुराह—यद्यपीति। विशेषणानीत्यत्र विशेषणपदमन्वयिपरम्। तथा च एते इवादयो यद्यपि उपमानविशेषणानि विशेष्यीभूय उपमानान्वितस्वार्था इत्येवार्थः, चन्द्रप्रतियोगिकसादृश्यरूपे स्वार्थे चन्द्रस्य विशेषणत्वात्, न तूपमानं विशेषणं येषामिति बहुव्रीहिणैतादृशार्थलाभः, तदा विशेषणानीति नपुंसकत्वानुपपत्तेः। एवञ्चोपमानस्य चन्द्रस्य भेदेन सादृश्यविशेषणत्वे तत्र चन्द्र इवेति प्रथमाविभक्त्यनुपपत्तिरिति यद्यपीत्याद्याशङ्कार्थः, नामार्थद्वयस्य भेदेनान्वयबोधे प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वेन प्रकारानुपस्थापकप्रथमासत्त्वे तदनुपस्थितेः (पत्तेः ?); समाधानान्तरसत्त्वे निपाताव्ययतिरिक्तविशेषणस्यादेयत्वमिति मीमांसकाभिप्रायात्। समाधानमेवाह—

तथापीति । इवाद्यव्ययपदानां शक्तेः सामर्थ्यस्य महिम्ना इवादयः श्रुत्यैव शक्त्यैव सादृश्यप्रतियोगितारूपं सम्बन्धं प्रतिपादयन्तीत्यर्थः । तत्र दृष्टान्तमाह—षष्ठीवदिति । चन्द्रस्य सदृश इत्यत्र यथा षष्ठी चन्द्रनिष्ठप्रतियोगितारूपं सादृश्यस्य सम्बन्धं प्रतिपादयति, तथा चन्द्र इवेत्यादावपीवादयस्तं सम्बन्धं प्रतिपादयन्तीत्यर्थः । चन्द्रनिष्ठसादृश्यप्रतियोगितारूपसम्बन्ध इवादिपदार्थ एव न तु वाक्यार्थः, येन संसर्गविधया तद्बोधे प्रथमानुपपत्तिरिति भावः ।

न च सम्बन्धस्य इवादिवाच्यत्वे भेदेन चन्द्रे तदन्वयेऽपि सैवानुपपत्तिरिति वाच्यम्, अव्ययानां सुब्विभक्तीनाञ्चान्विताभिधायित्वमतावलम्बनेनैतत्सिद्धान्तात् । एवञ्च घटो न पटो नेत्यादावपि एवमेव समाधानम् । चन्द्रादिपदन्वितरान्वितत्वेन गृहीतशक्तिकस्य इवादेरितरविशेषस्मारकम् इति तत् । सिद्धान्तः । यत्तु 'वाच्य एव वाक्यार्थ इति त्वन्विताभिधानवादिन' इति प्रागुक्तं तदप्यव्ययविभक्तिघटितवाक्यार्थाभिप्रायेण, मतविशेषे सर्ववाक्यार्थस्यैव तथात्वाभिप्रायेण वा । इह तु तुल्याद्यनव्ययानां पदानामतथात्वस्य वक्ष्यमाणत्वादव्ययानामेव तथात्वेऽभिप्राय इति बोध्यम् ।

अथ प्रकारीभूतविभक्त्योपस्थितेस्तन्त्रत्वस्य नैयायिकोक्तेन निपाताव्ययातिरिक्तविशेषणेनैव समञ्जसे किमर्थं प्रतियोगितारूपस्य समबन्धस्येवाद्यव्ययपदवाच्यत्वमङ्गीकृत्यान्विताभिधानमतावलम्बनमिति चेन्न; चन्द्रस्य सदृशं मुखमित्यत्र षष्ठी भवति, चन्द्र इव मुखमित्यत्र षष्ठी न भवतीत्यत्र षष्ठ्यर्थस्येवादिवाच्यतया षष्ठ्यप्रयोगस्यैव तद्बीजत्वात्, सदृशाद्यनव्ययपदानान्तु वाच्यो न सम्बन्ध इति तत्र षष्ठीप्रयोगान्निपाताव्ययातिरिक्तविशेषणदाने गौरवाच्च । 'श्रौती' शब्दवाच्या । इवार्थकवतेरप्युमावाचकत्वमाह—तथैवेति, इवादिशब्दसद्भावस्थल इवेत्यर्थः । 'तत्र तस्येवे'ति पाणिनिसूत्रम्, तत्रेव तस्येवेति तदर्थः, षष्ठ्यन्तात् सप्तम्यन्ताद् वा विहितो वतिप्रत्यय इवार्थक इत्यर्थः । इवशब्दवदेव तस्यापि व्युत्पत्तेस्तस्यापि वाच्या उपमेत्यर्थः ।

### सुधासागरः

अग्रिमापदस्य लुप्तापरत्वभ्रमं निवारयति—अग्रिमेत्यादि । अग्रे प्रागुद्दिष्टाऽग्रिमा पूर्णेत्यर्थः । वाक्यं विग्रहः । तेनोपमानादिपदानि चत्वार्यपि यत्रासमस्तानि भिन्नविभक्तिकानि सा वाक्यगा । यत्र तु तेषु कयोरपि समासः सा समासगा । तद्धितेनोपमाप्रतिपादकेन तु सममुपमानवाचिन्याः प्रकृतेर्नसमासो नापि विग्रह इति तत्र तृतीयः उपमाभेदः । त्रिविधाऽप्येषा श्रौत्यर्थीभेदात् प्रत्येकं द्विविधेति षड्विधा पूर्णेत्यर्थः । श्रौतत्वं चोपमानोपमेययोः साधारणधर्मसम्बन्धरूपायास्तस्याः शाब्दबोधविषयत्वम् । अर्थापत्तिगम्यत्वं चार्थत्वम् । तत्र यथेववादिशब्दानां 'तत्र तस्येव' इत्यनेनेवार्थे विहितस्य वतेरत्रोपादाने श्रौती । तुल्यादीनां शब्दानां 'तेन तुल्यम्' इत्यादिना तुल्यार्थे विहितस्य वतेश्च प्रयोगे आर्थी ।

ननु इवादिशब्दा उपमानविशेषणानि तद्गतमेवातिशयं वक्तुमर्हन्ति, विशेषणान्तरवत्, न च पुनरुपमेयगतं साधर्म्यसम्बन्धमिति शङ्कते—यथेववादीति । अयमाशयः-नन्वयं श्रौत्यार्थीविभागोऽनुपपन्नः, उभयत्र सादृश्यप्रत्ययाविशेषात् । न च वाच्यम् यथादिशब्दैः साधारणधर्मसम्बन्ध उभयत्र शक्त्यैव बोध्यते, न पुनस्तुल्यादिशब्दैरयमेव विशेष इति, यतो यथादिशब्दा यदनन्तरमुपात्तास्तस्यैवोपमानताप्रतीतिरित्युपमानविशेषणानि ते । अत उपमाने तत्सम्बन्धं बोधयन्तु, न पुनरुपमेये, अन्यविशेषणस्यान्यत्र सम्बन्धबोधकत्वादर्शनादिति चेत् । न । शब्दशक्तिस्वाभाव्यादन्यविशेषणत्वेऽप्यन्यत्र सम्बन्धबोधकत्वात् । न चादृष्टचरत्वम्, षष्ठ्यां तथादर्शनात् । षष्ठी हि

यदनन्तरमुपात्ता तस्यैवोपसर्जनत्वप्रतीतिरित्युपसर्जनविशेषणत्वेऽपि प्रधानेऽपि सम्बन्धं बोधयति। यथा 'राज्ञः पुरुष' इत्यत्र राज्ञि श्रूयमाणा षष्ठी तमेव विशेषयन्ती स्वस्वामिभावादिकं सम्बन्धं पुरुषगतमपि प्रतिपादयति, उभयवृत्तिसम्बन्धस्यैकत्वात्, तथेदमपि लुप्तविभक्तिकमव्ययपदमेकत्र विश्रान्तमपि उभयाश्रयं साधर्म्यरूपसम्बन्धमभिव्यनक्तीत्यर्थः। तस्मात् प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या सम्बन्धबोधे विशेषाच्छ्रौतार्थविभाग इति मन्तव्यम्। तथा हि 'पद्ममिव मुखम्' इत्यादावुपात्तस्याक्षिप्तस्य वा रमणीयत्वादेः सम्बन्धमविषयीकृत्यापर्यवसानम् यथादिशब्दानां धर्मविशेषसम्बन्ध एव शक्तत्वात्। तुल्यादिशब्दास्तु नैवम्, 'पद्मेन तुल्यं मुखम् इत्यादावुपमेये 'पद्मं तुल्यं मुखस्य' इत्यादावुपमाने, 'पद्मं तुल्यं मुखस्य' इत्यादावुपमाने, 'मुखं पद्मं च तुल्यम्' इत्यादावुभयत्रापि सामान्यतस्तुल्यत्वं बोधयित्वा विश्रान्तेषु तेषु धर्मविशेषं विना कथं तुल्यतेति प्रतीतानुपपत्त्या धर्मविशेषसम्बन्धप्रतीतेरिति।

'तेन तुल्यं मुखम्' इत्यादावुपमेये, एव 'तत्तुल्यमस्य' इत्यादौ चोपमाने, एव 'इदं च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादि शब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्यार्थत्वात्तुल्यादिशब्दोपादाने, आर्थी तद्वत् 'तेन तुल्यं क्रिया चेद्वतिः' इत्यनेन विहितस्य वतेः स्थितौ ।

"इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च" इति नित्यसमासे, इवशब्दयोगे समासगा ।

---

**सङ्केतः**

तेन चन्द्रेण तुल्यं मुखम् । तत् चन्द्रबिम्बं तुल्यं अस्य मुखस्य । इदं च मुखं च तच्च चन्द्रबिम्बं च तुल्यम् । उभयत्रापि इति । क्रमेणेति शेषः । पूर्वयोस्तु एकत्रैवेति भावः । तुल्यादीति । तुल्यप्रकारकशब्दानां इत्यर्थः । साम्येति । सममेव साम्यम्, समानो धर्मः । द्विष्ठरूपं सादृश्यं तुल्यता ।

अयं भावः—उपमानोपमेययोः साम्यप्रतीतिः न तुल्यादिशब्दादावेव, किन्तु अर्थात् । तुल्यादिपदानां उपमानोपमेययोरेकतरत्रैव विश्रान्तेः । अन्यत्र तु—तद्गतसाम्यलोचनया सादृश्यप्रतीतिः । तेनसौ आर्थी इति ।

तद्वदिति । आर्थीत्यर्थः ।

इवेन समासः स्याद्वा न वेत्याह—इवेनेति । एतद्वक्तव्यं 'कुगतिप्रादयः' इति सूत्राश्रितम् । समासगेति । श्रौतीति योगः ।

**सङ्केतः (रुय्यकः)**

यद्यपि 'तेन तुल्य' मित्यादौ तुल्यादिपदानामुपमेय एव विश्रान्ति । रित्युक्तं तथापीह कुसुमेन सदृक्षमिति सदृशशब्दाभिधेयस्योत्कृष्टतरगुणत्वेनाप्राप्यताप्रतिपादनादुपमानत्वं बलादायातं तस्य च साक्षादनिर्देशादुपमानस्यैव लोपः ।

**बालचित्तानुरञ्जनी**

तुल्यादिशब्दोपादाने आर्थी प्रतिपादयितुमाह तेनेति । तुल्यादिशब्दानां 'तेन तुल्य'मित्यादौ उपमेय एव विश्रान्तिः । तत्तुल्यमस्येत्यादौ उपमान एव । इदं च तच्च तुल्यमित्युभयत्रापि विश्रान्तिरिति संबन्धः । यथेवादीनामेकत्र श्रूयमाणत्वेऽपि न तत्रैव विश्रान्तिः, किन्तु प्रतियोगिगतसम्बन्धाभिधाने, तुल्यादीनां तु न तथा । किन्तु तुल्यत्वनिर्वाहाय साम्यपेक्षणीयमिति आर्थी उपमेत्यर्थः । एवं तद्धितेऽप्यार्थीमाह तद्वदिति । स्थिताविवत्यत्र आर्थीत्यनुषज्यते ।

समासे श्रौतीमाह इवेनेति। अत्र आर्थी प्रसिद्धा, तथा च वाक्यगा समासगा तद्धितगा चेति श्रौती त्रिधा। एवमार्थ्यपि त्रिविधेति पूर्णा षड्विधा भवति।

**काव्यादर्शः**

'इदं च' इति चन्द्रबिम्बं च मुखं च तुल्यम्। साम्यपर्यालोचनयेति। सममेव साम्यं साधारणो धर्मः। तुल्यता द्विष्ठरूपं सादृश्यम्। न तु तुल्यादिशब्दादेव साम्यप्रतीतिः, अपि तु अर्थात्, तुल्यादीनां पदानामुपमानोपमेययोरेकतरत्रैव विश्रान्तेः, अन्यत्र तु तद्गतसादृश्यपर्यालोचनया तत्संबन्धित्वावगतिः, तेनासौ आर्थी। तद्वदिति, आर्थीत्यर्थः।

ननु समासोपमा श्रौती कथं स्यात्, न हि इवेन सह समासो घटते—इत्याशङ्क्य इवेन सह समासप्रतिपादकं 'कु-गति-प्रादय' इति सूत्राश्रितं वक्तव्यमाह वृत्तिकारः—'इवेने'ति।

**विवेकः**

अथार्थीत्याह—तेन तुल्यमिति। सममेव साम्यं साधारणो धर्मः। तुल्यता द्विष्ठरूपं सादृश्यम्। तद्वदिति 'तेन तुल्यं क्रिया चेद्वति'-(पा. ५/१/११५) रित्यत्र क्रिया साध्यस्वभावा विवक्षिता। तद्विशेषणं तुल्यमिति। तथाभूता च क्रिया क्रिययैवोपमीयते। प्रातिपदिकन्तु तेनेति तृतीयासमर्थं द्रव्यवाचि। अतः सामर्थ्यात् प्रातिपदिकार्थसमवेतक्रियायां वर्तमानात् प्रत्ययो भवतीति विज्ञायते न तु मुख्यवृत्तेः, असम्भवात्। ततश्च 'ब्राह्मणवत् क्षत्रियादधीते, 'क्षीरवज्जलं पिबती'त्येवमादयः प्रयोगाः सिध्यन्ति। ब्राह्मणादिशब्दानां ब्राह्मणादिस्थास्वध्ययनादिक्रियासु साहचर्याद्वृत्तेस्ताभिश्च क्षत्रियादिस्थानामध्ययनादिक्रियाणां तुल्यत्वात्तृतीयाऽन्तत्वमेव ब्राह्मणादिशब्दानामुपपद्यते। तदित्थं क्रियासामर्थ्यालोचनाऽत्र तुल्यताप्रतीतिरित्यार्थत्वम्। एवञ्च देवदत्त इव स्थूलः, यज्ञदत्त इव गोमानित्यादौ सप्तमीषष्ठ्यन्ततयोरभावेऽपि क्रियाग्रहणादेव 'तत् तस्येव' (पा. ५/१/११६) इत्यत्र वतिर्द्रष्टव्यः।

कथं पुनः क्रियाशब्देन गुण उच्यते? क्रियापूर्वकत्वात्। स्थौल्यगुणयोगाद्धि स्थूलो भवति गोसम्बन्धाञ्च गोमानिति। नन्वेवं सति क्रियाग्रहणमपि न कर्तव्यम्; प्रवर्त्तना(ता)-मविशेषेण 'तेन तुल्य'मित्यस्मिन्नर्थे वतिः। तत्र तस्येवेत्यनेन नार्थः सूत्रारम्भेण, तदर्हम् (पा. ५/१/११७) इत्येतदप्युपमानतो न व्यतिरिच्यते। यद्विवृतं राजानमर्हति तद्राजसदृशमेव भवति। एवञ्च 'तेन तुल्यं क्रिया चेद्वति'रित्येतावति स्थिते (वातिष्ठते)? तथाचाह चन्द्रगोमी 'इवे(व)वति'रिति (च. वा. ४/१/१३५)।

नन्वेवं गौरिव गवय इत्यत्रापि वतिः प्राप्नोति? नैवम्, उपमायां वतिर्नोपमाने। यद्यपि 'इव' शब्देनोभयमपि द्योत्यते तथाऽप्यन्यदेवौपम्यमन्यदेवोपमानम्। भूयोऽवयवसादृश्ययोगा ह्युपमा यथा चन्द्र इव मुखम्। सादृश्यात् सदृशप्रतिपत्तिरुपमानम्, यथा गौरिव गवय इत्यास्तामेतत्। ब्राह्मणवत् क्षत्रिय इत्युक्ते गच्छति पठतीत्यादिकासु क्रियासु न विशेषोऽवगम्यत इति तत्प्रतिपत्तये क्रियाविशेषोऽवश्यं प्रयोक्तव्य इति वाक्यविषय एवास्य प्रयोगः प्रकरणादिना वा तत्प्रतिपत्तिरिति तुल्यमेव। 'सामान्यान्येव भूयांसि गुणावयवकर्मणम्। भिन्नप्रधानसामान्यव्यक्तिः सादृश्यमुच्यते॥' इति तौतातिताः। सदृशमिति कृत्वा यत् प्रतीयते तत् सादृश्यम्। न चैतदध्यक्षगम्य-

मिन्द्रियापातमात्रेणाप्रतिभासमानात्। न च लिङ्गादिगम्यम्, तदनुसन्धानविरहिणोऽपि सादृश्यप्रतीतेः, प्रत्यक्षादिविषयीभूतद्रव्यादिपदार्थातिरिक्तत्वाच्च। तथाहि न तावद्द्रव्यं गुणः कर्म वाऽगुणत्वाद् गुणवृत्तित्वाद्विभागहेतुत्वात्, [न] सामान्याद्यन्यतममनुगतव्यावृत्त्येहबुद्ध्यहेतुत्वात्। अतः पदार्थान्तरमेवेति प्राभाकराः। "परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः॥" (न्या. कु. अ. ३/८ काः) इति न्यायाद् भावाभावाभ्यामन्यः प्रकारः शङ्कितुमपि न शक्यः। तथा च विधिरूपतया प्रतीयमानस्याभावत्वं न वक्तव्यम्। भावरूपञ्च गुणवन्निर्गुणं वेति? तत्र प्रथमे द्रव्यत्वं द्वितीये त्वाश्रितमनाश्रितं वेति। तत्र द्वितीये समवाय एवानवस्थाभयात्। आश्रितन्तु सामान्यवन्निःसामान्यं वेति। प्रथमे तु स्पन्दरूपमस्पन्दरूपं वा? एतत् यथासंख्यं कर्म गुणश्च। निःसामान्यं निर्गुणम् आश्रितं त्वेकाश्रितमनेकाश्रितञ्चेति। एतदपि यथासंख्यं विशेषः सामान्यञ्चेति। अतः सादृश्यमेवानेकां विधामासादयन्नातिरिच्यते। अनासादयन्नपदार्थीभूय स्थातुमुत्सहते शक्तिसंख्यावदिति नैयायिकाः (न्या. कु. अ. ३/८ वृः १९३-१९४ पृः)। एतद्बलाबलमीमांसा ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च नेह प्रतन्यते।

## दीपिका

एवं वाक्ये आर्थीमुक्त्वा तद्धित आह—तद्वदिति। तुल्यादिपदवद्व्याख्यासौकर्येण पश्चादुपात्तमपि तद्वदिति पदमुपमाऽर्थानुगुणतया 'वाक्य' इति पदव्याख्यानन्तरं व्याख्याय समास इति श्रौत्यनुगुणसाचिव्येन सर्वं द्रष्टव्यमिति व्याचष्टे। इवशब्दयोग इति नियमपरम्। यथेवादिभिः समाससमाधानेऽस्त्वेवंविधः समासो येषां नानुमतस्तेषामेव त्रिधा श्रौत्यपि नास्ति। एतदेवासूत्रयितुं वाक्यगतश्रौतीव्युत्पादनपरे यथेववाशब्दा इत्यादाविवशब्दस्य प्रयोगः। आर्थी तु समासगा वाक्यगतार्थीव्युत्पादनेनैव व्युत्पादितप्रायेति पृथङ्नोक्ता।

## दर्पणः

साम्यं समानधर्मयोगः। तस्य पर्यालोचनया उपमासापेक्षबुद्ध्या। अयमाशयः।

तुल्यादिपदानामुपमानोपमेययोर्द्वयोरपि विश्रान्तेः अस्योपमानस्योपमेयत्वमिति बुद्धिः। प्रकृतिपर्यालोचनसापेक्षा एव उपमेयमिति कमलसदृशं मुखं स्वरं [सुरभि] इत्यादौ च कमलमिव मुखमित्यादिवत् झटित्येव द्वयोरपि सौरभ्यान्नुयो [र्थया] न प्रतीयते। किन्तु कथमिदं तत्सदृशमिति विचारानन्तरमेवेति तदुपादाने आत्मोवतेः [आर्थीवतेः] स्थितावित्यनन्तरं तस्य तुल्यार्थविहितत्वात् तुद्धिते [दद्धिते] आलीति शेषः [आर्थीति शेषः]।

इह सूत्रे [८७] व्यावा इत्यनन्तरं [वाक्य इत्यनन्तरं] अर्थपातुमपि [?]समास इदं [लक्षणं] व्याख्याय व्याख्यासौकर्येण पश्चादुपातुमपि [पचादनुपात्तमपि] तद्धितद्वयमुपमाद्वयार्थं [तद्धिते तथा उपमा इत्यर्थ] गुणव्यातं [?]। संप्रति शेषं तद्व्याचष्टे इवेनेति। विभक्तेवलोपो [विभक्त्यलोपो] यथा वागन्वाविवित्यादौ [वागर्थाविवेत्यात्यादौ] समासे तु पूर्वपदस्य प्रकृतिस्वरत्वं तु वेद एवोपयुज्यते इति येषां ते [येषां] इवशब्दयोगे नित्यसमासो नास्ति तेषां तत्रापि औन्यपि [?]न भवन्ति।

**साहित्यचूडामणि:**

आर्थीमाह—तेनेति । इदं च तच्चेति चकारौ यौगपद्ये । साम्यम् औपम्यम् इवादिषु यच्छ्रौतं तस्य पर्यालोचनया । यतेवादीनामेकत उपादीयमानानामपि प्रतियोगिसंबन्धाभिधानव्यतिरेकेण पर्यवसानाभावादन्यत्रापि विश्रान्ति:, तुल्यादीनां पुनरेकत्र युगपदुभयत्र वा तात्पर्य नत्वन्यत्रापि । एवं तद्धितेऽपीत्याह—तद्वदिति । समासे श्रौतीमाह—इवेनेति । अत्रार्थी प्रसिद्धा ।

**सम्प्रदायप्रकाशिनी**

अथ तथा श्रौतत्वमिवादिसद्भावैकनिबन्धनं तद्वदार्थत्वमपि तुल्यादिपदसद्भावैकनिबन्धनमित्यारभते—तेन तुल्यमित्यादिना । तुल्यसदृशादिकं पदं तेनेदं तुल्यमित्यादावुपमेयविशेषणत्वेनैव विश्राम्यति । तत् तुल्यमस्येत्यादावुपमानविशेषणत्वेनैव । इदं च तच्च तुल्यमित्यत्र तूभयत्र विश्राम्यति । अतो नियमेनैकतरविशेषणत्वाभावात् साम्यपर्यालोचनमुखेनैव तुल्यप्रतीतिर्व्यवतिष्ठते । अत: साधर्म्यमर्थादायातमिति तुल्यादिपदोपादाने आथ्यव । अत्र यथा तद्धितगतत्वेनार्थी तथा तुल्यादिपदाभावेऽपि तदर्थवतिसद्भावाद् भवतीत्याह—तद्वत् तेन तुल्यमित्यादि । 'तेन तुल्यं क्रिया चेद्वति:' (५-११-१५) इति तेन तुल्यमित्यर्थे योऽयं वतिर्विधीयते, तत्र सति तद्धितगतत्वेन भवत्यार्थी । इत्थञ्च सति साक्षादिवादिप्रयोगे वाक्यगा समासगा च, इवार्थवतिस्थितौ तु तद्धितगा चेति इवादिनिबन्धना श्रौती त्रिधा । तथा साक्षात् तुल्यादिपदोपादाने वाक्यगा समासगा च, तदर्थवतिस्थितौ तद्धितगा चेत्यार्थ्यपि तुल्यादिपदनिबन्धना त्रिधा । इत्थं पूर्णा षोढा । नन्विवादिसद्भावे समासगा कथमित्यत आह—इवेन विभक्तीत्यादि । 'इवेन विभक्त्यलोप: पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' इत्यनेनेवशब्दयोगे यदा नित्यसमासस्तदा श्रौती समासगा ।

**मधुमती**

तुरुयादिपदप्रयोगे आर्थीत्वं उपपादयति—तेनेति । न हि इवादिशब्दा इव तुल्यादिशब्दा अपि पृथक्प्रयोगरहिता:, येन उपमानान्वितमेव स्वार्थ ब्रूयु: । किन्तु—'इदं सदृशम्' इत्युक्ते उपमानोपमेयसाधारणी प्रतीतिर्भवन्ती नोपमानसादृश्ययो: सम्बन्धं प्राग्बोधयितुमीष्टे । अपि तु—'कस्य केन वा सदृशम्' ? इत्याकाङ्क्षायां, चन्द्रस्य सदृशम् इत्याद्युक्तं षष्ठ्यादिबलात् सम्बन्धं बोधयति । न तु तेन विना तदपि सम्बन्धत्वेनैव भासते, न वा प्रतियोगित्वादिनाऽपि तत्प्रतीति: । अत एव सादृश्यसम्बन्धित्वस्य उभयत्रापि विश्रामात् तदुत्तरकालं तात्पर्यादिसहकारेण प्रतीतियोग्यत्वादिप्रतीति: । इवादौ च अन्वयबोधदशायामेव तथा प्रतीति: । अत एव तत्र शाब्दीत्वम्, अन्यत्र तु आर्थीत्वम् । अत एव उपमानोपनिबन्धनायां लुप्तायां आर्थीमेवोदाहरिष्यति, न श्रौतीम् । तेन विना तेषां अप्रयोगात् । तदिदमुक्तम्—उभयत्रापीति, साम्यपर्यालोचनयेत्यादि च । तस्मात् सम्बन्धबोधकत्वाबोधकत्वानिबन्धनोऽयं विभाग:, न तु सादृश्यबोधकत्वाबोधकत्वानिबन्धन: । उभयो: सादृश्यवाचकत्वे अविवादात् ।

यद्यपि इवादिशब्दस्येव तुल्यार्थकवतेरपि पृथक् प्रयोगाभावात् श्रौतीत्वमेव, तथापि आर्थीत्वप्रयोजकतुल्यादिशब्दार्थे, विधानात् आर्थीत्वमुक्तमिति ध्येयम् ।

'चन्द्रसदृशम्' इत्यादौ पदार्थैकदेशस्य सादृश्यस्य कथं चन्द्रेण पदार्थेनान्वयः ? इति तु दूषणं अनादेयम्। सादृश्यस्य ससम्बन्धिकतया 'चैत्रमाता' इत्यत्रेव अन्वयबोधसंभवात्। यत्रैतदन्वितसादृश्यप्रतिपादकत्वं, तत्र शाब्दीत्वम्; यत्रेतरान्विततत्प्रतिपादकत्वं तत्र आर्थीत्वं इति सम्प्रदायः।।

ननु—इवेन समासे, समासगा श्रौती स्यात्, न च तादृशसमासविधायकं सूत्रमस्तीत्यत आह—इवेनेति। इवशब्देन महाविभाषाधिकारीयोऽपि तत्पुरुषः समासो भवन् नित्यमेव भवति, न च विभक्तिलोपः इत्यर्थः ॥

### विस्तारिका

आर्थी व्युत्पादयति—तेन तुल्यमित्यादि। उपमेय एव उपमेयमात्रसम्बन्धः। एवमुपमान एवेत्यत्रापि। आदिपदात् समसदृशादिपरिग्रहः। विश्रान्तिः सामानाधिकरण्येनान्वयबोधजनकतयाऽन्यनिराकाङ्क्षता। साम्यमुपमानोपमेयभावः। पर्यालोचना प्रकृताप्रकृतत्वप्रतिसन्धानम्। तुल्यता समानधर्मसम्बन्धे प्रतियोग्यनुयोगिभावः। तत्र साधर्म्यस्येति आर्थीत्वं व्याख्यातमेव।

समासगमितमाह—इवेनेत्यादि। अनेन समासव्युत्पादनम्, अन्यथा 'अग्निरिव राजः' इति समासान्तविधिर्न स्यात्।

### सारबोधिनी

सारूप्य आर्थी व्युत्पादयति तेन तुल्यमिति। तुल्यादि शब्दानां विश्रान्तिरिति सर्वत्रानुषञ्जनीयम्। आदिशब्दात् समसदृशादिपरिग्रहः। विश्रान्तिः सामानाधिकरण्येनान्वयबोधजनकत्वेऽन्यनिराकाङ्क्षता। साम्यमुपमानोपमेयभावपर्यालोचनया प्रकृताप्रकृतत्वप्रतिसन्धानम्। तुल्यता समानधर्मसम्बन्धे प्रतियोग्यनुयोगिभावः। अत्र साधर्म्यस्यार्थीत्वं व्याख्यातमेव।

समासगामाह इवेनेत्यादि। अनेन सूत्रेण समासव्युत्पादनम्। अन्यथा अग्निरिव राज इति समासान्तविधिर्न स्यात्।

### काव्यप्रदीपः

तुल्यादीनां शब्दानां 'तेन तुल्यं—' इत्यादिना तुल्यार्थे विहितस्य वतेश्च प्रयोगे आर्थी। नन्वयं विभागोऽनुपपन्नः। उभयत्र सादृश्यप्रत्ययाविशेषात्। न च वाच्यम् यथादिशब्दैः साधारणधर्मसंबन्ध उभयत्र शक्त्यैव बोध्यते न पुनस्तुल्यादिशब्दैः। अयमेव विशेष इति। यतो यथादिशब्दा यदनन्तरमुपात्तास्तस्यैवोपमानताप्रतीतिरित्युपमानविशेषणानि ते। अत उपमाने तत्संबन्धं बोधयन्तु न पुनरुपमेये। अन्यविशेषणस्यान्यत्र संबन्धबोधकत्वादर्शनादिति चेत्, न। शब्दशक्तिस्वाभाव्यादन्यविशेषणत्वेऽप्यन्यत्र संबन्धबोधकत्वात्। न चादृष्टचरत्वम्। षष्ठ्यां तथा दर्शनात्। षष्ठी हि यदनन्तरमुपात्ता तस्यैवोपसर्जनत्वप्रतीतिरित्युपसर्जनविशेषणत्वेऽपि प्रधानेऽपि संबन्धं बोधयति। तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या च संबन्धबोधे विशेषाच्छ्रौतार्थविभाग इति मन्तव्यम्। तथा हि—'पद्ममिव मुखम्' इत्यादावुपात्तस्याक्षिप्तस्य वा रमणीयत्वादेः संबन्धमविषयीकृत्यापर्यवसानम्। यथादिशब्दानां धर्मविशेषसंबन्ध एव शक्तत्वात्। तुल्यादिशब्दास्तु नैवम्। 'पद्मेन तुल्यं मुखम्'

इत्यादावुपमेये, 'पद्मतुल्यं मुखमस्य' इत्यादावुपमाने, 'मुखं पद्मं च तुल्यम्' इत्यादावुभयत्रापि सामान्यतस्तुल्यत्वं बोधयित्वा विश्रान्तेषु तेषु धर्मविशेषं विना कथं तुल्यतेति प्रतीतानुपपत्त्या धर्मविशेषसंबन्धप्रतीतेरिति ।

केचित्तु—'उपमानोपमेयभावरूपसंबन्धस्य श्रौतार्थत्वाभ्यां विशेषः' इति व्याचक्रुस्तदयुक्तम् । साधर्म्यस्यार्थत्वात्तुल्यादिपदोपादाने आर्थी इति प्रकाशविरोधात् । यस्यैव ह्यार्थतया उपमाया आर्थत्वं तस्यैव श्रौततया श्रौतत्वौचित्यात् । किं च साधर्म्यमेवोपमेति तस्यैव श्रौतत्वार्थत्वाभ्यामुपमाभेदो युक्तः । अतः एव 'यथादिना सादृश्यरूपः संबन्ध एव साक्षादभिधीयते षष्ठीवत् । तुल्यादिभिस्तु धर्म्यपि' इति व्याख्यानमनुपादेयम् । ननु तथा तथाप्यनुपपन्नो विभागः । पूर्णायां द्योतकोपमानयोरेव हि समासः संभावितः । न च यथादिभिः सममसौ दृश्यते येन समासे श्रौती स्यादिति चेत्, न । 'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इत्यनेनेवशब्देन समं समासविभक्त्यलोपयोः संभवाद्विभक्त्यलोपदर्शनाच्च तत्रासमासव्यवहारो मूढानाम् ।

### काव्यप्रकाशखण्डनम्

अत्रेदमवधातव्यम्—चन्द्र इव मुखमित्यत्र यज्जातीयधर्माश्रयश्चन्द्रः तज्जातीयधर्माश्रयो मुखमित्युपमेयविशेष्यकैव प्रतीतिः, न तु चन्द्रनिष्ठसजातीयधर्माश्रयो मुखमिति प्रकृतिविशेष्यक एव प्रत्ययः । तथा सति हंसीव धवलश्चन्द्र इत्यादौ प्रतीतिमान्थर्यविरहेण दोषो न स्यात् । हंसीनिष्ठधवलत्वसजातीयधवलवत्तया चन्द्रप्रतीतावनुभवसिद्धं मान्थर्यं न स्यात् । उभयविशेष्यकत्वे तु पुंस्त्वान्वितधवलपदस्य हंस्यामनन्वयेन चन्द्रमात्रान्वये विवक्षितप्रतीत्यनुपपत्तिर्दोषसंभव एवेति । चन्द्र इव मुखं आह्लादकं इत्यत्र आह्लादकत्वस्य उभयगामित्वेऽपि नपुंसकस्य मुखपदस्य लिङ्गग्रहणं नपुंसकानपुंसकयोरित्यनुशासनात् इति । क्रमेणोदाहरणानि—

**उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः ।**
**बालवैधव्यदग्धानां कुलस्त्रीणां यथा कुचाः ॥**

### आदर्शः

तुल्यपाद्यनव्ययदानात्तु नोपमा वाच्येत्यतस्तत्सद्भावे आर्थ्येवोपमेति साधयितुं तुल्यादिपदसद्भावे शब्दत उपमाप्रतीत्ययोगं दर्शयन्नाह—तेन तुल्यमिति । उपमेय एव तुल्यादिशब्दानां विश्रान्तिरित्यग्रेऽन्वयः । एवमन्यद्वयेऽपि बोध्यम् । विश्रान्तिश्च विशेष्यताप्रतीतिः, तत्प्रतीत्या च तत्रोपमेयतैव, विशेषणे चोपमानतैव प्रतीयते । उपमानोपमेययोर्मध्ये विशेष्यताया उपमेयताव्याप्यत्वाद् विशेषणतायाश्चोपमानताव्याप्यत्वादिति भावः । तत्तुल्यमस्येति, 'तत्' चन्द्रबिम्बम्, 'अस्य' मुखस्य तुल्यमित्यर्थः । न चात्रचन्द्रबिम्बमुपमेयमेवेति वाच्यम्, प्रसिद्ध्या तत्रैवोपमानतायां तात्पर्येऽप्येवं प्रयोग इति भावात् । 'इदं' पद्मं 'तच्च' मुखम् एवञ्च विशेषणे उपमाने तुल्यादिशब्दादुपमानतारूपाया उपमायाः प्रतीत्ययोगेन तस्यास्तुल्यादिशब्दवाच्यत्वं नास्तीत्यतस्तत्र पर्यालोचनयैवोपमाप्रतीत्या तत्सद्भावे आर्थीत्वमाह—साम्यपर्यालोचनयेति । साम्येन या पर्यालोचना तया 'तुल्यताया' उपमायाः प्रतीतिरित्यर्थः । 'साधर्म्यस्य' समानधर्मसम्बन्धस्य उपमाया इत्यर्थः । तुल्यार्थकस्य वतेरप्यार्थीत्वाह—तद्वदिति, तुल्यादिपदवदित्यर्थः । 'तेन तुल्यमि'ति पाणिनिसूत्रम् । 'स्थितौ' उपादाने । मुखमिदं चन्द्रो यथेत्यादौ श्रौत्या वाक्यगामित्वं स्फुटमेव । तस्याः समासगामित्वन्तु दर्शयति—इवेनेति । इदं पाणिनि सूत्रम् । पूर्वपदेति ।

असमासकाले य उदात्तादिस्वर: समासकालेऽपि तादृश एव स्वर इत्यर्थ: । क्रमेणेति, श्रौत्यार्थ्योर्वाक्यगामित्वं तत: समासगामित्वं ततस्तद्धितगामित्वमिति क्रमेणेत्यर्थ: ।

## सुधासागर:

तदेतद् वृत्तिकृदाह—तेन तुल्यमित्यादि ।

केचित्तु 'उपमानोपमेयभावरूपसम्बन्धस्य श्रौतार्थत्वाभ्यां विशेष' इति व्याचक्रु: तदयुक्तम् । 'साधर्म्य-स्यार्थत्वात्तुल्यादिपदोपादाने आर्थी' इति प्रकाशविरोधात् । यस्यैव ह्यार्थतयोपमाया आर्थत्वं तस्यैव श्रौततया श्रौतत्वौचित्यात् । किञ्च साधर्म्यमेवोपमेति तस्यैव श्रौतत्वार्थत्वाभ्यामुपमाभेदो युक्त: । अत एव 'यथादिना सादृश्यरूप: सम्बन्ध एव साक्षादभिधीयते षष्ठीवत्, तुल्यादिभिस्तु धर्म्यपि' इति व्याख्यानमनुपादेयम् ।

इवेनेत्यादि । अयमाशय:—ननु तथाप्यनुपपन्नो विभाग:, पूर्णायां द्योतकोपमानयोरेव हि समास: सम्भा-वित:, न च यथादिभि: सममसौ दृश्यते, येन समासे श्रौती स्यादिति चेत्, न । 'इवेन नित्यसमासो विभक्त्यलोप: पूर्वपदप्रकृतिस्वरत्वं च' इत्यनेन इवशब्देन समं समासविभक्त्यलोपयो: सम्भवात् । विभक्त्यलोपदर्शनाच्च तत्रासमासव्यवहारो मूढानामिति । क्रमेणोदाहरणानि ।

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति।

प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा॥ ३९२॥

---

### सङ्केतः

स्वप्नेऽपीति। प्रभावः विक्रमः। अन्यत्र तु—प्रकृष्टो भावः अनुरागः। तयोः प्रभवः उत्पत्तिस्थानम्। अत्र—श्रीः, स्वाधीनपतिका, अमोचनं, यथा इति क्रमेण उपमेय-उपमान-धर्म-उपमावाचकम्। इयं वाक्ये पूर्णा श्रौती।

### बालचित्तानुरञ्जनी

तत्र वाक्ये श्रौतीमुदाहरति स्वप्नेऽपीति। स्वाधीनपतिका प्रभावप्रभवं कान्तं यथा, समरेषु विजयश्रीः हे राजन् स्वप्नेऽपि त्वां न मुञ्चति। अत्र यथापदप्रयोगात् वाक्ये श्रौती पूर्णोपमा।

### काव्यादर्शः

वाक्ये पूर्णोपमा श्रौती, यथा—'स्वप्नेऽपि' इति। अत्र 'श्रीः' इति उपमेयं, 'स्वाधीनपतिका' इति उपमानं, मोचनलक्षणः साधारणो धर्मः, 'यथा' इति उपमावाचकम्।

### विवेकः

स्वप्नेऽपीत्यादि—प्रभावप्रभवं कान्तमित्यनेन वीरशृङ्गारादिमत्त्वं दर्शयति। अष्टासु नायिकास्वासन्नाय-त्तरमणोत्कृष्टनायिकाः स्वाधीन-पतिकेत्युच्यते (द. रू. २/२३)। सा उपमान, विजयश्रीरुपमेयं यथाशब्दो द्योतकः, अपरित्यागो धर्मः। स च सम्बन्धभेदाद्भिन्नोऽप्येकजातीयतया साधारण इति चतुर्णमुपादाने वाक्यगम्येयं पूर्णा श्रौती।

### दीपिका

क्रमेण सौत्रेणेति यावत्। पत्युः स्वाधीना स्वाधीनपतिव्रतेत्यर्थः। तस्याः प्रभावस्य प्रभवमाश्रयम्। अत्र न मुञ्चतीति साधारणधर्मः, यथाशब्दश्चोपमाद्योतकः।

### दर्पणः

क्रमेण सौत्रेण, न तु वृत्योक्तेन। स्वाधीनपतिका नायिका लक्षणप्रस्तावोक्ता। नन्वंचतीति [न मुञ्चतीति] साधारणो धर्मः। अत्र यथाशब्दयोगेन समासाभावात् वाक्यम्। पूर्णा।

**साहित्यचूडामणिः**

स्वप्नेपीति । प्रभावप्रभवत्वं समानोधर्मः ।

**स्वाधीनपतिका सा तु यस्याः पार्श्वं न मुञ्चति**

**पतिश्चित्र—रतक्रीडारसास्वादन—लोलुपः ।।**

अत्र यथापदप्रयोगाद् वाक्ये श्रौती पूर्णोपमा ।

**सम्प्रदायप्रकाशिनी**

यथोद्देशमुदाहरणं—स्वप्नेऽपीति । अत्र वर्ण्यनायकस्योपमेयत्वम् । कान्तः कामुकः तस्योपमानत्वम् । प्रभावस्य सामदण्डादिपरिज्ञानप्रकर्षस्य तथा लावण्यवैदग्ध्याद्यतिशयस्य च प्रभवमुत्पत्तिक्षेत्रम् । अयं साधारणो धर्मः । यथेत्युपमाप्रतिपादक इति वाक्यगेयं श्रौती पूर्णा ।

**मधुमती**

स्वप्नेऽपीति । अत्र विजयश्रीः उपमेया । स्वाधीनभर्तृका उपमानम्, अपरित्यागः साधारणोधर्मः । यथाशब्दप्रयोगश्चेति पूर्णा श्रौतीयम् ।

**विस्तारिका**

स्वप्नेऽपीत्यादि । वैरिभिः स्वप्नेऽपि भवतो विजयस्यैवानुभवात् । प्रभावः प्रभुत्वम् । उत्पत्तिहेतुः प्रभवः । स्वाधीनपतिका पत्युः स्वाधीना पतिव्रता स्वाधीनपतिका यथेति वाक्यगा श्रौती ।

**सारबोधिनी**

स्वप्नेऽपीत्यादि । उत्पत्तिहेतुः प्रभवः । न मुञ्चतीत्यपरित्यागः साधारणो धर्मः । इयं वाक्यगा श्रौती ।

**काव्यप्रदीपः**

तत्र वाक्ये श्रौती यथा—

**'स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।**

**प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ।।'**

अत्र विजयश्रीरुपमेया । स्वाधीनपतिका उपमानम् । न मुञ्चतीति साधारणो धर्मः । यथेत्युपमाप्रतिपादकं विवक्षितम् । एवमग्रेऽप्यूह्यम् । न चैतेषां कयोरपि समास इति वाक्यगा श्रौती ।

**आदर्शः**

स्वप्नेऽपीति । स्वप्नो निद्रा, सा च विजयश्रिय एव, निद्रिताऽपि त्वामालिङ्ग्य तिष्ठतीत्यर्थः । चक्रवर्त्ती तु—स्वप्नो निद्रायां विषयानुभवः स च राज्ञ एव, राजा स्वस्वप्ने विजयश्रियं पश्यतीत्यर्थ इत्याह, तन्न । एतावता

अमोचनभ्रमस्यैव सिद्धिर्नत्वमोचनस्य, भ्रमेण च राज्ञ उत्कर्षालाभात् । स्वाधीनपतिका यथा निद्रायामपि कान्तं न मुञ्चति तथेत्यर्थः । स्वाधीनत्वेन तस्याप्रवासित्वप्राप्त्या सर्वदैवामोचनसिद्धिः । राजपक्षे प्रभावः पौरुषम्, कान्तपक्षे प्रकृष्टो नायिकाया भावोऽनुरागस्तज्जनकमित्यर्थः । अत्र यथाशब्दात् श्रौती, तेन सह समासाभावाद् वाक्यगा, उपमानादिचतुष्टयोपादानात् पूर्णा, विजयश्रीस्वाधीनपतिकयोरमोचनं साधारणधर्मः, राजकान्तयोस्तु प्रभावप्रभवत्वम् ।

### सुधासागरः

तत्र वाक्ये श्रौती यथा—स्वप्नेऽपीति ।

हे राजन् स्वाधीनपतिका आकूताज्ञाकारी पतिर्यस्यास्तादृशी नायिका यथा प्रभावस्य प्रभवमुत्पत्तिहेतुं कान्तं मनोहरपतिं न मुञ्चति, तथा विजयश्रीः स्वप्नेऽपि समरेषु त्वां न मुञ्चति न त्यजतीत्यर्थः । वैरिभिः स्वप्नेऽपि तव विजयानुभवादिति भावः ।

अत्र विजयश्रीरुपमेया, स्वाधीनपतिकोपमानं, न मुञ्चतीति साधारणो धर्मः । यथेत्युपमाप्रतिपादकं विवक्षितम् । एवमग्रेऽप्यूह्यम् । न चैतेषां कयोरपि समास इति वाक्यगा श्रौती । वाक्यगाऽऽर्थी यथा—चकितेति ।

**चकितहरिणलोललोचनायाः क्रुधि तरुणरुणतारहारिकान्ति।**
**सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते॥ ३९३॥**

---

### सङ्केतः

वाक्ये पूर्णा आर्थी यथा—चकितेति। अत्र न तुल्यादिशब्दात् साम्यप्रतीतिः, किन्तु—अर्थात्। उपमाने उपमेये चेत्युभयत्र स्थितेनापि समशब्देन उपमानोपमेययोरेकतरस्य सादृश्यं अर्थादवगम्यते।

### बालचित्तानुरञ्जनी

वाक्य एव आर्थीमुदाहरति चकितेति। चकितहरिणलोचनायाः तस्या नायिकायाः क्रुधि कोपे सति तरुणारुणवत् तारा निर्मला हारिणी कान्तिर्यस्य तत् इदमाननं सरोजं सममिति नायकः सम्मदं विधत्ते। अत्र समशब्दप्रयोगात् वाक्ये एव आर्थी उपमा।

### काव्यादर्शः

वाक्ये आर्थी पूर्णा, यथा—'चकिते'ति। 'तरुणारुणेन तरुणारुणवच्च तारा विसर्पिणी मनोहारिणी कान्तिर्यस्य तत् तथा पद्मं मुखं च'। अत्रापि पूर्ववद् उपमेयादि। सम-शब्दश्चात्र उपमाने उपमेये च विश्रान्तः, तेन चोभयत्र विश्रान्तेनापि उपमानोपमेययोरेकतरस्य सादृश्यमर्थादेव गम्यते।

### विवेकः

चकितेत्यादि—क्रुधि ईर्षारोषे।

### दीपिका

किमपि किञ्चिद् रुषा कोपेनारुणा तारहारिणी अत्यन्तमनोहरा भवतीति भावः। क्रुधि तरुणरुणेति पाठे क्रुधि सत्यां तरुणारुणवत् तारहारिणी। अत्रोत्तरार्धगतोपमाऽपि प्रकृतोपयोगिनी। सम्मदविधानं साधारणम्। उपायैः सामदानभेददण्डैः।

### दर्पणः

तावं [तारं] निर्मलम्। अत एव हारिणी मनोहारिणी कान्तिर्यस्य। अत्रोत्तरार्द्धं प्रकृतोदाहरणम्।

### साहित्यचूडामणिः

चकितेति। अत्र समशब्दप्रयोगाद् वाक्य एवार्थी।

**सम्प्रदायप्रकाशिनी**

अथार्थी वाक्यगा—चकितहरिणेति । तारा उज्जवला । हारिणी हृदयङ्गमा । सम्मदो हर्षः । अत्र सरसिजमाननं च सममिति सम्पदस्योभयत्र विश्रान्तिरिति साम्यपर्यालोचनादार्थी वाक्यगा । पूर्णत्वं प्राग्वदुपमेयादिचतुष्टयसद्भावात् ।

**मधुमती**

चकितेति । अत्र सरसिजं उपमानम्, आननं उपमेयम्, तादृक्कान्तिः साधारणो धर्मः, समशब्दप्रयोगश्चेति वाक्ये पूर्णा आर्थी ।

**विस्तारिका**

चकितेत्यादि । क्रुधि सत्याम् । कुपितारुणेत्यपि पाठः । कोपेऽपि कान्त्यनपचयात् । सम्मदं हर्षम् । समशब्दयोगादार्थी वाक्यगा ।

**सारबोधिनी**

चकितेति । क्रुधीति । क्रुधि सत्यामित्यर्थः । इयं समशब्दप्रयोगादार्थी वाक्यगा ।

**काव्यप्रदीपः**

वाक्यगा आर्थी यथा—

**'चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।**
**सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥'**

इयं समशब्दप्रयोगादार्थी ।

**काव्यप्रकाशखण्डनम्**

**चकितहरिणलोललोचनायाः क्रुधि नितरामरुणाभिरामशोभम् ।**
**सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥**

तस्या नायिकाया इदमाननं मुखं सरसिजं कमलं च तुल्यमिति कृत्वा चेतसि मनसि संमदामानन्दं विधत्ते करोति । तस्याः कीदृश्याः ? चकितश्चञ्चलो यो हरिणो मृगस्तद्वल्लोले चञ्चले लोचने यस्याः । आननं कीदृशम् ? क्रुधि क्रोधकाले तरुणः कठोरो योऽरुणः सूर्यस्तद्वत्तारा उद्भटा हारिणी मनोहारिणी कान्तिर्दीप्तिर्यस्य [प० ४७.१] तत् ।

## आदर्शः

वाक्यगां पूर्णामार्थीमाह—चकितेति। क्रुधि क्रोधे तस्या आननम् इदं हस्तस्थं सरसिजञ्च समं द्वयोरेव रक्तत्वात्, अयमर्थो मम चेतसि सम्मदं हर्षं विधत्ते। मुखपद्मयोर्धर्ममाह—तरुणेति। तरुणारुणवन्मुखस्य तरुणारुणेन पद्मस्य तारा उज्ज्वला हारिणी कान्तिर्बोध्या। अत्र समशब्दादार्थी असमासाद् वाक्यगा, उपमानादि चतुष्कोपादानात् पूर्णा।

## सुधासागरः

चकितो यो हरिणस्तस्य लोललोचने इव लोचन यस्याः। यद्वा हरिणशब्दस्य तल्लोचने लक्षणा, तथा च चकितहरिणवल्लोललोचने चञ्चलनयने यस्यास्तथाभूतायास्तस्या नायिकायाः क्रुधि क्रोधे सति, तरुणारुणो गाढरक्तो यस्तारो मुक्ताहारस्तस्य हारिणी अनुकारिणी कान्तिः शोभा यस्य तादृशमाननमिदं सरसिजं रक्तोत्पलं च सममिति चेतसि चित्ते सम्मदं विधत्ते हर्षं कुरुते इत्यर्थः। पुष्पिताग्रा छन्दः। 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात्। इयं समशब्दप्रयोगादार्थ्युपमा।

अत्यायतैर्नियमकारिभिरुद्धतानां
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ।। ३९४ ।।

---

**सङ्केतः**

समासे श्रौती पूर्णा यथा—अत्यायतैरिति । भुजैरिवेति । यो राजा सदा चतुर्भिः उपायैः शौरिरिव चतुर्भिः भुजैः भुवनं बभार इति योगः । अथवा—शौरिः सदायः सन् चतुर्भिरुपायैः भुजैरिव इति योगः । इवेन समासपक्षे श्रौती पूर्णोपमेयम् । ये तु इवेन समासं नेच्छन्ति, तन्मते वाक्योपमेयम् ।

**बालचित्तानुरञ्जनी**

समासे श्रौतीमुदाहरति अत्यायतैरिति । शौरिः कृष्णः, चतुर्भिर्भुजैरिव यो राजा अत्यायतैरुद्धतानां नियमकारिभिर्दिव्यैः प्रभाभिः, अनपायमयैः लक्ष्मीविलासस्थानैः चतुर्भिरुपायैः सामादिभिः, सदा भुवनं बभार । अत्र भुजैरिवेति समासे श्रौती उपमा । विभक्त्यलोप इत्यनेन विशेषणविशेष्यभावादिसंबन्धक्षयत्वस्य ज्ञापितत्वात् ।

**काव्यादर्शः**

समासे श्रौती पूर्णा, यथा—'अत्यायतै'रिति । 'भुजैरिव इत्यत्र 'इवेन' इत्यादिना नित्यसमासः । ये तु इवेन नित्यसमासं नेच्छन्ति तन्मते वाक्योपमेयम् ।

**विवेकः**

अत्रापि पूर्ववत् तरुणारुणतारहारिकान्तित्वं साधारणो धर्मः । सम्मदो हर्षः । समशब्दो द्योतक इतीयमार्थी ।

**दर्पणः**

उपायैः सामदानभेददंडैः । अत्र भुजैविवेत्यत्र [भुजैरिवेत्यत्र] समासः ।

**साहित्यचूडामणिः**

अत्यायतैरिति । भुजैरिवेति नित्यसमासः । अत्र श्रौत्युपमा । विभक्त्यलोपः इत्यनेन विशेषणविशेष्यभावादिसंबन्धक्षमत्वं ज्ञाप्यते ।

### सम्प्रदायप्रकाशिनी

अथ समासगा श्रौती—अत्यायतैरिति । अत्यायतत्वमुद्धतनियमकारित्वं, प्रभास्तेजांसि ताभिर्दिव्यत्वम्, अपायरहितत्वम्, चतुष्टवं लक्ष्मीविलासभवनत्वं च उपायभुजयोः, आयेनागमनेन सह वर्तत इति तथा सहायभूत इति च शब्दसाधर्म्यरूपं सहायत्वं भुवनभर्तृत्वं च नायकमुरार्योः साधारणधर्माः । भुजैरिवेतीशब्दो नित्यसमासगः । अत इयं समासगा पूर्णा श्रौती ।

### मधुमती

अत्यायतैरिति । अत्र भुजैरिव इति एकमेव सामासिकं पदम् ।

### विस्तारिका

अत्यायतैरित्यादि । उद्धतानां विपथगामिनां दानवानां च दिव्यैरुत्कृष्टैः स्वर्गीयैश्च । स्वार्थे मयट् । उपायैः सामादिभिः । अद इति भुवनविशेषणम् । लक्ष्मीः कमला सम्पत्तिश्च ।

अत्र भुजैरिवेति समासगा श्रौती ।

### सारबोधिनी

अत्यायतैरिति । उपायैः सामादिभिः । अद इति भुवनविशेषणम् । भुजैरिवेति समासगा श्रौती ।

### काव्यप्रदीपः

**'अत्यायतैर्विनयकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः ।**
**शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥'**

अत्रेवेन समासः ।

### काव्यप्रकाशखण्डनम्

इयं च समशब्दयोगादार्थी—

**वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वती-परमेश्वरौ ॥**

### आदर्शः

समासर्गा श्रौतीं पूर्णामाह—अत्यायतैरिति । यो राजा साम-दान-भेद-दण्डरूपैश्चतुर्भिरुपायैः अदो भुवनं सदा बभार, शौरिर्विष्णुश्चतुर्भिर्भुजैरिव । द्वयोर्विशेषणान्याह—अत्यायतैरित्यादीनि । नियमः शास्तिः उद्धता दुर्वृत्ता जना असुराश्च, प्रभा अनुष्ठानप्रकर्षाः कान्तयश्च ताभिर्दिव्यैः उत्कृष्टैः । अनपाया व्यघातविरहोऽपराजश्च तन्मयैस्तत्सम्बद्धैः । अत्रेवेन नित्यसमासगा श्रौती पूर्णा ।

### सुधासागरः

शौरिः श्रीकृष्णो भुजैरिव नृपश्चतुर्भिरुपायैः सामदानविधिभेदविग्रहरूपैः सदा सर्वदा अदो भुवनमेतल्लोकं बभार पुपोष। भुजोपाययोः शिलष्टविशेषणान्याह अत्यायतैरत्यन्तदीर्घैः, अत्यन्तमायतिरुदर्क शुद्धिर्येषु तथाभूतैश्च, उद्धतानां दानवानां गर्ववतां च विनयकारिभिर्दण्डप्रदैः। प्रभाभिर्दीप्तिभिः प्रभावैश्च, दिव्यैरलौकिकैरुत्कृष्टैश्च, अनपायमयैः, सदातनैः सदासफलैश्च, लक्ष्म्याः कमलायाः सम्पत्तेश्च, विलासस्य भवनैराधारभूतैरित्यर्थः। वसन्ततिलका छन्दः। 'उक्ता वसन्त तभजा जगौ गः' इति लक्षणात्। अत्रेवेन समासः।

**अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।**

**सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥ ३९५ ॥**

---

### सङ्केतः

सुरेति । अत्र सुरतरुणा सदृशः इति तत्पुरुषे सदृशशब्दः उपमेये विश्रान्तः तद्गतं सादृश्यं साक्षात् ब्रूते । अन्यत्र तु उपमाने सादृश्यं अर्थात् प्रतीयते । बहुब्रीहौ तु उपमाने सदृशशब्दः विश्राम्यति । अतः तत्र सादृश्यं साक्षात्, अपरत्र तु अर्थात् इति । इयं समासे आर्थी पूर्णोपमा ।

### बालचित्तानुरञ्जनी

समासे आर्थीमुदाहरति अवितथेति । हे क्षितीश्वर ! सफलमनोरथमार्गप्रसिद्धिषु गुणगरिम्णा गीता श्रीयस्य कल्पवृक्षसदृशः स प्रसिद्धो भवान् कस्य नाभिलषणीयः ? अपितु सर्वस्य । अत्र सुरतरुसदृश इति समासे आर्थी उपमा ।

### काव्यादर्शः

समासे आर्थी पूर्णा, यथा—'अवितथे'ति । 'सुरतरुणा सदृश' इति सदृश-शब्देनोपमेये विश्रान्तेन उपमेयगतं सादृश्यं स्वकण्ठेनाभिहितम् । उपमाने च तस्यार्थात् प्रतिपत्तिः, उपमेयवर्तिसादृश्यविचारेण उपमानोपमेयत्वावगतेः । बहुब्रीहौ तु उपमाने विश्रान्तेरुपमानगतसादृश्यपर्यालोचनया उपमेयस्य उपमेयत्वावगतिः ।

### विवेकः

अवितथेत्यादि—सुरतरुसदृश इति 'पूर्वसदृशे'-(पा. २/१/३१) त्यादिना समासः ।

### साहित्यचूडामणिः

सुरतरुसदृश इति समास आर्थी ।

### सम्प्रदायप्रकाशिनी

अवितथेति । अत्र चिन्तितार्थसम्पादनेषु श्रियः प्रगुणगरिमगीतत्वं नायकसुरशाखिनोः साधर्म्यम् । सदृशपदं समासगमित्यार्थी समासगा ।

### विस्तारिका

अवितथेति । अव्यर्थमनोरथवर्त्मप्रकाशनेषु प्रकृष्टगुणगरिम्णा गीता श्रीर्यस्य । सुरतरुः कल्पद्रुमः । क्षितीश्वरेति सम्बुद्धिः ।

अत्र सुरतरुसदृश इति समासगा आर्थी ।

## सारबोधिनी

अवितथेति । अव्यर्थमनोरथनिष्पादनेषु प्रकृष्टगुणगरिम्णा गीता श्रीर्यस्य । सुरतरुसदृश इति समासगा आर्थी ।

## काव्यप्रदीप:

समासे आर्थी यथा—

**'अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।**
**सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥'**

अत्र सुरतरुसदृश इत्युपमानद्योतकयोः समासः ।

## काव्यप्रकाशखण्डनम्

आद्यन्त-मध्यरहितं दशाहीनं पुरातनम् । अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥

## आदर्श:

समासगां पूर्णामार्थीमाह—अवितथेति । स प्रसिद्धः क्षितीश्वरो भवान् कस्य नाभिलषणीयः याचितुमिति शेषः । कीदृशः ? अवितथस्य मनोरथस्य यत् पदं विषयः तत्प्रथनेषु तज्ज्ञानेषु सत्सु प्रकृष्टेन गुणगरिम्णा हेतुना अर्थिभिरेव गीतश्रीः, सुरतरुसदृशः, सुरतरोः कल्पद्रुमस्याप्येवंभावात् । अत्र सदृशपदात्तस्य सुरतरुपदेन समासाच्च समासगा आर्थी पूर्णा ।

## सुधासागर:

हे क्षितीश्वर अवितथमनोरथपथप्रथनेषु अव्यर्थवाञ्छितविषयविस्तारणेषु प्रगुणगरिमगीतश्रीः प्रकृष्टगुणानां गरिम्णा गीता स्तुता श्रीः सम्पत्तिर्यस्य तथाभूतः, अत एव सुरतरुसदृशः कल्पवृक्षतुल्यः सः प्रसिद्धो भवान् कस्य नाभिलषणीयः, अपि तु सर्वस्याप्यभिलषणीय एवेत्यर्थः । गीतिश्छन्दः । 'आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः' इति लक्षणात् । अत्र सुरतरुसदृश इत्युपमानद्योतकयोः समासः ।

**गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत्।**

**दुरालोकः स समरे निदाघाम्बररत्नवत्॥ ३९६॥**

---

### सङ्केतः

गाम्भीर्येति। तद्धिते श्रौती पूर्णेयम्। भुजङ्गवत् इत्यत्र इवार्थे वतिः। ततः श्रौतीत्वम्। भुजङ्गः कामी, स चात्र अर्थात् समुद्रः। अम्बररत्नं रविः। तेन तुल्यः इति तुल्यार्थे वतिः। स च उपमेये साक्षात् विश्रान्तः। उपमाने तु साम्यपर्यालोचनया उपमानताप्रतीतिः इति इयं तद्धिते पूर्णा आर्थी।

### बालचित्तानुरञ्जनी

तद्धिते श्रौतीमार्थी चोदाहरति गांभीर्येति। तस्य राज्ञो गाम्भीर्यगरिमा गङ्गाभुजङ्गवत् समुद्रवत्। स सङ्ग्रामे निदाघाम्बररत्नवत् ग्रीष्मकालतरणिवत् दुरालोकः। अत्र गङ्गाभुजङ्गवदिति श्रौती तद्धितगा। अम्बररत्नवदित्यार्थी तद्धितगा।

### काव्यादर्शः

तद्धिते श्रौती पूर्णा, यथा—'गाम्भीर्ये' ति। 'भुजंगवद्' इत्यत्र 'तत्र तस्यैव' इत्यनेन वतेस्तद्धितस्य विहितत्वात् श्रौती। भुजंगः कामुकः, स चात्र अब्धिः। अम्बररत्नं सूर्यः। तथा 'सूर्य' उपमानं, 'स' इति उपमेयः, 'दुरालोकत्वं' साधारणो धर्मः। अम्बररत्नेन तुल्यः, 'तेन तुल्यं क्रिया चेत् वतिः' इत्यनेन क्रियातुल्यत्वे विहितो वतिरुपमेये शाब्देन वृत्तेन विश्रान्तस्तुल्यत्वपर्यालोचनया उपमानस्य उपमानत्वं गमयतीति।

तद्धिते पूर्णा आर्थी चोपमा, यथा क्रियातुल्यत्वे 'ब्राह्मणवद् अधीते क्षत्रियः' इत्यत्र उपमेये यद् अध्ययनक्रियाद्वारेण विश्रान्तं तुल्यत्वं तत्पर्यालोचनया अर्थाद् उपमानत्वावगतिः। एवमन्यत्रापि।

### विवेकः

तद्धितगम्या यथा गाम्भीर्येत्यादि। भुजङ्गः कामुकः। अत्र गङ्गाभुजङ्गस्येव गाम्भीर्य गरिमा तस्येतीवार्थे वतिः। आर्थी यथा 'दुरालोक' इत्यादि। अम्बररत्नं सूर्यः। स यथा प्रतापातिशयाद्दुःखेनावलोक्यते तथा वर्णनीयोऽपि निदाघसूर्याकारतया दुरुलोकतया वर्णनीयसम्बन्धिन्यास्तस्या स्तुल्यतेति तुल्यक्रियार्थेऽत्र वतिरित्यार्थीयमुपमा।

### दीपिका

यद्यपि मानोपेक्षे रसान्तरमप्युपायतयेति सप्तोपायास्तथाऽपि तेषां कैश्चिन्नीतिशास्त्रविद्भिरनुक्तत्वाल्लोकाप्रसिद्धत्वाच्च चत्वार एवोपायाः। गङ्गाभुजङ्गवदिति। इवार्थे वतिः। निदाघाम्बररत्नवदिति तुल्यार्थे। अत्र

चानुशासनव्युत्पन्नानां प्रत्ययार्थानिसन्धानात् सादृश्यप्रतीत्यविलम्बविलम्बौ सुप्रतिपादौ। तदव्युत्पन्नानां तु काव्यपरीक्षाऽनधिकारित्वमेव। समग्रकाव्याङ्गोपाङ्गव्युत्पत्तिविज्ञानिन एव मुख्यतस्तत्परीक्षकाः।

अत्र सर्वालङ्काराणां ध्वनिगुणीभूतव्यङ्ग्यचित्रात्मकत्रिविधकाव्याङ्गता यद्यपि ध्वनितन्त्रविशारदैरङ्गीक्रियते तथापि चित्रान्तर्गत एव समस्तालङ्कारवर्गप्रपञ्चः। चित्रं च विद्यमानेऽप्यस्फुटरसादौ भवतीति वादिनां मतमाश्रित्यास्फुटव्यङ्ग्यं काव्यं चित्रमुच्यते। तद्गता एवालङ्कारा उदाहर्तव्याः, तेषां तद्धर्मत्वात्। तेषु चोदाहरणेषु वस्तुरूपस्य व्यङ्ग्यस्योद्भटस्य प्रायेण क्वचित्तु रसस्यापि सम्भेदोऽस्ति।

### दर्पणः

गङ्गाभुजवदित्यत्रेवार्थेवतिः। [गङ्गाभुजङ्गवदित्यत्रेवार्थे वतिः]।

### साहित्यचूडामणिः

गाम्भीर्येति। गङ्गाभुजङ्ग समुद्रः। 'तस्येव' (५-१-११६) इति वतिरिति तद्धिते श्रौती। एवं कुरु कर्पूरवत् काव्यं सत्यं(?)

### सम्प्रदायप्रकाशिनी

गाम्भीर्यगरिमेति। अम्बररत्नं सूर्यः। अत्र प्रथमार्धे वतिः 'तस्येव' (५.१.११६) इति विहितः। अतः श्रौतीयं तद्धितगा। उत्तरार्धे अम्बररत्नेन तुल्यं दुरालोक इति तु 'तेन तुल्यम्' (५.१.११५) इति। अत आर्थी। इत्थं पूर्णा षड्विधा। अत्र श्लोकाः—

**इवादिना निपातेन साधर्म्यप्रतिपादने।**
**श्रौती पूर्णोपमा ज्ञेया द्विधा वाक्यसमासयोः।**

**आर्थी नाम पदेनैषा साधर्म्यप्रतिपादने।**
**तुल्यादिना तु विज्ञेया द्विधा वाक्यसमासयोः॥**

**तथा वतेरिवार्थत्वे श्रौती तद्धितगा मता।**
**तुल्यार्थत्वे वतेस्तु स्यादार्थीयं षड्विधा ततः॥**

### मधुमती

गाम्भीर्येति। गङ्गाभुजङ्गः गङ्गानायकः—समुद्र इति यावत्। भुजङ्गशब्दस्य निहतार्थत्वेऽपि अज्ञानदशायां न दोषः। अत्र—'तत्र तस्येव' इति सूत्रेण षष्ठीसमासात् इवार्थे विहितस्य वतेरुपादानात् श्रौतीत्वम्। निदाघाम्बररत्नवत् इत्यत्र 'तेन तुल्यं क्रिया चेद्वतिः' इत्यनेन तुल्यार्थे विहितस्य वतेः उपादानात् आर्थीत्वम्। एत एव च पट् पूर्णभेदाः।

### विस्तारिका

गाम्भीर्येति । गाम्भीर्यमकलिताभिप्रायत्वम्, अतलस्पर्शित्वं च । भुजङ्ग उपपतिः, शन्तनोरेव पतित्वात् ।

गङ्गाभुजङ्गस्येवेति इवार्थे वतिरिति तद्धितगा श्रौती । एवमम्बररत्नेत्यत्रापि तुल्यार्थे वतिरिति तद्धितगा आर्थी । अम्बररत्नं सूर्यः ।

### सारबोधिनी

गाम्भीर्येति । गङ्गाभुजङ्गस्येवेतीवार्थे वतिः । भुजङ्गः कामुकः । इयं तद्धितगा श्रौती ।

### काव्यप्रदीपः

यथा—

**'गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजंगवत् ।**

**दुरालोकश्य समरे निदाघाम्बररत्नवत् ॥'**

अत्र गङ्गाभुजंगवदिति श्रौती । 'तत्र तस्येव' इत्यनेन इवार्थे वतेर्विधानात् । निदाघाम्बररत्नवदित्यार्थी । 'तेन तुल्यम्' इत्यर्थे वतेः प्रयोगात् ।

### काव्यप्रकाशखण्डनम्

**गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।**

**[दुरालोकः स समरे निदाघाम्बररत्नवत् ॥]**

तद्धिते पूर्णां श्रौतीमुदाहरति । तस्य राज्ञो गाम्भीर्यस्य गरिमा गुरुत्वं गङ्गाया भुजङ्गः कामुकः समुद्रस्तद्वत् तस्येव । अत्र 'तत्र तस्येवे'त्यनेनेवार्थे वतेर्विधानाच्छ्रौतीत्वमालोकनीयम् ।

### आदर्शः

तद्धिते पूर्णां श्रौतीमार्थीञ्चेकत्रैवाह—गाम्भीर्येति । भुजङ्गः कामुकः । गङ्गाकामुकस्य समुद्रस्येव यस्य गाम्भीर्यगरिमा सत्यं स राजा समेर दुरालोकः, निदाघीयेनाम्बररत्नेन सूर्येण तुल्यः । अत्र पूर्वार्द्धे षष्ठ्यन्तादिवार्थे वतिरिति श्रौती, परार्द्धे तुल्यार्थे वतिरित्यार्थी । गाम्भीर्यगरिमदुरालोकत्वं साधारणधर्मौ ।

### सुधासागरः

तद्धिते श्रौत्यार्थी च यथा— गाम्भीर्येति । तस्य राज्ञोगाम्भीर्यं दुर्ज्ञेयाभिप्रायत्वमतलस्पर्शत्वं च तस्य गरिमा गुरुत्वं सत्यं गङ्गाभुजङ्गवत् समुद्रतुल्यः, स राजा समरे संग्रामे निदाघाम्बररत्नवत् निदाघकालिकसूर्य इव दुरालोको द्रष्टुमशक्य इत्यर्थः । भुजङ्ग उपपतिः । गङ्गायाः शन्तनुपत्नीत्वात्सरित्पतौ भुजङ्गपदप्रयोग इति बोध्यम् । श्लोकलक्षणस्य लिखितत्वात्प्रसिद्धत्वाच्च न भूयो लेखनम् । अत्र गङ्गाभुजङ्गवदिति श्रौती, 'तत्र तस्येव' इत्यनेने-वार्थे वतेर्विधानात् । निदाघाम्बररत्नवदित्यार्थी । तेन तुल्यमित्यर्थे वतेः प्रयोगात् ।

स्वाधीनपतिका कान्तं भजमाना यथां लोकोत्तरचमत्कारभूः, तथा जयश्री-स्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेर्वैचित्र्यम्, वैचित्र्यं चालंकारः, तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः। न खलु व्यङ्ग्यसंस्पर्शापरामर्शादत्र चारु-ताप्रतीतिः, अपि तु वाच्य वैचित्र्यप्रतिभासादेव। रसादिस्तु व्यङ्ग्योऽर्थोऽलंकारा-न्तरं च सर्वत्राव्यभिचारीत्यगणयित्वैव तदलंकारा उदाहृताः। तद्रहितत्वेन तु उदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम्॥

---

### सङ्केतः

स्वाधीनेति। अयं भावः—प्रतीयमानं चेत् व्यक्तं, तदा ध्वनिव्यवहारः, अथास्फुटम्, तदा गुणीभूतव्य-ङ्ग्यव्यवहारः। तत् कथमत्र वाच्यचित्रव्यवहारः इति। अलङ्कारान्तरं चेति। तद्धि अनुप्रासादि श्लिष्टतरमपि काव्ये यद्यव्यभिचारितयैव गण्यते, तदा तेन सह उपमादीनां सङ्करसंसृष्टी स्यातां इति, केवलतयैव एषां विषयो नावकल्पेत। तदिति। स च अस्फुटतरो रसादिः अर्थः। तच्चालङ्कारान्तरमिति नपुंसकैकशेषः। संस्पर्शपदात् अत्र रसादिः अस्पुटतरो गृह्यते। अस्फुटातिस्फुटयोस्तु गुणीभूतव्यङ्ग्यतेति। तद्रहितत्वेनेति। रसाद्यलङ्कारान्तररहितत्वेने-त्यर्थः।

### सङ्केतः (रुय्यकः)

अलङ्कारान्तरञ्चेति—तद्ध्यनुप्रासादि—(द०—)श्लिष्टतरमपि, काव्ये यद्यव्यभिचारितयैव तद्व्यवहारो गण्यते तदा तेन सहोपमाऽऽदीनां सङ्करसंसृष्टी स्यातामिति केवलतयैषा विषयो नावकल्प्येत। तदिति (तदेति)। स चास्फुटतरो रसादिरर्थः, तथाऽलंकारान्तरमिति—"नपुंसकमनपुंसकेने" त्यनेन नपुंसकैकशेषः। अस्फुटश्च रसादिर्गुणीभूतव्यङ्ग्यगृहीत इत्यस्फुटतरोऽत्र गृह्यते इति 'संस्पर्श' पदेन ध्वनितम्।

### बालचित्तानुरञ्जनी

नन्वेतत् पूर्वापरग्रन्थविरुद्धं यदुत पञ्चमादौ व्यङ्ग्योदाहृतमेव। इदानीमलङ्कारस्योदाह्रियते, येन व्यञ्ज-नाभिधयोरलङ्कार्यालङ्कारयोर्व्यापार्यव्यापारयोर्ध्वनिवाच्यालङ्कारयोश्च स्पष्टो विरोधः। चमत्कारश्चात्र ध्वनिना गुणीभूतव्यङ्ग्येन वा प्रयुज्यते, तदधीनत्वादुक्तिवैचित्र्यस्य तल्लक्षणत्वाच्चालङ्काराणामित्याशङ्क्याह स्वाधी-नेति। वैचित्र्यं चेति। उक्तिवैचित्र्यमलङ्कार इति निश्चयात्। तदुक्तम्—

रसस्याङ्गं विभावाद्याः साक्षान्निष्पादकत्वतः।
तद्वैचित्र्योक्तिवपुषोऽलङ्कारास्तु तदाश्रयाः॥ इति।

ध्वनीति शृङ्गारादिरसापेक्षया, गुणीभूतव्यङ्ग्येति अवान्तरवस्तुध्वन्यपेक्षया। न खल्विति। निरलङ्कारे व्यङ्ग्ये तस्य व्यङ्ग्यत्वादेव चारुता। निर्व्यङ्ग्ये चालङ्कारे चारुत्वं नास्ति।

**रसध्वनिर्न यत्रास्ति तत्र बान्ध्यं विभूषणम्।**
**मृतायामेणशावाक्ष्यां किं फलं हारसम्पदा॥**

इत्युक्तत्वात्। अत्र तु व्यङ्ग्यालङ्कारयुगलमेलकालङ्कारे व्यङ्ग्योल्लेखात् न चारुत्वप्रतीक्षा। यावदुक्तिद्वारा वाच्यवैचित्र्यरूपस्यालङ्कारस्य स्फुरणात्। नन्वत्र रसादिलक्षणो व्यङ्ग्यः किमन्यत्कल्पनयेत्याह रसेति। सर्वत्राव्यभिचारि सर्वकाव्यार्थानुवृत्तं अलङ्कारान्तरं चेत्यनेन दृष्टान्त उत्थाप्यते। यथा बह्वलङ्कारे काव्ये कस्यचिदलङ्कारस्योद्रेकः, एवं व्यङ्ग्यालङ्कारोभयशालिनि अलङ्कारस्योद्रेक इत्यर्थः। तस्मान्न केवलमेतद् व्यङ्ग्ये यावदलङ्कारे समानजातीयेऽपि क्वचित् कस्यचिदुद्रिक्ततया विवक्षायामन्यस्मिन्नन्यस्यानौल्बण्यात् तर्हि तादृग् व्यङ्ग्ये प्रयुक्तोऽप्यस्तु चमत्कार इत्यत्राह अगणयित्वेति। अगणनमुपेक्षा, न त्वनवधानम्। व्यङ्ग्यस्याप्यत्र सद्भावात्। उदाहृता इति सामान्ये तु उल्लासार्थः सिद्धप्राय इत्याशयेनोक्तम्। ननु व्यङ्ग्यरहिता उदाह्रियन्तामलङ्काराः, येन विषयविवेक इत्यत आह तद्रहितत्वेनेति। विषयविभागमात्रलोभात् उदाह्रियमाणं न चमत्काराय। यथा गौरिव गवय इत्युपमा, खलेचालीयूप [?] इति रूपकम्। स्थाणुः पुरुषो वेति संदेहः। नेदं रजतमित्यपह्नुतिः। पीनो (देवदत्तः) दिवा न भुङ्क्ते इति पर्यायोक्तिः। समुद्रः कुण्डिकेत्यतिशयोक्तिः। अद्रिरग्निमानित्यनुमानम्। आद्यन्तौ टित्कताविति यथासंख्यं, पुत्रेण सहागतः पितेति सहोक्तिः। श्वेतो धावतीति श्लेषः। इत्यादावित्यर्थः। यद्यपि पञ्चमादावव्यङ्ग्यं चित्रमित्युक्तम्। तथापि स्वाधीनभर्तृकेत्यादौ विद्यमानमपि व्यङ्ग्यं उपेक्ष्योदाहृतमिति न पूर्वोत्तरविरोध इति पूर्वापरविरुद्धाभिधानमिति न शङ्कनीयमित्युपसंहरति इतीति।

### काव्यादर्शः

स्फुटं चेत् प्रतीयमानं तदजा ध्वनिव्यवहारः, अथ अस्फुटं तदा गुणीभूतव्यङ्ग्यव्यवहार इत्याशयेनाह— स्वाधीनेति। अलंकारान्तरं चेति। तद्धि अनुप्रासादिश्लिष्टतरमपि काव्ये यदि अव्यभिचारितयैव गण्यते, तदा तेन सहोपमादीनां संकरसंसृष्टी स्यातामिति केवलतयैव एषां विनावकल्पेत। तदिति। स चास्फुटतरो रसादिरर्थस्तथा 'अलंकारान्तरम्' इति नपुंसकैकशेषः। अस्फुटश्च रसादिर्गुणीभूतविषय इति अस्फुटतरोऽत्र गृह्यते, इति 'संस्पर्श' पदेनात्र ध्वनितम्। तद्रहितत्वेनेति। रसाद्यलंकारान्तराभ्यां विना वैरस्यं वहन्तीति न विरोधः।

### विवेकः

यद्यप्यत्र स्वाधीनपतिकेत्यादावुपमाया विषये ध्वनिगुणीभूतव्यङ्ग्यौ सम्भवतस्तथापि (न) तद्व्यवहारः। अत्र हेतुमाह—न खल्विति। 'अलङ्कारान्तरञ्चेति—तर्ह्यनुप्रासादिश्लिष्टतर(?)मपि काव्ये तद्व्यवहारो यदा व्यभिचारितयेव गण्येत तदा तेन सहोपमाऽऽदीनां सङ्करसंसृष्टी स्यातामिति केवलतयैषां विषयो नावकल्प्येत। तद्रहितत्वेन त्विति। स चास्फुटतरो रसादिरर्थः। तथाऽलङ्कारान्तरमिति 'नपुंसकमपुंसकेने'त्येकशेषः (पा. १/२/९९)। अस्फुटश्च रसादिर्गुणो भूतव्यङ्ग्ये गृहीत इत्यस्फुटतरोऽत्र गृह्यत इति संस्पर्शपदेन ध्वनितम्' (रु. सं. ६१ पृः)।

## दीपिका

किञ्चोपमादिविषयेऽन्यदपि शब्दार्थालङ्कारणं क्वचन दृश्यते। ततश्च सङ्करेण व्यपदेशो न्याय्यो न पुनरेकान्तमुपमादिनेति शङ्कां निराचष्टे—स्वाधीनेति। लोकोत्तरः सामान्यलोकवृत्तं विषयीकृत्यानुत्पद्यमनाश्चमत्कारो विस्मयस्तस्य भूविषयो वैचित्र्यम्, काव्यव्यपदेशजीवातुभूतभावुकमनोविस्तारोऽत्र चमत्कारानुगुण्यम्। न खल्वित्यादिना वस्तुरूपस्यास्य ध्वनिगुणीभूतव्यङ्ग्यव्यपदेशबीजस्फुटत्वाभावः प्रदर्श्यते। वाच्यस्य वैचित्र्यं परस्परसदृशधर्मद्वयोपश्लेषात्मकम्।

एतदुक्तं भवति-त्रिविधं हि व्यङ्ग्यं प्रधानमप्रधानञ्च अस्फुटं चेति। तत्राद्यद्वयं यथायथं ध्वनिगुणीभूतव्यवहारस्य निदानम्, चरमं तु चित्रव्यवहारस्य। तत्र चोक्तरूपं व्यङ्ग्यं स्फुटप्रतीयमानं नानुभूवते। किन्त्वनवस्थितप्रायं वाक्यार्थप्रत्ययान्तरं विवेचनायामेव स्फुटं प्रतिभासते। रसादिसम्भेदेऽपि चित्रता, न ध्वनिः, अलङ्काराणामेवात्र प्राधान्येन विवक्षितत्वात् तत्तद्रसास्वादनप्रत्यग्रव्यग्रे भावुकचेतसि रसादेदुर्लभत्वात्। अलङ्कारान्तसम्भेदेऽपि च प्रधानेनैव व्यपदेश इति नयेन न काचित् क्षतिः। न च रसादिभिरलङ्कारान्तरैश्च सर्वथा सम्भेदरहित उपमादिविषयोऽस्तीत्याह—रसादीति। अगणयित्वैवेति। औदासीन्यमवलम्ब्येत्यर्थः।

ननु चन्द्र इव धवलः पट इत्यादौ लौकिकवाक्ये कविवाक्ये चैवंविधे रसादिभिरलङ्कारान्तरैश्चासङ्कीर्ण उपमादिविषयोऽस्ति, तत्कथं सङ्कीर्णविषयता भवेदित्याह-तद्रहितत्वेनेति। विरसतामिति। एवंविधवाक्यानामकाव्यतयैतद्गतो पमादीनामप्यकाव्याङ्गत्वेन रसानुपकारकतयाऽलङ्कारत्वमिति सुधीभिर्विभाव्यम्। 'शब्दचित्रं वाच्यचित्रम्' इति वृत्तौ चित्रमिति गुणालङ्कारयुक्तमित्यलङ्काराणां चित्रधर्मस्यापरत्र च प्रकृतोदाहरणादिध्वनिगुणीभूतव्यङ्ग्ययोरप्यङ्गत्वस्य विरुद्धयोरभिधानं पूर्वापरविरुद्धाभिधानम्। न चोदनीयमिति। प्राचीननये समनन्तरोक्तदिशा साम्प्रदायिकमते च शब्दार्थोभयालङ्काराणां ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्यद्वयविलक्षणचित्राख्यकाव्यावयवस्याङ्गतया दोषाभावात्।

## दर्पणः

निदाघास्वररत्नावादित्यत्र [निदाघाम्बररत्नवदित्यत्र] तुल्यार्थे।

ननु शब्दचित्रं वाच्यचित्रमव्यंग्यंत्वरणं [अवरं] स्मृतमित्युक्तदिशा अस्फुटरसादिव्यंग्यमेव चित्रं काव्यं, तस्यैव च धर्मत्वे चित्रान्तर्गतः सर्वोऽप्यलङ्कारवर्गो निर्देष्टुमुचितः [निर्दिष्टुमुचितः] तेन चित्रकाव्यगता एवालङ्कारा उदाहर्तुमुचिताः। उक्तोदाहरणषूद्भट [उत्कट] वस्तुरूपो व्यङ्ग्यो रसादिरूपञ्च दृश्यते। किञ्चान्येषामपि अलङ्काराणां योगात् सङ्करेण [सङ्करेण] व्यपदेशो नोपमयेत्यादि पूर्वोत्तर विरुद्धाभिधानमित्यभिशङ्क्याह स्वाधीनेति। लोकोत्तरचमत्कारभूरनन्यसाधारणानुवागप्रकाशनात् भूर्विषयः [?]वैचित्र्यं काव्योपदेशबीजभूतं [काव्यव्यपदेशबीजभूतं] भावक [भावुक] मनोविस्तारात्मक चमत्कारानुगुण्यम्। न खल्विति। खलु यस्मात्। व्यङ्ग्यं समनन्तरोक्तरूपः, वाच्यं द्वयोः साम्य प्रतिपादकं [साम्यप्रतिपादकं], तस्यैव वैचित्र्यं विच्छित्तिः। तत्प्रतिभासादेव उपरूपव्यङ्ग्यस्य काव्यार्थप्रतिभासका [काव्यप्रतिभासकता] तेन स्फुटप्रतीति। अपि तु तत्समनन्तरमेव। यश्चात्र रसादिरूपो व्यङ्ग्योऽलङ्कारान्तरं च दृश्यते, तत्संभेदेऽपि न चित्रता क्षतिः [इति] आह। रसादि अलङ्कारान्तरं च

सर्वत्राव्यभिचारीत्यस्यायमाशयः—अलङ्कारमध्येऽप्यत्र 'प्रधानेन व्यपदेशा भवन्तीति' न्यायात् उपमयैरव्यरव्यप्रदेशाविद्यत न्याय्य इति [उपमाया अनन्य व्यपदेशोऽन्याय्य इति] । एतद्रसादिरूपं व्यङ्ग्यमलङ्कारान्तरं चागणयित्वा अत्रौदासीन्यावलोकनेमेत्यर्थः [नेत्यर्थः] तद्रहितान्वेन [तद्रहितत्वेन] रसादिसंभेदाभावेन । साधारणधर्मस्यानुपादाने वाक्यस्यासङ्गति स्यात् ।

## साहित्यचूडामणिः

काव्ये व्यङ्ग्यालंकारान्तरयोः सर्वत्राव्यभिचारात् अलङ्कारा उदाहृता इति सामान्यादुल्लासार्थः सिद्धप्राय उद्धाट्यते । ननु निर्व्यङ्ग्या उदाह्रियन्तामलंकाराः, येन विषयविवेक इत्यत्राह—तद्रहितत्वेनेति । यद्यपि तृतीयं काव्यमलंकाराणां शुद्धमुदाहरणं यथा निरलङ्कारमुत्तमं काव्यं रसध्वनेः, न खल्वालङ्कारिकाणां रसध्वनौ निर्बन्धः यथा तृतीयकाव्ये ध्वनिवादिनां, तथापि तद्विषयविभागलोभादुदाह्रियमाणो न चमत्काराय यथा गौरिव गवय इत्युपमा, खलेवालीयूप इति रूपकम्, स्थाणुः पुरुषो वेति सन्देहः, नेदं रजतमित्यपह्नुतिः, पीनो देवदत्तो दिवा न भुङ्क्ते इति पर्यायोक्तम्, समुद्रः कुण्डिकेत्यतिशयोक्तिः, अद्रिरग्निमानित्यनुमानम्, आद्यन्तौ टकितौ इति यथासङ्ख्यम्, 'पुत्रेण सहागतः पिते'ति सहोक्तिः, श्वेतो धावतीति श्लेषः । एवमन्यदपीति । इत्थं गुणीभूतव्यङ्ग्यालंकारान्तरयोः सङ्करेऽप्यपोद्धारबुद्धेरलङ्कारा उन्नेतुं पार्यन्त इति तात्पर्यम् । यदाह—

**रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।**
**अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ॥ [ध्व. २.५ वृ]**

**ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।**
**रूपकादिरलंकारवर्ग एति यथार्थताम् ॥ [ध्व. २.१७]**

**वाच्यालंकारवर्गोऽयं व्यङ्ग्यांशनुगमे सति ।**
**प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥ [ध्व. ३.३६] इति ।**

इत्थं स्थिते यदेतदलंकार्यप्राधान्यावलम्बनेन प्रवृत्तस्य ग्रन्थकृत इदानीमलंकारप्रधान्यपरिग्रहौन्मुख्यं, न तदनवधानशङ्कामुल्लिङ्गयति । गुणीभूतव्यङ्ग्यध्वनौ तु राजानुगतविवाहप्रवृत्तभृत्यन्यायस्यानुरस्मरतीति ॥ १ ॥

## सम्प्रदायप्रकाशिनी

नन्वव्यङ्ग्यं शब्दार्थविच्छित्तिमयं चित्रमित्युक्तम्, इह तु चित्रोदाहरणेषु व्यङ्ग्यप्रतीतिः स्फुटमुपलभ्यते । अतः पूर्वापरविरुद्धाभिधानमित्यत आह—स्वाधीनभर्तृकेत्यादिना । अमोक्षौपम्यमात्रेण न लोकोत्तरश्चमत्कारः, किन्तु नित्यभजनरूपव्यङ्ग्यसहितेन । वैचित्र्यं ह्यलङ्कारः । अतो व्यङ्ग्यमिह गुणीभवति । अस्ति च रसभावादि ध्वन्यन्तरम् । अतो ध्वनेर्गुणीभूतव्यङ्ग्यस्य वोदाहरणत्वेनैतानि सङ्गच्छन्ते, न तु शुद्धचित्रस्येत्याक्षेपनिष्कर्षः । परिहरति—तथापि न ध्वनिगुणीभूतेत्यादि । सत्यमेतत् । किन्तु न प्रतीयमानार्थसंस्पर्शे चित्रत्वभङ्गः, अपि तु शब्दार्थयोः प्रतीयमानार्थनैरपेक्ष्येण वैचित्र्याभावे । इह तु वैचित्र्यं प्रतीयमानार्थनिरपेक्षमेव, वाक्यकक्ष्यायामेवोपमानोपमेयविच्छित्तिप्रतिभासात् । ननु रसान्तरं 'प्रभावप्रभवे'त्यादौ अलङ्कारान्तरकृतं च चारुत्वमस्तीत्यत आह—

रसादिरूपमित्यादि । अगणयित्वेति । अप्रस्तुतत्वादगणनम् । अलङ्कारा उदाहृताः केवलमुपमाद्यलङ्कारविशेषा एव दर्शिता इत्यर्थः । ननु व्यङ्ग्यसंस्पर्शरहितशुद्धचित्रोदाहरणसम्भवेऽपि किं व्यङ्ग्यादिसहितोदाहरणप्रदर्शनेनेत्यत आह—तद्रहितत्वेनेत्यादि । विरसतां सहृदयहृदयोद्वेजकतां, शास्त्रस्य कुर्वन्तीति शेषः । यत इत्थमतो न चोदनावकाशः कश्चित् ।

### मधुमती

शङ्कते—स्वधीनेति । प्रतीयमानेन व्यङ्ग्येन । वैचित्र्यं च अलङ्कारः इति । तथा च अपराङ्गपलक्षणगुणीभूतव्यङ्ग्यत्वं ध्रुव मित्यर्थः । समाधत्ते—तथापीति । अत्र हि पद्ये—मुख्यतया राजविषया रतिः तदनुकूलतयोक्ता इत्यर्थः । प्रतीयमानः उपमालक्षणः अर्थालङ्कारः, अनुप्रासः शब्दालङ्कारश्च प्रतीयते । तत्र रतिभावमादाय न ध्वनिव्यवहारः, उक्तमर्थमादाय न गुणीभूतव्यङ्ग्यव्यवहारः, अनुप्रासमादाय न शब्दालङ्कारव्यवहारो वा । तेषां विद्यमानानामपि अत्र अविवक्षितत्वात् । अत एवोक्तम्—अगणयित्वैव इति । गणना नाम पुरस्कारेण विवक्षा । अत एव चोक्तम्—तद्रहितत्वेनेति । न च न खल्वित्यादिविरोधः । न चारुताप्रतीतिः विवक्षिता इत्यर्थः इति अविरोधात् । एवं च—सर्वत्रालङ्कारे व्यङ्ग्यपरामर्शदेव चारुताप्रतीतिः । विवक्षावशात्तु क्वचित् कश्चिद्व्यपदेशः इति स्मर्तव्यम् ॥ पूर्वापरेति । 'अव्यङ्ग्यमपरं स्मृतम्' इति पूर्वोक्तम् । एषु च व्यङ्ग्यस्य सत्त्वात् तद्विरुद्धमिति नाशङ्कीयमित्यर्थः ॥

### विस्तारिका

ननु 'गुणालङ्कारवैचित्र्यवदव्यङ्ग्यं चित्रम्' इति प्रागुक्तम्, अलङ्कारस्थानेषु च सत्यपि तद्वैचित्र्ये व्यङ्ग्यस्यानुभाविकतया ध्वनिगुणीभूतव्यङ्ग्यान्यरत्वसम्भवे कथं चित्रत्वमित्याशङ्कते—स्वाधीनेत्यादि । लोकोत्तरः साधारणलोकवृत्तं विषयीकृत्यानुत्पद्यमानश्चमत्कारो विस्मयो भूर्विषयः । प्रतीयमानेन व्यङ्ग्येन वैचित्र्यं चमत्कारानुगुण्यम् ।

परिहरति—तथापीति । सत्यपि व्यङ्ग्ये समुत्कटया अलङ्कारकृतचारुतया प्रथमतश्चित्ताकर्षणमिति चित्रता । न खलु वाच्यादिवैचित्र्यं सत्त्वविरोधीति सिद्धान्तपर्यवसानम् ।

न खल्वित्यादि । अत्रालङ्कारवति काव्ये । संस्पर्शो वैशिष्ट्यम्, परामर्शोऽवगाहनम्, चारुताप्रतीतिश्चमत्कारः । वाच्यस्य 'चन्द्र इव मुखमाह्लादकम्' इत्यादौ चन्द्रादिनिष्ठधर्मसजातीयमुखादिनिष्ठधर्मस्य शोभातिशयस्य वैचित्र्यम् । सर्वजनमन्मथोद्दीपकत्वं प्रतिभासो ज्ञानम् । व्यङ्ग्यानपेक्षयैव वाच्यवैचित्र्येण चमत्कार इति चित्रतेत्यर्थः ।

नन्वेवं सति रसादौ व्यङ्ग्येलङ्कारान्तरे च कथं न तेन व्यवहार इत्याह—रसादिरूपस्त्विति । तदगणयित्वेत्यन्वयः । अलङ्कारा उदाहृताः । तथा च येषामुद्भट्टवैचित्र्यं तैरेव लक्ष्यं प्रदर्श्यमिति भावः ।

अथासङ्कीर्णनेवोदाह्रियतामित्यत आह—तद्रहितत्वेनेति । तत्पदेन रसानुकर्षणः, उदाह्रियमाणाः प्रदर्श्यमानाः । विरसतां निरास्वादताम् ।

अयमर्थः—रसाभावेऽलङ्कारता न स्यात्, वाचकवाच्योपस्कारद्वारा तदुपकारकत्वेनैव तत्त्वात्। केवलमापाततः स्ववैचित्र्ये चित्रविश्रमणाच्चित्रतेत्याह—न दर्शनीयमिति। अव्यङ्ग्यत्वं लक्ष्यमिति परस्परविरुद्धाभिधानमिति।

## सारबोधिनी

ननु गुणालङ्कारवदव्यङ्ग्यं चित्रत्वमिति प्रागुक्तम्। अलङ्कारस्थले सत्यपि तद्वैचित्र्ये व्यङ्ग्यस्यानुभवसिद्धतया ध्वनिगुणीभूतान्यतरत्वसम्भवे कथं चित्रत्वमित्याशङ्कते स्वाधीनेत्यादि। चमत्कारभूश्चमत्कारविषयः। प्रतीयमानेन व्यङ्ग्येन वैचित्र्यं चमत्कारानुगुण्यं परिहरति तथापीति। सत्यपि व्यङ्ग्ये समुत्कटया अलङ्कारकृतचारुतया प्रथमतश्चित्ताकर्षणमिति चित्रता। न खलु वाच्यादेव वैचित्र्यम्। व्यङ्ग्यसत्त्वविरोधीति सिद्धान्तपर्यवसानम्। न खल्वित्यादि। उक्तालङ्कारवति काव्ये वाच्यमुपमादिरूपम्। नन्वेवं सति रसादौ व्यङ्ग्येऽलङ्कारान्तरे च कथं न तेन व्यवहार इत्यत आह तद्रहितत्वेनेति।

## काव्यप्रदीपः

ननु चित्रभेदा अलंकारनिर्णये निर्णेष्यन्ते इति पूर्वमवादीः 'इदानीं स्वप्नेऽपि' इत्युदाहरसि न तच्चित्रं भवितुमर्हति। अत्र हि स्वाधीनभर्तृका, कान्तं भजमाना यथा चमत्कारभूस्तथा जयश्रीस्त्वदासेवनेनेत्यादि वस्तुरूपं व्यङ्ग्यं विना नोक्तेर्वैचित्र्यम्। वैचित्र्यं चालंकारत्वनिष्पत्तय इति व्यङ्ग्यमवश्यापेक्षणीयम्। अतस्तस्य प्राधान्ये गुणीभूव्यङ्ग्यत्वम्। तस्मात्पूर्वापरविरुद्धाभिधानमिति चेत्, मैवं वादीः। न खलु व्यङ्ग्यपरामर्शादिवात्र चारुत्वाप्रतीतिः, अपि तु वाच्योपमामात्रपरामर्शादेव। चारुत्वहेतुश्चालंकारः। अवर्जनीयसंनिधेश्च व्यङ्ग्यस्यास्फुटतरतया न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारप्रवर्तकतेति न कश्चिद्दोषः। नन्वेवमप्युदाहृते रसादिरूपव्यङ्ग्यसद्भावाच्चित्रतानुपपत्तिः। किं चानुप्रासाद्यलंकारान्तरसद्भावात्संकरालंकारोदाहरणान्येतानि युक्तनि, न तु शुद्धाया उपमाया इति चेत्, न। रसादिरूपव्यङ्ग्योऽलंकारान्तरं चैतेष्वव्यभिचारीति तत्रौदासीन्यमालम्ब्योपमालंकारोऽयमीदृश इत्यभिप्रायेणालंकारमात्रमुदाहृतं न तु चित्रकाव्यम्। अत्र 'चन्द्रधवलः पटः' इत्यादिको रसालंकाराभ्यामसंभिन्न एव विषयः किमिति नोदाह्रियत इति चेत्, तद्रहिततत्वेनोदाहरणे वैरस्यप्रसङ्गात् तादृशवाक्यस्याकाव्यत्वेन तस्या अप्यनुपमात्वात्।

अथ लुप्ता विभजनीया। सा च सप्तधा। तत्रैकस्य लोपे त्रिधा उपमानस्य साधारणधर्मस्य द्योतकस्य च लोपादुपमेयमात्रस्य कोपादर्शनात्। द्विलोपेऽपि त्रिधा। धर्मवाद्योर्धर्मोपमानयोर्वाद्युपमेययोश्च लोपादन्यस्य द्विकस्य लोपासंभवात्। त्रिलोपे त्वियमेका।

## आदर्शः

सालङ्कारस्य चित्रकाव्यत्वाच्चित्रलक्षणे चाव्यङ्ग्यमित्युक्तत्वादत्र व्यङ्ग्यसत्त्वे कथं चित्रमित्याशङ्कते—स्वाधीनेति। प्रतीयमानेन विनेति। न हि घटत्वजातिः पटत्वमिवेत्युक्तौ वैचित्र्यविशेषानुभव इति भावः। चित्रयश्चालङ्कार इति। तथा च तादृशप्रतीयमानवैचित्र्यमादायालङ्कारध्वनिरेवायं स्यादित्याशङ्कार्थः। समाधत्ते—तथापीति। येन चारुताऽनुभूयते तेनैव व्यवहार इत्यतोऽत्र वाच्योपमावशादेव व्यवहार इत्यर्थः। नन्वत्र

शृङ्गारानुभवाच्चारुताप्रतीतिरित्यतो रसध्वनिरयं स्यादित्याह—रसादीति। तदपेक्षयाऽपि वाच्योपमावशादेव चारुताधिक्यप्रतीतिरिति भावः। इत्यगणयित्वेति, व्यङ्ग्यसत्त्वमगणयित्वेत्यर्थः। 'तदलङ्कारा' वाच्यालङ्काराः। पूर्वापरेति। पूर्वमव्यङ्ग्यमित्युक्तम्, इदानीन्तु सव्यङ्ग्यमुदाहृतमिति विरुद्धाभिधानं नाशङ्कनीयमित्यर्थः, स्फुटव्यङ्ग्यराहित्यस्यैव तत्र व्याख्यातत्वादिति भावः।

## सुधासागरः

ननु 'गुणालङ्कारवदव्यङ्ग्यं चित्रम्' इति प्रागुक्तम्। अलङ्कारस्थले च सत्यपि तद्वैचित्र्ये व्यङ्ग्यस्यानुभवसिद्धतया ध्वनिगुणीभूतव्यङ्ग्यान्तरत्वसम्भवे कथं चित्र त्वमित्याशङ्कते। स्वाधीनेत्यादि। चमत्कारभूः चमत्कारविषयः, प्रतीयमानेन व्यङ्ग्येन वैचित्र्यं चमत्कारानुगुण्यम्। परिहरति तथाऽपीति। सत्यपिव्यङ्ग्ये समुत्कटयाऽलङ्कारकृतचारुतया प्रथमतश्चित्ताकर्षणमिति चित्रता, न खलु वाच्यादिवैचित्र्यं सत्त्वविरोधीति सिद्धान्तपर्यवसानम्। न खल्वित्यादि। अत्रालङ्कारवति काव्ये। वाच्यमुपमादिरूपम्।

नन्वेवं सति रसादौ व्यङ्ग्ये अलङ्कारान्तरे च कथं न तेन व्यवहार इत्यत आह—रसादिरूपस्त्विति। तथा च येषामुद्भटत्वं तैरेव लक्ष्यप्रदर्शनमिति भावः। अथासङ्कीर्णमेवोदाह्रियतामित्यत आह—तद्रहितत्वेनेति। अत एव प्रदीपकारैर्व्याख्यातम्—नु 'चित्रभेदा अलङ्कारनिर्णये निर्णेष्यन्त' इति पूर्वमवादीः, इदानीं स्वप्नेऽपीत्युदाहरसि न तच्चित्रं भवितुमर्हति। अत्र हि स्वाधीनभर्तृका कान्तं भजमाना यथा चमत्कारभूस्तथा जयश्रीस्त्वदासेवनेनेत्यादिवस्तुरूपं व्यङ्ग्यं विना नोक्तवैचित्र्यम्, वैचित्र्यं चालङ्कारत्वनिष्पत्तये इति व्यङ्ग्यमवश्यापेक्षणीयमतस्तस्य प्राधान्ये ध्वनित्वमप्राधान्ये गुणीभूतव्यङ्ग्यत्वं तस्मात् पूर्वापरविरुद्धाभिधानमिति चेत्। मैवं वादीः। न खलु व्यङ्ग्यपरामर्शदेवात्र चारुताप्रतीतिरपि तु वाच्योपमामात्रपरामर्शदेव। चारुत्वहेतुश्चालङ्कारः। अवर्जनीयसन्निधेश्च व्यङ्ग्यस्य अस्फुटतरतया न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारप्रवर्तकतेति न कश्चिद्दोषः।

नन्वेवमप्युदाहृते रसादिरूपव्यङ्ग्यसद्भावाच्चित्रतानुपपत्तिः। किञ्च अनुप्रासाद्यलङ्कारान्तरसद्भावात् सङ्करालङ्कारोदाहरणन्येतानि युक्तानि, न तु शुद्धाया उपमाया इति चेत्। न। रसादिरूपो व्यङ्ग्योऽलङ्कारान्तरं चैतेष्वव्यभिचारीति तत्रौदासीन्यमालम्ब्योपमालङ्कारोऽयमीदृश इत्यभिप्रायेणालङ्कारत्वमुदाहृतं न तु चित्रकाव्यम्। अत्र 'चन्द्रधवलः पट' इत्यादिको रसालङ्काराभ्यामसम्भिन्न एव विषयः किमिति नोदाह्रियते इति चेत्। न। तद्रहितत्वेनोदाहरणे वैरस्यप्रसङ्गात्। तादृशवाक्यस्याकाव्यत्वेन तस्या अप्यनुपमात्वादिति।

**(सू० १२८) तद्वत् धर्मस्य लोपे स्यात् न श्रौती तद्धिते पुनः ।**

**धर्मः साधारणः । तद्धिते कल्पवादौ त्वार्थ्येव । तेन पञ्च । उदाहरणम्—**

---

### सङ्केतः

तद्वदिति । पूर्णावत् लुप्ताऽपि वाक्यसमासयोः श्रौती आर्थीति द्विद्विभेदा । तद्धिते तु आर्थ्येव, न श्रौती । 'तत्र तस्येव' इति सूत्रेण कृते वतिप्रत्यये श्रौतीत्वं मतम् । ननु—

**'तदस्य सिंहवत्, त्वया सन्निधौ न गन्तव्यम्'**

इत्यत्र दारुणत्वस्य गम्यत्वात् अनुच्चारणेन पुरुषस्य सिंहोपमेयस्य सन्निधौ पुरुषसञ्चारनिवारणे, कथं समानधर्मलोपेन श्रौतीति युज्यते ? सत्यम् । समानधर्मतां निवारणादिकमत्र भजते । अथवा—प्रतीत्यभावादेवम् । तथाहि—षष्ठ्यन्तस्य सिंहोपमानकत्वे विवक्षितेऽपि, शब्दसामर्थ्यात् तृतीयान्तेनैव सह उपमायाः स्फुटता प्रतीयते, न तु पूर्वोक्ता अर्थघटना इति ।

### बालचित्तानुरञ्जनी

एवं पूर्णोपमामभिधाय लुप्तोपमां विभजते तद्वदिति । तद्वत् पूर्णोपमावत् । वाक्यगा समासगा तद्धितगा । तत्र श्रौतार्थभेदेन द्वैविध्यम् । तद्धिते आर्थी न संभवतीति पञ्चप्रकारेत्याह तद्धित इति । आदिशब्देन देश्य-देशीयर्बह्वृचो ग्राह्याः ।

### काव्यादर्शः

लुप्तमाह—तद्वदिति । पूर्णोपमावद् लुप्तोपमापि वाक्यसमासयोः श्रौत्यार्थी चेति द्वि-द्विभेदा, तद्धिते तु आर्थ्येव, न श्रौती; इत्येकस्य धर्मस्य लोपे पञ्चभेदा ।

### विवेकः

अथ लुप्तोपमां प्रपञ्चयति तद्वदिति, पूर्णावद्वाक्यसमासयोः प्रत्येकं श्रौत्यार्थी चेति पञ्चधा । कल्पबादिः कल्प-जातीयादिः ।

### दीपिका

एवं षड्विधां पूर्णामुक्त्वा लुप्ताप्रपञ्चे वक्तव्ये एकलोपं तावत् प्रपञ्चयति तद्वदिति । पूर्णावदित्यर्थः । अत्रापवादमाह—नेति । इवादिसमानार्थतद्धितविषये एवंविध उपमाया अभावादित्यर्थः । एवमुत्तरत्रापि विषयस-ङ्कोचेऽयमेव न्यायोऽनुसन्धेयः । साधारणः सादृश्यप्राणभूतगुणक्रियादिरूपः । साधारणगुण इति पाठे गुणशब्देन क्रियाऽप्युपलक्ष्यते ।

## दर्पणः

चेत इति । संबोधनपदम् । तत्र च वचोऽमृतयोः परिणतिसुकरत्वादेः [परिणतिसुरसत्वादेः] इत्थं पूर्णोपमा षड्विधा । लुप्तोपमां प्रपञ्चयति तद्वतिति । तद्वत् पूर्णावत्, आत्म्येव [आर्थ्येव] न तु श्रौती । तथाहि-सौरभमभोरुहवन्मुखस्येत्यादौ सौरभादेः साधारणधर्मस्यानुपादानम् । आचारकृत्यं [आक्षेपलभ्यं] ।

## साहित्यचूडामणिः

भूयो विभजते—तद्वदिति । यदुद्भटः [का० सा० सं० १]

**संक्षेपाभिहिताप्येषा साम्यवाचकविच्युतेः ।**
**साम्योपमेयतद्वाचिविरहाच्च निबध्यते ॥**

**उपमानोपमेयोक्तौ साम्यतद्वाचिविच्यवात् ।**
**क्वचित् समासे तद्वाचिविरहेण क्वचिच्च सा ॥**

**तथोपमानादाचारे क्यच्प्रत्ययबलोक्तितः ।**
**क्वचित् सा कर्तृराचारे क्यङा सा च क्विपा क्वचित् ॥**

**उपमाने कर्मणि वा कर्त्तरि वा यो णमुल् कषादिगतः ।**
**तद्वाच्या सा वतिना न कर्मसामान्यवचनेन ॥**

**षष्ठीसप्तम्यन्ताच्च यो वतिर्नामतस्तदभिधेया ।**
**कल्पप्प्रभृतिभिरन्यैश्च तद्धितैः सा निबध्यते कविभिः ॥** इति ।

तद्वदिति पूर्णोपमातिदेशः । वैषम्यांशमाह—न श्रौतीति । साधारणधर्मलोपिनि कल्पवादिप्रयोगे यथेवाद्यनुविधानभावात् ।

आदिपदेन देश्यदेशीयर्बहुचो गृह्यन्ते ।

तेनेति । पूर्णायां श्रौत्यार्थीभेदेन षड् भेदाः, इह त्वेकहान्या पञ्च ।

## सम्प्रदायप्रकाशिनी

अथ लुप्ताप्रपञ्चः । तत्र साधारणधर्मनिबन्धनाः पूर्णान्यायेन वाक्यादिषु दर्शयति—तद्वद्धर्मस्येत्यादि । तद्वदिति वाक्ये समासे तद्धिते च । तत्र वाक्यसमासयोः श्रौती चार्थी च । तद्धिते पुनर्न श्रौती, अपि त्वार्थ्येव ।

व्याचष्टे—धर्मः साधारण इत्यादि । कल्पवादावित्यादिशब्दात् देश्यदेशीयरोः परिग्रहः । अतो वाक्यसमासयोर्द्वौ द्वौ तद्धिते तु श्रौत्यभावादेक एक भेदः । तदेतदाह—तेन पञ्चेति ।

## मधुमती

लुप्तां विभजते तद्वदिति। तुल्यार्थकवतेः क्रियारूपसाधारणधर्मगर्भत्वादाह—कल्पवादाविति। आदिपदात् देश्य-देशीयर्-बहुचः ग्राह्याः। प्रकृते—श्रौती भवन्ती वतावेव स्यात्, न च षष्ठीसमर्थात् सप्तमीसमर्थाद्वा-वतिः साधारणधर्मानुपादाने अन्वयं बोधयतीति तदुपादानं आवश्यकमिति अत्र तत्त्यागः। एवं च साधारणधर्मलोपनिबन्धनाऽपि तद्धिते श्रोती नास्तीति तत्परित्यागेन पञ्च भेदा इत्यर्थः।

## विस्तारिका

लुप्तामाह—तद्विदिति। तद्वत् पूर्णावत्। लोपे अनुपादाने। षड्विधत्वं वारयति नेति।

चन्द्रत्वादिमुखत्वादिप्रतीतेर्न धर्मलोप इत्याह—धर्मः साधारण इति। चन्द्रस्येव चन्द्रवदिति श्रौतीत्वसम्भवेऽपि कथं तद्विवर्जनमिति चेत्, मैवम्, धर्मानुपादाने चन्द्रस्येवेति वाक्येन वतेः प्रसङ्गः, साकाङ्क्षत्वात्, प्रतियोगिनोऽनुयोगिसाकाङ्क्षत्वात्।

## सारबोधिनी

लुप्तामाह तद्वदिति। पूर्णावत्। लोपे अनुपादाने। ननु चन्द्रत्वादिमुखत्वादिप्रतीतेर्न धर्मलोप इत्यत आह धर्मः साधारण इति। ननु चन्द्रस्येव चन्द्रवदिति श्रौतीत्वसंम्भवे कथं तद्धितवर्जनमिति चेत् न। धर्मानुपादाने चन्द्रस्येवेति वाक्येन वतेः प्रसङ्गः। सापेक्षत्वात् प्रतियोगिनोऽनुयोगिसाकाङ्क्षात्वादिति।

## काव्यप्रदीपः

उपमेयं विनान्येषामेकैकमात्रसत्त्वे उपमाया असंभवादिति दर्शयन्नेव यथासंभवं तासां सप्तविधानामपि विभागमाह—

**तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः।**

धर्मस्य साधारणस्य। तद्वत्समासे वाक्ये तद्धिते च श्रौती आर्थी चेत्यर्थः। तत्र विशेषमाह—न श्रौती तद्धित इति। इवार्थ एवं हि तद्धिते सा श्रौती भवेत्। इवार्थश्च वतिरेव। स च 'तत्र तस्येव' इत्यर्थकतया नित्यं धर्मसाकाङ्क्ष इति धर्मानुपादाने श्रौती तद्धिते न भवत्येव। आर्थी तु यद्यपि वतिरूपे तद्धिते न संभवति 'तेन तुल्यं' इत्यर्थे उक्तन्यायेन नित्यं तुल्यक्रियाकाङ्क्षत्वेन धर्मलोपे तदसंभवात्। तथापि कल्पप्-देश्य-देशीयर्-बहुच् रूपे संभवत्येवेति पञ्चधा धर्मलोपोपमेत्यर्थः।

## आदर्शः

इत्थं षड्विधां पूर्णामुदाहृत्य ऊनविंशतिविधां लुप्तामुदाहरिष्यन् पञ्चविधां धर्ममात्रलुप्तामाह-तद्वदिति। श्रौत्यार्थ्योः पूर्णयोर्वाक्यादित्रयगामित्ववदित्यर्थः। एवञ्च तद्वत् षड्विधत्वप्रसक्तावाह—न श्रौतीति। धर्मलुप्तायां धर्मसम्बन्धप्रतिपादिकायाः षष्ट्याःसप्तम्या वा अभावेन ततो विहित इवार्थो वतिर्नास्तीत्यतस्तद्धितान्तरे कल्पप्र-

त्ययादौ न श्रौतीत्याह—कल्पबादाविति । कल्पप्रत्ययः पानुबन्धः पाणिनिमते । आदिपदात्तुल्यार्थकवतेरपि परि-ग्रहः ।

**सुधासागरः**

अथ लुप्ता विभजनीया, सा च सप्तधा । तत्रैकस्य लोपे त्रिधा, उपमानस्य साधारणशब्दस्य द्योतकस्य च लोपात्, उपमेयमात्रस्य लोपादर्शनात्; द्विलोपेऽपि त्रिधा, धर्मेवाद्योर्धर्मोपमानयोर्वाद्युपमेययोश्चलोपात्, अन्यस्य द्विकस्य लोपासम्भवात्; त्रिलोपे त्वियमेका, उपमेयं विनाऽन्येषामेकैकमात्रसत्त्वे उपमाया असम्भवादिति दर्शयन्नेव यथासम्भवं तासां सप्तविधानामपि विभागमाह— तद्वदिति ।

तद्वत् समासे वाक्ये तद्धिते श्रौत्यार्थी चेत्यर्थः । तत्र विशेषमाह—न श्रौती तद्धित इति । इवार्थे एव हि तद्धिते सा श्रौती भवेत् । इवार्थश्च वतिरेव, स च 'तत्र तस्येव' इत्यर्थकतया नित्यं धर्मसाकाङ्क्ष इति धर्मानुपादाने श्रौती तद्धिते न भवत्येव । आर्थी तु यद्यपि वतिरूपे तद्धिते न सम्भवति 'तेन तुल्यम्' इत्यर्थे उक्तन्यायेन नित्यं तुल्यक्रियाकाङ्क्षत्वेन धर्मलोपे तदसम्भवात्, तथापि कल्पब् देश्य—देशीयर्—बहुच्—रूपे सम्भवत्येवेति पञ्चधा धर्मलोपोपमेत्यर्थः । तदेतद् वृत्तिकृदाह—धर्मः साधारण इत्यादि ।

**धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः**

**करणीयं वचश्चेतः सत्यं तस्यामृतं यथा ॥ ३९७ ॥**

---

### सङ्केतः

तस्य करणीयं वपुः कर्म वा, करणेभ्यः हितत्वात्। वचः वाक्। चेतः मनः। एतत् यमपि सत्यं सुधावदाह्लादकमित्यर्थः। इयं आह्लादकत्वादिधर्मलोपे वाक्ये श्रौती।

### बालचित्तानुरञ्जनी

वाक्ये श्रौतीमुदाहरति धन्यस्येति। हे चेतः धन्यस्य अनन्यसामान्यः यः सौजन्योत्कर्षः तेन शालते तस्य राज्ञः अमृतं यथा अमृतवन्मधुरं सत्यं वचः करणीयं यत्र माधुर्यस्य साधारणधर्मस्य लोपे च श्रुत्या श्रौतत्वम्। वाक्ये आर्थी।

### काव्यादर्शः

वाक्ये श्रौती लुप्ता, यथा—'धन्यस्ये'ति 'करणीयम्' काव्यव्यापारः। 'सत्यम्' इति निर्मिथ्यम्। 'त्रित-यमपि तथाह्लादकं यथामृतम् इत्याह्लादकत्वादिधर्मलोपः।

### विवेकः

तत्रैव वाक्ये गम्या लुप्तोपमा यथा—धन्यस्येत्यादि। वचनामृतयोः साधारणो धर्मो माधुर्यादिः प्रसिद्धो यथा शब्दसामर्थ्यादनिर्दिष्टोऽपि प्रतीयते।

### दीपिका

तेनेति प्राचीनेनैव क्रमेण। चेत इति सम्बुद्धिः। अमृतवचसोः साम्यं परिणतिसौहित्यादिनोक्तम्।

### साहित्यचूडामणिः

धन्यस्येति। वचनममृतं यथेत्यत्र मधुरिमादेर्न प्रयोगः। यथाश्रुत्या श्रौतत्वम्।

### सम्प्रदायप्रकाशिनी

धन्यस्येति। चेत इति सम्बोधनम्। इयं धर्मलोपे श्रौती वाक्यगा। अत्र हि सर्वप्रकारपथ्यात्वादिर्वचोमृ-तयोः साधारणो धर्मः प्रतीयत एव।

### मधुमती

धन्यस्येति। अत्र वचनामृतयोः साधारणधर्मः नोपात्तः। वाक्यगा चेयं श्रौती।

## विस्तारिका

धन्यस्येति । न विद्यतेऽन्यस्य समानत्वं यस्य तथाभूतेन सौजन्येन य उत्कर्षः कीर्तिः, अत एव धन्यस्य प्रशस्तस्य कर्मवचनमनसा सर्वेषामेव परत्वतृप्तिजनकता । सत्यमिति । ज्ञातुर्भातृत्वव्युदासः ।

अत्र तृप्तिजनकत्वस्य समानधर्मस्य प्रसिद्धत्वादनुपादानम् । अमृतं यथेति । वाक्यगा लुप्ता श्रौती ।

## सारबोधिनी

धन्यस्येति । चेत इति इदं सम्बोधनपदम् । अमृतं यथेति । इयं वाक्यगा श्रौती लुप्ता । अत्र तृप्तिजनकत्वस्य समानधर्मस्यातिप्रसिद्धत्वादनुपादानम् । एमन्यत्रापि ।

## काव्यप्रदीपः

तत्र वाक्ये श्रौती यथा—

**'धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।**
**करणीयं वचश्चेतः सत्यं तस्यामृतं यथा ।।'**

अत्रामृतवचसोः परिणामसुरसत्वादिसाधर्म्यं तच्च नोपात्तम् । आक्षेपात्तु लब्धस्य संबन्धो यथाशब्देन तद्बोधं विना पर्याप्तेन श्रुत्यैव बोध्यत इति धर्मलोपे श्रौतीयम् । एवमग्रेऽप्यूह्यम् ।

## आदर्शः

धर्मलुप्तां वाक्यगां श्रौतीमाह—धन्यस्येति । हे चेतः, अमृतं यथा तस्य वचः करणीयम् इत्यर्थः । तस्य कीदृशस्य ? धन्यस्य अनन्यसामान्यं यत् सौजन्यं तदुत्कर्षशालिनः । अत्र मधुरत्वं धर्मो लुप्तः । करणीयत्वन्तु अमृतेऽभावान्न साधारणम् । यथाशब्देन समासाभावाच्छ्रौती वाक्यगा ।

## सुधासागरः

हे चेतः अमृतंयथा पीयूषमिव सन्तोषजनकं तस्य साधोवचो वाक्यं सत्यं निश्चयेन करणीयम् । कीदृशस्य अन्यसामान्यं यन्न भवति तादृशं यत् सौजन्यं तदुत्कर्षेण शाली शोभमानस्तथाभूतस्य अत एव धन्यस्य सर्वोत्कृष्टस्येत्यर्थः ।

अत्रामृतवचसोः परिणामसुरसत्वादि साधर्म्यम्, तच्च नोपात्तम्, अत एव श्रीवत्सलाञ्छनभट्टाचार्यैरुक्तम्—अत्रतृप्तिजनकत्वस्य समानधर्मस्यातिप्रसिद्धत्वादनुपादानमिति, आक्षेपात्तु लब्धस्य सम्बन्धो यथाशब्देन तद्बोधं विनाऽपर्याप्तेन श्रुत्यैव बोध्यते इति धर्मलोपे श्रौतीयम् । एवमग्रेऽप्यूह्यम् ।

आकृष्टकरवालोऽसौ संपराये परिभ्रमन्।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥ ३९८ ॥

---

### सङ्केतः

आकृष्टेति। अत्र समशब्दस्य उपमेये विश्रान्त्या उपमानसाधर्म्यप्रतीतिः अर्थात्। क्रूरादिधर्मलोपोऽत्र।

### बालचित्तानुरञ्जनी

तद्धिते चार्थीमुदाहरति आकृष्टेति। असौ प्रभुः संपराये युद्धे आकृष्टकरवालः भ्रमन् शत्रुसेनया दृष्टः सन् कृतान्तेन यमेन समः। अत्र कृतान्तेन यमेन सम इत्यत्र क्रौर्यादिः साधारणधर्मस्याप्रयोगे आर्थी। न च करवालाकृष्टिः समानधर्म इति वाच्यम्। यमस्य दण्डायुधत्वेन करवालायुधत्वाभावात्।

### काव्यादर्शः

वाक्ये आर्थी, यथा—'आकृष्टे'ति। अत्र 'कृतान्तेन समः' इत्यत्र उपमेये एव सदृशत्वलक्षणस्य स्वार्थस्य विश्रान्तिः, तेन तत्सद्भावे आर्थी। तथा क्रूरादिधर्मो नोपात्तः।

### विवेकः

एवमुत्तरत्रापि द्रष्टव्यम्। आर्थी यथा, आकृष्टेत्यादि। अत्र साधारणधर्मो विनाशकत्वादिः प्रतीयमानः।

### दीपिका

संपराये संग्रामे।

### साहित्यचूडामणिः

आकृष्टेति। कृतान्तेन सम इत्यत्र क्रौर्यादि न प्रयुज्यते। करवालाकृष्टिर्न समानधर्मः, यमस्य दण्डायुधत्वात्।

### सम्प्रदायप्रकाशिनी

आकृष्टकरवाल इति। इयं सम इत्युक्तेरार्थी।

### मधुमती

आकृष्टेति। धर्मलोपे वाक्यगा आर्थीयम्। न च आकृष्टकरवालत्वमेव साधारणो धर्मः। तस्य कृतान्ते अप्रसिद्धेः। दण्डधरत्वेनैव तस्य प्रसिद्धत्वात्। तथात्वेऽपि अविवक्षितत्वाच्च।

### विस्तारिका

आकृष्टेत्यादि । खड्गाकर्षणमात्रेण कृतान्तसमता ।

ननु तन्निपातादिना अत्र कृतान्तेन सम इति आर्थी लुप्ता ।

### सारबोधिनी

आकृष्टेति । कृतान्तेन सम इति वाक्यगा आर्थी लुप्ता ।

### काव्यप्रदीपः

'आकृष्टकरवालोऽसौ संपराये परिभ्रमन् ।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥'

आकृष्टकरवालत्वं च न साधारणो धर्मः । यमस्य दण्डायुधत्वेन प्रसिद्धेः ।

### आदर्शः

धर्मलुप्तामार्थी वाक्यगामाह—आकृष्टेति । सम्पराये युद्धे । अत्र मारकत्वं धर्मो लुप्तः । दृष्टत्वन्त्वतीन्द्रिये कृतान्ते बाधान्न साधारणम् । असमासे समशब्दाद् वाक्यगा आर्थी ।

### सुधासागरः

वाक्ये आर्थी यथा—आकृष्टेति । स्पष्टम् । आकृष्टकरवालत्वं च न साधारणो धर्मः, यमस्य दण्डायुधत्वेनैव प्रसिद्धेः ।

करवालइवाचारस्तस्य वागमृतोपमा।

विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे॥ ३९९॥

---

### सङ्केतः

करवाल इति। अत्र 'इवेन'ति समासः। इयं दारुणत्वधर्मलोपे समासे श्रौती। समासे आर्थी—अमृतोपमेति। अत्र माधुर्यादिर्लोपः। तद्धिते आर्थी—विषकल्पं इति। यदि वेत्सि तत् जीवसि इत्यन्वयः। अत्र दारुणधर्मलोपः। 'ईषदपरिसमासं विषं मनः' इत्युक्त्या आमुखे रूपकावभासः। निर्वाहे तु 'विषसदृशं मनः' इति प्रतीत्या प्रातीतिकेन रूपेण उपमैव। ईषदपरिसमाप्तिविशिष्टे प्रकृत्यर्थसदृशेऽर्थे कल्पबादीनां स्मरणात्। ईषदपरिसमाप्तं हि विषं विषकल्पशब्देनोच्यते। गुणहीनविषजातीयं यत्किञ्चनापि वस्तु विषकल्पशब्दवाच्यमित्यर्थः। 'मनो-विष-कल्पशब्दयोः सामानाधिकरण्यं 'गौर्वाहीकः' इतिवत् गुणद्वारेण' इति केचित्। वयं तु—कल्पप् प्रत्ययस्य सदृशार्थवाचित्वेन विषकल्पं = विषसदृशं मनः इति प्रतीत्या, विशेषणतया सामानाधिकरण्यं ब्रूमः। यतः—सर्वत्र प्रतीतिरेव बलवती इति।

ननु—विषशब्दोऽपि विषत्वजातेः तदाधारद्रव्यस्य वा वक्ता। जातिश्च एका अनवयवा च सती स्वाश्रयसमाप्त्या समाप्तैव। द्रव्यमपि यत् तद्युक्तं, तत् सर्वतः सम्पूर्णत्वात् समाप्तमेवेति, ईषदसमाप्तिः कथम्? इति चेत्—न। शब्दादुच्चरिताद्धि द्वयं प्रतीयते शब्दार्थः जातिः द्रव्यं वा। तद्योगाद्वा अशब्दार्था अपि गुणाः प्रतीयन्ते। ततः एतद्द्वयाभावे न स्यादीषदसमाप्तिः, एकतराभावे तु स्यात्। तत् विषशब्दः विषत्वजात्या हीनं, दुष्टत्वादिगुणेन वा हीनं द्रव्यं ब्रुवन् ईषदसमाप्त एव। अतश्च—विषत्वजातिहीने मनश्शब्दवाच्येऽर्थे केनापि साम्येन वर्तमानः विषशब्दः प्रत्यययुक् मनश्शब्देन एकाधिकरणेऽपि भवेत्, गुणहीनत्वेन तु एकाधिकरणः प्रागुक्तः इति।

### बालचित्तानुरञ्जनी

समासे श्रौतीमुदाहरति करवाल इति। हे सखे! तस्य प्रकृतस्य आचारः करवालः वाक् अमृतोपमा मनो विषकल्पं तदेतत् वेत्सि यदि जीवसि तत्समीपावस्थाने तव जीवनमेव दुर्लभमेवेति भावः। अत्र करवाल इवाचार इत्यत्र इवशब्दयोगे नित्यसमासे इवश्रुत्या श्रौतत्वम्। अमृतोपमेति समासे आर्थी। विषकल्पमिति तद्धिते आर्थी।

### काव्यादर्शः

समासे श्रौती, यथा—'करवाले'ति। अत्र 'इवेने'ति वक्तव्यबलाद् नित्यसमासः, 'दारुणः' इति धर्मलोपश्च।

समासे आर्थी, यथा—'अमृतोपमा' इति। अत्र 'माधुर्यादि'-धर्मलोपः।

तद्धिते आर्थी, यथा—'विषकल्पम्' इति । 'यदि वेत्सि तद् जीवसि' इति संबन्धः । अत्र दारुणधर्मलोप इवार्थश्च कल्पप्रत्ययेन साक्षाद् अभिहितः । 'ईषद् अपरिसमाप्तं विषम्' इति वचनवृत्त्या सामानाधिकरण्यरूपया यद्यपि रूपकच्छायां भजते, तथापि प्रातीतिकेन रूपेण उपमैव । तथा हि अत्र 'विषसदृशं मनः' इत्ययमर्थः प्रतीयते, न तु 'ईषद् अपरिसमाप्तं विषमेव' इति ईषदपरिसमाप्तिविशिष्टे प्रकृत्यर्थसदृशेऽर्थे कल्पवादीनां स्मरणात् ।

ननु, 'विषकल्पं मनः' इति सामानाधिकरण्यं मनः शब्देन प्राप्नोति, तस्यार्थान्तरवोचितत्वात् । सत्यम्, यथा परिहृतस्वार्थः स्वार्थगतगुणमात्रप्रत्यायके गोशब्दः सदृशगुणवति वाहीके वर्तत इति स्यात् सामानाधिकरण्यं गौर्वाहीक इत्यत्र गोगुणसदृशगुणो वाहीक इत्यर्थात्, तथा गुणहीनविषजातीयवाची विषकल्पशब्दः सदृशजातौ मनसि वर्तिष्यत इति स्यात् सामानाधिकरण्यम् । गुणहीनं हि विषकल्पशब्देन उच्यते । न च गुणहीनेन विषेण विषजातीयेन तुल्यं मन इति तदपि विषशब्देन अभिधायिष्यते, विषजातीयसदृशजातिमन इत्यर्थात् ।

## विवेकः

समासगम्या शब्दोपमा श्रौती यथा—करवालेत्यादि—अत्र पूर्ववदिवशब्देन समासः, साधारणधर्मो दारुणत्वादिः । वागमृतोपमेति पूर्ववत् समासः । उपमाशब्दयोगत्वा [दा] र्थी । सैव तद्धितगतस्य यथा—विषकल्पं मनो वेत्सीति । अत्र यद्यपि विषमिव विषमित्युपचारवृत्त्योपमानशब्दोऽप्युमेये मनसि वर्तते ततश्च स्वार्थ एव स्वार्थिकः कल्पप्रत्ययस्तथापि गुणभूत उपमानार्थमभिधत्ते, शब्दशक्तितत्वाभाव्यात्, यथा शुक्लादिभ्यस्तरवादि । यथा अयं शुक्लः, अयञ्च शुक्लः, अयमनयोरतिशयेन शुक्ल इत्युक्ते शौक्लयस्यैव प्रकर्षो गम्यते न तु शौक्ल्यवतस्तद्वदिह विषसदृशं मन इत्यर्थो न तु विषमेवेति । तस्मादुपमाया एव हीदमुदाहरणं न तु रूपकस्येति ।

## साहित्यचूडामणिः

करवाल इवाचार इत्यत्र इवशब्दोगे नित्यसमासः । इवश्रुत्या श्रौतत्वम् । अमृतोपमेति समास आर्थी । विषकल्पमिति तद्धित आर्थी ।

## सम्प्रदायप्रकाशिनी

करवाल इवेति नित्यसमासगा श्रौती । अमृतोपमेत्यार्थी । विषकल्पमिति तु तद्धितगा आर्थी । इत्थं धर्मलोपे पञ्च ।

## मधुमती

करवालेति । अत्र प्रथमपादे समासगा श्रौती । द्वितीयपादे समासगा आर्थी । तृतीयपादे तु तद्धितगा आर्थी इति पञ्च भेदाः ।

## विस्तारिका

करवाल इवेति । आचारः कृत्यम् । खड्गस्य घातकत्वम्, अमृतस्य माधुर्यम्, विषस्य नाशकत्वं प्रसिद्ध-मिति न्यायान्नोपात्तम्, तत्तदा जीवसीति प्रयोगतश्चेति भविष्यति वर्तमानता । करवाल इवेति लुप्ता समासगा श्रौती । अमृतोपमेत्यार्थी । विषकल्पमिति तद्धितगार्थी लुप्ता इति धर्मलोपे पञ्चोदाहरणानि ।

## सारबोधिनी

करवाल इवेति । लुप्ता समासगा श्रौती । अमृतोपमेत्यार्थी लुप्ता, विषकल्पेति तद्धितगा लुप्ता आर्थी ।

## काव्यप्रदीपः

अन्त्यत्रयं यथा—

**'करवाल इवाचारस्तस्य वागमृतोपमा ।**
**विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे ॥'**

अत्र करवाल इवेति समासे श्रौती । अमृतोपमेति समासे आर्थी । विषकल्पमिति तद्धितगा आर्थी ।

## आदर्शः

अत्र समासे श्रौतीमार्थी तद्धिते त्वार्थीमेव चैकत्रैव धर्मलुप्तामुदाहरति—करवाल इवेति । हे सखे, यदि जीवसि तदा इदं वेत् सि । किमित्यत्राह—करवाल इवेति । अत्रेवेन नित्यसमासगा श्रौती । छेदकत्वं धर्मो लुप्तः । वागमृतेति, अत्र समासगा आर्थी मधुरत्वं धर्मो लुप्तः । विषकल्पमिति तद्धिते आर्थी, तापकत्वं धर्मो लुप्तः । **(a)** एवं विषवदिति करणे तुल्यार्थकवतावपि बोध्यम् । इति पञ्चविधा धर्मलुप्ताः ।

## सुधासागरः

अन्त्यत्रयं यथा—करवालेति । स्पष्टम् । अत्र करवाल इवेति समासे श्रौती, अमृतोपमेति समासे आर्थी । विषकल्पमिति तद्धितगाऽऽर्थी ।

**(सू० १२९) उपमानानुपादाने वाक्यगाथ समासगा ॥ ८८ ॥**

**सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स।**
**दीसइ अह व णिसम्मइ सरिसं अंसंसमेत्तेण ॥ ४०० ॥**

कव्वस्सेत्यत्र कव्वसममिति सरिसमित्यत्र च णूणमिति पाठे, एषैव समासगा ॥

---

**सङ्केतः**

सअलेति। अत्र सदृशशब्दवाच्यस्य उत्कृष्टत्वेन अप्राप्यताप्रतिपादनात् आयातं बलादुपमानत्वम्, तच्च सरिसं इति विशेषणेन आक्षिप्यते, न तु साक्षात् प्रतीयते इति उपमानानुपादानम्। सरसकाव्यं उपमेयम्। तस्य अन्यत् उपमानभूतं सरसान्तरं निषेध्यमिति भावः। इयं उपमानलोपे वाक्यगा आर्थी। श्रौती तु न संभवति। उपमानोपादानमन्तरेण यथेवादीनां प्रयोगाभावात्। तदर्थे विहितस्य वतेरपि उपमानभूतप्रकृत्युपादानमन्तरेण अघटनात्।

**सङ्केतः (रुय्यकः)**

**सरलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य।**
**दृश्यतेऽथवा श्रूयते सदृशमंशांशमात्रेण ॥**

सरसकाव्यस्य सदृशमिन्द्रियाणां परनिर्वृति (० निवृत्ति—) [करं] पृथङ् नोपलभ्यते न वा श्रूयते इत्यर्थः।

**बालचित्तानुरञ्जनी**

वाक्ये समासे उपमितिकरणस्यानुपादाने श्रौती नास्तीत्याह उपमानेति। यथेववादिशब्दानां तदर्थे विहितस्य वतेश्चोपमानोपादानमन्तरेण प्रयोगाभावात् श्रौती न संभवतीत्यार्थ्येवेतिभावः। वाक्यगामुदाहरति सअलेति। सरसकव्वस्स सरसकाव्यस्य सअलकरणपरवीसामसिरिविअरणं सकलकरणपरंविश्रामश्रीवितरणं, सरिसं सदृशं वस्तु, अंसंसमेत्तेण अंशांशमात्रेण, ण दीसइ न दृश्यते, अहव अथवा, णिसम्मइ न श्रूयते, सरसकाव्यमेवंविधं नान्यदित्यर्थः। अत्रोपमानस्य कस्यचिद्विशिष्टस्यानुपादानात् वाक्ये आर्थी उपमा। एतदेव समासगोदाहरणत्वेनोदाहार्यमित्याह कव्वस्सेति। सरिसमित्यत्र च णूणमितिपदप्रयोगान्नायं दोष इत्यर्थः।

## काव्यादर्शः

वाक्ये उपमानलोपे लुप्ता, यथा—'सअले' ति । 'सरसकाव्यस्य सदृशं सकलेन्द्रियाणां परिनिर्वृतिपदं अंशांशमात्रेण नोपलभ्यते, न वा श्रूयते' । अत्र यद्यपि सदृशशब्दाभिधेयस्य उत्कृष्टतरगुणत्वेन अप्राप्यताप्रतिपादनाद् उपमानत्वं बलाद् आयातं, तथापि तस्य साक्षाद् अनिर्देशाद् उपमानस्य लोपः ॥ एषैव 'कव्वसमम्' इति कृते समासगा ॥ ८६ ॥

## विवेकः

यदि जीवसीति यदियोगे भविष्यति वर्तमानप्रत्ययः (पा. ३/३/१५१ द्रः) ।

अथोपमानस्य लोपे तद्धितप्रत्ययस्य ततो विहितस्याभावात् वाक्यसमासगम्यत्वमेव सम्भवतीतीयं द्विधा, न श्रौतीति सम्बन्धः । सअलेत्यादि—सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य । दृश्यतेऽथवा श्रूयते सदृशमंशांशमात्रेणेति ॥ सरसकाव्यपदं नोपपद्यते सदृशमिन्द्रियाणां परनिर्वृतिर्न च श्रूयत इत्यर्थः । अत्र परब्रह्मादिकमुपमानमनुपात्तं समासगम्यायां त्वार्थ्याम् एतदेव पाठान्तरे सत्युदाहरणमित्याहकव्वस्सेति ।

## दीपिका

सकलानां कृत्यानां करणस्य विश्रामेण निरोधेन श्रीर्यत्र तथाभूतं विरचनं विरचनीयम् । 'कव्वसमं' इति पाठे यद्यपि श्रौत्यपि सम्भवति, तथापि प्राचीनैरनादृतत्वात्तथा नोक्तम् । अत्र व्यतिरेकस्योपमामूलतयोपमासामग्री ग्राह्या । सा च काव्ये प्रतिनिधिवस्त्वन्तरस्य गम्यमानत्वादसमग्रेत्येकलोपः ।

## दर्पणः

स अलेति ।

**सकलकरणपरिश्रामश्रीवितरणं न सरसकाव्यस्य ।**
**दृश्यतेऽथवा श्रूयते सदृशमंशांशमात्रेण ॥**

सकलानां करणानामिन्द्रियाणां, परिश्रामरूपायाः श्रियः वितरणं येनेत्यर्थः । किमपि वस्त्वन्तरमुपमानरूपम् । नृणं [निरूपणं] । इहैवोदाहरणे सरसकन्धस्सेत्यत्र [सरसकव्वस्सेत्यत्र] सरसकथं चेति [सरसकव्वसममिति] पाठे श्रौत्युपमासंभवे प्राचीनरीत्या विधे वेदयुक्तम् [चेदयुक्तम्] ।

## साहित्यचूडामणिः

उपमानेति । उपमितिकरणस्यानुपादाने वाक्यं समासं च गच्छति । सअलेति ।

## सम्प्रदायप्रकाशिनी

अथोपमानलोपे द्विरूपेत्याह—उपमानानुपादान इति ।

सअलकरणेति ।

**सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य।**
**दृश्यतेऽथवा निशम्यते सदृशमंशांशमात्रेण ॥**

सर्वेन्द्रियाणां परमनिर्वृतिप्रदं काव्यसदृशं न दृश्यते न च श्रूयते। वाक्यगेयमार्थी लुप्तोपमाना, सदृश-मित्युपमाप्रतिपादकामात्रग्रहणात्।

अथेयमेव यथा समासगा स्यात् तथा पाठमन्यथाकृत्य दर्शयति—कव्वस्सेत्यत्रेति। इत्थमुपमानलोपे वाक्यसमासगतत्वेन द्विरूपाप्यर्थ्येव।

अथोपमाप्रतिपादकलोपे लुप्तां षोढा दर्शयति—वादेर्लोप इत्यादि। समास इत्याद्या निमित्तसप्तम्य:। समासे, कर्मक्यचि, आधारक्यचि, क्यङि, कर्मोपदे कर्तृपपदे च णमुलीति षोढा।

## मधुमती

उपमानेति। उपमानुपादानेनैव अस्या: अर्थीत्वमभिप्रैति। तथा च अत्र श्रौती न भवत्येव। इवादिशब्दस्य उपमानवाचकशब्दसमभिव्याहारेणैव प्रयोगात् इति।

उदाहरति—सअलेति। इयं वाक्यगा अर्थी। एवं च—उपमानंलोपनिबन्धनलुप्ताया: द्वौ भेदौ इत्यर्थ:।

## विस्तारिका

उपमानेति। वते: कल्पबादेरप्युपमानपरत्वनियमात् तदनुपादानात् तत्सम्भव इति तद्धितानुपन्यास:। तुल्यार्थवतेरप्युपमेयपरत्वसम्भवे कथं न तद्धितगामितेति चेत्, न; उपमानानुपादाने वत्यसम्भवात्। 'तेन तुल्यं क्रिया चेत्' इत्यनुशासनात्।

**सकलकरणपरविश्रामश्रीवितरणं सरसकाव्यस्य।**
**दृश्यतेऽथ वा निशम्यते सदृशमंशांशमात्रेण ॥**

काव्यसदृशमिति वाच्यम्। असम्भवविवक्षयोपमानानुपादानम्। एषैव समासगेति। काव्येन समं काव्यसमिति समास:।

अत्र केचित् कव्वंवेति पाठे यद्यपि श्रौत्यपि सम्भवति, तथापि प्रचुरतरप्रयोगाभावेन प्राचीनैरनादृतत्वात् तथा नोक्तिरित्याहु:, तन्न; इवादेरुपमानपरत्वनियमेन तदनुपादाने तदसम्भवस्योक्तत्वात्। 'अत्रोपमा व्यतिरेकस्या-ङ्गम्' इति यत्तैरुक्तम्, तदप्यसत्, अदृष्टाश्रुतत्वेनोपमानासम्भवविवक्षायां तत आधिक्यासम्भवात्।

## सारबोधिनी

उपमानेति। वते: कल्पबादेश्युपमानपरत्वनियमात् तदनुपादानात् न तत्परत्वसंभव इति। तद्धितानुपन्यास इति बोध्यम्। न च वतेरुपमानपरत्वनियमो नास्तीति वाच्यम्। तेन तुल्यं क्रिया चेदित्यनुशासनात्। तेनेत्यस्योप-मानत्वेनेत्यर्थत्वात्। सअलेति।

**सकलकरणपरिविश्रामवितरणं न सरसकाव्यस्य।**
**दृश्यते अथ वा निशम्यते सदृशमंशांशमात्रेण॥**

असंभवविवक्षया तदुपमानानुपादानम्। यद्वा, परब्रह्मादिकमुपमानं नोपात्तमिति। कव्वंव इति पाठे यद्यपि श्रौत्यपि संभवति तथापि प्राचीनैरनादृतत्वात् तथा नोक्तमित्याहुस्तन्न इवादेरुपमानपरतानियमेन तदनुपादाने तदसंभवस्योक्तत्वात्। अत्रोपमा व्यतिरेकस्याङ्गमिति केचित्। अश्रुतादृष्टत्वेनोपमानसंविवक्षायां तत आधिक्या-संभवात्।

**काव्यप्रदीप:**

**उपमानानुपादाने वाक्यगाथ समासगा॥ २॥**

अत्र तद्धितगा न संभवति। उपमाप्रतिपादकस्य तद्धितस्य वतिकल्पवादेरूपमानादेव विधानेन उपमाना-नुपादानेऽसंभवात्। न वा श्रौती। इवादीनामुपमानमात्रान्विततया तदनुपादाने तेषामप्यनुपादानात्। अतो वाक्य-समासयोरेव। तयोरप्यार्थ्येवेति द्विप्रकारा लुप्तोपमा नोपमा। तत्र वाक्यगा यथा—

**'सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स।**
**दीसइ अहव णिसम्मइ सरिसं अंसंसमेत्तेण॥'**

अत्र विशेषत उपमानं नोपात्तम्। चिन्त्यमेतत्। इदमेव 'कव्वस्स' इत्यत्र 'कव्वसमम्,' 'सरिसं' इत्यत्र 'पूर्ण' इति पाठे समासगोदाहरणम्।

**आदर्श:**

उपमानलुप्तां द्विविधामाह—उपमानेति। उपमानस्य यादृशशब्देनोपादाने तदुत्तरवर्त्तिनिवादिना तत्रोप-मानता प्रत्याययितुं शक्यते, तादृशशब्देन उपमानानुपादा इत्यर्थ:। तेन सदृशसमादिशब्देन तदुपादानेऽप्युपमाना-नुपादानमेव बोध्यम्, तदुत्तरमिवाद्यसम्भवात्। सकलेति—

**सकलकरणपरिविश्रामश्रीवितरणं न सरसकाव्यस्य।**
**दृश्यते अथवा निशम्यते सदृशमंशांशमात्रेण॥ इति संस्कृतम्।**

सकलकरणपरिविश्रामश्री: सर्वेन्द्रियस्फीतता तद्वितरणं तद्दायकमंशांशमात्रेणापि सरसकाव्यस्य सदृशं न दृश्यते नाथवा निशम्यत इत्यर्थ:। अत्र सदृशपदं न तुल्यपार्थकं तुल्यादर्शनेऽप्यधिकदर्शनसम्भवात् सरसका-व्यप्रशंसानुपपत्ते:। अत: सरसकाव्यमत्र नोपमानं किन्तूपमेयमेव, तथा चोपमानस्योपमेयापेक्षया आधिक्येन तल्ला-भायांशमात्रेणापि सरसकाव्यंस्योपमानं न दृश्यते इत्येवार्थ:। तथा च सदृशपदेनोपमानोपादानमपि तदनुपादानमेव तदुत्तरमिवाद्यसम्भवात्। अर्थवशादुपमाप्रतिपादकस्यात्र सदृशपदस्य सत्वान्नेवादिलोप:। अत्र सकलेत्यादिकमु-भयधर्म:, सदृशपदेन समासाभावाद् वाक्यगा आर्थी। न चोपमानत्वरूपाया उपमाया: सदृशपदार्थत्वे कथमार्थीति वाच्यम्, सदृशपदस्यात्रोपमानपरत्वे लाक्षणिकत्वात् शब्दशक्यत्वरूपश्रौतीत्वाभावेनार्थीत्वमेव। कव्वस्सेत्यत्र समपदप्रक्षेपे सदृशपदस्य पौनरुक्त्यं परिहरति— सरिसमित्यत्रेति। इत्युपमानलुप्ता द्विविधा।

**सुधासागरः**

अत्र तद्धितगा न सम्भवति, उपमाप्रतिपादकस्य तद्धितस्य वतिकल्पवादेरुपमानादेव विधानेनोपमानानुपादानेऽसम्भवात्। न वा श्रौती, इवादीनामुपमानमात्रान्विततया तदनुपादाने तेषामप्यनुपादानात्। अतो वाक्यसमासयोरेव, तयोरप्यार्थ्येवेति द्विप्रकारा लुप्तोपमानोपमा। तत्र वाक्यगा यथा—सअल इति। मुख विपुलाऽऽर्या। लक्षणमुक्तं प्राक्।

**सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य।**
**दृश्यतेऽथवा श्रूयते सदृशमंशांशमात्रेण॥ इति संस्कृतम्।**

सकलकरणानां सर्वेन्द्रियाणां परमविश्रामोऽत्यन्तस्वास्थ्यं तस्य श्रीः सम्पत्तिस्तस्याः वितरणं प्रदायकम्। सरसकाव्यस्यांशांशमात्रेण किञ्चिदंशेनापि सदृशं न दृश्यते अथवा श्रूयतेऽपि नेत्यर्थः।

अत्र ब्रह्मज्ञानस्योपमानत्वसम्भवेऽप्यसम्भवविवक्षयोपमानानुपादानमिति बोध्यम्। अत्रोपमा व्यतिरेकस्याङ्गमिति केचित्, तन्न, अश्रुतादृष्टत्वेनोपमानासम्भवविवक्षायां तत आधिक्यस्यासम्भवात्।

भास्करादयस्तु 'कव्वंव' इति पाठे यद्यपि श्रौत्यपि सम्भवति, तथाऽपि प्राचीनैरनादृतत्वात्तथा नोक्तमित्याहुः। तन्न। इदमेव कव्वस्सेत्यत्र कव्वसममिति, सरिसमित्यत्र णूणमिति पाठे समासगोदाहरणमित्यर्थः।

**(सू० १३०) वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि।**

**कर्मकर्त्रोर्णमुलि**

वाशब्दः, उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट् समासेन कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा कर्तुः क्यङा कर्मकर्त्रोरुपपदयोर्णमुला च भवेत् ॥

उदाहरणम्—

**ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।**
**नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता॥ ४०१ ॥**

---

**सङ्केतः**

ततः कुमुदेति। अत्र समासासमासगे उपमानोपमेये प्रोक्ते।

**सङ्केतः (रुय्यकः)**

अन्तः पुर इवाचरत्यन्तः पुरीयति—"अधिकरणाच्चेति वक्तव्य"—मिति क्यज्वाच्यमाचरणमत्र साधारणो धर्मः। विधवति विधुरिवाचरतीति "सर्वप्रातिपदिकेभ्यः क्विबि" त्याचारे।

**बालचित्तानुरञ्जनी**

अपरान्यत्प्रकारानाह वादेरिति। वा इवेत्यादेरुपमाद्योतकस्य लोपे आर्थी उपमा समासे 'उपमानादाचारे', 'अधिकरणाच्चे'ति कर्माधिकरणयोर्विहिते क्यचि, 'कर्तुः क्यङ् सलोपश्चेति कर्तरि विहिते क्यङि; उपमाने कर्मणि च' इत्यत्र चकारात् कर्तरि चेति, कर्मकर्त्रोर्विहिते णमुलि चेति षट् प्रकारा भवन्तीति श्लोकं व्याचष्टे वाशब्द इति।

**काव्यादर्शः**

उपमावाचकलोपे लुप्तमाह—'वादेरिति'। 'णमुल्य'न्तं सूत्रम्।

'तत' इति। अत्र समासे उपमावाचकलोपः।

## विवेकः

उपमाद्योतकस्य लोपे षोढेत्याह—वादेर्लोप इत्यादि। 'वा' शब्दोऽप्यौपम्यद्योतको यथा—लोचनमिन्दीवरं वाऽस्या इति। इवादिलोपश्च समासादिषु षट्सु विधीयत इति षट्प्रकाराः क्रमेणोदाह्रियन्ते। तत इत्यादि—कुमुदनाथश्चन्द्रः, कामिनीगण्डपाण्डुः कामिनीगण्ड इव पाण्डुः, कामिनीगण्डमुपमानमन्तर्गतेवार्थं 'पाण्डुना' समस्यत इति।

## दीपिका

षडिति समासे कर्माधारयोः क्यचि क्यङि कर्मकर्त्रोर्णमुलोरिति गणनया। कर्मणः कर्मत्वोपगृहीतार्थप्रतिपादकत्वेनाभिसंहितायाः प्रकृतेः। एवमधिकरणादिष्वपि क्यचा क्यङा णमुलेति। अत्र द्योत्येति शेषः। तथेति। अस्मिन्नेवार्थे उदाहरणमिति शेषः।

## दर्पणः

क्व च क्यङ् नमूतः [क्यच् क्यङ् णमुलः] कलापमतिथित्वायि नम [?] क्यचाक्वम्मूलेति [क्यचा णमुलेति] अत्र द्योद्येति विशेषः [?]।

## साहित्यचूडामणिः

वादेरिति। इवशब्द इव वाशब्दोऽप्युपमां द्योतयति। येन 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यत्र "ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्य" इत्येतत् प्रत्याचिख्यासुस्तत्रभवान् पतञ्जलिरेतदूरीचक्रे। नचैतावता "जाता मन्ये शिशिरमथिता पद्मिनी वान्यरूपा इत्यत्रान्यथाकरणं" [व्य० वि० ३] न्याय्यं, कालिदासोचिताया बन्धच्छायाया विघटनापत्तेः।

परसप्तमीभ्रान्तिनिवृत्तये क्यचा क्यङेति तृतीयया व्याख्या। 'उपमानादाचारे' (३-१-१०) इति कर्मणः। 'अधिकरणाच्च' (वा० ३-१-१०) इत्यधिकरणात्। कर्त्तुः क्यङ्ते। 'कर्त्तुः' क्यङ्सलोपश्च (३-१-११) इत्युक्तत्वात्। कर्मकर्त्रोरिति। 'उपमाने कर्मणि च' (३-४-४५) इति णमुल्। चकारात् कर्तरि च।

समास उदाहरति—तत इति। कामिनीगण्डपाण्डुनेति। अत्र द्योतक पदं न दृश्यते।

## सम्प्रदायप्रकाशिनी

तदेतद् व्याचष्टे—वाशब्द उपमेत्यादिना। षट्प्रकारेत्यर्थः। तत्र समासनिबन्धनायाः स्फुटत्वात् पञ्चविधां विविच्य दर्शयति—कर्मणोऽधिकरणाच्चेति। ततः कुमुदेति। अत्र कामिनीगण्ड इव पाण्डुरिति समासेनेवादिर्लुप्यते।

## मधुमती

वादेरिति। सा इत्यनेन आत्मस्था उपमा परामृश्यते। उपमाद्योतकपदाभावेन पूर्णत्वासम्भवः इति भावः। एवं च अत्र—समासे, कर्मक्यचि, आधारक्यचि, कर्तरि क्यङि, कर्मणमुलि कर्तृणमुलि इति षडेव भेदाः इत्यर्थः।

तत इति। कामिनीगण्डः इव पाण्डुः इति विग्रहे 'उपमानानि सामान्यवचनैः' इति समासे इवशब्दलोपे समासगा।

## विस्तारिका

वादेरिति। क्यच्-क्यङ्णमुलः। कलापमतेऽपि इन्नायिणमः।

ननु समासभिन्नापि णमसश्चतुर्भिरुपाधिभिश्चतुर्विधत्वे लुप्ताया ऊनविंशतित्वापत्तिः। अन्यथा विविधत्वेनैव तत्सम्भवादित्याह—कर्मण इत्यादि। कर्माधिकरणोत्तरत्वेन क्यचो द्वैविध्यमिति भावः।

णमुलोऽप्युपपदभेदात् तथात्वं कर्तुरुत्तरत्वेन क्यङोऽपि पार्थक्यमित्याह—षडिति।

तत इत्यादि। कामिनीगण्ड इव पाण्डुः 'उपमानानि सामान्यवचनैः' इति समासः। समासेन साम्यप्रतिपत्ताविवाद्यप्रयोगः। समासोदाहरणमिदम्।

## सारबोधिनी

वादेरिति। वाशब्द उपमाद्योतक इति। तथा चामरः, 'उपमायां विकल्पे वे'ति। ननु समासक्यच् क्यङ्मुल् इति चतुर्भिरुपाधिभिश्चतुर्विधत्वमेव कथं षड्विधत्वमित्यत आह, कर्मण इति। एवं कर्माधिकरणोत्तरत्वेन क्यचो द्वैविध्यं, णमुलोऽप्युपपदभेदात् द्वैविध्यमिति षट् प्रकाराः।

तत इति। कामिनीगण्ड इव पाण्डुरि"त्युपमानानि सामान्यवचनैरि"ति समासः। समासेन साम्यप्रतिपत्ताविवाद्यप्रयोगः। इयं समासगा।

## काव्यप्रदीपः

द्योतकलोपे वाक्यगा तावन्न संभवति। 'मुखं चन्द्रो रमणीयम्' एतावन्मात्रेमोपमाप्रत्ययाभावात्। नापि तद्धितगा। वतेः कल्पबादीनां च द्योतकतया तत्प्रयोगे द्योतकलोपस्यैवासंभवात्। न वा श्रौतीत्यन्यथा विभजते—

**वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि।**

**कर्मकर्त्रोर्णमुलि**

वाशब्द उपमाद्योतक इति वादेरुपमाद्योतकस्येत्यर्थः। तस्य लोपे समासे क्यचि क्यङिणमुलि चोपमा। तत्र क्यचि द्विधा। कर्मणोऽधिकरणाच्च विधा नेन तस्य द्वैविध्यात्। क्यङि त्वेकैव। कर्तुरिव तद्विधानात्। णमुल्यपि द्विधा। कर्मकर्त्रोस्तद्विधानात्। तत्र समासे द्विधा द्वयोस्त्रयाणामपि वा उपमानादिपदानां समासात्। तयोराद्या यथा—

**'ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।**
**नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता॥'**

अत्र गण्डपाण्डुनेति द्वयोः समासः।

### काव्यप्रकाशखण्डनम्

अथ लुप्ता, तत्रेवादेर्लोपे यथा—

**ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।**
**नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता॥**

द्विपदसमासे तावदुदाहरति। ततस्तदनन्तरं चन्द्रेण माहेन्द्री पूर्वा [प. ४७.२] दिक् अलङ्कृता शोभिता। कीदृशेन? कुमुदानां नाथेन प्रकाशकेन कामिनीगण्डवत् पाण्डुना पाण्डुवर्णेन नेत्रानन्देन नयनसुखजनकेनेत्यर्थः। अत्र गण्डापाण्डुनेति द्वयोरेव पदयोः समासः।

### आदर्शः

षड्विधामिवादिलुप्तामाह—वेदारिति। षट्त्वं व्याकुरुते—समासेनेति। पाणिनिमते क्यच् क्यङौ, कलापमते यिन्नायी। कर्मकर्त्रोरिति, कर्मणि कर्त्तरि चोपपदे इत्यर्थः। पाणिनिमते णमुल् कलापमते णम्। ततः कुमुदेति। अत्र गण्डेनेव पाण्डुनेति समासे वादिलोपः। पाण्डुत्वमुभयधर्मः।

### सुधासागरः

द्योतकलोपे वाक्यगता तावन्न सम्भवति। मुखं चन्द्रो रमणीयमेतावन्मात्रेणोपमाप्रत्ययाभावात्, नापि तद्धितगा, वतेः कल्पवादीनां च द्योतकतया तत्प्रयोगे द्योतकलोपस्यैवासम्भवात्। न वा श्रौतीत्यन्यथा विभजते। वादेरित्यादि।

वाशब्द उपमाद्योतक इति। तथा चामरः 'उपमायां विकल्पे वा' इति। एवं च वादेरुपमाद्योतकस्येत्यर्थः, तस्य लोपेसमासे क्यचि क्यङि कर्मकर्त्रोर्णमुलि चोपमा। तत्र क्यचि द्विधा, कर्मणोऽधिकरणाच्च विधानेन तस्य द्वैविध्यात्। क्यङि त्वेकैव, कर्त्तुरेव तद्विधानात्। णमुल्यपि द्विधा, कर्मकर्त्रोस्तद्विधानात्। समासगा द्विविधा, द्विपदसमासगा, बहुपदसमासगा च, द्वयोस्त्रयाणामपि वा उपमानपदानां समासात्। तयोराद्या यथा—तत इति।

कामिनी कामयमाना स्त्री, विरहिणीति यावत्। स्पष्टमन्यत्। कामिनीगण्ड इव पाण्डुरिति विग्रहे—'उपमानानि सामान्यवचनैः' इत्युपमानसाधारणधर्मवाचाचकयोर्द्वयोः समासे इवशब्दलोपात् द्योतकलुप्ता समासगा। तथेति द्वितीया यथा—असितेति।

**असितभुजगभीषणासिपत्रो रुहरुहिकाहितचित्ततूर्णचारः।**
**पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत्॥ ४०२॥**

---

### सङ्केतः

असितेति। अत्र तु समासगे ते। रुहरुहिका औत्सुक्यम्।

### सङ्केतः (रुय्यकः)

असितेति—अत्रोपमानोपमेययोरेकपदानुप्रवेशः। पूर्वत्र वर्त्तते पृथङ्निर्दिष्ट इति विशेषात् पुनरुदाहरणम्।

### बालचित्तानुरञ्जनी

तत्रैवोदाहरणान्तरमाह असितेति। प्रतिभटदर्शनेऽयं एवं विध आसीत्। कृष्णसर्पवत् भीषणखड्गपत्रः। रुहरुहिकया उत्कण्ठया आहितं स्थापितं चित्तं तेन तूर्णचारः शीघ्रगमनं यस्य सः। अत्र असितभुजगभीषणासिपत्र इत्यत्र इवशब्दलोपात् समासगा आर्थी उपमा।

### काव्यादर्शः

'असिते' ति। अत्र उपमानोपमेययोरेकपदानुप्रवेशः, पूर्वत्र तु ते पृथग् निर्दिष्टे इति विशेषात् पुनरुदाहृतम्।

### विवेकः

असितेत्यादि—असितभुजग इव भीषणोऽसिपत्रो यस्येति, इत्युपमानोपमेयसाधारणधर्माणामसितभुजगासिपत्रभीषणशब्दैरिवार्थस्य च समासेनाभिधाने 'सर्वं समासे स्या'दिति सर्वसमासोपमेयम्। अत एवात्रोपमानोपमेययोरेकपदानुप्रवेशः। पूर्वत्र तु पृथङ् निर्दिष्ट इति विशेषात् पुनरुदाहरणम्। सुतमिवाचरति सुतीयति 'उपमानादाचारे' (पा ३/१/१०) इति कर्मणि क्यच्। आचरणमत्र साधारणो धर्मः पौरजनमुपमेयमिति द्योतकस्यैव लोपः।

### दीपिका

असिपत्रेति। सूक्ष्मनिशिताग्रतया पत्रम्। रुहरुहिकाम् औत्सुक्यं तेनाहितः समर्पितश्चित्ते तूर्णचारस्त्वरया रणसञ्चरणं यस्य। चरितानि क्रीडतानि। निदाघधर्मांशुदर्श पश्यन्तीति "कषादिषु तैरेवानुप्रयोगः" इत्यनुशासनाद् द्विरुक्तिः प्रत्येकं कर्मणोः सम्बन्धत्वविवक्षया साध्वी। पार्थो धनञ्जयः। अत्र श्रौत्यादिविशेषचिन्ताविरहो यथातुल्यादिविरहात्।

रुहिरुहिका रभसो तमु काता [रसभोत्कण्ठा, तया आहितः समर्पित्वत्रे तूर्षासंचारोऽर्थो प्रणे सत्वरसंचरणं यस्येत्यर्थः ।]

विचित्रेण चरित्रेण प्रसिद्धो विचित्रञ्ज नलिंतानि [चरितानि] चेष्टानि । पार्थोऽर्जुनः । अत्र यथादितुल्यादिविरहात् श्रौत्या विशेषचिन्ताकृता ।

### साहित्यचूडामणिः

असितेति । रुहरुहिका उत्साहः, उत्कण्ठेति केचित् । कृष्णसर्पवद् भीषणमसिपत्रं खड्गधेनुर्यस्य । 'उपमानानि सामान्यवचनैः' (२-१-५५) इति भुजगस्योपमानत्वम्, असिपत्रस्योपमेयत्वम्, भीषणत्वस्य समानधर्मत्वं च सिध्यतीति द्योतकानपेक्षया तदनुपादानम् । अनयोश्च पूर्वत्रोपमानोपमेययोः पृथक्पदत्वम्, अत्र त्वेकपदतेति विवेकः ।

### सम्प्रदायप्रकाशिनी

असितेति । रुहरुहिका उत्कण्ठा । अत्राप्यसितभुजग इव भीषणमसिपत्रं यस्येति । समासेनैवेवादिलोपः । उपमानोपमेययोरेकपदगतत्वेनेदमुदाहरणम् । पूर्वं भिन्नपदगतत्वेन ।

### मधुमती

असितेति । रुहरुहिका उत्कण्ठाविशेषः गतिविशेषो वा । असितभुजगतुल्यभीणः असिः इति विग्रहे शाकपार्थिवादित्वात् तुल्यशब्दलोपेन समासगा आर्थी । पूर्वत्र—श्रौतीत्वप्रयोजक 'यथा' शब्दादिलोपः, द्वितीये तु आर्थीत्वप्रयोजक 'तुल्या' दिशब्दलोपः इति उदाहरणयोरनयोर्भेदः ।

### विस्तारिका

असितेति । दर्शनमात्रेण भयप्रदत्तत्वाद् असितभुजगो जातिविशेषस्तीव्रविषः । स इव भीषणोऽसिः पत्रमिव सूक्ष्मधारत्वात् । रुहरुहिका सरभसौत्सुक्यम्, तेनाहितचित्तस्य तूर्णचारो यस्य । औत्सुक्यसङ्कल्पितसत्त्वरोपसरण इत्यर्थः ।

असिः पत्रमिव 'उपमितं व्याघ्रादिभिः' इति समासः । असितेत्यादौ तूपमानानीत्यादिनेति स यस्तत्त्वेन पूर्वलक्ष्यादभेदः । एतेनैकविषय एवोदाहरणद्वयमिति निरस्तम् । वस्तुतस्तु असितभुजगतुल्यभीषण इति शाकपार्थिवादित्वात् समासः । तथा च समासगा त्वार्थीयमिति पूर्वोदाहरणभेदः ।

### सारबोधिनी

तथेति । समासे आर्थीत्यर्थः । असितभुजगेति । असितभुजगतुल्यं भीषणमसिपत्रं यस्येति शाकपार्थिवादित्वात् मध्यमपदलोपिसमासः । तथा च समासे आर्थीति पूर्वोदाहरणाद् भेदः । रुहरुहिका मानसोत्कण्ठा ।

## काव्यप्रदीपः

'असितभुजगभीषणासिपत्रो रुहरुहिकाहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ॥'

अत्रासितभुजगेत्यादावुपमानधर्मोपमेयशब्दानां त्रयाणामपि समासः ।

## आदर्शः

इदं धर्मेण सह समासे दर्शयित्वा उपमानधर्मोपमेयैः सह समासेऽपि दर्शयति—असितेति । अयं प्रतिभटानां विक्रमदर्शने सत्यसितेत्यादिरासीत् इत्यन्वयः । रुहरुहिका उत्साहः, तया आहितश्चित्ते तूर्णचारो यस्येति विग्रहः । उद्गता कपोले कान्तिरर्थाच्छोणिमा यस्येति विग्रहः । अत्रासितभुजग उपमानम्, भीषणत्वं धर्मः, असितपत्रमुपमेयम्, त्रिभिः समासे वादिलोपः ।

## सुधासागरः

अत्रासितभुजगेत्यादावुपमानधर्मोपमेयशब्दानां च त्रयाणामपि समासः । यत्तु मधुमतीकारादिभिर्व्याख्यातम् असितभुजगतुल्यभीषणोऽसिरिति समासे शाकपार्थिवादित्वात् तुल्यशब्दलोपात् समासगाऽऽर्थी, पूर्वत्र श्रौतीत्वप्रयोजकयथाशब्दादिलोपः, द्वितीये त्वार्थीत्वप्रयोजकतुल्यादिशब्दलोप इत्युदाहरणयोर्भेद इति। तत्प्रामादिकम् । उभयत्रोपमानधर्मयोः समासस्य तुल्यत्वेन शाकपार्थिवादित्वकल्पनस्यान्याय्यत्वात् । अपि च, द्योतकमादायैव श्रौतार्थविभागः, तस्य च लोपे क्व श्रौतीत्वसम्भवः । आर्थी त्वर्थापत्तिगम्यत्वेन सिद्धैव । किञ्च, न खलु समासे तुल्यादिरिवादिर्वा लुप्यते, किन्तु समासेनैवोपम्याभिधानात् 'उक्तार्थानामप्रयोग' इति न्यायेन द्योतकं न प्रयुज्यते इति लोपव्यवहारः, तत्रेवादेस्तुल्यादेर्वा विनिगन्तुमशक्यत्वात् । अपि च द्योतकलोपेऽपि श्रौतीत्वाङ्गीकारे भेदाधिक्यं स्यात्, तथा चोनविंशतिर्लुप्ताभेदा इति श्रीवाग्देवतावतारोक्तिर्विरुद्ध्येतेति विद्वद्भिर्विभाव्यम् । क्यच्क्यङोर्भेदत्रयं यथा—पौरमिति ।

पौरं सुतीयति जनं समरान्तरेऽसावन्तः
पुरीयति विचित्रचरित्रचुञ्चुः ।
नारीयते समरसीम्नि कृपाणपाणेरालोक्य
तस्य चरितानि सपत्नसेना ॥ ४०३ ॥

---

**सङ्केतः**

पौरमिति । सुतीयति इति कर्मणि क्यच् । अन्तःपुर इवाचरति अन्तः पुरीयति इति आधारे क्यच् । नारीयते इति कर्तरि क्यङ् । सुतीयतीत्यादिषु त्रिषु प्रत्येयन साधारणधर्मः उच्यते, न तु इवार्थः ।

**बालचित्तानुरञ्जनी**

कर्माधिकरणयोः क्यचि कर्त्तरि क्यङि आर्थीमुदाहरति पौरमिति । अयं पौरजनं सुतीयति सुतमिवाचरति । कर्मणि क्यच् । विचित्रचरित्रेण प्रसिद्धः असौ सङ्ग्रामे अन्तःपुरीयति अन्तःपुर इवाचरति । अधिकरणे क्यच् । सपत्नसेना सङ्ग्रामे खड्गहस्तस्य तस्य चरितानि विलोक्य नारीयते नारीवाचरति । कर्त्तरि क्यङ् ।

**काव्यादर्शः**

कर्मणि क्यचि 'पौरं सुतीयती'ति । 'अधारेऽन्तः पुर इवाचारति अन्तः पुरीयती'ति । कर्तरि क्यङि 'नारीयत' इति ।

**विवेकः**

अन्तः पुर इवाचरतीत्यन्तः पुरीयति 'अधि- करणच्चेति वक्तव्य'-(पा. ३/१/३०) मिति क्यच् । अत्र रणाभ्यन्तरमुपमेयं [नारीयते] नारीवाचरतीति 'कर्तुः' क्यङ्सलोपश्चे'ति (पा. ३/१/११) क्यङ् । कृतवसेया तु द्विविधा, कर्मोपमानिका कर्त्रुपमानिकाय च ।

**दीपिका**

ननु नारीयत इत्यादौ कथमौपम्यप्रतिपादकभावः, क्यङादीनामेव तदर्थविवक्षया तत्कर्मक्षमत्वात् । अथैषां प्रत्ययत्वेनास्वतन्त्रतया इवादिशब्दप्रयोगाभावेन च न सम्यगौपम्यप्रतीतिरिति ब्रूषे, तर्हि वतिकल्पबादावपि तथैव प्रसज्येत । नहि प्रत्ययतया तद्धिताख्यातयोः कश्चन विशेषः । कल्पबादय इवादितुल्यतयौपम्यवाचकाः, क्यङादयस्तु द्योतका एवेत्यपि न, इवादीनामपि वाचकत्वसन्देहात् । सम्भवतु तेषां वाचकत्वम्, तथापि समुदितमेव पदं वाचकं प्रकृतिप्रत्ययौ स्वस्वार्थबोधकाविति मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति सत्यम्, तथापि प्राचीनानुरोधनियन्त्रितोऽयमाचार्यः ।

### साहित्यचूडामणिः

पौरमिति। सुतीयतीत्यत्र सुतमिवाचरतीति कर्मणि क्यच्। अन्तःपुरीयति आयोधनभूमावन्तःपुर इवाचरतीत्यधिकरणात् नारीयते अङ्गनायत इति कर्तुः क्यङ।

### सम्प्रदायप्रकाशिनी

पौरं सुतीयतीति। सुतीयति सुतमिवाचरति पौरं जनम्। इयं कर्मक्यचा। अन्तः पुरीयति अन्तःपुर इवाचरति समरान्तरे। इयमधिकरणक्यचा। नारीयते नारीवाचरति इमं विलोक्य सपत्नसेना। इयं कर्तुः क्यङा।

### मधुमती

पौरामिति। अत्र—उपमानादाचारे, इति क्यप्। अन्तःपुरीयति इत्यत्र 'अधिकरणाच्च' इति क्यच्। नारीयते इत्यत्र 'कर्तुः क्यङ्सलोपश्च' इति क्यङ्।

### विस्तारिका

कर्मणः क्यचमुदाहरति—पौरमिति। पौरं सुतमिवाचरतीति 'उपमानादाचारे' इत्यनेन कर्मणः क्यच्। आचारः क्वचित् पालनम्, क्वचित् स्नेहः, क्वचन वशतेति यथायथं नेयम्। अन्तःपुर इवाचरतीति अधिकरणादत्राचारः, स्वच्छन्दचरणम्। नारीयत इति कर्तुः क्यङ्। अत्र रताचारः।

### सारबोधिनी

कर्मणि [वादिलुप्तामुदाहरति] पौरमिति। पौरं सुतमिवाचरति, कर्मणि क्यच्। अन्तः पुर इवाचरतीत्यधिकरणात् क्यच्। नारीयत इति क्यङ्।

### काव्यप्रदीपः

क्यच् क्यङोर्भेदत्रयं यथा—

**'पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचुञ्चुः।**
**नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना॥'**

अत्र पौरं सुतीयतीत्यत्र 'उपमानादाचारे' इति कर्मणः क्यच्। समरान्तरेऽन्तःपुरीयतीत्यत्र तु 'अधिकरणाच्च' इत्यनेनाधिकरणात्। नारीयते इति 'कर्तुः क्यङ् सलोपश्च' इत्यनेन कर्तुः क्यङ्।

### काव्यप्रकाशखण्डनम्

एवं क्यचि क्यङि णमुलि च भवत्युपमा। क्रमेणादाहरणानि—

**पौरं सुतीयति जनं समरान्तरेऽसावन्तः पुरयति विचित्रचरित्रचञ्चुः।**
**नारीयते समरसीम्नि कृपामपाणाबालोक्य तस्य ललितानि सपत्नसेना॥**

असौ राजा पौरं लोकं सुतीयति सुतमिवाचरति। उपमानादावाचार इति कर्मणि क्यच्। संग्राममध्ये अन्तःपुर इवाचरति। अधिकरणाच्चेति। क्यच्। तस्य चरितानि निरीक्ष्य शत्रुसेना संग्रामसीमनि नारीयते नारीवाचरति। कर्त्रुः क्यङ् सलोपश्चेति क्यङ्।

**आदर्शः**

क्यज् द्वये क्यङि चैकमुदाहरणमाह—पौरमिति। पौरं जनं सुतमिवाचरति, समरान्तरे अन्तःपुर इवाचरति, निर्भयत्वात्। अनयोः कर्माधाराभ्यां क्यच्। चुञ्चुः ख्यातः। तता समरसीम्नि तस्य ललितान्यालोक्य सपत्नसेना नारीयते नारीवाचरति भीरुत्वात्। अत्र कर्त्तुः क्यङ्। अत्राचारः क्यच् क्यङर्थः साधर्म्यम्, इवादिस्तु लुप्तः; न त्विवाद्यर्थविशिष्ट एवाचारः क्यच् क्यङर्थस्तादृशार्थेऽननुशासनात्।

**सुधासागरः**

अत्र पौरं सुतीयतीत्यत्र 'उपमानादाचारे' इति कर्मणः क्यच्। समरान्तरे अन्तः पुरीयतीत्यत्र तु 'अधिकरणाच्च' इत्यनेनाधिकरणात्। नारीयत इति 'कर्त्तुः क्यङ् सलोपश्च' इत्यनेन कर्त्तुः क्यङ्। अत्र प्राञ्चः—इयं श्रौती, इवादीनामिव क्यजादीनामपि सत्त्वे तत्त्वे तत्त्वानपायादित्याहुः। वस्तुस्तु इवादिसत्त्वे एव श्रौत्यादिचिन्तेति सारम्।

**मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे।**
**स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥ ४०४ ॥**

---

### सङ्केतः

मृधे इति। निदाघघर्मांशुदर्शं इत्यत्र नित्यसमासे कर्मकर्त्रोर्णमुलि इवलोपः।

### बालचित्तानुरञ्जनी

कर्मणि कर्तरि च णमुलि आर्थीमुदाहरति मृध इति। परे शत्रवः राजानं युद्धे ग्रीष्मर्तुसूर्यमिव पश्यन्ति। दर्शमिति कर्मणि णमुल्। स राजा पुनः पार्थः अर्जुन इव सञ्चरति। अत्र कर्त्तरि णमुल्। उभयत्र 'कषादिषु यथाविध्यनुप्रयोग' इत्यनुप्रयोगः।

### काव्यादर्शः

'मृधे निदाघे' ति। अत्र नित्यसमासे कर्मकर्त्रोर्णमुलि इवलोपः।

### विवेकः

तत्राद्या यथा मृध इत्यादि। मृधे संग्रामे। अत्र शत्रवो निदाघसूर्यमिव तं पश्यन्तीत्यर्थः। स च पार्थसञ्चारं सञ्चरति, पार्थ इव चरतीत्यर्थः, 'उपमाने क्रर्मणि चे'ति (पा. ३/४/४५) चकारात् कर्तर्यपि णमुल्।

### दीपिका

**"उपरोधो न कर्तव्यः कर्तव्यः परिमाणतः।**
**उपरोधस्य महात्म्यान्नोक्षा भवति गर्भिणी॥"**

इत्यादिपद्येन तादृशनिष्कर्षतः शङ्कसङ्कुचितानि सङ्कटानि प्रविशतीत्यत्र किं ब्रूमः ?

वस्तुतस्तु सुतीयतीत्यादौ स्नेहनिर्भरत्वादेर्गम्यमानतया धृता निचिता करमिलिता तरङ्गिता सम्मदोत्तरलिता। अर्थिततिर्याचकचयः। प्रभावो माहात्म्योत्कर्षः। जेतुं सप्रवणीकर्तुमित्यादिकेति। आदिशब्देनोदाहृति प्रकारान्तरसंग्रहः।

### साहित्यचूडामणिः

मृध इति। निदाघघर्मांशुः ग्रीष्मसूर्यः तमिव पश्यन्तीति 'कषादिषु यथाविध्यनुप्रयोगः' (३-४-४६)। पूर्वस्मिन् पार्थसञ्चारं सञ्चरतीति कर्तरि णमुल्। पूर्ववच्चानुप्रयोगः।

## सम्प्रदायप्रकाशिनी

मृधे निदाघेति । घर्मांशुदर्शं घर्मांशुमिव पश्यति तम् । इयं कर्मोपपदेन णमुला । पार्थसञ्चारं पार्थोऽर्जुनः स इव सञ्चरति । इयं कर्त्रुपपादेन ।

## मधुमती

मृधे इति । मृधे सङ्ग्रामे । निदाघघर्मांशुदर्शं इत्यत्र 'उपमाने कर्मणि 'च' इति कर्मणि णमुल् । पार्थसञ्चारं इत्यत्र 'कषादिषु यथाविध्यनुप्रयोगः पूर्वस्मिन्' इति कर्तरि णमुल् ।

ननु समासे इवादेर्लोपात् इयं लुप्ताऽस्तु । क्यजादौ तु तत् कथम्? तत्र सादृश्यप्रतिपादकानां तत्तत्प्रत्ययानामेव सत्त्वात् इति चेत्— न । इवादिपदलोपनिबन्धनस्येव अर्थलोपनिबन्धनस्यापि प्रकृति विवक्षितत्वात् लोपश्च अप्रयोग एव हि इति ।

## विस्तारिका

मृध इत्यादि । मृधे युद्धे । 'उपमाने कर्मणि च' इति णमुल् । पार्थो धनञ्जयः, स इव सञ्चरतीति । तेन चकारेण कर्तुरनुकर्षणात् कर्षादिषु तेरेवानुप्रयोग इत्येकेनैव धातुना प्रयोगोऽनुप्रयोगश्च । घर्मांशुं यथा पश्यन्ति, तथा तं पश्यन्तीति पश्यन्तीति सम्बन्धिभेदाद् दर्शनस्यन पौनरुक्त्यम् । तत्रेवादितुल्यादिपदविरहान्न श्रौत्यादिचिन्तेति यदुक्तं तदसत्, इवादीनामिव क्यजादीनामप्युपमानपरता, नियमेन तत्सद्भावे श्रौतीत्वात् ।

अत्र केचित्—क्यजादीनामप्यौपम्यार्थत्वेन तत्सत्त्वेऽपि यदि न वादिलोपः, तथापि प्राचीनप्रणयानुरोधेनाचार्येणेच्छयाभिहितमिति आचार्यमाक्षिपति । तत्र क्यजादीनामौपम्यस्य सम्बन्धविशेषस्यानाभिधायकत्वात्, किन्त्वाचाराद्यर्थकत्वादाचारादेश्च समानधर्मत्वात् त एव । पुत्रमिवाचरतीति वाक्ये इवेनौपम्यस्य, आचरतीत्यनेन समानधर्मस्य दर्शिततत्वान्न; तर्हि कथं सुतीयतीत्यादाविवाद्यप्रयोग इति चेदुच्यते, क्यजादीनामुपमानपरता, नियमव्युत्पत्तौ तेषां श्रवणमात्रेणौपम्याक्षेपलभ्यत्वात् ।

यथोक्तं विश्वनाथेन 'क्यजादयो नाचारमात्रार्थाः, अपि तु सदृशाचारार्था इत्यमीषामौपम्यप्रतिपादकत्वमेव' इति, तदज्ञानविजृम्भितम्, उपमानोपमेयनिष्ठासदृशधर्मस्यैवोपमाप्रयोजकत्वात् । तत्प्रयोज्यस्योपमानोपमेययोः सम्बन्धस्य साम्यस्य ततोऽन्यत्वात् । 'गर्दभति श्रुतिपरुषम्' इत्यत्र गर्दभो यथा श्रुतिपरुषं रौति, तथायमपि परुषं रौति । तथायमपि परुषरुतिः समानो धर्मः । एवमन्यत्रापि सञ्चार्यमिति ।

## सारबोधिनी

मृधे युद्धे । निदाघेति । निदाघधर्मांशुमिव पश्यन्तीति उपमाने कर्मण्युपपदे णमुल् । पार्थसञ्चारमिति । पार्थ इव सञ्चारतीति कर्तर्युपपदे णमुल् । इयं श्रौती, इवादीनामिव क्यजादीनामपि सत्त्वे तत्त्वानपायात् । वस्तुतस्तु इवादिसत्त्वे एव श्रौत्यादिचिन्तेति सारम् । इवादीनां द्योतकत्वमिति तत्सत्त्व एव तत्त्वम् क्यजादीनां तु वाचकत्वात् । अत्र केचित् । क्यजादीनामप्यौपम्यार्थकत्वेन तत्सत्त्वे यद्यपि न वादिलोपस्तथापि प्राचीनप्रणयानुरोधादिदमुक्तमिति । न च क्यजादीनां नौपम्यार्थकत्वमिति वाच्यम् । तथा सति सुतीयतीत्यादौ इवाद्यप्रयोगानुपपत्तेः ।

### काव्यप्रदीपः

णमुलि भेदद्वयं यथा—

'मृधे निदाघघर्मांशुदर्श पश्यन्ति तं परे।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥'

अत्र निदाघघर्मांशुदर्शमिति कर्मणि णमुल्। निदाघघर्मांशुमिव पश्यन्तीत्यर्थात्। पार्थसंचारमित्यत्र कर्तरि। 'उपमाने कर्मणि च' इति सूत्रे चकारात्।

### काव्यप्रकाशखण्डनम्

णमुलि भेदद्वयं दर्शयति—मृधेति—

मृधे निदाघघर्मांशुदर्श पश्यन्ति तं परे।
स पुनः पार्थसञ्चारं सञ्चरत्यवनीपतिः ॥

मृधे संग्रामे परे शत्रवस्तं राजानं निदाघधर्मांशुदर्शं निदाघकालीनसूर्यमिव पश्यन्ति। स पुनरवनीपतिः राजा दीर्घसञ्चारं पार्थ इव सञ्चरति। अत्र 'कषादिषु यथाविध्यनुप्रयोगः।'

### आदर्शः

णमुल् द्वयोमेकत्रैवोदाहरति—मृध इति। परे शत्रवस्तं मृधं युद्धे धर्मांशुदर्शं धर्मांशोरिव दर्शनेन पश्यन्तीत्यर्थः। अत्र कर्मण्युपपदे णमुल्। स पुनरवनीपतिर्मृधे पार्थसञ्चारं पार्थस्यार्जुनस्येव सञ्चारेण सञ्चरतीत्यर्थः। अत्र कर्तर्युपपदे णमुल्। इति वादिलुप्ताः षट्। एवमेकलुप्तास्त्रयोदश।

### सुधासागरः

अत्र निदाघघर्मांशुदर्शमिति कर्मणि णमुल्, निदाघघर्मांशुमिव पश्यन्तीत्यर्थात्। पार्थसञ्चारमित्यत्र कर्त्तरि 'उपमाने कर्मणि च' इति सूत्रेण चकारात्।

**(सू० १३१) एतद्द्विलोपे क्विप्समासगा ॥ ८९ ॥**

**एतयोर्धर्मवाद्योः । उदाहरणम्—**

**सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।**
**यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥ ४०५ ॥**

---

**सङ्केतः**

एतदिति । एतयोः विलोपे इति, एतयोः द्वयो = धर्मवाद्योः लोपे इति वा ।

विधवति । विधुरिवाचरतीति आचारे क्विप् । अत्र च क्विब्लोपात् तद्वाच्यस्य आचाराख्यधर्मस्य इवस्य च लोपः ।

**बालचित्तानुरञ्जनी**

पुनरपि द्वैविध्यं पद्यांशमुपादाय व्याकरोति एतदिति । क्विब् गा समासगा चेति आर्थी द्विविधेत्यर्थः । तत्र धर्मलोपे क्विब्गामुदाहरति सवितेति । सूर्यः विधवति चन्द्र इवाचरति । कस्मिन् सति मनसि सुखदुःखवशीकृतेसति । अत्र 'सर्वत्र सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्य' इति आचारे क्विप् । ननु आचारे क्विपो विधानात् आचाररूपस्य समानधर्मस्य सद्भावात् कथं धर्मलोप इति चेत्, सत्यम् । लुप्तप्रत्यया प्रकृतिः प्रत्ययार्थमपि यद्यपि ब्रूते तथापि वाचकप्रत्ययलोपात् वाच्यलोप इत्युच्यते । यद्वा प्रकृति [व्यति] रिक्तस्य धर्मवाचकस्याप्रयोगात् धर्मलोप इत्युच्यत इत्यदोषः ।

**काव्यादर्शः**

एतदिति । एतयोर्विलोपे । केचित्तु 'एतयोर्लोप इत्याहुः' ।

क्विबन्ते 'सविते' ति । अत्र नामधातुवृत्तौ धर्मस्य उपमाऽवाचकस्य च लोपः ।

**विवेकः**

[एतदिति—] एवमेकस्य लोपे लुप्तोपमां प्रदर्श्य द्वयोर्लोपे दर्शयति । तत्र साधारणधर्मद्योतकयोर्लोपे द्विधा क्विब्गम्या समासगम्या चेति । तत्राद्या यथा सवितेति । विधवति विधुरिवाचरतीति "सर्वप्रातिपदिकेभ्यः क्विब्बा वक्तव्यं"मिति (पा ३/१/११) क्विप् ।

### दीपिका

एवंविधेति । यथा "शुकमुखद्युति किंशुकमाभवौ" इत्यादौ लौकिकी, "सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम्" इत्यादौ चोत्पादिता, "पाण्डयोऽयम्" इत्यादौ बिम्बप्रतिबिम्बभावः,

"यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या ।

दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥" इत्यादौ वलितत्वावृत्तत्वस्यैव धर्मस्य सम्बन्धिभेदनिर्देशः ।

धर्मलोपोदाहरणान्यमून्येवंविधविचारान्तरङ्गदशायामन्वितोभयलोपोदाहृतियोग्यानि । प्रकृतोदाहरणं पुनरेवं प्रत्ययलोपच्छले कातन्त्रदिशा ।

**"कुर्वन् घोरविरावं गर्दभति प्रसभमस्य पृष्ठोऽयम् ।**
**तापतनुर्विधुरपि सवितरति प्रियवियोगिन्याः ॥"**

इत्यादि मृग्यम् ।

### दर्पणः

इह हि समुदितं पदं वाचकत्वं [वाचकं] इमनमनाद्य [इति मतमनूद्य] प्रकृति प्रत्ययौ सुखानुबोधकादिति [सुखानुबोधकाविति] मतस्यैवाङ्गीकारेण व्यवहारः प्राच्यात्यं [प्रत्याय्यः] अन्यथा वत्कल्पविवादेः प्रसङ्गः स्यात् न च वाद्यादय [क्यचादयः] इवाद्यर्थेऽनुशिष्यन्ते । क्यचादयस्त्वाचारार्थे तथाहि, एते नाचारमात्रार्थाः किन्तु सदृशाचारार्थाः । निधुवतीत्यादौ केषांचिन्मते [विधवतीत्यादौ] प्रचुरप्रसिद्धयालिन्यादि क्विद्बोपापयहः [?] ।

### साहित्यचूडामणिः

एतद्द्विलोप इति । एतयोर्धर्मद्योतकयोः लोपे । व्याचष्टे—धर्मवाद्योरिति । विधवति विधुरिवाचरतीत्यत्र 'सर्वप्रातिपदिकेभ्यः' इत्याचारे क्विप् । अत्र शीतलत्वादिको न समानधर्मः, न च द्योतकशब्द इति द्विलोपः । एवमुत्तरत्र ।

### सम्प्रदायप्रकाशिनी

अथ द्विलोपे लुप्तधर्मोपमाप्रतिपादकमाह—एतद्द्विलोप इति ।

सवितेति । अत्र विधवति सवितरतीत्यादौ क्विपा उपमाप्रतिपादकलोपः साधारणधर्माप्रयोगश्चेति द्विलोपः ।

### मधुमती

एकैकलोपे लुप्तामुदाहृत्य द्वयोर्लोपे तामुदाहरति—एतदिति ।

सवितेति । विधवति विधुरिवाचरति ।

ननु आचारे क्विपो विधानात् आचारूपस्यैव समानधर्मस्य सत्त्वात् कथमत्र धर्मलोपः ? इति चेत्— वाच्यस्य आचरणरूपधर्मस्य प्रतीतावपि, वाचकस्य क्विप्प्रत्ययस्य लोपात् वाच्यलोपः उपचर्यते ।

यत्तु प्रकृतिभिन्नस्य धर्मवाचकस्य अप्रयोगात् धर्मलोपः । विधवतीत्यादौ च लुप्तस्य क्विप्प्रत्ययस्य प्रतिपादकत्वात् प्रकृतिरेव 'विधु' शब्दः तदर्थमभिधत्ते इति—तदसत् । प्रकृतेः तदर्थानभिधायकत्वात् । लुप्तस्य क्विप्प्रत्ययस्यैव तदुपस्थापकत्वात् । तल्लोपमजानतां अर्थप्रतीत्यनुदयाच्च ।

**विस्तारिका**

एतदित्यादि । धर्मवाद्योरिति । तयोः प्रकृतत्वात् ।

सवितेत्यादि । सविता विधुरिवाचरतीत्याचारार्थे क्विपमनुशिष्यैतच्छ्लोकमाहुस्तन्मते उदाहरणमिदम् । आचारार्थकक्विपो लोपाद् धर्मानुपादानम् । औपम्यस्य गम्यमानत्वं स्फुटमेव ।

**सारबोधिनी**

एवमेकैकलोपमुदाहृत्य द्वयोर्लोप उदाहरति एतदिति । सवितेति । विधवति विधुरिवाचरति ।

**काव्यप्रदीपः**

अथ द्विलोपे विभजनीया । तत्र धर्मवाद्योर्लोपे वाक्यगा न संभवति । शिष्टयोर्मुखं चन्द्र इत्येतावन्मात्रयोरुपादाने उपमानवगमात् । नापि तद्धितगा तद्धितस्यापि कल्पवादित्वेन तत्सत्त्वे द्विलोपाभावात् । नापि श्रौती । इवाद्यभावादित्यन्यथा विभजते—

**एतद्विलोपे क्विप्समासगा ॥ ३ ॥**

एतद्विलोपे एतयोर्द्वयोर्धर्मवाद्योर्लोपे । क्विब्गा यथा—

**'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।**
**यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥'**

यद्यप्याच्चारे क्विब्विधानात्तस्यैव च समानधर्मरूपत्वेन क्विपि धर्मलोपो नास्ति तथापि क्विप एव लोपाद्धर्मलोपव्यवहारः । अत एव समानार्थत्वेऽपि क्यङत्र नोपात्तः । तस्यालुप्तत्वेन धर्मलोपाभावात् ।

**काव्यप्रकाशखण्डनम्**

तथा धर्मवाद्योर्द्वयोर्लोपे यथा—

**सविता विधवति विधुरपि सवितरति [तथा] दिनन्ति यामिन्यः ।**
**यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥**

सुखमनुकूलवेदनीयम्, दुःखं प्रतिकूलवेदनीयम् । ताभ्यां व्याप्ते चित्ते सति, सविता सूर्यो विधवति विधुरिवाचरति । विधुश्चन्द्रः सवितरति सवितेवाचरति । यामिन्यो रात्रयो दिनन्ति दिनानीवाचरन्ति । दिनान्यपि

दिवसान्यपि यामिनयन्ति यामिन्य इवाचरन्तीत्यर्थः । विधुरिवाचरतीत्याचारेऽर्थे क्विप् तल्लोपश्च । आचारार्थक-क्विपो लोपात् धर्मानुपादानम् ।

### आदर्शः

द्विलुप्तमाह—एतद्द्विलोप इति । अत्र तात्पर्यवशान्मध्योक्तमुपमानं विहायैवैतत्पदेन परामर्शः, तदाह—धर्मवाद्योरिति । लुप्तायेः क्विप्परिभाषा । क्विब्गा समासगा चेत्यर्थः । सवितेति । अत्र सुखदुःखेति द्वन्द्वो न साहित्ये, किन्तु तात्पर्यवशात् सुखेन दुःखेन वा वशीकृते मनसीति प्रत्येकवशीकरणं बोध्यम् । अत्र सुखवशीकृते मनसि सवितेति दिनन्तीत्यपि । विधवति विधुरिवाचरति अतापकत्वात्; दिनन्ति दिनानीवाऽऽचरन्ति सन्तोषात् प्रकाश्यमयत्वेनोपलभ्यमानत्वात् । दुःखवशीकृते मनसि तु विधुरपीति यामिनयन्तीति च । सवितरति सवितेवाचरति तापकत्वात्, यामिनयन्ति यामिन्य इवाचरन्ति तमोमयत्वेनापलभ्यमानत्वात् । अत्राऽऽचाररूपधर्मवाचकस्याऽऽयेरिवादेश्च लोपाद् द्विलुप्तता । क्विब्गामिता च ।

### सुधासागरः

अथ द्विलोपे विभजनीया । धर्मवाद्योर्लोपे वाक्यगा न सम्भवति, शिष्टयोरुपमानोपमेययोः 'मुखं चन्द्रः' इत्येतावन्मात्रयोरुपादाने उपमानवगमात् । नापि तद्धितगा, तद्धितस्यापि कल्पवादिरूपस्योपमाप्रतिपादकत्वेन तत्सत्त्वे द्विलोपाभावात् । नापि श्रौती, इवाद्यभावादित्यन्यथा विभजते—एतद्द्विलोप इति ।

एतयोर्द्वयोधर्मवाद्योर्लोपे । क्विब्गा यथा—सवितेति ।

आर्या छन्दः । स्पष्टम् । यद्यप्याचारे क्विब्विधानात्तस्यैव च समानधर्मरूपत्वेन क्विपि धर्मलोपो नास्ति, तथापि क्विप एव लोपाद् धर्मलोपव्यवहारः । अत एव समानार्थत्वेऽपि क्यङत्र नोपात्तः । तस्यालुप्तत्वेन धर्मलोपाभावात् ।

**परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।**

**संपरायप्रवृत्तौऽसौ राजते राजकुञ्जरः ॥ ४०६ ॥**

---

### सङ्केतः

राजकुञ्जरः । राजा कुञ्जर इव इति समासे, उपमासाधकधर्मस्य इवस्य च लोपः । राजते इति राजनं तु राजकुञ्जर इत्युपमायां सिद्धायां योज्यते इति, न धर्मसद्भावः शङ्क्यः ।

### बालचित्तानुरञ्जनी

वादिलोपे समासगामुदाहरति परिपन्थीति । परिपन्थिनां शत्रूणां मनोराज्यशतैरपि दुरतिक्रमः युद्धप्रवृत्तः असौ राजश्रेष्ठः राजते । अत्र राजा कुञ्जर इव राजत इति 'उपमितं व्याघ्रादिभिरि'ति समासः । अत्र इवलोपे समासगा उपमा, साहसत्वादिसाधर्म्यात् ।

### काव्यादर्शः

समासे, यथा—'परिपन्थी' ति । अत्र 'राजा कुञ्जर इवे' ति समासे धर्मस्य इवस्य च लोपः ॥ ८७ ॥

### विवेकः

समासगम्या यथा परिपन्थीत्यादि । अत्र राजकुञ्जर इति 'वृन्दारके'त्यादिना (पा २/१/६२) समासः । तत्र च 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (पा २/१/५६) इत्युनुवर्तते ।

### दीपिका

परिपन्थिनः शत्रवः । मनोराज्यं मनोरथम् ।

### साहित्यचूडामणिः

परिपन्थीति । राजा कुञ्जर एवेति 'उपमितं व्याघ्रादिभिः'—(२-१-५६) इति समासः महत्त्वादिसाधर्म्यात् । मनोराज्यसम्बन्धपरिपन्थिमत्त्वमुपमायाः साधकं येन कुञ्जरं तिरोधाय राजोन्मज्जयते ॥ ३ ॥

### सम्प्रदायप्रकाशिनी

परिपन्थीति । अत्र राजा कुञ्जर इवेति समासेनेवादिलोपः, सामान्याप्रयोगश्चेति द्विलोपः ।

### मधुमती

समासगामुदाहरति—परिपन्थीति । राजकुञ्जरः इत्यत्र 'उपमितं व्यघ्रादिभिः सामान्यप्रयोगे' इत्यनेन समासः ।

## विस्तारिका

समासगामाह—परिपन्थीत्यादि । मनोराज्यं मनोरथः । परिपन्थिनां तद्विजयकामनयाभिभवतीत्यर्थः । राजा कुञ्जर इवेति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेन समासः । दुराधर्षेत्यस्य समानधर्मस्य प्रसिद्ध-त्वानुपादानम् । औपम्यमपि समासगम्यम् ।

## सारबोधिनी

समासगामाह परिपन्थीति । मनोराज्यं मनोरथः । राजा कुञ्जर इवे "त्युपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति समासः ।

## काव्यप्रदीपः

'परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥'

अत्र राजायं कुञ्जर इवेत्युपमा ।

## आदर्शः

समासगामाह—परिपन्थीति । मनोराज्यं मनोरथः, सम्परायो युद्धम् ।

अत्र राजा कुञ्जर इवेति समासे इवादेर्बलवत्त्वधर्मस्य च लोपः । न चात्र राजेव कुञ्जर इति रूपकम्, तदा कुञ्जरस्यैव विशेष्यत्वेन सिंहादिपरिपन्थिभिराक्रमणीये कुञ्जरे परिपन्थीत्यादेरनन्वयापत्तेः । अत एवोपमाया अप्यु-पमाने कुञ्जरेऽनन्वयात् परिपन्थीत्यादिकं नोभयधर्म इति लोप एवेति द्विलुप्तता । न चात्र राजश्रेष्ठ इत्येवार्थो नोपमेति वाच्यम्, उपमाभिप्रायेणोदाहृतत्वात् । अत्र श्रेष्ठार्थकत्वे तु राजचन्द्रमा इति कृत्वोदाहर्त्तव्यम्, चन्द्रस्य राहुबाध्य-त्वाच्च न तत्र परिपन्थीत्यादिधर्मान्वयः ।

## सुधासागरः

समासगा यथा—परिपन्थीति ।

मनोराज्यं मनोरथः । स्पष्टमन्यत् । अत्र राजाऽयं कुञ्जर इवेति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासात् समासगा धर्मद्योतकलुप्तोपमा ।

**(सू० १३२) धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते।**

**टुण्टुण्णन्तो मरिहसि कण्टअकलिआइँ केअइवणाइँ।**

**मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ।। ४०७ ।।**

**कुसुमेण सममिति पाठे वाक्यगा।**

---

**सङ्केतः**

ढुण्ढुल्लितु परिभ्रमन् मरीहसि मरिष्यसि। "हे भ्रमर! भ्रमणशील! दुष्टाविटचुम्बितानि शम्भलीकुलानि गवेषयन् यत्र क्वापि विपद्यसे। न तु कदाऽपि मालतीमिव सुकुमारसुभगां सुन्दरीं नारीं प्राप्स्यसि" इति भावः। 'तेन तुल्यम्' इत्यादौ तुल्यादिपदानां उपमेये एव विश्रान्तिः इति यद्यप्युक्तम्। तथापि सदृशशब्दवाच्यस्य उत्कृष्ट-गुणवत्त्वबलात् उपमानत्वमेव नोपमेयत्वमिति उपमानस्यैव लोपः।

**सङ्केतः (रुय्यकः)**

ढुण्ढुण्णन्तो (०ल्लण्डो) परि (पर)—भ्रमन्मरिष्यसि कण्टककलितानि केतकीवनानि।

मालतीकुसुमसदृक्षं भ्रमर भ्रमन्न प्राप्स्यसि (भ्रमरमनुप्राप्स्यसि)।

**बालचित्तानुरञ्जनीः**

पुनरपि द्वैविध्यं प्रतिपादयति धर्मेति। वृत्तौ समासे दृश्यते। आर्थीति शेषः। धर्मलोपवती उपमानलो-पवती चेति द्विविधा एवेत्यर्थः। धर्मलोपे उपमानलोपे च समासे उदाहरणमाह ढुण्ढुण्णंतेति। पुष्पोपचये भ्रमरमा-लोक्य कस्यचिदुक्तिः। भ्रमन् मरिष्यसि कण्टककलितानि, केतकीवनानि मालतीकुसुमसदृशं भ्रमर! भ्रमन्न प्राप्यसि। अत्र मालतीत्यादिसमासे सौरभादिधर्मस्य तदुपमानस्य चादर्शने आर्थी उपमासमासोदाहरणमेव। पाठान्तरे वाक्योदाहरणे स्यादित्याह कुसुमेन सममितीति।

**काव्यादर्शः**

वृत्ताविति समासे। 'ढुण्ढुण्णन्तु' परिभ्रमन् मरिष्यति 'मालतीकुसुमसदृक्षम्,' इति सदृक्षशब्दाभिधेयस्य उत्कृष्टतरगुणत्वप्रतिपादनाद् बलाद आगतस्य उपमानस्य साक्षाद् अनिर्देशाद् उपमानस्यैव लोपः।

वाक्ये 'कुसुमेण समम्' इति। उपमेयोपमावाचकयोस्तु वाक्ये लोपो न संभवति।

**विवेकः**

धर्मोपमानयोर्द्वयोर्लोपे समासगम्या वाक्यगम्या चेति द्विधा यथा ढुण्ढुण्णन्तो इत्यादि। ढुण्ढुणन् परिभ्रमन्मरिष्यसि कण्टककलितानि केतकीवनानि। मालतीकुसुमसदृक्षं भ्रमर भ्रमन्न प्राप्स्यसि। इयं हि प्रियतमेन

सहोद्याने विहरन्त्याः कस्याश्चिदितस्ततः [कमपि] सञ्चरन्तमवलोक्य स्वसौभाग्यगुणाद्यभिमानवशादन्यापदेशेनोपालम्भगर्वोक्तिः। अत्र यद्यपि 'तेन' तुल्य'मित्यादौ (पा ५/१/११५) तुल्यादिपदानामुपमेय एव विश्रान्तिरित्युक्तं तथापीह कुसुमेन सदृक्षमिति सदृक्षशब्दाभिधेयस्योत्कृष्टतरगुण त्वेनाप्राप्यताप्रतिपादनात्तदुपमानत्वं बलायातम्, तस्य च साक्षादनिर्देशादुपमानस्यैव लोपः।

### दीपिका

टुण्टुण्णतो समुत्पतन्नवस्थितं चङ्क्रम्यमाणः। कलिआँइँ कलितानि। 'कुसुमेन समम्' इति पाठे यद्यपि श्रौतीसम्भवस्तथापि प्रसिद्धिविरहादयमनादृतः।

### दर्पणः

दुद्दुलंतेति।

**अनवंतचक्रमभानो मरिष्यसि कुंटककलितानि।**
**मालती कुसुमसदृशं भ्रमर भ्रमण प्राप्यसि॥**

[ढुंढुंकृत्वा मरिष्यसि कण्टककलितानि केसरकुसुमानि।

मालतीकुसुमसदृशं भ्रमर भ्रमन्नाप्राप्यसि॥]

अत्र कुसुमसविसमित्यत्र [कुसुमसदृशमित्यत्र] कुसुमश्च गुणो इति पाठे [कुसुमेण समम्] श्रौत्यपि संभवति। इह व्यतिरेकार्थमुपमा। एवं पूर्वोदाकृते [पूर्वोदाहृते] सअनकरणपरिरीशामित्यादौ [सअलकरणपरखीसाम] निवसि अनुपादान इत्यर्थः। सहसायुधीत्यत्र [सहस्रायुधीत्यत्र] सहस्रायुधमिवात्मानमाचरतीति वाक्ये उपमेयस्यानुलोपः। एतदेवाह अत्रात्मा उपमेय इति। अत्राचरतीत्यादि विशेषणद्वयेन साधारणधर्मोपादानं, न चेहौपम्यवाचकलोपः उक्तादेवान्यायात् [उक्तादेव न्यायात्] स च यथा—गर्दभति श्रुतिपुरुषं व्यक्तं निनदमहात्मनां पुरत इत्यादौ। चण्डिदासपण्डित आहुः—सहस्रेणायुधैः सह बर्तत इति सहस्रायुधः, स इवाचरतोति वाक्यात् सहस्रायुधीति पादसिद्धौ विशेष्यपदस्यानुपात्तत्वादि। लोपमेव लोप [?] इति= तन्न विचारसहम्, कर्तरि कृतोऽनुशासादविरुद्धत्वात्। किञ्चात्र क्यच् प्रत्ययस्यौवाचकत्वात् उपक्रमे उपमापर्यवसाने च संभावनोत्थापनाद्वत् [वत्] उत्प्रेक्षा। ततश्चोपमोत्प्रेक्षा। यथा श्लो०।

**कस्तूरीतिलकं ति भालफलके [ललाटफलके] देव्यामुखाम्भोरुहे**
**से भ्रमर मुन्ति तमाल वा नमुलो तु संति मौतिं प्रति।**

**याः कर्णे विकचोत्पलंति कुचयोरंगे च कालागुरु**
**स्थाच्चीसंति प्रथमं तुलास्त्रावशिवं श्रीकंठद्विषः इत्यादौ॥**

### साहित्यचूडामणिः

धर्मेति । वृत्तौ समासे ।

ढुङ्डुल्लन्तो इति ।

**ढुङ्डुल्लन्तो मरिष्यसि कण्टककलितानि केतकीवनानि ।**
**मालतीकुसुमसदृक्षं भ्रमर भ्रमन् न प्राप्स्यसि ।। इति ।**

पुष्पापचाये व्यग्रं दृष्ट्वा परकलत्राभिलाषिणं प्रति कस्यचिदुक्तिः । यदाह मुनिः—

**यद् वामाभिनिवेशित्वं यतश्च विनिवार्यते ।**
**दुर्लभत्वं यदा नार्याः कामिनः सा परा रतिः ।। इति**

ढुण्ढुल्लत्वं दुस्तरतारल्यम् । अत्र मालतीत्यादि समासे सौरभादिर्धर्मस्तदुचितं चोपमानं न दृश्यते ।

### सम्प्रदायप्रकाशिनी

अथ लुप्तधर्मोपमाना—धर्मोपमानयोरित्यादि ।

ढुड्ढुल्लन्तेति ।

**परिभ्रमन् मरिष्यसि कण्टककलितानि केतकीवनानि ।**
**मालतीकुसुमसदृशं भ्रमर भ्रमन् न प्राप्स्यसि ।।**

अत्र सदृशमिति सामान्यकथनादुपमानानुपादानं साधारणधर्माप्रयोगश्चेति द्विलोपे समासगा ।

अथेयमेव यथा वाक्यगा स्यात् तथा पाठमन्यथयति—कुसुमेण सममित्यादि ।

### मधुमती

द्विलोपे एव भेदान्तरमाह—धर्मेति ।

मालहकुसुमसरिच्छं इत्यत्र साधारणधर्मोपमानयोः लोपः स्फुट एव । कुसुमेणेति । अत्र वाक्यगात्वं स्फुटमेव ।

### विस्तारिका

धर्मोपमानयोरित्यादि । वृत्तौ समास एकपद्यम्, पदं वाक्यम्, समासाभावः ।

टुण्टुण्णेति ।

**टुण्टुणायमानो मरिष्यसि कण्टककलितानि केतकीवनानि ।**
**मालतीकुसुमसदृक्षं भ्रमर भ्रमन् न प्राप्स्यसि ।।**

टुण्टुणायमानेनैकशब्देनैव मुहुर्याचमानः । उत्फुल्लं वेत्यपि पाठः । तदा सरभसमुत्पतन्नित्यर्थः ।

### सारबोधिनी

धर्मेति ढुं ढुं इति ।

**ढुं ढुं कृत्वा मरिष्यसि कण्टकलितानि केतकीवनानि ।**

**मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्यसि ॥**

ढुं ढुं इत्यव्यक्तानुकारः । केतकीवनानि भ्रमन्नित्यन्वयः । प्रकृतमालतीकुसुमस्य सदृशं पुष्पान्तरं नास्तीति विवक्षायामुपमानानुपादाने ।

### काव्यप्रदीपः

**धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।**

तद्धिते तु नेयम् । उपमानलोपे तद्धितस्यैवाभावात् नापि श्रौती । उपमानाप्रयोगे इवादेरप्रयोगात् । तत्र सामसगा यथा—

**'ढुण्ढुज्जन्त मरीहसि कण्टअकलिआइँ केअइवणाइं ।**
**मालइकुसुमसरिच्छं भमर भमन्तो ण पावहिसि ॥'**

कुसुमसरिच्छमित्यत्र 'कुसुमेण समं' इति पाठे इयमेव वाक्यग ।

### आदर्शः

धर्मोपमानयोरिति । 'वृत्तौ' समासे । उपमानलोपश्च पूर्वोक्तरीत्या सदृशादिपदेनोपमानोपादानेऽपि बोध्यः । टुण्टुण्णन्त इति ।

**टुण्टुनायमानो मरिष्यसि कण्टककलितानि केतकीवनानि ।**
**मालतीकुसुमसदृशं भ्रमरभ्रमन्नपि न प्राप्स्यसि ॥ इति संस्कृतम् ।**

केतकीवनानि प्राप्येति शेषः । टुण्टुनित्यव्यक्तानुकरणम् । अत्रापि सदृशपदं मालतीकुसुमाधिक्यलाभायोपमानपरम्, तथात्वेऽप्युपमानानुपादानमेव पूर्वोक्तरीत्या बोध्यम् । उपमानत्वेनैव सादृश्यप्रतियोगित्वलाभान्नेवादिलोपः, लक्षणया तत्प्रतिपादनाच्च न श्रौती ।

### सुधासागरः

तद्धिते तु नेयम्, उपमानलोपे तद्धितस्यैवाभावात् । नापि श्रौती, उपमानाप्रयोग इवादेरप्रयोगात् ।

तत्र समासगा यथा—ढुण्ढुल्लेति । आर्या छन्दः ।

**ढुण्ढुलायमानो मरिष्यसि कण्टकलितानि केतकीवनानि ।**
**मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसि ॥ इति संस्कृतम् ।**

(सू० १३३) क्यचि वाद्युपमेयासे ।

आसे निरासे ।

> अरातिविक्रमालोकविकस्वरविलोचनः ।
>
> कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ ४०८ ॥

अत्रात्मा, उपमेयः ।

---

### सङ्केतः

सहस्रायुधीयतीति । सहस्रायुधमिव आत्मानमाचरति इति नामधातुवृत्तौ । इवादिः, आत्मा उपमेयश्च लुप्तः । आचारलक्षणो धर्मस्तु क्यचा उच्यते । तस्य तत्रैव विधानात् ।

### बालचित्तानुरञ्जनी

क्यचीति । प्रकारान्तरेण प्रतिपादकं पद्यांशमुपादाय अप्रसिद्धं व्याकरोति निरास इति । वादेः द्योतकस्योपमेयस्य च लोपे आर्थी उपमेत्यर्थः । तामुदाहरति अराताति । शत्रुपराक्रमदर्शनेन विकसनशीले लोचने यस्य । कृपाणेन उदग्रो दोर्दण्डो यस्य स राजा सहस्रायुधीयति । सहस्रायुधं कार्त्तवीर्यमिवात्मानं आचरति । उपमानादाचार इति वा क्यच् । वादयो न सन्ति उपमेय आत्मापि नास्ति । आचारो नाम साधारणधर्मोऽस्ति इति आर्थी उपमेत्याह अत्रेति ।

### काव्यादर्शः

उपमावाचकोपमेयलोपे लुप्तमाह—क्यचि वेति । 'सहस्रायुधी'त्यत्र नामधातुवृत्तौ सहस्रायुधमिवात्मानं आचरतीति आत्मा उपमेयः, स च इवादिश्च लुप्तः, आचारलक्षणश्च समानो धर्मः । क्यप्प्रत्ययेन साक्षाद् अभिहितः, तस्य तत्रैव विधानात् ।

### विवेकः

उपमाद्योतकोपमेययोर्लोपे क्यच् प्रत्ययगम्या यथा—अरातीत्यादि । सहस्राक्षायुधीयतीति वज्रमुपमानम् । आत्मोपमेयः । स च द्योतकश्च लुप्तः ।

### दीपिका

आसे निरास इति । अनुपादान इत्यर्थः । कैश्चित् पुनरार्थ्यादिरिति (रीतिः ?) विसंवादः ? तथाप्येतद्विवादस्य प्रकृतानुपयोगितया प्रायिका (प्रमाणिका ?) प्रसिद्धत्वेन पाणिन्यादितन्त्रमेवाश्रितवान् ग्रन्थकृत् ।

ननु कणादोक्ता (कलापोक्ता ?)नुशासनविरहादेव तद्विषयो न विशिष्यते ।

यत्तु केनचिदुक्तं वत्यादय इवाद्यर्थेऽनुशिष्यन्ते, क्यजादयस्त्वाचारार्था इति वैषम्यमिति, तदतिरिक्ततरम्। नहि क्यजादय आचरमात्रार्थाः, किं तर्हि सादृश्याचारार्था इति विधवतीत्यादौ पाणिन्यादिभिः क्विबन्तं विशिष्यते (क्विबन्तमनुशिष्यते) सहस्रायुधैः सह वर्तत इति ससहस्रायुधः, स इवाचरति स सहस्रायुधीयति। न तु स इति भिन्नं पदम्, उपमेयानुपादानविरहप्रसङ्गात्।

समानधर्मानाह विशेषणपदद्वयार्थम्—अत्रात्मेति। केवलस्य तस्मादेव (तस्य) सहस्रायुधात् सोऽर्थः, कृत्याक्षमत्वेनान्यत्वादिति भावः। अत्र पूर्वोक्त एव न्यायोऽसन्देहार्थः।

### साहित्यचूडामणिः

समासोदाहरणस्य वाक्योदाहरणतयोन्नयनमदुष्करमित्याह—कुसुमेणेति।

### सम्प्रदायप्रकाशिनी

अथ लुप्तोपमाप्रतिपादकोपमेया—क्यचि वादीत्यादि।

अरातिविक्रमेति। अत्र सहस्रायुधीयति आयुधसहस्रवानिवाचरतीति क्यचा इवादिलोपः, उपमेयस्याप्रयोग इति द्विलोपः।

अप्रयुक्तमुपमेयमुद्घाटयति—अत्रात्मेति। य इह कर्ता क्रियावाच्यः प्रतीयते स एवोपमेय इत्यर्थः।

### मधुमती

पुनः द्विलोपे प्रकारान्तरमाह—क्यचीति। निरासे निरसने लोपे अनुपादान इति यावत्।

अरातीति। सहस्रायुधमिवात्मानमात्मानामाचरति—सहस्रायुधीयति। अत्र 'उपमानादाचारे' इति क्यज्विधानात् उपमेयेवादिशब्दयोरनुपादानात् उपमानसाधारणधर्मयोरुपादानाच्च उक्तलक्षणसत्त्वमभिप्रेत्याह—अत्रेति।

'नास्ती'ति शेषः।

यद्यपि—'सविता विधवति' इत्यादाविव अत्रापि आचाररूपसमानधर्मस्यापि लोपः इति त्रिलुप्तेयं भवितुमर्हति। तथापि—तद्रूपलोपस्यात्र अविवक्षिततत्वात् द्विलुप्तेयमित्युक्तम्। अथ वा—'त्रिलोपे च समासगा' इति भविष्यति। तस्यायं पुरस्तादपकर्षः इति त्रिलुप्तेयमिति द्रष्टव्यम्।

### विस्तारिका

अरातीति। मन्युरतोऽपि वैरिणो विक्रमन्त इत्यद्भुतदर्शनाद् विलोचनम् विकासः, सहस्रमायुधानि यस्य सः। तथा तमिवाचरतीति कर्मणः क्यच्, तर्हि क उपमेय इत्याह—अत्रात्येत्यादि। सहस्रायुधमिवात्मानमाचरति। आचारोऽत्र दुर्जेयत्वमानिता। यथा तं दुर्जयं मन्यते, तथात्मानपीत्यर्थः।

अभिमानफलं च निःशङ्कसमरप्रवेशेण प्रतिपक्षोत्सारणम्। आयुधसहस्रनिर्वाह्यस्य प्रतिपक्षोत्सारणस्यैकेन कृपाणेन निर्वाहान्नृपतौ वीररसप्रकर्षः।

कृपाणेत्यादिविशेषणवशादेवाचरितुरुपमेयत्वलाभः। अन्यस्य तथात्वे तदुपादानवैफल्यं स्यात्। अत एवोपादानिकत्वेनोपमेयानुपादानमिति नेयम्।

अत्र केचित् सहस्रेणायुधैः सह वर्तत इत्येकं पदम्, अन्यथा स इत्यस्य भिन्नपदत्वे तेन नृपतिपरामर्षणे तस्योपमेयत्वेनोपमेयानुपादानाप्रसङ्ग इत्याहुः, तदसत्, एवं चेत् कृपाणेत्यादिनोपमेयोपादानप्रसङ्गात्। यस्य विशेषणत्वेन विशेष्यानुपादाने तदनुपादनमिति चेत्, स इत्यस्य भिन्नपदत्वेऽपि तदक्षतेः, विशेषणत्वाविशेषात्। किञ्च न्यायमपाकृत्य स्वेच्छयानुपादाने न्यूनपदत्वप्रसङ्गात्। अपि च कर्तुः क्यचोऽनुशासनात् कर्मणोऽधिकरणाच्च तद्विधानात्, अत एवाधारादपिस्यान्निरपेक्षत्वादिति कातन्त्रवृत्तिः।

### सारबोधिनी

क्यचीति। निरास इति। अनुपादान इत्यर्थः। अरातीति। सहस्रायुधीयतीति सहस्रामायुधानि यस्य स तथा तमिवाचरतीति कर्मणः क्यच्। तर्हि क उपमेय इत्याह अत्रात्मेति। सहस्रायुधमिवात्मानमाचरतीति। आचारश्च दुर्जयमानिता। यथा तं दुर्जयं मन्यते तथात्मानमपीत्यर्थः। अभिमानफलं च निःशङ्करणप्रवेशात् प्रतिपक्षोत्सारणम्। आयुधसहस्रानिर्वाह्यस्य प्रतिपक्षोत्सारणस्यैकेन कृपाणेन निर्वहणात् नृपतौ वीरप्रकर्षः। कृपाणेत्यादिविशेषणवशादेव आचरितुरुपमेयत्वलाभः। अन्यस्य तथात्वे तदुपमानत्वे तदुपमानवैयर्थ्यम्, अत एवोपादानिकत्वेनोपमेयानुपादानमिति ध्येयम्[?]। केचित्तु सहस्रायुधेन सह वर्तत इति ससहस्रायुधः स इवाचरतीति वाक्यात् ससहस्रायुधीयतीति पदसिद्धौ विशेष्यस्य शब्दानुपात्तत्वादिहोपमेयलोप इत्याहुः।

### काव्यप्रदीपः

**क्यचि वाद्युपमेयासे**

आसे निरासे। उदाहरणम्—

> **'अरातिविक्रमालोकविकस्वरविलोचनः।**
> **कृपाणोदग्रदोर्दण्डः सहस्रारायुधीयति॥'**

अत्र यद्यपि विशेषद्वारोपात्तः कर्तैवोपमेयस्तथापि न तथात्वेन किं तु कर्मत्वेन। अन्यथा क्यचोऽसंगतत्वापत्तेः। तथा चात्मानं सहस्रारायुधीयतीत्यर्थः। इत्युपमेय आत्मा लुप्त इति यथोक्तोदाहरणमेतत्। हंसायत इत्यादौ कर्तैवोपमेयः। तस्य चानुपादाने वाक्यमेव न पर्याप्यत इति विशेषात् क्यङि नेयं संभवति। यद्यपि द्विलोपेऽन्यदपि भेदत्रयं संभवति। यथा उपमानोपमेययोः, उपमानवायोः उपमानधर्मयोरिति तथापि तेषूपमायाः प्रसङ्ग एव नास्तीति न न्यूनत्वमाशङ्कनीयम्।

### आदर्शः

द्विलुप्तान्तरमाह—क्यचीति अरातीति। स राजा अरातीत्यादिना कृपाणेत्यादिना च विशिष्टः सहस्रायुधीयति सहस्रायुधमिवात्मानं मन्यत इत्यर्थः। तदाह—अत्रात्मा उपमेय इति, स च लुप्त इति बोध्यम्। अत्रारातीत्यादिकं सहस्रायुधस्यापि धर्म इति न धर्मलोपः। इति द्विलुप्ताः पञ्च।

सुधासागरः

कुसुमेण समसमिति पाठे वाक्यगा।

ढुण्ढुमित्यव्यक्तशब्दानुकारः। हे भ्रमर! ढुण्ढुलायमानः इष्टाप्रप्त्या व्यर्थश्रमातुरी ढुण्ढुमिति शब्दं कुर्वाणः कण्टकैः कलितानि युक्तानि केतकीवनानि भ्रमन्नन्विष्यन्मालतीकुसुमसदृशं जातिपुष्पतुल्यं न प्राप्स्यसी-त्यर्थः। प्रकृतमालतीकुसुमस्य सदृशं पुष्पान्तरं नास्तीति विवक्षायामुपमानानुपादानम्। कुसुमसरिच्छमित्यत्र कुसुमेन सममिति पाठे इयमेव वाक्यगा।

(सू० १३४) त्रिलोपे च समासगा ॥ ९० ॥

त्रयाणां वादिधर्मोपमानानाम् उदाहरण्—

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।

स्मरशरविसराचितान्तरा मृगनयना हरते मुनेर्मनः ॥ ४०९ ॥

अत्र सप्तम्युपमानेत्यादिना यदा समासलोपौ भवतः, तदेदमुदाहरणम् ॥

---

**सङ्केतः**

तरुणिमनीति । विलासाय विलब्धः दत्तः विग्रहः यया सा तथा । मृगनयना । मृगनयने इव नयने यस्याः इति 'सप्तम्युपमाने'त्यादिना उपमानपूर्वस्य समासः उत्तरपदलोपश्च । अत्र धर्मस्य इवादेः उपमानस्य चेति त्रयाणां लोपः । यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिः, तदा मृग एव नयने यस्याः इति रूपकसमासस्यैव एष विषयः । न तु उपमासमासस्य । अत एवोक्तम्—यदेत्यादि । यदा उपमासमासलोपौ तदा त्रिलोपे समासगा, अन्यथा नास्ति त्रिलोपिन्युपमा ।

**सङ्केतः (रुय्यकः)**

मृगनयनेति—मृगनयने इव नयने यस्याः । अत्र गुणद्योतकोपमानशब्दानां त्रयाणां लोपः । "सप्तम्युपमानपूर्वपदस्ये"—त्यादिना हि प्रकरणेन यदुत्तरपदं लुप्यते तत् 'कण्ठेकाल' इत्यादाविव सर्वत्र प्रथमोत्पादितसमासस्थमेव, समाससन्नियोगेनोत्तरपदलोपविधानात्, तदानीञ्च तस्यैवोत्तरपदत्वात् । बहुव्रीहौ तु विहिते द्वितीयस्योत्तरपदत्वमिति कुतस्तस्योपमेयभूतस्य लोपः ? यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिस्तदा मृग एव नयने यस्या इत्युष्ट्रमुखवद्रूपकसमासस्यैव विषयो न त्वस्योपमासमासस्येति नास्ति स्थानमुपमायास्त्रिलोपिन्याः । अत एवोक्तं यदेति ।

**बालचित्तानुरञ्जनी**

उपमानसाधारणधर्मवादीनां लोपे समासगा आर्थीति प्रकारान्तरमाह त्रिलोपे चेति । तामुदाहरति तरुणिमनीति । तरुणत्वविषये कृतं अवलोकनं यस्याः । ललितविलासैः स्वीकृतः विग्रहो यस्याः । कामशरैः दूरीकृतं तारतम्यं यस्याः । मृगनयना कान्ता मुनेर्मनः हरति । ननु 'मृगनयना' इत्यत्र [वयवा] वयविनोरभेदविवक्षया यदा मृग एव नयनतया उपचर्यते तदा रूपकानुगुणं समासान्तरमिति कथमियं त्रिलोपेत्याशङ्क्याह अत्रेति । सप्तम्यन्तोपमानवाचिनि पूर्वपदे यस्य तस्य बहुव्रीहिः उत्तरपदस्य च लोप इति येषां पक्षः तेषां मते मृगस्य नयने इव नयने यस्या इति विग्रहः । तत्र नयने इव विशाले इति उपमान-इवशब्द-विशालशब्दानां लोप इति त्रिलोपा उपमेत्यर्थः ।

### काव्यादर्शः

धर्मवाद्युपमानानां त्रयाणां लोपे लुप्तमाह—त्रिलोप इति। विलासाय विलब्धो दत्तो विग्रहो यया। विशारारितं विभिन्नम्। 'स्मरशरविशरांचित' इति पाठान्तरम्। 'मृगस्य नयने' इति प्रथमं तत्पुरुषः, ततो 'मृगनयने इव नयने यस्याः' इति सप्तम्युपमानोपमानपूर्वस्य समास उत्तरपदलोपश्चेत्यत्र गुणद्योतकोपमानानां त्रयाणां लोपः। यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिः, तदा मृग एव नयने यस्या इति रूपकसमासस्यैष विषयः, न त्वस्य उपमासमास्येति नास्ति स्थानमुपमायास्त्रिलोपिन्याः। अत एवोक्तं 'यदा समासलोपौ' इति। 'तदा त्रिलोपे समासगा इति योगः। केचित्तु 'अयःशूलिकः' इत्यादौ क्रूराचारोपमेयस्य तैक्ष्ण्यधर्मस्य इवादीनां च लोपे त्रिलोपिनीमुपमामाहुः, तन्न युक्तमित्याह वृत्तिकारः—क्रूरस्येति। क्रूराचारोऽर्थान्वेषणोपायादिः अयःशूलतयाऽध्यवसीयत इत्यतिशयोक्तिरेवेयम्।

### विवेकः

क्यच् प्रत्ययोक्तस्त्वाचारार्थः पूर्ववत् समानो धर्मः। त्रिलोपे त्वेकरूपैव यथा तरुणिमनीत्यादि। मृगनयनेति—"मृगनयने इव नयने यस्याः, यत्र दीर्घापाङ्गत्व-शुभ्रत्व-कृष्णतारकत्वादिसाधारणगुणद्योतकोपमानशब्दानां त्रयाणां लोपः। 'सप्तम्युपमानपूर्वपदस्य बहुब्रीहेरुत्तरपदलोपश्चे' (पा. २/२/२४) त्यादिना हि प्रकरणेन यदुत्तरपदं लुप्यते तत् 'कण्ठेकाल' इत्यादाविव सर्वत्र प्रथमोत्पादित समासस्थमेव, समाससन्नियोगेनोत्तरपदलोपविधानात्, तदानीं तस्यैवोत्तरपदत्वात्। बहुब्रीहौ तु विहिते द्वितीयस्योत्तरपदत्वमिति कुतस्तस्योपमेयभूतस्य लोपः? यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिस्तदा मृग एव नयने यस्या इत्युष्ट्रमुखवत् रूपक समासस्यैष विषयो न त्वस्योपमासमासस्येति नास्ति स्थानामुपमायास्त्रिलोपिन्याः। अतएवाह यदेति।" (रु. स. ६२ पृ.)। आयः शूलिक इति पार्श्वेनान्विच्छतीति तृतीयाया (पा. ५/२/७५) अनुवृत्तेरयःशूलदण्डाजिनाभ्यां ठक् च (ठक्ठञौ) (पा ५/२/७६) इति ठकि रूपम्। अर्थार्जनोपायाः कश्चिदतिदारुण उपमेयः, तैक्ष्ण्यादिः साधारणोः धर्मः, इवादिरुपमा द्योतकः। एषां त्रयाणां लोपात् त्रिलोपोपमेयमिति यत् केनचिदुक्तं तत्र युक्तमित्याह नत्विति।

### दीपिका

असङ्कीर्णपद्यतोदाहृतिस्तु—"गर्दभति श्रुतिपरुषं सततं (व्यक्तं) निनदन् महात्मनां पुरतः" इति। गर्दभतीत्यादौ विधवंतीत्यादौ च सादृश्यप्राणतया सा।

> "कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे।
> रोलम्बन्ति तमालवालमुकुलोत्तंसन्ति मौलावपि।
> याः कर्णे विकचोत्पलन्ति कुचयोरंसे च कालागुरु।
> स्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः॥

इत्यादाविवालङ्कारसर्वस्वाकोक्तदिशोत्प्रेक्षापर्यवसानं प्रायः।

विलक्षः पराधीनीकृताः विसरः समूहः । हरते हरति । मृगस्य नयने इव दीर्घे चञ्चले वा नयने यस्या इति विग्रहे उपमानोत्तरस्य लोपः । कालाम्वा (कालपा) नुशासनिकशङ्का परिहरति—अत्रेति ।"

### दर्पणः

विनन्वः [वितीर्णः] तदधीनीकृतः ?, विसवः [बिसंरः] समूहः । मृगनयने इत्यत्र मृगस्य नयने इव चञ्चले नयने यस्याः इति विग्रहे उपमानौपम्यवाचकसाधारणलोपः । एतत्पदसिद्धौ चानुशाशनविरहाशङ्कां निराचष्टे । सप्तम्युपमाने इत्यादिलक्षणे समासलोपौ । समासलोपश्च तदा तदैव मृगनयने [इव] नयनेत्यादिपदसिद्धिरित्यर्थः ।

### साहित्यचूडामणिः

क्यची-ति । द्योतकस्योपमेयस्य च लोपे ।

आसपदमनुपसर्गत्वादप्रसिद्धं विवृणुते निरास इति ।

सहस्रायुधीयति आत्मानं सहस्रायुधमिवाचरति खड्गाद्येकप्रहरणोऽपीति यावत् । आत्मपदाप्रयोगादुपमेयलोपः । द्योतकलोपः स्पष्टः । सहस्रायुध उपमानम् । आचरणं समानधर्मः ।

एतदासूत्रयति—आत्मोपमेय इति ।

त्रिलोप इति । एकपारिशेष्येण समासवर्तिनी ।

तरुणिमनीति । विलब्धो विभक्तः । मृगनयने इव नयने यस्या इत्यत्र धर्मद्योतकोपमानानां धर्मद्योतकोपमेयानां वा त्रयाणां लोपः । तस्मादुपमानस्योपमेयस्य वा नयनपदस्यात्र लोप इति विचक्षणैकपरीक्ष्योऽयमर्थः सर्वथा त्रिलोपैषा ।

ननु चात्रावयवावयविनोरभेदविवक्षया यदा मृग एव नयनतथोपचर्यते तदा रूपकानुगुणं समासान्तरमनुगुणमिति कथमियं त्रिलोपेति चेद् आह—अत्रेति । सप्तम्यन्तोपमानवाचिनी पूर्वपदे यस्य तस्य बहुब्रीहिः । उत्तरपदस्य च लोप इति येषां पक्षः तदनुसरणादियं त्रिलोपा । मतान्तरे तु मा नाम भूत् ।

### सम्प्रदायप्रकाशिनी

अथ त्रिलोपे समासगतत्वेनैकैव ।

तरुणिमनीति । अत्र मृगस्य नयने इव नयने यस्या इति समासेनोपमानस्योपमाप्रतिपादकस्य च लोपः धर्मस्याप्रयोगश्चेति त्रिलोपः ।

तदेतत् स्पष्टयति—सप्तम्युपमानेत्यादि । उपमानपूर्वपदत्वाद् बहुब्रीहिरुपमानेवादिलोपश्च यदा विवक्ष्यते तदा त्रिलोप इत्यर्थः ।

### मधुमती

अत्र सप्तमीति । 'सप्तम्युपमानपूर्वपदस्य बहुब्रीहेः उत्तरपदलोपश्च' इति श्रूयते । तस्यायमर्थः—सप्तम्यन्तं उपमानं च पूर्वपदं यस्य तस्य शब्दान्तरेण बहुब्रीहिः । तत्र पूर्वसमासावयवस्य उत्तपदस्य च लोपः इति ।

तदिह—मृगनयने इव नयने यस्याः सा मृगनयना इत्यत्र मृगनयनरूपसमस्तपदावयवभूतं उपमानवाचकं च नयनपदं लुप्यते इति धर्म-उपमा-वाचक-उपमानलोपात् त्रिलोपवतीयमित्यर्थः ।

## विस्तारिका

त्रिलोप इति । उपमेयवादिसमानधर्मास्त्रयः ।

तरुणिमनीत्यादि । तरुणिमनि यौवने कृतावलोकना दत्तदृष्टिः । यौवनपरिचयमात्रेणेत्यर्थः । अथवा तरुणिमनि मतिकृतं विरचितमवलोकनं यया । यौवनसम्बन्धेन सर्वतो दत्तदृष्टिरित्यर्थः । ललिताय सर्वजनमनोहराय, विलासाय विभ्रमाय विलब्धो दत्तो विग्रहः शरीरम् । विसरः समूहः । मृगस्य नयने इव चले नयने यस्या इति विग्रहः ।

चञ्चलादिपदस्य कुतो लोप इत्यत आह—सप्तम्युपमानेत्यादि । यदा यन्मते समासश्च लोपश्च तन्मते इदमुदाहरणमित्यर्थः ।

'सप्तम्युपमानपूर्वपदस्य बहुब्रीहिरुत्तरपदलोश्च' इति वार्त्तिकम् । पाणिनिसूत्रम् ।

वार्त्तिकस्यायमर्थः— सप्तम्यन्तमुपमानं च पूर्वमिदं यस्य, इवादिसमानधर्मबोधकपदस्य पदान्तरेणोपमेयबोधकेन बहुब्रीहिः । उत्तराण्युपमानपदानि वादिसमानधर्मोपमेयबोधकानि, तेषां लोप इति त्रिलोपता । अत एव यदेति पदं मूले सङ्गच्छत ।

कातन्त्रे तु मृगपदं तन्नयनपरमिति तल्लक्षणाङ्गीकारे नेदमुदाहरणमिति यदापदोन्यासः ।

## सारबोधिनी

त्रिलोप इति । तरुणीति । तरुणिमनि सति मृगनयना मुनेर्मनो हरतीति सम्बन्धः । वस्तुतस्तु तरुणिमनि विषये कृतावलोकनेत्यर्थः । [विलब्धविग्रहा इति पाठे] विलब्धो दत्तः । विसरः समूहः । अत्र मृगनयने इव मनोज्ञे नयने यस्या इति समासः । अत्रेवाद्युपमानसमानधर्माणां त्रयाणां लोपः । ननु मृगशब्दो यदा मृगनयनवृत्तिर्लक्षयति तदा मृगनयने एव नयने यस्या इति रूपकम्, समास विषये नोपमेति कथमिदमुदाहरणं सङ्गच्छत इत्यत आह अत्रेति । सप्तम्युपमानपूर्वपदस्य बहुब्रीहिरुत्तरपदलोपश्चेति पाणिनिसम्मतम् । अस्यार्थः सप्तम्यन्तमुपमानं पूर्वपदं यस्येवादिसमानधर्मबोधकपदस्य तस्य पदान्तरेणोपमेयबोधकेन बहुब्रीहिरुत्तराणीवादिसमानधर्मोपमानबोधकानि तेषां लोप इत्यनेन यदैषां लोपस्तदेत्यर्थः । अत एव यदेति पदं मूले सङ्गच्छते ।

## काव्यप्रदीपः

त्रिलोपे तूपमेयातिरिक्तत्रितयलोप एव संभवतीत्युक्तम् । सापि समासमात्रे । अन्यत्र बोधकाभावात् । तत्राप्यार्थ्येव । इवादेर्लोपादित्येकविधैवेत्याह—

**त्रिलोपे च समासगा ॥ ४ ॥**

यथा—

**'तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा।**
**स्मरशरविसरचितान्तरा मृगनया नयते मुनेर्मनः ॥'**

अत्र यदि मृगशब्देन लक्षणया तल्लोचने विवक्ष्येते तदा नेदमुदाहरणम्। यदा तु मृगलोचने इव नयने यस्या इत्यर्थो विवक्ष्यते तदा 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' इत्यनेन मृगलोचनेत्युपमानपूर्वपदस्य नयनशब्देन बहुव्रीहावुपमानवानवाचिनि मृगलोचने इति पूर्वपदे उत्तरपदभूतस्य लोचनशब्दस्य लोपे उपमेयभूतस्य नयनमात्रस्योपादानादिदमुदाहरणम्।

### काव्यप्रकाशखण्डनम्

धर्मवाद्युपमानानां त्रयाणां लोपे लुप्तमाह—त्रिलोप इति। विलासाय विलब्धो दत्तो विग्रहो यया। विशरारितं विभिन्नम्। 'स्मरशरविशरांचित' इति पाठान्तरम्। 'मृगस्य नयने' इति प्रथमं तत्पुरुषः, ततो 'मृगनयने इव नयने यस्याः' इति सप्तम्युपमानोपमानपूर्वस्य समास उत्तरपदलोपश्चेत्यत्र गुणद्योतकोपमानानां त्रयाणां लोपः। यदा तु मृगशब्द एव लक्षमया मृगनयनवृत्तिः, तदा मृग एव नयने यस्या इति रूपकसमासस्यैष विषयः, न त्वस्य उपमासमास्येति नास्ति स्थानमुपमायास्त्रिलोपिन्याः। अत एवोक्तं 'यदा समासलोपौ' इति। 'तदा त्रिलोपे समासगा इति योगः ॥ केचित्तु 'अयः शूलिकः' इत्यादौ क्रूराचारोपमेयस्य तैक्ष्ण्यधर्मस्य इवादीनां च लोपे त्रिलोपिनीमुपमामाहुः, तन्न युक्तमित्याह वृत्तिकारः—क्रूरस्येति। क्रूराचारोऽर्थान्वेषणोपायादिः अयः शूलतयाऽध्यवसीयत इत्यतिशयोक्तिरेवेयम् ॥

### आदर्शः

त्रिलुप्तामेकामाह—त्रिलोपे चेति। तरुणिमनीति। मृगनयना मुनेरपि मनो नयते हरति। कीदृशी? तरुणिमनि तारुण्ये सति कृतपुरुषविषयावलोकना, ललितविलासेन प्राप्तशरीरा, स्मरशराणां विसरेण पातेनाऽऽचितमनस्का च। मृगनयनमिव नयनं यस्या इति समासे 'सप्तम्युपमानलोपः पूर्वपदप्रकृतिस्वरत्वञ्चे'ति (वा० २/२/२४) पाणिनिसूत्रेण उपमानीभूतनयनपदलोपः। एवं दैर्ध्यचापल्यादिधर्मस्य इवादेश्च लोप इति त्रिलुल्पतता। अत्र कलापमते मृगपदमेव मृगनयने लाक्षणिकम्, अतो न त्रिलोप इति मंतभेदं सूचयन्नाह—यदेति।

### सुधासागरः

उदाहरणम्—अरातीति।

अरातीनां शत्रूणां विक्रमस्य पराक्रमस्यालोके दर्शने सति, विकस्वरे विकसनशीले विलोचने यस्य स तथोक्तः। कृपाणेन खड्गेनोदग्र उद्भटो दोर्दण्डो यस्य तादृशः, स वीरः सहस्रायुधीयति सहस्रमायुधानि यस्य तमिवात्मानमाचरति इति 'उपमानादाचार' इति कर्मणि क्यच्। आयुधसहस्रनिर्वाह्यस्य प्रतिपक्षोत्सारणस्यैकेन कृपाणेन निर्वाहाद् वीररसप्रकर्ष इति द्रष्टव्यम्।

अत्र यद्यपि विशेषणद्वारोपात्तः कर्तैवोपमेयस्तथापि न तथात्वेन, किन्तु कर्मत्वेन, अन्यथा क्यचोऽसङ्गतत्वापत्तेः। तथा च आत्मानं सहस्रायुधीयतीत्यर्थ इत्युपमेय आत्मा लुप्त इति यथोक्तोदाहरणमेतत्। 'हंसायते'

इत्यादौ कर्तैवोपमेयः, तस्य चानुपादाने वाक्यमेव न पर्याप्यते इति विशेषात् क्यङि नेयं सम्भवति अतस्तद्भेदो नोक्त इति । यद्यपि द्विलोपे अन्यदपि भेदत्रयं सम्भवति । यथोपमानोपमेययोः, उपमानवाद्योः, उपमानधर्मयोरिति, तथापि तेषूपमायाः प्रसङ्ग एव नास्तीति न न्यूनत्वमाशङ्कनीयम् । तदेतद् वृत्तिकृदाह—अत्रात्मा उपमेय इति ।

तरुणिमनि तारुण्ये कृतमवलोकनं यथा सा किशोरीत्यर्थः । ललितविलासेभ्यो वितीर्णः समर्पितो विग्रहो देहो यया, 'सहासविग्रहा' इति पाठे ललितविलासैः सहासो विलसनशीलो विग्रहो यस्याः सा, स्मरशरेण कामबाणेन विशरारितं किञ्चिद्विदारितप्रान्तरमन्तःकरणं यस्यास्तादृशी मृगनयना मुनेरपि मनो हरति तपस्विनोऽपि चित्तमाकर्षतीत्यर्थः । अपरवक्त्रं छन्दः । 'अयुजि ननरला गुरुः समे न्यजमपरवक्त्रमिदं ततो जरौ' इति लक्षणात् ।

अत्र यदि मृगशब्देन बहुव्रीहिलक्षणया तल्लोचने विवक्ष्येते तदा नेदमुदाहरणम् । यदा तु मृगलोचने इव नयने यस्या इत्यर्थो विवक्ष्यते, तदा 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' इत्यनेन मृगलोचनेत्युपमानपूर्वपदकस्य नयनशब्देन सह बहुव्रीहौ उपमानवाचिनि मृगलोचने इति पूर्वपदे उत्तरपदभूतस्य लोचनशब्दस्य लोपे उपमेयभूतस्य नयनमात्रस्योपदानादिदमुदाहरणम् । मृगपदं तन्नयने लाक्षणिकमिति कातन्त्रमतम् । सप्तम्युमानेत्यादि पाणिनिसूत्रम् (?) तस्यार्थः । सप्तम्यन्तमुपमानं च पूर्वपदं यस्य इवादिसमानधर्मबोधकपदस्य तस्य पदान्तरेण उपमेयबोधकेन बहुव्रीहिः, उत्तराणां च इवादिसमानधर्मोपमानबोधकानां लोप इति । एतेन यदैषां लोपस्तदेत्यर्थः । अत एव यदेति पदं मूले सङ्गच्छत इति ध्येयम् । तदेतत्सर्वमभिप्रेत्य श्रीवृत्तिकृदाह—अत्रसप्तम्युपमानेत्यादि ।

क्रूरस्याचारस्यायःशूलतयाध्यवसायात् अयःशूलेनान्विच्छति 'आयःशूलिकः' इत्यतिशयोक्तिर्न तु क्रूराचारोपमेयतैक्ष्ण्यधर्मवादीनां लोपे त्रिलोपेयमुपमा।

एवमेकोनविंशतिर्लुप्ताः पूर्णाभिः सह पञ्चविंशतिः ॥

---

### सङ्केतः

आयश्शूलिकः इति। अत्र—अर्थान्वेषणोपायादिः क्रूराचारः अयश्शूलतया अध्यवसीयते। तथा अत्र अयश्शूलेनेत्युपमानं शब्दोक्तम्। शेषं तु तैक्ष्ण्यादिधर्म-क्रूराचारोपमेय-इवादिरूपं त्रयमपि अर्थसामर्थ्यगम्यम्। तेन निगीर्याध्यवसानरूपा अतिशयोक्तिरियम्। न तु उपमा। उपमानेन अयश्शूलेन अर्थान्वेषणोपायस्य उपमेयस्य तद्भावाध्यवसानेन आपादिताभेदस्य प्रतीयमानत्वात्। भाष्यकारोऽप्याह—'न तिङन्तेनोपमानमस्ति' इति। आख्यातं नोपमानं स्यादित्यर्थः। एवं वर्तमानसामाप्यादावपि अतिशयोक्तिभेदत्वं यथाप्रतीति वाच्यम्।

एवं च पूर्णायाः भेदा षट् (६)। लुप्तायास्तु एकोनविंशतिः (१९)। तथाहि—धर्थस्य लोपे पञ्च (५)। उपमानलोपे द्वौ (२)। वादिलोपे षट् (६)। धर्मवाद्योर्लोपे द्वौ (२) धर्मोपमानलोपे द्वौ (२)। वाद्युपमेययोर्लोपे एकः (१)। त्रयाणां लोपे एकः (१) इति।

### बालचित्तानुरञ्जनी

अन्येषां मते त्रिलोपा मा भूदिति तात्पर्ये केचिदायःशूलिक इति उपमेयसाधारणधर्मवाचकलोपे त्रिलोपवतीमुपमामुदाहरन्ति, तन्मतं दूषयितुमाह क्रूरस्येति। अयःशूलेनान्विच्छतीत्यत्रार्थे 'अयः शूलदण्डाजिनाभ्यां ठक्ठञावि'ति ठक्। अर्थार्जनोपायरूपक्रूराचारस्योपमेयस्य अयः शूललक्षणेनोपमानेन निगीर्याध्यवसानादतिशयोक्तिः अलङ्कारः, न तु क्रूराचाररूपस्योपमेयस्य तैक्ष्ण्यलक्षणस्य धर्मस्य इवादेश्च लोप इति चिरन्तनविवक्षिता त्रिलोपवती उपमेयत्यर्थः। उक्तमुपमाप्रपञ्चं सङ्कलय्य दर्शयति एवमिति। धर्मलोपे पञ्च। उपमानानुपादाने वाक्यगा समासगा चेति द्वे इति सप्त। वादेर्लोपस्य समासे कर्मक्यचि आधारक्यचि क्यङि कर्तृणमुलि कर्मणमुलि चेति षट् इति त्रयोदश। धर्मवाद्योर्लोपे क्विप्गा समासगा चेति द्वे इति पञ्चदश। धर्मोपमानयोर्लोपे समासगा वाक्यगा चेति सप्तदश। क्यचि वाद्युपमेयलोपे एकेत्यष्टादश। त्रिलोपे समासगा एकेति एकोनविंशतिर्लुप्ताभेदाः पूर्णाभेदाः षडिति पञ्चविंशतिरुपमाभेदा इत्यर्थः।

### काव्यादर्शः

न तु क्रूरेति। तथा हि 'अयःशूलम्' उपमानं; 'अर्थान्वेषणोपायः' उपमेयः, तैक्ष्ण्यादिर्धर्मः, उपमानोपमेयभावश्चेति चतुष्टयं गम्यते, तन्मध्याच्च शब्दस्पष्टमुपमानम् 'अयःशूलेन' इति, शिष्टस्य तु त्रयस्य अर्थसामर्थ्याद् अवगतिरिति त्रिलोपे नोपमा। एवं 'दाण्डाजिनिकः' इत्यादावपि। तथा हि दम्भस्य दण्डाजिनतयाध्यवसितस्य

जीवनक्रियाकारणत्वं दण्डाजिनेन अर्थान् अन्विच्छति दम्भेन जीवतीति दाण्डाजिनिको दाम्भिक इत्यर्थः । भाष्यकारस्यापि अतिशयोक्तित्वमेवात्र इष्टं, यदाह—'न तिङन्तेनोपमानमस्ति' । आख्यातं नोपमानं भवतीत्यर्थः । एवं वर्तमानसामीप्यदावपि अतिशयोक्तिभेदत्वं यथाप्रतीति योज्यम् । एवं धर्मलोपे पञ्च, उपमानलोपे द्वौ, वादिलोपे षट्, धर्मवाद्योर्लोपे द्वौ, धर्मोपमानलोपे द्वौ, वाद्युपमेयलोपे एकः, त्रिलोपे एकः, सर्वमीलने एकोनविंशतिः, पूर्णाभेदाश्च षट् ।

### विवेकः

क्रूराचारश्वासावुपमेयश्चेति कर्मधारयः । अतिशयोक्तिरियमित्यत्र बीजमाह—क्रूरस्याचारस्येति । अर्थार्जनोपायस्य साहसरूपस्यायःशूलतयाऽध्यवसायात् । तदेवमेकस्य लोपे वाक्यगम्यास्तिस्रः, समासगम्याश्चतस्रः, तद्धितगम्यैका, सुबवृत्तिप्रत्ययगम्यास्तिस्रः, कृद्गम्ये द्वे इति त्रयोदश । द्विलोपे सुब्धातुगम्ये द्वे, वाक्यगम्यैका, समासगम्ये द्वे इति पञ्च । त्रिलोपे त्वेकैव—इत्येकोनविंशतिर्लुप्ता । पूर्णाया भेदाः षड् दर्शिता एव, अतस्तैः सह पञ्चविंशतिर्भेदाः ।

### दीपिका

समासो लोपश्च यदा तदैवं निष्पाद्यत इति वाक्यशेषः । अत्र केचिदुपमेयधर्मवादिलोपः त्रिलोपप्रकारान्तरमस्तीति मन्यन्ते तान् प्रत्याह—क्रूरस्येतिं । अनुहरति व्यवहरति । अतिशयोक्तिरिति । विषयिणा विषयनिगरणमध्यवसायः । स च व्यापारप्रधानो व्यापार्यप्रधानश्च यथायथमुत्प्रेक्षाऽतिशयोक्तिविषयः । अयं चात्र द्वितीयः पर्यायो न तु सादृश्यमात्रप्रतीतिविश्राम इति नोपमेत्यर्थः ।

एवं पूर्वोक्तरीत्यैकलोपे पञ्च, द्विलोपे त्रयोदश, त्रिलोप एकेत्यूनविंशतिः । पूर्णाभिः षड्भिः । अभिन्न एकपदबोध्ये । न त्वेकत्र तदीये प्रतिसम्बन्धिस्थानेऽभिन्नरूपत्वात् ।

### दर्पणः

संप्रति आयः शूलिक इत्यत्र त्रिलोपे लुप्तोपमाशंकां निरस्यति—क्रूरस्येनि । विषयनिगरणेन विषयिणोऽभेदप्रतिपत्तिवध्यवसानं [रध्यवसानं] तस्य चात्र विरुद्धत्वादतिशयोक्तिरित्यर्थः । उपमा [तु] सादृश्यमात्रे प्रत्यायनविश्रान्ता । एवमुक्तप्रकारेण । एकलोपे त्रयोदश, द्विलोपे पञ्च, त्रिलोपे द्वे । कैवं इति [एवमिति] तस्मिन् साधारणे धर्मे एकस्य उपमेयस्य तथोत्तरमुत्तरोत्तरक्रमेण पूर्ववत् मालोपमावत् तरङ्गिताः, सम्पदोत्तरमानिताः प्रभावो माहार्थ्यप्रकर्षः [माहात्म्यप्रकर्षः] ।

### साहित्यचूडामणिः

त्रिलोपामन्येषामतिशयोक्तितयोदाहर्तुमाह—क्रूरस्येति । आयःशूलिक इत्यत्रायःशूलेनान्विच्छति । 'अयः शूलदण्डाजिनाभ्यां टक्ठञौ'(५-२-७६) इति ठगुत्पत्तिः । अतिशयोक्तिरिति । नोपमा, अर्थार्जनोपायरूपस्य क्रूराचारस्योपमेयस्य अयः शूललक्षणेनोपमानेन निगीर्याध्यवसानात् । क्रूरेति । क्रूराचाररूपस्योपमेयस्य तैक्ष्ण्यलक्षणस्य धर्मस्य वादेश्च लोप इति चिरन्तनानां विवक्षा ।

उक्तमुपमाप्रपञ्चं सङ्कलयति—एवमिति। पूर्णाभिः सह, षड्भिरिति शेषः।

### सम्प्रदायप्रकाशिनी

नन्वेवम् 'आयः शूलिक' इत्यादावपि त्रिलोपः प्रसक्त इत्यत आह—क्रूरस्याचारस्येत्यादि। क्रूर एव ह्याचारः परोपद्रवाधायित्वेनायश्शूलतयाध्यवसीयते। तथा च सत्ययश्शूलेनान्विच्छति स्वार्थमिति 'आयः शूलिकः खल' इत्यतिशयोक्तिरेवैषा, न पुनः क्रूराचारलक्षणस्य (उपमेयस्य तैक्ष्ण्यरूपसाधारण-) धर्मस्य वादीनां च लोपे त्रिलोपा।

उपमाभेदसङ्ख्यां निगमयति—एवमेकोनविंशतिरित्यादि। धर्मलोपे पञ्च, उपमानलोपे वाक्यसमासगतत्वेन द्वौ, वादिलोपे तु समासकर्मक्यजादिगत्वेन षडित्येकलोपे त्रयोदश। धर्मोपमाप्रतिपादकलोपे क्विप्समासगतौ द्वौ, धर्मोपमानलोपे वृत्तिवाक्यगौ द्वौ, उपमाप्रतिपादकोपमेयलोपे क्यच्येकः, त्रिलोपे समासगतस्त्वेक इति लुप्ता एकोनविंशतिः पूर्णाः षडिति सम्भूय पञ्चविंशतिः।

### मधुमती

एवमिति। साधारणधर्ममात्रलोपे पञ्च (५), उपमानमात्रलोपे द्वे (२), उपमावाचकशब्दमात्रलोपे समासादिभेदेन षट् (६), क्विपसमासगतत्वेन द्वे (२), धर्मेवाद्योर्लोपे द्वे (२), क्यचि वाद्युपमेययोर्लोपे एका (१), त्रिलोपे चैका (१) इति आहत्य एकोनविंशति, (१९) लुप्ताभेदाः, षट् (६) च पूर्णाभेदाः इति मिलित्वा पञ्चविंशतिः (२५) उपमाभेदाः इत्यर्थः।

### विस्तारिका

आयः शूलिक इति। त्रिलोपोदाहरणं दूषयति—क्रूराचारेत्यादि। अन्विच्छति व्यवहरति। अतिशयोक्तिप्रकृतस्य दारुणाचारस्यायः शूलत्वाध्यवसानरूपा। एषूदाहरणेषु वादीनां लोपः। क्वचित् सौत्रः, क्वचनान्यलभ्यत्वेनानुपादानम्। मृगनयनेत्यादौ पूर्वः।

अत्र हि उपमानपदभाविना नियमेन क्यचा स्वप्रकृतेरुपमानतावगतौ तत्प्रतिपादकस्य वादेरप्रयोगः, अन्यलभ्यत्वात्। आयः शूलिक इत्यत्र शूलद्वयाभावः स्फुट एवेत्याह—न त्विति। उपपादकविरहादित्यर्थः।

एकोनेत्यादि। श्रौत्यार्थ्योर्वाच्यसमासगामित्वेन, आर्थीमात्रस्य च तद्धितमात्रगामित्वेन धर्मलोप पञ्च, उपमानानुपादाने वाक्यसमासगामित्वेन द्वे, इवादिलोपे समास-क्यच्-क्यङ्-णमुल्-गामित्वात् षडित्येकैव लोपे त्रयोदश। धर्मवादिलोपे क्विप्समासगामित्वेन द्वे, धर्मोपमानानुपादाने तथैव द्वे, वाद्युपमेयानुपादाने एक इति द्विलोपे पञ्च, त्रिलोपे समासमात्रगामित्वादेकेति लुप्ता ऊनविंशतिभेदा। पूर्णाभिर्वाक्यसमासतद्धितगामिनीभिः श्रौत्यार्थीत्वभेदेन षड्भिः पिण्डने पञ्चविंशतिः। संख्याभिधानमाधिक्यव्यवच्छेदनपरम्, अन्येषामत्रैवान्तर्भावात्।

### सारबोधिनी

परसंमतं त्रिलोपोदाहरणं दूषयति क्रूरस्याचारस्येति। अन्विच्छति व्यवहरति। न तु क्रूराचारेत्यादि। क्रूराचारश्चासावुपमेयश्चेति कर्मधारयः। तथा चात्र क्रूराचारस्यायःशूलाध्यवसाय एव नोपमा, एतेषां त्रयाणां

लोपेऽनुशासनाभावात् । एकोनेति । धर्मलोपे पञ्च । उपमानलोपे द्वे । वादिलोपे षट् । धर्मवादिलोपे द्वे । वाद्युपमेयलोपे एकः । त्रिलोप एक इति ।

## काव्यप्रदीपः

केचित्तु "उपमानमात्रोपादानेऽपि त्रिलोपा संभवति । यथा 'अयमायः शूलिकः' इति । अत्रायः शूलपदेन क्रूर आचार उपमेयः, तीक्ष्णत्वादिकं च साधारणो धर्मः । न च तयोरेकमप्युपात्तम् नापीवादिः" इति मन्यन्ते । तन्न युक्तम् । यतः क्रूरस्याचारस्यायः शूलतयाध्यवसानादतिशयोक्तिरियं न तूपमा । अन्यथाध्यवसानमूलातिशयोक्तेर्निर्विषयत्वापत्तेः ।

तदेवं धर्मलोपे पञ्च । उपमानलोपे द्वौ । द्योतकलोपे षट् । धर्मवाद्योर्लोपे द्वौ । धर्मोपमानयोर्लोपे द्वौ । द्योतकोपमेयलोपे चैकः । त्रिलोपे त्वेकः । इत्यूनाविंशतिर्लुप्ताभेदाः पूर्णा भेदाश्च षट् । इत्येवं पञ्चविंशतिः ।

## आदर्शः

मृगनयनेत्यत्र त्रिलोपाभावे 'आयःशूलिक' इत्यत्रैव त्रिलोपं केचिदाहुस्तत्र त्वतिशयोक्त्यलङ्कार एव नोपमेत्याह—क्रूस्येति । अयः शूलेनेति क्रूराचाररूपेणायः शूलेनेत्यर्थः । अतिशयोक्तिरिति । उपमानेनायः शूलेन उपमेयक्रूराचार निगरणरूपा । त्रिलुप्तोपमामत्र निरस्यति—न त्विति । एवमेकोनेति । एक लुप्तास्त्रयोदश, द्विलुप्ताः पञ्च, त्रिलुप्तैकेति ।

## सुधासागरः

एकदेशिमतं दूषयति—क्रूरस्येत्यादि । अयमाशयः—केचित्तूमानमात्रोपादानेऽपि त्रिलोपा सम्भवति । यथा—'अयमायः शूलिक' इति । अत्रायःशूलेन क्रूराचार उपमेयस्तीक्ष्णत्वादिकं च साधारणो धर्मः, न च तयोरेकमप्युपात्तम्, नापीवादिरिति । मन्यन्ते । तन्न युक्तम्, यतः क्रूरस्यायः शूलतयाऽध्यवसानादतिशयोक्तिरियं न तूपमा । अन्यथा ऽध्यवसानमूलातिशयोक्तेर्निर्विषयत्वापत्तेः । एवमित्यादि । तदेवं धर्मलोपे पञ्च । उपमानलोपे द्वौ । द्योतकोपमेययोर्लोपे चैकः । त्रिलोपे त्वेक इत्यूनविंशतिर्लुप्ताभेदाः । पूर्णभेदाश्च षडित्येवं पञ्चविंशतिरित्यर्थः ।

**अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता।**

**मम्लौ साथ विषादेन पद्मिनीव हिमाम्भसा ॥ ४१० ॥**

---

### सङ्केतः

अनयेनेति । अत्र म्लानत्वं अभिन्नः एको धर्मः ।

### बालचित्तानुरञ्जनी

मालोपमां दर्शयति अनयेनेति । अनीत्या राज्यश्रीरिव, दैन्येन मनस्वितेव, हिमाम्भसा पद्मिनीव सा कामिनी विषादेन मम्लौ । अत्र सर्वम्लानिलक्षणो धर्मो न भिद्यत इत्याह इत्यभिन्न इति ।

### काव्यादर्शः

मालोपमादयस्तु आनन्त्याद् उपमायाश्च नातिरिच्यन्त इति न पृथग् लक्षिता इत्याह—'अनयेनेवे'ति । अत्र म्लानित्वलक्षणे एकस्मिन् धर्मे ।

### विवेकः

अनयेनेवेत्यादि—मानिनोगता म्लानिः सर्वत्र राजलक्ष्म्यादावभिन्नेति साधारणधर्मस्यानुगामितयैकरूपेण निर्देशः । अनयादिभ्यश्च विषादाद्युपमानभूतेभ्यः पृथक् पृथगिवशब्दप्रयोग इति विस्तरेणोपमितेर्मालोपमाभेदोऽयम् । मम्लावित्येकेन दीपस्थानीयेन दीपनाद्दीपकमत्रानुप्रविष्टं प्रतीयमानं द्रष्टव्यम् ।

### साहित्यचूडामणिः

मालोपमामुपदर्शयति—अनयेनेति अत्र म्लानिलक्षणो धर्मो न भिद्यते ।

### सम्प्रदायप्रकाशिनी

अथ वैचित्र्यान्तरस्य परिगणितभेदेष्वन्तर्भाव इति सोदाहरणं दर्शयति—अनयेनेत्यादि । इयमुपमानवाक्यानां मालरूपेणावस्थानान्मालोपमा म्लानिरूपाभिन्नधर्मा ।

### मधुमती

अनयेनेति । अभिन्ने इति । अत्र म्लानेः साधारणधर्मस्य अभिन्नत्वादित्यर्थः ।

### विस्तारिका:

ननु वक्ष्यमाणभेदे सम्भवति कथमनतिरिक्तत्वमित्यत आह—अनयेनेवेति । मनस्विता पाण्डित्यम् ।

अभिन्ने एकशब्दबोधकत्वेन सर्वोपमानगते । साधारणे उपमानोपमेयोभयनिष्ठे । भिन्ने विजातीयशब्द-प्रतिपाद्यतया प्रत्युपमानं विश्रान्ते ।

### सारबोधिनी

ननु मालाद्यन्यभेदसंभवे कथमेतावन्त एवेत्यत आह अनयेनेत्यादि । अभिन्न इति । एकशब्दबोध्यत्वेन सर्वोपमानगत इत्यर्थः ।

### काव्यप्रदीपः

नन्वन्येऽप्युपमाभेदाः संभवन्ति । तथाहि—एकस्यैवोपमेयस्य बहूपमानसंबन्धोमालोपमा । सा च द्विधा—साधर्म्यस्याभेदात्तद्भेदाच्च । तत्राद्या यथा—

**'अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।**
**मम्लौ सा च विषादेन नलिनीव हिमाम्भसा ॥'**

अत्र म्लानिरेव सर्वोपमानसाधर्म्यम् ।

### काव्यप्रकाशखण्डनम्

**अनयेनेव राजश्रीर्दैन्येनेव मनस्विता ।**
**मम्लौ साऽद्य (थ?) विषादेन पद्मिनीव हिमाम्भसा ॥**

### आदर्शः

सूत्रे विशिष्य मालोपमारसनोपमयोरनुक्तेर्बीजं दर्शयितुं द्विविधां मालोपमां द्विविधां रसनोपमाञ्च दर्शयति—अनयेनेवेति । इत्यभिन्ने इति, म्लानेरेवोपमात्रधर्मत्वात् ।

### सुधासागरः

ननु अन्येप्युपमाभेदाः सम्भवन्ति । तथा हि—एकस्यैवोपमेयस्य बहूपमानसम्बन्धे मालोपमा, सा च द्विधा । साधर्म्यस्याभेदात्तद्भेदाच्च । तत्राद्या यथा—'अनये'नेति ।

इत्यभिन्ने साधारणे धर्मे,

**ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम्।**

**प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी॥ ४११॥**

इति भिन्ने च तस्मिन् एकस्यैव बहूपमानोपादाने मालोपमा।

---

**सङ्केतः**

ज्योत्स्नवेति। अत्र नयनानन्दहेतुत्वात् नयनानन्दः इति हेत्वलङ्कारः पराशयेन। नयनानन्दादिकः भिन्नः नैको धर्मः। मालोपमेति। माला-स्रक्, तद्रूपा उपमा, सा तथा। यथा तन्तावेकस्मिन् अनेकपुष्परत्नादियोगः, तथा एकस्मिन् उपमेये अनेकोपमानयोगः इति। यद्वा—उपमानां माला = पङ्क्तिः, तया उपमेति मालोपमा।

**बालचित्तानुरञ्जनी**

धर्मभेदे मालोपमामुदाहरति ज्योत्स्नेति। नितम्बिनी नारी चन्द्रिकेव नयनानन्दभूता सुखे मदकारणम्। प्रभुतेव समाकृष्टः सर्वलोको यया। अत्र नयनानन्दकरत्वमदमरणत्वादिधर्मः प्रत्येकं भिद्यत इत्याह भिन्ने च तस्मिन्नति। साधारणधर्मे। मालोपमाया लक्षणमाह एकस्येति। एकस्यैवोपमेयस्य बहूपमानोपादाने सा मालोपमेत्यर्थः।

**काव्यादर्शः**

'ज्योत्स्नेव' इत्यत्र तस्मिन् धर्म नयनानन्दादिके भिन्नेऽनेकस्मिन् मालोपमा, रसनासादृश्याद् रंसनोपमा च न लक्ष्यत इत्याह—इत्यत्र यथोत्तरेति।

**विवेकः**

ज्योत्स्नेवेत्यादि—भिन्ने वा तस्मिन्निति साधारणधर्मे। अत्र ज्योत्स्नाऽऽदीनां प्रत्येकं नयनानन्दनत्वादिः साधारणो धर्मो भिन्नः। नितम्बिनी, तु सर्वसाधारणधर्माश्रयेत्येकस्यास्तस्या विस्तरेणोपमितेरेयं मालोपमा। तदुक्तं (रु. का. ८/२५)—मालोपमेति सेयं यत्रैकं वस्त्वनेकसामान्यम्। उपमीयेतानेकैरुपमानैरेकसामान्यैः॥ इति।

**साहित्यचूडामणिः**

ज्योत्स्नेति। अत्र नयनानन्दत्वमदकारणत्वादिको धर्मः प्रत्येकं भिद्यत इति विशेषः।

तस्मिन्निति। साधारणधर्मे।

### सम्प्रदायप्रकाशिनी

ज्योत्स्नेवेति । इयं नयनानन्दत्वमदकारणत्वादिभिन्नधर्मा

### मधुमती

भिन्ने इति । अत्र आनन्दादयः भिन्ना एव साधारणधर्माः । एवं च एकस्यैव । उपमेयस्य अनेकोपमानोपादानात् मालोपमा । साधारणधर्मस्य एकत्वं अनेकत्वं वेति न विशेषः । यथोत्तरमिति । उत्तरोत्तरं उपमेयस्य उपमानत्वं यत्र सा रशनोपमा । साधारणधर्मभेदाभेदौ च अविवक्षितावित्यर्थः ।

### विस्तारिका

माला यथा क्वचिदेकजातीयैः क्वचिद्विजातीयैश्च कुसुमैर्घटिता, तथा सजातीयैर्विजातीयैर्वा बहुभिरुपमानैर्घटितोपमा मालोपमेत्यर्थः ।

### सारबोधिनी

ज्योत्स्नेति । यथा माला काचिदेकजातीयैः कुसुमंः काचिद् विजातीयैर्ग्रथिता तथा सजातीयैर्विजातीयैर्बहुभिरुपमानैर्घटितेयमित्यर्थः ।

### काव्यप्रदीपः

अन्त्या यथा—

**'ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।**
**प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥'**

अत्र ज्योत्स्नादीनां नयनान्दहेतुत्वादयः साधारणर्धा भिन्नाः ।

### आदर्शः

ज्योत्स्नेवेति । नयनान्दो नयनानन्दजनिका । शुब्धसारोपाऽत्र लक्षणा । अत्र प्रत्युपमानं नयनान्दत्वादयो भिन्ना धर्माः । माला न लक्षितेत्यग्रेऽन्वयः । रसनोपमाद्वयमपि दर्शयति—यथोत्तरमिति । पूर्वोपमायां यदुपमेयमुत्तरोपमायां तस्योपमानत्व इत्यर्थः ।

### सुधासागरः

अत्र म्लानिरेव सर्वोपमानसाधर्म्यम् । तदुक्तमभिन्ने साधारणे धर्मे इति । अन्त्या यथा—ज्योत्स्नेवेति ।

अत्र ज्योत्स्नादीनां नयनानन्दहेतुत्वादयः साधारणधर्मा भिन्नाः । माला यथा काचिदेकजातीयकुसुमैर्ग्रथिता तथा बहूपमानघटितोपमेति भावः ।

**यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे,**

**अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः ।**

**भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरति विमला ॥ ४१२ ॥**

---

**सङ्केतः**

अनवरतेति । अत्र विमलत्वं अभिन्नो धर्मः ।

**काव्यादर्शः**

'अनवरते'त्यत्र विमलत्वलक्षणेऽभिन्नधर्मत्वे तु' मतिरिवे'ति ।

**विवेकः**

अथ रशनोपमामाह यथोत्तरमिति । पूर्ववदिति मालोपमावदियमपि द्विप्रकारा । अत्राभिन्ने साधारणधर्मे यथा अनवरतेत्यादि । अत्र भणितिमतिचेष्टा कीर्तीनामतिविमलत्वलक्षणः साधारणधर्म एकः । तत्र भणितिमतिप्रभृतीनामुपमेयानामुत्तरमुत्तरं प्रत्युपमानत्वे रशनान्यायेन पश्चाद्वलनया पृथक् पृथगिवशब्दस्य न्यास इतीयं रशनोपमा । भिन्ने साधारणधर्मे यथा अनवरतेत्यादि—अत्र माधुर्यादिः साधारणधर्मः प्रत्येकं भिन्नः । ग्रथना च पूर्ववदेव ।

**दीपिका**

एवमत्र 'शुकमुखद्युति' इत्यत्र धर्मोपमानेवादिलोपः, 'मत्तहूण' इत्यादौ धर्मलोपः, समास इत्यादौ स्वयमूह्यम् । एवकारो वैचित्र्यस्फोरणार्थः । भिन्ने भिन्नशरीरेऽभिन्नपदबोध्ये च । यथोत्तरमिति । उत्तरोत्तरक्रमेणेत्यर्थः । पूर्ववन्मालोपमावत् । अभिन्नधर्मत्व इति । अत्राभिन्नपदानन्तरं भिन्नपदाभावो लेखकप्रमादात् । क्वचिच्च तथाविध एव पाठः ।

केचित्तु निरनुबन्ध्यमानोदाहृतिमध्ये भिन्नधर्मत्वेनेति पठन्तीति त्रिविध एव पाठः । चन्द्रवदनेत्येकपदगतत्वं चन्द्र इव वदनमस्या इत्यादावेकवाक्यगतत्वमित्यादि स्वयमूह्यम् ।

**साहित्यचूडामणिः**

मालोपमाया लक्षणमाह—एकस्यैवोपमेयस्य बहूपमानोपादाने मालोपमा । रशनोपमाया लक्षणमाह—यथोत्तरमिति । पूर्वपूर्वस्योपमेयभूतस्य उत्तरोत्तरकक्ष्यायामुपमानतयोपादाने । पूर्ववत् मालावत् । उदाहरति—अनवरतेति । अत्र वैमल्यं सर्वत्र समानधर्मः ।

### सम्प्रदायप्रकाशिनी

एवं रशनोपमामपि द्विधा दर्शयितुमाह—यथोत्तरमुपमेयस्येत्यादि। उपमेयस्योपमानभावापत्तौ शृङ्खला-न्यायेन वर्तमाना रशनोपमा।

अनवरतेति। अत्र मतिर्भणित्यपेक्षयोपमेया, चेष्टापेक्षया तूपमानम्। इयं वैमल्यरूपाभिन्नधर्मा।

### मधुमती

अनवरतेति। अत्र अतिविमलत्वं एक एव समानो धर्मः।

### विस्तारिका

उत्तरम् उत्तरं प्रति यथोत्तरम्। पूर्ववत् मालोपमावत्। साधारणधर्मस्य सकलोपमानवृत्तिप्रत्युपमानवि-श्रान्तिभ्यां पूर्वसाम्यम्।

भृतो व्याप्तः। तरङ्गिता श्रेणीभूय पूर्वपश्चाद्भावेन सततं मिलिता। अर्थिततिर्याचकचयः।

अत्रातिविमलत्वमभिन्नो धर्मः।

**प्रभावेण विना प्रभया विना वा जेतुं स्ववशीकर्तुम्।**

**अत्र मधुरत्वादिकं प्रत्येकविश्रान्तः साधारणधर्मः॥**

### सारबोधिनी

उत्तरमुत्तरं यथोत्तरम्। पूर्ववत् मालोपमावत्। तरङ्गिता श्रेणीभूय पूर्वपश्चाद्भावेन सततं मिलिता।

### काव्यप्रदीपः

पूर्वपूर्वोपमेयस्योत्तरोत्तरमुपमानत्वे रशनोपमा। सापि द्विधा—साधर्म्यभेदात्तद्भेदाच्च। तत्राद्या यथा—

**'अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः।**
**भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला॥'**

अत्र विमलत्वमेव सर्वासूपमासु साधारणो धर्मः।

### आदर्शः

अनवरतेति। तस्य भणितिरिव मतिरतिविमलेत्येवमुत्तरोत्तरमन्वयः। तस्य कीदृशस्य? अनवरतं कनकवितरणार्थं भृते जललवे तरङ्गिता चञ्चला अर्थिततिर्यस्य तादृशस्य। अत्रातिविमलत्वं प्रत्युपमानं धर्मः।

### सुधासागरः

पूर्वपूर्वोपमेयस्योत्तरोत्तरमुपमानत्वे रशनोपमा। साऽपि द्विधा साधर्म्याभेदात् तद्भेदाच्च। तत्राद्या यथा—अनवरतेति।

**मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावचिता।**

**तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम्॥ ४१३॥**

इत्यादिका रशनोपमा च न लक्षिता, एवंविधवैचित्र्यसहस्रसंभवात् उक्तभेदानतिक्रमाच्च॥

---

### सङ्केतः

मतिरिवेति। अत्र तु माधुर्यादिः भिन्नो धर्मः। एवं विधेति भणनात् एकदेशविवर्तिनी उपमा गृह्यते। यथा—

'नेत्रैरिवोत्पलैः पद्मैः मुखैरिव सरश्श्रियः।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव॥' इति॥

अत्र सरश्श्रीणां नायिकात्वं न समासोक्त्या, विशेषणसाम्याभावात्। तस्मात् उपमा एकदेशविवर्तिनी वाच्यैव, यथान्यैरुक्ता। इत्युपमा।

### बालचित्तानुरञ्जनी

धर्मभेदे रशनोपमाया लक्षणमाह यथोत्तरमिति। पूर्वपूर्वपर्वणि उपमेयभूतस्योत्तरोत्तरकक्षायामुपमानतया।

### विवेकः

एवंविधेति समस्तोपमाप्रभृतिर्यथा—अलिवलयैरलकैरिव कुसुमस्तवकैः स्तनैरिव वसन्ते। भान्ति ललना इव लता पाणिभिरिव किशलयैरधिकम्॥ (रु. का. अ. ८/१३) अत्र लतानां ललनानां तथाऽलिवलयादीनामालकादीनाञ्च सादृश्यं प्रतीयत इत्यवयविनामवयावानाञ्च सामस्त्येन वाक्यार्थयोरौपम्यम्। एकदेशोपमा यथा—नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः। पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिक॥ (अ० करु० समासोक्तिप्रकरणम) अत्र सरः श्रिया नायिकात्वं प्रतीयते। तच्च न समासोक्तिः, विशेषणसाम्याभावात्। नायिका ह्यत्रोपमानत्वेन प्रतीयते न तु सरः श्रीधर्मत्वेन नायिकात्वप्रतीतिः। अत एकदेशोपमैवात्र बीजम् (अ. स)। एवमेकेवशब्दिकाऽनेकेवशब्दिकाऽऽदिप्रभेदा द्रष्टव्याः। उत्प्रेक्षोपमा तूत् प्रेक्षैव, अतः साऽत्र नोदाहार्या यथा—किंशुकव्यपदेशेन तरूनारुह्य सर्वतः। दग्धादग्धमरण्यान्याः। पश्यतीव विभावसुः॥ अत्र व्यपदेशपदेन किंशुककुसुमानामग्निसादृश्यमभिसन्धाय दर्शन क्रियोत्प्रेक्ष्यत इत्युपमानार्थस्योत्प्रेक्षायामेवानुप्रवेशः (भा. का. अ. २/८५ द्रः)।

उक्तरूपवैपरीत्येन वाक्यार्थवर्ति उपमाप्रपञ्चद्वयं लक्षयति ।

### दीपिका

ननुवैचित्र्यसहस्रसम्भवे प्रत्युत वैशद्याय लक्षणीयमित्याशङ्क्याह—उक्तेति । अस्मत्प्रदर्शितप्रकाराःकमप्यस्मद्दर्शितप्रकारं नियमेनानुबन्धतीति सामान्यलक्षणसन्दर्शनव्युत्पन्नानां स्वयमेवोत्प्रेक्षितुं सुकरा इति ग्रन्थगौरवभयान्न प्रपञ्चिता इत्यर्थः ।

### दर्पणः

एवंविधेति अयमाशयः । यदिदं किञ्चिदपि विच्छित्याभासने शमादय [उपमादयः] विशेषतो लक्षयितव्यंग्यस्य तथाविधस्य सहस्रधा संभवात् ग्रन्थगौरवं विना न किञ्चित् फलमिति । तथाविधस्यापि लक्षयितव्ये वा, उक्तप्रकारवैलक्षण्ये तदा लक्षयितव्यं न च तथेत्याह उक्तेति ।

### साहित्यचूडामणिः

न लक्षितेति । कारिकायाम् । वृत्तौ तु लक्षितैव । कुतः कारिकायां न लक्षितेत्यत्राह—एवंविधेति । दण्डिभोजादिप्रक्रियायामपरिमितवैचित्र्यस्य प्रकाशयितुं शक्यत्वात् । तर्हि कथं न न्यूनत्वदोषशङ्केत्यत्राह—उक्तभेदेति । सामान्यलक्षणेन क्रोडीकाराद् इति ॥ ४ ॥

### सम्प्रदायप्रकाशिनी

मतिरिव मधुरा मूर्त्तिरिति । इयं मधुरत्वप्रभावचितत्वादिभिन्नधर्मा ।

एतास्तु न लक्षिताः सूत्रकृता । कुत इत्याह—एवंविधवैचित्र्येत्यादि । वैचित्र्यबाहुल्याद् ग्रन्थगौरवमुक्तलक्षणानतिक्रमश्चोप्रेक्षणे हेतुः ।

### मधुमती

मतिरिवेति । अत्र मधुरत्वादयः पृथगेव साधारणाः धर्माः ।

संभवत् असङ्गृहीतं बहुतरमपि वक्तव्यमेवेत्यत आह—उक्तेति । श्रौत्यार्थ्योरुभयोरपि सङ्ग्रदित्यर्थः । इत्युपमा ।

### विस्तारिका

यथा रसनायां पूर्वत्वं प्राप्तायाः क्षुद्रघण्टिकायाः परग्रन्थनायां परत्वम्, तद्वत्तत्र पूर्वोपमेयस्योपमानत्वे परप्राप्तिरिति रसनेव रसनोपमा न लक्षितेति प्रामादिकत्वं निरस्यति एवमित्यादि । वैचित्र्यसहस्रेति । यथा 'शुकमुखद्युतिकिंशुकमाबभौ' इत्यादौ लौकिकी । 'सद्यो मुण्डितमत्तहूणचिबुकपस्पर्द्धि नारङ्गकम्' इत्यत्र तदेकप्रतिभानत्वेनालौकिकी । 'पाण्ड्योऽयम्' इत्यादौ बिम्बप्रतिबिम्बभावः ।

**'यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या।**
**दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥**

इत्यत्र वलितत्वावृत्तत्वाख्यस्यैव धर्मस्य सम्बन्धिभेदाद् भेदेन निर्देशः। 'चन्द्रवदाननम्'इत्येकपदगतत्वम्। 'चन्द्र इव वदनमस्याः' इत्यादौ वाक्यगतत्वमित्यादयः सम्भवन्ति।

ननु वैचित्र्यसम्भवे निरुक्त्यौचित्यम्, अत आह—उक्तभेदेत्यादि। शुकमुखेत्यादि त्रिलोपा। मत्तहूणेत्यादौ धर्मलोपे समासगेति। विवेचनादुक्तेष्वन्तर्भाव इति। यच्च शुकमुखेत्यादौ कुटिलत्वम्, सद्यो मुण्डितेत्यादौ च श्मश्रूत्पाटनेन सरन्ध्रत्वम्, मद्यपाने च रक्तत्वं प्रतीयते। तत् स्वभावोक्तिमेव प्रज्वलयतीति तत्रोपमाया अकिञ्चित्करत्वमिति ध्येयम्।

### सारबोधिनी

मतिरिवेति। चिता युक्ता। रशनोपमेति। शृङ्खलान्यायेन पश्चाद्वलनयेत्यर्थः। यथा रशनायां पूर्वत्वं प्राप्तायाः क्षुद्रघण्टिकायाः क्षुद्रघण्टिकायाः परग्रथनायाः परत्वं तद्वदत्र पूर्वपूर्वस्योपमेयस्योपमानत्वे परपरत्वप्राप्तिरिति रशनात्वमिति। ननु वैचित्र्यसहस्रसंभवनमनुक्तावप्रयोजकमित्यत आह उक्तेति। तथा चात्र न पश्चाद्वलनया चमत्कारोऽपि तूपमानत्वे उपमायामेवान्तर्भाव इत्यर्थः। यथा 'चन्द्रस्पर्द्धि मुखं' 'शुकमुखद्युति किंशुकमि'त्यादेः लुप्तायामन्तर्भावः।

### काव्यप्रदीपः

**'मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावचिता।**
**तस्य समेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम्॥'**

अत्र मूर्त्यादीनां मधुरत्वादयो धर्मा भेदवन्तः। त एते भेदाः किमिति नोक्ता इति चेत्, उक्ता एव। उक्तभेदान्तर्भावात्। तथापि तेन तेन रूपेण किं नोक्ता इति चेत्, एवं विधवैचित्र्यसहस्रसंभवात्सर्वेषामाख्यातुमशक्यत्वात्।

### काव्यप्रकाशखण्डनम्

एकस्यैव बहूपमानोपादाने मालोपमा। तथा यथोत्तरमुपमानस्योपमेयत्वे रस(श)नोपमा बोध्या। शृङ्खलान्यायेन पश्चाद् वलनया। यथा—

**मतिरिव मूर्त्तिर्मधुरा मूर्त्तिरिव सभा प्रभावचिता।**
**तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम्॥**

एवमन्यदपि बोध्यम्।

## आदर्शः

मतिरिवेति । प्रभावेण चिता प्रभयाऽवचिता च बोध्या । तस्य नृपस्य जयश्रीर्जेतुं परेषां न शक्या तस्य सभेव, सभाया अपि दुर्जयत्वात् । 'न लक्षिता' विशिष्य न लक्षितेत्यर्थः । 'त्रिलोपे च समासगा' इत्यत्रानुक्तसमुच्चयपरेण चकारेण तु लक्षितैवेति भावः । अत एव 'माला तु पूर्ववत्' इत्यग्रे मालारूपकं मालोपमातुल्यतया सूत्रकृता प्रदर्शयिष्यते । सूत्रेऽनुक्तत्वे तदनुपपत्तेः । उक्तभेदेति, पूर्णोपमायामेवान्तर्भावात् ।

## सुधासागरः

प्रभावचिता प्रभावेण व्याप्ता । स्पष्टमन्यत् । अत्र मूर्त्यादीनां मधुरत्वादयो धर्मा भेदवन्तः । त एते भेदा किमिति नोक्ता इति चेत् । उक्ता एव, उक्तभेदान्तर्भावात् । तथापि तेन रूपेण किं नोक्ता इति चेत् । एवंविधवैचित्र्यसहस्रसम्भवात्, सर्वेषामाख्यातुमशक्यत्वात् । तदेतदुक्तम्—यथोत्तरमित्यादिना ।

**(सू० १३५) उपमानोपमेयत्वे, एकस्यैवैकवाक्यगे। अनन्वयः**

**उपमानान्तरसंबन्धाभावोऽनन्वयः। उदाहरणम्—**

**न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव।**

**यावद्विलासायुधलास्यवासास्ते तद्विलासा इव तद्विलासाः॥ ४१४॥**

---

**सङ्केतः**

अनन्वय इति। अयं नोपमा वास्तवद्वित्वाभावात्। विलासायुधः कामः। लासः क्रीडा। अत्र—नितम्बिनी नितम्बिनीव इति, विलासाः विलासा इव इति च भेदाभावात् उपमानतया अनुपपद्यमनं अन्यव्यावृत्तौ लक्षणया अवतिष्ठते॥

**बालचित्तानुरञ्जनी**

सैव नितम्बिनी केवलं नितम्बिनीव न भाति। यावत् विलासायुधः कामः तस्य लास्यं नृत्यम् तस्य वासाः निवासभूताः ते प्रसिद्धाः तस्य विलासाः तद्विलासा इव भान्ति। नितम्बिनी नितम्बिनीव विलासाः तद्विलासा इवेति। एकस्यैव द्वितीयसदृशवस्तुनिराकरणलक्षणं चमत्कारातिशयमवबोधयितुमुभयथा विवक्षा। यतो न विरुद्धधर्मशङ्का। श्रौतश्चायमनन्वयः 'गगनं गगनाकारं सागरः सागरोपम' इत्यादौ द्रष्टव्यः।

**काव्यादर्शः**

अविद्यमानोऽन्वयः सदृशवस्त्वन्तरगमनं यस्य असौ अनन्वयः। एतत्सदृशमन्यन्नास्तीति असाधारण्यप्रतिपत्तये प्रकृतस्य वस्तुन एकस्यैव उपमानोपमेयत्वे वास्तवस्य द्वित्वस्य अविद्यमानत्वाद् उभयनिष्ठत्वाच्च उपमानोपमेयभावव्यवस्थितेर्नोपमा। समारोपितरूपस्य द्वित्वस्य चाभ्युपगमे कष्टकल्पना। 'विलासायुधः कामः, लासः क्रीडनम्।' अत्र 'सैव नितम्बिनीव' इति 'तद्विलासा इव' इत्येतच्च भेदाभावाद् उपमानतया विश्रान्तिमलभमानमन्यव्यावृत्तौ लक्षणयावतिष्ठते।

निघ्नन्नभिमुख[:] शूरानेकोऽपि बहुशः परान्।

संग्रामे विचरेत्येष पुरुषः यथा॥

अत्र तु उपमेयस्य पुरुषशब्दस्य जातिमात्रं प्रवृत्तिनिमित्तं, द्वितीयस्य तु पुरुषशब्दस्य शब्दशक्तिमूलव्यङ्ग्यपरतया शौर्यवातुर्यावदातकर्मवचन्त्वमिति भेदे सत्यपि उपमैव।

**विवेकः**

यद्यपि यत्र पदार्थानां भेदसादृश्याध्यासिततन्मूर्तित्वं नास्ति तत्रोपमानोपूमेयभावो न सम्भवत्येव तथापि यदा कविना यस्य कस्यैव वस्तुनः सदृशमन्यन्नास्तीति तात्पर्येण विरुद्धधर्मसंसर्गः परिकल्प्यते तदाऽनन्वयो

नामालङ्कारः। अत एवान्वर्थताऽपि। न केवलमित्यादि—अत्र नितान्तकान्तित्वमसाधारणो धर्मः। अत एव कस्यापि वस्तुनो भेदमुपकल्प्य प्रतीयमानसादृश्यमौपम्येनाभिधीयते। एवं तद्विलासानामप्यन्यविलासाः सदृशा न सन्तीति तात्पर्यम्।

### दीपिका

उपमेवोपमायामप्येकस्योपमानोपमेयताऽस्तीत्याह—एकवाक्यगे इति। ननु

**कमलं व तीएँ वअणं तीए वअणं व कमलम्पि।**
**दट्टुं सलिलविहारे भमरं जणा विमुज्झन्ति॥"**

अत्रापि महावाक्यापेक्षयैव वाक्यात्वमस्तीत्याशङ्क्य-एकस्यैवेति सूत्रे तस्य तं प्रत्येवेति विवक्षितमित्याहुः। उपमानादन्तरस्य भिन्नस्यार्थादुपमेयस्य सम्बन्धाभावो यत्र स उपमानान्तरसम्बन्धाभावोऽनन्वय इति।

यद्वा—उपमानान्तरेणोपमेयातिरिक्तोपमानेन सम्बन्धस्यान्वयापरनाम्नोऽभावो यत्रेत्यन्वर्थनामा निरुक्तिपरेयं वृत्तिः।

केचिदुपमानान्तरसम्बन्धाभावोऽत्रास्तीत्यर्शआदित्वेन मत्वर्थयोगात् प्रत्ययं मन्यमानाः सादृश्यसम्बन्धाभावो वर्णनीयाद्युत्कर्षप्रतिपत्तिपरः, एकस्यैव विरुद्धधर्म संसर्गो द्वितीयसब्रह्मचारिनिवृत्त्यर्थ इत्युक्तदिशाऽलङ्कारजीवातुभूतोऽत्र प्रत्याय्य इत्याहुः।

ननु कथमेकस्यैवोपमानोपमेयतानिबन्धस्तयोर्यथायोगमप्राकरणिकप्राकरणिकाधिष्ठाननियमात्? नायं दोषः, तयोरत्र वैवक्षिकमात्रत्वेन वास्तवविरोधाभावात्। किञ्च, प्राकरणिकमुपमेयमप्राकरणिकमुपमानमिति प्रायोवाद एवायम्।

**"परिमलनन्दितमधुपा युवजनमनसां विमर्दरङ्गभुवः।**
**सम्प्रत्यत्यनुमितशोभा माला इव भान्ति भामिन्यः॥"**

इत्यादौ प्रदोषवर्णनि प्रकृते मालानां युवतीनां चात्र प्रकृतत्वेन तदङ्गतया प्रतीतत्वेन चाविशेषविरहात्। मितान्तं सन्ततं कान्तिः कमनीयता यस्याः सा नितान्तकान्तिः। यावदिति। अपि त्वित्यर्थे। विलासायुधः कामस्तस्य लास्यवासा रङ्गगृहास्त इति स्वयंवेद्याव्यपदेश्यस्वरूपा।

### दर्पणः

अनन्वयः। एकवाक्यग इत्यनेन लोपमेयोपमा [उपमेयोपमा] व्यवच्छेदः। नाम निरुक्तिमाह उपमानेति। अनर्थयो [अनन्वयो] अत्रास्तोति अर्शं आदित्वात् मन्व.... [मत्वर्थीया] अच् प्रत्ययः।

नितान्तं कान्तिकमनीयता यस्याः, विलासायुधः कामः, अत्रैकस्य विरुद्धधर्मसंसर्गो द्वितीयसंबन्धं चाभिनिवृत्यर्थः। एतदनन्तरं सहैकरूपेणेति विशेषः।

**साहित्यचूडामणिः**

अनन्वयमाह—उपमानेति। एकस्यैवेति उक्ताया उपमाया व्यपोहः, एकवाक्यगा इति वक्ष्यमाणाया उपमेयोपमायाः। यत् सूत्रम् 'एकस्यैवोपमानोपमेयत्वेऽनन्वयः' (अ० सू०—१३) इति।

निर्वक्ति—उपमानान्तरेति। यदाहुः—

**यत्र तेनैव तस्य स्यादुपमानोपमेयता।**

**असादृश्यविवक्षातस्तमित्याहुरनन्वयम्॥ इति।**

न केवलमिति। नितम्बिनी नितम्बिनीव, तद्विलासास्तद्विलासा इवेति एकस्यैवेति द्वितीयसब्रह्मचारिनिराकरणलक्षणं चमत्काराशयमवबोधयितुम् उभयथा विवक्षा, यतो न विरुद्धधर्मसंसर्गशङ्का। श्रौतश्चायमनन्वयः। एवं 'गगनं गगनाकारं सागरः सागरोपमः' इत्यार्थोऽप्यवगन्तव्यः।

**सम्प्रदायप्रकाशिनी**

अथोपमाविशेषत्वादनन्वयः उपमेयोपमा च। उपमानोपमेयेत्यादि। एकस्यैवार्थस्यैकक्रियान्वयादेकवाक्यगे उपमानोपमेयभावे अनन्वयः।

लक्ष्यपदं निर्वक्ति—उपमानान्तरेति।

**मधुमती**

उपमानेति। उपमानत्वं उपमेयत्वं चेत्यर्थः। द्वन्द्वपरश्रुतत्वात् भावप्रत्ययस्य। एकस्यैव इति उपमाव्यवच्छेदाय। यद्यपि—रशनोपमायामप्येतदस्ति। तथापि—उपमेयोपमाव्यवच्छेदार्थोपात्तात् एकवाक्यगत्वविशेषणादेव तद्व्यवच्छेदोऽपि द्रष्टव्यः। तदुभयत्र उद्देश्यविधेयभेदेन वाक्यभेदात्, अत्र तु तदभावात्।

यद्यपि—असति सादृश्ये नोपमानोपमेयभावः, सादृश्यं च भेदघटितमिति, अभेदे तदनुपपन्नम्। तथापि—आहार्योऽत्र भेदो द्रष्टव्यः। न चैवं—'भेदग्रहणं अनन्वयव्यवच्छेदाय' इति विरोधः। तस्य वास्तविकभेदाभिप्रायकत्वात्। अयमेव उपमाऽन्वययोर्भेदः—यत्—एकत्र वास्तवः, अन्यत्र आहार्यो भेदः इति। यदि च देशान्तरीयस्य कालान्तरीयस्य वा तस्यैव वास्तविकं भेदमादाय प्रयोगः, तदा उपमैवेति मन्तव्यम्। इत्यनन्वयः।

**विस्तारिका**

उपमानोपमेयत्व इति। त्वप्रत्ययस्य द्वन्द्वान्ते श्रूयमाणत्वादुपमानत्वमुपमेयत्वं चेत्यर्थः। उपमाव्यावर्तनायैकपदम्, तस्याभेदघटितत्वात्। उपमेयोपमावारणायैकवाक्यगतत्वं विशेषणम्। एकवाक्यगे एकौपम्यप्रतिपादकशब्दप्रतिपाद्य। तेन—

**कमल वतीए वअणं तीए वअणं व कमलम्पि।**

**सदिट्ठुंसलिलविहारे भमरंजणा विमुज्झन्ति॥**

अत्र महावाक्यत्वेनैकवाक्यगतत्वेन प्रसङ्गः। एकनिष्ठोपमानोपमेयत्वयोरनेकवशब्दप्रतिपाद्यत्वात्। एवकारेण भिन्नशब्दबोध्यत्वव्यवच्छेदः, शब्दतोऽर्थतश्चैकत्वस्य विवक्षिततत्वात्, अन्यथा 'अस्या वदनमिवास्या वक्त्रम्' इत्यत्र प्रसक्तेः, शब्दभेदेनार्थभेदावभासस्य प्रतिपादिततत्वात्।

केचित् 'कमलं ते अव अणम्' इत्यादिव्यवच्छेदायैकस्येत्यादिना समुदायेन तस्य तं प्रतीति विवक्षणीयम्, अभिहितैकस्य नैकं प्रति, किन्तु कमलं प्रति मुखं प्रति च कमलस्योपमानोपमयभावादित्याहुस्तन्न, एवमपि 'अस्या वदनमिवास्या वक्त्रम्' इत्यत्र प्रसक्तेर्दुरुद्धरत्वात्।

उपमातोऽस्य भेदे बीजमाह—उपमानान्तरेत्यादि। अत्रोपमानान्तरव्यवच्छेदेन चमत्कारः, तत्र तु साम्यप्रतीत्येति फले वैजात्यादन्योन्यभेदनिरूपणौचित्यमिति भावः। उपमानान्तरसम्बन्धस्याभावो यत्रेति समासः। अनन्वयपदार्थनिरुक्तिरियम्। तदाह—अनन्वय इति। अन्वयः सम्बन्धः। अनन्वयाख्योऽलङ्कार इत्यर्थः।

प्रकृस्याप्येकस्योपमानोपमेयभावो विवक्षितः। किञ्च, प्रकृतेऽप्युपमानत्वं दृश्यते, यथा—

**परिमलनन्दितमधुपा युवजनमनसां विमर्दरङ्गभुवः।**
**सम्प्रत्यस्खलितशोभा माला इव भान्ति भामिन्यः॥**

इत्यत्र प्रदोषवर्णने प्रकृते तदङ्गतया प्रकृतयोर्माला-भाममिन्योरुपमानोपमेयभावात्।

न केवलमित्यादि। यावदिति वार्थे। अनुलेपनभूषणादयो विलासास्त एव वशीकरणत्वादायुधानि यस्य कामस्य तस्य लासवासा क्रीडागृहाणि। लस श्लेषणक्रीडनयोः। ते अनुभावैकगोचराः। विलासा आङ्गिकभावा मोट्टायितदयः।

## सारबोधिनी

उपमानोपमेयत्वे इति। उपमानत्वमुपयेयत्वञ्चेत्यर्थः। उपमाव्यावर्तनायैवपदम्, तस्या भेदघटितत्वात्। उपमेयोपमावारणायैकवांक्यगे इति। एकवाक्यगे एकौपम्यस्य प्रतिपादकशब्दप्रतिपाद्ये इत्यर्थः। एवकारेण भिन्नशब्दबोध्यत्वव्यवच्छेदः। अतोऽस्या वदनमिवास्या वक्त्रमित्यत्र न प्रसङ्गः। उपमातो भेदबीजमाह उपमानान्तरेत्यादि। अत्रोपमानान्तरव्यवच्छेदेन चमत्कारः, [उपमायां तु साम्यप्रतीत्या चमत्कार इति] फलवैजात्यादन्योन्यभेदनिरूपणौचित्यमिति भावः। उपमानान्तरसम्बन्धस्याभावो यत्रेति अनन्वयपदार्थनिरुक्तिरियम्। तदाह अनन्वय इति। अन्वयः सम्बन्धः। न केवलमिति। यावदिति चार्थे विलासायुधः कामस्तस्य लास्यवासाः क्रीडागृहाणि। लस श्लेषणक्रीडनयोरिति धात्वनुसारात्।

## काव्यप्रदीपः

**उपमानोपमेयत्वे एकस्यैवैकवाक्यगे।अनन्वयः**

उपमानान्तरव्यवच्छेदाय यदेकस्यैवोपमानोपमेयत्वे भेदोपचारेणैव निबध्येति सोऽनन्वयः तदेतदुक्तं उपमानान्तरसंबन्धाभावोऽनन्वय इति बहुब्रीहि समासात्। यद्वा संज्ञायोगनिर्वचनं तत्। अनन्वयः संबन्धाभावः।

स चार्थादुपमानान्तरेण उपमेयभिन्नेनेति। एवकारो वैचित्र्यविशेषस्फोरणार्थः। एकवाक्यगे इति विपर्यासोपमा-व्यावर्तनाय। तत्र हि वाक्यद्वये तथाभावः। उहाहरणम्—

**'न केवलं भाति नितान्तकान्तिर्नितम्बिनीं सैव नितम्बिनीव।**
**यावद्विलासायुधलासवासास्ते तद्विलासा इव तद्विलासाः॥'**

अत्र दशाविशेषादिभेदाद्भेदोपचारः।

## काव्यप्रकाशखण्डनम्

**उपमानोपमेयत्वे एकस्यैवैकवाक्यगे।**

**अनन्वयः,**

उपमानत्वं उपमेयत्वं चेत्यर्थः उपमेयोपमावारणाय एकवाक्यग इति। उपमानान्तरसम्बन्धः। अन्वयस्त-दभावोऽनन्वय। अतोऽत्र उपमानान्तरव्यवच्छेदेन चमत्कार इति उपमातोऽस्य भेदः। यथा—

रामरावणयोर्युद्धं रामरावणयोरिव।

## आदर्शः

अनन्वयालङ्कारमाह—उपमानेति। एकवाक्यगे इति। तेन वाक्यद्वयेन तथात्वे या रसनोपमोक्ता या चोपमेयोपमा वक्ष्यते तद्व्यवच्छेदः। उपमानान्तरसम्बन्धाभाव इति, अनन्वयालङ्कारज्ञानोत्तरज्ञानकथमिदम्, न त्वन-न्वयलक्षणमिदमपदार्थकत्वात्। एवमुत्तरत्रापि बोध्यम्। न केवलमिति। नितान्तकान्तिर्नितम्बिनी न केवलं सैव नितम्बिनीव भाति, अपि तु विलासायुधस्य कामस्य लास्यानां वासा विलासानां वासा आश्रयास्ते प्रसिद्धास्तद्विलासा इवेत्यर्थः। अपि त्वित्यर्थे यावदिति। अत्राभेदे सादृश्यमिवार्थः।

## सुधासागरः

उपमानोपमयत्वे इति। त्वप्रत्यस्य द्वन्द्वान्ते श्रूयमाणत्वादुपमानत्वमुपमेयत्वं चेत्यर्थः। एकस्यैवेत्युपमा-व्यवच्छेदाय। यद्यपि रशनोपमायामेतदस्ति, तथाप्युपमेयोपमाव्यवच्छेदार्थोपात्तैक वाक्यगत्वविशेषणादेव तद्व्यवच्छेदोऽपि द्रष्टव्यः। तदुभयत्रोद्देश्यविधेयभेदेन वाक्यभेदादत्र तदभावात्। एवं चैकवाक्यगे एकौपम्यप्र-तिपादकशब्दप्रतिपाद्य इत्यर्थः। एवकारेण भिन्नशब्दबोध्यत्वव्यवच्छेदः। अतो 'अस्याः वदनमिवास्या वक्त्रम् इत्यत्र न प्रसङ्गः। एवकारो वैचित्र्यविशेषस्फोरणार्थ इति प्रदीपोक्तन्तु नातिरमणीयम्। यद्यप्यसति सादृश्ये नोपमानोपमेयभावः, सादृश्यं च भेदघटितमित्येकस्योपमानोपमेयत्वमनुपपन्नम्, तथाऽप्याहार्योऽत्र भेदो द्रष्टव्यः। न चैवं 'भेदग्रहणमनन्वयव्यवच्छेदाय' इति वृत्तिविरोधः, तस्य वास्तविकभेदाभिप्रायकत्वात्। अयमेवोपमाऽनन्व-ययोर्भेदो यदेकत्र वास्तवोऽन्यत्राऽऽहार्यो भेदः। यदि देशान्तरीयस्य कालान्तरीयस्य वा तस्यैव वास्तविकं भेदमादाय प्रयोगस्तदोपमैवेति बोध्यम्।

उपमातो भेदे बीजमाह—उपमानान्तरेत्यादि। अत्रोपमानान्तरव्यवच्छेदेन चमत्कारस्तत्र साम्यप्रतीत्येति फले वैजात्यादन्योन्यभेदनिरूपणौचित्यमिति भावः। अन्वयः सम्बन्धः। उपमानान्तरसम्बन्धस्याभावो यत्रेत्यनन्व-

यपदार्थनिरुक्तिः। व्याख्यातं च प्रदीपकारैः—उपमानान्तरव्यवच्छेदाय यदैकस्यैवोपमानत्वोपमेयत्वे भेदोपचारेणैवोपनिबध्येते सोऽनन्वयः। तदेतदुक्तमुपमानान्तरसम्बन्धाभावोऽनन्वय इति बहुब्रीहिसमासादिति। उदाहरणं—न केवलमिति।

यावदिति समुच्चायार्थकमव्ययम्, केवलं नितान्तकान्तिरत्यन्तमनोहरच्छविः साऽनुभूतप्रकर्षा नितम्बिन्येव नितम्बिनीव न भाति किन्तु, तद्विलासाः, तस्या नायिकायाः विलासा हावभावा अपि तद्विलासा इव भान्तीत्यर्थः। 'लस' श्लेषणक्रीडनयोरिति धातुः।

अत्र दशाविशेषादिभेदाद्भेदोपचारो बोध्यः। उपजातिश्छन्दः। 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता' इति लक्षणात्। अनन्तरोदीरितलक्ष्मणी इन्द्रवज्रोपेन्द्रलक्षणे। लिखितानि चैतल्लक्षणानि प्राक्।

**(सू० १३६) विपर्यास उपमेयोपमा तयोः ॥ ९१ ॥**

तयोः, उपमानोपमेययोः। परिवृत्तिः, अर्थात् वाक्यद्वये। इतरोपमानव्यवच्छेदपरा, उपमेयेनोपमा, इति, उपमेयोपमा। उदाहरणम्—

**कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः।**

**धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥ ४१५ ॥**

---

**सङ्केतः**

कमलेति। अत्र पूर्ववाक्यात् सादृश्यावगतौ पुनरिह सादृश्यं उच्यमानं अनन्यार्थत्वे सति अन्यव्यावृत्तिं लक्षयति। अत्र पूर्वत्र च एतयोः सदृशं नान्यदस्तीति भावः। इत्युपमेयोपमा।

**सङ्केतः (रुय्यकः)**

उपमेयेनोपमानधुराऽधिरूढेन करणात्मना उपमा उपमानस्योपमेयताऽपादन उपमेयोपमा।

**बालचित्तानुरञ्जनी**

उपमेयोपमां लक्षयति विपर्यास इति। तयोरित्यस्य व्याख्यानमुपमानेति। विपर्यास इत्यस्य व्याख्यानं परिवृत्तिरिति। अनन्वयव्यावृत्त्यर्थमाह अर्थादिति। महत्याः संज्ञायाः फलमाह इतरेति। यथाहुः—

**अन्योन्यमेव यत्र स्यादुपमानोपमेयता।**
**उपमेयोपमामाहुस्तां पक्षान्तरहानिगाम्॥**

साधारणधर्मोपादाने वस्तुप्रतिवस्तुनिर्देशे च द्विप्रकारेयम्। तत्राद्यामुदाहरति कमलेति। हे राजन्, यस्य तव मतिः कमला लक्ष्मीरिव भाति कमला मतिरिव भाति। विभा कान्तिस्तनुरिव तनुर्विभेव भाति। धृतिर्धरणीव धरणी धृतिरिव सततं विभाति। बत। द्वितीयोदाहरणं यथा—

**सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः।**
**वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः॥ इति।**

**काव्यादर्शः**

उपमेयेनोपमानधुराधिरूढेनकरणात्मना उपमा, उपमानस्योपमेयतापादनम् उपमेयोपमा। 'कमलेवे' ति। अत्र पूर्वस्माद् वाक्यात् सादृश्यस्यावगतत्वात् पुनरिह सादृश्यमभिधीयमानमन्यार्थत्वेन सति अन्यव्यावृत्तिं लक्षणयावगमयति।

## विवेकः

विपर्यास इति—तयोरित्यनेन सन्निकृष्टपरामर्शो न सङ्गच्छत इति व्याचष्टे उपमानोपमेययोरिति। विपर्यासशब्दार्थमाह परिवृत्तिरिति। उपमेयस्योपमानत्वमुपमानस्योपमेयत्वमित्यर्थः। न चैतावताऽयं परिवृत्यलङ्कारः दानप्रतिदानरूपस्य विनिमयस्याभावात्। उपमेयोनोपमानधुराऽधिरूढेन कारणात्मनोपमानस्योपमेयताऽऽपादन उपमेयोपमा नामालङ्कारः।

अनन्वय एकवाक्यर्थवर्ती, अयन्तु वाक्यार्थद्वयवर्तितयैव घटत इत्याह अर्थादिति। विपर्यासप्रयोजनमाह—इतरेति। कमलेवेत्यादि—देदीप्यमानताऽऽदिरत्र साधारणो धर्मः। तत्राद्यवाक्यस्थयोरुपमानोपमेययोः, द्वितीये वाक्ये परि- वृत्त्या परस्परसादृश्येनान्योऽन्योत्कर्षस्तृतीयसदृशव्यवच्छेदपरः प्रतिपाद्यते। 'इयञ्च यथा धर्मस्य साधारणे तथा वस्तुप्रतिवस्तुनिर्देशे च दृश्यते। यथा—सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः। वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः॥'

## दीपिका

विपर्यास इत्यस्य बिवृतिः परिवृत्तिरिति। एतौ परस्परमेव सदृशौ, न त्वनयोः सदृशं वस्त्वन्तरमस्तीत्याकार उपमानान्तरव्यवच्छेदः, तत्परा प्रतीतिप्रयोजनेत्यलङ्कारताबीजोद्घाटः। उपमेयेनोपमेति। समनन्तरमेवोपमेयतया निबद्धेन वस्तुना सम्प्रत्युपमानतानिबन्धेन समनन्तरोपमानतानिबद्धस्यैव वस्त्वन्तरस्योपमानोः पमेयत्वमवच्छिद्यत इत्यर्थः। उपमेयेनोपमा सादृश्यमिति यथाश्रुतव्याख्याने सर्वत्रैवंविधतासौलभ्येनासाधारण्यं नोक्तं स्यात्। 'कमलेव मतिः' इत्यादौ सर्वजनोपास्यत्वाद्यसाधारण्यं गम्यम्। एवं पूर्णत्वमनयैव दिशाऽनन्वये मृग्यम्। धृतिर्धैर्यम्।

## साहित्यचूडामणिः

उपमेयोपमामाह—विपर्यास इति। यत् सूत्रं 'द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा' (अलंकारसू० १४) इति। पर्यायो यौगपद्याभावः। तस्मिन्नति तद्वृत्तेन प्रक्रान्तमुपमानोपमेयत्वं प्रत्यवमृश्यते।

अर्थादिति। अन्यथा अनन्वयत्वप्रसङ्गात्। महत्याः संज्ञायाः फलमाह—इतरेति। यथाहुः—

**अन्योन्यमेव यत्र स्यादुपमानोपमायता।**
**उपमेयोपमामाहुस्तां पक्षान्तरहानिगाम्॥ इति।**

अत्रोपमानोपमेययोः अनन्यवैलक्षण्यात् परिवृत्तिः साधर्म्यस्य। यत्र धर्मस्य साधारण्यं तत्र वस्तुप्रतिवस्तुनिर्देशेन दृश्यते। यथा—

**सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः।**
**वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः॥ इति॥ ५॥**

## सम्प्रदायप्रकाशिनी

न केवलमिति । अत्र द्वितीयनितम्बिनीविलासशब्दौ सदृशान्तरव्यावृत्तिपरौ । विपर्यास उपमेयेत्यादि ।

परिवृत्तिर्विपर्य (य ?) स्योपमानोपमेयभावकल्पनम् । अर्थादिति । एकवाक्यत्वे विपर्यासानुपपत्तेः । लक्ष्यपदं निर्वक्ति—उपमेयेत्यादि । एकत्र विरुद्धधर्मसमावेशप्रयोजनमाह—इतरोपमानेति ।

कमलेवेति । अत्रोपमेयेनोपमा प्रतिवाक्यम् ।

## मधुमती

विपर्यास इति । परिवृत्तिः विनिमयः । एवं च—उपमानोपमेययोः विनिमये उपमेयोपमा इत्यर्थः । न च अनन्वयसङ्करः । तत्र विनिमयाभावात् । अत एवाह—अर्थादिति । उद्देश्यविधेयभावभेदेन वाक्यभेदस्य वज्रलेपत्वात् । अन्यथा विनिमयासम्भवात् । विनिमयप्रयोजनमाह—इतरेति । इत्युपयोपमा ।

## विस्तारिका

उपमेयोपमामाह—विपर्यास इत्यादि । विपर्यासो विवरणं परिवृत्तिः । अर्थादित्यादि । एकत्र वाक्ये उपमानोपमेययोरुपमानोपमेयत्वासम्भवात् । उपमातो भेदबीजमुद्घाटयति—इतरेत्यादि । प्रकृतयोरन्य इतरः । इतरोपमानव्यवच्छेदेनैव चमत्कारितेत्यर्थः । उपमितिः क्रिया चानुपमेयस्य करणता । तेनोपमीयतेऽनेनेत्युपमेयस्योपमानता स्तवनम् ।

कमलेवेत्यादि । कमलाया उपमानत्वे मतिनिष्ठं सर्वजनोपास्यत्वम् । मत्यास्तथात्वे कमलायाः स्थिरत्वम् । तथा च तयोरुपचितत्वम् । तनोस्तथात्वे विभायामनभिभवनीयत्वम्, तस्यास्तथात्वे हारकत्वं तनौ । एवं धरण्या अनन्यगामित्वं धृतौ तस्या. सम्प्रति हेतुत्वं धरण्यां प्रतीयते । बत विस्मये । अन्यत्रादृष्टत्वात् । अत एव तवेति विशिष्याभिधानं कादाचित्कत्वं निरस्यति—सततमिति । अत एव विशेषण भाति ।

अत्र परस्परोपमानोपमेयभावादिभ्योऽन्यत्र नैवं धर्मा इत्यवगमः ।

## सारबोधिनी

उपमेयोपमामाह विपर्यास इति । विपर्यासपदविवरणं परिवृत्तिरिति । वाक्यद्वय इत्यनन्वयवच्छेदः । उपमाभेदबीजमाह इतरेति । पूर्ववत् । कमलेति । कमलाया उपमानत्वे सर्वजनोपास्यत्वं, मत्यास्तथात्वे कमलायाः स्थिरत्वं, तथा अनयोः परस्परोपमानोपमेयभावः । एतदन्यत्र नैवं धर्म इति प्रतीयते । एवमुत्तरत्रापि यथायोग्यं बोध्यम् ।

## काव्यप्रदीपः

**विपर्यास उपमेयोपमा तयोः ॥ ५ ॥**

तयोरुपमानोपमेययोर्विपर्यास उपमेयोपमानभावः । अर्थाद्वाक्यद्वये । एकवाक्ये तथासंभवात् । मुखमिव चन्द्र इत्यस्य निन्दाभिव्यक्तौ प्रतीपरूपत्वात् । उपमेयोपमेति यौगिकी संज्ञा । विपर्यासश्चायमुपमानान्तरव्यवच्छेदार्थः । उदाहरणम्—

**'कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।**
**धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥'**

## काव्यप्रकाशखण्डनम्

विपर्यास उपमेयोपमा [प० ४८.१] तयोः ॥ (का. ९१, उ०)

तयोः उपमानोपमययोः । विपर्यासः परिवृत्तिः अर्थात् वाक्यद्वये । उपमेयेन उपमा उपमेयोपमा । यथा—

**कमलेव मतिर्मतिरिव कमला, तनुरिव विभा विभेव तनुः ।**
**धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥**

यस्य मतिर्बुद्धिः कमलेव लक्ष्मीरिव । कमला लक्ष्मीर्मतिरिव बुद्धिरिव । विभा कान्तिः तनुरिव शरीरमिव । तनुः शरीरं विभेव कान्तिरिव । धृतिर्धैर्यं धरणीव पृथ्वीव । धरणी पृथ्वी धृतिरिव धैर्यमिव सततं निरन्तरं विभाति शोभत इत्यर्थः ।

## आदर्शः

उपमेयोपमामाह—विपर्यास इति । परिवृत्तिरिति । उपमानस्योपमेयता उपमेयस्य तु वाक्यान्तरे उपमानतेत्यर्थः । वाक्यान्तरं विना तदसम्भवादाह—अर्थादिति । कमलेवेति । विभातीति । सर्वत्रान्वयः । स एव च सर्वत्र साधारणो धर्मः, दीप्यमानत्वं विना धर्मान्तराभावात् ।

## सुधासागरः

उपमेयोपमालङ्कार लक्षयति—विपर्यास इति । विपर्यासविवरणं परिवृत्तिरिति ।वाक्यद्वय इति । एकवाक्ये तथाऽसम्भवादिति भावः । अत एवानन्वयव्यवच्छेदः । तयोरुमानोपमेययोर्विपर्यास उपमेयोपमानभावः । उपमेयेनोपमेति यौगिकी संज्ञा । उदाहरणम्—कमलेवेति ।

वत हर्षे । यस्य नृपतेः कमलेव मतिः लक्ष्मीरिव बुद्धिः । विभा कान्तिः तनुरिव शरीरमिव । विभेव तनुः । धरणीव धृतिः पृथ्वीव धैर्यम् । धृतिरिव धरणी सततं निरन्तरं विभाति शोभत इत्यर्थः ।

अत्र कमलायाः उपमानत्वे मतिनिष्ठं सर्वजनोपास्यत्वम् । मतेस्तथात्वे कमलानिष्ठं स्थिरत्वम्, तनोस्तथात्वे विभानिष्ठमनभिभवनीयत्वम् । विभायास्तथात्वे धृतिनिष्ठं वैपुल्यम्, धृतेस्तथात्वे धरणीनिष्ठं निरुपद्रवत्वं प्रतीयते । तच्चेतरोमानसम्बन्धाभावेनोत्कृष्यत इति बोध्यम् । गीतिश्छन्दः । लक्षणमुक्तं प्राक् ।

(सू० १३७) संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।

समेन, उपमानेन। उदाहरणम्—

उन्मेषं यो मम न सहते जातिवैरी निशायाम्,

इन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।

नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-

ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः॥ ४१६॥

---

**सङ्केतः**

उत्प्रेक्षेति। उपमानगतगुणक्रियाभिसम्बन्धात् उपमानत्वेन उपमेयस्य सम्भावनं उत्प्रेक्षा। अन्यधर्माणां स्वाधर्मिभूताद्वस्तुन उत्कलितानां रसभावाद्यभिव्यक्त्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षाणां ईक्षणं उत्प्रेक्षा। तस्याश्च 'मन्ये शङ्के ध्रुवं' इत्याद्याः व्यञ्जकाः।

उन्मेषमिति। विकासमित्यर्थः। अत्र उपकृता उपमानम्, पद्मलक्ष्मीरूपं उपमेयम्। हर्षो गुणः शत्रूच्छेदेन उपकारिणं प्रति सर्वस्यापि स्यादिति सःपद्मलक्ष्म्यामसंभवन्नपि सम्भावितः। सिद्धरूपत्वे सति द्रव्यधर्मत्वात् हर्षस्य गुणत्वम्। हर्षगुणयोगात् पद्मलक्ष्म्याः पादलग्नत्वं उत्प्रेक्षितमिति क्रियोत्प्रेक्षा।

**बालचित्तानुरञ्जनी**

उत्प्रेक्षां लक्षयति संभावनमित्यादि। संभावनमनध्यवसायः अध्याहारः तर्कः ऊहः उत्प्रेक्षेति नार्थान्तरम्। प्रकृतस्योपमेयस्य। उदाहरति उन्मेषमिति। हे ललिततनु सुन्दरि कान्त्या शोभया, इति हर्षात्, ते पादयोः लग्नेति मन्ये। इतीति। किं जातिवैरी यथेन्दुः रात्रौ मम उन्मेषं न सहते। तस्य इन्दोः सौन्दर्य च गुणः। तत्र हर्षादित्युक्तो गुण एव निमित्तम्।

**काव्यादर्शः**

संभावनमिति। संभावनमभिमानिस्तर्क ऊहाध्यवसाय उत्प्रेक्षेति यावत् प्रकृतगतगुणक्रियाभिसंबन्धात् प्रकृतस्य प्राकरणिकस्य असन्तो ये धर्मा गुणक्रियालक्षणास्तेषां प्रत्येकं भावाभावाभ्यां संभावनं, तद्योगोत्प्रेक्षणम्। अत एवान्यधर्माणां स्वधर्मिभूताद् वस्तुन उत्कलितानां रसभावाद्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षाणा-मीक्षणम् उत्प्रेक्षा। सा च मन्ये-प्रभृतिभिर्द्योत्यते। यदुक्तम्—

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।

उत्प्रेक्षा व्यज्यते शब्दैरिव-शब्दोऽपि तादृशः॥

'उन्मेषम्' इति विकासम्। अत्र हर्षलक्षणगुणस्योत्प्रेक्षा। स हि शत्रुपराभवकरणेनोपकारिणमुद्दिश्य समुत्पद्यमानो लोके दृश्यत इति पद्मलक्ष्म्यामसंभवन्नपि संभावित:। हर्षश्च गुण:, सिद्धरूपत्वे सति द्रव्यधर्मत्वात्।

## विवेक:

एवं मुख्यामुख्यप्रकाराभ्यामुपमां निर्णीयानन्तरं तदाश्रितानलङ्कारान् कथयति—सम्भावनमथेति। सम्भावनमभिमान उत्प्रेक्षेत्यनर्थान्तरमेव। पर्यायेण लक्षणं युक्तमित्यलङ्कारबीजतामाह—प्रकृतस्येति। प्रकृतगतत्वेनोपमानसम्बन्धहेतुकं सम्भावनमुत्प्रेक्षानामाऽलङ्कार:। नेयं भ्रान्तिज्ञानस्वरूपा बाधपुर:सरत्वात्। सञ्जातबाधत्वेऽपि कविप्रतिभोत्थाप्यतया सम्भाव्यस्यानुप्रतीतिरबाधितैव प्रतिभातीति चमत्कारविशेषार्थकत्वादस्यान्यालङ्कारवैलक्षण्यम्। अनेन हि कवे: शक्तिव्युत्पत्ती सुतरां प्रकृष्येते, यदाह—'को हि प्रतीतिमात्रसारे वाक्ये (काव्ये) वस्तुस्थितिं च्यावयेदि'ति (का. मी. १६ पृ: द्र:, व. जी. १/११ वृ:, १/१२ द्र:)। जातिवैरी निरुपधिशत्रु:। ललिततन्वित्यामन्त्रणे। अत्रोपमानोपमेयभावाच्चरणयो: पद्मलक्ष्मीसम्बन्धे व्यवस्थिते शत्रुनिराकरणोपजातो हर्षगुण: कविना लोकोत्तरताप्रतिपादनार्थं निमित्तत्वेन सम्भाव्यत इत्येवंरूपेयं सम्भावना। 'मन्ये'-प्रभृतिवदिवशब्दोऽपि।

## दीपिका

प्रकृतस्य सम्भविनो वर्णनीयस्य उपमानेनेति सदृशतयोपकल्पितेनासम्भविनेत्यर्थ:। एतदनन्तरं सहैकरूप्येणेति शेष:। अत्र क्वचिदैकरूप्यमात्रस्यासत्त्वम्। क्वचित्तु तथा सम्भाव्यमानत्वम्। तत्राद्यं यथा ममैव "कण्ठे लसत्काञ्चनयज्ञसूत्रे" इत्यादि। अत्र हि सम्भाव्यमानतादात्म्याख्यसम्बन्धमात्रस्यैव सत्त्वम्, न तु सम्बन्धिनो:।

द्वितीयं यथा—

**"स व: पायादिन्दुर्नवबिसलताकोटिकुटिल:**
**स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहित:।**

**स्रवन्मन्दाकिन्या: प्रतिदिवससिक्तेन पयसा**
**कपालेनोन्मुक्त: स्फटिकधवलेनाङ्कुर इव॥"**

इत्यत्र सम्भाव्यमानस्य कपालाङ्कुरस्यापि शशविषाणसगोत्रत्वमेव। एषा च हेतुस्वरूपफलसम्भावना त्रिधा।

तत्राद्यं यथा—उन्मेषमित्यादि। अत्र हि स्वाभाविकमेव पादलग्नत्वं हर्षहेतुकपादलग्नत्वैकरूपतया सम्भावितम्। अथवा य: पक्ष्मलाक्ष्या:। स्वाभाविकपादलगनहेतु: स हर्षतादात्म्येन सम्भावित:।

## दर्पण:

उन्मेषमिति। अत्र पद्मलक्ष्म्या: [पक्ष्मलाक्ष्या] स्वाभाविकं पाद लग्नत्वं हर्षहेतुकत्वेनोत्प्रेक्षितं व्यापनादि प्रकृतम्।

## साहित्यचूडामणिः

उत्प्रेक्षामाह—सम्भावनमिति। सम्भावनमध्यवसायोऽभिमानस्तर्क ऊह उत्प्रेक्षेति नार्थान्तरम्। प्रकृतस्योपमेयस्य। यत् सूत्रम् 'अप्रकृतगुणक्रियाभिसम्बन्धाद् अप्रकृत्वेन प्रकृतस्य संभावनमुत्प्रेक्षा' [अ० सू० २२ वृत्तिः] इति। यच्चोक्तं—

**साम्यरूपविवक्षायां वाच्येवाद्यात्मभिः पदैः।**
**अतद्गुणक्रियारोप उत्प्रेक्षातिशयान्विता॥ इति।**

अतद् अप्रकृतं, तस्य ये गुणक्रिये तयोरारोपादध्यवसायादित्यर्थः। सम्भावनमित्यनेनास्या अध्यवसायाकारव्यापारप्राधान्यं ध्वन्यते। विषयकवलनादभेदप्रतिपत्तिर्हि विषयिणोऽध्यवसायः, तस्य च यत् साध्यत्वम् तदेव व्यापारप्राधान्यम्। तस्मिन्नसत्यतया विषयिणः प्रतीतिरुत्प्रेक्षामुत्थापयति। यत्र तु विषयिणो वास्तवादसत्यस्यापि सत्यतया प्रतीतिः तस्मिन्नध्यवसितप्राधान्येऽतिशयोक्तिः। सा स्वालंकार आसूत्रयिष्यते। तस्मादसत्यत्वं विषयनिष्ठस्य धर्मस्य गुणक्रियालक्षणस्य विषयिणि तत्र सम्भवः विषये त्वसंभवः इति द्वैविध्यमनुविधत्त इत्यलमतिमथनेन। इयं जातिक्रियागुणद्रव्याणामप्रकृतानामध्यवसायाच्चतुर्धा। प्रकृतेऽप्येतदौचित्ये वैचित्र्यान्तराभावादनुवर्णनम्। प्रत्येकं च—

**लोकातिक्रान्तविषयभावाभावाभिमानतः।**
**संभावनमथोत्प्रेक्षा वाच्येवादिभिरुच्यते॥**

इत्यभावभावाभिमानादष्टधा। पुनः प्रत्येकं निमित्तस्य गुणक्रियारूपत्वे षोडशधा। तस्योपादानानुपादानाभ्यां द्वात्रिंशद्धा। हेतुस्वरूपफलोत्प्रेक्षणेन षण्णवतिधा। एतच्च वाच्यत्वे। प्रतीयमानत्वेऽप्युत्प्रेक्षावैचित्र्यम्। श्लेषापह्नवाद्यलङ्कारान्तरवैचित्रीचर्चायामानन्त्यमिति संक्षिप्तेन पथा प्रतिष्ठमानो ग्रन्थकारो दिङ्मात्रमुदाहरति—

उन्मेषमिति। अत्र पादशोभाया उपमेयभूताया उपमानभूतपद्मसौन्दर्यात्मना संभावनम्। सौन्दर्यं च गुणः। तत्र हर्षादित्युक्तो गुण एव निमित्तम्।

## सम्प्रदायप्रकाशिनी

सम्भावनमथेत्यादि। अथशब्दः सम्भावनाप्रकरणस्य साधर्म्यप्रकरणानन्तर्यमाह। उपमानत्वेनोपमेयस्य सम्भावनमुत्प्रेक्षा।

उन्मेषमिति। मम विकासं यो न सहते, तस्येन्दोः सौन्दर्यदर्पोऽनया शान्तिं नीत इति हर्षात् तव पादयोः पद्मलक्ष्मीर्लग्ना। अत्र वास्तवं यदेतत् पादयोः पद्मलक्ष्मीलगनं, तस्येन्दुसौन्दर्यशमनरूपवैरनिर्यातनप्रभवो हर्षो हेतुत्वेनोत्प्रेक्ष्यते तथोत्प्रेक्षणे लगनमेव निमित्तम्।

## मधुमती

सम्भावनपिति। समेन उपमानेन। प्रकृतं उपमेयम्। एवं च उपमानेन उपमेयस्य सम्भावनं उत्प्रेक्षा इत्यर्थः।

ननु—सम्भावनं न तावत् आहार्यस्तदारोपः, रूपकेऽतिव्याप्तेः। नापि आहार्यः उत्कटकोटिकः संशयः, उदाहरणोः संशयविषयानवगाहनात्। मैवम्—उत्कटकोटिकतया संशयस्यैव सत्त्वात्। उदाहरणयोस्तु—मन्ये इवेति पदाभ्यां संशयावगाहनात्। अत एव 'मन्ये शङ्के ध्रुवं प्रायः' इत्यादिशब्दैरेव उत्प्रेक्षा प्रतीयते। यथोक्तम्—

**'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।**
**उत्प्रेक्षा व्यजते शब्दैः इवशब्दोऽपि तादृशः॥'**

इति सन्देहालङ्कारे तु कोट्योः तुल्यबलत्वात् ततो भेदः।

उन्मेषमिति। जातिवैरी स्वभाववैरी। 'जातवैर' इति पाठः सुगमः।

## विस्तारिका

वाच्यसादृश्यादलङ्कारान् निरूप्य व्यङ्ग्यसादृश्येषु निरूपयितव्येषु प्राधान्यादुत्प्रेक्षामाह—सम्भावनेत्यादि। अथेत्यनेन वाच्यसादृश्यात् सगोत्रत्वसूचनम्। उत्कोटिकः सन्देहः सम्भावनम्। तत्रोपमानस्य साधकतत्वेन करणत्वम्, तदंशे समुत्कटत्वात्। तदाह—समेनेति। प्रकृतस्येति। विषयविषयिभावसम्बन्धे षष्ठी। उत्कटोपमानकोटिकं प्रकृतविषयकं सम्भावनमुत्प्रेक्षेत्यर्थः। उत्कृष्टा प्रकृष्टस्योपमानस्य ईक्षा ज्ञानमित्युत्प्रेक्षापदप्रयोगः।

'अयं चन्द्र एव भविष्यति' इति सम्भावनायां चन्द्रांशस्योत्कटत्वं स्फुटमेव। न तु प्रकृतस्य प्रकृतान्तरमेव समम्। चन्द्रादिकं च न तथेति कथं नोत्प्रेक्षणमत आह—समेनोपमानेनेति। प्रकृतमात्मनः समं करोतीति समपदेनोपमानाभिधानमित्यर्थः। समकारिता तादृक्। एतेनोपमानेनेत्यनन्तरं सहैकरूपेणेति शेष इति निरस्तम्। करणत्वस्योपपत्तावध्याहारानौचित्यात्। अत्र सर्वत्रैवोत्प्रेक्षायां वस्तुसत्यसम्भाव्यमानसम्भविनो रसत्वेन तादात्म्यख्यः सम्बन्धः प्रतीयते।

अत्र केचित्—उत्प्रेक्षायां क्वचिदसतः सम्भावनम्, क्वचन सतः। तत्र प्रथमं यथा—

**स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः**
**स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः।**

**स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा**
**कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव॥**

इत्यत्र कपालाङ्कुरस्यालीकत्वात्। द्वितीयं तु वक्ष्यमाणलक्ष्येषु सुलभमित्याहुस्तन्न, कपालजन्यस्य कस्यचित् तादात्म्यं क्वचनाङ्कुरे तत्तादात्म्यं चन्द्रशकले इति सत एव खण्डशः सम्भावनम्, नासतः, अन्यथा शशविषाणस्य सम्भावनं स्यात्।

उन्मेषमित्यादि। उन्मेषं प्रकाशमुद्रेकं च। जातवैरी जन्मावधिशत्रुः। जीवतिपाठे जीवितावधिपाठे कदाचिदित्यर्थः। निशायां रविणा बन्धुना रहिते काले। अत एव दिने सतोऽपि तस्याकिञ्चित्करत्वात्। इन्दीवरदलदृशा सद्गोत्रामित्रप्रार्थितया प्रसभं बलात्, न तु शापात्। वदनपादादेरेकान्तरस्यापि सौन्दर्यमाह—मन्येपदाद्युष्मदस्ते आदेशः, सम्बुद्धेरपदत्वात्। लक्ष्मीः शोभा।

अत्र पद्मकान्त्याः पादलगने स्वभावो हेतुः । तत्र हर्षस्वरूपतादात्म्यसम्भावनम् ।

**सारबोधिनी**

वाच्यसादृश्यलङ्कारं निरूप्य व्यङ्ग्यसादृश्येषु निरूपयितव्येषु प्रथममुत्प्रेक्षामाह संभावनमिति । अथेत्यनेन वाच्यसादृश्यानां सगोत्रत्वसूचनम् । उत्कटकोटिक सन्देहः संभावनम् । उत्कटा प्रकृष्टस्योपमानस्येक्षा ज्ञानमुत्प्रेक्षा, अयं चन्द्र एव भविष्यतीत्युपकारिका । समेनेत्यनन्तरं ऐकरूप्येणेति शेष इति टीकाकृतः । समेनेति । न प्रकृतमात्रेण । समं करोतीति समपदेनोपमानमुच्यते । तथा चैकरूप्येणोत्कटोपमानकोटिकं प्रकृतोपमेयविषयकं संभावनमुत्प्रेक्षेत्यर्थः । उन्मेषमिति । उन्मेषं प्रकाशं उद्रेकञ्च । जातिवैरी सहजशत्रुः । मन्ये हर्षादित्यन्वयः । तथा च पादे लग्नस्य हेतुर्हर्ष इत्युत्प्रेक्ष्यते ।

**काव्यप्रदीपः**

**संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।**

समेनेत्यत्र सह एकरूपतयेति शेषः । तेन प्रकृतस्य संभविनोऽर्थस्य समेनासंभाविना सहैकरूपतया यत्संभावनं तदुत्प्रेक्षालंकार इत्यर्थः । सा चेयं हेत्वादिसंभावनाभेदाद्बहुप्रकारा । तत्र हेतूत्प्रेक्षा यथा—

**'उन्मेषं यो मम न सहते जातिवैरी निशाया-**
**मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।**

**नीतः शान्तिं प्रसभमनया चक्राकान्त्येति हर्षा-**
**लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥'**

अत्र पद्मलक्ष्म्याः कामिनीचरणयोः स्वभावलग्नत्वं यथोक्तहर्षहेतुकलग्नत्वतादात्म्येन संभावितम् ।

संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् । (क० ९२, पृष्ठ) समेन उपमाने । समेनेत्यनन्तरम् । ऐक्यरूपे-णेति शेषः । तथा च समेन उपमानेनैक्यरूपेण संभावनमुत्प्रेक्षेत्यर्थः । संभावनं उत्कटकोटिकः सन्देहः । अयं चन्द्र एव भविष्यतीत्याकारः ॥ यथा—

अत्रस्रमास्फालितवल्लीकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुमिन्नाया पुरः प्रवालेखि पूरितार्द्धया विभान्तमच्छस्फटिकाक्षमालया ॥

**काव्यप्रकाशखण्डनम्**

संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् । (का० ९२ पू०) समेन उपमानेन । समेनेत्यनन्तरम् । ऐक्यरूपे-णेति शेषः । तथा च समेन उपमानेनैक्यरूपेण संभावनमुत्प्रेक्षेत्यर्थः । संभावनं उत्कटकोटिकः सन्देहः । अयं चन्द्र एव भविष्यतीत्याकारः ॥ यथा—

**अजस्रमास्फालितवल्लीकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।**
**पुरः प्रवालैरिव पूरितार्द्धया विभान्तमच्छस्फटिकाक्षमालया ॥**

## आदर्शः

उत्प्रेक्षालङ्कारमाह—सम्भावनमिति। सम्भावनमुत्कटैककोटिकसंशयः, प्रकृतस्य उपमेयस्य। प्रकृतञ्च त्रिविधम्—प्रकृतस्य कारणं, प्रकृतस्य कार्यं, प्रकृतमेव चेति। एवञ्च—प्रकृतकारणसमेन प्रकृतकारणस्य, प्रकृत-कार्यसमेन प्रकृतकार्यस्य, प्रकृतसमेन प्रकृतस्य सम्भावनमित्यर्थः।

तत्र प्रकृतकारणसमेन प्रकृतकारणसम्भावनमाह—उन्मेषमिति। हे ललिततनु! इति हर्षात् पद्मलक्ष्मीस्ते तव पादयोर्लग्ना मन्ये। कस्माद्धर्षादित्यत्राह—उन्मेषमिति। य इन्दुर्मम पद्मलक्ष्म्या जातिवैरी स्वभाववैरी निशायां ममोन्मेषं न सहते, तस्येन्दोः सौन्दर्यदर्पो वक्त्रकान्त्या करणभूतया अनया इन्दीवरदलदृशा प्रसभं बलाच्छन्तिं नीत इति हर्षादित्यर्थः। अत्र पद्मलक्ष्म्याः पादयोः पतनं प्रकृतम्, तत्कारणञ्च पादयोः पद्मतुल्यशोभाजनकः पुण्यविशेष-स्तदुपमानेन हर्षेण सम्भावितः। पद्मलक्ष्म्याः पादपतनकारित्वमुभयसाधारणो धर्मः।

## सुधासागरः

ननु सम्भावनं न तावदाहार्यस्तदारोपः, रूपकातिव्याप्तेः। नाप्यनाहार्यः, उत्कटकोटिक आरोपः संशय एव, उदाहरणयोः संशयविषयानवगाहनात्। मैवम्। उत्कटोपमानकोटिकतया संशयस्यैव तथात्वात्। उदाहरणयो-र्मन्ये—इवपदाभ्यां संशयविषयावगाहनात्। अत एव शङ्के-मन्ये-ध्रुवं-प्राय-इत्यादिशब्दैरेवोत्प्रेक्षा प्रतीयते। ससन्देहालङ्कारे तु कोटयोस्तुल्यबलवत्त्वात्ततो भेदः। व्याख्यातं च प्रदीपकारैः—समेनेत्यत्र सहैकरूपतयेति शेषः, तेन प्रकृतस्य सम्भविनोऽर्थस्य समेनासम्भाविना सहैकरूपतया यत् सम्भावनं तदुत्प्रेक्षालङ्कार इत्यर्थ इति। इयं च हेत्वादिभेदेन बहुप्रकारा। तत्र हेतूत्प्रेक्षामुदाहरति—उन्मेषमिति।

नायकस्य नायिकां प्रति चाटूक्तिरियम्। हे ललिततनु सुन्दरशरीरे प्रेयसि पद्मलक्ष्मीः कमलशोभा, मन्ये, इति हर्षादेवंविधानन्दात्ते पादयोर्लग्ना तव चरणयोः प्रणता। इति किमित्याकाङ्क्षायामाह यो जातिवैरी सहजश-त्रुर्निशायां रात्रौ ममोन्मेषं मे प्रकाशमुद्रेकं च न सहते, तस्येन्दोः चन्द्रस्य सौन्दर्यदर्पो लावण्यगर्वः इन्दीवरदले इव दृशौ चक्षुषी यस्यास्तथाभूतयाऽनया प्रत्यक्षोत्कृष्टसुन्दर्या कर्त्र्या करणभूतदीप्त्या प्रसभं बलात्कारेण यथा स्यात्तथा शान्तिं नीतो दूरीकृत इत्यर्थः। मन्दाक्रान्ता छन्दः। 'मन्दाक्रान्ता जलधिषडगैम्भौंनतौ ताद् गुरूचेत्' इति लक्षणात्। अत्र पद्मलक्ष्म्याः कामिनीचरणयोः स्वभावलग्नत्वं यथोक्तहर्षहेतुकलग्नत्वतादात्म्येन सम्भावितमिति हेतूत्प्रेक्षे-यम्।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ४१७ ॥

इत्यादौ व्यापनादि लेपनादिरूपतया संभावितम् ॥

---

**सङ्केतः**

लिम्पतीति । अत्र तमोगतत्वेन लेपनक्रियाकर्तृत्वोत्प्रेक्षायां व्यापनादिक्रियानिमित्तं गम्यम् । व्यापनादौ तु उत्प्रेक्षाविषये निमित्तमन्यत् अन्वेष्यं स्यात् । न च विषयस्य गम्यत्वं युक्तम् । तस्य उत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात् । यत्तु—व्यापनाद्युत्प्रेक्षाविषयं अत्रोचे, तत् चिन्त्यम् ॥

व्याख्याविशेषोऽलङ्काराणां अलङ्कारसर्वस्वात् ज्ञेयः ।

'अकालसन्ध्यामिव धातुमत्ताम् ।'

'स्थितः पृथिव्या इव मानदण्डः ।'

'भूगतामिव कौमुदीम् ।'

'रम्भामिव भुवं गताम् ।'

इत्यादि तु उत्प्रेक्षैव । धातुमत्तादेर्हि प्रत्यक्षेणैव अकालसन्ध्यादिसादृश्यमुपलभ्य 'अकाले सन्ध्या न स्यात्' इति असम्भाव्यवस्त्वध्यवसायस्य सम्भावना क्रियते—'अकालसन्ध्यामिवे'ति । प्रत्यक्षोपलम्भे च न युक्तयन्तराकाङ्क्षा । उपमानस्यासम्भवात् न तूपमा ।

'रवेरिवान्धकारश्रीः कालधर्म इवामृतात् ।
अनीतिः पुरुषादस्मात् अहो ! कौतूहलं महत् ॥'

इतिवत् असम्भाव्योपमेयदर्शनाभावात् असम्भवोपमाऽपि न ।

'भार वहतीव पुङ्गवः'

'पयो ददातीव स्त्री'

इत्यादौ तु हृद्यत्वाभावात् नोत्प्रेक्षा । क्वापि क्विब्विधौ आमुखे उपमाच्छाया । निर्वहे तु—उपमानस्य प्रकृते सम्भवौचित्यात् सम्भवौचित्यात् सम्भावनोत्थाने उत्प्रेक्षैव ॥ स्वं यथा—

'यस्याज्ञया समं पादपद्मद्वयनखद्युतिः ।
मालतीमाल्यतितरां नमद्भूपालमौलिषु ॥'इति ॥

### बालचित्तानुरञ्जनी

क्रियामुदाहरति लिम्पतीति। अत्र तमोविषयतया लेपनं नभोवर्षणं च उत्प्रेक्षत इत्याह व्यापनादीति। आद्यस्य श्लक्षणता द्वितीयस्य नीलिमाधिक्यं च गुणो निमित्तम्। एवं जात्युत्प्रेक्षादिकमुदाहर्तव्यम्।

### काव्यादर्शः

'लिम्पती' ति। अत्र व्यापनादि उत्प्रेक्ष्यते-इत्याह—व्यापनादीति। जातिद्रव्योत्प्रेक्षापि दृश्यते, क्रमाद् यथा—

**स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः**
**स्मरारेर्यो मूर्ध्नि क्षलितकपिशे भाति निहितः।**

**स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा**
**कपालेनोन्मुक्ताः स्फटिकधवलेनाङ्कुर इव॥**

अत्र अङ्कुर-शब्दस्य जातिशब्दत्वाद् जातेरुत्प्रेक्षा॥

**पातालमेतन्नयनोत्सवेन विलोक्य शून्यं शशलाञ्छनेन।**
**इहाङ्गनाभिः स्वमुच्छलेन कृताम्बरे चन्द्रमयीव सृष्टिः॥**

**अत्र चन्द्रस्यैकत्वाद् द्रव्यत्वम्॥**

एतानि भावाभिमाने उदाहरणानि। अभावाभिमाने, यथा—

**असंतोषो [?षा] दिवाकृष्ट-कर्णयोः प्राप्तशासनः।**
**स्वधाम कामिनीनेत्रे प्रसारयति मन्मथः॥**

—अत्र संतोषगुणाभावस्य उत्प्रेक्षा।

**कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ।**
**अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ॥**

—अत्र 'अपश्यन्तौ' इति क्षामतायां कारणतया उत्प्रेक्षेति क्रियाया अभावाभिमानः। "लक्षणहेत्वोः क्रियाया"[पाणिनि ३-२-१२६] इति ह्यत्र शतृप्रत्ययः।

**चन्दनासक्तभुजगनिश्वासानिलमूर्छितः।**
**मूर्छयत्येष पथिकान्, मधौ मलयमारुतः॥**

—इत्यादौ भुजगनिःश्वासमूर्छितत्वे कारणत्वेन उत्प्रेक्षमाणेऽर्थे सामर्थ्याद् इवार्थावगतिः॥

**गतासु तीरं तिमिघट्टनेन ससंभ्रमं पौरविलासिनीषु।**
**यत्रोच्छलत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति सिप्रा॥**

—अत्र तु इव-शब्दमाहात्म्यात् संभावनं, छलशब्दाच्च अपह्नवोऽपि गम्यते इति सापह्नवोत्प्रेक्षेयम् ॥ एवं छद्मादिप्रयोगे ज्ञेयम् । 'अपर इव पाकशासनः' इत्यादौ तु प्रकृतस्य पाकशासनप्रतीतौ अध्यवसायसंभवाद् इव-शब्देन च तस्य साध्यत्वे उत्प्रेक्षा, अपर-शब्दप्रयोगे तु उपमा । इव-शब्दप्रयोगे तु अतिशयोक्तिः, उभयोरपि अप्रयोगे रूपकम् ।

**अकालसंध्यामिव धातुमत्ताम् ॥**

**आवर्जिता किंचिदिव स्तनाभ्यां वासो वसानां तरुणार्करागम् ।**
**सुजातपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥**

**अचिराभामिव [च] घनां ज्योत्स्नामिव कुमुदबन्धुना विकलाम् ।**
**रतिमिव मन्मथरहितां श्रियमिव हरिवक्षसः पतिताम् ॥**

**स्थितः पृथिव्या इव मानदण्डः ॥**

**हिरण्मयी साऽऽस लतेव जंगमा ॥**

**च्युता दिवः स्थास्नुरिवाचिरिप्रभा ॥**

**बालेन्दुवक्राण्यविकाशभावाद् बभुः पलासान्यतिलोहितानि ।**
**सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥**

—इत्यादिषु उत्प्रेक्षैव । धातुमत्तादीनां हि प्रत्यक्षत एव अकालसंध्यादिसादृश्यमुपलभ्य अकाले संध्या न भवतीति असंभाव्यमानवस्त्वध्यवसायस्य संभावना क्रियते । 'अकालसंध्यामिव' इति प्रत्यक्षोपलब्धौ च न युक्त्यन्तरं मार्गणीयम्, न तु उपमा, उपमानस्य असंभवात्, नाप्यसंभवोपमा, यस्माद् असंभाव्योपमेयदर्शने सति तस्याः प्रयोगात्, यथा—

**चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।**
**परुषा वागितो वक्रादित्यसंभावितोपमा ॥**

लोकोत्तरायाश्च संभावनाया उत्प्रेक्षाविषयत्वमिति यत्र कुतश्चिन्निमित्ताल्लौकिक्येव धर्माणां संभावना, न तत्रोत्प्रेक्षा । न हि भवति 'भारं वहतीव पुंगवः', 'पयो ददातीव स्त्रीगवी' इत्युत्प्रेक्षा । 'कस्तूरीतिलकं तिकालफलके[?] देव्या मुखाम्भोरुहे रोलम्बन्ती' इत्यादौ तु उपमोत्प्रेक्षा । यद्यपि सर्वप्रातिपदिकेभ्यः क्विबित्युपमानात् क्विब्विधौ आमुखे उपमाप्रतीतिः, तथापि उपमानस्य प्रकृते संभवौचित्यात् संभावनोत्थाने उत्प्रेक्षायां पर्यवसानम् । आनन्त्यं चास्या इति न प्रतन्यते ।

### विवेकः

यत्रोपमानोपमेययोः साधारणधर्मो न प्रतीतिपथमवतरति तत्रैतत् सामग्रीसद्भाव उत्प्रेक्षामेव व्यनक्ति यथा लिम्पतीवेत्यादि । अत्र तमोनभसौ कर्तृणी । तद्गतत्वेन प्रकरणादिनोपस्थापितं व्यापनादि लेपनादिरूपतया

प्रकर्षविवक्षया कविनोत्प्रेक्षितम्। तदियं क्रियोत्प्रेक्षा। जातिद्रव्योत्प्रेक्षेऽपि। तत्र जात्युत्प्रेक्षा यथा—स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः। स्रवन्मन्दाकिन्याः प्रतिदिवस-सिक्तेन पयसा कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव॥ (का. अ. सू. व-. ४/३/९) अत्राङ्कुरशब्दस्य जातिश-ब्दत्वाज्जातिरुत्प्रेक्ष्यते। द्रव्योत्प्रेक्षा यथा—देहस्थदर्पणे यस्य पश्यति प्रतिमामुमा। अन्यार्धाभ्यामिवोत्पन्नमर्धनारीश्वरात्मकम्॥ (का. अ. सू. वृ.)। अत्र प्रतिबिम्बरूपेण दर्पणेऽन्यथाऽवस्थितस्यार्ध-नारीश्वररूपस्यैकत्वाद्द्रव्यत्वमिति द्रव्यमुत्प्रेक्ष्यते। यथा च भावस्य सम्भावनोत्प्रेक्षा तथाऽभावस्यापि। तदुक्तम्—(का. अ. सा. स. ३/३९-४०) साम्यरूपाविवक्षायां वाच्येवाद्यात्मभिः पदैः। अतद्गुणक्रियायोगादु-त्प्रेक्षाऽतिशयान्विता॥ लोकातिकान्तविषया भावाभावाभिमानतः। सम्भावनेयमिति (उत्प्रेक्षा)। यथा (का. अ. सा. वृ. ३/४० उ)—कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ। अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ॥ इति। अत्र कपोलयोः प्रकृतयोः क्षामतागमनयोगादर्शनेहेतुत्वेनाभावरूपं सम्भावितम्। 'लक्षणहेत्वोः क्रियायाः' (पाः ३/२/१२६) इति अत्र शतृप्रत्ययः। मताभिधानस्यालङ्कारस्यान्यैः पृथक्लक्षितस्याप्यत्रैवान्तर्भावो द्रष्टव्यः।

## दीपिका

द्वितीय यथा—लिम्पतीवेति। अत्र लक्षणयोगमाह—व्यापनादीति। केचित्तुउत्प्रेक्षायां द्वयी गतिर्विषय-स्योपादानं निगरणं चेति। तत्राद्ये पूर्वमुदाहरणं शेषे स्फोरणार्थमियं वृत्तिरित्याहुः। तदसत्, पूर्वत्रापि स्वाभाविकस्य लगनहेतोरुत्प्रेक्षणत्वे तदिति विषयस्योपादानविरहात्। विषयोपादानन्तु यथा मम—

**प्रचण्डसीत्कारसमीरनिर्यत्सुकुम्भमुक्तानिकरावदातम्।**
**निदाघतापागमविप्रकीर्णं भाति द्विपानां करशीकराम्भः॥**

**वनेषु यस्यासिविदीर्णकुम्भिकुम्भावमुक्ताः प्रतिभान्ति मुक्ताः।**
**भूचारदृष्टा जितराजलक्ष्मीधम्मिल्लमल्लीमुकुलामलाभाः॥**

इत्यादौ मृग्यम्। न चैतदुदाहृतिद्वयं नोत्प्रेक्षाविषयः, सम्भावनाप्राणत्वात्तु तथैव।

तृतीयं यथाऽस्मत्तातानां सरोवर्णने—

**"कलङ्कपङ्कं किल यो वियोगदीनाबलापीडनदुर्यशोभिः।**
**तन्मार्जनायेव जले यदीये निमज्जतीन्दुः प्रतिबिम्बभङ्ग्या॥"**

अत्र स्वारसिकमेव मज्जनं कलङ्कप्रक्षालनप्रयोजनैकमज्जनैकरूप्येणोत्प्रेक्षितम्। इयमेव च सापह्नवोत्प्रे-क्षायामुदाहृतिः। उत्प्रेक्षणीयञ्च द्रव्यगुणक्रियाजातिरूपेण चतुर्विधमुक्तं प्राचीनैः।

तत्राद्यं यथा मम—

**"पायात् समस्तस्य तनुर्मुरारिर्यस्याच्छपुच्छोच्छलितैः क्षणेन।**
**पयोधिपूरैर्जगदश्नुवानैर्विनिर्मिताऽद्वैतमतीव वृष्टिः॥"**

अत्र सम्भाविताया जलमात्राय्या वृष्टेः सजातीयप्रसिद्धेः प्रसिद्धेनैकार्थ्येन वैयाकरणरीत्या गुणोत्प्रेक्षा हर्षादिति।

यथा वा मम विलासमञ्जरीकाव्ये ग्रीष्मवर्णने—

**"एते गताः पुष्टकपुत्रभावं सकृत् प्रजानां कलकण्ठधाराः।**
**तत्संकथाकर्णनलज्जयेव नोदीरयन्ति स्वगुणं स्वरेषु॥"**

अत्र लज्जा गुणः। क्रियोत्प्रेक्षा लिम्पतीवेति। जात्युत्प्रेक्षाऽङ्कुर इवेति। उत्प्रेक्षोत्थाननिमित्तञ्च क्वचिन्निबध्यते क्वचिद् विशीर्यत इति द्वयी गतिः।

आद्ये यथा मम—

**"एषा रतीशोत्पलपत्रपङ्क्तिः प्रकम्पतेऽस्याः सुदृशो भ्रमन्त्याः।**
**कर्णान्तपर्यन्तविलोलनेत्रविघट्टनत्राससमाकुलेव॥"**

अत्र सम्भावनाहेतुरुपादेयकम्पः।

द्वितीये यथा—"वर्षतीवाञ्जनं नभः" इत्यत्रोर्ध्ववर्तिनो नीलिम्नः सन्ततधाराकारेणाधः संयोगो वर्षणसम्भावनाहेतुर्गम्यः।

क्वचिद् भावौऽभिमन्यते। क्वचिदभाव इत्यपि द्वैतम्। तत्राद्येऽमून्येव निदर्शनानि। द्वितीये तु ममैव—

**"त्वद्वियोगपरिल्केशपराधीनान्तरात्मनः।**
**दीप्यमानः पुरोऽप्येतन्नास्त्येवाद्य जगन्मम॥"**

उक्तवैचित्र्यसङ्कलनया च प्रकारसंख्यानियमो ग्रन्थगौरवभीत्याऽनुक्तोऽपि लक्ष्यप्रसिद्धिमनुसृत्य प्राचीनदिशा बोद्धव्यः। प्रतीयमाना चेयं पूर्वोक्तदिशा ध्वनिगुणीभूतव्यङ्ग्ययोरे वान्तः पतति वाच्या प्रतीयमाना चेयं द्वैविध्याभिधानमलङ्कारान्तरसाधारण्येन मन्दप्रयोजनम्।

**साहित्यचूडामणिः**

क्रियायामुदाहरति—लिम्पतीति। अत्र तमोविषयतया लेपनं नभोविषयत्वेन वर्षणं चोत्प्रेक्ष्यत इत्याह- व्यापनादीति। आद्यस्य श्लक्ष्णता, द्वितीयस्य नीलिमाधिक्यं च गुणा निमित्तम्।

जात्युप्रेक्षा यथा—'स वः पायादिन्दुरि'त्यादि। अत्राङ्कुरो जातिः।

द्रव्योत्प्रेक्षा यथा—

**पातालमेतन्नयनोत्सवेन विलोक्य शून्यं शशलाञ्छनेन।**
**इहाङ्गनाभिः स्वमुखच्छलेन कृताम्बरे चन्द्रमयीव सृष्टिः॥ इति।**

अत्र चन्द्रस्यैकत्वाद् द्रव्यत्वम्। अभावाभिमाने यथा—

**कपोलफलकावेतौ कष्टं भूत्वा तथाविधौ।**
**अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ॥ इति।**

प्रतीयमानोत्प्रेक्षा यथा—

**निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः।**
**धारानिपातैः सह किन्नु वान्तश्चन्द्रो मयेत्यार्ततरं ररास॥ इति।**

यथावा "महिलासहस्सभरिए" इत्यादि। इवादिरत्र तु न श्रूयते। एवमन्यदुन्नेयमिति।

### सम्प्रदायप्रकाशिनी

लिम्पतीव तमोऽङ्गानीत्यत्र लेपनकर्तृत्वेनोत्प्रेक्षायां व्यापनादि निमित्तं गम्यमानम्। व्यापनादौ तु विषये निमित्तमन्यदन्वेष्यम्।न च विषयस्य गम्यमानत्वं युक्तम्, उत्प्रेक्षाधारत्वेन प्रकृतस्याभिधातुमुचितत्वादिति रुचकः। तत्प्रातिपक्ष्येणाह—लिम्पतीवेत्यादि। व्यापनादि लेपनादिरूपतया सम्भावितमिति व्यापनादेर्विषयत्वमुक्तम्। न च व्यापनादि गम्यमानं, तद्योगिनस्तमसः प्रकृतत्वात्। निमित्तं तु निविडत्वादि प्रतीयते।आदिशब्दादधः प्रसरणस्य च वर्षणत्वोत्प्रेक्षायामासाररूपत्वं निमित्तं प्रतीयत इति ग्रन्थकाराशयः।

### मधुमती

'लिम्पतीव तमोऽङ्गानी'त्यत्र लेपन-वर्षणकर्तृत्वं तमो-नभसोरुत्प्रेक्ष्यम्, व्यापनादि तन्निमित्तं गम्यमानं, न तु उत्प्रेक्षाविषयः इति अलङ्कारसर्वस्वकारमतं दूषयितुमाह—लिम्पतीवेत्यादि।

अयमभिसन्धिः—इह तमःकर्तृकं अङ्गकर्मकं लेपनम्, नभः कर्तृकं अञ्जनकर्मकं वर्षणं च प्रतीयते। तत्र तावत्—तमोनभसोः न लेपनवर्षणकर्तृकत्वं उत्प्रेक्ष्यम्। तदुत्प्रेक्षायाः संशयविशेषतया तस्यात्र साधारणधर्मदर्शनजत्वेन उपमाविषय एव अन्तर्भावात्, न च तमोलेपनकर्तुर्वा सादृश्यप्रतीतिरस्ति साधारणधर्माप्रतीतेः। व्यापनस्य लेपनकर्तृनिष्ठतया, प्रसरणस्य नभोवृत्तितया वा अप्रतीतेः। नापि लेपनवर्षणयोः तद्रूपकर्तृत्वं उत्प्रेक्ष्यम्। तद्वाचकेवशब्दासमभिव्याहृतत्वात्। तस्मात् तमः कर्तृकाङ्गकर्मकत्वेन प्रतीते व्यापने लेपनत्वम्, नभः कर्तृकाञ्जनकर्मकत्वेन ज्ञाते अधः प्रसरणे वर्षणत्वं च उत्प्रेक्ष्यमिति वक्तव्यम्। गत्यन्तराभावात्। व्यापनलेपनयोः तिर्यक्संयोग जनकक्रियात्वेन वर्षणाधः प्रसरणयोः अधसंयोगजनकांक्रियात्वेन च साम्यप्रतीतेः।

इयांस्तु विशेषः—व्यापने निरुक्तं रूपं स्वतस्सम्भवी अधः प्रसरणे तु कविनिबद्धप्रौढोक्तिसिद्धम्। तत्र च बाधितेऽप्यन्वयबोधाङ्गीकारात्,

**'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि।'**

इति मतावलम्बनात् इति ध्येयम्।

## विस्तारिका

केचित् 'लिम्पतीव तमोऽङ्गानि' इत्यादावपिव श्रौतीमुपमां मन्यन्ते, तन्निराचष्टे—लिम्पतीवेत्यादि। सम्भावितमिति। अत्रेवशब्दस्य सम्भावनमेवार्थः, नौपम्यमित्यर्थः। उपमायामिवेनेति समासानुशासनात्। आख्यातस्य नामताविरहात्। नाम्नां युक्तार्थस्य समासत्वात्। किञ्च लेपनकर्तृतमसोः साधर्म्याभावान्नोपमानत्वं व्यापनम्, तथा लेपनकर्तरि तदवृत्तेः। लेपन एव तत्सम्भावात्। न च तदेवोपमानम्, कर्तृविशेषणस्य साधर्म्यनिराकांक्षत्वादिति निरस्तम्। अत एवोक्तं दण्डिना-'केषाञ्चिदुपमाभ्रान्तिरिव श्रुत्येह जायते' इति। अत्र तमः कर्तृकव्यापने लेपनेत्यादौ पदम्लक्ष्म्याः पादलगनस्य हेतुर्हर्ष उत्प्रेक्ष्यते।

**रावणस्यापि रामास्त्रो भित्त्वोरुद्वयमाशुगः।**
**विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम्॥**

इत्यत्र प्रियाख्यानरूपं फलम्। 'स वः पायात्' इत्यत्र चन्द्रशकले अङ्कुरस्वरूपमित्याहुस्तन्न, पद्मलक्ष्मीपदलगनस्य हेतौ स्वभावे हर्षस्वरूपतादात्म्यम्। एवं सर्वत्रैव स्वरूपस्योत्प्रेक्षायां सम्भवन्त्या त्रैविध्यासम्भवात्।

किञ्च हेतुफलस्वरूपान्तराभावेन प्रधानक्रियाया एव वाच्यानि, पद्मलक्ष्मीपादलगनरूपायास्तस्या हर्षस्य हेतुत्वात्, भूप्रवेशस्य च प्रियाख्यानस्य फलत्वात्, तन्न व्यापकम्, 'स वः पायात्' इत्यत्र स्वरूपोत्प्रेक्षायामभावादिन्दुशकले कपालाङ्कुरस्वरूपोत्प्रेक्षणात्। तस्य च प्रधानक्रियान्वयाभावादिति।

यदत्र 'वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता' इति विश्वनाथेन।

नास्या भेदद्वयुक्तम्, तदसत्; वाच्यप्रतीयमानत्वयोः सर्वालङ्कारसाधारणत्वनैकत्र भेदकत्वाभावात्। न च

**तन्वङ्ग्या स्तनयुग्मेन न मुखं प्रकटीकृतम्।**
**हाराय गुणिने स्थानं न दत्तमिति लज्जया॥**

इत्यत्र स्तनयुग्मस्याचेतनस्य लज्जाबाधात् लज्जयेवेत्युत्प्रेक्षां विना वाक्यार्थानुपपत्तिरिति तदर्थमवश्यं भेदो वाच्य इति। वाच्यं वाच्यसिध्यङ्गत्वं गुणीभूतव्यङ्ग्यत्वस्य सर्वालङ्कारसाधारण्यात्। इहोत्प्रेक्षणीयस्य जातिगुणक्रियाद्रव्यस्वरूपत्वं भावाभावरूपत्वं च। यथा 'उरुः कुरङ्गकदृशश्चलचेलाञ्चलो भाति समता कः कनकमयो विजयस्तम्भः स्मरस्येव' इत्यत्र स्तम्भत्वं जातिः, विषयस्योरोरुपादानं च। उन्मेषमित्यादौ हर्षो गुणः, लिम्पतीत्यादौ क्रिया, चन्द्र इवेत्यादौ चन्द्रस्यैकत्वाद् द्रव्यत्वम्। एषु भावस्योत्प्रेक्षा। 'ययौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम्' इत्यत्राभावस्य पोषणस्य भोजनाभावत्वादुत्प्रेक्षानिमित्तस्य क्वचिदुपादानमनुपादानं च। आद्यम्—उन्मेषेत्यादौ। अत्र दर्पशमननयनं क्रियानिमित्तमित्याद्यवान्तरवैजात्ये सम्भवत्यपि ग्रन्थकृता न प्रपञ्चितम्, तत्तद्वैचित्र्ये चमत्काररूपफलवैजात्यविरहात्। सम्भावनमात्रकृतस्य तस्योदयात्। अस्याः सन्देहरूपत्वादतिशयोक्तिरूपकाभ्यां सम्भावनारूपत्वाच्च सन्देहाद् भेदः। सन्देहस्यानध्यवसायरूपत्वमित्यग्रे वक्ष्यते।

### सारबोधिनी

लिम्पतीत्यादाविवश्रुत्योपमात्वं ये मन्यन्ते, तन्निराचष्टे लिम्पतीत्यादि । अत्र तमोव्यापनाधःप्रसरणे स्वतः प्रतीयेते लेपेन वर्षणरूपतयाऽध्यवसिते । तत्र तमोनभसी कर्तृणी, इयत्रेवशब्दस्य संभावनमेवार्थो नौपम्यमिति भावः, उपमायामिवेन नित्यसमासानुशासनात् । आख्यातस्य नामताविरहात् नाम्नो युक्तार्थस्य समासत्वात् । वस्तुतस्तु यत्र प्रौढोक्तिनिष्पन्नोऽर्थस्तत्रेवार्थः संभावनेति बोध्यम् ।

### काव्यप्रदीपः

स्वरूपसंभावनं यथा—

**'लिम्पतीव तमोऽङ्गानि किरतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥'**

अत्र गम्यमानं तमसो व्यापनादि लेपनादिरूपतया संभावितमिति स्वरूपोत्प्रेक्षेयम् । अत एव 'तमसो लेपनकर्तृत्वमत्रोत्प्रेक्ष्यम्' इत्यलंकारसर्वस्वकारमतमपास्तम् । विवक्षितविवेकेन लेपनमात्रस्यैवोत्प्रेक्षणात् । एवं फलाद्युत्प्रेक्षाप्यूहनीया ।

### आदर्शः

प्रकृतेन प्रकृतसम्भावनमाह—लिम्पतीवेति । अत्र तमसोऽङ्गव्यापनं प्रकृतं तत्समेन लेपेन सम्भावितम्, आच्छादकत्वं लेपव्यापनयोः साम्यम् । द्वितीये तु तमसोऽधः सम्बन्धः प्रकृतः, तत्समेनाञ्जनवर्षेण सम्भावितः, भतलस्य नीलत्वदर्शकत्वं द्वयोः साम्यम् । कार्योत्प्रेक्षा तु—

**'निर्वृष्टलघुभिर्मेघैः सवितुस्तस्य चोभयोः ।**
**वर्द्धिष्णवो दिगाभोगाः प्रतापायेव रेचिताः ॥'**

इत्यत्र बोध्या । अत्र हि मेघैर्दिगाभोगरेचनस्य कार्यं कालधर्मपालनं प्रकृतं तत्समेन प्रतापेन सम्भावितम्, रेचनजन्यत्वमुभयधर्मः ।

### सुधासागरः

स्वरूपोत्प्रेक्षामुदाहरति—लिम्पतीवेति ।

विरहिणः कस्यचिदुक्तिरियं स्पष्टा । इदं त्ववधेयम्—इह तमःकर्तृकमङ्गकर्मकंलेपनम्, नभःकर्तृकमञ्जनकर्मकं च वर्षणं प्रतीयते । तत्र न तावत्तमोनभसोर्लेपनवर्षणकर्तृकत्वमुत्प्रेक्ष्यम् । उत्प्रेक्षायाः संशयविशेषतया तस्य च साधारणधर्मदर्शनत्वेनोपमाविषये एव सत्त्वात्, न च तमोनभसोर्लेपनादिकर्तृभिः सादृश्यप्रतीतिरस्ति । साधारमधर्माप्रतीतेर्व्यापनस्य लेपनकर्तृनिष्ठतयाऽधःप्रसरणस्य वर्षणकर्तृनिष्ठतया चाप्रतीतेः । नापि लेपनवर्षणकर्तृणोस्तद्द्वयकर्तृकत्वमुत्प्रेक्ष्यम् । तद्वाचकेषशब्दसमभिव्याहतत्वोत्पत्तिबलेन तत्समभिव्याहृतस्यैवोत्प्रेक्ष्यत्वात् । तस्मात्तमःकर्तृकाङ्गकर्मकत्वेन ज्ञाते व्यापने लेपनत्वम्, नभःकर्तृकाञ्जनकर्मकत्वेन ज्ञातेऽधःप्रसरणे वर्षणत्वमुत्प्रेक्ष्यम्,

गत्यन्तराभावात्। व्यापनलेपनयोस्तिर्यग्योजनकक्रियात्वेन वर्षणाधः—प्रसरणयोरधःसंयोगजनकक्रियात्वेन साम्यप्रतीतेः।

इयास्तु विशेषः—व्यापने निरुक्तं रूपं स्वतः सम्भवि, अधः प्रसरणं तु कविनिबद्धवक्तृप्रौढोक्तिसिद्धम्, तत्र च बाधितेऽप्यन्वयबोधाङ्गीकारात्, अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हीति मतावलम्बनादिति। एतेनात्र लेपनवर्षणकर्तृकत्वं तमोनभसोरुत्प्रेक्ष्यम्, व्यापनादि तन्निमित्तं गम्यमानं तदुत्प्रेक्षाविषय इत्यलङ्कारसर्वस्वकारम-तमपास्तम्। अत एव प्रदीपकारैरुक्तम्—अत्र गम्यमानं तमसो व्यापनादि लेपनादिरूपतया सम्भावितमिति स्वरूपोत्प्रेक्षेयमिति। तदेतत्सर्वमभिप्रेत्योक्तं वृत्तिकृद्भिः—व्यापनादि लेपनादिरूपतया सम्भावितमिति। एवं फलाद्युत्प्रेक्षाप्यूहनीया।

(सू० १३८) ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः ।। ९२ ।।

भेदोक्तौ यथा

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः

कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।

कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं

समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ।।४१८ ।।

---

**सङ्केतः**

संशय इति । यत्र अप्रस्तुतेत संशयवता वचसा प्रस्तुतं उत्कर्ष्यते स ससन्देहोऽलङ्कारः । अयं च प्रतिभोत्थापितः चमत्कारीति 'स्थाणुर्वा नरो वा' इत्यादौ नालङ्कारता । तत्र उपमेयं उपमानादभित्त्वा भित्त्वा वोच्यते । स च निश्चयगर्भो निश्चयान्तः शुद्धश्चेति त्रिधा ।

तत्र भेदोक्तौ निश्चयगर्भो यथा—अयमिति । अत्र आदावन्ते च संशयः, मध्ये तु 'तुरगै'रित्यादिना भेदोक्तौ निश्चयः ।

**सङ्केतः (रुय्यकः)**

संशयस्तु ससन्देहो यदि संशय्यमानस्य तदितरस्मादुत्तरकालं भेदः प्रतिपादितः स्यान्न वा, शुद्धस्यैव तस्य विच्छित्त्या प्रतिपादितत्वात् ।

**बालचित्तानुरञ्जनी**

संसेदहलङ्कारं लक्षयति संसेदहस्त्विति । भेदो व्यावर्तको धर्मस्तत्सहितस्तद्रहितश्चेति द्विविध इत्यर्थः । आद्यमुदाहरति अयमिति । अयं सूर्यः किम् ? सूर्यः खलु सप्तभिस्तुरगैरितः । एकेनाश्वेन युक्तत्वात् सूर्यो न भवतीत्यर्थः । तर्हि साक्षात् यमः किम् ? असौ यमः महिषवाहनः । महिषवाहनत्वाभावात् अयं यमोऽपि न भवति, इति प्रतिभटाः युद्धे त्वां चिरं समालोक्य इति विकल्पान् संशयान् कुर्वन्ति । अत्र वर्णनीयस्य मार्तण्डादीनां च संशये सति सप्ताश्वसंपन्नात्वादिभेद उत्कृष्यते । कविप्रतिभोत्थापितसंशय-[स्यैवालङ्कारत्वात्] ।

**काव्यादर्शः**

ससंदेहस्त्विति । प्रस्तुतवस्तुवर्णनार्थं यत्र संशयवद् वचः प्रयुज्यते उपमानाभेदपूर्वमुपमेयभेदकस्योक्तौ भेदकस्यानुक्तौ वा तत्र ससंदेहाऽलंकारः सह संदेहेन वर्तते इति । स च त्रिधा निश्चयगर्भो निश्चयान्तः शुद्धश्च ।

यः संशयोपक्रमो निश्चयमध्यः संशयान्तश्च स निश्चयगर्भः, यथा—'अय'मिति। अत्र 'तुरगैः इत्यादि भेदस्योक्तौ संशयः। अत्रोपमेयस्य तद्भावमुपमानेनोक्त्वा पश्चाद् भेदे उच्यमाने यद्यपि आमुखे रूपकावभासः, पश्चाद् व्यतिरेकाकारः, तथापि नास्मिन्नलंकारद्वये विश्रान्तिरिति 'नु' 'किम्' इत्यादिशब्दोपादनात् संदेहे एव वाक्यार्थस्तस्य परिकरबन्धार्थं रूपकव्यतिरेकौ आमुखे प्रतिभासेते इति तत्संकराशङ्का न कार्या।

## विवेकः

सम्भावनाऽऽत्मिकोत्प्रेक्षा नोत्कटैककोटिकसंशयरूपेति दर्शयितुमाह—ससन्देहस्त्विति। 'तु' शब्दः पूर्वस्माद् व्यतिरेके। एकस्मिन् धर्मिणि विरोधिनानार्थवमर्शः संशयः किमयं किं वाऽयमिति। अयञ्च साधकबाधकप्रमाणभावादिसामग्रीसहकृतवादिप्रतिवादिविप्रतिपत्तिजन्यादिभेदभिन्नस्त्रिधा। पञ्चधेत्यन्ये (रुद्रट ८/५९-६६)। अत्र त्वलङ्कार प्रस्तावात् सादृश्येहेतुक एव सोऽपि विच्छित्त्यर्थं कविप्रतिभोत्थापित एवोपादेयो न पुनः स्वरसोत्थापितः 'स्थाणुर्वा स्यात् पुरुषो वे'त्येवंरूपः। ससन्देह इति लक्ष्यम्। उपमानेन सन्दिह्यमानस्योपमेयत्वप्रतिपत्तिनिरासार्थमुत्तरकाल(ले) भेदः प्रतिपादितः स्यान्न वा, शुद्धस्यैव तस्याविच्छित्त्या प्रतिपादिकत्वात्। अयमित्यादि—किमित्यनेन स्तुतिप्रतिपादनायमेव सूर्याद्यत्मको न भवतीति निश्चीयते तथापि स निश्चयः प्रतीयमानो न तूत्तरोदाहरणवद्वाच्य इति संशयोपक्रमो वस्तुतत्त्वानिर्णयद्विकल्पान् विदधातीति संशयान्तश्चेति निश्चयगर्भोऽयं सन्देहः। तदिह सूर्यादिसदृशोऽयमित्युपमा, लोकोत्तरतेजस्विताऽऽदिगुणाध्यारोपादयमेव सूर्यद्यात्मक इति रूपकम्, असंख्यतुरगादिसमन्वयात् सूर्यादिभ्यो व्यतिरेकः, लोकोत्तरतेजस्तविताऽऽद्युत्कर्षादतिशयोक्तिरित्येतेऽलङ्कारा: प्रतीयमाना अपि वाच्यानुगता एव।

## दीपिका

स सन्देह इति क्वचित् सन्देह इत्युप्युच्यते, भेदोक्तौ वैधर्म्योपादाने प्राचीन एव संशयो निर्णयसम्बलनया वैचित्र्यमाविष्कुर्वाणोऽलङ्करणतां भजते। तदनुक्तौ तु शुद्ध एव। निश्चयगर्भ इत्येकस्मिन्नेव विषये प्रथमं संशयस्ततो निश्चयः, पुनरपि संशयो निश्चयश्चेत्येवंरूपः।

निश्चयान्त इति। बहुधा सन्दिग्धनिश्चयरूपः। क्व कलङ्क इति सन्देह एवोपद्वलितः सूच्यते न तु निश्चयः, तत्प्रतिभासविरहात्।

## दर्पणः

सन्देहालङ्कारः ससंदेह इति। सन्देहेन सह वर्तत इति व्युत्पत्या ससन्देहार्थ...लंकार इति केचित्, सोऽलंकार संदेहाख्य इति केचित्। तस्य लक्षणं संशय इति। द्भेदस्योक्तिः। संदिह्यमाने वैधर्म्यस्य कथनं क्वचित्तस्याकथनमिति द्विधेत्यर्थः। तिवः [चिरं] समालोकनं भयवशात्। अत्र च निश्चयगर्भे संशये मार्तण्डप्रभावनिश्चयः, राजनिश्चये द्वितीयसंशयोत्थानासम्भवात्।

## साहित्यचूडामणिः

ससन्देह इति। सन्देहवत्त्वादयमलंकारः ससन्देहः। यत् सूक्षं "विषयस्य सन्दिह्यमानत्वे ससन्देहः" (अलंकारसूत्रम् १८)। केचित् संशय इत्येवाहुः। यथाचोक्तं—

श्रुतेः सामान्यधर्माणां विशेषस्यानुदाहृतेः। अप्रतिष्ठतं यदेकत्र ज्ञानं तं संशयं विदुः॥ इति।

एकत्राप्यप्रतिष्ठं न पुनरुभयालम्बनं तत्त्वे स्थाणुश्च पुरुषश्चेति समुञ्चयेऽनिश्चयतापत्तेः। वर्णनीयोत्कर्षानुवर्णनमस्य प्रयोजनम्। यथोक्तम्—

**उपमानेन तत्त्वं च भेदं च वदतः पुनः।**
**ससन्देह वचःस्तुत्यै ससन्देहं विदुर्बुधाः॥ इति।**

## सम्प्रदायप्रकाशिनी

स सन्देहस्त्विति। भेदो निश्चयः। भेदोक्त्यनुक्तिभ्यां द्विरूपो यः संशयः स सन्देहोऽलङ्कारः।

अयं मार्तण्ड इति। सर्वा दिशो न प्रसरति, ऊर्ध्वज्वलनस्वभावत्वात्। तिरस्तिर्यक्। अत्र स खलु तुरगैरित्यादिभिः भेदोक्तिः।

## मधुमती

ससन्देहस्त्विति। सन्देहः इति लक्ष्यनिर्देशः। संशय इति लक्षणम्। भेदोक्तौ इत्यादिः विभागः। अयमिति। अत्र तत्तद्वैधर्म्याभिधानेन भेदस्य प्रतीयमानतया निश्चयगर्भत्वं स्फुटम्।

## विस्तारिका

ससन्देह इति। भेदो वैधर्म्यम्। सन्देहनामालङ्कारः। 'प्रकृतस्य समेन' इत्यनुवर्तते। तुर्भिन्नक्रमे। प्रकृतस्य समेन संशयस्तु सन्देह इत्यर्थः।

अत्रेदमालोचनीयम्—सन्देहः सम्भावनमनध्यवसायश्चेति ज्ञानत्रयम्। अत्रैकत्र धर्मिणि तुल्यकोटिकं भावाभावोभयविषयकं ज्ञानं सन्देहः। यथा—'अयं चन्द्रो न वा' इति। उत्कटभावकोटिकमुत्तरद्वयम् 'अयं चन्द्र एव भविष्यति' इत्येकं निश्चित्य तुल्यमिदमेव सम्भावनाख्यम्। इयमेवोत्प्रेक्षा, 'किंस्विदयं चन्द्रः' इत्यपरमनध्यवसायाख्यं स एव सन्देहः। अत्राभावकोटेरनुत्कटत्वेनान्तरीयमानत्वमिति सन्देहसाहित्यम्।

ननु सन्देहत्वं किंस्विदित्यनेन सन्देहोत्थापनम्। एतयोरुपमेयविषये उपमानताप्रत्यायनादलङ्कारता, सन्देहस्तु न तथा, अत्रोपमानत्वाभावबोधनात्।

अयं मार्तण्डः किमिति। इतो गतः सप्तभिस्तुरगैः सूर्यस्य यावद्देशलङ्घनम्। एकेनैवास्य तावदित्यर्थः। सर्वा दिशो न प्रसरति, ऊर्ध्वज्वलनत्वात्। वहनमिति करणे ल्युट्। चिरमिति निपुणनिभालने वा निश्चयः। तिर इति पाठे तिर्यगित्यर्थः। भयानुभावोभयप्रतिभटा इति बहुवचनेनैकस्यापि विशिष्यज्ञानमिति सूचनम्।

अत्र वैधर्म्यदर्शनात् तर्क्यमाणसूर्यत्वादिकटिव्यतिरेकनिश्चयः। स च पूर्वसंशयस्य संशयान्तरावतार-णयोग्यतापादकत्वात्। मध्यवर्तित्वाच्च। गर्भ इव गर्भः, तेनायं सन्देहो निश्चयगर्भः।

भेदोक्तवित्यनेनेति। अयमर्थः—वैधर्म्यस्योपमाननिष्ठस्योपमेयनिष्ठस्य चोक्तिरिति द्विधा। अत्रोपमाननिष्ठस्योक्तौ विशेषदर्शनविरहेण संशयान्तरयोग्यतायां निश्चयस्य गर्भता, यथा दर्शितोदाहरणे।

### सारबोधिनी

ससंदेह इति। भेदो वैधर्म्यम्। अत्र यत्पदाभावात् संदेहनामालङ्कार इति कश्चित्। तन्न। अत्र हि पूर्वसूत्रात् प्रकृतस्य यस्तु संशयः स एव ससंदेहनामालङ्कारः। उपमेयस्यातिशयार्थ कविप्रतिभया यः प्रादुर्भवति संशयः स एव संदेहनामालङ्कारः, न तु स्वारसिकः, स्थाणुर्वा पुरुषो वेत्यादिकः।

### काव्यप्रदीपः

**ससंदहस्तु भेदोक्तौ तदनुक्तौ च संशयः॥ ६॥**

भेदो वैधर्म्यम्। संशयस्तु कविप्रतिभानिर्मित एवालंकारो न तु स्वारसिकः स्थाणुपुरुषादिविषयो वा। वैचित्र्याभावात्। अत्र संशयः ससंदेह इति लक्षणम्। भेदोक्तौ तदनुक्तौ चेति विभागः। तत्र भेदोक्तौ यथा—

**'अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः।**
**कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम्॥**

**कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं।**
**समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः॥'**

अत्र मार्तण्डत्वादीनां संदेहे सप्ततुरगत्वादीनि वैधर्म्याणि तदाश्रयेषूक्तानि। न चायं व्यतिरेकालंकारः। तस्य संदेहानुयायितया तेनैव व्यपदेशौचित्यात्। ननु भट्टोद्भटेन भेदोक्तौ निश्चयगर्भ एवायं स्वीकृतो न तु निश्चयान्तोऽपि तत्किमस्यापि स एव पन्थाः। नेत्युच्यते। कुत एतत्।

### काव्यप्रकाशखण्डनम्

ससंदेहस्तु भेदोक्तौ तदनुक्तौ तु संशयः॥ (का० ९२, उ०)

प्रकृतस्य समेनेत्यनुवर्त्तते। तु भिन्नक्रमे। तदिति लिङ्गव्यत्ययात् संशय इत्यनेनान्वेति। तथा च—समेन प्रकृतस्य संशयस्तु यः ससंदेहनामालङ्कारः। अत्रोपमानोपमेययोरतिशयार्थं विप्रतिपत्तयः प्रादुर्भवन्ति ससंदेह अलङ्कारः, न तु स्थाणुपुरुषयोः भेदोक्तौ। यथा—

गतं तिरश्चीनमनूरुसारथेः [प० ४८, २] प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः। पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः॥

### आदर्शः

ससन्देहसंशयालङ्कारमाह—ससन्देहस्त्विति। भेदोक्ताविति, संशयानन्तरं तद्व्यावर्त्तकधर्मोक्तविति त्यर्थः। अयं किमिति। त्वामाजौ समालोक्य प्रतिभटाः प्रतिकूलवीराः चिरमिति विकल्पान् विदधति। विकल्पानेवाह—अयं किमिति। स खल्विति तद्व्यावर्त्तको धर्मः। 'इतः' गतः। कृशनुरिति, सर्वा इत्यादिव्यावर्त्तकः। एष कृशानुः सर्वा दिशो न प्रसरति, सर्वदिक्प्रसारी न कृशानुरित्यर्थः। कृतान्त इति, महिषवहनत्वं तद्व्यावर्त्तकम्।

### सुधासागरः

ससन्देहालङ्कारं लक्षयति—ससन्देह इति।

अत्र ससन्देह इति लक्ष्यनिर्देशः। संशय इति लक्षणम्। भेदोक्तौ तदनुक्तौ चेति विभागः। तत्र भेदोक्तौ यथा- –अयमिति।

शत्रवस्त्वामाजौ सङ्ग्रामे समालोक्य सम्यग्दृष्ट्वा इति विकल्पान् वक्ष्यमाणप्रकारकसन्देहान् चिरं विदधति बहुकालं कुर्वन्ति। किमित्याकाङ्क्षायामाह—अयं भूलोकगतः सैन्यं भस्मसात्कुर्वन् मार्त्तण्डःकिम्, स सूर्यः खलु सप्तभिस्तुगैरितो युक्तो नायं तथा। तर्हि कृशानुः किम्, नैवम्, अग्निः सर्वाः दिशो नियतं प्रसरति, नैष तथा प्रसरति। तर्हि साक्षात् दृग्गोचरतां प्राप्तः कृतान्तो यमः किम्, महिषवहनोऽसौ यमः, अयन्तु महिषं नारोहतीत्यर्थः। शिखरिणी छन्दः। 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात्।

अत्र मार्त्तण्डत्वादीनां सन्देहे सप्ततरगत्वादीनि विशेषणानि तदाश्रयेषु वैधर्म्येणोक्तानि। न चायं व्यतिरेकालङ्कारः, तस्य सन्देहानुयायितया तेनैव व्यपदेशौचित्त्यात्।

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भो यावन्निश्चयान्तोऽपि संदेहः स्वीकृतः। यथा

इन्दु किं क्व कलङ्कः सरसिजमेतत् किमम्बु कुत्र गतम्।

ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥

किं तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इति। उपेक्षितो भट्टोद्भटेन।

---

सङ्केतः

इन्दुरिति। अत्र क्व कलङ्कः इत्यादि भेदकोक्तिः। आदौ संशयः, अन्ते च निश्चयः।

किन्त्विति। अयं भावः—निश्चितं इत्युक्त्या निश्चयस्य न व्यङ्ग्यत्वम्, किन्तु वाच्यत्वम्। व्यङ्ग्यत्वे च आश्चर्यमिति।

बालचित्तानुरञ्जनी

इन्दुरिति। कलङ्काभावात् चन्द्रोऽपि न भवतीत्यर्थः। सरसिजं किम्? उदकं कुत्र गतम्? उदकाभावान्न सरसिजम्। ललितानि मनोहराणि सविलासानि वचनानि तैः परितः पश्चात् मुखमिति निश्चितम्। अत्र कलङ्कादिको भेदको धर्मः। पर्यन्ते मुखमिति निश्चितमित्युक्तत्वात्। निश्चयान्तत्वञ्च।

रुद्रटेनोक्तोऽयं विभागः कस्मादुद्भटेनोपेक्षित इत्यत्राह किन्त्विति। व्यज्यमानव्यतिरेकादुच्यमाने निश्चये कश्चमत्कारातिशय इत्युद्भटाभिप्राय इति यावत्। भेदकधर्मानुक्तावुदाहरति तदिति।

काव्यादर्शः

यत्र संशयोपक्रमेऽपि निश्चयपर्यवसानं स निश्चयान्तः, यथा—'इन्दु' रिति। अत्र 'क्व कलङ्कः' इत्यादिभेदकोक्तौ निश्चयान्तः संशयः। अत्र 'निश्चितम्' इति वचनेन साक्षादुपात्तत्वानिश्चयस्येति न तस्य व्यज्यमानत्वमित्याशङ्क्याह—किं त्विति।

विवेकः

निश्चयान्तो यत्र संशयोपक्रमेऽपि निश्चये पर्यवसानं यथा—इन्दुः किमित्यादि। आश्चर्यमात्रं तु करोतीति नैतावता मुख्यालङ्कारत्वमित्ययं प्रकारो महद्भिर्भट्टोद्भटप्रभृतिभिरुपेक्षितः।

## दीपिका

ननु यद्येवंप्रकारः सम्भवति, तर्हि किं भवदुपजीव्यैः प्राग्भिरलङ्कारकारैर्ननिबद्धइत्याह-किन्त्विति। यद्यपि लक्ष्यप्रसिद्धया दुरपलपं तथापीत्यर्थः। नात्र निश्चयः प्रतीयमान इति विशिष्ठप्रायतया वैचित्र्याधायकसंशयसहकारितयेति शेषः। भट्टोद्भटेनोपेक्षितो न तु सर्वैरित्यर्थः।

## दर्पणः

किन्त्वत्रेति। निश्चयस्य प्रतीयमानत्वाभावे वैचित्र्याभावादिति भावः। भट्टोद्भटेन न तु सर्वैः। पुराणो मुनिर्वेधाः।

## साहित्यचूडामणिः

अस्य द्वैविध्यमाह—भेदेति। अयमिति। अत्र वर्णनीयस्य मार्तण्डादीनां च संशये सप्तिसप्तकसम्पन्नत्वादिभेद उत्कृष्यते। न केवलमिति। आद्यन्तयोः संशयस्फुरणं मध्ये निश्चय इत्येका कोटिः। आदिमध्ययोः संशयस्फुरत्ता अन्ते च निश्चय इत्यन्या। तदुभयमविवक्षितमिति यावत्।

इन्दुरिति। कलङ्कादिकोऽनेको धर्मः। पर्यन्ते मुखमिति निश्चितमित्युक्तत्वं च निश्चयान्तत्वं च।

ननु 'रुद्रटेनोक्तोऽयं विभागः कस्मादुद्भटेनोपेक्षित इत्यत्राह—किन्त्विति। व्यज्यमानाद् व्यतिरेकादुच्यमाने निश्चये कश्चमत्कारातिशय इत्युद्भटाभिप्राय इति यावत्।

## सम्प्रदायप्रकाशिनी

प्रकारान्तरं दर्शयितुमाह—भेदोक्तावित्यनेनेत्यादि। अतो निश्चयगर्भो निश्चयान्तश्चेति द्विरूपोऽयम्।

निश्चयान्तमुदाहरति—इन्दुः किमित्यादि।

इहारुचिं दर्शयति—किन्तु निश्चयेत्यादिना।

## मधुमती

भेदोक्तावितीत्यादि। तथा च भेदः प्रतीयमानः शाब्दो वा भवतु। उभयथाऽपि भेदप्रतीतिः। तत्र प्रथमे निश्चयगर्भत्वम्, द्वितीये निश्चयान्तत्वमिति।

किन्त्विति। प्रतीयमानः व्यङ्ग्य इत्यर्थः।

## विस्तारिका

उपमेयनिष्ठस्य तस्योक्तौ प्रकृतत्वनिश्चये उपमानत्वाय च निश्चयस्यान्तरासंशयमनुत्थापनात्। तदाह—इन्दुः किमित्यादि।

अत्र कलङ्काद्यभावविशेषदर्शनाच्चण्डत्वाद्यभावनिश्चय इति उपमानगतवैधर्म्यस्य प्रदर्शनम्।

सन्देहान्तराभावता—स्वीकृत इति। अनेन स्वमतोत्थापनम्।

उपमेयगतं दर्शयति—ललितदेत्यादि। ललितं मधुरम्, लंवितम् आकूतं परतो विलम्बेन। अत्र वचनवैधर्म्येण मुखत्वनिश्चये सरसिजत्वाभावनिश्चयो न।

किन्त्विति। अत्र निश्चयान्ते प्रतीयमानो व्यङ्ग्यः। नेति। निश्चित मित्यनेन निश्चयस्याभिधानादित्युत्प्रेक्षाबीजम्।

अयं पक्षो न समीचीनः, निश्चयान्तेऽपि चन्द्रत्वाद्यभावनिश्चयस्य प्रतीयमानतया गर्भत्वानपायात्, प्रकृतत्वनिश्चयस्य तत्राकिञ्चित्करत्वादित्यभिसन्धायैव स्वीकृत इत्युक्तम्।

केचित्तु यत्रादावन्ते च संशयः, मध्ये निश्चयः, स निश्चयगर्भः। यत्र त्वन्ते धर्मिनिश्चयः स निश्चयान्त इति विभागमाहुस्तन्न, 'इन्दुः किम्' इत्यादावन्तविनिश्चयस्योभयसंशयमध्यवर्तित्वे निश्चयगर्भतापातात्।

न चात्र संशयद्वयमेव मध्ये न निश्चयोऽप्रतिभासादिति वाच्यम्, अथ 'कि मार्तण्डः' इत्यादावपि तथात्वे निश्चयगर्भता, विलोपप्रसङ्गात्। धर्मिनिश्चयस्य गर्भत्वाङ्गीकारे संशयान्तरं न स्यात्, विशेषदर्शनात्।

**सारबोधिनी**

भेदोक्ताविति। अयमर्थः। भेदोवैधर्म्यम्। वैधर्म्यस्योपमाननिष्ठस्योपमेयनिष्ठस्य चोक्तिरिति द्विधा। तत्र चोपमाननिष्ठस्योक्तौ प्रकृते मार्तण्डाद्यभावनिश्चयस्य संशयान्तरयोग्यतापादकत्वा मध्यवर्तित्वाच्च गर्भिता, असति तस्मिन् निश्चये पूर्वसंशये विद्यमाने संशयान्तरानुत्पत्तेः। उपमेयनिष्ठस्थे वचनादिरूपस्योक्तौ तु विशेषदर्शनत्वेन मुखत्वनिश्चये सति संशयान्तरानवतारात् निश्चयगर्भता। केचित्तु "यत्र धर्मनिश्चयः प्रतीयमानो भवति स निश्चयगर्भः अत एव तस्य निश्चयस्य वाच्यतादशायामेव स्फुटप्रकाशाभावेन गर्भस्थतुल्यता निश्चयगर्भ इत्युच्यते। यत्र निश्चयो वाच्यश्च भवति स निश्चयान्तः इत्याहुः।

किन्त्विति। अत्र निश्चयान्ते। न प्रतीयमान इति। व्यङ्ग्यो नेत्यर्थः। 'निश्चित'-मित्यनेन निश्चयस्याभिधानादित्युत्प्रेक्षाबीजम्।

**काव्यप्रदीपः**

भेदोक्ताविति विभजनात्। निश्चयान्तस्यापि तत्संभवात् वैचित्र्यानुभवाच्च। यथा—

**'इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम्।**
**ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः॥'**

तत्किं भट्टोद्भटेनायमुपेक्षितः। प्रतीयमानवद्वाच्ये तादृग्वैचित्र्याभावादिति गृहाण।

**काव्यप्रकाशखण्डनम्**

तदनुक्तौ यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥

अत्र वेदाभ्यसनेन सर्गानभिज्ञत्वमुक्तम्। विषयव्यावृत्तेत्यनेन शृङ्गाररसाकौसलत्वमुक्तम्। मनोहरमित्यनेन कान्तिदानाशक्तिरुक्ता। पुराणमित्यनेन निर्माणेऽनिच्छोक्ता। यतो 'वृद्धस्य तरुणी विषमि'त्युक्तम्।

## आदर्शः

अत्र व्यावर्त्तकधर्मोक्तौ (a) संशयितुर्निश्चयो व्यङ्ग्यः; स चावाच्यत्वाद् गर्भीभूतस्तद्गर्भ इव वाच्यनिश्चयान्तोऽप्ययमलङ्कारोऽत्र विवक्षित इत्याह—भेदोक्ताविवितीति। 'निश्चयान्तः' वाच्यनिश्चयशेषः। इन्दुः किमिति। अत्र 'निश्चितमि'ति वाच्यो निश्चयः शेषः। तर्हि प्रामाणिकेन भट्टोद्भटेन निश्चयान्तः कथं नोक्त इत्यत्राह—किन्त्विति। 'न प्रतीयमानः' न व्यङ्ग्यः, तथात्व एव वैचित्रयानुभव इति भावः।

## सुधासागरः

भेदोक्तावित्यनेनेत्यादि। अयं भावः—ननु भट्टोद्भटेन निश्चयगर्भ एवायं स्वीकृतो न तु निश्चयान्तोऽपि, तत्किमस्यापि स एव पन्थाः, नेत्युच्यते, कुत एतत्, भेदोक्ताविति। विभजनान्निश्चयान्तस्यापि सम्भवात्, वैचित्र्यानुभवाच्च।

इन्दुरिति। स्पष्टम्। गीतिश्छन्दः। अयमत्राशयः-भेदो वैधर्म्यम्, तदुक्तिर्द्विधा। उपमाननिष्ठवैधर्म्यस्योक्तिरुपमेयनिष्ठवैधर्म्यस्योक्तिश्चेति। तत्रोपमानमात्रनिष्ठस्योक्तौ प्रकृते मार्त्तण्डत्वाद्यभावनिश्चयस्य मध्यवर्त्तित्वान्निश्चयगर्भता। असति तस्मिन्निश्चये पूर्वपूर्वसंशये विद्यमाने संशयान्तरानुत्पत्तेः। उपमेयनिष्ठस्य वचनादिरूपस्योक्तौ तु वास्तवमुखत्वनिश्चये सति संशयान्तराभावान्न निश्चयगर्भता, किन्तु निश्चयान्ततैवेति। तत्किं भट्टोद्भटेनायमुपेक्षित इति चेत्, प्रतीयमानवद् वाच्ये निश्चये तादृग्वैचित्र्याभावादिति गृहाण। स एव सन्देहनामालङ्कारो न तु स्वारसिकः स्थाणुर्वा पुरुषो वेत्यादिकः।

तदनुक्तौ यथा

**अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो न कान्तिप्रदः**

**शृङ्गारैकरसः स्वयं नु मदनो मासो न पुष्पाकरः ।**

**वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो**

**निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ४२० ॥**

---

**सङ्केतः**

भेदोक्तौरेरभावात् सन्देहनिर्वाहे शुद्धो यथा—अस्याः इति । अत्र 'कान्तद्युतिः' इति युक्तः पाठः । निर्वाहे निर्माणस्यैव श्रूयमाणत्वात् न कान्तिप्रदानस्य विधिः । विधिश्च स्वस्वविशेषणविशिष्टचन्द्रादिरूपो भूत्वा एनां चक्रे । यद्वा—नैनां पुराणः प्रजापतिकार्षीत्, किन्तु—चन्द्रादिः । कान्तिमत्त्व-सरसत्व-सुकुमारत्वादिधर्मदर्शनात् । यो हि स्वयं कान्तद्युतिः शृङ्गारैकरसः पुष्पाकरश्च स एव कान्तिमद्रसवत्सौकुमार्यवद्वस्तु कर्त्तुं समर्थः । अत एवायमर्थः पूर्वोक्तविशेषणत्रयस्य उत्तरार्धविशेषणत्रयेण यथासंख्यं व्यतिरेकोक्तया उपोद्बलितः । स्रष्टुः सृष्टिसम्बन्धेऽप्यसम्हबन्धः उक्तः इति अतिशयोक्तिरपि ।

अत्र च 'स खलु तुरगैः' इत्यादिवत् न भेदकोक्तिः । चन्द्रादयो ह्येवंविधाः इत्यनुक्तेः । उत्तरार्धेन सन्देहनिर्वाहाच्च शुद्धत्वम् । तथा—

**'रञ्जिता नु विविधास्तरुशैलाः**
**नामितं तु गगनं स्थगितं नु ।**

**पूरिता नु विषमेषु धरित्री**
**संहता नु ककुभस्तिमिरेण ॥'**

इत्यत्र ध्वान्ताद्यैः तर्वादि न व्याप्तम् । किन्तु—रञ्जितमित्याद्युत्प्रेक्षितम् । सन्देहद्वारेणेति उत्प्रेक्षाश्रयेण । सन्देहद्योती 'नु' शब्दः । अन्ये तु 'नु' शब्दस्य सम्भावनोत्थापकत्वात् उत्प्रेक्षामेवाहेत्याहुः ॥

**'अयं मार्ताण्डः किं स खलु तुरगैः'**

इत्यत्र उपमेयस्य उपमानेनाभेदे पश्चाद्भेदे प्रोच्यमाने यद्यप्यादौ रूपकव्यतिरेकावभासः । तथापि सङ्करधीः न कार्या । सन्देहस्यैव निर्वाहात् । इतरौ तु छायामात्रेण सन्तावप्यसत्कल्पाविति । यद्वा—रूपकव्यतिरेकयोः उत्कटतया भेदेन भासनात् अत्र न सङ्करः । उत्कटभेदे हि स स्यात् । तर्हि संसृष्टिः ? न । उपकार्योपकारकत्वेन नैरपेक्ष्याभावात् इति । इति ससन्देहः ।

### बालचित्तानुरञ्जनी

अस्याः सृष्टिविधौ कान्तिप्रदः चन्द्रो न अभूत्? श्रृङ्गारैकरसः स्वयं मदनो नु? पुष्पाकरो मासो नु? वेदाभ्यासजडः विषयव्यावृत्तकौतूहलः पुराणो मुनिः इदं मनोहरं रूपं कथं नु निर्मातुं प्रभवेत्? न प्रभवेदित्यर्थः। अत्र नायिकारूपसृष्टौ ब्रह्मत्वं चन्द्रस्य मन्मथस्य मधुमासस्य वेति सन्देहे भेदको न कश्चिदुक्तः। वेदाभ्यासजाड-चन्तु चन्द्रमदनमधुमासेभ्यः प्रसिद्धब्रह्मणो वैलक्षण्यं न पुनरेतेषां मन्योन्यमिति भ्रमितव्यम्। अतश्च संशयावस्थै-वात्र चारुतामुत्थापयति। इतरथा नायिकारूपवर्णने कान्तप्रभा- [कान्तिप्रदत्वा?] द्येकतमविपर्यासापत्तेः।

### काव्यादर्शः

यत्र संशय एव पर्यवसानं स शुद्धः, यथा—'अस्या' इति। उर्वशीं प्रति पुरूरवाः प्राह। 'प्रजापतिः किं कान्तिप्रदश्चन्द्रोऽथ मदनः, किं पुष्पाकरो मासः।' अत्र 'स खलु तुरगैः' इत्यादिवद् भेदकं किमपि नोक्तं, 'चन्द्रो ह्येवंविधः' इत्यादेरभणनात्। 'नामितं नु गगनं स्थगितं नु' अत्र उत्प्रेक्षाश्रयेण संदेहः, तथा हि तिमिरकर्तृकायां शैलगगनादिव्याप्तौ रञ्जितत्वमुत्प्रेक्षितं, गगनानमितत्वाद्युत्प्रेक्षान्तरसंभवात् संदेहमागतम्। अन्ये तु 'नुशब्दः संभा-वनाद्योतक इत्युत्प्रेक्षैवेत्याहुः।

### विवेकः

शुद्धो यत्र संशय एव पर्यवसानं यथा—अस्या इत्यादि। अत्र कथमेवंविधं रूपं निर्मातुं यथोक्तः पुराणो मुनिः प्रभवेत्, अतश्चन्द्रादिष्वन्यतमेन प्रजापतिना भवितव्यमित्ययमतत्त्वानुपाती शुद्धः संशयः। यद्यपि 'निर्णया-सन्नो वितर्कः' 'वितर्कासन्नः संशयः' (न्या. सू.) इतिसंशयवितर्कयोर्भेदान्निर्णयान्तरालवर्त्यूहो वितर्क' इति वितर्का-लङ्कारस्य कैश्चिल्लक्षणं कृतं तत्र चैतदुदाहृतम् (स. क. आ. ३/१२२) तथापि वितर्कहेतुतया संशयस्य प्रथममेवाभ्युदीयमानत्वात्, तावतैव वैचित्र्यातिशयात् "किं"—'नु' प्रभृतीनाञ्च शब्दानां संशयवितर्कयोस्तुल्यरू-पत्वात् संशयेन वितर्को गर्भीकृत इति तस्यात्रैवान्तर्भाव इति ग्रन्थकर्तुरभिप्रायः। एवञ्च (स. क. आ. ३/१२१)—मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि। तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावण-मां ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति॥ अत्रापि तत्त्वानुपातिनः संशयस्यैव प्राधान्यं द्रष्टव्यम्।

### दीपिका

अस्या उर्वश्याः। वेदेत्युत्तरार्धम्। पूर्वार्धं पूर्वार्धप्रतिपाद्यसंशयोपोद्बलकम्।

### साहित्यचूडामणिः

तदनुक्तौ भेदनानुक्तौ।

अस्या इति। अत्र नायिकारूपसृष्टौ ब्रह्मत्वं चन्द्रमसो मन्मथस्य मधुमासस्य वेति सन्देहे भेदो न कश्चिदुच्यते। वेदाभ्यासजाड्यादिकं तु चन्द्रमदनमधुमासेभ्यः प्रसिद्धब्रह्मणो वैलक्षण्यं न पुनरेतेषामन्योन्यमिति

भ्रमितव्यम्। अतश्च संशयवस्थैवात्र चारुतामुत्थापयति। इतरथा नायिकारूपवर्णने कान्तप्रभवत्वादेरपि पर्युदासापत्तेः।

**सम्प्रदायप्रकाशिनी**

अस्याः सर्गेति। पुराणो मुनिर्नरसखः। अत्र सन्दिह्यमानेषु भेदानुक्तिः।

**मधुमती**

अस्या इति। कान्तिप्रदश्चन्द्रः, शृङ्गारैकरसो मदनः, पुष्पाकरो मासः इत्यन्वयः। तथा च—पुराणमुनिनिर्माणाभावे निश्चितेऽपि, चन्द्रादिनिर्मितत्वे सन्देहतादवस्थ्यात् भेदानुक्तिरित्यर्थः।

**"गतं तिरश्चीनमनूरुसारथेः**
**प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः।**
**पतत्यधो धाम विसारि सर्वतः**
**किमेतदित्याकुलमीक्षितं जनैः॥"**

इत्यत्र तु सन्देहस्य असाधारणधर्मजत्वेन आक्षिप्तौपम्यव्यतिरेकालङ्कार इति बोध्यम्। इति ससन्देहः॥

**विस्तारिका**

अस्या इत्यादि। अस्या उर्वश्याः सर्गः सृष्टिः। अप्राप्तप्रापकत्वाद् विधिः। ब्रह्मसृष्टावीदृशनिर्माणादर्शनात्। चन्द्रः प्रजापतिरभूदित्यन्वयः। हेतुमाह—कान्तिप्रद इति। एवं कान्तेश्चन्द्रत एव सम्भवात्। रसिकतामाह—शृङ्गारैकेति। सर्ववशीकारकतामाह—स्वयमित्यादि। मदयति मदनः, स्वयं ब्रह्मसृष्टिनैरपेक्ष्येण स्वकल्पनादित्यर्थः। मदनस्योपकार्यतामभिधाय तदुपकारकतामाह—मासो न्विति। वसन्तस्य मदनसचिवत्वात्। जडो बाह्यसंवेदन रहितः। कामिनीजिज्ञासोदयो जाड्यमपनेष्यतीत्यत आह—विषयेत्यादि। वनितादयो विषयाः। इदं विशिष्य निर्वक्तुमशक्यम्। पुराणो वृद्धः, मुनिर्नारायणाख्यः। विक्रमोर्वश्यां पुरुरवसः सन्देहोऽयम्।

अत्र नुशब्दाः किमर्थाः।

**रञ्जिता न विविधास्तरुशैला नामितं नु गगनं स्थगितं नु।**
**पूरिता नु विषमेषु धरित्री संहता नु ककुभस्तिमिरेण॥**

इत्यत्र तिमिरव्याप्तौ रञ्जनाद्युत्प्रेक्षते।

न चात्र भेदानुक्तौ सन्देहः, एकत्र विषये विरुद्धकोटिद्वयानवलम्बनात्, तर्वादिसम्बन्धिभेदेन तिमिरव्यापनस्य नानात्वाद् विषयानुपादाने सन्देहाप्रवृत्तेः, इवशब्दवद् नुशब्देनापि सम्भावनोत्थापनात्।

## सारबोधिनी

अस्या इति । चन्द्रः प्रजापतिरभूदित्यन्वयः । हेतुमाह कान्तिप्रद इति । एवं कान्तेश्चन्द्र एव संभवात् । अत्र नु शब्दः किमर्थः ।

## काव्यप्रदीपः

भेदानुक्तौ यथा—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥'

अत्र शङ्क्यमानस्य प्रजापत्यादेः कस्यापि न वैधर्म्यमुक्तम् ।

## आदर्शः

भेदकधर्मानुक्तौ तु संशयालङ्कारमाह—तदनुक्ताविति । अस्या इति । अस्या सृजनविधौ प्रजापतिः स्रष्टा किं चन्द्रः यतः कान्तिप्रद इत्यर्थः । कान्तिमत्त्वादेव कान्तिप्रदत्वं सम्भाव्योक्तम् । शृङ्गारैकरस इति मदनवसन्तयो-र्द्वयोरपि विशेषणम् । ननु विधिरेव कथं नास्या निर्मातित्यत्राह—वेदेति । मुनिर्मननादेव निर्माणशक्त इत्यर्थः । पुराणो जीर्णः । अत्र विधेर्निर्मातृत्वव्यावृत्तिरपि संशयितेति व्यावर्त्तकधर्मस्यानिश्चयात् संशयानुवृत्तिरेवेति न ससन्देहत्वम् ।

## सुधासागरः

भेदानुक्तौ यथा—अस्या इति ॥

अत्र नुशब्दाः किमर्थाः । अस्याः सुन्दर्याः सर्गविधौ निर्मितसम्पादने कान्तिप्रदश्चन्द्रः प्रजापतिरभूत किम् । अपूर्वकान्तेश्चन्द्रत एव सम्भवादिति भावः । नु किं श्रृङ्गारैकरसो मदनः कामदेवः स्वयं प्रजापतिरभूत् । सौन्दर्यश्रृ-ङ्गारित्वोभयप्रदत्वात् । नु पुष्पाकरो मासो मधुमासः प्रजापतिरभूत्, सौन्दर्यश्रृङ्गारसन्ततिविलाससम्पादकत्वादिति भावः । वेदाभ्यासेन जडः कुण्ठितधीः विषयेभ्यो व्यावृत्तः कौतूहलो यस्य तादृशः पुराणो वृद्धो मिनिब्रह्मा इदं मनोहरं रूपं निर्मातुं कथं प्रभवेत्, नैव समर्थो भवेदित्यर्थः । शार्दूलविक्रीडितं छन्दः । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् । अत्र प्रजापतित्वेन शङ्क्यमानस्य चन्द्रादेः कस्यापि न वैधर्म्यमुक्तम् ।

## (सू० १३९) तद्रूपकमभेदो य उपमानोपमेययोः ।

## अतिसाम्यात् अनपह्नुतभेदयोः, अभेदः ।

---

### सङ्केतः

तद्रूपकमिति । रूपयति—एकतां नयति इति रूपकम् । अभेदः इति भणनात् अभेदप्राधान्ये रूपकं स्यादिति लब्धम् । 'मुखचन्द्रः' इत्यादिरूपके हि चन्द्रेण स्वगुणाः लक्ष्यन्ते, तैः मुखगुणाः, तैरपि मुखम् । ततश्च सामानाधिकरण्यं मुखचन्द्रयोः गुणद्वारेण ताद्रूप्यादिप्रतीत्या उपपद्यते । अत एव च भेदेऽप्यभेदप्रतीतिः । अतिसाम्यादिति । साम्यमात्रे उपमा, अतिसाम्ये तु रूपकम्, सर्वथाऽतिसाम्ये पुनः अप्रस्तुतप्रशंसाऽतिशयोक्ती । अत एव सूत्रे 'तद्रूपकमभेद एव यः' इत्यवधारणं न कृतम् ।

इदं तत्त्वम्—भेदे ज्ञातेऽपि यत्र अभेदप्रतीतिरेव, तत्र क्रमेण उपमा-रूपक-अतिशयोक्त्याद्याः ज्ञेयाः । यत्र तु अज्ञाते भेदे किल अभेद प्रतीतिरेव, तत् मिथ्याज्ञानम् । तत्र न कोऽप्यालङ्कारः । इति ।

अनपह्नुतेति । अपह्नुतभेदयोः उपमानोपमेययोस्तु अप्रस्तुतप्रशंसाऽतिशयोक्ती स्याताम् ।

### बालचित्तानुरञ्जनी

रूपकालङ्कारं लक्षयति तद्रूपकमिति । नन्वपह्नुत्यलङ्कारेऽतिव्याप्तिरित्यत आह अतीति । मुखं चन्द्र इति सहप्रयुज्यमानयोः अनपह्नुतभेदयोः साम्योत्कर्षादभेदो रूपकमिति विवक्षितत्वात् नातिव्याप्तिरित्यर्थः । एतत् निरवयवं, सावयवं, परम्परितञ्चेति त्रिधा । आद्यं केवलं मालाकारञ्चेति द्विधा । द्वितीयं समस्तवस्तुविषयं एकदेशविवर्तीति द्विधैव । तृतीयं च श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधं सत्प्रत्येकं केवलं मालाकारञ्चेति । चतुर्विधम् । तदेवमष्टावेतद्भेदाः ।

### काव्यादर्शः

सादृश्याश्रयेण भेदाभेदतुल्यत्वेऽलंकारा निर्णीताः, अभेदप्राधान्ये त्वाह—तद्रूपकमिति । रूपयति एकतां नयतीति रूपकम् । विषयिणा चन्द्रादिनारोप्य माणरूपेण आरोपविषयस्य मुखादे रूपवतः करणाद्, यथा 'मुखचन्द्रः' इत्यादौ सारोपगौणीलक्षणा-विषये, अत्र ह्युपमेयशब्दो धर्मिवाची द्वितीयेन उपमानशब्देन तथाभूतेन अनुपपद्यमानसामानाधिकरण्यस्तस्यैव उपमानपदस्य स्वाभिधेयाविनाभूतगुणवृत्तितां नियमयति । यथा 'नीलमुत्पलम्' इत्यत्र यद्यपि नीलशब्दस्य गुणः प्रवृत्तिनिमित्तमुत्पलशब्दस्य तु उत्पलजातिस्तथापि एकस्मिन् द्रव्ये किलैकार्थसमवायाद् वृत्तिरिति सामानाधिकरण्यमुत्पाद्यते, न तथा 'मुखचन्द्रः' इति रूपके सामानाधिकरण्यमित्येकस्य गुणवृत्तिता परिकल्प्यते, ततश्चन्द्रगुणसदृशा मुखस्य गुणा इति सिद्धम् । तथा हि चन्द्रेण स्वगुणा लक्ष्यन्ते, तैर्मुखगुणाः, तैरपि मुखं लक्षणायाश्च प्रयोजनं ताद्रूप्यादिप्रतीतिः, ततश्च सामानाधिकरण्यमुपपद्यते । अत एव भेदेऽपि अभेदप्रतीतिः । साधर्म्यं तु अनुगतमेव । यदाहुः—

उपमैव तिरोभूतभेदा रूपकमिष्यते ॥

तेन 'आयुर्घृतं, नदी पुण्या' इत्यादौ न रूपकम्। कार्यकारणभावादि ह्यत्र निमित्तान्तरं, न साधर्म्यमित्याह- अतिसाम्यादिति। इह च शब्दस्यार्थस्य च युगपद् अध्यारोप्स्य आरोपः शब्दोपचारस्य अर्थाविनाभूतत्वात्। अनपह्नुतभेदयोरिति। उपमानोपमेययोरभेदप्राधान्यात्, वस्तुतस्तु भेद एव। अपह्नुतभेदयोस्तु अतिशयोक्तिर्वक्ष्यते।

## विवेकः

भेदानुक्त्युपक्रमे सन्देह उक्त इत्यभेदप्राधान्येन तत्त्वारोपरूपत्वेन साधर्म्यवैधर्म्याभ्यां तदनन्तरं लक्षयति तद्रूपकमिति। अनपह्नुतेति—'अपह्नुतभेदत्वेतिशयोक्तेर्भावात्। आरोप्यमाणरूपेणारोप' 'विषयस्य रूपवतः करणाद्रूपक'मित्यन्वर्थ नाम (अ. सं. ४४ पृः), अत एव 'खले वाली यूप' (मी. सू. श. भा. १०/१/९) इति नास्य विषयः।

## दीपिका

अभेद इति। अत्रत्याविद्यमानो भेदों यत्रालङ्कार इति विग्रह इत्याह—अनपह्नुतेति। अलङ्कारश्चात्राहार्यस्तादात्म्यारोप इत्यवधेयम्।

## दर्पणः

रूपकालङ्कारः। रूपक इत्यत्राप्रतिभासमानो भेदो यत्रालङ्कारः इति विग्रहः। अस्य भेदानाह समस्तेति। अविवक्षितं सूत्रे लिङ्गसंख्याकालश्चातन्त्रानीति न्यायात्। तेन द्वयोरप्यारोपयोः शवृत्वेपि [आवृत्वेऽपि] सवस्तु [समस्तवस्तु] विषयाख्यं रूपकं यथा-"दन्तांशकेशवानीतिस्तस्यातिमुखाम्बुजम्" इत्यादौ, छरणं व्यापनं, व्यसनं कौतुकम्, मुद्राकपाले पाषण्डग्राह्यकपालविशेषे, तेषां हि, दीक्षागृहीतोपकरणेषु मुद्रोपपदनाम्ना व्यपदेशः, परिमलं क्षोदं।

## साहित्यचूडामणिः

रूपकमाह—तदिति। यत् सूत्रम् "अभेदप्राधान्य आरोप आरोपविषयानपह्नवे रूपकम्" (अलंकारसू० १६) इति। अन्यत्रान्यावाप आरोपः।

साम्योत्कर्षादभेदः साम्यकक्ष्यानतिक्रान्तेः अपह्नुतभेदत्वमित्याह—अतिसाम्यादिति। मुखं चन्द्र इति सहप्रयुज्यमानयोः साम्योत्कर्षादभेदो रूपकमिति यावत्। आरोप्यमाणेन चन्द्रादिना मुखादेरारोपविषयस्य रूपवतः क्रियमाणत्वात्। उक्तं हिं—

**श्रुत्या सम्बन्धविरहे यत् पदेन पदान्तरम्।**
**गुणवृत्तिप्रधानेन युज्यते रूपकं तु तत्॥ इति।**

## सम्प्रदायप्रकाशिनी

तद् रूपकमिति। उपमानोपमेययोरिति भेदानपह्नवद्योतनाय। प्रकृतरूपवत् करोतीति रूपकम्।

तदिदं व्याचष्टे—अतिसाम्यादित्यादि।

## मधुमती

तद्रूपकमिति। अभेदः अभेदप्रत्ययः। वास्तविकाभेदस्य बाधात्। अत एवात्र उपमानवाचकपदे गौणसाध्यवसानाऽपि। एतदेवाह—अतिसाम्यादिति। अनपह्नुतभेदयोः इति अतिशयोक्तिविशेषात् व्यवच्छिनत्ति। तत्र उपमेयस्य निगीर्णत्वात्।

## विस्तारिका

रूपकमाह—तदित्यादि। उपमानोपमेययोर्योऽभेदस्तद्रूपकमित्यन्वयः। प्रक्रम्यमाणलिङ्गग्रहणात् तदिति नपुंसकम्, न तूपमानोपमेययोरुपमानत्वोपमेयत्वावच्छेदकावच्छिन्नयोश्चन्द्रमुखत्वादयोऽवच्छेदकाः, तेन 'मुखमपश्चन्द्रः' इत्यतिशयोक्तौ नातिव्याप्तिः, लाघवेन चन्द्रत्वस्यैवाबच्छेदकत्वात्। नापरचन्द्रत्वस्याविशिष्टाद् विशिष्टस्यान्यत्वात्। अन्यनिश्चयरूपतया सन्देहोत्प्रेक्षाभ्यां व्यतिरेकः। 'मेरुवदयम्' इत्यत्र नातिव्याप्तिः, उपमानोपमेयभावविरहात्।

अभेदारोपे हेतुमाह—अतिसाम्यादिति। अनपह्नुतोऽगृहीतः।

अस्य विशेषः—समस्तवस्त्वित्यादि। श्रौताः शब्दोपात्ताः। क्तप्रत्ययस्यातीतत्वाविवक्षाया छन्दोऽनुरोधादेव कर्मत्वमात्रतात्पर्येणोक्तप्रत्ययाभिधानमित्याह—आरोपविषया इति। आरोप्यमाणा इति च। वस्तु वर्णनीयम्। समस्तं सकलम्। आरोप्यमाणारोपविषयौ। अविवक्षितमिति। सूत्रे लिङ्गवचनसङ्ख्याकालानामतन्त्रत्वात्। अन्यथा 'मुखं चन्द्रः' इत्यत्राव्याप्तेः।

ज्योत्स्नेत्यादि। छुरणम् अङ्गलेपनम्, व्यसनं कौतुकम्। रसिकाः तदुपपादकसामग्रीसम्पादनपराः। कापालिकी योगिनी। दीक्षाकालगृहीतोपकरणेषु पाषण्डानां मुद्रोपपदनाम्ना व्यवहारः। परिमलं क्षोदम्।

नन्विदं लक्ष्यमुपमासंकीर्णोदाहरणमेव दर्शयितुमुचितमित्याह—अत्रपादत्रय इत्यादि। रूपकपरिग्रहे रात्रिः कापालिकीति यद्रूपकं तस्य परिग्रहे निश्चये साधकं मानम्। अन्तर्द्धानरसिकत्वं कापालिक्या एव, न तु तत्सदृश्याः। तदाह—आरोपितधर्म एवेति। कापालिकत्वारोप एव तदुपपत्तेरित्यर्थः। भस्मकरणादिकमेवान्तर्द्धानसामग्री, न तत्सदृशज्योत्स्नादीति। तदाह—पादत्रयेऽन्तर्द्धानव्यसनेत्यादि। अन्तर्द्धानसामग्रीसम्पादनपरता कापालिक्या एव धर्मः, न तत्सदृश्या इति रूपकसाधकतेत्यर्थः।

यत्तु पादत्रये यद्रूपकं तत्परिग्रह इति सम्बन्धमाहुस्तन्न, समस्तैकदेशस्येतरनिराकाङ्क्षत्वात्। पादत्रयमिति क्वचित् पाठः। तदन्तर्भूतध्यायतिक्रियायाः कर्मतासङ्करः सन्देहरूपः।

## सारबोधिनी

रूपकमाह तदिति। ननूपमानोपमेययोरभेदज्ञानस्य भ्रमत्वेन भ्रान्तिमदविशेषापात इति चेन्मैवम्। अस्याहार्यत्वेन ततोऽन्यत्वात्, भ्रान्तिमतोऽनाहार्यत्वात्। अभेदारोपे हेतुमाह [अतीति।] अनपेह्नुतोऽगृहीतो

भेदोऽन्योन्याभावो ययोरिति केचित्। अन्ये तु अनपह्नुतभेदयोरिति साम्यादभेदोरूपकम्, तेन नापह्नुत्यतिव्याप्तिस्तत्रैकस्यापह्नवादिति वदन्ति। अस्मिन् सनञ्पाठे भेदपदेन वैधर्म्यमुक्तमिति बोध्यम्।

## काव्यप्रदीपः

**तद्रूपकमभेदो य उपमानोपमेययोः।**

अभेदोऽभेदारोपः। बीजं तु तत्रातिसाम्यम्। अभेदश्चात्रानपह्नुतभेदयोर्विवक्षित इति नापह्नुतावतिव्याप्तिः। तदेतद्द्विविधम्—सावयवं निरवयवं च। तत्राद्यं समस्तवस्तुविषयमेकदेशविवर्ति च।

## काव्यप्रकाशखण्डनम्

**तद्रूपकमभेदो य उपमानोपमेययोः।** (का. ९३, पू०) अथवा उपमैव तिरोभूतभेदा रूपकमिष्यते। यथा—

**अथ लक्ष्मणानुगतकान्तवपुर्जलधिं व्यतीत्य स दाशरथिः।**
**परिवारितः परित ऋक्षगणैस्तिमिरौघराक्षसबलं बिभेदे॥**

## आदर्शः

रूपकालङ्कारमाह—तद्रूपकमिति। उपमानतादात्म्येनापमेयनिश्चय इत्यर्थः।

## सुधासागरः

रूपकालङ्कारं लक्षयति—तद्रूपकेति।

ननूपमानोपमेययोरभेदज्ञानस्य भ्रमत्वेनास्य भ्रान्तिमदविशेषापात इति चेत्, मैवम्। अस्याहार्यत्वेन भ्रान्तिमतोऽनाहार्यत्वेन भेदात्। अत एवोक्तं प्रदीपकारैः—अभेदोऽभेदारोप इति। अभेदारोपे हेतुमाह—अतिसाम्यादिति। अत एवोक्तं जयरामपञ्चाननैः—उपमानोपमेययोर्भेदबुद्धिकालेऽभेदबुद्धिः रूपकबीजमिति। अनपह्नुतभेदयोरित्यनेनातिशयोक्तिविशेषादपह्नुतेश्च व्यवच्छिनत्ति, पूर्वस्मिन्नुपमेयस्य निगीर्णत्वात्। परस्मिन्नसत्त्वेन व्यवस्थापनात्।

**(सू० १४०) समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥ ९३ ॥**

आरोपविषया इव आरोप्यमाणाः, यदा शब्दोपात्ताः, तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम्। आरोपिता इति बहुवचनमविवक्षितम्। यथा

**ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी**
**न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।**
**द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले**
**न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ४२१ ॥**

अत्र पादत्रये, अन्तर्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्संकराशङ्का न कार्या ॥

---

**सङ्केतः**

**आरोपविषयः ज्योत्स्नादिः, आरोप्यमाणः भस्मादिः।**

अविवक्षितमिति। तेन आरोपितौ इति, आरोपितः इति च सिद्धम्।

ज्योत्स्नेति। चन्द्र एव मुद्राकपालम्। अत्र पादत्रये समस्तवस्तुविषयं रूपकम्। चतुर्थे तु पादे अपह्नुतिः परिमलशब्दः स्वरूपार्थः। रसिकत्वमिति। रात्रिरेव कापालिकी इति रूपकसमासे कापालिक्याः प्राधान्ये तस्याः सचेतनत्वात् अन्तर्धानव्यसनरसिकत्वं युक्तमेव। रात्रिः कापालिकीव इति उपमासमासे तु रात्रेः प्राधान्यं स्यात्, ततश्च तस्याः अचेतनत्वात् अन्तर्धानव्यवसनरसिकत्वं न घटत इति भावः।

**बालचित्तानुरञ्जनी**

तत्र द्वितीये आद्यभेदप्रतिपादकं भेदमुपादाय व्याकरोति समस्तेति। समस्तवस्तुविषयं रूपकमिति शेषः। द्विवचनस्याप्यङ्गीकार्यत्वाद् बहुवचनमविवक्षितम्। तेन आरोपितौ आरोपित इत्यपि द्रष्टव्यमित्याह आरोपिता इति। उदाहरति यथेति। ज्योत्स्नैव भस्म तच्छुरणधवला, तारका एवास्थीनि बिभ्रती, अन्तर्द्धानव्यसनानुषक्ता। मुद्राशब्दः प्रशंसार्थः। चन्द्रमुद्रैव कपालम् तस्मिन्, लाञ्छनव्याजेन न्यस्तम्। परिमलशब्दः प्रशंसार्थः। सिद्धाञ्जनपरिमलं दधती इयं रात्रिरेव कापालिकी योगिनी द्वीपात् द्वीपान्तरं भ्रमति। अत्रारोप्यमाणा भस्मादयः। आरोपविषया ज्योत्स्नादयः। लाञ्छनच्छलेनेत्यत्रापह्नुतेर्विद्यमानत्वात् पादत्रय एव श्लोकः उदाहरणमित्याह अत्रेति। ननु

ज्योत्स्नाभस्मेवेत्युपमीयते उत ज्योत्स्नैव भस्मेति निरूप्यते व्याघ्रादित्वेन मयूरव्यंसकादित्वेन वा समासः, उभयोरप्याकृतिगणत्वादिति संदेहसङ्करः न शुद्धं रूपकमित्यत आह अन्तर्द्धनेति। अन्तर्द्धनरसिकत्वं चेतनधर्मत्वात् कापालिक्यामेव।

### काव्यादर्शः

'चन्द्र एव मुद्राकपालकम्'। अत्र पादत्रयमिति। समस्तवस्तुविषयस्य उदाहरणमित्यर्थः। चतुर्थपादे तु आरोपपूर्विकापह्नुति[:] स्थलशब्दश्च अपह्नवद्योतकः। 'न्यस्तं विश्वस्थगितहृदयं लक्ष्म सिद्धाञ्जनं तद्' इति तु चतुर्थपादे रूपकेणैव निर्वाहः। 'रात्रिरेव कापालिकी' इति रूपकमुपमानप्राधान्यात्। यदा तु 'रात्रिः कापालिकी वा इति तदा 'उपमितं व्याघ्रादिभि' इति समासे उपमेयप्राधान्ये उपमैवेति किं रूपकामुपमा वेति संदेहसंकरालंकारः प्राप्नोतीत्याह—अन्तर्धानरसकित्वमिति। अत्र हि रसिकत्वलक्षणो धर्म एव रूपकपरिग्रहे साधकं प्रमाणम्। रूपके हि योगिनीत्वं रात्रेरारोपितं, तस्य चारोपितस्य योगिनीलक्षणस्य रसिकत्वं धर्मोऽतीव अनुगुणः, प्रसिद्धतरत्वेन आनुकूल्यात्। आरोपितस्य च धर्मानुगुण्ये रूपकमेव, उपमायां तु रात्रेरारोपविषयायाः प्राधान्यं, तस्याश्च अचेतनत्वाद् रसिकत्वधर्मः न तु गुण इति संकरः॥ ९१॥ ६॥

### विवेकः

अत्र केचिच्छब्दारोपपूर्वमर्थारोपं ब्रुवते, अपरे विपर्ययम्, अपरे यौगपद्येनोभयम्। एष एव च युक्तः पक्ष इति (हे. च. का. अ. वि. ३४९ पः द्रः) भट्टोद्भटप्रभृतयः। अस्य च वाक्योक्त-(वक्रोक्ति) समासोक्त्यादिभेदा अत्रानुक्ता अप्युदाहृतेषून्नेयाः। [श्रौत इति] श्रुतिर्निरन्तरार्थनिष्ठशब्दव्यापारस्तत्प्रतिपादितः। आरोपितस्य यो विषय आश्रयः स यथा श्रौतस्तद्वदारोपमाणोऽपि श्रौतः, साधारणधर्मान्वयेन गौणीवृत्तिमाश्रित्य सामानाधिकरण्यं भजते तदा समग्रप्रमारोप्यारोपविषयात्मकमुभयं वस्तुविषयं शाब्दं यस्येति समस्तवस्तुविषयम्। यथा ज्योत्स्नाभस्मेत्यादि। अत्र पादत्रय इति—चतुर्थेऽपह्नुतेः सद्भावात्। निरस्तैतद्द्वीपवर्तिरविरश्मिजालः कालो रात्रिः। अत्र कि रात्रिः कापालिको वेति व्याघ्रादीनामाकृतिगणत्वे 'उपमितं व्याघ्रादिभि'रिति (पा २/१/५६) समासे रूपमित्युपमा, उत रात्रिरेव कापालिकीति मयूरव्यंसकादीनामाकृतिगणत्वात् 'मयूरव्यंसकादयश्चे' ति रूपकम्? अत्राद्ये रात्रेरुत्कटतया प्रतिपत्तिरिति तस्याः प्राधान्यम्, द्वितीये तु तिरोहितरात्रिरूपतया कालापिक्याः। अत एकतरसाधकबाधकप्रमाणभावादत्र सन्देहसङ्करेण भवितव्यमित्याशङ्क्याह—आरोपितधर्म एवेति तस्य प्रसिद्धतरत्वेनानुकूल्यात्। न ह्यन्तर्धानव्यसनरसिकत्वयोग्यता रात्रेः प्रसिद्धा, तस्माद्रूपपरिग्रहे साधकम्। अत एव भ्रमतीति क्रियाऽपि मुख्यतयैवोचितेति। यदाहुः—यत्र गुणानां साम्ये सत्युपमानोपमेययोरभिदा। अविवक्षितसामान्यं कल्पितमिति रूपकं प्रथमम्॥ उपसर्जनोपमेयं कृत्वा तु समासमेतयोरुभयोः। यच्च प्रयुज्यते तद्रूपकमन्यत् समासोक्तम्॥ इति (रु. का. अ. ८/३८, ४०)। एतयोरुपमानोपमेययोः। यत्तु रूपकविषये प्राकरणिकत्वादारोपविषयस्य प्रधान्यमारोप्यमाणानामप्राधान्यमिति भट्टोद्भटादिभिरभिहितं तद्वास्तवनयानुसारेण, न पुनः शाब्दक्रमानुसारेण। शाब्दे हि क्रमे 'सिंहो माणवक' इत्यादौ सिंहादिरूपावच्छादितो मानवादिरप्रधानभूतः प्रतीयते, समासस्योत्तरपदार्थप्रधानत्वात्। एवञ्च तन्मते भ्रमतीत्यादौ लक्षणैव।

## दीपिका

रूपकसामान्यलक्षणमुक्त्वा तद्विशेषलक्षणप्रपञ्चार्थमाह—समस्तेति। आरोपेति। इवेति प्रत्यय द्योत्यविशेषाभावमारोप्यमाणा इति वृत्तिसङ्गतिः। समस्तानि सकलानि। सूत्रे लिङ्गं संख्या कालश्चातन्त्राणीति न्यायमूरीकृत्याह—आरोपिता इति। बहुवचनमविवक्षितमिति। तेन "दन्तांशुकेशरालीभिस्तुल्यं भाति मुखाम्बुजम्" इत्याद्यपि संगृहीतमिति भावः। व्यसनं कौतुकम्। मुद्राकपाल इति दीक्षाकालगृहीतोपकरणेषु मुद्रोपादानं पाषण्डानां व्यवहारः। परिमलं क्षोदम्। अत्रेति। पादत्रये यद्रूपकं तस्य साधकमारोपितधर्म एव रात्रावसम्भवितयोपमाननिरसनद्वारेणेति। निश्चायकमन्तर्धानरसिकत्वमस्ति। तत्र उपमारूपकसन्देहसङ्करशङ्का न कार्या। ततश्च निःशङ्कमेवेदं रूपकोदाहरणमित्यर्थः। अत्र चारोप्यारोपविषयानेकत्वेऽपि नालङ्कारानेकत्वं सम्भूयैव वैचित्र्यप्रकर्षाधायकत्वात्। एवं मालोपमारशनोपमोपमेयोपमादौ बोद्धव्यम्।

## दर्पणः

इह च पादत्रये उपमारूपकसंदेहसंकरालङ्कारं निराकरोति अत्रेति। आरोपित धर्मः अचेतनायां रात्रावसंभवात् कापालिक्यां च संभक्रपकसाधकत्येर्थः[?] विवर्तनात् शाब्दतया विशेषेण वृत्तेरिति भावः।

## साहित्यचूडामणिः

आदावेतन्निरवयवं सावयवं परम्परितं चेति त्रिधा। आद्यं केवलं मालाकारं चेति द्विधा। द्वितीयं च समस्तवस्तुविषयमेकदेशविवर्ति चे द्विधैव। तृतीयं च श्लिष्टाश्लिष्टभिन्नशब्दनिबन्धनत्वेन द्विविधं सत् प्रत्येकं केवलमालाकारत्वात् चतुर्विधम्। तदेवमष्टावेतद्भेदा इत्याह—समस्तेति।

## सम्प्रदायप्रकाशिनी

भेदायाह—समस्तवस्त्विति। आरोप्यमाणा अर्था यदा शब्देनोपादीयन्ते तदा रूपकं समस्तवस्तुविषयम्।

व्याचष्टे—आरोपविषया इवेत्यादि। आरोपिता इति भूतार्थतायामविवक्षा। आरोपविषयवदारोप्यमाणानां साकल्यतः शब्देनोपादाने समस्तपदार्थविषयत्वात् समस्तवस्तुविषयम्। ननु यदानेको धर्मो धर्मिणा साकमारोप्यते, तदा तावतैव समस्तवस्तुविषयत्वसिद्धिरिति बहुवचनस्य कथमर्थवत्तेत्यत आह—आरोपिता इतीत्यादि।

ज्योत्स्नेति। छुरणमुद्धूलनम्। अन्तर्धानमदृश्यत्वसिद्धिरवसानं च। मुद्राकपालं मुद्रेव हस्तग्राह्यमित्यर्थः। परिमलः परिमर्दचिह्नमित्यर्थः। अत्र कापालिकीति धर्मिणो भस्मेत्यादिधर्माणां च शब्देनोपादानात् समस्तवस्तुविषयम्।

ननु चतर्थपादोऽपह्नव एवेति कथं रूपकमित्यत आह—अत्र पादत्रयमिति। ननु रात्रिः कापालिकीवेत्युपमापीत्यत आह—अन्तर्धानरसिकत्वमित्यादि। अन्तर्धानरसिकत्वं कापालिक्यामनुपचरितं रात्रावारोप्यत इति रूपकपरिग्रहसाधकम्। अतो न सङ्करशङ्का कार्या।

## मधुमती

एतद्विभजते—समस्तेति । तथाच-आरोप्यारोपविषययोः शाब्दत्वे समस्तवस्तुविषयनामकं रूपकमित्यर्थः । एकमात्रारोप्यत्वे आरोपिताः—आरोपविषयाः इति बहुवचनं अनन्वितम्, अत आह—आरोपिताः इति ।

ज्योत्स्नाभस्मेति । परिमलः गाढसम्बन्धः । अत्रेति । लाञ्छनस्य च्छलेन इत्यत्र अपह्नुतेः स्फुटत्वात् पादत्रये इत्युक्तम् । ननु—ज्योत्स्ना भस्मेव, ज्योत्स्नैव वा भस्म; तारकाः अस्थीनीव, तारका एव वा अस्थीनि; रात्रिः कापालिकीव, रात्रिरेव वा कापालिकी; चन्द्रमुद्रा कपालमिव, चन्द्रमुद्रैव वा कपालम्; इति उपमारूपकयोः साधकबाधकमानाभावात् संशयात्मकालङ्कारसङ्करोदाहरणमिदम्, न रूपकोदाहरणं इत्याशङ्क्याह—अन्तर्धनेति । उपमितसमासे हि रात्रेः प्राधान्यम्, तस्यां च अन्तर्धानव्यसनरसिकत्वं बाधितम्, रूपके च कापालिक्याः प्राधान्यम्, तत्र च तदविरुद्धमिति रूपकसाधकसत्त्वात् न संशयात्मक सङ्करः, किन्तु रूपकमेवेति भावः ।

## विस्तारिका

अस्य विशेषः—समस्तस्त्वित्यादि । श्रौताः शब्दोपात्ताः । क्तप्रत्ययस्यातीतत्वाविवक्षया छन्दोऽनुरोधादेव कर्मत्वमात्रतात्पर्येणोक्तप्रत्ययभिधानमित्याह—आरोपविषया इति । आरोप्यमाणा इति च । वस्तु वर्णनीयम् । समस्तं सकलम् । आरोप्यमाणारोपविषयौ । अविवक्षितमिति । सूत्रे लिङ्गवचनसङ्ख्याकालानामतन्त्रत्वात् । अन्यथा 'मुखं चन्द्रः' इत्यत्राव्याप्तेः ।

ज्योत्स्नेत्यादि । छुरणम् अङ्गलेपनम्, व्यसनं कौतुकम् । रसिकाः तदुपपादकसामग्रीसम्पादनपराः । कापालिकी योगिनी । दीक्षाकालगृहीतोपकरणेषु पाषण्डानां मुद्रोपपदनाम्ना व्यवहारः । परिमलं क्षोदम् ।

नन्विदं लक्ष्यमुपमासंकीर्णोदाहरणमेव दर्शयितुमुचितमित्याह—अत्र पादत्रय इत्यादि । रूपकपरिग्रहे रात्रिः कापालिकीति यद्रूपकं तस्य परिग्रहे निश्चये साधकं मानम् । अन्तर्द्धानरसिकत्वं कापालिक्या एव, न तु तत्सदृश्याः । तदाह—आरोपितधर्म एवेति । कापालिकत्वारोप एव तदुपपत्तेरित्यर्थः । भस्मकरणादिकमेवान्तर्द्धानसामग्री, न तत्सदृशज्योत्स्नादीति । तदाह—पादत्रयेऽन्तर्द्धानव्यसनेत्यादि । अन्तर्द्धानसामग्रीसम्पादनपरता कापालिक्या एव धर्मः, न तत्सदृश्या इति रूपकसाधकतेत्यर्थः ।

यत्तु पादत्रये यद्रूपकं तत्परिग्रह इति सम्बन्धमाहुस्तन्न, समस्तैकदेशस्येतरनिराकाङ्क्षत्वात् । पादत्रयमिति क्वचित् पाठः । तदन्तर्भूतध्यायतिक्रियायाः कर्मतासङ्करः सन्देहरूपः ।

## सारबोधिनी

विभजते समस्तेति । आरोपिता इत्यत्र क्तप्रत्ययस्यातीतत्वाविवक्षायां कर्ममात्रतात्पर्येणक्तप्रत्ययाभिधानमित्याह आरोपविषया इति । आरोप्यमाणा इति च । समस्तानि आरोप्यमाणानि विषयरूपाणि वस्तूनि वर्णनीयानि बहुत्वमविवक्षितमिति । तेनैकस्मिन् आरोप्यमाणे रूपकं प्रसज्यते ।

ज्योत्स्नेति । छुरणमङ्गलेपनम् । कापालिकी योगिनी । मुद्रेति । दीक्षाकालगृहीतोपकरणेषु मुद्रोपपदनाम्ना पाषण्डकानां व्यवहारः । परिमलं क्षोदम् । नन्विदं लक्ष्यमुपमासङ्कीर्णम्, असङ्कीर्णोदाहरणमेव दर्शयितुमुचि-

तमिति शङ्कायामाह अत्र पादत्रय इति। अत्र पादत्रये यद्रूपकं तत्परिग्रहेऽन्तर्धानव्यसनरसिकात्वमेव साधकमिति संबन्धः। तथाहि अन्तर्धानव्यसनरसिकात्वं प्राणिधर्मः। तत्कापालिक्या एव संभवति, न तु तत्सदृश्या रात्रेस्तदाह आरोपितधर्म एवेति। कापालिकीत्वारोप एव तदुपपत्तेरित्यर्थः। एवं च तदनुरोधेन ज्योत्स्नाभस्मेत्यादिष्वपि रूपकमेव, न तूपमा। पादत्रयमिति पाठे पादत्रयं व्याप्येत्यर्थः।

## काव्यप्रदीपः

द्वितीयं तु शुद्धमात्रमित्यार्थे विभागे लक्षणमाह—

**समस्तवस्तुविषयं श्रौता आरोपिता यदा॥ ७॥**

आरोपिता आरोप्यमाणाः। ते सर्वेऽपि यद्यारोपविषयवच्छाब्दा एव भवन्ति तदा समस्तवस्तुविषयं नाम रूपकम्। समस्तं वस्तु आरोप्यमाणं विषयः शब्दप्रतिपाद्योऽत्रेति व्युत्पत्तेः। आरोपिता इति बहुवचनमविवक्षित-मित्यारोप्यद्वयस्थले नाव्याप्तिः। उदाहरणम्—

**'ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-**

**न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।**

**द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले**

**न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन॥'**

अत्र पादत्रेय ज्योत्स्नादिषु भस्मत्वादिकमारोप्यमाणं सर्वं शाब्दम्। नन्विदं रूपकोदाहरणं न युज्यते। साधकबाधकाभावेन रूपकोपमेयोः संदेहात्संदेहलक्षणसंकरौचित्यादिति चेत्, भवेदेवम् यद्यन्तर्धानव्यसनरसिकत्वं विशेषणं न स्यात्। तद्धि रूपकपरिग्रहे साधकम्। कापालिक्यां तत्संभवाद्रात्रावसंभवाच्च। उपमापरिग्रहे तु रात्रेरेव प्राधान्यात्तस्यानन्वय एव स्यात्।

## आदर्शः

रूप्यरूपकोभयनिर्देशे सति समस्तवस्तुविषयं नाम रूपकं भवतीत्याह—समस्तेति। श्रौताः शब्दो-पात्ताः। आरोपिता इत्यत्राऽऽरोपशब्दादस्त्यर्थे इतच्, तेचारोप्यमाणारोपविषयौ द्वावप्यारोपितपदार्थौ। बहुवचनन्तु अत्राविवक्षितार्थकमित्याह—आरोपविषया इवेति। ज्योत्स्नेति। इयं रात्रिरेव कापालिकी कपालव्रतिनी योगिनी अन्तर्धानव्यापाररसिका सती द्वीपाद्द्वीपं भ्रमति। अन्तर्धानसामग्रीमाह—दधतीति। चन्द्रात्मनि मुद्राकपाले भिक्षापात्रविशेषे न्यस्तं सिद्धाञ्जनस्य परिमलं क्षोदं दधती अन्तर्धानव्यसने रसिका सती द्वीपाद्द्वीपं भ्रमतीत्यन्वयः। सिद्धाञ्जनमदृश्यत्वकारकमौषधम्, अन्तर्धानम् अदृश्यत्वम्, व्यसनं व्यापारः। तस्याः कापालिकत्वोपयोगिविशेष-णद्वयमाह—ज्योत्स्नेति बिभ्रतीति च। ज्योत्स्नात्मकभस्मप्रक्षणेन धवलतारकात्मकस्थीनि बिभ्रती च।

ननु रात्रिः कापालिकीव ज्योत्स्ना भस्मेव तारका अस्थीनीव चन्द्रो मुद्राकपालमिवेति च उपमासन्देहस-ङ्करालङ्कार एवायं न रूपकमित्यत आह—अत्रेति। आरोपिताया कापालिक्या एवान्तर्धानव्यसनरसिकत्वं धर्मो न

कापालिक्युपमाया रात्रेरिति द्वितीयपादे रूपकसिद्धौ तद्वशात् प्रथमतृतीयपादयोरपि रूपकं सिध्यतीत्यर्थः। न हि भस्मतुल्या ज्योत्स्ना अस्थितुल्यास्तारका मुद्राकपालतुल्यश्चन्द्रश्च कापालिक्या धर्म इति, किन्तु ज्योत्स्नादिरूप-भस्मादिकमेव तद्धर्म इत्यर्थः।

## सुधासागरः

तदेतद् द्विविधम्—सवायवं निरवयञ्च। तत्राद्यं समस्तवस्तुविषयमेकदेशविवर्त्ति च। द्वितीयन्तु शुद्धमात्रम्। इत्यार्थे विभागे लक्षणमाह—समस्तेति।

आरोपिता इत्यत्र क्तप्रत्ययस्यातीतत्वाविक्षायां कर्ममात्रतात्पर्येण तदर्थमभिप्रेत्याह—आरोपविषया इवे-त्यादि। तथा चारोपिता आरोप्यमाणाः सर्वेऽपि यद्यारोपविषयवच्छाब्दा एव भवन्ति तदा समस्तवस्तुविषयं नाम रूपकम्। आरोपविषया आरोप्यरूपाणि वर्णनीयानि, समस्तं वस्तु विषयः शब्दप्रतिपाद्योऽत्रेति व्युत्पत्तेः। व्याख्यातं च मधुमतीकारैः—आरोप्यारोपविषययोः शाब्दत्वे समस्तवस्तुविषयनामकं रूपकमित्यर्थ इति। आरोपिता इति बहुवचनमविवक्षितमित्यारोप्यद्वयस्थले नाव्याप्तिः। उदाहरणम्—'ज्योत्स्ने-'ति।

कवी रूपकमुखेन ज्यौत्स्नीं योगिनीत्वेन वर्णयति। इयमनुभवारूढा रात्रिरेव कापालिकी योगिनी, द्वीपाद् द्वीपं भ्रमति विद्यावशाद्यथेच्छं सर्वद्वीपेषु गच्छति। कीदृशी ज्योत्स्ना चन्द्रिकैव भस्म तस्य छुरणमङ्गलेपनं तेन धवला शुभ्रा। तारकाः नक्षत्राण्येवास्थीनि बिभ्रती दधाना। अन्र्धानमेव व्यसनं तत्र न्यस्तं स्थापितं सिद्धाञ्जनस्य परिमलं सारम् आविर्भावतिरोभावसाधनं वस्तु दधती आददानेत्यर्थः। मन्दाक्रान्ता छन्दः। लक्षणमुक्तं प्राक्। दीक्षाकालगृहीतोपकरणेषु पाखण्डानां मुद्रोपपदनाम्ना व्यवहारः मुद्राकुण्डलं मुद्राखर्परमित्यादि। एवञ्च चन्द्रमुद्रैव कपालमिति मधुमतीकारादीनां व्याख्यानमनादेयम्।

अत्र पादत्रये इत्यादि। अत्र पादत्रये रूपकम्, तत्परिग्रहेऽतर्धानव्यसनरसिकात्वमेव साधकमिति सम्बन्धः। अयमाशयः—लाञ्छनस्य छलेनेत्यत्रापह्नतेः स्फुटत्वत्पादत्रये इत्युक्तम्। ज्योत्स्नैव भस्म, ज्योत्स्ना भस्मेवेत्यादिरूपकोपमेययोः सन्देहे साधकबाधकमानाभातेन सन्देहलक्षणसङ्करोदाहरणमिदं, न तु रूपकोदाहरण-त्वमुचितमिति शङ्कायां रूपकपरिग्रहेऽन्तर्धानव्यसनरसिकात्वं विशेषणं साधकंप्रदर्शितम्। रूपके कापालिक्याः प्राधान्यात्तत्र प्राणिधर्मस्यान्तर्धानव्यसनरसिकात्वस्यान्वयात्, उपमापरिग्रहे तु रात्रेरेव प्राधान्यात्तस्यानन्वय एव स्यादिति। अत्र ज्योत्स्नादिषु भस्मत्वादिकमारोप्याणं सर्वं शाब्दमिति द्रष्टव्यम्।

(सू० १४१) श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्॥

केचिदारोप्यमाणाः शब्दोपात्ताः केचिदर्थसामर्थ्यादवसेयाः, इत्येकदेशविवर्तनात् एकदेशविवर्ति। यथा

जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम्।
रससंमुही वि सहसा परंमुही होइ रिउसेणा॥ ४२२॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम् मण्डलाग्रलतायाः नायिकात्वम् रिपुसेनायाश्च प्रतिनायिकात्वम् अर्थसामर्थ्यादवसीयते, इति, एकदेशे विशेषेण वर्तनादेकदेशविवर्ति।

---

सङ्केतः

एकदेशेति। एकदा एकस्मिन् काले ईशः शाब्दत्वात् समर्थः विवर्तः रूपणविधिः यत्र तत् तथा इति वा व्युत्पत्तिः।

सङ्केतः (रुय्यकः)

यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।
रणसम्मुख्यपि (रससम्मुख्यपि) सहसा पराङ्मुखी भवती रिपुसेना॥

बालचित्तानुरञ्जनी

उदाहरति जस्सेति। रिउसेणा रिपुसेना। रणंतेउरे रणान्तःपुरे। मण्डलग्गलअं मण्डलाग्रलताम्। करे कुणंतस्सं करे कुर्वतः। जस्स यस्य। रससंमुहीवि रससंमुख्यपि। सहसा, परंमुही पराङ्मुखी। होई भवति। अत्र सर्वविषयत्वप्रतीतेरेकदेशवर्तित्वं कथमित्याह अत्रेति। सङ्ग्रामान्तःपुररूपेण नायिकाप्रतिनायिकात्वप्रतीतेः एकदेशविवर्तित्वमित्यर्थः।

काव्यादर्शः

यत्र चैकत्र विषये आरोप्याः श्रौताः शब्दोपात्ताः, विषयान्तरे तु अर्थागम्याः, तदा एकदेशविवर्तीत्याह—श्रौता इति। श्रुतिर्निरन्तरार्थनिष्ठोऽभिधा व्यापारः।

### विवेकः

अथैकदेशविवर्ति लक्षयति श्रौता इति। यस्मिन्निति रूपके। यथा जस्सेति—यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्। रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥ मण्डलाग्रः खड्गः, रसः शृङ्गारः। एकदेशविवर्तिता ग्रन्थकृतैव व्याख्याता। अवसेयं लभ्यम्।

### दीपिका

एकदेशविवर्तीति। एकदेशवर्तीत्यपि क्वचन व्यवहृतिः।

मण्डलाग्रस्य लतात्वे रूपितेऽपि नायिकात्वरूपणमेव चारुत्वावहमिति वाच्यरूपणेऽनास्थोक्तिः। मण्डलाग्रलताया नायिकात्वमिति। अर्थसामर्थ्यादिति रणस्यातः पुरत्वरूपणस्यान्यथाऽव्यवस्थितप्रायत्वादित्यर्थः।

इह केचिदाहुः—रूपकाणां परम्पराऽपेक्षित्वे परम्परिततैव स्यादिति। तन्न, परम्परितत्वे तन्त्रेण भेदेन वा द्वयोरपि रूपणयोः शाब्दत्वात्, इह तु तद्भावादित्येके। एवञ्च सति समस्तवस्तुविषयात्तस्य भेदो दुरुपपादः स्यात्, अवान्तर वैधर्म्यमात्रेण च परम्परितावान्तरत्वमेव स्यात्।

वस्तुतस्तु परम्परिते 'विद्वन्मानसहंस' इत्यादौ हृदयादीनां सरस्त्वादिरूपणमन्तरेण राजादीनां हंसत्वादीनां रूपणं सर्वथैवासङ्गतं स्यात्, सादृश्यासम्भवात्; तत्सम्भवेऽपि वा हृदयादीनां हंसादिभिः सम्बन्धानुपपत्तेः। इह तु रणस्यान्तः पुरेण सुखसञ्चारतया तारकादीनाञ्चास्थिप्रभृतिभिर्धारणादिना सादृश्यं सुप्रतिपादमिति। अत एव रूपणं नासम्भवि, किन्तु तथाविधवैचित्र्यवन्न स्यादिति विवेकः।

"खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य" इत्यादौ परम्परितमप्येकदेशविवर्ति, क्ष्माया अवरोधवधूत्वरूपणं विना खड्गसौविदल्लतारूपणस्य सर्वथाऽसङ्गतेः। विशेषण शब्दोपात्ततया स्फुटत्वेन।

### दर्पणः

जस्सेति। यस्य रणान्तः पुरि करे कुर्वतो मण्डलाग्रलताम्।

रससंमुख्यपि सहसा पराङ्मुखी भवति विप्रसेना [रिपुसेना]॥ रसतत्साहो रागश्च। इह च मण्डलाग्रस्य लतात्वे रूपितेऽपि नायिकात्वरूपणमेव चारुत्वावहमिति वाच्यरूपणोऽस्थानोक्तिः, अर्थसामर्थ्यादिति अन्यथा रणान्तः युद्धस्य [पुरस्य] अनवस्थितप्रायत्वादिति भावः।

### साहित्यचूडामणिः

एकदेशविवर्तिरूपकमाह—श्रौता इति। त इति। आरोप्यमाणाः। एकदेशे विवर्तनाच्चलनादिति पूर्व निरुक्तिः।

**जस्सेति।**

**यस्य रणान्तरः पुरे करे कुर्वतो मण्डलाग्रलताम्।**

**रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥ इति।**

अत्र शब्दत्वेन रूपणवृत्तौ अर्थसामर्थ्यलभ्यत्वमैकदेशिकं चलनमित्याह—रणस्येति।

**सम्प्रदायप्रकाशिनी**

श्रौता आर्थाश्चेत्यादि। ते आरोप्यमाणा अर्थाः। केचिच्छब्देनोपादीयन्ते केचित् पुनरर्थसामर्थ्यादाक्षिप्यन्ते यत्र तदेकदेशे विशेषेण वर्तनादेकदेशविवर्ति।

तदेतद् व्याचष्टे—केचिदारोप्यमाणा इत्यादि।

जस्स रणन्ते इत्ति।

**"यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।**
**रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥**

करेकरणं पाणिग्रहः। अत्र रणस्यान्तःपुरत्वं श्रौतम्। मण्डलाग्रलताया नायिकात्वं, रिपुसेनायाश्च प्रतिनायिकात्वमार्थमित्येकदेशविवर्ति।

तदेतदाह—अत्र रणस्येत्यादि।

**मधुमती**

श्रौता इति। शाब्दा इत्यर्थः। आर्थाः अर्थलभ्याः व्यञ्जनागम्याः इति यावत्। तद्व्यञ्जनं च श्लिष्टविशेषणमाहात्म्यात्। अत एव एतादृशि रूपके यद्यपि समासोक्तिरप्यस्ति, तथापि—रूपकादेव कविप्रतिभासंरम्भगोचरात् चमत्कारः इति, तदङ्गत्वेन सा अन्यथासिद्धा, उपमावत् इति द्रष्टव्यम्।

**विस्तारिका**

श्रौता इत्यादि। श्रौताः शाब्दाः, आर्था आक्षेपादिलभ्याः। आरोपिता आरोप्यमाणाः। विशेषण वर्तनं विवर्तनम्।

**यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।**
**रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥**

मण्डलाग्रः खड्गः। लता नायिका प्रतिनायिका। अर्थसामर्थ्याद् यदन्तःपुरं तन्नायिका-प्रतिनायिकाधिकरणमिति व्याप्तिबलेनाक्षेपाद् रणस्यान्तःपुरत्वं सुखसञ्चारत्वात्, अत एव नास्य परम्परितत्वम्, रूपान्तरसाचिव्यमनपेक्ष्य विश्रान्तेः; परम्परिते तु 'विद्वन्मानसहंस' इत्यादौ राज्ञो हंसत्वारोपो मनसि सरस्त्वारोपमपेक्ष्यते, मनःसरोवराधेयत्वं विना राज्ञि हंससाधर्म्यान्तरविरहेणाविश्रान्तेः।

यत्तु विषयविषयिणोः शाब्दत्व एव परम्परित्वमित्याहुः, तदसत्, तदास्यमस्तु विषयभेदतापत्तेः। 'खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य' इत्यत्र खड्गसौविदल्लत्वारोपस्य क्ष्माया महिषीत्वारोपकारकत्वादाक्षेपकत्वाच्च। विशेषेणत्यादि। आक्षेपकत्वेनेत्यर्थः।

यत्र तु शाब्दं तत्परम्परितं प्रथमम्, 'रणान्तःपुरे' इत्यत्र द्वितीयम्। 'विद्वन्मानसहंस' इत्यत्र च रणान्तःपुरयोर्नृपतिसिंहयोः सुखसञ्चारास्पदत्वादिकं मुखचन्द्राणामाह्लादकत्वादीव न प्रसिद्धमिति पूर्वत्र नाङ एव निक्षेप्यम्, एवं सति परम्परितभेदत्वापत्तेः। शाब्दत्वार्थत्वाभ्यामेव विशेषाद् रूपकोपपत्तिरूपत्वेनाभेदात्। किं चरणस्यान्तःपुरत्वारोपतः पूर्वं खड्गलतायां नायिकात्वादेरपि किं साधर्म्यम्? करणग्रहणयोग्यस्त्रीत्वमिति चेत्, श्लिष्टविशेषण बाहुलतायां स्त्रीव्यवहारप्रसक्तौ समासोक्तिप्रसक्तेः प्रकृतोच्छेदप्रसङ्गाद् यदेवोक्तम्, तेन रणान्तःपुरयोः सुखसञ्चारास्पदत्वं साधर्म्यं प्रसिद्धमिति तन्न, अन्तःपुरत्वारोपे सुखसञ्चारप्रतीतेः।

सार्वलौकिकत्वात् साम्प्रदायिकास्तु उपमाया अप्येकदेशवर्तित्वमिच्छन्ति। यथा—

**नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः।**
**पदे पदे विभान्ति स्म चक्रवालैः स्तनैरिव॥**

इत्यत्रोपमादिषु नयनादिसाम्यस्य शाब्दत्वात् सरःश्रीसामर्थ्याच्च स्त्रीत्वेनोपस्थितस्य स्त्रीधर्मसदृशधर्माश्रयस्य स्त्रीसादृश्यमिति व्याप्त्याक्षेप्यत्वे नार्थत्वादिति।

अन्येऽप्येतन्मतं बहुमन्यन्ते, तन्न, उपस्थापकविरहेणोपमानानुपस्थितावौपम्याप्रतीतेः, अत एवाप्रस्तुतप्रशंसायां समासोक्तौ चोपमानोपमेययोर्द्वयोरशाब्दत्वेनौपम्याप्रतीतौ पृथगलङ्कारता। नोपमा व्यङ्ग्येत्यभिसन्धायैव ग्रन्थकृता नायमलङ्कारो लक्षित इति।

वस्तुतस्तु समानधर्मसम्बन्धरूपाया उपमायाः 'नेत्रैरिव' इत्यादिना शाब्दत्वेनार्थत्वासम्भवात्। न च साधर्म्यन्तरस्यार्थत्वम्, तदप्रतीतेरित्युपमाया नैकदेशवर्तितेति।

**सारबोधिनी**

भेदान्तरमाह श्रौता इति। जस्सेति।

**यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।**
**रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥**

मण्डलाग्रः खड्गः। कर करणं युद्धार्थं रतार्थञ्च। रसो वीरः शृङ्गारश्च। सामुख्यं युयुत्सा रतेच्छा च। पराङ्मुखता युद्धात्। प्रियसङ्गताच्च निवर्तनम्। ननु परम्परितरूपके 'विद्वन्मानसे'त्यादौ राज्ञो हंसत्वारोपो मनसि सरस्त्वारोपं यथापेक्षते तथात्रापि नायिकाप्रतिनायिकात्वारोपं रणस्यान्तःपुरत्वारोपोऽपेक्षत इति परम्परितत्वमस्य स्यादिति चेन्न। हेतुफलयोः शाब्दत्व एव परम्परितत्वादिति। अत्र प्राञ्चः, उपमायामपि एकदेशविवर्तित्वमिच्छन्ति। यथा—

**नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः।**
**पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव॥**

इत्यत्रोत्पलादिषु नेत्रसाम्यस्य शाब्दत्वात् सरःश्रीषु धर्मस्यार्थत्वाच्च स्तनादिधर्मनिर्देशात्। न चेयं समासोक्तिः श्लिष्टविशेषणासंभवात्। यत्र तु श्लिष्टविशेषणं संभवति तत्र समासोक्तिसङ्कीर्णमेव। यथा—

**ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।**
**प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥**

### काव्यप्रदीपः

श्रौता अर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्।

ते इत्यारोपिताः। तथा च यत्र केचिदारोप्यमाणाः शब्दोपात्ताः केचिदर्थसामर्थ्यादवसेयास्तदेकदेशविवर्ति। एकदेशे विशेषेण वर्तत इति व्युत्पत्तेः। उदाहरणम्—

**'जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम्।**
**रससंमुहा वि सहसा परम्मुही होइ रिउसेणा ॥'**

अत्र रणेऽन्तःपुरत्वमारोप्यं शाब्दम्। मण्डलाग्रलताया नायिकात्वं रिपुसेनायाः। प्रतिनायिकात्वं चारोप्य न शाब्दम्। किं त्वन्तःपुरत्वारोपसामर्थ्यादेवावसीयते। अन्यथा तस्यापर्यवसानात्। अत एकदेशे विशेषेण वर्तनादेकदेशविवर्ति।

### आदर्शः

एकदेशविवर्त्ति रूपकमाह—श्रौता इति। अङ्गाङ्गिभावापन्नेष्वनेकरूपकेषु केचिद् रूप्यमाणाः शब्दोपात्ताः केचित्त्वर्थलभ्या इत्यर्थः। अत्र चाङ्गाङ्गिभावापन्नरूपकानेकत्वाभिप्रायेमैव बहुवचनम्। यदि त्वेकमेव रूपकं तत्रापि तुल्यन्यायाद् रूप्यमाणस्यार्थत्वे इदं बोध्यम्। यथा गुणसिन्धुरित्यादौ गुणस्य जलत्वमार्थम्। जस्सेति।

**यस्य रणान्तरः पुरे करे कुर्वतो मण्डलाग्रलताम्।**
**रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥ इति संस्कृतम्।**

निर्भयसञ्चारदेशत्वेन रण एवान्तःपुरम्। मण्डलाग्रलतां खड्गलताम्। अत्र स्त्रीलिङ्गशब्दार्थत्वेन मण्डलाग्रलता रिपुसेना च स्त्रीत्वेनावसीयते। तत्र च मण्डलाग्रलतारूपाया नायिकाया अन्तःपुरे करे करणाद् रिपुसेनायाः प्रतिनायिकाया लज्जया पराङ्मुखत्वम्। रससम्मुखीत्यत्र युद्धस्य एव श्लेषात् शृङ्गाररसः। एकदेश इति।

अङ्गाङ्गिभावापन्नरूपकरूप्ययोरतयथाभूतरूप्यरूपकयोश्चैकदेशो बोध्यः, तेन गुणसिन्धुरित्येकमात्ररूपकैकदेशस्यापि परिग्रहः। 'विवर्त्तनं' शाब्दत्वम्।

### सुधासागरः

ते इत्यारोपिताः। तथा च यत्र केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेयास्तदेकदेशविवर्त्ति। एकदेशे विशेषेण वर्त्तत इति व्युत्पत्तेः। उदाहरणम्—जस्सेति।

**यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।**
**रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥ इति संस्कृतम्।**

यस्य राज्ञो रण एवान्तःपुरं तत्र मण्डलाग्रलतां खड्गलतां कृपाणीमिति यावत्, नायिकां च करे कुर्वतो गृहीतवतः युद्धार्थं रतार्थं चेति भावः। रिपुसेना शत्रुसेना प्रतिनायिका च, रससंमुखी युयुत्सया वीररसाविष्टाऽपि, पक्षे रिरंसया शृङ्गाररसाविष्टाऽपि सहसा शीघ्रं पराङ्मुखी भवति युद्धात्प्रियसङ्गमाच्च निवर्तत इत्यर्थः। आर्या छन्दः। लक्षणमुक्तं प्राक्।

अत्रेत्यादि। अयमर्थः—रणेऽन्तःपुरत्वमारोप्यमाणं शाब्दम्। मण्डलाग्रलतायाः नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वं चारोप्यमाणं न शाब्दम्, किन्त्वन्तःपुरत्वमारोपसामर्थ्यादेवावसीयते, अन्यथा तस्यापर्यवसानादित्यर्थैकदेशे विशेषेण वर्तनादेकदेशविवर्त्तीति व्युत्पत्तिरिति।

## (सू० १४२) साङ्गमेतत्

## उक्तद्विभेदं सावयवम्॥

### सङ्केतः

साङ्गमेतदिति। न केवलं यत्र तस्यैव रूपणम्, अपि तु तदङ्गस्यापि॥ द्विभेदमिति। पूर्वोदाहरणयोः समस्तवस्त्वेकदेशविवर्तिविषयतयेत्यर्थः।

### सङ्केतः (रुय्यकः)

सांगमिति—न (केवल) मत्र तस्यैव रूपणमपि तु तदङ्गस्यापि—अङ्गमत्रोपकरणमात्रं नत्वारम्भकमेव, लक्ष्या व्याप्तिप्रसङ्गात्।

### बालचित्तानुरञ्जनी

इतोऽपि विभागं वक्त काम उक्तमेकत्र सङ्कलयति साङ्गमिति। व्याकरोति उक्त[द्विभेद]मिति। द्विभेदं समस्तवस्तुविषयैकदेशवर्त्तिरूपम्।

### काव्यादर्शः

यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्॥

साङ्गमेतदिति सूत्रम्। न केवलं यत्र तस्यैव रूपणं, अपि तु तदङ्गस्यापि अङ्गमत्रोपकरणमात्रं, न तु आरम्भकमेव, लक्ष्याव्याप्तिप्रसङ्गात्। सहाङ्गेनावयवेन वर्तते सावयवमित्यर्थः।

एतच्च समस्तवस्त्वेकदेशविवर्तिविषयतया द्विभेदमपि पूर्वोदाहरणयोर्दर्शितमित्याह—उक्तं द्विभेद-मिति।

### विवेकः

साङ्गमिति—न केवलं यत्र तस्यैव रूपणमपि तु तदङ्गस्यापि। अङ्गश्चात्रोपकरणमात्रं न त्वारम्भकमेव लक्ष्याव्याप्तिप्रसङ्गात्। एकदेशविवर्ति रूपकञ्चैतद्रणान्तःपुरेत्यादि समग्रवस्तुविषयाविनाभावि। समस्तवस्तुवि-षये तु 'ज्योत्स्नाभस्मे'त्यादौ सावयवे रूपके यद्यप्य वयवानामपेक्षाऽस्ति तथापि न रूपणं परतन्त्रमिति तदित्थं द्वावेतौ भेदौ सावयवौ, अवयवविवक्षाभावात्।

### दीपिका

अङ्गाङ्गिसमुदायारोपरूपत्वात् साङ्गम्। प्रश्नयति प्रश्नविषयीकरोति। अन्तः स्वपिति बाह्यं किमपि न वेत्ति।

### साहित्यचूडामणिः

इतोऽपि विभागं वक्तुकाम उक्तमेकत्र सङ्कलयति—साङ्गमेतदिति ।

द्विभेदं समस्तवस्तुविषयैकदेशविवर्तिरूपकम् । अङ्गमवयवः । एवं हि तद् व्याचष्टे—सावयवमिति ।

### सम्प्रदायप्रकाशिनी

तदिदं द्वयं सावयवमित्याह—साङ्गमेतदिति ।

### मधुमती

साङ्गमित्यस्य विवरणं सावयवमिति । तथा च यत्र धर्मधर्मिणोः उभयोरपि रूपणं तत्र साङ्गम् । यत्र तु धर्मिमात्रस्य रूपणं तत्र निरङ्गं इत्यर्थः ।

### विस्तारिका

साङ्गमिति । अनन्तरानुवृत्तिं व्युदस्यति-द्विभेदमिति । अनन्तरानुवृत्तत्वे तद्ग्रहणस्य वैफल्यापत्तेरित्यर्थः । अवयविमात्ररूपणान्निरङ्गम्, अतएव शुद्धम् रूपकान्तरामिश्रणात् ।

### सारबोधिनी

साङ्गमिति । अनन्तरोक्तं व्युदस्यति द्विभेदमिति ।

### काव्यप्रदीपः

**साङ्गमेतत्**

साङ्गं सावयवम् । एतदुक्तप्रकारद्वयवदित्यर्थः । साङ्गत्वमनेकरूपकसमुदायः । एकस्मिन्नरूपके द्वितीयस्याङ्गत्वेनावस्थानात् । अङ्गशब्दस्य हेत्वर्थत्वात् ।

### आदर्शः

उक्तं द्विभेदमिति । समस्तवस्तुविषयरूपकमेकदेशविवर्त्तिरूपकञ्चेत्युक्तं द्विभेदं सूत्रोक्तम् । उदाहरण-द्वये साङ्गं सावयवम्, रूपितायाः कापालिक्या भस्मादिधर्मवत्त्वाद् रूपितस्यान्तःपुरस्य नायिकादिधर्मवत्त्वाच्च ।

### सुधासागरः

साङ्गं सावयवम् एतत् उक्तप्रकारद्वयवदित्यर्थः । तदाह—उक्तमित्यादि । साङ्गत्वमनेकरूपकसमुदायः, एकस्मिन् रूपके द्वितीयस्याङ्गत्वेनावस्थानात्, अङ्गशब्दस्यहेत्वर्थत्वात् । अत एवोक्तं मधुमतीकारैः—'अङ्गमारो-पकारणम्' इति ।

(सू० १४३) निरङ्गं तु शुद्धम्

यथा

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्॥ ४२३॥

---

**सङ्केतः**

निरङ्गमिति। निरवयवमित्यर्थः। यत्र केवल एवाङ्गी रूप्यते नाङ्गानि, तत् निरङ्गम्। यथा—प्रेमलतिकामिति। अत्र केवलोऽङ्ग्येव लतालक्षणः रूपितः, न तु तदङ्गं पत्रादि इति शुद्धम्। प्रेमैव लतिका इत्यत्रान्यत्रापि रूपकसमासे मयूरव्यंसकादित्वात् एवशब्दलोपः। उपमासमासे तु सर्वत्र व्याघ्रादित्वात् इवशब्दलोपः। यत्र अन्यतरपरिग्रहे साधकप्रमाणाभावः, तदितरस्य वा परिहारे न स्याद्बाधकं प्रमाणम्, तत्रैव सन्देहसङ्करप्रसङ्गः, प्रकृते लतायाः सेचनं आनुकूल्यात् आरोपितधर्म एवेति रूपकपरिग्रहे साधकं प्रमाणमस्तीति न सन्देहसङ्करः।

**बालचित्तानुरञ्जनी**

निरवयवमाह निरङ्गन्त्विति। अङ्गविकल्पाभावे शुद्धम्। तदुदाहरति कुरङ्गीति। अहो सखि यत् इयं गीतध्वनिषु कुरङ्गीव अङ्गानि स्तिमितयति यच्च सखीश्रुतमपि कान्तोदन्तं सखीं पुनः प्रश्नयति, प्रश्नवन्तं करोति। 'विन्मतो लुगि'ति [अ० ५/३/६५] मतुपो लुक्। कृतपूर्वीकटमिति न्यायेन द्वितीया। यच्च, अनिद्रं यथा भवति तथा अन्तः स्वपिति तत् तस्मात् कारणात् तस्याः हृदि अभिनवां, प्रेमैव लतिका तां प्रेमलतिकां सेक्तुं मनसिजः प्रवृत्त इति वेद्मि। अत्र लतिकालक्षणः अवयवी निरूपितो न त्वन्यत् किमपि विशेषणमुक्तमिति निरवयवमिदं रूपकम्।

**काव्यादर्शः**

निरङ्गंत्विति सूत्रम्। निरवयवमेक एव, यत्रारोपस्य विषयोऽवयवान् अरूपयित्वाऽवयविमात्रेण रूपणं क्रियत इत्यर्थः। 'प्रेमलतिका'मिति। अत्र केवलोऽङ्ग्येव लतालक्षणो रूपितः, न पुनस्तदवयवाः पत्रादय इति शुद्धत्वम्। 'प्रेमैव लतिका' इति मयूरव्यंसकादित्वादेव शब्दलोपी समासः।

ननु, व्याघ्रादिद्वारेण इव-शब्दलोपो समासो दृश्यते, लुप्तोपमायां सोऽपि स्यादिति संदेहसंकरः प्राप्नोति। सत्यम्, यत्रान्यतरपरिग्रहे साधकप्रमाणाभावस्तदितरस्य वा परिहारे न स्याद्बाधकं प्रमाणै, तत्रैव उभयप्रसङ्गः, स एव

च संदेहसंकरः, इह तु लतायाः सेचनमानुकूल्याद् आरोपितधर्म एवेति रूपकपरिग्रहे साधकमिति न संकरः । एवं बाधकेनापि प्रमाणेन संदेहांशापवर्तनाद् अपरांशप्रतिष्ठायां निरवकाशतैव संदेहस्य, यथा—

**मधु सुरभिणि षट्पदेन पुष्पे मुख इव साललतावधूश्चुचुम्बे ॥**

अत्र 'साललतावधूरिव मुख इव पुष्पे भृङ्गेण चुम्ब्यते स्म' इति विवक्षायां इव-शब्दद्वयेन वाक्यार्थासंगतिर्बाधकं प्रमाणं लुप्तोपमायाः । तथआ हि 'मुख इव पुष्पे' इत्यत्र सदृशस्य पुष्पस्य प्रतिपत्तौ मुखाधीयमानविशेषता पुष्पाश्रिता रम्यतया उपारोहति, तेन मुखसामर्थ्याक्षिप्तया वध्वा कयापि भाव्यमिति सात्र लताभिधीयते । तस्मात् 'लतेव वधूः' इत्याञ्जसी रूपके प्रतिपत्तिः, उपमाप्रतिपत्तेस्तु अनाञ्जसत्वम् । तथा हि अत्रोपमेये पुष्पविशेषे मुखोपमितिसामर्थ्याक्षिप्ते चुम्बनाधारत्वादौ न साललताया उपयोगोऽस्ति, वध्वा एव तत्रोपयोगित्वात् । तेन वधूरत्र प्रधानं, तदुपयोगिनी तु साललता । 'साललतैव वधूः' इत्यनया रूपकच्छायया संगतिरित्यलम् । निरवयवस्य तु केवलं मालारूपकं चेति द्वौ भेदौ तत्र केवलं शुद्धं दर्शितम् ।

### विवेकः

अवयवविवक्षाविरहे निरवयवं यथा कुरङ्गीवेत्यादि । सेक्तु मित्यनेनाभिव्याप्तिर्लक्ष्यते प्रेमलतिकेति रूपकं शुद्धं, तदुपकरणस्याप्यन्यस्यासम्भवात् ।

### साहित्यचूडामणिः

निरवयवमाह—निरङ्गमिति । शुद्धमिति । अङ्गविकल्पाभावात् ।

कुरङ्गीति । अत्र प्रेम्ण एकस्य लतात्वमात्रं रूप्यते नान्यस्य किञ्चित् । सेकौचित्यं रूपकपरिग्रहे साधकम् ।

### सम्प्रदायप्रकाशिनी

अथ निरवयवं—निरङ्गं त्विति । शुद्धं, केवलधर्मारोपणात् ।

कुरङ्गीवेति । अत्र प्रेमलतिकामिति केवलधर्मसमारोपात् निरवयवतम् ।

### मधुमती

अत एवाह—निरङ्गं तु शुद्धं इति । धर्मि मात्रस्यैव रूपणादित्यर्थः ।

कुरङ्गवेति । स्तिमितयति स्तिमतं करोति प्रश्नयति प्रश्नवन्तं = प्रश्नविषयं करोति । णिचः इष्टवद्भावात् 'विन्मतुपोर्लुक्' इति मतुपो लुक् । 'कृतपूर्वी कटं' इति न्यायेन द्वितीया । अत्र लतिकाधर्माणामेवारोपात् निरङ्गत्ता द्रष्टव्या ।

## विस्तारिका

कुरङ्गीत्यादि । स्तिमितयति निष्क्रियं करोति । गीतमिति ध्वनौ शब्दे । आस्तां गीतेषु प्रश्नयति, तद्विषयं करोति । अन्तः स्वपिति नयनामुद्रणे विषयं न गृह्णाति । अभिनवां तस्या एव सेकौचित्यं स्वेनार्जिततत्वेन सेचनम् । अत्र प्रेम्णि लतिकात्वारोपः, न तु तदुपपादके क्वापीति निरङ्गता ।

## सारबोधिनी

अङ्गं आरोपकारणम् । निरङ्गं अवयविमात्रनिरूपणम् । अत एव शुद्धमिति । रूपकान्तरामिश्रणात् । कुरङ्गीति । स्तिमितयति निष्क्रियं करोति । प्रश्नयति प्रश्नविषयं करोति । अंतः स्वपिति । नयनमुद्रणेऽपि विषयं न गृह्णाति । अभिनवामिति । तस्यामेव सेकौचित्यात् । अत्र प्रेम्णि लतिकात्वमात्ररोपो न तु तदुपपादकोऽन्यः कोऽपीति निरङ्गता ।

## काव्यप्रदीपः

निरङ्गं तु शुद्धं

निरङ्गमद्वितीयम् । तच्छुद्धमेवेत्यर्थः । यथा—

> 'कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु य-
> त्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
>
> अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
> प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ।।'

अत्र प्रेममात्रे लतिकात्वारोपः ।

## आदर्शः

उदाहरणान्तरे त्वनयोर्निरङ्गत्वमपि सम्भवतीत्याह—निरङ्गत्विति । निरङ्गत्विवदं द्वयं शुद्धमित्यर्थः, न त्वेतद्द्वयभिन्नं तृतीयरूपं शुद्धमित्यर्थः ।

तत्र शुद्धं समस्तवस्तुविषयमुदाहरति—कुरङ्गीविति । अहो तत्तस्माद् वेद्मि जानामि अस्या हृदि नायकविषयां प्रेमलतिकां सेक्तुं मनसिजः प्रवृत्तः । यद् यस्मादु गीतध्वनिषु नायकविषयगीतध्वनिषु अङ्गानि कुरङ्गीव स्तमितयति निश्चलयति । कान्तस्योदन्तं वार्त्ताम् । अनिद्रमिति निद्रां विनापि भावनया अन्तर्निद्रातीत्यर्थः । यद्वा अन्तर्गृहाभ्यान्तरे उत्कण्ठया निद्रारहितं यत् स्वपितीत्यर्थः । अत्र रूप्यरूपके द्वे श्रौते इति समस्तवस्तुविषयम्, तदङ्गपल्लवादिरूपणाभावाच्शुद्धम् । एकदेशविवर्तिनः शुद्धस्य 'गुणसिन्धु'रित्यादिकमेवोदाहरणम् ।

## सुधासागरः

निरङ्गमद्वितीयम् । तद् रूपकान्तरामिश्रणाच्छुद्धमित्यर्थः ।

किशोर्याः वृत्तान्तं धात्री काञ्चिन्निवेदयति। हे सखि! यदियं गीतध्वनिषु कुरङ्गीव मृगीवाङ्गानि अवयवानि स्तिमितयति निश्चलानि करोति, यत् श्रुतमपि कान्तोदन्तं प्रियवृत्तान्तं सखीं प्रति पुनः प्रश्नयति भूयोऽपि प्रश्न विषयं करोति। यच्चानिद्रं नेत्रमुद्रणमन्तरेण यथा स्यात्तथाऽन्तः स्वपिति विषयं न गृह्णाति, अहो उत्साहे तत्कारणादहं वेद्मि जाने, किमित्याकाङ्क्षायामाह मनसिजः कामोऽस्या बालायाः हृदि अभिनवामङ्कुरितां प्रेमैव लतिकाऽनुकम्पितलता तां सेक्तुं रसार्द्रां कर्तुं प्रवृत्त इत्यर्थः। अभिनवत्वेन सेचनौचित्यं व्यज्यते। शिखरिणी छन्दः। 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात्।

(सू० १४४) माला तु पूर्ववत्॥ ९४॥

मालोपमायामिवैकस्मिन् बहव आरोपिताः। यथा

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया॥ ४२४॥

---

### सङ्केतः

एवं केवलं शुद्धरूपकमुक्त्वा मालारूपकमाह—मालेति। सौन्दर्यस्येति। रहांसि रहस्यानि। अत्र प्रियारूपः एक एव आरोपविषयः मुखाद्यङ्गैर्विना तनुगुणैः तरङ्गिण्याद्यैः रूपितः इति निरङ्गम्।

### बालचित्तानुरञ्जनी

आद्यस्य द्वितीयं भेदमाह मालेति। यद्यपि कारिकारेण मालोपमा पृथक् नोक्ता तथापि कारिकावृत्तयो-रेककतृकतया अभेदविवक्षया उक्तं पूर्ववदिति। उदाहरति सौन्दर्यस्येति। सौन्दर्यस्य तरङ्गिणी नदी, तरुणिमोत्क-र्षस्य हर्षोद्गमः, कान्तेः कार्मणकर्म, नर्मरहसामुल्लासनावासभूः, विद्या वक्रगिरां, विधेः अनवधिप्रावीण्यसाक्षात्क्रिया, पञ्चशिलीमुखस्य प्राणाः, ललनाचूडामणिः सा प्रिया अवर्त्तत, इत्यर्थः अत्रैकस्यां प्रियायां तरङ्गिणी त्वादयो बहव आरोप्यन्ते।

### काव्यादर्शः

माला त्विति सूत्रम्। यत्रैकं वस्तु अनेकसामान्यं उपमीयेत अनेकैरूपमानैरेकसामान्यैरिति यद् मालोप-मालक्षणं तदेव मालारूपकस्यापीत्याह—मालोपमायामिवेति। 'रहांसि' रहस्यानि। 'पञ्चशिलीमुखः' भ्रमरः। अत्राष्टौ तरङ्गिण्यादय आरोपिताः, प्रियालक्षणश्च एक एवारोपविषयो मुखादिभिरवयवैर्विनैव तरङ्गिण्यादिभी रूपित इति निरवयवत्वं मालासदृशत्वाद् मालारूपकम्।

### विवेकः

सौन्दर्यस्येत्यादि—तरङ्गिणी नदी। कार्मणं मुष्टियोगः। नर्मरहसामिति रहस्यपरिहासानाम्। विद्याऽऽत्मज्ञानम्। अत्र प्रियायामेकस्यामेव बहूनामारोप इति मालारूपकता।

## दीपिका

पूर्ववदिति । पूर्ववत् शब्देनोपमासामान्यलक्षमसंगृहीततया बुद्धिस्थां मालोपमां निर्दिशतिं सूत्रकृदित्याह—मालोपमायामिवेति । यथा मालोपमायामेकत्रोपमेये बहून्युपमानानि सम्बध्यन्ते तथाऽत्रैकस्मिन्नेवारोपविषये बहव आरोप्यन्त इत्यर्थः । कार्मणकर्म मन्त्रौषधादिभिर्वशीकरणम्, नर्मरहसां क्रीडारहस्यानां विद्याशिक्षाशास्त्रम्, अनवधि अपर्यन्तम् । अत्र रूप्यमाणानां परस्परमङ्गाङ्गीभावान्निरवयमाला ।

## साहित्यचूड़ामणिः

माला तु पूर्ववदिति । कारिकावृत्त्योरेककर्तृकत्वादभेदविवक्षयोक्तिः । न खलु मालोपमा कारिकायामलक्षि ।

सौन्दर्यस्येति । कार्मणकर्म वशीकरणकर्म । अत्रैकस्यां प्रियायां सौन्दर्यतरङ्गिणीत्वादयो बहव आरोप्यन्ते । लिङ्गवचनवैचित्र्यं च मालावैचायमुद्रेचयितुम् ।

## सम्प्रदायप्रकाशिनी

पूर्ववदित्येतदनुस्मारयति—मालोपमायामिवेत्यादि । एकस्मिन्, आरोपविषय इति शेषः ।

सौन्दर्यस्येति । कार्मणं वशीकरणम् । नर्मरहसां नर्मरहस्यानाम् । अत्रैकस्यामेव प्रियायां तरङ्गिण्यादिरूपणान्मालात्वम् ।

## मधुमती

माला तु पूर्ववदिति । एकत्र अनेकोपमानोपमेयोपादानात् मालोपमेव, अत्रापि एकत्र अनेकारोपात् मालारूपकमित्यर्थः ।

## विस्तारिका

मालोपमायामिवेति । एकस्य बहूपमानोपादानं नान्यत्रेति पूर्वपदेनोपमानुकर्षणम् । एकत्रारोपविषये यदा बहव आरोप्यन्त इत्यर्थः ।

सौन्दर्यस्य लावण्यस्य तरङ्गिणी नदी । तरङ्गत्वेनोत्तरोत्तराविच्छेदः । समुचितस्थललाभेन हर्षः । कार्मणकर्म वशीकरणोपायः । कर्मणां नर्मरहस्यम्, रहस्यपरिहासानाम् आवासर्भूवसतिस्थानम् । वक्रगिरां साकूतवचनानां विद्या उपदेशः शास्त्रम् । अनवधि निःसीमं यत् प्रावीण्यं निर्माणकौशलं तस्य साक्षात्क्रिया प्रत्यक्षहेतुः; साक्षात् क्रियतेऽनेनेति करणसाधनात् पञ्चतत्त्वेष्वेकः । लल ईप्सायाम् । ललनानां प्राप्तोच्छाजनकानां चूडामणिः, आदरग्राह्यत्वात् सा प्रिया, न त्वन्या ।

अत्रैकस्यां प्रियायामारोपविषये तरङ्गिणीत्वादयो बहव आरोप्या इति माला । सा च निरङ्गरूपा आरोप्यमाणानामङ्गाङ्गिभावविरहात् ।

### सारबोधिनी

माला तु पूर्ववदिति। पूर्वपदेनोपमानुकर्षणम्। अत्रेदं बोध्यम्। मालोपमा वृत्तौ लक्षिता कारिकायां सा दृष्टान्तीकृतेति वृत्तिकृत्कारिकाकृतोरैक्यमिति। सौन्दर्यस्येति। तरङ्गिणीति तरङ्गपदेनोत्तरोत्तरादविच्छेदः सूचित-स्तत्त्वलाभेन हर्षः, वशीकरणोपायः कार्मणम्। प्रियायामारोपविषये तरङ्गिणीत्वादयो बहव आरोप्या इति माला।

### काव्यप्रदीपः

अथ साङ्गस्यैव वैचित्र्यान्तरमाह—

**माला तु पूर्ववत्॥ ८॥**

यथैकत्र बहूपमानयोगे मालोपमा तथैकत्रानेकधर्मारोपे मालारूपकमित्यर्थः।

यथा—

**'सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः**
**कान्तेः कार्मणकर्म नर्मवचसामुल्लासनावासभूः।**
**विद्यावक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया**
**बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया॥'**

### काव्यप्रकाशखण्डनम्

माला तु पूर्ववत्। (का० ९४, च. पा.)

मालोपमायामिव एकस्मिन् बहव आरोपिताः, तदा मालारूपकम्। यथा—

**रूपामृतस्य वापिकाऽपि जयश्रीरनङ्गस्य।**
**विभ्रमरसैकसंपद् जयति जनानन्दकन्दली बाला॥**

### आदर्शः

मालारूपकमाह—माला त्विति। पूर्ववदिति, त्रिलोपे च समासगेत्यत्र चकारसमुच्चितमालावदित्यर्थः। सौन्दर्यस्येति। हर्षोद्गम उद्गतो हर्षः। कार्मणकर्म मूलकर्म, कान्तिजनकत्वात्। नर्मरहसां रहस्यनर्मणाम्, राजदन्तादिसमासात् पूर्वनिपातः। वक्रगिरां जनिका विद्या। प्रावीण्यान्तस्य साक्षात्कारो यस्यां तादृशी। अत्रांशे रूपकं नास्ति। साक्षात्कारकारणे तस्यां कार्यरूपणं वा। तदा च साक्षात्परम्पराभ्यां साक्षात्कारानुव्यवसायजनक-त्वमुभयसाधारणो धर्मउपमानोपमेयभावघटकः। अत्र च सौन्दर्यस्येत्यत्र जलस्याऽऽर्थत्वाह एकदेशविवर्त्ति। सर्वमन्यत् समस्तवस्तुविषयं शुद्धम्।

### सुधासागरः

अथ साङ्गस्यैव वैचित्र्यान्तरमाह—मालेति।

अत्र पूर्वपदेनोपमानुकर्षणम् । अत्रेदं बोध्यम्—मालोपमा वृत्तौ लक्षिता, कारिकायान्तु सा दृष्टान्तीकृतेति वृत्तिकृत्कारिकाकृतोरैक्यं स्वयमेव श्रीवाग्देतावतारैः सूचितमिति । मालोपमायामित्यादि । यथैकत्र बहूपमानयोगे मालोपमा तथैकत्रानेकधर्मारोपे मालारूपकमित्यर्थः ।

कश्चिद् विरही प्रेयसीं परामृशति । सौन्दर्यस्य तरङ्गिणी उत्तरोत्तरविच्छिन्नलावण्यस्य नदीत्यर्थः, अपरिमितसौन्दर्यपूरितेति यावत् । तरुणिमोत्कर्षस्य तारुण्यातिशयस्य हर्षोद्गमः समुचितस्थानलाभेनानन्दाविर्भावः । कार्मणं वशीकरणमन्त्रः शाणोल्लेखनमिति केचित्, तस्य कर्म सम्यक्प्रयोगः । कान्तेरवयवशोभायाः । कार्मणकर्म भाषायां 'टोना' इति प्रसिद्धम् । अयं भावः कान्तिः सर्वान् वशीकरोति अनया तु प्रत्युत कान्तिर्वशीकृतेति । नर्मरहसां शृङ्गारातिशयजन्यान्तर्गतभावविशेषाणामुल्लासनायाः वासभूमिः वक्रगिरां व्यञ्जकवाचां विद्या अलङ्कारशास्त्ररूपा, विधेर्ब्रह्मणोऽनवधिप्रावीण्यस्यापरिमितकौशलस्य साक्षात्क्रिया निर्देशनम्, पञ्चशिलीमुखस्य कामस्य बाणाः, तरुणानां हर्षण-रोचन मोहन-शोषण-मारण-जनकत्वेन स्मरशरसमष्टिरूपेत्यर्थः । ललनाचूडामणिः स्त्रीणां शिरोमणिः, सा प्रिया मदनुभूता प्रेयसीत्यर्थः । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्तं प्राक् ।

अत्रैकस्यां प्रियायां तरङ्गिणीत्वादयो बहव आरोप्या इति मालारूपकम् ।

(सू० १४५) नियतारोपणोपायः स्यादारोपः परस्य यः।
तत् परंपरितं श्लिष्टे वाचके भेदभाजि वा ॥ ९५ ॥

यथा

विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर।
सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ ४२५ ॥

अत्र मानसमेव मानसम् कमलायाः संकोच एव कमलानामसंकोचः, दुर्गाणाममार्गणमेव दुर्गायाः मार्गणम् समितां स्वीकार एव समिधां स्वीकारः सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः, एवमारोपणनिमित्तो हंसादेरारोपः।

यद्यपि शब्दार्थालंकारोऽयमित्युक्तम् वक्ष्यते च तथापि प्रसिद्ध्यनुरोधादत्रोक्तः, एकदेशविवर्ति हीदमन्यैरभिधीयते।

---

सङ्केतः

नियतेति। नियतं ध्रुवं तडागादेः आरोपणं उपायः यस्य स तथा। यद्वा—नियतस्य आरोपणं उपायः यस्य तथा सद परस्येति। हंसादेः आरोपः इत्यर्थः।

विद्वदिति। सती गौरी, तत्पिता दक्षः प्रजापतिः। विजयस्य अर्जुनस्य प्राग्भावे अग्रजत्वे, भीमसेनः सन् भीमः, न तु भीम इव भीमः। उपमात्वप्रसङ्गात्। वैरिञ्चं ब्राह्मम्। अत्र मानसाद्याः वाचकाः शिलष्टाः। एवमारोपणेति। एवं आरोपणं निमित्तं यस्य आरोपस्येति। पूर्वं मानसादीनां मानसत्वादिकं आरोप्यते, ततश्च हंसाद्यारोपः इति परम्परितशब्दार्थः।

यद्यपीति। अयं भावः—मानसादीनां अन्वयव्यतिरेकाभ्यां अपरावृत्तिसहत्वेन, हंसादीनां तत्सहत्वेन च उभयालङ्कारः परम्परितरूपकमिति। उक्तम्—पूर्वं शब्दश्लेष-पुनरुक्ताभासयोः। वक्ष्यते सङ्करालङ्कारे। अन्यैः

उद्भटाद्यैः । परम्परितमेव हि तैः एकदेशविवर्तिनाम्ना ऊचे । तथा—'त्वमेव हंसः' इत्याद्यारोपणपूर्वकः 'मानसमेव मानसः' इत्याद्यारोपः इत्यन्ये ।

### बालचित्तानुरञ्जनी

तृतीयस्य लक्षणमाह नियतेति । नियतं व्यवस्थितमारोपणमुपायो यस्यारोपस्य एवंविधः परस्य उत्तरस्य आरोपः तत्परम्परितम् । तद् द्विविधम् वाचके श्लिष्टे, वाचके भेदभाजि च । तत्राद्यमुदाहरति विद्वन्मानसहंसेति । प्राग्भावः पूर्वभावः । अत्र मानसमेव मानसं, चित्तमेव सरोविशेषः इत्यारोपो हंसारोपे निमित्तम् । एवमुत्तरत्रापि । वैरिणां कमलायाः लक्ष्म्याः सङ्कोच एव पद्मानां असङ्कोचः । तत्र सूर्यः । दुर्गाणां नगराणां अमार्गणं सिद्धत्वमेव [?] दुर्गायाः देव्याः अन्वेषणं तत्र महेश । समितां युद्धानां स्वीकार एव समिधामिन्धनानां स्वीकारः । तत्र वह्ने । सत्ये वचने प्रीतिरेव सत्यां गौर्यां अप्रतीतिः तद्विधाने दक्षप्रजापते । विजयस्य युद्धोत्कर्षस्य प्राग्भावः प्राथमिकत्वमेव विजयात् अर्जुनात् पूर्वजत्वं तादृशम् ।

ननूभयालङ्कारोऽयं श्लिष्टपरम्परितं नाम कथमयर्थालङ्कारेषु गण्यत इत्यत आह यद्यपीति । मानसशब्दस्य पर्याये निक्षिप्ते न भवत्येव रूपकप्रतीतिरिति शब्दालङ्कारता । हंसशब्दस्य पर्याये क्षिप्ते भवति रूपकमित्यर्थालङ्कारता । अतः शब्दालङ्काररूपमिदं रूपकं स्यान्न त्वर्थालङ्कार इत्यत्र कथनमुचितं न भवति यद्यपि तथापि प्रसिद्ध्यनुरोधादत्रोक्तमिति भावः । अथ न केनचिदेतत् परम्परितसंज्ञमुक्तमित्यत आह एकदेशेति । अन्यैरुद्भटादिभिः एकदेशविवर्तीत्युच्यते ।

### काव्यादर्शः

तदेवं चतुर्धा रूपकमुक्त्वा परंपरितं श्लिष्टाश्लिष्टनिबन्धनत्वेन द्विभेदं सत् प्रत्येकं मालाकेवलरूपत्वाच्चतुर्विधमाह—नियतेति । नियतं निश्चितं सरोवरादेरारोपणमुपायो यस्य स तथा, परस्य हंसादेरारोपः । आदौ मानसस्य मानसत्वमारोप्यते, ततो हंसाद्यारोप इति परंपरितशब्दार्थः । भेदभाजीति अश्लिष्टं इत्यर्थः ।

विद्वन्मानसे' ति । 'दक्षः' प्रजापतिः । विजयस्य प्राग्भावे पूर्वभावे भीमसेनः सन् भीमः । 'वैरञ्च'मिति ब्राह्मं वर्षशतं यावत् । अत्र मानस-कमला संकोच-दुर्गा-मार्गण-समित्-स्वीकार-सत्यप्रीति-विजय शब्दाः श्लिष्टाः, तदारोपनिमित्तकश्च हंसादेरारोप इत्याह—एवमारोपणेति । एवमारोपणं निमित्तं यस्यारोपस्य ।

### विवेकः

नियतेति—उपायो हेतुः, परस्याप्रकृतस्य, परम्परयेदं जातमिति परम्परितंश्लिष्टशब्दनिबन्धनम् ।

विद्वदित्यादि—नीललोहितः परमेश्वरः, दक्षः प्रजापतिः, भीमो भीमसेन विरिञ्चेरिदं वैरिञ्चम्, क्रियाः करिष्यसि । अत्र मानसमेव मानसमित्याद्यारोपे रूपकत्ववे हंस इत्याद्यारोप इति श्लिष्टशब्दमालापरम्परितम् । एकदेशविवर्ति हीत्यादि—यदाहुः (का. अ. सा. स. १/१३)—समस्तवस्तुविषयं मालारूपकमिष्यते । यच्चैकदेशवृत्ति स्यात् पररूपेण रूपणात् । अस्यार्थः—समुच्चयेनास्तानि निक्षिप्तानि वस्तूनि विषयोऽस्येति मालारूपकं समस्तवस्तुविषयं, यच्च परेणार्थान्तरेणारोपो रूपणमर्थात् प्रकृतस्य तेन निमित्तेन यद्रूपणं तस्मादेकदाऽन्यदा

ईशोऽर्थस्तस्य विशेषेण प्रकृतार्थारोपेण वर्तनादेकदेशविवर्ति परम्परितरूपकमिति । आलानमित्यादि—'जयलक्षणस्य करिण' इति पाठान्तरम् । अत्र यदा जये कुञ्जरत्वमारोप्यते तदैव तद्भुजस्यालानता घटते । एवं विपदादौ । वारिधित्वारोप एव सेतुत्वाद्यारोप्यते निमित्तम् । यद्यपीति । श्लेषमूलमिदं रूपकमिति शब्दार्थयोर्भावाभावानुविधायितया पुनरुक्तवदाभासवदस्योभयालङ्कारात् । उक्तमिति—'रूपकादिरलङ्कार' इत्यादिना षष्ठे, वक्ष्यते चेति सङ्करप्रस्तावे ।

## दीपिका

नियतस्य मुख्यस्यारोपणं वस्त्वतरतादात्म्यप्रतीतिस्तस्योपायः कारणं यः परस्यामुख्यस्यारोपस्तत् परम्परा कार्यकारणरूपा जाता अस्मिन्नति परम्परितमिति सामान्यत उक्तस्य विभागः । श्लिष्टे एकरूपे भिन्नरूपे वा । वाचके शब्दे न तु वाचकत्वाश्रये पूर्वोक्तयुक्त्या व्यञ्जकत्वादिति कारिकाऽन्वयः । वरवीर महावीर । वैरिञ्चं वत्सरशतं मानुषसंख्यया संवत्सरपरार्धद्वयम् । उच्चैरिति साम्राज्यं विशिष्यते एवमारोपनिमित्त इति बहुव्रीहिणा सिद्धम् । शब्दार्थलङ्कार इति । मानसादिपदप्ररिवृत्तौ परिवृत्तेः हंसादिपदपरिवृत्तावपि चापरिवृत्तेरित्यर्थः । उक्तमन्यैरस्माभिरेव वा पुनरुक्तवदाभासवदयुक्ताधारणयुक्तिविषयीकृतत्वात् । वक्ष्यते चास्माभिरेव ग्रन्थान्तसमीप इत्यर्थः । प्रसिद्ध्यनुसारात् पूर्वाचार्यनिबन्धनानुरोधादित्यर्थः ।

ननु तैरपि किमर्थमुभयालङ्कारोऽयमर्थालङ्कारमध्ये लक्षित इत्याह—एकदेशविवर्तीति । तथा च सति मनःप्रभृतीनां सरस्त्वादिरूपणमार्थमेव न शब्दामित्युभयालङ्कारत्वाभावाद्युक्तमेवार्थालङ्कारमध्ये लक्षणमिति भावः ।

## दर्पणः

नन्वत्र रूपणानां परस्परापेक्षितया कथं न परम्परितरूपकं । तत्र विरुद्धन्मानसहंसे [विद्वन्मानसहंसे] त्यादौ तन्त्रेण [शब्देन] भेदेन वा रूपताद्वयस्य शाब्दत्वं, इह तु लतयेति चेत् तथासति समस्तवस्तुविषय परम्परित भेदस्य त्वरूपादत्वात् अवान्तरवैधर्म्य मात्रेण च भेदांगीकारे परम्परितविशेषस्येव उपपतेः । अत्रोच्यते-परम्परिते तु विद्वन्मानसहंसेत्यादौ चिन्तादीनां सरस्त्वादिरूपणं बिना राजादेर्हं सत्वादिरूपणमसमञ्जसं [स्यात्] सर्वथा सादृश्याभावात् इह तु रणस्यान्तः पुरेण तत्काले मुखसञ्जावतया समस्तवस्तुविषये च भावादीनामस्थिप्रभूतिर्द्धारस्यादिना[?] सादृश्यं स्फुटमिति स्वत एव रूपणस्य संभवादिति परस्परं भेदः ।

साङ्गमिति । अङ्ग्युक्तस्याङ्गिनो रूपणात् । प्रश्नयति प्रश्नविषयीकरोति, कार्मणं मन्त्रौषधादिभिर्वशीकारः, नर्मरहसां क्रीडारहस्यानां, विद्या शिक्षाशाखं[स्त्रं]

नियतं मुख्यम् । नियतस्य मुख्यस्य आरोपणे वस्त्वन्तरतादात्म्यरोपणे, उपायः कारणम्, परस्यामुख्यस्यारोपः तत्परम्परितम्, तच्च श्लिष्टे एकरूपे भेदभाजि भिन्नरूपे वा वाचकशब्दे न तु भिधायकेः[?] पूर्वोक्तयुक्तया व्यञ्जकत्वात् । एवञ्च विधाय परम्परितं रूपकमिति कारिकार्थः । वैरिञ्चि धातृसंबन्धि एवमारोपो निमित्तं यस्येति विग्रहः ।

शब्दार्थालङ्कारा इति । मानसादिपदानां परिवृत्यसहत्वात् हंसादिपदानाञ्च परिवृत्तिसहत्वात् । अत्रालङ्कारमध्ये एकदेशवर्तीति भावसादेः [मानसादेः] सरोरूपाद्यर्थस्यार्थत्वात्, अन्यैश्च प्राक्तनैः युज्यते निर्वहति ।

सद्वंशो महाकुलत्वात् उत्कृष्टवेणुश्च, स्थितं स्थितिः, वैचित्र्ये द्युतः ? पूर्वमधिकेति शेषः ।

## साहित्यचूडामणिः

परम्परितमाह—नियतेति । नियतं व्यवस्थितम् आरोपणमुपायो यस्य स च परस्योत्तरस्यारोपः । अन्यस्येत्यन्येषाम् । एषामधोमुखं पारम्पर्यम् अन्योन्यालङ्कारसङ्कारादुपमासन्देहविच्छेदो नियतत्वम् । यस्य श्लेषं प्रत्यनौल्बण्येऽपि भेदं प्रत्यौल्बण्यं, तत्र व्यस्तपदारोपः समस्तपदारोपस्य निबन्धनमित्यङ्गीकारे परम्परितसंज्ञोल्लङ्घनप्रसङ्गः । आरोपान्तरसापेक्ष आरोपः परम्परितमिति तात्पर्यम् । तस्य च द्वैविध्यमस्ति वाचकस्य श्लेषेण इतरथा स्थितिश्चेत्याह—श्लिष्ट इति ।

विद्वदिति । अत्र मानसमेव मानसं चित्रमेव सरोविशेष इत्यारोपो हंसारोपे निमित्तम् । एवमुत्तरत्र लक्ष्म्याः सङ्कोच एव पद्मानामसंकोचः । दुर्गाणां नगरविशेषाणाममार्गणं सिद्धत्वमेव दुर्गाया देव्या अन्वेषणम् । समितां युद्धानां स्वीकार एव समिधामिन्धनानां स्वीकारः । सत्ये ऋते प्रीतिरेव सत्यां गौर्यामप्रतीतिः । विजयस्य साम्मुख्योत्कृष्टस्य प्राथमिकत्वमेवार्जुनात् पूर्वजत्वम् ।

यद्यपीति मानसादिशब्दपरिवृत्तावर्थालङ्कारत्वभङ्गादयमुभयालङ्कारो भवितुमर्हतीत्युक्तम् । वक्ष्यते उल्लासपर्यन्ते । तथापि चिरन्तनालङ्कारिकमर्यादयार्थालङ्कारेषु गण्यत इति । अथ न केनचिदेतत् परम्परितसंज्ञयोक्तमित्यत्राह—एकदेशविवर्तीति । अन्यैरुद्भटादिभिः एकदेशविवर्ति ह्येतदभिधीयते, यद्वा एकदेशविवर्ति स्यात् 'पररूपेण रूपणाद्' इत्युक्तत्वात् । अस्माभिस्तु परम्परितमित्युच्यते ।

## सम्प्रदायप्रकाशिनी

नियतारोपणेति । परस्यारोप्यमाणान्तरस्यारोपो यद्यारोपणरूपनियतोपायस्तदा परम्परितम्, एकस्यारोपस्य नियमेनारोपान्तरहेतुकत्वे सति परम्परायातत्वात् ततश्च श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विरूपम् ।

विद्वन्मानसहंसेति । अत्र हि विदुषां मानसे त्वं हंस इत्यारोपणं मानसमेव मानसमिति नियतारोपणहेतुकतया परम्परायामाति श्लिष्टशब्दपरम्परितम् ।

तदिदं विशदीकरोति—अत्र मानसमेवेत्यादिना । ननु शाब्दः श्लेषलक्षणः, आर्थश्चारोपरूपो विच्छित्तिविशेषः सम्भूयेह शोभां जनयतीत्युभयालङ्कारोऽयमुक्तो वक्ष्यते च सङ्करप्रस्तावे ।

कथमर्थालङ्कारतया कथ्यत इत्यत आह—यद्यपि शब्दार्थेत्यादि प्रसिद्धीति । अर्थालङ्कारतया येयं प्रसिद्धिः प्राचां, तदनुरोधाय केवलमर्थालङ्कारमध्ये कथनम् । वस्तुतस्तुभयालङ्कार एवेति भावः । उभयालङ्कारलिङ्गत्वेनाचार्यान्तराभ्युपगमं दर्शयति—एकदेशविवर्तीत्यादि । एकदेशेत्यनेन श्लिष्टांशे रूपकत्वाभावस्तेषां मत इत्युद्घाटितम् ।

## मधुमती

निरङ्गस्यैव भेदान्तरमाह—नियतेति । तथाच रूपकहेतुकं रूपकं परम्परितमित्यर्थः । श्लिष्टे वाचक इति । अनेन शब्दश्लेषवत्त्वमभिप्रैति । तच्च—श्लिष्टयोः समानाकारतया, समानाकारयोः श्लिष्टता वा । एतच्च उदाहरणे

एव स्फुटम् । भेदभाजि अश्लिष्टे । अन्यथा श्लेषेऽपि भेदसत्त्वात् भेदो न स्यात् । इयांस्तु विशेषः—श्लिष्टवाचके एकपदादेव उभयोपस्थितिः, अश्लिष्टे तु भिन्नपदादिति ।

विद्वन्मानसेति । नीललोहितः हरः । दक्षः प्रजापतिरपि । प्राग्भावः प्रागुत्पत्तिः । अत्र श्लिष्टपरम्परितत्वं दर्शयति—अत्र मानसमेवेत्यादि ।

ननु श्लिष्टपरम्परितस्य उभयालङ्कारतया, पुनरुक्तवदाभासवत् शब्दालङ्कारप्रस्ताव एवाभिधातुमुचितम्, न तु अर्थालङ्कारप्रस्तावे इति शङ्कते—यद्यपीति । तदुक्तं—'इह दोषगुणालङ्काराणाम्' इत्यादिना नवमोल्लासे । वक्ष्यते चात्रैव सङ्करप्रस्तावे इत्यर्थः । तथापीति । तथाच—द्वयोरुभयालङ्कारत्वेऽपि पुनरुक्तवदाभासस्य शब्दालङ्कारतया अस्य च अर्थालङ्कारतया प्रसिद्धिरिति तथैवोक्तमित्यर्थः । इह—येषु शब्दान्वयव्यतिरेकानुविधानं आवश्यकम्, तत्र शब्दालङ्कारत्वप्रसिद्धिः, 'तनुवपु'रित्यादौ तस्यावश्यकत्वात् । तदतिरिक्ते तु अर्थालङ्कारत्वप्रसिद्धिः इति द्रष्टव्यम् ।

### विस्तारिका

परम्परितरूपकमाह—'नयतेत्यादि । नियते वर्णनीयत्वेनावश्यके प्रकृते य आरोपोऽन्यतादात्म्यस्याहार्यप्रतीतिस्तस्योपाय उपपादकः । परस्याप्रकृतस्यारोपः, अर्थादप्रकृतविषयः । परम्परया विद्यतेऽत्रेति । व्युत्पत्त्या परम्परितमिति ठप्रत्ययः ।

तद्भेदानाह—श्लिष्ट इत्यादि । श्लिष्टे समानानुपूर्वीकत्वेनागृहीतभेदे तन्त्रेणेच्चारिते शब्दद्वये वाचके अभिधया बोधकेऽर्थादप्रकृतारोपस्य विषयविषयिणोर्वाच्यत्वेनारोपस्य वाच्यता । यथास्य वाचकत्वं तथा वक्ष्यामः । भेदभाजि भिन्नरूपे ।

विद्वदित्यादि । विद् ज्ञानं विद्यते येषां ते विद्वान्सः पण्डिताः, हंसः पक्षिभेदः । दीप्तद्युतिः सूर्यः । नीलेन कण्ठेन लोहितः प्रादुर्भावितः ख्यापितो यः, नीललोहितो महादेवः । स्वीकारोऽनुपेक्षणम् । वैश्वानरो वह्निः । दक्षः क्षिप्रकारी प्रजापतिभेदश्च । विजयोऽर्जुनाख्यः पाण्डवः । परपराभवः प्राग्भावः, प्रथमत एवोत्पत्तिः न तु पराभवानन्तरम् । अग्रजत्वं च । भीमो भीषणो भीमसेनश्च । सकलराजमण्डलशासकत्वं साम्राज्यम् । विजय इति । वरो जयश्रिया, अत एव विजयस्य प्राग्भवनम् । वैरिञ्चं ब्राह्म वत्सरशतं संवत्सरपरार्द्धद्वयं क्रिया इत्याशीः । उच्चैरिति क्रियाविशेषणम्, सर्वलोकप्रशस्तमित्यर्थः ।

अत्रेत्यादि । मानसं मनः, मानसं सरः । दुर्गाणामलङ्घ्योग्यानाम् । दुर्गायाः पार्वत्याः समितां युद्धानाम्, समिधामिन्धनानाम् । सत्येऽमृषाभाषणे, सत्यां दक्षकन्यायाम् । एवमारोपो मनःप्रभृतीनां सरोवरादितादात्म्याख्यः । स एव निमित्तं यस्य । हंसादेरित्यादि । प्रकृत अन्विते राज्ञीति शेषः ।

यद्यपीत्यादि । मानसादिशब्दानां परिवर्तनासहत्वेन हंसादिशब्दानां च तत्क्षमतया उभयालङ्कारतोक्तं प्राचीनैः । वक्ष्यते अस्माभिर्ग्रन्थोपान्ते । एवं च पुनरुक्तवदाभासः परम्परितरूपकं चोभयोर्भावाभावानुविधायितया उभयालङ्कारावित्यन्तेन युक्तः । पुनरुक्तवदाभासस्तु शब्दालङ्कारमध्ये प्रथमोपस्थितत्वेन लक्ष्यतामित्यत आह—प्रसिद्धीत्यादि । प्राचीनालङ्कारिकव्यवहारादित्यर्थः । इहार्थालङ्कारप्रकरणे ।

केचित् त्वर्थालङ्कारत्वात् तन्मध्यपातित्यमाहुः, तदाह—एकदेशेत्यादि। मनः प्रभृतौ सरोवरत्वाद्यारोपस्यार्थत्वेनार्थालङ्कारत्वस्यौचित्यात्। राजरूपप्रकरणनियन्त्रितानां मानसादिशब्दानां चित्तादावेवाभिधायाः प्रसव इति भावः।

अत्र केचित् 'नृपतिवर्णनप्रकरणनियन्त्रितैर्मानसादिपदैरभिधया मनःप्रभृतीनां प्रात्यायनम्, सरःप्रभृतीनां पुनर्व्यञ्जनयैव। ततश्च लक्षणस्थवाचकपदस्य बोधकत्वमर्थः' इत्याहुः। तन्मतानुसारिणोऽन्येऽप्येवमुदाहरन्ति, तदसत्, प्रकरणवच्छब्दान्तरसान्निध्यस्यापि तात्पर्यग्राहकत्वात्, हंसादिपदान्तरसाचिव्येन सर आदेरपि वाच्यतायामविरोधात्। ततश्च वाच्ययोरर्थयोरभेदात् संसर्गोऽपि वाच्य इत्यभिसन्धाय ग्रन्थकृता लक्षणे वाचकपदमुपात्तमिति नेयम्।

### सारबोधिनी

नियतेति। नियते वर्णनीयत्वेन प्रकृते य आरोपः। अन्यत् तादात्म्यस्याहार्यप्रत्ययः। तस्योपाय उपपादकः। परस्याप्रकृतस्यारोपः। परम्परा निरूप्यते। परम्परितम् इतच्प्रत्ययः। वाचक इति। वाचके बोधके, पदस्येत्यनुषज्यते। अभिधायाः नियन्त्रणेन। सरस्यभिधायकमेव मानसपदम्। न त्वेकत्राभिधानियन्त्रणात् व्यञ्जकमिति। भेदभाजि भिन्ने इत्यर्थः। हंसः पक्षिभेदः। दीप्तद्युतिः सूर्यः। नीललोहितः शिवः। स्वीकारः अनुपलक्षणम्। वैश्वानरो वह्निः। दक्षः क्षिप्रकारप्रजापतिभेदः। विजयोऽर्जुनः पाण्डवभेदश्च। परम्पराभावश्च प्राग्भावः। प्रथमत एवोत्पत्तिः। न तु पराभवानन्तरं अग्रजत्वञ्च। भीमो भीषणो भीमसेनश्च। क्रिया इत्याख्यातापदम्। मानसं मनः मानसञ्च। दुर्गाणां अलङ्घ्नोपायानां दुर्गायाः पार्वत्याः समितां युद्धानां समिधामिन्धानानाञ्च। सत्ये अमृतभाषणे, सत्यां दक्षकन्यायाम्। एवमारोपो मनः प्रभृतीनां सरोवरतादात्म्यारोपः स एव निमित्तं यस्य हंसादेरारोपस्येत्यर्थः।

यद्यपीत्यादि। मानसादिशब्दानां परिवृत्त्यसहिष्णुत्वेन हंसादिपदानाञ्च तत्सहत्वेन च उभयालङ्कारतेत्यर्थः।

### काव्यप्रदीपः

**नियतारोपणोपायः स्यादारोपः परस्य यत्।**
**तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा॥ ८॥**

नियतस्य मुख्यस्यारोपो वस्त्वन्तरतादात्म्यप्रतीतिस्तस्योपायः कारणं यः परस्यामुख्यस्यारोपस्तत्परम्परितम्। रूपणानां कार्यकारणभावरूपा परम्परा संजातात्रेति योगाविति केचित्। वस्तुतस्तु नियतमारोपणमुपायो यत्र। आरोपणं विना यदारोपणं न संभवत्येवेति। यावत्। एवंभूतः परस्यान्यस्यारोपः स तथा। एवं चैकरूपणानन्तरं परम्परितम्। कार्यकारणभावरूपा परम्परा संजातात्रेति व्युत्पत्तेः। श्लिष्ट इत्यादि। तदेतद्द्विविधम्। उपायभूते रूपके आरोप्यारोपविषयोर्वाचकस्य श्लिष्टत्वाद्भिन्नरूपत्वाच्चेत्यर्थः। तत्राद्यं यथा—

**'विद्वन्मानसहंसवैरिकमलासंकोचदीप्तद्युते**
**दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर।**

सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रिया ॥'

अत्र विदुषां मानसं मानसं सरोविशेष इत्यारोपहेतुकं राज्ञो हंसत्वारोपणम् । तत्र चारोपविषयारोपणीय-योर्हृदयसरोविशेषयोः श्लेषवता मानसशब्दे नैवाभिधानम् । एवमग्रेऽपि । तत्र वैरिकमलायाः संकोच एव कमला-नामसंकोचः । दुर्गाणाममार्गणमेव दुर्गाया मार्गणम् । समितां स्वीकार एव समिधां स्वीकारः । सत्ये प्रीतिरेव सत्यामप्रीतिः । विजयः परपराभव एव विजयोऽर्जुनः । एवमारोपहेतुकं सूर्याद्यारोपणमिति । ननु श्लेषस्य शब्दप-रिवृत्त्यसहतया शब्दालंकारत्वमित्युक्तं वक्ष्यते च । तथा च श्लेषपरम्परितमुभयालंकारो युज्यत इति तदवसर एव वक्तुमौचित्यात्किमित्यर्थालंकारमध्ये पठित इति चेत्, सत्यमेतत् । तथापि श्लेषापवादकं रूपकमित्यलंकारसर्व-स्वकारादिप्रसिद्ध्यनुरोधेनोक्तः । तथा प्रसिद्धौ किं बीजमिति चेत्, मानसत्वादीनामार्थत्वम् । इदं हि तैरेकदेशवि-वर्तीत्युच्यते ।

### काव्यप्रकाशखण्डनम्

नियतारोपणोपायः स्यादारोपः परस्य यः ।
तत्परंपरितं श्लिष्टे वाचके भेदभाजि वा ॥ (का. ९५)

यथा—

विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर ।

सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वास(वत्स) रशतं वैरिञ्चमुच्चैः क्रियाः ॥

विदुषां पण्डितानां मानसमन्तःकरणमेव मानसं सरोविशेषस्तत्र हंस ! वैरिणां शत्रूणां कमलाया लक्ष्म्याः संकोच एव कमलानां पद्मानामसंकोचो विकासस्तत्र दीप्तद्युते सूर्य !, दुर्गाणां कोट्टलक्षणानां अमार्गणं अनन्वेषणमेव दुर्गाया भवान्या मानवत्या मार्गणं अन्वेषणं तत्र नीललोहित शिवस्वरूप !, समितां संग्रामाणां स्वीकारोऽङ्गीकार एव समिधां हवनीयानां स्वीकारस्तत्र वैश्वानर अग्ने ! सत्ये यथार्थे प्रीतिः प्रेमैव सत्यां सतीनामिकायां कन्यायां या अप्रीतिर्द्वेषस्तस्या विधानं आचरणं तत्र दक्ष दक्षनामकप्रजापते !, विजयः परपराभव एव विजयोऽर्जुनः तस्मात्प्रा-ग्भावः प्रागुत्पत्तिस्तत्र भीम भीमसेन ! प्रभो समर्थ ! वरवीर उत्कृष्टवीर ! वैरिञ्चं ब्रह्मसम्बन्धि वत्सरशतं व्याप्य साम्राज्यं उच्चैरत्यर्थं क्रियाः विदध्यादित्यर्थः । मानसमेव मानसं सरः, कमलायाः लक्ष्म्याः संकोच एव कमलानाम-संकोचः, दुर्गाणाममार्गणं [प. ४९.१] एव दुर्गाणां मार्गणम्, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजय एव पराभव एव विजयोऽर्जुनः—एवमारोपणनिमित्तो हंसादेरारोपः । यद्यपि शब्दालङ्कारोऽयं तथापि प्रसिद्धिवशादत्रोक्तः ।

### आदर्शः

परम्परितरूपकमाह—नियतेति। 'नियतं' प्रकृतं प्रकृतरूपकनिर्वाहकं यद् अप्रकृतरूपकं श्लिष्टे रूप्यरूपकोभयवाचके पृथग् उभयवाचके वा शब्दे दृश्यते तद् द्विविधं परम्परितरूपकमित्यर्थः।

तत्र श्लिष्टशब्दे उदाहरति—विद्वन्मानसेति। 'प्रभो' इत्यन्तं सर्व सम्बोधनम्। हे तादृश हे वरवीर, उच्चैः साम्राज्यं वैरिञ्चं ब्राह्मं वत्सरशतं क्रियाः कुर्या इत्यर्थः। दीप्तद्युतिः सूर्यः। सम्बोधनगणार्थस्तु वृत्तावेवोक्तः। अत्र तात्पर्यवशात् समासनिबद्धयोरपि विद्वद्वैरिपदार्थयोस्त्यागेनैव मानससरसः, कमलानामसङ्कोचस्य च श्लिष्टपदादुपस्थितौ तयो रूपणम्। दुर्गाणाममार्गणमिति दुर्गं विनैव योद्धत्वात्। सत्यामप्रीतिरिति दक्षेण तत्पित्रा तत्पतेर्महेशस्य निन्दनात्। विजयोऽर्जुन इति विजयापरनामकत्वात्तस्य। तथा च परपराभवस्य प्राग्भावः कारणतैवार्जुनात् प्राग्भावः पूर्वजन्म तत्र भीमसेन इत्यर्थः; एवमादीति। एवमाद्यारोपणं निमित्तमुपायो यस्य। प्रकृते हंसादेरारोपपस्तादृश इत्यर्थः, मनसि हंसस्य, कमलायाः सङ्कोचे सूर्यस्य, दुर्गाणाममार्गणे नीललोहितस्य, समितां स्वीकारे वैश्वानरस्य, सत्ये प्रीतौ दक्षप्रजापतेः, परपराभवजनने भीमसेनस्य च बाधेनाप्रकृतमानससरोवराद्यारोपणस्य तदुपायत्वात्। यद्यपि दुर्गस्यामार्गणे नीललोहितस्य, सत्ये प्रीतौ दक्षप्रजापतेः, परपराभवे भीमसेनस्य च न बाधस्तथापि तत्र तत्र तेषां प्रसिद्धिबाधादेव तात्पर्यविषयप्रसिद्धतद्बाधो बोध्यः।

अत्रोक्तम् इति, अर्थालङ्कारमध्ये उक्तम् इत्यर्थः। प्रसिद्धिं दर्शयति—एकदेशेति। एकदेशे प्रकृतहंसादिरूपकार्थांशे विवर्त्ति पर्याप्ततात्पर्यकमित्यर्थः, अत्र प्रकृतरूपणस्य तन्निर्वाह एव तात्पर्यात्।

### सुधासागरः

वैचित्र्यान्तरमाह—नियतेति।

नियतस्य मुख्यस्यारोपो वस्त्वन्तरतादात्म्यप्रतीतिस्तस्योपायः कारणं यः परस्यामुख्यस्यारोपस्ततपरम्परितम्, रूपणानां कार्यकारणभावरूपा परम्परा सञ्जाताऽत्रेति योगादिति केचित्। वस्तुतस्तु नियतमारोपणमुपायो यत्र। आरोपणं विना यदारोपणं न सम्भवत्येवेति यावत्। एवम्भूतः परस्यान्यस्य य आरोपः स तथा। एवञ्चैकरूपणहेतुकं रूपणान्तरं परम्परितम्, कार्यकारणभावरूपा परम्परा सञ्जाताऽत्रेति व्युत्पत्तेरिति काव्यप्रदीपकाराः प्राहुः। तत्र पूर्वोक्तपक्षे मुख्यस्यारोपो वस्त्वन्तरतादात्म्यप्रतीतिरितिप्रामादिकम्। न खलु नृपत्वादेर्मुख्यस्य हंसादावारोपः, किन्तु हंसत्वादेरेव मुख्ये नृपादावारोपः। न चारोपं विना तादात्म्यप्रतीतिरत्र सम्भवतीति। मैवम्। अग्रिमपद्यव्याख्याने जयस्य कुञ्जरत्वारोपे भुजस्यालानत्वारोपो युज्यत इति वृत्तिकृद्भिः कण्ठत एवोक्तत्वात्। तैरपि कथमुक्तमिति चेत्, तद्ग्रन्थव्याख्यावसरे वक्ष्यामः। प्रदीपग्रन्थे तु—एवञ्चेत्यादि निरर्थकम्, प्रागुक्तपक्षे दोषोद्भावनमिपि वृथेति सुधीभिर्ध्येयम्। वयन्तु ब्रूमः—नियते वर्णनीयत्वेनावश्यके प्रकृते य आरोपोऽन्यतादात्म्यस्या-हार्यारोपस्तस्योपाय उपपादकः परस्यारोपोऽर्थादप्रकृतविषयः, परम्परा सञ्जाताऽस्येति व्युत्पत्त्या परम्परितमित्युच्यते तारकादित्वादितच् प्रत्यय इति। श्लिष्ट इत्यादि। उपायभूते रूपके आरोप्यारोपविषययोर्वाचकस्य श्लिष्टत्वाद् भिन्नरूपत्वाच्चैतद् द्विविधमित्यर्थः। तत्राद्यं यथा—विद्वन्मानसेति।

हे वरवीर हे प्रभो ! वैरिञ्चं वत्सरशतं ब्राह्मं शरच्छतं व्याप्य उच्चैः साम्राज्यमतिशयितं चक्रवर्त्तित्वं क्रियाः त्वं कुर्या इत्याशीः । शेषं सम्बोधनविशेषणतया योज्यम् । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्तम् । अत्र मानसमेव मानसं सर इति विद्वन्मनसि सरोविशेषारोपहेतुकं राज्ञि हंसत्वारोपणम् । तत्र चारोपविषयारोपणीययोर्हृदयसरोवि-षययोः श्लेषवता मानसशब्देनैवाभिधानम् । एवमग्रेऽपि । तत्र वैरिकमलायाः सङ्कोच एव कमलानामसङ्कोचः, दुर्गाणाममार्गणमेव दुर्गायाः मार्गणम् । समितो स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रतीतिः विदयः परपराभव एव विजयोऽर्जुन इत्यारोपहेतुकं सूर्याद्यारोपणमिति द्रष्टव्यम् । दीप्तद्युतिः सूर्यः नीललोहितो रुद्रः । तदेतदुक्तमत्र मानसमेवेत्यादि वृत्तिकृद्भिः ।

ननु श्लिष्टपरम्परितस्योभयालङ्कारतया पुनरुक्तवदाभास इव शब्दालङ्कारप्रस्तावेऽभिधानमुचितं न त्व-र्थालङ्कारप्रस्तावे इति शङ्कते—यद्यपीति । उक्तम् इह दोषगुणालङ्काराणाम् इत्यादिना नवमोल्लासे, वक्ष्यते चात्रैव सङ्करप्रस्तावे इत्यर्थः । तस्याऽपीति । पूर्वाचार्यप्रसिद्ध्यनुरोधादत्रोक्त इत्यर्थः । अत एवाक्तं प्रदीपकारैः—श्लेषस्य शब्दपरिवृत्त्यसहतया शब्दालङ्कारत्वमित्युक्तं, वक्ष्यते च । तथा च श्लेषपरम्परितमुभयालङ्कारो युज्यते इति तदवसरे एव वक्तुमौचित्यात्किमित्यर्थालङ्कारमध्ये पठित इति चेत् । सत्यमेतत् । तथापि श्लेषापवादकं रूपक-मित्यलङ्कारसर्वस्वकारादि-प्रसिद्ध्यनुरोधेनोक्त इति । तथाप्रसिद्धौ किं बीजमिति चेत्, मानसत्वादीनामार्थत्वम् । इदं हि तैरेकदेशविवर्त्तीत्युच्यते ।

भेदभाजि यथा

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन् राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥ ४२६ ॥

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्य, आलानत्वाद्यारोपो युज्यते ।

---

**सङ्केतः**

भेदभाजीति । अश्लिष्टे वाचके इत्यर्थः । आलानमिति । अत्र लीलोपधानं श्रियः इति परम्परितमपि एकदेशविवर्ति । श्रियः स्त्रीत्वानुक्तेः । अत्र दृष्टान्तद्वये श्लिष्टाश्लिष्टशब्दमालया परम्परितरूपकम् ।

**बालचित्तानुरञ्जनी**

द्वितीयं प्रकारमुदाहरति भेदभाजीति । हे राजन् जय एव कुञ्जरः तस्य आलानं गजबन्धनस्थानम् । विपदेव वारिधिः तस्य दृषदां सेतुः करवाल एव चण्डमहाः सूर्यः तस्य पूर्वाद्रिः । श्रियः लीलोपधानम् । सङ्ग्राम एवामृत-सागरः तस्य प्रमथनमेव क्रीडाविधिः तस्मिन् मन्दरः । वीरवैरिवनितावैधव्यदः ते भुजः राजति । जय एव कुञ्जरः । ननु मानसशब्दवत् एकशब्दोऽत्रोभयार्थोऽस्तीति भेदभाक्तं लीलोपधानमित्यत्र उपधानपदे श्लिष्टो वाचकः इत्यनन्तरोक्तमेव रूपकमत्र न तु यदिदं प्रस्तुतश्रियो वनितात्वमपि निरूप्यत इत्यत्राह[?] अत्रेति ।

**काव्यादर्शः**

ननु, मानसशब्दपरिवृत्तौ पर्यायान्तरे सति नालंकार इति शब्दालंकारत्वं, अवरस्मिंस्तु परिवर्तितेऽपि सति न स हीयत इत्यर्थालंकारता । ततश्च शब्दालंकारः परंपरितरूपकं, न तु अर्थालंकार, इत्याशङ्क्याह—यद्यपीति ॥ उक्तमिति शब्दश्लेषे पुनरुक्तवदाभासे च । वक्ष्यत इति संकरालंकारे । एकदेशेति । परंपरितमेव उद्भटादिभि-रेकदेशवृत्तीत्युच्यते ।

'आलान'मिति । अत्रापि कुञ्जराद्यारोपनिमित्तः, आलानादेरारोपः । मानसशब्दवद् एक एव शब्दोऽत्र उभयार्थो नास्तीति भेदभाक्ता । श्रियस्तु वनितात्वं साक्षाद् अनुपात्तमपि रूप्यते ।

### दीपिका

युज्यत इति । निर्वहतीत्यर्थः ।

### साहित्यचूडामणिः

द्वितीयप्रकरणमाह—भेदभाजीति ।

आलानमिति । अत्र जयादेः कुञ्जरत्वाद्यारोपो भुजस्यालानत्वरूपणे निमित्तम् ।

अन्येषामन्यथा श्लिष्टाद् भेदमाह—भिन्नशब्देति ।

### सम्प्रदायप्रकाशिनी

आलानमिति । दृषदां सेतुः शिलासङ्क्रमः । सङ्ग्राम एवामृतसागरः ।

अश्लिष्टशब्दतां दर्शयति—अत्र जयादेरित्यादि । कुञ्जरत्वाद्यारोप इति निमित्तसप्तमी । युज्यत इति नियततदारोपणोपायत्वमालानत्वाद्यारोपस्य दर्शितम् । तदेतदुभयं मालात्मकम् ।

### मधुमती

आलानमिति । लीलोपधानं श्रियः रूपकमात्रम्, न तु परम्परितम् । रूपकहेतुकस्य रूपकस्याप्रतीतेः ।

### विस्तारिका

आलानमित्यादि । आलानं बन्धनस्तम्भः । दृढतरत्वाद् दृषदभिधानम् । करवालः खङ्गः । चण्डमहा रविः । सुखस्वापो लीलोपधानं शिरोनिधानपटः । संग्राम एवामृतसागरः, लोड्यत्वात् । प्रगाढं मथनं प्रमथनम्, तदेव क्रीडा, सुखनिवार्ह्यत्वात् । राजन् ! लोकरञ्जक ! वीरा अपलापिनो ये वैरिणः, तदन्येषामुपेक्षणीयत्वाद् वनिताभ्य इति वाच्यम् ।

अत्रेत्यादि । उपमानबोधकः शब्दो भिन्नः । आरोपे सतीत्यर्थः । युज्यते उपपद्यते ।

### सारबोधिनी

आलानमिति । आलानं गजबन्धनस्तम्भः करवालः खड्गः । चण्डमहाः रविः । सुखस्वापो लीला । उपधानं शिरोनिधानं तूलपटः ।

### काव्यप्रदीपः

द्वितीयं यथा—

'आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।

**सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो**
**राजन्राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥'**

अत्र जयादेर्भिन्नशब्दवाच्यकुञ्जरत्वा(द्या)रोपे सति भुजे आलानत्वाद्यारोपो युज्यते ।

### काव्यप्रकाशखण्डनम्

भेदभाजि यथा—

**आलानं जयकरिणः प्रतापतपनस्य पूर्वाद्रिः ।**
**सेतुर्विपत्तिजलधेर्धरणिभुजस्ते भुजो जयति ॥**

हे राजन् ! ते तव भुजो बाहुः जयतिं । कीदृशः ? जयः परपराभव एव करी हस्ती, तस्यालानं बन्धनस्तम्भः । विपद्वारिधेः विपत्तिसमुद्रस्य दृषदां पाषाणानां सेतुः । प्रतापसूर्यस्य पूर्वाद्रिरुदयगिरिः । कीदृशस्य ते ? धरणीं भुनक्तीति धरणीभुक् तस्य । अत्र जयादेर्भिन्नशब्दवाच्यस्य करित्वाद्यारोपे भुजस्यालानताद्यारोपो युज्यते । मालाऽपि पूर्ववद् बोध्या ।

### आदर्शः

आलानमिति । हे राजन्, हे वीर, वैरिवनितावैधव्यदस्ते भुजो राजति । भुजे रूपणान्याह—आलानमिति । आलानं बन्धनस्तम्भः, विपद्वारिधेस्तारको दृशदां सेतुः, चण्डमहाः सूर्यः, उपधानं शिरःस्थापनतूलराशिः । अत्रांशे शुद्धरूपकमेव न परम्परितम् । भिन्नशब्दवाच्यस्येति, रूप्यरूपकवाचकशब्दभेदादित्यर्थः । युज्यत इति, जयादौ कुञ्जराद्यारोपणं विना जयादेरालानादिसम्बन्धानुपपत्तेरित्यर्थः ।

### सुधासागरः

द्वितीयं यथा—आलानमिति । छन्दः प्रागुक्तमेव ।

हे राजन् ते भुजो राजति, किम्भूतः ? जय एव कुञ्जरो गजस्तस्यालानं बन्धनस्तम्भः । विपदेव वारिधिस्तस्य, दृषदां सेतुः शिलामयस्तरणमार्गः । करवालः खड्ग एव चण्डमहाः सूर्यस्तस्य पूर्वाद्रिरुदयाचलः, श्रीः सम्पत्तिरेव श्रीर्लक्ष्मीस्तस्याः लीलोपधानं सुखस्वापशिरोनिधानस्तूलपटः । सङ्ग्राम एवामृतयुक्तः सागरस्तस्य प्रथमनक्रीडायाः विधौ सम्पादने मन्दरो मन्थाचलः, वीरा अपलायिनो ये वैरिणस्तद्वनिताभ्यो वैधव्यं ददातीति तादृश इत्यर्थः ।

अत्र जयादेरित्यादि । अत्रेदमवधेयम्—जयादेः भुजस्येति च न कर्मणि षष्ठी, किन्तु सम्बन्धे । तथा च जयसम्बन्धिकुञ्जरत्वारोपोऽर्थाज्जयविषयकः, अन्यथा जयस्यारोप्यमाणत्वेन प्राधान्यापत्तावालानत्वस्य तत्रानन्वयः स्यात् । नन्वेवं जयादाविति भुजे इति च विषयसप्तम्येव कुतो नोक्तेति चेत् शृणु । सप्तमीनिर्देशे जयस्य कुञ्जरे सम्बन्धो न प्रतीयेत, न च तथेष्टमिति । प्रदीपकृता तु—'भुजे' इति भुजस्यारोपविषयत्वाभावभ्रमवारणायोक्तमिति बोध्यम् ।

अलौकिकमहालोकप्रकाशितजगत्त्रयः।

स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान्॥ ४२७॥

---

### सङ्केतः

इदानीं श्लिष्टाश्लिष्टशब्दं केवलत्वेन परम्परितरूपकं दृष्टान्तद्वयेनाह—अलौकिकेत्यादि। आलोकः ज्ञानं तेजश्च। वंशः वेणुः अन्वयश्च। अत्र वंशस्य वंशत्वारोपः राज्ञो रत्नत्वारोपणोपायः।

### बालचित्तानुरञ्जनी

श्लिष्टं मालारूपकमुदाहरति अलौकिकेति। हे देव अलौकिकश्चासौ महांश्चासावालोकश्च ज्ञानं तेन प्रकाशिते जगत्त्रयं येन। सद्वंशस्य मुक्तारत्नं भवान् कैर्नस्तूयते? सर्वैः स्तूयत इत्यर्थः। अत्र वंशोऽन्वय एव वेणुः तस्य मुक्तारत्नमिति श्लेषः। श्लिष्टस्य वेणुत्वारोपः वर्णनीयस्य मुक्तामणित्वारोपे निमित्तम्।

### काव्यादर्शः

परंपरितमपि श्लिष्टे वा वाचके शुद्धं ज्ञेयम्। तत्र श्लिष्टे शब्दे शुद्धं, यथा—'अलौकिके'ति। 'महांश्चासौ आलोको ज्ञानं च।' 'वंशमुक्तेति वंशोऽन्वयः स एव सद्वंशः शोभनो वेणुः' इति श्लिष्टो वाचकः। अत्र हि वंशलक्षणः 'परः' परस्य राज्ञो रत्नारोपणोपायः।

### विवेकः

मालारूपकं यथा—अलौकिकेत्यादि। महानालोक आत्मज्ञानमित्यर्थः। सद्वंशः—वंशोऽन्वयः, सुशोभनो वेणुश्च। तदिह सद्वंशमुक्तारत्नमित्यस्यारोपस्य श्लिष्टः शब्दो निमित्तं मुक्तारत्नस्य वेणुजत्वात्।

### दीपिका

सद्वंशो महाकुलमुत्कृष्टतृणध्वजश्च। मुक्तारत्नमिति। मुक्तारत्नमिव तज्जातिश्रेष्ठपरं यथा नारीरत्नमिति।

### साहित्यचूडामणिः

नन्वेतदुदाहरणाद्वयं मालावैचित्र्योत्तरमदायि, तत् किं मालात्वं चमत्कारकारीति शङ्कां भङ्क्तुमुदाहरणपुरस्सरमाह—अलौकिकेति। सद्वंशोऽन्वय एव वेणुः तस्य मुक्तारत्नमिति श्लेषः। कुलस्य वेणुत्वारोपो वर्णनीयस्य मुक्तामणित्वारोपे निमित्तम्।

### सम्प्रदायप्रकाशिनी

अथान्यथा दर्शयति—अलौकिकेत्यादि । अलौकिकः प्रकाशः प्रकृते राजन्युपचार्यमाणो रूपकसाधकः । वंश एव वंश इति श्लिष्टशब्दनिबन्धनत्वम् ।

### मधुमती

श्लिष्टरूपकं उपमारूपकं रशनारूपकं च ग्रन्थान्तरोक्तं इह कस्मान्नोक्तम्? इत्यत्र समाधिं वक्तुं उदाहरणानि तावदयं दर्शयति—अलौकिकेत्यादि । तत्र वंशपदस्य श्लिष्टत्वेन श्लिष्टरूपकत्वम् ।

### विस्तारिका

मालापरम्परितद्वयमाह—अलौकिकेत्यादि । अलौकिको लोकेऽन्यत्रा दृष्टः । तथाभूतस्य महस्य मदनपूजादेरुत्सवस्य आलोको दर्शनम् । स एव महत्त्वाश्रयो दीप्तिः । सद्वंशो महाकुलम्, तद्वदेवोत्कर्षाश्रयवेणुः । मुक्तारत्नं, श्रेष्ठमुक्तत्वारोपि श्रेष्ठमुक्तोत्पत्तेः स्थानम् । सा तु मुक्ता तु बहुमूल्या, तेन रत्नत्वाभिधानम् ।

अत्रैकत्र राजनि मुक्तात्वारोपे महादीप्तित्ववेणुत्वारोपौ निमित्ते इति माला ।

### सारबोधिनी

क्रमेणमालापरम्परितद्वयमाह अलौकिकेत्यादि । अलौकिकस्य यस्य उत्सवस्य आलोको दर्शनं स एव महत्त्वाश्रयो दीप्तिः । सद्वंशो महाकुलम् स एवोत्कर्षाश्रयो वेणुमुक्तारत्नं श्रेष्ठमुक्तारत्नमपि रत्नोत्पत्तेः स्थानं, सा मुक्ता तु बहुमूल्या तेन रत्नत्वाभिधानम् । अत्रैकत्र राजनि मुक्तात्वारोपे महादीप्तित्ववेणुत्वारोपौ निमित्ते इति माला ।

### काव्यप्रदीपः

इदमुदाहृतभेदद्वयं परम्परितमालारूपम् । अमालारूपमपि तद्द्रष्टव्यम् । तत्र श्लिष्टवाचके यथा—

**'अलौकिकमहालोकप्रकाशितजगत्त्रयः ।**

**स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ॥'**

अत्र वंशोऽन्ववाय एव वंशो वेणुरिति ।

### आदर्शः

श्लिष्टाश्लिष्टवाचकद्वये मालापरम्परितद्वयमाह—अलौकिकेति, निरवधीति च । प्रकृतरूपकोपायरूपकाणामनेकत्वे माला । 'विद्वन्मानसे'त्यादौ 'आलानमि'त्यादौ च प्रकृतरूपकाणामेवानेकत्वं तत्तदुपायरूपकाणि त्वेकैकान्येव । उपायता चात्र साक्षात् परम्पराभ्यां विवक्षिता, परम्परया चाग्रे 'निरवधी'त्यादौ दर्शयिष्यते । अलौकिकेति । हे देव, सद्वंशः सत्कुलमेव सद्वेणुस्तत्र मुक्तारत्नं भवान् कैर्न स्तूयते । अलौकिकेति सम्बोधनान्तमिदम्, सविसर्गपाठस्तु प्रामादिकः, मुक्तारत्ने लिङ्गभेदात्तदनन्वयेन परम्परितमालानुपपत्तेः । अलौकिकोऽन्यलो-

कासाधारणो यो महालोको महादृष्टिपातः स एव चालौकिकमहाज्योतिस्तेन प्रकाशितजगत्त्रय। अत्र जगत्पदं मुक्तामण्डितजगत्परम्, मुक्ताज्योतिषा तत्प्रकाशनात्। अत्र सत्कुले मुक्ताबाधाद् राज्ञि तद्रूपणं बाधितम्, कुले वेण्वारोप एकस्तदुपायः; दृष्टिपातः ज्योतिरारोपोऽन्यस्तदुपायः; ज्योतिर्विना मुक्तारोपणाचमत्कारित्वात्। वंशालोकपदे च श्लिष्टे वाचके।

### सुधासागरः

द्विविधममालारूपपरम्परितमुदाहरति—अलौकिकेति।

हे देव राजन्! अलौकिको लोकोत्तरो महालोकः उत्कृष्टदीप्तिस्तया (?तेन) प्रकाशितं जगत्त्रयं येन तादृशः। सद्वंशः उत्कृष्टवेणुरेव सद्वंशो महत् कुलं तत्र जातं मुक्तारत्नं मौक्तिकश्रेष्ठो भवान् कैर्न स्तूयते इत्यर्थः।

अत्रारोपविषयारोपणीययोर्वेणुकुलयोः श्लिष्टसद्वंशशब्देनाभिधानम्।

**निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम् ।**

**प्रथम इह भवान् स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥४२८॥**

इति च, अमालारूपकमपि परंपरितं द्रष्टव्यम् ॥

---

### सङ्केतः

निरवधीति । इह भवान् पूज्यः कूर्ममूर्तिः विष्णुः इति अतिशयोक्तिः । लोका एव वल्ली, तस्याः कन्दः । अत्र लोकानां वल्लीत्वारोपः कृष्णस्य कन्दत्वारोपणोपायः । वाचकश्चात्र न श्लिष्टः वल्लिकन्दः इति । पूर्वत्र तु श्लिष्टः सद्वंशः इति । एवं श्लिष्टाश्लिष्टशब्दं मालया द्विधा, केवलत्वेन द्विधा इति चतुर्धा परम्परितम् । साङ्गनिरङ्गयोः मालाकेवलत्वेन प्रत्येकं द्विभेदत्वे चतुर्भेदत्वम् । तदेवं अष्टधा रूपकम् । अन्येऽपि प्रत्येकं वाक्योक्तसमासोक्तादिभेदाः सन्ति । ते अन्यतो ज्ञेयाः ॥

### बालचित्तानुरञ्जनी

अश्लिष्टं मालारूपकमुदाहरति निरवधीति । अनिवर्तितः कौतुकप्रपञ्चो येन एवं विधं यस्य स्थितं स्थितिः निरवधि निराश्रयं च । इह प्रथमा कूर्ममूर्तिः । चतुर्दश लोका एव वल्लयस्तासां कन्दः स भवान् जयति । आदिकमठस्य कन्दत्वे लोकानां वल्लित्वं हेतुः । वाचकश्चात्र न श्लिष्टः ।

### काव्यादर्शः

अश्लिष्टे शब्दे शुद्धं, यथा—'निरवधी' ति । इह 'भवान्' इति पूज्यः । 'कूर्ममूर्तिः' इति । पदे 'भवानेव विष्णुः' इति अतिशयोक्तिः । 'चतुर्दशे' ति । 'लोका एव वल्ली, तस्याः कन्दः' । अत्र वल्लीलक्षणः पर आरोपः परस्य विष्णोः कन्दत्वारोपणोपायः, वाचकश्च न श्लिष्टोऽत्रेति अश्लिष्टे शुद्धम् । तथा श्लिष्टाश्लिष्टशब्दत्वेन द्विविधमंपि परंपरितं मालयापि स्यात्, ततश्च 'विद्वन्मानसे'ति 'आलानम्' इत्यादौ च दर्शितमित्याह—मालारूपकमपीति । न केवलं शुद्धं 'अलौकिके'त्युदाहरणद्वये दर्शितं यावन्मालारूपकमपि । एवं चतुर्धा परंपरितम् ।

### विवेकः

निरवधीत्यादि—अत्र भवान् कूर्ममूर्तिरित्युपमा चतुर्दशलोकवल्लिकन्द इति रूपकस्य हेतुः । भामहाभिप्रायेणैतदुपमारूपकाख्यमलङ्कारान्तरमेव, वामनमते तु संसृष्टिः । तथा च संसृष्टौ "तद्भेदावुपमारूपकोत्प्रेक्षावयवौ चे" ति तल्लक्षणम् (का, अ. सू. वृ.) ।

### दीपिका

निरवधि कालावच्छेदहीनं स्थितं स्थितिः । चतुर्दशश्लोक एव वल्लिरूर्ध्वनिःसृता दीर्घावस्थानात् ।

**साहित्यचूडामणिः**

निरवधीति । चतुर्दश लोका एव वल्लयो लताः तेषां कन्दः इति वाचकस्य भेदः ।

**सम्प्रदायप्रकाशिनी**

निरवधीति । स्थितं स्थानम् । एतदश्लिष्टशब्दम् । उभयमप्येतदमालारूपम् ।

परम्परितं द्रष्टव्यमिति । न्यायसिद्धत्वात् सूत्रेणानिरूपणेऽपि स्वयमुन्नेयमित्यर्थः ।

**मधुमती**

निरवधीति । अत्र कूर्ममूर्तिरिव इत्युपमा चतुर्दशलोकवल्लीकन्दत्वरूपणे हेतुः इति उपमारूपकम् । इति चेति । यत्र एकरूपकस्य रूपकान्तहेतुत्वं तत्र रशनारूपकम् । एतच्च सर्व परम्परितरूपकमेव, न तु अधिकम् । अतो नोक्तमित्यर्थः ।

**विस्तारिका**

निरवधीत्यादि । निरवध्यनवच्छिन्नकालम् । स्थितं स्थितिः । कौतुकमुत्सवः, सद्धेतवो विवाहे नृत्यादयः । तेषां प्रपञ्चो नानाप्रकारता । पक्षे अनुवर्तितः कौतुकेन प्रपञ्चः संसारो येन । कूर्ममूर्तिः कमठाकृतिः । प्रथमो नाधुनिकः । कन्दो मूलम् ।

राज्ञि कूर्मत्वारोपे कन्दत्वारोपो वन्दित्वारोपश्च हेतुरिति माला ।

**सारबोधिनी**

निरवधीत्यादि । निरवध्यनवच्छिन्नकालं स्थितं स्थितिः । कौतुकमुत्सवः तद्धेतवो विवाहभृत्यादयः तस्य प्रपञ्चो नानाप्रकारता । पक्षे अनिवर्तितः कौतुकेन प्रपञ्चः संसारो येन । कूर्ममूर्तिः कमठाकृतिः । प्रथमोऽनाधुनिकः । कन्दो मूलम् । राज्ञि कूर्मत्वारोपे कन्दत्वारोपो वल्लित्वारोपश्च हेतुरिति माला ।

**काव्यप्रदीपः**

**'निरवधि च निराश्रयं च यस्य स्थितमनिवर्तिकौतुकप्रपञ्चम् ।**
**प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥'**

अत्र लोकशब्दाद्भिन्नेन वल्लिपदेनारोप्यमाणमुक्तम् । परम्परिते चारोप्यारोपविषयानेकत्वेऽपि नालं-कारानेकत्वम् । संभूय वैचित्र्यप्रकर्षाधायकत्वात् । एवं मालारशनायोरपि द्रष्टव्यम् ।

**आदर्शः**

भिन्नवाचके तु कस्यचिद् रूपकस्य साक्षात् कस्यचित्तु परम्परया उपायत्वं दर्शयति—निरवधीति । भवान् इह जगति स प्रसिद्धः कूर्ममूर्त्तिर्जयति । कीदृशः ? चतुर्दशलोका एव उपर्युपरिभावेन स प्रसिद्धः कूर्ममूर्त्ति-र्जयति । दीर्घत्वाद् वल्लिर्लता तस्याः कन्दो मूलं पालनेन यज्ञेन च सकलतद्रक्षणात्, यस्य कूर्ममूर्त्तिरूपस्य भवतः

स्थितं स्थितिः पितृपितामहादिक्रमे निरवधि अवधिशून्यम्, कूर्ममूर्तेश्च विस्तारावधिशून्यम्, तथा अनिवर्त्तितः कौतुकस्य नृत्यगीतादेः प्रपञ्चो यत्न तादृशम्, कूर्ममूर्तेश्च विस्तारावधिशून्यम्, तथा अनिवर्त्तितः कौतुकस्य नृत्यगीतादेः प्रपञ्चो यत्र तादृशम्, कूर्ममूर्तेश्चानिवर्त्तितविस्मयः प्रपञ्चो विस्तारो यत्र तादृशम् । निराश्रयं परालम्बनरहितं स्वतः सिद्धत्वादाधाररहितत्वाञ्च ।

अत्र राज्ञि प्रकृते कूर्ममूर्त्तिरूपणे मूलत्वपर्यवसितं कन्दरूपणं साक्षादुपायः, लोकमूलकत्वाभावे कूर्ममूर्त्तित्वानुपपत्तेः । लोकानाञ्च कन्दाभावाद् वल्ल्यारोपणं परम्परयाऽन्यस्तदुपाय इति साक्षात्परम्पराभ्यामनेकोपायमाला । कूर्ममूर्त्यारोपोपायः कन्दारोपस्तदुपायो वल्ल्यारोप इति परम्परा । मालारूपमपीति ज्यायान् पाठः । मालारूपकमपीति क्वचित् पाठे परम्परितमपीत्यपिकारयोजना ।

### सुधासागरः

भेदभाग् यथा 'निरवधी'-ति ।

हे राजन् निरवध्यनवच्छिन्नकालं, निराश्रचयमनाधारम् । निवर्तितः कौतुकेन प्रपञ्चः संसारो यत्र तादृशं यस्य स्थितं स्थितिः । पक्षे निरवधि निरन्तरं निराश्रयमपराधानम्, अनिवर्तितः कौतुकानां विवाहनृत्यादीनां प्रपञ्चो नानाप्रकारता यत्र तादृशे यस्य स्थितं स प्रथमोऽनादिः कूर्ममूर्तिः कमठात्मको भवान् जयति, नाधुनिक इति भावः । कीदृशः । चतुर्दशलोका एव वल्ली तस्याः कन्दो मूलम् । त्वत्पराक्रमेणैव सर्व स्थिरमिति भावः । पुष्पिताग्रा छन्दः । 'अयुजि नयुगरेफतो यकारो युजि न नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् । अत्र लोकशब्दाद् भिन्नेन वल्लिपदेनारोप्यमाणमुक्तम् ।

इति चेत्यादि । इत्युदाहृतमालारूपं भेदद्वयम् । 'विद्वन्मानस' इत्यादिपद्यद्वयेनोदाहृतं मालारूपकमपि परम्परितं भवतीति द्रष्टव्यमित्यर्थः । परम्परिते चारोप्यारोपविषयानेकत्वेऽपि नालङ्कारानेकत्वम्, सम्भूयैव वैचित्र्यप्रकर्षाधायकत्वात् । एवं मालारशनयोरपि द्रष्टव्यम् ।

**किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति।**
**नलिनीनां कमलमुखैः मुखेन्दुभिर्योषितां मदनः ॥ ४२९ ॥**

**इत्यादि रशनारूपकं न वैचित्र्यवदिति न लक्षितम् ॥**

---

**सङ्केतः**

किसलयेति । अत्र किलयान्येव कराः, करा एव कमलानि इत्यादिक्रमेण मिथः सङ्घटनात् रशनासादृशम् ।

'सत्कीर्तिमालतीक्षारमासः पिशुनसङ्गमः ।'

इत्यादौ वैधर्म्येण रूपकम् । तथा—आरोपविषयाणां बहुत्वात् आरोप्यस्यापि बहुत्वम् ।

'सत्यं कुवलयकुलोल्लासिनोऽमी नखेन्दवः ।'

इत्यादौ इन्दौरेकत्वेऽपि नखेषु प्रत्येकमारोपात् बहुत्वम् । इति रूपकम् ।

**बालचित्तानुरञ्जनी**

मालाप्रस्तावात् रशनामुदाहरति किसलयेति । मदनः लतानां किसलयकरैः कामिनां करकमलैः कमलिनीनां कमलमुखैः योषितां मुखेन्दुभिः जगतां सम्बन्धि मनो जयति । किसलयान्येव कराः, करा एव कमलानि, कमलान्येव मुखानि, मुखान्येव इन्दव इति सर्वेषां परस्परघटनात् रशना । कारिकायामेवंविधस्य लक्षणं किमिति नोक्तमित्यत आह नेति । उद्रिक्तस्य वैचित्र्यस्याभावादेवंविधं न लक्षितमित्यर्थः ।

**काव्यादर्शः**

यो यः पूर्वोऽर्थः स स उत्तरेषामुपमेयमिति रूपकरसनापि, यथा—'किसलये' ति । 'कामोऽमीभिः पदार्थैः कामिनां मनो जयति वशीकरोति । किंसलयादिदर्शनाद् विमूर्छितमिव मन इति तैर्जयः ।' अत्र यो यः पूर्वोऽर्थः किसलयादिकः स स उत्तरैः करादिभी रूपितः । तथा हि 'किसलयान्येव करा एव कमलानि तान्येव मुखानि एव इन्दव' इति सर्वेषां परस्पर संघटनाद् रसनासादृश्याद् रसनारूपकम् । ये चान्ये सहजाहार्योभयावयवादि रूपकभेदास्तेऽपि उक्तलक्षणेन संगृहीताः । विकल्पानन्त्याच्च दिङ्मात्रं दर्शितम् । यदुक्तं—

न पर्यन्तो विकल्पानां रूपकोपमयोरतः ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥

वैधर्म्येणापीदं दृश्यते यथा—

सौजन्याम्बुमरुस्थलीसुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशीसरलतायोगश्वपुच्छच्छटा ।

**यैरेषापि दुराशयात् कलियुगे राजावली सेविता**
**तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥**

तथारोप्यमाणस्य धर्मित्वात् आविष्टलिङ्गत्वेऽपि क्वचित् स्वतोऽसंभवत्संख्यायोगस्य विषयसंख्यत्वं प्रत्येकमारोपा, तथा क्वचिज्जटावल्कलावलम्बिनः कपिलादावाग्नय इत्यादौ नहि कपिलमुनेर्बबुत्वम्। आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति त्वद्यतनाः। परिणामे हि प्रकृतात्मतयारोप्यमाणस्य उपयोग इति प्रकृतमारोप्यमाणरूपत्वेन परिणमति। रूपके तु आरोप्यमाणस्य प्रकृतोपरञ्जकत्वमेव केवलं, न तु प्रकृतोपयोगः। स च सामानाधिकरण्यवैयधिकरण्यप्रयोगाद् द्विधा व्याख्येयः, यथा—

**तीर्त्वा भूतेशमौलिस्रजमरधुनीमात्ममनासौ तृतीय-**
**स्तस्मै सौमित्रिमैत्रीमयमुपकृतवान्तरं नाविकाय।**

**व्योमग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं**
**कृच्छ्रादन्वीयमानस्त्वरितमथ गिरिं चित्रकूटं प्रतस्थे ॥**

—अत्र सौमित्रिमैत्री प्रकृता आरोप्यमाणसमानाधिकरणा आन्तरत्वेन परिमता, आन्तरस्य मैत्रीरूपतया प्रकृते उपयोगात्। समासोक्तावपि आरोप्यमाणं प्रकृतोपयोगि, अत एव तत्र तद्व्यवहारसमारोपः केवलं तत्र विषयस्यैव प्रयोगो, विषयिणो गम्यमानत्वाद्, इह तु द्वयोरपि अभिधानतादात्म्यात्तु तयोः परिणामत्वम्।

व्यधिकरणंः, यथा—

**अथ पक्त्रिमतामुपेयिवद्भिः सरसैर्वक्रपथाश्रितैर्वचोभिः।**
**क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरंगमाद्यैः ॥**

राजसंघट्टने उपायनमुचितं तच्चात्र वचोरूपमिति वचसां व्यधिकरणोपायनरूपत्वेन परिणामः।

### विवेकः

किशलयेत्यादि—अत्र किशलयकरैः करकमलैः कमलमुखैर्मुखेन्दुभिरिति रशनाक्रमेणा शब्दानां न्यासः। रुद्रटोऽप्याह—'निरवयवं शुद्धं माला रशना परम्परितञ्चे'ति (रु. का. अ. ८/४६)। एवमपि यदत्र न कथितं तत्र हेतुमाह न वैचित्र्यवदिति—प्रशंसायां मतुः। अतो वैचित्र्यातिशये सत्यलङ्कारता न तु यथाकथञ्चिद्वैचित्र्यमात्रे। यत्रारोप्यमाणं प्रकरणोपयोगित्वाभावात् प्रकृतोपरञ्जकत्वेनैव केवलेनान्वयं लभते तत्र रूपकम्। यत्र तु प्रकृतात्मतयाऽऽरोप्यमाणस्याप्युपयोगस्तत्र प्रकृतमारोप्यमाणरूपत्वेन परिणमतीति परिणामाख्योऽलङ्कार इति नवीनाः (अ. स. ५१ पृ.)। यथा—"तोर्त्कभूतेशमौलिस्रजममरधुनीमात्मनाऽसौ तृतीयस्तस्मै सौमित्रिमैत्रीमयमुपहृतवानातरं नाविकाय। व्यामग्राह्यस्तनीभिः शवरयुवतिभिः कौतुकोदञ्चदक्षं कृच्छ्रादन्वीयमानस्त्वरितमथ गिरिं चित्रकूटं प्रतस्थे। अत्र सौमित्रिमैत्री प्रकृताऽऽरोप्यमाणसमानाधिकरणान्तररूपत्वेन परिणता, आतरस्य मैत्रीरूपतया प्रकृत उपयोगात्। तदत्र यथा समासोक्त्यादावारोप्यमाणं प्रकृतोपयोगि तच्चारोपविषयात्मतया तत्र स्थितम्, अत एव तत्र तव्द्यवहारसमारोप्यमाणं प्रकृतोपयोगि तच्चारोपविषयात्मतया तत्र स्थितम्, अत एव तत्र तव्द्यवहारसमारोपः,

एवमिहापि ज्ञेयम् । केवलं तत्र विषयस्यैव प्रयोग:, अत एव तत्र तव्द्यवहारसमारोप:, एवमिहापि ज्ञेयम् । केवलं तत्र विषयस्यैव प्रयोग:, विषयिणो गम्यमानत्वात्, इह तु द्वयोरप्यभिधानं तादात्म्यात्तयो: परिणामित्वम्" (अ. स. ५१ पृ:) । एतञ्च रूपकविशेषत्वादवान्तरभङ्गीनामानन्त्याच्च ग्रन्थकृता नोट्टङ्कितम् ।

### दीपिका

वैचित्र्यवदिति । वैचित्र्येत्यत्र पूर्वमधिकेति शेष: । न लक्षितमिति । पृथगित्यर्थ: । प्रकृतमित्यस्योपमेयमिति निषिध्येत्यस्यासत्यं कृत्वेति अन्यदित्यस्योपमानमिति साध्यत इत्यस्य सत्यतया स्थाप्यते उपनिबध्यत इति विवृति: ।

### साहित्यचूडामणि:

आदिकूर्मस्य कन्दत्वे लोकानां वल्लित्वं हेतु: । अमालारूपम् अमालाकारम् । न लक्षितं सूत्र इति शेष: ।

### सम्प्रदायप्रकाशिनी

अत्र किसलयादयो भिन्नसम्बन्धिन: करत्वादिरूपणेन स्थगितप्रतीतयश्चेति रशनात्वेनोपनिबद्धा अपि न वैचित्र्याय कल्पन्ते । अतो रशनारूपकं न लक्षितमित्याह—इत्यादीत्यादि । इत्थमष्टधा रूपकालङ्कार इह दर्शितो बोद्धव्य: । तथा हि—सावयवं, समस्तवस्तुविषयमेकदेशविवर्ति च, निरवयवं केवलं मालारूपं च । परम्परितं तु श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विशाखं तत् केवलं मालारूपं चेति ।

### मधुमती

किसलयेति । अत्र किसलय-करकमल-मुखशब्दानां रशनाक्रमेण विन्यासात् रशनारूपकमित्यर्थ: । अनभिधाने हेतुमाह—न वैचित्र्यवदिति । इति रूपकम् ।

### विस्तारिका

किसलयेत्यादि । लतानां नलिनीनां च स्त्रीत्वमार्थम् । करकमलैरिति योषिद्भिरित्यत्रान्वेति । मुखेन्दुभिरित्यपि ।

पूर्वपूर्वमारोप्यमाणानां परपरत्रारोपविषयत्वाद् रसनारूपता । तदाह—इतीत्यादि । न लक्षितमिति । लक्षणाभावे हेतुमाह—न वैचित्र्येत्यादि । उपमेयोत्कर्षप्रतिपादनीयोपमानीकृतस्योपमेयीकरणे तदुत्कर्षणस्थगनप्रसङ्गादुपमेयस्य तदभावात् । न च सम्बन्धिभेदाद्भेदेन विरोध:, एक वाक्यत्वेनार्थभेदाभावात्, अत एव रसनात्वाच्च ।

### सारबोधिनी

किसलयेति । लतानां नलिनीनां च स्त्रीत्वमार्थम् । करकमलैरिति योषिद्भिरन्वेति । मुखेन्दुभिरित्यपि पूर्वपूर्वारोप्यमाणानां परपरत्वारोपविषयत्वात् पश्चाद्वलनया रशनारूपता ।

### काव्यप्रदीपः

यद्यपि रशनारूपकमपि रूपकं संभवति । यथा—

**'किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।**
**नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥'**

इत्यादि । तथापि न तादृशवैचित्र्यवदिति न पृथग्लक्षितम् ।

### आदर्शः

रसनारूपकं दर्शयस्तदनुक्तिबीजमाह—किसलयेति । मदन एतैरेतैः कामिनां मनो जयति । तानाह—किसलयेति । करकमलैरित्यत्रापि योषितामित्यस्यान्वयः । एषामुद्दीपकत्वाज्जयः । अत्र किसलयेषु कराः, करेषु कमलानि, तेषु मुखानि, तेष्विन्दवो रसनारीत्या रूपिताः ।

### सुधासागरः

यद्यपि रशमारूपकमपि रूपकं भवति, यथा—किसलयेति । लतानां नलिनीनां च स्त्रीत्वमार्थम् । मदनः कामः लतानां वल्लीनां, किसलयानि नूतनपत्राण्येव करास्तैः, नलिनीनां कमलान्येव मुखानि तैः । योषितां कामिनीनां करा हस्ता एव कमलानि तैः । मुखान्येवेन्दवस्तैश्च कामिनां मनो जयति रागिणां चित्तं वशीकरोतीत्यर्थः । अत्र पूर्वपूर्वारोप्यमाणानां परपरत्रारोपविषयत्वात् पश्चाद्वलनया रशनारूपतेति द्रष्टव्यम् ।—तथाऽपि नेदं तादृशवैचित्र्यवदिति न पृथग्लक्षितम् । एतदुक्तम्—'इत्यादी'-ति ।

(सू० १४६) प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः।

उपमेयम् असत्यं कृत्वोपमानं सत्यतया यत् स्थाप्यते सा तु, अपह्नुतिः।

उदाहरण्—

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि॥ ४३०॥

---

सङ्केतः

प्रकृतमिति। अन्यत् उपमानम्। तच्च प्रकृतं अप्रकृतं वा। रूपके हि आरोप्यारोपविषययोः अनपह्नवे स्फुटेन रूपेण आदावेव सादृश्यं प्रतीयते। अत्र तु उपमेयस्य अपह्नुत्या मुखे पारमार्थिकस्य असत्यत्वं, तदितरस्य सत्यत्वम्। प्रतीत्यनिर्वाहे आरोप्यारोपविषययोः सादृश्यं प्रतीयते, स्थूलतया अपह्नवे विश्रान्तिः तात्पर्येण तु सादृश्ये एवेति भावः।

बालचित्तानुरञ्जनी

प्रकृतस्योपमेयतायाः। निषेधशब्दार्थमाह उपमेयमसत्यं कृत्वेति। अपह्नुतिस्त्रिधा। अपह्नवपूर्व आरोपः, आरोपपूर्वोऽपह्नवश्च, छलादिशब्दप्रयोगश्चेति। तत्राद्यमुदाहरति अवाप्य इति। हे शैलतनये पार्वति, परिणतकान्तेश्चन्द्रस्य वपुषि प्रागल्भ्यमवाप्तः अयं कलङ्को न विलसति। विगलदमृतस्यन्दशिशिरे अमुष्य उरसि गाढं रतिश्रान्ता यामिनीकामिनी शेते इति मन्ये। अत्र वाक्यद्वयेन चान्द्रमसं कलङ्कं मुख्यतया निषेधवृत्त्या मिथ्यात्वेनावस्थाप्य तत्प्रतिवस्तुभूता हृदयाधिशायिनी निशीथिनीनितम्बिनी सत्यतया अवस्थाप्यते। अयं चापह्नवपूर्वक आरोपः। आरोपपूर्वोऽपह्नवो यथा—

विकसदमरनारीनेत्रनीलाब्जखण्डा-
न्यधिवसति सदा यः संयमाधःकृतानि॥

काव्यादर्शः

अथारोपप्रस्तावे आरोपविषयापह्नुतौ अपह्नुतिमाह—प्रकृतिमिति। प्रकृतमुपमेयं निषिध्य अन्यत्प्रकृतवत् साध्यते। उपमेयस्यापह्नुतत्वान्न स्फुटरूपेण उपमानोपमेयभावोऽस्तीति न रूपकाशङ्का।

'अवाप्त' इति । अत्र कलङ्कः प्रकतः प्रकृतेनैव रजन्यारोपेणापह्नुतो द्वयोरपि वर्णनीयत्वेन प्रस्तुतत्वात् । पारमार्थिकस्यासत्यकरणं, अपारमार्थिकस्य सत्यतया स्थापनं स्थूलतया बोद्धव्यम् । तात्पर्ये तु वाक्यस्य सादृश्ये एव ।

**विवेकः**

आरोपप्रस्तावादपह्नववैधर्म्येणाह—प्रकृतमिति । असत्यं कृत्वेत्यनेन तस्य पारमार्थिकीं सत्यतां दर्शयति । सत्यमसत्यमित्यपह्नुत्योपमारूपपर्यालचोनादसत्यार्थविधिरूपाऽपह्नुतिरलङ्कारः । अत एव पूर्वस्माव्द्यतिरेकं सूचयितुं कारिकायां तु शब्दस्योपनिबन्धः । उपमालक्षणस्य च व्यङ्ग्यस्यात्र वाच्यानुयायित्वं बालस्यापि प्रसिद्धम् । अवाप्त इत्यादि—रजनिरित्यनेनैव सौन्दर्यप्रक्रमनिर्वाहे प्राप्ते रमणीति पदमलौकिकप्रेमास्पदताप्रतिपादनार्थम् । अत्र चन्द्रकलङ्कमुपमेयमसत्यं कृत्वा रजनिरमणीशयनमुपमानं सत्यतया व्यवस्थापितम् । तदयमपह्नवपूर्वक आरोपः । अत्र च वाक्यभेद ता ।

**दीपिका**

अवाप्त इत्यादावपह्नवः शाब्दः, शेषद्वये चार्थः ।

पिशूना सूचिका । भङ्ग्यन्तरैरिति ।

"अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन् परे ।

इन्दौ यद् गलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तन्मन्ये परिपीतमन्धतमसं कुक्षिस्थमालक्ष्यते ।।" इतीदृशैरित्यर्थः ।

**दर्पणः**

अपह्नुतिः । अन्यत् साध्यत् इत्यस्य उपमानं सत्यतया ख्याप्यत इति विवरणम् ।

अवाप्त इत्यादि । निशान्तवर्णनं, अत्रोपमेयापह्नवः शाब्दः, वत सखीत्यादौ, अमुष्मिन् लावण्येत्यादौ चार्थः । भङ्ग्यन्तैरित्यनेन—

अङ्कं केऽपि शशांकिरे जलनिधेः पङ्कं परे मेनिरे
सारंगं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन् परे ।

इन्दोर्यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
मन्येऽहं करिपीतमन्धतमसं कुक्षिस्थमालक्ष्यते ।।

इत्येवमादिप्रकारैरित्यर्थः ।

**साहित्यचूडामणिः**

अपह्नुतिमाह—प्रकृतमिति। प्रकृतस्योपमेयता। निषेधशब्दार्थमाह उपमेयमसत्यं कृत्वेति। अर्थादुपमानं सत्यं क्रियत इतीयं भूतार्थापह्नुतिरित्याख्यायते। यत्सूत्रं 'विषयापह्नवेऽपह्नुतिः, वस्त्वन्तरप्रतीतिरित्येव' (अलङ्कार सू० २१) इति। औपम्यं पुनरीषदनुस्यूतमनुभूयते। उक्तं हि—

**अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा।**
**भूतार्थापह्नवेनास्या निबन्धः क्रियते बुधैः॥ इति।**

उपमेयं गुणाधिक्यादुपमानमेवेति निबन्धनामिति मनाग् गर्भीकृतौपम्या अपह्नुतिरिति यावत्। द्विधा चास्या बन्धच्छाया मुख्येन निषेधेन छलादिशब्दप्रयोगेण च। पूर्वत्र वाक्यभेदः, उत्तरत्रैकवाक्यता। अपह्नवपूर्वकत्वमारोपस्य आरोपपूर्वकत्वं चापह्नवस्येति द्वैविध्यं चमत्कारविशेषासिद्धेरवधीरितं ग्रन्थकारेण।

अवाप्त इति। अत्र वाक्यद्वयेन चान्द्रमसं कलङ्कमनया निषेधवृत्त्या मिथ्यात्वेनावस्थाप्य तत्प्रतिवस्तुभूता हृदयाधिशयिनी निशीथिनी नितम्बिनी सत्यतया स्थाप्यते। अयं चापह्नवपूर्व आरोपः। आरोपपूर्वोऽपह्नवो यथोदाह्रियते कैश्चिद्—

**विकसदमरनारीनेत्रनीलाब्जषण्डा—**
**न्यधिवसति सदा यः संयमाधःकृतानि।**

**न तु रुचिरकलापे वर्तते यो मयूरे**
**वितरतु स कुमारो ब्रह्मचर्यश्रियं वः॥ इति।**

अत्र स्कन्देनाधःक्रियमाणानि नाकनितम्बनीनेत्रनीलोत्पलानि न पुनरौपबाह्यबर्हिबर्हाणीत्यारोपोत्तरकालोऽपह्नवः। नकारश्रवणान्निषेधस्य मुख्यत्वं च।

**सम्प्रदायप्रकाशिनी**

प्रकृतं यदित्यादि। प्रकृतनिषेधपुरस्कारेणाप्रकृतसाधनमपह्नुतिः।

व्याचष्टे—उपमेयसत्यमित्यादि। अतः प्रकृतनिह्नवाप्रकृतप्रतीतिमात्रं नापह्नुतिः। मुखं न भवति नूनं चन्द्र इत्यादावपि प्रसक्तेः। नायं विशेषः सन्धिविग्रहिकेण चेतितः। एवमादिष्वलङ्कारेषु विशेषतः सामान्यतस्त्वापरिसमाप्तेर्दशमोल्लासे स न प्रमाणम्। किं बहूना

**"सन्त्येव तत्र तत्र स्खलितानि बहूनि सान्धिविग्रहिके।**
**तदपि न दृष्टोऽस्माभिः स इवाद्यतनेषु काव्यमीमांसुः॥"**

सेयमलङ्कारमीमांसासूक्ष्मेक्षिका तेषामेव गोचरः, यैरेवालङ्कारसर्वस्वं सुपरिशील्य विशेषाय काव्यप्रकाशहृदयं निर्ज्ञातम्। अतः सर्वस्वसञ्जीविन्यामभिरतैः सम्प्रदायप्रकाशिन्यां भूयो भूयोऽभिरन्तव्यं सचेतोभिः।

अवाप्तः प्रागल्भ्यमिति। इयं शरन्निशासु शैलदुहितरं प्रति विस्रम्भरसिकस्य शिवस्योक्तिः। परिणतरुचः प्रौढप्रभस्य। शशाङ्कस्य वपुषि प्रागल्भ्यमवाप्तः परिणतरुक्त्वेन परिपूर्णमण्डले स्फुटोपलक्ष्यतामवाप्तः कलङ्कोऽयं विलसतीति यत् प्रतिपद्यसे, नैतद् इत्थम्। कथं तर्हि, अमुष्य विगलदमृतस्यन्दशिशिरे उरसि रतिश्रान्तेव रजनिरमणी गाढं शेते इति मन्ये इयं वाच्या।

## मधुमती

प्रकृतमिति। रूपके तु न प्रकृतनिषेधः इति ततो भेदः। वस्तुस्तु—प्राकरणिकं निषिध्य अप्राकरणिकं यत् साध्यते सा अपह्नुतिः इति ज्ञेयम्। अत एव—

**'केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता।**
**यथा कन्दराभिर्विधुराः तस्य दृढं कण्ठे स्थापिताः॥'**

इत्यत्र 'स्वयं वनं न प्रपलाय्य गताः तद्वैरिणः, अपितु ततः पराभवं सम्भाव्य तान् कन्दराः न त्यजन्ति इति अपह्नुतिः व्यज्यते' (४ उल्लासे) इत्यादिना औपम्याभावेऽपि अपह्नुतिरुक्ता। न च तत्र व्याजोक्तिरेव। 'न प्रपलाय्य गताः' इति अपह्नवप्रतीतेः, तदुदाहरण इव व्याजाप्रतीतेश्च।

अवाप्त इति। अत्र नैवायं इति उपमेयनिषेधः शाब्दः।

## विस्तारिका

अपह्नुति लक्षयति—प्रकृतमित्यादि। ननु निषेधानभिधाने 'शिखाधूमस्येयं परिणमति रोमावलिवपिः' इत्यादावपह्नुतिर्न स्यादित्याह—उपमेयमसत्यं कृत्वेति। अत्यतां प्रतिपाद्य। तच्च शब्देनार्थेन वेति न विशेष इति लक्ष्येषु विवेचयिष्यामः।

अवाप्त इति। प्रागल्भ्यं प्रकटत्वम्। परिणतरुचः पूर्णस्य शशाङ्कस्य वपुषि प्रागल्भ्यमवाप्त इत्यन्वयः। वपुषि चेदतो न कलङ्कः, तस्य जनश्रुतिरूपत्वात्। शिशिर इति शीतले स्थाने श्रान्तस्य सुखस्वापो भवत्येव, अत एव गाढमनवच्छिन्नं शेते निद्राति। इयमिति। प्रक्रम्यमाणविषयं नैवायमित्यनेन कलङ्कस्यासत्यतायाः शब्देन प्रतिपादनम्।

## सारबोधिनी

ननु निषिध्येत्यस्य निषेधाभिधाने 'शिखा धूमस्येयं परिणमति रोमावलिवपुरित्यादावपह्नुतिर्न स्यात् निषेधाभिधानाभावात् इत्यत-आह उपमेयमसत्यं कृत्वेति। असत्यतां प्रतिपाद्य, तच्च शब्देनार्थतो वेति न कश्चिद्विशेषः। अवाप्त इति। प्रागल्भ्यं प्रकटत्वम्। शिशिर इति। श्रान्तानां शीतलस्थाने सुखस्वापो भवत्येव। 'नैवायमि'त्यनेन कलङ्कस्यासत्यतायाः शब्देन बोधनम्।

## काव्यप्रदीपः

**प्रकृतिं यन्निषिध्यान्यसत्साध्यते सा त्वपह्नुतिः।**

प्रकृतमुपमेयं निषिद्य असत्यतया व्यवस्थाप्य अन्यदप्रकृतमुपमानं यत्साध्यते सत्यतया व्यवस्थाप्यते सा अपह्नुतिः। सा च शाब्दी आर्थी चेति द्वेधा। तत्राद्या यथा—

'अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि॥'

## काव्यप्रकाशखण्डनम्

**प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः।** (का. ९६, पू०)

निषिध्य उपमेयमसत्यं कृत्वा। यथा—

**स्फुटनीलोत्पलपटलं सुधामयूखे सुधासरसि।**
**मन्यामहे नितम्बिनि! नैष कलङ्कः परिस्फुरति॥**

## आदर्शः

अपह्नुत्यलङ्कारमाह—प्रकृतमिति। स्थाप्यत इत्यत्र तत्स्थाने इति शेषः।

एवञ्च निषेधर्पूकत्वमेव रूपकाद्भेदः। अवाप्त इति। पूर्णचन्द्रे कलङ्कं दृष्ट्वा पार्वतीं प्रति महेशस्योक्तिरियम्। हे शैलतनये! परिणतरुचः शशाङ्कस्य वपुषि प्रागल्भ्यम् अवाप्तः अयं दृश्यमानां नैव कलङ्को विलसति। तत् कोऽमित्यत्राह—अमुष्येति। मन्ये जानामि रतिश्रान्ता रजनिरूपा रमणीयममुष्योरसि गाढं शेते। तत्र हेतुमाह—विगलदिति।

## सुधासागरः

ननु निषिध्येत्यस्य निषेधाभिधाने 'शिखा धूमस्येयं परिणमति रोमावलिवपुः' इत्यादावापह्नुतिर्नस्यादित्यत आह—उपमेयमसत्यं कृत्वेति। असत्यतां प्रतिपाद्य। तच्च शब्देनार्थतो वेति न कश्चिद् विशेषः। अत एव प्रदीपकारैर्व्याख्यातम्—प्रकृतमुपमेयं निषिध्यासत्यतया व्यवस्थाप्यान्यदप्रकृतमुपमानं यत् साध्यते सत्यतया व्यवस्थाप्यते साऽपह्नुतिरिति। सा च शाब्दी चार्थी चेति द्विधा। तत्राद्या यथा 'अवाप्त' इति।

हे शैलतनये पार्वति परिणतरुचः परिपूर्णस्य शशाङ्कस्य वपुषि अर्थाद् वक्षसि प्रागल्भ्यमवाप्तः प्रकटीभूतोऽयं कलङ्को नैव विलसति, किन्त्वियं रजनिरमणी निशाभिधा चन्द्रकामिनी, अमुष्य चन्द्रस्य विगलद् द्रवीभूतं यदमृतं तस्य स्यन्दः स्रवणं तेन शिशिरे शीतले उरसि वक्षः स्थले रतिश्रान्ता विपरीतसुरतखिन्ना सती गाढं शेते निश्चेष्टं स्वपितीत्यर्थः। मन्दाक्रान्ता छन्दः। लक्षममुक्तम्। अत्र कलङ्को नैवायमिति शाब्दोऽपह्नवः। आर्थस्तु बह्वीभिर्भङ्गीभिरालोच्यते।

इत्थं वा

बत सखि कियदेतत् पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथा हि।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम्॥ ४३१ ॥

अत्र हि न सभृङ्गाणि सहकाराणि, अपि तु सकालकूटाः शरा इति प्रतीतिः।

---

**सङ्केतः**

बतेति। अत्र भृङ्गेति प्रकृतम्, अपरं तु अप्रकृतम्। मन्ये—छलाद्याः शब्दाः असत्यत्ववाचकाः।

**बालचित्तानुरञ्जनी**

[छल] प्रयोगमुदाहरति बतेति। हे सखि, प्रियविरहकृशे अस्मिन् रागिलोके स्मरस्य कियदेतत् वैरम् पश्य। बतेति दुःखे। तथाहि। उपवनेषु ये रसालाः तेषु उद्भासिनो ये मधुकराः तद्व्याजेन अनेन कामेन प्रतिबाणं कालकूटं उट्टङ्कितम्। अत्र छलप्रयोगस्य निषेधपर्यवसायितामाह न सभृङ्गाणीति। एकवाक्यं च स्पष्टम्। प्रतीतिरिति। नाभिधेति यावत्।

**काव्यादर्शः**

प्रकृतस्य निषेधेऽप्रकृतस्य साध्यत्वे, यथा—'बते'ति। मन्ये—छलशब्दावसत्यत्वप्रतिपादकौ।

**विवेकः**

एवञ्च क्वचिच्छलच्छद्मादि शब्दैरसत्यत्वप्रतिपादकैरपह्नवः, क्वचित् पुनरसत्यत्वं वस्त्वन्तररूपताविधायिशब्दनिबन्धनमित्येवम्प्रकारतयाऽस्यालङ्कारस्य बहुविधा बन्धच्छायेत्याह—इत्थं वेत्यादि। यथा वतेत्यादि। अत्र चैकवाक्यात्वम्।

**साहित्यचूडामणिः**

छलादिप्रयोग उदाहरति—बतेति। अत्र छलप्रयोगस्य निषेधपर्यवसायितामाह न सभृङ्गाणीति। एकवाक्यत्वं च स्पष्टम्। प्रतीतिरिति। नाभिरिति। नाभिधेति। यावत्।

**सम्प्रदायप्रकाशिनी**

अन्यथापि दर्शयितुमाह—इत्थं वेत्यादिना।

बत सखीति । रागिलोके कियन्निरवधीत्यर्थः । तथा हीति विशेषोपन्यासाय । उट्टङ्कितं विनिहितम् ।

प्रतीयमानतां दर्शयति—अत्र हि न सभृङ्गाणीत्यादि ।

**मधुमती**

बतेति । अत्र छलपदोपादानात् उपमेयनिषेधः न शाब्दः, किन्तु प्रतीयमानः इति द्रष्टव्यम् ।

**विस्तारिका**

इत्थ वेत्ति । असत्यताप्रतिपादकसभङ्गीभेदेन लक्ष्यभेदस्तवनम् ।

बतेति । कियत् कीदृक् । कामिलोके स्मरस्य कीदृशं वैरमित्यर्थः । उट्टङ्कितं प्रकाशितम् ।

अत्र छलपदेन भृङ्गाणामसत्यत्वप्रतिपादनम् । सत्यत्वे व्यजताविरहादित्याक्षेपलभ्यो निषेधः । एवमुत्तरत्रापि ।

**सारबोधिनी**

इत्थं वेति । असत्यताबोधकभृङ्गीभेदेन लब्ध लक्ष्यभेदसूचनम् । बतेति । कियत् इति कीदृक् । उट्टङ्कितं प्रकाशितम् । अत्र छलपदेन भृङ्गानाम— सत्यत्वप्रतिपादनम् । सत्यत्वे व्याजताविरहादित्याक्षेपलभ्यो निषेधः । एवमुक्तरत्रापि ।

**काव्यप्रदीपः**

तत्क्वचित्कपटार्थशब्दोपादानात् । यथा—

**बत सखि कियदेतत्पश्य वैरं स्मरस्य**
**प्रियविरहकृशेऽस्मिन्रागिलोके तथा हि ।**

**उपवनसहकारोद्भासिभृङ्गच्छलेन**
**प्रति विशिखमनेनोट्टङ्कितं कालकूटम् ॥**

अत्र च्छलशब्दबलान्न सभृङ्गाणि सहकाराणि अपि तु सकालकूटाः शरा इति ।

**आदर्शः**

निषेधस्यान्यथाप्रत्यायने प्राह—इत्थं वेति । बत सखीति । बत खेदे, हे सखि ! पश्य प्रियविरहकृशे रागिलोके स्मरस्य कियदेतद् वैरं विलक्षणं वैरमित्यर्थः । यत उपवनीयसहकारपुष्पेषु उद्भासिनां दीप्यमानानां भृङ्गाणां छलेन तत्पुष्परूपं विशिखं विशिखं प्रति अनेन स्मरेण कालकूटमुट्टङ्कितं दत्तम् । अत्र छलपदाद् भृङ्गनिषेधप्रतीतिरित्यत्राह—अत्रेति ।

### सुधासागरः

तत्र क्वचित् कपटार्थकशब्दोपादानाद् यथा—बत सखीति ।

हे सखि प्रियविरहेण कृशेऽस्थिचर्मावशेषेऽस्मिन् रागिलोके मादृशे कामिजने स्मरस्य कामस्य कियद् वैरमेतत् पश्य, तथा हि-अनेन स्मरेण उपवनेष्वारामेषु सहकारस्य पुष्पं सहकारं तेषूद्भासिनः शोभमाना ये भृङ्गास्तेषां छलेन प्रतिविशिखं बाणे बाणे कालकूटं दुर्निवार्योत्कटविषमुट्टङ्कितमुपरि निहितमित्यर्थः। मालिनी छन्दः। 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् । अत्रेत्यादि । अत्र छलशब्दबलान्न सभृङ्गाणि सहकाराणि अपि तु सकालकूटाः शरा इति प्रतीयत इत्यर्थः ।

एवं वेति ।

एवं वा

अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः

स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।

यदङ्गाङ्गाराणां प्रथमपिशुना नाभिकुहरे

शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ ४३२ ॥

अत्र न रोमावलिः, धूमशिखेयमिति प्रतिपत्तिः । एवमियं भङ्ग्यन्तरैरप्यूह्या ॥

---

### सङ्केतः

अमुष्मिन्नति । अत्र रोमावलिवपुः इति शब्दः वस्त्वन्तराभिधायी अपह्नवस्य कारणम् । भङ्ग्यन्तरैरिति । स्वं यथा—

आरुरोह चितामेषः मालतीविरहादलिः ।

न किंशुकस्य कुसुमे वर्तते जीवितेश्वर ! ॥

इति । अत्र प्रागरोपः, पश्चादापह्नवः ।

'इदं ते केनोक्तं कथय कमलातङ्कवदने !'

इत्यत्र तु अपह्नवपूर्वकः आरोपः । स्थानद्वयेऽप्यत्र 'नेदं कुसुमं कटकं वा, किन्तु चिता स्मरचक्रं वा इत्यादिप्रतीतिः । भङ्ग्यन्तराणि भणितिविशेषाः कदाचित् कथंचित् किमपि किमपि काव्ये निवेश्यते एवेति भावः ।

इत्यपह्नुतिः ।

### बालचित्तानुरञ्जनी

वैचित्र्यान्तरप्रदर्शनाय पुनरुदाहरति अमुष्मिन्नति । शिवदग्धः कामः कुरङ्गाक्ष्याः पृथुजघनभागे अमुष्मिन् लावाण्यामृतसरसि नूनं पतितः । यस्य कामस्याङ्गाङ्गारकाणां पिशुना मध्ये रोमावलिवपुः इयं धूमस्य शिखा परिणमति । अत्र प्रकृतवस्त्वन्तररूपाभिधायिशब्दनिबन्धनोऽपह्नव इति पूर्वस्माद्विशेषः । उभयोर्वाच्यत्वमुचित-मिति भावः ।

### काव्यादर्शः

क्वचितुनरसत्यत्वं वस्त्वन्तररूपताभिधायिशब्दनिबन्धनं, यथा—अमुष्मिन्नति ।

एवमिति । आरोपपूर्वकोऽपह्नवोऽपह्नवपूर्वको वा आरोपः ।

क्रमाद् यथा—

> विलसदमरनारीनेत्रनीलाब्जखण्डा-
> न्यधिवसति सदा यः संयमाधःकृतानि।
> न तु ललितकलापे वर्तते यो मयूरे
> वितरतु स कुमारो ब्रह्मचर्यश्रियं वः॥

इदं ते केनोक्तम् इत्यादि।

अत्र 'नेदं स्वर्णवलयं किं तु स्मरचक्रम्' इति। प्रतीतिः॥ [७॥]

## विवेकः

अमुष्मिन्नित्यादि—शर्वप्लुष्टः परमेश्वरदग्धः प्रशमपिशुना उपशमसूचिका, [रोमावलीवपुः] रोमावलिशरीरम्। अत्रापि वाक्यभेदः एवमिति चारोपपूर्वकोऽपह्नवो यथा ज्योत्स्नाभस्मेत्यादि यथा वा 'विकशदमरनारीनेत्रनीलाब्जखण्डान्यधिवसति सदा यः संयमाधः कृतानी'त्यादि (हेम. का. अ. ६५ पृ:; अ. स. ६४ पृ:)। यथा चोक्तम् 'इदं भोः केनोक्तं कथय कमलातङ्कवदने'त्यादि।

## साहित्यचूडामणिः

वैचित्र्यान्तरप्रदर्शनाय पुनरुदाहरति—अमुष्मिन्नति। अत्र प्रकृतवस्त्वन्तर रूपताभिधायिशब्दनिबन्धनोऽपह्नव इति विशेषः।

## सम्प्रदायप्रकाशिनी

अमुष्मिन्नति। लावण्यामृतसरसि जघनभाग इति रूपणम्। रोमावलिवपुः परिणमति रोमावलीरूपतामापद्यत इत्यर्थः। अत्रापि व्यङ्ग्यं दर्शयति—अत्र न रोमावलिरित्यादि। इत्थं कृतवादिशब्देनापि व्यङ्ग्यत्वं द्रष्टव्यमित्याह—एवमियमित्यादि। भङ्गिः रीतिः।

## मधुमती

अमुष्मिन्निति। अत्र परिणमतीत्युक्तः परिणामः, यद्यपि धर्मिणि सत्येव रूपान्तरापत्तिरिति अपह्नवो न प्रतीयते। तथापि— परिणमति इत्यस्य प्रतीयते इत्यर्थः। एवं च अत्रापि उपमेयनिषेधः सिद्धः प्रतीयमानः। अतिशयोक्तिविशेषयोः प्रथमे प्राकरणिकनिषेधानुपादानात्, द्वितीये प्रकृतिनिषेधेऽपि अन्यस्य साधनाभावात् अस्याः तयोर्भेदः। एवमिति।

> 'इदं ते केनोक्तं कथय कमलातङ्कवदने!'

इत्यादौ प्रागुदाहृते इति बोध्यम्। इत्यापह्नुतिः।

## विस्तारिका

अमुष्मिन्नित्यादि। जघनभागे अमृतसरसि, तन्मज्जनेन मरणम्। दाहेन केवलमङ्गविनाशः। शर्वो महादेवः। प्लुष्टो दग्धः। प्रशमो निर्वाणता। पिशुना सूचिका। कुहरं सरोगभीरभागः। परिणमति प्रादुर्भवति। अङ्गारस्य जलप्रवेशे धूमशिखा तिष्ठतीति जातिः। रोमावलिवपुस्तदाकारस्य।

असत्यताप्रकाशनस्य निषेधाविवरणस्य फलमाह—अत्रेत्यादि। प्रतीतिर्व्यञ्जनयैवेत्यर्थः।

भङ्ग्यन्तरेणेति। व्यञ्जनया प्रतिपादनमेव भङ्गी। यथा—

**अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे**
**सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन् परे।**

**इन्दौ यद्गलितेन्द्रनीलशकलश्यामं दरीदृश्यते**
**मन्येऽहं परिपीतमन्धतमसं कुक्षिस्थितं वर्तते॥**

**गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन।**
**यदि श्लेषेणान्यथा वाऽन्यथयेत् साप्यपह्नुतिः॥**

यथा—'काले वारिधराणाम्' इत्याद्युक्तम्। अत्र पतिं विनेत्युक्त्वा पतनाभावेन समर्थनमिति यत् केनचिदुक्तं तन्न युक्तम्, व्याजोक्तेरस्य विषयत्वादिति तत्र विचारयिष्यामः।

## सारबोधिनी

अमुष्मिन्निति। शर्वः शिवः। प्लुष्टो दग्धः। प्रशमो निर्वाणता। पिशुना सूचिका। रोमावलिवपुस्तदा-कारा। 'गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन। यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः॥'

## काव्यप्रदीपः

क्वचित्परिणामादिशब्दवशात्। यथा—

**'अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः**
**स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।**

**यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे**
**शिखा धूमस्येयं परिणमति रोमावलिवपुः॥'**

अत्र धूमशिखा रोमावलिवपुः परिणमतीति परिणामशब्दार्थवशान्नेयं रोमावलिः किं तु धूमशिखेति प्रतीयते। एवं भङ्ग्यन्तरैरप्यूह्यम्। यथा 'इदं ते केनोक्तं' इत्यादौ।

## काव्यप्रकाशखण्डनम्

एवं भङ्ग्यन्तरैरप्यूह्या।

**द्योतयित्वा कमप्यर्थं गोपनीयं कथञ्चन।**
**यदि श्लेषणान्यथा वान्यथयेत् सा त्वपह्नुतिः॥**

यथा कालेऽस्मिन् जलदानामिति प्रागुक्तम्।

## आदर्शः

अन्यथाऽपि निषेधप्रतीतावाह—एवं वेति। अमुष्मिन्नति। मृगदृशोऽमुष्मिन् पृथुजघनभाग लावण्यामृतस्य सरसि शर्वेण महेशेन प्लुष्टो दग्धः स्मरो ज्वलदवस्थ एव निपतितः। यस्य स्मरस्य अङ्गाङ्गाराणां प्रशमस्य निर्वाणस्य पिशुना सूचिका इयं धूमस्य शिखा नाभिकुहरे रोमावलिवपुः रोमावलिरूपा परिणमति, जलेन ज्वलदङ्गारनिर्वाणे धूमोद्गमाद् ज्वलने निर्वाणेऽपि नाभिच्छिद्रेण तद्रमोत्थानात्। एवमिति।

**यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम।**
**तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ॥ (नैषधीये)**

इत्यत्र तेदवेत्येकारादङ्कनिषेधप्रतीतिः।

## सुधासागरः

क्वचित् परिणामादिशब्दवशादित्यर्थः। यथा—अमुष्मिन्नति।

वेश्यादासी कञ्चित् समृद्धलम्पटं प्रति वेश्यां वर्णयति। हे रसिक मृगदृशः पृथुजघनभागे पीने कटिपुरोभागे अमुष्मिन् दृश्यमानप्रकर्षे लावण्यमेवामृतं तस्य सरसि वराङ्गरूपतडागे शर्वेण महेश्वरेण प्लुष्टो दग्धः स्मरः कामदेवो नूनं निपतितः तापशान्त्यै निश्चयेन निमग्नः। यत्कारणादङ्गाङ्गाराणां प्रशमस्य निर्वाणतायाः पिशुना सूचिकेयं धूमस्य शिखा नाभिकुहरे नाभिबिले रोमावलिवपुः परिणमति रोमावल्याकारं दधातीत्यर्थः। शिखरिणी छन्दः। लक्षणमुक्तं प्राक्।

अत्रेत्यादि। अत्र परिणमतीति शब्दार्थवशान्नेयं रोमावलिः, किन्तु धूमशिखेति प्रतीयते इत्यर्थः। एवमित्यादि। यथा—सप्तमोल्लासे 'इदन्ते केनोक्तं कथय कमलातङ्क' इत्यादौ इति भावः।

(सू० १४७) श्लेषः स वाक्ये, एकस्मिन् यत्रानेकार्थता भवेत्॥ ९६॥

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः स श्लेषः। उदाहरणम्—

उदयमयते दिङ्मालिन्यं निराकुरुतेतराम्

नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः।

रचयतितरां स्वैराचारप्रवर्तनकर्तनम्

बत बत लसत्तेजःपुञ्जो विभाति विभाकरः॥ ४३३॥

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ॥

---

सङ्केतः

एकार्थेति। न गोशब्दवदनेकार्थानाम्।

उदयमिति। उदयः पर्वतः समृद्धिरपि। दिक् न्यायमार्गः तत् स्थाः प्रजा वा। मालिन्यं कलङ्कोऽपि। निद्रा आलस्यमपि। क्रियाः धर्माद्याः अपि। स्वैराः अन्यायिनोऽपि। तेजः प्रतापोऽपि। विभाकरो नाम राजा। वक्ष्यमाणार्थसूचनाभिप्रायेणोक्तौ न श्लेषः। द्वयोरप्यर्थयोः प्रकृतत्वे वक्तुमनिष्टत्वात् किन्तु वस्तुध्वनिरेव। यथा—

'यान्ति न्यायप्रवृत्तस्य तिर्यञ्चो ऽपि सहायताम्।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति॥'

इति। अत्र प्रकृतत्वेनार्थः न्यायनिष्ठपुंवृत्तिः। सूचनाभिप्रायेण तु राम सुग्रीवादिवृत्तिः। इति श्लेषः।

बालचित्तानुरञ्जनी

अथ श्लेषं लक्षयति श्लेष इति। एकस्यार्थस्योक्तौ सामान्यसिद्धान्तं संयोगादव्यवस्थापकाभावात् उक्तेरनियन्त्रणात् अनेकस्यार्थस्याभिधानम्। अभिधेयमर्थमार्थोपश्लेष इति व्याकरोति एकार्थेति। प्रत्यर्थं शब्दनिवेश इति मतमाश्रित्योच्यत इति भेदः। उदाहरति उदयमिति। विभानां कान्तीनां, अधिपो राजा उदयं समृद्धि अयते प्राप्नोति। दिक् अन्यायमार्गस्तस्य मालिन्यम् निराकुरुततेरम्, निद्रामुद्रां आलस्यप्रकर्षं निधनम् नाशम् प्राप्नोति। क्रियाः धर्मक्रियाः प्रवर्त्तयति। स्वैराः अनीतिकारिणः, तेषामाचारप्रवृत्तेः कर्त्तनं छेदनम रचयति। लसत्तेजः पुञ्जो विभाति। विभाकरः सूर्यः अयं पक्षः स्पष्टः। नन्वेकस्य शब्दस्य अर्थद्वयवाचकत्वं कथमित्याशङ्क्याह अत्रेति। प्रकरणादेर्नियामकस्यात्राभावात् उभयोर्वाच्यत्वमुदाहार्यमिति भावः।

### काव्यादर्शः

एकार्थेति। यथा गोशब्दो वागाद्यनेकार्थप्रत्यायने। अनेकोऽर्थ इति। 'विभां करोति' इत्येकमेव हि यौगिकमर्थं प्रतिपादयन् विभाकरशब्दः साधारणार्कभूपलणार्थद्वयप्रतिपादकोऽनेकार्थः। उदयादिशब्दा अपि एकार्थप्रतिपादका एव सन्तोऽनेकार्थाः। तथा हि 'उदयलक्षण एक एवार्थ एकत्रोद्भमोऽन्यत्र समृद्धिः, दिशः ककुभोऽन्यत्र तत्स्थाः प्रजाः, मालिन्यं कालिमा कलङ्कश्च, निद्रा सुप्तिरालस्यं च, क्रिया गमनादिका धर्मक्रियाश्च, स्वैराः स्वेच्छा अनीतिकारिणश्च, तेजो ज्योतिः प्रतापश्च।' अभिधाया इति द्वयोरप्यर्थयोः प्राकरणिकतया विवक्षितत्वादिति भावः। यत्र तु वक्ष्यमाणोपक्षेप्यर्थनिष्ठमुपक्षेपपराभिधासंसूचकत्वं यथा—

**यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।**
**अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति॥**

—इत्यादौ, तत्र न श्लेषोऽर्थद्वयस्य प्रकृत्वेनाभिधेयतया वक्तुमनिष्टत्वात्, किं तु अर्थशक्तिमूलो वस्तुध्वनिरेव। तथा हि प्रकृते न्यायवतः पुंसस्तिर्यञ्चोऽपि सहायाः, सूचनीयार्थविषयत्वेन तु राम—सुग्रीवादिवृत्तत्वम्।

### विवेकः

अधुना विशेषणविच्छित्त्याश्रयेणालङ्कारद्वयं कथयति। अपह्नुतावुपमेयस्यासत्यकल्पनेनोपमानस्य सत्यताप्रतिलम्भः, इह तु द्वयोरपीत्याह श्लेष इति। यत्र वाक्यमविशिष्टविशेषणमेकस्मादर्थादर्थान्तरं गमयति तत्रैकवृन्तगतफलद्वयन्यायेनार्थयोः श्लिष्टत्वादर्थश्लेषः। उदयमित्यादि—बत बतेत्याश्चर्यातिशयः। न चायं ध्वनेर्विषयः, प्रकरणादिना वाक्यार्थनियमेऽर्थान्तरावगतौ तस्य सद्भावादित्याह—अत्रेति।

### दीपिका

वाक्य एकस्मिन्नति। वाक्ये पदानां सम्बलनशरीर एवार्थद्वयप्रतीतिर्न तु कस्यचित् पदस्य विशिष्टा शक्तिः, सर्वेषामेव पदानां प्रत्येकं परिवृत्तिसहिष्णुत्वादित्यर्थः। एकार्थप्रतिपादकानामिति। प्रकरणादिसाहित्यानवभासे प्रत्येकप्रतिपत्तियोग्यानामित्यर्थः। अनेकोऽर्थोऽनिर्धारितशरीरः।

उदयो माहेन्द्र्यां दिशि प्रथमदर्शनमुपचयश्च। दिशां मालिन्यमन्धकाराभिभवो दुराचारप्राप्तिश्च। निद्रा सुषुप्तिर्व्यामोहश्च। तया मुद्रा कर्तव्यानारम्भरूपः सङ्कोचश्च। क्रियाः सन्ध्योपासनाद्या इष्टापूर्ताद्याश्च। स्वैराचाराणां पांशुलत्वादीनां परद्रव्यापहारादीनां वा प्रवर्तनं प्रसरणं स्वेच्छाचारेषु प्रवृत्तिर्वा, तस्य कर्तनं विनाशनम्। तेजः प्रकाशः प्रभावश्च। विभां प्रभां करोति व्यनक्तीति सूर्यो विभायाः कान्तेराकर आश्रय इति राजा च विभाकरः।

प्रकृतोदाहृतौ ध्वनिशङ्कां निरस्यन् लक्षणनुगममाह—अत्राभिधाया अनियन्त्रणादिति। निद्रादिपदेऽभिधैव व्याप्रियते न तु लक्षणेति। क्रियादिपदोच्चयमेवाभिधानीयमिति प्रकरणादिविरहादनियमेनेत्यर्थः।

### दर्पणः

अथ श्लेषः। संप्रत्यर्थालङ्कारप्रस्तावादर्थश्लेषं लक्षयति श्लेष इति। एकस्मिन् वाक्ये मिलितानामेव पदानां तथाविधार्थद्वयावबोधनसामर्थ्यं न तु कस्यचित्पदस्य विशिष्टा शक्तिः सर्वेषां पदानां परिवृत्तिसहत्वादित्यर्थः। एकानु[र्थ] प्रतिपात्र [द] कानामित्यनेन येन ध्वस्तमनोभवेनेत्यादिव्यवच्छेदः। अनेकोऽर्थः प्रकरणादिसाचिव्याभावादनिर्द्धारितरूपः।

उदयं प्राच्यां प्रथमदर्शनं उपचयं च दिशां मालिन्यमन्धकारमयत्वं द्वारचारयोगञ्च निद्रया स्वप्नादिनाऽज्ञानेन च, मुद्रां निमंत्रणं क्रियाः सन्ध्योपासनाद्याः इष्टापूर्ताद्यश्च स्वैराचाराणा पाशुनादीनां[?] परद्रव्यापहारकादीनाञ्च प्रवर्तनं प्रसरणं स्वैराचारेषु प्रवर्तनं प्रवृत्तिश्च। तत् कृन्तनं विनाशनं, तेजः प्रकाशः प्रभावश्च, विभाकरः सूर्यः, विभां प्रभां करोति व्यनक्तीति व्युत्पत्या राजानु [र्थ] विभायाः कान्तेः अकरत्वादाश्रयात्।

### साहित्यचूडामणिः

श्लेष इति। एकस्यार्थस्योक्तौ सामान्यसिद्धायां संयोगादिव्यवस्थापकाभावादुक्तेरनियन्त्रणादनेकार्थस्याभिधानसामर्थ्यम्। आर्थोऽयं श्लेष इत्याह—एकार्थेति। नैवं शाब्दः स हि प्रत्यर्थं शब्दनिवेश इति दर्शने इत्यभाणि। अयं तु शब्दस्यैकस्य बह्वर्थत्वमस्तीति मते। ततश्च जतुकाष्ठन्यायेन शब्दयोः श्लेषः शाब्दः। एकवृन्तव्यवस्थितफलद्वयन्यायादर्थद्वयस्य शब्दे आर्थः। शब्दपरिवृत्त्यसहिष्णुतायां शाब्दः अन्यथा त्वार्थ इति घण्टापथः। तत्रोदात्तादिविरिब्धभेदात् प्रयत्नविशेषाच्च। शब्दान्यथाभावे शाब्दः, यत्र प्रायेण पदभङ्गः। विरिब्धैक्ये प्रयत्नाभेदे चार्थः। यत्र न पदभङ्गः इत्यौद्भटी मर्यादा प्रागेव प्रत्याख्याता।

उदयमिति। अत्रोदयानादीनां पदानां परिवृत्तिसहिष्णुत्वं स्पष्टम्।

नन्वत्रैकोऽर्थो वाच्यः अन्यो व्यङ्ग्योऽस्त्विति चेदाह—अभिधाया इति।

अर्कभूपाविति। न खलु भूपस्य वाच्यत्वमर्कस्य व्यङ्ग्यत्वमिति वैषम्यम्, अर्थद्वयस्यान्वितत्वेन वक्तव्यत्वात्।

### सम्प्रदायप्रकाशिनी

श्लेषः स इत्यादि। एकस्मिन् वाक्ये क्रियाकारकसङ्घाते।

व्याचष्टे—एकार्थेति। एकार्थप्रतिपादकानामिति शब्दानामश्लिष्टतोक्ता। उदयमिति। अयते गच्छति। विभाकर इति राजा रविश्च। अत्रोदयादीनामर्थानां पर्यायपरिवर्तनेऽपि नार्थश्लेषहानिः। नन्वर्कस्य व्यङ्गताप्रतीतेः कथं श्लेष इत्यत आह—अत्राभिधाया इत्यादि। उदयवर्णनस्यापि प्राकरणिकत्वविवक्षणादिनियन्त्रणमभिधायाः।

### मधुमती

श्लेषः इति। तथा च एकस्मिन् वाक्ये न तु पदे। एवं च समानासमानाकारयोः शब्दयोः यत्र श्लेषः तत्र नायम्। किन्तुश्लिष्टविशेषण वाचकपदमहिम्ना श्लिष्टैर्विशेषणैरेव यत्र परार्थप्रतीतिः स अर्थश्लेषस्य विषयः शब्दपरिवृत्तिसहत्वात्, अर्थान्वयव्यतिरेकित्वाञ्च। अत एव समासोक्तेरस्य भेदः, तत्र विशेष्यस्याप्युपादानात्।

उदाहरणे श्लेषताप्रयोजकं रूपमाह—अत्राभिधाया इति । एवं च—

'रुधिरविसरप्रसाधित-

करवालकरालरुचिरभुजपरिघः ।'

इत्यादावपि अभिधानियमने अर्थश्लेषत्वमेवेति द्रष्टव्यम् । यद्यपि प्रकृते विभाकरपदे शब्दश्लेषत्वमप्यस्ति, तथापि—'भूम्ना व्यपदेशः' इति न्यायेन अर्थश्लेषत्वमुक्तम् । इति श्लेषः ।

परोक्तिरिति । अप्रस्तुतप्रतिपादनमित्यर्थः । भेदकैः विशेषणैः । श्लेष्टैः उभयान्वययोग्यैः । भेदकैरिति बहुवचनं अविवक्षितम् । तेन प्रस्तुतवर्णनेन अप्रस्तुतप्रतिपादनं समासोक्तिः, अप्रस्तुतवर्णनेन प्रस्तुतप्रतिपादनं तु अप्रस्तुतप्रशंसा इति द्रष्टव्यम् । अन्वर्थतामाह—समासेनेति ।

## विस्तारिका

श्लेषं लक्षयति—श्लेष इति । यत्र शक्यभेदेन शब्दभेदस्तत्र शब्दश्लेषः । यथा दर्शिते नानार्थे श्लिष्टे च । यत्रैकार्थः शक्योऽपरो निरूढलक्षणया प्रतिपाद्यस्तत्रार्थश्लेषः, वाच्याभेदेन शब्दभेदाभावात् स्वरूपभेदापह्नवस्यैव श्लेषत्वात् । एकस्मिन् वाक्ये वाच्यैकत्वेनाभिन्नस्वरूपेऽनेकार्थता अनेकवैशिष्ट्यबोधकता । उपस्थितिविषयस्यानेकस्यान्वयप्रवेशे श्लेषाभासत्वात् । अत एव 'वाक्ये एकस्मिन्' इत्युक्तम् । अर्थयोः श्लेषणादेकप्रतीत्याश्रयणात् श्लेषः ।

केचित्तु-एकस्मिन् वाक्ये पदानां संवलनावसर एवानेका प्रतीतिः, न तु यस्य कस्यचित् पदस्य विशिष्टा शक्तिः, सर्वेषामेव पदानां परिवृत्तिसहत्वादिति दीपिकाकृतः प्रकाशितवन्तः । तथाहि—अर्थद्वयप्रतीतौ प्रत्येकपदासामर्थ्ये वाक्यस्याप्यसामर्थ्यप्रसङ्गात्, प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वात् ।

एकार्थप्रतिपादकानामिति । एकार्थस्य शक्त्या बोधकानामित्यर्थः । तेन शब्दाभेदसूचनम् ।

यच्च तैरुक्तम्-एकार्थप्रतिपादकानामिति । प्रकरणादिसाचिव्ये सत्येकार्थप्रतिपादनयोग्यानामित्यर्थ इति, तदपि प्रलपितम्; पकरणाद्यवतारस्थलीयैकार्थप्रतिपादकत्वानुवादस्य प्रकृतानुपयुक्तत्वात् । वस्तुतस्तु वाक्य एकस्मिन्नित्यस्यैव विवरणादिति ग्रन्थस्य पूर्वापरमननुसन्धानाट्टीकाः कुर्वन्तीति मनसि खेदः ।

उदयमिति । उदयं पूर्वाचलाधिरोहणं सम्पदं च । दिशो मालिन्यमन्धकारसम्बन्धात्, दिश्यानां जनानां दारिद्र्येण कुवेशतां च । निद्रा मनः सम्मीलनं निरुत्साहता च । क्रिया गमनादिकं सदाचारश्च । स्वैराचारोऽभिसारादिर्वेदानुक्तस्वेच्छाचरणं च । बत बतेति हर्षातिशये । तेजसां रश्मीनां मनागपि स्वावमानानात् क्रमाणां च । विभाकरः सूर्यः । राज्याभिषेकसमये पुरोहितादिभिस्तत्तुल्यत्वेन प्रतापरुद्रादिवत् सङ्केतितो नृपतिविशेषश्च ।

अत्र सूर्यानुकूला अर्था वाच्याः, नृपत्यनुकूलाश्च लक्ष्या एवेत्यर्थः । अत्रेत्यादि । अर्थान्तरस्य व्यङ्ग्यतां निरस्यति—अभिधाया इत्यादि । अनियन्त्रणादिति । प्रकरणाद्यभावेनेत्यर्थः । वाच्याविति । निरूढलक्षणाया अपि शक्तितुल्यात्वात् समकालं प्रतीयमानावित्यर्थः ।

ननु विभाकरपदस्य नृपतौ सङ्केतितस्य कथं लाक्षणिकत्वमिति चेत्, न, शक्तिकल्पने गौरवात्। एकादशदिवसीयपितृकृतसंज्ञायामेव शक्तेरभ्युपगमात् 'एकादशेऽहनि पिता नाम कुर्यात्' इति विध्यनुमितेश्वरेच्छाविषयत्वादिति नवीनः पन्थाः।

## सारबोधिनी

श्लेष इति। यत्र शक्यभेदेन शब्दभेदस्तत्र शब्दश्लेषः। यथा दर्शिते नानार्थश्लेषे। यत्रैकार्थः शक्योऽपरार्थो निरूढलक्षणाप्रतिपाद्यस्तत्रार्थश्लेषः। वाच्यभेदेन शब्दभेदाभावात्। शब्दश्लेषवत् स्वरूपापह्नुवरूपस्य श्लेषस्येहासम्भवात्। किन्त्वर्थयोः श्लेषणादेकप्रतीत्याश्रयणात् श्लेषः। तदाह एकस्मिन्निति। एकस्मिन् वाक्ये वाच्यैकत्वेनाभिन्नस्वरूपे अनेकार्थता। शक्त्या निरूढलक्षणया च अनेकवैशिष्ट्यबोधकता। ननु तर्हि पूर्वोक्तं श्वेतो धावति इत्यत्र शब्दश्लेषत्वं विरुध्यत इति चेन्न। तत्प्राचीनप्रणयादुक्तम्। वस्तुतस्तु तत्राप्यर्थश्लेषत्वमेव। उदयमिति। उदयं पूर्वाचलाधिरोहणम्। यद्वा उदयम् पूर्वाचलम् सम्पदम् च। दिशो मालिन्यमन्धकारम् सम्बन्धात् दिश्यानां जनानां दारिद्र्येण कुवेषता च। निद्रा मनः संमीलनम् निरुत्साहता च। क्रियां गमनादिकां सदाचारञ्च। स्वैराचारोऽभिसारादि वेदानुल्लङ्घ्य स्वेच्छयाऽऽचरणं च। तेजसां रश्मीनां पुञ्जः, मनागपि स्वावमानताक्षमता च। विभाकरः सूर्यः, राज्याभिषेककाले पुरोहितादिभिस्तत्तुल्यत्वेन प्रतापरुद्रादिवत् सङ्केतितो नृपतिविशेषश्च। न च तत्र शक्तिरेव, तत्कल्पने मानाभावात्। अत्र सूर्यानुकूला अर्था वाच्याः, नृपानुकूलाश्च लक्ष्या इत्यर्थः। अर्थान्तरस्य व्यङ्ग्यतां निरस्यति अभिधाया इति। वाच्याविति। शक्तितुल्यत्वात् समकाले प्रतीयमानावित्यर्थः। अयं पारिभाषिकोऽर्थश्लेषः। श्लेषनिरूपणन्तु वाच्यभेदेन भिन्ना यदित्यनेन शब्दार्थभेदेन कृतमेव।

## काव्यप्रदीपः

**श्लेषः स वाक्य एकस्मिन्यत्रानेकार्थता भवेत्॥ १०॥**

परिवृत्तिसहानामेव शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेषः। यथा—

**'उदयमयते दिङ्मालिन्यं निराकुरुतेतरां**
**नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः।**

**रचयति तथा स्वैराचारप्रवर्तनखण्डनं**
**बत बत लसत्तेजःपुञ्जो विभाति विभाकरः॥'**

अत्र विभाकरनामा राजविशेषो मार्तण्डश्चेत्युभयार्थान्युदयमयते इत्यादीनि वाक्यानि। न चायं द्वितीयार्थस्य ध्वनिरेवेति शङ्कनीयम्। संयोगादीनामभावेनाभिधाया अनियन्त्रणाद्द्वयोरपि वाच्यत्वात्।

## काव्यप्रकाशखण्डनम्

**श्लेषः स वाक्ये एकस्मिन् यत्रानेकार्थता भवेत्॥** (का० ९६, उ०)

यत्र शक्यभेदेन शब्दभेदः, तत्र शब्दश्लेषः। यथादर्शिते नानार्थे श्लिष्टे च। यत्रैकार्थः[शक्यो] अपरोऽर्थो निरूढलक्षणया प्राप्यते तत्रार्थश्लेषः। यथा—

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति नलिनी (निधनं) निद्रामुद्रां प्रवर्त्तयति क्रियाः। (यां) ।
रचयतितरां स्वैराचारप्रवर्त्तनकर्त्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥

विभाकरः सूर्यः राज्याभिषेककाले पुरोहितादिभिः तत्तुल्यत्वेन प्रतापरुद्रादिवत् संकेतितो नृपविशेषश्च। उदयं पूर्वाचलं संपदं च। दिशो मालिन्यं अन्धकारः दिश्यानां जनानां कुवेषत्वं वा। निद्रा मनःसंमीलनं निरुत्साहता [प० ४९. २] च। क्रियां गमनादिकां सदाचारं च। स्वैराचारोऽभिसारादि वेदानुल्लङ्घ्य स्वेच्छाचरणं च। तेजसां रश्मीनां पुञ्जः, मनागपि स्वावमाननाक्षमता च।

## आदर्शः

अर्थश्लेषालङ्कारमाह—श्लेष इति। एकस्मिन्नर्थे वाच्ये सति लक्षणावशाद् यत्रानेकार्थतेत्यर्थः। वाच्यार्थ एकस्मिन् विशेष्ये लक्ष्यार्थोऽन्यस्मिन् विशेष्येऽन्वेतीत्यर्थः। यद्यपि 'स्तोकेनोन्नतिमायाति' इत्येवास्योदाहरणं तथापि सौलभ्यादन्यदप्याह—उदयमिति। विभाकरनामा राजा सूर्यश्च विभाति। उभयविशेषणमाह—लसत्तेजःपुञ्जः। तेजः शौर्यं ज्योतिश्च, उदयमुन्नतिमुदयगिरिञ्च, दिश्यानां दिशाञ्च मालिन्यं दीनतां तमोमालिन्यञ्च। निद्रेति, मुद्रा परिपाटी। निष्पन्दतारूपां परिपाटीं निद्रया चक्षुर्मुद्रणञ्च। क्रियाः स्वजातिव्यवहारान् आलोकसाध्यसकलक्रियाश्च, स्वैराचारः सकलशास्त्रलङ्घनेनाचारः चौराभिसारिकाचारश्च। अत्र विशेष्यद्वये वाच्यलक्ष्या अर्थाः स्वयमध्यवसेयाः।

ननु प्रकरणाद् रविरूपार्थान्वयिष्वर्थेष्ववगतेष्वर्थान्तरे व्यञ्जनैव, तथा च उपमा ध्वनिरर्थान्तरबाधाभावो वेत्यत आह—अत्रेति।

## सुधासागरः

एकार्थेत्यादि। परिवृत्तिसहानामेव शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेष इत्यर्थः। यथा—उदयमेति।

उदयं पूर्वाचलं पक्षे सम्पद्वृद्धिमयते प्राप्नोति, दिङ्मालिन्यम्, दिशां दिश्यजनानामन्धकारवशात् मालिन्यं स्वरूपावरणम्, पक्षे दारिद्र्यवशात्कुवेषत्वं निराकुरुतेतरामतिशयेन दूरीकरोति, निद्रामुद्रां मनः सम्मीलनं पक्षे निरुत्साहत्वं निधनं नयति विनाशयति, क्रियाः गमनागमनादिकाः पक्षे सदाचारविशेषाः प्रवर्त्तयति कारयति। स्वैराचारोऽभिसरादिः पक्षे वेदानुल्लङ्घ्य स्वेच्छाचरणं तत्र यत्प्रवर्तनमुच्छेदं रचयतितरामतिशयेन सम्पादयति, बत बतेति हर्षादिशये, लसत्तेजसां शोभमानरश्मीनां पक्षे लसत्तेजसो मनागपि स्वावमाननाक्षमतायाः पुञ्जः समूहो

विभाकरः सूर्यः राज्याभिषेककाले पुरोहितादिभिस्तत्तुल्यत्वेन प्रतापरुद्रादिवत्सङ्केतितो नृपति विशेषश्च विभाति विशेषेण दीप्यते इत्यर्थः। हरिणी छन्दः। 'रसयुगहयैन्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात्।

अत्राभिधाया इत्यादि। अत्र विभाकरनामा राजविशेषो मार्त्तण्डश्चेत्युभयार्थकानि 'उदयमयत' इत्यादीनि वाक्यानि। न चायं द्वितीयार्थस्य ध्वनिरेवेति शङ्कनीयम्, संयोगादीनामभावेनाभिधायाअनियन्त्रणादद्वयोरपि वाच्यत्वादिति भावः।

## (सू० १४८) परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात् न तु विशेष्यस्य सामर्थ्यादपि यत् अप्रकृतस्यार्थस्याभिधानम् सा समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः। उदाहरणम्—

**लहिऊण तुज्झ बाहूप्फंसं जीए स को वि उल्लासो।**

**जअलच्छी तुह विरहे ण हुज्जला दुब्बला णं सा॥ ४३४॥**

**अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति॥**

---

### सङ्केतः

परोक्तिरिति। श्लिष्टैः श्लेषवद्भिः समानैः भेदकैः उपमेयविशेषणैः परस्य उपमानस्य उक्तिः समासोक्तिः। विशेष्यस्य उपमेयस्य। तस्य श्लिष्टत्वे श्लेषप्राप्तेः।

लहिऊणेति। तव विरहेण हेतुना सा दुर्बला भूयात्। णं नन्वर्थे अत्र विशेषणानि कान्तया सह तुल्यानि। न तु विशेष्यं जयलक्ष्मीः इति रूपम्। अस्यां विशेषणसाम्यात् अप्रस्तुतया प्रस्तुतविशेषकत्वेन प्रतीतिः। अतो विशेषकत्वात् व्यवहारसमारोपः। रूपसमारोपे तु रूपकं स्यात्।

**'उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिः।'**

इति तु वामनः। तन्मते अप्रस्तुतप्रशंसा अन्यथा ज्ञेया॥ इति समासोक्तिः॥

### सङ्केतः (रुय्यकः)

श्लेष इति—विशेष्यपदस्यापि श्लिष्टता। समासोक्तिरिति समानविशेषणत्वम्। सादृश्यमात्रमिति—प्रतीयमानेनापि केनचिद्धर्मेणानुगुण्यम्।

पुंस्त्वं पुरुषस्य धर्मः, तस्यैव चारुत्वञ्च। अधः [पातालं, निकृष्टा गतिश्च] प्रणयनं याच्ञानिमित्तम्। न महानपि स्वल्पोऽपि। पुरुषोत्तमो विष्णुः, सत्पुरुषश्च। एष न शब्दश्लेषः, अभिधाया एकत्र नियमान्नियन्त्रित्वात्। नापि विशेष्यपदस्य श्लिष्टत्वे शब्दशक्तिमूलो ध्वनिः, भगवद्वृत्तान्तस्यात्र वाच्यत्वात्, तस्य चाप्रक्रान्तत्वात्। प्रस्तुतार्थमुखेन यत्राप्रस्तुतोऽर्थो विशेष्यद्वारेणवगम्यते स तस्य ध्वनेर्विषय इत्युक्तम्। सत्पुरुषचरितमेवात्र वाच्यं प्रस्तुतञ्च, तन्मुखेन चेतरार्थप्रतिपत्तिः। ततः शब्दशक्त्युद्भव एवायमिति चेत्, न; तस्य वाच्यत्वासम्भवात्। न ह्युत्कृष्टतमस्यापि पुरुषस्य सत्यत एवास्ति शक्तिर्विश्वमभ्युद्धर्त्तुम्, आक्षिप्यमाणस्य तु तस्य गुणस्य गुणवृत्त्या

तद्वर्णनमविरुद्धं गुणभूतत्वादित्यप्रस्तुतप्रशंसैवैषा। पादा रश्मयः, पादौ चरणौ। जडधामता शीतलतेजस्त्वं, मूर्खास्पदता च।

आहो इति यद्यर्थे। कल्पः प्रौढिः। रसनाविपर्ययः असत्यभाषित्वमपि। चापलं शब्दोऽश्रोतव्यश्रवण-मपि। मदो गर्वोऽपि। शून्यकरत्वमदातृत्वमपि।

**बालचित्तानुरञ्जनी**

समासोक्तिं लक्षयति परोक्तिरिति। श्लिष्टैः समानैर्भेदकैर्विशेषणैः परस्याप्रस्तुतस्य उक्तिः प्रतिपादनम् समासोक्तिरित्यर्थः। व्याकरोति प्रकृतेति। विशेष्यस्योपमेयस्य। उदाहरति लहीति। हे राजन्! तुह तव। बाहुफ्फंसम् बाहुस्पर्शम्। लहिऊण लब्ध्वा जीए यस्याः। स कोवि उल्लासो स कोऽप्युल्लासः। सा जयलच्छी जयलक्ष्मीः। तुह तव विरहे। ण होतु न भवेत्। सा दुर्बला। ननु बाहुस्पर्शेन पाणिपीडनेन वा दुर्बला निष्प्रभा कृशा च इत्येतानि विशेषणानि कान्तया सहमानानि जयलक्ष्मीरिति विशेष्यं तु न सममित्याह अत्रेति।

**काव्यादर्शः**

अथ श्लेषप्रस्तावे प्रस्तुतस्य वाच्यत्वेऽप्रस्तुतस्य गम्यत्वे समासोक्तिमाह—परोक्तिरिति। श्लिष्टैः श्लेषवद्भिः समानैर्भेदकैरुपमेयविशेषणैः परस्योपमानस्य या उक्तिः प्रतीयमानता सार्थद्वयस्य उपमानोपमेयलक्ष-णस्य कथनात् समासोक्तिः। विशेष्यस्यापि तु श्लिष्टत्वे श्लेष एव। विशेषणसाम्याच्च प्रतीयमानमप्रस्तुतं प्रस्तुतविशेषकत्वेन प्रतीयते, विशेषकत्वाच्च व्यवहारसमारोपः। रूपसमारोपे तु रूपकमेव। 'लहिऊणे' ति। 'यस्याः स कोऽप्युत्कृष्ट उल्लासः सा तव विरहेण हेतुना दुर्बला भूयात्'। 'णं' नन्वर्थे अत्र जयलक्ष्म्या उपमेयाया बाहुस्पर्शादिश्लिष्टविशेषणसाम्याद् अप्रकृताया उपमानरूपायाः कान्तायाः प्रतीतिरित्याह—अत्र 'जयलक्ष्मी' इति। विशेषणानि तु कान्तया सह समानानि। यथा वा—

**उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।**
**यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम्॥**

'उपोढो धृतो रागः सांध्योऽरुणिमा प्रेमचयेन'। 'निशामुखम्' इत्यत्र समासगताया अपि निशायास्तच्छ-ब्देन परामर्शो बुद्धौ अध्यवसानात्। अत्र निशा—शशिनोरुपमेययोरुपोढरागादिश्लिष्टविशेषणमाहात्म्याद् नाय-कयोरुपमानयोर्व्यवहारप्रतीतिः। वामनोक्ता तु उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिरप्रस्तुतप्रशंसैव।

**विवेकः**

परोक्तिरिति—परोक्तिरिति स्वरूपं भेदकैः श्लिष्टैरिति हेतुः, समासोक्तिरिति नाम। नन्वेवं श्लेषता प्राप्तेत्याह—न तु विशेष्येति। विशेषणसाम्यवशाच्चात्र प्रतीयमानमप्रस्तुतं प्रस्तुतावच्छेदकत्वेन प्रतीयते। अवच्छे-दकत्वाच्च व्यवहारसमारोपो न रूपसमारोपः। रूपसमारोपेऽवच्छेदितत्वेन प्रकृतस्य तद्रूपरूपित्वाद्रूपकमेव। अन्वर्थतामस्य दर्शयति समासेनेत्यादि।

"लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः। जयलक्ष्मीस्तव विरहे न भवतु सा दुर्बला ननु? सा मा ॥ 'मा' शब्दस्त्वत्र दौर्बल्यस्य विप्रतिपत्तिं व्यनक्ति।" (रु. स. ६३ पृ:)। भवतीत्यपेक्षणीयम्। अत्र विशेष्यपदं केवलं, प्रस्तुतार्थाभिधायि विशेषणन्तु जयलक्ष्म्याः कान्तायाश्च साधारणमिति जयलक्ष्म्याः कान्ताव्यवहारप्रतीतिः। तत्र च कान्तैकगतदौर्बल्यादिधर्मसमारोपः कारणम्, अन्यथा विशेषणसाम्यमात्रेण नियतस्य कान्ताव्यवहारस्य प्रतीतेः। दौर्बल्यञ्च प्रकृत उपचरितं ज्ञेयम्। विशेषणसाम्यञ्च यथा साधारण्येन तथा क्वचिदौपम्यगर्भत्वेन श्लिष्टता च सम्भवति। तत्रौपम्यगर्भत्वेन यथा—दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी। केशपाशालिवृन्देन सुभगा हरिणेक्षणा ॥ (अ. स. ११० पृ:)। अत्र दन्तप्रभाः पुष्पणीवेत्युपमागर्भे समासे कृते दन्तप्रभावद्धवलैः पुष्पैश्चितेति, पाणिपल्लवशोभिनीति पाणयः पल्लवानीति समासान्तराश्रयणेन समानविशेषणत्वभावादपि समानविशेषणमाहात्म्याल्लताव्यवहारप्रतीतिरितीयमुपमाऽनुप्राणिता समासोक्तिरिति व्याख्यानमसत्। श्लिष्टतया यथा—उपोढ़ रागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्। यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥ (जाम्ब. वि.; ध्व. आ १/४) रागः सन्ध्याऽरुणिमा प्रेम च। तारका नेत्रविभागेऽपि। मुखं प्रारम्भवक्त्र्योः। तयेति रात्रिपक्षे कारणपदं नायिकापक्षे तु कर्तृपदम्। गलितं पतितक्षीणयोः। पुरः पूर्वस्यां दिशि, अग्रे च। रागाद्रक्तत्वात् सन्ध्याकृतादनन्तरं प्रेमरूपाच्च हेतोः। तदिह श्लिष्टविशेषणमहिम्ना निशाशशिनोर्नायकव्यवहारप्रतीतिः, अपरित्यक्तस्वरूपयोर्निशशशिनोर्नायकतयाऽऽख्यविशिष्टधर्मविशिष्टयोः प्रतीतेः। अत एवात्र निशाशशिनोर्वर्णनारूपस्य वाच्यस्यैव प्राधान्यम्, नायककेलिलक्षणस्त्वर्थः प्रतीयमानोऽप्यस्याङ्गमिति न ध्वनिव्यवहारः। "एवम्—अनुरागवती सन्ध्या दिवसस्तत्पुरः सरः। अहो दैवगतिश्चित्रा तथापि न समागमः ॥ इत्यत्रापि न ध्वनित्वम्। भामहाभिप्रायेणेयं समासोक्तिः। वामनाभिप्रायेण त्वाक्षेपः। नायिकानायकयोरुपमानभूतयोराक्षेपतः प्रतिपत्तेः" ध्व. आ.लो. १/४)।

## दीपिका

प्रकृतार्थः प्रकरणादिनिर्धारितोऽर्थः। श्लिष्टं साधारणं यद्विशेषणं क्रियागुणादिबोधकपदं तस्य माहात्म्यात् सामर्थ्यात्, न तु विशेष्यस्य धर्मिवाचकस्य सामर्थ्यच्छक्तेरपीति ध्वनिश्लेषव्यवच्छेदः। अप्रकृतस्याप्रस्तुतस्यावर्णनीयजयलक्ष्म्यादिगततया प्रतीयमाननायिकादिव्यवहारस्याभिधानं प्रत्यायनं व्यञ्जनमिति यावत्।

ष्फंसं संस्पर्शम्। उदाहृतौ लक्षणयोगमाह—अत्रेति। जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति, तदर्थस्य तु कान्ताव्यवहारतया प्रतीतिरस्येवेति भावः। अत्रालौकिके लौकिकव्यवहारसमारोपः।

अलौकिके शास्त्रीयव्यवहारसमारोपो यथा मम—

**'यं स्वाश्रयान्तमपि मातुमक्नुवन्तः सन्तोऽपि सन्ततिजुषस्तमसा भवन्ति।**
**तत्त्वैकसंख्यफलकल्पमहीरुहाय तस्मै नमो भगवते मकरध्वजाय ॥'**

अत्र मकरध्वजे लौकिके सकलसत्त्वमहाशयतयोपनिषत्सिद्धपरमात्मतत्त्वव्यवहारप्रतीतिः।

शास्त्रीये लौकिकव्यवहारसमारोपो यथा मम—

'तत्तद्रसामृतमयान् विषयान् विहाय मुग्धश्चिरं श्रयति मोक्षमरुस्लीं यः। तस्यात्मनः कथमिवास्तु गुणे विशेषो भोगत्ययेन विफला विभुताऽपि यस्य।'

अत्रोपलावस्थतया वैशेषिकदर्शने तदसन्निहितवस्तुज्ञानम्।

शास्त्रीये शास्त्रीयव्यवहारसमारोपो यथा मम—

**'मेघसम्भृतवायव्ययन्त्रसञ्चारयोगतः।**
**नाड्यो गर्भमधुः सौर्यो दिव्यमम्भो रसात्मकम्।'**

अत्र मेघलग्नवाय्वभ्रयोगिन्यः सूर्यमरीचयो भूम्यादिगतं जलमादाय गर्भं गृह्णन्तीति पुराणादिगम्ये वस्तुनि कामशास्त्रादिगर्भग्रहणप्रकारव्यवहृतिः। अस्याश्च प्रकृतादिवाप्रकृतादप्यत्र कृतप्रतीतिर्विषयः।

परोक्तिरिति सामान्यनिर्देशाद् यथा मम—

**सम्प्राप्तः सकलाङ्गनिर्वृतिकरीं निद्रामभीकश्चिरं**
**संतृप्तो मधुनः सुखेन रजनीमस्मिन्ननैषीर्ननु।**
**तत् किं पङ्कजतल्पमल्पविदलत्वत्रान्तरोद् घाटना**
**दृष्टाऽन्तर्विवरं मनाङ् मधुप रे निर्भिद्य निर्गच्छसि॥**

अत्र महानुभावं कञ्चिदाश्रित्य निस्तीर्णविपदस्तद्विपत्तौ च निर्गच्छतः कृतघ्नस्य सम्बोधने प्रकृतेऽप्रकृत-भ्रमरवृत्तान्तेन कृघ्नवृत्तान्ताक्षेपः। ग्रन्थान्तरदिशा चास्य वैचित्र्यान्तरविस्तरं भीत्याऽनुक्तमपि स्वयं मृग्यम्।

### दर्पणः

परस्याप्रकृतस्य उक्ताविति व्यञ्जनं, भेदकैर्गुणक्रियादिरूपविशेषणैर्न तु विशेष्येनापि एवञ्च ध्वनिश्लेष-व्यवच्छेदः। एतेदव विवृणोति, प्रकृतेति। अभिधानं अभिव्यञ्जनम्। न हि हणोति [लहि ऊक्ष]

**नववातरबाहुस्पर्शं यस्याः स कोऽप्युल्लासः।**
**जयलक्ष्मीस्तव विरहे भवतु सा दुर्बला ननु सा॥**

अत्र प्रकृतस्य राज्ञो नायकत्वं, जयलक्ष्म्याश्च नायिकात्वं विशेषणपदमात्रसामर्थ्यादवसेयम्।

### साहित्यचूडामणिः

समासोक्तिमाह—परोक्तिरिति। परमित्यप्रकृतं तस्योक्तिः विशेषणैः श्लेषशालिभिः। तानि हि निस-र्गात् प्रकृतस्यार्थस्याभिधाने प्रगल्भानि। नत्वित्यनेन श्लेषाद् व्यवच्छेदः निर्वक्ति समासेनेति। तथोक्तं—

**यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानैर्विशेषणैः।**
**सा समासोक्तिरुदिता संक्षिप्तार्थतया यथा॥ इति।**

विशेषणसाधारण्यवशेन हि प्रतिष्ठमानमप्रकृतं प्रस्तुतावच्छेदकत्वेन प्रवर्तते। यथाचोक्तं—

**प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः ।**
**अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता ।। इति ।**

यच्च सूत्रं "विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्ति"रिति (अलङ्कारसू० ३१)। विशेष्यस्यापि साम्ये श्लेषत्वप्राप्तेः । यच्च वामनः—"अनुक्तौ समासोक्तिरि (४-३-३) ति । अनुक्तिरुपमेयस्य अस्यां च व्यवहारसमारोपः प्रायेण । न रूपसमारोपः, यतो न रूपकत्वप्रसङ्गः ।

लहिऊणेति ।

**लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।**
**जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा ।। इति ।**

अत्र बाहुस्पर्शलाभादीनां विशेषणानां नायिकावस्थाविशेषद्योतकत्वादलङ्कारोत्थानमित्याह—जयलक्ष्मीशब्दस्येति । अन्येषां प्रकृतार्थस्येतरस्य च साधारणत्वात् । इयं च लौकिके लौकिकस्य शास्त्रीये शास्त्रीयस्य लौकिके शास्त्रीयस्य शास्त्रीये च लौकिकस्य व्यवहारः समारोप्यते इति चातुर्विध्यमुखादानन्त्यमध्यास्ते । तत्राद्यामत्रोदाहरतोऽन्या बहिरूहनीया इति संक्षेपविवक्षा ग्रन्थकारस्य ।

### सम्प्रदायप्रकाशिनी

परोक्तिरित्यादि । परोक्तिप्राकरणिकप्रतिपादनम् । भेदकैर्विशेषणैः । व्याचष्टे—प्रकृतार्थेत्यादि । प्रकृतार्थप्रतिपादनपरे वाक्ये विशेष्यांशनैरपेक्ष्येण श्लिष्टविशेषणमाहात्म्याद् यदर्थान्तरप्रतिपादनं सा संक्षेपेणोक्तेः समासोक्तिः ।

ळहिऊणेति ।

**"लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।**
**जयलक्ष्मीस्तव विरहेण भवतु मा दुर्बला ननु सा ।।"**

बाहुस्पर्शो दोस्सन्निधिः पाणिपीडनं च । उल्लासोऽभिवृद्धिर्हर्षश्च । दुर्बला निस्थैर्या कृशा च ।

अत्र विशेषणेषु तु श्लिष्टतेत्याह—अत्र जयलक्ष्मीत्यादि ।

### मधुमती

लहिऊण इति । इयं च समरे पतितं स्वामिनमवेत्य वीरपत्न्याः उक्तिः । अत्र समासोक्तित्वमुपपादयति अत्रेति । श्लिष्टविशेषणमात्रादेवात्र परार्थप्रतीतिरित्यर्थः ।।

**अस्याश्च बहवो भेदाः दृश्यन्ते कविवर्त्मसु ।**
**ते ग्रन्थविस्तरभयान्नेह सर्वे प्रदर्शिताः ।।**

इति समासोक्तिः ।

## विस्तारिका

समासोक्तिं लक्षयति—परोक्तिरित्यादि। भेदयन्ति व्यवच्छेदयन्ति भेदकानि विशेषणानि। परोऽप्रस्तुतः। श्लिष्टैर्विशेषणैरप्रकृतस्योक्तिरित्यर्थः। श्लिष्टैः प्रकृताप्रकृतसाधारणैर्विशेषणैः, न तु विशेष्यवाचकशब्दैः। तद्वक्ष्यति—श्लिष्टताविशेषणमाहात्म्यात्, न तु विशेष्यस्य सामर्थ्यादपीति। तेनोपमाध्वनौ नाति प्रसङ्गः। तत्र विशेष्यद्वयस्य तद्वाचकशब्देनैव प्रतिपादनात्। प्रकृतार्थः प्रकरणावतारेण विशेषस्य धर्मवाचकपदस्य अप्रकृतजयलक्ष्म्यादिवाचकतया प्रतीयमानस्य नायकादिव्यवहारस्यापिधानं व्यञ्जनम्, अभिधाया बाधात्।

लहिदुणेति।

**लब्धा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः।**
**जयलक्ष्मीस्तव विरहे न खलूज्वला दुर्बला ननु सा॥**

अत्रेत्यादि। केवलमेवार्थे। जयलक्ष्मीशब्दस्य धर्मिबोधकस्यैव कान्ततबोधकत्वं नास्ति, तस्य जयश्रीमात्रबोधनसामर्थ्यात्। विशेषणात्तु लहिदुणेत्यादिपदानमुभयगतबाहुस्पर्शप्राप्त्यादिबोधकत्वमस्त्येवेत्यर्थः।

अत्र कान्ताव्यवहारस्य जयलक्ष्मीव्यवहारे समारोप्यमाणस्य चमत्कारकता। न च स्त्रीप्रत्ययेन कान्ताप्रत्यायनमस्त्विति वाच्यम्, प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन जयलक्ष्मीगतस्त्रीत्वमात्रप्रत्यायनात्।

अत्र लक्ष्ये लौकिके लौकिकव्यवहारसमारोपः, क्वचन शास्त्रीयव्यवहारसमावेशः। यथा—

**यं स्वात्मसन्तमपि मातुमशक्नुवन्तः सन्तोऽपि सन्ततिवशास्तमसा भवन्ति।**
**अद्वैतसौख्यफलकल्पमहीरुहाय तस्मै नमो भगवते मकरध्वजाय॥**

इत्यत्र लौकिके मकरध्वजसुखे वेदान्तसिद्धाद्वैतसुखत्वसमारोपः। शास्त्रीये लौकिकव्यवहारसमारोपो यथा—

**तत्तद्रसामृतमयान् विषयान् विहाय मुग्धश्चिरं श्रयति मोक्षमरुस्थलीं यः।**
**तस्यात्मनः कथमिवास्तु गुणे विशेषो भोगात्ययेन विफला विभुतापि यस्य॥**

इत्यत्रोपलावस्था वैशेषिकदर्शनसिद्धमुक्त्यनुगतत्वेन लौकिकदुर्विदग्धव्यवहारः प्रतीयते।

शास्त्रीयव्यवहारसमारोपो यथा—

**घनसम्भृतवायव्यमन्त्रसंस्कारयोगतः।**
**नाड्यो गर्भमधुः सौर्यो दिव्यमम्भो रसात्मकम्॥**

अत्र मेघलग्नवाताम्बुयोगिन्यः सूर्यमरीचयो भूम्यादिगतं जलमादाय गर्भं दधतीति पुराणदिगम्ये वस्तुनि कामशास्त्रादिप्रसिद्धगर्भग्रहणप्रकारव्यवहृतिः। अस्याश्च प्रकारान्तराणि सम्भवन्त्यपि गौरवभयान्नोक्तानि।

अत्र केचित्, अप्रकृते प्रकृतव्यहारसमारोपोऽप्यस्या विषयः, 'परोक्तिरिति सामान्यनिर्देशात्' इत्याहुः। उदाहृतं च तैर्यथा—

**सम्प्राप्तः सकलाङ्गनिर्वृतिकरीं निद्रामभीकश्चिरं**
**सन्तृप्तो मधुनः सुखेव रजनीमस्मिन्ननैषीर्ननु।**
**तत्किं पङ्कजतल्पमध्यविदलत्पत्रान्तरोद्घाटनाद्**
**दृष्टान्तैर्विवरं मनाङ्मधुप रे निर्भिद्य निर्गच्छसि।। इति।**

अभीको निर्भीकः। मधुन इति तृप्त्यर्थयोगात् करणे षष्ठी। अत्र कञ्चन महापुरुषमाश्रित्य निस्तीर्णविपदस्तद्विपत्तौ च निर्गच्छतः कृतघ्नस्य प्रकृतस्य व्यवहारोऽप्रकृते भ्रमरव्यवहारे समरोप्यत इति, तन्न, नियमतः प्रतियोगिसाकाङ्क्षस्य परपदस्य प्रतियोग्यन्तरविरहेण प्रकृतस्य प्रतियोगित्वे सामान्यवचनत्वाभावाभावादप्रकृतस्यैवाभिधायकत्वात्। उपदर्शितकाव्यं पुनरप्रस्तुत प्रशंसाया विषयः, कृतघ्ने प्रस्तुतेऽप्रस्तुतभ्रमरस्य प्रशंसनात्।

अन्यस्तु—

**समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः।**
**व्यवहारसमारोपः प्रकृतेऽन्यस्य वस्तुनः।।**

इति लक्षितवान्।

तत्र कार्यसाम्ये यथा—

**व्याधूय यद्वसनमम्बुजलोचनाया वक्षोजयोः कनककुम्भविलासभाजोः।**
**पालिङ्गसि प्रसभमङ्गमशेषमस्या धन्यस्त्वमेव मलयाचलगन्धवाह।।**

इत्यत्र गन्धवाहकार्ये कामुककार्यसमारोप इत्युदाजहार च, तदसत्, विशेषणकार्येणैव गतार्थत्वात्। वायुविशेषणस्य वसनं व्याधूय परिरम्भस्य साधारण्यादिति कार्यस्य विशेषणत्वमविद्वांसश्चेतयितव्याः।

तत्र लिङ्गसाम्ये समुदाहृतम्। यथा—

**असमाप्तजिगीषस्य स्त्रीकथा का मनस्विनः।**
**अनाक्रम्य जगत्कृत्स्नं सन्ध्यां न भजते रविः।।**

इत्यत्र स्त्रीपुंल्लिङ्गाभ्यां साधारणाभ्यां रविसन्ध्यावृत्तान्ते नायकव्यवहारसमारोपः, तन्न, अत्र दृष्टान्तत्वेनैव साम्यावगतेः। रविः सन्ध्यामनवरतं ब्रूत इत्युक्तिमात्रेणाप्रतीतेश्चेत्यलं सकलङ्कदर्पणावलोकनेन।

ननु 'नेत्रैरिवोत्पलैः' इत्यादौ साम्प्रदायिकसम्मतैकदेशविवर्त्युपमाविषये समासोक्तिर्भवद्भिरुच्यते, तत्कथं घटताम्, नेत्रादिसदृशोत्पलादीनां सरःश्रीमात्रागामित्वेन विशेषणस्य साधारणत्वाभावात्। अत एव

**ऐन्द्रं धनुः पाण्डुपयोधरेण शरद् दधानार्द्रनखक्षताभम्।**
**प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं चकार।।**

इत्यत्राप्येकदेशविवर्त्युपमैव, नायिकायाः पयोधरेणार्द्रनखक्षतेन्द्रचापधारणात्।

अत्रोच्यते—'नेत्रैरिवोत्पलैः' इत्यादावपि विशेषाणां साधारण्यम्। तथा हि सरः सम्बन्धिषूत्पलादिषु नयनादिसाम्ये भासमाने नायिकासम्बन्धिषु नयनादिष्वपि व्यञ्जनया तत्साम्यं भासते, तुल्यवित्तिवेद्यत्वनियमादित्येकैकपदोपस्थाप्यविशेषणानां साधारण्येन श्लिष्टता, तेनैकपदोपस्थाप्यत्वसम्बन्धेन सरःश्रीणामुत्पलदिमत्त्वे नायिकासम्बन्धिनयनादिमत्त्वसमारोप इति समासोक्तिसाम्राज्यम्। एवम् 'ऐन्द्रं धनुः' इत्यादिष्वपि सङ्गमनीयमिति।

### सारबोधिनी

समासोक्तिं लक्षयति परोक्तिरिति। परोऽप्रकृतः। भेदकैर्विशेषणैः। श्लिष्टैः प्रकृताप्रकृतसाधारणैः। विशेषणं तद्बोधकं पदम्। माहात्यंबोधकत्वेसामर्थ्यम्। न तु विशेष्येति। तेनोपमाध्वनौ नातिव्याप्तिः। तस्य विशेष्यद्वयस्य तद्वाचकशब्देनैव प्रतिपादनात्। अप्रकृतस्य जयलक्ष्म्यादिगततया प्रतीयमानस्य नायिकाव्यवहारस्याभिधानं व्यञ्जनम्। अभिधाया अभावात्।

**लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासाः।**
**जयलक्ष्मीस्तव विरहे न खलूज्जवला दुर्बला ननु सा॥**

अत्रेति। केवलपदमेवार्थे। जयलक्ष्मीशब्दस्यैव कान्तावबोधकत्वं नास्ति, तस्य तत्राशक्तेः। विशेषणानां तु लहिऊणेत्यादिपदानां उभयगतबाहुस्पर्शप्राप्त्यादिबोधकत्वमस्त्येवेत्यर्थः। अत्र कान्ताव्यवहारस्य जयलक्ष्मीव्यवहारे आरोप्यमाणस्य चमत्कारकतेति, "यदुक्तं समासोक्तिसमैर्यत्र काव्यलिङ्गविशेषणैः व्यवहारसमारोपः। प्रकृतेऽन्वयवस्तुना" इति। लिङ्गं स्त्रीपुंलिंगादि। यथा—"स्पृशति तिग्मरुचौ ककुभःकरैरि"त्यादावन्वयस्य कथमेकदेशविवर्तिरूपकाद् भेद इति चेत्, अत्रास्माद्गुरुचरणाः, अनयोरेकतरस्य संसर्गारोपरूपत्वादन्यतरस्य तादात्म्यापरोपत्वात् भेद इत्याहुः।

### काव्यप्रदीपः

**परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः।**

परमप्रकृतम्। भेदकानि विशेषणानि। श्लिष्टान्यनेकार्थानि। तेन प्रकृतार्थविशेषणवाचिमात्रशब्दस्य श्लेषमहिम्ना यत्र प्रकृतार्थकेन वाक्येनाप्रकृतार्थवचनं सा समासोक्तिः संक्षेपेणार्थद्वयोक्तिः। मात्रग्रहणाद्यत्र विशेष्यपदस्यापि श्लिष्टत्वं तव्द्युदासः। तस्य श्लेषत्वात्। उदाहरणम्—

**'लहिऊण तुज्झ बाहुप्फंसं तीए स को वि उल्लासो।**
**जअलच्छी तुह विरहे ण हुज्जला दुव्वला णं सा॥'**

अत्र विशेष्यवाचिनो जयलक्ष्मीशब्दस्य परमप्रकृतार्थकत्वं नास्ति। श्लिष्टत्वं चोपलक्षणम्। औपम्यगर्भादीनामपि संभवात्। यथा 'विलिखति कुचौ' इत्यादाविति प्राचीनः पन्थाः। अत्र नव्याः—परोक्तिरिति परशब्देन सामान्यतः प्रकृतमप्रकृतं वा विवक्षितम्। तेन यत्राप्राकरणिकविशेषणसामर्थ्यात्प्राकरणिकमुच्यते तदपि संगृह्यते। तत्रापि वैचित्र्याविशेषात् अन्यत्रानन्तरर्भावाच्च। यथा 'संप्राप्तसकलाङ्ग'—इत्यादि। अत्र ह्यप्रकृतस्य भृङ्गस्य

विशेषणसामर्थ्यात्प्रकृतस्यासत्पुरुषस्य प्रतीतिरित्याहुः । तन्न युक्तम् । अप्रस्तुतप्रशंसयैव तत्संग्रहात् । 'येनास्याभ्युदितेन' इतिवत् । वृत्तौ चाप्रस्तुतप्रशंसाप्रकरणे ।

तत्र समासोक्तिपदं श्लिष्टविशेषणत्वमात्रपरम् ।

परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः, (का० ९७, पृ०)

भेदकैः विशेषणैः श्लिष्टैः प्रकृताप्रकृतसाधारणैः । प्रकृतार्थप्रतिपादकेन वाक्येन श्लिष्टानां प्रकृतसाधारणानां भेदकानां विशेषणानां माहात्म्यात्, न तु विशेषसामर्थ्यादपि यदप्रकृतस्याभिधआनं व्यञ्जनं सा समासेन संक्षेपेण अर्थद्वयस्य कथनात् समासोक्तिः । यथा—

**लहिऊण[तु]ह(ज्झ) बाहुप्फंसं जीये स कोवि उल्लासो ।**
**जयलच्छी तुह विरहे न उज्जला दुब्बला ननु सा ॥**

अत्र तत्तद्विशेषणसामर्थ्यात् जयलक्ष्मीव्यवहारे कान्ताव्यवहारस्य आरोप्यमाणस्य चमत्कारितेति । इयमेवान्यैरेकदेशवत्तिरूपकमिति भण्यते ।

## आदर्शः

समासोक्त्यलङ्कारमाह—परोक्तिरिति । परोक्तिरप्रकृतव्यञ्जनम् 'भेदकै'-र्विशेषणैः श्लिष्टै'र्वाच्यव्यङ्ग्योभयान्वितैर्न त्वनेकार्थैः । एवञ्च उपमाध्वनावतिव्याप्तिप्रसक्तावाह—न तु विशेष्यस्येति । उल्लास्येत्यादौ, विशेष्यं देवपदमपि श्लिष्टम् । अभिधानमत्र व्यञ्जनम् । संज्ञाव्युत्पत्तिमाह—समासेनेति । लहिऊणेति ।

**लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।**
**जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा । इति संस्कृतम् ।**

देवाद्दुर्बलजितं नृपं प्रति कस्यचिदुक्तिरियम् । अत्र निकृष्टहस्तगामिन्या उत्तमनायकविरहिणा नायिकायाः प्रतीतिर्बाहुस्पर्शाद्युभयान्वितविशेषणसामर्थ्यात् । अत्रोपमाध्वनित्वं निरस्यति—अत्रेति ।

## सुधासागरः

प्रकृतार्थेत्यादि । अयमाशयः—परमप्रकृतं, भेदकानि विशेषणानि, श्लिष्टानि अनेकार्थानि । तेन प्रकृतार्थविशेषणवाचिमात्रशब्दस्य श्लेषमहिम्ना यत्र प्रकृतार्थकेन वाक्येनाऽकृतार्थवचनं सा समासोक्तिः सङ्क्षेपेणार्थद्वयोक्तिः । मात्रग्रहणाद् यत्र विशेष्यपदस्यापि श्लिष्टत्वं तद्व्युदासः, तस्य श्लेषत्वादिति । उदाहरणम्—लहिऊणेति ।

**लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।**
**जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा ॥ इति संस्कृतम् ।**

समरपतितं स्वामिनमवेक्ष्य वीरपत्न्या इयमुक्तिः। हे वीर ! यस्यास्तव बाहुस्पर्शं लब्ध्वा त्वद्भुजसङ्गमवाप्य स कोऽप्यनिर्वचनीय उल्लासो हर्षोत्फुल्लताऽभूत्, सा जयलक्ष्मीस्तव विरहे न खलूज्जवला, ननु प्रत्युत दुर्बला जातेत्यर्थः।

अत्रेत्यादि। अत्र केवलं विशेष्यवाचिनो जयलक्ष्मीशब्दस्य कान्तावाचकत्वमप्रकृतार्थकत्वं नास्ति, विशेषणानां तु लहिऊणेत्यादिपदानामुभयगतबाहुस्पर्शप्राप्त्यादिबोधकत्वमस्त्येवेत्यर्थः। श्लिष्टत्वं चोपलक्षणम्, औपम्यगर्भादीनामपि सम्भवात्। यथा 'विलिखति कुचौ' इत्यादाविति प्राचीनः पन्थाः।

(सू० १४९) निदर्शना।

**अभवन् वस्तुसंबन्ध उपमापरिकल्पकः ॥ ९७ ॥**

निदर्शनं दृष्टान्तकरणम्। उदाहरणम्—

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**
**तितिर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥ ४३५ ॥**

अत्र, उडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवस्यति।

---

**सङ्केतः**

क्व सूर्येति। अल्पमत्या अर्कवंशवर्णनं असम्भवद्दार्ष्टान्तिकदृष्टान्तवस्तुनोः औपम्यं कल्पयति। निरपेक्षवाक्यार्थयोः बिम्बप्रतिबिम्बत्वे दृष्टान्तस्य लक्षणात्। अत्र—प्रकृतवाक्यार्थे वाक्यार्थान्तरारोरोपात् सापेक्षत्वे सम्बन्धानुपपत्तिमूला निदर्शना।

**बालचित्तानुरञ्जनी**

उपमायां पर्यवसितः सन् स्वार्थनिर्वाहकः। अभवन्निति। दश दाडिमाः षडपूपाः इत्येतद्वत् इदमुभयार्थकं स्यादित्यत आह उपमापरिकल्पक इति। उपमानोपमेयभावे पर्यवस्यतीत्यर्थः। तस्या वाक्यार्थपदार्थवृत्तिभेदाद्द्वैरूप्यम्। असंभवद्वस्तुसंबन्धः निदर्शनालङ्कारः। उदाहरति क्व सूर्येति। अत्र वाक्ययोरनुपपद्यमान एव सम्बन्धः। उपमायां पर्यवसतित्वात्। उडुपेन सागरतरणमिवेत्यर्थो लभ्यत इत्यादि। अत्रेति।

**काव्यादर्शः**

निदर्शनेति। वाक्यार्थपदार्थभेदाद् द्विधा। तत्र वाक्यार्थवृत्तिः, यथा—'क्व सूर्ये'ति। अल्पविषयमत्या सूर्यवंशस्य वर्णनमसंभवदिति दार्ष्टान्तिके वस्तुसंबन्धस्य असंभवः दार्ष्टान्तिकप्रतिबिम्बरूपत्वाच्च। दृष्टान्तस्येति। दृष्टान्तेऽप्ययमेव न्यायः। पूर्वापरयोरर्धयोर्वाक्यसंबन्धोऽनुपपन्न एवेत्यौपम्ये पर्यवस्यति। केचित्तु दृष्टान्तालंकारोऽयमित्यूचुः, तन्न। निरपेक्षयोर्हि वाक्यार्थयोर्बिम्बप्रतिबिम्बभावे दृष्टान्तः, यत्र तु प्रकृतवाक्यार्थान्तरमारोप्यते तत्र संबन्धानुपपत्तिमूला निदर्शनैव, न दृष्टान्तः। एवं च—

**तत्पादनखरत्नानां यदलक्तकमार्जनम्।**
**इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः॥**

—अत्र निदर्शनैव।

### विवेकः

अभवद्वस्तुसम्बन्धादौपम्यपर्यवसायित्वेन संक्षिप्तार्थत्वेन च श्लेषसमासोक्तिभ्यां साम्याद् यथाक्रमं निदर्शनाप्रकारद्वयं दर्शयति निदर्शनेति—इयमसम्भवता सम्भवता च वस्तुसम्बन्धेन भवतीति द्विधा। तत्राद्य-माह—अभवन्निति। एवं गौरश्वः पुरुषो हस्तीत्यादावतिसङ्ग इत्यत आह—उपमेति। अन्वर्थतामाह—निदर्शन-मिति। एषा च वाक्यार्थ पदार्थवृत्तिभेदाद्द्विधा। तत्र वाक्यार्थवृत्तिर्यथा क्व सूर्येत्यादि। उडुपकरणेन तरणेन सागरस्यान्वयोऽयोग्यत्वादनुपपद्यमान इत्युपमायां पर्यवस्यति। एवञ्च यत्र निरपेक्षयोर्वाक्यार्थयोर्बिम्बप्रतिबिम्ब-भावस्तत्र दृष्टान्तालङ्कारः। अत्र तु प्रकृतवाक्यार्थे वाक्यान्तरमारोप्यते सामानाधिकरण्येन तत्र सम्बन्धानुपपत्तिमूला निदर्शनैवेत्याहुः। यथा (अ. स. ९८ पृ:) त्वत्पादनखरत्नानां यदलक्तकमार्जनम्। इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः॥ इति। एवञ्च—शुद्धान्तर्दुलभमिदं वपुराश्रमवासिनो यदि जनस्य दूरीकृताः खलु गुणैरुद्यानलता वनल-ताभिः॥ (अभि. श. १/१५) इत्यत्रापि दृष्टान्तबुद्धिर्न आर्या, उक्तन्यायेन निदर्शनाप्राप्तेः।

### दीपिका

अभवन् यथाश्रुतमात्रेण सम्भवन् वस्तुसम्बन्धोऽर्थसङ्गतिः। उपमापरिकल्पकः सादृश्यपर्यवसानः। निद-र्शनेति लक्ष्यदार्थमाह—निदर्शनमिति। एतदपिनिर्वक्तिदृष्टान्तीकरणमिति प्रतिबिम्बोपनयनमित्यर्थः। उपमायां पर्यवस्यतीति। उपमामाक्षिप्य सङ्गच्छत ऐत्यर्थः।

### दर्पणः

निदर्शनालङ्कारः—निदर्शना वस्तुनोः सम्बन्धः, विशेणविशेष्यभावादिः। क्व सूर्येत्यादौ वाक्यानुगता निदर्शना। उदयतीत्यादौ पदानुगता। द्वितीयनिदर्शना न केवलंमियं वस्तुसंबन्धस्यासंभवे उपमापरिकल्पनात्मिका निदर्शना तस्य संभवे चान्यापीत्याह। स्वस्वहेत्विति। स्वस्य क्रियाया एव स्वरूपस्य [?] लाघवेसति तनुपपद-प्राप्तिप[द ?] स्य च सम्बन्धः। अवापेति पाठे तु सरलैव योजना अत्रेति।

अयमाशयः। अत्र दृशत्कणगतस्य पतनरूपस्य तत्कारणस्य लाघवे सति उद्धतपदप्राप्तिरूपस्य च संबन्धेः संभवत्येव दृशत्करमस्य शैलशेखरगतत्वेन पतनक्रियानिर्देशात्। स च संबन्धः संतरणदृषत्करणस्य शैलशेखरगत्वेन संतरण दृषत्कणस्य लघुनां [?] चोपमा विनुप्रविस्वभावं कल्पय न द्वितीयनिदर्शनाबीजम्।

### साहित्यचूडामणिः

निदर्शनेति। अभवन्नविद्यमानो वस्तुनोः सम्बन्धः, तात्पर्यचिन्तायामुपमायाः परिकल्पकः। दृष्टान्तीकर-णम् उक्तार्थसमर्थनप्रकारः, न तु शुद्धो दृष्टान्तः, उपमावयवसर्वस्वप्रतिबिम्बनाभावात्।

क्व सूर्येति।

अत्र सूर्यवंशमत्योर्विषयविषयिभावानौचित्यलक्षणे वाक्यार्थे सागरस्योडुपेन तरणलक्षणं वाक्यार्थान्त-रमारोप्यत इति मत्या सूर्यवंशवर्णनमुडुपेन सागरतरममिवेत्युपमायां विश्राम्यतीत्याह—उडुपेनेति। यत्र निरपेक्ष-

योर्वाक्यार्थयोः बिम्बप्रतिबिम्बभावः तत्र दृष्टान्तो वक्ष्यते, यत्र तु प्रकृते वाक्यार्थे वाक्यार्थान्तरमारोप्यते सामानाधिकरण्येन सेयं सम्बन्धानुपपत्तिनिबन्धना निदर्शना ।

## सम्प्रदायप्रकाशिनी

निदर्शनेत्यादि । अघटमानो वाक्यार्थसम्बन्धो यदुपमां परिकल्पयति सा निदर्शना ।

लक्ष्यपदं निर्वक्ति—निदर्शनं दृष्टान्तकरणमित ।

क्व सूर्येति । प्रभव उत्पत्तिस्थानम् । उडुपः काष्ठादिप्लवः । अत्र पूर्वोत्तरवाक्यार्थयोरघटमानः सम्बन्ध उपमां परिकल्पयति ।

तदेतदाह—अत्रोडुपेनेत्यादि ।

## मधुमती

अभवन्निति । असम्भविनोऽर्थस्याभिधानं उपमाकल्पकं निदर्शना । विषमालङ्कारे अतिव्याप्तिवारणाय उपमाकल्पकत्वं उक्तम् । अपह्नुतौ तद्वारणाय पूर्वप्रतीकम् । यद्यपि—अपह्नुतावपि असम्भिविनोऽर्थस्याभिधानं अस्त्येव । तथापि—नासम्भवित्वेनेति नातिव्याप्तिः । पदव्युत्पत्तिमाह—निदर्शनमिति ।

क्व सूर्येति । अत्र पूर्वार्धे विषयमालङ्कारः स्थितोऽपि निदर्शनायाः पोषकतया गुणीभूतः इति सः नोपदर्शितः । अत्रेति । अल्पविषयकप्रत्यासूर्यवंशवर्णनं पूर्वार्धार्थः । उडुपेन सागरतरणं उत्तरार्धार्थः । अनयोश्च उपमानोपमेयभावः प्रतीयते । असंभवित्वं च साधारणो धर्मः अर्थादिवावभासते इति भावः ।

## विस्तारिका

निदर्शनमाह—निदर्शनेति । अभवन्ननुपपद्यमानः, वस्तुनोर्वाक्यार्थयोः । उपमापरिकल्पक उपमामाक्षिप्य स्वस्मिन् पर्यवसन्नः ।

पदार्थमाह—निदर्शनमिति । तदपि विवृणोति—दृष्टान्तेत्यादि ।

क्व सूर्येत्यादि । अल्पविषया गुणबाहुल्यवर्णनाक्षमा । क्वाभ्यां परस्परासम्बन्धप्रकटनम् ।

अत्राल्पविषयकमत्यां रघुवंशवर्णनं न स्यादित्येको वाक्यार्थः, अपरस्तु उडुपेन सागरतरणम् ।

न चोपमानोपमेयभावं विनानयोः परस्परवैशिष्ट्यमिति व्यङ्ग्योपमयास्थिरीकरणम् तदाह—उडुपेन सागरतरणमिवेत्यादि ।

अत्रोपमानवाक्येन निरूढस्य प्रसिद्धस्यासम्भवधर्मस्य दर्शनातो निदर्शना ।

**सारबोधिनी**

तत्राद्यमुदाहरति क्व सूर्येति। अत्राल्पविषयमत्या रघुवंशवर्णनं न स्यादित्येको वाक्यार्थः। अपरस्तु-उडुपेन सागरतरणम्। न चोपमानोपमेयभावं विना अनयोः परस्परसंबन्ध इति व्यङ्ग्योपमया स्थिरीकरणम् तदाह उडुपेनेत्यादि।

**काव्यप्रदीपः**

**निदर्शना।**

**अभवन्वस्तुसंबन्ध उपमापरिकल्पकः॥ ११॥**

यथाश्रुतमात्रेणासंभवी वस्तुसंबन्धो यत्रोपमां कल्पयित्वा पर्यवस्यति सैका निदर्शना। दृष्टान्तकरणात्मकनिदर्शनरूपत्वात्। सा च द्विधा—अवान्तरवाक्यभेदे तदभेदे च। तयोराद्या यथा—

**'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**

**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥'**

अत्राहं सागरं तितीर्षुरस्मीत्यस्यासंबद्धार्थकतया उडुपेन सागरतरणवन्मदी यमत्या सूर्यवंशवर्णनमसंभावितमित्युपमायाः कल्पनम्।

**काव्यप्रकाशखण्डनम्**

**निदर्शना।**

अभवद्वस्तुसम्बन्धः उपमापरिकल्पकः॥ (का. ९७, उ०)

उपमानोपमेयभावे पर्यवसित इत्यर्थः। तस्य वाक्य-पदार्थभेदात्-द्वैविध्यम्। तत्राद्युमुदाहरति—'क्व सूर्यप्रभव' इत्यादिना। अत्राल्पविषयया मन्मत्या सूर्यवंशवर्णनं न स्यादित्येको वाक्यार्थः। अपरस्तु उडुपेन सागरतरणम्। न चोपमानोपमेयभावं विना अनयोः सम्बन्धः संभवतीति उपमायां पर्यवसानम्।

**आदर्शः**

निदर्शनालङ्कारमाह—अभवन्निति। बाधितोऽन्वय इत्यर्थः। निदर्शनमिति, तथा चास्त्यर्थेऽच्प्रत्ययान्तमेव निदर्शनापदमिति बोध्यम्। क्व सूर्येति। अत्र पूर्वार्द्धे वक्ष्यमाणा विषमालङ्कारः, परार्द्धन्तु प्रकृतोदाहरणम्। अत्र कालिदासे वक्तरि उडुपेन सागरतितीर्षुताबाधात् कल्पनीयामुपमामाह—अत्रेति। न च वक्तरि कालिदासे उडुपेन सागरतितीर्षुजनरूपकमेवेदं तत्र च बाधोऽनुगुण एवेति कथमत्र यथोक्तरूपतेति वाच्यम्, तितीर्षुरूपकसत्त्वेऽपि तारणरघुवंशवर्णनयोरुपमाकल्पनस्याऽऽनुभाविकत्वात्।

## सुधासागरः

अत्र नव्याः-परोक्तिरिति परशब्देन सामान्यतः प्रकृतमप्रकृतं वा विक्षितम्, तेन यत्राप्राकरणिकविशेषण-सामर्थ्यात्प्राकरणिकमुच्यते तदपि संगृह्यते, तत्रापि वैचित्र्याविशेषात्, अन्यत्रानन्तर्भावाच्च। यथा—'सम्प्राप्तस-कलङ्क' इत्यादि। अत्र ह्यप्रकृतभृङ्गस्य विशेषणसामर्थ्यात्प्रकृतस्यासत्पुरुषस्य प्रतीतिरित्याहुः। तन्न युक्तम्। अप्रस्तुतप्रशंसयैव तत्सङ्ग्रहात्, येनास्यभ्युदितेनेतिवत्। वृत्तौ चाप्रस्तुतप्रशंसाप्रकरणे। तत्र समासोक्तिपदं श्लिष्टविशेषणत्वमात्रपरमिति बोध्यम्।

यथाश्रुतमात्रेणासम्भवी वस्तुसम्बन्धो यत्रोपमां कल्पयित्वा पर्यवस्यति सैका निदर्शना, दृष्टान्तकरणात्म-कनिदर्शनरूपत्वात्। तदेतदुक्तं निदर्शनं दृष्टान्तकरणमिति सा च द्विधा। अवान्तरवाक्यभेदे तदभेदे च। तयोराद्या यथा—क्वसूर्येति। अन्वयः स्पष्टः। अत्रेत्यादि। अत्राहं सागरं तितीर्षुरस्मीत्यस्यासम्बद्धार्थकतयोडुपेन सागतर-णवन्मत्या सूर्यवंशवर्णनसम्भावितमित्युमायाः कल्पनमित्यर्थः। अत्र ललितालङ्कार इत्युक्तमप्पयदीक्षितादिभि-स्तद् दूषितमस्माभिलङ्कारसारोद्धारे।

यथा वा

**उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।**

**वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥ ४३६ ॥**

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम्।

---

**सङ्केतः**

पदार्थेन सा यथा—उदयतीति। तत्सदृशीं गजलीलातुल्याम्।

**बालचित्तानुरञ्जनी**

उदाहरणान्तरमाह यथेति। विततोर्ध्वरश्मिरज्जौ अहिमरुचावुदयति सति हिमधाम्नि चास्तं याति सति अयं गिरिः विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलां वहति। अत्र वारणेन्द्रलीलां पर्वतः कथं वहतीत्यनुपपद्यमान एव संबंध इति उपमापर्यवसानमाह अत्रेति।

**काव्यादर्शः**

पदार्थवृत्तिः, यथा—'उदयती'ति। तत्सदृशीमिति गजलीलासदृशीम्। गजसंबन्धिन्या लीलाया वस्त्वन्तरभूतेन गिरिणा वहनमसंभवल्लीलासदृशी लीलामवगमयतीत्यन्वयविप्रकर्षाद् औपम्ये पर्यवसानम्।

**विवेकः**

पदार्थवृत्तिर्यथा उदयतीत्यादि। अत्र वारणेन्द्रसम्बन्धिन्या लीलया वस्त्वन्तरभूतेन गिरिणा वहनमसम्भवल्लीलादृशीं लीलामेव गमयतीत्युपमायां पर्यवसानम्। न च भिन्नयोर्लीलयोरैक्यमध्यवसितमिति भेदे त्वभेद इत्येवमात्मिकाऽतिशयोक्तिः, लीलाख्यगुण एको न तु स्वरूपभिन्नः। सम्बन्धिभेदात्तु भिद्यते। स्वरूपभिन्नयोरेवातिशयोक्तिः। यथा—**स्निग्धश्यामलकान्तिलिप्तवियतो विद्युद्बलाका घना मेघाः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः। कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥** (ध्व. आ. २/१ वृ:) इत्यत्र व्याप्तिलेपनयोः स्वरूपभेदे ऐक्यमध्यवसितम्।

**दीपिका**

वाक्यार्थमुदाहृत्य पदार्थमुदाहरति—यथा वेति इत्येके। तन्न, उदयतीत्यादावप्येकपदार्थमात्रेणास्याः प्रतीत्यभावात्।

वस्तुतस्तु पूर्वत्र वाक्यभेद उत्तरत्र त्वेकवाक्यतेत्युदाहरणद्वयसङ्गतिः। असम्भवद्वैचित्र्येण वा पूर्वत्र ह्युडुपेन समुद्रतरणवृत्तिः कालिदासकृतसूर्यवंशवर्णनोद्यमे सर्वथैवासम्भविनी। उत्तरत्र वारणेन्द्रसम्बन्धिलीलास-

म्बन्धिभेदमात्रेण रैवतकगिरावित्युपमायां पर्यवसानमिति उपमाया आक्षेपो न तूपमायाः प्राधान्यमिति ज्यायसी व्याख्या ध्वनिग्रस्तविषयत्वात्तस्याः प्राधान्यप्रतिभासाभावाच्च ।

## साहित्यचूडामणिः

एवं वाक्यार्थवृत्तिमुदाहृत्य पदार्थवृत्तिमुदाहरति-उदयतीति । अत्र कथमन्यस्य वारणेन्द्रस्य लीलामन्यो रैवतको वहति अन्यसम्बन्धिनो भावस्य वस्त्वन्तरेण वोढुमशक्यत्वात् । तेन च लीलासदृशीं लीलामसौ वहतीत्यदूरविप्रकर्षात् प्रतिबिम्बेनोक्तिरुपमापर्यवसायिनी । तदेतदाह—कथमिति ।

## सम्प्रदायप्रकाशिनी

पदार्थनिष्ठतयाप्युदाहरति—उदयतीति ।

निदर्शनात्वं दर्शयति—अत्र कथमन्यस्येत्यादि ।

## मधुमती

अत्र कथमिति । वारणेन्द्रलीलयाः तन्मात्राश्रितायाः गिरौ असम्भवात् पूर्ववत् उपमायामेव तात्पर्यमित्यर्थः ।

## विस्तारिका

यथा वेति । उदाहरणभेदबीजं वक्ष्यामः ।

उदयतीत्यादि । अहिमः उष्णः । विलम्बनं विलम्बः ।

क्रियायामप्रवृत्तिस्त्वयुक्तम् । तेन निष्क्रियत्वान्नादराहित्यम् । पूर्वत्र रघुवंशवर्णनोद्यते कालिदासे उडुपेन सागरतरणं सर्वथा न सम्भवति, उत्तरत्र सागरतरणं सर्वथा न सम्भवति । उत्तरत्र वाराणैरावतयोः सम्भवतोर्द्वयोरपि सम्बन्धिभेदेन लीलयोर्भेदः ।

## सारबोधिनी

द्वितीयामुदाहरति उदयतीति । लक्ष्ये लक्षणं सङ्गमयति कथमित्यादि ।

## काव्यप्रदीपः

अन्त्या यथा—

> 'उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि यान्ति चास्तम् ।
> वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ।।'

अत्रान्यलीलोद्वहनस्यान्येनासंभवाद्वारणेन्द्रलीलासदृशीं लीलामित्युपमायां पर्यवसानम्। एवं च 'पूर्वोदाहरणे वाक्यार्थ उपमाक्षेपकः इह तु पदार्थमात्रम्' इति व्याख्यानमनादेयम्। अत्रापि लीलापदार्थमात्रस्यानाक्षेपकत्वात्।

### काव्यप्रकाशखण्डनम्

द्वितीयो यथा—

**अस्या मुखस्य लीलां वहति शरत्शर्वरीनाथः।**

अत्र कथमन्यस्य लीलां अन्यो वहतीत्युपमायां पर्यवसानम्। पूर्ववन्मालाऽपि बोध्या।

### आदर्शः

रूपकसङ्कीर्णमप्युदाहरति—यथा वा, उदयतीति। प्रातःकाले रैवतकगिरिवर्णनमिदम्। अहिमरुचौ सूर्ये उदयति हिमधाम्नि चन्द्रे च अस्तं याति सतीत्यर्थः। विततेत्युभयोर्विशेषणम्। गिरी रैवतकः, परिवारितो वेष्टितः। अत्रेति, लालाव्यक्तिभेदात्।

### सुधासागरः

द्वितीया यथा—उदयतीति।

विततो विस्तीर्णः ऊर्ध्वदेशगतो रश्मिः रज्जुरिवेत्युपमितसमासः, विततोर्ध्वरश्मिरज्जावहिमरुचौ सूर्ये उदयति सति विततोर्ध्वरश्मिरज्जौ हिमधाम्नि चन्द्रेऽस्तं याति सति चायं गिरिः रैवतकाचलो विलम्बि विशेषेण लम्बमानं यत् घण्टाद्वयं तेन परिवारितः शृङ्गारार्थं मध्ये कृतो यो वारणेन्द्रो गजराजस्तस्य लीलां वहतीत्यर्थः। पुष्पिताग्रा छन्दः। लक्षणमुक्तं प्राक्।

अत्रेत्यादि। अत्रान्यलीलोद्वहनस्यान्येनासम्भवाद् वारणेन्द्रलीलासदृशीं लीलामपूर्वामित्युपमायां पयर्वसानमित्यर्थः। एवं च पूर्वोदाहरणे वाक्यार्थ उपमाऽऽक्षेपक इह तु पदार्थमात्रमिति व्याख्यानमनादेयम्, अत्रापि लीलापदार्थमात्रस्थानाक्षेपकत्वात्; किन्तु लीलोद्वहनरूपवाक्यार्थस्यैवाक्षेपकत्वात्। तस्मात्पूर्वोदाहरणे उडुपेन सागरतरणरूपमुपमानमप्रसिद्धम्, इह तु वारणेन्द्रलीलारूपमुपमानं प्रसिद्धमित्येव भेद इति।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गमा-

दातुमिच्छति करे हरिणाङ्कबिम्बम्।

मेरुं लिलङ्घयिषति ध्रुवमेष देव यस्ते

गुणान् गदितुमुद्यममादधाति ॥ ४३७ ॥

इत्यादौ मालारूपाप्येषा द्रष्टव्या ॥

---

**सङ्केतः**

दोर्भ्यामिति । तरङ्गवती नदी, तद्भुजङ्गः अब्धिः ।

**बालचित्तानुरञ्जनी**

मालारूपां निदर्शनामुदाहरति दोर्भ्यामिति । भो देव यस्तव गुणानादातुमुद्यममादधाति एष पुरुषः दोर्भ्यां तरङ्गवतीभुजङ्गं तितीर्षति करे, हरिणाङ्कबिम्बमादातुमिच्छति । भो देव यस्तव गुणानादातुमुद्यममादधाति मेरुं लिलङ्घयिषति । अत्रापि अनुपपद्यमान एव संबन्ध इति उपमानपर्यवसितत्वात् निदर्शनम्, मालायोगात् मालानिदर्शनालङ्कारः इत्यर्थः ।

**काव्यादर्शः**

मालन्यायेनापीयं, यथा—'दोर्भ्याम्' इति । 'तरङ्गवती-भुजंगः समुद्रः ॥ ९५ ॥

**विवेकः**

इत्यञ्च क्वचिन्मालयाऽपि भवन्ती दृश्यते । यथा दोर्भ्योमित्यादि । तरङ्गवतीभुजङ्गः समुद्रः ।

**दीपिका**

यस्त इति पाठे एष यच्छब्दार्थे । यत्त इति पाठे त्वेष इति लोक इत्यर्थः । यदिति यस्मादित्यर्थः ।

**साहित्यचूडामणिः**

दोर्भ्यामिति । त्वद्गुणान् वक्तुमुद्यङ्क्त इति वाक्यार्थे दोर्भ्या समुद्रं तितीर्षतीत्यादिवाक्यार्थान्तरं सामानाधिकरण्येनाध्यारोप्यत इत्युपमावश्यम्भावः । माला वैचित्र्यं च सर्वालङ्कारसाधारणम् ।

### सम्प्रदायप्रकाशिनी

दोर्भ्यामिति। तव गुणेषु गदितुमुद्यमो दोर्भ्यामब्धितितीर्षासम इत्यर्थः। अत्राप्राकरणिकैः प्रत्येकं प्राकरणिकाभिसम्बन्धे मालारूपता।

### मधुमती

इत्यादाविति। एकत्रैव अनेकेषां असम्भवदर्थानां असम्भवित्वेनाभिधानात् मालात्वमित्यर्थः।

### विस्तारिका

लक्ष्ये लक्षणं सङ्गमयति—कथमित्यादि।

मालाभूतां तामाह—दोर्भ्यामित्यादि। तरङ्गवती नदी, भुजङ्गो विट एव भुजङ्गः सर्प, दुर्लङ्घ्यत्वात्। हरिणेत्यादि। हरिणस्य दुर्ग्रहत्वेन सुतरां तत्क्रोडीकर्तुः। बिम्बमिति। प्रतिबिम्बस्य तथा सम्भाव्यत्वात्। विलङ्घयत्यूर्ध्वगमनेनाधः कर्तुमिच्छति। गदितुमुद्यमम्, न तु गदति।

अत्रैकस्य गुणगदनोद्यमस्य समुद्रतितीर्षादीनि बहून्युपमाननीति माला।

### सारबोधिनी

दोर्भ्यामिति। अत्रैकस्य गुणगणनोद्यमस्य समुद्रतितीर्षादीनि वस्तूपमानीति माला। अपरां निदर्शनां लक्षयति स्वस्येति। क्रिययेति। तेनेयं सम्भवद्वस्तुमूलेति ध्वनितम्। अपरा न त्वन्योऽलङ्कारः, वाक्यार्थयोरुपपाद्योपपादकभावेन सामान्येन धर्मेण क्रोडीकृतत्वात्। उपपादकत्वन्तूपमया सम्बन्धान्तरेणेत्यन्यदेतत्। अपरेत्यस्यालङ्कारान्तरनामताशङ्काव्युदासाय विवृणोति निदर्शनेति।

### काव्यप्रदीपः

एषा मालारूपापि दृश्यते। यथा—

**'दोर्भ्यां तितीर्षति तरङ्गवतीभुजंग-**
**मादातुमिच्छति करे हरिणाङ्कबिम्बम्।**
**मेरुं लिलङ्घयिषति ध्रुवमत्र देव**
**यस्ते गुणान्यादितुमुद्यममादधाति॥'**

### आदर्शः

मालानिदर्शनामपि रूपकासङ्कीर्णामाह—दोर्भ्यामिति। तरङ्गवत्या मद्या भुजङ्गं कामुकं समुद्रम्, हे देव यस्ते गुणान्, गदितुमुद्यममातनोति स एव कुरुत इत्यर्थः। तत्करणञ्च बाधितमतो दोर्भ्यां समुद्रतितीर्षेव तव गुणगदनोद्यम् इत्युपमाकल्पनम्, 'तिङन्ते च न रूपकम्' इति तदसङ्करः।

## सुधासागरः

एषा मालारूपापीत्युदाहरति—दोर्भ्यामिति ।

हे देव राजन् यस्ते गुणान् शौर्यादीन् गदितुं वक्तुमुद्यममादधाति उद्योगं करोति एष पुरुषो ध्रुवं निश्चयेन दोर्भ्यां तरङ्गवतीभुजङ्गमं समुद्रं तितीर्षति तर्तुमिच्छति । करे पाणौ हरिणाङ्कबिम्बं चन्द्रमादातुं ग्रहीतुमिच्छति । मेरुं लिलङ्घयितषति लङ्घयितुमिच्छति । अनन्तगुणस्त्वमसीति भावः । वसन्ततिलका छन्दः । लक्षणमुक्तम् ।

(सू० १५०) स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च सापरा।

क्रिययैव स्वस्वरूपस्वकारणयोः संबन्धो यदवगम्यते सा, अपरा निदर्शना यथा

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन्।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः॥ ४३८॥

अत पातक्रियाया पतनस्य लाघवे सति, उन्नतपदप्राप्तिरूपस्य च संबन्धः ख्याप्यते॥

---

सङ्केतः

स्वस्वेति। स्वश्च पतनलक्षण क्रियायाः स्वभावः, स्वहेतुश्च तस्या एव कारणं उन्नतपदवाप्तिरूपम्, तयोः अन्वयः कार्यकारणत्वेन घटना। अपरा उद्भटोक्ता।

उन्नतमिति। अत्र 'ममेव अन्यस्यापि लघोः उच्चैः पदप्राप्तिः पातान्ता' इति कार्यकारणयोः अन्वयेन उपमानोपमेयत्वाक्षेपे सम्भवद्वस्तु सम्बन्धा निदर्शना। स्वसिद्धये वाच्येन उपमानोपमेयभावरूपार्थान्तरं आक्षिप्यत इति। पातक्रियया पततीतिरूपया। पतनस्येति। पतेत् इत्येवमुल्लिखितस्य उच्चैः पदाप्तिरूपकारणकार्यस्वरूपस्येत्यर्थः। कारणस्य उच्चैः पदाप्तिरूपस्य। इति निदर्शना।

बालचित्तानुरञ्जनी

संभवद्वस्तुसंबन्धानिदर्शनामाह स्वेति। व्याकरोति क्रिययैवेति। अवगम्यत इति। यत् सा निदर्शनेति सम्बन्धः। उदाहरति उन्नतमिति। यो लघुः पुरुषः स उन्नतं पदमवाप्य हेलयैव पतेदिति ब्रुवन् पर्वताग्रगतः पाषाणकणः वायुना कम्पितः सन् चारु अधः पतति। पततीति या पतनक्रिया सा च तस्या हेतुः लाघवे सति उन्नतपदप्राप्तिः तयोः अन्वयः उन्नतं पदमवाप्य यो लघुः पतेदिति विधिक्रियैव शुद्धया ख्याप्यत इत्याह अत्रेति। ब्रुवन्निति तत् ख्यापनप्रयोगादस्ति वस्तुसम्बन्धः। दृषत्कणः इति सर्वो लोकः पततीति उपमाविश्रान्तिश्च। उक्तञ्च

अभवन् वस्तुसम्बन्धो भवन् वा यत्र कल्पयेत्।
उपमानोपमेयत्वं कथ्यते सा निदर्शना॥

इति।

### काव्यादर्श:

संभवद्वस्तुसंबन्धां च निदर्शनामुद्भटोक्तामाह—स्वस्वेति । स्वश्च पतनलक्षणाया: क्रियाया: स्वभाव: स्वहेतुश्च पातक्रिया वा एव कारणं उन्नतपदावाप्ति लक्षणं तयोरन्वय: कार्यकारणभावलक्षण: संबन्धस्तस्योक्ति: । 'उन्नतम्' इति । अत्र 'ममेवोन्नतपदावाप्तिरन्यस्यापि लघो: पातावसाना' इति कारणकार्ययो: समन्वयेन उपमेयस्याक्षेपात् संभवद्वयस्तुसंबन्धा निदर्शना द्वितीया । वाच्यं हि स्वसिद्ध्यर्थत्वेन उपमानोपमेयभावलक्षणमर्थान्तरमाक्षिपति । पातक्रियेयेति पतनलक्षणाया । पतनस्येति । पतेदित्येवमुल्लिखितस्य स्वरूपस्योन्नतपदप्राप्तिरूपकारणकार्यस्य ।

### विवेक:

द्वितीयां लक्षयति स्वस्वेत्यादि । क्रिययैव शुद्धया फलभूतया स्वस्यात्मन: स्वकारणस्य सान्वय: सम्बन्धो यत् ख्याप्यते तद् संबलितहेतुदृष्टान्तभागं निदर्शना । तदुक्तम्—क्रिया यैव तदर्थस्य विशिष्टस्योपदर्शनात् । इष्टा निदर्शना नाम यथेववतिभिर्विना ॥ (भा. का. अ. ३/३२) इति । उन्नतमित्यादि । शेखरं शृङ्गम् । चारुमारुतेति—चारुताऽत्र स्पृहणीयता । अत्र पततीति क्रिया, तस्या: स्वरूपं पतनम् । तत्र हेतुर्लघुत्वे सत्युन्नतपदावाप्ति: । यो लघु: समुन्नतं पदमवाप्य पतेदित्यनयोरन्वयस्तस्योक्तिध्रुवमिति । तदिह दृषत्कणस्य पातसंबन्ध उपपद्यते । स ममेव लघोरन्यस्याप्युन्नतपदावाप्ति: पतनायेत्युपमां कल्पयति ।

### दीपिका

क्रिययैवेति । असम्भवमन्तरेणैव सदृशवस्त्वन्तरवृत्तान्तान्वयप्रतीति: । अपरेति । अनेन लक्षणबीजपूर्वरूपानुगमाद्यभावं विवक्षन् नाम्नैवानयो: साम्यमासूत्रयतीत्येके, तन्न, बिम्बप्रतिबिम्बप्रत्यायनोपाधे: सामान्यात् तदुक्तम्—'सम्भवताऽसम्भवता वा वस्तुसम्बन्धेन गम्यमानं प्रतिबिम्बकरणं निदर्शना'इति । लक्षणभेदस्तत्र प्रपञ्चार्थ: सम्बन्धो वस्त्वन्तरसम्भवित्वम् । लघुपदप्रवृत्तिनिमित्तलङ्घनक्रियापेक्षया प्राक्त्वेऽवाच्येति त्वोत्पत्ति: । पतनस्येत्यनन्तरं शैलशेखरगतत्वेनेति शेष: । सम्बन्ध: ख्याप्यते सादृश्यं प्रकाश्यते ।

### साहित्यचूडामणि:

अथ सम्भवद्वस्तुसम्बन्धां दर्शनान्तरेण निदर्शनमाह—स्वस्वेति । क्रियातद्वतो: सम्बन्धप्रतीतावपि यत्र सहकारिनैरपेक्ष्यं तत्र चमत्कारातिशय इत्याह—क्रिययैवेति । यद् वामन:—क्रिययैव स्व-तदर्थान्वयख्यापनं निदर्शनमि-(४-३-२०)ति । संलुलितहेतुदृष्टान्तविभाग: प्रयोग इति यावत् ।

उन्नतमिति ।

अत्र तदीया पतनक्रिया साध्यं, तस्या हेतुर्लाघवे सत्युन्नतपदप्राप्ति: तयोरन्वय उन्नतं पदमवाप्य यो लघु: स पतेदिति । स क्रिययैव शुद्धया ख्याप्यत इत्याह—पातक्रिययेति ब्रुवन्निति तत्ख्यापनप्रयोगादस्ति वस्तुसम्बन्ध: । दृषत्कणसमाचार: सर्वो लघुरित्युपमाविश्रान्तिश्च ।

**अभवन् वस्तुसम्बन्धो भवन् वा यत्र कल्पयेत्।**
**उपमानोपमेयत्वं कथ्यते सा निदर्शना॥ इति।**

## सम्प्रदायप्रकाशिनी

निदर्शनान्तरमाह—स्वस्वहेत्वित्यादि। क्रिययैव स्वरूपं स्वकारणसम्बन्धश्चावबोध्यते चेत् सापरा सम्भवद्वस्तुसम्बन्धा निदर्शना।

व्याचष्टे—क्रिययैव स्वरूपेत्यादि।

उन्नतमिति। यो लघुः सन् उन्नतं पदमाप्नोति, स हेलया अप्रयत्नेन पतेदित्यमुमर्थमवबोधयन् शैलशेखरगतो दृषत्कणः शर्कराखण्डः चारुणा ललितेन मरुता हतमात्र एवाधः पतितः।

योजयति—अत्र पातक्रिययेत्यादि। पातक्रियया अधः पततीति वाक्यार्थीभूतया। पतनस्य पतेदित्युद्दिष्टस्य। लाघवे सतीति कारनस्वरूपकथनम्। सम्बन्धः ख्याप्यत इति सम्भवद्वस्तुसम्बन्धता ख्यापिता।

## मधुमती

स्वस्वेति। स्वस्य स्वहेतोश्च अन्वयः यत्र क्रियश्चैव प्रतिपाद्यते सा अपरा निदर्शनेत्यर्थः।

अत्र पातेति। अत्र पतति इत्यनेन निर्दिष्टया पातरूपक्रियया पतनस्य, तत्कारणस्य लघोरुन्नतपदप्राप्तेश्च अन्वयः—सम्बन्धः प्रतिपाद्यते इत्यर्थः। इति निदर्शना।

## विस्तारिका

स्वस्वेत्यादि। हेतुपदसान्निध्यात् स्वपदेन हेतुमदभिधानम्। स्वस्य हेतोश्च क्रिययैव क्रियाद्वारेणैव, न तूपमाकल्पनेन। अपरा, न त्वन्योऽलङ्कार इत्यर्थः। वाक्यार्थयोरुपपाद्योपपादकत्वस्य सामान्यस्य क्रोडीकारात्। उपपादकत्वं तूपमया सम्बन्धान्तरेण वेति तद्भेदताबीजमाधत्ते। सम्बन्ध इत्यन्वस्य विवरणम्।

अपरेत्यलङ्कारनामताशङ्काव्युदासाय विवृणोति—निदर्शनेति।

उन्नतपदमुत्कृष्टसम्पदमूर्ध्वस्थानं च। लघुरल्पबुद्धिः। दृषत्कणः अणुपरिमाणयोनिः। पतनं सम्पत्तिभ्रंशोऽधः संयोगश्च। चारुर्मृदुः। अन्यथोर्ध्वप्रसरणमपि स्यात्। लघोरधःपातकत्वे चारुता। धुतो विरोधिस्पर्शेन कम्पितो यो लघुः स उन्नतं पदं प्राप्य पतेदित्यन्वयः।

अत्रेत्यादि। पातक्रियया पततीति पदप्रतिपाद्यया तृतीयया अर्थो द्वारता। लघोरुन्नतपदप्राप्तेः पतनस्य च कारणकार्यभावः। लघ्वन्तरदृषत्कणपातसहचारादर्शनेन विश्राम्यत इति भावः। इयमेव सम्भवद्वस्तुमूला।

न चात्र दृषत्कणस्याधःपतनं लघोरुन्नतपदप्राप्त्या पतनमिवेत्युपमाक्षेप इति वाच्यम्, आक्षेपं विना वाक्यार्थोपपत्तेः। अनुपपत्तेरेवोपपादकसाकाङ्क्षत्वेन तदाक्षेपकत्वादिति कुव्याख्यानमपहस्तितम्। अत्रोपपादकेन वाक्यार्थस्थिरीकरणम् :ृष्टान्ते स्वतः पर्यवसितेन तेन बिम्बप्रतिबिम्बभावप्रत्यायनमिति द्वयोर्भेदः।

### सारबोधिनी

उन्नतं पदं उत्कृष्टां संपदम्, वृद्धिस्थानञ्च। लघुरल्पबुद्धिरणुपरिमाणयोगश्च। पतनं संपत्तिभ्रंशोऽधः संयोगश्च। चारुर्मृदुः अन्यथोर्ध्वप्रसरणमपि स्यात्। यो लघुः स उन्नतं पदं प्राप्य पतेदित्यन्वयः। पततीति क्रियया पतेदिति क्रियाया लघोरुन्नतपदप्राप्तिरूपतद्धेतोश्च संबन्धः ख्याप्यते। स चान्यस्यापि लघोरुन्नतपदप्राप्तिस्तद्वत् पतनायेति दृष्टान्ते पर्यवस्यतीति निदर्शनेत्युच्यते।

### काव्यप्रदीपः

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च सा परा।**

यत्र क्रिययैव स्वस्य स्वहेतोश्चान्वयो हेतुहेतुमद्भावरूपः ख्याप्यते सा परा निदर्शना। यथा—

**'उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन्।**
**शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः॥'**

अत्र पतेत्पदप्रतिपाद्यस्य पातस्य कार्यस्य लाघवे सत्युन्नतपदप्राप्तिरूपस्य कारणस्य च तथा संबन्धः पततिपदप्रतिपाद्यया पातक्रियया प्रतिपाद्यते। तथा च लाघवे सत्युन्नतपदप्राप्तिः। पाते हेतुर्यथा दृषत्कणस्येति दृष्टान्तपर्यवसानान्निदर्शनात्वमिति।

### काव्यप्रकाशखण्डनम्

**अप्रस्तुतप्रशंसा या [सा] सैव प्रस्तुताश्रया॥ (का० ९८, उ०)**

अप्रस्तुतस्य अप्रकृतस्य प्रशंसा वर्णना। अप्राकरणिकार्थाभिधानेन प्राकरणिकार्थस्याक्षेपोऽप्रस्तुतप्रशंसा। अस्या बहुविषयत्वेऽपि तुल्ये प्रस्तुते तुल्यान्तरस्याभिधाने अतीवचमत्कार इति तदेवोदाह्रियते—यथा—

**अविततततमोऽन्धकूपगर्भादिदमुदधारि करेण येन विश्वम्।**
**चरमगिरिगभीरगह्वरान्तः पतति स एष न [प० ५०. १] कश्चिदीक्षतेऽपि॥**

अत्र अप्रस्तुतस्य तथाविधस्य रवेरभिधानेन प्रकृतानेकोपकारस्य कस्यचिन्महापुरुषस्य दुर्दशायां केनापि किञ्चिन्नोपकृतमित्याक्षिप्यते। एवमन्यत्रापि बोध्यम्।

### आदर्शः

अपरविधां निदर्शनामाह—स्वस्वेति। स्वं कार्यं स्वहेतुस्तत्कारणं तयोः कार्यकारणभावरूपस्यान्वयस्योक्तिः प्रत्यायनं कार्यरूपक्रिययैवेत्यर्थः। उन्नतमिति। यो जनो लघुः स उन्नतं पदमवाप्य हेलयैवाप्रयत्नेनैव पतेदित्यर्थं ब्रुवन् प्रतिपादयन् शैलशेखरागतो दृशत्कणो मारुतधृतः सन् चारु पततीत्यन्वयः। अत्रेति। पतनस्य कार्यस्य लाघवे सति उन्नतपदप्राप्तिरूपस्य तत्कारणस्य च कार्यकारणभावरूपः सम्बन्धः पातक्रियया ख्याप्यत इत्यर्थः।

सुधासागरः

इत्यादौ मालेत्यादि। अत्रैकस्य गुणगणनोद्यमस्य समुद्रतितीर्षादीनि बहूपमानानीति मालेत्यर्थः। अपरनिदर्शनां लक्षयति—स्वस्वेति

क्रिययैवेत्यादि। अयमर्थः—यत्र क्रिययैव स्वस्य स्वहेतोश्चान्वयो हेतुहेतुमद्भावरूपः ख्याप्यते साऽपरा निदर्शनेति। उदाहरति 'उन्नतमि'-ति।

यो लघुरल्पबुद्धिरणुपरिमाणश्च स उन्नतं पदमुत्कृष्टां सम्पदमूर्ध्वस्थानं च प्राप्य हेलयैव तादृशकारणाऽभावेऽपि लघुस्वभावेनैव पतेत् सम्पत्तिध्वंसमधःसंयोगं च गच्छेद् इति ध्रुवं निश्चितम्। तथा हि दृष्टत्कणः पाषाणरेण्ववयवः, पृषत्कणः जलबिन्दुलेश इति सम्यक्, शैलशेखरगतः पर्वतशिखरारूढः सन् चारुमारुतधुतो मृदुवायुचालितोऽधः पततीत्यर्थः। स्पष्टम्। रथोद्धता छन्दः। 'रान्नराविह रथोद्धता लगौ' इति लक्षणात्।

अत्र पातक्रिययेत्यादि। अयमर्थः—अत्र पतेत्पदप्रतिपाद्यस्य पातस्य कार्यस्य, लाघवे सत्युन्नतपदप्राप्तिरूपस्य कारणस्य च तथा सम्बन्धः पततिपदप्रतिपाद्यया पातक्रियया प्रतिपादयते। तथाच लाघवे सत्युन्नतपदप्राप्तिः पाते हेतुः यथा दृष्टत्कणस्येति दृष्टान्तपर्यवसानान्निदर्शनात्वमिति।

## (सू० १५१) अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ ९८ ॥

### अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा ।

---

#### सङ्केतः

अप्रस्तुतेति । इह अप्रस्तुतस्य स्तुतिनिन्दासाम्यैः वर्णना दृष्टा । अत्र प्रशंसा वर्णनम्, न स्तुतिः । तच्च अप्रस्तुतम् । अप्रस्तुतत्वादेव वक्तुमयुक्तं सत् प्रस्तुतपरतया उच्यमानं युक्तं स्यात् । प्रस्तुतपरता च कार्यकारण-भावसामान्यविशेषभाव-सारूप्यसम्बन्धे स्यात् । सैवेति । या प्रशंसा कविभिः अप्रस्तुतस्य क्रियते, सा प्रस्तुतपरा, सैव = अप्रस्तुत प्रशंसैवेत्यर्थः ।

#### बालचित्तानुरञ्जनी

अप्रस्तुतप्रशंसालङ्कारं लक्षयति अप्रस्तुतेति । व्याकरोति अप्राकरणिकस्येति ।

#### काव्यादर्शः

सैवेति । अप्रस्तुतस्य प्रशंसा या कविभिः क्रियते सा प्रस्तुताश्रया सैव अप्रस्तुतप्रशंसैषोच्यते । अप्राक-रणिकस्येति । वर्णनावसराद् अपेतत्वाद् अप्रस्तुततस्य ।

#### विवेकः

अप्रस्तुतकार्यकारणोपन्यासः सुतरां निदर्शनातोऽपि लघीयानिति सङ्गत्याऽऽप्रस्तुतप्रशंसामाह—अप्र-स्तुतप्रशंसेति । अप्रस्तुतस्यार्थस्य प्रशंसनमप्रस्तुतप्रशंसानामाऽलङ्कारः । अप्रस्तुतवर्णनश्च स्वतन्त्रमयुक्तमप्रस्तु-तत्वादिति प्रस्तुताश्रयेति । सूत्रभागं व्याचष्टे प्राकरणिकस्याक्षेप इति ।

#### दीपिका

प्रशंसा वर्णना सैवाप्रस्तुतप्रशंसैवेति लक्ष्यनिर्देशः । प्रस्तुताश्रया प्रस्तुतोत्कर्षप्रतिपत्तिपर्यवसानेत्यलङ्का-रणताबीजस्फोरणपूर्वमतिव्याप्तिपरिहारसूत्रणम् । आक्षेप इति ध्वनिशङ्कानिरासः । विशेषप्रतिपादकका-रिकाऽक्तारमाह—सा चेति ।

#### दर्पणः

अप्रस्तुतप्रशंसालङ्कारः—अप्रस्तुतप्रशंसा । प्रशंसा वाच्यतया वर्णनम् । सैवाप्रस्तुतप्रशंसाख्य त्रै( ?) एवालङ्कार इत्यर्थः । प्रस्तुताश्रया प्रस्तुतपर्यवासायिनी । आक्षेप इत्यनेन ध्वनिशङ्कानिवासः [ध्वनिशङ्कानिरासः] तद्भेदानाह साचेति ।

### साहित्यचूडामणिः

अप्रस्तुतप्रशंसेति । प्रस्तुतादप्रस्तुतप्रतीतौ समासोक्तिरुक्ता । विपर्ययादप्रस्तुतप्रशंसा । अप्रस्तुतस्य या प्रशंसा सा सैवेति निगदव्याख्यातं लक्षणमिति यावत् ।

### सम्प्रदायप्रकाशिनी

अप्रस्तुतेति । अप्रस्तुतस्याप्राकरणिकस्य प्रशंसा या सा सैव अप्रस्तुत प्रशंसैव । ननु अप्रस्तुतप्रशंसा न युज्यते अप्रस्तुतत्वादेवेत्यत आह—प्रस्तुताश्रयेति । प्रस्तुतावच्छेदिका ।

व्याचष्टे—अप्राकरणिकस्येत्यादि ।

### मधुमती

अप्राकरणिकस्येति । अप्रस्तुतस्येत्यर्थः । आक्षेपः व्यञ्जनम् ।

### विस्तारिका

अप्रस्तुतेत्यादि । अप्रस्तुतस्याप्रकृतस्य प्रशंसा वर्णना । अर्थान्तरतां वारयति—प्रस्तुताश्रयेति । प्रस्तुतोत्कर्षपर्यवसायिका । प्रस्तुताक्षेपकत्वेन नार्थान्तरतेत्यर्थः. सैवाप्रस्तुतप्रशंसैव लक्ष्यतावच्छेदक एव लक्षणमित्यर्थः । आक्षेपो व्यञ्जनम् ।

### सारबोधिनी

अप्रस्तुतेत्यादि । अप्रस्तुतस्य अप्रकृतस्य प्रशंसावर्णना । अर्थान्तरतां वारयति प्रस्तुताश्रयेति । प्रस्तुतोत्कर्षपर्यवसायिका प्रस्तुताक्षेपकत्वेन नार्थान्तरतेत्यर्थः । आक्षेपो व्यञ्जनम् ।

### काव्यप्रदीपः

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ १२ ॥**

प्रशंसा वर्णनम् । सैव अप्रस्तुतप्रशंसैवेत्यर्थः । प्रस्तुताश्रया प्रकृतप्रतिपत्तिहेतुः । एतच्चालंकारत्वबीजमतिप्रसक्तमिति निवारयति । अप्रकरणिकेन प्राकरणिकक्षेपोऽप्रस्तुतप्रशंसा प्राकरणिकेनाप्राकरणिकाक्षेपः समासोक्तिरिति विवेकः ।

### आदर्शः

अप्रस्तुतप्रशंसालङ्कारमाह—अप्रस्तुतेति । 'प्रशंसा' कथनम् । 'सैव' तन्नाम्नि कैव । 'प्रस्तुताश्रया' प्रस्तुतव्यञ्जिका । 'आक्षेपः' प्रत्यायनम् ।

**सुधासागरः**

अप्रस्तुतस्याप्रकृतस्य प्रशंसा वर्णना सा वर्णना प्रस्तुताश्रयाप्रकृतप्रतिपत्तिहेतुश्चेत् तदा सैव अप्रस्तुतप्रशंसैव नामालङ्कार इत्यर्थः। एतच्चालङ्कारत्वबीजमतिप्रसक्तमिति निवारयति-अप्राकरणिकेत्यादि। तथा च अप्राकरणिकेन प्राकरणिकाक्षेपोऽप्रस्तुतप्रशंसा, प्राकरणिकेनाप्राकरणिकाक्षेपः समासोक्तिरिति विवेकः।

(सू० १५२) कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।

तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥ ९९ ॥

तदन्यस्य कारणादेः। क्रमेणोदाहरणम्—

याता किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते

नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि।

लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा

दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ ४३९ ॥

अत्र प्रस्थानात्किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम्।

---

### सङ्केतः

तदन्यस्येति। 'कार्ये प्रस्तुते तदन्यस्य कारणस्य' इत्यादिक्रमेण च चतुष्टयस्य, तथा—तुल्ये राजादौ प्रस्तुते तदन्यस्य तुल्यस्य यत् वचः भणनम् इति पञ्चाधात्वम्। अत्र वाच्यस्य 'परार्थ स्वसमर्पणम्' इति लक्षणेन लक्षणा।

नितरामिति। 'अग्रेऽपि त्वं कृशा चिन्तया भृशं भवसि यतः। हसितेनेति। तथा तया हसितम्, यथा—अहं त्वया त्यक्ता मरिष्यामीति कारणं सूचितम्।

### बालचित्तानुरञ्जनी

अस्याः प्रथमं पञ्चधा विभागमाह कार्य इति। कार्ये प्रस्तुते तदन्यस्य कारणस्य वचः। निमित्ते प्रस्तुते तदन्यस्य कार्यस्य वचः। सामान्ये प्रस्तुते तदन्यस्य विशेषस्य वचः। तुल्ये प्रस्तुते तदन्यस्य तत्तुल्यस्य वचः। इति पञ्चधा विभाग इत्यर्थः। आद्यमुदाहरति याता इति। हे सुन्दरि देशान्तरगताः पुरुषाः पुनः किं न मिलन्ति। अतः मत्कृते त्वय चिन्ता नो कार्या। सुतरां कृशासि स्वभावत एव त्वं कृशा चिंतया तु सुतरां कृशा भविष्यसि। अतो मुञ्च चिन्तामित्यर्थः। एवं सबाष्पे मयि कथयति सति लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा मन्दंमन्दं तया नायिकाया हसितेन भाविमरणोत्साहः सूचितः। यदि मां त्यक्त्वा क्वचिद् यास्यति तदाहं मरिष्ये इति सूचित इत्यर्थः। प्रस्थानद्वारा कार्यप्रस्तावे प्रस्थानस्य निर्णीतत्वात् कारणं मरणोपक्रमसूचनारूपमभिहितमित्यर्थः।

### काव्यादर्शः

ननु, अप्रस्तुतवर्णनमेव अयुक्तम्। कः खलु हिमवद्वर्णने विन्ध्यस्वरूपं वर्णयेदित्याह—प्राकरणिकस्याक्षेप इति। प्रस्तुतस्य कार्यकारणभावादौ सबन्धे सति सहृदयावर्जकत्वमस्या इत्यर्थः। कार्ये प्रस्तुते तदन्यस्य

कारणस्य १, कारणे प्रस्तुते कार्यस्य २, सामान्ये प्रस्तुते विशेषस्य ३, विशेषे प्रस्तुते सामान्यस्य ४, तुल्ये राजादौ प्रस्तुते तुल्यस्य पुरुषोत्तमादेः ५, यद्वचोभिधानम्। 'परार्थं स्वसमर्पणम्'इति लक्षणेन लक्षणेयम्।

'याता' इति। 'स्वभावत एव कृशा, चिन्तया तु सुतरां भविष्यतीति चिन्तां मुञ्चेति मयि वदति सति तया विलक्षं हसितं कृतम्। तेन च यदि मां मुक्त्वा यास्यसि ततोऽहं मरिष्ये इति कारणं सूचितम्। 'किमिति' इति। प्रस्थाननिवृत्तिलक्षणस्य कार्यस्य प्रश्नमात्रे। अत्र प्रस्थानबुद्धिर्मया त्यक्तेति कार्ये प्रस्तुते कारणस्योक्तिः।

### विवेकः

च चाक्षेपस्त्रिभिः प्रकारैर्भवति कार्यकारणभावात् धूमाग्निवत्, सामान्यविशेषभावाद्वृक्षत्वशिंशपात्ववत्, सारूप्याच्च। तत्राद्ये द्वयी गतिः—कदाचित् कारणप्रस्तुतं सदभिधायमानं प्रस्तुतं कार्यमाक्षिपति, कदाचित्तु कार्यमप्रस्तुतं वर्ण्यमानं सत् प्रस्तुतं कारणं व्यनक्तीति। एवमेव सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्याक्षेपे द्विप्रकारता, सारूप्ये त्वेको भेद इतीयं पञ्चधेति। सूत्रं कार्य इत्यादि। तदिद प्रस्तुतनिष्ठं गम्यत्वं, समासोक्तौ त्वप्रस्तुतनिष्ठम्। अत एवात्र विशेषेण सामान्यं गम्यमानं समर्थ्यत इत्येकस्यानुपादानादुभयोरुपादानमूलादर्थान्तरन्यासादप्यस्य भेदः। तत्र कारणाद् कार्यप्रतीतौ यथा याता इत्यादि। निपतत् पीतमश्रु येन। अत्र प्रस्थानात् केन कार्येण निवृत्तोऽसीति इति कार्ये प्रस्तुते निवृत्तिकारणमभिहितम्। तत्र कार्यस्य प्राधान्ये सति कारणस्यापि प्राधान्यम्, निमित्ताभावे नैमित्तकस्याप्यनुपलम्भात्। अतोऽत्राप्रस्तुतप्रस्तुतयोरभिधीयमानप्रतीयमानयोः समं प्राधान्यम्।

### दीपिका

कारणादेरिति। यथाप्रतियोगि ग्राह्यमित्यर्थः। न मिलन्ति नागच्छन्ति। निपतदेव पीतं संगृहीतमश्रु येनेति विग्रहः। धाराश्रुणेति पाठे धारारूपमश्विति नेयम्। भाविन्यावश्यके मरणे उत्साहो वियोगदुःखशान्तिवाञ्छया। कार्ये पृष्ट इति अस्मादेवोत्तरादुन्नीयत इति भावः।

### दर्पणः

कार्य इति। कार्ये प्रस्तुते कारणस्य, कारणे प्रस्तुते कार्यस्य। सामान्ये प्रस्तुते विशेषस्य, विशेषे प्रस्तुते सामान्यस्य सामान्ये प्रस्तुते सामान्यस्य, तुल्ये प्रस्तुते तुल्यस्येति पञ्चधेत्यर्थः।

निपतदेव पीतं संगृहीतं अधुवेनेति [अश्रुनेति] विग्रहः। कार्य पृष्टे इति। अस्मादेशोक्तन्तरद्वंदीते [?]

एतेदिति [एतदिति] तस्य मुखात् श्रुतमेतत् कियत् कियन्मात्रं स्वल्पमात्रमेवत्यर्थः। मम मत्सम्बन्धीयं। मुक्तामणिः कुत्रोड्डीय गत इत्यर्थः। ममत्वमात्मीयत्वम्।

### साहित्यचूडामणिः

अस्याः प्रथमं पञ्चधा विभाग इत्याह—कार्य इति। तदन्यस्य तेभ्यः कार्यादिभ्यो व्यतिरिक्तस्य कारणादेः। प्रशंसेति वर्णनोपलक्षणं, निन्दाया अपि वर्ण्यमानत्वात्। यत् सूत्रम् "अप्रस्तुतात् सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसे"-(अलङ्कारसू० ३५) ति। अयुक्तं खल्वप्रस्तुतस्य वर्णनम् अप्रस्तुतत्वादेव। तत् प्रस्तुततात्पर्ये कदाचिद् युक्तं स्यात्। नाप्यप्रस्तुतादसम्बन्धे प्रस्तुतप्रतीतिः अतिप्रसङ्गात्।

सम्बन्धश्च भवँस्त्रैविध्यं नातिक्रामति । सामान्याद् विशेषस्य विशेषाद्वा सामान्यस्येति । एव कार्यकारणभावेऽपि । सारूप्ये पुनरेको भेद इत्यसौ पञ्चभेदा । एकरूप्यहेतुकश्च भेदः श्लेषाद्यलङ्कारवैचित्र्यात् त्रिधा । पुनश्च वाच्यस्य संभवासंभवोभयरूपतया त्रिधेति षोढा ।

याता इति । हसितेनान्तः साहसद्योतकेन कार्ये पृष्टे प्रश्नद्वारा कार्यस्य प्रस्तावे प्रस्थानस्य निर्णीतत्वात् कारणं मरणोपक्रमसूचनरूपम् ।

### सम्प्रदायप्रकाशिनी

विशेषानाह—सा च कार्य इत्यादिना । कार्ये प्रस्तुते सति तत्प्रत्यायकत्वेनाप्रस्तुतस्य कारणस्योक्तिरेका । निमित्ते नैमित्तिकस्य द्वितीया । सामान्ये विशेषस्य तृतीया । विशेषे सामान्यस्य चतुर्थी । तुल्ये तुल्यान्तरस्य पञ्चमी ।

व्याचष्टे—तदन्यस्येति ।

याता इति । मिलन्ति संयुज्यन्ते । लज्जामन्थरत्वे साक्षाद् दयितेन प्रयाणप्रस्तुतिर्हेतुः । निपतत्पीताश्रुणा निपतदेव निह्नुतमश्रु येनेत्यर्थः । विरहदुःखपरिहारहेतुत्वान्मरणस्योत्साहत्वं तया सूचित इत्युत्तरेण सूचितम् ।

प्रश्नमुद्घाटयन् योजयति—अत्र प्रस्थानादित्यादि । मरणसूचनं कारणम् ।

### मधुमती

विभजते—सा चेति । कार्ये प्रस्तुते कारणस्य, कारणे प्रस्तुते कार्यस्य, सामान्ये प्रस्तुते विशेषस्य, विशेषे प्रस्तुते सामान्यस्य, तुल्ये प्रस्तुते तुल्यान्तरस्य च अभिधानं इति पञ्चप्रकाराः इत्यर्थः ।

अत्र प्रस्थानादिति । प्रस्थाननिवृत्तिरूपे कार्ये प्रस्तुते, प्रियामरणं कारणं उपन्यस्तम् । तेन च 'प्रियामरण-भिया न गतं' इति कार्य व्यज्यते । अत्र उत्तरवाक्यात् प्रश्नोन्नयनेन उत्तरालङ्कारोऽपि । न चोभयोरैक्यं शङ्कनीयम्; उत्तरे प्रश्नवाक्यस्य, अप्रस्तुतप्रशंसायां कार्यादेश्चोन्नयनेन उभयोर्भेदात् ।

### विस्तारिका

तद्भेदानाह—कार्य इत्यादि । वचोऽभिधानम् । तुल्यस्येत्यनन्तरं चकारो योज्यः । पञ्चधेत्यधिकसंख्या-व्यवच्छेदाय । कारणादेरिति । यथासम्भवं प्रतियोगिनो ग्राह्याः ।

क्रमेणाह—

याता इत्यादि । न मिलन्ति नागच्छन्ति । एवं न भाव्यम्, अमङ्गलत्वादिति । किमायुज्यते, चिन्ता पुनर्न कार्या, या कृता सा कृतेव, पुनरन्तरं नैवमित्यर्थः । मत्कृते इत्यपलापमप्रमाण्यति—अतितरां कृशासीत्यन्यथैवं कार्यानुदयात् । अति कार्श्यदर्शनेनानिष्टशङ्कया बाष्पोद्गमः । गमनानिच्छाज्ञानेन लज्जया सन्मुखदर्शनविरहेणा-पाङ्गदर्शनपरम् । हसितेन सकाकुना । एवमेवास्याभिप्रायो यदस्य विरहे प्राणान् धारयिष्यामीति प्रहासरूपेण भाविन्यावश्यके मरणे चोत्साहः ।

अत्रेत्यादि । किं विस्मये इति । एवं प्रवासो मरणायेत्यर्थः । प्रस्थानाद् निवृत्तोऽसीति यत्कार्यं निवर्तनं तत्रेत्यर्थः । न तु प्रश्नः कार्यमिति प्रिया मरणज्ञानकार्यप्रस्थानान्निवर्तनम् । तदेवं प्रस्तुतं वर्णनीयत्वादिति मरणेनाक्षिप्ताया गमननिवृत्तेरनुरागोत्कर्षकत्वामित्यप्रस्तुतेन मरणेन गमननिवृत्तिप्रस्तुतोत्कर्षणादप्रस्तुतप्रशंसाख्योऽलङ्कारः । एवं सर्वत्रोहनीयम् ।

## सारबोधिनी

तद्भेदानाह कार्य इत्यादि । वचोऽभिधानम् । कारणादेरिति । यथासम्भवं प्रतियोगिनो ग्राह्याः । क्रमेणाह याता इति । अतिकार्श्यदर्शनादनिष्टाशङ्कया बाष्योद्गमः । गमनानिच्छज्ञानेन लज्जा । विगलदेव पीतं संवृत्तं अश्रुयेन, अमाङ्गल्यभिया हसितेन सकाकुनेति पूरणीयम् । एवमस्याभिप्रायः पदस्य । विरहेन प्राणान् धारयिष्यामीति प्रहासरूपेण । अत्रेत्यादि । किं विस्मये । प्रस्थानात् निवृत्तोऽसीत्यत्र यत् कार्यं निवर्तनं तत्रेत्यन्वयः । अत्र मरणसूचनरूपकारणेनाक्षिप्तस्य गमननिवृत्तिरूपकार्यस्यानुरागोत्कर्षकत्वात् अस्यालङ्कारत्वमिति । एवं सर्वमूह्यम् ।

## काव्यप्रदीपः

तां विभजते—

**कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥ १३ ॥**

सेत्यनुवर्तते । कार्यादिपञ्चके प्रस्तुते तदन्यस्य कारणादिपञ्चकस्याप्रस्तुतस्य वर्णनमिति सा पञ्चधेत्यर्थः । तत्र कार्ये प्रस्तुते कारणस्य वर्णनं यथा—

**'याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते**
**नो कार्या नितरां कृशासि कथयत्येवं सवाष्पे मयि ।**

**लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा**
**दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥'**

अत्र प्रस्थानात्किं निवृत्तोऽसीति कार्ये पृष्टे कारणस्य प्रियाया भाविमरणोत्साहस्य वचनम् । किंशब्दः प्रश्नार्थ इति न कारणप्रस्तावः ।

## आदर्शः

अस्याः पञ्चधित्वमाह—कार्य इति । कारणादेरिति । कार्ये प्रस्तुते कारणस्य, कारणे प्रस्तुते कार्यस्य, सामान्ये प्रस्तुते विशेषस्य, विशेषे प्रस्तुते सामान्यस्याभिधानमित्यर्थः । तथा तुल्ये प्रस्तुते तुल्यान्तरस्याभिधानम् ।

तत्र कार्ये प्रस्तुते कारणाभिधानमाह—याता इति । अपि प्रस्थानन्निवृत्तोऽसीति पृच्छन्तं प्रति तत्सखस्योक्तिरियम् । एवं सबाष्पे मयि कथयति सति निपतदेव पीतम् अश्रु येन तादृशेन चक्षुषा मां दृष्ट्वा हसितेन भाविमरणे उत्साहस्तया सूचितः, मरणहेतु शृण्वत्याश्चिन्ताकारणे आश्वासे हासस्य मृत्युसूचकत्वात् । किं कथयति सतीत्य-

त्राह—यात् इति । पुनः किं न मिलन्तीत्यन्वयः । चिन्ताकरणादेवातिकृशाऽसीत्यर्थः । अत्रेति, किमिति, निवृत्तिप्रश्न एव, न तु तत्कार्यस्य तत्कारणस्य वा प्रश्न इत्यवधेयम् । तत्कारणमिति मरणोत्साहससूचनमित्यर्थः ।

## सुधासागरः

विभजते—कार्ये इति ।

सेत्यनुवर्तते । कार्यादिपञ्चके प्रस्तुते तदन्यस्य कारणादिपञ्चकस्याप्रस्तुतस्य वर्णनमिति । सा पञ्चधेत्यर्थः । तदेतदुक्तं श्रीवाग्देवतावतारैः—तदन्यस्य कारणादेरिति ।

तत्र कार्ये प्रस्तुते कारणस्य वर्णनं यथा—याता इति ।

प्रस्थानान्निवृत्तः किमिति मित्रेण पृष्टो यियासुर्गमननिवृत्तिहेतुं स्वप्रियावृत्तान्तं वर्णयति । अयमर्थः—हे सुन्दरि याता देशान्तरं गताः किं पुनर्न मिलन्ति, किन्तु मिलन्त्येवागत्य भूयः । त्वया मत्कृते मदर्थं चिन्ता नो कार्या आधिर्न विधेयः, नितरां कृशाऽसि अत्यन्तं क्षीणासि । एवमुक्तप्रकारेण हे मित्र सबाष्पे मयि कथयति सति, अतिकार्श्यदर्शनादनिष्टशङ्कया बाष्पोद्गम इति भावः । तया प्रेयस्या लज्जया मन्थरा सङ्कुचिता तारकाऽक्षिकनीनिका यस्य तादृशेन । गमनानिच्छा प्रियेण ज्ञातेति लज्जाहेतुः । निपतद् विगलदेव पीतमश्रु येन । अश्रुपतनममङ्गलमिति भियेति भावः तादृशेन चक्षुषा मां दृष्ट्वा हसितेन, प्रियया: जीविते सति वैदेशिकानां मिलनं सम्भवति, अहं तु प्रियवियोगे कथमपि न जीविष्यामीति ज्ञात्वाऽपि एवं प्रतारयसीति हास्यमिति भावः । भाविमरणोत्साहः सूचितः, अन्यथा हसितासम्भवादिति । शार्दूलविक्रीडितं छन्दः ।

अत्रेत्यादि । 'प्रस्थानात्किं निवृत्तोऽसी'-ति कार्ये पृष्टे करणस्य प्रियाया भाव मरणोत्साहस्य वचनम् । किंशब्दः प्रश्नार्थ इति न कारणप्रस्ताव इति भावः ।

राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते।

इत्यं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ ४४० ॥

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गताः, इति कारणे प्रस्तुते कार्यमुक्तम्।

---

### सङ्केत

राजन्निति। कुमारसचिवैः कुमारप्रधानैः। राजशुकः वरशुकः। 'त्वां यात्रोद्यतं ज्ञात्वा द्विषस्ते नष्टाः' इति प्रस्तुतो हेतुरूपोऽर्थः। शुकवृत्तान्तस्तु अप्रस्तुतः कार्यरूपः प्रस्तुतार्थं स्वात्मानमर्पयतीत्यर्थः। यद्वा—कारणवत् कीरवृत्तान्तरूपकार्यस्यापि वर्ण्यत्वेन प्रस्तुते कार्यद्वारात्मभङ्ग्यन्तरेण कारणस्योक्तौ अत्र पर्यायोक्त्यलङ्कारः। कारणापेक्षया कार्यस्य अतिचारुत्वमिति कार्यमेवोच्यते। कारणकार्ययोः, प्रस्तुताप्रस्तुत्वे अप्रस्तुतप्रशंसा।

### बालचित्तानुरञ्जनी

द्वितीयमुदाहरति राजन्निति। हे राजन् राजसुता मां न पाठयति। देंव्योऽपि तूष्णीं स्थितः। हे कुब्जे मां भोजय। कुमारसचिवैः अद्यापि किमर्थ न भुज्यते इत्थं तवारिभवने पञ्जरादध्वगैर्मुक्तः राजशुकः शून्यवलभौ चित्रस्थान् अवलोक्य एकैकं भाषते। शत्रुपलायनरूपकारणे प्रस्तुते पञ्जरशुकवृत्तान्तलक्षणं कार्यमुक्तमित्याह अत्रेति।

### काव्यादर्शः

'कुमारसचिवैः कुमारप्रधानैः। राजशुकः कश्चिदेव उत्कृष्टजातिशालो शुकः।' कार्यमिति। 'दण्डयात्रोद्यतं त्वां बुद्ध्वा त्वदरयः पलाय्य गताः' इति कारणरूप एवार्थः प्रस्तुतो, राजशुकवृत्तान्तस्तु अप्रस्तुतार्थं स्वात्मानर्पयन् कार्यरूप उक्तः॥ यथा वा—

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानरुणिमेव विद्रुमदलं श्यामेव हेमप्रभा।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव॥

—इत्यादौ संभाव्यमानैरिन्द्वादिगतैरञ्जनलिप्तत्वादिभिः कार्यरूपैरप्रस्तुतैर्दीपकत्वे सर्वं काव्यं सालंकारमिति नार्थोऽनेन ग्रन्थेन ।

**विवेकः**

कार्यकारणप्रतीतौ यथा राजषित्यादि । राजशुकः कश्चिदेवोत्कृष्टजातिशाली शुकः । कुमारसचिवैरित्यत्र तनयैरिति पाठान्तरम् ।

ननु कार्यात् कारणे गम्यमाने यद्यप्रस्तुतप्रशंसा तदा **"येन लम्बालकः साम्नः कराघातरुणस्तनः । अकारि भग्नवलयो गजासुरवधूजनः ॥"** (अ. सं.) , **"चक्राभिघातप्रसभाज्ञयैव चकारो यो राहुवधृजनस्य । आलिङ्गनोद्दामविलासबन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥"** (ध्व. आ. २/२०) इत्यादौ सुप्रसिद्धे पर्यायोक्तालङ्कारविषयेऽप्रस्तुतप्रशंसाप्रसङ्गः । तत्र हि गजासुरवधूगतेन लम्बालकत्वादिना कार्येण कारणभूतो गजासुरवधः प्रतीयते, तथा राहुवधूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणभूतोऽवगम्यते । एवमन्यत्रापि पर्यायोक्तविषये ज्ञेयम् । ततश्चास्याप्रस्तुतप्रशंसयाऽऽघ्रातत्वात् पर्यायोक्तस्य निर्विषयत्वप्रसङ्गः । नैष दोषः । इह यत्र कार्यात् कारणं प्रतीयते तत्र कार्यं प्रस्तुतमप्रस्तुतं चेति द्वयी गतिः । यत्र प्रस्तुतत्वं कार्यस्य कारणवत्तस्यापि वर्णनीयत्वात्तत्र कार्यमुखेन कारणं पर्ययेणोक्तमिति पर्यायोक्तनामाऽलङ्कारः । तत्र हि कारणापेक्षया कार्यस्यातिशयेन सौन्दर्यमिति तदेव वर्णितं यथोक्तोदाहरणद्वये । अत्र हि गजासुरवधूवृत्तान्तोऽपि भगवत्प्रभावजन्यत्वात् प्रस्तुत एव । एवं राहुवधूवृत्तान्तोऽपि ज्ञेयः । ततश्च नायमप्रस्तुतप्रशंसाया विषयः । अत्र च भर्तृव्यापादानलक्षणस्य व्यङ्ग्यस्य न प्राधान्यम्, अलकोन्मूलनरोदनोरस्ताड़नवलयभङ्गैरेवोक्तत्वात् । ततश्च न ध्वनिव्यपदेश इति । यत्र पुनः कारणस्य प्रस्तुतत्वे कार्यमप्रस्तुतं वर्ण्यते तत्र स्पष्टैवाप्रस्तुतप्रशंसा यथोदाहृतम् । यथा वा—**इन्दुर्लिप्त इवाञ्जनेन जड़िता दृष्टिर्मृगीणामिव प्रम्लानारुणिमेव विद्रुमरुचिः श्यामेव हेमप्रभा । कार्कश्यं कलयामि कोकिलवधकण्ठेष्विव प्रस्तुतं सीतायाः पुरतश्च हन्त शिखिनां वर्हाः सगर्हा इव ॥** (वा. रा. १/४२) इत्यत्र सम्भाव्यमानैरिन्द्वादिगतैरञ्जनलिप्तत्वादिभिः कार्यरूपैरप्रस्तुतैर्लोकोत्तरो वदनादिगतः सौन्दर्यविशेषः कारणरूपः प्रस्तुतः प्रतीयते (अ. स. १३४ पृः) । इन्द्वादयश्चामी स्फुटमेवाप्राकरणिकास्तत्प्रतिच्छन्दभूतानां मुखादीनां प्राकरणिकत्वात् । तेनात्रेन्द्वादिगतेनाञ्जनलिप्तवादिनाऽप्रस्तुतेन कार्येण प्रस्तुतं मुखादिगतं सौन्दर्य सहदयहृदयह्लादि गम्यत इत्यप्रस्तुतप्रशंसा । एवं कार्येण प्रस्तुतं मुखादिगतं सौन्दर्यं सहृदयहृदयह्लादि गम्यत इत्यप्रस्तुतप्रशंसा । एवं य यत्र वाच्योऽर्थोऽर्थान्तरं तादृशमेव स्वोपस्कारकत्वेनावगूरयति तत्र पर्यायोक्तम् । यत्र पुनः स्वात्मानमेव वाच्योऽर्थोऽप्रस्तुतत्वात् प्रस्तुतमर्थान्तरं प्रति समर्पयति तत्राप्रस्तुतप्रशंसेति निर्णयः (अ. स. १३५-३६ पृः) । एवञ्च 'राजन् राजसुते'त्यादौ पर्यायोक्तमेव बोद्धव्यमिति केचिदाहुः । तत्र प्रस्थानोद्यतमित्यादिना कारणरूपस्यार्थस्य प्रस्तुतत्वात् कार्यरूपोऽर्थोऽप्रस्तुत एव राजशुकवृत्तान्तस्याप्यप्रस्तुतत्वात् प्रकृतार्थं प्रति स्वात्मानमर्पयतीत्यप्रस्तुतप्रशंसैव न्याय्या न तु पर्यायोक्तमिति वर्णयन्ति । अन्ये तु "येन लम्बालक" इत्यादावप्यप्रस्तुतप्रशंसारूपत्वादप्रस्तुतप्रशंसवेत्याहुः । यत्र हि गम्यमानोऽर्थः पर्यायेण भङ्ग्यन्तरेणाभिधीयते तत्र पर्यायोक्तता ।

## साहित्यचूडामणिः

राजन्निति । कार्य पञ्जरशुकवृत्तान्तस्वभावम् । ननु—

**येन लम्बालकः साम्नः कराघातरुणस्तनः ।**
**अकारि भग्नवलयो गजासुरवधूजनः ॥**

इत्यत्र गजासुरवधूविषयेण लम्बालकत्वादिना कार्येण कारणभूतो गजासुरवधः प्रतीयते । तस्मादप्रस्तुतप्रशंसाक्रान्तत्वात् पर्यायोक्तस्य वक्ष्यमाणलक्षणस्य निर्विषयत्वापात इति चेत् । न । यत्र कार्यात् कारणं प्रतीयते तत्र कार्यं प्रस्तुतमप्रस्तुतं चेति द्वयी गतिः । यत्र प्रस्तुतत्वं कार्यस्य, कारणवत् तस्यापि वर्णनीयत्वात्, तत्र कार्यमुखेन कारणमुच्यत इति पर्यायोक्तं कारणापेक्षया कार्यस्यातिशयेन वर्णनार्हत्वात् । यत्र पुनः कारणस्य प्रस्तुतत्वे कार्यमप्रस्तुतं वर्ण्यते तत्राप्रस्तुतप्रशंसा । किञ्च । यत्र वाच्योऽर्थोऽर्थान्तरं तादृशमेव स्वोपस्कारकत्वेनागूरयति तत्र पर्यायोक्तम् । यत्र त्वसौ स्वात्मानमेवाप्रस्तुतत्वात् प्रस्तुतमर्थान्तरं प्रति समर्पयति तत्राप्रस्तुतप्रशंसा । यथात्र दण्डयात्रोद्यतं त्वां दृष्ट्वा त्वदरयः पलाय्य गता इति कारणरूपस्यार्थस्य प्रस्तुतत्वात् कार्यरूपोऽर्थोऽप्रस्तुतराजशुकवृतान्तस्वभावः प्रस्तुतार्थमात्मानं समर्पयतीति ।

## सम्प्रदायप्रकाशिनी

राजन्निति । राजसुतादयः पाठनाद्यधिकृताः ।

योजयति—अत्र प्रस्थानेति । सहसैवेति शुकस्य शून्यत्वापरिज्ञानं सूचितम् ।

## मधुमती

अत्र प्रस्थानोद्यतमिति । त्वया प्रस्थानोद्यमः कृतः इति कारणे प्रस्तुते, तादृशवैरिनगरावस्थया तत्कार्यभूतया अत्र निर्दिष्टया राजप्रस्थानोद्यमलक्षणं कारणमाक्षिप्यत इत्यर्थः ।

## विस्तारिका

राजन्नित्यादि । राजसुता सुपठिता न कौतुकेन शुकं पाठयति । तथा देव्योऽपि स्ववैदग्ध्यप्रकटनाय, तथा कौतुकहेतोः कुब्जादीनाम् अन्तःपुरे स्थितिः । कुमारश्च तत्सचिवाश्च तद्भोजनप्रसङ्गे शुकस्यापि भोजनात् । अध्यवगैः पथिकैः, तद्दिनातिक्रमणाय कृतवासैः । वलभीच्छादनस्थितवक्रदारूणि प्राप्य तत्र स्थित्वेत्यर्थः । वडभाविति पाठान्तरम् । एकैकं प्रत्येकमाभासत इत्यन्वयः । प्रस्थानोद्यमः । कारणम् । परिपलायनम्, अध्वगवसतिम्, शुकमोचनादि कार्यम् ।

## सारबोधिनी

राजन् इति । अत्र प्रस्थानोद्यमः कारणम् । अरिपलायनाध्वगवसतिशुकमोचनादि कार्यम् ।

### काव्यप्रदीपः

कारणप्रस्तावे कार्यवचनं यथा—

'राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते॥'

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः प्रपलाय्य गता इति शत्रुपलायने कारणे प्रस्तुते तस्याभाषणविशेषरूपं कार्यमुक्तम्।

### आदर्शः

कारणे प्रस्तुते कार्यकथनमाह—राजन्निति। शत्रुपराजयोद्यतं राजानं प्रति शत्रुपलायनं प्रतिपादयतो मन्त्रिणस्तत्पलायनकार्यकथनमिदम्। तवारिभवनेऽध्वगैः पञ्जरान्मुक्तो राजशुकः शून्यवलभौ चित्रस्थानवलोक्य एकैकमेवामाभाषते। शून्यपुरमध्येनैव वर्त्मप्रवृत्त्याऽध्वगैः शुकमोचनम्। चित्रस्थं कं कम् अवलोक्यं किं किम् आभाषते इत्यत्राह—राजन्निति। कुब्जा तद्भोजननियुक्ता काचित्। कुमारेति तत्काले तस्यापि भोजनात्। अत्रेति, कार्यं पलायनस्य शुकाभाषणरूपम्।

### सुधासागरः

कारणप्रस्तावे कार्यवचनं यथा—राजन्निति। छन्दः पूर्वोक्तमेव। अयमर्थः—हे राजन् तवारिभवने त्वदागमनभिया शून्यीकृते प्रतिनृपतिमन्दरेऽध्वगैः पान्थैः पञ्जरान्मुक्तो राजशुकः शून्यवलभौ निर्जनगृहविशेषे चित्रस्थान् राजादीनवलोक्य इत्थमेकैकमेकमेकं प्रत्याभाषते कथयति, इत्थं कथमित्याकाङ्क्षयामाह—हे राजन् राजसुता मां न पाठयति, देव्यो राज्ञयोऽपि तूष्णीं स्थिताः न किमपि वदन्ति, हे कुब्जे मां भोजय हे कुमार सचिवैर्भवद्वयस्यैरद्यापि किं न भुज्यते इति। अत्रेत्यादि। अत्र शत्रुपलायने कारणे प्रस्तुते तस्याभाषणविशेषरूपं कार्यमुक्तमित्यर्थः।

एतत्तस्य मुखात्कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा॥ ४४१॥

अत्रास्थाने जडानां ममत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः।

---

### सङ्केतः

एतदिति। मुखं आकृतिः, लोकात्। एतस्याः आकृतेः इदं अल्पमित्यर्थः। 'मुखात्' इति अपेक्षितक्रियं अपादानम्। अत्र च अम्भोबिन्दौ मणिधीः विशेषः।

### बालचित्तानुरञ्जनी

तृतीयमुदाहरति एतदिति। तस्य पुरुषस्य एतत् कियत् जाड्यं यत् स जडः मुखात् वाङ्मात्रेणैव कमलिनीपत्रे वारिणः कणं मुक्तामणिरित्यमंस्त। अस्मादन्यदपि शृणु। शनैः आदीयमाने तत्र अङ्गुल्यग्रलघुक्रियया विलयिनि सति अयं मणिः उड्डीय गत इति अन्तः शुचा अनुदिनं न निद्राति। अत्र जडानां स्वल्पेऽपि महत्त्वसम्भावना भवतीति सामान्ये प्रस्तुते मुक्ताफलभ्रान्तिमल्लक्षणे विशेष उक्त उत्याह अत्रेति।

### काव्यादर्शः

'मुखाद्' इति। लोकसिद्ध्यात्र मुखमाकृतिः। अपेक्षितक्रियं चैतदपादानम्। एतत् तच्छरीरादल्पतरं जातमित्यर्थः।

विशेष इति। जबिन्दौ मणित्वसंभावनमप्रस्तुतं विशेषरूपमुक्तम्।

### विवेकः

एतत् पर्यायोक्तालङ्कारप्रस्तावे वक्ष्यते। विशेषात् सामान्यप्रतीतौ यथा एतत्तस्य मुखादित्यादि। "लोकप्रसिद्ध्याऽत्र मुखमाकृतिः, अपेक्षितक्रियञ्चैतदपादानं जात्यावेदकम् एतच्छरीरादन्यदितराज्ज्ञातमित्यर्थः" (रु. स. ६३ पृ.)। "अत्र जडानामस्थान एवोद्यम इति सामान्ये प्रस्तुते जलबिन्दौ मणित्वसम्भावनारूपोऽप्रस्तुतो विशेषोऽनिहितः।"

### दीपिका

मुखात् कियत् श्रुतमित्यर्थः ।

### साहित्यचूडामणिः

एतदिति । मुखेन वाङ्मात्रं लक्ष्यते । कियज्जाड्यमिति । अङ्गुल्यप्रेत्यादिना तस्य विदग्धम्मन्यता समुन्मील्यते ।

विशेष इति । मुक्ताफलभ्रान्तिलक्षणः ।

### सम्प्रदायप्रकाशिनी

एतत् तस्येति । पाथः कणं मुक्तामणिरित्यमंस्तेति यत् एतत् तस्य मुखात् कियद्, वक्ष्यमाणजडापेक्षया जाड्यमेतदल्पकमित्यर्थः । अस्माच्छृण्वन्नपि मुक्तामणित्वेन मन्तुः सकाशाद्विमर्शनसमनन्तरं मिथ्येति शृण्वन्नपि मम मुक्तामणिरुड्डीय गत इति यः शुचा न निद्राति स सुतरां जड इत्यर्थः ।

योजयति—अत्रास्थान इति ।

### मधुमती

एतदिति । स जडः कमलिनीपत्रे वारिणः कणं अस्मासु मुखात् शृण्वन्नपि मुक्तामणिरिति यदमंस्त तस्य कियदेतत् ? इत्यन्वयः । विशेषः जलबिन्दौ मुक्ताभ्रमरूपः ।

### विस्तारिका

एतदित्यादि । मुखादित्यपाये पञ्चमी । तन्मुखादपगतमेतत् कियदिति सम्बन्धः । तत्किमित्याह—कमलिनीपत्रस्थितं वारिकणं मुक्तामणिरित्यमंस्त । अस्मादन्यदपि शृणु । आदीयमाने गृह्यमाणे प्रविलयिनि अङ्गुलावेव लीने सति शनैरित्यदानविशेषणम् ।

अत्रेत्यादि । वारिकणे मुक्ताधीर्विशेषः ।

### सारबोधिनी

एतदिति । मुखादित्यपाये पञ्चमी । तन्मुखादपगतमेतत्कियदिति सम्बन्धः । तत्किमित्याह । कमलिनी-पत्रस्थितं वारिकणं मुक्तामणिरित्यमंस्त । यत् अस्मादन्यदपि शृणु । आदीयमाने गृह्यमाणे प्रविलयिन्यङ्गुलावेव लीयमाने सति । शनैरित्यादानविशेषणम् । अत्रेत्यादि । वारिकणे मुक्ताधीरित्यर्थः ।

### काव्यप्रदीपः

सामान्ये प्रर॒ुने विशेषवचनं यथा—

'एतत्तस्य मुखात्कियत्कमलिनीपत्त्रे कणं वारिणो
यन्मुकतामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा ॥'

अत्र जडानामस्थल एव ममत्वसंभावना भवतीति सामान्ये प्रस्तुते पुरुषविशेषस्य स ममत्वविशेषोऽभिहितः ।

### आदर्शः

सामान्ये प्रस्तुते विशेषकथनमाह—एतत्तस्येति । जडविशेषस्य कृत्यं कस्यचिन्मुखाच्छ्रुत्वा कथयन्तं प्रति तदधिकमपि तत्कृत्यं जानतः कस्यचिदुक्तिरियम् । स जडः कमलिनीपत्रे वारिणः कणं यन्मुक्तामणिरित्यमंस्त, कथयतस्तस्य मुखात् एतत् किं श्रुतमिति शेषः । अस्मादन्यदपि शृणु । स जडस्तस्मिन् वारिणः कणे धारणार्थं प्रयुक्तया अङ्गुल्यग्रस्य लघुक्रिययाऽल्पक्रियया प्रविलयिनि सति स मुक्तामणिर्मम स्थानादुड्डीयकुत्र गत इति अन्तः शुचा निशि निद्रां नाप्नोतीत्यर्थः ।

अत्रेति, जडसामान्यस्यवस्थाने ममत्वसम्भावना भवतीति सामान्ये प्रस्तुते इत्यर्थः । 'विशेषः' ईदृशो जडविशेषः ।

### सुधासागरः

सामान्ये प्रस्तुते विशेषवचनं यथा-एतत्तेति ।

स जडो मूर्खः कमलिनीपत्रे स्थितं वारिणः कणं जलबिन्दुं मुक्तामणिरित्यमंस्त मौक्तिकमित्युक्तवान् । किञ्च तस्य मूर्खादिर्न कियत् । अस्मादप्यन्यच्छृणु । शनैरादीयमाने मौक्तिकबुद्ध्या यत्नेन मन्दं गृह्यमाणे अर्थात् तस्मिन् वारिकणे अङ्गुल्यग्रयोर्लघ्वी या क्रिया स्पर्शरूपा तया प्रविलयिनि अङ्गुलावेव लीयमाने सति मम मुक्तामणिः कुत्रोड्डीय गत इति शुचा दुःखेनान्तः न निद्राति नेत्रनिमीलनेऽपि निद्रां न त्यजतीत्यर्थः । छन्दः पूर्वोक्तमेव ।

**सुहृद्वधूवाष्पजलप्रमार्जनं करोति वैरप्रतियातनेन यः।**

**स एव पूज्यः स पुमान्स नीतिमान्सु-**

**जीवितं तस्य स भाजनं श्रियः॥ ४४२॥**

अत्र 'कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि तत् त्वमेव श्लाघ्यः' इति विशेषे प्रकृते सामान्यमभिहितम्।

---

**सङ्केतः**

कृष्णमिति कृष्णेन नरकासुरे हते तन्मन्त्रिणः तन्मित्रं प्रत्युक्तिः।

**बालचित्तानुरञ्जनी**

चतुर्थमुदाहरति सुहृदिति। विष्णुना नरकासुरे हते कोऽपि तन्मन्त्री कश्चन नरकासुरसुहृदं प्रतीदमाह। यः वैरप्रतियातनेन सुहृद्वधूबाष्पजलप्रमार्जनं करोति स एव पूज्यः स पुमान् स नीतिमान् तस्य सुजीवितं स श्रियो भाजनम्। विशेषे वक्तव्ये सामान्यमुक्तमित्याह अत्रेति।

**काव्यादर्शः**

'सहृद्' इति। 'प्रतियातनं शोधनम्'। एतद्विष्णुना नरकासुरे हते कोऽपि तन्मन्त्री नरकासुरमित्रं प्रत्याह।

**विवेकः**

(अ. स. १३३ पृ:) सामान्यद्विशेषप्रतीतौ यथा सुहृदित्यादि। प्रतियातनं संशोधनम्, मित्रं नरकासुरः।

**दीपिका**

वैरप्रतियातनं कृत आघाते प्रत्याघातः।

**साहित्यचूडामणिः**

सुहृदिति। वैरस्य शात्रवस्य प्रतियातनं शोधनम्। सामान्यं यथोक्तरूपम्।

**सम्प्रदायप्रकाशिनी**

सुहृदध्विति। वैरप्रतियातनेन वैरप्रतिकारेण न पुनराश्वासनमात्रेण। अत्र प्रबन्धान्तःश्लोके विशेषस्य प्रस्तुत्वमुद्घाटयन् योजयति—अत्र कृष्णमित्यादि।

## विस्तारिका

सुहृदित्यादि । जलेति बाहुल्यसूचकम् । वैरप्रतीयातनं कृताघातेषु प्रत्याघातः । पुमानुत्कृष्टः सः ।

सामान्येन सुहृद्वधूत्वेन निर्देशात् श्लेषसमासोक्ती तदाभासस्वरूपे, अप्रकृतात् प्रकृताक्षेपे तयोरविषयत्वादप्रकृतयोः प्रकृतयोर्वार्थयोः श्लेषविषयत्वात् । तया प्रकृते वस्तुन्यप्रकृतव्यवहारसमारोपे सामसोक्तित्वात् ।

## सारबोधिनी

सुहृदीति । वैरप्रतियातनेन । श्लेषसमासोक्ती तदाभासरूपे, अप्रकृतात् प्रकृताक्षेपे तयोरविषयत्वात् । अप्रकृतयोः प्रकृतयोर्वार्थयोः श्लेषविषयत्वात्, तथा प्रकृते वस्तुनि अप्रकृतव्यवहारारोपस्य समासोक्तित्वात् ।

## काव्यप्रदीपः

विशेषे प्रस्तुते सामान्यवचनं यथा—

**'सुहृद्वधूवाष्पजलप्रमार्जनं करोति वैरप्रतियातनेन यः ।**
**स एव पूज्यः स पुमान्स नीतिमान्सुजीवितं तस्य स भाजनं श्रियः ॥'**

अत्र श्रीकृष्णं प्रति शत्रुं निहत्य नरकासुरवधूनां दुःखं यदि शमयसि तदा त्वमेव श्लाघ्य इति विशेष प्रस्तुते सामान्यमुक्तम् । तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः विशेषणविशेष्यवाचिनां सर्वेषामपि श्लिष्टत्वस्य, विशेषणमात्रवाचिनो वा श्लिष्टत्वस्य, श्लेषाभावेऽपि सादृश्यमात्रस्यैव वा प्रकृताक्षेपहेतुत्वात् ।

## आदर्शः

विशेष प्रस्तुते सामान्याभिधानमाह—सुहृद्वध्विति ।श्रीकृष्णं निहन्तुं कालयवनमुत्तेजयतस्तन्मन्त्रिण उक्तिरियम् । श्लोकार्थः स्पष्ट एव । प्रतियातनं निर्यातनम् । अत्र श्रीकृष्णनिष्ठस्य वैरस्य प्रतियातनेन धन्यतया प्रस्तुते कालयवनरूपे विशेषे तादृशधन्यसामान्य उक्त इत्याह—अत्रेति ।

श्लेष इति । अप्रकृतवाचिशब्दश्लेष इत्यर्थः । समासोक्तिरिति समासोक्तिच्छायेत्यर्थः, प्रकृतकथनेनाप्रकृतप्रत्यायनस्यैव समासोक्तित्वादत्र त्वप्रकृतकथनेनैव प्रकृतप्रत्यायनात्, छाया च प्रकृताप्रकृतान्वितविशेषणवत्तया । सादृश्यमात्रमिति, मात्रपदाद् उभयान्वितविशेषवत्त्वव्यवच्छेदः ।

## सुधासागरः

विशेषे प्रस्तुते सामान्यवचनं यथा—सुहृदिति । वृत्तिः स्फुटैव ।

यः पुरुषो वैरप्रतियातनेन वैरशोधनेन सुहृद्वधूनां मित्रस्त्रीणां बाष्पजलप्रमार्जनमश्रुप्रोञ्छनं करोति, स एव पूज्यः स एव पुमान् पुरुषः स एव नीतिमान् नयज्ञः, तस्यैव सुष्ठु जीवितम्, स एव श्रियः भाजनं लक्ष्म्याः पात्रमित्यर्थः । शुद्धविराट् छन्दः । इदमेव वंशस्थम् । लक्षणमुक्तं प्राक् ।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः। श्लेषः समासोक्तिः सादृश्यमात्रं वा तुल्यात् तुल्यस्य ह्याक्षेपे हेतुः। क्रमेणोदाहरणम्—

पुंस्त्वादपि प्रविचलेत् यदि यद्यधोऽपि
यायात् यदि प्रणयने नमहानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन॥ ४४३॥

---

### सङ्केतः

पुंस्त्वादिति। पुंस्त्वं विक्रमः पुम्भावो वा। अतः पातालं, नीचतया चलनं च। प्रणयनं याच्ञा, तन्निमित्तम्। न महानपि वामनः स्वल्पेऽपि। पुरुषोत्तमः विष्णुः सन्नरोऽपि। अत्र साधुवृत्तं वाच्यत्वात् प्रस्तुतम्। तत्र च अभिधायाः नियन्त्रणात् नात्र श्लेषः। विष्णुप्रतिपत्तिस्तु शब्दोत्थात् ध्वनेरेवेति नेहाप्रस्तुतप्रशंसा इति चेन्न। साधुवृत्तस्य वाच्यत्वासम्भवात्। न ह्युत्कृष्टोऽपि विष्णुवत् वस्तुतया विश्वमुद्धर्तुमीष्टे। आक्षिप्यमाणस्य तु तस्य गुणवृत्त्या तद्वर्णनं अविरुद्धम्, गुणभूतत्वादिति अप्रस्तुत-प्रशंसैवेयम्। अत्र च विष्णुवृत्तं वाच्यं अप्रस्तुतं च। तेन च प्रस्तुतं साधुवृत्तं आक्षिप्यते इति न ध्वनिः। स हि अप्रस्तुताक्षेपरूपः स्यात्।

### बालचित्तानुरञ्जनी

पुंस्त्वादिति। अयं पुरुषः यदि पुंस्त्वादपि प्रविचलेत् यदि अधोऽपि यायात् यदि प्रणयने याचने सति महानपि न स्यात्। लघुरपि स्यादित्यर्थः। तदपि तथापि विश्वमुद्धरेत्। केनापि पुरुषश्रेष्ठेन इति ईदृशी इयं दिक् प्रकटिता। कृष्णपक्षे, पुंस्त्वात् प्रचलनं, असुरैरमृतापहारे स्त्रैणावलम्बात् आदिकमठाद्याकरेण अधोयानं बलिबन्ध-नोपक्रमे वामनेन विश्वाभ्युद्धरणं वराहादिना पृथिव्याद्यभ्युज्जीवनम्। अत्र कस्मिंश्चित् पुरुषे प्रस्तुते ततुल्यस्व-भावस्य भगवतः [अभिधानम्।]

### काव्यादर्शः

'पुंस्त्वाद्' इति। 'पुंस्त्वं पुंसो भाधस्तस्यैव चारु कृत्यं च। अधः पातालं निकृष्टा गतिश्च। प्रणयने याच्ञानिमित्तम्। न महानपि, स्वल्पोऽपि। पुरुषोत्तमो विष्णुः सत्पुरुषश्च।' एष न शब्दश्लेषोऽभिधाया एकत्र नियन्त्रितत्वाद्, नापि विशेष्यपदस्य श्लिष्टत्वेऽपि शब्दशक्तिमूलो ध्वनिर्भगवद्वृत्तान्तस्यात्र वाच्यत्वात् तस्य चाप्रस्तुतत्वात्। प्रस्तुतार्थमुखेन यत्राप्रस्तुतार्थो विशेष्यद्वारेणावगम्यते स। तस्य ध्वनेर्विषय इति ह्युक्तम्। सत्पुरुषचरितमेवात्र वाच्यं प्रस्तुतं च, तन्मुखेन चेतरार्थप्रतिपत्तिः। ततः शब्दशक्त्युद्भव एवायमिति चेद्, न, तस्य वाच्यात्वासंभवाद् न ह्युत्कृष्टतमस्यापि पुरुषस्य विष्णोरिव विश्वोद्धरणशक्तिः सत्यत एवास्ति। आक्षिप्यमाणस्य तु

तस्य गुणवृत्त्या तद्वर्णनमविरुद्धं, गुणभूतत्वादिति अप्रस्तुतप्रशंसैवेयम्। पुरुषोत्तमस्य विशेष्यस्य विशेषणानां च श्लिष्टत्वात् श्लेषगर्भत्वम्।

### विवेक:

तुल्ये प्रस्तुते तुल्यस्याभिधाने श्लेष इति विशेष्यपदस्यापि श्लिष्टता। समासोक्तिरिति समानविशेषणं विशेष्यपदन्त्वश्लिष्टं सादृश्यमात्रमिति प्रतीयमानेनापि केनचिद्धर्मेणानुगुण्यम्। "पुस्त्वं पुरुषस्य भाव:, तस्यैव चारुत्वञ्च। अध: पातालं निकृष्टा गतिश्च। प्रणयने याच्ञानिमित्तम्। न महानप्यल्पोऽपि। पुरुषोत्तमो विष्णु:, सत्पुरुषश्च। एष न शब्दश्लेष:, अभिधाया एकत्र [नियमा-] न्नियन्त्रितत्वात्। नापि विशेष्यपदस्य श्लिष्टत्वे शब्दशक्तिमूलो ध्वनि:, भगवद्वृत्तान्तस्यात्र वाच्यत्वात्तस्य चाप्रस्तुतत्वात्। प्रस्तुतार्थमुखेन यत्राप्रस्तुतार्थो विशेष्य-द्वारेणावगम्यते स तस्य ध्वनेर्विषय इत्युक्तं, सत्पुरुषचरितमेवात्र वाच्यं प्रस्तुतश्च। तन्मुखेन चेतरार्थप्रतिपत्तिस्त-तश्चार्थशक्त्युद्भव एवायमिति चेन्न, तस्य वाच्यत्वासम्भावात्। न ह्युत्कृष्यस्यापि पुरुषस्य सत्यत एव सम्भवति शक्तिर्विश्वमभ्युद्धर्तुम्, आक्षिप्यमाणस्य तु तस्य तुल्यत्वाद्वर्णनमविरुद्धमङ्गभूतत्वादित्यप्रस्तुतप्रशंसैवेषा।"

### दीपिका

श्लेषसमासोक्तिशब्दावत्र तदाभासपरौ। अप्रकृतात् प्रकृतप्रतीतौ तल्लक्षणा भावाद् भावे वा ताभ्यामेव ग्रस्ततया मूलोच्छेदापत्ते:। पुंस्त्वात् प्रविचलनमैकत्र स्वरशरीरप्राप्ति:, अन्यत्र नु पुरुषताहानि:। अधोगमनं पाता-लप्रवेश: स्वपदभ्रंशश्च। प्रणयनेनापूर्वोत्कर्षप्राप्त्या। महान् महाकाय आसादितोच्चै: पदश्च। विश्वं भुवनं सर्वजनञ्च। केनाप्यनिर्वाच्यमहिम्ना। दिङ्मार्ग:। पुरुषोत्तमो नारायण: प्रकृत्या महानुभावश्च। अत्रावयवप्रसिद्धे: समुदायप्रसिद्धिर्बलीयसीति न्यायेन पुरुषोत्तमशब्द: प्रथमं भगवत्येव प्रतीतिमाधत्त इति तदनुरोधेनान्येऽपि शब्दा-स्तत्संसर्गयोग्यार्थप्रत्यायकतयैव प्रथमत: स्फुरन्ति, ततश्च प्रकरणपर्यालोचनयाऽर्थान्तरप्रतीतिरिति श्लेषाभासता। न च प्रकरणमेव सर्वापवादकमिति वाच्यं सामग्रीवशेनात्र प्राकरणिकताभानस्य प्रथममनुभूयमानत्वात्।

### दर्पण:

श्लेषालङ्कार:—श्लेष इति। श्लेषमाणो विशेष्यस्यापि साम्यात्। न तु श्लेष एव। प्रकृता [प्रकृते] अस्य गम्यत्वात्। एवं समासोक्ति: समासोक्त्याभासो विशेषणमात्रसाम्यात् न तु सैव, उक्तादेव न्यायात् पुंस्त्वांत्परिचलनममृताहरणकाले स्त्रीस्वरूपधारित्वात् अधोगमनं वराहकमतरूपेण (वराहकमठरूपेण) नृधारणात् [?] प्रणयनं सृष्टि:। तद्धेतोर्महान् महत्वरूप:। पुरुषोत्तमेन वासुदेवेन, प्रच्छरप्रसिद्धया [पुराणप्रसिद्धया] पुरुषो-त्तमशब्देन प्रथमं तस्यैव बुद्ध्यारोहात्। अत्र प्रकृतार्थपक्षे पुंस्त्वात्पुरुषाकारात् अधोगमनं नीचताप्रतीति:। प्रणयने प्रीतिविषयेन महान् उत्तमोऽपि यदि न स्यात्। पुरुषोत्तमेन पुरुषश्रेष्ठेन। अत्र पुरुषोत्तमशब्दस्य द्व्यर्थत्वात् श्लेषाभास:।

## साहित्यचूडामणिः

अथ पञ्चमं भेदं भिनत्ति तुल्य इति । श्लेषसमासोक्त्याद्यलङ्कारान्तरं वैचित्र्यमित्याकूतम् । सादृश्यमात्रम् उपमा । यद्यपीति विप्रकृष्टयोः सर्वत्रान्वयः ।

पौरुषात् प्रविचलनमसुरैरमृतापहारे स्त्रैणावलम्बनात् । अधोयानमादिकमठाद्याकारेण । प्रणयनेन महत्त्वं बलिबन्धोपक्रमे त्रिविक्रमौन्नत्यात् । विश्वाभ्युद्धरणं वराहादिना पृथिव्यादिप्रत्युज्जीवनम् । अत्र कुत्रचित् सत्पुरुषे प्रस्तुते तत्तुल्यस्वभावस्य भगवतः परपुरुषस्य प्रशंसा श्लेषसंश्लेषेणानुगृह्यते । विशेष्ये पुरुषोत्तमपदेऽपि श्लेषेण श्लेषः ।

## सम्प्रदायप्रकाशिनी

तुल्यत्वनिबन्धना त्रिधेत्याह—तुल्ये प्रस्तुत इत्यादि । समासोक्तिर्विशेष्यस्य साम्यं विना संक्षिप्योक्ति-मात्रमित्यर्थः । हिर्हेतौ । श्लेषादित्रयस्य तुल्यान्तराक्षेपहेतुत्वादित्यर्थः ।

पुंस्त्वादपीति । पुंस्त्वात् प्रविचलनमेकदा स्त्रीत्वापत्तिः अन्यदा साहसादुपरमः । अधोयानं पातालावतरणं न्यग्भावश्च । प्रणयनेन महत्त्वं याचनेन वृद्धिः । विश्वोद्धरणं भूमेरुदञ्चनं जगदवनं च । दिक् महासत्त्वताप्रकार इत्यर्थः । पुरुषोत्तमो विष्णुर्महापुरुषश्च । अत्र विशेषणविशेष्योभयांशे शब्दसाम्याच्छ्लेषेण तुल्यान्तराक्षेपः ।

## मधुमती

श्लेषः इति । अत्र श्लेषसमासोक्तिपदाभ्यां शिलष्टशब्द-शिलष्टविशेषणयोः परिग्रहः । तेन—शिलष्टश-ब्देन यत्र अप्रस्तुतवर्णनं, यत्र वा तद्वर्णने शिलष्टपदान्युपादीयन्ते तदुभयं लभ्यते, न तु तदुभयालङ्कारावेव विवक्षितौ । एतद्विषये तयोरप्रवृत्तेः । अभिधेयोपस्थितौ श्लेषस्य, प्रस्तुतवर्णनेन अप्रस्तुतव्यञ्जने समासोक्तेर्वा अवतरात् ।

पुंस्त्वादपीति । अमृताहरणे विष्णोः स्त्रीवेषपरिग्रहात्, वसुधोद्धरणे पातालप्रवेशात्, प्रणयने बलियाचने वामनरूपपरिग्रहात् इत्यर्थः । अत्र पुंस्त्वादयः पुरुषोत्तमेति च शब्दाः शिलष्टाः ।

## विस्तारिका

पुंस्त्वादित्यादि । पुंस्त्वं योगक्षेमक्षमता पुरुषता च । अधोगमनपभ्रंशः पातालगमनं च । महान् प्राप्तो-त्कर्षस्त्रिविक्रमता च । उद्धरणं विपद्विनाशनम् । दिक् प्रकारः । पुरुषोत्तमेन पुरुषश्रेष्ठेन श्रीकृष्णेन च ।

अत्र कृष्णपक्षे कैटभीस्वरूपस्त्रीत्वापत्त्याऽसुरमोहनेन तेभ्योऽमृतकर्षणाद् विश्वस्य रक्षा । वराहमूर्त्या पातालप्रवेशात्मकाधोगमनेन पृथिव्युद्धरणम् । प्रणयनेन वलितः, प्रार्थनेन पृथिवीं प्राप्यासुरनिर्यपणाद् विश्वरक्ष-णम् ।

अत्र प्रकृते पुरुषश्रेष्ठे तदुपमानीभूतः श्रीकृष्णोऽभिहितः । पुरुषोत्तमादीनां शब्दानामुभयार्थकत्वात् श्लेष-च्छायाप्रसिद्धिवशादप्रकृतस्यापि श्रीकृष्णस्य प्रथममभिधानम् ।

### सारबोधिनी

पुंस्त्वादिति। पुंस्त्वं पुरुषाकारः शौर्यादिः पुंलिङ्गञ्च। अधोगमनप्रकृष्टप्राप्तिः पातालगमनञ्च। प्रणयने याचने। न महान् महानपि न स्यात्। महत्त्वरहितः स्वल्पतनुश्च। उद्धरणं विपद्विनाशनम्। दिक् प्रकारः। पुरुषोत्तमेन पुरुषश्रेष्ठेन विष्णुना च। अत्र विष्णुपक्षे स्त्रीत्वप्राप्त्या दैत्यमोहनेन तेभ्योऽमृतादानात् विश्वस्य रक्षा, वराहमूर्त्या पातालप्रवेशादधोगमनेन च पृथिव्युद्धरणं बलितः प्रार्थनेन वामनत्वप्राप्त्या जगद्रक्षणम्। अत्र पुरुषश्रेष्ठे प्रकृते तदुपमानीभूतः श्रीविष्णुरुक्तः। पुरुषोत्तमादिशब्दानामुभयार्थकत्वात्। श्लेषच्छायाप्रसिद्धिवशादप्रकृतस्यापि श्रीविष्णोः प्रथममभिधानम्।

### काव्यप्रदीपः

आद्यो यथा—

**'पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि**
**यायाद्यदि प्रणयने न महानपि स्यात्।**
**लभ्युद्धरेत्तदपि विश्वमितीदृशीयं**
**केनापि दृक्प्रकटिता पुरुषोत्तमेन॥'**

अत्र पुंस्त्वादित्यादिविशेषणानां पुरुषोत्तमेनेति विशेष्यस्य च श्लेषात्सत्पुरुषप्रतिपत्तिः। न च श्लेष एवायम्। 'अवयवशक्तेः समुदायशक्तिर्बलीयसी'ति न्यायात्प्राग्विष्णूपस्थितौ सत्पुरुषस्याक्षेपेणैवोपस्थितेः। श्लेषसत्त्वेऽप्यप्रस्तुतस्य प्रथमोपस्थित्यैवाप्रस्तुतप्रशंसात्वात्।

### आदर्शः

श्लेषे उदाहरति—पुंस्तादपीति। सपत्नापहतं राज्यमुद्धर्त्तुं कञ्चित् नृपं युद्धे जयतो मन्त्रिण उक्तिरियम्। पुंस्त्वात् पुरुषभावाद् यदि प्रविचलेत् स्त्री यदि भवेत्, तथाधोऽपि पातालमपि यदि यायात्, तथा प्रणयने याचननिमित्तं यदि महान् न स्यात् खर्वः स्यात् तदपि विश्वं संसारमुद्धरेदितीदृशीयं दिक् प्रकारः केनाप्यनिर्वचनीयेन पुरुषाणामुत्तमेन नारायणेन प्रकटिता दर्शिता। अमृताहरणेऽसुरेभ्यो विश्वमुद्धर्त्तु नारायणेन मोहिनीरूपस्त्रीत्वप्राप्तेः, जलप्लुतं विश्वमुद्धर्त्तं नारायणेन वराहमूर्त्या पाताले गमनात्, बलिदैत्याहतं विश्वमुद्धर्त्तुं नारायणेन पदत्रययाचननिमित्तं खर्वत्वप्राप्तेश्च। अत्राप्राकृतनारायणकथनेन श्लिष्टतद्विशेषणैः प्रकृतराजप्रत्यायनम्। तथा हि—पुंस्त्वाद् यदि प्रविचलेत् यद्यधो नीचत्वं यायात्, यदि याचने च महिमरहितः स्यात्तदपि विश्वं सपत्नहृतं स्वीयराज्यम् अभ्युद्धरेत् इत्ययं प्रकारः केनापि पुरुषश्रेष्ठेन दर्शित इत्यर्थः। तथा च तादृशभावेनापि त्वया स्वराज्यमुयतामिति भावः। न चात्र समासोक्तिच्छायाऽपीति वाच्यम्, विशेष्यवाचकपुरुषोत्तमपदस्याप्यत्र श्लिष्टत्वेन तच्छायाभावात्; नाप्युपमाध्वनित्वम्, प्रकृतस्योपमेयस्यैवात्र व्यङ्ग्यत्वात्, अप्रकृतोपमानव्यञ्जन एव तत्त्वात्।

**सुधासागरः**

तुल्ये प्रस्तुत इत्यादि । अयमर्थः—तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः—विशेषणविशेष्यवाचिनां सर्वेषामपि श्लिष्टत्वस्य, विशेषणमात्रवाचिनो वा श्लिष्टत्वस्य श्लेषाभावेऽपि सादृश्यमात्रस्यैव वा प्रकृताक्षेपहेतुत्वादिति ।

तत्राद्यो यथा—पुंस्त्वेति ।

पुंस्त्वं पुंल्लिङ्गं पुरुषकारः शौर्यादिश्च तस्मादपि प्रविचलेत् पुंस्त्वहानिःस्यात् यदि अधोऽपियायात् पातालमपि गच्छेत् पक्षे निकृष्टपदमपि प्राप्नुयात्, यदि प्रणयने याचने न महानपि महानपि न स्यात्, स्वल्पतनुः स्यादिति यावत्, पक्षे महत्त्वरहितः स्यात्, तदपि तथापि विश्वमभ्युद्धरेत् । उद्धरणं विपद्विनाशनम् । संसारोपकारं कुर्यात् इतीदृशीयं दिक्प्रकारः केनापि पुरुषोत्तमेन विष्णुना सत्पुरुषेण च प्रकटिता प्रकाशितेत्यर्थः । वसन्ततिलका छन्दः । अत्र विष्णुपक्षे मोहिनीरूपतया पुंस्त्वहानावपि व्युद्धरणेन विश्वरक्षा, बलितः प्रार्थने वामनत्वाप्राप्त्याऽल्पतनुत्वेऽपि विश्वरक्षेति बोध्यम् । अत्र पुंस्त्वादित्यादिविशेषणानां पुरुषोत्तमेनेति विशेष्यस्य च श्लेषात् सत्पुरुषप्रतिपत्तिः । न च श्लेष एवायम्, 'अवयवशक्तेः समुदायशक्तिर्बलीयसी' इति न्यायात् प्राग्विष्णूपस्थितौ सत्पुरुषस्याक्षेपेणैवोपस्थितेः, श्लेषसत्त्वेऽपि अप्रस्तुतस्य प्रथमोपस्थित्यैवाप्रस्तुतप्रशंसात्वात् ।

**येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते**
**युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः ।**
**क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मनाग्**
**अस्त्वेवं जडधामता तु भवतो यद् व्योम्नि विस्फूर्जसे ॥४४४॥**

---

### सङ्केतः

येनासीति । पादाः रश्मयः चरणौ च । जडधामता शीतलतेजस्ता, मूर्खास्पदता च । अत्र—पूर्वश्लोके पुरुषोत्तमवत् विशेष्यं अर्केन्दुरूपं न श्लिष्टम् । विशेषणश्लिष्टत्वे तु समासोक्तिः तुल्यान्तराक्षेपहेतुः ।पूर्वत्र तु श्लेषः, द्वयोरपि श्लिष्टत्वात् ।

### बालचित्तानुरञ्जनी

हे चन्द्र, अभ्युदितेन येन क्लान्तिं गतोऽसि, तत्र रवौ ते त्वया प्रतिकर्तुमेव युज्यते । तस्यैव पादग्रहः पुनर्न युज्यते । पादग्रहः चरणोपसङ्ग्रहः किरणसङ्ग्रहणं च । यदि क्षीणेनैतदनुष्ठितं तन्निमित्तकमात्मनो गोपनं मनागपि किं न लक्ष्यत इत्यर्थः । एवमस्तु । यद्यस्मात् कारणात् भवतो जडधामता व्योम्नि विस्फूर्जसे । जडधामता शिशिरकिरणता मन्दतेजस्त्वं च । अत्र पादग्रहादाविवचन्द्रसूर्ययोर्विशेष्यभूतायोरपि श्लेषभावात् समासोक्तिः । विशेष्यपदे तु श्लिष्टे श्लेषो भवति । यथा पूर्वोदाहरणे पुरुषोत्तमपदे ।

### काव्यादर्शः

'येनासि' इति । 'पादा रश्मयश्चरणौ च । जडधामता शीतलतेजस्त्वं मूर्खास्पदत्वं च' । अत्र विशेष्यपदं चन्द्रो न श्लिष्टो, विशेषणानां च श्लिष्टत्वात् समासोक्तिगर्भत्वम् । क्षीणविभवः कश्चिद् अपकारिणमपि उपजीवनार्थ-मनुसरन् केनचिदिह उपलभ्यते ।

### विवेकः

(रु. स. ६४ पृः) । येनासीत्यादि "पादा रश्मयः, पादौ चरणौ । जडधामता शीतलतेजस्त्वं, मूर्खास्पदता च" (रु. स. ६४ पृः) इति विशेषणसाम्यम् ।

पादग्रहः शुक्लपक्षे वृद्ध्यर्थे मरीचिसंश्रयः प्रणामश्च । जडधानता शीतरश्मिता मन्दप्रभता च ।

### दर्पणः

येनासीत्यत्र च विशेषस्य चन्द्रपदस्य एकार्थत्वेन समासोक्त्याभासः । पादो रश्मिश्चरणश्च [चरणञ्च] । पोतो वहित्रं [पोतोपायाः सांयात्रिकाः] कल्पः समर्थः । अत्र प्रतीयमानप्रकृतार्थनिरपेक्षेण समुद्रस्वरूपवर्णनयापि वाक्यार्थविश्रान्तेः ।

### साहित्यचूडामणिः

येनेति। पादग्रहश्चरणोपसङ्ग्रहः किरणग्रहणं च। ततः किं लज्जसे अनुष्ठितानुतापे नैष्फल्यात्। जडधामता शिशिरकिरणता मन्दतेजस्त्वं च। अत्र पादग्रहादाविव चन्द्रसूर्ययोर्विशेष्यभूतयोरपि श्लेषाभावात् समासोक्तिः।

### सम्प्रदायप्रकाशिनी

येनासीति। प्रतिकर्तुमेव युज्येत प्रतीकार एव युक्त इत्यर्थः। एतदनुष्ठितं पादग्रहणं कृतमित्यर्थः। अत्राभ्युदय आविर्भावः सम्पत्तिश्च। पादग्रहः किरणसंस्पर्शः चरणोपसंग्रहश्च। जडधामता शीतरुचित्वं मान्द्यास्पदत्वं च। अत्र विशेष्यांशे श्लेषाभावात् समासोक्त्या।

### मधुमती

येनासीति। अत्र विसेषणानि श्लिष्टानि।

### विस्तारिका

येनेत्यादि। येनोदितेन क्लान्तिं गमितोऽसीति सम्बन्धः। उदितेन उदयमात्रेण, न त्वपकारादिकमपेक्ष्य परां काष्ठामापन्नः। पादः पदं रश्मिश्च। अस्ति पुरस्तादेव प्रसिद्धा जडा:, विवेकराहित्याख्या जडता हिमरूपता च। धाम स्थानं तेजश्च। विस्फूर्जसे। सगर्वमुदेषि। अमावास्यायां सूर्येण सह सङ्गत्य ततस्तेजोग्रहणं चन्द्रस्येत्यागमप्रसिद्धं पादग्रहणम्।

अत्र विपक्षेण पराभूते तमुपजीव्य धन्यं मन्ये, क्वचन पुंस्यप्रकृतचन्द्रव्यवहारः प्रतीयते, तेनाप्रकृतात् प्रकृताक्षेपे समासोक्तिच्छाया, न तु सा, तत्र प्रकृतेऽप्रकृतव्यवहारारोपात्।

### सारबोधिनी

येनासीति। क्लान्तिं तेजः शून्यत्वं दारिद्र्यम्। पादः पदं रश्मिश्च। जडधामता शीतलप्रभत्वं मूर्खत्वास्पदत्वञ्च। विस्फूर्जसे सगर्वमुदेषि। अत्र विपक्षेण पराभूते तमुपजीव्य धन्यंमन्ये क्वचन पुंसि अप्रकृतचन्द्रव्यवहारः प्रतीयते। तेनाप्रकृतात् प्रकृताक्षेपे समासोक्तिच्छाया। न तु सा। तत्र प्रकतेऽप्रकृतव्यवहारारोपात्।

### काव्यप्रदीपः

द्वितीयो यथा—

> 'येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते
> युज्यते प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः।
> क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
> गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे॥'

अत्र विशेष्यवाचिचन्द्रपदं न श्लिष्टम्।

## आदर्शः

समासोक्तिच्छायामाह—येनासीति। हे चन्द्र ! येन रविणाऽभ्युदितेन त्वं क्लन्तिं गमितोऽसि तत्र रवौ प्रतिकर्त्तुमेव प्रत्यपकर्त्तुमेव युज्येत न पुनस्तस्यैव पादानां रश्मीनां ग्रहः कृष्णपक्षे चन्द्रस्य सूर्यरश्मिषु प्रवेशात्। यदि क्षीणेन भवता एतदनुष्ठितं तत् किं ममागपि नो लज्जसे। इदमप्यस्तु, यद् व्योम्नि विस्फूर्जसे निर्लज्जतया देदीप्यसे इदन्तु तव जडधामता शीततेजस्कतैव श्लेषाज्जडपदाश्रयता जडपदवाच्येत्यर्थः।

अत्र शत्रुपादसेविनो निर्लज्जतया देदीप्यमानस्य पुरुषस्य प्रकृतस्य अप्रकृतचन्द्र वर्णनात् प्रतीतिः। तत्र चाभ्युदयाद्युभयान्वितविशेषणवशाद् विशेष्यचन्द्रपदस्याश्लिष्टत्ववाच्च समासोक्तिच्छायाहेतुः। पादग्रहांशे तु श्लेष एव।

## सुधासागरः

द्वितीयो यथा—येनास्येति। शार्दूलविक्रीडितं छन्दः। हे चन्द्र अभ्युदितेन येन रविणा त्वं क्लान्तिं गमितः निस्तेजस्कतां प्रापितः तत्र तस्मिन् रवौ ते तव प्रतिकर्त्तुमेव युज्यते न पुनः प्रत्युत तस्यैव पादग्रहः किरणादानं पक्षे पादपतनं युक्तम्। क्षीणेन कलाहीनेन पक्षे निर्धनेन निर्बलेन वा एतदनुष्ठितं पादग्रहणमङ्गीकृतं यदि ततः किं मनागपि न लज्जसे कुतः स्वल्पामपि व्रीडां न यासि। किं लज्जया स्वकार्यं साधयामिति चेत् अस्त्वेवं जडधामता तु भवतो यद् व्योम्नि विस्फूर्जसे। अयमाशयः—सूर्यस्पर्धया यद् व्योम्न्याकाशे सगर्वमुदेषि तेन किं प्रतापनिधेः साम्यं भवति, किन्तु भवतो जडधामतैव शीतलप्रभवत्वमेव सर्वानुभवसिद्धम्। पक्षे उच्चैरवस्थानेऽपि मूर्खत्वास्पदत्वेमेव सर्वसिद्धमिति। इदमवधेयम्। केनचिद् बलवता पराभूतस्तमुपजीव्यात्मानं धन्यं मन्यमानः पुमान् प्रकृतः, चन्द्र-स्त्वप्रकृत इति। अत्र विशेषवाचि चन्द्रपदं न श्लिष्टम्।

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दूरर्णवेन।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च॥ ४४५॥

---

**बालचित्तानुरञ्जनी**

तृतीयमुदाहरति आदायेति। सरितां मुखेभ्यः परितः वारि आदाय अनेन दुरर्णवेन किमर्जितं यावत्, वारि क्षारीकृतम् बडवानले हुतं च पातालकुक्षिमध्ये विनिवेशितं च। अत्रापव्ययकारिणि पुरुषे प्रस्तुते तत्सदृशः समुद्रो वर्ण्यते। एवं सादृश्यमात्ररूपामुपमामुदाहृत्य वाच्यस्य सम्भवासम्भवावुदाहरिष्यन् सम्भवं तावदाह इयं चेति।

आदायेत्यादि—अत्र दुरर्णवदृशचेष्टः कश्चिद्दुरधीश्वरः प्रतीयते।

**काव्यादर्शः**

सादृश्यमात्रे यथा—'आदाय' इति। अत्र अब्धिगर्हणया अन्यायोपार्जितधनः प्रतीयमानसादृश्यः कोऽपि पुमानाक्षिप्यते। इयं चेति। तुल्यत्वनिबन्धनाऽप्रस्तुतप्रशंसा वाच्यार्थे विवक्षिते प्रतीयमानस्य अनध्यारोपेण स्यात्।

**साहित्यचूडामणिः**

सादृश्यमात्ररूपायामुपमायामाह—आदायेति। अपव्ययकारिणि पुरुषे प्रस्तुते तत्सदृशः समुद्रो वर्ण्यते।

**सम्प्रदायप्रकाशिनि**

आदायेति। अत्र सरितां मुखाद् वार्यादानादेः प्रजाभ्यो वित्ताहरणादिना सह सादृश्यमात्रेण।

**मधुमती**

आदायेति। अत्र दुष्टत्वनिबन्धनसादृश्येन प्रस्तुतः कश्चित दुरीश्वरः प्रतीयते इति। सादृश्यनिबन्धना चेयम्।

**विस्तारिका**

आदायेत्यादि। मुखं वदनं नदीसङ्गमस्थानं च। दुर्निन्दितः। सुराविषमिश्रणात् क्षारीकरणम्। पाताल-कुक्षिकुहरे अतलस्पर्शावच्छेदे। अत्र ग्रासरूपं परेभ्यो धनमाकृष्य विफलं व्ययकर्तरि पुंसि प्रकृतेऽप्रकृतस्याब्धेः कथनम्।

### सारबोधिनी

आदायेति। मुखं वदनं नदीसङ्गमस्थानञ्च। स्पष्टमन्यत्। अत्र ग्रासकल्पं परेभ्यो धनमाकृष्य विफलं व्ययितवति पुंसि प्रकृतेऽप्रकृतस्याब्धेः कथनम्। इयं चेति अध्यारोपः अतस्मिन् तत्त्वारोपः। अत्र प्रभोः पूर्णत्वमेव वरम् न रिक्तत्वमित्यत्र तात्पर्यात्। अत्र दुर्लभस्य कस्यचित् प्रकृतस्याध्यारोपं विनापि कार्यस्योत्पत्तेर्नाध्यारोपः।

### काव्यप्रदीपः

तृतीयो यथा—

**'आदाय वारि परितः सरितां मुखेभ्यः किं तावदर्जितमनेन दुरर्णवेन।**
**क्षारीकृतं च वडवादहने हुतं च पातालकुक्षिकुहरे विनिवेशितं च॥'**

अत्र श्लेषाभावेऽपि सादृश्यमात्रेणासत्पुरुषाक्षेप। यथा वा मम—

**'कौटिल्यं नयने निवारयतरां शीघ्रां गतिं शीलय**
**व्यक्तार्था कुरु भारतीं विहसितेऽप्यौद्धत्यमायोजय।**
**कुग्रामप्रमदाविलासरसिकः कान्तस्त्वयासादितो**
**नायं नन्दिनि नागरीजनसमाचारैः समाकृष्यते॥'**

### आदर्शः

सादृश्यमात्रे त्वाह—आदायेति। दुरर्णवेन दुर्वृत्तेनार्णवेन। अत्र वारिग्रहाणा दीनामर्णव एवान्वयेन न समासोक्तिच्छाया। सादृश्यमात्रात्तु सर्वत आकृष्टघनस्य सद्व्ययिनः पुंसः प्रतीतिः।

### सुधासागरः

तृतीयः प्रकारो यथा—आदायेति। वसन्ततिलका छन्दः। अनेन दुरर्णवेन लवणसागरेण परितः सरितां मुखेभ्यो नदीसङ्गमस्थानेभ्यो वारि जलमादाय गृहीत्वा किं तावदर्जितम् न किमपीत्यर्थः। तथा हि क्षारीकृतं मिष्टमपि कटु कृतम्, वडवादहने वाडवाग्नौ हुतं च, पातालकुक्षिकुहरे विनिवेशितं च वृथा नाशितमित्यर्थः।

अत्र सर्वतः परेभ्यो धनमाकृष्यासद्व्ययं कुर्वाणे पुंसि प्रकृतेऽप्रकृतस्याब्धेः कथनम्, तत्र श्लेषाभावेऽपि सादृश्यमात्रेणासत्पुरुषाक्षेपः।

इयं च काचित् वाच्य प्रतीयमानार्थानध्यारोपेणैव भवति । यथा—

अब्धेरम्भः स्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्षमन्ते ।
आहो रिक्तः कथमपि भवेदेष दैवात् तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥ ४४६ ॥

---

**सङ्केतः**

इयं चेति । सादृश्यहेतुकाऽप्रस्तुतप्रशंसेत्यर्थः ।

अब्धेरिति । आहो इति यद्यर्थे । कल्पः प्रौढः शक्तः । अत्र अब्धावपि ईदृशस्यार्थस्य सम्भवात् नैकान्तेन कस्यापीश्वरस्य आक्षेपाकाङ्क्षा । एवं पुंस्त्वादित्यत्र आदायेत्यत्र च गम्यार्थानध्यारोपः । येनसीत्यत्र तु चन्द्रे सम्बोधनोपालम्भादेरर्थस्यासम्भवात् अपकारिभियोऽप्यर्थेच्छोः दरिद्रस्य अध्यारोपः ।

**बालचित्तानुरञ्जनी**

वाच्ये सम्भवति प्रतीयमानस्यार्थस्यानध्यारोपेण अध्यारोपाक्षमतयेत्यर्थः । जलाच्छादितभुवनविस्तार-पातालमध्यस्थसमुद्रस्य लङ्घनेऽपि इह लोके पोतसाधना बहवः पुरुषाः क्रमन्ते प्रवर्तन्ते । आहो उत दैवात् एष कथमपि रिक्तो भवेत् तदानीमस्यावट कुहरालोकनेऽपि को नाम समर्थः स्यात् । अघृप्या सङ्गच्छते[?] ।

**काव्यादर्शः**

'अब्धेः' इति । 'आहो इति यद्यर्थे । कल्पः प्रौढः ।' अत्र यद्यपि सारूप्यवशेन शूरः कोऽपि पुमानाक्षिप्यते तथापि अप्रतुतस्य अब्धिवृत्तान्तस्यैव चमत्कारकारित्वम् । न हि अचेतनोपालम्भवद् असंभाव्योऽयमर्थ इत्युपात्ता धर्माः समुद्रे संभवन्तो नैकान्तेन प्रतीयमानमर्थमाक्षिपन्तीति न प्रतीयमानार्थाध्यारोपः । एवं च 'पुंस्त्वाद्' इत्यत्र 'आदाय' इत्यत्र च प्रतीयमानस्य अर्थस्य अनध्यारोपः । 'येनासि' इत्यत्र च चन्द्रसंबोधनोपालम्भादेरसंभवाद् अध्यारोपोऽवसेयः ।

**विवेकः**

सारूप्यहेतुके भेदे तु वाच्यस्य सम्भवासम्भवोभयरूपताभिस्त्रयः प्रकारा इति यथाक्रममाह—इयञ्चेति । इयमप्रस्तुतप्रशंसा तुल्ये प्रस्तुते तुल्यभिधानोत्था । तत्र प्रतीयमानस्यार्थस्यानध्यारोपेण यथा अब्धेरम्भ इत्यादि । आहो इति यद्यर्थे । अवटो गर्तः । कल्पः प्रौढिः ।

## दीपिका

अनध्यारोपेणैवापाततोऽशंमात्रेणाऽप्यनपेक्षया। पोतोपाया वहित्ररूपा उपायाः। अत्र प्रतीयमानार्थानुसन्धानं विनाऽप्यसङ्गतेः सर्वथैव तदपेक्षयेत्यर्थः।

## साहित्यचूडामणिः

अथ वाच्यस्य सम्भवासम्भवावुदाहरिष्यन् सम्भवं तावदाह—इयं चेति। वाच्ये सम्भवति प्रतीयमानस्यार्थस्यानध्यारोपेण अध्यारोपानपेक्षया।

अब्धेरिति। अत्र वाच्ये समुद्रे सर्वाप्युक्तरूपा प्रक्रिया सङ्गच्छते।

## सम्प्रदायप्रकाशिनी

वैचित्र्यान्तरमाह—इयं चेत्यादि।

अब्धेरिति। पोतो वहित्रं तद्रूपादुपायादित्यर्थः। क्रमन्ते निर्व्याघातं प्रभवन्ति। आहो यदि। कल्यः दक्षः। महा भुः पूर्णः स्वाक्रमः रिक्तो दुराक्रम इत्यर्थः। अत्राब्धौ प्रभुवृत्तानध्यारोपः।

## मधुमती

पुनः प्रकारत्रयवतीत्याह—इयं चेति। अर्णः जलम्। अंहो रिक्तः इत्यत्र 'आहो रिक्तः' इति क्वचित् पाठः। तत्र 'आहो' शब्दः यद्यर्थे। अव्ययानां अनेकार्थत्वात्। अवटः गर्तः। कल्पः समर्थः। पोतापायात् प्रोतरूपोपायात्। यदि तु 'पोतोपायाः' इति पाठः, तदा बहवः इत्यस्य विशेषणम्। अत्र—'बहवः (प्रभवः) सम्पदि सुखसेव्याः विपदि कष्टसेव्याः' इति ध्वन्यते।

## विस्तारिका

अब्धेरित्यादि। अर्णोऽम्भः। अन्तरिति पाठान्तरम्। स्थगितस्तिरस्कृतो भुवनस्य पृथिव्या आभोगः पातालकुक्षिश्च येन तस्य, सप्तद्वीपव्यापकपृथ्वीपरिपूर्णताया अब्धिप्रतिबन्धेनाग्रहणात् तिरस्कारः। तथा जलैः पूरणेन पातालकुक्षेरपि स्थगनम्। पोतो वहित्रम्। आहो इति सम्भावनम्। कथमपि दैवादनिर्वचनीयम्।

अत्र दुर्लङ्घ्यस्य कस्यचित् प्रकृतस्याध्यारोपं विनापि वाक्यार्थोपपत्तेर्नाध्यारोपः।

## सारबोधिनी

अब्धोरिति। अर्णो जलम्। अवरः खातः कुहरं तस्यैव गम्भीरो भागः।

## सुधासागरः

इयं च क्वचिद् वाच्यार्थे प्रतीयमानार्थानध्यारोपेण, क्वचित् प्रतीयमानार्थाध्यारोपेण, क्वचित्त्वंशभेदेन तदध्यारोपानारोपाभ्यामिति त्रिधा।

तत्राद्या यथा—अब्धेरिति।

अर्णो जलं तेन स्थगिता निश्चला भवनाभोगो गृहपरिपूर्णता पातालात्मिका कुक्षिरुदरदरी च यस्य तादृशस्याब्धेः समुद्रस्य लङ्घनेऽपि बहवः पोतः उपायः साधनं येषां ते पोतोपायाः सांयात्रिकाः क्रमन्ते प्रचरन्ति, आहो यदि दैवात् कथमपि एष सागरो रिक्तः स्यात् तदानीमस्यावटः खातस्तस्यैव गम्भीरभागः कुहरं पातालमिति यावत्, तस्यालोकने दर्शनेऽपि कः कल्पः समर्थः स्यात् न कोऽपीत्यर्थः । मन्दाक्रान्ता छन्दः । लक्षणमुक्तं प्राक् ।

अत्र प्रभुः सम्पदि सुखसेव्यो विपदि कष्टसेव्य इति प्रभुवृत्तान्तः प्रकृतोऽप्रकृताब्धिवृत्तान्तेन सादृश्यमात्रादाक्षिप्यते । तत्रापुरुषेऽब्धावप्येतेऽर्था अबाधिता एवेति न प्रतीयमानार्थाध्यारोप इति द्रष्टव्यम् ।

क्वचिदध्यारोपेणैव । यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे ॥ ४४७ ॥

---

### सङ्केतः

कस्त्वमिति । अत्र कथयामि इत्यादिप्रत्युक्त्या एतदाह—'अकथनीयमेतत्, श्रूयमाणं हि निर्वेदकृदिति, अथापि तवानुबन्धात् कथ्यते' इति । कस्मात् इति वैराग्यहेतुप्रश्नः । कथ्यते इत्यादि सनिर्वेदस्मरणोपक्रमं कथंकथमपि निरूप्यते—वामेनेति । अनुचितेन कुकुलादिना उपलक्षितः इत्यर्थः । वटः इति । फलदानशून्यः छायामात्रकरणादेव गर्विष्ठः इत्यर्थः । छायाऽपीति । श्मशानग्निदग्धपल्लवादिः तरुविशेषो हि शाखोटकः । मार्गः सतां पन्था अपि । अत्र अचेतनत्वात् वृक्षेण सह उक्तिप्रत्युक्त्यसम्भवेन वाच्ये असम्भवति श्रीमत्पुरुषसेवया खेदवान् दरिद्रो मनस्वी कश्चित् पुमान् प्रतीयमानतया अध्यारोप्यते ।

### बालचित्तानुरञ्जनी

वाच्यस्यासम्भवस्थानमुदाहरति क्वचिदिति । भोः कस्त्वम् ? कथयामि, दैवहतकं मां शाखोटकं विद्धि । वैराग्यादिव वदसि । साधु ज्ञातम् । इदं कस्मात् कथ्यते ? अत्र वामेन वटोऽस्ति । अध्वगजनः सर्वात्मना तं सेवते । मार्गस्थितस्यापि मे परोपकारकरणे छायापि न । अत्राचेतनेन सह प्रश्नोत्तरयोरसम्भवात् वाच्यस्यासम्भावात् वाच्यस्यासम्भवः ।

### काव्यादर्शः

'कथयामि' इत्यादि प्रत्युक्तिः । अनेन पदेनतदाह । 'अकथनीयमेतत् श्रूयमाणं हि निर्वेदाय स्यात् तथापि तु यद्यनुबन्धस्तत् कथयामि ।' 'वैराग्याद्' इति काक्वा 'दैवहतकम्' इत्यादिना च वैराग्यसूचा । 'साधुविदितम्' इत्युत्तरम् । 'कस्माद्' इति वैराग्ये हेतुप्रश्नः । 'इदं कथ्यते' इत्यादि सनिर्वेदस्मरणोपक्रम (:) कथंकथमपि निरूप्यतयोत्तरम् । 'वामेन' इति अनुचितेन कुलादिना उपलक्षित इत्यर्थः । अत्र (?अ) चेतनेन वृक्षविशेषेण सहोक्तिप्रत्युक्ती न संभवत इति असंभवति वाच्ये समृद्धासत्पुरुषसहवासिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं प्रतीयमानमध्यारोपेण स्थितं चोतनवृत्तान्तमारोप्य इत्थं कविना वर्णितत्वात् ।

### विवेकः

वाच्यस्यासम्भवे प्रतीयमानाध्यारोपेणैव यथा कस्त्वं भो इत्यादि । दैवहतकमिति विद्याऽऽदि- योग्यत-योचित्तस्याप्राप्तौ दैवोपालम्भनम् । अत्राचेतनेन सह प्रश्नोत्तरिकाऽनुपपन्नेति वाच्यस्यासम्भव एव ।

## दीपिका

वामनेति वामपार्श्वेनेत्येकत्रार्थः, प्रतिकूलेन शीलादिनेत्यन्यत्र । मार्गो वर्त्म सदाचारश्च । शाखोटकस्य भूतावासता छायाऽनाश्रयणे हेतुः । अत्राचेतनेन सार्धं वाकोवाक्यं नोपपद्यत इति प्रथमत एव व्यङ्ग्यार्थापेक्षिता ।

## दर्पणः

अध्यारोपेण प्रकृतस्येत्यर्थः । कस्त्वमित्यादौ शाखोटकेन सह प्रश्नोत्तरानुपपत्तेः रामेन [वामेन] वामपार्श्वेन प्रतिकूलेन च मा...रर्थ [मार्गस्थितस्य] सदाचारश्च । गजानां ब्रह्मर्षिशाया [ब्रह्मर्षिशापा] जिह्वापरिवृत्तिः प्रसिद्धा । प्रकृतपक्षे वसनाविपर्ययः [रसनाविपर्ययः] ।....भाषणं, कर्णचापनं [कर्णचापलं] खलवचनश्रवणं च । मदों गर्वः, शून्यकरत्वं कृपणत्वञ्च ।

## साहित्यचूडामणिः

वाच्यस्यासम्भवस्थानमाह— क्वचिदिति । अध्यारोपेणैवासम्भवत्तया वाच्यस्य प्रतीयमानार्थ सापेक्षत्वात् । कस्त्वमिति । अत्राचेतनेन सह प्रश्नोत्तारिकाया अनुपपत्तेः ।

द्वितीया यथा—कस्त्वमिति । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्तं प्राक् । कश्चिद् वृक्षविशेषं पृच्छति । कस्त्वं भोः, कथयामि दैवहतकं दुर्भाग्यं शाखोटकं भूतावासं मां विद्धि जानीहीत्युत्तरम् । कस्मादिदं कथ्यते कस्माद्धेतोरेवं वदसीति पुनस्तदुक्तिः । वामेन वटः अत्र प्रदेशे मार्गाद् वामभागेनोपलक्ष्यमाणे वृक्षोऽस्ति तमध्वगजनः सर्वोऽपि पथिकलोकः सर्वात्मना गाढानुरागेण सेवते तदधो विश्राम्यति, मार्गस्थितस्यापि मे मम छायाऽपि परोपकारकरणे न परोपकाराय न भवतीत्युत्तरम् । अत्र वाच्यशाखोटके सम्बोध्यत्वोच्चारयितृत्वादिकमनुपपन्नमिति प्रतीयमानाध्यारोपः ।

## सम्प्रदायप्रकाशिनी

कस्त्वं भो इति । शाकोटकः शाकोटः । तस्यैव प्रश्नोत्तरिका नोपपद्यत इति प्रतीयमानाध्यारोप एव ।

## मधुमती

कस्त्वमिति । अत्र साधुः असाधुश्च प्रतीयमानोऽर्थः शाखोटक-वटपदाभ्यां निगीर्याध्यवसितः । 'धनवान् पूज्यः, निर्धनश्च निन्द्यः' इति प्रस्तुतव्यञ्जनम् । अत्र अतिशयोक्तिविशेषः सन्नपि प्रकृतालङ्कारङ्गमेवेति नोपदर्शितः ।

## विस्तारिका

कस्त्वमित्यादि । शाखोटको भूतावासो वृक्षविशेषः । इदं वैराग्यं सर्वात्मना छायारोहणभोजनशयनादिहेतुत्वेन, आदरेणाश्रयणं सेवा । मार्गे स्थितस्य सन्निकृष्टस्य न छायेति भूतावासत्वेन शाखोटकस्य छायानारोहणम् ।

अत्राचेतनस्य वृक्षस्य प्रकृतनिर्विण्णपुरुषत्वारोपेणैव वचनानुवचनसम्भवः ।

न चेदं रूपकम्, प्रकृते तदन्यानारोपात् । अत्राप्रकृत एव प्रकृतारोपात् ।

## सारबोधिनी

कस्त्वमिति। शाखोटको भूतावासो वृक्षभेदः। कस्मादिदमिति। इदं वैराग्यम्। सर्वात्मना छायोपसेवनादिना। न च्छायेति। भूतावासत्वेन छायानाश्रयणम्। अत्राचेतनस्य वृक्षस्य प्रकृतनिर्विण्णस्य पुरुषत्वारोपेणैव वचनानुवचनसम्भवादध्यारोप एव। न चेदं रूपकम्। प्रकृते तदन्यानारोपात्। अत्राप्रकृत एव प्रकृतारोपात्।

## काव्यप्रदीपः

द्वितीया यथा—

**'कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं**
**वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।**

**वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते**
**न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे॥'**

अत्र वाच्यशाखोटके संबोध्यत्वोच्चारयितृत्वादिकमनुपपन्नमिति प्रतीयमानाध्यारोपः।

## आदर्शः

वाच्यार्थे व्यङ्ग्यार्थाभेदारोपे त्वाह—क्वचित्त्विति। पथिकशाखोटकयोरुक्तिप्रत्युक्तरियम्। तत्र कस्त्वं भोः इति पथिकस्य, कथयामीत्यादि प्रथमचरणं शाखोटकस्य; वक्षीत्यन्तं पथिकस्य, साधु विदितमिति शाखोटकस्य; कस्मादिति पथिकस्य, इदं कथ्यत इत्यादि सर्वं शाखोटकस्योक्तिः। न च्छायापीति भूतावासत्वात्। अत्र दित्सुरलभ्यमानार्थिकः पुरुषः प्रकृतः सादृश्यवशाद् व्यङ्ग्यः, शाखोटके वाच्ये आरोप्यते तदारोपं विना शाखोटकस्योक्त्यसम्भवात्। न च व्यङ्ग्यप्रत्यायको वाच्यार्थः प्रतीतव्यङ्ग्यारोपेणैव सिध्यतीत्यन्योन्याश्रय इति वाच्यम्, उक्तिप्रत्युक्तिमहिम्ना मनुष्यत्वेन प्रतीतस्य व्यङ्ग्यार्थस्य वाच्यशाखोटके आरोपे दित्सुत्वादिना रूपेण पश्चाद् व्यञ्जने अन्योन्याश्रयाभावात्।

## सुधासागरः

द्वितीया यथा—कस्त्वमिति। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तं प्राक्। कश्चिद् वृक्षविशेषं पृच्छति। कस्त्वं भोः, कथयामि दैवहतकं दुर्भाग्यं शाखोटकं भूतावासं मां विद्धि जानीहीत्युत्तरम्। कस्मादिदं कथ्यते कस्माद्धेतोरेवं वदसीति पुनस्तदुक्तिः। वामेन वटः अत्र प्रदेशे मार्गाद् वामभागेनोपलक्ष्यमाणे वृक्षोऽस्ति तमध्वगजनः सर्वोऽपि पथिकलोकः सर्वात्मना गाढानुरागेण सेवते तदधो विश्राम्यति, मार्गस्थितस्यापि मे मम छायाऽपि परोपकारकरणे न परोपकाराय न भवतीत्युत्तरम्। अत्र वाच्यशाखोटके सम्बोध्यत्वोच्चारयितृत्वादिकमनुपपन्नमिति प्रतीयमानाध्यारोपः।

क्वचिदंशेष्वध्यारोपेण। यथा

सोऽपूर्वो रसनाविपर्ययविधिः तत् कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसौ
अन्तः शून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः॥ ४४८॥

अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः कर्णचापलं तु हेतुः, मदः प्रत्युत सेवने निमित्तम्॥

---

### सङ्केतः

सोऽपूर्व इति। रसनाविपर्ययः गजानां शापजः, अलीकवचोऽपि। चापलं खलवचश्श्रवणे सांमुख्यमपि। शून्यकरत्वं अदातृत्वमपि। न हेतुरिति। तेन वाच्येऽर्थे प्रतीयमानस्य कस्यापि कुस्वामिसेवकस्य अध्यारोपः कार्यः। चापलं असेवने मदश्च सेवने हेतुः। प्रस्तुताप्रस्तुतयोर्वाच्यत्वे, विशेष्यापि श्लिष्टत्वे अर्थश्लेषः। विशेषणानां श्लिष्टत्वे, प्रस्तुतस्य वाच्यत्वे, अन्यस्य तु गम्यत्वे समासोक्तिः। अप्रस्तुतस्य वाच्यत्वे प्रस्तुतस्य गमयत्वे अप्रस्तुतप्रशंसेति विवेकः। इत्यप्रस्तुतप्रशंसा।

### बालचित्तानुरञ्जनी

सम्भवासम्भवमुदाहरति क्वचिदिति। अपूर्वः रसनाविपर्ययो जिह्वापरिवृत्तिः तस्य विधिः प्रकारः। तच्च गजस्य कर्णयोश्चापलं चपलता। सा दृष्टिः विस्मृता स्वपरयोः दिक् यया। अथवा भूयसा उक्तेन किम्? हे भ्रातः भ्रमर! विस्मृतवानसि। अन्तः शून्यकरः सारन्ध्रशुण्डाकः वारणो गजः अद्यापि त्वया निषेव्यत इति यत् एष ग्रहः आग्रह कः? अन्यत्र रसनाविपर्ययः पैशुन्यं, कर्णचापलं कर्णजापोपजापशुश्रूषा, मदः दर्पः वारयतीति निषेधकः। अन्तः शून्यकरः रिक्तहस्तः। अत्रासम्भवन्तमंशमाह[?] कर्णेति। कर्णचापल्यरूपो हेतुरध्यारोपितः तत्र वाच्यं सम्भवतीति यावत्। प्रसङ्गात् सम्भवतीत्यंशे अनौचित्यलेशमुल्लिङ्गयति मद इति। मदविस्मृतेत्यादिविरुद्धमित्याकूतम्। उक्तवैपरीत्येन भ्रमरासेवने तस्य निमित्तत्वात्।

### काव्यादर्शः

'रसनाविपर्ययो गजानां शापहेतुतोऽसत्यभाषित्वमपि। चापलमश्रोतव्यश्रवणमपि। मदो गर्वोऽपि। शून्यकरत्वमदातृत्वमपि।' अत्र वाच्येऽर्थे रसनाविपर्ययशून्यकरत्वयोरसेवने हेतुत्वं न संभवतीति अध्यारोपोऽवसेयः। कर्णचापलं तु असेवने हेतुः। मदश्च सेवने प्रतीयमानश्च कुस्वामिसेवकः। एवं च अप्रस्तुतस्य

वाच्यत्वे प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसा। श्लिष्टविशेषणैः प्रस्तुतस्य वाच्यत्वेऽप्रस्तुतस्य गम्यत्वे तु समासोक्तिः। प्रस्तुताप्रस्तुतयोरपि वाच्यत्वे विशेष्यस्यापि श्लिष्टत्वेऽर्थश्लेषः। एषान्योक्तिरिति अन्ये।

## विवेकः

प्रस्तुतं प्रति तात्पर्यात् प्रमुखत एव तदध्यारोपेण प्रतीतेर्युज्यत एतत्—क्वचित्वंशेष्विति। सोऽपूर्व इत्यादि—हे इति सम्बोधनद्योतकं पुरः स्थितं चिन्त्यम्। रसनाविपर्ययो जिह्वावैपरीत्यं हस्तिनः, असत्यभाषित्वमपि। कर्णयोश्चापलमश्रोतव्यश्रवणापि। मदो गर्वोऽपि। वारणो निवारकोऽपि शून्यकरत्वमदातृत्वमपि। तदिह वाच्येऽर्थे केषाञ्चिद्धेतुत्वं सम्भव केषाञ्चित्त्वसम्भवीत्युभयरूपत्वम्। सारूप्यहेतुके च भेदे साधर्म्यवैधर्म्याभ्यां द्वैविध्यमित्याहुः। सार्धर्म्यमुदाहृतेष्वेवोदाहरणेषु। "वैधर्म्येण तु यथा—(अ. स. १३७ पृः) धन्याः खलु वने वाताः कह्लारस्पर्शशीतलः। राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥ अत्र वाता धन्या इत्यप्रस्तुतार्थादहमधन्य इति वैधर्म्येण प्रस्तुतोऽर्थः प्रतीयते। तदिह कार्यकारणभावेन सामान्यविशेषत्वेन सारूप्येण च भेदपञ्चकमुद्दिष्टम्।" तत्र कार्यकारणयोः सामान्यविशेषयोश्च यदा वाच्यत्वं भवति तदाऽर्थान्तरन्यासाविर्भावः। स्वरूपोस्तु वाच्यत्वे दृष्टान्तः, अप्रस्तुतस्य वाच्यत्वेऽप्रस्तुतप्रशंसा, गम्यत्वे सर्वत्राप्रस्तुतप्रशंसेति सारूप्यादिभावो यदा विवक्ष्यते तदा तद्रूपाया अप्रस्तुतप्रशंसाया ध्वनावन्तर्भावः। यथा—किञ्चित्कुञ्चितचञ्चुचुम्बितमुखे स्फारीभवल्लोचना स्वप्रेमीचितचारु- चाटुकरणे रत्यै त्वरन्ती मुहुः। कूजन्ती विततैकपक्षतिपुटेनालिङ्ग्य लीलाऽलसं धन्यं कान्तमुपान्तवर्तिनममुं पारावती सेवते (ता. वत्स. ३/१३)॥ अत्र तापसवत्सराजे प्रियावियुक्तराजोक्तौ स्मर्यमाणात्मपूर्वावस्थास्वरूपपारावतद्वन्द्ववर्णनप्रस्तुतम्, आत्मनो दुष्कृतफलभोक्तृत्वदुःखैकपात्रत्व-प्रियतमाप्रीतिवियोगविह्वलहृदयत्वादीनि प्रस्तुतानि प्राधान्येन व्यङ्ग्यानीति।

## दीपिका

अंशेष्वेकदेशेषु। करिणां जिह्वापरिवृत्तिब्रह्मर्षिशापेन प्रसिद्धा। न हेतुरिति। न तत्रांशे व्यङ्ग्यापेक्षितत्वमापाततोऽपीत्यर्थः। कर्णचापालं तु हेतुरिति। मदगन्धलुब्धानां मधुपानां कर्णघातविघटितानामपि वारितवामत्वेनाहंपूर्विकया निपातनौत्सुक्यस्य गाढगाढीभावः। प्रत्युत सेवने निमित्तमिति। असेवननिमित्तप्रत्याशयोपक्षिप्तोऽपि वाच्यार्थप्रतीतिदशायां नायं तथाभूत इति सर्वथा व्यङ्ग्यापेक्षयैव व्यवस्थितिरित्यर्थः।

## साहित्यचूडामणिः

अथोभयरूपतामाह-क्वचिदिति रसनाया विपर्ययः सन्निवेशविपर्यासः अनृतवादित्वं च। कर्णयोश्चापलं कर्णतालयोस्तारल्यं श्रोत्रयोः कर्णेजपोपजापशुश्रुषा च। मदो दानं दर्पश्च। वारणो गजः, वारयतीति निषेधकश्च। शून्यकरः सुषिरकरः, करः शुण्डः, अनुदारश्च।

न हेतुरिति। रसनाविपर्यासादेरध्यारोप एव शरणं, यत्र वाच्यं न सम्भवति। सम्भवन्तमंशमाह—कर्णचापलं त्विति कर्णतालरूपो हेतुरनध्यारोपितः, यत्र वाच्यं सम्भवतीति यावत्। प्रसङ्गात् सम्भवत्यंशेऽनौचित्यमुल्लिङ्गयति—मद इति। मदविस्मृतेत्यादि विरुद्धमित्याकूतम्। उक्तवैपरीत्येन भ्रमरसेवने तस्य निमित्तत्वात्।

### सम्प्रदायप्रकाशिनी

सोऽपूर्व इति । रसनाविपर्ययः जिह्वापरिवृत्तिः वाक्पारुष्यं च । कर्णयोश्चापलं लोलता कर्णेजपसहिष्णुत्वं च । अन्तःशून्यकरत्वं सरन्ध्रशुण्डत्वं रिक्तहस्तता च । ग्रह आग्रहः ।

अंशेऽध्यारोपं दर्शयति—अत्र रसनाविपर्यास इत्यादि ।

### मधुमती

सोऽपूर्वः इति । रसनाविपर्ययः पूर्वापरविरुद्धाभिधानम्, जिह्वापरिवृत्तिश्च । कर्णचापलं परापराधश्रवण-रसिकता, कर्णचाञ्चल्यं च । मदः ऐश्वर्यमदः, दानजलं च । अन्तश्शून्यकरः धनशून्यहस्तः अस्थिमांसादिशून्यध्व-स्तमध्यशुण्डादण्डश्च । वारणः अनुगतसेवकवारकः, गजश्च । अत्र अध्यारोपानध्यारोपौ दर्शयति—अत्र रसनेति । तथाच—रसनाविपर्ययशून्यकरत्व-मदविस्मृतस्वपरदिक्त्वानि भ्रमरस्य असेवने न हेतवः । किन्तु सेव-कान्तरस्य इति भ्रमरपदेन सेवकाध्यवसानम् । कर्णचापल्यं असेवने हेतुः इति तदंशे भ्रमरपदं द्विरेफपरमेव । एवं वारणपदेऽपि अध्यारोपानध्यारोपौ द्रष्टव्यौ । अत्र सेव्यसेवकयोः गजभ्रमरयोश्च सादृश्यं श्लिष्टशब्दघटितसाधा-रणधर्मनिबन्धनम् । इत्यप्रस्तुतप्रशंसा ।

### विस्तारिका

क्वचिदित्यादि । अंशेषु क्वचनावच्छेदेषु ।

सोऽपूर्व इत्यादि । रसनाया विपर्ययो वचनास्थैर्यं विपरीताग्रत्वं च । वारणरसनाया उत्कण्ठमग्रं कर्णचा-पलं परवचनप्रतार्यत्वम्, अनवरतकर्णचापलं च । मदोऽहङ्कारो मत्तता च । स्वपरदृक् आप्तानाप्तविवेकः । वारय-तीति वारणोऽनुगतनिसारको हस्ती च । अन्तः शून्यकरो निर्द्धनोऽस्थिमांसादिशून्यमध्यश्च ।

अत्रेत्यादि । न हेतुरिति । तथा च यस्यासेवने हेतुस्तत्त्वं भ्रमरे समारोप्य तेनाप्रकृते भ्रमरे निवारितप्रयत्न-सेवकत्वाज्ज्ञेयः । कर्णचापलं त्विति । ततोऽत्र नारोपः । मदः प्रत्युतेत्यादि । अत्रांशेऽप्यारोप इत्यर्थः ।

अत्र कश्चित्—एषा वैधर्म्येणापि दृश्यते । यथा—

**धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः ।**
**राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ॥**

इत्यत्र वातो धन्यः, नाहमिति वैधर्म्यस्य प्रयोजकत्वादित्याहुः, तन्नः, अत्र वनान्तरापेक्षया व्यतिरेकस्य ध्वनित्वम्, वक्तुरपेक्षया तु वस्तुन इत्यस्याविषयत्वात् ।

नन्वेवं सर्वत्र वस्तुध्वनित्वप्रसक्तावस्या विलोपः स्यादिति चेत्, न, 'याताः किं न मिलन्ति' इत्यादौ वक्तुरेवमभिधानं प्रस्थानात् किमिति निवृत्तोऽसीति प्रश्नासाकाङ्क्षमिति तमादायैव वाक्यार्थविश्रान्तिरिति वाच्य-सिद्ध्यङ्गत्वेन गुणीभूतव्यङ्ग्यतया ध्वनित्वाभावात् । तथा ' राजन् राजसुता' इत्यादौ राजसदनेऽध्वगवसती राजशुकमोक्षणं वैरिपलायनं विना नोपपद्यत इति वाच्यसिद्धिरित्यत्रापि तथेति सर्वत्रास्या विषयत्वं स्वयमूहनीयम् । 'धन्याः खलु वने वाताः' इत्यत्र तु वाच्यस्य स्वतो विश्रान्तिरिति ध्वनित्वमेवेति ।

एवमस्यां तेनोपमाध्वनिः, प्रकृतस्य व्यङ्ग्यत्वात्, न चाप्रकृतस्येति ।

## सारबोधिनी

क्वचिदिति । अंशे क्वचनावच्छेदे । सोऽपूर्व इति । रसनाविपर्ययो रसनास्थैर्यम् विपरीताग्रत्वञ्च । वारणरसनया उपकण्ठमग्रं [?] कर्णचापलं परवचनप्रतार्यत्वम् । अनवरतकर्णचापलन मदोन्मत्तता गर्वश्च । स्वपरमत्यामत्यविभागः [?] । वारणो गजो निवारकश्च । अन्तः शून्यकरो निर्धनोऽस्थिमांसादिशून्यमध्यशुण्डश्च । न हेतुरिति । तथा च यस्यासेवनेहेतुस्तत्त्वं समारोप्यते नाप्रकृते भ्रमरे । निवारितप्रयत्नसेवकत्वारोपः । कर्णचापलं त्विति । ततोऽत्र नारोपः । मदः प्रत्युतेति । अत्रांशे आरोप्यारोपः ।

## काव्यप्रदीपः

तृतीया यथा—

'सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥'

अत्र हस्तिनो रसनाविपर्यासः शून्यकरत्वं मदश्च वाच्यस्य भ्रमरस्य सेवनाभावहेतुत्वेन वाच्यानि न च तद्धेतवः । मदस्तु प्रत्युत सेवने हेतुरिति तदंशे प्रतीयमानपुरुषाध्यारोपापेक्षा । कर्णचापलं तु भ्रमरस्यासेवने हेतुरेवेति तदंशे नाध्यारोप इति ।

## आदर्शः

सोऽपूर्व इति । हे भ्रातर्भ्रमर ! यदद्यापि वारणो निषेव्यते इत्येष को ग्रहः । वारणस्य को दोष इत्याह— सोऽपूर्व इति । रसनाविपर्यास इति अग्निशापाद् वारणस्य रसनाग्रपरिवृत्तेः, मदविस्मृतस्वपरविभागा दृष्टिः सा प्रसिद्धा । अत्र कर्णचापलमात्रांशे दुर्मुखः कर्णकथाग्राही निर्धनः पुरुषः प्रकृतो व्यङ्ग्यो नारोप्यते, भ्रमरे एतदुक्त्यौचित्यात् । अन्यत्रितयांशे त्वारोप्यते, भ्रमरस्य वारणसेवननिषेधे तैषामहेतुत्वादिति ग्राह्यति—अत्रेति ।

## सुधासागरः

तृतीया यथा—सोऽपूर्वो रसनेति । छन्दः पूर्वोक्तमेव । हे भ्रमर सोऽपूर्वो नवीनो रसनाविपर्ययविधिर्विपरीताभिधानं गालिप्रदानादिकं विपरीताग्रत्वं च । अग्निशापात् करिणां जिह्वापरिवृत्तिरिति पुराणप्रसिद्धम् । तत् कर्णयोश्चापलं परवचनप्रतार्यत्वं परापवादरसिकत्वमिति यावत्, अनवरतकर्णचालनं च, मदेनैश्वर्यादिगर्वेण विस्मृता स्वपरयोर्दिक मार्गो यया तादृशी सा विलक्षणा दृष्टिः । किं भूयसोक्तेन वा अथवा बहुजल्पनेन किम्, सर्वं त्वं निश्चितवानसि सर्वमपि तच्चेष्टितं निश्चयेन जानासि । हे भ्रातः अन्तः शून्यकरो निर्धनहस्तः अस्थिमांसादिशू-

न्यमध्यशुण्डादण्डश्च असौ वारण आपन्नसेवकनिवारकः गजश्च यद्यपि निषेव्यते नितरामाग्रहेण सेव्यते क एष ग्रहः कोऽयमाग्रह इत्यर्थः । निश्चितवानित्यत्र विस्मृतवानिति कल्पितः पाठः । विस्मृतस्य वारणाऽऽसेवायामनौचित्याभावात् ।

अत्रेत्यादि । अयमर्थः—अत्र हस्तिनो रसनाविपर्यासः शून्यकरत्वं मदश्च वाच्यस्य भ्रमरस्य सेवनाभावहेतुत्वेन वाच्यानि, न च तद्धेतवः । मदस्तु प्रत्युत सेवने हेतुरिति तदंशे प्रतीयमानपुरुषाध्यारोपापेक्षा । कर्णचापलं तु भ्रमरस्यानासेवने हेतुरेवेति तदंशे नाध्यारोप इति ।

(सू० १५३) निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्।। १०० ।।

कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः।

विज्ञेयातिशयोक्तिः सा

उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका। यथा

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।

सा च सुकुमारसुभगेत्युत्पातपरंपरा केयम्।। ४४९ ।।

अत्र मुखादि कमलादिरूपतयाध्यवसितम्।

---

### सङ्केतः

कमलमिति। अत्र भेदे अतिशयोक्तिरित्येको भेदः। मुखादेः कमलादिरूपतया अध्यवसाने चायं प्रथमो भेदः। कमलमनम्भसि इत्यादियोगे तु असम्बन्धे सम्बन्धरूपातिशयोक्तिः। तथा विरोधालङ्कारोऽपि।

### बालचित्तानुरञ्जनी

इदानीमतिशयोक्त्यलङ्कारं लक्षयति निगीर्येति। अत्र पञ्चधा बन्धछाया। भेदे अभेदः। अभेदः भेदः। संबन्धे असम्बन्धः। असम्बन्धे सम्बन्धः। कार्यकारणपौर्वापर्यविपर्ययश्चेति। तत्र निगीर्येत्यादिना प्रथमो लक्ष्यते प्रस्तुतस्येत्यादिना द्वितीयः। तृतीयो बहिरूहनीयः। यद्यर्थोक्तावित्यनेन चतुर्थो लक्ष्यते। कार्यकारणयरित्यादिना पञ्चमः। तत्राद्यं प्रकारं व्याकरोति उपमानेति।

### काव्यादर्शः

सेति। लोकातिक्रान्तिगोचरा। अध्यवसानमिति विषयिणा उपमानेन अन्तः— कृतस्य उपमेयस्य भेदेऽप्यभेद इत्यर्थः। तदेवेति। ग्रस्तुतमभिन्नमेव अन्यत्वे भेदेनाध्यवसीयते। 'श्यामा सामान्यप्रजापते रेखैव न भवति रेखा मर्यादा'। 'अन्यलल्टभत्वम्' इत्यभेदेप्यन्यत्वेन भेदोपनिबन्धः।

### विवेकः

अप्रस्तुतप्रशंसाया भेदं दर्शयितुमाह—निगीर्येत्यादि। अध्यवसाने त्रयं सम्भवति स्वरूपं विषयो विषयी च। तत्र विषयस्य विषयिणोऽत्यन्तं निगीर्णत्वेऽध्यवसानस्वरूपोत्थानम्। यत्र तु भ्रान्त्या मृगतृष्णायां तोयं

शुक्तिकायां वा रजतमध्यारोप्य तच्छब्दप्रयोगस्तत्र प्रतिपाद्यप्रतिपादकयोर्मुख्याध्यवसानरूपेणैव तोयादिप्रतीतेस्त-द्भावापत्तिर्मुख्यत्वमपि न लाक्षणिकत्वम्। किञ्चिदध्यवसानादिकं निमित्तमबलम्ब्य यदलौकिकं वचनं तदतिश-यार्थमुक्तिरतिशयोक्तिः। तेनास्य चत्वारः प्रकाराः—भेदेऽभेदाव्यवसायः, अभेदे भेदः, बहिरसतः सम्भाव्यस्य सधर्मस्य यदि-प्रभृतिभिः शब्दैः कल्पनं, कार्यकारणपौर्वापर्यविपर्ययश्चेति। तदेतद् यथाक्रममाह—कमलमि-त्यादि। प्राणिनां शुभाशुभसूचकं प्रकृतेरन्यत्वमुत्पातः। तदिह संयुक्तवियुक्तविषयतया शुभाशुभफलदातृत्वम्। अत्र मुखादीनां कमलाद्यैर्भेदेऽप्यभेदः, तेन मुखादीनां लोकोत्तरसौन्दर्यादि- साधारणधर्मसमृद्धिः कविप्रतिभासंर-म्भसमुत्थापिता प्रतीयते।

## दीपिका

उपमानेनान्तर्निगीर्णस्योपमेयस्येल्यद्रस्तुततादार्थ्यप्रतिभाससामग्रीप्राबल्यस्थगितस्वरूपस्य प्रस्तुतस्ये-त्यर्थः। अध्यवसानं द्रढीयसी बुद्धिः। अन्यत्वेनाविविक्ताकारवस्त्वन्तरत्वेन।

## दर्पणः

अतिशयोक्त्यलङ्कारः-अतिशयोक्तिः। निगीर्येत्यादिकारिकागतस्य परपदार्थस्यार्थ उपमानेति [उपमा-नेनेति]। प्रस्तुतपदस्यार्थः उपमेयस्येति स च प्रस्तुततादाम्त्यप्रतिभाससामग्रीव्यावर्त्यस्थगितस्वरूप इत्यर्थः। अध्यवसानद्रढीयसी [अध्यवसानं द्रढीयसी] बुद्धिः। सा च उपमेयस्योपमानतयेत्यर्थः।

## साहित्यचूडामणिः

अतिशयोक्तिमाह—निगीर्येति। अध्यवसायस्य साध्यतायामुत्प्रेक्षा समलक्षि, यत्र स्वरूपप्राधान्यम्। सिद्धत्वे तु तस्याध्यवसितप्राधान्यादतिशयोक्तिः। यत् सूत्रम्—"अध्यवसितप्राधान्ये त्वतिशयोक्तिर"(अ० सं० १३) ति। अस्याश्च पञ्चधा बन्धच्छाया अभेदो भेदे, तद्विपर्ययः, असम्बन्धः सम्बन्धे, तद्विपर्ययः, कार्यकारणयोः पौर्वापर्यविपर्ययश्च।

तत्र निगीर्येत्यादिना प्रथमोलक्ष्यते। प्रस्तुतस्येत्यादिना द्वितीयः। असम्बन्धः सम्बन्धे बहिरूहनीयः। यद्यर्थोक्तावित्यनेनासम्बन्धे सम्बन्धरूपस्तुरीयः। पञ्चमस्तु कण्ठोक्तः। परेणाप्रकृतेनोपमानेन। यद्यर्थेत्यर्थग्रहणं तच्छब्दोपसङ्ग्रहाय।

उपमानेनेति प्रकृतस्य तदन्येनोपमानेन विषयिणा कवलितस्य विषयरूपतयाध्यवसानमेकातिशयोक्तिः।

कमलमिति। अत्र मुखादीनां कमलादिभिर्भेदाऽप्यभेदोऽध्वसित इत्याह—मुखादीति।

## सम्प्रदायप्रकाशिनी

निर्गीर्याध्यवसानमिति। उपमानेन निगीर्णस्योपमेयस्याभेदाध्याभेदाध्यवसानमेकातिशयोक्तिः। अन्यत्वेनाध्यवसानमन्या। यद्यर्थस्य यदिच्छलादिशब्दस्योक्तौ वस्तुनोऽसम्भवतः कल्पनं तृतीया। कार्यकारणयोः पौर्वापर्यविपर्ययः कार्यस्य प्राग्भावाच्चतुर्थी।

परिपाट्या विवृण्वन्नुदाहरति—उपमानेनान्तरित्यादिना।

कमलमिति। कमलकुवलयादिनोपमानेन निगीर्णस्य मुखनयनादेस्तदभेदोऽध्यवसीयते।

## मधुमती

निगीर्येति। प्रकृत-परशब्दौ उपमानोपमेयवाचकौ। तथाचात्र गौणसाध्यवसानलक्षणामूलं अध्यवसानं अध्यवसेयम्। यच्च प्रकृतमेव अप्रकृतत्वेन ज्ञाप्यते, सा अपरा। एवं च—भिन्नयोः अभेदाध्यवसाने रूपकम्, तत्रैव आरोपविषयनिगरणे प्रथमातिशयोक्तिः, अभिन्ने एव भेदाध्यवसाने द्वितीयातिशयोक्तिरित्यर्थः॥ अपह्नुतिभेदकं तत्रैवोक्तम्। न च द्वितीयस्य भ्रान्तिमत्त्वम्; (तत्र अन्यस्य प्रकृतत्वेन भानम्, अत्र तु प्रकृतस्यान्यत्वेन भानमिति भेदात्।) किञ्चिदंशे भ्रान्तित्वेन तदभावाच्च।

## विस्तारिका

अतिशयोक्तिमाह—निगीर्येत्यादि। अत्रातिशयोक्तिपदयोगानुसारेण सामान्यलक्षणलाभ इति न पृथगभिधानम्। स त्वतिशयप्रतिपत्तयेऽन्यस्यान्यतादात्म्यप्रतिपादकोक्तिरूपः। तादात्म्यप्रतिपत्तिश्च भेदप्रतिपत्त्यसहकृताहार्यनिश्चयरूपा, तेन रूपकसन्देहयोरुत्प्रेक्षायाश्च वारणम्। रूपकस्य भेदाभेदरूपत्वादन्ययोश्च संशयत्वात्। भेदो वैधर्म्यम् आहार्यत्वेन च भ्रान्तिमत्यप्रसङ्गः।

उपमानेनेत्युपमेयस्येति च परेणेत्यस्य प्रकृतस्येत्यस्य प्रकृतत्वविवरणम्। अन्तर्निगीर्णस्यारोपविषयतावच्छेदकस्योपलक्षणभावेन स्वान्तर्निवेशितस्यावसानं च प्रकृततादात्म्याहार्यारोपः।

अत्रेदमालोचनीयम्—प्रकृताप्रकृतयोस्तादात्म्यारोपोऽध्यवसानम्। अत्र क्वचिदप्रकृतत्वावच्छेदकधर्मस्यान्वये प्रकारत्वम्, क्वचनोपलक्षणभावः।

आद्यं यथा—'मुखं चन्द्रः' इत्यत्र रूपके मुखचन्द्रत्वयोरभेदान्वये प्रकारत्वात्। तेन 'मुखं चन्द्रः' इत्यत्र रूपके मुखचन्द्रत्वयोरभेदान्वये प्रकारत्वात्। तेन 'मुखंचन्द्रो हसति' इत्यत्र बाधः, चन्द्रे हासविरहात्। एवं 'मुखचन्द्रस्य ज्योत्स्ना' इत्यत्राप्यारोपितस्य वस्तुधर्मयोगात् स्मितज्योत्स्ना या एव वृत्तेः। द्वितीयो यथा—'मुखमपूर्वश्चन्द्रः' इत्यत्रातिशयोक्तौ मुखत्वेननोपलक्षिते धर्मिणि अपूर्वचन्द्रत्वाध्यवसानं यथा रत्नावल्याम्—

> विधायापूर्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम्।
>
> धृतो निजासनाम्भोजविनिमिलनदुःस्थितः॥

इत्यत्र मुखत्वस्योपलक्षणतया निगरणेन च चन्द्रात्मनो मुखात् पद्ममीलनम्, अत एवातिशयोक्तिरियम्।

आरोपविषये रूपकादतिशयप्रतिपाद्नाद् निगरणेऽपि द्वयी गतिः, विषयस्योपादानमनुपादानं च। तदुक्तम्—

> विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः।
>
> अन्तः करणमात्रेण निगीर्णत्वं प्रचक्षते॥ इति।

तत्र विषयस्योपदाने यथा 'मुखमपूर्वश्चन्द्रः' इत्यादि।

अनुपादाने त्वाह—कमलमनम्भसि इत्यादिकम्। जलमवतीति कमलः, तस्याम्भो विना स्थितिरित्युत्पातः। कुवलये इति। दिवानक्तं प्रकाशभाजोर्युगपत्प्रकाश इत्युत्पातः। कनकलकितेति। अबीजादङ्कुरोत्पत्तिलतापालीव कुसुमप्रभवस्य काष्ठरूपायाः स्वस्याः सौकुमार्यस्य चोत्पातपरम्परात्वम्।

अत्र प्रकरणलभ्यानां नायिकामुखादीनां कमलादित्वेनाध्यवसानाद् मुखादेरतिशयः।

तदेवेत्यादि। एवकारेण धर्मिभेदाभावसूत्रणम्, तेनास्य पूर्वतो व्यवच्छेदः। अन्यत्वेनेति। अन्यत्वेन प्रकारेणैकारोपेऽन्यत्रातिशयोक्तिरनुषज्यते, तथोत्तरयोरपि।

### सारबोधिनी

निगीर्येत्यादि। अस्याः सामान्यलक्षणं अतिशयप्रतिपत्तये अन्यस्यान्यतादात्म्य प्रतिपादकोक्तिरूपम्। निगरणं प्रकृतनिष्ठासाधारणधर्मस्य विषयीकरणम्। तच्च चन्द्र इत्यत्र, चन्द्र एवायमित्यत्र च सम्भवति तदुक्तम्—"विषयस्यानुपादानेऽपि सूरयः अन्तःकरणमात्रेण निगीर्णत्वं प्रचक्षते। उपादाने सामान्यधर्मेणेति शेषः। अधःकरणं रवौ सादृश्येनाच्छादनम्। विषयनिष्ठसाधारणधर्मामानमिति यावत्। अध्यवसानमप्रकृतादात्म्यारोपः। तेन रूपकस्य सन्देहोत्प्रेक्षयोश्च व्यवच्छेदः। रूपकस्य भेदाभेदरूपत्वात्। भेदो वैधर्म्यम्। अन्ययोश्च संशयत्वात् आहार्यत्वेन भ्रान्तिमत्यतिप्रसङ्गः। उपमानेनेत्युपमेयस्येति च परेणेत्यस्य च प्रकृतस्य विवरणम्।

कमलमिति। अत्र प्रकरणलभ्यानां नायिकामुखादीनां अध्यवसानान्मुखादेरवातिशयः प्रतीयते।

### काव्यप्रदीपः

**निगीर्याध्यवसानं तु प्रकृतस्य समेन यत्।**

**प्रकृतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्॥ १४॥**

**कार्यकारणयोश्चैव पौर्वापर्यविपर्ययः।**

**विज्ञेयातिशयोक्तिः सा**

प्रकृतस्योपमेयस्य समेनोपमानेन निगीर्याध्यवसानं द्रढीयसी बुद्धिः सैकातिशयोक्तिः। यच्च तदेव वस्त्वन्यत्वेन विविक्ताकारवस्त्वन्तरत्वेनाध्यवसीयते सा द्वितीया। यच्च चेच्छब्देन यदिशब्देन वा यद्यर्थोक्तौ कल्पनमर्थादसंभविनोऽर्थस्य सा तृतीया। यश्च कार्यकारणयोः प्रसिद्धस्य पौर्वापर्यस्य विपर्ययो वैपरीत्यं कारणस्य शीघ्रकारिता प्रतीतये सा चतुर्थीति चतस्रोऽतिशयोक्तयः। तत्राद्या यथा—

**'कमलमनम्भसि कमले कुवलये च तानि कनकलतिकायाम्।**

**सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥"**

अत्र मुखादि कमलादित्वेनाध्यवसितम्। यथा वा मम—

**'कलशे परममहत्त्वं तिमिरस्तोमस्य सोमसहवासः।**

**वियति च शैवलवल्ली शिव शिव कुसुमेषु सर्गसौभाग्यम्॥'**

### काव्यप्रकाशखण्डनम्

**निगीर्य्याध्यध्यवसानं तु प्रकृतस्य परेण यत्।**
**प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्॥ (का. १००)**

कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।

विज्ञेयातिशयोक्तिः सा (का. १०१)

अस्याः सामान्यलक्षणम्—अतिशयप्रतिपत्तये अन्यस्य अन्यतादात्म्यकोक्तिरूपं निगरणं प्रकृतनिष्ठा-साधारणधर्मस्य अविषयीक (क)करणम् । तच्च चन्द्र इत्यत्र चन्द्र एवायं इत्यत्र च (का. प्र. ११) संभवति । प्रकृतं निगीर्य असाधारणधर्मेण अनुक्त्वा तेन रूपकाद् व्यवच्छेदः । अध्यवसा [नं] स्वतादात्म्येनाध्यवसायः । यथा—

**लतामूले लीनो हरिमपरिहीनो हिमकरः**
**स्वयं हाराकारा गलति जलधारा कुवलयात्।**
**धुनीते बन्धूकं तिलकुसुमजन्माऽपि पवनो**
**गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः॥**

### आदर्शः

चतुर्विधमतिशयोक्त्यलङ्कारमाह—निगीर्येति । अत्र निगीर्येत्याद्युक्तामेकामतिशयोक्तिं व्याचष्टे—उपमानेनेति । उपमानं परपदस्यार्थः । उपमेयस्यान्तर्निगरणम् उपमानोक्तिमहिम्नैव तदभेदेनोपमेयप्राप्तौ तनुक्तिः ।

कमलमिति । कुवलये नीलोत्पलद्वयम् । तानि कमल-नीलोत्पलद्वयानि । अत्रोपमानस्य कमलादेरु-क्त्याऽनुक्तमुखादेरभेदेन प्रतीतिः । सा चेत्यादौ तु विरोधालङ्कार एव ।

### सुधासागरः

उपमानेत्यादि । अयमर्थः—प्रकृतस्योपमेयस्य समेनोपमानेन निगीर्याध्यवसानं द्रढीयसी बुद्धिः, सौसा-दृश्येन विषयनिष्ठासाधारणधर्माभानमिति यावत्, सैका प्रथमाऽतिशयोक्तिः । क्वचित् 'प्रकृतस्य परेण' यदि तु पाठस्तत्र परशब्दस्तूपमानवाची बोध्यः । यच्च तदेव वस्तु अन्यत्वेन विविक्ताकारवस्त्वन्तरत्वेनाध्वसीयेत सा द्वितीया । यच्च चेच्छब्देन यदिशब्देन वा यद्यर्थोक्तौ कल्पनमर्थादसम्भविनोऽर्थस्य सा तृतीया । यश्च कार्यकार-णयोः प्रसिद्धस्य पौर्वापर्यस्य विपर्ययो वैपरीत्यं कारणस्य शीघ्रकारिताप्रतीयते सा चतुर्थी ।

तत्राद्या यथा—कमलमिति । आर्या छन्दः । लक्षणमुक्तं प्राक् । प्रेयसीं दृष्ट्वा नायकस्तत्सखीं प्रति वदति । कमलमनम्भसि जलाभावे पद्मम् । तत्र कमले च कुवलये कुमुदद्वयम् । तानि त्रीण्यपि कनकलतिकायां सुवर्णवल्ल्याम् । सा च कनकलतिका सुकुमारा मृद्वङ्गी सुभगा षड्गुणसम्पन्ना च इत्युत्पातपरम्परा आश्चर्यमाला केयमित्यर्थः । अत्र मुखेत्यादिकं स्पष्टम् ।

यच्च तदेवान्यत्वेनाध्यवसीयते सा, अपरा । यथा

**अण्णं लडहत्तणअं अण्णा विअ का वि वत्तणच्छाआ ।**

**सामा सामण्णपआवइणो रेह च्चिअ ण होई ॥ ४५० ॥**

---

**सङ्केतः**

तदेवेति । तदेव प्रस्तुतं अभिन्नमेव अन्यत्वेन भेदेन अध्यवसीयते इत्यर्थः । ।

अण्णमिति । रेखा मर्यादा । वत्तणं वक्त्रं वर्तनं वा । अत्र अन्यत् लटभत्वं इति अभेदेऽपि अन्यत्वेन भेदोक्तिरिति द्वितीयः । अत्र अभेदे भेदः इति वाक्योपपत्तये वास्तवलटभत्वस्य सातिशयं कविकल्पितं द्वितीयं लटभत्वं कल्पनीयम् । उत्तरार्धे सम्बन्धेऽप्यसम्बन्धरूपातकिशयोक्तिः ।

**बालचित्तानुरञ्जनी**

द्वितीयमाह यच्चेति । तच्छब्देन प्रस्तुतमुच्यते । साऽपरा, अभेदे भेदरूपा अतिशयोक्तिरित्यर्थः । तामुदाहरति अण्णमिति । सामा श्यामा सामण्णपआवइणो सामान्यप्रजापतेः रेह च्चिअ रेखैव । ण होइ न भवति । यतः अस्याः अण्णं अन्यत्तु लडहत्तणअं लटभत्वं विलासः । अण्णा विअ अन्येव । वत्तणछाया वर्त्तनच्छाया । अत्र लटभत्वादीनामभेदेऽपि अन्यत्वेनाध्यवसानात् भेद इत्यर्थः । सम्बन्धेऽप्यसम्बन्धो बहिरूहनीयः । यथा

**अस्याः सर्गविधौ प्रजापतिभूच्चन्द्रो नु कान्तिप्रदः**
**श्रृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।**
**वेदाभ्यासजडः स्वयं नु विषयव्यावृत्तकौतूहलो**
**निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥**

अत्र पुराणब्रह्मनिर्माणसंबन्धेऽप्यसंबन्ध उक्त इति चिरन्तनाः । अस्य तदप्यभेद एवान्तर्भूतमित्याशयः ।

**विवेकः**

अण्णं इति—अन्यल्लटभत्वमन्या काऽपि वर्तनच्छाया । समाशङ्के[समाशङ्के] यदि वा श्यामा योषित् सामान्यप्रजापते रेखैव न भवति ॥ लटभत्वं मनोज्ञत्वम् । रेखाशब्देन चित्रालेख्यं लक्ष्यते, तेन च विशिष्टं रूपनिर्माणम् । अत्र लटभत्वादीनामभेदेऽपि सातिशयत्वेन भेदः । एवञ्च श्रीकण्ठजनपदवणने 'यस्तपोवनमिति मुनिभिः कामायतनमिति वेश्याभिः संगीतशालेति लासकै'रित्यादौ (ह.च. ९७ पृ:) तथा—'णाराअणा त्ति परिणअ-वआह सिरिवल्लहो त्ति तरुणीहि ।' बालाहिं उण कोदूहलेण एमेअ सच्चविओ ॥' (अ. स. ६१ पृ:) इत्यादावप्यभेद इति । अत एव 'एकस्यापि निमित्तशादनेकधा ग्रहणमुल्लेख' (अ. स. पृ: ५८) इत्यलङ्कारान्तरमन्यैः कृतमित्यत्र न लक्षितम् ।

## दीपिका

लडहत्तणं लटभत्वं लावण्यमित्यर्थः । बत्तणच्छाया निर्माणशोभा । रेहच्चिअण होई रेखैव रेखानिर्मिति-रेव न भवति । निर्माणपरिपाटीमात्रप्यत्र नास्तीति भावः । यदिशब्देनेति यथा—

**उभौ यदि व्योम्नि पयःप्रवाहावाकाशगङ्गापयसः पतेताम् ।**
**तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥**

## दर्पणः

अन्यत्वेन वस्त्वन्तरगतत्वेन । अन्यनिति [अण्णमिति] अन्यं दटलत्वं [अण्णं] लडहत्तकअं अन्यत् लटभत्वम्] अन्यैव कापि वर्तनच्छाया निर्माणशोभा । [रेह] लेखा निर्माणस्य लेशः । यदि शब्देनोक्तौ यथा—

**यदि स्यान्मण्डले शक्तिमिन्दोरिन्दीवरद्वयम् ।**
**तदोपमीयेतैतस्या वदनं लोकलोचनम् [लोललोचनम्] ॥**

## साहित्यचूडामणिः

अभेदे भेदरूपमाह—यच्चेति । साऽतिशयोक्तिः ।

अण्णमिति ।

**अन्यल्लडहत्वम् अन्यैव काचिद् वर्तनच्छया ।**
**श्यामा सामान्यप्रजापते रेखैव न भवति ॥ इति च्छाया ।**

श्यामा योषित् । रेखा मर्यादा । अत्र लडहत्वादीनामभेदेऽप्यन्यत्वेनाध्यवसानाद् भेदः ।

असम्बधः सम्बन्धे बहिरुहनीयो यथा—"अस्याः सर्गविधावि"त्यादि । 'अत्र पुराणब्रह्मनिर्माणे सम्बन्धेऽप्यसम्बन्ध उक्त' इति चिरन्तनाः । ग्रन्थकारस्य तदप्यभेदे भेद एवेत्याशयः ।

## सम्प्रदायप्रकाशिनी

तदेतदाह—अत्र मुखादीति । यच्चेति । तदेवोपमेयमेव ।

अण्णमिति

**"अन्यल्लटहत्वमन्यैव कापि वर्तनच्छाया ।**
**श्यामा सामान्यप्रजापते रेखैव न भवति ॥"**

लटहत्वं प्रौढिः । वर्तनं शीलम् । अत्र लटहत्वादेरन्यता । यद्यर्थस्येति । कल्पनयैव कल्प्याक्षेपादर्थादि-त्युक्तम् । कल्प्यं च यद्यर्थोक्तेरसम्भवि ।

### मधुमती

अण्णमिति। लडहत्तणअं मनोहरत्वम् लावण्यम्। रेखा निर्मितिः। इह श्यामायाः सामान्यप्रजापतेः रेखात्वेऽपि तदन्यत्वाध्यवसानात् अतिशयोक्तिरित्यर्थः। इदं च व्यक्तिरेकालङ्कारगर्भमिति ध्येयम्।

### विस्तारिका

**अन्यत्सौकुमार्यमन्यापि कापि वर्तनच्छाया।**
**श्यामा सामान्यप्रजापते रेखैव च न भवति॥**

सौकुमार्ये लडहत्तणअ इति देशीवर्तने। जीवनाश्रयो भवतीति जीवनं शरीरम्। छाया कान्तिः। सामान्यः सर्वसाधारणः। रेखा निर्मितिः।

अत्रास्याः सौन्दर्यमन्यदेवेत्युक्तावस्य सौन्दर्यस्य सौन्दर्यान्तरादतिशयः प्रतीयते।

यद्यर्थोक्ताविति तर्कितार्थ इत्यर्थः। यद्यर्थस्येत्यादि। यदिशब्देन यथा "उभौ यदि व्योम्नि पृथक् प्रवाहौ" इत्यत्र।

### सारबोधिनी

तदेवेति। एवकारेण धर्मिभेदाभावसूचनम्। तेनास्य पूर्वतो भेदः। अण्णं इति।

**अन्यल्लडहत्वं अन्यैव कापि वर्तनच्छाया।**
**श्यामा सामान्यप्रजापतेरेखैव न भवति॥**

सौकुमार्ये लडहो देशभाषा वर्तते। जीवनाश्रयो भवतीति वर्तनं शरीरम्। छाया कान्तिः। सामान्यः सर्वसाधारणः। रेखा निर्मितिः। अस्याः सौकुमार्यमन्यदेवेत्युक्तौ अस्य सौकुमार्यस्य सौकुमार्योत्तरादतिशयः प्रतीयते।

### काव्यप्रदीपः

द्वितीया यथा—

**'अण्णं लडहत्तणअं अण्णा विअ का वि वत्तणच्छाआ।**
**सामा सामण्णपआवइणो रेह च्चिअ ण होई॥'**

स्पष्टम्।

### काव्यप्रकाशखण्डनम्

यच्च तदेवा-यत्वेनाध्यवसीयते सा अपरा।

**अन्यदेव हि लावण्यमन्यैवास्याः स्तनद्युतिः ।**
**तन्मन्ये रचना नैषा सामान्यस्य प्रजापतेः ॥**

### आदर्शः

प्रस्तुतस्येत्यादिद्वितीयामतिशयोक्तिमाह—यच्चेति । अण्णमिति ।

**अन्यल्लावण्यमन्यैव कापि वर्त्तनच्छाया ।**
**श्यामा सामान्यप्रजापते रेखैव न भवति ॥** इति संस्कृतम् ।

लडहत्तणभं लावण्ये देशि । वर्त्तते अनेनेति वर्त्तनं शरीरं श्यामा परिभाषिता नायिकाविशेषः । रेखा शिल्पम् । अत्र लावण्यादौ तदन्यत्वेनाध्यासः ।

### सुधासागरः

द्वितीया यथा—अण्णं । आर्या जघनविपुला । लक्षणमुक्तं प्राक् । सुकुमारशब्दस्य प्राकृते लडहादेशः ।

**अन्यत् सौकुमार्यमन्यैव च काऽपि वर्त्तनच्छाया ।**
**श्यामा सामान्यप्रजापते रेखैव च न भवति ॥** इति संस्कृतम् ।

नायिकासखी नायकं प्रति वक्ति । अन्यदेवेदं श्यामाविषयकं सौकुमार्यम् । अन्यैव काऽप्यनिर्वाच्या वर्तनस्य शरीरस्य छाया कान्तिः । श्यामा शीतोष्णकाले उष्णशीता षोडशवार्षिकीयं कान्ता सामान्यस्य सर्वसाधारणस्य प्रजापतेर्ब्रह्मणो रेखा निर्मितिरेव न भवतीत्यर्थः ।

इदमवधेयम्—प्रथमा भेदे ऽभेदाध्यवसायात्मिका । द्वितीयाऽभेदे भेदाध्यवसायात्मिकेति । किञ्च प्रकृतोदाहरणे स्वरूपान्यत्वेनान्यताध्यवसायः । क्वचित्तत्सम्बन्धिकारणाद्यन्यत्वेनान्यत्वाध्यवसायः । यथा 'तस्याः सखे नियतमिन्दुसुधामृणाल ज्योत्स्नादिकारणमभून्मदनश्च वेधाः' इत्यादौ । न चैवम् 'अस्याः सर्गविधौ प्रजापतिः' इत्यादावतिव्याप्तिः, निश्चयाभावात् । क्वचिद्विषयभेदेनान्यत्वाध्यवसायः ।

यथा—

**मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्त्तिमान्**
**गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ।**
**मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां**
**वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः ॥**

अविदुषां विराट् विशेषेण राजते इति विराट्। अत्रैक एव भगवाँस्तेषां तेषां तत्तद्रूपेण नानात्वेन विदित इति विषयभेदेन योग्यतावशादभेदे भेदाध्यवसायः। न चात्र रूपकशङ्का, मल्लादिसम्बन्ध्यशन्यादेरप्रसिद्ध्या तत्त्वेन रूपेणासम्भवात्, मल्लादिनिष्ठाशनित्वादिप्रकारकज्ञानस्वरूपाभिन्नवेदनविषय इत्यर्थात्, षष्ठ्यर्थानां वेदनक्रियायामेवान्वयस्य विवक्षितत्वात्। घट इति ज्ञानमित्यादौ घटादि पदस्येवात्राशनिरित्यादेर्ज्ञानाकारकथनत्वाद् इति पदस्य स्वरूपपरस्य क्रियाविशेषणत्वात्। न च भ्रान्तिमत्त्वापत्तिः, किञ्चिदंशे भ्रान्तित्वेन तदभावात्। उल्लेखस्यात्रैवान्तर्भावः। अत एवोल्लेखः खण्डितोऽस्माभिः कुवलयानन्दखण्डने।

'यद्यर्थस्य' यदिशब्देन चेच्छब्देन वा, उक्तौ यत् कल्पनम् (अर्थात् असंभविनोऽर्थस्य) सा तृतीया। यथा

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्॥ ४५१॥

---

### सङ्केतः

राकेति। राकेन्दोः निर्लक्ष्मत्वस्य बहिरसम्भवेऽपि कविना सम्भवद्रूपतया उक्तम्। आस्यं निरुपमित्यर्थः। 'एषा उत्पाद्योपमा' इति रुद्रटः। अद्भुतोपमा इति दण्डिमुख्याः। अयं सम्बन्धेऽप्यसम्बन्धरूपः तृतीयः।

क्वचित् असम्बन्धे सम्बन्धो यथा—

पुष्पं प्रवालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्तथम्।
ततोऽनुकुर्यात् विशदस्य तस्य
ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥

अत्र अस्म्बन्धेऽपि सम्भावनया सम्बन्धः।

### बालचित्तानुरञ्जनी

असम्बन्धेऽपि संबन्धमाह यदीति। अर्थात् सामर्थ्यात्। असम्भविनो यत् कल्पनमिति संबन्धः, उदाहरति राकेति। राकायां पूर्णिमायाम्। अमृतांशोश्चन्द्रस्य वपुरकलङ्कञ्चेत् तदा तस्याः मुखं साम्यपराभवमाप्नुयात्। अत्र वास्तवेऽप्यसंबन्धे सम्भावनया संबन्धः।

### काव्यादर्शः

असंभविनोऽर्थस्येति। बहिरविद्यमानस्यार्थस्य संभावनमात्रेण उपनिबन्धे संबन्धेऽप्यसंबन्धोऽसंबन्धेऽपि संबन्ध इत्यर्थः। संबन्धेऽप्यसंबन्धः, यथा— 'राकायाम्' इति। अत्र पार्वणशशाङ्कस्य निष्कलङ्कत्वं बहिरसंभवददपि कविप्रजापतिनास्वप्रांतभानात् संभवद्रूपतया उक्तम्। इत्थं च प्रकृतस्य मुखस्य उपामानाभावो, नास्त्यन्यत् किंचिदिस्योपमानामिति। अत एव संभाव्यामानार्थनिरा चिकीर्षया शङ्काद्योतकश्चेच्छब्दः। आशङ्का ह्यनिश्चितस्वभवे वस्तुनि स्यात्। इत्यमुत्पादद्योपमेति रूद्रटः, अद्भुतोपमेति दण्डिप्रभृतयः।

असंबन्धेऽपि संबन्धः, यथा—

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥

—अत्र असंबन्धे संभावनया संबन्धः। यद्यर्थं विनापीयं दृश्यते, यथा—

दाहोऽम्भः प्रसूतिंपचः प्रचयवान् वाष्पः प्राणालोचितः
श्वासाः प्रेङ्खितदीप्तदीपलतिकाः पाण्डिम्नि मग्नं वपुः।
किं चान्यत् कथयामि रात्रिमखिलां त्वद्वर्त्मवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥

—अत्र दाहादीनामम्भः प्रसृत्याद्यैरसंबन्धेऽपि संबन्ध उक्तः।

### विवेकः

राकायामित्यादि—अत्र शशिनः कलङ्कशून्यत्वसम्भवच्छब्दार्थेन कल्पनया असम्भावितम्। यथा वा (कु. स. १/४४) पुष्पं प्रबालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्। ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठ-पर्यस्तरुचः स्मितस्य ॥ नियतपूर्वभावि कारणं नियतपश्चात्कालभावि कार्यमिति कार्यकारणयोर्लक्षणम्। यदा तु विशेषप्रतिपादनाय तयोरेव तद्रूपविपर्ययः क्रियते तदाऽतिशयोक्तिः।

### दर्पणः

कार्यस्य पूर्वयुक्तिकारणसमकालत्वेऽपि [पूर्वोक्तसमकालत्वेऽपि] भवति। यथा

अविरलविलोलजलदः कुरजार्ज्जननीयस्वरभिवलवातः।
अयमायातः कालो हन्त इताः पथिकगेहिन्यः ॥

### साहित्यचूडामणिः

असम्बन्धे सम्बन्धमाह—राकायायिति। अत्र वास्त्वेऽप्यसम्बन्धे सम्भावनया सम्बन्धः। इयमेव प्राचीनानामालङ्कारिकाणामतिशयोक्तिः। यदाहुः—"सम्भाव्यधर्मतदुत्कर्षकल्पनातिशयोक्तिरि" [का. सू. ४.३.१०] ति। तत्र सम्भाव्यधर्मकल्पनेयम्।

### सम्प्रदायप्रकाशिनी

राकायामिति। पूर्णिमायामकलङ्कस्याभावान्निस्साम्यत्वमतिशयः। कारणस्य शीघ्रकारितां वक्तुमिति विपर्ययप्रयोजनम्।

### मधुमती

यद्यर्थस्येति। यदिशब्दार्थस्येत्यर्थः। यदि चेच्छब्दयोः पर्यायत्वादुक्तम्—यदिशब्देन चेच्छब्देन वा इति। अर्थ एवात्र कल्पकः न शब्दः इत्याह—अर्थादिति। अन्यथा यद्युक्तिनिबन्धनार्थापत्तेरिति भावः। यद्यर्थोक्तौ

इत्यत्र सूचितं असम्भवित्वं च स्वाभाविकम्। तच्च तथाविधरूपाभावः। स च कदाचित् सम्भवे, सर्वथैवासम्भवे च अविशिष्टम्। तेन 'पुष्पं प्रवालोपहितम्' इत्यादौ नाव्याप्तिः। तथाच अस्वाभाविकरूपासञ्जननेन अन्यसञ्जनन-रूपेयमिति ध्येयम्।

राकायामिति। यद्यपि 'पुष्पं प्रवालोपहितम्' इत्यादौ आपाद्या पादकयोः सामानाधिकरण्यं अभिधातुमु-चितम्। अन्यथा अप्रसञ्जनमेवास्याः। तथापि 'तदाननसदृशः चन्द्रः तदा स्यात्' इत्यत्रैव तात्पर्यमिति विभाव्यम्। इयमपि व्यतिरेकालङ्कारगर्भा।

### विस्तारिका

राकायामखण्डपूर्णिमायाम्। बपुः शरीरम्, अन्यथा शरीरशोभां पुरस्कृत्यास्य मुखस्य तदन्येन चन्द्रेण सहौपम्यानुपपत्तेः। पराभवस्तिरस्कारः।

अत्र चन्द्रेण सह मुखस्य साम्यं तर्कितमेव, न वस्तु सदित्यर्थः। तेन मुखस्यातिशयः प्रतीयत इति यद्यर्थातिशयोक्तिरियम्।

### सारबोधिनी

यद्यर्थेति। अत्र चन्द्रेण सह मुखस्य साम्यं तर्कितमेव, न वस्तुतस्तदित्यर्थस्तेन मुखस्यातिशयः प्रतीयते। राकायामिति साम्यमेव पराभवम्।

### काव्यप्रदीपः

तृतीया यथा—

**'राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।**
**तस्य मुखं तदा साम्यपराभवमवाप्नुयात्॥'**

### काव्यप्रकाशखण्डनम्

यद्यर्थस्य यदि शब्देन चेच्छब्दे वा यत् कल्पनं अर्थादसंभाविनोऽर्थस्य सा तृतीया। यथा—

**उभौ यदि व्योम्मिपृथक् प्रवाहावाकाशगङ्गापयसः पतेताम्।**
**तेनोपमीयेत तमालनीलमामुक्तमुक्तलतमस्य वक्षः॥**

**आदर्शः**

तृतीयामतिशयोक्तिमाह—यद्यर्थस्येति । राकायामिति । साम्यं स्वसमानान्तरसत्यमेव पराभवः ।

**सुधासागरः**

तृतीयाऽतिशयोक्तिर्यथा—राकायामिति ।

राकायां परिपूर्णचन्द्रायां पञ्चदश्याममृतांशोश्चन्द्रस्य वपुः शरीरमकलङ्कं कलङ्करहितं चेद् भवेत् तदा तस्या नायिकायाः मुखसाम्यं चन्द्रसादृश्यमेव पराभवस्तिरस्कारस्तमवाप्नुयात् । निरुपमस्योपमानसम्भव एव तिरस्कार इति भावः ।

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी । यथा

**हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।**

**चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥ ४५२ ॥**

---

### सङ्केतः

हृदयमिति । अत्र कुसुमशराधिष्ठानं कार्यम् । नायकाधिष्ठानं तु कारणम् । तयोः विपर्यासः कृतः, प्राक् कार्यं, पश्चात् कारणं इति । विपर्ययोऽयं तुल्यकालत्वेनापि स्यात् । यद्वा—'यथौचित्यं औचिती' इतिवत् पौर्वापर्यं पौर्वापरी, तस्याः अविपर्ययः ईषद्विपर्ययः, तुल्यकालत्वम् । तत्र अतिशयोक्तिः यथा—

**अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः ।**
**अयमायातः कालः हन्त ! हताः पथिकगेहिन्यः ॥**

इति । इत्यतिशयोक्तिः ।

### बालचित्तानुरञ्जनी

अन्तिमं भेदमाह कारणस्येति । उदाहरति हृदयमिति । आदौ प्रथमं मालत्या हृदयं कुसुमचापबाणेनाधिष्ठितम् । भो रमणीवल्लभ ! चरमं पश्चाल्लोचनविषयं भजता त्वया अधिष्ठितम् । कारणस्य कान्तेनाधिष्ठितत्वस्य ।

### काव्यादर्शः

'हृदयम्' इति । अत्र स्मराधिष्ठानं कार्यं पूर्वमेव जातं, नायकाधिष्ठानं तु स्माराधिष्ठानकारणं पश्चादिति कार्यकारणयोः पौर्वापर्यविपर्ययः ।

### विवेकः

हृदयमित्यादि—अत्र कुसुमबाणधिष्ठातृत्वं रमणीवल्लभलोचनविषयत्वकार्यमिति तयोरुपपन्नं पौर्वापर्यं शीघ्रकालताप्रतीत्यर्थं व्यत्ययेन निर्दिष्टम् । कारणकार्ययोः पौर्वापर्याविपर्यश्च तुल्यकालतयाऽपि भवति यथा—(र.व. ४/४) सममेव समाक्रान्तं द्वयं द्विरदगामिना । तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षिताम् ॥ अत्र राज्याभिषेकरिपुमण्डलक्रमणयोर्हेतुहेतुमद्भावेन सत्यपि पौर्वापर्ये क्षिप्रकारित्वाद्विवक्षितया तुल्यकालतया कोऽपि प्रभावातिशयः प्रतीयते । द्विरदगामिनेति श्लिष्टं पदम् । एतदेवान्येषां 'पूर्व'मित्यलङ्कारः । तथा च रुद्रटः (का. अ. ८/९७)—यत्रातिप्रबलतया विवक्ष्यते पूर्वमेव जन्यस्य । प्रादुर्भावः पश्चाज्जनकस्य तु तद्भवेत् पूर्वम् ॥ यथा च यदि-प्रभृतिभिः कल्पनाया असम्बन्धे सम्बन्धस्तथा सम्बन्धेऽसम्बन्ध इति पञ्चमः प्रकारोऽस्येत्याहुः । यथा (अ. स. ८६ पृ.; ध्व. आ. वृ. ३/१६)—'लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः । एषाऽपि स्वगुणानुरूपरमणाभावाद्वराको हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वधास्तनुं

तन्वता। अत्र लावण्यद्रविणस्य व्ययासम्बन्धेऽपि सम्बन्धस्तन्वीलावण्यप्रकर्षप्रतिपादनार्थं निबद्धः।यथा वा— 'अस्याः सर्गविधा'वित्यादौ (वि. उ. १/१०) पुराणप्रजापतिनिर्माण सम्बन्धेऽप्यसम्बन्ध उक्तः' (अ. स. ८६ पृ:)।

## दीपिका

कार्यकारणयोः पौर्वापर्यविपर्यये द्वयी गतिः, कार्यस्य पूर्वभावो द्वयोः समकालता च। तत्राद्यामाह— कारणस्येति। पूर्वमुक्तौ पूर्वभावोक्तौ। द्वितीया यथा—

**"अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः।**

**अयमायातः कालो हन्त हताः पथिकगेहिन्यः॥"**

## साहित्यचूडामणिः

अन्तिमं भेदमाह—कारणस्येति। शीघ्रतरतां वक्तुमिति प्रयोजनोपन्यासः। एवं कमलमनम्भसीत्येवमादावपि वदनादीनां वास्तवस्य सौन्दर्यस्य कविसमर्पितेन सौन्दर्येणाध्यवसानं भेदेऽप्यभेदवचनस्य प्रयोजनमुन्नेयम्।

हृदयमिति। अत्र कारणस्य पूर्वभाविता पश्चाद्भाविता च कार्यस्येत्यसमकालो विपर्ययः। समकालोऽपि समस्ति। यथा—"अविरलविलोले"—त्यादि।

## सम्प्रदायप्रकाशिनी

हृदयमिति। लोचनविषयभाजा हृदयाधिष्ठानं बाणाधिष्ठानकारणं पश्चाद्भावि। समकालत्वमपि पौर्वापर्यविपर्ययः। तत्रोदाहरणं स्फुटमिति न प्रदर्शितम्।

## मधुमती

उदाहरति—हृदयमिति। अधिष्ठितं अक्रान्तम्। चरमं पश्चात्।

युगपदुक्तौ यथा ममैव—

**चन्द्रेण दिशि पूर्वस्यां स्मरेण हृदि योषिताम्।**

**विलासेन तदङ्गेषु सममेव समुद्गतम्॥**

इति। अत्र चन्द्रोदयः स्मराविर्भावे, स च विलासोदये कारणमिति वस्तुस्थितिः। इह च तदुपयुक्ता शीघ्रकारिता प्रतीयते। न च—समुच्चयेनैव गतार्थता। तत्र क्रियादेः, अत्र तु कार्यकारणयोः यौगपद्यमिति भेदात्। इत्यतिशयोक्तिः।

## विस्तारिका

कार्यकारणयोरित्यादि। कार्यस्य पूर्वभावित्वम्, कारणस्य परभावित्वं यत्राभिधीयत इत्यर्थः।

अस्यालङ्कारताबीजमाह—कारणस्येत्यादि। शीघ्रकारिताप्रतिपादनायेत्यर्थः। कार्यस्य पूर्वमुक्तौ, न तु तत्समकालत्वाभिधाने।

हृदयमधिष्ठितमिति। मालविकाग्निमित्रनाटके श्लोकोऽयम्। बाणेनेत्येकवचनम्। कन्यकात्वेनैतादृशकामवशता, अत एवाधिष्ठितम्, न तु विद्धम्। मालत्या मालवराजपुत्र्याः। रमणीयवल्लभ सर्वरमणीवशीकरणक्षम।

अत्राग्निमित्रनृपतेर्दर्शनस्य झटिति हारकता प्रतीयते। अत्र सर्वत्रैवातिशयप्रतिपत्तयेऽन्यस्यान्यतादात्म्यप्रतिपादनमिति सामान्यलक्षणसमन्वयोऽनुसन्धेयः।

अत्र केचित् कार्यकारणयोः समकालत्वनिर्देशेऽपि पौर्वापर्यविपर्याय इति, तदप्यस्य निदानान्तरं ग्रन्थकृतानुक्तमप्यूह्यम्। यथा—

**अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः।**
**अयमायातः कालो हन्त हताः पथिकगेहिन्यः॥**

इत्यत्र वर्षाकालागमपथिकगृहिणीदलनयोः कार्यकारणद्वयोरपि उन्नतिकालनिर्देशः। तथा—

**सममेव समाक्रान्तं द्वयं द्विरदगामिना।**
**तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम्॥**

अत्र सिंहासनाक्रमणराजमण्डलवशीकरणयोः कार्यकारणयोः समकालत्वनिर्देशे इत्याहुः, तन्न अत्र कार्यकारणपौर्वापर्यविपर्ययस्य व्यङ्ग्यत्वात्। वाच्यस्यैव लक्ष्यत्वाद् व्यङ्ग्यस्यानलङ्कारत्वात्। तत्र तद्व्यवहारस्य भाक्तमित्युक्तत्वात्। अन्यथा सर्वत्रैवालङ्कारेषु व्यङ्ग्यतया भेदान्तराभिधानप्रसङ्गादिति विचारवात्यया दीपिका निर्वापितैव।

अन्ये तु सम्बन्धेऽसम्बन्धरूपमस्या भेदमाहुः, यथा—"अस्याः सर्गविधौ प्रजापतिरभूत्" इत्यत्र पुराणप्रजापतिनिर्माणे तदसम्बन्धप्रतिपादनात्। तदप्यशुद्धम्, पुराणप्रजापतिनिर्माणे 'कथम्'इत्यनेन तदन्यत्वावगमे प्रस्तुतान्यत्वेनैव गतार्थत्वात्। यथा—"सामा सामण्णपआवइणो रेह पिंअ ण होई" इत्यत्रेत्यलं कुदर्पणप्रतिबिम्बितावलोकनेन।

## सारबोधिनी

कार्यकारणयोरिति। कार्यस्य पूर्वभावित्वम् कारणस्य परभावित्वम् यत्राभिधीयते इत्यर्थः। अस्यालङ्कारताबीजमाह कारणस्येत्यादि। शीघ्रकारिताप्रतिपादनमित्यर्थः। हृदयमिति। अत्र नृपतेर्दर्शनस्य झटिति हारकता प्रतीयते। अत्र सर्वत्रैवातिशयप्रतिपत्तयेऽन्यस्यान्यतादात्म्यप्रतिपादनमिति सामान्यलक्षणसमन्वयोऽनुसन्धेयः। अत्र कार्यकारणयोः समकालनिर्देशेप्यभेदान्तरं यथा

**सममेव समाक्रान्तं द्वयं द्विरदगामिना।**
**तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम्॥ इति।**

तथा सम्बन्धेऽसम्बन्धप्रतिपादकरूपस्य भेदान्तरं यथा

"अस्याः सर्गविधौ प्रजापतिरभू"दित्यत्र सत्यपि पुराणप्रजापतिनिर्माणसम्बन्धे तदसम्बन्धप्रतिपादनात्।

### काव्यप्रदीप:

चतुर्थी यथा—

**'हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन।**
**चरमं रमणीवल्लभ लोचनविषयं त्वया भजता॥'**

### काव्यप्रकाशखण्डनम्

कारणस्य शीघ्रकारितां वक्तुं कार्यपूर्वोक्तौ समाकालोक्तौ च चतुर्थी। यथा—

हृदयमधिष्ठितमादौ मालव्याः कुसुमचापबाणेन। चरमं रमणीवल्लभलोचनविषयं त्वया नीतां॥

मालव्या मालवीनाम्न्याः नायिकायाः हृदयं कुसुमबाणेन कामेनादौ प्रथमतः अधिष्ठितमाश्रितम्। हे रमणीवल्लभ! त्वया चरमं पश्चादधिष्ठितम्। त्वया कीदृसेन? लोचनविषयं नेत्रपात्रतां भजता गच्छतेत्यर्थः। अत्र राजदर्शनिन हृदये मदनवेदनेति [पृ० ५०, २] तयोर्वैपरित्यवर्णनमिति। समानकालोक्तौ यथा—

'सममेव समाक्रान्तं द्वयं द्विरदगामिना'—इत्यादौ।

### आदर्शः

कार्यकारणयोरित्यादिकां चतुर्थीमतिशयोक्तिमाह—कारणस्येति। पूर्वमुक्तौ पूर्वोत्पन्नत्वेनोक्तौ। हृदयमित्यादि। अग्निमित्रं राजानं दृष्ट्वा मालवीनामराजपुत्र्या हृदयं सकामं जातम्, ततश्च तया भाव्यमानाय तस्मै दूत्या उक्तिरियम्। लोचनविषयं भजता त्वया तस्या हृदयं चरममधिष्ठितम् इत्यन्वयः। अत्र दृष्टान्तस्य राज्ञो मालवीहृदयावस्थानं कारणं तत्कार्यस्य तस्या हृदये कामाधिष्ठानस्य प्रागुत्पन्नत्वमुक्तम्, तच्च बाधितमप्याहार्य-प्रतीतिविषयम्, कारणस्य दीर्घकारिताव्यञ्जकम्। अत्र चक्रवर्ती—समकालोत्पन्नत्वेऽपि पौर्वापर्यविपर्ययादमलङ्कारः। यथा—

**सममेव समाक्रान्तं द्वयं द्विरदगामिना।**
**तेन सिंहासनं पैत्रं मण्डलञ्च महीक्षिताम्।**

इत्यत्रेत्याह। तन्न, समकालोत्पन्नत्वे 'धुनोति चासिं तनुते च कीर्त्तिमि'त्यादाविव समुच्चयलङ्कारस्यैव वक्ष्यमाणत्वात्।

### सुधासागरः

चतुर्थी यथा—हृदयमिति।

मालतीमाधवनाटके माधवं प्रत्युक्तिः। हे रमणीवल्लभ कामिनीकान्त कुसुमचापस्य कन्दर्पस्य बाणेन मालत्याः हृदयमन्तः करणमादौ प्रथममधिष्ठितम्, लोचनविषयं नेत्रगोचरतां भजता त्वया चरमं पश्चादधिष्ठितमि-त्यर्थः।

(सू० १५४) प्रतिवस्तूपमा तु सा ।। १०१ ।।

सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।

साधारणो धर्मः, उपमेयवाक्ये, उपमानवाक्ये च कथितपदस्य दुष्टतयाभिहितत्वात् शब्दभेदेन यत् उपादीयते सा वस्तुनो वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा । यथा

देवीभावं गमिता परिवारपदं कथं भजत्वेषा ।

न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ।। ४५३ ।।

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।

लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ।। ४५४ ।।

इत्यादिका मालाप्रतिवस्तूपमा द्रष्टव्या । एवमन्यत्राप्यनुसर्तव्यम् ।।

---

सङ्केतः

प्रतीति । वस्तुशब्दस्य वाक्यार्थवाचित्वे 'प्रतिवाक्यार्थ उपमासाम्यम्' इति अन्वर्थताश्रवणात्, केवलं काव्यसमयात् पृथङ्निर्देशः ।

अयं भावः—सामान्यधर्मस्य इवाद्यनुक्तौ सकृन्निर्देशे दीपकतुल्ययोगिते, असकृतन्निर्देशे शुद्धसामान्यरूपत्वे प्रतिवस्तूपमा । समान्यधर्मस्य बिम्बप्रतिबिम्बे तु दृष्टान्तः इति ।

देवीति । अत्र परिवारपदत्वं साधारणे धर्मः, 'परिभोगयोग्यं' इति पर्यायेण भिन्नशब्देनोक्तः । परिवारपदत्वपरिभोगयोग्यत्वयोः एकार्थत्वात् ।

यदि दहतीति । अत्र प्रकृतिरेव सतां इतीदमेकं प्रकृतम् । शेषं तु त्रयं उपमानभूतं अप्राकरणिकम् ।

एवमिति । यथा—

हरवन्न विषमदृष्टिः

हरिवन्न विभो ! विधूतविततवृषः ।

रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि ।।

इत्यादौ व्यतिरेके व्यतिरेकमाला । अत्र च एकस्य बाहुभ्यो भेदेनोक्तिः । अस्यां इवाद्यभावेऽपि प्राकरणिकत्वालोचनया औपम्यावगतिः । इति प्रतिवस्तूपमा ।

### बालचित्तानुरञ्जनी

[कथितपदस्य] दुष्टतयाभिहितत्वात् शब्दाभेदेन साधारणो धर्मः उपमेयवाक्ये यदुपादीयते वस्तुनो वाक्यार्थस्य उपमानत्वात् सा प्रतिवस्तूपमेयत्यन्वयः। उदाहरति यथेति। देवीभावं गमिता देवतात्वं प्रापिता एषा परिवारपदं कुटम्बकत्वं कथं भजति ? खलु यतः देवतारूपाङ्कितं रत्नं परिभोगयोग्यं न भवति। देवीभावमिति। देवी कृताभिषेका परिवारः साधारणकलत्रम्। पदं स्थानम्। शब्दो वा परिभोगो भूषाद्यर्थमुपादानम्। दैवतेति सुवर्णादिघटितप्रतिमेत्यर्थः। अत्र कथमित्यनेन परिवारपदभजनस्यानौचित्यं प्रत्याय्यते। न खल्वित्यनेन च परिभोगस्येति एवमस्यैवानौचित्यरूपसामान्यस्य शब्दभेदेन द्विरुपादानम्। यदीति। स्वाभाविवत्वान्नाद्भतम्। एवं किमित्यादिष्वपि। विवादशून्यत्वं सन्तोषप्रकृतिः स्वभावः।

### काव्यादर्शः

प्रतिवस्तूपमा त्विति। कथितपदं पुनरुक्तदोष इति पर्यायान्तरेण साधारणो यर्मो यदुपमेयोपमानवाक्यद्वये पृथग् निर्दिश्यते सा प्रतिवस्तूपमालंकारः। वस्तु प्रतिवस्तुभावेन तु सामान्य धर्मस्य सकृन्निर्देशे दीपक—तुल्ययोगिते। वस्तुशब्दस्य वाक्यार्थवाचित्वे प्रतिवस्तु प्रतिवाक्यार्थमुपमासाम्यं यस्यामिति अन्वर्थ इत्याह—वस्तुन इति।

'देवी' इति। अत्र परिवारपदत्वं साधारणो धर्म उपमेयवाक्ये उपमान वाक्ये परिभोगयोग्यपदेन पृथग्निर्दिष्टः, परिवारपदत्वपरिभोगयोग्यत्वयोरेकार्थत्वात्। न केवलमियं साधर्म्येण यावद्वैधर्म्येणा, यथा—

> **चकोरा एव चतुराश्चन्द्रिकाचामकर्मणि।**
> **विनावन्तीन् न निपुणाः सुदृशो रतनर्मणि॥**

इवाद्यनुपादानेऽपि च प्राकरणिकत्वाप्राकरणिकत्वपर्यालोचनयात्र उपमानोपमेयतावगतिः।

'यदि दहति' इति। अत्र 'प्रकृतिरेव सताम्' इति प्राकरणिकं, शेषं तु त्रयमप्राकरणिकम्।

### विवेकः

पूर्वरूपवैपरीत्यमेव वाक्यार्थगतमलङ्कारं लक्षयति प्रतिवस्तूपमेति। वाक्यार्थगतत्वे नेवाद्युपादाने साधारणधर्मस्य सकृन्निर्देशो वाक्यार्थोपमा, अतस्तत्रैक एव वाक्यार्थः। तु नैवमिति ततोऽतिभेदात् 'तु' शब्दोपनिबन्धः। अस्याञ्च द्योतकस्येवादेर- विषभावतया दीपकादिवदुपमा प्रतीयमाना। अलङ्कारान्तप्रतीतावपि यत्र वाच्यस्यार्थस्य चारुत्वं प्रतीयमानार्थप्रतिपादनोन्मुखत्वेन प्रकाशते स न ध्वनेर्विषयः, प्रतीयमानस्य वाच्यानुगामित्यादित्युक्तमेव। साधारणधर्मस्तत्र 'नैकं पदं द्विः प्रयोज्यं प्रायणे'ति (का. अ. सू. वृ. ५/१/१) केवलं वाक्यसमयस्थितेर्वाचकमेदेनोपमानोपमेययोरपि समीपे निबध्यते। सामान्यस्यैकस्य वाक्यद्वये द्विरवस्थितिः सकृदनिर्देश इत्यर्थः नात्र द्वौ वाक्यार्थौ। उपमानोपमेयञ्चत्वा च प्रायः प्राकरणिकाप्राकरणिकत्वाभ्यामेव। देवीत्यादि—[देवीभावं] दिव्यत्वं साधारणो धर्म उपमानवाक्ये दैवतरूपाङ्कितपदेन निर्दिष्टः। उपमा च स्फुटैव यथा वाचिकोपमानाभावे—चकोर्य एव चतुराश्चन्द्रिकाऽऽचामकर्मणिः। आवन्त्य एव निपुणाः सुदृशो रतनर्मणि॥ (बा. रा. १०/८२)। एवमन्यत्रेति यथा व्यतिरेके—हरवन्न विषमदृष्टिर्हरिवन्न विधूतविततवृषः। रविवन्न चातिदुःसहकरतापितभूः

कदाचिदसि ॥ इति । अत्र ह्येकस्यैव बहुभ्यो व्यतिरेकमाला, व्यतिरेकतः प्रतिवस्तूपमावदेकत्र प्रतीतस्यापरत्र प्रत्ययः कुत्रापीति ।

## दीपिका

वस्तुनो वाक्यार्थस्येति प्रतिवस्तूपमानामनिरुक्तिपरम् । देवीभावमित्यादेरेवंविधस्थलेऽपि परिवारत्व-परिभोगयोरर्थविप्रकर्षाभावात् प्रतिवस्तूपमैवेति संशयनिरासे तात्पर्यमित्येकोऽयं भवतु न खल्वित्यनयोः समाना-र्थतया सङ्गतिरिति तु साम्प्रदायिकाः ।

स्फुटोदाहृतिर्यथा मम—

"मदललितहरिणनयनानयनोपनिषत्सु नागरा कुशलाः ।
गीरसवहाः सुकृतिनो नारायणवन्दानिपुणाः ॥"

अत्र कुशलत्वनिपुणत्वे शब्दमात्रेणैव भिन्ने । किमद्भुतं किं ततः सदैव प्रकृतिरेवेत्यमीभिः सर्वैरेव तत्तद्धर्माभावायोगव्यवच्छेद एव प्रत्याय्यस्यैकतया साधारण्यमिति ।

एवमिति । अन्यत्रापीति ।

"इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा ।

कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥"

इत्यादावप्रस्तुतप्रशंसादौ वृत्ते—

"उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया प्रीत्या समास्फालितम् ।

वैदेहीमनसा समञ्च सहसा कृष्टं ततो भार्गव—
प्रौढाहङ्कृतिकन्दलेन च समं तद्भग्नमैशं धनुः ॥"

इत्यादौ सहोक्तिप्रभृतौ वर्तिष्यमाणे मालारूपत्वमनुसर्तव्यम् ।

## दर्पणः

प्रतिवस्तूपमालङ्कारः । प्रतिवस्तूपमा नाम निरुक्तिमाह वस्तुन इति । देवीभावमित्यादेः "कथं भजतु" नखल्लित्ययोः [नखलु] इत्यनयोः

कथंचित् सामानानुतया प्रतिवस्तूपमोदाहरण सकृतिप्राच्याः [प्रतिवस्तूपमोदाहरणमिति प्राञ्च्याः] स्फुटमुदाहरणम्—

गङ्गवंशनृपात्रवरणतनुविचक्षणाः ।
कापिञ्जना एव परं कवितापाककोविदाः ॥

अत्र विचक्षणत्वे कोविदद्वयोरेकानुतैव [र्थतैव] ।

## साहित्यचूडामणिः

प्रतिवस्तूपमेति । तु शब्देन दृष्टान्तादेरस्या वैलक्षण्यमवश्यापेक्षणीयमित्युपक्षिप्यते । द्विः द्विवारम् असकृत् स्थितिर्वृत्तिः निर्देश इत्यर्थः सामान्यधर्मस्येवाद्युपादाने सकृन्निर्देशे उपमा, वस्तुप्रतिवस्तुभावादसकृन्निर्देशेऽप्युपमैव इवाद्यनुपादाने सकृन्निनिर्देशे दीपकतुल्ययोगिते, असकृन्निर्देशे तु शुद्धसामान्यरूपत्वं बिम्बप्रतिबिम्बभावो वेति द्वयी प्रक्रिया । तत्राद्या प्रतिवस्तूपमा द्वितीया दृष्टान्तत्वेन दर्शयिष्यते ।

कथितपदस्येति । नैकं पदं द्विः प्रयोज्यमिति काव्यसमयमूलस्य दोषस्य हेयत्वात् । वस्तुन इति । वस्तुशब्दस्य वाक्यार्थवाचित्वात् प्रतिवाक्यार्थमुपमा साम्यमित्यन्वर्थाश्रयणात् । यत्सूत्रं—वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमे (अ० सू० २६)ति ।

देवीति । अत्र परिजनशब्दधारणानौचित्यं परिभोगयोग्यताभावश्चेत्येकमेव सामान्यं वाक्यद्वये पृथङ् निर्दिश्यते ।

मालालक्षणमस्याः शिल्पं दर्शयति—यदीति । नवीकारावसरे विवेचितचरमेतत् ।

एवमिति । अन्यत्रापि मालवैचित्र्यमुन्नेयम् ।

## सम्प्रदायप्रकाशिनी

प्रतिवस्तूपमा त्विति । एकस्य साधारणधर्मस्य वाक्यद्वये द्विरवस्थानं प्रतिवस्तुनः प्रतिवाक्यस्योपमेति प्रतिवस्तूपमा ।

व्याचष्टे—साधारण इत्यादि । नन्वेकस्य द्विःस्थितौ पौनरुक्त्यमित्यत आह—कथितपदस्येति ।

देवीभावमिति । देवीभावः पट्टमहिषीभावः तं गमिता परिवारपदं कथं भजति । न दैवताकारचिह्नितं रत्नं भूषणतया परिभोगमर्हति । अत्र माहात्म्यं साधारणो धर्मः देवीभावमिति दैवतरूपाङ्कितमिति च शब्दभेदेन स्थितः ।

मालात्वेनाप्युदाहरति—यदि दहतीति । अत्र स्वभाव्यं साधारणो धर्मः उपमानवाक्येषु किमद्भुतं किं ततः सदैवेति, उपमेयवाक्ये तु प्रकृतिरेवेत्युक्तः ।

एवं शृङ्खलापीत्याह—एवमन्यत्रापीति ।

## मधुमती

सामान्यस्येति । एकस्य सामान्यस्य वाक्यद्वये स्थितिः इत्यन्वयः । द्विरभिधाने हेतुमाह—कथितेति । पदव्युत्पत्तिमाह—सा वस्तुन इति । न च-निदर्शनशङ्कासङ्करः । तत्र साधारणधर्मवत्त्वोपपादनात्; तत्र असम्भवमुखेन, अत्र अनौचित्यमुखेन अभिधानाच्च । उक्तेर्भेदादलङ्कारभेदस्य व्यवस्थाप्यत्वात् ।

देवीभावमिति । अत्र परिवारभाजनतानौचित्यं उपभोगनौचित्यं चेत्येक एव समानोऽर्थः उपमेयवाक्ये 'परिवारपदं कथं भजत्येषा' इत्यनया उक्त्या उपमानवाक्ये 'न खलु परिभोगयोग्यम्' इत्यनया उक्त्या च प्रकारद्वयेनाभिहितः इति प्रतिवस्तूपमात्वमस्य ।

यदि दहतीति । अत्र—प्रकृतिरेव सतामविषादिता इत्युपमेयवाक्यम्, सतामविषादित्वस्य उपमेयत्वात् । स्वाभाविकत्वं च समानो धर्मः प्रकृतिपदेनोपात्तः । अनलदहन-अद्रिगौरवमहोदधिसलिललवणत्वादीनि उपमाना-नीति तत्तद्वाक्यानि उपमानवाक्यानि । किमद्भुतम्, किं ततः, सदैव इत्याद्युक्तिभिः स्वाभाविकत्वरूपसमानधर्मो-पादानात्, एकत्रैव बहूपादानाञ्च मालाप्रतिवस्तूपमात्वम् ।

एवमिति । अन्यत्रापि विरुद्धधर्मसम्बन्धवर्णनस्थलेऽपि । यथा—

> **"मानुषीषु कथ वा स्यात् अस्य रूपस्य सम्भवः ? ।**
> **न प्रभातरलं ज्योतिः उदेति वसुधातलात् ॥"**

इत्यादावित्यर्थः । इति प्रतिवस्तूपमा ।

## विस्तारिका

प्रतिवस्तूपमेत्यादि । वस्तु वाक्यार्थः वस्तुनि वस्तुनि इति वीप्सायामव्ययीभावः । वाक्यार्थयोरुपमानो-पमेयभाव इत्यर्थः ।

दृष्टान्तं व्यावर्तयति—सामान्यस्यैकस्येति । तत्र समानधर्मस्य प्रतिबिम्बानुबिम्बभावेन निर्देशेनैकत्ववि-रहात् । अर्थान्तरन्यासे तु समर्थ्यसमर्थकत्वं विवक्षितम् । अत्र पुनरुपमानोपमेयभाव इति ततोऽस्या भेदः । अत एवोपमाघटियोऽयम् ।

देवीभावमित्यादि । देवी कृताभिषेका । परिवारः साधारणकलत्रम् । पदं स्थानं शब्दो वा । परिभोगो भूषाद्यर्थमुपादनम् । दैवतेत्यादि । सुवर्णादिघटितप्रतिमेत्यर्थः ।

अत्र कथमित्यनेन परिवारपदभजनस्यानौचित्यम् । न खल्वित्यनेन च परिभोगस्येत्येकस्यैवानौचित्यरू-पसामान्यस्य शब्दभेदेन द्विरुपादानम् ।

यदीत्यादि । स्वाभाविकत्वान्नाद्भुतम् । एवं किं तत इत्यादिष्वपि विषादशून्यत्वम् । सतां प्रकृतिः स्वभावः ।

अत्र स्वाभाविकत्वं धर्मः सर्वत्रैव वाक्येषूपात्तः ।

एवमन्यत्रापीति ।

> **इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव**
> **प्रम्लानरुणिमेव विद्रुमदलं श्यामेव हेमप्रभा ।**

**कार्कश्यं कलयापि कोकिलवधूकण्ठेष्विव प्रस्तुतं**
**सीतायाः पुरतश्च हन्त शिखानां बर्हाः सगर्हा इव॥**

इत्यत्र सीतावदनादिसौन्दर्याक्षेपकाप्रस्तुतप्रशंसाविषयोऽस्या मालारूपकतायाः। सीतावदनाद्यपेक्षया निकृष्टतामापन्नानां चन्द्रादीनां प्रतिपादकेषु वाक्येष्वरुचित्वमेको धर्मोऽञ्जनलिप्तजडितेत्यादिशब्दैरुपात्त इत्यस्या मालारूपता।

एवम्—

**उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं**
**भूपानां जनकस्य संशयधिया साकं समास्फालितम्।**
**वैदेहीमनसा समं च सहसा कृष्टं ततो भार्गव-**
**प्रौढाहङ्कृतिकन्दलेन च समं तद्भग्नमैशं धनुः॥**

इत्यत्र सहोक्तिविषयेऽप्येषा, सहेत्यस्यैकस्य प्रतिवाक्यं सहसार्द्धादिशब्दैरुपादानादिति।

**सारबोधिनी**

प्रतिवस्तूपमेति। दृन्तं व्यावर्तयति सामान्यरूपस्येति। तत्र समानधर्मस्य बिम्बप्रतिबिम्बभावेन निर्देशेनैकत्वविरहात्। अर्थान्तरन्यासे तु सामर्थ्यसमर्थकत्वं विवक्षतम्। अत्र तु उपमानोपमेयभाव इति ततोऽस्य भेदः। अत एवोपमाघटितेयम्।

**काव्यप्रदीपः**

**प्रतिवस्तूपमा तु सा॥ १५॥**

**सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः।**

एकस्य सामान्यस्य साधारणधर्मस्य वाक्यद्वये उपमानोपमेयवाक्ययोर्यत्र द्विरवस्थितिः। अर्थाच्छब्दभेदेन। अभिन्नपदस्य दुष्टत्वात्। सा प्रतिवस्तूपमा। वस्तुनो वाक्यार्थस्योपमानत्वात्। अत्र 'द्वि' 'द्वये' इत्यनेकोपलक्षके। मालानुरोधात्। सा च द्विधा—अमालारूपा मालारूपा च।

तत्राद्या यथा—

**'देवीभावं गमिता परिवारपदं कथं भजत्येषा।**
**न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम्॥'**

अत्र परिवारपदत्वपरिभोगयोग्यत्वयोरनर्थान्तरत्वादुदाहरणयोग्यत्वमित्येके। 'कथं भजति' 'न खलु' इत्यनयोरेकार्थतया तथात्वमित्यपरे।

अन्त्या यथा—

'यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः।
लवणम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥'

अत्र किमद्भुतमित्यादिभिरद्भुताभावस्य वाक्यचतुष्टयेऽप्युपादानान्मालात्वम्। चतुर्थवाक्यं चोपमेयवाचि।

## काव्यप्रकाशखण्डनम्

प्रतिवस्तूपमा तु सा (का. १०१, च. पा.)

सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ॥

(का. १०२, पू०)

सामान्यस्य साधारणधर्मस्य वाक्यद्वये उपमानवाक्ये उपमेयवाक्ये च। यथा—

देवीभावं गमिता परिवारपदं कथं भजत्येषा।
न खलु परिभोगयोग्यं दैवतारूपाङ्कितं रत्नम् ॥

एषा देवीभावं कृताभिषेकस्त्रीत्वं प्रापिता परिजनपदवाच्यतां कथं भजति? नेत्यर्थः। खलु निश्चितं दैवतरूपेण देवतामूर्त्या अङ्कितं चिन्हितं रत्नं न परिभोगयोग्यं हस्ताद्यलङ्करणयोग्यमित्यर्थः। अत्र कथमित्यनेन न खलु इत्यनेन च अनौचित्यं प्रत्याय्ते इत्येकस्यैव अनौचित्यरूपसामान्यस्य द्विरुपादानम्। 'यदि दहत्यनिल' इत्यत्र मालारूपा चैषा बोध्या।

## आदर्शः

प्रतिवस्तूपमालङ्कारमाह—प्रतिवस्त्विति। वाक्यद्वये इत्यस्यार्थमाह—उपमानेति। द्विविधां स्थितिं व्याचष्टे—शब्दभेदेनेति। शब्दभेदेनोपादानस्यैव बीजमाह—कथितपदस्येति। संज्ञव्युत्पत्तिमाह—सा वस्तुन इति।

देवीभावमिति। सैरिन्ध्रीभावं प्राप्स्यन्तीं द्रौपदीं शोचतां पाण्डवानामुक्तिरियम्।परिवारपदं दासीपदम्। दैवतरूपं देवताप्रतिमा तत्राङ्कितं तत्र जडितम्(?) अत्र देवीरत्नयोरुपमेयोपमानयोः परोपभोगायोग्यत्वषर्यवसन्नं परिवारपदभजनायोग्यत्वमुपभोगयोग्यत्वानौचित्यञ्च कथं-नखलु-पदाभ्यामुक्तम्। अनवीकृतत्वपरिहारेण नवीकृतत्वस्योदाहरणं यद्दोषोल्लासे उक्तम्, तदेव मालाप्रतिवस्तूपमोदाहरणं घटते इत्याह—यदि दहतीति। अत्र स्वाभाविकत्वं सामान्यं किमद्भतमित्यादिपदचतुष्टयस्य पर्यवसितार्थः।

## सुधासागरः

सामान्यमित्यादि। अयमर्थः—एकस्य सामान्यस्य साधारणधर्मस्य वाक्यद्वये उपमानोपमेयवाक्ययोर्यत्र द्विरवस्थितिः अर्थाच्छब्दभेदेन, अभिन्नस्य पदस्य दुष्टत्वात्, सा प्रतिवस्तूपमा। वस्तुनो वाक्यार्थस्योपमानत्वादिति। अत्र द्विः द्वये इत्यनेकोपलक्षके मालानुरोधात्।

सा च द्विधा—अमालारूपा मालारूपा च । तत्राद्या यथा—देवीति । आर्या । लक्षणमुक्तम् । महिषी-संख्याः राजानं प्रतीयमुक्तिः । हे राजन् देवीभावं गमिता कृताभिषेकैषा राज्ञी परिवारस्य साधारणकलत्रस्य पदं स्थानं कथं भजतु अनौचित्यादिति भावः । न खलु दैवतरूपाङ्कितम् सुवर्णादिघटितोत्कृष्टदेवताप्रतिमारूपं रत्नं श्रेष्ठं वस्तु परिभोगाय भूषणाद्यर्थमुपादनाय योग्यं भवतीत्यथः । भजत्वित्यत्र भजतीति क्वचित्पाठः सोऽपि सङ्गत एव ।

अत्र परिवारपदत्वपरिभोगयोग्यत्वयोरनर्थान्तरत्वादुदाहरणत्वमिति केचिदाहुः । वस्तुतस्तु 'कथं भजतु' इत्यनेन परिवारपदभजनस्यानौचित्यं प्रत्याय्यते, 'न खलु' इत्यनेन च परिभोगस्यैकस्यैवानौचित्यरूपसामान्यस्य शब्दभेदेन द्विरुपादानमित्युदाहरणत्वम् । नन्वत्र पूर्वस्मात्किमाधिक्यमिति चेत्, 'कथं भजतु' 'न खलु' इत्यनयोरे-कार्थताप्रतीतेः स्फुटत्वमित्यवेहि । अन्त्या यथा—यदीति ।

यदि अनलोऽग्निर्दहति, अत्राग्नेर्दाहकत्वे किमद्भुतं किमाश्चर्यम् । यदि चाद्रिषु गौरवं किं ततः । तत्रापि नाश्चर्यम् । महोदधेरम्बु जलं सदैव लवणं क्षारमत्रापि नाश्चर्यम् । सतामविषादिता प्रकृतिरेव नाश्चर्यम् । उक्तानां तत्तद्धर्माणां स्वाभाविकत्वान्न किञ्चिदाश्चर्यमिति भावः ।

अत्र किमद्भुतमित्यादिभिरद्भुताभावस्य वाक्यचतुष्टयेऽप्युपादानान्मालात्वम् । चतुर्थवाक्यं चोपमेय-वाचि, सतामविषादित्वस्य वर्णनीयत्वादिति द्रष्टव्यम् । अत एव रविभट्टाचार्यैर्व्याख्यातम्—अत्र प्रकृतिरेव सतामविषादितेत्युपमेयवाक्यम्, सतामविषादित्वस्योपमेयत्वात् । स्वाभाविकत्वं समानो धर्मः प्रकृतिपदेनोपात्तः, अनलदहनाद्रिगौरवमहोदधिलवणादीन्युपमानानीति तत्तद्वाक्यमुपमानवाक्यम् । 'किमद्भुतं' 'किं ततः' 'सदैव' इत्याद्युक्तिभिः स्वाभाविकत्वरूपसमानधर्मोपादानादेकत्रैव बहूपादानान्मालाप्रतिवस्तूपमात्विमिति ।

पुनर्ग्रहणं पूर्वतो भेदप्रतिपादनाय । एतेषामुपमानोपमेयसाधारणधर्माणाम् । सर्वेषामित्यनेन विकल्पपरि-हारेण समुच्चयसूचनम् । प्रतिबिम्बनं प्रतिबिम्बभावः । दृष्टोऽन्तो निश्चय उपमानिर्वाहकोऽत्रेति व्युत्पत्तेः । यत्र दृष्टान्तवाक्येन दार्ष्टान्तिकवाक्यार्थनिश्चयस्य प्रामाण्यग्रहो भवति स दृष्टान्त इत्यर्थः । बिम्बप्रतिबिम्बभावश्च विशेषणयोर्विशेष्ययोश्च सादृश्यनिर्देशे भवति, न त्वेकस्य । अत एवोक्तमप्पय्यदीक्षितैः 'वस्तुतो भिन्नयोरप्युप-मानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभाव' इति । स चायं साधर्म्यवैधर्म्यरू-पाभ्यां द्विधा ।

(सू० १५५) दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १०२ ॥

एतेषां साधारणधर्मादीनाम् दृष्टोऽन्तः निश्चयो यत्र स दृष्टान्तः ।

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥ ४५५ ॥

एष साधर्म्येण

---

### सङ्केतः

दृष्टान्त इति । अत्र पुनः शब्दः पूर्वस्माद्विशेषकः । विशेषश्च बिम्बप्रतिबिम्बभाव एव । सर्वेषामिति । न तु प्रतिवस्तूपमायामिव साधारणधर्मस्यैव द्विः प्रयोगः, किन्तु उपमेयादेरपि । निश्चयः यत्र इति भणनात्—यत्र विशेषण विशेषः बिम्बप्रतिबिम्बभावे सति समर्थ्यते सः दृष्टान्तः । निश्चयस्य विशेषादेव सम्भवात् । विशेषरूपतयैव दृष्टान्ते बिम्बप्रतिबिम्बभावयोगात् । यत्र तु विशेषस्य सामान्येन समर्थनं तत्र अर्थान्तरन्यासः ॥

त्वयीति । यथा कुमुदिन्याः चन्द्रालोके चन्द्रगुणपक्षपातित्वेन कुमुदं विकसति, तथा त्वद्दर्शने त्वद्गुणपक्षपातित्वेन तस्याः मनः कामाग्निज्वलितमुपशाम्यति इति सर्वप्रतिबिम्बनम् ॥

### बालचित्तानुरञ्जनी

दृष्टान्तरालङ्कारं लक्षयति दृष्टान्त इति । साधारणधर्मादीनामित्यत्रादिशब्देनोपमानोपमेययोग्रहणम् । उदाहरति त्वयीति । मनोभवज्वलितं तस्य मनः त्वयि दृष्ट एव निर्वाति निर्वृतं भवति । हि यतः कुमुद्वत्याः कुमुदं हिमांशोरालोके विकसति । अत्र निर्वाणनिर्वाणस्य विकाशात्मना प्रतिबिम्बनम् । न केवलमेष साधर्म्येणैव यावद्वैधर्म्येणापीत्याह वैधर्म्येणेति । उदाहरति तवाहव इति ।

### काव्यादर्शः

एवमिति । यथा व्यतिरेके । तत्र ह्येकस्य बहुभ्यो व्यतिरेके मालाव्यतिरेकता, यथा—'हरवन्न विषमदृष्टिः' इति ।

तदेवमौपम्याश्रयेण शुद्धसामान्यस्य निर्देशे प्रतिवस्तूपमामुक्त्वा बिम्बप्रतिबिम्बभावे दृष्टान्माह—दृष्टान्त इति । यादृश एवार्थविशेष उपमेयवाक्ये तादृश एवोपमानवाक्येऽपि प्रतिबिम्बभावेन यत्र स्यात् पुनःशब्दः पूर्वस्माद् व्यतिरेके । व्यतिरेकश्च बिम्बप्रतिबिम्बभाव एव । साधारणधर्मादीनामितयादि शब्दाद् उपमेयानां च ।

ननु, अर्थान्तरन्यास एवायमित्याशङ्क्याह— दृष्टान्तो निश्चयो यत्रेति । निश्चयश्च विशेषादेव संभवतीति विशेषरूप एवासौ, तेन यत्र विशेषस्य विशेषण समर्थनं बिम्बप्रतिबिम्बभावे सति स दृष्टान्तः । दृष्टान्तस्य हि

विशेषरूपयैव प्रतिबिम्बभावः संगच्छते। यत्र तु विशेषस्य सामान्येन समर्थ्यसमर्थकभावः सोऽर्थान्तरन्यास इति विवेकः।

'त्वयि' इति। अत्र निर्वाणस्यापि साधारणधर्मस्य विकासः प्रतिबिम्बत्वेनोपात्तः। 'यथा चन्द्रालोके कुमुदिन्याश्चन्द्रगुणपक्षमपातित्वेन कुमुदं विकसति तथा त्वद्दर्शने त्वद्गुणपक्षपातित्वेन तस्या मनः कामाग्निज्वलितमुपशाम्यति। यथा वा—

**अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता।**
**मापातालनिमग्नपीवरवपुर्जानाति मन्थाचलः।**

**दैवीं वाचमुपासते हि बहवः सारं तु सारस्वतं**
**जानीते नितरामसौ गुरुकुलश्लिष्टो मुरारिः कविः॥**

—अत्र यद्यपि ज्ञानाख्य एको धर्मो निर्दिष्टस्तथापि नैतन्निबन्धनमौम्यं विवक्षितम्। यन्निबन्धनं च विवक्षितं तत्र अब्धिलङ्घनादौ अस्येव दिव्यवागुपासनादिना प्रतिबिम्बनम्। एषोऽपि साधर्म्येण।

### विवेकः

तदन्तरमाह दृष्टान्त इति—लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति यदनुमानाङ्गं तस्याभिधानं नालङ्कारो विच्छित्तिविशेषस्यानिष्यमाणत्वात्। एतेषामिति—साधारणधर्मोपमानोपमेयानाम्। साधारणधर्मादीनां प्रतिबिम्बितत्वेन नियतनिष्ठतया कथं साधारणधर्मतेति चेन्न, वस्तुतो हि तेषां धर्माणमभेद इति साधारणता। शब्दान्तरेण प्रतिपादितत्वान्न प्रतिबिम्बनमिति नास्ति कश्चिद्विशेषः। अत्र यद्यपि दृष्टान्तेन दार्ष्टान्तिकं समर्थ्यते तथापि बिम्बप्रतिबिम्बभावेनोपन्यासेन तु हेतुकथनमित्यस्मात् पृथक्कथनप्रस्थान एवार्थान्तरन्यासः। अयञ्च साधर्म्यवैधर्म्याभ्यां द्विधेति यथाक्रममुदाहरति—त्वयि दृष्ट एवेत्यादि। अत्र दयितदर्शनप्रभवस्य तस्या मनोनिर्वाणस्य प्राकरणिकस्य हिमांशुदर्शनतः कुमुद्वत्याः कुमुदविकाशो विस्पष्टत्वेन प्रतिबिम्बतया निबद्धः।

### दीपिका

प्रतिबिम्बनं बिम्बप्रतिबिम्बभावनिर्देशः। दृष्टः साधितः। निश्चय उपमानिर्वाहः।

### दर्पणः

दृष्टान्तालङ्कारः। दृष्टान्तः प्रतिबिम्बनं बिम्बप्रतिविस्वभावेन [बिम्बप्रतिबिम्बभावेन] निर्देशो, न तु प्रतिवस्तूपमावत् साधारणधर्मस्यैकरूपता दृष्टो ज्ञातः सदृशवस्तुप्रकाशनेन प्रकृतार्थस्यासंदिशता साहसकर्मणा शर्म मुखं यस्येति विग्रहः। विशवावतां [विशरारुणां] व्यूहभंगेन विक्षिप्ततताम्।

### साहित्यचूडामणिः

दृष्टान्त इति। सर्वेषामिति उपमानोपमेययोरिव सामान्यस्यापि प्रतिबिम्बनम्। यत्सूत्रं—**तस्यापि बिम्ब-प्रतिबिम्बतया निर्देशे दृष्टान्त** (अलंकारसू० २७) इति। तच्छब्देन साधर्म्यपरामर्शः।

आदिग्रहणादुपमानोपमेययोः। दृष्ट इत्यादिना निरुक्तिः। निश्चयदर्शनं प्रतिबिम्बयुक्त्या। यथाहुः—

**इष्टस्यार्थस्य विस्पष्टप्रतिबिम्बनिदर्शनम्।**
**यथेवादिपदैः शून्यं बुधैर्दृष्टान्त उच्यते॥ इति।**

विस्पष्टपदादप्रस्तुतप्रशंसायाः प्रतिक्षेपः। यथेवादीत्यादिना प्रतिवस्तूपमायाश्च।

अत्र नायिकानायकयोरिव हिमांशुकुमुद्वत्योरिव मनः—कुमुदयोरिव निर्वाणस्यापि विकासात्मना प्रतिबिम्बनम्।

## सम्प्रदायप्रकाशिनी

दृष्टान्त इति। एतेषां साधारणधर्मोपमेयोपमानानां परस्परस्य प्रतिबिम्बितत्वेन प्रतीतिः।

लक्ष्यपदं निर्वक्ति—दृष्टोऽन्त इत्यादि।

त्वयि दृष्ट एवेति। अत्र नायकयोर्हिमांशुकुमुद्वत्योश्च, मनसः कुमुदस्य च, निर्वाणस्य विकासस्य च मिथः प्रतिबिम्बनम्।

## मधुमती

दृष्टान्तः इति। साधारणधर्मादीनां इत्यादिपदेन उपमानोपमेययोः परिग्रहः। पदव्युत्पत्तिमाह—दृष्ट इति। तथाच उपमानोपमेयसाधारण धर्मनिश्चयस्थानत्वं दृष्टान्तलक्षणम्। न च प्रतिवस्तूपमासङ्करः। तत्र अनौचित्यमुखेनाभिधानात्। किञ्च—तत्र उत्प्रेक्षामुखेनाभिधानात् अत्र निश्चयमुखेनाभिधानाञ्च। सामान्यविशेषभावञ्च न अर्थान्तरन्याससङ्करः।

## विस्तारिका

दृष्टान्त इत्यादि। पुनग्रहणं पूर्वतो भेदप्रतिपादनार्थम्। एतेषामुपमानोपमेयसमानधर्माणां बिम्बप्रतिबिम्बभावः सादृश्यम्, न त्वेकता। सर्वेषामित्यनेन विकल्पतापरिहारेण समुच्चयसूत्रणम्। दृष्टान्तपदयोगमाह—दृष्ट इत्यादि। लक्ष्ये विवेचयिष्यामः।

त्वयीत्यादि। दृष्ट एव दृष्टिमात्रेण तस्या मालविकाया आलोके प्रकाशे।

अत्र नृपतिचन्द्रयोर्नायिकाकुमुद्वत्योर्मनोभवध्वनितनिर्वाणप्रकाशयोश्च बिम्बप्रतिबिम्बभावेन निर्देशः। स च साम्यस्य गम्यतारूपः। नृपतिचन्द्रयोर्नायिकाकुमुद्वत्योर्विभक्तिलिङ्गपदेनौपम्यस्य शब्दानभिधायकत्वात्।

किञ्च, नृपतिदर्शनमनोभवज्वलितप्रशमयोः कार्यकारणभावस्य 'आलोके हि' इत्यादिवाक्यार्थसजातीयसहचारदर्शनेन निश्चयो गृहीतप्रामाण्यको भवतीति दृष्टान्तः। दृष्टो गृहीतप्रामाण्यको निश्चयो यत्र दार्ष्टान्तिकवाक्यार्थगोचरनिश्चयस्य दृष्टान्तवाक्येन प्रामाण्यनिश्चयो भवतीत्यर्थः।

## सारबोधिनी

दृष्टान्त इति । पुनरित्यस्य ग्रहणम् । पूर्वतो भेदप्रतिपादनाय एतेषामुपमानोपमेयसाधारणधर्माणां प्रतिबिम्बनं बिम्बप्रतिबिम्बभावः । स च विशेषणयोर्विशेष्ययोश्च सादृश्यनिर्देशेभवति न त्वेकस्य । यथा

**पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।**
**आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥**

सर्वेषामित्यत्र विकल्पपरिहारेण समुच्चयसूत्रणम् । दृष्टान्तपदप्रयोगमाह दृष्ट इति । दृष्टः गृहीतप्रामाण्यकः । यत्र दृष्टान्तवाक्येन दार्ष्टान्तिकवाक्यार्थनिश्चयस्य प्रामाण्यग्रहो भवतीत्यर्थः ।

## काव्यप्रदीपः

**दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १६ ॥**

एतेषामुपमानोपमेयसाधर्म्याणां सर्वेषां प्रतिबिम्बनं दृष्टान्तः । दृष्टोऽन्तो निश्चय उपमानिर्वाहकोऽत्रालंकार इति व्युत्पतेः । स च द्विधा—साधर्म्यवैधर्म्यरूपाभ्याम् । तत्र साधर्म्येण यथा—

**'त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्।**
**आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥'**

अत्र साधर्म्यस्यापि प्रतिबिम्ब एवेति प्रतिवस्तूपमाभेदः ।

## काव्यप्रकाशखण्डनम्

दृष्टान्तः पुनरेतेषां [सर्वेषां] प्रतिबिम्बनम् ॥ (का. १०२, उ०) एतेषां साधारणधर्मादीनां प्रतिबिम्बनं विशिष्टोपमा । यथा 'दर्प्पान्धगन्धगजकुम्भ' इति । दृष्टो निश्चयो यत्रदृष्टान्तः । गृहीतप्रामाण्यकः । यत्र दृष्टान्तवाक्येन दार्ष्टान्तिकवाक्यार्थनिश्चयस्य प्रामाण्यग्रहो भवतीत्यर्थः । यथा—

**त्वयि दृष्ट एव तस्या निवृत्ति(निर्वाति) मनो मनोभवज्वलितम्।**
**आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः ॥**

## आदर्शः

दृष्टान्तलङ्कारमाह—दृष्टान्तः पुनरिति । 'प्रतिबिम्बनं' प्रणिधानेनैव गम्यत्वम् । साधारणधर्मादीनमिति । आदिपदादुपमेयोपमानतापरिग्रहः । 'निश्चयः' उपमेयोपमानयोर्द्वयोः, स च प्रणिधानेनैवेति बोध्यम् ।

त्वयीति । नायके दूत्या उक्तिरियम् । मनोभवज्वलितं तस्या मनस्त्वयि दृष्ट एव निर्वाति ज्वालाशून्यं भवति । तत्र दृष्टान्तमाह—आलोके हीति । हिमांशोरालोके दर्शने कुमुद्वत्याः कुमुदं हि विकसति । अत्र निर्वाण-विकासाभ्याम् अभावभावरूपाभ्यां स्फीतत्वं सामान्यं प्रणिधानगम्यम् । तादृशद्वशाच्च मनः कुमुदयोर्नायिकाकुमुद्वत्यो राजहिमांश्वोश्च उपमानोपमेयभावः प्रणिधानगम्यः। । 'देवीभावमि'त्यादौ त्वनौचित्यं सामान्यं

कथं-नखलु-पदाभ्यां झटित्येव प्रतीयते न तु भावाभावपदाभ्याम् इतीषद्भेदेनालङ्कारद्वयमिदम् । एष साधर्म्येणेति । एष दर्शित'स्त्वयि दृष्ट एवं'त्यादौ दृष्टान्तलङ्कारः साधर्म्येमे दृष्टान्तविकासलब्धस्फीतत्वेन ।

## सुधासागरः

तत्र साधर्म्येण यथा—त्वयीति । आर्या छन्दः [कुट्टनीमते] —

सख्याः नायकं प्रति वचनमिदम् । मनोभवज्वलितं कन्दर्पतप्तं तस्या नायिकाया मनस्त्वयि दृष्ट एव निर्वाति प्रसन्नं भवति । दृष्टान्तमाह हिमांशोश्चन्द्रस्यालोके दर्शने हि कुमुद्वत्याः कुमुमं कुमुदं विकसतीत्यर्थः । अत्र साधर्म्यस्यापि प्रतिबिम्बतैवेति प्रतिवस्तूपमातो भेदः । सामान्यविशेषभावाभावादर्थान्तरन्यासाप्रसक्तिरिति बोध्यम् ।

वैधर्म्येण तु

**तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः ।**

**भटाः परेषां विशरारुतामगुः, दधत्यवाते स्थिरतां हि पांसवः ।। ४५६ ।।**

---

**सङ्केतः**

तवेति । अत्र विशरारुतागमनादेः स्थिरत्वाधानादिवैधर्म्येण प्रतिबिम्बनम् । दृष्टान्ते साधारणधर्माणां वस्तुवृत्त्या ह्यभेद एव । परं शब्दान्तरेणोक्तत्वात् प्रतिबिम्बने भेदाभासः इति, 'प्रतिबिम्बने नियतनिष्ठतया तेषां साधारणता न स्यात्' इति नाशङ्कनीयम् ।। इति दृष्टान्तः ।।

**बालचित्तानुरञ्जनी**

तवाहव इति । साहसकर्मशर्मणः साहसकर्मणि शर्म सुखं यस्य स तस्य, करं कृपाणान्तिकमानिनीषतः आनेतुमिच्छतः तव आहवे परेषां शत्रूणां भटा योद्धारः विशारारुतां अहिंसकत्वमगुः । हि यतः, पांसवः अवाते स्थिरतां दधति । उक्तदार्ष्टान्तिकवैलक्षण्ये दृष्टान्ताभिधानात् ।

**काव्यादर्शः**

'तवाहव' इति । अत्र (वि) शरारुतागमनादेः स्थिरताधानादिना वैधर्म्येण प्रतिबिम्बनम् ।

ननु, साधारणधर्माणां प्रतिबिम्बितत्वेन नियतनिष्ठतया कथं साधारणधर्मतेति चेद्, न, वस्तुतो हि तेषां धर्माणामभेद इति साधारणता, शब्दान्तरेण प्रतिपादितत्वात्तु प्रतिबिम्बनमिति न कश्चिद् विरोधः ।

**विवेकः**

तवाहव इत्यादि—अत्र प्रतिपक्षभटा विशरारुतामस्थिरतामगुरिति तेषामस्थिरतायाः स्थिरताऽऽदिवैधर्म्येण पांशुषु प्रतिबिम्बनम् ।

**दीपिका**

वैधर्म्येण विपर्ययेण । सादृश्यपर्यवसायिना साहसकर्मणा शर्म सुखं यस्येति विग्रहः । विशरारुतां व्यूहभङ्गेन विक्षिप्तताम् ।

**साहित्यचूडामणिः**

न केवलमयमुदाहृतरूपेण साधर्म्येण यावद् वैधर्म्येणापीत्याह—एष इति ।

तवेति । "मरुद्विलासे तरला हि रेणवः" इति साधर्म्यम् । तद्वैलक्षण्याद् वैधर्म्योदाहरणमेतत् ।

एतच्च वैधर्म्येकृतं वैचित्र्यमलङ्कारान्तरेष्वप्यस्ति । केवलं ग्रन्थार्थगौरवभयाद् ग्रन्थकारेणोपेक्ष्यते । तत्र प्रतिवस्तूपमायां यथा—

**चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि ।**
**विनावन्तीर्न निपुणाः सुदृशो रतकर्मणि ।। इति ।**

अप्रस्तुतप्रशंसायां यथा—

**धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः ।**
**राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ।। इति ।। १६ ।।**

## मधुमती

तवाहव इति । दधत्यवाते स्थिरतां हि पांसवः इति व्यतिरेकमुखेनाभिधानात् व्यतिरेकदृष्टान्तत्वम् । इति दृष्टान्तः ।

## विस्तारिका

एष इत्यादि । साधर्म्येण दर्शित इति शेषः ।

वैधर्म्येण विपर्यये साधर्म्यपर्यवसायिना ।

तवेत्यादि । साहसकर्मणः सकाशाच्छर्म सुखं यस्याः । विशरारुता समरादिस्ततोऽपसरणम् ।

अत्राराते: स्थिरता, वाते तु न तथेति विपर्यये साधर्म्यपर्यवसानम् ।

## सारबोधिनी

त्वयीति । दृष्ट एव दृष्टमात्रेणेत्यर्थः । वैधर्म्येण विपर्यये साधर्म्ये पर्यवसायिना । तवेति । विशरारुतां झटिति नश्वरताम् । अवाते स्थिरतां चान्ते तु न तथेति विपर्यये साधर्म्यपर्यवसानम् ।

## काव्यप्रदीपः

वैधर्म्येण यथा—

**'तवाहवे साहसकर्मशर्मणः पाणिं कृपाणान्तिकमानिनीषतः ।**
**भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ।।'**

वैधर्म्ये विपर्यये साधर्म्यपर्यवसानमिति दृष्टान्तालंकारत्वम् ।

### आदर्शः

तवाहव इति । साहसकर्मणा शर्म सुखं यस्य तादृशस्य कृपाणान्तिकं करम् आनिनीषत एव तवाहवे परेषां भटा वीरा विसरारुतां दिक्षु विदिक्षु विक्षिप्तताम् अगुः प्रापुरित्यर्थः । अत्र दृष्टान्तमाह—दधतीति । अत्र भटपांशूनामुपमेयोपमानानां विसरारुतास्थिरते वैधर्म्ये ।

### सुधासागरः

वैधर्म्येण यथा—तवाहव इति । वंशस्थं वृत्तम् । लक्षणमुक्तं प्राक् । हे राजन् । आहवे सङ्ग्रामे साहसकर्मशर्मणः सहसा मारणशीलस्य अत एव करं पाणिं कृपाणन्तिकं खड्गसमीपमानिनीषतः आनेतुमिच्छतस्तव परेषां शत्रूणां भटा योद्धारो विशरारुतां विशीर्णताम् अगुः उत्कटभयादेकैके पलायमानतां प्रापुः । तत्र दृष्टान्तमाह पांसवो रजांसि हि निश्चयेनावातेऽनिलाभावे स्थिरतां दधतीत्यर्थः । वैधर्म्यविपर्यये साधर्म्यपर्यवसानमिति दृष्टान्तालङ्कारत्वं द्रष्टव्यम् ।

**(सू० १५६) सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम्॥ १३०॥**

प्राकरणिकाप्राकरणिकानाम् अर्थात् उपमानोपमेयानाम् धर्मः क्रियादिः, एकवारमेव यत् उपादीयते तत् एकस्थस्यैव समस्तवाक्यदीपनात् दीपकम्। यथा

**किवणाणँ धणं णाआणं फणमणी केशराइँ सीहाणं।**
**कुलबालिआणँ त्थणआ उक्तो छिप्पन्ति अमुआणं॥ ४५७॥**

---

### सङ्केतः

एकस्थस्यैवेति। अयं भावः—एकत्र स्थितः क्रियादिः समानो धर्मः प्रसङ्गेन अन्यत्रोपकारात् दीपनाख्यात् दीपसाम्येन दीपकम्। अत्र प्रकृताप्रकृतत्वयोः वास्तवत्वात् अर्थानामौपम्यं सत्यम्। परं गम्यं, न श्रौतम्। अतो नोपमा तुल्ययोगितायां तु काल्पनिकं औपम्यम्। शुद्धानामेव प्रकृतानां अप्रकृतानां वा तत्र ग्रहणात्। न पुनः युगपत् उभयग्रहणमिति।

किविणाणेति। अत्र कुलबालिकाः प्रकृताः, शेषं अप्रकृतम्। अत्र छिप्पन्ति इति क्रिया समानो धर्मः। स च अन्ते निर्दिष्ट इति अन्तक्रियादीपकम्। आदिमध्यक्रियादीपके स्वेनोह्ये।

### बालचित्तानुरञ्जनी

दीपकालङ्कारं लक्षयति सकृदिति। प्रकृताप्रकृतात्मनामुपमानोपमेयात्मनां धर्मस्य क्रियादेः बहुषु कारकेषु सत्ता वृत्तिः क्रियादिदीपकम्।

### काव्यादर्शः

साधारणधर्मस्य असकृद्वृत्तौ न दृष्टान्तमुक्त्वा सकृद्धर्मस्य निर्देशे दीपकमाह-सकृदिति। एकस्थस्यैवेति। प्राकरणिकाप्राकरणिवर्गमध्याद् एकत्र स्थितः समानो धर्मः क्रियादिः प्रसङ्गेन अन्यत्रोपकाराद् दीपनाख्याद् दीपसादृश्येन दीपकालंकारः। प्राकरणिकाप्राकरणिकत्वाभ्यां च तेषामर्थानामुपमानोपयेभावो गम्यमानो न श्रौत इत्युपमातोऽस्य भेदः।

'किवणाणे' ति। अत्र कुलबालिका प्रकृता, शेषाणि अप्रकृतानि, 'स्पृश्यन्ते' इत्येकक्रिया समानो धर्मः।

### विवेकः

एवं साधारणधर्मस्यासकृन्निर्देशेऽलङ्कारद्वयमुक्ता सकृन्निर्देशे द्वावलङ्कारावाह सकृद्वृतिस्त्विति। यथा दीप एकस्थोऽनेकेषां प्रकाशकस्तथोपमानोपमेयानां मध्यादेकत्र स्थितः साधारणधर्मक्रियाऽऽदिरूपः। प्रसङ्गेनान्य-

त्रोपकाराद्दीपनाख्याद्दीपकमित्यन्वर्थं नाम । किवणाणेत्यादि—कृपणानां धनं नागानां फणमणिः केशराः सिंहनाम् । कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् । अत्र कृपणधनादीनामप्राकरणिकत्वं कुलबालिकास्तनस्य च प्राकरणिकत्वम् । तदिह ज्ञातमुख्यभावानां खलु वाक्यानां परस्परस्यौपम्यं व्यङ्ग्यमपि भृत्यवद्वाच्या-न्वय्येव चारुत्वस्य वाच्यपरत्वेन व्यवस्थापनात् । स्पृश्यन्त इति क्रियया चान्तस्थयैव तेषामुपकारः क्रियत इत्यन्तदीपकमिदम् । एवमादिमप्यदीपके अपि द्रष्टव्ये । तत्रादिक्रियं यथा—(अ. सं. ९२ पृ.) रेहइ मिहिरेण णहं रसेण कव्वं सरेण जोव्वणअं । अमएण धुणिधवओ तुमए णरणाह भुवणमिणं ॥ अत्र शोभत इति क्रियाऽऽदिपदस्था सर्ववाक्योपकारिणी । मध्यक्रियं यथा—सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् । प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ (र. वं २/१५) इति ।

## दीपिका

वृत्तिरुपादानम् । प्रकृताप्रकृतात्मनामित्यस्य धर्मस्येत्यनेनैव सम्बन्धः । सैव सकृद्वृत्तिरेव क्रियासु बह्वीषु सतीषु । इति शब्द-प्रकारे । एवम्प्रकारमलङ्करणं दीपकमित्यर्थः । अर्थादिति तथैव पर्यवसानादिति भावः । क्रियादिरित्यादिपदेन गुणोपग्रहः दीपनादलङ्करणात् । कुलबालिआणं कुलपालिकानां कुलस्त्रीणां च । छिपयन्ति स्पृश्यन्त इति क्रिया सकृदेवोपात्ता । अत्र कुलपालिकावृत्तमेव प्रस्तुतम् ।

## दर्पणः

दीपकालङ्कारः—दीपकः [दिपकम्] वृत्ति स्थितिः सैव संकृद्वृत्तिरेव । इति एवं विधं दीपकमिति भावः । क्रियादिरित्यादिपदेन गुणोपग्रहः । दीपनात् अलङ्करणात् ।

**किरणाति कृपणानां धनं नागानां फलमयः केशवाणि सिंहानां ।**
**कुलपालिकानां च स्तनाः कुतः स्यूशंतेऽमृतानां ॥**

**[कृपणानां धनं नागानां फणमणिः केसराः सिंहानाम् ।**
**कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥]**

कुलपालिकाः सत्यः । अत्रछिप्पन्तीति क्रिया बहुवाक्यव्यापिनी सकृत्वापांआ [सकृदुपात्ता] । अत्र कुलपालिकावृत्तान्तः प्रकृतः । गुणस्य सकृत्वपादाने [सकृदुपादाने] हहयमुदाहरणं [इदमुदाहरणम् ।] ।

## साहित्यचूडामणिः

दीपकमाह—सकृद्वृत्तिरिति । प्रकृताप्रकृतात्मनामुपमेयोपमानलक्षणानां समस्तवृत्तीनां सकृद्वृत्तिर्दीपकं, व्यस्तवृत्तित्वे तुल्ययोगिता लक्षयिष्यते ।

क्रियादिरिति गुणस्वीकाराय । एकवारमिति प्रतिवस्तूपमाव्यवच्छेदाय । निर्वक्ति—एकस्थस्यैवेति । यत् सूत्रं "प्रस्तुतानामप्रस्तुतानां च दीपकम्" (अलंकारं सू० २४) इति । औपम्यस्य गम्यत्व इत्यनुवर्तते ।

तत्रैकक्रियामुदाहरति—किवणेति ।

कृपणानां धनं नागानां फणमणिः केसराणि सिंहानाम्।
कुलपालिकानां च स्तनौ कुतो गृह्यन्तेऽमृतानाम्॥ इति।

अत्र कृपणधनादिषु सर्वत्र ग्रहणक्रिया दीप्यते। एतच्चादिमध्यान्तक्रियाभेदात् त्रिधेत्यालंकारिकाः। यदाहुः—

आदिमध्यान्तविषयाः प्रधानेतरगामिनः।
अन्तर्गतोपमाधर्मा यत्र तद् दीपकं विदुः॥ इति।

तत्रान्तविषयमुदाहारि। आदिमध्यविषये बहिरूहनीये। यथा "चरन्ति चतुरम्भोधिवेलोद्यानेष्वि"त्यादि। मध्यविषयं यथा—"सञ्चारपूतानी"त्यादि।

### सम्प्रदायप्रकाशिनी

सकृद्वृत्तिस्त्विति। उपमानोपमेयानां साधारणधर्मस्य क्रियालक्षणस्य सकृद्वृत्तिः क्रियादीपकं, दीपवदेकस्य नानार्थदीपनात् क्रियासु च बह्वीषु कारकस्यैकस्य कारकदीपकम्।

उभयं व्याख्यायोदाहरति—प्राकरणिकाप्राकरणिकानामिति। किवणाणेति

कृपाणानां धनं नागानां फणमणिः केसराणि सिंहानाम्।
कुलपालिकानां च स्तनौ कुतः स्पृश्यन्तेऽमृतानाम्॥

एतत् क्रियादीपकम्।

### मधुमती

सकृदिति। प्रकृताप्रकृतात्मनां धर्मस्य सकृद्वृत्तिः इत्येकं दीपकम्, बह्वीषु क्रियासु कारकस्य सैव सकृद्वृत्तिरेव अपरं दीपकं इत्यन्वयः। व्याचष्टे—प्राकरणिकेति। अर्थादिति। साधारणधर्मोपादानेन औपम्य एव विश्रान्तेः। अत एव प्रथमा औपम्यगर्भा। द्वितीया तु न तथा। अत एव—'बहुषु कारकेषु एकक्रियोपादानमपि तुल्यन्यायतया दीपकान्तरमित्यपदेश्यम्' इत्यापास्तम्। क्रियाया अपि साधारणधर्मत्वात्। यथोदाहरिष्यते। पदव्युत्पत्तिमाह—एकस्यैवेति। एवं च सकलवाक्योपकारककत्वं दीपकसामान्यलक्षणम्।

प्रथममुदाहरति—किवणाणमिति। अत्र वर्णनीयतया कुलपालिकानां स्तनाः प्राकरणिकाः कृपणधनादयः अप्राकरणिकाः। एषां च स्पर्शक्रिया साधारणो धर्मः। सा च एकत्रैवोपात्तेति दीपकम्। औपम्यप्रतीतिः अत्र स्फुटैव।

### विस्तारिका

दीपकमाह—सकृदित्यादि। वृतिरुपादानम्। प्रकृतमुपमेयम्। अप्रकृतमुपमानम्। तद्धर्मस्य सकृदुपादानमिति सम्बन्धः। सैव सकृद्वृत्तिर्बह्वीषु क्रियास्वित्यर्थः।

अर्थादिति । प्रकृताप्रकृतयोः सजातीयधर्मसम्बन्धस्योपमायां पर्यवसानात् । सा च व्यङ्ग्यैव, वाचकशब्दविरहात् । आदिपदाद् गुणपरिग्रहः । दीपकमलङ्करणं दीप इव दीपकम् । तदाह—एकस्थस्यैवेति । एकत्र तिष्ठतीत्येकस्थदीपकादलङ्करणात् ।

किवणाणं इत्यादि ।

**कृपणानां धनं नागानां फणमणिः केसराणि सिंहासनम् ।**
**कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥**

अत्र कुलबालिकानां प्रकृतत्वेनोपमेयत्वम्, अन्येषामप्रकृतत्वेनोपमानत्वम् । स्पृश्यन्त इति क्रिया सकृदुपात्ता । स च स्पर्शो गुणोऽपीति तन्त्रे ।

**सारबोधिनी**

सकृदिति । वृत्तिरुपादानम् । सैव सकृद्वृत्तिरेव । वह्वीषु क्रियासु सतीष्वित्यर्थः । अर्थादिति । प्रकृताप्रकतयाः सजातीयधर्मसम्बन्धस्योपमाया पर्यवसानात् । क्रियादिभिरिति । आदिशब्दाद् गुणपरिग्रहः । तदिति । तद्धर्मस्य सकृदुपादानादित्यर्थः ।

किवणाणेति ।

**कृपणानां धनं नागानां फणमणयः । सिंहानाम् ।**
**केसराः कुलपालिकानां च स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥**

अत्र कुलपालिकानां प्रकृतत्वेनोपमेयत्वमन्येषामप्रकृतत्वेनोपमानत्वमिति । स्पृश्यन्त इति क्रिया सकृदुपात्ता । सा च स्पर्शे गुणेऽपीति गुणक्रियोदाहरणम् ।

**काव्यप्रदीपः**

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।**
**सैव क्रियासु वह्वीषु कारकस्येति दीपकम् ॥ १७ ॥**

प्रकृताप्रकृतात्मनामर्थादुपमानोपमेयभूतानां धर्मिणां धर्मस्य क्रियादेः सकृद्वृत्तिरेकवारमेवोपादानं यत्तदेकम् । एकस्थस्यैव सर्ववाक्यदीपकत्वेन प्रदीपसाम्यात् । कारकस्य च वह्वीषु क्रियासु सकृद्वृत्तिरेव द्वितीयं दीपकम् । इतिशब्दः प्रकारे । तेनोक्तप्रकारद्वयवद्दीपकमित्यर्थः । आद्यं यथा—

**'किवणाणँ धणं णाआणँ फणमणी केसराइँ सीहाणं।**
**कुलवालिआणँ थणआ कुत्तो छिप्पसन्ति अमुआणम्।।'**

अत्र छिप्पन्तीति सकृदुपात्तम्। कुलपालिकानां स्तना उपमेयाः।

### काव्यप्रकाशखण्डनम्

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम्।। (का. १०३)**

धर्मस्य सकृद्वृत्तिरुपादानं सैव सकृद्वृत्तिर्बह्वीषु क्रियासु सतीष्वित्यर्थः। क्रियास्वित्यादिशब्दात् गुणपरिग्रहः। धर्मस्य क्रियादिरूपस्य एकस्य सकृद्दीपनाद् दीपकम्। यथा—

**किविणाम धणं नाआण फणमणी केसराइँ सीहाणं।**
**कुलबालिआण थणआ कुत्तो छिप्पंति अमुआणं।।**

अत्र स्पृशन्ति इति क्रिया सकृदुपात्ता। एवं बह्वीषु क्रियासु एकस्य कारकस्योपादानं बोध्यम्।

### आदर्शः

द्विविधं दीपकालङ्कारमाह—सकृद्वृत्तिरिति। बह्वीषु क्रियासु एकस्य कारस्यैव सकृद्वृत्तिरेव द्वितीयं दीपकमित्यर्थः। संज्ञाव्युत्पत्तिमाह—तदेकदेशेति। किवणाणमिति।

**कृपणानां धनं नागानां फणामणिः केशराः सिंहानाम्।**
**कुलपालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्।।** इति संस्कृतम्।

अमृतानां जीवद्दशानाम्। अत्र कृपणानां धनं प्रकृतम्, नागफणामण्यादयोऽप्रकृतास्तदुपमानानि। तेषामस्पर्शरूपो धर्मः सकृदुपात्तः। एवं कृपणनागादिनामप्यमृतत्वम्।

### सुधासागरः

वृत्तिरुपादानाम्। व्याचष्टे प्राकरणिकेति। अर्थादिति। साधारणधर्मोपादानेनौपम्य एव विश्रान्तेरिति भावः। क्रियादिरित्यादि। आदिशब्दाद् गुणपरिग्रहः। एकदेशस्थलस्येति। प्रस्तुतैकसन्निकृष्टः समानो धर्मः प्रसङ्गादन्यत्रोपकरोति प्रासादार्थमारोपितो दीपो रथ्यायामिवेति दीपकसाम्यमिति भावः। एवं च सकलवाक्योपकारकत्वं दीपकसामान्यलक्षणं बोध्यम्। तथा च प्रकृताप्रकृतात्मनां धर्मस्य सकृद् वृत्तिरित्येकं दीपकम्। बह्वीषु क्रियासु कारकस्य सैव सकृद् वृत्तिरेवापरं दीपकमित्यर्थः। व्याख्यातं च प्रदीपकारैः प्रकृतात्मनामर्थादुपमानोपमेयभूतानां धर्मिमां धर्मस्य क्रियादेः सकृद्वृत्तिरेकवारमेवोपादानं यत्तदेकम्, एकदेशस्थस्यैव सर्ववाक्यदीपकत्वेन प्रदीपसाम्यात्। कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिरेव द्वितीयं दीपकम्। इतिशब्दः प्रकारे, तेनोक्तप्रकारद्वयवद्दीपकमित्यर्थ इति।

आद्यं यथा—'किवणाण' इति।

कृपणानां धनानि नागानां फणमणयः केसराः सिंहानाम्।
कुलपालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्॥

इति संस्कृतम्। अमृतानामिति विशेष्यचतुष्टयेऽन्वेति। अमृतानां जीवतां कृपणानां लुब्धानां धनानि नागानां सर्पाणां फणामणयः सिंहानां केसरिणां केसराः स्कन्धलोमानि कुलपालिकानां कुलाङ्गनानां स्तनाः कुतः स्पृश्यन्ते न कथञ्चित् स्प्रष्टुं शक्यन्त इत्यर्थः। आर्येयं मुखविपुला। लक्षणन्तु—

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति॥

विपुला च चपलावन्मुखजघनभेदभिन्ना भवति। प्रथमार्धे मुखविपुला उत्तरार्धे जघनविपुला। अत्र च्छिप्पन्तीति सकृदुपात्तम्, प्रकृतत्वात् कुलपालिकानां स्तना उपमेया वर्णनीयत्वादिति भावः।

कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम् । यथा

**स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् ।**
**अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥ ४५८ ॥**

---

**सङ्केतः**

स्विद्यतीति । अत्र वधूरूपं कारकं अन्तस्थं बहुषु क्रियासु वर्तते इति अन्तकारकदीपकम् । आदिमध्यकारकदीपके ज्ञेये । तथा क्रियायाः सर्वत्र वाक्ये प्रयोगात् तद्दीपकत्वे सर्व वाक्यं सालङ्कारं स्यात्, अतः न क्रियामात्रं दीपकम्, किन्तु भूयोमिः सजातीयैः कारकैः सम्बध्यमानम् । तस्य च अनेकेष्वर्थेषु साधारणतया सम्बध्यमानस्य बलात्, औपम्यगर्भत्वम् ।

**काव्यादर्शः**

अनेकक्रिया गतत्वेनेकं कारकं कारकदीपकं, यथा— 'स्विद्यति' इति । अत्र वधूलक्षणस्यं कर्तृकारकस्य वह्वीषु क्रियासु वृत्तिः । आदिमध्यान्तवाक्यगतत्वेन धर्मस्य वृत्तौ आदिमध्यान्तदीपकाख्यास्त्रयोऽस्य भेदाः । यद् भामहः—

**आदिमध्यान्तविषयं त्रेधा दीपकमिष्यते ।**

**यथा—मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम् ।**
**स प्रियासंगमोत्कण्ठां सासह्यां मनसः शुचम् ॥**

'मदः सुरादिपानविकारविशेषः । मानभङ्गुरं मानभञ्जनशीलम् । यद्वा, मानो भङ्गुरो यत्रेति समासः ।' अत्र मदादौ यत् प्राकरणिकतया विवक्ष्यते तद् उपमेयं, शेषाणि उपमानानि । आदिवाक्यस्था च जननक्रिया एको धर्मोऽपरेष्वपि वाक्येषु वर्तत इति आदिक्रियादीपकम् ।

**संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।**
**प्रचक्रमे पल्लवरागताम्रा प्रभा पतंगस्य मुनेश्च धेनुः ॥**

—अत्र 'प्रचक्रमे' इति मध्यस्था क्रिया । अन्तक्रियादीपकं तु 'किवाणाण' इति दर्शितम् । एवं कारकदीपकेऽपि आदिमध्यान्तगतत्वं ज्ञेयम् । क्रियादेर्धर्मस्यैव वाक्यार्थेष्वनेकेष्वपि साधारणतया उपादीयमानत्वाद् अत्रौपम्यं बलाद् आपतति । तत्रापि यद् विवक्षितं तद् उपमेयं, इतरत्तु उपमानमिति । अत एव रुद्रटोक्त औपम्यसमुच्चयो दीपकमेव, तुल्यस्वभावात् । यथा—

**जालेन सरसि मीना हिस्त्रैरेणा वने च वागुरया ।**
**संसारे भूसृजा स्नेहेन नराश्च बध्यन्ते ॥**

—अत्र उपमानोपमेयत्वे 'बध्यते' इत्येकः साधारणो धर्मः ।

ननु, यदि क्रियापदोपनिबन्धो दीपकं, तर्हि न तदलंकारः। क्रियापदे हि सति वाक्यसमाप्तिः प्रतीयते, न पुनरर्थातिशयः। क्रियां विना वाक्यमेव न स्यात्। यदुक्तम्—

सुप्तिङन्तचयो वाक्यम् इति।

—तेनात्र कुतः कस्यातिशयः। शास्त्रारम्भवैयर्थ्याच्च। क्रियापदस्य हि दीपकत्वे सर्वं सत्यम्, न क्रियापदमात्रं दीपकं। किं तु बहुभिः संमानजातीयैः कारकविशेषैरभिसंबध्यमानम्। तस्य चानेकेष्वर्थेषु अभिसंबध्यमानस्यार्थवदन्वयि रूपं यत् तत्साम्यमुचयते।

### विवेकः

अनेकक्रियागतैककारकमन्तदीपकं यथा स्विद्यतीत्यादि। कूणति सङ्कोचतीत्यर्थः। अनित्यणिजन्ताश्चुरादय इति। एवमादिमध्ययोरपि। तत्रादौ यथा—निद्राऽपहरति जागरमुपशमयति मदनदहनसन्तापम्। जनयति कान्तासङ्गसुखञ्च कोऽन्यस्ततो बन्धुः॥ इति। मध्यकारकं यथा(अ. स. ९३ पृ:) साधूनामुपकर्तुं लक्ष्मीं धर्तुं विहायसा गन्तुम्। न कुतूहलि कस्य मनश्चरितञ्च महात्मनां श्रोतुम्।

### दीपिका

गुणस्य सकृदुपादानं यथा मम—

"मुक्तास्थलीनामुपलैर्निघर्षणं दावानलैरम्बुरुहाञ्च तापनम्।
मुग्धाङ्गनानाञ्च विटैर्विमर्दनं खलैर्निरासः कृतिनाञ्च नोचितम्॥"

अंत्रोचितत्वं गुणः खलवृतिवृत्तान्त एव च प्रकृतः कूणति सवितर्कं वीक्षते। वेल्लति परिवर्तते। निमिषति मुद्रितप्रायं किञ्चिद् विस्तारयति।

### दर्पणः

द्रूणति सवितर्कं वक्ष्यते[?] नैन्दति [वेल्लति] विपरिवर्तते निमिषति, अत्रितप्रायं च क्षः [?] किंचिदिवस्तारयति।

### साहित्यचूडामणिः

एवमनेकेषु कारकेष्वेका क्रियोक्ता। अथानेकासु क्रियास्वेकं कारकं दीप्यत इति वक्तुं "सैव क्रियास्वि" त्यादिकारिकार्धं व्याचष्टे—कारकस्येति।

स्विद्यतीति। अत्र स्वेदाद्यनेकक्रियाकर्तृत्वेन नवोढा काचिन्निर्दिश्यते।

### सम्प्रदायप्रकाशिनी

कूणतीति। कूणनं नेत्रयोर्भागत्रयसङ्कोचः। नवपरिणीता अभिनवप्रौढिः।

### मधुमती

द्वितीयमुदाहरति—स्विद्यतीति। अत्र नववधूलक्षणकारकेण एकदेशस्थितेनापि अनेकक्रियान्वयात् दीपकम्। औपम्यप्रतीतिस्तु नास्त्येव। अत्र आदिमध्यान्तदीपकं अन्यत्रोक्तं अनतिवैचित्र्याधायकत्वात्। नोक्तम्।

### विस्तारिका

गुणक्रियोदाहरणम्—स्विद्यतीत्यादि। सात्त्विकभावात् स्वेदः। दयिते परिरम्भोद्यते क्वणत्यङ्गेषु सङ्कोच्यमानत्वात्। अत एव वेल्लति असम्मत्यङ्गचालनं करोति। विवलति परिवृत्य शेते निमिषत्याहार्यनिद्रया नेत्रे मुद्रयति। नायकवैमुख्यसम्भावनातो भयात् तिर्यग्विलोकनम्। तिर्यग्विलोकनानुमितसम्भोगेच्छे दयिते सम्भुक्तत्वादन्तर्हर्षः। नवोढात्वेन बाह्यतो न प्रकाशः। अत एव चुम्बितुमिच्छति, न तु चुम्बति। परिणयस्यैव नवत्वम्, न तु परिणीतायाः, एकस्याः कर्त्र्याः सकृदुपात्तायाः सर्वक्रियादीपनाद् दीपकम्।

### सारबोधिनी

स्विद्यतीति। कूणति सङ्कोचमालम्बते। विचलति परिवृत्य शेते। निमिषति आहार्यनिद्रया नेत्रे मुद्रयति। अन्तर्नन्दति न वोढात्वेन बाह्यतो न प्रकाशः। अत एव चुम्बितुमिच्छति न तु चुम्बति। अत्र बह्वीषु क्रियासु एकस्याः कर्त्र्याः सकृदुपादानाद्दीपकम्।

### काव्यप्रदीपः

अन्त्यं यथा—

> 'स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक्।
> अन्तर्ननन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने॥'

अत्र वधूरिति कारकस्य सकृद्वृत्तिः।

### आदर्शः

द्वितीयं दीपकमाह—कारकस्येति। खिद्यतीति। नवपरिमणया वधूः शयने खिद्यतीत्याद्यन्वयः। कूणति सङ्कुचति, वेल्लति कम्पते, विचलति परावर्त्तते। विबलतीति क्वचित् पाठः। निमिषति चक्षुर्मुद्रयति। अन्तरित्यादिद्वयन्तु किञ्चिदुद्भिन्नयौवनत्वात्। अत्र सकलक्रियास्वेव कर्तृकारकं वधूः सकृदुपात्तम्।

### सुधासागरः

अन्त्यं यथा—कारकस्येति। गीतिश्छन्दः। लक्षणमुक्तं प्राक्। नवः परिणयो विवाहो यस्यास्तादृशी नवोढा वधूर्नायिका शयने भर्तृपल्यङ्के स्विद्यति स्वेदमाप्नोति, कूणति सङ्कुचति वेल्लति वृत्तविवर्तनं करोति,

विचलति परिवृत्य शेते, 'विलयतीति' क्वचित्पाठः, विलीना भवतीत्यर्थः । निमिषति आहार्यनिद्रया नेत्रे मुद्रयति । विलोकयति तिर्यग् वक्रतया नेत्रत्रिभागेन मुखमवलोकयति, अन्तर्नन्दति, नवोढात्वेन बाह्यतो नानन्दप्रकाशः । अत एव चुम्बितुमिच्छति न तु चुम्बतीत्यर्थः । अत्र वधूरिति कर्तृकारकस्य सकृद्वृत्तिः ।

पूर्व इति वृत्तिः स्पष्टार्था ।

(सू० १५७) मालादीपकमाद्यं चेद्यथोत्तरगुणावहम्।

पूर्वेण पूर्वेण वस्तुना, उत्तरमुत्तरं चेदुपक्रियते तत् मालादीपकम्। यथा

संग्रामाङ्गणमागतेन भवता चापे समारोपिते

देवाकर्णय येन येन सहसा यद्यत्समासादितम्।

कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं

तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम्॥ ४५९ ॥

---

### सङ्केतः

सङ्ग्रामेति। अत्र आसादनक्रियानिमित्तं दीपनं दीपनविषयाणां उत्तरोत्तरोम्भितत्वेन कृतम्। तथा— कोदण्डाद्यैः शरादीनां क्रमेण उत्कर्षः विहितः। एकावली तु पूर्वस्य उत्तरोत्तरेण उत्कर्षहेतुत्वे स्यादिति विवेकः॥ इति दीपकम्।

### काव्यादर्शः

सत्यम्, न क्रियापदमात्रं दीपकं, किं तु बहुभिः समानजातीयैः कारकविशेषैरभिसंबध्यमानम्। तस्य चानेकेष्वर्थेषु अभिसंबध्यमानस्यार्थवदन्यवयिरूपं यत् तत्साम्यमुच्यते॥ १०१॥

मालादीपकमिति। मालात्वेन चारुत्वविशेषणमाश्रित्य दीपकप्रस्तावे लक्षितम्॥ गुणावहमिति। पूर्वस्य पूर्वस्योत्तरं प्रति उत्कर्षनिबन्धनम्।

'संग्रामे' ति। अत्र कोदण्डादिभिः क्रमेण शरादीनामुत्कर्षो विहितः समासादनक्रियानिबन्धनं च दीपनं दीपनविषयाणामुत्तरोत्तरो[त्त]म्मभितत्वेन कृतम्। चापशब्दाद्यस्य च 'भावेन भावलक्षणम्' इति सप्तमी। भावः क्रिया, ततो यस्य क्रियया क्रियान्तरं लक्ष्यते तस्माद् भाववतः सप्तमी स्यात्। प्रसिद्धा च क्रिया प्रयुज्यमाना गम्या वा क्रियान्तरं लक्षयति, यथा 'दुग्धासु गतः'। अत्र प्रयुज्यमानदोहनक्रियया गमनं लक्ष्यते। 'कलायमात्रेष्वाम्रेषु गतः' अत्र 'सत्सु' इति गम्यमानक्रियया गमनं लक्ष्यते। 'एवं चापसंबन्धिनी या समारोपक्रिया प्रयुक्ता तया समासादन-लक्षणः क्रियाविशेषो लक्ष्यते। एकावली तु पूर्वस्य पूर्वस्योत्तरोत्तरेण उत्कर्षहेतुत्वे स्यादिति भेदः॥

### विवेकः

मालादीपकमिति—गुणावहत्वमुत्कर्षहेतुत्वम्। पूर्वपूर्वस्योत्तरोत्तरं प्रत्युत्कर्षनिबन्धनत्वे स्वयमिति। संग्रामेत्यादि—अत्र भवदादिभिः क्रमेण साम्मुख्यादीनामुत्कर्षो विहितः, आसादगनलक्षणक्रियानिबन्धनञ्च दीपनं दीपनविषयानामुत्तरोत्तरोत्तम्भितत्वेन कृतम्।

## दीपिका

मालादीपकमिति । मालोपमादौ यथोपमादिलक्षणातिरिक्तं तत् स्वरूपबाहुल्यं विना किञ्चिदपि नास्ति नात्र तथा किन्तर्हि उपकार्योपकारकतया परस्परसंश्लेषेण मालाभावमापन्नानां दीपकं सकृद्धर्मनिर्देश इति पूर्वदीपकानन्तर्गतत्वम् । आद्यमिति—पूर्वमित्यर्थ इति विवृणोति पूर्वेणेति । संप्राप्य इत्यादि पाठान्तरं पूर्वोक्तदोषपरिहाराय ।

## दर्पणः

मान्येति [मालेति] । उपकार्योकारकतया परस्परसंश्लेषेण मानाभावमापन्नानां दीपकं दीपकभावम् । अत्रैकस्य बहुवाक्यदीपनात् ।

## साहित्यचूडामणिः

मालादीपकमिति पूर्वपूर्वस्योत्तरोत्तरं प्रति उत्कर्षनिबन्धनत्वे मालादीपकम् । मालात्वेन चारुत्वविशेषोन्मेषाच्चिरन्तनानुसरणाच्च पृथगमुष्य लक्षणम् । गुणावहत्वमुत्कर्षहेतुः ।

सङ्ग्रामेति । अत्र कोदण्डादिक्रमेण शरादीनामुत्कर्षो विहितः । साम्मुख्यासादनक्रियानिबन्धनं च दीपकम् । द्वितीयपादस्य प्राक्प्रक्रियायामनौचित्यादन्यथाकारः ।

## सम्प्रदायप्रकाशिनी

मालादीपकमिति । यथोत्तरमित्युक्तेराद्यमाद्यमिति गम्यते ।

व्याचष्टे—पूर्वेण पूर्वेणेत्यादि । एकावल्यामुत्तरोत्तरेण पूर्वपूर्वोपकार इति विशेषः ।

सङ्ग्राम इति । अत्र कोदण्डादिना पूर्वपूर्वेण शरादेरुत्तरोत्तरस्यासादेनोपकारः ।

## मधुमती

उदाहरति सङ्ग्रामेति । अत्र उत्तरार्धे—पूर्वपूर्ववाक्यार्थस्य उत्तरोत्तरवाक्यार्थ प्रति प्रकर्षाधायकत्वस्य स्फुटत्वात् मालादीपकम् । अस्य अभवन्मतयोगाख्यपूर्वोक्तदोषवत्त्वेऽपि अलङ्कारोदाहरणत्वं अविरुद्धम् । अलङ्कारस्य दोषाभावाव्याप्यत्वात् । अन्यथा तेन गतार्थस्य दोषाभावस्य काव्ये पृथगुपादानं न स्यात् । इदमेव एकावलीमन्ये वदन्ति । इति दीपकम् ।

## विस्तारिका

मालेत्यादि । सकृदुपात्तस्यानेकदीपनाद् दीपकम् । आद्यं पूर्वम् ।

नन्वेकस्याद्यस्योत्तरोत्तरोपकारासम्भव इत्याह—आद्येनाद्येनोत्तरोत्तरस्य वीप्सिते पूर्वस्मिन्नवीप्सा, एकस्य सर्वापकारिताविरहात् ।

गुणवहत्वं विवृणोति—उपक्रियत इति ।

सङ्ग्रामेत्यादि। पूर्वदोषपरिहाराय 'सम्प्राप्ते' इत्यादिपाठकल्पनम्। 'आसादितम्' इत्यत्र नपुंसकत्वमेकत्वं, च, नपुंसकमनपुंसकेनेत्यनुशासनात्।

अत्र कोदण्डेनारिशिरो लक्ष्यं प्रापयता शरा उपक्रियन्ते। शरैरपि भूमण्डलं प्रापयद्भिररिशिरः। तेनापि सन्नायकं त्वां लम्भयता भूमण्डलम्, भूमण्डलेन च कीर्तिमासादयता नृपतिः, नृपतिनापि त्रैलोक्यं व्यापयता कीर्तिरिति पूर्वपूर्वेभ्यः परपरस्योपकारः। निःसपत्नेन राज्येन सम्पद्बाहुल्याद् बहुलवितरणैः कीर्तिरिति भूमण्डलान्नृपतेः कीर्तिः, नैवं व्याप्तिरिति नृपतितोऽपि कीर्तेरिति भाव्यं सुधीभिः।

मालायां पूर्वपूर्वपुष्पेणोत्तरोत्तरस्य धारणादुपकारकत्वम्, तद्वदत्रापीति मालारूपकता. एकस्या आसादनक्रियायाः सर्वत्र सम्बन्धाद् दीपकता।

## सारबोधिनी

मालेति। उत्तरोत्तरस्य पूर्वपूर्वोत्कर्षकत्वे एत्वेकावलीति ततोऽस्य भेदः। पूर्वेण पूर्वेणेति। उत्तरस्य वीप्सितत्वेन पूर्वस्मिन्नपि वीप्सा। बहुगुणत्वं विवृणोति उपक्रियत इति। उपक्रियते प्रकृतोत्कर्षायोन्मुखीक्रियते। तथा च संग्रामे कोदण्डेत्यादिभिः पूर्वपूर्वैरुत्तरोत्तरेषामासादनक्रियाकर्मीकरणरूपोपकारात् निःसपत्नलोकत्रव्यापिकीर्तिलाभानुपोत्कर्षः प्रत्याय्यते इति। यथा मालायां पूर्वपूर्वग्रथितपुष्पाणामुत्तरोत्तरधारणादुपकारकत्वं, तद्वदत्रापि मालारूपता। एकस्या आसादनक्रियायाः सर्वत्र सम्बद्धाद्दीपकता।

## काव्यप्रदीपः

**मालादीपकमाद्यं चेद्यथोत्तरगुणावहम्।**

गुणावहमुपकारकम्। यथा—

**'सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते**
**संप्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादितम्।**

**कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं**
**तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम्॥'**

स्पष्टम्। मालोपमादीनां बहूपमानसंबन्धान्नापरो विशेष इति न ते लक्षिताः। इदं तु पृथग्लक्षितम्। उत्तरोत्तरमुपकार्योपकारकतया परस्परसंसर्गेण मालाभावमापन्नानां सकृद्धर्मनिर्देशरूपत्वेनाधिकविशेषानुप्रवेशादिति।

## काव्यप्रकाशखण्डनम्

मालादीपकमाद्यं चेद् यथोत्तरगुणावहम्। (का. १४, पू०)

पूर्वेण पूर्वेण वस्तुना उत्त [प० ५१,१] रोत्तरमुपक्रियते तन्मालादीपकम्। यथा—

**संग्रामाङ्गणसंगतेन भवता चापे समारोपिते**

संप्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादितम्।

कोदण्डेन शराः शरैरशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम्॥

अत्र निःसपत्नभूलोकत्रयव्यापिकीर्त्तिलाभान्नपोत्कर्षः प्रतीयते।

### आदर्शः

मालादीपकालङ्कारमाह—मालेति। आद्यमित्यत्राऽऽद्यमाद्यमित्येवं वीप्सार्थो बोध्यः। यथोत्तरगुणावहमिति, उत्तरोत्तरोपकारकमित्यर्थः। उपकारश्चोत्तरोत्तरस्य स्वसदृशक्रियाजननमेव। संग्रामाङ्गणसङ्गतेनेति। संप्राप्ते आगते। अत्र कोण्डादिना शरादीनां साम्मुख्यप्रापणमुपकारः। अत्र च पूर्वोक्ताभवन्मतयोगदोष, परिहाराय द्वितीयचरणपरावृत्तिः। ततश्च देवेति सम्बोधनाभावाच्चतुर्थचरणे नृपते इति सम्बोधनं प्रक्षिप्तम्, ततश्च छन्दोभङ्गपरीहाराय सितयश इति कृतम्। न च द्वितीयचरणपरावृत्तावपि कथं तद्दोषपरिहारः 'कोदण्डेन शरा' इत्यादीनामासादितमित्यत्रानन्वयादिति वाच्यम्, एकवाक्यत्वेन 'नपुंसकानपुंसकयोर्नपुंसकमेकवद् वा' इति सूत्रेणाऽऽसादितमित्यत्र नपुंसकैकत्वविधानादनन्वयाभावात्; प्रागुक्तपाठे तु वाक्यभेदादाकर्णनक्रियाकर्मत्वेनैव परार्द्धोत्थानाच्चोक्तसूत्राविषयत्वात्।

### सुधासागरः

उदाहरणम्—संग्रामेति।

'सम्प्राप्ते परिपन्थियोधनिवहे साम्मुख्यमासादितम्' इति द्वितीयपादपाठो दोषपरिहाराय कल्पितो बोध्यः। व्याख्यातमिदं सप्तमोल्लासे। मालोपमादीनां वहूपमानसम्बन्धान्नापरो विशेष इति न ते लक्षिताः। इदं पृथग् लक्षितम्। उत्तरोत्तरमुपकार्योपकारकतया परस्परसंसर्गेण मालाभावमापन्नानां सकृद्धर्मनिर्देशरूपत्वेनाधिकविशेषानुप्रवेशादिति बोध्यम्।

**(सू० १५८) नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥ १०४ ॥**

नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा । क्रमेणोदाहरणम्—

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।

आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ ४६० ॥

---

### सङ्केतः

पाण्डुक्षाममिति । अत्र वदनादीनि सर्वाण्यपि प्रकृतानि क्षेत्रियरोगः राजयक्ष्मा, अन्यस्मिन् क्षेत्रे = देहान्तरे चिकित्स्यः । पक्षे तु—उपपतिविषयः अनुरागः । आवेदयति इति सकृत् धर्मः निबद्धः ।

### बालचित्तानुरञ्जनी

नियतानामिति । सकृदेकवारं वृत्तिरित्यनुवर्तते । अर्थवशात् विभक्तिविपरिणामः । तथा च वत्येते उपादीयते इत्यर्थः ।

### काव्यादर्शः

प्रस्तुताप्रस्तुतयोः समस्तत्वे दीपकमुक्त्वा व्यस्तत्वे तुल्ययोगितामाह—नियतानामिति । पुनःशब्दः पूर्वस्माद् विशेषे । विशेषश्च व्यस्तत्वमेव ।

'पाण्डु क्षामम्' इति । अत्र वदनादीनि सर्वाण्यपि प्राकरणिकानि ।

'आवेदयति' इति धर्मः सकृद् एकवारं निबद्धः । एवं गुणोऽपि यथा—

योगपट्टो जटाजालं तारवी त्वग् मृगाजिनम् ।
उचितानि तवाङ्गस्य यद्यमूनि तदुच्यताम् ॥

—अत्र योगपट्टादीनि प्रकृतानि उचितत्वं गुणो धर्मः सकृन्निबद्धः ।

### विवेकः

प्राकरणिकाप्राकरणिकयोः समस्त- त्वे दीपकं प्रतिपाद्य व्यस्तत्वे तुल्ययोगितामाह नियतानामिति—अनेकेषां, धर्मः साधारणक्रियागुणरूपः । तस्यासकृन्निर्देशे तुल्ययोगिता । औपम्यञ्चात्र गर्भितम्, तथाच—"उपमानोपमेयोक्तिशून्यैरप्रस्तुतैर्वचः । साम्याभिधायि प्रस्तावभाग्भिर्वा तुल्ययोगिता" ॥ (का. अ. सा. सं. ५/५८) इत्यौद्भटं लक्षणम् । अन्ये त्वाहुः 'औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धे तुल्ययोगिते'ति (अ. स ८९ पृः) । पाण्डु क्षाममित्यादि । सरसं स्निग्धं, हृदन्तः हृदयस्यान्तः क्षेत्रियः परक्षेत्रे चिकित्स्यः । अत्र विरहिण्या वर्णनीयत्वाद्वदनादीनां प्राकरणिकत्वं रागावेदकम् । किया यथा (अ. स. ८९ पृः) सज्जातपत्रप्रकरा-

च्छितानि समुद्वहन्ति स्फुटपाटलत्वम् । विकस्वराण्यर्ककरप्रभावाद्दिनानां पद्मानि च वृद्धिमीयुः ॥ अत्र ऋतुवर्णनस्य प्रकान्तत्वाद्दिनानां पद्मनाञ्च प्रकृतत्वाद्वृद्धिगमनं साधारणो धर्मः ।

## दीपिका

धर्म इत्यनन्तरं यत्रोपादीयत इति शेषः । पाण्डु क्षाममित्यादि पूर्वमेव व्याकृतम् ।

## दर्पणः

सकृद्धर्म इत्यनन्तरं यत्रोपादीयत इति शेषः । पाण्डुक्षार्मामत्यादि । पूर्वमेव व्याख्यातम् ।...

## साहित्यचूडामणिः

तुल्ययोगितामाह—नियतानामिति । प्रस्तुताप्रस्तुतानां समासे दीपकं व्यासे तुल्ययोगितेत्याह—प्राकरणिकानामेवेति । अत्र शुद्धप्राकरणिकत्वे शुद्धाप्राकरणिकत्वे वा गम्यमानमौपम्यं वैवक्षिकं न वास्तवं, तस्यैक कोटिप्रभावितत्वात् । दीपके तु तद् वास्तवम्, उभयकोटिनिर्व्यूढत्वात् । सकृदिति दीपकवदेकत्र निविष्टस्यान्यत्राप्यनुषङ्गाद् उपकारकत्वात् । यत् सूत्रम् "औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धे तुल्ययोगिता (अलंकारसू० २४) इति ।

पाण्ड्ववति । अत्र वदनहृदयवपूंषि प्राकरणिकानि नायिकावयवभूतत्वात् । तेषां रोगवेदनरूपो धर्मः सकृदुपादीयते ।

## सम्प्रदायप्रकाशिनी

नियतानामिति । नियतिरेकजातीयता ।

व्याचष्टे—नियतानां प्राकरणिकानामेवेत्यादि ।

पाण्डुक्षाममिति । परक्षेत्रे चिकित्स्यः क्षेत्रियो रोगः । अत्र पाण्डुत्वादिविशिष्टानां वक्त्रादीनां प्राकरणिकानामावेदनं सकृत् ।

## मधुमती

नियतानामिति । तेन दीपकव्युदासः ।

पाण्डुक्षाममिति । अत्र साम्यमात्रविवक्षया क्षामादिपदप्रयोगात्, रोगशृङ्गारयोः उभयोरपि, प्राकरणिकतया क्षेत्रियत्वरूपसाधारणधर्मस्य सकृदुपादानात् तुल्ययोगितेत्यर्थः ।

## विस्तारिका

नियतानामित्यादि । सकृदेकवारं वृत्तिरित्यनुवर्तते । अर्थवशाद् विभक्तिविपरिणामः । वर्त्यत उपादीयत इत्यर्थः ।

पाण्डुक्षाममित्यादि । अत्र विरहानुभावतया प्रकृतानां पाण्डुतादीनां सकृदुपात्तावेदनक्रियान्वयः ।

### सारबोधिनी

पाण्डिड्वति। अत्र विरहानुभावतया प्रकृतानां पाण्डुतादीनां सकृदुपात्तवेदनक्रिययाऽन्वयः। हृदन्तः अन्तर्हृदयम्।

### काव्यप्रदीपः

**नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता॥ १८॥**

नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा। धर्म इत्यनन्तरं यदुपादीयत इति शेषः। सकृत्पदोपादानाद्यत्र प्रतिस्वं भिन्ना धर्म एकस्यैव वा सर्वत्रोपादानं तत्र नातिप्रसङ्गः। तत्र प्राकरणिकानामेव यथा—

**'पाण्डुक्षामं वदनं सरसं ह दयं तवालसं च वपुः।**
**आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदयन्तः॥'**

अत्र प्रकृतानां विरहिणीवदनादीनामेव धर्मत्वेनावेदनाख्यो धर्म उपात्तः। न तूपमानरोगधर्मतया।

### काव्यप्रकाशखण्डनम्

तत्र पूर्वे यथायोगं उत्तरोत्तरोपकारकाः नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा वृत्तिरित्यनुवर्त्तते। अर्थवशाद् विभक्तिविपरिणामः वर्त्तते, उपादीयते सकृद् धर्म इत्यर्थः। यथा—

**पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः।**
**आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः॥**

अत्र विरहानुभावत्वेन प्रकृतानां पाण्डुतादीनां सकृदुपात्तानां वेदनक्रियायामन्वयः। क्षेत्रियरोगो यावद् देहभावी देहान्तरचिकित्सः। एवमप्रकृतानामपि।

### आदर्शः

तुल्ययोगितालङ्कारमाह—नियतानामिति। प्राकरणिकत्वेनैवाप्राकरणिकत्वेनैव वा नियतानामित्यर्थः। तेन प्राकरणिकाप्राकरणिकमिश्रणघटिताद्दीपकाद् भेदः।

तत्र प्राकरणिकानामेवाह—पाण्डविति। व्याख्यातमिदं दोषोल्लासे (पृ०—४०६)। अत्र विरहिण्या मालत्या अङ्गानां प्राकरणिकानामेवा 'वेदयति' क्रियारूपसकृद्धर्मान्वयः।

### सुधासागरः

नियतानामित्यादि। धर्म इत्यनन्तरं यदुपादीयते इति शेषः। सकृत्पदोपादानाद् यत्र प्रतिस्वं धर्मा भिन्नाः, एकस्यैव वा सर्वत्रोपादानं तत्र नातिप्रसङ्ग इति भावः।

तत्र प्राकरणिकानामेव यथा—पाण्डु इति। व्याख्यातं सप्तमोल्लासे। अत्र प्रकृतानां विरहिणीवदनादीनामेव धर्मत्वेनावेदनाख्यो धर्म उपात्तः, न तूपमानरोगधर्मतयेति बोध्यम्।

**कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशो पुरः का।**
**अमृतममृतरश्मिम्बुजन्म प्रतिहतमेकपदे तवाननस्य॥ ४६१ ॥**

---

### सङ्केतः

कुमुदेति। अत्र कुमुदादीनि सर्वाणि अप्रकृतानि। दृशोः मुखस्य च वर्ण्यत्वात् प्रकृतत्वम्। का इति निन्दारूपः पूर्वार्थे। प्रतिहतत्वरूपश्च उत्तरार्धे सकृद्धर्मः निबद्धः। कुमुदादीनां तुल्ययोगिता हेतुः। इति तुल्ययोगितालङ्कारः।

### काव्यादर्शः

अप्रकृतानामेव यथा 'कुमुदादीनि चाप्रकृतानि, दृशोराननस्य च प्रकृतस्य वर्ण्यमानत्वात् 'का' इति। निन्दालक्षणश्च सकृद्धर्मो निबद्धः। अत्रापि प्रकृतेष्वेव अप्रकृतेष्वेव पदार्थेषु एकधर्मानुगतेषु वर्ण्यमाणेषु किंचित् साम्यं ज्ञेयम्॥ १०२॥

### विवेकः

कुमुदेत्यादि—'एकपद'-मिति च पाठान्तरम्। अत्र नायिकाया वर्णनीयत्वात् कुमुदादीनाप्रस्तुतानां यथाक्रममधिक्षेपप्रतिपाद्या तत्क्रिया। एवं गुणेऽपि यथा—योगपट्टो जटाजूटं तारवी त्वङ्मृगाजिनम्। उचितानि तवाङ्गेषु यद्यमूनि तदुच्यताम्॥ (का. अ. सा. स. ६० पृ.)। अत्र योगपट्टादीनां प्रस्तुतानामीशस्पर्शानौचित्यलक्षणः साधारणो गुणः। अप्राकरणिकानां यथा—त्वदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते। मालतीशशभृल्लेखाकदलीनां कठोरता॥ (का. अ. सा. स. ६० पृ.)। अत्र मालत्यादीनामप्राकरणिकानां साधारणधर्मः कठोरत्वं गुणः। न्यूनस्यापिं विशेषेण गुणस्यान्यविवक्षया। तुल्यकालक्रियायोग इत्युक्ता तुल्ययोगिता॥ (भा. का. अ. ३/२६) इत्येका। विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित्। कीर्तनं स्तुतिनिन्दाऽर्थं सा मता तुल्ययोगिता॥ (का. आ. २/३२८) इत्यपरा। यथा—यमः कुबेरो वरुणः सहस्राक्षो भवानपि। बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम्॥ (का. आ. २/३२९)। अत्रानुक्रममपि स्तुल्यर्थमेषां सादृश्यं प्रतीयते। निन्दाऽर्थं यथा—सङ्गतानि मृगाक्षीणां तडिद्विलसितानि च। क्षणद्वयं च तिष्ठन्ति घनारब्धान्यपि स्वयम्॥ (का. आ. २/३३०)। अन्ये सुखनिमित्ते च दुःखहेतौ च वस्तुनि। स्तुतिनिन्दार्थमेवाहुस्तुल्यत्वं तुल्ययोगिताम्॥ अन्ये सुखनिमित्ते च दुःखहतौ च वस्तुनि। स्तुतिनिन्दार्थमेवाहुस्तुल्यत्वं तुल्ययोगिताम्॥ (स. क. आ. ४/५५)। स्तुल्यर्थं यथा—आहुतस्याभिषेकाय वनार्थं प्रस्तुतस्य च। न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः॥ (द. रू. ३७, ४२ पृ.)। निन्दार्थं यथा—यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा। यश्चैनं गन्धमाल्याभ्यां सर्वस्व कटुरेव सः॥ (वा. प. २/३१६)। 'अत्र यः परशुना छिनत्ति यो मधुसर्पिषा सिञ्चति यो गन्धमाल्याभ्यामर्चति तं प्रति तुल्यमेव निम्बस्य कटुत्वमिति समासोक्त्या तदुपमेयस्य निन्दा प्रतीयते'। (स. क. आ. ४०७ पृ.)।

### दीपिका

विरहानुभावतया सर्वेषामेव प्राकरणिकत्वं कुमुदादीनाममृतादीनाञ्चात्राप्राकरणिकता, दृशोशननस्य च प्रकृतत्वात । साधारणधर्मत्वं च पूर्वार्धे किंस्विद् द्योत्यस्याहीक्षेपस्योन्तरत्र च प्रतिहतत्वस्य च ।

### दर्पणः

(कुमुदेत्यादौ) कुमुदादीनामप्रकृतानाम् केति । किमाद्योधेन (केन पदार्थेन) तु सन्त्वरूपेणौकेन (सान्त्व-रूपेणैकेन) धर्मेणाभिसम्बन्धः पदस्थाने (पदे स्थाने) ।

### साहित्यचूडामणिः

कुमुदेति । अत्र कुमुदादीनामप्राकरणिकत्वं नायिकालोचनोपमानभूतत्वात् सर्वेषाम् । तेषां च किंवृत्तेन क्षिप्यमाणत्वं सकृदुपादीयते । कुमुदस्य लोचनोपमानत्वम् अन्यैर्दूषितमपि प्रसिद्ध्यनुरोधादुच्यते । एवममृतादीनां तन्मुखोपमानभूतानां प्रतिहतेः सकृन्निर्देशः ।

### सम्प्रदायप्रकाशिनी

कुमुदेति । अत्र कुमुदादीनामप्राकरणिकानां दृश्ये पदे प्रतिहतिः धर्मः सकृत्, तथामृतादीनामाननस्य पदे ।

### मधुमती

कुमुदेति । अत्र अधर्मत्वं साधारणो धर्मः, कुमुदादीनां अप्राकरणिकानामेव सकृदुपादानात् प्रतीयते इत्यर्थः । अस्यां उभयरूपायामपि औपम्यप्रतीतिः इति द्रष्टव्यम् । इति तुल्ययोगिता ।

### विस्तारिका

कुमुदेत्यादि । ललितो वशीकारको विलासः । कटाक्षप्रतिहतं निर्जितम् । एकपदे एकस्थाने तदाननस्य तदाननविरोधितासम्बन्धेन ।

अत्र नयनमुखयोरेव प्रकृततया कुमुदादीनाममृतादीनां चाप्रकृतत्वम् ।

अत्र पूर्वोर्द्धे 'का' इति गम्या आक्षेपक्रिया, उत्तरार्द्धे तु प्रतिहतिक्रिया समानो धर्मः ।

### सारबोधिनी

कुमुदेति । एकपदे एकस्थाने । तवाननस्येति षष्ठी विरोधितासम्बन्धेन । अत्र पूर्वार्धे का इति गम्या आक्षेपक्रिया । अपरार्द्धे तु प्रतिहतिक्रिया समानो धर्मः ।

### काव्यप्रदीपः

अप्राकरणिकानामेव यथा—

**'कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का।**
**अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य॥'**

अत्र कामिन्या वर्णनीयत्वादप्राकरणिकानां कुमुदादीनामेव धर्मतया पूर्वार्धे कापदव्यङ्ग्योऽधिक्षेप उत्तरार्धे प्रतिहतत्वं चोपात्तम्।

### आदर्शः

अप्राकरणिकानामेवाह—कुमुदेति। कुमुदादीनामालिः श्रेणी ललितविलासादीनां जुषोस्तस्या दृशोः पुरः का, निकृष्टेत्यर्थः। तथा तदाननस्यैकपदे उपमानीकरणरूपकैव्यवसायेऽमृतादिकं प्रतिहतमित्यर्थः। 'पदं व्यवसित-त्राणस्थानश्रेष्ठेषु कीर्त्तितम्' इति कोषः। अत्र निकृष्टत्वरूपे सकृद्धर्मे दृगुपमानत्वेनोपात्तानां कुमुदादीनां, प्रतिहत-त्वस्वरूपे सकृद्धर्मे च तदाननोपमानत्वेनोपात्तानाम् अमृतादीनामप्रकृतानामन्वयः।

### सुधासागरः

अप्राकरणिकानामेव यथा—कुमुदेति। तव दृशोस्त्वन्नेत्रयोः पुरोऽग्रे कुमुदकमलनीलनीरजानामालिः का, न मनागपि शोभते। किञ्च तवाननस्य पुरः अमृतं पीयूषम् अमृतरश्मिश्चन्द्रः अम्बुजन्म पद्म च एकपदे युगपदेव प्रतिहतं पराजितमित्यर्थः। पुष्पिताग्रा छन्दः। लक्षणमुक्तं प्राक्।

(सू० १५९) उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।

अन्यस्योपमेयस्य व्यतिरेक आधिक्यम् ।

क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम् ।

विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ।। ४६२ ।।

इत्यादावुपमानस्योपमेयादाधिक्यमिति केनचिदुक्तम् तदयुक्तम् अत्र यौवनगतास्थैर्याधिक्यं हि विवक्षितम् ।

---

**सङ्केतः**

आधिक्यमिति । अर्थात् उपमानात् । तदयं सूत्रार्थः—यत् उपमानात् उपमेयस्य व्यतिरेकः स एव = व्यतिरेक एव सः व्यतिरेकोऽलङ्कारः इति ।

क्षीणः इति । 'यथा इन्दुः क्षीणोऽपि वर्धते, तथा तारुण्यमपि' इति चित्ते कृत्वा काऽपि रुष्टा सती प्रियेण ज्ञाताशयेनोच्यते—प्रिये ! यातं क्षीणं यौवनं भूयः न निवर्तते इति मा कुप्यः इति ।

केनचिदिति । रुद्रटेनेत्यर्थः । तन्मताशयेन अत्र चन्द्रात् यौवनं न्यूनगुणम्, शशिवैलक्षण्येन गतस्य तस्य अपुनरागमनात् । अलङ्कारसर्वस्वेऽपि इत्थमेवोक्तम् । विवक्षितमिति । यौवने यादृशं अस्थैर्याधिक्यं न चन्द्रे तादृक् इति भावः । विपरीतः अतिरेकः—अधिकत्वं व्यतिरेकः । अधिकत्वे वैपरीत्यं च हीनत्वम् । अ आधिक्यं आधिक्यम् । अनाधिक्यमित्यर्थः । एवं च रुद्रटोऽपि मानितः । इत्थमभणनं च 'ऊहकानामेवात्राधिकारः' इति ज्ञापनार्थम् ।

**बालचित्तानुरञ्जनी**

[रूय्यकः] उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकालङ्कारमसूत्रयत् । आधिक्यमधिकगुणत्वलक्षणं यथायोगमुदाहृत्य न्यूनगुणत्वरूपं विपर्यये क्षीण इति । हे सुन्दरि ! क्षीणः क्षीणः चन्द्रः भूयो भूयो विवर्द्धत इति । यातं यौवमनिमनिवर्ति तु । अतो विरम, कोपं मुञ्च । प्रसादकेन विदग्धजनिमीलितशालिनेत्यर्थः । वाक्यार्थस्य यावत् तात्पर्यपर्यालोचितत्वादित्याह तदयुक्तमिति । यतोऽत्रापि उपमानात् उपमेयस्याधिक्यं विपर्यय इत्याह यौवनेति । चन्द्रापेक्षया तारुण्ये यदस्थैर्यं तस्याधिक्यम् । अन्यथा वाक्यार्थशक्तिव्याकोपः स्यादिति भावः ।

**काव्यादर्शः**

उपमेयस्येति । प्राकरणिकस्य यद् आधिक्यमर्थाद् उपमानात् स व्यतिरेकः । 'क्षीण' इति । कयाचिद् युवत्या शशिनि क्षयवृद्धी दृष्ट्वा सागसि प्रिये मानो गृहीतः, यथा 'शशी क्षीणोऽपि वर्धते तथा यौवनं क्षीणमपि वृद्धिं यास्यतीति तदैव मानत्यागात् क्रीडिष्यामि, संप्रति तु रुष्यामि' इति चित्ते कृत्वा स्थिता । स तु नायको

विदिताभिप्रायस्तामाह। अत्रोपमेये यौवने उत्कर्षकारणस्य अस्थैर्याधिक्यलक्षणस्य उपमाने तु चन्द्रे निकर्षकारणस्य अस्थैर्यहानिलक्षणस्य उपादानाद् इवाद्यनुपादाने आक्षिप्तौपम्ये सति वक्ष्यमाणतृतीयचतुष्के प्रथमो भेदः। रुद्रटस्तु उपमानादुपमेयस्य न्यूनगुणत्वे व्यतिरेकमाहेत्याशङ्क्याह—इत्यादाविति। उपमानस्येति, चन्द्रस्य। उपमेयादिति, यौवनात्। विवक्षितमिति। तेन उपमानाद् उपमेयस्य यद् आधिक्यं स व्यतिरेक इत्यर्थः।

### विवेकः

तुल्ययोगितावैधर्म्यादाह—उपमानादिति—एतेन मेरुसर्षपयोर्व्यतिरेकाभिधाने नायमलङ्कारः। किन्तूद्भूतचमत्कारिसादृश्यवैधर्म्याभिधानं व्यतिरेक इति। एवकारोऽन्वर्थतां द्योतयति। इह क्षीण इत्यादौ यौवनापेक्षया चन्द्रस्योपमानस्याधिकगुणत्वम्, पुनः पुनरपि वृद्धेः, यौवनस्य तु गतस्य तद्विपर्ययान्न्यूनगुणत्वम्, अतो न्यूनगुणत्वे व्यतिरेकेः, तथाचान्येषां लक्षणम् 'उपमानादुपमेयस्य न्यूनगुणत्वे व्यतिरेक' इति। अतोऽस्य लक्षणस्याव्याप्तिमत्र परिजिहीर्षुराह वृत्तिकारः—यौवनगतेति। तुल्येऽप्यस्थिरत्वे चन्द्रगतमस्थैर्यं पुनरागमनान्निकृष्टम्। यौवनगतन्तु पुनरनावृत्तेरुत्कृष्टमित्युपमेयस्याप्याधिक्यं न तु न्यूनगुणत्वमिति।

### दीपिका

"उपमानादुपमेयस्याधिकगुणत्वे न्यूनगुणत्वे वा व्यतिरेकः"

इत्युक्त्वा न्यूनगुणत्वमसत्त्वमिति क्षीणः क्षीण इत्यादौ यौवनस्यास्थिरस्य पुनर्निवृत्त्यभावाच्चन्द्रापेक्षया निकृष्टत्वाद् द्वितीयोदाहृतित्वं केचिदिच्छन्ति।

### दर्पणः

व्यतिरेकालङ्कारः। स एव। व्यतिरेकाख्य एवालङ्कारः। इह कनेचिदुपमानानुपमानानुपमेयसाधिक्ये। [उपमानादुपमेयस्याधिक्ये।] विपर्यये वा व्यतिरेक इति लक्षणा युक्ता मेयस्य। [लक्षणा उक्ता] [उपमेयस्य] न्यूनगुणत्वे यहुदाकृतं [यदुदाहृतं] तद्वत् उत्कृष्टगुणत्वेऽप्यनुभावयितुं शक्यमित्याह क्षीण इति। व्यतिरेक अस्थैर्यस्य अस्थैर्यरूपगुणस्येत्यर्थः। अनुक्तीनां त्रये, हेतुद्वयस्यानुक्ते स्त्रिधा व्यवस्थिता रित्यर्थः [त्रिधा व्यवस्थितिरित्यर्थः]। साम्योनिवेदित [साम्ये निवेदिते] इत्यस्योत्तरार्धेन संबन्धः। स्मयो गर्वः।

### साहित्यचूडामणिः

व्यतिरेकमाह—उपमानादिति। स एव स इति। व्यतिरेक इत्येव व्यवह्रियते।

### सम्प्रदायप्रकाशिनी

उपमानादिति। उपमानादुपमेयस्य व्यतिरेक आधिक्यं व्यतिरेकालङ्कारः। एवकारोऽन्वर्थतामाह।

क्षीणः क्षीण इति। मुहुः क्षैण्येऽपि भूयो भूयोऽपि वर्धितशश्यपेक्षया यातस्य यौवनस्यानिवर्तित्वमाधिक्यम्।

अलङ्कारसर्वस्वकृता तु 'उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः' (सू० २८) इति सूत्रयतोपमेयस्य न्यूनगुणत्वे इदमुदाहृतम्। तदसमञ्जसमित्यभिप्रायेणाह—इत्यादावुपमानस्यत्यादिना। उपमानस्याधिक्यमिति रुचकेनोक्तमयुक्तं, यौवनगतस्यास्थैर्यस्याधिक्यमिति विवक्षणात्।

## मधुमती

उपमानादिति। अर्थात् उपमेयस्येति भावः।

नन्विदं लक्षणं 'क्षीणः क्षीणोऽपि शशी' इत्यादौ अव्याप्तम्, तत्र उपमानस्य चन्द्रस्य पुनः पूर्णतया अधिकगुणत्वम्, यौवनस्य अपमेयस्य तु गतस्यानिवृत्त्या हीनगुणत्वं इति अलङ्कारसर्वस्वकारमतं दूषयितुं तदुदाहरति—क्षीणः इत्यादि। न हि चन्द्रयौवनयोः उपमानोपमेयभावः विवक्षितः, किन्तु चन्द्रक्षय-यौवनक्षययोः। तत्र पुनर्निवृत्त्या चन्द्रक्षयो हीयते। पुनरनि वृत्त्या यौवनक्षयः, प्रकृष्यते इति नाव्याप्तिरिति भावः।

यद्यपि उपमानस्य उपमेयाधिक्येऽपि उपमाप्रतीतौ नाधिकगुणत्वं विषयः इति, यत्र उपमानप्रकर्षोपमेयापकर्षयोः हेत्वभिधानं, तत्रापि व्यतिरेकाङ्गीकारे न दूषणम्। तथापि वर्णनीयत्वेन उपमेयस्य प्राधान्यात्, तस्य प्रकृततया, उप्रकृतस्य उपमानस्यैव वैलक्षण्याभिधाने असंबद्धार्थाभिधायकत्वं स्यात्। यदि तु द्वयोः साम्यं, उपमेयस्याधिक्यं वा अभिधीयते तदा उक्तदोषो न भवतीति तदुभयं अलङ्कारः। तत्र आद्ये उपमा, द्वितीये च व्यतिरेकः इति।

यद्यपि उपमाने वैलक्षणयप्रतीतौ सादृश्यप्रतीतिरेव नास्ति। तथापि निषेध्यत्वेनैव सादृश्यप्रतीतेः, यथाकथञ्चित् तत्प्रतीतेरेव विवक्षितत्वात्।

## विस्तारिका

उपमानादित्यादि। स एव व्यतिरेक एव। स व्यतिरेको विशेषेणातिरेकः, आधिक्यम्। योग एव लक्षणमित्यर्थः।

उपमानस्योपमेयसाकाङ्क्षत्वेनान्यपदेन तस्यैवाभिधानमित्याह—उपमेयस्येति।

क्षीण इत्यादि। सत्यं प्रतिभासि, यद्वा नित्यमावश्यकम्। विरम मान्यत्वादित्यर्थः। प्रसीद मानमोचनमात्रं नोदेश्यम्। यातं यौवनमनिवर्तीति सम्बन्धः।

अत्र शशी उपमानम्, यौवनमुपमेयः, अस्थैर्य समानो धर्मः। चन्द्रस्य क्षैण्यं बुद्धिबाध्यत्वेन, निकृष्टं यौवनास्थैर्यं पुनरबाधितमेवेति नोत्कृष्टेन स्वाश्रयोत्कर्षणम्। तद्वक्ष्यति—यौवनगतास्थार्येत्यादि।

केचित्तु उपमानादुपमेयस्याधिक्येन न्यूनतायां च व्यतिरेकः। तत्र न्यूनतायामेवेदमुदाहरणम्, यौवनास्थैर्यस्यानुवर्तित्वेन चन्द्रास्थैर्यपिक्षया निकृष्टत्वादित्याहुः। तद् दूषयति—विवक्षितमित्यादि।

अत्रायमाशयः—प्रकृतवाक्यार्थानुगुणप्रकृष्टगुणाश्रयत्वेनैवाधिक्यम्, विनिगमकान्तरविरहात्। प्रकृते तु मानप्रसादनोपायतया उपस्थितस्य यौवनगतास्थैर्यस्य बाधकान्तराबाध्यत्वेनोत्कर्षः, चन्द्रक्षैण्यस्य तु वृत्तिबाध्यत्वेनैव निकृष्टतेत्युक्तमेवेत्युपमेयस्याधिकत्वेन व्यतिरेको युक्तः, तन्न, "हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैदौत्यपथः

सितीकृतः" इत्यत्र नलमहीपतेः स्वेन निन्दनान्निकृष्टत्वेन प्रतीयमानस्य दौत्यस्य कथं व्यतिरेकः कथं वा "मयाप्तं रामत्वं कुशलवसुता न त्वधिगता" इत्यादौ कुशलवसुताप्राप्त्यभावेन रामचन्द्रापेक्षया निकर्षाश्रये कवितर्युपमेये तस्मादाधिक्य उपलक्षणम् ?

न्यूनतायामपि व्यतिरेक इति टीकाकृद् विश्वनाथोऽपि आधिक्यमुपमेयस्योपमानान्न्यूनताथवा इति लक्षितवान्, तन्न, 'हनूमदाद्यैः' इत्यत्राप्युपमेयस्यैवाधिक्यात्। बहुभिर्हनूमदादिभिर्यत्कृतं तन्मयैकेनेति प्रतीतेः। एकेन यशसा सितीकरणाद् बहुहासकरणके तत्रोत्कर्षावगतेर्नलमहीपतेः स्वप्रहासपरिपोषणम्। तथा 'मयाप्तं रामत्वम्' इत्यादावनुतापस्य वाक्यार्थस्य कुशलवसुताप्राप्त्यभावेन प्रोद्‌बलनमिति तद्‌भावयति, रामेत्यस्य न्यूनत्वात्। तद्वति च कवितर्याधिक्यादिति दीपिकादर्पणनिहतदृशः प्रकाशविस्तारे प्रवर्तयितव्याः, येन तथाविधेनात्र विषये सञ्चरन्ति धीमन्तः।

## सारबोधिनी

उपमानादिति। स एव व्यतिरेक एव। सः व्यतिरेकः। विशेषणातिरेक आधिक्यम् क्षीण इति। विरम मानादिति। शेषः। केचित्तूपमानदुपमेयस्याधिक्ये न्यूनतायां च व्यतिरेकः तत्र न्यूनतायामिदमुदाहरणमिति वदन्ति। तद्दूषयति विवक्षितमिति। अत्रायमाशयः। प्रकृतवाक्यार्थानुगुण प्रकृष्टगुणाश्रयत्वे नैवाधिक्यम् विनिगमकान्तराभावात्। प्रकृते च मानप्रसादनोपायतयोपस्थितस्य यौवनगतास्थैर्यस्य बाधकान्तराबाध्यत्वेनोत्कर्षः। चन्द्रक्षयस्य तु वृद्धिबाध्यत्वेनैव निकृष्टतेत्युपमेयाधिक्य एव व्यतिरेक इति वस्तुतस्तूपमेयस्य न्यूनतायामपि व्यतिरेकः। यथा—

"हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूत्यपथ सितीकृत" इति नलमहीपती स्वनिन्दनान्निकृष्टत्वेन प्रतीयमाने उपमेये व्यतिरेकदर्शनात्। तथा "मयाप्तं रामत्व" मित्यत्र च कवयितरि न्यूनतायाञ्च व्यतिरेकदर्शनात्।

## काव्यप्रदीपः

**उपमानाद्यदन्यस्य व्यतिरेकः स एव सः।**

अन्यस्योपमेयस्य। व्यतिरेको विशेषेणातिरेक आधिक्यम्। स एवेति व्यतिरेकः। कश्चित्तु—"यत्रोपमेयादुपमानस्य उपमानादुपमेयस्य वा आधिक्यं स व्यतिरेक इति लक्षणम्। कथमन्यथा—

**'क्षीणः क्षीणोऽपि शशी भूयो भूयो विवर्धते नितराम्।**
**विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु॥'**

इत्यादिसंग्रहः। अत्र ह्युपमानभूतस्य शशिन उत्कर्षः। क्षैण्येऽपि पुनर्वृद्धेः" इत्याह तन्न युक्तम्। अस्थैर्ये हि तस्योपमानता। तदाधिक्यं चोपमेये यौवन एवात्र विवक्षितम्। तस्मादुपमानस्योत्कर्षे व्यतिरेक इति रिक्तं वचः। एनं विभजते—

## काव्यप्रकाशखण्डनम्

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः। (का. १०५, पृ०)

अन्यस्य उपमेयस्य व्यतिरेकः आधिक्यम्।

## आदर्शः

चतुर्विंशतिविधं व्यतिरेकालङ्कारमाह—उपमानादिति। 'अन्यस्य' उपमेयस्य। अत्रोपमानस्योपमेयादाधिक्यमपीममलङ्कारं ये वदन्ति तान्निरस्यति—क्षीणः क्षीण इति। मानिनीं प्रत्युक्तिरियम्। मानाद् विरमेत्यर्थः। यातं गतं तु यौवनं क्षीणक्षीणपुनर्वृद्धियुक्तशशिवत् न पुनर्वृद्धिमदित्यर्थः। उपमेयादाधिक्यमिति। अनिवर्त्तियौवनरूपोपमेयापेक्षया पुनः पुनर्वृद्धिमतश्चन्द्रस्याऽऽधिक्यमित्यर्थः। अत्र यौवनगतस्येति प्रत्यायनीयरूपस्यैवाऽऽधिक्यं विवक्षितम् अतश्चन्द्रास्थैर्यापेक्षया यौवनास्थैर्यस्याऽऽधिक्येनोपमेययौवनाधिक्यमित्यर्थः। यस्तु—'हनुमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूत्यपथः सितीकृतः' इति नैषधे (नवमसर्गे १२३ श्लो०) नलस्य विषादस्तत्राप्युपमेयस्य नलस्यैव विषादपोषिकया विलक्षणसामग्र्या दूत्यपथसितीकरणाद्धनूमदाद्युपमानोपेक्षयाधिक्यम्। एवं—'मयाप्तं रामत्वं कुशलवसुता न त्वधिगता' इत्यत्रापि प्रत्यायनीयस्य दुःखित्वस्य उपमेये दरिद्र एषाऽऽधिक्यमित्यादि बोध्यम्।

## सुधासागरः

अन्यस्येत्यादि। अन्यस्य उपमेयस्य व्यतिरेको विशेषेणातिरेक आधिक्यं स एव व्यतिरेक इत्यर्थः। क्वचित्तु यत्रोपमेयादुपमानस्य उपमानादुपमेयस्य वाऽऽधिक्यं स व्यतिरेक इति लक्षणम्। कथमन्यथा—क्षीण इति इत्यादिसङ्ग्रहः।

अत्रोपमानभूतस्य शशिन उत्कर्षः, क्षैण्येऽपि पुनर्वृद्धिरित्याह। तन्न युक्तम्। अस्थैर्ये हि तस्योपमानता तदाधिक्यं चोपमेये यौवन एवात्र विवक्षितम्। तस्मादुपमानस्योत्कर्षे व्यतिरेक इति रिक्तं वचनमिति भावः।

व्याख्यातं च मधुमतीकारैः—क्षीण इत्यादि। न हि चन्द्रयौवनयोरुपमानोपमेयभावो विवक्षितः किन्तु चन्द्रक्षययौवनक्षययोः। तत्र पुनर्निवृत्त्या चन्द्रक्षयो हीयते, पुनरनिवृत्त्या यौवनक्षयः प्रकृष्यते इति वा व्याप्तिः। यद्यप्युपमानस्योपमेयाधिक्येऽप्युपमानप्रतीतौ नाधिकगुणत्वं विषयः, एवञ्च यत्रोपमानप्रकर्षोपमेयापकर्षहेत्वभिधानं तत्रापि व्यतिरेकाङ्गीकारे न दूषणम्, तथाऽपि वर्णनीयोपमेयस्य प्राधान्यात्तस्य प्रकृततया अप्रकृतस्योपमानस्य वैलक्षण्याभिधानेऽसम्बद्धार्थाभिधायकत्वं स्यात्। यदि तु द्वयोः साम्यमुपमेयाधिक्यं वा विधीयते तदोक्तदोषो न भवतीति तदुभयमलङ्कारः। तत्राद्ये उपमाद्वितीये व्यतिरेकः। यद्यप्युपमेयवैलक्षण्यप्रतीतौ सादृश्यप्रतीतिरेव नास्ति, तथाऽपि निषेध्यत्वेनैव सादृश्यप्रतीतेर्यथाकथञ्चित् तत्प्रतीतेरेव विवक्षित्वादिति।

**(सू० १६०) हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥ १०५ ॥**

**शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्वत्त्रिरष्ट तत् ।**

व्यतिरेकस्य हेतुः, उपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षकारणम् तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वा, अनुक्तिरित्यनुक्तित्रयम् एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते, आर्थेन च क्रमेणोक्ताश्चत्वार एव भेदाः, आक्षिप्ते चौपम्ये तावन्त एव, एवं द्वादश । एते श्लेषेऽपि भवन्तीति चतुर्विंशतिर्भेदाः ॥

---

**सङ्केतः**

तयोर्द्वयोरिति । युगपदिति शेषः । एकतरस्य क्रमेणानुक्तौ अनुक्तिद्वयम् । द्वयोः उपमानयोः उत्कर्षापकर्षहेत्वोः युगपदनुक्तौ एका अनुक्तिः । मिलितं अनुक्तित्रयम् । शब्देनेति । इववायथादिना इवार्थवतिरूपेण चेत्यर्थः । आर्थेनेति । तुल्यार्थशब्द-तुल्यार्थवतिप्रतिपादिते नेत्यर्थः । क्रमेणेति । यदा अर्थशब्दः सामर्थ्यार्थः तदा आर्थेन सामर्थ्यरूपेण क्रमेण इति व्याख्या । आक्षिप्ते इति । इवतुल्याद्यभावे इत्यर्थः । एते चेति । तद्वत् श्लेषेऽपि द्वादशभेदाः इत्यर्थः । मूले त्रिरष्टेति । त्रीन् वारान् अष्ट = चतुर्विंशतिः इत्यर्थः ।

**सङ्केतः (रुय्यकः)**

श्लेषेऽपीति—यद्यपि श्लेषोपकृतत्वे व्यतिरेकस्याङ्गाङ्गिभावसङ्करत्वं तथापीह विषये श्लेषे व्यतिरेक इत्येषा प्रसिद्धिर्न तु सङ्कर इति । ततस्तनुसरणार्थ एवैष प्रभेदो व्यतिरेकप्रकारतया व्यवस्थाप्यते । विषमादयश्च शब्दाः श्लिष्टा इति [गुणशब्द औदार्यादौ तन्तुषु च श्लिष्ट इति] । अतः परम् ।

**बालचित्तानुरञ्जनी**

इत्थं विप्रतिपत्तिं निराकृत्य विभागमाह हेत्वोरिति । त्रिरष्टेति । चतुर्विंशतिः । उपमेयविषयं उत्कर्षनिमित्तं न विपर्ययः । उपमानविषयं तु निकर्षकारणम्, न विपर्ययः । एकतरस्येति । हेत्वोरनुक्ती द्वे । हेतुद्वयस्य निरुक्तिरेकेति अनुक्तिरेकेति अनुक्तित्रयम् । एतदुक्तं भवति । आधिक्यस्य हेतुरुपमेयगतमुत्कर्षनिमित्तं उपमानगतं निकर्षकारणम् । अनयोर्हेत्वोरुक्तावेको भेदः । द्वयोर्हेत्वोरनुक्तावेकः, उत्कर्षहेतोरुक्तौ अपकर्षहेतोरनुक्तावपरः उत्कर्षहेतोरनुक्तावपकर्षहेतुरुक्तावेकः । एवं चत्वारो भेदाः । अत एव शब्देन इवादिना अर्थेन तुत्यादिना आक्षेपेण च साम्यप्रतिपादने द्वादशभेदाः । श्लेषेणापि भवन्तीति चतुर्विंशतिर्भेदाइति ।

### काव्यादर्शः

व्यतिरेकश्च उत्कर्षापकर्षहेत्वोरूपादाने उक्तौ एकविधोऽयमनुक्तौ च तयोः क्रमेण युगपद् वानुपादाने त्रिविधोऽयं चतुर्विधः, पुनश्च औपम्ये शब्देनार्थेन वा निवेदिते प्रतीयमाने वा द्वादशभेद इत्याह-हेत्वारिति। तद्वदिति। तथा श्लेषेऽपि द्वादश भेदाः, तत्तस्मात् त्रीन् वारान् अष्टभेदाश्चुतर्विंशतिरित्यर्थः। शब्देनेति। इव-वा-यथेतिरूपेण इवार्थे विहितवतिरूपेण च। अर्थेनेति। तुल्यादिना शब्देन तुल्यार्थे विहितवतिना च। आक्षिप्ते इति। इवादितुल्यादिपदविरहे इत्यर्थः।

### विवेकः

व्यतिरेकभेदानाह हेत्वोरित्यादि। 'उपमेयोत्कर्षोपमाननिकर्षरूपव्यतिरेकनिमित्तयोरभिधान एकम्, उत्कर्षनिकर्षोकर्षोभयहेतूनां पर्यायेणानुक्तौ त्रिधेति प्रथमं चतुर्भेदः। अयञ्च प्रत्येकं शाब्द आर्थोऽर्थाक्षेपलब्धश्चेति द्वादश भेदाः। एषाञ्च न केवलमुपादीयमानो गम्यमानो वा साधारणो धर्म उपमामूलं यावच्छ्लेषेणापि स्थित इत्याह एते च श्लेषेऽपीति। यद्यपि श्लेषोपकृतत्वे व्यतिरेकस्याङ्गिभावसंक्रान्तत्वं तथापीह विषये श्लेषव्यतिरेक इत्येषा प्रसिद्धिर्न तु सङ्कर इति। ततस्तदनुसरणार्थमेवैष प्रभेदो व्यतिरेकप्रकारतया व्यवस्थाप्यते।' (रु. स. ६५ पृ.)

### दीपिका

तच्चास्माभिरत्रैवान्तर्भावयितुं शक्यमित्याह—क्षीणः क्षीण इति शब्दार्थाभ्यां निवेदित इत्यन्वयः। उत्कर्षनिमित्तमुत्कृष्टगुणसम्बन्धो निकर्षकरणं तद्विरहः।

### दर्पणः

एवमिति। पाठविपर्यासे भेदचतुष्टयोदाकृतियोभ्यत्वं [भेदचतुष्टयोदाहृतियोग्यत्वम्]

गुणाः गाम्भीर्यादयः तन्तवञ्च मण्डलराजत्वात् अशक्यम्, विभुञ्च [विधुञ्च] कला विज्ञानानिमागाञ्च [?]। प्रतापः प्रभाव प्रकृष्टतापश्च।

### साहित्यचूडामणिः

इत्थं विप्रतिपत्तिं प्रतिक्षिप्य विभागमाह—हेत्वोरिति। त्रिरष्टेति। चतुर्विंशतिः।

उपमेयविषयम् उत्कर्षनिमित्तं न विपर्ययः। उपमानविषयं च निकर्षकारणं न विपर्ययः। एकतरस्येति एकैकस्य हेतोरनुक्ती द्वे, हेतुद्वयस्यानुक्तिरेकेत्यनुक्तित्रयम्। साम्यप्रतीतिस्त्रिधा शब्देनार्थेनाक्षेपेण चेति।

### सम्प्रदायप्रकाशिनी

एवमुपमानाधिक्ये व्यतिरेकं निराकृत्य भेदान् सञ्चष्टे—हेत्वोरुक्तावित्यादि। उपमेयस्थमुत्कर्षस्य उपमानस्थं च निकर्षस्य कारणं व्यतिरेकस्य हेतुः। तयोरुक्तावेकः। एकतरस्य चोभयस्येत्यनुक्तीनां त्रये त्रयम्। चत्वारोऽपि साधर्म्ये शाब्दे आर्थे अर्थाक्षिप्ते द्वादश। ते च श्लेषाश्लेषनिबन्धनत्वे त्रिरष्ट चतुर्विंशतिभेदाः।

व्याचष्टे—व्यतिरेकस्य हेतुरित्यादिना।

### मधुमती

विभजते—हेत्वोरिति । हेत्वोरुक्तौ प्रकर्षनिकर्षयोः शाब्दत्वम्, अनुक्तिद्वये च एकस्य शाब्दत्वं, अन्यस्य आर्थत्वम्, तृतीयानुक्तौ च द्वयोरप्यार्थत्वमिति ध्येयम् ।

### विस्तारिका

हेत्वोरित्यादि । इत्यादेः प्रयोगशब्देन निवेदनम्, तुल्यादेश्चार्थेन जयत्यादेश्चाक्षेपेणेति विवेचयिष्यामः । अन्यतरस्यैकैकस्योपमानोपमेयभावः । सादृश्यमर्थेन तुल्यादिपदप्रयोगे कथमनयोस्तुल्यतेत्यर्थाकाङ्क्षया । क्रमेणेति । शब्दार्थभ्यामिति साहित्यशङ्काव्युदासाय । तथा सति चतुर्विंशतित्वानुपपत्तेः । आक्षिप्ते अनुमिते । अपिना श्लेषान्यसूत्रणम् ।

### सारबोधिनी

हेत्वोरिति । इवादेः प्रयोगे शब्देन साम्यनिवेदनं तुल्यादेश्चार्थेन जयत्यादेश्चाक्षेपेणेति । लक्ष्ये विवेचयिष्यामः । क्रमेणेति । शब्दार्थाभ्यामिति साहित्यशङ्काव्युदासाय तथा सति चतुर्विंशतित्वानुपपत्तेः । आक्षिप्ते व्यञ्जिते । मुखमिन्दुं जयति स्पर्द्धते इत्यादौ सादृश्यव्यङ्ग्यत्वात् । प्रायशः सदृश एव जयादिव्यवहारात् ।

### काव्यप्रदीपः

**हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ।। १९ ।।**

**शब्दार्थाभ्यामथाक्षिप्ते श्लेषे तद्वत्रिरष्ट सः ।**

व्यतिरेकस्य द्वौ हेतू । उपमेयगतमुत्कर्षनिमित्तमुपमानगतमपकर्षनिमित्तं च । तयोर्द्वयोरप्युपादानमित्येकः प्रकारः । अनुपादाने तु त्रयो भेदाः । प्रथमस्यैव द्वितीयस्यैव उभयोरपि वा हेत्वोरनुपादानात् । तदेवं चत्वारो भेदाः । ते च प्रत्येकं त्रिधा । साधर्म्यस्य क्वचिदिवादिना शब्दशक्तेः प्रतिपादनात् । क्वचित्तुस्यादिशब्देनार्थशक्त्या. क्वचिदुभयाभावेऽप्याक्षेपेणेति द्वादशभेदाः । ते च प्रत्येकमश्लिष्टश्लिष्टशब्द इति चतुर्विंशतिभेदः स इत्यर्थः ।

### आदर्शः

अस्यालङ्कारस्य चतुर्विंशतिविधत्वमाह—हेत्वोरुक्ताविति । 'साम्ये' समानधर्मसन्बन्धरूपे उपमात्मके उपमेयोपमानभावे, शब्देनार्थेन वा 'निवेदिते' बोधिते आक्षिप्ते वा सति हेत्वोरुक्त्यनुक्तित्रयाभ्यां चतुश्चतुर्विध इत्यर्थः । इत्यतो द्वादशविध इत्यर्थः । शब्देन निवेदितत्वं श्रौतीत्वम्, अर्थेन निवेदितत्वमार्थीत्वम् आक्षिप्तत्वन्तु सादृश्यवाचकपदाभावेऽपि निर्जितत्वाद्युक्त्या कल्प्यत्वम् । एतादृशत्रिकस्योत्कर्षनिकर्षहेतुद्वयोक्त्यनुक्तित्रयरूपचातुर्विध्येन द्वादशविधत्वमित्यर्थः । एते द्वादश श्लेषं विना, तथैते द्वादश श्लेषसत्त्वेऽपीत्याह—श्लेषे तद्वदिति । तथा च चतुर्विंशतिविधत्वमित्याह—त्रिरष्ट तदिति । 'तत्' तस्मात् 'त्रिरष्ट' त्रिगुणीभूता अष्ट चतुर्विंशतिरित्यर्थः । हेत्वोरुक्त्यनुक्तित्रयाणि व्याचष्टे—व्यतिरेकस्येति । एकतरस्येति । तेनेदमनुक्तिद्वयं युगपदनुक्तिश्चैकेत्यनुक्तित्रयम् । क्रमेणोक्तौ चत्वार इति । उक्तौ सत्यां क्रमेण चत्वारश्चत्वार इत्यर्थः, वीप्सार्थस्यात्र विवक्षितत्वात् ।

औपम्यमुपमा तस्याः श्रौतीत्वार्थीत्वाक्षीप्तत्वेन त्रैविध्यम्, हेतुद्वयोक्तयादिचातुर्विध्येन तत्त्रयचातुर्गुण्यमेव । श्लेषसत्त्वेऽपीति व्याचष्टे—एते चेति । श्लेषश्च क्वचित् साधर्म्यांशे क्वचिच्च व्यतिरेकप्रतियोग्यंशे, तच्चोदाहरणे दर्शयिष्यामः । क्रमेणेति—हेतुद्वयोक्त्यनुक्तिक्रमेणेत्यर्थः ।

### सुधासागरः

विभजते—हेत्वो इति ।

व्यतिरेकस्य हेतुरित्यादि । व्यतिरेकस्य द्वौ हेतू, उपमेयगतमुत्कर्षनिमित्तमुपमानगतमपकर्षनिमित्तं च । द्वयोरप्युपादानमित्येकः प्रकारः । अनुपादाने तु त्रयः प्रकाराः । प्रथमस्यैव द्वितीयस्य उभयोरपि वा हेत्वोरनुपादानात् । तदेवं चत्वारो भेदाः । ते च प्रत्येकं त्रिधा, साधर्म्यस्य क्वचिदिवादीनां शब्दशक्तेः प्रतिपादनात्, क्वचित्तुल्यादिशब्देनार्थशक्त्या, क्वचिदुभयाभावेऽप्याक्षेपेणेति द्वादश भेदाः । ते च प्रत्येकमश्लिष्टे शब्दे इति चतुर्विंशतिभेदः स इत्यर्थः ।

**असिमात्रसहायस्य प्रभूतारिपराभवे।**

**अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः॥ ४६३॥**

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वानुपादानेऽन्यत् भेदत्रयम्। एव मन्येष्वपि द्रष्टव्यम्। अत्र, इवशब्दस्य सद्भावाच्छाब्दमौपम्यम्।

---

**सङ्केतः**

असीति। अत्र तुच्छत्वं उपमानगं गर्वहेतुः निकर्षकारणम्, महाधृतित्वं उपमेयगतं उत्कर्षकारणं स्मयाभावहेतुः। अतः युगपत् हेत्वोरनुक्तिः। तथा अत्रैव—

**'इतरस्य जनस्येव न स्मयोऽस्य महाधृतेः।'**

इति पाठे महाधृतित्वस्य उपमेयोत्कर्षहेतोरुक्तिः।

**'तुच्छस्यान्यजनस्येव न स्मयोऽस्य विभाव्यते।'**

इति पाठे तुच्छत्वस्य उपमानापकर्षहेतोः उक्तिः। तथा—

**'इतरस्य जनस्येव न स्मयोऽस्य विभाव्यते।'**

इति कृते तु उत्कर्षापकर्षहेत्वोः युगपदनुक्तिः। तदाह—अत्रैवेति। एवं शाब्दौपम्ये चतुर्भेदी। एवमन्येष्विति। आर्थादावपि चतुष्कपञ्चके दर्शितदृष्टान्तादन्या त्रिभेदी स्वेनोह्या।

**बालचित्तानुरञ्जनी**

आद्यमुदाहरति असीति। बहूनां शत्रूणां निवारणे खड्गमात्रसहायस्य महाधृतेः अस्य राज्ञः अन्यतुच्छजनस्येव विस्मयो न। अत्रोपमाने तुच्छत्वमपकर्षनिमित्तम्। उपमेये महाधृतित्वमुत्कर्षहेतुः। अतो हेत्वोरुक्तिः। अन्यदप्यत्रोदाहर्तुं शक्यमित्याह अत्र चेति। पर्यायेण व्यत्ययेन उपमापकर्षहेतोरनुक्तिः। उत्तरत्राप्येषा रीतिरनुसरणीयेत्याह एवमिति। उक्तसाम्यस्य शाब्दत्वमाह अत्रेति।

**काव्यादर्शः**

'असिमात्रसहायस्य' इति। अत्र तुच्छत्वं निकर्षकारणं महाधृतित्वं तु उत्कर्षस्य स्मयाभावस्य कारणमिति उपमेयोपमानगतौ युगपद् उत्कर्षापकर्षहेतू उक्तौ। अत्रैव 'इत्यरस्य जनस्येव न स्मयोऽस्य महाधृतेः' इति पाठे महाधृतित्वमुपमेयोत्कर्षहेतुः। 'तुच्छस्यान्यजनस्येव न स्मयो यस्य लक्षितः' इति तु पाठे तुच्छत्वमुपमानापकर्षहेतुः स्यात्। तथात्रैव द्वयोर्युगपद् अनुपादानेऽपि ज्ञेयमित्याह वृत्तिकृद्—अत्रैव तुच्छेति। यथा वा—

शीर्णपर्णाम्बुवाताशकाष्ठेऽपि तपसि स्थिता।
समुद्वहन्ती नापूर्वं गर्वमन्यतपस्विवत् ॥

आशो भक्षणम्। गर्वानुद्वहनेन उपमानाद् उपमेयस्याधिक्यं, गर्वोपक्रमावस्थापेक्षं चोपमानोपमेययोः सादृश्यम्। वतिश्च शाब्दीमुपमानोपमेयतां द्योतयति। अत्र उपमेयोपमानगतयोरुत्कर्षापकर्षहेत्वोर्द्वयोरपि अनुक्तिरिति चत्वारो भेदाः। एवमन्येष्विति। आर्थादौ चतुष्कपञ्चकेऽपि दर्शितदर्शिना उदाहरणैरन्यद् भेदत्रयं द्रष्टव्यमित्यर्थः॥

## विवेकः

तत्रोभयोपादाने यथा—असिमात्रेत्यादि। स्मयो गर्वः। तुच्छेत्युपमानापकर्षनिमित्तं महाधृतेरित्युपमेयोत्कर्षनिमित्तम्, तदिहाप्युपमानधर्मस्योपमेयेऽविगमाद्वैधर्म्येण दृष्टान्त इवशब्दप्रतिपादितः। इदमेव हि 'सधृतेरन्यथा स्मय' इति पाठे निकर्षहेत्वनुपादाने, 'अन्यस्येवास्य न स्मय' इति पाठे उभयानुपादाने। एवमिति-अन्येष्वप्यर्थादिषु।

## दीपिका

पत्रम् असिरेव पक्षं सूत्रनिशितत्वात् असि मात्रेऽति तु पाठो व्यक्त एव। एवमिति पाठविपर्यासे चतुर्भेदोदाहृतियोग्यत्वं गुणा गाम्भीर्यादयस्तन्तवश्च।

## साहित्यचूडामणिः

असिमात्रेति। अत्रोपमाने तुच्छत्वमपकर्षनिमित्तम्, उपमेये महाधृतित्वमुत्कर्षहेतुः, अतो हेत्वोरुक्तिः।

अन्यत्रोन्नेतुं शक्यमित्याह—अत्रैवेति। पर्यायेणेति।

नूनमन्यजनस्येव न स्मयोऽस्य महाधृतेः।
अन्यतुच्छजनस्येव न स्मयोऽस्य महीपतेः।
नूनमन्यजनस्येव न स्मयोऽस्य महीपतेः। इति पाठे।

औपम्यमाह—इवशब्दस्येति। उपमावदिति भावः।

## सम्प्रदायप्रकाशिनी

असिमात्रेति। अत्र तुच्छत्वमुपमाननिकर्षस्य कारणं महाधृतित्वमुपमेयोत्कर्षस्य।

एतदेव लाघवार्थमनुक्तित्रयेऽप्युदाहरणीचिकीर्षुराह—अत्रैव तुच्छेत्यादि। 'अभूदन्यजनस्येवे'ति निकर्षस्य, 'न स्मयोऽस्य महीपतेरि'ति प्रकर्षस्य च पर्यायेणानुक्तौ द्वौ। युगपनुक्तौ त्रयः। एतदनुक्तित्रयमौपम्यस्यार्थत्वे अर्थादाक्षेपे न विज्ञेयमित्याह—एवमन्येष्वपीति। उक्तचतुष्के औपम्यं शाब्दमित्याह—अत्रेशब्दस्येति।

### मधुमती

असिमात्रेति। अत्र तुच्छत्वं निकर्षकारणं उपमानस्य, महाधृतित्वं उत्कर्षकारणं उपमेयस्यं। एवं च तदुभयोपादानात् इवशब्दस्य श्रुतेश्च शाब्दोपम्ये हेतुद्वयोपनिबन्धतः व्यतिरेकः।

उदाहरणगौरवेण ग्रन्थगौरवमाशङ्कमानः अत्रैव अनुक्तित्रयनिबन्धनं व्यतिरेकं हेतुवाचकपदावापोद्वापाभ्यां कथयति—अत्रैवेति। पर्यायेणेति। अयुगपदित्यर्थः।

### विस्तारिका

असिमात्रेत्यादि। प्रभूतः प्रभावयुक्तः। तुच्छो हीनगुणः। स्मयो गर्वः।

अत्रारिपराभवः समानो धर्मः। महाधृतित्वं तुच्छत्वं चोत्कर्षापकर्षहेतू।

अत्रेवेत्यादि। यथा गौरवभयादेकत्रैव पठ्यमानविवर्तनेन लक्ष्यत्वप्रदर्शनम्। पर्यायेण क्रमशः। अस्य व्यतिरेकस्यान्येषु लक्ष्येषु। एवमुपादानानुपादानाभ्याम्। शाब्दं श्रुतिमात्रगम्यम्।

### सारबोधिनी

असीति। न स्मयो गर्वः। अरिपराभवः समानो धर्मः। महाधृतित्वम् तुच्छत्वञ्चोत्कर्षापकर्षहेतू। एवं सर्वत्र बोद्धव्यम्।

### काव्यप्रदीपः

हेत्वोरुक्तौ शाब्दे साम्ये यथा—

> **'असिमात्रसहायस्य प्रभूतारिपराभवे।**
> **अन्यतुच्छजनस्येव न स्मयोऽस्य महामतेः॥'**

अत्रोपमाने तुच्छत्वमुपमेये महाधृतित्वं च हेतू। इवशब्दसत्त्वाच्च शाब्दमौपम्यम्। अत्रैव तुच्छत्वमात्रस्य महाधृतित्वमात्रस्य वा द्वयोरपि वा क्रमेणानुपादाने हेत्वनुपादानभेदत्रयेऽपि शाब्दौपम्यभेदत्रयं द्रष्टव्यम्।

### आदर्शः

असिमात्रेति। अस्य भूपतेरसिमात्रसहायस्यापि प्रभूतानां बहूनामरीणां पराभवे कृते सत्यन्यस्य तुच्छजनस्येव न स्मयो न गर्वः, यता महाधृतिः। अत्र तुच्छत्वमुपमानस्य निकर्षहेतुः, महाधृतित्वमुपमेयस्य उत्कर्षहेतुरिति हेतुद्वयोक्तिः। अत्रैवानुक्तित्रयमपि दर्शयति—अत्रैवेति। एवमन्येष्वपीति। अत्र शाब्दौपम्ये यथा हेतुद्वयोक्त्युदाहरणमेव दर्शितम्, तथार्थौपम्याक्षिप्तौपम्ययोरपि तन्मात्रं मया दर्शयिष्यते। तत्रैवानुक्तित्रयमपि बोध्यम्। एवं श्लेषेऽपीत्यर्थः। अत्रौपम्यस्य शाब्दत्वं ग्राहयति—अत्रेवशब्द इति।

### सुधासागरः

तत्राश्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दे साम्ये यथा—असीति।

महाधृतेः शौर्यातिशयेनाधिकधैर्यस्य अत एवासिमात्रसहायस्यास्य वीरस्य प्रभूतानां प्रबलनामरीणां पराभवे पराजये अन्यतुच्छजनस्येव स्मयो न, अत्युत्कृष्टजयलाभेऽपि गर्वो न जायत इत्यर्थः ।

उदाहरणगौरवेण ग्रन्थगौरवमाशङ्कमानोऽत्रैवानुक्तित्रयनिबन्धनं व्यतिरेकहेतुवाचकपदावापोद्वापाभ्यां कथयति—

अत्रैव तुच्छेत्यादि । अत्रोपमाने तुच्छत्वमुपमेये महाधृतित्वं च हेतू, इव शब्दसत्त्वाच्च शाब्दमौपम्यम् । अत्रैव तुच्छत्वमात्रस्य महाधृतित्वमात्रस्य वा द्वयोरपि वा क्रमेणानुपादाने हेत्वनुपादानत्रयेऽपि शाब्दौपम्यभेदत्रयं द्रष्टव्यमित्याशयः ।

**असिमात्रसहायोऽपि प्रभूतारिपराभवे।**
**नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥ ४६४ ॥**

**अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम्।**

---

### सङ्केतः

आर्थसाम्ये यथा—असीति। अत्रापि उत्कर्षापकर्षहेत्वोः द्वयोरुक्तिः। इह अर्थौपम्ये, पूर्वत्र च शाब्दौपमम्ये व्यतिरेकस्य आद्यो भेदः। शेषत्रिभेदी स्वेनोह्या।

### बालचित्तानुरञ्जनी

—वतिप्रयोगे हेत्वोरुक्तिरेकः तुच्छपदानुपादाने अपरः, वतिपदानुपादाने अन्त्यः, उभयानुपादाने अन्त्यः उभयानुपादाने एक इति चत्वारो भेदाः इत्यर्थः [?]।

### काव्यादर्शः

आर्थेन साम्ये, यथा—'असिमात्रे'ति। अत्रापि उत्कर्षापकर्षहेत्वोर्द्वयोरुक्तिः। यत्र 'तत्र तस्येव' इत्यनेन इवार्थे वतिः, तत्र श्रौतमौपम्यम्। यत्र तु 'तेन तुल्यं क्रिया चेद् वतिः' इत्यनेन वतिः, तत्र आर्थमौपम्यमित्याह—तुल्यार्थेऽत्रेति। एवमन्यद् भेदत्रयं ज्ञेयम्।

### विवेकः

तत्रार्थे यथा—अत्र 'अन्य तुच्छव'दिति वतिप्रत्ययोपादान-सामर्थ्यादौपम्यं शब्दस्पृष्टम्। 'तेन तुल्य' मित्यादिना (पा० ५.१.११५) विहितत्वा श्रौतम्, तद्वदिवादिना 'तत्र तस्येवे' — (पा० ५.१.११६) त्यनेन विहितेन वतिना च भवतीत्युक्तमेव। अत्र पूर्ववदुत्कर्षादिनिमित्तानुपादानाद्भेदत्रयं द्रष्टव्यम्।

### साहित्यचूडामणिः

एतदार्थत्वौचित्यापेक्षयान्यथा पठति—असिमात्रेति।

### सम्प्रदायप्रकाशिनी

आर्थत्वे उदाहरति—असिमात्रेति। प्रथमान्तत्वात् पुनर्लेखा।

आर्थत्वं दर्शयति—तुल्यार्थ इति। 'तेन तुल्यं-' इति। वतावौपम्यमार्थमिति उपमालङ्कारे निरूपितं यतः। एवमनुक्तित्रयेण सह तेऽपि चत्वारः।

### विस्तारिका

तुच्छजनेन तुल्यस्तुच्छजनवत् आर्थमाकाङ्क्षागम्यम् ।

उत्कर्ष निकर्षहेतू वोपात्तौ ।

### आदर्शः

अर्थौपम्ये उदाहरति—असिमात्रसहायोऽपि । अत्र तुल्यार्थे इति ।

षष्ठीसप्तम्यन्तत्वाभावेन इवार्थे तदप्राप्तेः । अत्र तुच्छत्वधृतिनिधित्वयोर्हेत्वोरनुक्तित्रयं बोध्यम् ।

### सुधासागरः

हेतुद्वयोपादाने एवार्थसाम्ये यथा—असीति ।

आक्षिप्ते साम्ये यथा—असीति ।

**इयं सुनयना दासीकृततामरसश्रिया।**

**आननेनाकलङ्केन जयतीन्दुं कलङ्किनम्॥४६५॥**

अत्रेवादितुल्यादिपदविरहेण, आक्षिप्तौवोपमा।

---

**सङ्केतः**

इयमिति। अत्र उपमानोपमेयगं अकलङ्ककलङ्कित्वरूपं उत्कर्षापकर्षकारणं उक्तम्। अयं आक्षिप्तौपम्ये व्यतिरेकस्य आद्यो भेदः यथावा—'क्षीणः क्षीणोऽपि शशी' इति। अत्र यौवने उपमेये चन्द्रे चोपमाने क्रमेण अस्थैर्या- धिक्यहानी उत्कर्षापकर्षकारणे उक्ते। अयं आद्यो भेदः। अनुक्ता त्रिभेदा स्वा यथा—

**नित्योदितप्रतापस्य तपनेन तुला न ते।**

इति। अत्र नित्योदितप्रतापत्वं उपमेयोत्कर्षहेतुः। यथा वा—

'नियतिकृतनियमरहितां ह्लादैकमयीं अनन्यपरतन्त्राम्।

**नवरसरुचिरां निर्मितिं आदधती भारती कवेर्जयति॥'**

इति। अत्र उपमेयोत्कर्षहेतुः। पूर्वत्र 'क्षणोदितप्रतापेन' इति पाठे उपमानापकर्षहेतुः। तत्रैव—

**'महीमण्डलमाणक्य! तपनेन तुला न ते।'**

**इति पाठे तु उत्कर्षापकर्षहेत्वोः द्वयोरप्यनुक्तिः इति आक्षिप्तौपम्ये चतुर्भेदी।**

**बालचित्तानुरञ्जनी**

आक्षेपे अपरान् चतुरो भेदानुदाहरति इयमिति। सुनयना इयं दासीकृततामरसश्रिया अकलङ्केनाननेन कलङ्कितमिन्दुं जयति। अकलङ्केनेति उत्कर्षहेतुः। कलङ्कमित्यपकर्षहेतुः। उभयोरुक्तौ एकः। "आननेन मनोज्ञेन जयतीन्दुं कलङ्कितमि"ति पाठे अपकर्षहेतूक्तौ द्वितीयः। "आननेन मनोज्ञेन न जयत्यमृतदीधिमि"ति पाठे अपक- र्षहेत्वनुक्तौ तृतीयः। आननेन मनोज्ञेन जयत्यमृतदीधितिमिति उभयानुक्तौ चतुर्थः।

**काव्यादर्शः**

आक्षिप्तौपम्ये यथा—'इयं सुनयना' इति। अत्र अकलङ्ककलङ्कितत्वे उपमेयोपमानगते युगपद् उत्कर्षा- पकर्षहेतू उक्तौ। अनुक्तौ भेदत्रयं यथा—

**नवीनविभ्रमोद्भेदतरंगितगतिः सदा।**

**मुखेन स्मितमुग्धेन जयत्येषा सरोरुहम्॥**

—अत्र स्मितमुग्धत्वमुपमेयोत्कर्षहेतुः । अत्रैव 'विडम्बयति वक्त्रेण निश्च्यवस्मितमम्बुजम्' इति पाठे उपमानपकर्षः । 'अहो विडम्बयत्येषा वदनेन सरोरुहम्' अत्र उत्कर्षापकर्षहेत्वोर्द्वयोरपि अनुक्तिरिति चत्वारो भेदाः । साम्यं तु आक्षेपात् सर्वत्र प्रतीयते ।

## विवेकः

आक्षेपादावौपम्यं यथा—इयं सुनयनेति । दासीकृततामरसश्रियेत्यनेन विशेषणम् । अत्रेन्दुरुपमानमाननमुपमेयं जयतीति व्यतिरेकाभिधानं कलङ्कित्वं निकर्षनिमित्तं शाब्दम् । अकलङ्कत्वमुत्कर्षनिमित्तम् । औपम्यं त्विवादिशब्दानुपादानान्न शाब्दं, नापि तुल्यादिप्रदानामश्रुतेरार्थं किन्त्वाक्षेपलब्धमित्याह आक्षिप्तैवोपमेति ।

## साहित्यचूडामणिः

साम्यस्याक्षेप उदाहरति इयमिति ।

**आननेन मनोज्ञेन जयतीन्दुं कलङ्किनम् ।**
**आननेनाकलङ्केन जयत्यमृतदीधितिम् ॥**
**आननेन मनोज्ञेन जयत्यमृतदीधितिम् ॥**

इत्युन्नयनप्रकाराः ।

## सम्प्रदायप्रकाशिनी

अर्थादाक्षेप उदाहरति—इयं सुनयनेति ।

दासीकारेणौपम्यमाक्षिप्यत इत्याह—अत्रेवादीत्यादि । अकलङ्ककलङ्केति । प्रकर्षनिकर्षोक्तिः । एतेऽप्यनुक्तित्रयेण सह चत्वारः ।

## विस्तारिका

दासीकृतेत्याद्यालम्बनविशेषणम् ।

आक्षिप्तैवेत्यादि । उपमेयमाननम्, उपमानीभूतविधर्मसजातीयोत्कृष्टधर्मवत् । उपमेयत्वे सति तस्योपमानस्य जेतृत्वादित्याक्षेपेणानुमानेन गम्यमित्यर्थः ।

## सारबोधिनी

इयमिति । दासीकृता निर्जिता ।

### काव्यप्रदीपः

हेत्वोरुक्तावेवाक्षिप्ते साम्ये यथा—

**'इयं सुनयना दासीकृततामरसश्रिया।**
**आननेनाकलङ्केन निन्दतीन्दुं कलङ्किनम्॥'**

अत्राकलङ्कित्वकलङ्कित्वे हेतू समुपात्तौ। इवादीनां तुल्यादीनां वाभावादाक्षिप्तमौपम्यम्। अत्रैव हेत्वनुपादाने भेदत्रयं पूर्ववद्द्रष्टव्यम्। न चाक्षिप्तभेद उपमायां शङ्कनीयः। जयत्यादिशब्दस्यावश्यकतया व्यतिरेकेण विषयापहारात्।

### काव्यप्रकाशखण्डनम्

यथा

**इयं सुनयना दासी कृततामरसश्रिया।**
**आननेनाकलङ्केन जयन्तीन्दुं कलङ्कितनम्॥**

इयं नायिका सुनयना शोभननेत्रा अकलङ्केन निर्दूषणेन आननेन मुखेन कलङ्कित कलङ्कयुक्तं इन्दुं चन्द्रं जयति। आननेन कीदृशेन? दासीकृता तामरस्य पद्मस्य श्रीः शोभा येनेत्यर्थः।

### आदर्शः

आक्षिप्तौपम्ये आह—इयं सुनयनेति। इयं सुनयना अकलङ्केन दासीकृततामरसश्रिया आननेन कलङ्किनमिन्दुं जयतीत्यर्थः। बहुव्रीहौ भाषितपुंस्कत्वात् पुंवद्भावेन 'श्रिणे'ति नोक्तम्। तत्राऽऽक्षिप्तौपम्यत्वं ग्राहयति—अत्रेवादीति। अत्राप्यकलङ्कित्वयोरन्यदनुक्तित्रयाधीनं भेदत्रयं बोध्यम्।

### सुधासागरः

अत्रेत्यादि। अत्र कलङ्कित्वाकलङ्कित्वे हेतू समुपात्तौ। इवादीनां तुल्यादीनां वाऽभावादाक्षिप्तौपम्यम्। अत्रैव हेत्वनुपादाने भेदत्रयं पूर्ववद् द्रष्टव्यम्। न चाक्षिप्तभेद उपमायां शङ्कनीयः, जयत्यादिशब्दस्यावश्यकतया व्यतिरेकेण विषयापहारादिति भावः।

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।

अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ।। ४६६ ।।

अत्रेवार्थे वतिः, गुणशब्दः श्लिष्टः शाब्दमौपम्यम् ।

---

**सङ्केतः**

जितेन्द्रियतयेति । अत्र विद्यावृद्धनिषेवा गाढगुणत्वोत्कर्षे हेतुः । भङ्गुरगुणत्वनिकर्षे हेतुः नोपात्तः इति उपमानगतनिकर्षहेत्वोनुक्तौ शाब्दौपम्ये श्लेषव्यतिरेकस्य तृतीय भेदः ।

**बालचित्तानुरञ्जनी**

एवं द्वादशभेदानुदाहृत्य शाब्देन श्लिष्टानपरान् चतुरो भेदानुदाहरति जितेति । जितन्द्रियतया सम्यक् विद्यावृद्धनिवेषिणः । अतिगाढगुणस्य गुणा अब्जवत् भङ्गुरा न भवन्ति । अत्र तत्र तस्यैवेति इवार्थे वतिविधानात् शाब्दमौपम्यम् । गुणाः सौजन्यादयः मृणालसूत्राणि चेति गुणशब्दः श्लिष्टः । विद्यावृद्धनिषेवणं गाढगुणोत्कर्षे हेतुः । भङ्गुरगुणनिःकर्षहेतुनोपात्त इति उपमानगतनिकर्षहेतूपादाने शाब्दौपम्ये व्यतिरेकस्य तृतीयो भेदो दर्शितः । अवशिष्टत्रयं स्वयमूह्यम् ।

**काव्यादर्शः**

श्लेषे शाब्दमौपम्यं यथा—'जितेन्द्रिये'ति । अत्र उपमेयोपमानयोरुत्कर्षापकर्षहेत्वोरुक्तिः ।

**विवेकः**

अत्राप्युत्कर्षाद्यनुपादानाद्भेदत्रयम् । अथ श्लिष्टेपीत्याह जितेत्यादि । अब्जवदिति—अत्रेवार्थे वतिरिति शाब्दम् । गुणश्द औदार्यादौ तन्तुषु च श्लिष इति ।

**दर्पणः**

विषमा अनुस्थिरा दृष्टिर्यस्य । विषमास्तिभ्रो दृष्टयश्चक्षूंषि यस्येति च [?] तृषो [वृषो] दैत्यभेदो धर्मश्च । करोरश्मिगर्द्रलादानं च [करो रश्मिः] ।

**साहित्यचूडामणिः**

श्लेष उदाहरति–जितेति । इवार्थे वतिः गुणशब्दः श्लिष्ट इति । गुणा हि सौजन्यादयो मृणालसूत्राणि च ।

**सम्प्रदायप्रकाशिनी**

श्लेषहेतुयोदाहरति—जितेन्द्रियेति ।

औपम्यस्य शाब्दतां दर्शयति—अत्रेवार्थ इति। श्लेषहेतुतामाह—गुणशब्द इति। अतिगाढेति भङ्गुरेति च प्रकर्षनिकर्षोक्तिः। एतेऽपि पूर्ववच्चत्वारः।

### मधुमती

जितेन्द्रियतयेति। अत्र विद्यावृद्धनिषेवा गाढगुणत्वोत्कर्षे हेतुः। भङ्गुरगुणत्वनिकर्षे हेतुः नोपात्तः इति उपमानगतनिकर्षहेत्वनुक्तौ शाब्दौपम्ये श्लेषव्यतिरेकस्य तृतीयो भेदः।

### विस्तारिका

एतान्युदाहरणान्यश्लेषेण।

श्लेषेणाह—जितेन्द्रियेत्यादि। जितेन्द्रियत्वेन पण्डितोपजीवितम्।

गाढो विरोधिसहस्रैरप्यच्छेद्यः। आप्तस्येति। षष्ठ्यन्ताद्वतिः। शिलष्ट इति गुणः पाण्डित्यादि सूत्रं च। गाढत्वभङ्गुरत्वे उत्कर्षनिकर्षहेतू उपात्तौ।

### सारबोधिनी

श्लेषेणाह जितेन्द्रियादि। अब्जस्येति षष्ठ्यन्ताद्वतिः। शिलष्ट इति गुणः। पाण्डित्यादिसूत्रं गुरत्वे उत्कर्षनिकर्षहेतू।

### काव्यप्रदीपः

अथ शिलष्टभेदेषु हेत्वोरुक्तौ शाब्दमौपम्यं यथा—

**'जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः।**
**अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः॥'**

अत्र शिलष्टो गुणशब्दः। तदर्थस्यातिगाढत्वभङ्गुरत्वे च हेतू समुपात्ते। इवार्थे वतिरिति शाब्दमौपम्यम्। अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम्।

### आदर्शः

श्लेषेऽप्येतद्वादशके उदाहर्त्तव्ये।

शाब्दौपम्ये हेतुद्वयोक्त्युदाहरणमाह—जितेन्द्रियेति। अत्रातिगाढगुणत्वे विद्यावृद्धनिषेवित्वं तत्र च जितेन्द्रियत्वं हेतुः। अत्र गुणगतगाढत्वभङ्गुरत्वे उत्कर्षनिकर्षहेतू। अनयोरनुक्तित्रयेणान्यद् भेदत्रयं बोध्यम्। तत्र चातिगाढत्वानुपादाने 'नानाविधगुणस्यास्ये'ति वाच्यम्। भङ्गुरत्वानुपादाने तु 'न तामरसवद् गुणा' इति वाच्यम्। अत्रेवार्थ इति। अब्जस्येवेति षष्ठ्यन्तादुत्पन्नत्वात्।

## सुधासागरः

अथ श्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दमौपम्यं यथा—जितेन्द्रियेति । स्पष्टम् ।

अत्र श्लिष्टो गुणशब्दः, तदर्थस्यातिगाढत्वभङ्गुरत्वे च हेतू समुपात्तौ । इवार्थे वतिरिति शाब्दमौपम्यम् । अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम् ।

**अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः ।**

**न निशाकरवज्जातु कलावैकल्यमागतः ।। ४६७ ।।**

अत्र तुल्यार्थे वतिः कलाशब्दः श्लिष्टः ।

---

**सङ्केतः**

अखण्डेति । अयं उपमानगतनिकर्षहेत्वनुक्तौ आर्थौपम्ये तृतीयो भेदः ।

**बालचित्तानुरञ्जनी**

तुल्यादिना अर्थेनापि चतुरो भेदानुदाहरति अखण्डेति । यस्य श्रीमानखण्डमण्डल एष पृथिवीपतिः जातु कदाचित्, निशाकरवत् कलावैकल्यं नागतः । अत्र तुल्यार्थे वतिः तेन तुल्यं क्रियाचेद्वतिरित्यनेन । कलेति । कला विद्यादिभागश्च । अत्र उपमेये अखण्डमण्डलत्वे श्रीमत्त्वं हेतुः कलावैकल्यहेतुर्नोक्त इति उपमानगतनिकर्षकारणानुपादाने अर्थोपदाने अथौपम्ये श्लेषव्यतिरेकस्य तृतीयो भेदो दर्शितः ।

**काव्यादर्शः**

'अखण्डे'ति । अत्र उपमेयगतोत्कर्षोपमानगतनिकर्षकारणोपादाने आर्थौपम्ये श्लेषव्यतिरेकस्य प्रथमो भेदः ।

**विवेकः**

"अतः परं 'अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः । न निशाकरवज्जातु कलावैकल्यमागतः ॥ अत्र तुल्यार्थे वतिः, कलाशब्दः श्लिष्ट' इति पाठः । ततो 'नित्योदितप्रतापेन त्रियामामिलितप्रभः । भास्वताऽनेन भूपेन भास्वानेष विनिर्जितः । अत्र ह्याक्षिप्तैवोपमा, भास्वतेति श्लिष्ट' इति पाठः, तस्य च श्लिष्टत्वं भास्वरत्वस्य समारोपात् रवित्वस्य प्रतिपादनात्" (रु. सं. ६५ पृ:) ।

**दीपिका**

मण्डलमौशनासादितंन्त्रप्रसिद्धं द्वादशराजकं दिक्चक्रवालञ्च । कला विज्ञानानि भागाश्च । कलाशब्द इत्युपलक्षणं मण्डलशब्दोऽपि योज्यः ।

**साहित्यचूडामणिः**

कलाशब्दः श्लिष्ट इति । कला विद्या भागश्चेति श्लेषः । तुल्यार्थे वतिः, तेन तुल्यम्—(५-१-११५) इत्यादिना ।

**सम्प्रदायप्रकाशिनी**

अखण्डेति । मण्डलं कटकं बिम्बं च । कलाः शकलानि शिल्पानि च ।

### विस्तारिका

मण्डलं राजचक्रं बिम्बं च। श्रीः सम्पत्तिः शोभा च। कला नृत्यादिकौशलं चन्द्रषोडशभागश्च। जातु कदापि अखण्डमण्डलत्वकलावैकल्ये उत्कर्षनिकर्षहेतू।

### सारबोधिनी

अखण्डेति। मण्डलं राजचक्रम् बिम्बञ्च। श्रीः सम्पत् शोभा च। कला चित्रादिकौशलं चन्द्रषोडशभागश्च। अखण्डमण्डलत्वकलावैकल्ये उत्कर्षनिकर्षहेतू।

### काव्यप्रदीप

तत्रैवार्थे साम्ये यथा—

**'अखण्डमण्डलः श्रीमान्पश्यैष पृथिवीपतिः।**
**न निशाकरवज्जातु कलावैकल्यमागतः॥'**

अत्र कलाशब्दः श्लिष्टः कलावैकल्यतदभावौ हेतू शब्दोपात्तौ। तुल्यार्थे वतिरित्यार्थमौपम्यम्। अत्रानुपादानत्रयं चिन्त्यम्।

### आदर्शः

आर्थौपम्ये श्लेषे उदाहरति—अखण्डेति, मण्डलं राजचक्रं बिम्बञ्च, कला वैदग्ध्यं चन्द्रषोडशांशश्च। अत्रेति। निशाकरेण तुल्य इत्यर्थकत्वे षष्ठ्यन्तादनुत्पत्तेः। निशाकरस्य तुल्य इत्यर्थे तु वतिर्न भवति, साधारणधर्मनिष्ठसम्बन्धबोधकषष्ठ्यन्तादेव तदनुशासनात्। कलाशब्द इति। इदमुपलक्षणम्, मण्डलशब्दोऽपीति बोध्यम्। अत्राखण्डमण्डलत्व-कलावैकल्ये उत्कर्षनिकर्षहेतू। अनयोरनुक्तित्रयेणान्यद्भेदत्रयं बोध्यम्। तत्र चाखण्डत्वानुपादाने प्रसन्नेति वाच्यम्। वैकल्यानुपादाने कलावैशिष्ट्यमिति वाच्यम्। अनयोः साधर्म्यांशे श्लेषः।

### सुधासागरः

अत्रैवाऽर्थे साम्ये यथा—अखण्डेति।

अखण्डं मण्डलं राजचक्रं बिम्बं च, श्रीः सम्पत् शोभा च, कला चित्रादिकौशलं चन्द्रषोडशभागश्च। अखण्डमण्डलत्वकलावैकल्ये उत्कर्षनिकर्षहेतू। अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम्। तथा चोत्कर्षकानुपादाने 'श्रीमानित्यादि' यथाश्रुतान्वये व्यतिरेकः स्पष्टः। अपकर्षकानुपादाने 'अखण्डमण्डलः श्रीमानेष पृथिवीपतिः जातु निशाकरवन्न, निशाकरः कदाचित्खण्डमण्डलोऽपि भवति इति भाव इति स्पष्ट एव व्यतिरेकः। उभयानुपादाने 'श्रीमानेष पृथवीपतिः जातु निशाकरवन्न, निशाकरः कदाचिन्निः श्रीकोऽपि भवति' इति भावात् स्पष्टो व्यतिरेकः। एवञ्च गोविन्दमहामहोपाध्यायैः काव्यप्रदीपे यदुक्तम्—'अत्रानुपादानत्रयं चिन्त्यम्' इति, तदज्ञानविजृम्भितम्। अत एव वाग्देवतावतारोक्ति बृहस्पतिरप्याक्षेप्तुं न शक्नोतीत्यसकृदावेदितमस्माभिः।

मालाप्रतिवस्तूपमावत् मालाव्यतिरेकोऽपि संभवति। तस्यापि भेदा एव-मूह्याः। दिङ्मात्रमुदाह्रियते। यथा

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः।

रविवन्न चातिदुःखसहकरतापितभूः कदाचिदसि॥ ४६८॥

अत्र तुल्यार्थे वतिः विषमादयश्च शब्दाः श्लिष्टाः।

---

**सङ्केतः**

हरेति। वृषः धर्मो दानवश्च। अत्र हरेण तुल्यं वर्तते इत्यादिक्रमेण तुल्यार्थे वतिः। तेन अर्थौपम्यम्। अयं उभयानुक्तौ श्लेषव्यतिरेकस्य अन्त्यो भेदः। शेषं द्वयं स्वयं ज्ञेयम्।

**सङ्केतः (रुय्यकः)**

(एवमन्यत्रापीति)—एवमिति यथा व्यतिरेके। तत्र ह्येकस्य बहुभ्यो व्यतिरेकमाला।

व्यतिरेकतो यथा—

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि॥ इति

**बालचित्तानुरञ्जनी**

उभयानुक्तावुदाहरणमाह हरवदिति। भो विभो त्वं कदाचित् हरवत् विषमदृष्टिर्नासि। हरिवद्विधूतवि-ततवृषश्च नासि। रविरिव दुःसहकरज्वरतापितभूश्चापि नासि। हरेण तुल्यं वर्तत इत्यादि तुल्येऽर्थे वतेर्विधानात्। अर्थौपम्ये श्लेषव्यतिरेकस्य चतुर्थो भेदो दर्शितः। उत्कर्षापकर्षहेत्वोरन्यतरस्यानुक्तौ उदाहरणद्वयं स्वयमूहनी-यम्।

**काव्यादर्शः**

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः।
रविवन्न चापि दुःसहकरतापितभूः कदाचिदसि॥

'वृषो धर्मो दानवविशेषश्च।' अत्र तुल्यार्थे वतिर्विषमादयश्च शब्दाः श्लिष्टाः। अयमुत्कर्षापकर्षहेत्वो-रनुक्तौ चतुर्थो भेदः आर्थौपम्ये सति शेषं द्वयं ज्ञेयम्।

### सम्प्रदायप्रकाशिनी

आर्थतां श्लेषहेतुतां चाह—अत्र तुल्यार्थ इत्यादि। एतेऽपि चत्वारः।

### मधुमती

मालाव्यतिरेकमुदाहरति—हरवदिति। पूर्वं तस्यापीति। एवं च मालाव्यतिरेकेऽपि हेत्वभिधानादि-चतुष्टयं भवतीति द्रष्टव्यम्।

### विस्तारिका

यथेति। समानरूपत्वेन भेदे विषमदृष्टिस्त्रिलोचनः सर्वाननुकम्पकश्च। वृषो धर्मो गवाकृतिः पशुभे-दश्च। करो राजस्वं रश्मिश्च। तापित उद्वेजितो दाहं प्रापितश्च। भूर्लोकविशेषो धरणिस्थजनश्च।

अत्रविषमदृष्टित्वाभावेन समदृष्टित्वमाक्षिप्यत इति समदृष्टित्वविषमदृष्टित्वयोर्निकर्षोत्कर्षहेतूपादानम्। एतदेवोदाहरणभेदप्रदर्शनायां बीजमित्यवधेयम्।

### सारबोधिनी

यथा वेति। विषमदृष्टिस्त्रिलोचनः सर्वाननुकम्पकश्च। वृषो धर्मो गवाकृतिरसुरविशेषश्च। करो राजस्वं रश्मिश्च। तापितः उद्वेजितो दाहे प्रापितश्च। भूर्लोकविशेषो धरणिस्थजनश्च। अत्र विषमदृष्टितत्वमाक्षिप्यते इति निकर्षो निकर्षोत्कर्षहेतूपादानम्। एतदप्युदाहरणभेदप्रदर्शनायां बीजमित्यवधेयम्।

### काव्यप्रदीपः

अयमेव मालारूपो यथा—

**'हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः।**
**रविवन्न चापि दुःसहकरतापितभूः कदाचिदसि॥'**

पूर्ववत्।

### आदर्शः

आक्षिप्तौपम्ये उदाहरिष्यन्नार्थौपम्ये मालासम्भवं दृष्ट्वा आर्थौपम्यानन्तरमेव दर्शयति अत्र मालाप्रतिव-स्त्विति। अस्यापि भेदा इति, अनयैव हेतुद्वयोक्तितदनुक्तित्रयरीत्येत्यर्थः। मालामेव दर्शयति—हरवदिति। विषमा अयुग्मा लोकेषु न्यूनाऽधिका च। हरिवत् कृष्णवत् विधूतोऽपसारितो वृषो वृषासुरो येन, त्वं न तादृशः वृषस्य धर्मस्य त्वयाऽनपसारणात्। रविवदिति। करो रश्मी राजग्राह्यभागश्च। भूः पृथिवी तत्स्थ-लोकश्च। अत्र च निकर्षहेतुमात्रमुक्तम्। अन्यभेदास्तु यथासम्भवमूह्याः। अत्र च राज्ञि समदृष्टित्वस्य रक्षितवृषत्वस्य यथोचित-करग्राहित्वस्य चोपादाने हेतुद्वयोक्तिः, तन्मात्रामुपादाय न हरवन्न हरिवन्न रविवदिति करणेन च निकर्षहेत्वनुक्तिः। अत्र व्यतरेकप्रतियोग्ययंशे श्लेषः। उभयानुपादान्तु व्यतिरेकप्रतियोग्यंशे श्लेषे न सम्भवति, किन्तु नाब्जवद्गुणा

इत्यादिके साधर्म्यांशे श्लेष एव सम्भवतीति बोध्यम् । क्वचित् पुस्तके तु नित्योदितेत्यादिवक्ष्यमाणाक्षिप्तौपम्योदाहरणानन्तरमेवायं श्लोकस्तिष्ठति । तत्तु न युक्तम् आर्थौपम्यमालाया आर्थौपम्यकथनानन्तरमेव वक्तुमौचित्यात्, नित्योदितेत्याद्यनन्तरमप्याक्षिप्तौपम्योदाहरणान्तरस्य वक्ष्यमाणत्वात्तद्समापने मालाप्रदर्शनानौचित्याच्च ।

## सुधासागरः

अयमेव व्यतिरेको मालारूपो यथा—हरवन्नेति । आर्या छन्दः । विषमदृष्टिस्त्रिलोचनः सर्वाननुकम्पकश्च, वृषो धर्मो गवाकृतिरसुरभेदश्च । करो घट्टादौ राजग्राह्यो भागः रश्मिश्च, तापित उद्वेजितो दाहं प्रापितश्च । भूर्लोकविशेषो भूमिस्थजनश्च । अन्वयः स्पष्ट एव । अत्रैकस्यैवोपमेयस्य बहूपमानेभ्य आधिक्यवर्णनान्मालारूपता । अत्र विषमदृष्टित्वाद्यभावेन समदृष्टित्वमाक्षिप्यत इति निकर्षोत्कर्षहेतूपादानम् । न चात्र चातुर्विध्यं विवक्षितम् ।

**नित्योदितप्रतापेन त्रियामामीलितप्रभः ।**

**भास्वतानेन भूपेन भास्वानेष विनिर्जितः ।। ४६९ ।।**

अत्र ह्याक्षिप्तैवोपमा भास्वतेति श्लिष्टः ।

---

**सङ्केतः**

नित्योदितेति । अत्र उदितप्रतापत्व-मीलितप्रभत्वात्मनोः उपमेयोपमानगतोत्कर्षापकर्षहेत्वोः उक्तिरिति उभयोपादाने श्लेषव्यतिरेकान्त्यचतुष्कस्य आद्यो भेदः । भास्वतैव भास्वता इति भास्वरत्वारोपात् अर्कत्वप्रतिपत्तिरिति श्लिष्टता ।

**सङ्केतः (रुय्यकः)**

"नित्योदितप्रतापेन त्रियामामीलितप्रभः ।

भास्वताऽनेन भूपेन भास्वानेष विनिर्जतः ॥

अत्र ह्याक्षिप्तैवोपमा "भास्वतेति श्लिष्ट" इति पाठः । तस्य च श्लिष्टत्वं भास्वरत्वस्य समारोपाद् रवित्वस्य प्रतिपादनात् ।

**बालचित्तानुरञ्जनी**

श्लेषव्यतिरेकस्याक्षेपे उभयोपादानरूपं प्रथमं भेदमाह नित्योदितेति । नित्योदितप्रतापेन भास्वता तेन भूपेन त्रियामामीलितप्रभः एष भास्वान् विनिर्जितः । अत्र वर्णनीये भास्वत्त्वं परिभवासहत्वं अन्यत्र सूर्यत्वमिति श्लिष्ट इति उपमेयोपमानगतोत्कर्षनिकर्षहेत्वोरुपादाने आक्षेपौपम्ये श्लेषव्यतिरेकस्य प्रथमो भेदो दर्शितः ।

**काव्यादर्शः**

आक्षिप्तौपम्ये श्लेषव्यतिरेको यथा—'नित्योदिते'ति । 'भास्वता' इत्यस्य श्लिष्टत्वं, भास्वतेव भास्वतेति भासुरत्वस्यारोपगत्या रवित्वस्य च प्रतिपादनात् । अत्र उदितप्रतापत्वं मीलितप्रभुत्वं चोपमेयोपमानगते उत्कर्षापकर्षहेतू उक्ताविति श्लेषव्यतिरेकान्त्यचतुष्कस्य प्रथमो भेदः ॥

**दीपिका**

प्रतापः प्रकृष्टतापः प्रभावश्च भास्वतेत्यनन्तरं प्रतापेन चेति शेषः । विषमा 'स्थिरा दृष्टिर्यस्याथ च विषमास्तिस्रो दृष्टयो यस्येति विग्रहः । वृषो दानवभेदो धर्मश्च । करो रश्मिरर्धनादानञ्च ।

भास्वतेति । वर्णनीये भास्वत्त्वं परम्परीभावासहत्वम् । अन्यत्र सूर्यत्वम् ।

**सम्प्रदायप्रकाशिनी**

नित्योदितेति । निर्जयेनौपम्याक्षेप इत्याह—अत्राक्षिप्यैवेति । नित्योदितेन त्रियामामीलनेन च प्रकर्षनिकर्षोक्ति: । एतेऽपि चत्वार इति चतुर्विंशति: ।

**मधुमती**

भास्वेति श्लिष्ट: इति । अत्र अभिधानियमाभावात् अर्कभूपौ द्वावपि भास्वत्पदाभिधेयौ । ततश्च—भास्वानेव भास्वान् इति श्लिष्टरूपकेण अवरत्वं भास्वतो लभ्यत इति भाव: ।

**विस्तारिका**

आक्षिप्तौपम्यमाह—नित्योदितेत्यादि । प्रताप: पराक्रम: प्रकृष्टतापश्च । मीलिता ध्वन्यादिषु सत्स्वपि तेज: स्वनुपलभ्यमानता । जयतीत्यत्रैव निर्जित इत्यत्राक्षेपो मन्तव्य: । यद्वा पूर्ववत् प्रतापेनाश्लिष्टविशेषणेनाक्षेप: ।

**सारबोधिनी**

नित्योदितेति । प्रताप: पराक्रम: प्रकृष्टतापश्च ।

**काव्यप्रदीप:**

तत्रैवाक्षिप्ते साम्ये यथा—

**'नित्योदितप्रतापेन त्रियामामीलितप्रभ: ।**
**भास्वतानेन भूपेन भास्वानेष विनिर्जित: ॥'**

अत्र भास्वेति प्रतापेति च श्लिष्टं पूर्वार्धोपात्तं हेतुद्वयम् । इवादेस्तुल्यादिशब्दानां चाभावादाक्षिप्तैवोपमा । अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम् । निर्जितजयत्यादिशब्दाभावेऽपि श्लिष्टविशेषणेनौपम्याक्षेपादप्ययं भेद: संभवति ।

**आदर्श:**

आक्षिप्तौपम्ये श्लेषे उदाहरति—नित्योदितेति । अत्र नित्योदितप्रतापत्वत्रियामामीलितप्रभत्वे उत्कर्षनिकर्षहेतू । अन्यद् भेदत्रयञ्च पूर्ववदूह्यम् । अत्र श्लिष्टस्यापि भास्वच्छब्दस्य द्विरुपात्तत्वेनैतद्वशादपि प्रभेदान्तराणि सम्भवन्ति, तत्रापि शब्दार्थाक्षिप्तौपम्ये भेदोऽपि द्रष्टव्य इत्याह—इत्येवंजातीयका इति । एवं जितेन्द्रियतयेत्यत्रापि गुणशब्दवत् पृथगुपादानमवदेयम् । क्वचित् पुस्तके श्लोकान्तरानन्तरमेवेयं पंक्तिर्लिखिता तिष्ठति तत्तु न युक्तम्, पृथगुपात्तश्लिष्टपदविशिष्टश्लोकानन्तरमेव तदौचित्यात् ।

**सुधासागर:**

तत्रैवाक्षिप्ते साम्ये यथा—नित्योदितेति ।

नित्योदितः निरन्तरप्रकाशः प्रतापः पराक्रमो यस्य तादृशेन भास्वता देदीप्यमानेनानेन भूपेन त्रियामा रात्रिस्तत्र मीलिता प्रभा यस्य तादृगेष भास्वान् सूर्यो विनिर्जित इत्यर्थः।

अत्र भास्वतेति प्रतापेति च श्लिष्टम्। पूर्वार्धोपात्तं हेतुद्वयम्। इवादेस्तुल्यादिशब्दानां चाभावादाक्षिप्तैवोपमा।

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम्।
यूनामतीव पिबतां रजनीषु यत्र तृष्णां
जहार मधु नाननमङ्गनानाम्॥ ४७०॥

अत्रेवादीनां तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैराक्षिप्तैवोपमा प्रतीयते। एवं जातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येऽपि भेदाः संभवन्ति। तेऽपि, अनयैव दिशा द्रष्टव्याः॥

---

सङ्केतः

स्वच्छेति। समुल्लसितं प्रतिबिम्बितं इन्दुबिम्बं यत्रेति तत् तथा। मधु कर्तृ तृष्णां जहार न मुखम् इति योगः। अत्र तृष्णायाः हरणाहरणयोः कारणे नोपात्ते इति द्वयानुक्तिरिति उभयानुक्तौ श्लेषव्यतिरेकान्त्यचतुष्कस्य अन्त्यो भेदः। द्विभेदी स्वेनोह्या। एवं अन्येष्वपि द्रष्टव्यम्। इत्युक्त्या प्रतिचतुष्कं एकः कश्चिद्भेदो वाच्यः इति स्थितेऽपि यत् ग्रन्थकृता हरवत् इति स्वच्छात्मता इति च दृष्टान्तद्वयमूचे, तत् एकत्र व्यतिरेकमालात्वं, अन्यत्र अर्थश्लिष्टत्वं च विशेषं ज्ञापयितुम्। अत एव यथावा इत्युक्तम्।

पृथगुपादान इति। यथा उद्भटकुमारसम्भवे गौरीस्तुतौ—

'या शैशिरी श्रीस्तपसा मासेनैकेन विश्रुता।
तपसा तां सुदीर्घेण दूरात् विदधतीमधः॥'

इति। तपाः माघमासोऽपि एकेनेति सुदीर्घेमेति हेतुद्वयोक्तिः। अत्र 'तपसा' इति श्लिष्टोक्तियोग्यं पदं पृथगूचे। स्वं यथा—

सच्चक्रानन्दनोऽप्येषः न तुल्यः तपनस्तव।
ससूरस्संज्ञया येन ससूरः सुभटैर्भयात्॥

इति। अत्रापि हेत्वोरुक्तिः। इवाद्यभावात् अत्र पूर्वत्रापि आक्षिप्तौम्ये, द्वयोक्तौ श्लेषव्यतिरेकस्य आद्यो भेदः। अत्रापि श्लिष्टोक्तियोग्यपदस्य पृथग्भावः। अन्येऽपि इति एकादश भेदाः।

नन्वत्र श्लेषोपकारात् चमत्कारी व्यतिरेकः इति, तयोः अङ्गाङ्गिभावे सङ्करः स्यात्, न। द्वययोगे हि सङ्करः, न चात्र द्वयमस्ति। एवंविधश्लेषस्यैव व्यतिरेकापरनामत्वात्। परं व्यतिरेकरूपं अंशमाश्रित्य व्यतिरेकप्रभेदतया

श्लेषव्यतिरेकरूपतया उक्तम्। ये तु श्लिष्टोक्तियोग्यपदस्य पृथगुपादाने भेदाः, तत्र श्लेषगन्धोऽपि नास्ति। एकस्य पदस्य द्विरुपादानात्। इति व्यतिरेकः।

### बालचित्तानुरञ्जनी

द्वितीयतृतीयौ स्वयमूहनीयौ। एवं श्लिष्टभेदेषु द्वादशसु श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्ये द्वादशभेदाः सम्भवन्ति। तेऽप्युदाहार्या इत्याह इत्येवमिति।

**या शैशिरी श्रीस्तपसा मासेनैकेन विश्रुता।**
**तपसा तां सुदीर्घेण दूराद्विदधतीमधः॥**

एकत्र तपो माघमासः। अन्यत्र कृच्छ्रादि अभ्युदयहेतुः। इवादयश्चानुपात्ता अपि सामर्थ्यगम्याः। अत्र नय इति श्लिष्टोक्तियोग्यं पदं पृथगुपात्तम्। अतोऽयमपि श्लेषव्यतिरेक आक्षिप्ते औपम्ये उभयोपादानमिति। एवमन्येऽप्येकादशोहनीयाः।

### काव्यादर्शः

'स्वच्छात्मते'ति। 'मधु कर्तृ तृष्णां जहार, न मुखम्।' अत्र तृष्णाया हरणेऽहरणे च नोपात्तौ हेतुरिति उभयानुपादानाच्चतुर्थोऽयं भेदः श्लेषव्यतिरेकान्त्यचतुष्कस्य। शेषं द्वयमूह्यम्। 'एवमन्येष्वपि द्रष्टव्यम्' इति वचनात् प्रतिचतुष्कमेकः कश्चिद् भेदो वक्तुं संमत इति 'हरवद्' इति 'स्वच्छात्मता' इति च उदाहरणद्वयं ग्रन्थकाराभिप्रायेण न भवति। पृथगुपादानमिति। यथा—

या शैशिरी श्रीस्तपसा मासेनैकेन बिभ्रती।

तपसा तां सुदीर्घेण दूराद् विदधतीमधः॥

'तपो माघमासः, अन्यत्र तु अभ्युदयहेतुः कृच्छ्राचरणम्।' इवादय अनुपात्ता अपि सामर्थ्यगम्याः। अत्र 'तपसा' इति श्लिष्टोक्तियोग्यं पदं पृथगुपात्तम्, अतोऽयमपि श्लेषव्यतिरेक आक्षिप्ते औपम्ये उभयोपादाने सति। यथा वा—

**यद्यप्य[न]नुपचरितस्तथापि तव नाच्युतस्तुली [स] भवेत्।**
**स हरिर्नाम्ना देवः स हरिर्वरतुरगनिवहेन॥**

देवशब्दः प्रकरणाद् युष्मदर्थे। हेत्वोरुक्तौ आर्थौपम्यम्। अत्रापि श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानम्। एवमन्येऽपि एकादश भेदः।

ननु श्लेषव्यतिरेकयोरन्यत्र लब्धसत्ताकत्वात् श्लेषोपकृतत्वे व्यतिरेकस्याङ्गाङ्गिभावे संकरत्वं स्यात्। सत्यम्, श्लेषगर्भीकारेण व्यतिरिकलक्षणमंशमाश्रित्य एवंविधे श्लेषव्यतिरेकापरनामत्वान्न संकरः। ततस्तदनुचरणार्थमेवैष प्रकारो व्यतिरेकप्रकारतया व्यवस्थाप्यते।

## सम्प्रदायप्रकाशिनी

**स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं**
**बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम्।**
**यूनामतीव पिबतां रजनीषु यत्र**
**तृष्णां जहार मधु नाननमङ्गनानाम्॥**

अत्रेवादीनां तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैरेवाक्षिप्तोपमा प्रतीयते।

## मधुमती

न केवलं जयत्वादिपदैरेव उपमाऽऽक्षेपः अभिमतः। अपि तु यथा कथञ्चिदपि इति विभावयितुं उदाहरणान्तरमाह—स्वच्छेति। अत्र श्लेषमहिम्ना साम्यप्रतीतावपि—

**'तृष्णां जहार मधु नाननमङ्गनानाम्'**

इत्यतो वैलक्षण्यप्रतीतिरिति आर्थव्यतिरेकः इत्यर्थः। इति व्यतिरेकः।

## विस्तारिका

स्वच्छेत्यादि। स्वच्छात्मता चिक्कणता, सैवोत्कर्षकत्वेन गुणः, तेन समुल्लसितं पूर्णमिन्दुबिम्बमिति रूपकम्। मधुपक्षे स्वच्छता निर्म्मलता। समुल्लसितं प्रतिबिम्बितम् इन्दुबिम्बं यत्र। अधरो बिम्बप्रभां बिभर्ति च, जीर्णमधुनस्तुल्यत्वात्। अकृत्रिमं मुखवासनादिकं विना सुगन्धि, द्रव्यान्तरप्रक्षेपेण पणेन विना च, अत एव हृद्यः। अतीवेत्यखण्डमत्यर्थे। तृप्तता अधरपानेच्छामधुपानेच्छा च। श्लिष्टविशेषणैः स्वच्छात्मेत्यादिभिः। श्लिष्टत्वमुभयान्वितत्वम्। तृतीयया हेतुत्वप्रतिपादनम्। अङ्गनानामाननं मधुसदृशम्, तन्निष्ठहृद्यगन्धादिमत्त्वादिति श्लिष्टविशेषणैरौपम्याक्षेपः।

## सारबोधिनी

एवमन्यदप्याक्षेपकभेदेनाक्षिप्तौपम्यस्य विषयबाहुल्यप्रदर्शनमाह स्वच्छेति। स्वच्छात्मता नातिक्रूरता सैव गुणः। उत्कर्षकत्वेन समुल्लसितं इन्दुप्रतिबिम्बितं पूर्णमिन्दुबिम्बमिति रूपकम्। मधुपक्षे स्वच्छात्मता निर्मलता, समुल्लसितं बिम्बं यत्र न तथा बिम्बप्रभोऽधरो यत्र बिम्बप्रभां बिभर्ति च, जीर्णमधुनो रक्तत्वात्।

## काव्यप्रदीपः

यथा—

**'स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं**
**बिम्बप्रभाधरमकृत्रिमगन्धहृद्यम्।**

यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाननमङ्गनानाम्॥'

स्पष्टम्। शिलष्टोक्तियोग्यपदस्य पृथगुपादानेऽप्येवंजातीयका भेदाः संभवन्ति तेऽनयैव दिशा द्रष्टव्याः।

## आदर्शः

न केवलं निर्जयेनैवौपम्याक्षेपः अपि तु क्वचित् शिलष्टविशेषणैरपीत्युदाहरति—स्वच्छात्मतेति। यत्र पुरे अतीव पिबतां यनां तृष्णां मधु कर्त्तु जहार अङ्गनानाम् आनन्तु कर्तृ न जहार। मधुपाने तृष्णाविच्छेदोऽभूदङ्गनाधरपाने तु नेत्यर्थः। मध्याननयोर्द्वयोर्विशेषणान्याह—स्वच्छात्मतेति। उभयत्रैव स्वच्छात्मतागुणादिन्दुप्रतिबिम्बोल्लासः। आननपक्षे उल्लसितेन्दुबिम्बस्वरूपं वा। मधु बिम्बस्य चन्द्रबिम्बस्य प्रभाधारि, आनंनन्तु बिम्बफलप्रभोऽधरो यस्य तादृशम्। अकृत्रिमः स्वाभाविकः।

## सुधासागरः

अत्रैव पूर्ववदनुपादाने भेदत्रयम्। विनिर्जितयत्यादिपदाभावेऽपि शिलष्टविशेषणेनौपम्याक्षेपादप्ययं भेदः सम्भवति। यथा—स्वच्छेति।

स्वच्छात्मता चिक्कणता सैव गुणस्तेन समुल्लसितं स्वच्छदर्पण इव प्रतिबिम्बतमिन्दुबिम्बं यत्र तथाविधम् आननम्, पक्षे स्वच्छात्मतया गुणैः सौन्दर्याह्लादकत्वोद्दीपकत्वरूपैः सम्यगुल्लसितेन्दुबिम्बमिवेति, तादृशं बिम्बं पक्वं कुन्दुरूफलं तस्य प्रभां बिभर्त्तीति तादृशम्। अकृत्रिमहृद्यः स्वभावेन हृदयङ्गमो गन्धो यत्र तथाविधं मधु यत्र वसन्ते रजनीषु अतीव आतृप्ति पिबतां यूनां तरुणानां तृष्णां जहार, अङ्गनानां नायिकानामानन्तु तृष्णां न जहार। अधरपाने तृष्णैव स्थितेति भावः। वसन्ततिलका छन्दः। अत्रेवेत्यादि वृत्तिः स्पष्टा। एवमित्यादि। शिलष्टोक्तियोग्यस्य पृथगुपादानेऽप्येवंजातीयका भेदाः सम्भवन्ति तेऽनयैव दिशा द्रष्टव्या इत्यर्थः।

**(सू० १६१) निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥१०६ ॥**

**वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।**

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्य, अशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो निषेध इव यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधा, आक्षेपः । क्रमेणोदाहरणम्—

**ए एहि किंपि कीएवि कएण णिक्किव भणामि अलमह वा ।**

**अविआरिअकज्जारम्भ आरिणी मरउ ण भणिस्सं ॥ ४७१ ॥**

---

सङ्केतः

निषेध इति । ननु उक्तविषयत्वे वक्तुमिष्टत्वं कथम्? सत्यम् । उक्तमप्यादौ वक्तुमिष्टमेव । अशक्येति । वक्ष्यमाणविषयस्य लक्षणम्, अतिप्रसिद्धत्वमिति उक्तविषयस्य लक्षणम् । प्रस्तुतोऽर्थः प्रस्तुतत्वादेव विधानार्हः, न निषेधार्हः इति स्थिते, निषेधो यः सः नोपपद्यते इति, निषेधः निषेधाभासः सम्पन्नः । तस्यैतस्य करणं प्रकृतत्वेन विशेषोक्त्यर्थम् । अन्यथा गजस्नानतुल्यता स्यात् इत्याह—निषेध इवेति । द्विविध इति । उक्तविषयत्वेन कैमर्थक्यपरं आलोचनं आक्षेपः, वक्ष्यमाणविषयत्वेन आनयनरूपं आगूरणं आक्षेपः इति अर्थभेदात् आक्षेपौ द्वौ । विशेषश्चात्र शब्दानुपात्तत्वात् गम्यः । तत्राद्ये भेदे कथनस्यैव निषेधः । द्वितीये तु—क्वचिद्वस्तुनः क्वचिद्वस्तुकथनस्य च निषेधः ।

अविआरियेति । कार्य अन्यासक्तेऽपि त्वय्यनुरागरूपम् । अत्र ण भणिस्सं इति भणननिषेधात्—'यत् तस्याः त्वद्वियोगे सा सा अवस्था जायते, या या वक्तुमप्यशक्या'—इति लभ्यते । इष्टोऽर्थः निषेधमिषेणोत्कर्षितः इति भावः. कामावस्थाविशेषाणां च वक्ष्यमाणतया सूचनमिति आद्यो भेदः ।

सङ्केतः (रुय्यकः)

निषेध इवेति—न तु निषेध एव, प्रधानस्य निषेधमुखेन विशेष एव तात्पर्यात् ।

अन्यत्र चोक्तम्—

'प्रतिषेध इवेष्टस्य यो विशेषविधित्सये'ति ।

अय्येहि किमपि कस्या अपि कृते निष्कृप भणामि अलमथवा ।

अविचारितकार्यारम्भिणि म्रियतां न भणिष्यामि ॥

तस्याः फलस्य प्रकाशनं कविना प्रतिपादनं न तु भावनम्, कारणान्तरेण कार्योत्पत्तेरसम्भवात् । प्रसिद्धतरकारणनुपलब्धेस्तत्कार्योत्पत्तिरिहाहेतुकेति निबध्यते, तावन्मात्रलक्षणत्वाद्विभावनायाः । अस्याश्च न विरोधरूपत्वं, विरोधे द्वयोरपि परस्परं बाधात् । अत्र तु कार्योत्पत्तिरेव कारणप्रतिषेधेन बाध्यमाना प्रतिभाति, न तु विपर्य्ययेणापि बाधः कारणप्रतिषेधस्य । न हि बोधः प्रतिभासमानोऽपि ज्ञप्त्यपेक्षः, ज्ञप्तिश्चोत्पत्त्यपेक्षया दवीयसी न विभावनां प्रयोजयति । भवतु वाऽत्रापि सामान्येन परस्परं बाधः, तथापि न विरोधरूपत्वं, हेतुफलभाविशेषमाश्रित्य प्रवर्त्तनात्, अस्यास्तदपवादत्वात् ।

### बालचित्तानुरञ्जनी

आक्षेपालङ्कारं लक्षयति निषेध इति । व्याकरोति विवक्षितस्येति । वक्ष्यमाणविषयमुदाहरति एवं हीति । अयि सखि गच्छावः । कीएवि कस्या अपि । कएण कृते । कंपि किमपि । णिक्किव निःकृप । ण भणामि न भणामि अथवा अलम् । अविआरिअकज्जारंभणी अविचारितकार्यारम्भणी । अत्र म्रियताम् । ण भणिस्सम् न भणिष्यामि । अतः निःकृप न भणामीत्युक्ते अर्थात् सम्यक् भणामीति प्रतिज्ञा । न भणिष्यामीति निषेधात् वक्ष्यमाणविषयोऽयमाक्षेपः ।

### काव्यादर्शः

अशक्यवक्तव्यत्वमिति वक्ष्यमाणविषयस्य लक्षणम् । अतिप्रसिद्धत्वमिति उक्तविषयम् । निषेध इवेति । न तु निषेध एव, किं तु प्राकरणिकस्यार्थस्य प्रस्तुतत्वादेव प्रधानस्य वक्तुमिष्टस्य विशेषप्रतिपत्तये निषेधाभासः । विधानार्हस्य निषेधः कर्तुं न युज्यत इति निषेधमुखेन विशेष एव तात्पर्यमित्यर्थः । न स निषेधो वक्ष्यमाणस्य स्यादिति द्वयी गतिः ।

ननु, उक्तविषयत्वे कथं वक्तुमिष्टत्वं स्यात् । सत्यम्, उक्तप्यादौ वक्तुमिष्टमेव, विशेषस्य च शब्दानुपात्तत्वाद् आदिमत्त्वम् । तत्र वक्ष्यमाणविषये कथनमेव निषिध्यते, उक्तविषये च वस्तु निषिध्यते ।

'ए एहि' इति । 'अयि एहि किमपि कस्याश्चित् कृतेन निष्कृप भणामि अलमथवा ।' 'अवियारिअ' इति । 'कार्यं त्वदनुरागलक्षणं यान्यासक्तमपि त्वामभिलषति' इत्यर्थः । अत्र 'न भणिस्सम्' इति भणितिनिषेधे 'त्वददर्शनात् तास्ता अवस्थाः समुन्मिषन्ति या वक्तुमपि न शक्यन्ते' इति विशेषः प्रतीयते निषेधस्य निषेध इव, न तु निषेध एव तेनेष्टमर्थं प्रतिषेधव्याजेन उत्कर्षयति, मन्मथमाहात्म्यावस्थाविशेषाणां च वक्ष्यमाणतया सूचनमिति वक्ष्यमाणविषय आक्षेपः ।

### विवेकः

व्यतिरेको निषेधरूपस्ततस्तदनन्तरं निषेध्यतासद्रूपमाक्षेपं लक्षयति निषेध इति । विवक्षितस्य निषेधः कर्तुं न युज्यते, स कृतो बाधितविषयत्वान्निषेधायत इत्याह निषेध इवेति । एतत्कृतिश्च प्रकृतिगतत्वेन विशेषाभिधानार्थं निषेधाभासश्च यथा सूत्रिताभिधेयत्वेन वक्ष्यमाणरूपस्य या स्यादुक्तरूपस्य वेति द्विधाऽयमाक्षेपः । (भा. का. अ. २/६८ द्र.) अत्र च व्यङ्ग्यसद्भावेऽपि तदाक्षेपस्य वाच्यस्यैव प्राधान्याच्चारुत्वम् । वाक्यार्थ एतदाक्षिपतीत्याक्षेप इत्युक्तिसामर्थ्यदिवासीयते यथा (भा. का. अ. २/६९)अहं त्वां यदि क्षणप्युत्सुका ततः । इयं ते

वाऽस्त्वितोऽन्येन किमुक्तेन प्रियेण ते ॥ इति । अत्र यद्यप्यहं प्रिय इति व्यङ्ग्यप्रतीतिस्तथापि विशेषकथनेच्छयेयं वाऽस्त्वित्यादिशब्दोपारूढः प्रतिषेधरूपोऽयमाक्षेपः । तस्यैव प्राधान्यं स्वनाम्नोऽन्वर्थत्वात् । एवमुक्तविषये यथा (भा. का. अ. २/७०)—स्वविक्रमाक्रान्तभुवश्चित्रं यत्र तथोन्नतिः । को वा हेतुरलं सिन्धोर्विकारे करणं प्रति ॥ अत्र चानुक्ते गर्वस्थाने निरहङ्कारत्वं महापुरुषगुणमुक्त्वा प्रतीयमानगाम्भीर्यातिशयविशेषकथनेच्छया 'को वा हेतु'रित्यादि यः प्रतिषेधरूप आक्षेपस्तस्यैव प्राधान्यं न गाम्भीर्यरूपस्य व्यङ्ग्यस्येति । ए एहीत्यादि—अय्येहि किमपि कस्या अपि कृते निष्कृप ! भणामि अलमथवा । अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥ सेति सम्बन्धनीयम् । अत्रभणामीति प्रतिज्ञातस्येष्टस्यालमिति निषेधेन तदवस्थाया अशक्यवचनीयत्वादिर्विशेषः प्रतीयते, अत एव हे निष्कृपेति ।

## दीपिका

निषेध इत्यादि पूर्वार्धमाक्षेपसामान्यलक्षणम् । वक्ष्यमाणेत्यादि तु विभागपरम् । अनुपसर्जनीकार्यस्य वचनायोग्यस्य । अशक्यवक्तव्यत्वमिति दारुणतया वक्तुमशक्यं तद्वक्तव्यं वचनार्हञ्चेति विग्रहानन्तरं त्वप्रत्ययेण प्रत्येकं योगः । एतच्च वक्ष्यमाणविषयेऽतिप्रसिद्धमित्युक्तविषयमिति व्यवस्थितविकल्पार्थो वा शब्दो निषेध इवेति—शब्दगत्या प्रतीयमानोऽर्थानुप्रतिसन्धाने त्वनवतिष्ठमानो निषेध इत्यर्थः । ए इति साम्मुख्यामन्त्रणाय । अत्र विरहवेदनाजनितदुर्दशाप्रकर्षोविवक्षितोऽप्यशक्यवचनतया नोक्तः । आ इति साभ्यर्थनाऽनुनयप्रकोपे ।

## दर्पणः

आक्षेपालङ्कारः । अनुपसर्जनीकार्यस्य बहुमेव [?] योग्यस्य वक्तव्यताया अशक्यत्वम् अतिदारुण-त्वात्[?]

ए एहीति । प्रथम एवकारः साद्यनुनानुनये [?] एहि किमाह ? अस्यापि कृत्वे [कृते न निष्कृत्यतणानि [?] अविचारितकार्यारंभकारिणीति सा यति (यदि) न भविष्यामि । अत्र संख्या विरहवेदना बहुमिष्टा [इष्ट] प्यशक्यवक्तव्यतया नोक्ता ।

अन्तर्मानसं चिन्तात्यन्तरे । आ इति साद्यर्थ [अव्यय] मानुनक्रोधे ।

## साहित्यचूडामणिः

आक्षेपमाह—निषेध इति । निषेधाभासः यथा व्याख्यास्यते ।

अनुपसर्जनीकार्यस्य प्राकरणिकतया विधानार्हस्य अशक्यवक्तव्यत्वं वक्ष्यमाणे विषये । अतिप्रसिद्ध-त्वमुक्ते । निषेध इवेति । प्राकरणिकस्य विधानार्हतया निषेधः कर्तुं न युज्यते स क्रियमाणो बाधितस्वरूपत्वान्नि-षेधायत इति निषेधाभासः संपद्यते । स च प्राकरणिके विशेषप्रतिपत्त्यर्थः, अन्यथा गजस्नानतुल्यत्वात् तस्येत्याह—विशेषाभिधित्सयेति । यत् सूत्रम् 'उक्तवक्ष्यमाणयोः प्राकरणिकयो विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेपः' (अलङ्कारसू० ३९) इति ।

एसेति ।

एषा खलु किमपि कस्या अपि कृतेन निष्कृप? भणाम्यलमथवा।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि॥ इति।

अत्र भणामीति प्रतिज्ञातस्य न भणिष्यामीति निषेधाद् वक्ष्यमाणविषयोऽयमाक्षेपः।

## सम्प्रदायप्रकाशिनी

निषेधो वक्तुमिति। वक्तुमिष्टस्य प्रकृतत्वात् साक्षान्निषेधेनानुपसर्जनीकार्यस्याशक्यवचनतां सुप्रसिद्धतां वा विशेषमभिव्यङ्क्तुं निषेध इव यः स उक्तवक्ष्यमाणविषयतया द्विधाक्षेपः।

ए एहीति।

अयि एहि किमपि कस्या अपि कृतेन निष्कृप भणाम्यलमथवा।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि॥

अत्र वक्ष्यमाणस्य मुमूर्षोपगमस्याशक्यवचनतां व्यङ्क्तुं किमपि कस्या अपीति ताटस्थ्येनासूत्रिताया भणितेर्निषेधः। अतो निष्कृपेत्यामन्त्रणम्।

## मधुमती

निषेधः इति। विशेषाभिधित्सया विशेषप्रतिपिपादयिषया वक्तुमिष्टस्य यः निषेधः सः आक्षेपः इत्यन्वयः। वक्ष्यमाणोक्तविषयः इति तु विभागः। तदेतत् व्याचष्टे—विवक्षितस्येति। वक्तुमिष्टस्याप्यनभिधानं अशक्यवक्तव्यत्वात् अतिप्रसिद्धत्वाद्वा भवतीति तदुभयं प्रकाशयितुमित्यर्थः। निषेध इवेति। न खलु वक्तव्यनिषेधः अत्र प्रतीयते, किन्तु—वचननिषेधः। तथाच-तदभाव एव तत्त्वेन व्यपदिश्यते। अत एव—अनभिधानं अलङ्कारः, न तु वक्तव्यस्याभावः। अभिधानाभावात् उक्तविशेषद्वयप्रतीत्या चमत्कारोदयात्। वक्ष्यमाणेति। वर्तमानस्य निषेधानुपपत्तेः इति भावः।

इदं त्ववधातव्यम्—यत्र सामान्यतो वर्णनमुपक्रम्य तन्निषेधोऽभिधीयते तत्र अशक्यवक्तव्यत्वप्रतीतिः। यत्र च एकदेशतो लक्षित्वाऽपि एकदेशान्तरनिषेधः कृतः तत्र अति 'प्रसिद्धत्वप्रतीतिः इति। एतच्च उदाहरणद्वये व्यक्तमिति ध्येयम्। इत्याक्षेपः।

## विस्तारिका

आक्षेपकभेदेनाक्षिप्तौपम्यस्य विषयबाहुल्यप्रदर्शनायाह—निषेध इत्यादि। वक्तुमिष्टस्य निषेध इति सामान्यलक्षणम्। वक्ष्यमाणेत्यादि विषयद्वयम्। वक्ष्यमाणोक्तौ विषयौ यस्य निषेधस्य। द्वन्द्वात् परं श्रूयमाणस्य विषयपदस्य प्रत्येकं सम्बन्धस्तद्वक्ष्यति—वक्ष्यमाणविषय उक्तविषयश्चेति।

अनुपसर्जनीकार्यस्योद्देश्यत्वेन भावप्रतियोगितयोद्भावयितुमयोग्यस्याशक्येत्यादिकृदुत्तरत्वप्रत्ययस्य सम्बन्धतत्प्रतियोगिनोरल्पतरत्वेऽभिधानमिति वक्तव्यत्वयुक्तिः। सा पुनरशक्या दुःखातिशयहेतुत्वेन यत्कथनं न

शक्यत इत्यर्तः । प्रसिद्धत्वं वेत्यादि । व्यवस्थितविकल्पोऽयं वक्ष्यमाणविषये शक्यवक्तव्यत्वं विशेषः, परत्र तु परः । ए इति सामर्षसम्बोधनम् ।

**ए एहि किमपि कस्या अपि कृते निष्कृपभणाम्यलमथवा।**
**अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥**

अविचारितेत्यादि । त्वत्प्रेम्णः स्थैर्यास्थैर्ये परीक्ष्यैव प्रवृत्ता । अथवेति पूर्वाक्षेपे । अलं न भणिष्यामीत्यर्थः । न भणिष्यामीति पौनरुक्त्यं खेदातिशयपोषकमिति ।

अत्रोद्देश्यस्य नायिकादुरवस्थानिवेदनस्य मर्मपीडकत्वं निषेधो व्यञ्जयति । वक्ष्यमाणाया मरणावस्थाया अभिधानस्यालमित्यादिना निषेधः ।

**सारबोधिनी**

निषेध इति । वक्तुमिष्टस्य निषेध इति सामान्यलक्षणम् । वक्ष्यमाणेत्यादि विशेषद्वयम् अनुपसर्जनीयस्य कार्यस्योद्देश्यत्वेनाभावप्रतियोगितायोच्चारयितुमयोग्यस्याशक्यवक्तव्यत्वमिति । दुःखातिशयहेतुत्वेन यत् कथयितुं न शक्यत इत्यर्थः । ननु वक्तुमिष्टस्य कथं निषेध इत्यत आह निषेध इवेति । द्वन्द्वात् परं श्रूयमाणस्य विषयपदस्य प्रत्येकं संबन्धं दर्शयति वक्ष्यमाणविषय उक्तविषयश्चेति । प्रसिद्धत्वं वेति । व्यवस्थितविकल्पोऽयम् । वक्ष्यमाणविषयेऽशक्यवक्तव्यत्वं विशेषः । परत्र तु परः ।

ए एहीति । इदानीमपि तस्या अपि कृते निष्कृप अहं भणामि । अलमथवा अविचारितकार्यारम्भकारिणी म्रियताम् । पुनर्भणिष्यामीति । कएणेति कृते इत्यर्थः । ए एहि किंपि कीएवि इति पाठे अरे एहि किमपि कस्या अपि कृते इत्यर्थः । अविचारितेत्यादि । प्रेम्णः स्थैर्यास्थैर्ये अपरीक्ष्यैव प्रवृत्ता अथ वेति पूर्वाक्षेपेऽलं न भणिष्यामीत्यर्थः । न भणिष्यामीति पौनरुक्त्यं खेदातिशयपोषकम् । अत्रोद्देशयस्य नायिकादुरवस्थानिवेदनस्य मर्मपीडकत्वम् । वक्ष्यमाणाया मरणावस्थाया अभिधानस्यालमित्यादिना निषेधोऽवश्यवक्तव्यत्वं व्यञ्जयति ।

**काव्यप्रदीपः**

**निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥ २० ॥**
**वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।**

वक्तुमिष्टस्य प्राकरणिकत्वाद्वचनार्हस्य यो निषेधः स आक्षेपः । निषेधो निषेध इवेत्यर्थः । शब्दगत्या निषेधेऽयर्थगत्या विधेरेव प्रतिपत्तेः । तत्प्रयोजनमाह—विशेषाभिधित्सयेति । वक्ष्यमाणविषयेऽशक्यवक्तव्यत्वमुक्तविषयेऽतिप्रसिद्धत्वं चेति विशेषः । विभजते—वक्ष्यमाणेति । तत्र वक्ष्यमाणविषयो यथा—

**'ए एहि किंपि कीएवि कएण णिक्किव भणामि अलमहवा।**
**अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सम् ॥'**

अत्र विरहजनितदुर्दशातिशयो वक्ष्यमाणो निषिद्धः ।

## काव्यप्रकाखण्डनम्

निषेधो वक्तुमिष्टस्य यो [प. ५,१,२] विशेषभिधित्सया ॥

(का. १०६, उ०)

वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः । (का. १०७, पू०)

वक्तुमिष्टस्य निषेध इति सामान्यलक्षणम् । वक्ष्यमाणेत्यादिविशेषद्वयं वक्तुमिष्टस्य विवक्षितस्य अवश्यवक्तव्यत्वं अतिप्रसिद्धत्वं वा । वक्तुं निषेधो निषेध इव यः स यथाक्रमं वक्ष्यमाणविषयः उक्तविषयश्चेति द्विविध आक्षेपः । यथा—

**अएँ एहि[किं पि] तीया (कीए) वि कये णिक्किव भणामि अलमह वा।**

**अविआरिअकज्जारंभआरिणी मरउ ण भणिस्सं ॥**

[अये एहि किमपि क्या अपि कृते निःकृप भणामि [अलमथ वा ।]

अविचारितकार्यारम्भकारिणी म्रियतां न पुनर्भणिष्यामि ॥]

न भणिष्यामीति पौनरुक्त्यं खेदातिशयपोषकम् । अत्रोद्देश्यनायिकादुरवस्थानिवेदस्य वक्ष्यमाणाया वा मरणावस्थाया अभिधानस्य अलमित्यादिनिषेधो अशक्यवक्तव्यत्वमस्या व्यञ्जयति ।

## आदर्शः

द्विविधमाक्षेपालङ्कारमाह—निषेध इति । वक्तुमिष्टस्तावद् वक्ष्यमाण उक्तश्च भवति तद्विषयस्तदुक्ति-निषेध इत्यर्थः । वक्तुमिष्टतायां बीजमाह—अनुपसर्जनीकार्यस्येति, अनुपेक्षणीयप्रतिपादनस्येत्यर्थः । अवश्यव-क्तव्यस्य निषेधोऽप्यनिषेध एवत्याह—निषेध इति, निषेधादपि तत्प्रतीतिरिति भावः । तत्र वक्ष्यमाणविषयमाह—ए एहीति ।

ए एहि किमपि कस्या अपि कृते निष्कृप भणाम्यलमथवा । **अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥ इति संस्कृतम् ।**

'ए' इति साक्षेपप्राकृतसम्बोधने । अविचारितकार्यं खले त्वयि प्रेमानुबन्धः । अत्र तन्मरणस्याशक्यव-क्तव्यत्वाभिधित्सया ।

## सुधासागरः

वक्तुमिष्टस्य प्राकरणिकत्वादवचनार्हस्य वचनार्हस्य वा यो निषेधः स आक्षेपः । निषेधो निषेध इवेत्यर्थः । शब्दगत्या निषेधेऽप्यर्थगत्या विधेरेव प्रतिपत्तेः ।

तत्प्रयोजनमाह—विशेषाभिधित्सयेति । वक्ष्यमाणविषयेऽशक्यवक्त्व्यत्वम् उक्तविषयेऽतिप्रसिद्धत्वं चेति विशेषः ।

विभजते—वक्ष्यमाणेति । तत्र वक्ष्यमामविषयो यथा—ए एहीति । विपुलाऽऽर्या । लक्षणमुक्तं प्राक् । 'ए' इति सामर्थ्यसम्बोधनम् ।

ए एहि किमपि कस्या अपि कृते निष्कृप भणामि अलमथवा । अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥

इति संस्कृते स्पष्टम् । अत्र विरहजनितदुर्दशातिशयो वक्ष्यमामो निषिद्धः ।

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥४७२ ॥

---

### सङ्केतः

किमनेनोक्तेन इति कैमर्थ्यपरं आलोचनम् । न ब्रूमहे इति निषेधः । तद्द्वारेण तस्याः—'त्वद्वियोगे ज्योत्स्नादिः स्फुलिङ्गव्यापारहेतुः स्यात्' इति स्फुटोऽयमर्थः । अन्यत्रापि दृष्टत्वात् । स्फुलिङ्गव्यापाराणां आनन्त्यात्मको विशेषः 'किमनेनोक्तेने'ति सामान्येनोपक्रान्तः, 'न ब्रूमहे' इति असंविज्ञानपदनिबन्धनतया निर्वाहितः इति उक्तविषयता । अत्र च वस्तुनिषेधः ।

"प्रसीदेति ब्रूयादिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे ॥"

इत्यादौ तु वस्तुकथननिषेधः । तथाहि—भण्यमानस्य प्रसादस्य निषेधमुखेनैव कोपोपरागनिवर्तनेन अवश्य स्वीकार्यत्वं विशेषः । तदेवमाक्षेपे—-इष्टोऽर्थः, तस्य निषेधः, निषेधस्यानुपपत्त्या अलीकत्वम्, विशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते ।

न केवलं इष्टनिषेधाभासः आक्षेपः, किन्तु अनिष्टविध्याभासश्च । यथा—

'गच्छ गच्छसि चेत् कान्त ! तत्रैव स्याज्जनिर्मम ।
ममापि जन्म तत्रैव भूयात् यत्र गतो भवान् ॥'

इति । अत्र कान्तप्रस्थानं अनिष्टमपि अनिराकरणमुखेन विहितम् । न चास्य विधिर्युक्त, अनिष्टत्वात् । तेन अयं विधिः विध्यामासो निषेध एव । इत्याक्षेपः ।

### बालचित्तानुरञ्जनी

उक्तविषयमुदाहरति ज्योत्स्नेति । भो विभो । आः खेदे । तस्याः अन्तर्मानसं प्रभवता त्वया ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः कर्पूरम् कदली मृणालवलयानि अंभोजिनीपल्लवाः स्फुलिङ्गोत्करव्यापाराय भवन्ति । हन्त इति खेदे । अनेनोक्तेन न किं न ब्रूमहे । अत्र ज्योत्स्नादयस्तस्यास्तापाय भवन्ति इति सामान्येनोक्तस्य क्वचिदंशे निषेध इति उक्तविषयोऽयमाक्षेपः ।

काव्यादर्शः

'ज्योत्स्ना' इति। अत्र 'किमनेनोक्तेनेति कैमर्थक्यपरमालोचनं न ब्रूमः' इति निषेधमुखेन त्वदप्राप्तौ ज्योत्स्नादयः स्फुलिङ्गव्यापारहेतवस्तस्या भवन्तीत्यतिप्रसिद्धोऽयमर्थोऽन्यत्रापि परिदृष्टत्वात्। स्फुलिङ्गव्यापाराणां चानन्त्यात्मको विशेषोऽभिधित्सितः, तस्य च 'किमनेनोक्तेन' इति सामान्येन उपक्रान्तस्य अधुना निषेधवशेन असंविज्ञानपदनिबन्धनत्वमित्युक्तविषयता। तस्माद् इष्टनिष्ठस्य निषेधाभासस्य विध्युन्मुखस्य आक्षेपत्वमिति स्थितम्। यदाह तिलकः

**तदिष्टस्य निषेधत्वमाक्षेपोक्तेर्निबन्धनम्।**
**सौकर्येणान्यकृतये न निषेधक्यता ड?.पुनः॥**

**अन्यकृतये विशेषविध्यर्थम्॥ [१९॥]**

**ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः**
**कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः।**
**अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुल्लिङ्गोत्कर-**
**व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे॥ ४७२॥**

विवेकः

ज्योत्स्नेत्यादि। अन्तर्मानसं शंसनं, हन्तेति खेदे। अत्र ज्योत्स्नाऽऽदीनां निर्वापितसकल-जीवलोकशीतलत्वमुद्वहतामति विरहाग्निदह्यमानमानसैर्जनैरनुभूयमानानां सन्तापकारित्वमति- प्रसिद्धमेवेति निर्विशेषस्याख्यानाय किमित्यादिना यो निषेधः स आक्षेप इति भामहाभिप्रायेणेदं लक्षणम्। वामनस्य तु 'उपमानाक्षेप आक्षेपः' (का. अ. सू. वृ. ४. ३. २७) इति लक्षणम् उपमानस्य चन्द्रादेराक्षेपोऽस्मिन् सति किं त्वया कृतमित्यपहस्तनारूपो यथा— 'तस्याश्चेन्मुखमस्ति सौम्यसुभगं किं पार्वणेनेन्दुने' त्यादि (....४. ३. २७)। 'यदि वोपमानस्याक्षेपः स्वसामर्थ्यादाकर्षणमिति तस्यार्थः। यथा—(अ. स. ११७ पृ०) ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्धानाऽऽर्द्रनखक्षताभम्। प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं करोति।

अत्र शरद्वेश्येव, इन्दुर्नायक इव, रवेरीर्षाकलुषितस्य नायकान्तरस्येवेत्युपमानान्याक्षिप्तानि प्रतीयन्ते'। (का. सू. ४. ३. २७)। अत्राद्यो वक्ष्यमाणेन प्रतीपेनोपगृहीतः, द्वितीयस्तु 'आर्द्रनखाभमैन्द्रं धनुर्दधानेत्यसाधारणविशेषणादुपमानत्वे नायिकाया नायकस्य च प्रतीतेरेकदेशविवर्तिन्योपमया। अथाऽत्र नोपमानत्वेन नायकः प्रतीयते किं तर्हि रविशशिनोरेव नायकव्यवहारप्रतीतिः, तयोरेव नायकत्वादित्युच्यते, तर्हि 'आर्द्रनखक्षताभ' मित्यत्र स्थितमप्युपमानत्वं वस्तुपर्यालोचनयैन्द्रेधनुषि सञ्चारणीयम्, इन्द्रचापाभं नखक्षतं दधानेति प्रतीतेः। यथा 'दध्ना जुहोति' त्यादौ दध्नि सञ्चार्यते विधिः, तत औपम्यानुप्राणितया समासोक्त्याऽयमुपगृहीतः।' (अ. स. ११९-११८ पृ०)। इत्यास्तामेतत्।

## साहित्यचूडामणिः

ज्योत्स्नेति। अत्र ज्योत्स्नादीनि तस्यास्तापाय भवन्तीति सामान्येनोक्तस्य क्वचिदंशे निषेध इत्युक्तविषयोऽयम्। नहि प्राकरणिकबललब्धस्थेमानमर्थमंशव्यतिरेकेण निषेधो व्याकुलयितुमर्हति। उक्तं च—

**प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया।**
**आक्षेप इति तं सन्तः शंसन्ति कवयः सदा॥ इति।**

अथ "किमनेनोक्तेन न ब्रूमह" इति वाक्यद्वये पौनरुक्त्यमपरिहार्यम्, एकत एवाक्षेपपसिद्धेः। एवं पूर्वत्रापि अलमथवा न भणिष्यामीत्यत्रानुसन्धेयम्॥

## सम्प्रदायप्रकाशिनी

ज्योत्स्नेति। अन्तर्मानसं प्रभवता त्वया हेतुना दाहाय भवन्ति। सुविदितत्वात् किमनेनोक्तेनेति उक्तविषयः।

## विस्तारिका

ज्योत्स्नेत्यादि। शीतलानि सुगन्धीनिन सर्वाण्येव वस्तुन्युपतापकानि स्युः। स्फुलिङ्गव्यापारो दाहः। आ इति दुःखोद्वेगसूचकम्। अन्तर्मानसं मनसोऽभ्यन्तरं दाहयतीत्यन्वयः।

तेन दुश्चिकित्स्यत्वेऽपि निर्हेतौ तृतीया। प्रभवतेति। प्रभोरनभियो ज्यत्वम्। स्वयमुपतापकेन त्वया अन्यान्यपि प्रकृत्या शीतलान्युपनायकादीनि चिकित्स्यन्त इत्यर्थः।

अत्र 'न ब्रूमहे' इत्युक्तनिषेधो विरहे शीतलानां दाहकत्वस्याप्रसिद्धत्वं व्यञ्जयति।

## सारबोधिनी

ज्योत्स्नेति। अन्तर्मानसे मानसाभ्यन्तरे। न ब्रूमहे इत्युक्तनिषेधो विरहे विरहे शीतलानां दाहकत्वस्य प्रसिद्धत्वं व्यञ्जयति।

## काव्यप्रदीपः

**'ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः**
**कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः।**
**अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-**
**व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे॥'**

## काव्यप्रकाशखण्डनम्

**ज्योत्स्नाचन्दनमाला हालाहलतां परिप्राप्ताः।**
**संप्रति सुदृशो हन्ताऽनेन किमुक्तेन न ब्रूमः॥**

न ब्रूम इति निषेधो विरहे शीतलानामपि दुरुत्सहत्वस्य अतिप्रसिद्धत्वं व्यनक्ति।

### आदर्शः

उक्तविषयमाह—ज्योत्स्नेति। आः खेदे। अन्तर्मानसं मानसस्यान्तः। प्रभवता सता त्वया तस्याः स्फुल्लिङ्गोत्करस्येव व्यापाराय ज्योत्स्नादयो भवन्तीत्यर्थः। हन्त खेदे। अनेनोक्तेन किं न ब्रूमहे इत्यर्थः। अत्रोक्तस्यैवार्थस्यातिप्रसिद्धत्वाभिधित्सया उक्तिनिषेधः।

### सुधासागरः

उक्तविषयो यथा—ज्योत्स्नेति। शार्दूलविक्रीडितं छन्दः। शीतांशुकान्तस्य चन्द्रमसो द्रवः स्यन्दः। अन्तर्मानसं मानसाभ्यन्तरे। स्पष्टमन्यत्।

**(सू० १६२) क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥ १०७ ॥**

हेतुरूपक्रियायाः, निषेधेऽपि तत्फलप्रकाशनं विभावना । यथा

**कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि ।**

**परिवर्तते स्म नलिनीलहरीभिरलोलिताप्यघूर्णत सा ॥ ४७३ ॥**

---

**सङ्केतः**

हेतुरूपेति । हेतवोऽपि क्रियामुखेन कार्यं कुर्वन्तीति सा क्रियैव अव्यवहितो हेतुः । 'कार्यं क्रियाया फलम्' इति वैयाकरणा एव मन्यन्ते, नान्ये । फलेति । कार्यस्य कविना प्रतिपादनम्, न तु भवनम् । हेतुं विना कार्योत्पत्त्य-सम्भवात् । अत्र प्रसिद्धतरहेत्वनुपलब्धेः हेत्वाभावः इति, अप्रसिद्धस्तु हेतुः वस्तुतः अस्त्येव । अत एव विशिष्टतया प्रसिद्धतरहेत्वनुपलब्धिरूपया कार्यस्य भावना पर्यालोचना विभावना । हेतुनिषेधेन च इह उपक्रान्त्वात् बलवता कार्यमेव बाध्यत्वेन प्रतीयते, न तु तेन हेतुनिषेधः इति, अन्योन्यबाधकत्वानुप्राणितात् विरोधालङ्कारात् भेदः । हेतुनिषेधबाधप्रतीतिस्तु ज्ञप्त्यपेक्षा । ज्ञप्तिस्तु उत्पत्त्यपेक्षया अत्र नासन्ना इति न विभावनाप्रयोजिका ।

अयं भावः—यथा कार्यं भवदेव हेतुनिषेधेन बाध्यत इति, भवति तत्र भवनापेक्षो बाधः । तथा न भवन्नेव हेतुनिषेधः कार्योद्भवनेनापि बाध्यते, किन्तु भूतस्य तस्य बाधः तया ज्ञाप्यते इति हेतुनिषेधबाधः ज्ञप्त्यपेक्ष एवेति, ज्ञप्तिर्भवनापेक्षया पश्चाद्भावित्वेन अनासन्नेति । यद्वा सामान्येन मिथो बाधे सत्यपि हेतुफलभावविशेषेण अस्याः विरोधाद्भेदः ।

कुसुमितेति । अत्र नलिनी अब्जिनी पद्मिन्याख्या स्त्री च । तथा घातादिहेत्वभावेऽपि रुगादिकार्य उक्तम् । तत्र वियोगित्वं कारणं गम्यम् । अतः अनुक्तनिमित्तेयम् ।

उक्तनिमित्ताऽप्येषा । यथा—

"असम्भृतं मण्डनमङ्गयष्टेः
अनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात् परं साऽथ वयः प्रपेदे ॥"

इति । अत्र यौवनं निमित्तम् । मदस्य मत्तता-हर्षवाचकत्वात् द्वैविध्येऽपि अतिशयोक्त्या ह्यभेदः । अतिशयोक्त्यनुप्राणिता चैषा विभावना ज्ञेत्रया । "एकगुणहानौ विशेषोक्तिः" इति एके वामनीयाः । आरोपितवै-शिष्ट्यं रूपकमेवान्ये इमां मन्यन्ते । इति विभावना ।

## बालचित्तानुरञ्जनी

विभावनालङ्कारं लक्षयति क्रियाया इति। व्याकरोति हेत्विति। उदाहरति यथेति। सा नलिनी कुसुमित-लताभिरहतापि रुजमधत्त। अलिकुलैरदष्टापि परिवर्त्तते स्म लहरीभिरलोलिताप्यघूर्णत। अत्र लताहननादिरूपहे-तुक्रियानिषेधेऽपि रुगादिकार्यस्य विशेषेणाभिव्यक्तिर्विभावना।

## काव्यादर्शः

हेतुरूपेति। क्रिया हि कार्यं निष्पादयतीति सैव हेतूः। सर्वेषां फलभूतानां क्रियैव अव्यवहितं कारणं, क्रियामुखेन कारणेभ्यः कार्योत्पत्तेः। अन्यैश्च 'क्रियाफलमेव कार्यम्' इति वैयाकरणैरेव अभ्युपगम्यते, न सर्वैरिति क्रियापदस्थाने कारणग्रहमं कृतम्। सामान्येन विशेषमनपेक्ष्य फलप्रकाशनमिति कार्यस्य कविना प्रतिपादनं, न तु भवनकारणमन्तरेण कार्योत्पत्तेरसंभवाद्। इह कारणान्वयव्यतिरेकानुविधानात् कार्यस्य कारणमन्तरेम असंभवः। यदि तु कयाचिद् भङ्ग्या तथाभावोपनिबन्धः, तदा विभावना। सा च भङ्गिः प्रसिद्धतरकारणानुपलब्धिः। अप्रसिद्धं तु कारणं वस्तुतोऽस्त्येव। अस्याश्च न विरोधरूपत्वं, विरोधे द्वयोरपि समानबलयोः परस्परबाधात्। अत्र तु कार्योत्पत्तिरेव कारणप्रतिषेधेन बाध्यमाना प्रतिभाति न तु कारणप्रतिषेधस्य कार्योत्पत्त्यापि बाधः कारणप्रतिषेधस्य हि बाधः प्रतिभासमानोऽपि ज्ञप्त्यपेक्षो, ज्ञप्तिश्च उत्पत्त्यपेक्षया दवीयसी न विभावनां प्रयोजयति। 'ज्ञप्त्यपेक्ष' इति—यथा हि कार्यमुत्पद्यमानमेव कारणप्रतिषेधेन बाध्यत इति भवत्युत्पत्त्यपेक्षस्तत्र बाधस्तथा नोत्पद्यमान एव कारणप्रतिषेधः कार्योत्पत्त्यापि बाध्यते, अपि तु उत्पन्नस्य तस्य बाधस्तया नोत्पद्यमान एव कारणप्रतिषेधः कार्योत्पत्त्यापि बाध्यते, अपि तु उत्पन्नस्य तस्य बाधस्तया ज्ञाप्यत इति कारणप्रतिषेधबाधो ज्ञप्त्यपेक्ष एव। 'ज्ञप्तिश्च' इति कारणप्रतिषेधबाधज्ञानं च। 'दवीयसी' इति पश्चाद्भावित्वेन। भवतु वात्रापि सामान्येन परस्परं बाधस्तथापि न विरोधरूपत्वं हेतुफलभावं विशेषमाश्रित्य प्रवर्तनाद् अस्यास्तदपवादत्वात्। एवं विशेषोक्तौ कार्यभावेन कारणसत्ता एव बाध्यमानत्वमुन्नेयम्। येन सापि अन्योन्यबाधत्वानुप्राणिताद् विरोधाद् भिद्यते। इयं च विशेषोक्तिवद् अनुक्तोक्तनिमित्तभेदा द्विधा, यथा—'कुसुमिते' ति। अत्र कुसुमिलताहननादीनां कारणानाम-भावेऽपि रुग्धारणादीनि कार्याणि प्रकाशितानि। तत्र विरहित्वलक्षणं निमित्तं गम्यमानम्।

उक्तनिमित्ता यथा—

**असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे॥**

—अत्र द्वितीयपादे मदस्य यद् आसवाख्यं करणं प्रसिद्धं तदभावेऽपि यौवनहेतुकत्वेन उपनिबन्ध उक्तः। 'मदो मत्तता हर्षश्चेति'। मदस्य द्वैविध्येऽपि अभेदाध्यवसायकत्वमिति अतिशयोक्त्यनुप्राणिता विभा-वना। 'असंभृतं मण्डनम्' इति 'कामस्य पुष्पव्यतिरिक्तमस्त्रम्' इत्यत्र च संभरणस्य पुष्पामां च मण्डमस्त्रं च प्रति कारणत्वात् तदभावे विभावना। 'एकगुणहानौ विशेषोक्तिरियम्' इति वामनीयाः। 'रूपकमेव अधिरोपितवैशि-ष्ट्यम्' इति अन्ये। 'आरोप्यमाणस्य मण्डनादेः प्रकृते वयसि संभवात् परिणाम' इति तु अद्यतनाः।

## विवेकः

निषेधप्रस्तावादाह क्रियाया इति। क्रियाग्रहणमपनीय सामान्येन कारणग्रहणमत्रान्यैः कृतम् (अ. स. १५७ पृ.)। इतरथा 'अलक्तकताम्राभामोष्ठमुद्राञ्च बिभ्रती'त्यादावव्याप्तेः। सत्यं, किन्त्वत्रापि ताम्रोष्ठस्यालक्तकयोजनं निषिद्धम्, न तु तत्स्वरूपम्, अतोऽत्रालक्तकशब्दो योजनावृत्तिरिति क्रियाया एव निषेधः। एवञ्च 'कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात् परं साऽथ वयः प्रपेदे' (कु. सं. १/३१) इत्यत्र 'यद्यपि द्वितीये पादे मदस्य प्रसिद्धं सदासवाख्यं करणं तदभावेऽपि यौवनहेतुकत्वेनोपनिबन्धनं कृतं तथापि तत्पानवृत्तिस्तस्य द्रष्टव्या। तत्र च मदस्य द्वैविध्येऽप्यभेदाध्यवसायादेकत्वमतिशयोक्त्या। सा चास्यामव्यभिचारिणीति न तद्बाधेनास्या उत्थानम्, अपि तु तदनुप्राणितत्वेन' (अ. स. १५८-५९ पृ.)। अत एव क्रियाफलमेव कार्यमिति वैयाकरणानामाम्नायः। क्रियाग्रहणं वा करणत्वेनोपलक्षणत्वेन व्याख्येयम्। तस्य व्यक्तिः प्रकाशनं कविना प्रतिपादनं न तु भावनं, कारणमन्तरेण कार्योत्पत्तेरसम्भवात्। प्रसिद्धतरहेतुभूतक्रियाऽनुलब्धेस्तत्कार्योत्पत्तिरिहाहेतुकेति निबध्यते, तावन्मात्रलक्षणत्वाद्विभावनायाः। विशिष्टतया कार्यस्य भावना विभावना यतोऽत एव प्ररूढस्य विरोधस्य परिहारः। एवञ्च विरोधाभासत्वेऽप्यस्य न विरोधालङ्कारपरत्वम्, तत्र द्वयोरपि परस्परं बाधात्। अत्र तु कार्योत्पत्तिरेव कारणप्रतिषेधेन बाध्यमाना प्रतिभाति न तु विपर्ययेणापि बाधः कारणप्रतिषेधस्य। न बाध्यमानः प्रतिभाति बाधः, प्रतिभासमानोऽपि ज्ञप्त्यपेक्षः। ज्ञप्तिश्चोत्पत्त्यपेक्षया दवीयसीं विभावनां प्रयोजयति। भवतु वाऽत्रापि सामान्येन परस्परं बाधः, तथापि न विरोधरूपत्वहेतुफलभावं विशेषमाश्रित्य प्रवर्तनात्, अस्यास्तदपवादकत्वात्' (रु. स. ६६ पृ.)। 'एवं विशेषोक्तौ कार्याभावेन कारणसत्ताया एव बाध्यमानत्वमुन्नेयम्, येन साऽपि विरोधादि्भन्ना स्यात्' (अ. स. १५७-५८ पृ.)। विभावना च शुद्धादिभेदात्त्रिधाऽन्यैः कैश्चित् समुद्दिष्टा। तत्र यत्रैकं कार्यमुद्दिश्य प्रत्येकं प्रसिद्धो हेतुर्व्यावर्त्यते, अप्रसिद्धन्तु कारणान्तरं स्वाभाविकत्वं वा विभाव्यते सा शुद्धा यथा—कुसुमितेति। कुसुमितलताभिरहताया रमण्या नलिन्या रुजो हेतुः कविसम्प्रदाय सिद्धः। अप्रसिद्धस्तु हेत्वन्तरं प्रस्तावौचित्यादिनां हेमन्तप्रभावो गम्यमानः। 'इयमपि विशेषोक्तिवदुक्तनिमित्तोदाहृता यथा वा—अङ्गलेखामकाश्मीरसमालम्भनपिञ्जराम्। अनलक्तकताम्राभामोष्ठलेखां च बिभ्रतीम् ॥ (का. अ. सा. सं. २/४२)

अत्र स्वभाविकत्वं निमित्तं गम्यमानम्। उक्तनिमित्ता यथा—'असंभृतं मण्डन'—मित्यादि (कु. स. १/३१)। अनेनैव मालारूपताऽस्य दर्शिता। 'असंभृतं मण्डन'मित्यादि 'कामस्य पुष्पव्यतिरिक्तमस्त्रं मित्यन्तम्। अत्र च विवदन्ते—इयमेव विभावनेति केचित्, असम्भरणस्य पुष्पाणां मण्डनमस्त्रं प्रत्यकारणत्ववर्णनात्। (अ. स. १५९ पृ.)। एकगुणहानौ साम्यदार्ढ्यं विशेषोक्तिरिति तु वामनः। (का० अ० सू० वृ० ४. ३. २३)। यत्र 'तु विभावनायां विभावनयाऽलङ्कारान्तरेण वा विशेषः कश्चिदुच्यते सा विचित्रा (स. क. आ. ३/११) यथा—वक्त्रं निसर्गसुरभि वपुरव्याजसुन्दरम्। अकारणरिपुश्चन्द्रो निर्निमित्तसुहृद्वयः ॥ (भा. का. अ. २/२०३)। तस्या वक्त्रं वपुर्वाऽकारणरिपुर्निर्निमितसुहृच्चेत्यन्वयः। अत्रोत्तरयोर्विरहसमागमादिकारणान्तरविभावनयोः स्वाभाविकीभ्यां प्राग्विभावनाभ्याम् यथासंख्येन तद्वतो विशेष उक्तः। यदाहुः (स. क. आ. ३/१०,११) 'शुद्धा यत्रैकमुद्दिश्य हेतुरेको निवर्तते। अनेको यत्र सा चित्रा विचित्रा यत्र तां प्रति ॥ तयाऽन्यया वा गीर्भङ्ग्या विशेषः कश्चिदुच्यत' इति।

## दीपिका

क्रिया कारणव्यापारः। एतदेव स्फुटयति वृत्तिकृद् हेतुरूपक्रियाया इति। तज्जन्यस्तज्जन्यजनको व्यापार इत्युक्तदिशा फलं प्रति हेतुरूपाया इत्यर्थः। परिवर्तते स्म व्यावर्तते।

## दर्पणः

विभावनालङ्कारः क्रियाया इति। क्रिया कारणव्यापारः। तदेवाह वृत्तिकृत् तत्ररूपेति [हेतुरूपेति]।

## साहित्यचूडामणिः

विभावनामाह—क्रियाया इति। क्रियाग्रहणेऽपि हेतुपदेन व्याख्यौचित्यमित्याह—-हेतुरूपेति। नहि सर्वैः क्रियाफलमेव कार्यमभ्युपगम्यते, वैयाकरणानामेव तथाङ्गीकारात्। यत् सूत्रं "कारणाभावे कार्योत्पत्तिर्विभा-वना"(अलङ्कारसू० ४२) इति। निर्वक्ति—तत्फलेति। फलं विशेषेण भावयतीति कृत्वा। कारणान्तरं यत्र स्वाभाविकत्वाद् विभाव्यं सा विभावनेति। कारणान्वयव्यतिरेकानुविधानात् कार्यस्य कारणमन्तरेण न संभवः स्यात्। यदि कदाचित् कयाचिद्वा युक्त्या तत्सम्भव उपनिबध्यते, तदा विभावनावैशिष्ट्येन कार्यस्योत्थानाद् अप्रसिद्धं कारणं वस्तुतोऽस्तीति कारणाभावे कार्योत्पत्तिरूपविरोधपरिहारः। यथोक्तम् [उद्भटेन] —

**क्रियायाः प्रतिषेधे या तत्फलस्य विभावना।**
**ज्ञेया विभावनैवासौ समाधौ सुलभे सति॥ इति।**

समाधिर्विरोधस्य परिहारः। कारणाभावेन बलवतां कार्यमेव बाध्यते, न तु तेन कारणाभावोऽपीति मिथो बाध्यबाधकभावानुप्राणिताद् विरोधाद् विशेषः। एवं विशेषोक्तावप्यूह्यम्।

कुसुमितेति। अत्राहतापीति लताघातादिरूपायाः क्रियायाः प्रतिषेधेऽपि रुग्धारणादिलक्षणं फलं प्रका-श्यते। अरतिरूपस्य कारणस्य सद्भावात् परिहारः। इयं च वक्ष्यमाणविशेषोक्तिवदुक्तानुक्तनिमित्ताभेदाद् द्विधा। तत्रानुक्तनिमित्तोदाहृता। उक्तनिमित्ता यथा—-[कुमार सं० १.३१]

अनासवाख्यं करणं मदस्य बाल्यात् परं साथ वयः प्रपेदे। इति।

अत्र मदस्य प्रसिद्धं यदासवाख्यं करणं तदभावेऽपि यौवनं हेतुत्वेनोपनिबद्धम्। मदस्य द्वैविध्येऽप्यभे-दाध्यवसायादेकत्वम्। यथा वा ममैव—

**अकुङ्कुमालेपकामनिद्रमनासवास्वादमरोपलीलम्।**
**सन्ध्यामयूखैः क्षणमङ्गनानां रागोऽयमारोहति गण्डरेखाम्॥ इति।**

तत्र गण्डरेखायां रागाधिरोहे कुङ्कुमालेपादि कारमं निवर्त्यते, उच्यते च सन्ध्यामयूखलक्षणम्।

## सम्प्रदायप्रकाशिनी

क्रियाया इति। क्रियैव फलहेतुरिति वैयाकरणदृशोक्तिरियम्। 'अनासवाख्यं करणं मदस्ये'त्यादावपि पानादिद्वारेणैवासवादेर्भेदहेतुत्वमिति क्रियाप्रतिषेधेऽपि फलप्रकाशनं विभावना। कार्यकारणविच्छित्तिविशेषान्न विरोधमात्रम्।

कुसुमितेति। लताहतिं विनापि रुजमधत्त। अलिभिरदष्टापि परिवर्तते स्म। दीर्घिकालहरीभिरलोलितापि अघूर्णत। विरहलक्षणस्तु सूक्ष्मो हेतुरस्तीति न तत्त्वतो विरोधः।

### मधुमती

क्रियायाः इतीदं व्याचष्टे—हेत्विति। तथाच क्रियापदं हेतुपरम्। यत्तु क्रियापदं कारकव्यापारपरम्, तदपि भङ्ग्या हेतावेव पर्यवसन्नम्।

कुसुमितेति। नलिनी नदी।

**'नलिनीनिगूढसलिला च यत्र सा।'**

इति माघकाव्यप्रयोगात्। शेषं प्रतीतम्। इति विभावना।

### विस्तारिका

क्रियाया इति। क्रिया कारकव्यापारः। स चान्यथासिद्धनियतपूर्ववर्तित्वेन हेतुः। तं वक्ष्यति—हेतुरूप-क्रियेत्यादि। फलस्य कार्यस्य व्यक्तिविरुद्धभावनोत्पादना विभावना।

कुसुमितेत्यादि। लतायाः पीडोत्पादकत्वं हतिक्रियाद्वारैव, तदभावे सति विभावना। एवमलिकुलस्य दशनक्रिययैव परिवर्तकता। तथा लहरीणां तरङ्गाणामालोडनद्वारेणाघूर्णकता।

### सारबोधिनी

क्रियाया इति। क्रिया कारकव्यापारः। प्रसिद्धसामग्रीनिषेधेऽपि तत्कार्यरूपफलस्याभिव्यक्तिर्विभा-वना। अप्रसिद्धं कारणमाक्षिप्येति निर्विरोधः। हेतुरूपेति। वैयाकरणाः क्रियाया एव हेतुतां स्वीकुर्वति तन्मतेन व्याकरोति हेतुरूपेति। अन्यथा धात्वर्थरूपक्रियानिषेधस्याकिञ्चित्करत्वेन असङ्गतिः स्यादिति। कुसुमेति। लतायाः पीडोत्पादकत्वं हतिद्वारैव तदभावे सति फलमिति विभावना। एवमलिकुलस्य दर्शनक्रिययैव परिवर्तकता तथा लहराणां तरङ्गाणामालोलनद्वारेम आघूर्णकता। नलिनीयुक्ता लहरी नलिनीलहरी नलिनीपरम्परा।

### काव्यप्रदीपः

**क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना॥ २१॥**

वैयाकरणमते क्रियैव हेतुरिति क्रियेत्युक्तम्। वस्तुतस्तु कारणप्रतीषेधे कार्यवचनं विभावना। न च विरोधः। स्वाभाविकत्वस्य कारणान्तरस्य वा विभावनात्। उदाहरणम्—

**'कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टापि।
परिवर्तते स्म नलिनीलहरीभिरलोलिताप्यघूर्णत सा॥'**

### काव्यप्रकाशखण्डनम्

**क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना॥ (का. १०७, उ०)**

क्रिया कारकव्यापारः प्रसिद्धसामग्रीनिषेधेऽपि तत्कार्यरूपफलस्याभिव्यक्तिर्विभावना। अप्रसिद्धं कारममाक्षिपतीति न विरोधः। वैयाकरणाः क्रियाया एव हेतुतां मन्यन्ते। तथा च हेतुरूपक्रियाप्रतिषेधेऽपि तत्फलप्रकाशनं विभावना। वस्तुतस्तु कारणप्रतिषेधेऽपि कार्यवचनं विभावनेत्यन्ये। यथा—

**कुसुमितलताभिरहताप्यधत्त रुजमलिकुलैरदष्टाऽपि।**
**परिवर्त्तते स्म नलिनी लहरीभिरनालोडिताऽप्यघूर्णत सा॥**

सा नलिनी कुसुमितलताभिरहताऽपि रुजं म्लानिं अधत्त। अलिकुलैरदष्टापि परिवर्त्तते स्म संकुचिता। लहरीभिरनालोडिताऽपि अघूर्णत बभ्रामेत्यर्थः। अत्र लताहननादिकं हेतुस्तदभावेऽपि पीडादिधारणं कार्यमुक्त-मिति प्रकृतोदाहरणता।

### आदर्शः

विभावनाऽलङ्कारमाह—क्रियाया इति। अत्र क्रियापदं प्रकाशनीयफलहेतुक्रियापरमित्याह—हेतुभूत-क्रिययेति। कुसुमितलतेति। सा विरहिणी अहताऽपि कुसुमितलताभी रुजं दुःखमधत्त। अदष्टाऽपि अलिकुलैः परिवर्त्तते स्म। अलोडिताऽपि नलिनीसम्बन्धितरङ्गैरघूर्णतेत्यर्थः, एतेषामुद्दीपकत्वात्। अत्र कारणीभूतहननादिक्रि-याभावेऽपि रुग्धरणादिफलप्रकाशनम्। अत्र च क्रियाया इत्युपलक्षणम्, कारणमात्रप्रतिषेधो बोध्यः। तेनाप्रदीपो-ज्ज्वलं गृहमित्यादिपरिग्रहः।

### सुधासागरः

वैयाकरणाः क्रियाया एव हेतुतां स्वीकुर्वन्ति, तन्मतेन व्याकरोति। हेतुरूपेति। अन्यथा धात्वर्थरूपक्रि-यानिषेधस्याकिञ्चित्करत्वेनासङ्गतिः स्यात्। व्याख्यातं च मधुमतीकारैः क्रियापदं हेतुपरम्, यत्तु क्रियापदं कारक-व्यापारपरं तदपि भङ्ग्या हेतुपर्यवसन्नमिति। एवं च कारणप्रतिषेधे कार्यवचनं विभावना। न च विरोधः, स्वाभाविकत्वस्य कारणान्तरस्य वा विभावनात्।

उदाहरणम्—कुसुमितेति। गीतिश्छन्दः। लक्षणमुक्तम्। विरहिणीवर्णनमिदम्। सा विरहविकला कुसुमितलताभिरप्यहता रुजमधत्त, कठोरताडनेन पीडोत्पत्तिः सम्भवति सा तु कोमलतरकुसुमितलतयाऽप्यहता प्रसिद्धकारणं विनैव पीडिताऽभूत्, विरहवशादिति भावः। एवं वृश्चिकादिदंशने परावृत्य पलायते, सा तु अलिकुलैर्गन्धग्राहकमिलिन्दैरप्यदष्टा परिवर्तते स्म रमणीयस्थानात् पलायते स्म। तथा महदालोडने जन्तुः घूर्णते, सा तु नलिनीयुक्ताभिर्लहरीभिर्ललितमृदुतरङ्गैरपि अलोलिता सती अघूर्णत भ्रमिमवापेत्यर्थः।

(सू० १६३) **विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।**

मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः । अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च । क्रमेणोदाहरणम्—

**निद्रानिवृत्तवुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते ।**

**श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥ ४७४ ॥**

---

### सङ्केतः

एतद्विपर्यये विशेषोक्तिरिति तामाह—विशेषोक्तिरिति ।

निद्रेति । द्युरत्नं रविः । भुजङ्गः पतिः । अत्र निद्रानिवृत्त्यादिहेतुसामग्र्ये सत्यपि आश्लेषत्यागरूपकार्यस्य अवचः । प्रियस्वप्नसमागमादि हेतुः गम्यः ।

### सङ्केतः (रुय्यकः)

विशेषोक्तिरिति—लक्षणारम्भं प्रयोजति । निद्रेति—अत्र चलनाभावस्य निमित्तं मन्मथोन्माथः ।

### बालचित्तानुरञ्जनी

विशेषोक्तिं लक्षयति विशेषोक्तिरिति । व्याकरोति मिलितेष्विति । अनुक्तोक्ताचिन्त्यनिमित्तभेदात् सा त्रिविधेत्याह अनुक्तेति । आद्यामुदाहरति निद्रेति । निद्रानिवृत्तौ द्युरत्ले उदिते सति सखीजने द्वारपदं प्राप्ते भुजङ्गे श्लथीकृताश्लेषरसे सति असावङ्गना आलिङ्गिनात् न चचाल । अत्र निशानाशादिकारणसामग्र्यां सत्यमपि आलिङ्गनपरित्यागलक्षणं कार्यं न लक्ष्यत इति विशेषोक्तिः । अत्र संभोगौत्सुक्यलक्षणनिमित्तं नोक्तमित्यर्थः ।

### काव्यादर्शः

एतद्विपर्ययरूपा विशेषोक्तिरिति । फलस्य कार्यस्य अभणनम् । इह मिलितानि कारणानि नियमेन कार्यमुत्पादयन्ति । यत्तु सत्यपि सामग्र्ये कार्यं न जनयन्ति सा कंचित् विशेषमभिव्यङ्क्तुं प्रयोज्यमाना विशेषोक्तिरनुक्तोक्ताचिन्त्यनिमित्तत्वेन त्रिधा ।

'निद्रे'ति । अत्र निद्रानिवृत्त्यादय आलिङ्गनचलनहेतवस्तेषु सत्स्वपि आलिङ्गनचलनलक्षणं कार्यं नोक्तं, मन्मथोन्माथवल्लभस्वप्नसमागमादि च निमित्तं नोक्तम् ।

### विवेकः

विभावनाविपर्ययात्मकत्वाल्लक्षयति विशेषोक्तिरिति । मिलितानि कारणानि कार्यं जनयन्तीति प्रसिद्धम्, अन्यथा कारणमेलकमेवाभावप्रसङ्गात् । तेष्वपि सत्सु यत्न न कार्यस्य सम्भवः स कश्चिद्विशेषमभिवक्तुं प्रयुज्य-

मानो विशेषोक्तिः। सा च द्विधोक्तनिमिताऽनुक्तनिमित्ता च। अनिमित्ताऽनुक्तनिमित्तैव, अनुक्तस्य चिन्त्या चिन्त्यत्वेन द्वैविध्यात्। निद्रेत्यादि—पदं स्थानम्। अत्र निद्रानिवृत्त्यादयः आलिङ्गनचलनहेतवः। तत्र तेष्वपि सत्सु तस्यानुत्पत्तौ निमित्तं मन्मथोन्माथः, तच्च नोक्तम्। यथा वा—आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि। गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति ॥ (ध्व. आ. वृ. १/४)। 'अत्राह्वानादयः संकोचशिथिलीकारहेतव इति तेषु सत्स्वपि तस्यानुत्पत्तौ प्रियतमास्वप्नसमागमादि निमित्तमनुक्तम्। अस्य च व्यङ्ग्यस्य प्रकरणसामर्थ्यात् प्रतीतिमात्रं न तु तत्कृता काचिच्चारुत्वनिष्पत्तिरित्यस्य न प्राधान्यम्। अत एव न ध्वनिव्यवहारः' (ध्व. आ. लो. १/४)

## दीपिका

सामान्यलक्षणसंगृहीतान् सूत्रकृताऽनुक्तानपि विशेषोक्तिविशेषान् वृत्तिकृदाह-अनुक्तेति। अनुक्तनिमित्तोक्तनिमित्तेति च द्विधा भूता, अनुक्तनिमित्तायाश्चिन्त्याचिन्त्यनिमित्ततया द्वैविध्यात् त्रिविधेति भावः। क्रमेणेत्यतः पूर्वमुक्तेति शेषः। निद्रेत्यादावनुक्तमपि स्मरसमरनिः सहत्वादिभाव्यमेवालिङ्गनापरित्यागनिमित्तम्।

## दर्पणः

विशेषोक्त्यलंकारः। भलारवः [फलावचः] फलस्याभाव वचनं। निहेत्यादौ [निद्रेत्यादौ] अङ्गनाया आलिङ्गनपरित्यागे स्मरसङ्गरश्रान्तत्वादि निमित्तमनुक्तमपि विभावयितुं शक्यम्।

स एक इत्यादौ तनुहरणेऽपि बलाहरणानि निमित्तं निरूप्यमाणमपि। [बलरहणं तनुहरणे निमित्तम्] त्वर्विज्ञान [?] मित्यचिन्त्यम्।

## साहित्यचूडामणिः

अथ विभावनावैपरीत्येन विशेषोक्तिमाह—विशेषोक्तिरिति। फलावचः कार्यस्यावचनम्। कारणसमवायेऽपि कार्यस्याप्रकाशनं विशेषोक्तिरित्याह—मिलितेष्वपीति। यत् सूत्रं 'कारणसामग्र्ये कार्यानुत्पत्तिर्विशेषोक्तिः (अलंकारसू० ४३) इति। समग्राणि कारणानि कार्यमुत्पादयन्तीति प्रसिद्धिः। यदि च कार्यं नोत्पद्यते तत् कञ्चिद् विशेषमभिव्यङ्क्तुं, विशेषश्च विस्मयावहत्वादिः। तथोक्तम् [उद्भटेन] —

**सामस्त्येऽपि च शक्तीनां फलानुत्पत्तिबन्धनम्।**
**विशेषस्याभिधित्सातः सा विशेषोक्तिरिष्यते ॥ इति।**

तामेनां

दर्शितेन निमित्तेन निमित्तादर्शनेन च।

तस्या बन्धो द्विधा लक्ष्ये दृश्यते ललितात्मकः ॥ इति [उद्भट-]

नीत्या विभजते—अनुक्तेति। यद्यप्यचिन्त्यनिमित्तानुक्तनिमित्तैव, अनुक्तस्य चिन्त्याचिन्त्यत्वेन द्वैविध्यात्, तथापि तद्वैचित्र्यप्रकाशनाय पृथगुद्देशोदाहरणे।

निद्रेति। द्युरत्ने सूर्ये। अत्र निद्राहान्यादिकारणसामग्र्यामपि चलनलक्षणं कार्यं न लक्ष्यते। सम्भोगौत्सुक्यलक्षणो हेतुरनुक्तश्चिन्त्यः।

### सम्प्रदायप्रकाशिनी

विशेषोक्तिरिति। समग्रेषु कारणेषु कार्याकथनं व्यङ्ग्यविशेषार्थत्वाद् विशेषोक्तिः उक्तानुक्ताचिन्त्यनिमित्ततया त्रिधा।

निद्रेति। निद्रानिवृत्तिसूर्योदयसखीद्वारावाप्तिभुजङ्गाश्लेषश्लथीकारेषु समग्रेष्वपि कारणेष्वलिङ्गनादचलनं प्रेमविशेषव्यञ्जनादनुक्तनिमित्ता विशेषोक्तिः।

### मधुमती

मिलितेषु इति अखण्डेषु इत्यस्य व्याख्यानम्। तथाच कारणसम्पत्त्यभिधानेऽपि कार्यानभिधानं विशेषोक्तिः इत्यर्थः।

विभजते—अनुक्तनिमित्तेति। न च अचिन्त्यनिमित्तायाः अनुक्तनिमित्तायामेवान्तर्भावः, अनभिधानस्य तुल्यत्वात् इति वाच्यम्। विशेषतो हेतुज्ञानेऽपि विवक्षावशात् अनिभिधानं अनुक्तनिमित्तायाम्, विशेषतो हेत्वज्ञानात् अनभिधानं अचिन्त्यनिमित्तायां इति भेदात्।

### विस्तारिका

विशेषोक्तिरित्यादि। अखण्डानि कारणानि सामग्री, फलावचः कार्यानभिधानेन दाहकार्यस्याकथनमिति। रागातिशयोदेर्विशेषस्योक्तिर्यत्र सेत्यर्थः। तच्च क्वचित् कथननिमित्तमपेक्षते, तस्य निमित्तस्य त्रैविध्यात् त्रिधा विशेषोक्तिरित्याह—उक्तनिमित्तेत्यादि।

अनुक्तनिमित्तायाश्चिन्त्यनिमित्तत्वेन द्वैविध्यमिति मिलित्वा त्रैविध्यमिति।

निद्रेत्यादि। द्युरत्ने रवौ श्लथीकृतोऽशेषरसो येन भुजङ्गेनेति बहुब्रीहिः। अशेषरसः चुम्बनपरिरम्भरतोत्सवादिः। दृढतरतदुपभोगतया नायिकायारतदुत्कण्ठापनोदनं श्लथीकरणम्। भुजङ्ग उपपतिः, अत एव निर्दयोभोगः। तेनात्र सुरतश्रमादक्षमत्वं निमित्तमनुक्तं चिन्तनीयमिति।

### सारबोधिनी

विशेषोक्तिरिति। अत्राप्यप्रसिद्धं कारणं सिद्ध्यतीति न विरोध इति। फलावचः कार्यानभिधानम्। तच्च निमित्तपेक्षते। तथा च निमित्तस्य त्रैविध्यात् त्रिधा विशेषोक्तिरित्याह अनुक्तनिमित्तेत्यादि। अनुक्तनिमित्तायाश्चिन्त्याचिन्त्यनिमित्तत्वेन द्वैविध्यमिति मिलित्वा त्रैविध्यम्। निद्रेति। श्लथीकृताश्लेषरस इति, तेन सर्वाङ्गसंपन्नः संभोगो जातस्तथा चात्र सुरतश्रमादक्षमत्वं निमित्तमनुक्तंचिन्तनीयमिति।

### काव्यप्रदीपः

**विशेषोक्तिरखण्डेषु कारणेषु फलावचः।**

अखण्डेषु मिलितेषु प्रसिद्धकारणेषूक्तेषु कार्याभाववचनं विशेषोक्तिः। अत्राप्यप्रसिद्धे कार्याभावहेतौ पर्यवसानाद्विरोधाभाव:। सा च त्रिधा—अनुक्तनिमित्ता उक्तनिमित्ता अचिन्त्यनिमित्ता च। तत्राद्या यथा—

**'निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते।**
**श्लथीकृताश्लेषरसे भुजंगे चचाल नालिङ्गनतोऽङ्गना सा॥'**

अत्रानुरागातिशयो निमित्तं चलनाभावे। स च विशिष्य वक्तुं शक्यत्वेऽपि नोक्त इत्यनुक्तनिमित्तेयम्।

## काव्यप्रकाशखण्डनम्

विशेषोक्तिरखण्डेषु [प० ५२, १] कारणेषु फलावचः। (का. १०८, पू०)

फलावचः कार्यानभिधानम्। अत्राप्यप्रसिद्धं कारणं सिद्धयतीति न विरोधः। यथा—निशात्ययव्यञ्ज (ञ्जि ?)नि पङ्कजानामामोदमेदस्विनि गन्धवाहे।

न मुञ्चते कैतवबद्धनिद्रावन्योऽन्यकण्ठग्रहणं युवानौ।

## आदर्शः

विशेषोक्त्यलङ्कारमाह—विशेषोक्तिरिति। अखण्डेषु मिलितेषु कारणेषूक्तेष्विति शेषः। फलावचः फलाभावकथनम्। वृत्तावप्येवमेव व्याख्येयम्, न तु फलानुक्तिः सकलपदार्थानामेव फलवत्वेनानुक्तफले सर्वत्रै-वैतदलङ्कारप्रसक्तेः, वैचित्र्याननुभवात्तत्र नेष्टापत्तिः। अस्यास्त्रैविध्यमाह—अनुक्तनिमित्तेति। फलाभावस्य चिन्त्यत्वेऽपि अनुक्तत्केत्यर्थः।

निद्रेति। द्युरत्नं सूर्यः। भुजङ्गः कामुकः। अत्राऽऽलिङ्गनतोऽचलनस्य निमित्तमुत्कटो रसावेश-श्चिन्त्योऽप्यनुक्तः। निद्रानिवृत्त्यादीनि च चलनकारणान्युक्तानि।

## सुधासागरः

अखण्डेषु मिलितेषु प्रसिद्धकारणेषूक्तेषु कार्याभाववचनं विशेषोक्तिः। अत्राप्यप्रसिद्धे कार्याभावहेतौ पर्यवसानाद् विरोधाभावः। सा च त्रिधा। अनुक्तनिमित्ता। उक्तनिमित्ता, अचिन्त्यनिमित्ता च। तदेतदुक्तं मिलितेष्वपीत्यादिना।

तत्राद्या यथा—निद्रेति। द्युरत्नं सूर्यः। भुजङ्गः उपपतिः। स्पष्टमन्यत्। अत्रानुरागातिशयो निमित्तं चलनाभावे। स च विशिष्य वक्तुं शक्यत्वेऽपि नोक्त इत्यनुक्तनिमित्तेयम्।

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे॥ ४७५॥

### सङ्केतः

कर्पूर इति। अत्र दाहरूपे सत्यपि कारणे शक्तिरूपविरुद्धधर्मेण अशक्ताख्यकार्यानुक्तिः। तत्र अवार्यवीर्यत्वं हेतुः साक्षादुक्तः।

### बालचित्तानुरञ्जनी

उक्तनिमित्तामुदाहरति कर्पूर इवेति। कर्पूर इव दग्धोऽपि यः कामः जने जने शक्तिमान् अवार्यवीर्याय तस्मै मकरकेतवे नमोऽस्तु। दाहलक्षणे कारणे सत्यपि अशक्तिमत्त्वस्य कार्यस्याभावः। अवार्यवीर्यत्वं च निमित्तमुक्तम्।

### काव्यादर्शः

'कर्पूरः' इति। अत्र सत्यपि दाहलक्षणेऽविकले कारणेऽशक्तत्वाख्यस्य कार्यस्य नोक्तिः। अवार्यवीर्यत्वं च निमित्तत्वेन उक्तम्।

### विवेकः

कर्पूर इवेत्यादि—अत्र सत्यपि दाहलक्षणेऽविकले कारणेऽशक्तत्वाख्यस्य कार्यस्यानुत्पत्तिः शक्तिस्वरूपेण विरुद्धेन धर्मेणोपनिबद्धा। अवार्यवीर्यत्वं निमित्तमुक्तम्, अतोऽत्र वस्तुस्वभावमात्रे पर्यवसानम्।

### दीपिका

स एक इत्यादौ तनुहरणेऽपि बलाहरणनिमित्तं निरूप्यमाणतायामपि दुर्विज्ञानत्वेनाचिन्त्यम्। कर्पूर इत्यादौ दाहेऽपि शक्तिमत्वेऽवार्यवीर्यत्वमुपात्तमेव निमित्तम्।

### दर्पणः

कर्पूर इवेत्यादौ दाहेऽपि शक्तिमन्त्वे [शक्तिमत्वे] अवार्यवीयत्वं [अवार्यवीर्यत्वं] निमित्तमुक्तम्।

### साहित्यचूडामणिः

उक्तनिमित्तामाह—कर्पूर इवेति। अत्र सत्यपि दाहलक्षणहेतावशक्तत्वलक्षणस्य कार्यस्यानुत्पत्तिः शक्तिमत्त्वरूपेण विरुद्धेन धर्मेणोपनिबद्धा। अवार्यवीर्यत्वं च निमित्तमुक्तम्। नन्वेवं विरुद्धधर्ममुखेनापि कार्यानुदयोक्त्या विशेषोक्तिपरिकल्पने 'यः कौमारहर' इत्यादावपि विशेषोक्तेरनिषेध्यतया निरलङ्कारतापक्षनिर्वाहो न सङ्घटत इति चेत्। सत्यम्। सर्वं काव्यं सालङ्कारमिति चिरन्तनोद्भटाद्यालङ्कारिकपक्षकटाक्षेण ग्रन्थकार एवमुभयमुदाजहारेति न सर्वथा पौर्वापर्यपर्यालोचनायामौचित्याभाव इत्यलं व्याख्येयग्रन्थस्खलनोल्लेखेन।

**सम्प्रदायप्रकाशिनी**

कर्पूर इवेति। निर्लेशं दग्धोऽपि शक्तिमानित्यवार्यवीर्यत्वादुक्तनिमित्ता।

**मधुमती**

अत्र उदाहरणत्रये—प्रथमे अनुक्तनिमित्तत्वम्। द्वितीये तु उक्तनिमित्तत्वम्, अवार्यवीर्यत्वस्यैव हेतोः उपादानात्, तृतीये अचिन्त्यनिमित्तत्वं इति द्रष्टव्यम्। इति विशेषोक्तिः।

**विस्तारिका**

कर्पूर इत्यादि। शक्तिर्घ्राणस्य मनसश्चाकर्षकता। अत्र शरीरदाहः शक्तिध्वंसे कारणम्।

**सारबोधिनी**

कर्पूर इत्यादि। शक्तिर्घ्राणस्य मनसश्चाकर्षकात। अत्र दाहः शक्तिध्वंसकारणम्। सति च तत्र तदकथनम्। अवार्यवीर्यत्वं निमित्तम्, तदुक्तमेव।

**काव्यप्रदीपः**

उक्तनिमित्ता यथा—

**'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने।**
**नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे॥'**

'अत्र कर्पूरदाहमात्र उपमानं न तु शक्तिमत्त्वेऽपि' इति भास्करः। शक्तिमत्त्व इति परमार्थः। ईषद्दग्धस्य तस्य सौरभाद्यतिशयात्।

**'भ्रूभ्यां प्रियाया भवता मनोभूचापेन चापे घनसारभावः।**
**निजां यदप्लोषदशामपेक्ष्य संप्रत्यनेनाधिकवीर्यतार्जि॥'**

इत्यादि नैषधदर्शनात्।

**आदर्शः**

एककारणोक्तावप्ययं भवतीत्यभिप्रायेणोक्तनिमित्तमुदाहरति—कर्पूर इवेति। दाहेऽपि कर्पूरस्याऽऽस्वादविशेषजनशक्तिर्न विहन्यत इत्यतो दग्धकर्पूरो दृष्टान्तः। अत्र दाहफलं शक्तिमत्वाभावस्तदभावः शक्तिमत्त्वमुक्तम्, अवार्यवीर्यत्वञ्च तन्निमित्तमुक्तमित्युक्तनिमित्ता, दाहश्च कारणमेकमेवोक्तम्।

## सुधासागरः

उक्तनिमित्ता यथा—कर्पूर इति। स्पष्टम्। अत्र कर्पूरो दाहमात्रे उपमानं न तु शक्तिमत्त्वेऽपीति भास्करः। शक्तिमत्त्वे इति परमार्थः। ईषद्दग्धस्य सौरभाद्यतिशयात्।

**भ्रूभ्यां प्रियाया भवता मनोभूचापेन चापे घनसारभावः।**
**निजां यदप्लोषदशामपेक्ष्य सम्प्रत्यनेनाधिकवीर्यताऽऽर्जि॥ ७.२५॥**

इत्यादिनैषधदर्शनादिति काव्यप्रदीपकाराः। तद्भ्रान्तिविलसितम्। तथाहि कर्पूर इवेषद्दग्धोऽपि शक्तिमानिति विवक्षायामन्यस्यापीषद्दग्धस्य शक्तिमत्त्वसम्भावनया विशेषोक्तिर्भज्येत। तस्मान्निः शेषदाहे कर्पूरः उपमानम्। यथा कर्पूरदाहे भस्माऽपि नावशिष्यते, तथा निःशेषं दग्धोऽपि जने जने यः शक्तिमानित्यर्थः। एवञ्च शक्तिध्वंसे निःशेषदाहस्य नियतकारमत्वाद्विशेषोक्तिरुपपद्यते इति सहृदयैराकलनीयम्। अत्रावार्यवीर्यत्वं शक्तिमत्त्वे कार्याभावरूपे हेतुरुक्तः।

**स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।**

**हरतापि तनुं यस्य शंभुना न बलं हृतम् ।। ४७६ ।।**

---

**सङ्केतः**

हरताऽऽपीति । अत्र तनुहरणस्य हेतोः फलं बलहरणं परं नोक्तम् । निमित्तं चात्र प्रतीत्यगोचरत्वात् अचिन्त्यम् ।

**'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः'**

इति यत् अन्यैः अस्याः अस्याः लक्षणं कृतम्, सा अस्मन्मते रूपकभेद एव यथा—

**'वनेचराणां वनितासखानां**

**दरीगृहोत्सङ्गनिषक्तभासः ।**

**भवन्ति यत्रौषधयो रजन्यां**

**अतैलदीपाः सुरतप्रदीपाः ।।'**

इति । अस्यामपि फलाभावः कारणसत्तामेव बाधते । अत एव मिथोबाधजीवितात् विरोधात् भिद्यते । इति विशेषोक्तिः ।

**बालचित्तानुरञ्जनी**

अचिन्त्यनिमित्तामुदाहरति स एक इति । एकः कुसुमायुधः सन् त्रीणि जगन्ति जयति । यस्य तनुं हरतापि शंभुना बलं न हृतम् । अत्र तनुहरणे सत्यपि बलहरणस्य कार्यस्यानुक्तिः । तत्र च निमित्तमचिन्त्यं परमेश्वरस्य प्रभावस्य पर्यनुयोगानर्हत्वात् ।

**काव्यादर्शः**

'स एकः' इति । अत्र तनुहरणे कारणे सत्यपि बलहरणस्य कार्यस्य अनुक्तौ निमित्तमचिन्तनीयमेव । प्रतीत्यगोचरत्वात् 'अतैलपूराः सुरतप्रदीपाः' इत्यादि तु रूपकम् । एकगुणहानिकल्पनायां न पृथग् विशेषोक्तिलक्षणारम्भं प्रयोजयति ॥ [२१]

**विवेकः**

स एक इत्यादि—अत्र तनुहरणकारणे सत्यपि बलहरणस्य कार्यस्यानुत्पत्तौ निमित्तमनुक्तमप्यचिन्त्यमेव, प्रतीत्यगोचरत्वात् । अत्रापि न व्यङ्ग्यस्य सद्भावः । कार्यानुत्पत्तिश्चात्र क्वचित् कार्यविरुद्धोपपत्त्या निबध्यते । एवं विभावनायामपि कारणाभावः क्वचित् कारणानामविरुद्धत्वमुखेन प्रतिपाद्यत इति 'यः कौमारहरः' (श्लो. १) इत्यादावुक्तमेव । 'भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ।' (कु. सं. १/१०) । 'द्यूतं हि नाम पुरुषस्या-

सिंहासनं राज्य'मित्यादि (मृ.श. २ अ). तु रूपकं (का. अ. सू. वृ ४/३/२३) प्रायेण पृथक् विशेषोक्तिलक्षणं प्रयोजयति । तथाच वामनः—'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्ति'रिति । 'रूपकश्चेदं प्रायेणे'ति । (का. अ. सू. वृ. ४/३/२३) पुनस्तेनैवोक्तम् ।

### साहित्यचूडामणिः

अचिन्त्यनिमित्तामाह—स एक इति । अत्र तनुहरणे कारणे सत्यपि बलहरणस्य कार्यस्यानुक्तिः । तत्र च निमित्तमनुक्तमचिन्त्यं च । परमेश्वरप्रभावस्य पर्यनुयोगानर्हत्वात् ।

### सम्प्रदायप्रकाशिनी

स एक इति । तनुहरणेऽपि बलाहरणोक्तिरचिन्त्यनिमित्ता । उक्तप्राप्ते (?) रनुक्तनिमित्तातोऽन्या । 'भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः' इत्यादिर्वामनादीनाम् एकगुणहानिकल्पनायां साम्यदार्ढ्यल-क्षणा विशेषोक्तिः । ग्रन्थकृतस्तु मते रूपकभेद एव ।

### विस्तारिका

व्यवच्छेदयति—कुसुमेत्यादि ।

अत्र तनुहरणं बलहरणे कारणम् । सति च तत्र तदकथनम् । तत्र निमित्तस्य चिन्तयितुमशक्यतयाऽनुक्ति-रित्यनुक्तनिमित्तताया भेदोऽचिन्त्यः । नित्यनिमित्ततेति सम्प्रदायः । वस्तुतस्तु अचिन्त्यनिमित्तत्वं प्रकारान्तरं नानु-क्तनिमित्तताया भेदः । निमित्तस्योक्तिं विनाप्याक्षेपादिना लभ्यत्वादनुक्तौ तथात्वात्; अन्यथा निमित्तानुक्तेराकस्मिकतापत्तेः । उपमानोपमेययोरित्यादिप्रकारः स इति । अत्र तनुहरणे बलहरणप्रसिद्धहेतौ सत्यपि यत्र बलाहरणं तत्र हेतुर्नोक्तः । स च सर्वदेवानुग्रहरूप उपपद्यत इत्यनुपस्थितः । शास्त्रैकगम्योऽनाकलितशास्त्रा-णागम्यः ।

### सारबोधिनी

स एक इति । एकोऽसहायः अथवा एकोऽवधारणे । स एव नान्यः । तनुहरमं बलहरणे कारणम् । सति च तत्र तदकथनं तत्र निमित्तस्य चिन्तयितुमशक्यतयाऽचिन्त्यनिमित्तता ।

### काव्यप्रदीपः

अत्रावारवीर्यत्वं शक्तिमत्त्वे कार्याभावरूपे हेतुरुक्तः । अचिन्त्यनिमित्ता

यथा—

**'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।**
**हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥'**

अत्र तनुहरणेऽपि बलाहरणस्य हेतुर्विशिष्य वक्तुं न शक्यत इत्यचिन्त्यनिमित्तेयम् ।

### आदर्शः

अचिन्त्यनिमित्तामाह—स एक इति। त्रीणि जगन्ति स एको जयतीत्यन्वयः। अत्र तनुहरणस्य फलं बलहरणं तदभाव उक्तः, तन्निमित्तञ्चाचिन्त्यत्वादनुक्तम् इति अचिन्त्यनिमित्ता।

### सुधासागरः

अचिन्त्यनिमित्ता यथा—स एकस्त्रीति। स्पष्टम्। अत्र तनुहरणेऽपि बलाहरणस्य हेतुर्विशिष्य वक्तुं न शक्यत इत्यचिन्त्यनिमित्तेयम्।

**(सू० १६४) यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ १०८ ॥**

**एकस्त्रिधा वससि चेतसि चित्रमत्र**

**देव द्विषां च विदुषां च मृगीदृशां च ।**

**तापं च संमदरसं च रतिं च पुष्णन्**

**शौर्योष्मणा च विनयेन च लीलया च ॥ ४७७ ॥**

---

**सङ्केतः**

यथासङ्ख्यमिति । सङ्ख्योपलक्षितक्रमानतिक्रमेण पदार्थानामन्वये यथार्थ यथासङ्ख्यं—यथाक्रमम् । क्रमः इति यावत् । क्रमिकाः क्रमवन्तः । बहुवचनं अतन्त्रम् । तेन द्वयोरप्यर्थयोः यथासङ्ख्यं भवति ।

एक इति । अत्र शौर्योष्म-विनय-लीलाः वर्ण्यत्वेन उद्दिष्टाः । तासां यथाक्रमं देवद्विदटू-विद्वन्-मृगदृशां अनुनिर्देशाः । एकस्त्रिधेतिवाक्यात् व्यङ्ग्यः विरोधोऽपि । इदं क्रमिकवचनानां असमस्तत्वात् सम्बन्धस्य अतिरोहिततया शाब्दम् । यत्र तु क्रमिकाणां समासः क्रियते तत्र अर्थानुगमालोचनेन अवयवगतक्रमसंबन्धप्रतीतौ आर्थत्वम् । तच्च स्वयमूह्यम् । इति यथासङ्ख्यम् ।

**बालचित्तानुरञ्जनी**

यथासंख्यालङ्कारं लक्षयति यथासंख्यमिति । प्रथमनिर्दिष्टाः पश्चान्निर्दिष्टाश्चेति द्विविधाः । तेषां मध्ये आद्यः पश्चान्निर्दिष्टानां क्रमेण व्यत्ययो यथासंख्यालङ्कार इत्यर्थः । तमुदाहरति एक इति । हे देव ! एकस्त्वं द्विषां विदुषां मृगीदृशां चेतसि क्रमेण शौर्योष्मणा विनयेन लीलया तापं च संमदरसं च रतिं च पुष्णन् त्रिधा वससि चित्रम् ।

**काव्यादर्शः**

उद्दिष्टानामर्थानां पश्चान्निर्दिष्टैरर्थैः क्रमेण संबन्धो यथासंख्यं, संख्योपलक्षितक्रमानतिक्रमेण पदार्थानामन्वयसमाश्रयात् । अन्ये तु इमं क्रमसंज्ञमाहुः । क्रमिकाणामिति बहुवचनमतन्त्रम् । तेन द्वयोरपि अर्थयोर्यथासंख्यम् । तच्च शब्दामार्थं चेति द्विधा । यत्र असमस्तानां पदानामसमस्तैः पदैरर्थद्वारकः संबन्धस्तत्र क्रमसंबन्धस्य अतिरोहितस्य प्रत्येयत्वाच्छाब्दं, यत्र तु समासः क्रियते तत्र समुदायस्य समुदायेन सह संबन्धस्य शाब्दत्वाद् अर्थानुगमपर्यालोचने अवयवगतसंबन्धः प्रतीयत इति आर्थत्वम् । तच्च बहुषूद्दिष्टेषु प्रधानार्थेषु यतो द्विविशेषणयुक्तं द्विगुणं त्रिविशेषणयुक्तं त्रिगुणं वा रम्यं जायत इति तथैव बध्नीयात्, द्वयोः पुनरुद्दिष्टयोर्बहुशोऽपि विशेषणानि बध्नीयात् ।

'एकस्त्रिधा' इति । शौर्यौष्मविनयलीलानां वर्णनीयत्वेन उद्दिष्टानां यथाक्रमं देवद्विट्विद्वन्मृगदृशामनुनिर्देशः । अत्र त्रिगुणत्वेन उपनिबन्धः । द्वयोरुद्दिष्टयोर्बहुगुणोपनिबन्धो यथा—

**दुग्धोदधिशैलस्थौ सुपर्णवृषवाहनौ घनेन्दुरुची।**
**मधुमकरध्वजमथनौ पातां वः शाङ्गिशूलधरौ॥**

—अत्र दुग्धोदध्यादीनां शाङ्गिशूलधराभ्यां संबन्धः श्रुत्या समुदायनिष्ठः प्रतीयते, अर्थानुगमानुसरणेन तु अवयवानां क्रमसंबन्धावगतिरिति आर्थं यथासंख्यम्। द्वयोरुद्देशिपदं परिकल्प्य चत्वारि तद्विशेषणानि। एवं द्विर्विशेषण योगातद् द्विगुणं ज्ञेयम्।

## विवेकः

कार्याभावस्य क्रमसम्बन्धो विशेषोक्तावस्तीति सङ्गत्यैतल्लक्षणमाह यथासंख्यमिति। क्रमिकाः क्रमवन्त उद्देशिनोऽनुद्देशिन इत्यर्थः। क्रमेणैवेति—येनैव क्रमेणैवामी क्रमवन्तस्तेनैवेत्यर्थः। 'यथासंख्यन्तु द्वेधा शाब्दमार्थञ्च। तत्र शाब्दं यत्रासमस्तानां पदानामसमस्तैः पदैरर्थद्वारकः संबन्धः, तत्र क्रमसम्बन्धस्य शाब्दत्वा० दर्थानुगमपर्यालोचनया त्ववयवगतः क्रमसंबन्धः प्रतीयते। तेनात्र यथासंख्य आर्थत्वम्' (अ. स. १७८ पृ.)। इदञ्च यथासंख्यं द्विगुणत्रिगुणादिभेदाद्रम्यत्वमासादयति (रु. का. अ. ७/३५ द्र.)। तत्र द्विगुणं यथा—लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा। इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं चिन्तारजमहोवृथैव किममी सृष्टाः कुलक्ष्माभृतः॥ इति (अ. स. १८८ पृ.)। त्रिगुणं यथा—एक इत्यादि। अत्र रिपुप्रभृतीनां तापादिभिस्तेषाञ्च शौर्योष्मप्रभृतिभिः कारणैः क्रमसंबन्धस्याव्यवहितत्वेन प्रतीतेः शाब्दं यथासंख्यम्। आर्थन्तु यथा—(रु. का. अ. ७/३६) कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः। जलनिधगिरिकमलस्था हरिहरचतुराननाः ददतु॥ अत्र कज्जलादीनां सुपर्णादिभिः संबद्धानां जलनिध्यादिभिः संबन्धो हरिप्रभृतिभिः सम्बन्धश्रुत्या समुदायनिष्ठः प्रतीयते। अर्थानुगमानुसारेण त्ववयवानां क्रमसम्बन्धावगतिरित्यार्थं यथासंख्यम्' (अ. स. १८८ पृ.)। द्वयोस्तु बहुशो यथा—(रु. का. अ. ७/३७) दुग्धोदधिशैलस्थौ सुपर्णवृषवाहनौ घनेन्दुरुची। मधुकरध्वजमथनौ पातां वः शार्ङ्गशूलधरौ॥ वामनस्तूपमेयोपमानानां क्रमसंबन्धः क्रमः (का. अ. सू. वृ. ४/३/१७) इत्युपमासद्भाव वैचित्र्यातिशयं मन्वानः क्रमाभिधानमिममलङ्कारमाचष्टे यथा—मृणालहंसपद्मानि बाहुचक्रमणाननैः। निर्जयन्त्याऽनया व्यक्तं नलिन्यः सकला जिताः॥ (भा. का. अ. ३/३८) इति। उपमाप्रपञ्चवादिनां मतमपहायौपम्याभावेऽपि यथासंख्यमात्रेण चारुत्वनिष्पत्ताविदमिति भट्टोद्भटरुद्रटादयः। एतदेवाभिसन्धाय ग्रन्थकृता सामान्येनैव लक्षणं कृतम्।

## दीपिका

क्रमिकाणां क्रमेणोपात्तानां क्रमेणोपात्तैरेव सम्बन्ध्यन्तरैर्वैयर्थ्यासमन्वयो यथासंख्यम्।

## दर्पणः

यथासंख्यालंकारः। यथासंख्यम्। क्रमि क्रमिकानां [क्रमिकाणां] क्रमेणोपात्तानां समन्वयः सम्बन्धः अर्थात् क्रमोपात्तैः तैः सम्बन्धिरेव [?]।

## साहित्यचूडामणिः

यथासङ्ख्यमिति। क्रमिकाणां क्रमवताम्। ते चोर्ध्वनिर्दिष्टाः। पश्चान्निर्दिष्टाश्चेति द्विधा। क्रमाद् आद्यैरन्येषां क्रमेणान्वयो यथासङ्ख्यम्। यत्सूत्रम् "उद्दिष्टानामर्थानां क्रमेणानुदेशो यथासङ्ख्यम्" (अलंकार सू० ६०) इति। अन्ये त्वेनं क्रम इत्याहुः।

एक इति। अवैषम्यप्रतिपादनाय सर्वत्र चकारः। अस्य च द्वैविध्यमस्ति शाब्दत्वार्थत्वभेदात्। शाब्दं यस्मिन्नसमस्तानां पदार्थानामसमस्तैः पदार्थैरर्थद्वारकः सम्बन्धः, अतिरोहितस्य क्रमसम्बन्धस्य प्रतीयमानत्वात्। आर्थं तु यत्र समासः प्रक्रियते तत्र समुदायस्य समुदायेन क्रमसम्बन्धमात्रं शाब्दमन्यदार्थम्, अर्थानुगमपर्यालोचनेन पश्चादवयवविषयस्य क्रमसम्बन्धस्य प्रतीयमानत्वात्। समुदायनिष्ठस्य श्रुत्या प्रतीतिः, अवयववर्तिनः पुनरर्थानुसारादिति तात्पर्यात्। तच्च बहिरूहनीयम्। यथा—

**कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः।**
**जलनिधिगिरिकमलस्था हरिहरकमलासना ददतु॥ इति।**

## सम्प्रदायप्रकाशिनी

यथासङ्ख्यमिति। क्रमिकाणां क्रमेणान्वयो यथासङ्ख्यम्। क्रम इत्यन्ये। एकस्त्रिधेति। शौर्यविनयलीलाभिस्तापसम्मदरतिपोषात् वैरिविद्वन्मृगीदृशां हृदि त्रिधा वससीति क्रमिकोऽन्वयः। एवं समासेऽपि विज्ञेयम्।

## मधुमती

यथासङ्ख्यमिति। क्रमिकाणां उद्देशिनां अनुद्देशिनां च क्रमेण अयुगपत् समन्वयः इत्यर्थः।

यद्यपि—'अकलिततपस्तेजोवीर्ये'त्यादौ क्रमव्युत्क्रमस्य भग्नक्रमत्वाभिधानात् तदभावरूपोऽयं न अलङ्कारतामर्हति। तथापि—एकत्र तथाविधनाना क्रमोपादाने वैचित्र्यानुभवात् अलङ्कारमध्ये गणितोऽयम्, परिकरालङ्कारवत् इति द्रष्टव्यम्। इति यथासङ्ख्यम्।

## विस्तारिका

यथासङ्ख्यमिति। यथासङ्ख्यनामालङ्कार इत्यर्थः। क्रमिकाणामुद्देश्यानां विधेयानां च क्रमेण नियमेन। पूर्वस्य पूर्वेण, मध्यस्य मध्येन, अन्त्यस्यान्त्येनेत्यर्थः।

यद्यपि 'अकलिततपस्तेजोवीयं' इत्यादावक्रमस्य दोषत्वाभिधानात् तदभावरूपो नायमलङ्कारो भवितुमर्हति, तथाप्येकत्रानेकेषां तथात्वे वैचित्र्यानुभवादलङ्कारतेत्ययं गणित इति ध्येयम्।

## सारबोधिनी

यथासंख्यमिति। यथासंख्यं नामालङ्कार इत्यर्थः। यद्यपि 'अकलिततपस्तेजोवीर्येत्यादौ अक्रमस्य दोषताभिधानात् तदभावरूपो नायमलङ्कारो भवितुमर्हति तथाप्येकत्रानेकेषां तथात्वे वैचित्र्यानुभवादलङ्कारतेत्ययं गणितः।

### काव्यप्रदीपः

यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ २२ ॥

यथा—

'एकस्त्रिधा वससि चेतसि चित्रमत्र
देव द्विषां च विदुषां च मृगीदृशां च।
तापं च संमदरसं च रतिं च पुष्ण-
ञ्शौर्योष्मणा च विनयेन च लीलया च॥'

स्पष्टम्।

### काव्यप्रकाशखण्डनम्

यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ (का० १०८, उ०)

यथासङ्ख्यमिति यथासङ्ख्यनामालङ्कार इत्यर्थः। क्रमेण पूर्वस्य पूर्वेण मध्यमस्य मध्यमेन अन्त्यस्य अन्त्येनेत्यर्थः। यथा—

एकस्त्रिधा वससि चेतसि चित्रमेतत् देव द्विषां च विदुषां च मृगीदृशां च।
तापं च संमदरसं च रतिं च पुष्णन् शौर्योष्मणा च विनयेन च लीलया च॥

देव! द्विषां चेतसि शौर्योष्मणा तापं पुष्णन्, विदुषां चेतसि विनयेन संमदरसं पुष्णन्, मृगीदृशां चेतसि लीलया रतिं पुष्णन् एको विष्णुस्त्रिधा चेतसि वससीत्यर्थः।

### आदर्शः

यथासंख्यालङ्कारमाह—यथासंख्यमिति। क्रमिकाणां प्रथमद्वितीयादिक्रमोक्तानां तादृशसंख्याक्रमेणैव तदन्वयिपदार्थान्वय इत्यर्थः। एकस्त्रिधेति। हे देव! अत्रेदं चित्रं यदेकस्त्वं द्विषां चेतसि शौर्योष्मणा तापं तन्वन्, विदुषां चेतसि विनयेन सम्मदरसं तन्वन्, मृगीदृशाञ्च चेतसि लीलया रतिं तन्वन् एवंभूतस्त्रिधा वससीति यथासंख्यमन्वयः। चकारत्रयमत्र स्वस्वप्राधान्येन समुच्चयार्थः।

### सुधासागरः

यथासङ्ख्यं नामालङ्कारः। क्रमेण प्रथमस्य प्रथमेन, द्वितीयस्य द्वितीयेन, तृतीयस्य तृतीयेनेति रीत्या समन्वय इत्यर्थः। एक इति। स्पष्टम्। वसन्ततिलका छन्दः।

**(सू० १६५) सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।**

**यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥ १०९ ॥**

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत् समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः । क्रमेणोदाहरणम्—

**निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम्।**

**पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥ ४७८ ॥**

---

### सङ्केतः

तदन्येनेति । विशेषेण सामान्येन वा इत्यर्थः । अर्थान्तरस्यैव विजातीयस्यैव वस्तुनः न्यासः अर्थान्तरन्यासः इति व्युत्पत्त्या इति प्रतीयते । यत्—अत्र हेतोः हेतुमता सह व्याप्तिः गूढा, न तु स्पष्टा, कथञ्चित् प्रत्येया इत्यर्थः ।

निजेति । अत्र एवशब्दः अप्यर्थः, व्यस्तसम्बन्धो वा । अत्र आद्येऽर्थे सामान्यं उत्तरार्धोपात्तविशेषेण समर्थितम् ।

### सङ्केत (रुय्यकः)

गुणानामित्यत्र सिद्धेऽपि हेतुना नियोगे सहेतुकोऽसौ न सिद्ध इति तत्सिद्धयेऽर्थान्तरन्यासः । गलिः कर्मण्यकुशलोऽन्त्यन्तमलीमसः ।

### बालचित्तानुरञ्जनी

अर्थान्तरन्यासलङ्कारं लक्षयति सामान्यमिति । यत्र सामान्यं विशेषेण समर्थ्यते विशेषो वा सामान्येति भेदद्वयम् तदपि साधर्म्यवैधर्म्याभ्यां द्विविधमिति चत्वारो भेदाः इत्याह साधर्म्येणेति । साधर्म्यद्वारा समर्थ्यते वैधर्म्येणाद्यमुदाहरति गुणानामिति । धुर्यः पुरुषः गुणानामेव दौरात्म्यात् धुरि नियुज्यते । असंयातक्रिणस्कन्धो गप्ली कुत्सितो गलोऽस्यास्तीति गली यो बलीवर्दः गले बलादासंजितं युगं पातयति स गली गौः सुखं स्वपिति । अत्र गुणानामिति सामान्यं गलीतिविशेषेण सुखमिति वैधर्म्यद्वारा समर्थ्यते । वैधर्म्येण द्वितीयमुदाहरति अहो हि मे इति । कश्चिदप्रियदैवोन्नतविवक्षन्नाह[?] । मे आयुषा बह्वपराद्धं अहो यद्यस्मान्मया ईदृशमप्रियं वक्तव्यम् । विशेषरूपः धन्या इति सामान्येन अहमधन्य इति वैधर्म्येण समर्थ्यते । साधर्म्येणाद्यमुदाहरति निजेति । निजदोषेणाच्छादितचेतसां पुरुषाणां सुन्दरमेव वस्तु विपरीतं भाति । पित्तोपहतः पुरुषः शशिशुभ्रमपि शङ्खं पीतं पश्यति । अत्र दुष्टचित्तत्वलक्षणसामान्यं पित्तोपहतत्वेन विशेषेण समर्थ्यते ।

### काव्यादर्शः

यत्र हेतोर्हेतुमता सह ब्याप्तिर्गूढत्वात् कथं [चित्] प्रतीयते, नं तु स्पष्टमवभासते तत्रार्थान्तरस्यैव समानासमानजातीयस्यैव वस्तुन उपन्यासनमसौ अर्थान्तरन्यासः। साधर्म्येण यथा—'निजे'ति। अत्राद्येऽर्धे सामान्यं द्वितीयार्धोपात्तेन विशेषेण समर्थ्यते।

### विवेकः

यथासंख्ये क्रमेणान्वयः समर्थ्यत इति समर्थनप्रस्तावात्तदनन्तरमाह सामान्यं वेति। अनुपपद्यमानतया सम्भाव्यमानस्यार्थस्योपपादनार्थमर्थान्तरस्य यन्न्यसनं सोऽर्थान्तरन्यासः। तत्र सामान्यस्य विशेषः, विशेषस्य वा सामान्यं समर्थकमिति द्वौ भेदौ। अत्र प्रत्येकं साधर्म्यवैधर्म्याभ्यां भेदान्तरसम्भवेऽपि तद्गणना न कृता सहृदयहारिणो वैचित्र्यस्याभावात्। यद्यपि 'प्रीणितप्रणयि स्वादु काले परिणतं बहु। विना पुरुषकारेण फलं पश्यत शाखिनाम्॥' (भा. का. अ. ३/२९) इत्यप्रस्तुतप्रशंसायां विशेषेण शाखिवृत्तान्तेन वाच्येन सर्वं जगच्चेष्टितं दैवप्रधानमिति सामान्यं गम्यमानं समर्थ्यते तथा दृष्टान्तो 'त्वयि दृष्ट एवे' त्यादौ (श्लो. ४४४) दृष्टान्तेन दार्ष्टान्तिकं समर्थ्यते तथाऽप्यप्रस्तुतप्रशंसायामेकस्यानुपादानमेव, दृष्टान्ते तु बिम्बप्रतिबिम्बभावेनोपन्यासो न तु कथनम्। अत्र तु विशेषस्य सामान्येन सामान्यस्य वा विशेषेण सामर्थ्ये समर्थस्य तथाभूतनिमित्तमुच्यते यत् प्रतिपन्नं सत् समर्थस्यानुपपद्यमानतां निरस्यातीति ताभ्यां पृथग्भावोऽस्य स्फुट एव। तत्र सामान्यस्य विशेषो यथा—निजेत्यादि। अत्र स्वभावाद्दुष्टचेतसामतिसुन्दरस्यान्यथादर्शनं सामान्यं तस्य च पित्तदोषतः प्रत्यक्षशिशुभ्रशङ्खविषयः पीतत्वविशेषः साधर्म्येण समर्थकः।

### दीपिका

सामर्थ्यत उपपन्नतया ख्याप्यते। कौमुदीमहसि चन्द्रिकाप्रकाशे।

### दर्पणः

अर्थान्तरन्यासालङ्कारः समश्यते [समश्र्यते] सोपपत्तिकतया व्यवस्थाप्यते कौमुदीमहसि ज्योत्स्नाप्रकाशे। धुर्यो धुर्वहनसमर्थः।

### साहित्यचूडामणिः

अर्थान्तरन्यासमाह—सामान्यमिति। तदन्येन विशेषेण सामान्येन वा। इतरेण वैधर्म्येण। यत् सूत्रं "सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः" (अलङ्कार सू० ३६) इति। कार्यकारणसम्बन्धनिबन्धनत्वमस्य पाक्षिकमित्युपेक्षितं ग्रन्थकारेण।

तत्र च सामान्यं विशेषेण विशेषो वा सामान्येन समर्थ्यत इति द्वौ भेदौ, प्रत्येकं साधर्म्यवैधर्म्याभ्यां चत्वार इत्याह—साधर्म्येणेति।

निजेति। अत्र दुष्टचित्तत्वलक्षणं सामान्यं पित्तोपहतेन विशेषेण साधर्म्यद्वारा समर्थ्यते।

### सम्प्रदायप्रकाशिनी

सामान्यं वेति। साधर्म्यवैधर्म्याभ्यां सामान्यविशेषयोर्मिथः समर्थकत्वेचतुर्धार्थान्तरन्यासः। समर्थना दृष्टान्ततो भेदः।

निजदोषेति। दुष्टमनसां सुन्दरमसुन्दरं भातीति पित्तोपहतः शंखं पीतं पश्यतीति सामान्यं विशेषेण साधर्म्यात् समर्थ्यते।

### मधुमती

सामान्यं वेति। सामान्यं सामान्यमुखाभिधानम्, विशेषः विशेषमुखाभिधानम्, न तु सामान्यविशेषभावः स्वरूपसन्नेव प्रयोजकः। दृष्टान्तालङ्कारे तु—सामान्यं सामान्येन विशेषो विशेषेण च समर्थ्यते इति ततोऽस्य भेदः॥

निजेति। अत्र विशेषेण साधर्म्यतः सामान्यसमर्थनम्।

### विस्तारिका

सामान्यमिति। अनुपपद्यमानतया सम्भाव्यमानस्यार्थस्योपपादनार्थं यदर्थान्तरस्य न्यसनं सोऽर्थान्तर-न्यासः। तत्र सामान्यस्य विशेषेण, विशेषस्य वा सामान्येन समर्थनमिति द्वौ भेदौ। तत्रापि प्रत्येकं साधर्म्यवैधर्म्याभ्यां भेदद्वयमिति चत्वारो भेदाः।

निजेति। सुन्दरमेवेति। सुन्दरमपीत्यर्थः। अत्र सामान्यं विशेषेण समर्थितम्।

### सारबोधिनी

अनुपपद्यमानतया संभाव्यमानस्यार्थस्य उपपादनार्थं यदर्थान्तरस्य न्यसनमुपपादकत्वेनोपन्यासः सोऽर्थान्तरन्यासः। तत्र सामान्यस्य विशेषो विशेषस्य सामान्यं समर्थकमिति। द्वौ। तत्रापि प्रत्येकं साधर्म्यवैध-र्म्याभ्यां भेदद्वयमिति चत्वारो भेदाः। निजेति। अतिसुन्दरमेवातिसुन्दरमपीत्यर्थः।

### काव्यप्रदीपः

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।
यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥ २३॥

सामान्यं यद्विशेषेण समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः द्वयोरपि प्रत्येकं समर्थनहेतुः। साधर्म्यं वैधर्म्यं चेति चतुःप्रकारोऽयमित्यर्थः।

### काव्यप्रकाशखण्डनम्

सामान्यं वा विशेषो वा यदाऽन्येन समर्थ्यते।
ज्ञेयः सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥ (का० १०९)

अनुपपद्यमानतया संभाव्यमानस्यार्थस्य उपपादनार्थं यदर्थान्तरस्य न्यसनं उपपादकत्वेन न्यासः स अर्थान्तरन्यासः। तत्र सामान्यस्य विशेषो विशेषस्य सामान्यं समर्थकमिति द्वौ:; तत्रापि साधर्म्य-वैधर्म्याभ्यां भेदद्वयमिति चत्वारो भेदाः। साधर्म्येण तत्रापि सामान्यविशेषेण यथा—

**निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम्।**
**पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम्॥**

**आदर्शः**

चतुर्विधमर्थान्तरन्यासालङ्कारमाह—सामान्यं वेति। तदन्येनेति। सामान्यान्येन विशेषेण सामान्यम्, विशेषान्येन सामान्येन विशेष इत्यर्थः। 'समर्थ्यते' उक्तधर्मवत्तयाऽमिथ्या क्रियते, विशेषे तद्धर्मवत्तादर्शनात् तत्सामान्ये उक्तः स धर्मो न मिथ्येत्येवं बोधविषयः क्रियते इत्यर्थः। तादृशंसमर्थनञ्च क्वचित् साधर्म्येण क्वचिद् वैधर्म्येण इत्याह—साधर्म्येणेति। क्रमेणेति। सामान्यविशेषयोः साधर्म्येणादौ समर्थनं ततस्तयोर्वैधर्म्येण समर्थनम् इति क्रमेणेत्यर्थः।

निजदोषेति। निजदोषावृतमनसां स्थाने अतिसुन्दरमपि वस्तु विपरीतं भाति। एवकारोऽप्यर्थे। तदेव समर्थयति—पश्यतीति। अत्र दुष्टसामान्यस्य सुन्दरवस्तुन्यपि विपरीतदर्शनं सामान्यं पित्तदोषदुष्टविशेषस्य सुन्दरशङ्खे पीतत्वदर्शनरूपविपरीतदर्शनविशेषेण समर्थितम्, तावतैव दुष्टसामान्यस्य सुन्दरे विपरीतदर्शितत्वसामान्याऽमिथ्यात्वप्रतीतिः। तत्समर्थनञ्चात्र दोषवत्त्वेनोभयसाधर्म्येण।

**सुधासागरः**

साधर्म्येणेत्यादि। सामान्यं यद् विशेषेण समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः। द्वयोरपिः प्रत्येकं समर्थनहेतुः साधर्म्यं वैधर्म्यं चेति चतुःप्रकारोऽयमित्यर्थः।

तत्र विशेषेण सामान्यसमर्थनं साधर्म्येण यथा—निजेति। स्पष्टम्। आर्या छन्दः।

सुसितवसनालंकारायां कदाचन कौमुदी-

महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।

तदनुभवतः कीर्तिः केनाप्यगीयत येन सा

प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ।। ४७९ ।।

---

### सङ्केतः

सुसितेति । महश्शब्दः उत्सवार्थः । क्व नासि इत्यादि सामान्यं विशेषरूपस्य समर्थकम् ।

### बालचित्तानुरञ्जनी

सुसितेति । कौमुदीमहसि धवलवसनालङ्कारायां स्वैरं यान्त्यां सुदृशि चन्द्रः अस्तंगतोऽभूत् तदनु भवतः कीर्तिः केनापि गीता ऽततः.सा मुक्ताशंका सती गृहं गता । अतस्त्वं क्व शुभप्रदो नासि ? अपि तु सर्वत्र । अत्राभिसारिकाकारो विशेषः क्वाति सर्वाक्षेपेण सामान्येन समर्थ्यते ।

### काव्यादर्शः

'सुसिते'ति । अत्र 'मुक्ताशङ्का' इत्यतः प्राक् समर्थनीयं विशेषरूपं 'क्वनासि' इति सामान्येन समर्थ्यते ।

### विवेकः

विशेषस्य सामान्यं यथा—सुसितेत्यादि । अत्र चन्द्रहाससमयेऽपि निःशङ्कायाः प्रियगृहगमनं विशेषरूपं समर्थ्यते । तत्र कीर्त्यमानं निमित्तमुक्तम् मुक्ताशङ्का इति । क्व नासि शुभप्रद इति सामान्यं चन्द्रकीर्तिसाधर्म्येण समर्थकम् ।

### साहित्यचूडामणिः

सुसुतेति । अत्र वर्णनीयस्य भद्रप्रदायितायामभिसारिकाकारो विशेषः क्वेति सर्वाक्षेपिणा सामान्येन समर्थ्यते ।

### सम्प्रदायप्रकाशिनी

सुसितेति । अत्र तु विधावस्तमितेऽपि कीर्तौ गीतायां तज्ज्योस्नाभिसारिका निश्शङ्कं प्रियगृहमगादिति विशेषः क्व नासि शुभप्रद इति सामान्येन । क्वेति काक्वा नञो निषेधात् साधर्म्यम् ।

### मधुमती

सुसितेति । अत्र सामान्येन साधर्म्यतः विशेषसमर्थनम् ।

## विस्तारिका

सुसितेत्यादौ विशेषः सामान्येन । एतद् द्वयं साधर्म्येण । गुणानामित्यादौ;

## सारबोधिनी

सुसितेति । व्याख्यातम् ।

## काव्यप्रदीपः

तत्र विशेषेण सामान्यसमर्थनं साधर्म्येण यथा—

**'निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।**
**पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥'**

सामान्येन विशेषसमर्थनं साधर्म्येण यथा—'सुसितवसना—' इत्यादि ।

## काव्यप्रकाशखण्डनम्

तेषां विशेषात् सामान्येन यथा—'सुसितवसना [लंकारा] या'मित्यादि ।

## आदर्शः

सामान्येन विशेषसमर्थनं साधर्म्येणाह—सुसितेति । व्याख्यातमिदं दोषोल्लासे । अत्र रात्रिरूपकालविशेषे राज्ञोऽभिसारिकासुखप्रदत्वं कालसामान्ये राज्ञः सुखप्रदत्वेन समर्थितम्, तत्समर्थनञ्च रात्रिकालतदितरकालयोः सुखप्रदत्व साधर्म्येण ।

## सुधासागरः

सामान्येन विशेषसमर्थनं साधर्म्येण यथा—सुसितेति । सुसितवसनेत्यादि । व्याख्यातमिदम् ।

**गुणानामेव दौरात्म्यात् धुरि धुर्यो नियुज्यते।**

**असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥ ४८० ॥**

---

### सङ्केतः

गुणानामिति । गलिः कार्याकुशलो वृषः । अत्र गुणानां इति सामान्यम्, गौर्गली इति वैधर्म्यरूपो विशेषः । दौरात्म्यात् इति नियोजने हेतुः । वैधर्म्यविशेषस्तु पूर्वार्धार्थसमर्थने हेतुः ।

### काव्यादर्शः

वैधर्म्येण यथा—'गुणानाम्' इति 'गली [?लिः] कर्मण्यकुशलोऽत्यन्त मलसः ।' अत्र 'गुणानाम्' इति सामान्यं, 'सुखं स्वपिति गौर्गलिः इति वैधर्म्येण विशेषेण समर्थ्यते ।

### विवेकः

वैधर्म्येण द्विधा । तत्र सामान्यस्य विशेषेण यथा—गुणानामित्यादि । अत्र सिद्धेऽपि हेतुना नियोगे सहेतुकोऽसौ न सिद्ध इति तत्सिद्धयेऽर्थान्तरन्यासः । स्वपिति जीवति । गडिः कर्मण्य कुशलोऽत्यन्तमलसः ।

### साहित्यचूडामणिः

वैधर्म्येणाह—गुणानामिति । गलिः वहनासमर्थः, भूमार्थ इनिः, दिन उत्सृष्टतया प्रलम्बकण्ठसास्नादिकः । अत्र गुणवद्धुर्यजननियोगस्वभावं सामान्यं गोवृषेण विशेषेण समर्थ्यते । तत्र धुर्यत्वस्य वैधर्म्यसञ्ञातकिणस्कन्धत्वं धूर्नियोगस्य च सुखस्वापः ।

### सम्प्रदायप्रकाशिनी

गुणानामेवेति । गुणदौरात्म्याद् धुरि धुर्यो नियुज्यत इति सामान्यं विवक्षितम् । अकिणस्कन्धो गडी अकर्मण्योऽनड्वान् सुखं जीवतीति विशेषेण वैधर्म्येण ।

### मधुमती

गुणानामिति । अत्र विशेषण वैधर्म्यतः सामान्य समर्थनम् ।

### विस्तारिका

गुणानामित्यादौ ।

### सारबोधिनी

गुणानामिति । किमः प्ररूढव्रणग्रन्थिः ।

## काव्यप्रदीपः

विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—

**'गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते।**
**असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥'**

अत्र धुर्य इत्यादिसाधारण्यात्सामान्यम्। गौर्गलिरिति विशेषः। वैधर्म्यं स्फुटम्।

## काव्यप्रकाशखण्डनम्

वैधर्म्येणाद्यो यथा—

**गुणानामेव दौरात्म्याद् धुरि धुर्यो नियोज्यते।**
**असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥**

गलिः पतनशीलः। एवमन्येऽप्युदाहार्याः।

## आदर्शः

विशेषेण सामान्यसमर्थनं वैधर्म्येणाह—गुणानामिति। धुरि भारवहने। धुर्यो भारवहनसमर्थः। तस्य नियोजनञ्च तस्य तत्समर्थनिर्बलसत्त्वरूपगुणानामेव दौरात्म्यात्, दौरात्म्यञ्च दुःखजनककर्मप्रयोजकत्वात्। तादृशगुणाभावे तु न नियुज्यत इत्याह आह—असंजातेति। असंजातः किणो वहनव्रणचिन्हं यत्र तादृशः स्कन्धो यस्य तादृशः सन् गडिरलसो गौः सुखं स्वपिति, न तु केनापि नियुज्यत इत्यर्थः। अत्र धुरि नियुज्यमानत्वधर्मवत्तया उक्तस्य प्राणिसामान्यस्य धुर्यत्वविरोध्यात्मगडित्वरूपवैधर्म्यवता गडिना गवा समर्थनम्, गडेर्धुरि नियोगाभावाधीनसुखस्वापेन गडित्वविधर्मिणो धुर्यप्राणिसामान्यस्य धुरि नियोगः सत्य इति प्रतीतेः।

## सुधासागरः

विशेषण सामान्यसमर्थनं वैधर्म्येण यथा—गुणानामेवेति।

किणः प्ररूढव्रणग्रन्थिः। धूःस्पर्शमात्रेण यः स्वयमेव पतति स गौर्गलिनामा वृषभः। स्पष्टमन्यत्। अत्र धुर्य इत्यादिंसाधारण्यात्सामान्यम्। गौर्गलिरिति विशेषः। वैधर्म्यं च स्फुटम्।

**अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम्।**

**त एव धन्याः सुहृदः पराभवं जगत्यदृष्टैव हि ये क्षयं गताः ॥ ४८१ ॥**

---

**सङ्केतः**

अहो इति। मे इति विशेषः, त एव इति सामान्यम्। तयोः समर्थ्यसमर्थकभावः। अप्रियं वाच्यं इति। सुहृदं प्रतीतिशेषः। अत्र अपराद्धं इति वचनात् अधन्यत्वाक्षेपः। तद्विरुद्धं धन्यत्वमिति वैधर्म्यम्। 'एतत्तस्य मुखात्' इत्यादौ अप्रस्तुतप्रशंसायां जडादि वृत्तान्तेन विशेषेण वाच्येन सामान्यं गम्यं समर्थ्यते। अत्र तु—सामान्यविशेषयोः द्वयोरपि वाच्यत्वं इति विवेकः। यद्वा—अन्योक्तौ विशेषः न सामान्यसमर्थनाशयेनोच्यते, किन्तु अन्यथा इति। तथा अत्र हिशब्दः क्वचित् प्रयुज्यते, क्वचिन्न। समर्थकस्य कदाचित् पूर्व पश्चाद्वा उपन्यासः। इत्यर्थान्तरन्यासः।

**काव्यादर्शः**

विशेषः सामान्येन, यथा—'अहो हि' ति। अत्र आयुः कर्तृकापराद्धत्वेन आक्षिप्तस्य अधन्यत्वस्य आयुर्विरुद्धक्षयगतिप्रयुक्तं धन्यत्वं विरुद्धं सामान्यरूपतया समर्थकत्वेनोक्तम्॥ यथा वा—

**अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या।**
**पीतभूरिसुरयापि न मेदे, निर्वृतिर्हि मनसो मदहेतुः॥**

—अत्र विशेषः सामान्येन वैधर्म्येण समर्थ्यते। हि—शब्दाभिहितत्वानभिहितत्वादिभेदाश्च वैचित्र्याभावान्नोक्ताः।

ननु, अप्रस्तुतप्रशंसातोऽस्य को भेदः, तथा हि 'एतत्तस्य मुखात् कियत् कमलिनी' इत्यादौ अप्रस्तुप्रशंसायामपि समर्थनमस्त्येव। सत्यम्, किंतु अर्थान्तरन्यासे सामर्थ्यस्य स्वकण्ठेनोपात्तस्य समर्थनं, अप्रस्तुतप्रशंसायां तु अप्रस्तुतस्य वाच्यत्वं प्रस्तुतस्य गम्यत्वम्। सामान्यविशेषयोश्च द्वयोरपि वाच्यत्वेऽर्थान्तरन्यास इति भावः। दृष्टान्तलंकाराच्च यथास्य अभेदस्तथा तत्रैवोक्तम्॥ १०७॥ [२३॥]

**विवेकः**

विशेषस्य सामान्येन यथा अहो हीत्यादि—हि-शब्दः स्फुटार्थः। क्षयं दिवम् निहतार्थत्वं ग्राम्यत्वं चात्र चिन्त्यम्। अत्रायुःकर्तृकमपराद्धत्वाक्षिप्तस्याधन्यत्वस्यायुर्विरुद्धक्षयगतिप्रयुक्तं धन्यत्वविरुद्धं सामान्यरूपतया समर्थकत्वेनोक्तमिति वैधर्म्येण समर्थनम्।

**साहित्यचूडामणि**

अहो इति। कश्चिदप्रियं दैवोदन्तं विवक्षन् विशेषरूपमेव धन्या इति सामान्येन वैधर्म्यात् समर्थयते। अहमधन्य इति वैधर्म्यं, यस्मादायुः कर्तृकापराधाक्षिप्तस्य धन्यत्वाभावस्यायुर्विरुद्धक्षयगमनप्रयुक्तं धन्यत्वं विरुद्धं सामान्यरूपतया समर्थकत्वेनोक्तम्। समर्थनार्हस्य प्रकृतस्य समर्थनमात्रोपक्षीणत्वान् नायमनुमानं, प्रत्याय्यप्रत्यायकभावव्यतिरिक्तः समर्थ्यसमर्थकभाव इति समर्थयिष्यते। [यदुक्तमुद्भटेन-]

समर्थकस्य यत् पूर्वं वचोऽन्यस्य तु पृष्ठतः।
विपर्ययेण वा यत् स्याद्धि-शब्दोक्त्यान्यथापि वा।

ज्ञेयः सोऽर्थान्तरन्यासः प्रकृतार्थसमर्थकः ॥ [का० सा २] ॥

समर्थकपूर्वोत्तरोपन्यासाभ्यां हिशब्दोक्त्यनुक्तिभ्यां च भेदान्तरसद्भावेऽपि तदगणना वैचित्र्यविशेषाभावात् ॥ २३ ॥

## सम्प्रदायप्रकाशिनी

अहो हीति। अत्राप्रियस्य वाच्यत्वादायुषापराद्धमिति विशेषः सुहृत्परा भवमदृष्ट्वैव क्षयं गता धन्या इति सामान्येन वैधर्म्येण।

## मधुमती

अहो इति। अत्र सामान्येन वैधर्म्यतः विशेषसमर्थनमिति ध्येयम्। इत्यर्थान्तरन्यासः।

## विस्तारिका

अहो हीत्यादौ च सामान्यविशेषौ विशेषसामान्याभ्यां वैधर्म्येण समर्थितौ।

## सारबोधिनी

अहो इति। ईदृशं मित्रव्यसनरूपम्।

## काव्यप्रदीपः

वैधर्म्येण विशेषस्य सामान्येन समर्थनं यथा—

'अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम्।
त एव धन्याः सुहृदः पराभवं जगत्यदृष्टैव हि ये क्षयं गताः ॥'

सामान्यविशेषभाव उपपादनीयः।

## आदर्शः

विशेषस्य सामान्येन समर्थनं वैधर्म्येणाह—अहो हीति।अभिमन्युवधमर्जुने कथयिष्यतो युधिष्ठिरस्योक्तिरियम्। आयुषा अद्यापि सतेति शेषः। इदमप्रियम् अभिमन्युवधरूपम्। अत्र वक्ष्यमाणाप्रियतयाऽधन्यो जनविशेषो युधिष्ठिरोऽदृष्टसुहृत्पराभवत्वाद् धन्यतया उक्तेन जनसामान्येन समर्थितः। मरणपर्यन्तमदृष्टसुहृत्पराभवत्वेन च वैधर्म्येण तत्समर्थनम्। अधन्यजनविशेषसमर्थनञ्च तद्विशेषणस्याधन्यत्वस्यैव समर्थनं तद्विधर्माणां धन्यत्वेन तदधनयत्वस्यैवामिथ्यात्वप्रतीतेः।

## सुधासागरः

वैधर्म्येण विशेषस्य सामान्येन समर्थनं यथा—अहो हीति। ईदृशं मित्रव्यसनरूपम्। स्फुटमन्यत्।

## (सू० १६६) विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।

## वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ।

---

### सङ्केतः

अविरोधेऽपीति । अविरोधे विरोधो न स्यादिति स्थिते, यत् विरोधेनोक्तिः, सैव अनुपपद्यमाना विरोधाभासे पर्यवस्यति । यत्—'नित्यमेव द्रव्याश्रितत्वात् जातेः न जातिद्रव्ययोः विरोधः' इति ब्रुवन् रुद्रटः नवभेदं मन्यते, तत् वार्तम् । जातेः गुणद्याश्रितत्वस्यापि भावात् ।

### बालचित्तानुरञ्जनी

विरोधालङ्कारं लक्ष्यति विरोध इति । जातेर्जात्यादिभिः सह चत्वारो विरोधाः । गुणस्य गुणादिभिस्त्रयः । क्रियाया क्रियाभ्यां द्वौ । द्रव्यस्य द्रव्येणैक इति दश भेदा इत्याह जातिरिति ।

### काव्यादर्शः

अविरोधेऽपीति । सति हि विरोधपरिहारे प्रमुख एवाभासमानत्वाद् विरोधाभासो विरोधः । समाधानं तु विना दोष एव ।

### विवेकः

समर्थ्यसमर्थकभावो विरोधमूल इति सङ्गत्या प्रस्तौति विरोध इति । ययोर्गोऽश्वेत्यादिवत् परस्परधर्मिपरिहारेणैवावस्थानमुपलभ्यते तयोरेव परस्पराभावाव्यभिचारिणोर्विरोधो नान्येथेति स्थितिः, अत आह अविरोधेऽपीति—इतरथा हि दुष्टतैव स्यात् ।

### दीपिका

धुर्य्यनन्यसाध्ये कर्मणि धुर्य्यः समर्थः ।

### दर्पणः

विरोधालंकारः । वस्तुवृत्तेन स्वभावेन विरुद्धयो विभाविधानं [विरुद्धाभिधानं] आपाततो विरोधबोधकमभिधानमित्यर्थः ।

### साहित्यचूडामणिः

विरोध इति । जात्यादीनां चतुर्णां तन्मध्य एव प्रत्येकं सजातीयिजातीभ्यां सम्बन्धे विरोधः । स च समाधानं विना दोषः । सति तु तस्मिन् प्रमुख एव भासमानत्वाद् विरोधाभासः । यत् सूत्रं "विरुद्धाभासत्वं विरोध" (अलङ्कार सू० ४१) इति ।

### सम्प्रदायप्रकाशिनी

विरोधः स इति । अविरुद्धयोर्विरुद्धवदुक्तिर्विरोधः ।

### मधुमती

विरुद्धयोरिति । तथाच विरोधप्रतिभानप्रयोजकरूपेणाभिधानम्, तेन आपाततो विरोधज्ञानमिति लभ्यते । अयमेव विरोधाभासः ।

### विस्तारिका

विरोध इति । विरोधप्रतिभाप्रयोजकरूपेणाभिधानम्, तेनापाततः शब्दशक्त्योपस्थितिमहिम्ना विरोधज्ञानमिति लभ्यते । वस्ततस्तु शब्दस्यान्यत्र तात्पर्यान्न विरोधः । अयमेव विरोधाभासः ।

### सारबोधिनी

वस्तुवृत्तेनेति । अन्यथा विरोध एव स्यान्न तु विरोधाभासः ।

### काव्यप्रदीपः

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।**

वस्तुगत्या विरोधाभावेऽपि यद्वयोर्विरुद्ध्योरिवाभिधानं स विरोधः ।

### काव्यप्रकाशखण्डनम्

विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः । (का० ११०, पू०)

वस्तुवृत्तेन अविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः । यथा—

### आदर्शः

दशविधं विरोधालङ्कारमाह—विरोध इति । 'यद्वचः' यस्य बोधनम् ।

(सू० १६७) जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा

स्याद्गुणस्त्रिभिः ॥ ११० ॥

क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश।

क्रमेणोदाहरणम्—

अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः।

सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥ ४८२ ॥

---

**सङ्केतः**

अभिनवेति। पविः वज्रम्। अत्र नलिनीत्वादिजातीनां दवदहनत्वजातेश्च वियोगवशात् विरोधः परिहृतः।

जातेर्जात्यादिभिः सह चत्वारो विरोधाः, गुणस्य गुणादिभिः सह त्रयः, क्रियायाः क्रियाद्रव्याभ्यां सह द्वौ, द्रव्यस्य द्रव्येण सहैक इत्येतदाह—जातिरिति। अभिनवेति। नलिनीकिसलयादिजात्या दवदहनजातिर्विरुद्धा विरुद्धगुणकत्वादिति भावः। सा च विरहवेदनया परिह्रियते।

**बालचित्तानुरञ्जनी**

जातिरिति। जात्या विरुद्धां जातिमुदाहरति अभिनवेति। हे सुभग विधिवशतः तद्विरहाशनिपाते अस्या। अमृतदृशः नूतनकमलिनीपल्लवमृणालवलयादिकं दावानलराशिः।

**काव्यादर्शः**

जात्याद्यैरिति। जातिर्जात्या गुणेन क्रियया द्रव्येणेति चत्वारः। गुणो गुणेन क्रियया द्रव्येणेति त्रयः। क्रिया क्रियाद्रव्याभ्यामिति द्वौ। द्रव्यं द्रव्येणेति एकः। एवं दश विरोधभेदाः। रुद्रटस्तु 'नित्यमेव द्रव्याश्रिततत्वाद् जातेर्न जातिद्रव्ययोर्विरोध' इति नव भेदानाह।

'अभिनवे'ति। 'पविर्वज्रम्'। अत्र नलिनीत्वादिजातीनां दवदहनत्वजातेश्च अन्योन्यं विरोधो वियोगवशेनेति परिह्रियते।

**विवेकः**

एतेन विशेषाभिधानायामुख एव तथाऽऽभासनाद्विरोधाभासो विरोधः। स च जात्यादीनां चतुर्णां पदार्थानां प्रत्येकं तन्मध्य एव सजातीयाभ्यां विरोधिभ्यां सम्बन्धे भवति। एकविषये चायमिष्यते, भिन्नाधारत्वेऽसङ्ग-

तिप्रभृतीनामेतदपवादकानां वक्ष्यमाणत्वात्। विरोधप्रकाशच सर्व एव वाच्यः प्रतीयमानश्चेति द्विविधः, शब्दोपादाने वाच्य इतरथा प्रतीयमान इति। अभिनवेत्यादि—पविर्वज्रम्, वियोग एव पविपात इति रूपकम्। अत्राभिनवलिन्यादिजात्या दावानलजातेर्विरोधस्तद्वियोगजन्यसन्तापप्रकर्षेण परिह्रियत इति विरोधाभासत्वम्।

## दीपिका

विरुद्धयोरिव यदभिधानमिति विरोधबोधकमभिधानमित्यर्थः। ध्वनिभेदपिण्डनोक्तदिशा पूर्वपूर्वानुप्रवेशादुत्तरोत्तरमेकैकह्रासक्रमेण गुणैस्त्रिभिरिति सङ्गतिः।

## दर्पणः

गुणास्त्रिभिरिति। पूर्वोक्तयोर्जातिगुणयोर्विरोधः। स एव गुणजात्योर्विरोध इत्युत्तरोत्तरं पूर्वपूर्वपिक्षया गुणादीनामन्यान्यभेदकथने एकैकं...सः [प्रत्येकशः] पूर्वोक्तध्वनिभेदसंख्यानादिति दशप्रकारो विरोधः।

नलिनीकिसलयमूलानवनयादि [नलिनीकिसलय मृणालवलयादि] शब्दस्य दवदहनशब्दस्य चानेकव्यक्तिवाचकत्वाज्जातिशब्दत्वम्। एवं गिरीमरुद्धमुशब्दानां [गिरिमरुदब्धिशब्दानां] जातिशब्दत्वम्। विश्वम्भराशब्दस्त्वखण्डरूपाया भुव एकत्वानुजातिशब्दः। अनुन्दत्यर्था गंभीरलघ्युशब्दास्तु [अनुन्नतियुजगम्भीरलघुशध्दास्तु] गुणार्था इति परस्परयोगे जातिगुणविरोधः।

## साहित्यचूडामणिः

जातेर्जात्यादिभिः सह चत्वारो विरोधाः, गुणस्य गुणादिभिः सह त्रयः, क्रियायाः क्रियाद्रव्याभ्यां सह द्वौ, द्रव्यस्य द्रव्येण सहैक इत्येतदाह—जातिरिति।

अभिनवेति। नलिनीकिसलयादिजात्या दवदहनजातिर्विरुद्धा विरुद्धगुणकत्वादिति भावः। सा च विरहवेदनया परिह्रियते।

## सम्प्रदायप्रकाशिनी

अत्र जातेर्जातिगुणक्रियाद्रव्यैर्विरोधे चत्वारः, गुणस्य गुणादिभिस्त्रयः, क्रियायाः क्रियादिभ्यां द्वौ, द्रव्यस्य द्रव्येणैक इति दश।

अभिनवेति। पविर्वज्रम्। अत्र किसलयादिजातेर्दहनजात्या विरोधः।

## मधुमती

विभजते—जातिरिति।

अभिनवेति। अत्र आपाततः नलिनीदलत्वजातेः दवदहनत्वजात्या विरोधप्रतिभासेऽपि सन्तापकारित्वलक्षणसाधर्म्यपुरस्कारेण रूपकालङ्कारप्रतीतौ आभासत्वम्।

## विस्तारिका

विभजते—स चेति । जातिगुणक्रियाद्रव्यात्मकानां पदार्थानां दशधा परस्परं विरोधाः सम्भवन्तीत्यर्थः ।

अभिनवेति । अत्रापाततो नलिनीदलत्वजातिदवदहनत्वजात्योर्विरोधमद्वियोगजन्यसन्तापोत्कर्षकत्वेन परिक्रियत इति विरोधाभासः ।

## सारबोधिनी

अभिनवेति । पविपाते वज्रपाते । अत्रापाततो नलिनीकिसलयत्वादि दवदहनत्वजात्योर्विरोधः स वियोगसन्तापोत्कर्षकत्वेन परिहीयत इति विरोधःभासा ।

## काव्यप्रदीपः

विभजते—

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः ॥ २४ ॥**

**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।**

जात्याद्यैरिति गुणक्रियाद्रव्यैः । त्रिभिरिति गुणक्रियाद्रव्यैः । द्वाभ्यामिति क्रियाद्रव्याभ्याम् । यद्यपि गुणानामपि जात्या विरोधः संभवत्येव तथापि जातेर्गुणविरोध एव प्रविष्टत्वात्त्रिभिरित्युक्तम् । एवं क्रिया द्वाभ्यामित्यपि द्रष्टव्यम् । तदयमर्थः—जातिनिरूपितो भेदश्चतुर्धा । भेदश्चतुर्धा । गुणनिरूपितस्तु पूर्वभेदभिन्नस्त्रिधा । एवमग्रेऽपि । तत्र जात्या जातेर्विरोधो यथा—

**'अभिनवनलिनीकिसलयमृणालवयादि दवदहनराशिः ।**
**सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥'**

अत्र नलिनीत्वकिसलयत्वादिजातीनां दहनत्वजात्या विरोधः । वियोगातिशयेन गौणत्वात्तदाभासता ।

## काव्यप्रकाशखण्डनम्

**अभिनवेनलिनीकिशलयमृणालवलयादि दवदहनराशिः ।**
**सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोग [प० ५२, २] पविपाते ॥**

हे सुभग ! विधिवशतो दैवात् त्वद्वियोग एव भवद्विरह एव यः पविर्वज्रं तस्य पाते पतने सति अस्याः कुरङ्गदृशो मृगनेत्रायाः अभिनवा या नलिनी पद्मिनी किसलयं नवदलं मृणालस्य बिसस्य वलयं बाह्वलङ्करणं एतदादि सर्व दवदहनराशिः दावानलस्वरूपं भवति । अत्रापाततो । नलिनीदलत्वजातिदवदहनत्वे जात्योर्विरोधप्रतिभासेऽपि संतापकारित्वलक्षणसाधर्म्यपुरस्कारेण रूपकालङ्कारप्रतीतावाभासत्वम् । अस्य बहवो विषयाः स्वयं लक्ष्यतोऽनुसत्रव्याः ।

## आदर्शः

तस्य दशविधत्वमाह—जातिरिति। जात्याद्यैर्जातिगुणक्रियाद्रव्यैश्चतुर्भिः सह जातिर्विरुद्धा स्यादित्यर्थः। गुणस्तु गुणाद्यैस्त्रिभिरित्यर्थः। गुणस्य जात्या सह विरोधस्तु जातेर्गुणेन सह विरोधरूप एवेति पृथङ् नोक्तः। एवमुत्तरद्वयेऽपि पूर्वगणनाप्रविष्टत्यागेनैव गणनया क्रमशो ह्रासः।

तत्र जातेर्जात्या सह विरोधमुदाहरति—अभिनवेति। हे सुभग! विधिवशतस्त्वद्वियोगस्य परिपाते उपस्थितौ अभिनवनलिनीदलादिकं दवदहनराशिस्तापकत्वादित्यर्थः। अत्र नलिनीदलत्वादिजातेर्दवदहनजात्या सहैकाधिकरण्येन विरोधभानम्, तापकत्वेनाऽऽरोपमात्रादवास्तवत्वेन त्वविरोधः। न च रूपकमेवेदं न विरोध इति वाच्यम्, विरुद्धशीततोष्णत्वव्याप्ययोरनयोर्जात्योर्विरोधभानस्यैव पुरःस्फूर्त्तिकत्वेन रूपकबाधनात्।

## सुधासागरः

वस्त्वित्यादि। विभजते—जातिश्चेति।

जात्याद्यैरिति। जातिगुणक्रियाद्रव्यैः। त्रिभिरिति। गुणक्रियाद्रव्यैः। द्वाभ्यामिति। क्रियाद्रव्याभ्याम्। यद्यपि गुणानामपि जात्या विरोधः सम्भवत्येव, तथाऽपि जातेर्गुणविरोध एव प्रविष्टत्वाद् गुणस्त्रिभिरित्युक्तम्। एवं क्रिया द्वाभ्यामित्यपि द्रष्टव्यम्। तदयमर्थः—जातिनिरूपितो भेदश्चतुर्धा गुणनिरूपितस्तु पूर्वभेदभिन्नस्त्रिधा। एवमग्रेऽपीति। जातिरनुवृत्तिप्रत्ययहेतु सामान्यम्, द्रव्यादित्रयवृत्ति, नित्यम्, एक मनेकानुगतम्। तच्च द्विविधम्। परस्परं च। तत्र परं सत्ता, बहुविषयत्वात्। सा चानुवृत्तिमात्रहेतुत्वात् सामान्यमात्रम्। अपरं द्रव्यत्वादि, अल्पविषयत्वात्। तच्च व्यावृत्तेरपि हेतुत्वात्सामान्यविशेषः। गुणत्वं सामान्यं वा न समवायिकारणम्। अस्पन्दात्मा गुणः। स च रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारभेदाच्चतुर्विंशतिधा द्रव्याश्रित एव। क्रिया चलनात्मकं कर्म। गुणवद्द्रव्यमात्रवृत्ति, अविभुद्रव्यपरिमाणेन मूर्त्तत्वापरनाम्ना सहैकार्थसमवेतम्, विभागद्वारा पूर्वसंयोगनाशे सत्युत्तरसंयोगहेतु च। तच्च उत्क्षेपणाक्षेपणाकुञ्चनप्रसारणगमनभेदाद् भिद्यते। समवायिकारणं गुणाश्रयो वा द्रव्यम्। तच्च पृथिव्यप्तेजोवाय्वाकाशकालदिगात्मनोभेदान्नवधा भिद्यत इति नैयायिकाः।

तत्र जात्या जातेर्विरोधो यथा—अभिनवेति। गीतिश्छन्दः। लक्षणमुक्तं प्राक्। पविर्वज्रम्। स्पष्टमन्यत्। अत्र नालनीत्व-किसलयत्वादिजातीनां दहनत्वजात्या विरोधः। वियोगातिशयेन गौणत्वात्तदाभासता। एवमग्रेऽप्यूह्यम्।

गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।
विश्वंभराप्यतिलघुर्नरनाथ तवान्तिकं नियतम् ।। ४८३ ।।

---

### सङ्केतः

गिरयोऽपीति । बलं जवोऽपि । अत्र त्वमेव महान् सैन्यवान् गम्भीरः विस्तीर्णश्च इति भावः । अत्र गिरित्व-मरुत्त्वादिजातीनां क्रमेण लघुत्वपर्यायानुन्नति-अबलपर्यायमन्दत्व-आगम्भीर्य-अतिलघुत्वरूपैः गुणैः सह विरोधः ।

### बालचित्तानुरञ्जनी

जात्या विरुद्धं गुणमुदाहरति गिरय इति । हे नरनाथ तव समीपे गिरयोऽपि नियतं अनुन्नतियुक्ताः । मरुदपि बिलरहितः । अब्धयोऽप्यगंभीराः । भूमिरप्यतिलघुः । अनौन्नत्यादिगुणोऽपि गिर्यादि जात्या विरुध्यते । सः वर्णनीयस्य महाप्रभावतया परिह्रियते ।

### काव्यादर्शः

गुणेन यथा—'गिरयोऽपि' इति । 'बलं जवः सैन्यं च' । 'त्वमेव महान् सैन्यवान् गम्भीरोऽतिविस्तार-वांश्च' इति तात्पर्यार्थः । अत्र गिरित्वजातेर्लघुत्वपर्यायानुन्नतिलक्षणेन, मरुत्त्वजातेर्मन्दत्वगुणेन, अब्धित्वजातेर्नि-म्नत्वगुणेन, विश्वंभरात्वजातेरतिलघुत्वगुणेन विरोधः ।

### विवेकः

गुणेन यथा—गिरयोऽपीत्यादि । बलं जवः सैन्यञ्च । अत्र पर्वतादिजातिविरुद्धोऽनुन्नतत्वादिगुणयोगो वर्णनीयप्रकर्षविवक्षया समर्थित इति विरुद्ध इव ।

### दीपिका

गिरय इत्यादौ गिरिमरुदब्धिशब्दानां जातिशब्दत्वं विश्वम्भराशब्दस्त्वखण्ड नवखण्डभूवाचको न जाति विरोधोदाहृतिविषयः । अनुन्नताचलगम्भीरलघुशब्दास्तु गुणाः ।

### साहित्यचूडामणिः

गिरय इति । अत्रौन्नत्यादिगुणो गिर्यादिजात्या विरुद्धः ।

### सम्प्रदायप्रकाशिनी

गिरयोऽपीति । अत्र गिर्यादिजातीनामनुन्नत्यादिभिर्गुणैः ।

### मधुमती

गिरयः इति। तत्र अनुन्नति-अबल-अगम्भीरपदेषु अल्पार्थे नञ्। तेन अल्पोन्नतत्व-अल्पबलत्व-अल्प-गम्भीरत्वरूपाः गुणाः लभ्यन्ते, विश्वम्भराऽप्यतिलघुः इति साहचर्यात्। न तु अभावार्थे नञ्, गुणविरोधोदाहरण-त्वविरोधात्। अत्र—गिरित्वादिजाति—अल्पोन्नतत्वादिगुणयोश्च आपाततो विरोधप्रतिसन्धानेऽपि वर्णनीयगतौन्नत्याद्यपेक्षया अल्पवत्वप्रतीतौ आभासत्वम्।

### विस्तारिका

गिरय इति। अत्र विश्वम्भराप्यतिलघुरित्यनेन साहचर्यादनुन्नत्यचलागम्भीरपदेषु नञ् अल्पार्थकः, न त्वभावार्थकः, अन्यथा गुणविरोधादाहरणविरोधोदाहरणापत्तेः।

अत्र गिरित्वादिजात्यल्पेत्यत्राद्याख्यगुणानामापाततो विरोधस्य भानेऽपि वर्णनीयगतौन्नत्याल्पप्रकर्षवि-वक्षायाः समर्थनादाभासत्वम्।

### सारबोधिनी

गिरय इति। अत्र विश्वम्भराप्यतिलघुरित्यनेन साहचर्यादनुन्नत्यचलागम्भीरपदेषु नञ् अल्पार्थो न त्वभावार्थः, अन्यथा गुणविरोधोदाहरणविरोधापत्तेः। अत्र गिरित्वादिजात्या अल्पौन्नत्यादिगुणानामापाततो विरोधत्वमापन्नोऽपि वर्णनीयौन्नत्यप्रकर्षविवक्षया समर्थनादाभासत्वम्।

### काव्यप्रदीपः

एवमग्रेऽप्यूह्यम्। जातेर्गुणेन यथा—

**'गिरयोऽप्यनुन्नतियुजो मरुदप्यच(ब) लोऽब्धयोऽप्यगम्भीराः।**
**विश्वंभराप्यतिलघुर्नरनाथ तवान्तिके नियतम्॥'**

अत्र गिरित्वादिजातीनामनुन्नतत्वादिगुणैर्विरोधः। वर्णनीयातिशयविवक्षया तु परिहारः। विश्वंभरेति तु न जात्युदाहरणम्।

### आदर्शः

जातेर्गुणेन सह विरोधमाह—गिरयोऽपीति। गुणश्च जातिक्रियाभिन्नधर्ममात्रम् अभावसाधारणमेव, न तु वैशेषिकोक्तः। हे नरनाथ, तवान्तिके गिरयोऽपि नियतमनुन्नतियुजः, यशोविभूतिभिरुन्नतस्य तव ततोऽप्यौन्न-त्याधिक्यात्। एवं मरुदपेक्षया बलवत्त्वात् अब्ध्यपेक्षया गाम्भीर्याधिक्यात्तेषामचलत्वादिकम्। अत्र गिरित्वादि जातेरौन्नत्याद्यभावरूपगुणैः सह विरोधभानम्, आपेक्षिकतदभाववत्त्वाच्चविरोधः।

## सुधासागरः

जातिर्गुणेन यथा—गिरय इति । स्पष्टम् । आर्या । लक्षणमुक्तम् । अत्र विश्वम्भराऽप्यतिलघुरित्यनेन साहचर्यादनुन्नत्यचलागम्भीरपदेषु नञ् अल्पार्थकः । न त्वभावार्थकः, अन्यथा गुणविरोधोदाहरणविरोधापत्तेरिति श्रीवत्सलाञ्छनभट्टाचार्यप्रभृतयः प्राहुः । वस्तुतस्तु नञ् अभावार्थक एव, अनुन्नतिरुच्चत्वाभावः, अचलः वेगशून्यः, अबल इति पाठे बलशून्यः, अगम्भीराः गाम्भीर्यशून्या इत्यर्थः । 'चतुष्टयी शब्दानां प्रवृत्तिः' इति वदतः भाष्यकारस्य मते जातिक्रियाद्रव्यातिरिक्तस्यैव गुणत्वाङ्गीकारादिदमुदाहृतम् । तथा च गिरित्वादिजातीनामुन्नतत्वादि गुणैर्विरोधः । वर्णनीयातिशयविवक्षया तु परिहारः । विश्वम्भरेति तु न जात्युदाहरणमिति बोध्यम् ।

येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधर-

स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च।

तेषां संगरसङ्गसक्तमनसां राज्ञां त्वया भूपते

पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम्॥ ४८४॥

---

### सङ्केतः

येषामिति। धाराधरः असिः। स्नेहः रुधिरार्द्रत्वमपि। अत्र पांसुत्वं जाति-मण्डनक्रिये विरुद्धे।

### बालचित्तानुरञ्जनी

जात्या विरुद्धां क्रियामुदाहरति येषामिति। हे राजन् तीक्ष्णः सुप्रसिद्धः खड्गोऽपि येषां राज्ञां कण्ठपरिग्रहप्रणयितां प्राप्य अनुरज्यते अनुरक्तो भवति। सङ्गरसक्तमनसां तेषां पांसूनां पटलैस्त्वया प्रसाधनविधिर्निष्पाद्यते कौतुकम्। अत्र तीक्ष्णया खड्गजात्या समनुरञ्जनक्रिया विरुध्यते। पांसुत्वजात्या मण्डनक्रिया विरुध्यते। सा वैरिविजयेन समाधीयते। श्लेषच्छाया चास्य सहकारिणी।

### काव्यादर्शः

'येषाम्' इति। 'धाराधरः खड्गः। अनुरज्यत इति अनुरागः। शोणितकृतं शोणत्वं च। स्नेहो रुधिराद्रत्वमपि। अत्र 'पांशूनाम्' इति पांशुत्वजातेर्मण्डन क्रियया सह विरोधः।

### विवेकः

क्रियया यथा—येषामित्यादि। धाराधरः खड्गः। अनुरज्यत इति—अनुरागः शोणितकृतं शोणत्वमपि। स्नेहो रुधिरार्द्रत्वमपि। अत्र पांशुपटलैः प्रसाधनविधानं विरुद्धम्।

### दीपिका

अनुरज्यते प्रेमनिर्भरो भवति। स्नेहं वशीकृतकत्वं पराप्नोतीति। क्रियते खड्गजातावसम्भवितया विरुद्धाऽनुरज्यते शोणितसंघाल्लौहित्यमाधत्ते स्नेहमौज्जवल्यं पराप्नोतीति च समाधिः।

ये तु तीक्ष्णस्यानुरागः स्नेहश्च विरुद्धाविति व्याचक्षते तन्मते तैक्ष्ण्यस्य गुणतया नेयं जातिक्रियाविरोधोदाहृतिः स्यात्। पांसुपटलैः प्रसाधननिर्वर्तनप्रक्रिया नाम जातिविरुद्धा।

### दर्पणः

अनुरज्यते प्रेमनिर्भरो भवति । स्नेहं वशीकरणम् । प्राप्नोतीति । आतरेव अचेतनखङ्गजातेरसंतनितया [असंनिहिततया] विरुद्ध इव प्रतिभासते । अनुरज्यत इति पदस्य अनुगतशोणित योगार्थतया, स्नेहशब्दस्य सैव अज्वल्य [औज्ज्वल्य] रूपार्थतया समाधानम् । पाशुपटलैः प्रसाधननिर्वर्तनं रक्तिमा राजजातिविरुद्धा [रागः, जातिविरुद्धा]

### साहित्यचूडामणिः

येषामिति । अत्र राजजातेः पांसुप्रसाधनक्रियया विरोधः ।

### सम्प्रदायप्रकाशिनी

येषामिति । धाराधरः खड्गः । तैक्ष्ण्यं निशितत्वमुग्रशीलता च । रागो रुधिरारुणिमा प्रीतिश्च । स्नेहो मासृण्यं प्रीत्यतिशयश्च । तैक्ष्ण्यस्यानुरागादिना विरोधो गुणविषयत्वान्नेहोदाहरणम् । किन्तु राजजातेः पांसुप्रसाधनक्रिययैव ।

### मधुमती

येषामिति । अत्र तीक्ष्णत्वजातेः अनुरञ्जन-स्नेहप्राप्ति क्रिययोः आपाततोविरोधप्रतिसन्धानेऽपिलौहित्य-मसृणताप्राप्तिरूपार्थप्रतीतौ आभासत्वम् ।

### विस्तारिका

येषामिति । धाराधरः खड्गः । अनुरागशोणितकृतः शोणिमा स्नेहो रुधिरार्द्रत्वम् ।

अत्र पांसुत्वजात्या भूषणक्रियाविरोधः । प्रसाधनपदस्य प्रकृष्टसाधनपरत्वविवक्षया परिहृत इत्याभासः ।

यत्तु तीक्ष्णत्वजातेरापाततो रञ्जनस्नेहाप्तिक्रिययोर्विरोधोऽपि लौहित्यमाधातुं प्राप्तिरूपार्थप्रतीतावाभास-त्वमिति तन्नः, तीक्ष्णत्वजातौ मानाभावात्, भावे वा स्नेहक्रियया तस्या विरोधाभावात्, तीक्ष्णस्यापि कुत्रचिद् विषये स्नेहदर्शनात् ।

### सारबोधिनी

येषामिति । तीक्ष्णो दारुणोऽत्र तीक्ष्णत्वजात्या रञ्जनस्नेहावाप्तिक्रिययोरापाततो विरोधेऽपि लौहित्यम-ज्जधातुप्राप्तरूपार्थप्रतीतावाभासता ।

काव्यप्रदीपः

जातेः क्रियया यथा—

**'येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधर-**
**स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च।**

**तेषां संगरसङ्गसक्तमनसां राज्ञां त्वया भूपते**
**पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम्॥'**

अत्र धाराधरत्वजातेरनुरागस्नेहपराप्तिक्रियाभ्यां विरोधः। लौहित्यचैक्कण्यार्थकत्वादिविरोधः। एवमग्रेऽप्यविरोध ऊह्यः। तीक्ष्णत्वस्यानुरागेण विरोध इत्यपव्याख्यानम्।

आदर्शः

जातेः क्रियाविरोधमाह—येषामिति। हे भूपते, येषां राज्ञां कण्ठपरिग्रहप्रणयितां कण्ठप्राप्तिवात्सल्यं संप्राप्य तव स तीक्ष्णोऽपि धाराधरः खड्गोऽनुरज्यते रक्तो भवति, कमपि स्नेहं रुधिरस्तिमितत्वं पराप्नोति प्राप्नोति। अथ च येषां कण्ठपरिग्रहात् तीक्ष्णस्य पुरुषस्यापि अनुरक्तता स्नेहप्राप्तिश्चेत्यनेन सुकुमारशरीरवत्त्वमुक्तम्, तेषां राज्ञां सङ्गररूपनृत्यसक्तमनसां त्वया पांशूनां पटलैः प्रसाधनविधिर्भूषणविधिर्निर्वर्त्यत इतीदं कौतुकम्, सुकुमाराङ्गाणां नृत्यप्रसक्तानां चन्दनादिनैव प्रसाधनौचित्यात्। अत्रचन्दनादिप्रसाध्यताव्याप्यायाः क्षत्रियत्वरूपराजत्वजातेः पांशुप्रसाधनक्रियाविरोधभानम्। मृतानां तथात्वात् प्रसाधनत्वारोपेण तदवास्तवत्वाच्चविरोधः।

सुधासागरः

जातेः क्रियया यथा—येषामिति।

हे भूपते धाराधरः खड्गस्तीक्ष्णो दारुणोऽस्ति, सोऽपि खड्गः सङ्गरसङ्गे सङ्ग्रामसम्बन्धे सक्तं मनो येषां ते तादृशास्तथाभूतानां येषां राज्ञां प्रतिनृपाणां कण्ठपरिग्रहप्रणयितां गलमिलनप्रीतिमत्तं सम्प्राप्यानुरज्यते च, कमपि स्नेहं पराप्नोति च तेषां तादृशसहृदयानां त्वया सर्वभूतानुकम्पकेन पासूनां पटलैः प्रसाधनविधिर्निर्वत्यते, कण्ठं छित्वा सङ्ग्रामधूलिधूसराः क्रियन्ते। शार्दूलविक्रीडितं छन्दः। 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्।

अत्र धाराधरत्वजातेरनुरागस्नेहपराप्तिक्रियाभ्यां विरोधः, लौहित्यचैक्कण्यार्थकत्वादविरोधः। एवमग्रेऽप्यविरोध ऊह्यः। तीक्ष्णत्वस्यानुरागेण विरोध इत्यपव्याख्यानम्, अनुदाहरणत्वप्रसङ्गात्। तथा हि तीक्ष्णत्वं क्रूरत्वं तच्च क्रूरसंसर्गेण सरलेप्युत्पद्यते इति गुण एव, न जातिरिति जातिविरोधासम्भवादिति।

**सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम्।**
**अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम्।। ४८५ ।।**

---

### सङ्केतः

सृजतीति। अत्र शफरत्वजातेः जनार्दनद्रव्यस्य च विरोधः।

### बालचित्तानुरञ्जनी

जात्या विरुद्धं द्रव्यमुदाहरति सृजतीति। यदिदं जगद्धेलयैव सृजति अवति संहरति च सोऽपि जनार्दनः अवसरवशतः इदं चित्रम्। अत्र शफरत्वजातेर्भगवतां जनार्दनद्रव्येण सह विरोधः।...स राजौदार्यात् समाधीयते।

### काव्यादर्शः

'सृजति' इति। अत्र शफरत्वजातेर्जनार्दनद्रव्येण सह विरोधः।

### विवेकः

द्रव्येन यथा सृजतीत्यादि—जनार्दनोऽपि शफरो मत्स्य इति जातेर्जात्यादिभिः सह विरोधश्चतुर्धा।

### दीपिका

सृजतीत्यादौ शफरादिशब्दस्यैकवाचकतया द्रव्यत्वम्। स इति प्राक्कालिकमहानुभाववाचकस्य सर्वनामतया जातित्वम्।

### दर्पणः

सृजतीत्यादौ भवादिशब्दानां एकव्यक्तिवाचिकत्वात्। स इत्यस्य च प्राकरणिक लहानुभाववाचकस्य सर्वनामतया जातित्वम्।

### साहित्यचूडामणिः

सृजति चेति। अत्र द्रव्यभूतस्य भगवतः शफरजातेश्च मिथो विरोधः। तस्य जगद्रक्षादीक्षितत्वेन परिहारः। एवं जातिश्चतुर्भिरित्युदाहारि।

### सम्प्रदायप्रकाशिनी

सृजति चेति। अत्र शफरजातेर्जनार्दनेन द्रव्येण। एते जातेः।

### मधुमती

सृजतीति । अत्र मत्स्यत्वजातेः जनार्दनलक्षणद्रव्येण विरोधोऽपि आपाततो भासमानः एव, मीनशरीरप्रतीतौ तस्या आभासत्वात् । जनार्दनपदं च अशरीरिपरमेश्वरपरम् । अन्यथा शरीरभेदेन जनार्दनत्वजातिसम्भवात्, जातिद्वयविरोधोदाहरणवैरस्यात् । जातिद्वयविरोधस्य अत्र अविवक्षितत्वाच्च ।

### विस्तारिका

सृजतीति । शफरो मत्स्यभेदः ।

अत्र मत्स्यत्वजातेर्जनार्दनाद्रव्येणापाततो भावो विरोधो मीनशरीरपरिग्रहस्यागमिकत्वेनाभासः । जनार्दनपदं चाशरीरेश्वरात्मपरम्, अन्यथा शरीरभेदेन जनार्दनत्वजातिसम्भवेन जातिद्वयोदाहरणतापत्तेः ।

### सारबोधिनी

सृजतीति । अत्र शफरत्वजात्यापाततो जनार्दनरूपस्य द्रव्यस्य विरोधो मीनशरीरपरिग्रहस्यागमगतत्वादाभासः ।

### काव्यप्रदीपः

**'सृजति च महदिदमवति च संहरति च हेलयैव यो नियतम् ।**
**अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥'**

अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण विरोधः ।

### आदर्शः

जातेद्रव्यविरोधमाह—सृजति चेति । सर्वत्र तत्तद्द्रव्यतावच्छेदकधर्मस्य जातित्वबाधे तत्तद्द्रव्येण सह तादात्म्येन विरोधोऽवंधेयः । यो जनार्दनो हेलयैव अयत्नेनैवेदं जगत् सृजत्यवति संहरति च, अवसरस्य समयस्य वशतः सोऽपि शफरः प्रोष्ठीमत्स्यरूप इतीदं चित्रमित्यर्थः । शफराकारत्वेन रोहितमत्स्यशावस्यैवात्र शफरत्वेनोक्तिः, 'अतो हरी रोहितमत्स्यरूपी'ति हरिवंशे रोहितमत्स्यत्वेनोक्तत्वात् । अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण सह तादात्म्येन विरोधोऽपिकारेण दर्शितः । जनार्दनत्वन्तु न जातिः तदात्मनो नित्यतच्छरीरस्य वैकत्वात् । अवतारीयशरीरेषु तु न जनार्दनत्वमित्यभिप्रायः । अवतारविशेषत्वात् त्वविरोधः ।

### सुधासागरः

जातेद्रव्येण यथा—सृजतीति । आर्या । स्पष्टम् । अत्र शफरत्वजातेर्जनार्दनेनद्रव्येण विरोधः ।

**सततं मुसलासक्ता बहुतरगृहकर्मघटनया नृपते।**

**द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥ ४८६ ॥**

---

**सङ्केतः**

सततमिति। अत्र काठिन्य-सौकुमार्यगुमौ विरुद्धौ।

**काव्यादर्शः**

'सततम्' इति। अत्र काठिन्यसौकुमार्ययोर्गुणयोर्विरोधः।

**विवेकः**

सततमित्यादि—सति भवतीति त्वयि सतीत्यर्थः। अत्र कठिनसुकुमारयोर्गुणयोर्विरोधो वर्णनीयदानप्रकर्षेणापसार्यते।

**दीपिका**

सन्ततेत्यादौ काठिन्यसौकुमार्ययोर्विरोधः।

**दर्पणः**

सन्ततेत्यादौ [सततेत्यादौ] काठिन्यसौकुमार्ययोर्गुणयोर्विरोधः।

**साहित्यचूडामणिः**

अथ गुणस्त्रिभिरित्युदाहरति—सन्ततेति। अत्र काठिन्यस्य च सौकुमार्यस्य च गुणयोः साक्षाद् विरोधः। राजौदार्यात् समाधिः।

**सम्प्रदायप्रकाशिनी**

सन्ततेति। अत्र काठिन्यस्य सौकुमार्येण।

**मधुमती**

सततमिति। अत्र काठिन्य-सौकुमार्यगुणयोः आपाततो विरोधप्रतिसन्धानेऽपि कालभेदप्रतिसन्धानात् आभासत्वम्।

**विस्तारिका**

सततमिति। अत्र काठिन्यसौकुमार्यगुणयोरापाततो विरोधस्य भानेऽपि कालभेदेन परिहारादाभासत्वम्।

## सारबोधिनी

सततमिति। अत्र काठिन्यसौकुमार्ययोरापाततो विरोधो भवद्दानवशात् स्वयं गृहव्यापारनिवृत्त्या समाधीयते।

## काव्यप्रदीपः

गुणस्य गुणेन यथा—

'सततं मुसलासक्ता बहुतरगृहकर्मघटनया नृपते।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः॥'

कठिनत्वसुकुमारत्वयोर्विरोधः।

## आदर्शः

गुणस्य गुणेन सह विरोधमाह—सन्ततेति। हे नृपते, सन्ततेत्यादिना पूर्वं कठिना द्विजपत्नीनां कराः, भवति त्वयि राज्ञि सति सरोजकुमाराः, भवता तेषां द्विजानां सम्पद्वर्द्धनेन दासीभिरेव कर्मकरणात् तासां कर्माकरणात् करकाठिन्यापगमात्। अत्र काठिन्यसौकुमार्ययोर्गुणयोर्विरोधभानम्, कालभेदात् त्वविरोधः।

## सुधासागरः

गुणस्य गुणेन यथा—सततमिति। गीतिश्छन्दः। हे नृपते, भवति त्वयि दातरि विद्यमाने सति द्विजपत्नीनां ब्राह्मणीनां सरोजसुकुमाराः कराः पाणयो बहुतरगृहकर्मघटनया सततं मुसलासक्ताः सन्तः कठिना जाताः। त्वद्दत्तान्नसमृद्धिवशादिति भावः। अत्र कठिनत्वसुकुमारत्वयोर्गुणयोर्विरोधः।

पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम्।
परुषमपि सुजनवाक्यं मलयजरसवत् प्रमोदयति ।। ४८७ ।।

---

### सङ्केतः

पेशलमिति । अत्र पेशलत्व-परुषत्वगुणौ दहन-प्रमोदक्रियाभ्यां सह विरुद्धौ ।

### बालचित्तानुरञ्जनी

गुणेन विरुद्धां क्रियामुदाहरति पेशलमिति । कोमलमपि दुर्जनवचनं सुतत्त्वविदां तत्वज्ञानां पुरुषाणां मानसं दहतितराम् । कर्कशमपि सुजनवाक्यं चन्दनरसवत् प्रमोदयति । अत्र पेशलत्वस्य गुणस्य दाहलक्षणलक्षितक्रियायाः पारुष्यस्य मोदरूपायाश्च विरोधः, खलवचनस्य दुःसहत्वात् । सुजनवाक्यस्य हृद्यत्वाच्च परिहार्यते ।

### काव्यादर्शः

'पेशलम्' इति । 'सतत्वविदां परमार्थविदाम्' । अत्र पेशलत्वलक्षणगुणस्य दहनक्रियया परुषत्वलक्षणगुणस्य प्रमोदक्रियया च विरोधः ।

### विवेकः

पेशलमपीत्यादि—पेशलतस्य दाहकत्वं परुषस्य तु प्रमोदनिमित्तत्वमिति विरुद्धं खलतासौजन्याभ्यां परिहृतम् ।

### दीपिका

पेशलत्वपारुष्यगुणाभ्यां दहनप्रमोदनक्रिययोर्विरोधः ।

### दर्पणः

पेशनीत्यादौ [पेशलमपीत्यादौ] पेशलत्वपारुष्यगुणाभ्यां दहनप्रमोदयोर्विरोधः ।

### साहित्यचूडामणिः

पेशलमिति । अत्र पेशलत्वस्य दाहलक्षणया क्रियाया, पारुष्यस्य प्रमोदरूपया च विरोधः । खलवचनस्य दुस्सहत्वात्, सुजनवाक्यस्य हृद्यत्वाच्च परिहारः ।

### सम्प्रदायप्रकाशिनी

पेशलमपीति । अत्र पेशलत्वस्य दाहक्रियया । तथा पारुष्यस्य प्रमोदनक्रियया ।

### मधुमती

पेशलमपीति। अत्र पेशलतागुणस्य दाहक्रियया, परुषत्वगुणस्य मोदन क्रियया च द्राग्विरोध प्रतिसन्धानेऽपि; पेशलपदस्य आपातमधुरपरतायाम्, दाहपदस्य आपाततः सन्तापजनकत्वपरतायाम् एवं परुषपदस्य आपातविरसता परतायाम्, प्रमोदपदस्य पर्यवसानेहितपरतायां च निश्चितायां आभासत्वम्।

### विस्तारिका

पेशलेति। पेशलत्वगणस्य दाहक्रियया, परुषत्वस्य प्रमोदक्रियया चापाततो विरोधः। विरोधस्य प्रतिसन्धानेऽपि पेशलपरुषपदयोरापातरमणीयत्वापातदुःश्रवत्वविवक्षया परुषत्वस्य दाहपदस्य च परिणामसन्तापकत्वपरतया समर्थनादाभासत्वम्।

### काव्यप्रदीपः

गुणस्य क्रियया यथा—

**'पेलवमपि' खलवचनं दहतितरां मानसं सततत्त्वविदाम्।**
**परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति॥'**

अत्र पेलवपरुषत्वयोर्गुणयोर्दाहप्रमोदक्रियाभ्यां विरोधः। यथा वा मद्भ्रातुः श्रीहर्षस्य—

**'सर्वतः पुरत एव दृश्यते पात्रतां न पुनरेति चक्षुषोः।**
**हृद्गतोऽपि भुजयोर्न भाजनं कोऽयमालि वनमालिनः क्रमः॥'**

अत्र दर्शनगमनक्रिययोर्गमनाभावभुजभाजनत्वाभावाभ्याम्। उक्तत्रयातिरिक्तस्यैव गुणशब्देन विवक्षणात्। 'गिरयः'—इत्यादि तथैवोदाहृतम्।

### आदर्शः

गुणस्य क्रियाविरोधमाह—पेशलमपीति। सतत्त्व-तत्त्वयोः पर्यायः, तत्त्वविदामित्यर्थः। अत्र पेशलत्व-गुण-दाहक्रिययोः परुषत्वगुण-प्रमोदनक्रिययोश्च विरोधभानम्, तत्तद्वचनस्वभावात् त्वविरोधः।

### सुधासागरः

गुणस्य क्रियाया यथा—पेशलमपीति आर्या। स्पष्टम्। अत्र पेशलत्वपरुषत्वयोर्गुणयोर्दाहप्रमोदक्रियाभ्यां विरोधः।

क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥ ४८८ ॥

---

### सङ्केतः

यन्मार्गणेति । यन्मार्गणा एव अनर्गलः शतपातः शातः पविः । अत्र दृढत्वरूपगुण-अम्भोजदलरूपद्रव्ययोः विरोधः ।

### बालचित्तानुरञ्जनी

गुणेन विरुद्धं द्रव्यमुदाहरति क्रौञ्चेति । यन्मार्गणानर्गलशातापाते सति उद्दामद्दृषदृढः असौ क्रौञ्चाद्रिः नवाम्भोजदलाभिजातः अभूत् स भार्गवः अपूर्वसृष्टिः सत्यम् । शातो वज्रम् । अत्र कमलदलवत् सौकुमार्यस्य गुणस्य पर्वतविशेषरूपद्रव्येण विरोधः । स च भार्गवस्य गाढप्रहारितया समाधीयते ।

### काव्यादर्शः

द्रव्येण यथा 'क्रौञ्चे'ति । [य]न्मार्गणा एव अनर्गलः शातपातः । 'अम्भोजदलाभिजातः' इति अम्भोजदलप्रख्यो जातः । अत्र दृषद्दृढत्वलक्षणगुणस्य अम्भोजदलस्वरूपद्रव्येण विरोधः ।

### विवेकः

क्रौञ्चाद्रिरित्यादि—शातं वज्रं तीक्ष्णं वा । उद्दामप्रस्तरदृढस्य क्रौञ्चाद्रेर्नवाम्भोजदलाभिजातत्वं विरुद्धं भार्गवस्य लोकोत्तरपौरुषेणाभासतां प्रापितमिति गुणस्य गुणादिभिः सह विरोधस्त्रिग्धा ।

### दीपिका

क्रौञ्चाद्रिरित्यादौ दार्ढ्यगुणस्य नवाम्भोजदलाभिजातभावरूपयोश्च क्रियायाः विरोध इत्येके, तन्न, पूर्वाविशेषप्रसङ्गात्, गुणद्रव्यविरोधोदाहृत्यनन्तरानुपादानाच्च । क्रौञ्चाद्रिशब्दस्यैकव्यक्तिवाचितया द्रव्यस्याम्भोजदलवत् कोमलत्वगुणस्य च विरोध इति व्याख्यानं ज्यायः ।

### दर्पणः

क्रौञ्चाद्रिरित्यादौ क्रौञ्चाद्रिशब्दस्य एकव्यक्तिवाचकत्वात् द्रव्यस्यास्तोजनवत् [?] कोमलत्वस्य च विरोधः ।

### साहित्यचूडामणिः

क्रौञ्चेति । अत्राप्यद्रिविशेषस्य द्रव्यस्य कमलदलवत् सौकुमार्यगुणस्य च विरोधः रैणुकेयस्य गाढप्रहारितया परिहारः ।

### सम्प्रदायप्रकाशिनी

क्रौञ्चाद्रिरिति । शातं वृन्दम् । अपूर्वसर्गः अनीदृशान्यजन्मा । अत्र दलाभिजात्यस्य क्रौञ्चाद्रिणा द्रव्येण । एते गुणस्य ।

### मधुमती

क्रौञ्चाद्रीति । अत्र क्रौञ्चाद्रेः द्रव्यस्य मृदुत्वलक्षणगुणेन विरोधः द्राक् प्रतीतोऽपि भार्गवप्रभावातिशयसुस्ववेद्यत्वपरतायां आभासत्वम् ।

### विस्तारिका

क्रौञ्चेति । शातेति पातविशेषणम् । सत्यमिति स्तोतुर्विमर्शः ।

### सारबोधिनी

क्रौञ्चेति । अत्र क्रौञ्चाद्रेद्रव्यस्य मृदुत्वाख्यागुणेन विरोधो भार्गवमहिम्ना समाधीयते ।

### काव्यप्रदीपः

द्रव्येण यथा—

**'क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते ।**
**अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥'**

अत्राम्भोजदलाभिजातत्वस्य गुणस्य क्रौञ्चाद्रिणा द्रव्येण विरोधः ।

### आदर्शः

गुणस्य द्रव्यविरोधमाह—क्रौञ्चाद्रिरिति । 'शातपाते' इति पाठे अनर्गलं शातं छेदनं यस्य सोऽनर्गलशातः, तथा च क्वचिद् विशेषणस्य परनिपाताद् अनर्गलशातस्य यन्मार्गणस्य पाते सत्युद्दामदृशद्दृढोऽप्यसौ क्रौञ्चाद्रिर्नवाम्भोजदलवद् अभिजातः कोमलोऽभूत् स भार्गवो रामः सत्यं विधेरपूर्वा सृष्टिरित्यर्थः । 'अनर्गलपातशाते' इति पाठे तु यन्मार्गणानामनर्गलपातधीनशाते छेदने निमित्तं कोमलोऽभूदित्यर्थः । अत्र क्रौञ्चाद्रित्वं न जातिः, एकमात्रव्यक्तिवृत्तित्वाद् गिरेश्चैत्रादेरिवावस्थाभेदाभावात्, अतः क्रौञ्चाद्रिणा द्रव्येण सह तादात्म्येनाभिजातत्वगुणविरोधभानम् । भार्गवस्य विलक्षणसामर्थ्येनाभिजातत्वारोपात् त्वविरोधः । अत्र दृढत्वाभिजातत्वगुणयोरपि विरोधोऽवधेयः ।

### सुधासागरः

गुणस्य द्रव्येण यथा—क्रौञ्चेति । इन्द्रवज्रा छन्दः । उद्दामा महत्यो याः दृषदः शिलास्ताभिर्दृढो निष्ठुरोऽसौ क्रौञ्चाद्रिः, यस्य मार्गणस्य बाणस्यानर्गलोऽप्रतिहतः शातस्तीक्ष्णो यो पातस्तद्विषये नवाम्भोजदलाभिजातो नूतनपद्मपत्रकोमलोऽभूत् स भार्गवः परशुरामः सत्यमपूर्वसर्गः अलौकिकोऽवतार इत्यर्थः । अत्राम्भोजदलभिजातत्वस्य गुणस्य क्रौञ्चाद्रिणा द्रव्येण विरोधः ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते॥ ४८९॥

---

### सङ्केतः

परीति। जडयति शीतलयति मोहयति च। तापः खेदोऽपि। अत्र जडीकरण-तापकरणरूपे क्रिये विरुद्धे। वस्तुसौन्दर्येण तदप्राप्तिपर्यवसानेन विरोधः परिह्रियते।

### बालचित्तानुरञ्जनी

क्रियाया विरुद्धां क्रियामुदाहरति परिच्छेदेति। परिच्छेदरहितः सकलवचनानामगोचरः पुनः अन्यस्मिन् जन्मनि यः अनुभवपथं न गतवान् विवेकनाशात् उपचितमहामोहगहनः कोऽपि विकासः अन्तर्जडयति तापं च कुरुते। अत्र जडीकरणतापकरणयोः क्रिययोर्विरोधः। स औत्सुक्योत्कर्षात्परिहीयते।

### काव्यादर्शः

'जडयति शीतलयति व्यामोहयति च। ताप उष्णत्वं खेदश्च'। अत्र जडीकरणतापकरणयोः क्रिययोर्विरोधो वस्तुसौन्दर्येण तदप्राप्तिपर्यवसानेन परिह्रियते।

### विवेकः

परीत्यादि—जड़यति शीतलयति तापयति चेति। अत्र जड़ीकरणतापक्रिययोर्विरोधो वस्तुसौन्दर्येण प्राप्तिपर्यवसानेन परिह्रियते।

### दीपिका

परिच्छेदेत्यादौ च जडीकरणतापकरणक्रिययोर्विरोधः।

### दर्पणः

परिदेव्यादौ [परिच्छेदेत्यादौ] जडोकरणतापकरणयोर्विरोधः।

### साहित्यचूडामणिः

अथ क्रिया द्वाभ्यामुदाहरति—परिच्छेदेति। जडीकरणतापकरणयोः क्रिययोर्विरोधः। औत्सुक्योत्कर्षात् परिहारः।

**सम्प्रदायप्रकाशिनी**

परिच्छेदातीत इति। मकरन्दाय विनिवेदितमालतीसन्दर्शनवृत्तान्तः पूर्वानुरागविप्रलम्भविसंस्थुलान्तरात्मा माधवः स्वचेतोविक्रियामाविष्कर्तुकामो वक्ति। अन्तर्विकारः कोऽपि तदाप्रभृति दुर्निरूपः अन्तरात्मन्येवान्यैर्दुरुन्नेयो विक्रियाविशेषः कश्चिज्जडयति च तापं च कुरुते अप्रतिपत्त्या स्थगयति विदाहमुद्वेलयति च। कुतः। उपचितमहामोहगहनः, अतिमात्रप्रवृद्धेनापरिच्छेद्येन वैचित्त्येन दूरदुरुत्तरः। कुतश्चेत्थं गहनः। विवेकप्रध्वंसात्, सारासारविभजनशक्तेर्निरवशेषविलयात्। अतोऽयं विकारः प्रमाणप्रवृत्तिकलाया अपि नावकाशं ददाति। तथा हि—परिच्छेदातीतः य ईदृगिति निर्धारणपथमतिक्रान्तः। अतः प्रत्यक्षातिलङ्घी। तथा सकलवचनानामविषयः जात्यादिप्रवृत्तिनिमित्तवतां सर्वेषामेव वचनानामगोचरः। अतः शब्दप्रमाणातिपाती। अस्मिन् जन्मनि पुनरनुभवपथं न गतवान्। प्राग्व्यपेक्षमिह पुनस्त्वम्। देहोदयादारभ्यैतावन्तं कालं नैवमनुभूतपूर्वः। अतो व्याप्तिग्रहसम्भवादानास्पदमनुमानस्यापि। यत इत्थ प्रत्यक्षशब्दानुमानप्रमाणैर्न निर्धार्यते, अतो विवेकप्रध्वंसः। विवेकप्रध्वंसान्महामोहोपचयः। अतो गहनः सन् विकारो जडयति च तापं च कुरुते। जडयति चेति चकारो जाड्यदशां तापसंभेदनिरन्तरामभिव्यनक्ति, तथा तापं च कुरुत इति चकारस्तापदशां जाड्यसम्भेदनिरन्तरामभिव्यनक्ति, तथा तापं च कुरुत इति चकारस्तापदशां जाड्यसम्भेदनिरन्तरामिति जडीभावतापातिरेकमन्तरेण नान्यत् किञ्चिदध्यवस्यामीति पूर्वानुरागविप्रलम्भवेदनाविकारस्य परां कोटिमधिरूढोऽस्मीत्यवगमयति। अत्र जडीकरणेन तापकरणस्य।

**मधुमती**

परिच्छेदेति। अत्र जडीकरणतापनक्रिययोः आपाततो विरोधबुद्धावपि, जडीकरणपदस्य निष्क्रियत्वपरतायां आभासत्वम्।

**विस्तारिका**

अत्र सन्तापजडीकरणक्रिययोर्द्राग्विरोधस्य भानेऽपि जडीकरणपदस्य निष्क्रियत्वपरतायामाभासत्वम्।

**सारबोधिनी**

परिच्छेद इति। अत्र जडीकरणतापक्रिययोर्विरोधो विरहमहिम्ना समाधीयते।

**काव्यप्रदीपः**

क्रियायाः यथा—

> **'परिच्छेदातीतः सकलवचनानामविषयः**
> **पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।**
> **विवेकप्रध्वंसादुपचितमहामोहगहनो**
> **विकारः कोऽप्यन्तर्जडयति च तापं च तनुते॥'**

अत्र जडयति च तापं च तनुत इति क्रिययोर्विरोधः।

### आदर्शः

क्रियायाः क्रियया सह विरोधमाह—परिच्छेदेति। व्याख्यातमिदं पदैकदेशव्यङ्ग्यरसध्वनौ। अत्र जडनतापनक्रिययोर्विरोधभानम्, क्रमशस्तदुभयकरणात् त्वविरोधः।

### सुधासागरः

क्रियायाः क्रियया यथा—परिच्छेदेति। व्याख्यातमिदम्। अत्र 'जडयति च तापं च कुरुत' इति क्रिययोर्विरोधः।

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ।। ४९० ।।

---

सङ्केतः

अयमितिं । अत्र जलधिः पीतः इति द्रव्यक्रिये विरुद्धे । विरोधश्च मुनिप्रभावेण समाधीयते ।

बालचित्तानुरञ्जनी

क्रियाविरुद्धं द्रव्यमुदाहरति अयमिति । तृष्णातरलितमनोभिः अस्माभिरयमेको जलनिधिः वारामुदकानां निलयः रत्नाकर इति च श्रितः निजकरपुटीकोटरगतं ताम्यन्तस्तिमयो मत्स्याः मकराश्च यस्मिन् एनं समुद्रं मुनिः अगस्त्यः आपास्यतीति क एवं जानीते । अत्र जलनिधिपानक्रियाया अगस्त्यरूपद्रव्येण सह विरोधः स अगस्त्य-महिम्ना परिहीयते ।

काव्यादर्शः

'अयम्' इति । अत्र जलधिद्रव्येण सह पानक्रियाया विरोधो मुनिगतेन महाप्रभावत्वेन परिहृयते ।

विवेकः

अयमित्यादि—तृष्णा पिपासालोभश्च । जानीत इति—अनुपसर्गाद् ज्ञः (पा. १/३/७६) इति फलवति कर्तर्यात्मने पदम् । अत्र जलनिधिः पीत इति द्रव्यक्रिययोर्विरोधो मुनिगतेन महाप्रभावत्वेन समाधीयत इति क्रियायाः क्रियाद्रव्याभ्यां विरोधः ।

दीपिका

अयमित्यादौ लवणजलधिद्रव्यपानक्रिययोर्विरोधः ।

दर्पणः

अयमित्यादौ लवणजलधेद्रव्यस्य ।

साहित्यचूडामणिः

अयमिति । कुम्भोद्भवस्य द्रव्यस्य जलनिधिपानक्रियया च विरोधः तस्य महाप्रभावतया परिह्रियते ।

सम्प्रदायप्रकाशिनी

अयं वारामेक इति । तृष्णा लिप्सा पिपासा च । अत्र जलनिधिः पीत इति क्रियाया द्रव्येण । एतौ क्रियायाः ।

### मधुमती

अयमिति । अत्र समुद्रलक्षणद्रव्यस्य पानक्रियया विरोधः द्राक् प्रतीतोऽपि, अगस्त्यतपः प्रभावातिशय-परामर्शात् निवर्तते ।

### विस्तारिका

अयमिति । अत्र समुद्राख्यद्रव्यस्य पानक्रियया विरोधो द्राक् प्रतीतोऽपि अगस्त्यतपः प्रभावातिशयसा-मर्थ्यात् परिहृत इत्याभासः ।

### सारबोधिनी

अयमिति । अत्र समुद्राख्यस्य द्रव्यस्य पानक्रियाविरोधोऽगस्त्यतपः प्रभावातिशयेन समाधीयते ।

### काव्यप्रदीपः

क्रियाया द्रव्येण यथा—

'अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णाकवलितमनोभिर्जलनिधिः ।
इदं को जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ।।'

अत्र पान क्रियायाः कर्मीभूतेन जलनिधिना विरोधः । यद्यपि जलनिधीनां बहुत्वेन न द्रव्यविरोधोदाहर-णत्वमुचितं तथाप्येकलवणाम्बुधिपरतया समर्थनीयम् ।

### आदर्शः

क्रियाया द्रव्यविरोधमाह—अयं वारामिति । ताम्यन्तस्तिमिमकरा यस्यां पानक्रियायां तादृशं यथा स्यात्तथा मुनिरगस्त्य एनं जलनिधिमापास्यतीत्येवं को जानीते इत्यर्थः । पूर्वार्द्धन्तु स्पष्टार्थकम् । अत्र कर्मतासम्ब-न्धेन पानक्रियाया जलनिधिना द्रव्येण सह तादात्म्येन विरोधभानम्, तस्य पानासम्भवात्, मुनितपः प्रभावात् त्वविरोधः । न च सप्तसमुद्रवृत्तित्वाज्जलनिधित्वं जातिरेवेति वाच्यम्, समुद्रत्वस्य तथात्वेऽपि योगार्थघटितस्य जलनिधित्वस्यातथात्वात् । न चैवम् 'अब्धयोऽप्यगम्भीरा इत्यत्र कथमब्धित्वजातेर्गुणविरोध उदाहृत इति वाच्यम्, तदपहाय गिरय इत्याद्यंश एव तदुदाहरणत्वात्, अब्धय इत्याद्यंशे गुणद्रव्ययोरेव विरोधात् ।

### सुधासागरः

क्रियायाः द्रव्येण यथा—अयमिति । शिखरिणी छन्दः । लक्षणमुक्तं प्राक् । मुनिरगस्त्यः । स्फुटमन्यत् । अत्र पानक्रियायाः कर्मीभूतेन जलनिधिना द्रव्येण विरोधः । यद्यपि जलनिधीनां बहुत्वेन न द्रव्यविरोधोदाहरणत्व-मुचितम्, तथाऽप्येकलवणाम्बुधिपरतया समर्थनीयम् ।

**समदमतङ्गजमदजलनिस्यन्दतरङ्गिणी परिष्वङ्गात्।**

**क्षितितिलक त्वयि तटजुषि शंकरचूडापगापि कालिन्दी॥ ४९१ ॥**

---

### सङ्केतः

समदेति। अत्र गङ्गा-यमुनारूपद्रव्ययोर्विरोधः 'गङ्गा यमुना जाता' इतिरूपेण, न तु नदीत्वजातेः; विविक्तविषयत्वेन विरोधस्य दर्शनात्। 'कुपतिमपि कलत्रवल्लभम्' इत्यादौ श्लेषगर्भत्वे सङ्करः इति कश्चित्। उद्भटस्तु—श्लेषगर्भत्वे विरोधप्रतिभोत्पत्तिहेतुं श्लेषमाह। श्लेषवशादेव लब्धात्मभावत्वाद्विरोधस्य न श्लेषेण सह सङ्करः। "स्वस्वहेतोः लब्धात्मभावानां अलङ्काराणां मिश्रत्वे सङ्करः" इति सङ्करलक्षणात्॥ एकविषयत्वे विरोधः, भिन्नविषयत्वे तु असङ्गत्याख्यः अलङ्कारः इति। इति विरोधः।

### बालचित्तानुरञ्जनी

द्रव्येण विरुद्धं द्रव्यमुदाहरति समदेति। हे क्षिति तिलक राजन् त्वयि तटजुषि सति शङ्करजूटापगापि समदमतङ्गजगमदजलनिःस्यन्दतरङ्गिणीपरिष्वङ्गात् कालिन्दी भवति। अत्र गङ्गाकालिन्दीद्रव्ययोर्विरोधः। मदजल-कृतनीलिमत्वेन परिह्रियते।

### काव्यादर्शः

द्रव्यस्य द्रव्येण—'समदे'ति। अत्र 'गङ्गापि यमुना जाता' इति गङ्गायमुनारूपयोः श्वेतकृष्णरूपयोद्रव्य-योर्विरोधो, न तु नदीत्वजातेः, विविक्तविषयत्वेन विरोधस्य दर्शनात्। 'श्लेषगर्भत्वे विरोधप्रतिभोत्पत्तिहेतुः श्लेषः' इति उद्भटः। मतान्तरे तु संकरः, यथा—'संनिहितबालान्धकारा भास्वन्मूर्तिश्च' इत्यादौ विरोधेन द्वयोरपि श्लिष्टत्वे। एकस्य च श्लिष्टत्वे 'कुपितमपि कलत्र बल्लभम्' इत्यादौ विरोध एवेष्यते। श्लेषवशादेव हि समासादितस्वभावः श्लेषात्मक एव विरोधस्ततः श्लेषेण सहाय्य संकरत्वाशङ्का न कार्या, भेदाभावात्। एवमन्य-त्रापि परीक्ष्यम्। भिन्नदेशयोश्च कार्यकारणयोर्विरोधेऽपि 'जस्सेगवणो तस्स' इत्यादौ असंमतिप्रभृतिर्वक्ष्यते। [२५ ॥]

### विवेकः

समदेत्यादि—त्वयि तटजुषि तटप्रदेशमध्यासिते। अत्र गङ्गा कालिन्दी भवतीति तयोर्विरोधस्तदीयम-त्तमातङ्गमदजनितनदीसम्बन्धेन समर्थ्यत इति द्रव्यस्य द्रव्येन विरोधः। कश्चिदिह भेदः श्लेषवशादेव समासादि-तस्वभाव इति विरोधप्रतिभोत्पत्तिहेतुः श्लेषात्मक एव। ततः श्लेषेण सहास्य सङ्करत्वशङ्का न कार्या भेदाभावात्। एवन्यत्रापि परीक्ष्यम्। "तदेतद्भट्टोद्भटादीनां मतम्। दर्शनान्तरे तु सङ्करालङ्कारः। यथा 'संनिहितबालान्धकाराः भास्वन्मूर्तिश्च' (ह. च. २७ पृः) इत्यादौ विरोधिनोर्द्वयोरपि श्लिष्टत्वे। एकस्य तु श्लिष्टत्वे 'कुपतिमपि कलत्रव-ल्लभ'-(का. १९ पृः) मित्यादौ।"(अ. स. १८४ पृ.)

### दीपिका

समदेत्यादौ गङ्गायमुनाख्यद्रव्यतादात्म्यविरोधः।

### साहित्यचूडामणिः

द्रव्यं द्रव्येणेति। द्रव्यस्य तेनैव विरोधमुदाहरति समुदेति। अत्र गङ्गाकालिन्द्योर्द्रव्ययोर्विरोधः। वर्णनीयस्य गजघटाधिक्यात् समाधिः।

### सम्प्रदायप्रकाशिनी

समदेति। अत्र गङ्गा कालिन्दी जातेति द्रव्यस्य द्रव्येण। अयं द्रव्यस्य।

### मधुमती

समदेति। अत्र तद्देशे द्रव्ययोः गङ्गायमुनयोः विरोधे द्राक् प्रतीतेऽपि, कालिन्दीपदस्य श्यामजलपरतायां आभासत्वम्। इति विरोधः।

### विस्तारिका

समदेति। अत्र गङ्गायमुनयोद्रव्ययोः स्वरूपतो विरोधेऽपि कालिन्दीपदकृष्णजलत्वपरतया तदभावादाभासत्वम्।

### सारबोधिनी

समदेति। अत्र गङ्गायमुनयोर्द्रव्ययोः स्वरूपतो विरोधोऽपि कालिन्दीपदस्य कृष्णजलपरत्वापरिह्रियते।

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्॥ २५॥**

**'समदमतङ्गजमदजलनिष्यन्दतरङ्गिणीपरिष्वङ्गात्।**
**क्षितितिलक त्वयि तटजुषि शंकरचूडापगापि कालिन्दी॥'**

### आदर्शः

द्रव्यस्य द्रव्येण सह विरोधमाह—समदेति। हे क्षितितिलक, त्वयि तटजुषि सति शङ्करचूडापगा-कालिन्द्योद्रव्ययोस्तादत्म्येन विरोधभानमपिकारेण रूपकबाधया कृतम्। न च सीताऽलकनन्दादिना गङ्गावृत्तित्वाद् गङ्गात्वं जातिरेवेति वाच्यम्, गङ्गात्वस्य तथात्वेऽपि योगार्थघटितशङ्करचूडापगात्वस्यातथात्वात्।

### सुधासागरः

द्रव्यस्य द्रव्येण यथा—समदेति। स्पष्टम्। गीतिश्छन्दः। अत्र गङ्गायमुनयोर्विरोधः।

**(सू० १६८) स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥१११ ॥**

स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानं च । उदाहरणम्—

**पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चैः**

**आसज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।**

**घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो**

**मन्दं शब्दायमानो विलखति शयनादुत्थितः क्ष्मां खुरेण ॥ ४९२ ॥**

---

**सङ्केतः**

स्वाभावोक्तिरिति । इह वस्तुस्वभाववर्णनमात्रं नालङ्कारः । तथात्वे सर्वमेव हि काव्यं अलङ्कारः स्यात् । तस्मात् वस्तुनः सामान्यस्वभावः लौकिकोऽर्थः अलङ्कार्य, कविप्रतिभागोचरस्य तु अत एव तन्निमित्तस्यैव वस्तुस्वभावस्योक्तिः अलङ्कारः इति ध्येयम् । स्वयोः स्वकीययोः क्रियारूपयोः । क्रिया व्यापारः । संस्थानं स्वाभाविकं रूपम् ।

पश्चादिति । द्राघयित्वा दीर्घीकृत्य । प्रोथः अश्वस्य मुखाग्रम् । तुण्डं मुखम् । अत्र धूलिधूम्रा इति वर्णस्योक्तिः । शेषं अङ्घ्रिप्रसारणअङ्गदीर्घीकरणादिकं तु क्रियासंस्थानोक्तिः । इति स्वभावोक्तिः ।

**सङ्केतः (रुय्यकः)**

डिम्भो बालः । तद्विषया स्वभावोक्तिर्यथा—

**धूलीधूसरतनवो राज्यस्थितिरचनकल्पितैकनृपाः ।**

**कृतमुखवाद्याविष्काराः क्रीडन्ति सुनिर्भरं डिम्भाः ॥ इति ।**

द्राघयित्वा दीर्घीकृत्य "प्रियस्थिरे"त्यादिना द्राघादेशः । प्रोथोऽश्वस्य मुखाग्रं, तुण्डं मुखम् ।

**बालचित्तानुरञ्जनी**

स्वभावोक्त्यलङ्कारं लक्षयति स्वभावोक्तिरिति । [डिम्भादेः] क्रियारूपयोर्वर्णनं स्वभावोक्तिः । रूपं च द्विधा, वर्णः संस्थानञ्चेति तेन डिम्भा देरितिषष्ठ्यैव क्रियारूपयोस्तत्संबन्धित्वावगमात् किं स्वशब्दोपादानेनेत्याशङ्क्याह स्वयोरिति । उदाहरति पश्चादिति । शयनादुत्थितः अश्वः पश्चादङ्घ्री प्रसार्य त्रिकनतिवितनं अङ्गं उच्चैः द्राघयित्वा दीर्घीकृत्य आभुग्नकण्ठः सन् उरसि मुखमासज्य धूम्राः सटा विधूय साभिलाषादनवरतचलत्प्रोथतुण्डो मन्दं शब्दायमानःखुरेण क्ष्मां लिखति । अत्राङ्घ्रिप्रसरणसुदीर्घकीरणमुखवक्षोलगनानि संस्थानोक्तयः, धूलिधूम्रा इति वर्णस्योक्तिः । चलत्प्रोथतुण्ड इति संस्थानोक्तिः । शब्दायमानो विलिखति च पदद्वयेन क्रियाया उक्तिः ।

काव्यादर्शः

अन्यूनानरिक्तत्वेन वस्तुस्वभाववर्णन स्वभावोक्तिः। स्वभावश्च अर्थतादवस्थ्यम्। सा अनुभवैकगोचराऽवस्था यस्य तस्य भावस्तादवस्थ्यम्। अयमर्थः। कविप्रतिभया निर्विकल्पप्रत्यक्षकल्पया विषयीकृता वस्तुस्वभावा यत्र वर्ण्यन्ते सा स्वभावोक्तिरिति सान्वयेयं संज्ञा। तेन—

अलंकारकृतां येषां स्वभावोक्तिरलंकृतिः।
अलंकार्यतया तेषां किमन्यदवशिष्यते॥

इति यत् कैश्चिदुक्तं तन्निरस्तमेव। वस्तुनो हि सामान्यस्वभावो लौकिकोऽर्थोऽलंकार्यः कविप्रतिभासंरम्भविशेषस्तु लोकोत्तरोऽर्थोऽलंकरणमिति।

तथा चाह—

उच्यते वस्तुनस्तावद् द्वैरूप्यमिह विद्यते॥
तत्रैकमस्य सामान्यं यद्विकल्पैकगोचरः।

स एव सर्वशब्दानां विषयः परिकीर्तितः॥
अत एवाभिधेयं ते ध्यामलं बोधयन्त्यलम्॥

विशिष्टमस्य यद्रूपं तत्प्रत्यक्षस्य गोचरः।
स एव सत्कविगिरां गोचरः प्रतिभाभुवाम्॥

वस्तुमात्रानुवादस्तु पूरणैकफलो हि यः।
अर्थदोषः स दोषज्ञैरपुष्ट इति गीयते॥

स्वयोरिति। स्वकीययोः क्रियारूपयोः क्रियाव्यापारः। संस्थानं स्वाभाविकं रूपम्॥

'पश्चाद्' इति। 'द्राघयित्वा दीर्घीकृत्य। प्रोथोऽश्वस्य मुखाग्रम्। तुण्डं मुखम्।' अत्र क्रिया 'धूलिधूम्ना' इति वर्ण्यस्योक्तिः, 'चलत्प्रोथतुण्डः' इति संस्थानस्योक्तिः, 'शब्दायमानो विलिखति' इति क्रिययोरुक्तिः।

स्वभावश्च स्थानकादिरपि यथा—

स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम्।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम्॥

आदि-ग्रहणाद् वेषादि यथा—

वल्लीवल्कपिनद्धधूसरशिराः स्कन्धे दधद्दण्डकम् इत्यादौ।

## विवेकः

स्वभावोक्तिरिति—वस्तुस्वभावसङ्गत्या विरोधानन्तरमस्य लक्षणम्। डिम्भो बालः। बालादिवस्तुस्वभाववर्णनमात्रं नालङ्कारः सर्वस्मिन्नेव काव्ये तस्य विद्यमानत्वादित्याह स्वयोरित्यादि। शरीरावयवसन्निवेशः संस्थानम्। तेन बालादेः क्रियास्वरूपसंस्थानानां सूक्ष्मतरत्वेन लौकिकविकल्पविषयाणां कविप्रतिभामात्रप्रकाशनीयानां यदन्यातिरिक्तवर्णनाऽऽत्मिका जातिः सा स्वभावोक्तिरलङ्कार इति। तत्र बालविषया यथा—(रु. का. अ. ७/३२) धूलिधूसरतनवो राज्यस्थितिरचनकल्पनैकनृपाः। कृतमुखवाद्यविकाराः क्रीड़न्ति सुनिर्भरं डिम्भाः॥ मुग्ध युवतीविषया यथा—(रु. का. अ. ७/३३) हरति रुचिरं गाढ़ाश्लेषे यदङ्कमाकुला स्थगयति तथा यत्पाणिभ्यां मुखं परिचुम्बने। यदपि बहुशः पृष्टा किञ्चिद्ब्रवीत्यपरिस्फुटं रमयतितरां तेनैवासौ मनोऽभिनवा वधूः॥ तिर्यग्विषया यथा पश्चादङ्घ्री इत्यादि—द्राघयित्वा दीर्घीकृत्य 'प्रियस्थिरे'त्यादिना (पा. ६/४/१५७) द्राघादेशः। आसज्य अवलम्ब्य, स्कन्धकेशः सटा, प्रोथोऽश्वस्य मुखाग्रं, तुण्डं मुखम्। यथेदं सुप्तोत्थितस्याश्वस्य संस्थानं न तथाऽन्यस्यापीति सुप्तोत्थिताश्वस्वरूपभणनादित्यं स्वभावोक्तिः।

## दीपिका

स्वशब्दः क्रियारूपशब्दाभ्यां प्रत्येकमन्वीयत इत्यभिप्रेत्याह स्वयोरित्यादि।

वर्णो वर्णनम्। पश्चादित्यादि तुरङ्गमक्रियावर्णनम्। त्रिकं पृष्ठवंशाधरास्थिग्रन्थः। इयञ्चोदाहृतिर्डिम्भादेरित्यतद्गुणसंविज्ञानबहुव्रीतिसूचनपरेति नाशङ्कनीयम्। किन्तर्हि प्रसिद्धिवशादेव धूलिधूसरेत्यादिडिम्भक्रियास्वरूपवर्णनदर्शनात्, वर्णनस्वभावोक्तिर्यथा 'प्रथममरुणच्छाय' इत्यादि।

संस्थानस्वभावोक्तिर्यथा—

**"पृष्ठेषु शङ्खशकलच्छविषुच्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः।**

**गोरचनाहरितबभ्रुबर्हिः पलाशमामेदते कुमुदमम्भसि पल्वलस्य॥"**

## दर्पणः

स्वभावोक्त्यलंकारः। त्रैकं [त्रिकं] पृष्ठवंशाधारास्थिग्रन्थिः। [पृष्ठवंशाधरे त्रिकम्] इत्यमरः। शरा श्रीरागतो.....मकेसरलापः।

अत्र क्रियास्वभावोक्तिः। वर्णस्वभावोक्तिर्यथा-प्रथमवरुणच्छायस्तारस्ततो विषदप्रभ' इत्यादि। [एवं संस्थानस्वभावोक्तिरपि ज्ञेया।]

## साहित्यचूडामणिः

स्वभावोक्तिरिति। स्वयोः क्रियारूपयोर्वर्णनमुक्तिः। रूपं च द्विधा वर्णः संस्थानं च।

पश्चादिति। अत्र सुप्तोत्थिस्याश्वस्य तिर्यग्जातेः स्वभावः। क्रियारूपो यथावद् वर्ण्यते। वर्णो यथा 'तुण्डैराताम्रकुटिलैरि'त्यादि। यथावा ममैव—उत्तप्तहाटककडारादरगण्डैः नार्भकस्तिर्यबुरन्तत इतस्थपुटेषु

तथैरदृते च तव गतिरिति । तैर्विनैव भूयो यदा तु उचिततरमिति ? । संस्थानस्य यथा—'स दक्षिणापाङ्गनिविष्ट-मुष्टिमि'त्यादि ।

**मुग्धाङ्गनार्भकस्तिर्यञ्चि च पात्राणि चाक्षयः ।**

इति स्थित्या डिम्भादेरित्युक्तम् । यथा—

**आक्रोशन्नाह्वयन्नन्यानाधावन् मण्डलं रुदन् ।**
**गाः कालयति दण्डेन डिम्भः सस्यावतारिणीः ॥ इति ।**

यत्-सूत्रं-सूक्ष्मवस्तुस्वभावस्य यथावद् वर्णनं स्वभावोक्तिः (अलङ्कारसू० ७९) इति । न खलु स्वभाव-मात्रमुक्तमलङ्कारः, अतिप्रसङ्गाद् येन सूक्ष्मग्रहणम् । सूक्ष्मत्वं च कवयितृमात्रस्य दुश्शकत्वम् । यथावत्त्वं चान्यूना-नातिरिक्तत्वम् । डिम्भादिपदार्थोनिष्ठोऽपि स्वभावः कविनिर्मित इव यथावभासते तथा वर्णनं स्वभावोक्तिरिति । नचेयं भाविकम्, तत्र हि भूतभविष्यतोरपि प्रत्यक्षीकाराय लोकोत्तरस्य वस्तुनो वर्णनमनुवर्णयिष्यते । प्रतीतिश्च तस्य परिस्फुटो ताटस्थ्यशालिनी च । अत्र तु लौकिकस्य वस्तुनो वर्णनीयता प्रतीतिश्च सूक्ष्मधर्मत्वादपरिस्फुटा साधारण्यशालिनी च क्वचिदुभयसमावेशोऽपि पूर्ववत् सम्भवति । इयं चाक्षिप्ता समाहिता च व्यक्तिविवेके । यथा—

**अर्थस्वभावस्योक्तिर्या सालङ्कारतया मता ।**
**यतः साक्षादिवाभान्ति तत्रार्थाः प्रतिभार्पिताः ॥**

**कथं तर्हि स्वभावोक्तेरलङ्कारत्वमिष्यते ।**
**न हि स्वभावमात्रोक्तौ विशेषः कश्चनानयोः ॥**

**उच्यते वस्तुनस्तावद् द्वैरूप्यमिह विद्यते ।**
**तत्रैकमस्य सामान्यं यद् विकल्पैकगोचरः ॥**

**स एव सर्वशब्दानां विषयः परिकीर्तितः ।**
**अत एवाभिधेयं ते सामान्यं बोधयन्त्यलम् ॥**

**विशिष्टमस्या यद् रूपं तत् प्रत्यक्षस्य गोचरः ।**
**स एव सत्कविगिरां गोचरः प्रतिभाभुवाम् ॥**

**रसानुगुणशब्दार्थचिन्तास्तिमित-चेतसः ।**
**क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ॥**

**सा हि चक्षुर्भगवतस्तृतीयमित गीयते ।**
**येन साक्षात्करोत्येष भावांस्त्रैलोक्यवर्तिनः ॥ इति ॥ २५ ॥**

## सम्प्रदायप्रकाशिनी

स्वभावोक्तिस्त्विति। डिम्भग्रहणं स्वाभाविकक्रियारूपाप्राचुर्यात्। आदिशब्दात् सदृशवस्त्वन्तरपरिग्रहः। स्वशब्दात् क्रियारूपयोरनारोपितत्वम्। अतः स्वभावोक्तिरित्यन्वर्थता।

तदेतद्व्याचष्टे—स्वयोस्तदेकाश्रययोरिति। रूपं द्विविधमित्याह—वर्णः संस्थानं चेति। संस्थानमवयवसन्निवेशः। क्रियावर्णसंस्थानानां व्यस्तत्वे त्रयः, क्रियावर्णयोः, क्रियासंस्थानयोः, वर्णसंस्थानयोस्त्रयाणां च समस्तत्वेन चत्वार इति सप्तास्य भेदाः। डिम्भतिर्यक्स्थावराविकृतवस्त्वन्तरगतत्वेन पुनरानन्त्यम्। प्रायेण तिरश्चामनारोपितक्रियारूपप्राचुर्यमित्यभिप्रायेणोदाहरति—पश्चादङ्घ्री इति। प्रोथो नासाप्रदेशः। अत्र संस्थानक्रिये। क्रिया यथा मम—

उत्प्लुत्याङ्घ्रियुगेन दन्तयुगलीमाक्रम्य तर्षार्दितः
श्वासैर्दीर्घतरैः शिरः करिपतेर्निश्चूष्य निर्दारितम्।

दृप्तः सन्नवरुह्य गह्वरगतः पुच्छाग्रमाच्छोटय-
न्नास्ते शोणितपङ्किलानतनखं मुष्टिं लिहानो हरिः॥

डिम्भस्य क्रिया यथा—

अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुड्मलाग्रम्।
वदनसरसिजं शिशोः स्मरामि स्खलदसमञ्जसमञ्जु जल्पितं ते॥

एवं स्थावरादिषु यथा ममैव—

हीयमानपरिणाहदुर्बलं पिण्डितं रविमणेः सिरामुखे।
क्षुद्रबुद्बुदवदर्चिराकुलं सस्वनस्फुटनतो लयं ययौ॥

अत्र क्रियासंस्थाने। तावेवाविकृते चेतने यथा—

स्रस्तोत्तरीयमयथायथकीर्णगात्रं दोर्मूललङ्घिकुचमण्डलमायताक्ष्याः।
अंसापवृत्तमणिकुण्डलमध्वखेदादङ्गेष्वशेरत लतागहने पतीनाम्॥

क्रियावर्णसंस्थानानि तिरश्चि यथा—

क्षीरक्षालितशङ्खशुक्तिधवला निर्मोकविस्रंसनाद्
भोगस्योपचयेन वामनमिवायामं सदा बिभ्रती।

धारादुर्गमकोटरे विटपिनः स्कन्धे शयाना शनैः
पातुं प्रक्रमते पयोदमरुतो गर्भालसा पन्नगी॥

एव भेदान्तरमभ्यूह्यम्। क्वचित् पुनः स्वभावोक्त्या स्वभावोक्त्यन्तरं व्यज्यमानमत्यन्तवैचित्र्याय। यथा—

**स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।**

**वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥**

अत्रोदबिन्दुक्रियाविषयया समाधिसंस्थानविषया स्वभावोक्तिरभिव्यज्यते । तथाहि—उदबिन्दूनां क्षणं स्थित्या पक्ष्मणां संहतत्वं ताडनेनाधरयोः संवृतत्वं, चूर्णितत्वेन पयोधरोत्सेधहेतुरुरसोऽग्रतो विष्टब्धता, स्खलनेन वलीनां विश्लेषः, प्रपत्त्या नाभेर्विवृतत्वम् । अङ्गादङ्गमभिव्याप्नुवत्स्वपि पयोदबिन्दुषु निरालम्बसमाधिना स्थाणुवदवर्तिष्ट देवीति यावत् । अत्र स्वक्रियारूपेति स्वशब्दार्थमचेतयमानेन सान्धिविग्रहिकेण

**"धूलीधूसरतनवो राज्यस्थितिरचनकल्पितैकनृपाः ।**

**कृतमुखवाद्यविनोदाः क्रीडन्ति सुनिर्भरं डिम्भाः ॥"**

इत्येतत् समारोपितक्रियारूपतया प्रत्युदाहरणमेवोदाहरणत्वेन यद् दर्शितं, तदुपहासमपि नार्हति ।

**मधुमती**

तदेकश्रययोः डिम्भाद्याश्रययोः । रूपपदं व्याचष्टे—रूपमिति । तथाच—डिम्भाद्याश्रितजातिनियतधर्माभिधानं इति पर्यवसितार्थः । एवं—यस्य स्वाभाविकधर्माभिधाने चमत्कारः, तत् अलङ्कारः । अत एव—

**'गोरपत्यं बलीवर्दः तृणान्यत्ति मुखेन तु ।**

**मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम् ॥'**

इत्यादौ नायमलङ्कारः । सर्वथा चमत्काराभावात् । अत एव—'घासग्रासाभिलाषात्' इत्युदाहृते केवलं तत्तद्व्यापारोपादाने न चमत्कारानुभवः इति । इति स्वभावोक्तिः ।

**विस्तारिका**

स्वभावोक्तिरिति—रूपपदं व्याचष्टे—स्वरूपमित्यादि । तथा च डिम्भादिमात्रवृत्तिजातिनियतधर्माभिधानमित्यर्थः । एवं च तादृशस्वभाविकपदीययद्धर्माभिधाने चमत्कारोदयस्तदभिधालङ्कारः । अत एव 'गोरपत्यम्' इत्यादौ नातिव्याप्तिः, तत्र चमत्काराभावात् । अत एव "घासग्रासाभिलाषा" इत्पादावुदाहृते तत्तद्व्यापारोपादानेन चमत्कारानुभवः ।

**सारबोधिनी**

स्वभावोक्तिरिति । रूपशब्देन वर्णावयवसंनिवेशश्चोभयं गृह्यत इत्याह रूपमिति । यादृशस्वाभाविकधर्माभिधाने चमत्कारस्तादृश एवालङ्कारस्तेन "गोरपत्यं बलीवर्दो धासमत्ति मुखे न स" इत्यादेर्निरासः ।

**काव्यप्रदीपः**

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥ २५ ॥**

स्वत्वं च स्वमात्राश्रितत्वम्। न तु स्वाश्रितत्वमात्रम्। अतो न साधारणधर्मवर्णनेऽतिव्याप्तिः। रूपशब्देन वर्णः संस्थानं चोच्यते। उदाहरणम्—

'पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटा धूलिधूम्रा विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरंगो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण॥'

अत्राश्वमात्रगतयोः क्रियासंस्थानयोर्वर्णनम्।

### काव्यप्रकाशखण्डनम्

स्वभावोक्तिर्डि (क्तिस्तु डि) म्भादेः स्वक्रियारूपवर्णनम्॥ (का. १११, उ०)

रूपशब्देन वर्णः अवयवसंनिवेशश्च उभयं ग्राह्यम्। तथा च यादृशः स्वभाविकधर्माभिधाने चमत्कारः तादृश एवालङ्कारः। यथा—

अम्बाकरावलम्बादविलम्बाहुःखितस्खलच्चरणम्।
क्वणितमणिमञ्जुलरसं (रसनं?) मुकुलितदशनं हरिं वन्दे॥

### आदर्शः

स्वभावोक्त्यलङ्कारमाह—स्वभावेति। डिम्भः शिशुः। आदिग्रहणादकृत्रिमक्रियारूपवन्मात्रपशुपक्ष्यादिपरिग्रहः। स्वपदमत्र स्वीयपरमिति व्याचष्टे—स्वयोरिति, स्वीययोरित्यर्थः। तस्यापि स्वीयमात्रयोरित्यर्थ इत्याह—तदेकेति, तन्मात्राश्रययोरित्यर्थः। रूपपदार्थ व्याचष्टे—रूपमिति। आदिपदग्राह्यस्य स्वक्रियावर्णमुदाहरति—पश्चादिति। प्रातः शयनादुत्थिस्तुरङ्ग खुरेण क्ष्मां विलिखति। किं कृत्वा? पश्चादङ्घ्री पश्चात्पादद्वयं त्रिकञ्च कटिदेशमतिविस्तृतं यथा स्यात्तथा प्रसार्येत्यर्थः। 'पृष्ठवंशाधरे त्रिकम्' इति कोषः। त्रिकमित्यत्र चार्थः पूरणीयः। तथा अङ्गम् उच्चैरतिशयं द्राघयित्वा दीर्घीकृत्य आभुग्नकण्ठः सन् उरसि मुखमासज्य। प्रोयतुण्डौ आष्ठाधरौ। ईदृशी क्रियाऽश्वस्यैव। वर्णे तूदाहरति दण्डी। यथा—

तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः।
त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः॥ इति। (२/१०)

संस्थाने तूत्तररामचरिते यज्ञीयाश्वं दृष्ट्वा लवस्योक्तिर्यथा—

पश्चात् पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव।

शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
आस्तामेतद् व्रजति स पशुर्दूरमेह्येहि यामः ॥

इत्यत्र विपुलपुच्छखुरचतुष्टयदीर्घग्रीवाः संस्थानानि । डिम्भक्रियावर्णने तु—

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥ इति ।

## सुधासागरः

स्वयोरित्यादि । स्वत्वं च स्वमात्राश्रितत्वं न तु श्रितत्वमात्रम्, अतो न साधारणधर्मवर्णनेऽतिव्याप्तिः । रूपशब्देन वर्णः संस्थानं चोच्यते ।

शयनादुत्थितस्तुरङ्गः पश्चादङ्घ्री प्रसार्य पश्चिमपादप्रसरणं कृत्वा अतिविततं वितीर्णं त्रिकं पृष्ठवंशं द्राघयित्वा दीर्घीकृत्य अङ्गमुच्चैरासज्य शरीरं वक्रभावेनोच्चं कृत्वा आ समन्ताद् भावेन भुग्नः कण्ठो यस्य तादृशः सन् मुखमुरसि आसज्येत्यस्यात्राप्यन्वयः, संयोज्य धूलिधूम्रा सटाः स्कन्धलोमानि विधूय विशेषेण कम्पयित्वा घासग्रासाभिलाषादनवरतं चलन् चञ्चलः प्रोथस्य मुखाग्रस्य तुण्डः ओष्ठाग्रभागो यस्य तादृशो मन्दं शब्दायमानः शनैः हेषां कुर्वाणः सन् खुरेणाग्रपादशफेन क्ष्मां भूमिं विलिखति बलेनोत्कर्षतीत्यर्थः । स्रग्धरा छन्दः । 'म्रभ्नयैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् । अत्राश्वमात्रगतयोः क्रियासंस्थानयोर्वर्णनम् ।

**(सू० १६९) व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा।**

व्याजरूपा व्याजेन वा स्तुतिः। क्रमेणोदाहरणम्—

**हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो**

**लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते।**

**यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः**

**प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥ ४९३ ॥**

---

**सङ्केतः**

मुखे निन्देति। श्रौती निन्दा, स्तुतिस्तु निर्वाहगा इत्येको भेदः। एतद्वैपरीत्ये तु द्वितीयो भेदः इत्याह—व्याजरूपेति। व्याजरूपा निन्दाद्वारिका। व्याजेनेति। वस्तुवृत्त्या निन्दैवेत्यर्थः।

हित्वेति। लज्जायाः मज्जनं ब्रुडनम्। निर्लज्जत्वमित्यर्थः। हे नृप ! त्वद्विधः निर्दाक्षिण्यः, लक्ष्मीतुल्यं निर्लज्जं च किमपि वस्तुनास्तीति भावः।

**बालचित्तानुरञ्जनी**

व्याजस्तुत्यलङ्कारं लक्षयति व्याजस्तुतिरिति। मुखे प्रारंभे निंदा श्रूयमाणनिन्देत्यर्थः। रूढिः अन्यथा स्तुतिर्वेति तात्पर्यम्। आरंभे स्तुतिः श्रूयमाणा स्तुतिरूढिः। अन्यथा निन्दायामेव तात्पर्यमित्यर्थः। यत्र स्तुतिरभि-धीयमाना प्रमाणान्तरात् बाधितस्वरूपा निन्दायां पर्यवस्यति तत्र व्याजरूपा स्तुतिः। यत्र तु निन्दा अभिधीयमाना पूर्ववत् बाधितस्वरूपा स्तुतौ पर्यवस्यति तत्र व्याजनिन्दा।

**काव्यादर्शः**

मुखे निन्देति श्रूयमाणा निन्दा। रूढि तु अन्यथा स्तुतौ वाक्यतात्पर्यमिति एका। स्तुतिर्वेति। श्रूयमाणा स्तुतिः। रूढिस्तु अन्यथा निन्दायां पर्यवसानमिति द्वितीया। एतदेवाह—व्याजरूपेति। छद्मरूपा निन्दाद्वारिके-त्यर्थः। व्याजेनेति। परमार्थेन तु निन्दैवेत्यर्थः।

'हित्वा' इति। कोऽपि राजानमाह। 'भवद्विधः कोऽपि निर्दाक्षिण्यो नास्ति।' लक्ष्मीसदृशं तु निर्लज्जं किमपि नास्तीत्यर्थः। लज्जाया मज्जनं ब्रुडनम् ॥

**विवेकः**

व्याजस्तुतिरिति स्वभाववैपरीत्यादस्य कथनम्। व्याजरूपेत्यादि समासद्वयेनैतदन्वर्थं नाम। तेन यत्र निन्दाऽभिधीयमानाऽपि प्रमाणान्तराद्बाधितस्वरूपा स्तुतौ पर्यवस्यति तत्र व्याजेन निन्दामुखेन निन्दारूपा स्तुतिरि-

त्यनुगमेन तावदेका व्याजस्तुतिः। अत्रापि स्तुतिः शब्देन प्रतिपाद्यमाना पूर्ववद्बाधितरूपा निन्दायां पर्यवसिता भवति सा द्वितीया व्याजस्तुतिरसत्या व्याजरूपा स्तुतिरिति कृत्वा। निन्दास्तुतिरूपत्वस्य विच्छित्तिविशेषस्य स्वभावादप्रस्तुतप्रशंसातो भेदः। तत्र मुखे निन्दा स्तुतिपर्यवसिता यथा हित्वेत्यादि। रमां लक्ष्मीमन्तरेण लज्जावर्जनमन्यत्र न सन्दृश्यते, अपि तु तत्रैव विश्रान्तमित्यर्थः। तदिह निरुपरोधत्वं वर्णनीयस्य राज्ञो निर्लज्जत्वं लक्ष्म्याऽभिधीयमानमित्थं मुखे निन्दा लोकोत्तरदातृत्वे लक्ष्म्यैकनिवासत्वे च वर्णनीयस्य स्तुतौ पर्यवस्यति। 'किं वृत्तान्तैः परगृहगतैः किं तु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः। गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः॥ इत्यत्र प्रक्रान्ताऽपिस्तुतिपर्यवसायिनी निन्दा 'हन्त कीर्ति'रिति भणित्योन्मूलितेति न प्ररोहं गमितेति क्लिष्टमेतदुदाहरणम्' (ध्व. आ. लो. ४४ पृ.; अ. स. १४४ पृ.)। अत एव चाटुपर्यवसायित्वादस्य प्रेयोऽलङ्कारगर्भता।

### दीपिका

व्याजरूपेति द्वितीयपक्षे सङ्गमनीयम्। शेषस्तु प्रथमपक्षे। लज्जावर्ज्जनं स्वातन्त्र्येण परिहारः।

### दर्पणः

व्याजस्तुत्यलङ्कारः। व्याजस्तुतिः अन्यथा हृदिर्मुखे [यदि मुखे] निन्दायाः [निन्दा] [तस्याः] स्तुतौ पर्यवसानम्। एवं व्याजरूपेति व्याख्यानम्।

### साहित्यचूडामणिः

व्याजस्तुतिरिति। रूढिः पार्यन्तिकी प्रतिष्ठा तस्या अन्यथात्वं व्यत्यासः। यत् सूत्रं "स्तुतिनिन्दाभ्यां निन्दास्तुत्योर्गम्यत्वे व्याजस्तुतिः" (अलङ्कार सू० ३८) इति। यच्चाहुः—

**यत्र वाच्यतया निन्दा स्तुतिर्व्यङ्ग्यतयोच्यते।**
**विपर्ययो वा विच्छित्त्यै व्याजस्तुतिरसौ स्मृता॥ इति।**

यत्र स्तुतिरभिधीयमाना प्रमाणान्तरेण बाधितस्वरूपा निन्दायां पर्यवस्यति तत्र व्याजरूपा स्तुतिः। यत्र तु निन्दाशब्देन प्रतिपाद्यमाना पुर्ववद् बाधितस्वरूपा स्तुतितया पर्यवस्यति तत्र व्याजेन निन्दामुखेन स्तुतिः।

स्तुतिनिन्दाद्वारकविच्छित्त्यन्तरणादियमप्रस्तुतप्रशंसाया भिद्यते।

क्रमेणेति। कारिकापेक्षया। व्याजरूपेत्यादि वृत्त्युक्तः क्रमो न घटते तदपेक्षायां व्युत्क्रमत्वात्।

हित्वेति। अनुरोधबन्ध्यमनसो निर्दाक्षिण्याः तेषां मौलिरग्रणीः। लज्जाया मज्जनं विनाशः। अत्र प्रमुखे निन्दा पर्यन्ते स्तुतिर्व्यङ्ग्येति व्याजेन स्तुतिः।

### सम्प्रदायप्रकाशिनी

व्याजस्तुतिरिति। मुखे आपाततः प्रतीतौ निन्दा अन्यथा रूढिः प्रतीतिरित्येका। मुखे स्तुतिरन्यथा रूढिरित्यन्या।

इत्थं च सति व्याजस्तुतिशब्दार्थो द्विधा भवतीत्याह—व्याजरूपा वेति। स्तुतिशब्दः प्रत्येकमभिसम्बध्यते। यदा मुखे स्तुतिरन्यथा रूढिः तदा व्याजरूपा। अन्यदा व्याजेन। कर्मधारयस्य प्राक्प्रतीतिकत्वात् शब्दापेक्षया व्याजरूपामादौ निर्दिश्य लक्ष्यपदे स्तुतिपर्यवसितायाः प्राक्प्रतीतिकत्वादर्थापेक्षया सूत्रोद्देशक्रमेणोदाजिहीर्षुराह—क्रमेणेति।

हित्वा त्वामिति। मन्य इति वितर्के। एत्य श्रितायाः स्वतः समधिगम्य संश्रितायाः श्रियो मणिकनकादिना मुखेन यस्त्वं त्यागं तनुषे तं त्वां हित्वोपरोधवन्ध्यमनसां निरनुरोधचेतसां मौलिभूतः परो नास्ति। तथा त्यागकृतमवमाननं प्राप्यापि यस्यास्त्वय्येव स्थितिस्तां रमामन्तरेणान्यस्या लज्जाया मज्जनं निर्लज्जता न संदृश्यते। अत्रेत्थं वाक्यद्वयेऽपि मुखे निन्दा। रूढौ महावदान्यत्वगुणदाश्रयानुरागित्वलक्षणायां स्तुतौ पर्यवसानम्। इयं व्याजेन।

## मधुमती

व्याजस्तुतिरिति। रूढिः पर्यवसानम्। तथाच निन्दामुखेन स्तुतिपर्यवसानम्। स्तुतिमुखेन निन्दापर्यवसानं इत्यर्थः। पदव्युत्पत्तिं दर्शयन्नेव उभयसाधारणं रूपमाह—व्याजरूपेति। तथाच उपक्रान्तविपरीतपर्यवसानामित्यर्थः।

हित्वेति। त्वां हित्वा उपरोधबन्ध्यमनसां निरनुरोधानां अन्यः न मौलिः, लज्जामज्जनं निर्लज्जत्वं च रमामन्तरेण लक्ष्मीं विना अन्यत्र न दृश्यते इत्यन्वयः। उभयस्य उभयरूपत्वे हेतुमाह—यस्त्यागमिति। तथाच—आश्रितपरित्यागेन तव निरनुरोधत्वम्, त्यागानन्तरमपि त्वंदाश्रयणेन लक्ष्म्याः निर्लज्जत्वं चेत्यर्थः।

## विस्तारिका

व्याजस्तुतिरिति। मुखे प्रथमतः। रूढिः पर्यवसानम्।

क्रमेणेति। कारिकोक्तक्रमेणेत्यर्थः।

हित्वेति। त्वां हित्वा निरुपरोधानां मध्येऽन्यो न श्रेष्ठः। निर्लज्जत्वं लक्ष्मीमन्तरेण नान्यत्र दृश्यत इत्यन्वयः। क्रमेणोभयत्र हेतुमाह—यस्त्यागमित्यादि। मुखशतेः प्रकारशतैरित्यर्थः।

## सारबोधिनी

मुखे प्रथमतः। रूढिः पर्यवसानम्। यत्र मुखे निन्दा तत्र स्तुतौ पर्यवसानं यत्र मुखे स्तुतिस्तत्र निन्दायां पर्यवसानमित्यर्थः।

## काव्यप्रदीपः

**व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा।**

मुखे निन्दावगतौ यस्तुतौ पर्यवसानं स्तुतेर्वा मुखेऽवगमो निन्दायां पर्यवसानं तद्व्याजस्तुतिवाच्यमित्यर्थः। कथमुभयोरनेनाभिधानमिति चेत्, आद्यस्य व्याजेन स्तुतिरिति ग्रहणात् अन्त्यस्य तु व्याजरूपा स्तुतिरिति। तत्राद्या यथा—

'हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो
लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थिति॥'

स्पष्टम्।

## काव्यप्रकाशखण्डनम्

व्याजस्तुतिर्मुखे निन्दास्तुतिर्वारूढिरन्यथा। (का. ११२, पू०)

मुखे प्रथमतः रूढिः, पर्यवसाने व्याजेन स्तुतिर्व्याजरूपा स्तुतिर्वा। यथा—

दातारं कृपणं मन्ये मृतोऽप्यर्थ न मुञ्चति।
अदाता पुरुषस्त्यागी सर्व संत्यज्य गच्छति॥

## आदर्शः

व्याजस्तुत्यलङ्कारमाह—व्याजेति। मुखे आपाततो निन्दा स्तुतिर्वा। 'अन्यथा' तद्विपरीता तु तयो रूढिर्व्यञ्जनया पर्याप्तिरित्यर्थः। ननु निन्दामुखेन स्तुतिर्भवत्येव व्याजस्तुतिः, स्तुतिमुखेन निन्दा तु व्याजनिन्दैव सा कथं व्याजस्तुतिरित्यतः संज्ञाया द्विविधं योगार्थमाह—व्याजेनेति। यथासंख्यमिदमर्थद्वयम्।

हित्वा त्वामिति। अहं मन्ये त्वां राजानं हित्वा परो जन उपरोधबन्ध्यमनसां मौलिः प्रधानं नास्ति त्वमेव निरुपरोधतमः। तथा लज्जाया मज्जनं विलयो निर्लज्जत्वं रमां लक्ष्मीमन्तरेण न अन्यत्र संदृश्यते सैव निर्लज्जतमेत्यर्थः। यस्त्वं मुखशतैर्द्वारशतैरेत्याऽऽश्रितायाः श्रियस्त्यागमर्थिभ्यस्तनुषेतरां तथा त्यागकृतावमाननं प्राप्यापि यस्याः श्रियस्त्वय्येव स्थितिः, सततवर्द्धमानश्रीकत्वात्। अत्र निन्दामुखेन दातृत्वश्रीमत्त्वव्यञ्जनया स्तुतिः।

## सुधासागरः

मुखे निन्दावगतौ यत् स्तुतौ पर्यवसानम्, स्तुतेर्वा मुखेऽवगमे निन्दायां पर्यवसानं तद् व्याजस्तुतिवाच्यमित्यर्थः। कथमुभयोरनेनाभिधानमिति चेत्, आद्यस्य व्याजेन स्तुतिरिति ग्रहणात्। अन्त्यस्य तु व्याजरूपा स्तुतिरिति।

तत्राद्या यथा—-हित्वेति। हे राज़न् त्वामन्तरेण त्वां विना उपरोधवन्ध्यमनसां निरनुरोधानां मौलिः शिरोमणिः परोऽन्यो नास्ति, लज्जाव र्जनं निर्लज्जत्वं च रमामन्तरेण लक्ष्मीं विनाऽन्यत्र न संदृश्यते इति मन्ये। हेतुमाह यस्त्वं मुखशतैर्बहुमुखैरनेकोपायैरिति यावत्, एत्य प्राप्याश्रितायाः सादरं स्थापितायाः श्रियो लक्ष्म्यास्त्यागं दानं तनुतेतरामतिशयेन विस्तारयसि, किञ्च त्यागकृतावमाननं प्राप्यापि यस्याः रमायास्त्वय्येवावस्थितिरित्यर्थः। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तम्।

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोपि कृपया साहायकं यन्मरोः ॥ ४९४ ॥

---

सङ्केतः

हे ! हेलेति । अत्र विपरीतलक्षणया वाच्याद्व्यत्यस्ता प्रतीतिः । अत्र अप्रस्तुतप्रशंसासद्भावेऽपि न सङ्करत्वम् । व्याजस्तुत्यप्रस्तुतप्रशंसयोः उत्कटतया भेदेन प्रतिभासात् । उत्कटताभेदे हि स स्यात् । तर्हि संसृष्टिरिति चेन्न । अन्योन्योपकार्योपकारकत्वेन मिथो नैरपेक्ष्याभावात् । तथाच मणियुक्तहारवत् एक एवायं प्रकृतोऽलङ्कारः इति भावः । इति व्याजस्तुतिः ।

बालचित्तानुरञ्जनी

तत्र व्याजनिन्दामुदाहरति हित्वेति । उपरोधेन दाक्षिण्येनावसंबद्धं मानो येषां तेषां मौलिः अग्रणीः त्वां हित्वा अपरः अन्यः राजन् त्वद्विधः कोऽपि निर्दाक्षिण्यो नास्तीत्यर्थः । लज्जावर्ज्जनमन्तरेणात्र न दृश्यते । लक्ष्मी-सदृशं निर्लज्जं किमपि नास्तीत्यर्थः । यो भवान् मुखतैरेत्या श्रितायाः श्रियः त्यागं तनुत्वं त्यागकृतावमाननं प्राप्यापि यस्या रमायाः स्थितिरस्त्येव । व्याजस्तुतिमुदाहरति । हे हेलाजितबोधिसत्व हे तोयधे वचसां विस्तारैः किं परहिताधाने गृहीतव्रतः त्वत्सदृशः परो नास्ति यत् यस्मात् कारणात् तृष्यतः पान्थस्य जनस्य सलिलप्रदानरूपोप-कारघटना तत्र वैमुख्यमनादरः तेन जनस्य दुःकीर्तिपुञ्जस्य मरुस्थलस्य प्रोद्बृंहतः साहायकं करोषि क्षारोदकत्वात् ।

काव्यादर्शः

'हे हेले' ति । अत्र विपरीतलक्षणया वाच्याद् विपरीता प्रतीतिरिति निन्दायां पर्यवसानम् ।

किं वृत्तान्तैः परगृहकृतैः किं तु नाहं समर्थ—
स्तूर्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या—
मुन्मत्तेव भ्रमति भवतो बल्लभा हन्त कीर्तिः ॥

—अत्र प्रक्रान्तापि स्तुतिपर्यवसिता निन्दा 'हन्त कीर्तिः' इति भणित्वा उन्मूलिता न प्ररोहं गमितेति श्लिष्टमेतद् उदाहरणम् । यत्तु निन्दापूर्विकायां स्तुतौ तेनापि उदाहृतं—

**आसीन्नाथ पितामही तव मही माता ततोऽनन्तरं**
**जाता संप्रति साम्बुराशिरशना भार्या कुलोद्भूतये।**
**पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा**
**युक्तं नाम समग्रनीतिविदुषां तदु [? किं भू] पतीनां कुले॥**

—इत्यादि तद् ग्राम्यं प्रतिभाति, अत्यन्तासभ्यस्मृतिहेतुत्वात्। का चानेन स्तुतिः कृता 'त्वं वंशक्रमेण राजा' इति कियदिदम्॥ [२६॥]

### विवेकः

हे हेलात्यादि—अत्र विपरीतलक्षणया वाच्यवैपरीत्यप्रतीतिः।

### दीपिका

बोधिसत्त्वो बुद्धः। आपाततः स्तुतिरुपक्रान्ताऽपि मरुसाधारण्येन विकलजनसम्भाव्यतारूपायां निन्दायां पर्यवस्यति।

### दर्पणः

द्वितीये पक्षे सङ्गमयति व्याजेनेति। प्रथमे। मौनि श्रेष्ठ [मौलिः श्रेष्ठः] मज्जनमभावः[वर्जनसभावः] बोधिसत्वः बुद्धः। एवं गुणादि।

### साहित्यचूडामणिः

हे इति। तृष्यतः पान्थजनस्य या सलिलप्रदानरूपोपकारघटना तत्र वैमुख्यमनादरः तेन लब्धस्य दुष्कीर्तिपुञ्जस्य प्रोद्वहने मोररध्वनः साहायकदानं क्षारोदकत्वात्। अत्र व्याजरूपा स्तुतिः।

### सम्प्रदायप्रकाशिनी

हे हेलेति। बोधिसत्त्वो जीमूतवाहनः। अत्र मरोरुपकरोषीति स्तुतिर्निन्दां गमयति। इयं व्याजरूपा।

### मधुमती

हे ! हेलेति। हेलाजितबोधिसत्व = परमकारुणिक ! इत्यर्थः। बुद्धस्य परमकारुणिकत्वादिति भावः। इति व्याजस्तुतिः।

### विस्तारिका

हे हेलेति। बोधिसत्त्वा बौद्धविशेषाः। ते चातिकारुणिकाः तेऽपि त्वया करुणया जिता इत्यर्थः।

### सारबोधिनी

हित्वेति। निर्लज्जत्वं च रमामन्तरेण नान्यत्र दृश्यत इत्यन्वयः। हे इति। बोधिसत्त्वात् बौद्धाः ते अतिकारुणिकास्तेऽपि त्वया जिता इत्यर्थः।

### काव्यप्रदीपः

**'हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे**
**नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।**
**तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-**
**भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः॥'**

अत्रोपकारवैमुख्ये पर्यवसानम्।

### आदर्शः

स्तुतिमुखेन निन्दामाह—हे हेलेति। बोधिसत्त्वं बुद्धिमत्प्राणी, हे हेलाजिततत्क, अतिबुद्धिमन्नित्यर्थः। हे तोयधे, वचसां विस्तरैः किं संक्षिप्तमेव ब्रवीमीत्यर्थः। परहितस्याऽऽधाने उत्पादने गृहीतव्रतः परा जनस्त्वत्सदृशा नास्ति त्वमेव तादृश इत्यर्थः। यद् यस्मात्तृष्यतां पान्थजनानाम् उपाकरघटनायां वैमुख्येन लब्धस्यायशोभारस्य प्रोद्वहनेन मरोर्निर्जलदेशस्य साहायकं सहायतां कृपया करोषि एकेनोह्यमानस्य भारस्य द्वितीयेनापि वहनात् सहायता।मरुणेव त्वयापि तृष्यतामुपकारो न क्रियते क्षारजलत्वादिति भावः। अत्र स्तुत्या परानुपकारकत्वेन निन्दापर्याप्तिः।

### सुधासागरः

अन्त्या यथा—हे हेलेति। छन्दः पूर्वोक्तमेव। हे हेलाजितबोधिसत्त्व, हेलयाऽनायासेन जिताः बोधिसत्त्वा बौद्धा येन तथाविध, परमकारुणिकेतियावत्, बौद्धानां दयाशीलत्वादिति भावः, हे तोयधे लवणाकर वचसां विस्तरैः किम्, परहिताधाने परोपकारकरणे त्वत्सदृशः परो द्वितीयो नास्ति, यद्यस्मात्करणात्तृष्यत्पान्थजनानां तृषार्त्ताध्वगानामुपकारघटनावैमुख्येन हितासम्पादनेन पिपासितप्रतिकल्पेतियावत् लब्धं यदयशस्तस्य यो भारो महदाधिक्यं तस्य प्रोद्वहने प्रकर्षेण निर्वाहणे मरोर्मरुदेशस्य साहाय्यकं करोषीत्यर्थः। अत्रोपकारवैमुख्ये पर्यवसानम्।

(सू० १७०) सा सहोक्तिः बलादेकं द्विवाचकम्।। ११२ ।।

एकार्थाभिधायकमपि सहार्थबलात् यत् उभयस्याप्यवगमकं सा सहोक्तिः ।

यथा

सह दिअहणिसाहिं दीहरा सासदण्डा

सह मणिवलयेहिं बाप्पधारा गलन्ति ।

तुह सुहअ विओए तीअ उव्विग्गिरीए

सह अ तणुलदाए दुब्बला जीविदासा ।। ४९५ ।।

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम् दिवसनिशादिगतं तु सहार्थसामर्थ्यात्प्रतिपद्यते ॥

---

सङ्केतः

उव्विग्गिरीए इति । उद्वेजनशीलायाः इत्यर्थः । सहोक्तौद्वयोरपि प्रकृतयोः अप्रकृतयोर्वा ग्रहणात् काल्पनिकं औपम्यम् । तत्र तृतीयान्तस्य गुणभावात् उपमानत्वम्, शेषस्य प्राधान्यात् उपमेयत्वम् । इयं मालया सहोक्तिः । केवलसहोक्तिस्तु—

'वसन्ते पल्लवैस्सार्धं रागोल्लासी जनो भवेत् ।'

इत्यादि । नियमेनम कार्यकारणनियमविपर्ययरूपाभेदाध्यवसायरूपातिशयोक्तिमूलत्वं अस्याः । यथा प्रतीयमानोपमात्वेऽपि तत्त्वारोपादिरूपविशेषभावात् रूपकाद्यलङ्काराः उपमातो भेदेनोक्ताः, तथा इयमपि सहार्थसामर्थ्यावसितसाम्ययोगरूप विशेषात् तस्याः पृथगुक्ता । उपमारूपं व्यङ्ग्यं तु न चमत्कारि । रूपकादिषु गुणीभूततत्त्वारोपादिना अभिधीयमानस्यैवार्थस्य चमत्कारित्वात् । इति सहोक्तिः ।

सङ्केतः (रुय्यकः)

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः सह मणिवलयैर्वाष्पधारा गलन्ति ।

तव सुभगवियोगे तस्या उद्वेजनशीलायाः सह च तनुलतया दुर्बला जीविताशा ।।

बालचित्तानुरञ्जनी

सहोक्त्यलङ्कारं लक्षयति सा सहोक्तिरित्यादि । अर्थग्रहणं पर्यायस्वीकाराय । बलादित्यनुच्यमाने कस्यचिदेव वाचकत्वाद्द्विवाचकत्वासिद्धेर्वाचकत्वं च विविच्यमानं क्वचिदभिधायकत्वं क्वचिदवबोधकत्वमित्याह

उभयस्येति । उदाहरति सहेति । हे सुहअ हे सुभगं तुह तव व्विओए वियोगे, उग्गिरीए उद्वेजनशीलाया, तीअ तस्याः, सासदण्डा श्वासदण्डाः, दिअसणिसाहिं दिवसनिशाभिः सह, दोहराः दीर्घाः । वाहधारा बाष्पधारा, मणिवलएहिं मणिबलयैः सह गलन्ति तणुलदाए असहतनुलतया च सह जीविताशा दुब्बला दुर्बला । अत्र श्वासदण्डादिविषयस्य दैर्ध्यादिशाब्दत्वं यत्र सहयुक्तेऽप्रधाने इति तृतीया तत्र नियमेन गुणभावादार्थत्वमित्याह श्वासेति । यस्य विवक्षाव्यतिरेकेण सहोक्तिमात्रं नालङ्कारः । यथा अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरिष्विति । अस्या मालावैचित्र्यं यथा—

**उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नमितं**
**भूपानां जनकस्य संशयधिया साकं समास्फालितम् ।**

**वैदेहया मनसा समं तदधुना कृष्टं ततो भार्गव-**
**प्रौढाहंकृतिकन्दलेन च समं भग्नं तदैशं धनुः ॥ इति**

अत्र कार्मुकसाहित्यत्सहोक्तिः पूर्वत्र कर्तृसाहित्यादित्यपि भेद उन्नेयः ।

### काव्यादर्शः

एकार्थाभिधायकमपीति । एकपदार्थगतधर्माभिधायकमपि सहार्थसामर्थ्येन द्वितीयपदार्थगतधर्मप्रत्यायकमपि यद् भवति । 'उव्विग्गिरीए उद्वेजनशीलायाः ।' दण्डादीत्यादिशब्दाद् बाष्पधारागता गलनक्रिया शाब्दी बलयगता तु सहार्थसामर्थ्याद् अवसीयते, द्वयोरपि प्राकरणिकत्वाद् अप्राकरणिकत्वाद् वा । सहार्थप्रयुक्तोऽत्र गुणप्रधानभावः, तत्र तृतीयान्तस्य नियमेन । गुणभावाद् उपमानत्वं, अर्थाच्च परिशिष्टस्य प्रधानत्वाद् उपमेयत्वं वैवक्षिकम् । यथा वा—

**रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।**
**निमेषमात्रादवधूय च व्यथां सहोत्थितः सैनिकहर्षनिःस्वनै ॥**

—अत्र रघुगता पतनक्रिया शाब्दी, अश्रुगता तु सहार्थसामर्थ्याद् अवसीयते ।

ननु, 'सह दिअसणिसे'त्यादौ परस्परसाम्यसमन्वयो मनोहारितानिबन्धनमिति प्रतीयमानोपमैवेयं, हन्त तर्हि रूपकापह्नुत्यप्रस्तुतप्रशंसादयोऽपि पृथग् न वाच्याः, तत्रापि उपमानोपमेयभावप्रतीतेरुपमैव एकालंकारो वाच्यो, नालंकारान्तरम् । यदाह वामनः—'प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः' इति । अथ रूपकादिषु तत्त्वारोपादिर्लक्षणं विशेषमङ्गीकृत्य रूपकादिव्यवहारः प्रवर्त्यते, तर्हि सहोक्त्यादावपि सहार्थसामर्थ्यावसितासाम्यसमन्वयलक्षणो विशेषोऽस्तीति तेऽप्युक्ताः । व्यङ्ग्यं तु तत्त्वारोपादिनाभिधीयमानेनैव वाक्यार्थोऽलंकृत इति वाक्येऽलंकारे गुणीभवति । एवं दीपके दीपनकृतमेव चारुत्वमित्युपमापि ।

मालारूपापीयं यथोक्तोदाहरण एव । यथा वा—

**उत्क्षिप्तं सह कौशिकस्य पुलकैः साकं मुखेर्नमितं**
**भूपानां जनकस्य संशयधिया साकं समास्फालितम् ।**

**वैदेह्या मनसा समं तदधुना कृष्टं ततो भार्गव-**

**प्रौढाहंकृतिकन्दलेन च समं भग्नं तदैशं धनुः ॥**

शोभाशून्यत्वे च—'अनेन सार्धं विरहाम्बुराशेस्तीरेषु तालीवनमर्मरेषु' इति। 'शिष्येण सहोपाध्यायः पठति' 'पुत्रेण सह पिता तिष्ठति' इत्यादौ च सहोक्तिमात्रं नालंकारः। यदुक्तम्—

**समासोक्तिः सहोक्तिश्च नालंकारतया मता।**

**अलंकारान्तरत्वेन शोभाशून्यतया तथा॥**

शोभाशून्यत्वमहृद्यत्वम्। तत्र चोपमादयोऽपि नालंकारा इति सर्वं संमतम्॥ ११०॥ [२७॥]

## विवेकः

व्याजस्तुताविवार्थद्वयप्रतीतिसाम्यादाह सा सहोक्तिरिति। एकार्थाभिधायकमपीति कर्त्राद्येककारगतैरूपेण क्रियाऽभिधायकमपीत्यर्थः। उभयस्यावगमकं न तु वाचकमित्यर्थः। अलङ्कारप्रस्तावाच्चैत्रमैत्रौ सह पठत इत्यादिप्रयोगवैलक्षण्येन "यत्रैव कविः प्रबन्धपेक्षया सहृदयाहृदयाह्लादनसमुत्पादनदिशा च तुल्यप्राधान्यावबोधेऽपि च शब्दवृत्तौचित्यगत्या तृतीयान्तेऽप्राधान्यमनुरुध्यते (स. क. आ.) तत्रैवेयमलङ्कृतिः। इयञ्च द्विविधा सादृश्यवत्यसादृश्या च। यथा सह दिअहेत्यादि सह दिवसनिशाभि दीर्घाः श्वासदण्डाः सह मणिवलयैर्बाष्पधारा गलन्ति। तव सुभग वियोगे तस्या उद्वेगिन्या उद्वेजनशीलायाः सह च तनुलतया दुर्बला जीविताशा॥ अत्र दीर्घा इति कर्तृगतस्य दीर्घगुणत्वस्य सहभवनं प्रदर्शितं "गुणसमावेशेन गुणिनोः साम्यमिवाद्यप्रयोगेऽपि प्रतीयते। तदिह द्वयोः प्राकरणिकत्वात्तुल्यकक्षत्वेऽपि तृतीयान्तस्य गुणाभावादुपमानत्वम्, अर्थाञ्च परिशिष्टस्य प्रधानत्वादुपमेयत्वम्। एतद्विरहेऽपि चायं यथा—अत्रैव गलन्तीति परस्परनैरपेक्ष्येण द्वयोरवस्थानात् सादृश्यं न गम्यते। दुर्बलेति गुणस्यैवातिशयोक्तिश्चास्य मूलम्। अभेदाध्यवसायरूपोदाहृतैव, कार्यकारणपौर्वापर्य विपर्ययरूपा यथा—भवदपराधैः सार्धं सन्तापो वर्धतेतरामस्याः (रु. का. अ. ७/१६)। अत्रापराधानां सन्तापं प्रति हेतुत्वेऽपि तुल्यकालत्वेनोपनिबन्धः।" (अ. स. १०३-४ पृ.)। तदेतानि कर्तृसाहित्योदाहरणानि। कर्मसाहित्ये यथा—(का. अ. सा. सं. ५/८३; अ. स. १०५ पृ०) द्युजनो मृत्युना सार्धं यस्याजो तारकामये। चक्रे चक्राभिधानेन प्रेष्येणाप्तमनोरथः॥ द्युजनो देवलोकः, तारकस्य दैत्यविशेषस्यामयो रोगः, प्रेष्यः आज्ञाकारी। अत्र करोतिक्रियाऽपेक्षया द्युजनस्य मृत्योश्च कर्मत्वम्। तदित्थं प्रागुपदर्शितेतिकर्तव्यतापरिहारेण सहोक्तिमात्रंनालङ्कारो यथा—(र. वं ६/५७) "अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु" 'सह श्रिया तिष्ठ समाः सहस्रं"मित्यादि।

## दीपिका

एकार्थाभिधायकमिति। अभिधानगत्यैकार्थसम्बन्धगुणाद्यर्थम्। यदिति। यस्यामित्यर्थः। उभयस्यावगमकमुभयसम्बन्धं द्योतयदिति गुणादिवाचकं प्रथमान्तम्। सा सहोक्तिरिति तत्प्रयोज्यतया तदभेदनिर्देशः।

## दर्पणः

सहोक्त्यलङ्कारः। यस्यामुभयस्यावगमकं उभयसमृद्धम्। सहति।

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सह मणिवलयैर्वाष्पधारा गलन्ति।
तव सुभग वियोगे तस्या उद्विग्नायाः
सह च तनुलतया दुर्बला जीविताशा॥

## साहित्यचूडामणिः

सहोक्तिमाह—सेति। अर्थग्रहणं पर्यायस्वीकाराय। बलादिति। अन्यथा कस्यचिदेव वाचकत्वासिद्धेः।

वाचकत्वं च विविच्यमानं क्वचिदभिधायकत्वं क्वचिदवबोधकत्वमित्याह उभयस्यावगमकमिति। यत् सूत्रम् "उपमानोपमेययोरेकस्य प्राधान्यनिर्देशे परस्य सहार्थसम्बन्धे सहोक्तिः" (अलङ्कार सू० ३०) इति। उपमानोपमेयत्वं चात्र वैवक्षिकं द्वयोः प्राकरणिकत्वादप्राकरणिकत्वाद् वा तुल्ययोगितावदभिधीयमानत्वादेकस्य प्रतीतिः सहार्थसामर्थ्यादन्यस्येति। यथोक्तं—

तुल्यकालं क्रिये यत्र वस्तुद्वयसमाश्रिते।
पदेनैकेन कथ्येते सा सहोक्तिर्मता सताम्॥ का० सा० ५॥ इति।

तुल्यकालमित्युक्त्या दीपकव्यवच्छेदः। तत्र ह्येकत्र वर्तमाना क्रिया कारकान्तरमनुषङ्गादनुबध्नाति इह तु केवलमुभयसम्बद्धत्वेन प्रतिपद्यते।

सहेति।

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति।
तव सुभग! वियोगे तस्या उद्वेगशीलायाः
सह च तनुलतया दुर्बला जीविताशा॥ इति।

श्वासदण्डादिविषयस्य दैर्घ्यादेः शाब्दत्वम्, अन्यत्र "सह युक्तेऽप्रधाने" (२-३-१९) इति तृतीयानियमेन गुणभावादार्थत्वमित्याह—श्वासेति। औपम्यविवक्षाव्यतिरेकेण सहोक्तिमात्रं नालङ्कारः। यथा—

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु। इति।

अस्या मालावैचित्र्यं यथा—

उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम्।
वैदेहीमनसा समं तदधुनाकृष्टं ततो भार्गव-
प्रौढाहङ्कृतिकन्दलेन च समं भग्नं तदैशं धनुः॥ इति।

अत्र कर्मसाहित्यात् सहोक्तिः पूर्वत्र कर्तृसाहित्यादित्यादि भेद उन्नेयः ॥

## सम्प्रदायप्रकाशिनी

सा सहोक्तिरिति । घटपटौ सह तिष्ठत इत्येतद्विधर्मणस्तृतीयाविषयस्य सहार्थस्य बलाद् यदेकमुभयाभिधायि सा सहोक्तिः ।

सह दिअहेति ।

**सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः**
**सहमणिवलयैर्बाष्पधारा गलन्ति ।**

**तव सुभग वियोगे तस्या उद्वेगशीलायाः**
**सह च तनुलतया दुर्बला जीविताशा ॥**

अत्र श्वासदण्डादिविषयं शाब्ददीर्घत्वादि सहार्थसामर्थ्याद् दिवसनिशादिविषयत्वमप्यापद्यते ।

तदेतदाह—श्वासदण्डादीत्यादि ।

## मधुमती

एकार्थेति । समुच्चये उभयोः प्राधान्येनान्वयः, अत्र तु एकस्य अप्राधान्येनेति विशेषः । इति सहोक्तिः ।

## विस्तारिका

सेति । सहार्थस्येत्यनेन समं सार्द्धमित्यादेरपि परिग्रहः । एकार्थेति । अर्थोऽन्वयः । एकप्रतियोगिकान्वय्यर्थाभिधायकत्वमपीत्यर्थः । विशेषणपदानां विशेष्यान्वितस्वार्थबोधकत्वस्यौत्सर्गिकत्वात्, प्रकृते तु सहायसमभिव्याहार व्युत्पत्तिविशेषसहकारेणापरार्थप्रतिपादनमित्यर्थः । उभयस्योभयप्रतियोगिकस्वार्थान्वयबोधकं चैत्रमैत्रौ सहचरत इत्यादिलोकोक्तिवैलक्षण्येन यत्रैकस्य गुणत्वेन परस्य च प्रधानत्वेनैकक्रियान्वयित्वं विवक्षितम्, तत्रायमलङ्कारः । समुच्चय उभयोः प्राधान्येनान्वयः, अत्र त्वेकस्येति विशेषः ।

सह दिवसनिशाभिदीर्घाः श्वासदण्डाः सह च तनुलतया दुर्बला जीविताशा ॥

श्वासेत्यादि । शाब्दं सामान्येन शब्दसामग्रीमहिम्नावगतम् । प्रतिपद्यते व्युत्पत्तिविशेषसहकारेण शब्देन बोध्यते ।

## सारबोधिनी

सेति । सहार्थस्येत्यनेन समं सार्द्धमित्यादेरपि । परिग्रहः । एकार्थेति । अर्थोऽन्वयः । एकप्रतियोगिकान्वयके कमपीत्यर्थः । उभयस्येति । विशेषणपदानां विशेष्यान्वितस्वार्थबोधकत्वस्यौत्सर्गिकत्वम्, प्रकृते तु सहाद्यव्ययसमभिव्याहारविशेषसहकारेणापरार्थप्रतिपादनमित्युभयप्रतियोगिकस्वार्थान्वयबोधकत्वमित्यर्थः ।

यत्रैकस्य प्राधान्येनापरस्य गुणत्वेनैकक्रियान्वयित्वं तत्रायमलङ्कार इति निर्गलितार्थस्तत्र चैत्रमैत्रौ सह पठत इत्यत्र न प्रसङ्गः। समुच्चये उभयोः प्राधान्येनान्वयो न त्वेकस्येति विशेषात्। सहेति।

**सह दिवसनिशाभिर्दीर्घनिःश्वासदण्डाः**
**सह मणिवलयाद्यैर्वाष्पधारा गलन्ति।**
**तव सुभग वियोगे तस्या उद्विग्नायाः**
**सह च तनुलतया दुर्बला जीविताशा॥**

### काव्यप्रदीपः

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्॥ २६॥**

शब्दशक्त्या एकार्थाभिधायकं पदं यत्सहार्थान्वयबलादनेकार्थाभिधायकं सा सहोक्तिः। 'चैत्रमैत्रौ गच्छतः' इत्यादौ तु शब्दशक्त्यैवोभयाभिधानम्।

यथा—

**'सह दिअहणिसाइं दीहरा सासदण्डा**
**सह मणिवलएहिं बाहधारा गलन्ति।**
**तुह सुहअ विओए तीअ उव्विग्गिरीए**
**सह अ तणुलदाए दुब्बला जीविदासा॥'**

अत्र दीर्घत्वादीनां श्वासादिभिरन्वयः साक्षादेव शाब्दः। दिवसादिभिस्तुसहान्वयबलात्।

### काव्यप्रकाशखण्डनम्

सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्॥ (का. ११२, उ०)

सहार्थेत्यनेन समं सार्द्धमित्यादेः परिग्रहः। एकमपि एकप्रतियोगिकान्वयबोधकमपीत्यर्थः। द्विवाचकं द्विप्रतियोगिकान्वयबोधकम्। अयं भावः—विशेषणपदानां विशेष्यान्वितस्वार्थबोधकस्यौत्सर्गिकत्वं प्रकृते च सहाद्यव्ययपदसमभिव्याहारविशेषसमभिव्याहारेण अपरार्थप्रतीतिप्रतियोगिकान्वयप्रतिपादनमित्युभयप्रतियोगिकस्वार्थान्वयबोधकमिति। यत्रैकत्र प्रधान्येनान्यस्य गुणत्वेन एकधर्मान्वयित्वं तत्र यमकालङ्कार इति पर्यवसितोऽर्थः। तेन चैत्र-मैत्रौ सह पचत इत्यादौ नातिप्रसङ्गः। समुच्चये द्वयोः प्रधान्येनान्वयः। अत्र त्वेकस्य। यथा—

**साकं दिवसनिशाभिः श्वासा दीर्घा भवन्त्यद्य।**
**अयि तनुलतया सुतनोर्जीवाशा दुर्लभा जाता॥**

### आदर्शः

सहोक्त्यलङ्कारमाह—सा सहोक्तिरिति। 'द्विवाचकं' द्व्यन्वयि। एवं वृत्तावपि अभिधायकमित्यन्वय्यर्थकमेव। सह दिअहेति।

**सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः**
**सह मणिलयैर्वाष्पधारा गलन्ति।**

**तव सुभग वियोगे तस्या उद्वेगिन्याः**
**सह च तनुलतया दुर्बला जीविताशा॥ इति संस्कृतम्।**

श्वासदण्डा दण्डाकारा निश्वासाः, वाष्पधारा अश्रधाराः। शाब्दमिति तुल्यविभक्तिशब्दव्युत्पत्तिसिद्ध-मित्यर्थः। सहार्थस्य सामर्थ्यादिति, तृतीयान्त-प्रथमान्तयोरभेदान्वयबोधकत्वाव्युत्पत्तेर्दिवसनिशा दीर्घा इति बोधा-नुपपत्तेः।

### सुधासागरः

एकार्थेत्यादि। शब्दशक्त्या एकार्थाभिधायकं पदं यत् सहार्थान्वयबलादनेकार्थाभिधायकं सा सहोक्तिः 'चैत्रमैत्रौ गच्छत' इत्यादौ तु शब्दशक्त्यैवोभयाभिधानमिति भावः।

सहेति—मालिनी छन्दः।

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
**सह मणिवलयैर्वाष्पधारा गलन्ति।**
**तव सुभग वियोगे तस्यां उद्विग्नायाः**
**सह च तुनलतया दुर्बला जीविताशा॥**

इति संस्कृतम्। सख्याः नायकं प्रत्युक्तिः। हे सुभग तव वियोगे उद्विग्नायाः विमनस्कायास्तस्याः प्रेयस्याः दिवसनिशादिभिः सह श्वासदण्डाः दीर्घाः जाताः मणिवलयैः सह बाष्पधारा गलन्ति। तनुलतया शरीरयष्ट्या सह जीविताशा च दुर्बला जातेत्यन्वयः। अत्र दीर्घत्वादीनां श्वासादिभिरन्वयः साक्षादेव शाब्दः। दिवसनिशादिभिस्तु सहार्थान्वयलात्।

**(सू० १७१) विनोक्तिः सा विनान्येन यत्रान्यः सन्न नेतरः ।**

**क्वचिदशोभनः क्वचिच्छोभनः । क्रमेणोदाहरणम्—**

**अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः ।**

**उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥ ४९६ ॥**

---

### सङ्केतः

यत्रान्य इति । सन् शोभनः, इतरः अशोभनः, इति सूत्रापेक्षया व्याख्येयम् । क्वचितु 'यत्रान्योऽसन्नथेतरः' इति पाठः । तदपेक्षया क्वचिद्वृत्तौ अशोभनः शोभनः इति व्याख्यातमस्ति ।

अरुचिरिति । रुचिरहितः अशोभनः इत्यर्थः ।

### बालचित्तानुरञ्जनी

विनोक्त्यलङ्कारं लक्षयति विनोक्तिरिति । यत्रान्येन विना अन्यः सन् न भवति न शोभत इत्यर्थः । इतरः अशोभनादित्यर्थः । आद्यमुदाहरति अरुचिरिति । शशी निशया विना अरुचिः रुचिरहितः अशोभन इत्यर्थः । महत्तम इति रूपकम् । तमोरूपा सा निशा । सापि शशिना । विचित्रव्यवहारप्रभाप्रगल्भः पूर्वं स्त्रीमोहितो हितो व्यवहारज्ञो नासीत् इदानीं तया विना व्यवहारज्ञः शोभन इत्यर्थः ।

### काव्यादर्शः

सहोक्तिप्रतिपक्षभूतां विनोक्तिमाह—विनोक्तिः सेति । सन्नथेतर इति । शोभन एवान्योऽशोभनः अशोभन एव वा शोभनो यत्रान्येन विनान्यासंनिधानेन निबध्यते सा द्विधा विनोक्तिः ।

'अरुचिर्निशे' ति । रुचिरहितोऽशोभन इत्यर्थः । अत्र निशाद्यसंनिधिप्रयुक्तारुचित्वाद्यभिधानमुखेन शोभनानामपि चन्द्रादीनामशोभनत्वमुक्तम् ।

### विवेकः

सहोक्तिप्रतिपक्षतया लक्षयति विनोक्तिरित्यादि । न सन्नित्यशोभनः, नेतरो नासन्निति शोभनः । 'ते द्वे सत्त्वासत्त्वे यत्र कस्यचिदसंविधानान्निबध्यते सा द्विधा विनोक्तिः । अत्र सन्न सन्निति वक्तव्ये निषेधमुखेनाभिधानमन्यनिवृत्तिप्रयुक्ता तन्निवृत्तिरिति ख्यापनार्थम् । एवञ्च तदन्यनिवृत्तौ विधिरेव प्रकाशितो भवति । (अ. स. १०६ पृ.) । तत्राद्या यथा अरुचिरित्यादि । अत्र निशाऽद्यसन्निधिप्रयुक्तं रुचिविरहाद्यभिधानमुखेनाशोभनत्वाभावः शोभनकार्यमुक्तम् ।

## दीपिका

सन्न इति विवृणोति अशोभन इति । नेतर इत्यस्य विवृतिः शोभन इति । नास्ति रुचिः कान्तिर्यस्येत्यरुचिः । महत्तम इति तद्बहुलतया तत्त्वोपचार इति ।

## दर्पणः

विनोक्त्यलङ्कारः । सन्वेत्यस्य [अन्यः सन्न इत्यस्य] व्याख्यानं अशोभन इति, नेतर इत्यस्य शोभन इति । स्वरूचिः [अरुचिः] कान्तिरहितम् । महत्तमः, तद्बहुलत्वात्तत्वोपचारः । प्रतिभा प्रतिज्ञाविशेषः [प्रज्ञाविशेषः] तस्याः प्रभा प्रकाशः, तथा प्रगतः [संगतः] प्रगल्भः ।

## साहित्यचूडामणिः

अथ सहोक्तिप्रतिभटभूता विनोक्तिरिति । सन्न शोभनो न किन्तु अशोभनः । नेतरः अशोभनो न किन्तु शोभनः ।

व्याचष्टे—क्वचिदशोभन इति सन्नेत्युक्तत्वात् । क्वचिच्छोभनः नेतर इत्युक्तत्वात् । यत् सूत्रं “विना किञ्चिदन्यस्य सदसत्त्वाभावो विनोक्तिः” (अलङ्कारसू० ३१) इति ।

सत्त्वस्य शोभनत्वस्याभावोऽशोभनत्वमसत्त्वस्य चाशोभनत्वस्य भावः शोभनत्वं, ते द्वे अपि प्रत्येकं यत्र कस्यचिदसन्निधानान्निबध्यते, सा द्विधा विनोक्तिः । अभिरूपानभिरूपत्वसत्तायामेव वक्तव्यायामसत्त्वमुखेनाभिधानमेकनिवृत्तिप्रधान्यादन्यदिवृत्तिरिति ख्यापनार्थम् ।

अरुचिरिति । अत्र निशीथिन्याद्यसन्निधिप्रयुक्तशशाङ्काद्यरुचित्वाभिधानमुखेन शोभनेतरत्वमुक्तम् । यत्र परस्परविनोक्तिभङ्ग्या चमत्कारातिशयः ।

## सम्प्रदायप्रकाशिनी

विनोक्तिरिति । अन्यनिवृत्त्यान्यस्य साधुत्वासाधुत्वयोर्निवृत्तिर्द्विधा विनोक्तिः ।

अरुचिरिति । अरुचिः अप्रभः । महत् तमः अत्यर्थं तम एव । मनोभवस्फुरितं कामोत्क्षोभः । अत्र साधुत्वस्य निवृत्तिः ।

## मधुमती

विनोक्तिरिति । अन्येन विना यत्र अन्यः सन् = असन्नित्यर्थः । तथा नेतरः, इतरपदेन सन्निधानात् असदभिधीयते । तथाच सन्नित्यर्थः । पर्यवसितार्थमाह—क्वचिदिति । उक्तोदाहरणयोः प्रथमे असन्, द्वितीये तु सन् इति द्रष्टव्यम् । इति विनोक्तिः ।

### विस्तारिका

विनोक्तिरिति। अन्येन विना अन्य: सन्न भवति, असत्त्वान्न भवतीत्यर्थ:। नञ: प्रसज्यार्थत्वभ्रमं निरस्यति—अशोभन इति।

### सारबोधिनी

विनोक्तिरिति। अन्येन विना अन्य: सन् न भवति। असन् वा यत्र न भवति स विनोक्तिनामालाङ्कार: इत्यर्थ:। नञ: प्रसज्यार्थकत्वभ्रमं निरस्यति अशोभन इति। अरुचिरिति। मनोभवस्फुरितं।

### काव्यप्रदीप:

**विनोक्ति: सा विनान्येन यत्रान्य: सन्न नेतर:।**

सन्न शोभनो न नेतरो नाशोभन इत्यर्थ:। तेन केनचिद्विना कस्यचिदशोभनत्वं शोभनत्वं वा प्रतिपाद्यते सा विनोक्ति:। तत्रशोभनत्वं यथा—

**'अरुचिर्निशया विना शशी शशिना सापि विना महत्तम:।**
**उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनो:॥'**

### काव्यप्रकाशखण्डनम्

विनोक्ति: सा विनान्येन यत्रान्य: सन्न चे (ने) तर:।

(का. ११३, पू०)

अन्येन विना अन्य: सन्न भवति असन् वा न भवतीत्यर्थ:। [प० ५३,२] क्वचिदशोभन: क्वचित् शोभन:। यथा—

विना रजन्या कश्चन्द्रो विना चन्द्रेण का निशा।

### आदर्श:

विनोक्त्यलङ्कारमाह—विनोक्तिरिति। सन्नेति सन् शोभनो नेत्यर्थ:। तद् व्याचष्टे—क्वचिच्छोभन इति। नेतर इति, नाशोभन इत्यर्थ: तद् व्याचष्टे— क्वचिच्छोभन इति।अरुचिरिति। महत्तमस्तम:स्वरूपैव न शोभनेत्यर्थ:।

### सुधासागर:

क्वचिदित्यादि। सन् न शोभनो न, नेतर:, नाशोभन इत्यर्थ:। तेन केनचिद् विना कस्याचिदशोभनत्वं शोभनत्वं वा प्रतिपाद्यते सा विनोक्तिरिति भाव:।

तत्राशोभनत्वं यथा—अरुचीतिय। स्पष्टम्। अपरवक्त्रं छन्द:। 'विषमे यदि सौ जभौ समे त्जरलागौऽपरवक्त्रमीरितम्' इति लक्षणात्।

**मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।**
**अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः । ४९७ ॥**

---

### सङ्केतः

मृगेति । तया हि प्राड्योहितः किमपि नाज्ञासीत् । सुहृदेति । कूटमित्रं हि तस्यासीत् ॥

विनाशब्दं विनाऽपि विनार्थविवक्षा दृश्यते, यथा सहोक्तौ सहार्थविवक्षा । तेन—

**निरर्थकं जन्म गतं नलिन्याः**
**यया न दृष्टं तुहिनांशुबिम्बम् ।**
**उत्पत्तिरितन्दोरपि निष्फलैव**
**दृष्टा विनिद्रा नलिनी न येन ॥**

इत्यादौ विनोक्तिरेव । तुहिनांशुदर्शनं विना नलिनीजन्मनः अशोभनत्वप्रतीतेः ॥

अत्र 'अरुचिर्निशया' इत्युदाहरणं मिथो विनोक्तिभङ्ग्योक्तम् ।

द्वितीयं तु एकमेव । यद्वा—एकत्र अशोभनत्वम्, अपरत्र शोभनत्वम् । विनोक्तिकृतवैचित्र्याभावात्, शब्दमात्रयोगेन अलङ्कारकथने 'हा धिगा'द्युक्तावपि अलङ्कारत्वप्राप्तोश्च, विनोक्त्यलङ्कारं न मन्यन्तेऽन्ये । सहार्थबलात् साम्यप्रतीतेः सहोक्तिस्तु युक्तैवेति ॥ इति विनोक्तिः ॥

### बालचित्तानुरञ्जनी

अयं तेन दुष्टेन सुहृदा विना अमृतद्युतिसुन्दराशयः पूर्वं दुष्टसुहृदा दुष्टबुद्धिः । इदानीं त्वद्विरहितः शोभनचित्तः ।

### काव्यादर्शः

'मृगे' ति । तया हि प्राग्मोहितः किमपि नाज्ञासीत् । 'सुहृदा' इति । अकल्याणमित्रं हि तस्यासीत् । अत्राशोभनावपि शोभनावुक्तौ । विना-शब्दमन्तरेणापि विनार्थविवक्षा दृश्यते यथा सहोक्तौ सहार्थविवक्षा । तेन—

**निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।**
**उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥**

—इत्यादौ विनोक्तिरेव तुहिनांशुदर्शनं विना नलिनीजन्मनोऽशोभनत्वप्रतीतिः ।

### विवेकः

द्वितीया यथा—मृगेत्यादि । तेनेति । दुष्टेन पापकर्मणि प्रेरकेण । अत्र शोभनत्वाभावः शोभनपदार्थप्रक्षेपभङ्ग्योक्तः । इयञ्च परस्परविनोक्तिभङ्ग्या चमत्कारातिशयकृत् यथा प्रागुदाहृते । क्वचि'द्विना'शब्दमन्तरेणापि विनाऽर्थविवक्षा यथाकथञ्चिदपि निमित्तीभवति । यथा सहोक्तौ 'सह' शब्दाप्रयोगेऽपि सहार्थो गम्यत इति 'वृद्धो यूना' (पा० १/२/६५) इत्यनेन ज्ञापितमेव । (चो. का. स. क. आ. २५४ पृ.; अ. स. १०७ पृः) निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्। उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥ इत्यादौ विनोक्तिरेव । तुहिनांशुदर्शनं विना नलिनीजन्मनोऽशोभनत्वप्रतीतेः ।

### दीपिका

प्रतिभा स्तुतिरेव प्रभा शोभा तया प्रगल्भश्चतुरोऽलौकिकी प्रभा राज्ञे इतिवत् प्रभा-शब्दः प्रभावार्थो वा ।

### साहित्यचूडामणिः

मृगलोचनयेति । अत्र विचित्रव्यवहारप्रागल्भ्याभिधानमुखेन शोभनत्वमुक्तम् । एवं सुहृदसन्निधिप्रयुक्ते राजपुत्रस्य चन्द्रसौम्यहृद्यत्वे द्रष्टव्यम् ।

### सम्प्रदायप्रकाशिनी

मृगलोचनयेति । अत्रासाधुत्वस्य ।

### सारबोधिनी

कामचेष्टा मृगेति । अमृतद्युतिश्चन्द्रः ।

### काव्यप्रदीपः

शोभनत्वं यथा—

**मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।**
**अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥**

अत्र मृगलोचनया दुष्टसुहृद्विशेषं च विना नरेन्द्रसूनोर्विचित्रव्यवहाराप्रगल्भत्वचन्द्र सुन्दराशयत्वरूपं शोभनत्वमुक्तम् ।

### काव्यप्रकाशखण्डनम्

द्वितीयो यथा—

**अनयं विनेव राज्यश्रीः साध्वी योषिच्च चापलम् ॥**
**परिवृत्तिर्विनिमयो योऽर्थानां स्यात् परस्परम् ॥ (का. ११३, ३०)**

## आदर्शः

अत्राशोभनत्वमुक्तम्। शोभनत्वमाह—मृगलोचनयेति। नायिकाप्रसक्त्या दुष्टसुहृत्सङ्गाच्च दुर्वृत्तस्य स्वभावसद्वृत्तस्य राजपुत्रस्य वर्णनमिदम्। अयं नरेन्द्रसूनुर्मृगलोचनया विना विचित्रेत्यादितः प्रगल्भः तत्सङ्गादेवा-तथाभूत इत्यर्थः। एवं तेन सुहृदा विना अमृतद्युतीत्यादिस्तत्सङ्गदेवातथाभूत इत्यर्थः। अत्र शोभनः।

## सुधासागरः

शोभनत्वं यथा—मृगेति। स्पष्टम्। मालभारिणी छन्दः। 'विषमे ससजा गुरू अनोजे सभरायश्च तु मालभारिणीयम्' इति लक्षणात्। अत्र मृगलोचनया दुष्टसुहृद्विशेषेण च विना नरेन्द्रसूनोः विचित्रव्यहारप्रगल्भत्व-चन्द्रसुन्दराशयत्वरूपं शोभनत्वमुक्तम्।

(सू० १७२) परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥ ११३ ॥

परिवृत्तिरलंकारः । उदाहरणम्—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्वा श्रयति भृशमामोदमसमम् ।

लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ ४९८ ॥

अत्र प्रथमेऽर्धे समेन समस्य द्वितीये, उत्तमेन न्यूनस्य ।

---

सङ्केतः

अर्थानामिति । अर्थ्यन्ते अमी इति व्युत्पत्त्या अर्थाः उपादेयाः । बहुवचनमतन्त्रम् । तेन—एकं द्वे बहूनि वा दत्त्वा, व्युत्क्रमेण विषमसमसंख्यानां आदानं यत्र तत्रैषा स्यात् । समादन्यत् असमम् । तच्च—न्यूनं अधिकं च । समन्यूनाधिकानां समाधिकन्यूनैः विनिमये परिवृत्तित्रयी ।

लतानामिति । मतं चारु । श्रयति आदत्ते । अत्र लास्य-मोदौ समौ । एकेन एकस्य विनिमयः पूर्वार्धे । उत्तरार्धे तु अधिकेनैकेन न्यूनस्य आध्यादिरूपस्य अनेकस्य ।

सङ्केतः (रुय्यकः)

अलङ्कार इत्यनेन परिवृत्तिशब्दोऽत्र क्रियामात्रमभिधत्ते इति शङ्कां निराकरोति । विप्रलम्भो भ्रान्तिरपायो वा ।

बालचित्तानुरञ्जनी

परिवृत्त्यलङ्कारं लक्षयति परिवृत्तिरिति । अर्थानां समैरसमैश्च वस्तुभिर्विनिमयः परिवृत्तिः । न्यूनाविभावे [?] द्विविधमसमम् । एवं त्रिधा परिवृत्तिः । अत्र किं लक्ष्यं किं लक्षणमिति संदेहे निर्णयार्थमाह परिवृत्तिरिति । आद्य प्रकारद्वयमुदाहरति । अयं मरुत् उदितः कुसुमानां मतमभिमतं लास्यं नृत्यंदत्वा, असममधिकं आमोदमाश्रयति आश्रयते । लतास्तु अधन्यानां पान्थानां दृशं, सहसा आदाय आधिव्याधिभ्रममिमुदितमोहव्यतिकरं परिवृत्तिः । उत्तमेन हगुपादानव्याध्यादेः न्यूनस्य परिवृत्तिः ।

### काव्यादर्शः

अर्थानामिति। अर्थशब्देन अर्थ्यतेऽसाविति उपादेयोऽर्थोऽभिधीयते। बहुवचनं चाविवक्षितम्। तेन यत्रैकं दत्त्वा एकं द्वे बहूनि च वस्तून्यादीन्यन्ते, द्वे च दत्त्वा एकं द्वे बहूनि वा, तत्र सर्वत्रैव स्यात्। समन्यूनाधिकानां समानोत्कृष्टगुणेन न्यूनगुणेन च स्यात् परिवर्तने परिवृत्तिः।

समपरिवृत्तिः, यथा—'लतानाम्' इति। लास्यामोदयोः समत्वात्। उत्कृष्टपरिवृत्तौ 'लतासु' इति। यथा वा—

**किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभिवल्कलम्।**
**वद प्रदोषे स्फुटचन्द्रतारके विभावरी यद्यरुणाय कल्पते॥**

—अत्र उत्कृष्टगुणैराभरणैर्न्यूनगुणस्य वल्कलस्य परिवृत्तिः।

### विवेकः

परिवृत्तिरिति परस्परं निरूप्यसाम्यादियं कथ्यते। "अलङ्कार इत्यनेन परिवृत्तिशब्दोऽत्र क्रियामात्रमभिधत्त इत्याशङ्कां निराकरोति" (रु. सं. ६७ पृ.)। किञ्चित्यक्त्वा कस्यचिदादानं विनिमयः। स च समेन स्यादसमेन वा। असमं तु द्विविधमधिकन्यूनगुणत्वेन द्वैविध्यात्। तत्र समेन तुल्यगुणेन त्यज्यमानेन समस्य तादृशस्यैव ग्रहणं प्रसज्यप्रतिषेधेनैकार्थीभावारूपं, तथाऽधिकगुणेन न्यूनगुणस्यादानं (न्यूनस्य गुणहीनस्य ग्रहणं) धर्मन्यूनभूत-(?)न्यायेनोत्तरपदार्थप्रतिपक्षरूपानर्थकत्वाभावम्। एवं न्यूनगुणेनाधिकगुणस्य ग्रहणैरर्थभावमिति। लतानामि-त्यादि—मतं लास्यमभिमतं सुकुमारं नृत्यं श्रयति गृहीतवानिति तात्पर्यम्। अत्रादिकर्मणि क्तः। मुदितत्वेन हर्षो लक्ष्यते। लतास्वित्यादि। अनर्थस्वभावं परिवर्तनम्।

### दीपिका

समासमैरिति। सामान्यतो लक्षितस्य भेदकथनं समैरसमैश्चेत्यर्थः। किञ्चद् दत्त्वा कस्यचिदादानं परिवृत्तिस्तदेव विनिमय इति।

परिवृत्तिर्विनिमय इत्यत्र किं लक्ष्यपदं किञ्च लक्षणपदमिति सन्देहं निराचष्टे—परिवृत्तिरलङ्कार इति। नायं परिवृत्तिशब्दो विनिमयमात्रार्थः, अलङ्कारविशेषरूपलक्ष्यवाचकत्वादित्यर्थः। न च विनिमयशब्दस्याप्यलङ्कारवा-चकता, प्राचीनव्यवहारविरहात्। मतं मनोहरं लास्यं नर्तनं व्यतिकरो मेलकम्।

### दर्पणः

परिवृत्यलंकारः। समासमैरिति। क्वचित्समैः क्वचिदसमैरिति द्विधा। असमत्वं न्यूनतयोत्कृष्टतयोरिति द्विधेत्यर्थः। विप्रलम्भो वियोगः।

### साहित्यचूडामणि:

लक्ष्यलक्षणयोर्विपर्ययशङ्कां शिथिलयति—परिवृत्तिरलङ्कार इति । परिवृत्तिशब्दो व्यत्यय इव विनिमये वर्तत इति भाव: । भावानां यो विनिमय: सा परिवृत्ति: । समासमै: समैरसमैश्च । असाम्यं द्विधा न्यूनत्वमाधिक्यं च । एवं त्रिधा परिवृत्ति: । यत् सूत्रं "समन्यूनाधिकानां समाधिकन्यूनैर्विनिमय: परिवृत्ति:" (अलङ्कार सू० ६२) इति । दानप्रतिदानलक्षणो विनिमय: । समत्वं साम्यंङ्गमितगुणत्वम् । न्यूनत्वमपकृष्टगुणत्वम् । उत्कृष्टगुणत्वं चाधिक्यम् । उक्तं हि—

**समन्यूनविशिष्टैस्तु कस्यचित् परिवर्तनम् ।**
**अर्थानर्थस्वभावं यत् परिवृत्तिरभाणि सा ।। इति ।**

लतानामिति । अत्र तुल्यगुणेन त्यज्यमानेन तादृशस्य परिमलंस्यादानम् ।

एतद् व्याचष्टे । प्रथमेऽर्ध इति । द्वितीय इति । उत्तमेन दृग्लक्षणेनाध्यादे: न्यूनस्य परिवृत्ति: । परिमलाध्यादेरर्थानर्थरूपत्वात् । तत्स्वरूपत्वं च व्याख्यातम् ।

### सम्प्रदायप्रकाशिनी

परिवृत्तिरिति । अत्रार्थानां समैरर्थैर्विनिमये समैका अधिकैर्न्यूनैर्वेति विषमा द्विधा ।

लक्ष्यस्योद्देशभ्रमो मा भूदित्याह—परिवृत्तिरलङ्कार इति ।

लतानामिति । मतमभिमतं लास्यं दत्त्वामोदं श्रयतीति समा । दृशं दृष्टिपातमादायाध्यादिव्यतिकरं ददतीति विषमा अधिकेन ।

### मधुमती

परिवृत्तिरिति । य: अर्थानां विनिमय:, स: परिवृत्ति: इत्यन्वय: । पौनरुक्त्यं परिहरति—परिवृत्ति: अलङ्कार: इति । इति परिवृत्ति: ।

### विस्तारिका

परिवृत्तिरिति । योऽर्थानां विनिमय:, स परिवृत्तिनामालङ्कार इत्यर्थ: ।

पौनरुक्त्यप्रकारं परिहरति—परिवृत्तिरलङ्कार इति ।

लतानामिति । अत्र यद्यपि देयं मतं लास्यं मरुतां न स्वरूपं सत् । एवमाधिव्याधि व्यतिकरा अपि दातव्या लतानां न स्वरूपसन्त:, तथापि मरुत्सम्बन्धानन्तरमेव लतानां लास्यदर्शनात् । एवं लतादर्शनानन्तरमेव पान्थानां व्यतिकरदर्शनात् तेषां दातृत्वोपचार इति न दोष: ।

तथा च यत्प्राप्तौ यस्य प्रतिबन्धकत्वम्, तदेव तस्य दातृत्वं विवक्षितमिति ध्येयम् ।

### सारबोधिनी

परिवृत्तिरिति । योऽर्थानां विनिमयः स परिवृत्तिर्नामालङ्कारः इत्यर्थः लतानामिति । व्यतिकरं योगं ।

### काव्यप्रदीपः

**परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥ २७ ॥**

परिवृत्तिरिति लक्ष्यालंकारनिर्देशः । पूर्वाचार्याणां तथैवोद्देशदर्शनात् । अतो न लक्ष्यलक्षणसंदेहः । समासमैरिति विभागः । विनिमयो हि केनचिद्वस्तुना दत्तेन कस्यचिदादानम् । तच्च क्वचित्समेन समस्य । क्वचिदसमेनासमस्य । अन्त्यमपि द्विधा—क्वचिन्न्यूनेनोत्तमस्य । क्वचिदुत्तनेन न्यूनस्येति त्रिविधेयमित्यर्थः । समासमत्वं चोपादेयत्वानुपादेयत्वाभ्याम् । तत्राद्यद्वयं यथा—

**'लतानामेतासामुदितकुसुमानां मरुदयं**
**मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।**

**लतास्त्वध्वन्यानामहह दृशमादाय सहसा**
**ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥'**

अत्र प्रथमार्धे लास्येनोपादेयतया समस्यामोदस्य, द्वितीयार्धे उपादेयतया उत्तमया दृशा आधिव्याधीनामतादृशतया न्यूनानां विनिमयः ।

### काव्यप्रकाशखण्डनम्

परिवृत्तिलङ्कारः—

**लास्यं कमलवनानां दत्त्वा दत्ते च सौरभं पवनः ।**
**तान्यपि मुदं जनेभ्यो ददति ततो लब्धदर्शनान्युच्चैः ॥**

### आदर्शः

परिवृत्यलङ्कारमाह—परिवृत्तिरिति । समासमैरिति, समद्वयेन विषमद्वयेन चेत्यर्थः । विनिमयालङ्कारत्वभ्रमं निरस्यति— परिवृत्तिलङ्कार इति ।

लतानामिति । एतासामुदितकुसुमानां लतानां मतं सम्मतं लास्यं नृत्यं दत्त्वाऽयं मरुदसमं तुल्यान्तररहितं भृशमतिशयम् आमोदं अयति, लतास्तु अध्वन्यानां पथिकानां दृशं चक्षरादाय अर्थात्तेभ्य आधिव्याध्यादीन् ददतीत्यर्थः । विरहिणः पथिकाः लता दृष्ट्वा चिन्ताव्याधियुक्ता भवन्तीत्यर्थः । अत्रेति, आमोदलास्ययोर्द्वयोरप्युपादेयत्वेनसमत्वम् । द्वितीये इति, दृश उपादेयत्वादाधिव्याध्यादीनान्त्वनुपादेयत्वात् ।

## सुधासागरः

योऽर्थानां विनिमयः सा परिवृत्तिरित्यर्थः। पौनरुक्त्यं परिहरति—परिवृत्तिरलङ्कार इति। व्याख्यातं च प्रदीपकारैः—परिवृत्तिरिति लक्ष्यालङ्कारनिर्देशः, पूर्वाचार्याणां तथैवोद्देशदर्शनात्। अतो न लक्ष्यलक्षणसन्देहः। समासमैरिति विभागः। विनिमयो हि केनचिद् वस्तुना दत्तेन परकीयस्य कस्यचिदादानाम्। तच्च क्वचित्समेन समस्य, क्वचिदसमेनासमस्य। अन्त्यमपि द्विधा। क्वचिन्न्यूयेनोत्तमस्य, क्वचिदुत्तमेन न्यूनस्येति त्रिविधेयमित्यर्थः। समत्वासमत्वे चोपादेयत्वानुपादेयत्वाभ्यामिति।

तत्राद्यद्वयं यथा—लतेति। शिखरिणी छन्दः। अध्वन्याः पान्थाः। स्फुटमन्यत्। अत्र प्रथमार्धे लास्येन उपादेयतया समस्यामोदस्य, द्वितीयार्धे उपादेयतया उत्तमया दृशा आधिव्याधीनामतादृक्तया न्यूनानां विनिमयः।

**नानाविधप्रहरणैर्नृप संप्रहारे स्वीकृत्य**
**दारुणनिनादवतः प्रहारान्।**
**दृप्तारिवीरविसरेण वसुंधरेयं**
**निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥ ४९९ ॥**

**अत्र न्यूनेनोत्तमस्य ॥**

---

### सङ्केतः

नानेति। विप्रलम्भः। भ्रान्तिः अपायो वा। निर्विप्रलम्भः निश्चितः निर्विघ्नो वा परिरम्भविधिः यस्याः सा तथा। अत्र न्यूनेन प्रहाररूपेण उत्तमस्य भूरूपस्य विनिमयः। इति परिवृत्तिः।

### बालचित्तानुरञ्जनी

तृतीयमुदाहरति नानेति। हे नृप संप्रहारे युद्धे दृप्तशत्रुसमूहेन कर्त्रा नानाविधैः शस्त्रैः कृतान प्रहारान् स्वीकृत्यापि इयं भूः निवर्तितविप्रलम्भः विगतविरहः परिभवविधिर्यस्याः तया वितीर्णा दत्ता यथा भूमिस्त्वां न मुञ्चति तथा दत्तेत्यर्थः। अत्र न्यूनेन प्रहाररूपेण उत्तमभूताया वसुन्धरायाः परिवृत्तिरित्याह अत्रेति।

### काव्यादर्शः

न्यूनपरिवृत्तिः, यथा—'नाने'ति। 'विप्रलम्भो भ्रान्तिरपायो वा। निर्विप्रलम्भो विगतविरहः परिरम्भविधिर्यस्याः। तथा वितीर्णा यथा त्वां न मुञ्चति' इत्यर्थः। अत्र प्रहारस्वीकारेण न्यूनगुणेन पृथ्वीदानस्य उत्कृष्टगुणस्य विनिमयः ॥ १९१ ॥ [२९ ॥]

### विवेकः

नानेत्यादि। विप्रलम्भो भ्रान्तिरपायो वा।

### दीपिका

स्वीकृत्य विसरेण संहत्या निर्गतो विप्रलम्भो वियोगो यत्र तथाभूतः परिरम्भविधिर्यस्या इति विग्रहः।

### साहित्यचूडामणिः

नानाविधेति। वसुन्धराया उत्तमभूतायाः प्रहाररूपेण न्यूनेन परिवृत्तिः ॥ २७ ॥

### सम्प्रदायप्रकाशिनी

नानाविधेति । सम्प्रहारे मिथोयुद्धे प्रहारान् पातान् । अत्र प्रहारान् स्वीकृत्य वसुधा वितीर्णेति न्यूनेन ।

### विस्तारिका

नानेत्यादि । सम्प्रहारे युद्धे, विसरः समूहः, विप्रलम्भः प्रतारणम्, विप्रयोगो वा, तच्छून्यः परिरम्भे विधिः स्वीकारो यस्यामित्यर्थः । परिरम्भ इत्यत्रापीत्यर्थोऽन्तर्भूतः, तथेव पृथ्वीस्वीकारेण तेषां प्रतारणा नास्तीत्यर्थः । यद्वा भवता तस्या वियोगो न भविष्यतीत्यर्थः ।

अत्र पक्षे णिजर्थान्तर्भावो नास्तीति विशेषः ।

### सारबोधिनी

नानेत्यादि । बिसरः समूहः । विप्रलम्भो विप्रयोगस्तच्छून्यः । परिरम्भविधिः स्वीकारो यस्यामित्यर्थः ।

### काव्यप्रदीपः

**'नानाविधप्रहरणैर्नृप संप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान् ।**
**दृप्तारिवीरविसरेण वसुंधरेयं निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥'**

अत्रोत्तमया वसुंधरया निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ।

### आदर्शः

न्यूनेनोत्तमस्याऽऽह—नानाविधेति, हे नृप ! संप्रहारे युद्धे नानाविधप्रहरणैर्दारुणनिनादवतः प्रहारान् स्वीकृत्य दृप्तशत्रुसमूहेन इयं वसुन्धरा अर्थात्तभ्यं वितीर्णा । वसुन्धरा कीदृशी ? निर्गतोऽपास्तस्त्वया सह विप्रलम्भो वियोगो यस्य तादृशः परिरम्भविधिः सम्बन्धविधानं यस्यास्तादृशी । प्रहारेण मृतानां शत्रूणां पृथ्वी त्वया प्राप्ता, तया सह तव वियोगश्च न भविष्यतीत्यर्थः । अत्र प्रहारा अनुपादेयत्वेन न्यूनास्तैरुपादेयत्वेनाधिकाया वसुन्धराया विनिमयः ।

### सुधासागरः

अन्त्या यथा—नानेति ।

विसरः समूहः । निर्गतो विप्रलम्भो वियोगो यस्मात्तादृशः परिरम्भविधिः स्वीकारो यस्यामिति वसुन्धरा-विशेषणम् । स्फुटमन्यत् । वसन्ततिलका छन्दः । 'उक्ता वसन्ततिलका तभजा जगौ ग' इति लक्षणात् । अत्रोत्तमया वसुन्धरया न्यूनानां प्रहाराणां विनिमयः ।

**(सू० १७३) प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।**

**तद्भाविकम्**

भूताश्च भाविनश्चेति द्वन्द्वः । भावः कवेरभिप्रायोऽत्रास्तीति भाविकम् ।

उदाहरणम्—

**आसीदञ्जनमत्रेति पश्यामि तव लोचने ।**

**भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥ ५०० ॥**

आद्ये भूतस्य द्वितीये भाविनो दर्शनम् ॥

---

**सङ्केतः**

भाविकमिति । भूतभाव्यर्थानां लोकोत्तरत्वेन उद्भूतत्वात् अव्यस्तसम्बन्धशब्दसन्दर्भसमर्पितत्वाच्च प्रत्यक्षायमाणत्वम् । भाव इति । कवेर्भावः आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति भावः । स्वभावोक्तौ—कविप्रतिभाविशेषितलौकिकवस्तुस्वभाववर्णने सर्वसाधारण्येन चित्तसंवादसम्भवः । अत्र तु—लोकोत्तरवस्तूनां—स्फुटत्वेन तटस्थतया प्रतीतिः इति । चारुवस्तुवर्णनात् नैषा स्वभावोक्तिः । लौकिकवस्तुगतसूक्ष्मधर्मवर्णने सर्वसाधारण्येन हृदयसंवादसम्भवात् । न चेदं अद्भुतपदार्थदर्शनात् भूतभाविप्रत्यक्षत्वप्रतीतौ काव्यलिङ्गम्, लिङ्गलिङ्गिभावेन अप्रतीतेः । इति भाविकम् ।

**बालचित्तानुरञ्जनी**

भाविकालङ्कारं लक्षयति प्रत्यक्षा इति । लोकोत्तरतया अत्यद्भुतत्वात् भावसंबंधव्यतिरेकेण शब्दसंबन्धसमर्पितत्वाच्च प्रत्यक्षा इवेत्युक्तम् । समासान्तरव्यावृत्त्यर्थमाह । द्वन्द्व इति । प्रतिध्वंसाक्रान्तभूताः प्रागभावाक्रान्ताश्च भाविनः । कवेराशयः । श्रोतरिति प्रतिबिम्बितत्वे नास्तीत्याह[?] भाव इति । भावश्च भावना पुनः पुनश्चेतसि निवेशनम् । उदाहरति आसीदति । कोऽपि पुरुषः स्वनायिकां प्रति कथयति । हे कामिनि, अत्र ते लोचने अञ्जनमासीदिति पश्यामि । स्वाभावेनैव नीलयोस्तत्र लोचनयोः किं मण्डनेन क्षिप्ताञ्जने तव लोचने प्रतिभासेते इत्यर्थः । तवाकृतिंभाविभूषणसंभारां साक्षात्कुर्वे, तवाकृतिरपि भूषणाभावेऽपि रामणीयकं पुष्णाति, अतो भूषणमपि न धारणीयमिति भावः । अत्र पूर्वार्धे भूतस्य लोचनाञ्जनस्य प्रत्यक्षतया प्रतिभासः । उत्तरत्र भविष्यतो भूषणसंभारस्येत्याह अत्रेति ।

**काव्यादर्शः**

अतीतानागतयोरर्थयोरलौकिकत्वेन अद्भुतत्वाद् व्यस्तसंबन्धरहितशब्दसंदर्भसमर्पितत्वाच्च प्रत्यक्षायमाणत्वं भाविकं कवेर्भावस्य श्रोतृभावाभेदाध्यवसितस्य विद्यमानत्वात् । यद्यपि मुक्तकादावपि एतत् संभवति

तथापि प्रबन्ध एव भाविकस्य चारुत्वम्, अत एव अन्यैर्नास्य उदाहरणं दत्तम् । न चेयं सुन्दरवस्तुस्वभाववर्णनात् स्वभावोक्तिः, तस्या लौकिकवस्तुगतसूत्रमधर्मवर्णने सर्वसाधारण्येन हृदयसंवादसंभवात्; तस्या लौकिकवस्तुगत-सूक्ष्मधर्मवर्णने सर्वसाधारण्येन हृदयसंवादसंभवात्; इह तु लोकोत्तराणां वस्तूनां स्फुटतया ताटस्थ्येन प्रतीतिः, नापि अद्भुतपदार्थदर्शनाद् अतीतानागतप्रत्यक्षत्वप्रतीतेः काव्यलिङ्गमिदं लिङ्गलिङ्गभावेनाप्रतीतेः ।

## विवेकः

परिवृत्त्यामन्योन्यधर्माध्यासः, इह त्वेकस्यैकस्मिन्नध्यवसाय इति सङ्गतिः । प्रत्यक्षा इवेति । भूतभाविनः प्रध्वंसाभावप्रागभावावच्छिन्ना अपि भावा यत् पुरः प्रस्फुरन्त इव दृश्यमाना बोध्यन्ते तद्भाविकम् । अन्वर्थतामाह भाव इत्यादि । 'न चेदं भ्रान्तिमान्, भूतभाविनां भूतभावितयैव प्रकाशनात् ।' (अ. स. २२४ पृ.) भूतभाविशब्दस्य परोक्षोपलक्षणत्वे परोक्षाणां स्फुरद्रूपवर्णनमिति व्याख्याने स्वभावोक्तेर्न भिद्यते । किञ्च लौकिके वस्तुगते । सूक्ष्मवर्णने स्वभावोक्तिः, इदन्तु लोकोत्तरत्वेनात्यद्भुतानां वस्तूनां वर्णनेन । यत्र तु लौकिकानामपि स्फुटत्वेन प्रतीतिस्तत्र भाविकत्वस्वभावोक्त्योः समावेशः स्यादेव । अत इह द्वयी गतिः—क्वचिद्वर्णनीयस्य वर्णनावशादेव प्रत्यक्षायमाणत्वं, क्वचित्तु प्रत्यक्षायमाणस्यैव वर्णनम् । तत्राद्यप्रकारविषय एवायमलङ्कारो न द्वितीप्रकारविषय इत्यन्ये । तथा च प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः । अत्यद्भुता स्यात्तद्वाचामनाकुल्येन भाविकमित्यौद्भटे । (का. अ. सा. स. ७९ काः) । शब्दानाकुलता चेति भाविकं तत् प्रचक्षत इति भामहीये लक्षणे (का. अ. ३/५, ९) । व्यस्तसम्बन्धरहितशब्दसन्दर्भसमर्पितत्वं प्रत्यक्षायमाणत्वप्रतिपादकप्रयोजनेनोक्तं कविसमर्पितानामेव धर्माणाम-लङ्कारत्वात्, वस्तुसन्निवेशिनां हिमांशुलावण्यादीनमिव । यदि हि वस्तुसन्निवेशिधर्मगतत्वेनापि भाविकं स्यात्तदा शब्दानाकुलता चेति विशेषोपादानमनर्थकं भवेत् । एवञ्च यत्र वर्णनीयस्य वर्णनावशात् प्रत्यक्षायमाणत्वं तत्रैवाय-मलङ्कारो यत्र तु प्रत्यक्षायमाणधर्मस्य वर्णनं यथा—(अ. स. २२९ पृः) अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो कृतः । अचामरोऽप्येष सदैव वीज्यते विलासबालव्यजनेन कोऽप्ययम् ॥ इत्यादौ तत्र नायमलङ्कार इति । ग्रन्थकर्तुस्तु सामान्येनैव लक्षणं कुर्वतो यदा वास्तवमपि सौन्दर्यं कविनिबद्धं कविनिबद्धवक्तृनिबद्धं वा सकलव-क्तृगोचरीभूतं स्वभावोक्तिवदलङ्कारतया वर्ण्यते तदाऽयमलङ्कार इति भावः । आसीदित्यादि—अत्रेति द्वि(कवि) वचनयोरित्यर्थः । भूषणं ताटङ्कवलयादि, तवाकृतिमेवंविधां भूतप्रायां पश्यामि ।

## दीपिका

भूतभाविनोऽसन्निहिता अप्यर्था वस्तुनो माहात्म्येन साक्षादिव यत् प्रतीयन्ते तदलङ्करणं भाविकम् । भावः कवेरभिप्रायोऽत्रास्तीते निरुक्तमात्रपरं न तु शासनात् । आसीदित्यादि भूतभविष्यतो रञ्जनभूषणसम्भारयोर्वचनयोर्न प्रत्ययार्थकथनपरम् । भाविकमित्यन्तस्येकअन्तत्वादिकणश्चास्त्यर्थेऽप्रस्फुरणमिवानुभूयत इति यथायोगं भाविकद्वयम् । दर्शनमित्यतः परं साक्षादिति शेषः ।

### दर्पणः

भाविकालङ्कारः । प्रत्यक्षा इति । असंभूता अपि भूता भाविन चाम्ना [?] वर्णनामाहात्म्येन मत्साक्षादिव प्रीयन्ते [क्रियन्ते] तदलङ्करणं भाविकमित्यर्थः । नाम निरुक्तिमाह भाव इति । भूतस्या जंनस्य भाविनो दूषणसंभावनस्यादर्शनमित्यथः [र्थः] पूर्वं साक्षादिति शेषः ।

### साहित्यचूडामणिः

भाविकमाह—लोकोत्तरतयात्यद्भुतत्वाद् वास्तवत्वव्यतिरेकेण शब्दसन्दर्भसमर्पितत्वाच्च प्रत्यक्षा इवेत्युक्तम्

समासान्तरशङ्काभङ्गार्थमाह—द्वन्द्व इति । प्रध्वंसाभावविनाभूता भूताः प्रागभावाक्रान्ताश्च भाविनः । कवेर्भाव आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति व्युत्पत्तिरित्याह—भाव इति । भावश्च भावना पुनः पुनश्चेतसि विनिवेशनमादरप्रत्ययेन हृदये धार्यमाणत्वं यत्र योगिनामिव काव्यवेदिनामभियोगः ।

आसीदिति । अत्र पूर्वार्धे भूतस्य लोचनाञ्जनस्य प्रत्यक्षतया प्रतिभासः । उत्तरत्र भविष्यतो भूषणसम्भारस्य । अन्यत्राप्येवमुदाहारि ।

**करोषि पीडां प्रीतिं च निरञ्जनविलोचना ।**
**मूर्त्यानया समुद्वीक्ष्य नानाभरणशोभया ॥ इति ।**

न चेदमतिशयोक्तिः अन्यस्यान्यतयाध्यवसानाभावात्, नह्यत्राभूतं भावित्वेन प्रत्यक्षमप्रत्यक्षत्वेन वाध्यवसीयते । न चेवार्थगर्भीकारात् प्रतीयमानोत्प्रेक्षा न खलु वस्तुवर्तिनमिवार्थमादायोत्प्रेक्षा प्रयुज्यते तस्या अभिमानिकतया प्रतिपत्तृधर्मत्वात् । यदाहुः—अभिमाने च सा योज्या ज्ञानधर्मे सुखादिवत् ॥ इति । नापि काव्यलिङ्गं; जन्यजनकभावाद्यप्रतीतेः, योगिवत् प्रत्यक्षतया प्रतीतेश्च । नापि रसवान् । तत्र रत्यादिचित्तवृत्तीनां साधारण्येन परमाद्वैतज्ञानिवत् प्रतीतेः, ताटस्थ्येन भिन्नसर्वज्ञवत् प्रतीतेश्च । नाप्यस्य शब्दानाकुलताहेतुतया झटित्यर्थसमर्पणात् प्रसादलक्षणे गुणेन्तःपातः । तस्य स्फुटास्फुटोभयवाक्यार्थवर्तितया झटित्यर्थसमर्पणात् प्रसादलक्षणे गुणेन्तः पातः । तस्य स्फुटास्फुटोभयवाक्यार्थवर्तितया झटित्यर्थसमर्पणस्वभावत्वाद्, अस्य झटिति समर्पितस्य स्फुटत्वेन प्रतीतौ स्वरूपप्रतिलम्भात् । नापि वस्तु भूतमात्रं भूतभाविवर्तिनः प्रत्यक्षप्रतिभासलक्षणस्य धर्मस्याधिक्येनोपलम्भवात् । न च भ्रान्तिमान् । भूतभाविनोस्तथात्वेनैव स्फुरणात् । इत्यलमतिसूक्ष्मेक्षिकया ।

### सम्प्रदायप्रकाशिनी

प्रत्यक्षा इवेति । भूताश्च भाविनश्चार्थाः प्रत्यक्षा इव यद् भाव्यन्ते तद् भाविकम् । अत्रोभयी दर्शनस्थितिः । कविसमर्थितानां विच्छित्तीनामलङ्कारत्वाद् वर्णनायातस्यानुभावस्य प्रत्यक्षायमाणत्वं भाविकं, नेन्दुसौन्दर्यादेरिव वस्तुसन्निवेशिनः । अतः शब्दानाकुलतेति भामहेन, व्यस्तसम्बन्धरहितशब्दसमर्पितत्वमित्युद्भटेन चानाकुलशब्दसमर्पितं प्रत्यक्षायमाणत्वं भाविकमुक्तम् । रुचकेन तयोरेव वर्त्मानुसरता ग्रन्थकृन्मतमप्यासूचितम् । ग्रन्थकृता पुनः वस्तुसन्निवेशिनो निसर्गवशादेव प्रत्यक्षायमाणस्यानुभवाल्लौकिकस्यापि स्वभावोक्तिनयेन कविवर्णनया विच्छित्तिविशेषसम्भवाद् अनागतविषयत्वादलङ्कारान्तरक्लृप्तेर्गौरवादिदोषाच्च भाविकत्वमेव सिद्धान्ति-

तम्। अतः शब्दानाकुलत्वं विशेषमनपेक्ष्य सर्वभेदोपसङ्ग्रहाय 'प्रत्यक्षा इव यद् भावाः क्रियन्ते भूतभाविनः' इत्येतावदेव लक्षणं कृतम्।

इदं व्याचष्टे—भूताश्चेति। द्वन्द्व इति प्रत्येकं प्राधान्याभिधानाद् विषयद्वयं दर्शितम्। लक्ष्यपदं निर्वक्ति—भावः कवेरिति। कविभावस्य सार्वत्रिकत्वेऽपि तदेकप्राधान्यादिह व्यपदेशहेतुता।

अत्र च,

**"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।**
**येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥"**

इत्यादिकस्य वर्णनायातस्य प्रकारस्याविवादसिद्धत्वाद् भूतभाविविषयतयोदाहृतकल्पतामभिसन्धाय द्वितीयं प्रकारमुदाहरति—आसीदञ्जनमिति। तव लोचनं पूर्वेद्युरञ्जनमत्रासीदिति पश्यामि दर्शनकाले क्षालितप्य-ञ्जनं स्वाभाविकसौन्दर्यवशात् साक्षादनुभवामीत्यर्थः। कुर्व इत्यात्मनेपदाद् दर्शनविषयस्यानन्दस्य कर्त्रभिप्रायता। एवं भाविन्यपि भूषणसम्भारे तद्योगिनीमिव तवाकृतिम प्रत्यक्षयामि।

अत्र भेदद्वयमुदाहृतमुद्घाटयति—अत्राद्येऽर्ध इत्यादि। एवम् 'अनुभावविशेषात्तु सेनापरिगताविव' इत्यादावपि ज्ञेयम्। एवमादौ

**काव्यप्रकाशसूत्राणां व्याख्याबुद्ध्या विरोधिनः।**
**लिखिता रुचकग्रन्थाः सान्धिविग्रहिकेण धिक्॥**

### मधुमती

प्रत्यक्षा इवेति। भूतभाविनः भावाः यत् प्रत्यक्षाः इव क्रियन्ते निर्दिश्यन्ते तत् भाविकं इत्यन्वयः।

नन्वत्र षष्ठीसमासादेः अविवक्षितत्वात्, कर्मधारये भेदानुपपत्तेः, द्वन्द्वे = 'भूतं च भावि च' इति विग्रहे एकवद्भावपक्षे 'भूतभावी'ति, तदभावपक्षे 'भूतभाविनौ' इति च स्यात्, अत आह—भूताश्चेति। भाविकपदव्यु-त्पत्तिमाह—भावः इति। कविना तन्निबन्धने भूताः भाविनोऽपि विवक्षाविषयत्वात् प्रत्यक्षविषयत्वेन निर्दिश्यन्ते इति तद्विवक्षारूपभावमूलकत्वात् भाविकमित्युच्यते इत्यर्थः। 'अवर्तमानस्य वर्तमानतया निर्देशः' इति तु उभया-नुगतं रूपम्। इति भाविकम्।

### विस्तारिका

प्रत्यक्षा इवेति। स्फुटं प्रीयमाना इत्यर्थः। न चेयं भ्रान्तिः, भूतभाविनां नाभूतभावित्वेनैव प्रकारज्ञानात्, परन्तु कविना भूतभाविनावपि विषयौ प्रत्यक्षतुल्यस्फुटतरप्रतीतिविषयतया प्रत्यक्षत्वेन विवक्षित्वात् तथा निर्दिश्यते, अत एवालङ्कारत्वं विवक्षारूपभावमूलकत्वाद् भाविकमिति संज्ञा चेति भावः।

ननु भूतभाविन इत्यत्रेतरेतरद्वन्द्वयोर्भूतभाविनौ भूतभाविनामिति वा रूपं प्राप्नोतीत्यत आह—भूतश्चेति। पदार्थमाह—भाव इत्यादि।

**आसीदेति—अतीताञ्जनयुक्ते लोचने पश्यामीत्यर्थः ।**

**एवं भाव्यलङ्कारसम्बन्धान्तराकृतिं साक्षात्कुर्वं इत्यर्थः ।**

यद्यप्युभयत्रापि विशेष्यस्य वर्तमानत्वेन साक्षात्कारविषयत्वान्न वैचित्र्यम्, तथापि विशेषणयोरञ्जनालङ्कारयोपि साक्षात्कारविषयत्वेन विवक्षणाद् वैचित्र्यमिति ।

## सारबोधिनी

प्रत्यक्षा इवेति । स्फुटं प्रतीयमाना इत्यर्थः । न चेयं भ्रान्तिः । भूतभाविनां भूतभावित्वेनैव प्रकाशनात् । परन्तु कविना भूतभाविनावपि प्रत्यक्षतुल्यप्रतीतिविषयतया प्रत्यक्षत्वेन विवक्षितत्वात् तथा निर्दिश्यते । अत एवालङ्कारत्वं विवक्षारूपम् । भावमूलकत्वात् भाविकमिति संज्ञा । ननु भूतभाविन इत्यत्रेतरेतरसमाहारद्वन्द्वयोर्भूतभाविनौ भूतभावीति रूपं स्यादिति आह भूताश्चेति । आसीदिति । अतीताञ्जनयुक्ते लोचने पश्यामीत्यर्थः । भाव्यलङ्कारसंबद्धात् तवाकृतिं साक्षात्कुर्वे इत्यन्वयः यदाह । उभयत्रापि विशेष्यस्यावर्तमानतया साक्षात्कारविषयतया न वैचित्र्यं तथापि विशेषणयोरञ्जनालङ्कारयोरप्यसाक्षात्कारविषयत्वेन विवक्षणात् वैचित्र्यमिति ।

## काव्यप्रदीपः

**प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।**

**तद्भाविकं**

भूतभाविन इति द्वन्द्वः, न कर्मधारय इत्यविरोधः । भूता भाविनो भावा यत्रप्रत्यक्षा इव क्रियन्ते प्रत्यक्षतयाभिधीयन्ते तद्भाविकम् । भावः कवेरभिप्रायो निश्चयादिप्रतीतिविषयकोऽत्रास्तीति व्युत्पत्तेरित्यर्थः । उदाहरणम्—

**'आसीदञ्जनमत्रेति पश्यामि तव लोचने ।**
**भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥'**

अत्र पूर्वार्धे भूतस्याञ्जनस्य उत्तरार्धे भाविनो भूषणसंभारस्य प्रत्यक्षतया भिधानम् ।

## काव्यप्रकाशखण्डनम्

प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः । (का. ११४, पू०)

तद्भाविकम्,

उदाहरणम्—

**आसीदञ्जनमत्रेति पश्यामि तव लोचने ।**
**भाविभूषणसंभारां साक्षात् कुर्वे तवाकृतिम् ॥**

## आदर्शः

भाविकालङ्कारमाह—प्रत्यक्षा इवेति। 'क्रियन्ते' शब्देन स्वजन्यधीविषयाः क्रियन्ते। संज्ञाव्युत्पत्तिमाह—भाव इति। अभिप्रायश्च प्रत्यक्षप्रायत्वबोधनवशाद् भूतभाविपदार्थस्याऽश्रयोत्कर्वविषयो बोध्यः। आसीदिति। यौवनोद्भेदाच् चक्षुष्यञ्जनं विनापि तच्छोभा, भूषणाभावेऽपि शरीरे तच्छोभा जातेत्यर्थः।

## सुधासागरः

भूताश्चेत्यादि। भूतभाविन इति द्वन्द्वो न कर्मधारय इत्यविरोधः। भूतभाविनो भावा यत् प्रत्यक्षा इव क्रियन्ते प्रत्यक्षतयाऽभिधीयन्ते तद् भाविकम्। भावः कवेरभिप्रायो निश्चयादिप्रतीतिविषयकोऽत्रास्तीति व्युत्पत्तेरित्यर्थः। उदाहरणम्—आसीदिति स्पष्टम्। अत्र पूर्वार्धे भूतस्याञ्जनस्य, उत्तरार्धे भाविनो भूषणसम्भारस्य प्रत्यक्षतयाऽभिधानम्।

(सू० १७४) काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ ११४ ॥

वाक्यार्थता यथा

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्।
नमन् मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाक्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ५०१ ॥

---

सङ्केतः

हेतोरिति। अयं भावः—यत्र हेतुः कारणरूपः तत् काव्यलिङ्गम्। ज्ञापकहेतौ तु अनुमानालङ्कारः। काव्यग्रहणात् काव्यलिङ्गे व्याप्तिपक्षधर्मतोपसंहारादयो न स्युः। वाक्यार्थवत् पदार्थोऽपि एकः अनेकश्च।

वपुरिति। अत्र पादत्रयार्थः अनेकवाक्यार्थरूपः अन्त्यपादार्थहेतुः। तथा वपुः प्रादुर्भावात् इत्युक्त्या अनुमानमप्यत्रास्ति। परं तेन सह भिन्नदेशत्वाभावात् वाक्यार्थीभूतस्य हेतोः न संसृष्टिः। किन्तु अनुमानस्य उत्थापकतया वाक्यार्थीभूतहेतुं प्रति अङ्गभावे सङ्करः। संप्रति त्वां नमन्मुक्तः सन् अग्रेऽपि भाविनि काले निस्तनुः सन् अनतिमान् इत्यर्थः। यथा—घटकारणं मृद्घटरूपेण परिणमति, तथा अपराधद्वयस्य जनकं अनमनं अपराधतया अत्र परिणतम्। एकवाक्यार्थतोदाहरणं तु—

'मनीषिताः सन्ति गृहेऽपि देवताः
तपः क्व वत्से! क्व च तावकं वपुः?
पदं सहेत भ्रमरस्य पेशलं
शिरीषपुष्पं, न पुनः पतत्रिणः ॥'

इत्यादौ ज्ञेयम् ॥

सङ्केतः (रुय्यकः)

वपुः प्रादुर्भावादिति—अत्रानुमानसद्भावेऽपि न तेन सह वाक्यार्थीभूतस्य हेतोः संसृष्टिव्यवहारः, उभयोरपि भिन्नदेशत्वाभावात्। अनुमानन्तु हेतोरुत्थापकतयोपकारकमिति भवत्यङ्गाङ्गिसङ्करः, किन्तु हेतुलक्षणमत्रास्तीत्येतावदभिसन्धाय हेतोरिदमुदाहृतम्। प्रणयिन्य आश्वस्ताः।

## बालचित्तानुरञ्जनी

काव्यलिङ्गालङ्कारं लक्षयति काव्येति। अत्र काव्यरूपो हेतुः वाक्यार्थस्थित्या विशेषणद्वारेण पदार्थस्थित्या वा लिङ्गत्वेन निबध्यते तत् काव्यलिङ्गमित्यर्थः। वाक्यार्थता, अनेकपदार्थता, एकपदार्थता चेति त्रैविध्यम् तत्राद्यमुदाहरति वपुरिति ! हे पुरारे। पूर्वस्मिन् जन्मनि भवन्तं क्षणमपि न प्रणतवानस्मि इतीदं वपुः प्रादुर्भावात् मया अनुमितम्। अन्यथा शरीरोत्पत्तिर्न स्यादित्यर्थः। संप्रति न मुक्तः अतनुरहं अग्रे न नमामि। हे महान् महेश तदिदमपराधद्वयमपि क्षन्तव्यम्।

## काव्यादर्शः

यत्र हेतुः कारणरूपो वाक्यार्थगत्या निबध्यते विशेषणत्वेन वा पदार्थगत्या लिङ्गत्वेन तत् काव्यलिङ्गम्। तर्कवैलक्षण्यार्थं काव्यग्रहणम्। न ह्यत्र व्याप्तिपक्षधर्मोपसंहारादयः क्रियन्ते। वाक्यार्थश्च अनेक एको वा, एवं पदार्थोऽपि।

'वपुः' इति। 'अनुमितम्' इति। अत्रावयवेऽनुमानालंकारः। 'अतनुरशरीरः। अग्रे भाविनि काले। इह च वृत्ते प्राग्भवकाले भाविनि च काले यदनमनलक्षणमपराधद्वयकारणं तदेवापराधतया परिणतं सद् अत्र वाक्यार्थो जातः। अतो नमनलक्षणेऽत्र अपराधहेतुरेव वाक्यार्थः। अत्र पादत्रयार्थोऽनेकवाक्यार्थीभूतस्य हेतोः संसृष्टिव्यवहारः, उभयोरपि भिन्नदेशत्वाभावात्। अनुमानं तु हेतोरुत्थापकया उपकारकमिति भवत्यङ्गाङ्गिसंकरः, किं तु हेतुलक्षणमत्रास्तीति एतदभिसंधाय हेतोरिदमुदाहृतम्। अनमनं ह्यपराधद्वयस्य जनकं, तदेव चापराधतया परिणतं, यथा घटकारणं मृद् घटरूपतया परिणमति। एकवाक्यार्थता यथा—

**मनीषिताः सन्ति गृहेऽपि देवतास्तपः क्व वत्से क्व च तावकं वपुः॥**

—अत्र वरप्राप्तिहेतुभूततपोनिषेधे 'मनीषिताः' इत्येनकवाक्यार्थरूपो हेतुर्निर्दिष्टः।

## विवेकः

इदानीं हेतुगर्भानलङ्कारल्लँक्षयति काव्यलिङ्गमिति। वाक्यपदार्थेति—वाक्यार्थता पदार्थता चेति। तदयमर्थः—"यत्र हेतुः कारणरूपो वाक्यार्थगत्या विशेषणद्वारेण वा पदार्थगत्या लिङ्गत्वेन निबध्यते तत्काव्यलिङ्गं नामालङ्कार इति। व्याप्तिधर्मतोपसंहारादियुक्ततर्कलिङ्गवैलक्षण्यार्थं काव्यग्रहणम्। वाक्यार्थगत्या च निबध्यमानो हेतुत्वेनैवोपनिबद्धव्यो नोपनिबद्धस्य हेतुत्वम्। अन्यथाऽर्थान्तरन्यासान्नास्य भेदो भवेत्" (अ. स. १८१ पृ.)। यथा वपुः प्रादुर्भावादित्यादि। अत्रापराधद्वये पादत्रयोपनीतमनमनद्वयं हेतुः। तदिदमित्येनेनानमस्यापराधरूपतयाऽध्यवसानेऽपि वास्तवं हेतुत्वमवगम्यत इत्युदाहरणता।

## दीपिका

पञ्चम्यादिविभक्तिपदात् प्रतिपादितस्य हेतोः संसृष्टनैकपदरूपवाक्याबोध्यत्वे संसृष्टैकात्म्यप्रतिपादनराहित्येन च वाक्यरूपवाचकानेकावयवप्रत्येयत्वे एकपदेबोध्यत्वे वा त्रिधा काव्यलिङ्गम्। जन्मनीत्यस्य विशेषणं

पुरेति । सम्प्रति नमन्नग्रे मुक्तः शरीरस्ततोऽनतिभाक् कायव्यापारूपनमनायोग्यः । यद्यप्यस्यामप्युदाहृतौ नतिमत्त्वे तनुत्वं तत्र च मुक्तत्वपदार्थरूपो हेतुरिति तृतीयप्रकारकाव्यलिङ्गसम्भवः, तथापि प्रपञ्चार्थे पृथगुदाहरणम् ।

## दर्पणः

काव्यलिङ्गालङ्कारः काव्येति । हेतोः क्वचिद्वाक्यार्थत्वं, क्वचिद्वाक्यावयवरूपा नेकपदार्थत्वं, क्वचिदेक-पदार्थत्वमिति त्रिधा काव्यलिङ्गमित्यर्थः । हेतुत्वस्य वैचित्र्याभावात्वालङ्कारा [न्नालङ्कारता] । पुरेति । जन्मनीत्यस्य विशेषणम् । अनभिमानयुक्तस्य कायराहित्याति तद्व्यापाररूपेन नमनेन रहितः ।

युष्मत्सपर्यासुखेत्यादेः समासत्वादेकपदत्वम् । अत्र यद्यपि अपरजन्मन्यनमनेकपदैकपदार्थरूपः ।

## साहित्यचूडामणिः

काव्यलिङ्गमिति । यत्र कारणरूपो हेतुर्गम्यार्थस्थित्या विशेषणद्वारेण वा पदार्थस्थित्या लिङ्गत्वेन निब-ध्यते तत् काव्यलिङ्गमित्याह—हेतोरिति । यत् सूत्रं "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम्" (अलङ्कार सू० ५८) इति । तर्कवैलक्षण्यार्थ काव्यग्रहणम् । नखल्वत्र व्याप्तिपक्षधर्मोपसंहारादि क्रियते । वाक्यार्थरूपस्य चास्य हेतुत्वेनोप-निबन्धः । नोपनिबद्धस्य हेतुत्वं कर्त्तव्यम् । अन्यथार्थान्तरन्यासत्वापत्तेः पदार्थत्वं द्विधा, अनेकत्वादेकत्वाच्च । क्रमादुदाहरणानि ।

## सम्प्रदायप्रकाशिनी

काव्यलिङ्गमिति । हेतोर्जनकस्य । अर्थतेति प्रत्येकमभिसम्बध्यते वाक्यार्थता पदार्थता चेति । काव्यग्रहो व्याप्तिपक्षधर्मतानपेक्षया लौकिकलिङ्गवैधर्म्याय ।

वपुरिति । वपुः प्रादुर्भावात् कार्यात् पुरा जन्मनि अनमनं कारणं, सम्प्रति नमतो मुक्तेः कारणादग्रेऽप्यनमनं कार्यमनुमितम् । अनुमितेर्लौकिकत्वम् । अनुमितेर्लौकिकत्वाद् नायमनुमानालङ्कारः । ते एते वपुः प्रादुर्भावमुक्ती यथावदनमनद्वयस्य जन्यजनकतया लिङ्गे ।

## मधुमती

हेतोर्वाक्येति । तथाच हेत्वभिधानं काव्यलिङ्गमित्यर्थः । अभिधानं च वाक्यार्थेन पदार्थेन वा व्यञ्जनम् ।

## विस्तारिका

हेतोर्वाक्यपदार्थतेति । तथा च हेत्वभिधानं काव्यलिङ्गमित्यर्थः ।

अभिधानं च वाक्यार्थत्वेन पदार्थत्वेन वा ।

## सारबोधिनी

काव्यलिङ्गमिति । वपुरिति । प्रादुर्भावादुत्पत्तेः । प्रणतेति । यद्वपुर्भस्मेति । विभुना शम्भुना । अपराधद्व-यमिति । अत्र यद्यपराधद्वयेऽनमनद्वयात्मकेऽनमनद्वयं न हेतुस्तथापि अपराधद्वये अपराधवृत्तिद्वित्वे अहेतुरित्यर्थः

करणीयः। तथाऽनमनवृत्तिद्वित्वेऽनमनयोः स्वगोचरापेक्षाबुद्धिद्वारां प्रयोजकत्वात्। प्रकृते च प्रयोजकसाधारणस्यैव हेतुत्वस्य विवक्षणादिति तन्न। द्वित्वस्य द्वीतरावृत्तित्वात् तस्य पदार्थान्तरत्वस्वीकृन्मतेऽपि द्वित्वस्यापेक्षाबुद्धिव्यङ्ग्यत्वम्। न तु तद्धेतुत्वमिति, तस्य नित्यत्वात्। यतो वस्तुनो नमनद्वयादपराधद्वयं प्रत्यवादिरूपमन्यदेवेति नासङ्गतिरिति। यद्यप्यनेकपदार्थतायां वाक्यार्थत्वेनैव पार्थक्यं तथापि वाक्यार्थपदेन महावाक्यार्थस्याभिमतत्वात्। अवान्तरवाक्ये नानापदार्थताभिधानमिति।

### काव्यप्रदीपः

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ २८॥**

अत्र विवक्षितविवेकेन हेतुवचनं काव्यलिङ्गमिति लक्षणम्। वाक्यपदार्थतेति विभागः। वाक्यार्थता पदार्थता चेत्यर्थः। तत्र वाक्यार्थता यथा—

**'वपुः प्रादुर्भावादनुमितमिदं जन्मनि पुरा**
**पुरारे नैवाहं क्वचिदपि भवन्तं प्रणतवान्।**
**नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिमा-**
**न्महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥'**

अत्र पुरा क्वचिदपि नाहं भवन्तं प्रणतवान्। अग्रेऽप्यहमनतिमानित्यवान्तरवाक्ययोरर्थोऽनमनमपराधे हेतुः।

### काव्यप्रकाशखण्डनम्

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।**
**अत्र सदसद्व्यक्तिहेतुत्वं श्रवणार्हत्वे हेतुः।**

### आदर्शः

काव्यलिङ्गालङ्कारमाह—काव्यलिङ्गमिति। क्रियान्वयात् समाप्तत्वे वाक्यम्, तदनन्वयादसमाप्तत्वे पदम्। अयमेव हेत्वलङ्कारोऽपीति स्मर्त्तव्यम्।

वपुरिति। हे पुरारे, अहं पुरा क्वचिदपि जन्मनि भवन्तं न प्रणतवान्, इदं वपुःप्रादुर्भावादनुमितम्। नमने सति मुक्तत्वेन वपुः प्रादुर्भावो न स्यादित्यर्थः। अग्रे भाविकालेऽप्यहमनतिभाक्, यतः संप्रति नमन्नेव मुक्तः सन् अतनुः, शरीरसाध्यत्वादेव नतेः। तत्तस्माद् हे महेश, इदं पूर्वापरकालयोरनमनादपराधद्वयमपि क्षन्तव्यम्। न चापराधस्य विहितनमनाकरणाधीनप्रत्यवायरूपत्वेन मुक्तौ सत्यां तदभावात् कथं क्षमाप्रार्थनमिति वाच्यम्, शास्तिकरणार्हतया ज्ञेयत्वस्यैवात्रापराधत्वात्। अत्र न प्रणतवानिति क्रियया समाप्तस्य वाक्यस्यार्थोऽनमनम् अपराधद्वये जनको हेतुः।

## सुधासागर:

हेत्वभिधान वाक्यलिङ्गमित्यर्थ: । अभिधानं च वाक्यार्थेन पदार्थेन वेति विभाग: । व्याख्यातं च प्रदीपकारै: अत्र विवक्षितविवेकेन हेतुवचनं काव्यलिङ्गमिति लक्षणम् । स्वतोऽनुपपद्यमानार्थोपपादकहेतोर्वचनं काव्यलिङ्गमित्यर्थ: । वाक्यपदार्थतेति विभाग: । वाक्यार्थता पदार्थता चेत्यर्थ इति । ननु साभिप्रायपदार्थविन्यसनरूपात् परिकरात् काव्यलिङ्गस्य किं भेदकमिति चेत्, उच्यते । परिकरे पदार्थवाक्यार्थबलात्प्रतीयमानोऽर्थो वाच्योपकारकतां भजत इति । वाक्यार्थहेतुतामुदाहरति—वपुरिति ।

हे पुरारे त्रिपुरशत्रो पुरा जन्मनि पूर्वजन्मनि प्राय: क्षणमपि भवन्तं न प्रणतवान्, न क्वचिदपीति पाठे यत्र कुत्रापि वर्त्तमानं न प्रणतवान् नमस्कारं न कृतवान्, इदं मया वपु: प्रादुर्भावात् शरीरोत्पत्तिरूपलिङ्गादनुमितम् । सम्प्रति नमन् सन् मुक्तोऽहमतनु: देहाभिमानरहित इत्यग्रेऽप्यनतिभाक् । मुक्तस्य पुनर्देहप्राप्त्यभावेनाग्रेऽपि प्रणामासम्भव इति भाव: । हे महेश तदिदं भूतभविष्यानमनरूपमपराधद्वयं क्षन्तव्यमित्यर्थ: । शिखरिणी छन्द: । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात् । अत्र 'पुरा क्वचिदपि नाहं भवन्तं प्रणतवान्' 'अग्रेऽप्यहमनतिभाक्' इत्यवान्तरवाक्ययोरर्थोऽनमनमपराधद्वये हेतु: ।

अनेकपदार्थता यथा

**प्रणयिसखीसलीलपरिहासरसाधिगतै-**
**र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।**
**वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः**
**पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ५०२ ॥**

---

### सङ्केतः

प्रणयीति। इयं मालतीवधोद्यतमघोरघण्टं प्रति माधवोक्तिः। इह शस्त्रोपक्षेपरूपो हेतुः 'शस्त्रं' इति, 'उपक्षिपतः' इति च अनेकपदार्थतया उक्तः। पूर्वत्र वाक्यार्थगत्या हेतुः लिङ्गत्वेन बद्धः। अत्र तु 'शस्त्रमुपक्षिपतः' इति विशेषणत्वेन पदार्तगत्या बद्धः इति भावः।

### बालचित्तानुरञ्जनी

द्वितीयमुदाहरति प्रणय इति। अघोरघण्टः मालतीं घ्नन् माधवेन संबोधितः। हे दुरात्मन् प्रिया सखीस-लीलपरिहाससाधिगतैः ललितशिरीषपुष्पहननैरपि ताम्यति। तत्र वपुषि शस्त्रं उपक्षिपतः तव शिरसि अकाण्डयम-दण्ड इव मदीयः एष भुजः पतति।

### काव्यादर्शः

'प्रणयी'ति। अघोरघण्टो मालतीं घ्नन् माधवेन संबोधितः। अत्र शस्त्रापक्षेपलक्षणो हेतुः 'शस्त्रम्' इत्युपक्षिप्तः इति च व्यवच्छेदकत्वेन अनेकपदार्थतया उक्तः। यथा वा—

**मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन् माम्।**
**व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि॥**

—अत्र 'समबोधयन्' इति संबोधने 'व्यापारयन्त्यः' इत्यादिमृगी विशेषणत्वेन अनेकः पदार्थहेतुरुक्तः।

### दीपिका

अकाण्डे यमदण्डोऽतर्कितोपनतमभदण्ड इत्यर्थः। अत्र शस्त्रोपक्षेपस्य विशकलितपदात्मवत् पदबोद्ध-व्यम्, न तु समस्तवाक्यबोद्धव्यम्। सूर्यस्यालोकः प्रकाशोऽनुभव इति यावत्।

**सम्प्रदायप्रकाशिनी**

काव्यलिङ्गमिति । हेतोर्जनकस्य । अर्थतेति । प्रत्येकमभिसम्बध्यते वाक्यार्थता पदार्थता चेति । काव्यग्रहो व्याप्तिपक्षधर्मतानपेक्षया लौकिकलिङ्गवैधर्म्याय ।

वपुरिति । वपुः प्रादुर्भावात् कार्यात् पुरा जन्मनि अनमनं कारणं, सम्प्रति नमतो मुक्तेः कारणादग्रेऽप्यनमनं कार्यमनुमितम् । अनुमितेर्लौकिकत्वम् । अनुमितेर्लौकिकत्वाद् नायमनुमानालङ्कारः । ते एते वपुः प्रादुर्भावमुक्ती यथा वदनमनद्वयस्य जन्यजनकतया लिङ्गे ।

**मधुमती**

प्रणयीति । इयं मालतीवधोद्यतमघोरघण्टं प्रति माधवोक्तिः । इह शस्त्रोपक्षेरूपयो हेतुः 'शस्त्रं' इति, 'उपक्षिपतः' इति च अनेकपदार्थतया उक्तः । पूर्वत्र वाक्यार्थगत्या हेतुः लिङ्गत्वेन बद्धः । अत्र तु 'शस्त्रमुपक्षिपतः' इति विशेषणत्वेन पदार्थगत्या बद्धः इति भावः ।

**काव्यप्रदीपः**

अनेकपदार्थता यथा—

**'प्रणयिसखीसलीलपरिहासरताधिगतै-**
**र्ललितशिरीषपुष्पहननैरपि ताम्यति वत् ।**
**वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः**
**पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥'**

अत्र शस्त्रोपक्षेपो भुजपाते हेतुः । न चायं वाक्यार्थः । शस्त्रमुपक्षिपत एतावन्मात्रस्यावाक्यार्थत्वात् । तत्र वपुषि वधाय शस्त्रमुपक्षिपत इत्यस्यापि न वाक्यत्वम् । विशेषणत्वादिति । तदर्थस्यापि हेतुत्वे न वाक्यार्थस्य हेतुत्वमिति ।

**काव्यप्रकाशखण्डनम्**

**तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।**
**अत्र सदसद्व्यक्तिहेतुत्वं श्रवणार्हत्वे हेतुः ।**

**आदर्शः**

पदार्थतायामुदाहर्त्तव्यायां पदस्यानेकत्वैकत्वभेदेन द्वैविध्यात् प्रथममनेकपदार्थतामाह—प्रणयीति । मालतीं हन्तुमुद्यतमघोरघण्टं प्रतिमाधवस्योक्तिरियम् । यद् वपुः प्रणयीत्यादिनाऽधिगतैः प्राप्तैः ललितशिरीषपुष्पहननैरपि ताम्यति, तत्र वपुषि वधाय शस्त्रमुपक्षिपतस्तव शिरसि ममैव भुजोऽकाण्डमदण्ड इव पततु इत्यन्वयः । अत्र वधाय शस्त्रमुपक्षिपत इति क्रियाऽसमाप्त्या वाक्यतामनापन्नानां विभक्त्यन्तानेक पदानामर्थो भुजपाते जनको हेतुः ।

### सुधासागरः

प्रणयिनः प्रियस्य सख्याः सलीलंपरिहासरसेनाधिगतैः शिरीषपुष्पहननैः कोमलतरकुसुमापातनैरपि यद् वपुस्ताम्यति तत्र वपुषि वधाय शस्त्रमुपक्षिपतः शरं चालयतस्तव शिरसि ते मूर्ध्नि एषः करालो भुजो मद्बहु-दण्डोऽकाण्डेकाले यमदण्ड इवपतत्वित्यर्थः। इव पतत्वित्यर्थः। नर्कुटकं छन्दः। 'यदि भवतो नजौ भजजला गुरु नर्कुटकम्' इति लक्षणात्।

अत्र शस्त्रोपक्षेपो भुजपाते हेतुः। न चायं वाक्यार्थः। शस्त्रमुपक्षिपत एतावन्मात्रस्यावाक्यार्थत्वात्। 'तत्र वपुषि वधाय शस्त्रमुपक्षितः' इत्यस्यापि न वाक्यत्वम्, विशेषणत्वादिति तदर्थस्यापि हेतुत्वेन न वाक्यार्थस्य हेतुत्वमिति।

एकपदार्थता यथा

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं
हा सोपानपरंपरां गिरिसुताकान्तालयालंकृतिम्।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामानि महामोहे निधीयामहे ।। ५०३ ।।

एषु, अपराधद्वये पूर्वापरजन्मनोरनमनम् भुजपाते शस्त्रोपक्षेपः, महामोहे सुखावलोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः ॥

---

सङ्केतः

भस्मेति। अत्र महामोहे सुखालोकोच्छेदित्वं हुतेः विशेषणतया एकपदार्थम्। मोक्षस्य महामोहरूपणात् रूपकामपि। इति काव्यलिङ्गम्।

बालचित्तानुरञ्जनी

तृतीयमुदाहरति भस्मेति। समुत्पन्नशिवप्रसादस्य कस्यचिन्महापुरुषस्य वचनम्। हे भस्मोद्धूलन! भवते स भद्रमस्तु। हे रुद्राक्षमाले ते शुभमस्तु। महेशगृहालङ्कारभूतां सोपानपरंपरां हा कष्टम्। "अभितः" इत्यादिना हायोगे द्वितीया। हे सोपानपरम्परे त्वमपि त्यक्ष्यस इति कष्टम्। अद्य आराधनतोषितेन विभुना महेशेन युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे। वपुः प्रादुर्भावादिति प्रथमश्लोके पूर्वऽस्मिन् नये च जन्मनि यदनमनलक्षणमपराधद्वयकारणं तदेवापराधतया परिणतं तत्र वाक्यार्थो जातः। अतो नमनलक्षणो अपराधहेतुरेव वाक्यार्थः। प्रणय इत्यादिद्वितीयश्लोके शस्त्रोपक्षेपलक्षणो हेतुः। पतिभुज इत्येतत्पदद्वयार्थः लक्षणकारतया परिणतः। भस्मोद्धूलनेत्यादितृतीयश्लोके सुखालोकोच्छेदित्वलक्षणो हेतुर्महामोहलक्षणैकपदार्थतया परिणत इत्याह एष्विति। कारकोऽत्र हेतुः ज्ञापको हेतुः पुनरनुमानालङ्कारे। अस्य हेतुत्वेनोपनिबद्धस्य हेतुत्वं कर्त्तव्यम्। अन्यथा अर्थान्तरन्यासापत्तेरिति द्रष्टव्यम्।

काव्यादर्शः

'भस्मे'ति। अत्र महामोहे सुखालोकोच्छेदित्वं हेतुर्विशेषणद्वारेण एक पदार्थतया उक्तम्।

विवेकः

एतदेवाभिसन्धायाह—अपराधद्वये पूर्वापरजन्मनोरनमनं हेतुरिति। "यद्यप्यत्रानुमानसद्भावस्तथापि न तेन सह वाक्यार्थीभूतस्य हेतोः संसृष्टिव्यवहारः, उभयोरपि भिन्नदेशत्वाभावात्। अनुमानन्तु हेतोरुत्थापकतयोका-

रकमिति भवत्यङ्गाङ्गिसङ्करः। किन्तु लक्षणमत्रास्तीत्येतावदेवाभिसन्धाय हेतोरिदमुदाहृतम्" (रु. सं. ६७ पृ:)। प्रणयिन्य आश्वस्ताः, ललितानिमृदूनि। यद्वपुस्ताम्यति खिद्यते तत्र शस्त्रं पिपातयिषोस्तव शिरस्ययं सखड्गो भुजः पतत्वित्यत्राकाङ्क्षाविच्छेदाभावाद् भुजपाते सामानाधिकरण्यवैयधिकरण्याभ्यामुपात्तविशेषविशिष्टशस्त्रोपक्षेपो न वाक्यार्थतां प्रतिलभत इति हेतोरनेक पदार्थता। यथा वा—आलोअंत दिसाउ ससंत जंभंत गीत रोअंत। मुज्झंत पडंत हसंत पहिअ किं ते पउत्थेण। (स. क. आ. ५/२६७) इति। भस्मेत्यादि—भस्मोद्धूलनेति सम्बोधनम्। कान्तालयालङ्कृतिः सोपानपरम्पराविशेषणम्। हा योगादिद्वितीया। निधीयामहे निक्षिप्ताः स्मः। अत्र महामोह इत्य सपर्यासुखालोकोच्छेदिनीति विशेषणद्वारेण पदार्थरूपो हेतुर्निदिष्टः। यथा वा—'यद्विस्मयस्तिमितमस्तमितान्यभाव'-मित्यादौ (मा. मा. १/२२)। अत्रास्तमितान्भावमित्यत्र विस्मयस्तिमित विशेषणद्वारेण पदार्थरूपो हेतुर्निर्दिष्टः।

## दीपिका

लोकोच्छेदिनीति समस्तत्वादैकपद्यम्। उक्तरूपोवाक्यानेकपदैकपदार्थरूपो बोधननिदानत्वेनाश्रयभूते शब्दे वसतीति वस्तु।

## साहित्यचूडामणिः

व्याचष्टे—एष्विति। वाक्यार्थतायामेकानेकपदार्थतायां चोदाहृतेषु। वपुरित्यादावपराधद्वये क्षन्तव्यतया प्रार्थिते पूर्वापरजन्मनोरनमनं प्रणामाभावो जनको हेतुः वपुःप्रादुर्भा वान्नामन्नित्यादिवाक्यार्थरूपः। प्रणयीत्यादौ भुजपाते शस्त्रोपक्षेप उत्पादको हेतुः शस्त्रमुपक्षिपत इत्यनेकपदार्थरूपः भस्मेत्यादौ च महामोहे सुखालोकोच्छेदित्वमेकपदार्थरूपो जनको हेतुः॥

## सम्प्रदायप्रकाशिनी

प्रणयीति। अत्र भुजदण्डपाते सुकुमारवपुर्वधाय शस्त्रं तदुपक्षेपश्चेत्यनेकः पदार्थो हेतुः।

भस्मोद्धूलनेति। शुभमित्यत्र भवत्यै इत्यनुषङ्गः। हा अनुशोचामीत्यर्थः। अत्रालोकोच्छेदो महामोहत्वे हेतुः।

त्रिष्वपि योजयति—एष्वपराधेत्यादि। उक्तरूपमित्यत्र तदेतत् त्रयमित्यध्याहारः। अर्थान्तरन्यासवैधर्म्याय हेतोरुक्तरूपता। अर्थान्तरन्यासे ह्युक्तस्य पश्चाद्धेतुभावः।

## मधुमती

उक्तोदाहरणेषु प्रकृतालङ्कारं योजयति—एष्विति। यद्यपि—पूर्वापरजन्मनोः अनमनमेव अपराधः, न च तस्यैव तद्धेतुता सम्भवति। तथापि अपराधद्वये अपराधस्य द्वित्वे इत्यर्थः। तत्र च पूर्वपरजन्मानमनं हेतुर्भवत्येव। तद्गोचरापेक्षाबुद्धेः द्वित्वहेतुत्वात्। प्रयोजकसाधारणस्यैव हेतुत्वस्य अभिधानात्। यद्यपि अनेकपदार्थतायामपि वाक्यार्थतैवेति न पार्थक्यम्। तथापि वाक्यार्थपदेन महावाक्यार्थस्य अभिमतत्वेन दोषाभावात्। अवान्तरवाक्यार्थमादाय तु नानापदार्थताभिधानात्। इति काव्यलिङ्गम्।

## विस्तारिका

उक्तोदाहरणेषु प्रकृतं सङ्गमयति—एष्वित्यादि ।

अपराधद्वये तदिदमित्यनुसन्धाने द्वयोरपि हेतुत्वमस्ति, नमस्कारपदज्ञानात्मकत्वेन तदभावस्य स्वात्मनि योग्यत्वादिति भावः ।

यत्त्वपराधद्वये अपराधद्वित्व इत्यर्थः । तथा चानमनवृत्तिद्वित्वेऽनमनयोः स्वगोचरापेक्षा बुद्धिद्वाराप्रयोजकत्वात् । प्रकृते च प्रयोजकसाधारणस्यैव हेतुत्वस्य विवक्षिततत्वाददोष इति तन्न, द्वित्वस्य द्रव्येतरावृत्तित्वात् । यद्यर्थान्तरत्वस्वीकर्तृमतेऽपि द्वित्वस्यापेक्षाबुद्धिव्यङ्ग्यत्वम्, न तु शक्यत्वमिति न किञ्चिदेतत्, अनेकपदार्थतायामपि वाक्यार्थत्वेनैव न पार्थक्यम्, तथापि वाक्यार्थपदेन महावाक्यार्थस्याभिमतत्वादवान्तरवाक्ये नानापदत्वाभिधानमिति ।

## काव्यप्रदीपः

एकपदार्थता यथा—

**'भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं**
**हा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् ।**
**अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-**
**लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥**

अत्र महामोहत्वे सुखालोकोच्छेदिता हेतुः । तच्च समासादेकपदार्थ एव । अर्थान्तरन्यासे तटस्थतयोपनिबद्धस्य हेतुत्वे पर्यवसानम् । इह तु साक्षादेव हेतुविभक्त्यादिना हेतुतयोपनिबद्ध इति ततो भेदः ।

## आदर्शः

एकपदार्थतामाह—भस्मेति । शिवभक्त्या मुमुक्षोः कस्यचिदुक्तिरियम् । भस्मना अङ्गेषु यदुद्गतधूलीकरणं तद् भस्मोद्धूलनम्, हे तादृश, भवते भद्रमस्तु त्वां नानुशीलयिष्यामीत्यर्थः । तथा हे रुद्राक्षमाले, तवापि शुभमस्तु । गिरिसुताकान्तस्य महेशस्याऽऽलये अलंकृतिभूतां सोपानपरम्परां हा शोचामीत्यर्थः । कुत इत्यात्राह—अद्येति । युष्माकं सपर्यया अनुशीलनेन यः सुखालोकः सुखानुभवस्तदुच्छेदिनि मोक्षनामनि महामोहे वयमद्याऽऽराधनतोषितेन विभुना महेशेन निधीयामहे पात्यामहे, अतः शरीरसाध्यं युष्मदनुशीलनं न स्यादित्यर्थः ।

अत्र मोक्षस्य महामोहत्वे युष्मत् सपर्यासुखालोकोच्छेदित्वं समासैकपदार्थो हेतुः । ननु मोक्षस्य महामोहत्वमवास्तवमेवाऽऽरोपितम्, अतोऽजन्यस्य तस्य कथं सुखालोकोच्छेदित्वं जनको हेतुः, अलीकस्याजन्यत्वात् ज्ञापकहेतुश्च नायमलङ्कार इत्युत्तरालङ्कारे (५७७ पृ०) स्वयमेव वक्ष्यमाणत्वात् । तत्र हि प्रतिवचनस्य प्रश्नहेतुत्वाशङ्कायां वक्ष्यति—'न हि प्रश्नस्य प्रतिवचनं जनको हेतु'रिति (५७८ पृ०) चेत्, सत्यम्; मोक्षस्य महामोहत्वोक्तावेवात्र सुखालोकोच्छेदित्वं जनकोहेतुर्बोध्यः, स्वज्ञानद्वारा तथात्वात् । यत्तु महामोहत्वे सुखालोकोच्छेदित्वं हेतुरिति अग्रे ग्रन्थकृल्लिखनम्, तस्यापि महामोहत्वोक्तावित्येवार्थो बोध्यः । उच्यमानार्थस्य प्रतिवचनस्य तु प्रश्नाजनक-

त्वान्नैतदलङ्कारत्वमित्यभिप्रायः। यद्वा महामोहत्वमिव तस्य सुखालोकोच्छेदित्वमप्यारोप्यमाणमादायैवात्र जनक-हेतुत्वम्। यथासंख्यमेषूदाहरणेषु हेतून् ग्राहयति—एष्विति।

### सुधासागरः

भस्मेति शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तं प्राक्। हे भस्मोद्धूलनभूत्यालेपन भवते भद्रमस्तु तुभ्यं कल्याणमास्ताम्। रुद्राक्षमाले शुभमस्तु। गिरिसुताकान्तालयस्य महेश्वरमन्दिरस्यालङ्कृति शोभाधायिकां सोपानपरम्परां हा धिक्। सर्वस्यापि प्रपञ्चस्याविद्याकल्पितत्वादिति भावः। अद्याराधनतोषितेन विभुना शिवेन आत्माभिन्नेनेति भावः। युष्मत्सपर्यासुखालोकोच्छेदिति भवत्सेवानन्दानुभवस्योच्छेदकारिणि मोक्षनामानि अखण्डानन्दैकरसे महामोहे नानात्वज्ञानवर्जिते निधीयामहे। नेदानीं किञ्चिदभिलषितमुर्वरितमस्तीति भावः।

अत्र महामोहे सुखालोकोच्छेदित्वं हेतुः। तच्च समासादेकपदार्थ एव। अर्थान्तरन्यासे तटस्थतयोपनि-बद्धस्य हेतुत्वे पर्यवसानम्। इह तु साक्षादेव हेतुतयोपनिबद्ध इति ततो भेदः।

उक्तोदाहरणेषु प्रकृतालङ्कारं योजयति। एष्वित्यादि। यद्यपि पूर्वापरजन्मनोरन्यजन्मनोरपराधो, न च तस्यैव तद्धेतुता सम्भवति, तथाऽप्यपराधद्वयेऽपराधद्वित्वे इत्यर्थः। तत्र पूर्वापरजन्मनि अनमनं हेतुर्भवत्येव, तद्गोचरापेक्षाबुद्धेर्द्वित्वहेतुत्वात्, प्रयोजकसाधारणस्यैव हेतुत्वस्याभिधानादिति बोध्यम्।

**(सू० १७५) पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ।**

वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण यत् प्रतिपादनं तत् पर्यायेण, भङ्ग्यन्तरेण कथनात् पर्यायोक्तम् । उदाहरणम्—

**यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता ।**

**मदेनैरावणमुखे मानेन हृदये हरेः ॥ ५०४ ॥**

अत्र, ऐरावणशक्रौ मदमानमुक्तौ जातविति व्यङ्ग्यमपि शब्देनोच्यते तेन यदेवोच्यते तदेव व्यङ्ग्यम् । यथा तु व्यङ्ग्यं न तथोच्यते । यथा गवि शुक्ले चलति दृष्टे 'गौः शुक्लश्चलति' इति विकल्पः । यदेव दृष्टं तदेव विकल्पयति न तु यथा दृष्टं तथा । यतोऽभिन्ना संसृष्टत्वेन दृष्टम् । भेदसंसर्गाभ्यां विकल्पयति ॥

---

**सङ्केतः**

वाच्येति । वाच्यवाचकौ अर्थशब्दौ । विविक्तेनेति । भिन्नेन प्रकारान्तरेण, अर्थसामर्थ्यात्मनेति यावत् । अत्र गम्योऽर्थः भङ्ग्यन्तरेणाभिधीयते । अप्रस्तुतप्रशंसायां तु—अप्रस्तुत उच्यते, गम्यस्तु आक्षिप्यते इति विवेकः ।

व्यङ्ग्यमपीति योग्यतया निर्देशः । शब्देनोच्यते इति । मदेन मानेन निवासप्रीतिरुज्झिता इति भङ्ग्यन्तरेणेत्यर्थः । यथेति । येन प्रकारेण शब्दसंसर्गात् सहात्मना एकघनरूपतात्मना वा व्यङ्ग्यं प्रतीयते न तथा शब्देनोच्यते । क्रमभाविविकल्पप्रभवः शब्दः तथा अभिधातुं न शक्तः इत्यर्थः । अतोऽत्र न ध्वनिः इति भावः । एतदेव दृष्टान्तेनाह—यथा गवीति । दृष्टे निर्विकल्पेन गोचरीकृते । नत्विति ।

अयं भावः—अभिन्नासंसृष्टः स्वलक्षणाकारः निरंशः निर्विकल्पकेन दृष्टः, पश्चात् अविद्यावशेन भेदसंसर्गाभ्यां विकल्पगोचरीक्रियते । भेदसंसर्गौ हि विकल्पस्यैव व्यापारः । स हि निरंशत्वात् अभिन्नमपि असंसृष्टमपि वस्तु 'गौः शुक्लः चलः' इत्येवं भिनत्ति । भिन्नमपि 'अयं गौः अयं गौः' इति संसृजति । इति पर्यायोक्तम् ।

**सङ्केतः (रुय्यकः)**

तदेवेति—पटीयस्त्वादनुभावस्य तदाकारतयैव तस्योपपत्तेः । अभिनेति—निरंशस्य वस्तुनो भेदसंसर्गयोरभावात् । तौ हि विकल्पस्यैव व्यापारः । स हि अभिन्नमपि वस्तु गौः शुक्लश्चल इत्येवं भिनत्ति, भिन्नमपि पदार्थजातमयं गौरयमपि गौरित्येवं संसृजति । तस्येहाङ्गत्वादिति—अङ्गत्वेऽपि न रसवदलङ्कारः, अस्योदात्तस्य तदपवादत्वात् ।

## बालचित्तानुरञ्जनी

पर्यायोक्तं लक्षयति पर्यायेति । अभिधायकाभिधेयभावव्यतिरेकादवगमनव्यापारेण यत् प्रतिपादनमभिधानरूपं तत् पर्यायोक्तमित्याह वाच्येति । निर्वक्ति तदिति । उदाहरति यमिति । यं रावणं प्रेक्ष्य मदेन ऐरावणमुखे चिररूढापि निवासप्रीतिरुज्झिता । मानेन हरेः इन्द्रस्य हृदये प्रीतिरुज्झिता । अत्र कार्यमुखिनो रावणस्य स्वर्गजयलक्षणः प्रभावो वर्णितः । अत्र भङ्ग्यान्तरेण कथनं कथमित्यत आह अत्रेति । ननु व्यङ्ग्यमपि शब्देनोच्यत इति व्याहतमित्यत आह तेनेति । चेत्याचक्ष्महे । किं तर्हि कायादिद्वारेण वाच्यत्वं स्वसामग्र्या व्यङ्ग्यत्वमित्यभिधानान्न व्याहतिरिति भावः । एतद् दृष्टान्तेन प्रतिपादयति यथेति । दृष्ट इति । विकल्पकतयेति शेषः । अविल्पकतया पदे गवादिकं दृष्टं तदेव चैत्रादिप्रमाता विकल्पयति । न 'पुनर्यथा दृष्टं तथैव विकल्प्यमानत्वाच्च कथमेकस्येत्यत आह अभिन्नेति । अविकल्प्यावस्थायां श्रुत्यादिना यदभिन्नमसंसृष्टं विकल्पानुल्लेखाद्भिन्नं च तस्मादेव तद्विकल्पवेलायामभेदेन संसर्गेण च विकल्पयतीति प्रकारभेदात् तत्रापि न व्याहतिरित्यर्थः

## काव्यादर्शः

वाच्येति । वाच्यस्याभिधेयस्य वाचकस्याभिधेयकस्य भावमन्तरेणापि प्रकारान्तरेणार्थसामर्थ्यात्मनावगमनव्यापारेणेत्यर्थः । भङ्ग्यन्तरेणेति । यदेव गम्यते तस्यैव प्रकारान्तरेण अभिधानाद् अप्रस्तुतप्रशंसातोऽस्य भेदः । न हि तत्र गम्यस्यार्थस्य भङ्ग्यन्तरेमाभिधानम्, अपि तु अप्रस्तुतद्वारेण तस्याक्षेपः ॥

व्यङ्ग्यमपीति योग्यतया निर्देशः । शब्देनोप्यत इति । भङ्ग्यन्तररचितशब्दैरभिधानम् । तेनेति । यद् भङ्ग्यन्तरेणोच्यते तद् व्यङ्ग्यम् । यथा त्वेकघनरूपतात्मकप्रकारेण व्यङ्ग्यं प्रतीयते, न तथा वक्तुं शक्यते, क्रमभाविविकल्पप्रभवानां शब्दानां तथाभिधानशक्तेरभावाद, इत्याह—यथा त्विति । एतदेव दृष्टान्तेनाह—यथा गवीति । तदेवेति । एतदीयत्वाद् अनुभवस्य तदाकारतयैव तस्योत्पत्तेः । न तु यथा दृष्टमिति । न हि यादृशो निर्विकल्पस्य व्यापारस्तादृश एव भवति विकल्पस्य, अशेषविवक्षावच्छिन्नस्वलक्षणाकारतयानुभवस्योत्पत्तेः । अभिन्नेति । निरंशस्य वस्तुनो भेदसंसर्गयोरभावात् । तौ हि विकल्पस्यैव व्यापारः । स हि अभिन्नमपि वस्तु 'गौः शुक्लश्चलः' इत्येवं भिनत्ति, भिन्नमपि पदार्थ 'अयं गौरमपि गौः' इत्येवं संसृजति । गोत्व-चलत्व-शुक्लत्वानामभिन्नानां तु संसर्गः ।

## विवेकः

पर्यायोक्तमित्यादि—अत्रापि भङ्ग्यन्तरेण हेतुताऽस्तीति काव्यलिङ्गान्तरमस्य लक्षणम् । वाच्यत्वमाकाङ्क्षासन्निधियोग्यतावशात् संसर्गगमकं, वाचकत्वमभिधा । आभ्यां विनाऽर्थसामर्थ्यात्मनाऽवगमस्वभावेन यत् प्रतिपाद्यते तत्प्रतिपर्ययेणान्येन रूपेणाभिधानमिति पर्यायोक्तम् । "अवगमनव्यापारस्य व्यङ्ग्यस्य सतः कथमभिधानमिति चेत् गम्यापेक्षया प्रकारान्तरेणाभिधानस्याभावात्, न हि तस्यैव तदैव तयैव विच्छित्त्या गम्यत्वं च सम्भवति । अतः कार्यादिद्वारेणाभिधानं, कार्यादेरपि तत्र प्रस्तुतत्वेन वर्णनाऽर्हत्वात् । अत एवाप्रस्तुतप्रशंसातो भेदः । व्यङ्ग्यस्यैवात्र न चारुत्वं किन्तूक्तप्रकारेण पर्यायोक्तं सत् प्राकरणिकं वाच्यमलङ्कुरुते" (अ. स. १४१-४२ पृ.) । अतो न ध्वनिव्यवहारः किन्त्वलङ्कारतैव न्याय्येति । यथा यं प्रेक्ष्येत्यादि । "भामहेन तूदाहृतम्—(का. आ.

३/९) 'गृहेष्वध्वसु वा नान्नं भुज्महे यदधीतिनः । न भुजते द्विजा नो वा यदीक्षन्ते भिषग्वराः' ॥ इति । अत्रापि विषदाननिवृत्तिलक्षणस्य व्यङ्ग्यस्यैव न प्राधान्यम्, गोपितार्थान्तरत्वाद्वाच्यस्यापि गुणभावेन विवक्षितत्वात् । तत् समं प्राधान्यमेवात्र वाच्यव्यङ्ग्ययोः । एतद्धि भगवतो वासुदेवस्य वचनं पर्यायेण विषदानं निषेधयति यदाह भामहः—'तच्च रसदाननिवृत्तय' (भा. का. अ. ३/९) इति । गुणीभूतव्यङ्ग्यसद्भावादेव चास्य 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादिर्न विषय इति । तदेवेति—"पटीयस्त्वादनुभवस्य तस्योपपत्तेः । अभिन्नेति—निर्विकल्पकदसायां निरंशस्य वस्तुनो भेदसंसर्गयोरभावात् । तौ हि विकल्पस्यैव व्यापारः । स ह्यभिन्नमपि वस्तु गौः शुक्लश्चल इत्येवं भिनत्ति भिन्नमपि पदार्थजातमयं गौरयमपि गौरित्येव संसृजति (रु. सं. ६७ पृ.) ।

## दीपिका

वाच्यवाचकत्वेन विना, वाच्यतया व्यङ्ग्यः शब्दार्थः । तदेवाह—अवगमनव्यापारेणिति । व्यञ्जनाव्यापारेणेत्यर्थः व्यङ्ग्यमित्युपात्तपदसम्बन्धिनोऽसङ्केतितया वाच्यमपि शब्देनोपात्तेनोच्यते बोध्यते ।

ननु व्यङ्ग्यार्थसम्भेदे ध्वनित्वं कुतो न स्यादित्यत आह—तेन शब्देन यदेवोच्यते मदमानयोर्निवासप्रीतिपरित्यागरूपं वस्तु तदेव तज्जातीयमेव स्फुटतया व्यङ्ग्यमिदमानमुक्तम् ।

ननु यदि तयोरैकजात्यं कुतस्तर्हि वाच्यव्यङ्ग्यताभेद इत्याह—यथा येन प्रकारेण समयनिरपेक्षत्वादिना तुल्यं व्यञ्जनावृत्त्या बोधनीयं सम्भवति तथा तेन प्रकारेण नोच्यते नाभिधया प्रतिपाद्यते, तस्याः सङ्केतसापेक्षत्वस्य नैयत्यात् । तस्मात् स्फुटत्वेनैकजातीयत्वेऽपि बोधव्यापारभेदाद् भेद इत्यर्थ ।

ननु तयोरप्यर्थयोः समानरूपलक्षणोपसृष्ट एकार्थप्रतिपादकराहित्येनैकरूपवाक्याद्यनेकावयवार्थकाप्तप्रत्यत्वे समाने च शब्दसंलग्नत्वे स्वपरविशिष्टे ज्ञानावान्तरवैजात्यं दृष्टस्ति, येनात्र तद्वैजात्यात् व्यापारवैजात्यमित्याह—यथा गवि शुक्ले च दृष्ट्वे गौः शुक्लश्चलतीति विकल्प इति ।

अयमर्थः ।

> **"अस्ति ह्यलोचनज्ञानं प्रथमं निर्विकल्पकम् ।**
> **बालमूकादिविज्ञानसदृशं मुग्धवस्तुजम् ।**
>
> **ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।**
> **बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन सम्मता ॥"**

इत्युक्तदिशा निर्विकल्पकयोरनिरपेक्षतया समानेऽपीन्द्रियलक्षणे ज्ञापकेऽर्थस्य तत्संलग्नत्वे च यथा सामग्रीभेदादवान्तरवैजात्यं तथा शब्दार्थयोरपि वाच्यव्यङ्ग्यप्रतीत्योस्तदुपपन्नमेव । न च तत्र संयुक्तसंयोगसंयुक्तसमवायादिव्यापाराद् भेदः । तद्वदत्रापि प्रसञ्जनीयं पूर्वमेव निरस्तत्वात् (?), ज्ञानावान्तरजातिभेदमात्रं प्रत्येक निदर्शनोपक्षेपात् । कः पुनर्वाच्यव्यङ्ग्यप्रतीत्योर्विशेष इति चेद् रसादौ तावदुद्भट एव वाच्यप्रतीतौ विशेषः । व्यङ्ग्यान्तरप्रत्ययेऽप्यनुभूयत एव सहृदयहृदयसाक्षिकः कश्चन वाच्यप्रत्ययाद् विशेषः ।

अन्यथा तस्यैवार्थस्य वाच्यत्वदशापेक्षया व्यङ्ग्यत्वदशायां सहृदयव्यञ्जनप्रकर्षानुपपत्तिः । चमत्कारप्रत्यासत्तिकृत एव तत्प्रकर्ष इति चेत्, साऽपि व्यङ्ग्यतायामेव न तु तस्यैवार्थस्य वाच्यतायामित्यतोऽपि वैलक्षण्यमायातीति दुरपह्नव एव वाच्यव्यङ्ग्यप्रतीत्योर्विशेषः ।

न च तत्र विषयभेदात्, प्रतीतिभेद इत्याह—यदेव दृष्टं तदेव विकल्पयतीति सविकल्पकनिर्विकल्पकोपहिता एव गोत्वद्रव्यगुणचलनक्रियास्तत्सम्बन्धात् चक्षुरादिभिर्न प्रतीयन्त एव तत्सम्बन्ध इति चेन्न, सर्वत्रैव निर्विकल्पके वाऽनुगृहीतसम्बन्धस्य विशिष्टप्रत्यये गृहीतदण्डस्य देवदत्तस्यागृहीततत्सम्बन्धस्यापि दण्डी देवदत्त इति प्रतीतिप्रसङ्गात् । नाद्यः, प्रत्यक्षेण योगस्य सन्निहितस्य द्रव्यादिसाधारणतया स्वरूपमात्रस्फुरणे भावाभावात् । नेतरः तस्माद्वैशिष्ट्यभानतद्विरहो ज्ञानस्वभाव एव विषयस्तूभयत्र तथा स्थित एव ।

ननु न यदि विषयभेदस्तर्हि प्रतीतिभेदोऽपि कुतोऽस्तीति प्रत्येतव्यमित्याह—न तु यथादृष्टं यत्प्रकारकं तथा तत्प्रकारकमेव सविकल्पकम् । यतो तथा येन प्रकारेण दृष्टं गवादि वस्तु तथा तेन प्रकारेण विकल्पयति तयोर्वैजात्यस्यानुभविकत्वादित्यर्थः ।

एतदेव विवृणोति—अभिन्ना संसृष्टत्वेन द्रव्यत्वेन द्रव्यत्वगुणत्वकर्मत्वाख्यवैजात्यापुरस्कारेणासंसृष्टत्वेन संसर्गासंसर्गौदासीन्येन स्वरूपत एव दृष्टं निर्विकल्पकंभेदसंसर्गाभ्यां भेदेन द्रव्यत्वादिवैधर्म्यपुरस्कारेण संसर्गेण पुरस्कृतव्यवच्छेद्यव्यवच्छेदकभावेन वैशिष्ट्येन विकल्पयतीति ।

ये तु यथालिखितं पठन्तः सर्वस्या एवास्या वृत्तेः स्वरूपतो वाच्यव्यङ्ग्ययोर्नास्ति भेद इति प्रतिपत्तिपरास्ते तु न सम्यग्वादिनः, मदमानयोर्निवासप्रीतिपरित्यागस्य वाच्यस्य तन्नाशस्य व्यङ्ग्यस्य च दुरपह्नवभेदत्वात् ।

किञ्च, 'स्पष्टास्ता नन्दन' इत्यत्र पर्यायोक्त्युदाहृत्यन्तरे वाच्यपारिजात मञ्जरीस्पर्शस्य व्यङ्ग्यस्य स्वर्गविजयस्य च कार्यकारणतया सामान्यविशेषतायाः स्पुट एव भेद इति यथोक्तमेव ज्यायः । यदि वस्तुस्थितिमाश्रित्य मदमानयोर्विनाश एव, परिजातमञ्जरीस्पर्शात् स्वर्गविजय एव, अन्यथा कार्यकारमसामान्यविशेषभावसद्भावेऽप्रस्तुतप्रशंसातो भेदो न स्यादित्युच्यते, तत् सत्यमेव यथाश्रितव्याख्यानमिति स्थितम् ।

**दर्पणः**

पर्यायोक्तालङ्कारः । पर्यायोक्तमिति । लक्षणोभयार्थम् । एवंचार्थात् शब्दस्यावाच्यवाचकत्वेन विना व्यञ्जनव्यापारेण वेद्यं वस्तु पर्यायेण भङ्ग्यन्तरेणोक्तः तत् पर्यायोक्ताख्यमलङ्कारणमित्यर्थः । व्यंगमपि [व्यङ्ग्यमपि] यंप्रेक्षान्युदाहरणे [यं प्रेक्ष्येत्युदाहरणे] पातुपदसंबन्धत्वेन [प्रीतिपदसंबन्धत्वेन] असंङ्केतितयाऽवाच्यमपि शब्देनोपात्ते वाच्यते [उच्यते बोध्यते। एवमपि न ध्वनित्वमित्याह तेनेति तेन शब्देन यदेव मदमानयोर्निवासप्रतीतिपरित्यागरूपं वस्तु उच्यतेऽभिधीयते तदेव तत्सजातीयमेव स्फुटभावव्यंग्यं मदमानयुक्तत्वं एवं द्वयोरैक-जात्येऽपि वाच्यव्यङ्ग्याभेद इत्याह यथेति । यथा लेवनप्रकारेण [येन प्रकारेण] समयनिरपेक्ष त्वादिना व्यङ्ग्यं व्यञ्जनावृत्तिबोध्यं भवति तथा तेन प्रकारेण नोच्यते नाभिधीयते । अभिधायाः समयसापेक्षनैयत्यात् । एवं च स्फुटत्वेनैकजात्येऽपि बोधक व्यापारभेदाद्भेदक इत्यर्थः । ननूभयोरप्यर्थयोः समाने च शब्दसंलग्नतारूपे ज्ञाननिदाने कतस्मो [कुतोस्त्यज्ञान] ज्ञान जनकव्यापारभेद इत्यर्थः ।

ननू भयोरप्यर्थयोः समाने शब्दरूपे भेदः कुतः ? पुनरन्यत्र ज्ञापके तत् संलग्नत्वे वा विशिष्टे ज्ञानावान्तरवैजात्यं दृष्टमस्ति, येनात्र तद्वैजात्यात् व्यापारवैजात्यं कल्पनीयमित्यत आह यथा गवीति । दृष्टे निर्विकिल्पकज्ञानविषयीकृते, विकल्पः विकल्पज्ञानम् ।

अयमाशयः—यथा निर्विकल्पकसविकल्पकयोः प्रत्यक्षतया समानयोः सम्यगिन्तियलक्षणे [सम्यगिन्द्रियलक्षणे] ज्ञापकेऽर्थस्य तत्संलग्नत्वे च यथा सामग्री भेदादवान्तरवैजात्यं तथा शब्दयोरपि [शब्दार्थयोरपि] । वाच्यव्यङ्ग्यप्रतीत्योश्ततुपमत्वमेव [तदुपलक्षणमेव] न च तत्र यथायोगं संयुक्तसमवायादिव्यापारादस्त इत् [इह] प्रकृते प्रसज्जनीयं । एतदेव विशदयति यदेवमिति । दृष्टं निर्विकल्पकेन विषयीकृतं विकल्पयति सविकल्पकेन विषयीकरोति तत् कथं निर्विकल्पयतीत्याह अभिन्नेति । अभिन्नत्वेन द्रव्यत्वगुमत्वकर्मत्वसम्बन्धाख्यवैजात्यपुरस्कारेण असंसृष्टेन संसर्गासंसर्गौदासीन्येन रूपत एव दृष्टं निर्विकल्पितं भेदेन द्रव्यत्वादिवैधर्म्यपुरस्कारेण संसर्गेण पुरस्कृतावच्छेद्यावच्छेद्यावच्छेदकाभावेन । एवं यथा गविशूकर [शुक्ल] इत्यादौ । इत्यादौ । निर्विकल्पकविषयीकृतस्यैव सविकल्पकविषयभेदभेदेऽपि भेदे तथायं प्रत्यक्षेत्यादावभिधाव्यञ्जनविषयोरपीति पिण्डार्थः ।

### साहित्यचूडामणिः

पर्यायोक्तमिति ।

अभिधायकाभिधेयभावव्यतिरेकादवगमव्यापारेण यत् प्रतिपादकमनभिधायकरूपं तत् पर्यायोक्तमित्याह—वाच्येति । निर्वक्ति—यदिति । यत् सूत्रं "गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम्" (अलंकारसू० ३६) इति । उक्तं च—

**पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।**
**वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥ इति ।**

वाच्यवृत्तिराकाङ्क्षासन्निधियोग्यताभिः संसर्गः । वाचकवृत्तिरभिधा । तदुभयशून्येन व्यञ्जनव्यापारेणाभिधीयत इति यावत् ।

यमिति । अत्र कार्यमुखेन रावणस्य स्वर्गविजयलक्षणः प्रभावविशेषो वर्णितः । प्रभावविशेषवर्णनं च न कारणादेव यावत् कार्यादपीत्युक्तम् ।

ननु व्यङ्ग्यमपि शब्देनोच्यत इति महती व्याहतिरिति चेत् । तेनेति । व्यङ्ग्यापेक्षया प्रकारान्तरेणाभिधानसम्भवात् । नहि तस्यैव तदेव तयैव विच्छित्त्या गम्यत्वं वाच्यत्वं चेत्याचक्ष्महे । किन्तर्हि । कार्यादि—द्वारेण वाच्यत्वमव स्वसामग्र्या व्यङ्ग्यत्वमिति । प्रकारान्तराद् गम्यमानस्य प्रकारान्तरेण वाच्यत्वं, न तु तेनैव प्रकारेणेत्याह—यथात्विति । प्रकारभेदद्योतकः थाल्प्रत्यः । एतद्दृष्टान्तेन प्रतिष्ठापयति—यथेति । दृष्ट इति निर्विकल्पतयेति शेषः । अविकल्पतया यदेव गवादिकं दृष्टं तदेव वैचित्र्यादि प्रमाता विकल्पयति । न पुनर्यथा दृष्टं तथैव विकल्पयितुमर्हति, विकल्पाविकल्पयोरवैलक्षण्यप्रसङ्गात् । ननु विकल्प्यमानत्वात्वमविकल्प्यमानत्वं च कथमेवकस्यैवेति चेद् आह—अभिन्नेति । अविकल्पावस्थायां शुक्लादिना यदभिन्नं विकल्प्यादुल्लेखादसंस्पृष्टं च,

तस्मादेव तद्विकल्पवेलायां भेदेन संसर्गेण च विकल्पयतीति प्रकारभेदात् तत्रापि न व्याहतिः। यदि पुनरभिधीयत इत्यस्य बलाद् व्याख्या प्राधान्येन प्रतीयते इति, तदलङ्कारत्वमस्य दत्तजलाञ्जलिः स्यात्। आत्मतायां पर्यवसानात्। ध्वनिर्हि सर्वत्र भाव्याद् व्यापकः समस्तप्रतिष्ठास्थानत्वादङ्गी। न चालङ्कारस्य व्यापकत्मङ्गित्वं वा बाह्यालङ्कारान्तरवदलङ्कार्यपारतन्त्र्यात्। अथैतदुदाहरणमनादृत्य "भम धम्मिअ" इत्याद्युदाह्रियत इति चेद्, नेयं राज्ञामाज्ञा, न च धर्मसूत्रकारवाक्यं, यावतास्मच्छिष्यता परिशिष्यते।

## सम्प्रदायप्रकाशिनी

पर्यायोक्तमिति। साक्षात्सङ्केतगोचरो वाच्यः, तदभिधायको वाचकः। इमं वाच्यवाचकत्वसम्बन्धं विना यदवगमनप्रकारान्तरेम प्रतिपादनं तत् पर्यायोक्तम्।

व्याचष्टे—वाच्यवाचकभावेति।

यं प्रेक्ष्येति। चिररूढा चिराद् बद्धमूला।

योजयति—अत्र ऐरावणेत्यादि अत्र हैरावणशक्रौ मदमानमुक्ताविति व्यङ्ग्यं सदपि शब्देनोच्यते। अतो यदेव वाच्यकक्ष्यायां तदेव व्यङ्ग्यकक्ष्यायामपीत्याह—तेन यदेवेति। व्यञ्जनाभिधानप्रकारौ तु भिन्नावित्याह—यथा त्विति। मदमानमुक्ताविति व्यङ्ग्यम्। मदमानाभ्यां निवासप्रीतिरुज्झितेति अभिधानम्। नन्वेवंभावे किं निदर्शनमित्यत आह—यथा गवीत्यादि। गोः शुक्लत्वे चलत्वेऽपि प्रथमाक्षसन्निपाते सामान्यावगतिः। अथ गौः शुक्लश्चल इति विकल्पः। अतो दृश्यविकल्पयोर्न भेदः दर्शनविकल्पप्रकारयोस्तु भेद इत्याह—यदेवेत्याहि। प्रकारभेदं विविच्य दर्शयति—अभिन्नेति। भेदो व्यावृत्तिः गुणकृता। संसर्गोऽन्वयः क्रियाकृतः। क्रोडीकृतविशेषं सामान्यमभिन्नासंसृष्टत्वेन पश्यति अथ विकल्पस्य शब्दोल्लेखनियतत्वाद् भेदसंसर्गाभ्यां विकल्पयति।

## मधुमती

वाच्यवाचकेति। अवगमनव्यापारेण व्यञ्जनया। पदव्युत्पत्तिमाह—तदिति। वस्तुतोऽत्र पर्यायता नास्तीति अन्यथा व्याचष्टे—भङ्ग्यन्तरेणेति। एवं च यत्र अगूढं व्यङ्ग्यं तत्रायमलङ्कारः इति द्रष्टव्यम्। अस्ति हि स्वाभावादेव कुतश्चिच्छब्दात् गूढा व्यङ्ग्यप्रतीतिः, कुतश्चित अगूढा। यत्रैव अगूढा तत्रैव शब्दानां पर्यायतुल्यता, झटिति अर्थप्रत्यायकत्वासाधर्म्यात्।

यं प्रेक्ष्येति। यं हयग्रीवम्। हरेः शक्रस्य। शब्देनेति। 'यं प्रेक्ष्ये'ति शब्देनैवोच्यते = झटिति प्रतिपत्तिविषयो भवतीति यावत्। न तथोच्यते तथा शब्देन अभिधया न ज्ञाप्यते इत्यर्थः। एतदेव दृष्टान्तेन स्फुटयति—यथा हि गवीति। दृष्टे निर्विकल्पकेन विषयीकृते। विकल्पः सविकल्पकम्। यदेवेति। निर्विकल्पकविषयमेव सविकल्पकेन विषयीक्रियते इत्यर्थः। न त्विति। न च तथाशब्दश्रुतेः, थाल्प्रत्ययस्य च प्रकारवाचितया निष्प्रकारके निर्विकल्पके कथं तदन्वयः इति वाच्यम्। 'किञ्चित्त्वादिप्रकारेण तत्रापि धर्मो भासते' इति मतेन अस्याभिधानात्। [तदुक्तं विकल्पव्यापारवत्त्वेन मनो लक्षयति।?] तदुक्तं—तत्त्वकौमुद्यां वाचस्पतिमिश्रैः—

**"आलोचनमपीन्द्रियेण वस्त्विदमिति संमुग्धं**

इदमेव नैवमिति सम्यगर्पयति, विशेषणविशेष्यभावेन विवेचयतीति यावत् । यदाहुः—

**'संमुग्धवस्तुमात्रं तु प्राग्गृहणात्यविकल्पितम् ।**
**तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः ॥'इति ॥"**

इति । तदेवाह—अभिन्नेति । अभिन्नासंसृष्टत्वेन । किञ्चित्त्वेनेत्यर्थः, भेदसंसर्गयोः अविषयत्वात् । भेदेति । 'गौर्गौः' इत्यनेन अगोव्यावृत्ति भासते, वैशिष्ट्यस्य अतद्व्यावृत्तिरूपत्वात् । 'शुक्लः चलः' इत्यत्र तु गुणक्रियासंसर्गः । किञ्चित्त्वेन तु ज्ञाने न गुमादिसंसर्गः नाप्यतद्व्यावृत्तिः भासते, तदनुल्लेखात् । किञ्चित्त्वस्य केवलान्वयित्वात्, इति सर्वमनवद्यम् । इति पर्यायोक्तम् ।

## विस्तारिका

पर्ययेति । वाच्यत्वेन वाचकत्वेन विना यद्वचोऽभिधयैव प्रतिपादनमित्यर्थः । वस्तुतः पर्यायत्वं नास्तीति व्याचष्टे-भङ्ग्यन्तरेणेति । पर्यायशब्देनेव झटित्यर्थप्रत्यायनात् पर्यायोक्तिः ।

शब्देनोच्यत इति । उच्यत इवेत्यर्थः । यदेवेति । उच्यते अभिधया प्रतिपाद्यते । यथा त्विति । न तथोच्यते, न तथा शब्देनाभिधयोच्यत इत्यर्थः ।

एतदेव दृष्टान्तेन द्रढयति-यथा हीति । दृष्टे निर्विकल्पकेन विषयीकृत इत्यर्थः । विकल्पो विशिष्टं ज्ञानम् । यदेवेति । निर्विकल्पकस्य निष्प्रकारकतया 'यथा तथा' इति थाल्प्रत्ययार्थानन्वय इति वाच्यम्, प्रकारपर्यन्तस्याविवक्षितत्वात्, अपि तु निर्विकल्पकसविकल्पकयोः समानविषयत्वेऽप्यन्यूनानतिरिक्तविषयत्वं नास्तीत्येतावन्मात्रे तात्पर्यात् । यद्वा निर्विकल्पकेऽपि सम्मुग्धं किञ्चित्वं प्रकारतया भासत इति मतेनाभिधानमिति तदुक्तम् ।

**सम्मुग्धं वस्तुमात्रं तु प्रगृहणात्यविकल्पितम् ।**
**तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः ॥ इति ।**

अभिन्नेति । भिन्नत्वेन संसृष्टत्वेन अस्मद्दृष्टवस्तु भेदसंसर्गाभ्यां विकल्पयन्तीत्यर्थः । तदपि मतभेदेन । पदार्थेऽतद्व्यावृत्तिरेव विशेषणत्वेन भासत इति मते भिन्नेत्वेनेति, गोत्वादिरेव विशेषणत्वेन भासत इति मते संसृष्टत्वेनेत्युभयात्रापि व्यावृत्तत्वेन संसृष्टत्वेन चादृष्टिमिव तदुभयाभ्यां विकल्पयन्तीत्यर्थः ।

## सारबोधिनी

पर्यायेति । वस्तुतः पर्यायत्वं नास्तीत्यन्यथा व्याचष्टे भङ्ग्यन्तरेणेति । यमिति । ऐरावणं । ननु व्यङ्ग्यत्वमेवास्य न कथमित्यत आह अत्रेति ।

शब्देनेति । अतो न व्यङ्ग्यत्वमेवेत्यर्थः । तथाहि । अन्यत् वाच्यमन्यत् व्यङ्ग्यम् । भ्रम धम्मिअ इत्यादौ तथा दर्शनात् । अत्र शक्रैरावणौ मदमानमुक्तौ जातावित्ययमेक एवार्थः शब्दतः प्रतिपाद्यते । ननु वाच्यं व्यङ्ग्यं चेति विरुद्धमित्यत आह यथा त्विति । येन प्रकारेण शब्देन प्रतिपाद्यमानं व्यङ्ग्यं भवति न तेन प्रकारेणोच्यत इत्यर्थः । ननु प्रभेदप्रभेदाभावादभिधया यादृशोऽर्थः प्रतीयते कथं तादृशं एव व्यञ्जनया प्रत्येतव्य इत्याशङ्क्य दृष्टान्तमुखेन साधयितुमाह यथेति । अभिन्नेति । भिन्नत्वेन संसृष्टत्वेन वा दृष्टं वस्तु भेदसंसर्गाभ्यां विकल्पयतीत्यर्थः ।

अतद्व्यावृत्तिरेव विशेषणत्वेन भासते इति मते भेदेते तदन्यमते संसर्गेति। तेनेदं पर्यवसितम्। अत्र शक्यार्थ एव प्रकारान्तरेण व्यञ्जनया प्रतिपाद्यते तत्पर्यायोक्तम्।

**काव्यप्रदीपः**

**पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः।**

वाच्यवाचकभिन्नेनावगमनव्यापारेणार्थाद्वाच्यस्यैव यदभिधानं तत्पर्यायोक्तम्। पर्यायेण भङ्ग्यन्तरेणाभिधानात्। ध्वनेस्तु न वाच्य एवार्थो विषय इति ततो भेदः। उदाहरणम्—

**'यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता।**
**मदेनैरावणमुखे मानेन हृदये हरेः॥'**

अत्रैक एवार्थ ऐरावतशक्रौ मदमानविमुक्तौ जातविति व्यञ्जनया मदमानाभ्यां तयोरधिकरणयोर्निवासपरीतिरुज्झितेत्यभिधया च प्रतिपाद्यते। तेन च यदेवोच्यते तदेव व्यङ्ग्यम्। न च प्रतिपन्नस्यैव प्रतिपत्तिरफलेत किं व्यापारद्वयेनेति वाच्यम्। यतो यथा व्यङ्ग्यं तथा नोच्यते। प्रकारयोर्भेदात्। एकरूप एव वस्तुनि प्रकारभेद एव कथं स्यादिति चेत् यथा शुक्ले गवि चलति निर्विकल्पकसविकल्पकयोः एक एव ह्यर्थस्ताभ्यां विषयीक्रियते। न पुनर्यथा निर्विकल्पविषयस्तथैव सविकल्पकेनापि विषयीक्रियते। भिन्नत्वसंसृष्टत्वाविषयकं निर्विकल्पकं भिन्नत्वसंसृष्टत्वप्रकारकं तु सविकल्पकमिति।

**काव्यप्रकाशखण्डनम्**

पर्यायोक्तं विना वाच्यं वाचकत्वेन यद्वचः। (का. ११५, पू०)

वाच्यतावच्छेदकं विना प्रकारान्तरेण वाच्यस्य अर्थस्य व्यञ्जनया यदभिधानं प्रतिपादनं तत्पर्यायेण भङ्ग्यन्तरेण कथनात् पर्यायोक्तम्। यथा—

**यं प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता।**
**मदेनैरावणमुखे मानेन हृदये हरेः॥**

यं कृष्णं प्रेक्ष्य ऐरावणमुखे मदेन निवासप्रीतिरुज्झिता। हरेरिन्द्रस्य हृदये मानेनाहङ्कारेण निवासप्रीतिस्त्यक्ता। चिरकालं व्याप्य रूढाऽपि उपचिताऽपि। अत्रैरावणशक्रौ मद-मान-विमुक्तौ जातौ इति व्यङ्ग्यमपि शब्देन प्रकारान्तरेणोच्यते, तेन यदेवोच्यते तदेव व्यङ्ग्यमिति। यथा तु व्यङ्ग्यं तथा नोच्यते।

**आदर्शः**

पर्यायोक्त्यलङ्कारमाह—पर्यायेति। यदिति। वाच्यमेव यद् वस्तु वाच्यवाचकत्वेन विना अर्थाद् व्यञ्जनया प्रतिपाद्यत इत्यर्थः। अत्र चानेकार्थशब्दार्थत्वाभावे सतीति बोध्यम्, तेन प्रकरणादिनियन्त्रितैकार्थस्यानेकार्थशब्दस्य व्यङ्ग्य तद्द्वितीयार्थे नातिव्याप्तिः। न च वाच्यार्थस्य व्यञ्जनया प्रतिपादनमिति वाच्यम्, प्रत्ययार्थ-

घटितसंसर्गेण वाच्यार्थस्य बाधेन संसर्गान्तरेण वाच्यार्थस्यैव व्यञ्जनया प्रतिपादनात्। अवगमनव्यांपारेणेति, व्यञ्जनयेत्यर्थः। संज्ञाऽयुतपत्तिमाह—तत् पर्यायेणेति। 'भङ्ग्यन्तरं' विभिन्नाकारकतया प्रत्यायनम्।

यं प्रेक्ष्येति। यं राजानं प्रेक्ष्य ऐरावणमुखे मदेन हरेरिन्द्रस्य हृदये च मानेन अभिमानेन चिररूढाऽपि निवासप्रीतिरुज्झिता इत्यर्थः। त्रासेन मदशोषात् पराजितत्वेनाभिमानत्यागाच्च। अत्र मदमानयोरचेतनयोः प्रीति-त्यागबाधाद् व्यञ्जनयाऽन्य संसर्गेण प्रतिपाद्यमानं वाच्यार्थमाह—अत्रेति। प्रीतिकर्मकता हि मदमानत्यागस्य कर्मविहित-क्त-प्रत्ययार्थघटिता, ऐरावणशक्रकर्मकता तु व्यङ्ग्यः संसर्गः। मदमानै रावणशक्रास्तु वाच्या अपि व्यङ्ग्यसंसर्गेण व्यङ्ग्या इत्यर्थः। तदाह—व्यङ्ग्यमपीति। व्यङ्ग्यवाच्ययोरेकत्वमेव, संसर्गमात्रस्य तु भेद इत्याह—तेन यदेवेति। यथेति, येन ससंर्गेणेत्यर्थः। तथेति, तेन संसर्गेणेत्यर्थः। एवमेकस्मिन् विषये उत्तरज्ञानासमानप्रकारकं पूर्वज्ञानमुक्तवा तत्र दृष्टान्तयते—यथा गवीति। दृष्टे निर्विकल्प केनावगते विकल्पः' सविकल्पकज्ञानम्। यदेवेति सामान्योक्त्या नपुंसकत्वम्। स एव दृष्टो गौर्निर्विकल्पकेन गृहीत इत्यर्थः। 'विकल्पयति'सविकल्पेन गृह्णाति। न तु यथा दृष्टमिति। अत्र था-प्रत्ययार्थः प्रकारोऽविवक्षितः, निर्विकल्पकस्य निष्प्रकारकत्वात्, किन्तु यादृशं दृष्टमित्येवार्थः। विविच्यैतद् दर्शयति—अभिन्नेति। न च निर्विकल्पकेनाभिन्नत्वाद्यग्रहादिदमनुपपन्नमिति वाच्यम्, वाक्यार्थानवगमात्। अत्र हि आङ्पूर्व एव संसृजतिः, तथा च भिन्नश्च तदासंसृष्टश्चेति भिन्नासंसृष्टम्, तथात्वेनादृष्टमित्यर्थो नञर्थस्य पश्चादन्वयेन बोध्यः। अ-शब्द एवात्र नञ्समानार्थोऽसमासस्थ एव, अतस्तस्य दृष्टमित्यत्रान्वयो नानुपपन्नः। तथा च निर्विकल्पकेनैव गृहीतं भेद संसर्गाभ्यां विकल्पयति, सविकल्पकेन पुरुषो गृह्णातीत्यर्थः।

## सुधासागरः

वाच्यार्थस्य प्रतिपादनं शक्त्यैवेति भ्रमं निराकर्तुमाह—विनेत्यादि। यत्र शक्यार्थ एव प्रकारान्तरेण व्यञ्जनया प्रतिपाद्यते तत्पर्यायोक्तमित्यर्थः। वाच्यवाचकेत्यादि। वाच्यवाचकभावभिन्नेनावगमनव्यापारेणार्थाद् वाच्यस्यैव यदभिधानं तत् पर्यायोक्तम्। पर्यायेण भङ्ग्यान्तरेणाभिधानात्। ध्वनेस्तु वाच्य एवार्थो न विषय इति ततो भेद इति भावः।

यं प्रेक्ष्येति। स्पष्टम्। अत्रैरावणेत्यादि। अत्रैक एवार्थः 'ऐरावणशक्रौ मदमानविमुक्तौ जातौ' इति व्यञ्जनया च 'मदमानाभ्यां तयोरधिकरणयोर्निवासप्रीतिरुज्झिता' इत्यभिधया च प्रतिपापाद्यते। तेन च यदेवोच्यते तदेव व्यङ्ग्यम्। न च प्रतिपन्नस्यैव प्रतिपत्तिरफलेति। किं व्यापारद्वयेनेति वाच्यम्, यतो यथा व्यङ्ग्यं तथा नोच्यते, प्रकारयोर्भेदात्। येन प्रकारेण शब्देन प्रतिपाद्यमानं व्यङ्ग्यं भवति तेन प्रकारेणोच्यत इत्यर्थः। एकरूपे एव वस्तुनि प्रकारभेद एव कथं स्यादिति चेत्, कलय। यथा शुक्ले गवि चलति निर्विकल्पकसविकल्पकयोरेक एव ह्यर्थस्ताभ्यां विषयीक्रियते। न पुनर्यथा, निर्विकल्पकविषयस्तथैव सविकल्पकेनापि विषयीक्रियते।

भिन्नत्वसंसृष्टत्वाविषयकं निर्विकल्पकम्। भिन्नत्वसंसृष्टत्वप्रकारकन्तु सविकल्पकमिति।

(सू० १७६) उदात्तं वस्तुनः सपंत्

संपत् समृद्धियोगः। यथा

**मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः**

**प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।**

**दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः**

**यद्विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायितम्॥ ५०५॥**

---

सङ्केतः

उदात्तमिति। इदं ऐश्वर्यलक्षणस्य वस्तुनो वर्णनया स्वभावोक्ति—भाविकाभ्यां भिद्यते। न हि पूर्वयोः ऐश्वर्य वर्ण्यते। कविप्रतिभोत्थापितत्वं तु त्रिष्वप्यस्त्येव।

मुक्ताः इति। अतिशयोक्तिरेषेति। चेन्न। अन्यस्य अन्यतया अध्यवसायाभावत्, अत्यैश्वर्येऽपि अवकरवत् मुक्तादेः पुञ्जीकरणासम्भवे यदेवमुक्तिः, येयं असम्बन्धे सम्बन्धात्मिका अतिशयोक्तिः, अथ पुञ्जीकरणं सम्भवति, तदा जातिः। किञ्च—अनृद्धिमद्वस्तुवर्णने अनुदात्तमपि स्यात् इति विवक्षायां, निर्विषयमिदं उदात्तम्।

बालचित्तानुरञ्जनी

उदात्तालङ्कारं लक्षयति उदात्तमिति। कथञ्चिद्वर्णनोद्रेचिता समृद्धिरस्य लक्षणमित्याह संपदिति। उदाहरति मुक्ता इति। केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः प्राङ्गणसीम्नि मंथरचलत्कान्ताचरणलाक्षारुणाः मुक्ताः दूराद् दाडिमबीजशंकितधियः केलीशुकाः यत् कर्षन्ति तत् भोजनृपतेः त्यागलीलायितम्। अत्रासंभाव्यमानविभूतियुक्तस्य वस्तुनो वर्णनं कविप्रतिभोत्थापितमनुभूयते।

काव्यादर्शः

स्वभावोक्तौ भाविके च यथास्थितवस्तुवर्णनमैश्वर्यलक्षितमुदात्तालंकारः। न चेयमतिशयोक्तिः अन्यस्यान्यतया ध्यवसायाभावात्।

विवेकः

उदात्तमिति—उपलक्षणतायामपि यथाकथञ्चिन्निमित्तत्वमस्तीत्यत्र सङ्गतिः। "स्वभावोक्तौ भाविके च यथावद्वस्तुवर्णनम्। इह त्वसम्भाव्यमानविभूतियुक्तस्य वस्तुनः कविप्रतिभोत्थापितत्ववर्णनम्।" (अ. स. २३० पृ०)। यथा मुक्ता इत्यादि।

बालङ्घ्रीति बालो बालिका च ।

### दीपिका

समृद्धियोग इति समृद्धिमदवर्णनम् उदात्तमिति। विसूत्रेति च्छिन्नसूत्रेत्यर्थ:। हृता अवचिता:। उपलक्षणीय इति प्रकारणिके वर्णनाविषय इत्यर्थ: । व्यसनी आसक्त: । बाहुसहाय इति सहायशून्य इत्यर्थ: ।

### दर्पण:

उदात्तलङ्कार: । संपदन्वात् [संपदर्थात्] अलौकिकी । उदितरस्य वैचित्र्यानावहत्वात् विसूत्र: छिन्न: ।

उपलक्षणीये । वर्णबाहुसहाय इत्यनेन सहायराहित्यसंसूचितम् । वीरो रस: इत्यनन्तरं प्रधानमिति शेष: ।

इह रामगतस्नेहातिशयस्य प्राधान्याभावादनुभूयमानविच्छित्तिविशेष्यो ध्वनिविशेष्यो ध्वनिविषयप्रस्तुतेति भाव: ।

अत्र केचिदाहु:, । न चेह रसवदलङ्कार:, द्वितीयोदात्तस्यापरादत्वेन [त्तस्यापरांगत्वन] तद्बाधकत्वादिति ।

तनु अस्य [तन्वस्य] नासि प्ररूढाम्बुरुहासनेन

**संस्थूयमान: प्रथमेन धात्रा ।**
**अयं युगान्तोचितयोगनिद्र:**
**संभक्ष्य लोकान् पुरुषोऽधिशेते ॥**

इत्यादि विविक्तविषत्वात् तेन परस्परपरिहारेण स्थितयोर्द्वितीयोदात्तरसवदलङ्कारयो: प्रकृतोदाहरणे संकर एव ज्यायान् सन्तिष्ठति ।

### साहित्यचूडामणि:

उदात्तमिति ।

कविवर्णनोद्रेचिता समृद्धिरस्य लक्षममित्याह—सम्पदिति। यत् सूत्रं "समृद्धिमद्वस्तुवर्णनमुदात्तम्" (अलंकारसू० ८०) इति । स्वभावोक्तिभाविकयोर्यथावस्थितस्य वस्तुनो वर्णनमत्र त्वारोपितस्येति भेद: ।

मुक्ता इति अत्रासम्भाव्यमानविभूतियुक्तस्य वस्तुनो वर्णनं कविप्रतिभोत्थापितमनुभूयते ।

### सम्प्रदायप्रकाशिनी

उदात्तमिति । सम्पदित्युक्तेऽपि वस्तुसम्बन्धसिद्धौ पुनर्वस्तुग्रह: सम्यक्त्वाय । तदेतदाह—सम्यगिति ।

मुक्ता इति । केलिविसूत्रत्वं सुरतलीलाछिन्नसूत्रत्वम् । विद्वद्भवनेषु कर्षन्ति यत्, तदेतद् भोजस्य त्यागलीलायितमात्रम् ।

### मधुमती

उदात्तमिति । उत्कर्षेणादीयते गृह्यते इति उदात्तम् ।

मुक्ताः इत्यत्र समृद्धियोगः स्फुट एव ।

### विस्तारिका

उदात्तमिति । मुक्ता इत्यादि । विद्वद्भवनेषु यदेवं तद्भोजनृपतेर्लीलायितमित्यर्थः ।

### सारबोधिनी

मुक्ता इति । दूरात् कर्षन्तीत्यन्वयः ।

### काव्यप्रदीपः

**उदात्तं वस्तुनः संपत्** संपत्समृद्धियोगः । न तु तस्यैवातिशयः । उदाहरणम्—

**'मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः**
**प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।**

**दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः**
**यद्विद्वद्भवनेषु भोजनृपतेस्तद्दानलीलायितम् ॥'**

अत्र विद्वद्भवस्य मुक्तादिधनसमृद्धियोगः ।

### काव्यप्रकाशखण्डनम्

उदात्तं वस्तुनः संपत्, (का. ११५, तृ० पा०)

संपत् समृद्धियोगः । यथा—

**मुक्ताः केलिचिसूत्रहारगलिताः संमार्जनीभिर्हृताः,**
**प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।**

**दूराद् दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः,**
**यद् विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायितम् ॥**

केलिभिर्विसूत्रा ये हारा [प० ५४,१] स्तेभ्यो गलिता या मुक्ता मुक्ताफलानि ताः प्रातः काले मार्जनीभिर्हृतास्तथाऽङ्गन (ण) देशे मन्थरं मन्दं चलन्तो ये बालानां कामिनीनां अंहयस्तेषां लाक्षया अरुणाः ताः क(कि)र्मीभूताः दूरात् दृष्ट्वा दाडिमबीजमिति शङ्कितबुद्धयः क्रीडाकीरः विद्वद्भवनेषु यत् कर्षन्ति तद् भोजनृपतेस्त्यागलीलायाश्चेष्टितम् । अत्र विद्वद्भवनस्य मुक्तादिधनसमृद्धियोगः ।

### आदर्शः

उदात्तालङ्कारमाह—उदात्तमिति । वस्तुसमृद्धिव्यञ्जनमित्यर्थः । मुक्ता इति । विद्वद्भवनेषु संमार्जनीभिः प्रातर्हृताः प्राङ्गणसीम्नि मुक्ता यत् केलीशुका दूरात् कर्षन्ति भोजनृपतेस्त्यागलीलायितं त्यागलीलैव तत् इत्यर्थः, भोजनृपतिना विद्वद्भ्यो बहुमुक्तादानात् । मुक्तानां प्रातः सम्मार्जनीभिर्हरणमुपपादयति—केलिविसूत्रेति । केलिशुकानामुत्कर्षणमुपपादयति—दाडिमबीजेति । तेषां दाडिमबीजशङ्कामुपपादयति—मन्थरेति, लाक्षया आर्द्रत्वेन धूलिसम्पर्कवारणाय नितम्बगौरवाच्च मन्थरचलनम् । अत्र मुक्तानामीदृशानादरः समृद्धिव्यञ्जकः ।

### सुधासागर

सम्पत् समृद्धियोगः । न तु तस्यैवातिशयः । उदाहरणम्—मुक्ता इति । स्पष्टम्, शार्दूलविक्रीडितं छन्दः । अत्र विद्वद्भवनस्थमुक्तादिधनसमृद्धियोगः ।

**(सू० १७७) महतां चोपलक्षणम् ॥ ११५ ॥**

उपलक्षणमङ्गभावः, अर्थादुपलक्षणीयेऽर्थे । उदाहरणम्—

**तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।**

**निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥ ५०६ ॥**

न चात्र वीरो रसः, तस्येहाङ्गत्वात् ॥

---

**सङ्केतः**

अर्थादिति । अर्थात् सामर्थ्यात् उपलक्षणीये वस्त्वन्तरे अङ्गीभूते इत्यर्थः ।

तदिदमिति । अत्र दण्डकारण्ये वर्ण्यतया अङ्गिभूते रामचरतिस्य अङ्गभावः. महद्भिराश्रितं ह्यरण्यं वर्ण्य स्यादिति भावः । अरण्यं अत्र उपलक्षणीयं प्रधानीभूतमित्यर्थः । रामस्य वीरचरितं उपलक्षणं अङ्गभूतमित्यर्थः ।

ननु वीररसे अङ्गीभूते रसध्वनिः स्यात्—इत्याशङ्क्याह—नचेति । वीररसः नाङ्गी इत्यर्थः । एतदेवाह—तस्येति । वीररसाश्रयो रामस्तावदिहाङ्गम्, किं पुना रसः ? । ननु रसस्य अङ्गत्वे रसवदलङ्कारः स्यात् । न । अस्योदात्तालङ्कारस्य तदपवादत्वात् । तदपवादत्वाकल्पने हि निर्विषयमुदात्तं स्यादिति । इत्युदात्तम् ।

**बालचित्तानुरञ्जनी**

उदात्तस्यैव लक्षणान्तरमाह महतामिति । उपलक्षणपदं व्याकरोति । किं विषयमेतदुपलक्षणमित्यत आह अर्थादिति । अर्थप्राप्तौ अनर्थपरिहारे च प्रवृत्ताः पुरुषाः महान्त. तेषां । रामादीनां वर्णनीयेऽर्थे अङ्गभावः उदात्तालङ्कार इत्यर्थः । उदाहरति तदिदमिति । इदं तत् दण्डकारण्यम् । अस्मिन् दशरथवचनानुपालनव्यसनी रामः, बाहुसहायः एकाकी निवसन् सन् रक्षःक्षयं चकार । अत्रारण्ये वर्णनीये राघवचरितं अङ्गत्वेन वर्णितम् । नन्वत्र वीररसप्रयुक्तश्चमत्कारोऽस्तीत्यत आह न चेति । अत्र वीररसाश्रयस्य रामस्याङ्गत्वं किं पुना रसः स्यात् ? न चमत्कार इति भावः । न चास्याङ्गत्वेऽपि रसवदलङ्कारत्वमस्योपात्तस्य तदपवादत्वात् ।

**काव्यादर्शः**

महतां चेति ।.उदारचरितानां अङ्गिभूतवस्त्वन्तरस्य अङ्गभावाभिधानम्प्युदात्तम् । 'तदिदम्' इति । अत्र अरण्ये वर्णनीये रामचरितमङ्गत्वेन वर्णितम् । रामवासाद्धि दण्डकारण्यस्योत्कर्षः ।

ननु, अङ्गिभूतरसादिविषये रसादिध्वनिरुक्त इत्याह—न चेति । तस्येति । वीररस्याङ्गत्वाद अप्रधानत्वात् । तर्हि अङ्गभूतरसादिविषये रसवदाद्यलंकारा उक्ता इत्युदात्तलंकारविषयश्चिन्त्यः, तद्विषयस्य रसवदादिना व्याप्यत्वात् । सत्यम्, अङ्गत्वेऽपि न रसवदलंकारोऽस्योदात्तस्य तदपवादत्वात् ।

## विवेकः

तदिहाभ्युदयगौरवं दर्शितम्। महाशयमाहात्म्यनिबन्धन लक्षयति महताञ्चेति महान्तो येनोपलक्ष्यन्ते तदुपलक्षणम्, अङ्गभावोऽङ्गत्वम्, उपलक्षणीयेऽर्थेऽङ्गिनि। उदात्तशब्दसाम्यादिहाभिधानम्, तदुपलक्षणम्, अङ्गभावोऽङ्गत्वम्, उपलक्षणीयेऽर्थेऽङ्गिनि। उदात्तशब्दसाम्यादिहाभिधानम्, महापुरुषामामर्थप्राप्तावनर्थपरिहारे चोद्यतानामुदात्तचरितानामुपलक्षणीभूतम्। न पुनरितिवृत्तत्वमागतं वस्त्वन्तराङ्गभावेनोपनिबध्यमानं चरितं चोदात्तं महापुरुषस्योदारचरितत्वात्। तदिदमित्यादि—यस्मिन्नित्युपलक्षणम्। रामभद्रचरितमुपलक्ष्यते। अत्रारण्ये वर्णनीये वीररसप्रतिपत्तिहेतुरवान्तरवाक्यार्थीभूतं रामभद्रस्य चरितमङ्गत्वेन वर्णितम्। अतो नाङ्गितया स्थितम्, अपि त्वङ्गतां गतमित्याह तस्येहाङ्गत्वादिति। 'अङ्गत्वेऽपि न रसवदलङ्कारः, अस्योदात्तस्य तदपवादत्वात्' (रु. सं. ६७ पृ.)। भट्टरुद्रटमते त्ववसरालङ्कारस्यायं विषयः। यदाह—(रु. का. अ. ७/१०३) अर्थान्तरमुत्कृष्टं सरसं यदि वोपलक्षणं क्रियते। अर्थस्य तदभिधानप्रसङ्गतो यत्र सोऽवसरः॥ यथा—सा सिप्रा नाम नदी यस्यां मङ्क्षूर्मयो विशीर्यन्ते। मज्जन्मालवललनाकुचकुम्भास्फालनव्यसनात्॥ (रु. का. अ. ७/१०५)।

## दीपिका

ननु राम उत्साहातिशय एव चमत्कारनिदानं तस्य च प्रधानत्वे विच्छित्त्यन्तरविरहात् किंविषयोऽयमलङ्कारव्यपदेश इत्याशङ्क्य, तस्य प्राधान्ये सत्येव ध्वनिविषयत्वं स्यात्। एतच्चासिद्धमित्याह—न चात्र वीरो रसः। प्रधानमिति शेषः। अत्रोपपत्तिस्तस्येति रसवदलङ्कारस्य तद्गततयैव तद्व्यतिरिक्तविषयता महापुरुषचरितस्य सामग्रीवशेन भावमात्रत्वेऽप्ययमलङ्कारो न तु भावालङ्कार उक्तादेव न्यायात्।

## साहित्यचूडामणिः

एवं मतान्तरानुगुण्यादन्यथापि लक्षणमित्याह—अर्थादिति। यत् सूत्रम्—"अङ्गभूतमहापुरुषचरितवर्मनं च" [अलङ्कारसू० ८१] इति। यदाहुः—

**उदात्तमृद्धिमद् वस्तु चरितं च महात्मनाम्।**
**उपलक्षणतां प्राप्तं नेतिवृत्तत्वमागतम्॥ इति।**

अर्थप्राप्तवनर्थाप्राप्तवनर्थपरिहारे च प्रवृत्ताः पुरुषा महान्त उच्यन्ते। तदिदमिति। अत्रारण्ये वर्णनीये राघवचरितमङ्गत्वेन वर्णितम्।

नन्वत्र वीररसप्रयुक्तचमत्कारोऽस्तु इत्यत्राह—नचेति। प्रधानभूतो वीरोऽत्र नास्तीति भावः।

## सम्प्रदायप्रकाशिनी

उदात्तान्तरमाह—महतां चेति। उपलक्षणमुपलक्ष्येऽर्थे व्यावर्तकत्वम्।

व्याचष्टे—उपलक्षणमिति। अङ्गिन-आक्षेपात् सिद्धिरित्याह—अर्थादुपलक्षणीय इति।

तदिदमिति। अत्र रामस्यारण्योपलक्षणत्वम्।

ननु वीररसः प्रतीयते तदालम्बनस्य कथमङ्गत्वमित्यत आह—न चात्रेति। नात्र प्रतीयमानो वीररसः, अरण्येऽङ्गत्वात्। अतो रसवानेव। अत्रैतदाकूतं—येषांमुद्भटादीनां प्रधानभूतो रस एव रसवान्, तन्मते अङ्गभूतो रसो द्वितीयोदात्तत्वेन सम्भवति। ध्वनिदर्शने तु प्रधानभूतस्य रसस्यालङ्कार्यत्वादङ्गभूतो रसो रसवान्। स एव द्वितीयोदात्तत्वेन व्यवह्रियत इति।

**मधुमती**

उदात्तविशेषमाह—महतामिति। उलक्षणीयेऽर्थे अङ्गिनी।

तदिदमिति। अत्र निवसन् इत्यनेन दण्डकारण्ये अङ्गिनि अङ्गभावः दाशरथेरिति प्रतीयते। न चेति। अङ्गत्वात् अप्रधानत्वात्। तथाच 'प्रधानमाश्रित्य व्यपदेशः' इति चित्रव्यवहार एवात्र, न तु ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः इति भावः। इत्युदात्तम्।

**विस्तारिका**

उदात्तविशेषमाह—महतामिति। उपलक्षणीयेऽर्थेऽङ्गिनीत्यर्थः।

तदिदमिति। अत्र यस्मिन्नित्यनेन दण्डकारण्यस्याङ्गित्वम्, निवसन्नित्यनेन च दाशरथेरङ्गत्वं प्रतीयत इति।

न चेति। अङ्गत्वादप्रधानत्वात्। तथा च "प्रधान्येन व्यपदेशा भवन्ति" इति न्यायेन चित्रव्यवहार एवात्र, न रसध्वन्यादिव्यवहार इत्यर्थः।

**सारबोधिनी**

उदात्तस्यैव लक्षमान्तरमाह महतामिति। तदिदमिति। अत्र दण्डकारण्स्याङ्गित्वं दाशरथेरङ्गत्वं परिचायकत्वमिति यावत्। न चेति। अङ्गत्वादप्रधानत्वात्। तथा च प्राधान्येन व्यपदेश इति। चित्रव्यवहारो न ध्वन्यादिव्यवहारः इति भावः।

**काव्यप्रदीपः**

**महतां चोपलक्षणम्॥ २९॥**

महतां यदुपलक्षणमङ्गभावः अर्थाद्वर्णनीये तदप्युदात्तमित्यर्थः। उदाहरणम्—

**'तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी।**
**निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः॥'**

अत्रैतादृशो महान्रामो दण्डकाया वर्णनायाया अङ्गम्। नन्वत्र रामगत उत्साहातिशय एव चमत्कारनिदानं तस्य प्रधानत्वाद्विच्छित्त्यन्तराभावाच्च किंविषयोऽयमलंकारव्यपदेश इति वाच्यम्। नह्यत्र वीरो रसः प्रधानम्। तस्येहाङ्गत्वात्।

## काव्यप्रकाशखण्डनम्

**महतां चोपलक्षणम् ॥ (का. ११५, च. पा.)**

**उपलक्षणमङ्गभावः, अर्थादुपलक्षणीयेऽर्थे ।**

**तदिदमरम्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।**
**निवसन् बाहुसहायश्चकार रक्षः क्षयं रामः ॥**

न चात्र वीरो रसस्तस्येहाङ्गत्वात् ।

## आदर्शः

अन्यविधमुदात्तालङ्कारमाह—महताञ्चेति । व्याचष्टे—उपलक्षणमिति । 'अङ्गभावः' सम्बन्धिता । उपलक्षणीय इति, व्यङ्ग्य इत्यर्थः । तथा च व्यङ्ग्यवस्तुनो महत्त्वस्योपलक्षणीयस्य व्यञ्जको महतां सम्बन्ध इत्यर्थः । तदिदमिति । अरण्यमत्र पञ्चवटीवनम् । रक्षः क्षयं खरदूषणादिराक्षसनाशम् । अत्र 'व्यङ्ग्यवस्तुनोऽरण्यमहत्त्वस्य व्यञ्जिका महतो रामस्य सम्बन्धिता अत्र वीररसध्वनित्वमाशङ्कते—न चात्रेति । तस्येहाङ्गत्वादिति, रामस्य वीरत्वेनारण्यमहत्त्वस्यैव व्यञ्जनया पर्यापणादित्यर्थः, अरण्यस्यैव प्रकृतत्वात् । अत एवात्र नापराङ्गत्वमपि, अरण्यमहत्त्वपर्यापणेनोदात्तालङ्कारस्यैव विषयत्वात् ।

## सुधासागरः

उपलक्षणमित्यादि । यदुपलक्षणमङ्गभावोऽर्थाद् वर्णनीये तदप्युदात्तमित्यर्थः । तदिदमिति आर्या । स्पष्टम् । अत्रैतादृशो महान् रामो दण्डकाया वर्णनीयाया अङ्गम् । न चेत्यादि । न ह्यत्र वीरो रसः प्रधानम् । तस्येहाङ्गत्वादिति भावः ।

(सू० १७८) तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत्।

समुच्चयोऽसौ

तस्य प्रस्तुतस्य कार्यस्य, एकस्मिन् साधके स्थिते साधकान्तराणि यत्र संभवन्ति स समुच्चयः। उदाहरणम्—

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम्।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः॥ ५०७॥

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति तदुपरि प्रियतमदूरस्थित्यादि, उपात्तम्।

---

**सङ्केतः**

समुच्चय इति। अत्र तुल्यकक्षतया हेतुवः मिलिताः कार्यसाधयन्ति। समाधौ तु—एकस्य हेतोः पूर्ण साधकत्वम्, अन्यस्तु काकतालीयन्यायेन आपततीति न तत्र तुल्यकक्षतेत्यनयोर्भेदः। समुच्चयनं हि तुल्यकक्षाणा-मेव स्यादिति।

**सङ्केतः (रुय्यकः)**

तत्सिद्धीति—यद्यपि समाधेरपि वक्ष्यमाणस्य विषयं लक्षणमेतदास्कन्दयति तथापि समुच्चय इत्यन्वर्थ-संज्ञाविज्ञानादिहान्यस्य तुल्यकक्षतयैवोपादानमाश्रीयते, न च तत्तत्रास्तीति भिन्न एवासौ। न पृथगिति—रुद्रटो हि—

"यत्रैकत्रानेकं वस्तु परं स्यात् सुखावहाद्येव।
ज्ञेयः समुच्चयोऽसौ त्रेधाऽन्यः सदसतोर्योगः॥"

इति सद्योगादिना रूपान्तरेणामुं पृथगलक्षयत्।

**बालचित्तानुरञ्जनी**

समुच्चयालङ्कारं लक्षयति तत्सिद्धिहेताविति। व्याकरोति तस्येति। उदाहरति दुर्वारा इति। दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे, मनः अत्युत्सुकम्, गाढं प्रेम नवं वयः, अतिकठिनाः प्राणाः, निर्मलं कुलम्, धैर्यविरोधि

स्त्रीत्वं, मन्मथसुहृत् कालो वसन्तः, कृतान्तो यमः अक्षमः, मारणेऽसमर्थः, सख्यः न चतुरा भवन्ति । इत्थं एवं सति शठः विरहः कथं नु सोढव्यः । अत्र भ्रमोपात्ताः स्मरमार्गणा एव विरहवैक्लव्यमुद्भावयितुं प्रगलभन्ते, तदुपरि वल्लभप्रवासादयः समुच्चीयन्त इत्याह अत्रेति । अत्रान्यैः समुच्चयस्यैव सद्योगे, असद्योगे, सदसद्योगे च अन्यदन्यल्लक्षणं कृतं तदसङ्गतम् ।

## काव्यादर्शः

समुच्चय इति । तुल्यकक्षतामपेक्ष्यैव समुच्चयनं समुच्चय इति व्युत्पत्तेर्नास्य समाव्यलंकारान्तरर्भावः । यत्र ह्येकस्य कार्यं प्रतिपूर्णं साधकत्वमन्यस्तु कार्याय काकतालीयेनापतति तत्र तुल्यकक्षताभावे समाधिर्वक्ष्यते । यत्र तु खले-पोतिकया बहूनामवतरस्तुल्यकक्षतया तत्र समुच्चय इत्यनयोर्भेदः । हेतौ हेत्वन्तरं, यथा—'दुर्वारा' इति । अव्याहतप्रसराः ।

## विवेकः

तत्सिद्धिति—हेतुप्रस्तावादस्य सङ्गतिः स्फुटैव । "यत्रैकः कस्यचित् कार्यस्य सिद्धिहेतवे प्रक्रान्तस्तत्रान्योऽपि यदि स्पर्धया तत्सिद्धिं प्रक्रमते तत्र समुच्चयनामाऽलङ्कारः । यद्यपि समाधेरपि वक्ष्यमाणस्य विषयं लक्षणमेतदास्कन्दति तथापि समुच्चय इत्यन्वर्थसंज्ञाबलादिहान्यस्य तुल्यकक्षतयैवोपादानमाश्रीयते, न चैतत्तत्रास्तीति भिन्न एवासौ" (रु. सं. ६७ पृ.) । तथाहि 'यत्रैकं न कार्यं प्रति पूर्णं साधकमन्यत्तु तत्कार्याय काकतालीयन्यायेनापतति तत्र समाधिः, यत्र तु खलेकपोतिकान्यायेन बहूनामवतारस्तत्र समुच्चय इति' (अ. स. २०२ पृ.) । दुर्वारा इत्यादि—कृतान्तोऽक्षमः क्षमारहितः, अत एवास्य दुःसहत्वम् ।

## दीपिका

साधके स्थिते व्यवस्थिते साधकत्वात् पर्याप्त इत्यर्थः । सन्ति सम्भवन्ति तिष्ठन्तीति वा । स्मरमार्गणा एवेति तद्वैधविधूननोक्तौ तेषामेव प्रधानत्वाद् विशेष्योक्तिः । तदुपरीति तदुपमर्दनक्षमतया तुल्यकक्षताप्रकटनायोक्तिः ।

## दर्पणः

समुच्चयालंकारः । कृतान्तो यमः, इति विरहासत्वात्ता [?] बलाकांक्षितस्य मरणस्याविधानार्थ परोक्षोक्तिः । शशीत्यादौ खलस्यासत्वं, अन्येषां सत्वम् ।

## साहित्यचूडामणिः

समुच्चयमाह—तत्सिद्धीति । यत्रैकं कस्यचित् कार्यस्य सिद्धिहेतुत्वेन विवक्ष्यते, तत्रान्ये यदि स्पर्धया तद्वृद्धिं कुर्युः स समुच्चय इत्याह—तस्येति । न चायं समाधिः । यत्र खल्वेकस्य कार्यं प्रति पूर्णं साधनत्वमन्यत्तु काकतालीयन्यायादवतिष्ठते स समाधिः । यत्र खलेकपोतिकायुक्त्या बहूनामवतारः स समुच्चय इति विवेकः ।

दुर्वारा इति । यत्र प्रथमोपात्ताः स्मरमार्गणा एव विरहवैक्लव्यमुद्भावयितुं प्रगल्भन्ते, तदुपरि वल्लभप्रवासादयः समुच्चीयन्ते ।

**सम्प्रदायप्रकाशिनी**

तत्सद्धीति । अन्यदित्येकत्वमविवक्षितम् । प्रकृतस्य कार्यस्य एकस्मिन् साधके स्थिते साधकान्तरयोगः समुच्चयः ।

व्याचष्टे—तस्येत्यादि ।

दुर्वारा इति । अत्र विरहासहत्वस्य स्मरमार्गणेष्वेव साधकेषु प्रियतमदूरस्थित्यादीन्यपि साधकानि ।

तदेतदाह—अत्र विरहेत्यादि ।

**मधुमती**

सन्ति = अभिधीयन्ते इत्यर्थः । काव्यलिङ्गे सामग्र्येकदेशस्य, अत्र तु साग्र्या एवाभिधानात् ततो भेदः ।

**विस्तारिका**

तत्सिद्धिहेताविति । अन्यदित्येकवचनं विवक्षितम्, साधकान्तराणीत्येतद्विवरणात् सम्भवन्तीति अभिधीयन्त इत्यर्थः ।

काव्यलिङ्गे हेतुहेतुमद्भावमात्रं विवक्षितम्, न पुनर्हेतूनां गुणप्रधानभावचिन्ता, एकत्वानेकत्वचिन्ता वा; अत्र त्वेकस्यैव प्राधान्येन तत्कार्यकारित्वेऽन्येऽपि तत्साहाय्यं कुर्वन्तीति ततोऽपि भेदः । तदिदमुक्तम्—स्मरमार्गणा एव कुर्वन्तीत्यादि ।

यत्तु काव्यलिङ्गे सामग्र्येकदेशस्य, अत्र तु सामग्र्या एवाभिधानात् ततो भेद इति तन्मन्दम्, तथापि काव्यलिङ्गभेदत्वापत्तेः ।

**सारबोधिनी**

तत्सिद्धिहेताविति । दुर्वारा इति । शठः कठिनः । काव्यलिङ्गे हेतुहेतुमद्भावमात्रं विवक्षितम् । न पुनर्हेतूनां गुणप्रधानभावमात्रचिन्ता । अत्र त्वेकस्यैवैतत्कार्यकारित्वेऽन्ये त्वेतत्सहाय्यकं कुर्वन्ति ततो भेदस्तदिदमुक्तं स्मरमार्गणा एवं कुर्वन्तीत्यादिनाप्यसौ समाधेस्तत्र कारणान्तरस्य[?] काकतालीयन्यायेन योये तात्पर्यादत्र तु न तथेति भेदः ।

**काव्यप्रदीपः**

**तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत् ।**

**समुच्चयोऽसौ**

तत्सिद्धिहेतौ तस्य प्रस्तुतस्य कार्यस्य साधके। समाधावतुल्यकक्षयो: कारणयोरुपादानमत्र तु तुल्यकक्षयोरिति विशेष:। उदाहरणम्—

**'दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं**
**गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम्।**
**स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो**
**नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः॥'**

अत्र स्मरमार्गणा एव विरहासहत्वं कुर्वन्ति। ततोऽधिकं प्रियतमदूरस्थित्याद्युपात्तम्।

## आदर्शः

समुच्चयालङ्कारमाह—तत्सिद्धीति। प्रस्तुतस्येति प्रस्तुतकार्यस्येत्यर्थ:। सम्भवन्तीति, उक्त्या सम्भवतीत्यर्थ:। दुर्वारा इति। शठो दु:खदायित्वेन खलो विरह: इत्थं हेतुभ्य: कथं नु सोढव्य:। असहनहेतूनाह—दुर्वारा इति। 'तत्सत्त्वेऽपि पतिसान्निध्ये सुप्रापे सोढव्य इत्यत आह—प्रियतम इति। ननु मनसि धैर्यमवलम्ब्यतामित्यत्राऽह—मनोऽत्युत्सुकमिति, अनिवार्यमित्यर्थ:। प्रेमत्यागोऽपि न सम्भवतीत्याह—गाढमिति। प्रेमगाढत्वेऽपि जरती विरहं सहत एवेत्यत्राऽऽह—नवं वयं इति। एतादृशदु:खात् प्राणत्यागोऽपि न सम्भवतीत्याह—अतिकठिना इति। विषभक्षणादिसाहसादात्महत्याऽपि न शक्या इत्याह—कुलमिति। अत्युत्सुके मनसि यत्नाद् धैर्यमवलम्ब्यतामित्यत्राऽऽह—स्त्रीत्वमिति। स्त्रीणामपि कालविशेषे धैर्यं स्यादेवेत्यत्राऽऽह—मन्मथेति। दैवानुकूल्ये सर्वमिदमकिञ्चित्करमित्यत्राऽऽह—कृतान्त इति। कृतान्तो दैवम्। 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति कोषात्।अक्षम आनुकूल्याक्षम: प्रातिकूल्ये क्षमारहितो वा। ननु सखिप्रयुक्तैरुपचारैर्विरह:। सह्यतामित्यत्राऽऽह—नो सख्य इति। सद्योग इति। कारणानामुपादेयवस्तुरूपत्वे सद्योगस्तेषामनुपादेयवस्तुरूपत्वेऽसद्योगस्तदुभयमिश्रणे तु सदसद्योग:।

## सुधासागरः

तस्येति वृत्ति: स्पष्टा। न च समाधावतिव्याप्ति:, तत्रातुल्यकक्षयो: कारणयोरुपादानमत्र तु तुल्यकक्षयोरिति भेदात्।

दुर्वारा इति। स्पष्टम्। शार्दूलविक्रीडितं छन्द:। लक्षणमुक्तं प्राक्। वृत्ति: स्पष्टा।

एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति न पृथक्लक्ष्यते । तथाहि—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।

प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजन् त एव तवाङ्कुशाः ॥ ५०८ ॥

अत्र सतां योगः । उक्तोदाहरणे त्वसतां योगः ।

---

**सङ्केतः**

न पृथगिति । रुद्रवत् इत्यर्थः । तेन हि—'अन्यः सदसदतोः योगे' इत्यादिना सद्योगासद्योगसदसद्योगैः स त्रिधा ऊचे, न तथाऽत्रेऽति भावः ।

कुलमिति । अत्र अमलस्य कुलस्य सतः सद्भिमूत्यादिभिःसमुच्चयः । एकैकस्य दर्पहेतुत्वेन तुल्यकक्षत्वम् । 'दुर्वाराः स्मरमर्गणाः' इत्यत्र तु स्मरमार्गणानां दुर्वारत्वेन असतां तादृशैरेव दूरत्वात् प्रियतमादिभिः समुच्चयः । तारुण्यादेश्च स्वतश्चारुत्वेऽपि विरहेण अचारुत्वम् ।

**सङ्केतः (रुय्यकः)**

असतामिति—तत्र नववयः प्रभृतेः सत्यपि सत्त्वे सर्वेषामपि सत्त्वाकथनमसत्त्वेनैव विरहिण्या भावितत्वात् ।

**बालचित्तानुरञ्जनी**

एतदुपजीवनेनैव तत्सङ्ग्रहस्य कर्तुं सुकरत्वात् इत्याह एष एवेति । सद्योगे उदाहरति कुलमिति । अमलिनं कुलं भद्रा मूर्तिः श्रुतशालिनी मतिः अलं भुजबलम्, स्फीता लक्ष्मीः, अखण्डितं प्रभुत्वम् । एते उक्ता भावाः प्रकृतिसुभगाः स्वभावसुन्दराः । अयं भवल्लक्षणो जनः अमीभिरेव भावैः सुतरां दर्पं भजति हे राजन् तव एते अङ्कुशाः अपथप्रवृत्तिं न कारयन्तीत्यर्थः । अत्र निःकलङ्कत्वेन शोभनस्य कुलस्य भद्रमूर्त्यादिभिः शोभनान्तरैर्योगः सद्योग इत्याह ।

## काव्यादर्शः

न पृथगिति। रुद्रटो हि त्रेधाऽन्यः सदसतोर्योग इति सद्योगादिना रूपान्तरेण पृथगलक्षयन्, न तथात्रेति भावः। 'कुलम्' इति। अत्र अमालिन्येन शोभनस्य कुलस्य मूर्त्यादिभिः शोभनैः समुच्चयः एकैकं च दर्पहेतुतया योग्यं सत् स्पर्धया निबद्धम्। उक्तोदाहरणे 'दुर्वाराः स्मर' इत्यादौ स्मरमार्गणानां दुर्वारत्वेन अशोभनानां तादृशैरेव दूरत्वात् प्रियतमादिभिः समुच्चयः, नववयः प्रभृतेश्च सत्यपि शोभनत्वे सर्वेषामपि अशोभनत्वकथनं, अशोभनत्वेनैव विरहिण्या भावितत्वात्।

## विवेकः

न पृथगिति—रुद्रटो हि (का. अ. ७/१) यत्रैकत्रानेकं वस्तु परं स्यात् सुखावहाद्येव ज्ञेयः। समुच्चयोऽसौ त्रेधाऽन्यः सदसतोर्योगः॥ इति सद्योगेनासद्योगेन सद्सद्योगेन च रूपेण पृथगलक्षयत्। तत्र सतः शोभनस्य सता समुच्चयीमानेन योगो यथा कुलमित्यादि। श्रुतिशालिनी श्रुतिसम्पन्ना। "अत्रामालिन्येन शोभनस्य कुलस्य भद्रत्वादिविशिष्टमूर्त्यादिभिः समुच्चयः। एकैकश्च दर्पहेतुतायोग्यं सत् स्पर्धया निबद्ध"—(अ. स. २०३ पृ.) मिति सतां योगः। यद्यपि व नववयः प्रभृतीनां स्वतः शोभनत्वं तथापि सर्वेषामप्यशोभनत्वकथनं विरहिविषयत्वेन ज्ञेयम्, अशोभनत्वेनैव विरहिण्या भावितत्वात्। अतोऽत्र कश्चित् समुच्चयीमानः शोभनः परस्त्वशोभन इति सदसद्योगो न व्याख्येयः। शशीत्यादि। अत्रेति—अत्र शशिनः शोभनत्वं प्रकृतिसौन्दर्यात्। अशोभनन्वं धूसरत्वोपादानात्। एवञ्चास्य सदसद्रूपस्य तादृशैरेव कामिनीप्रभृतिभिर्योगादिह सदसद्योगः।

## दीपिका

एषोऽप्यलक्षितो न पृथग् लक्ष्यते। ग्रन्थान्तररीत्या पृथक् लक्षणे प्रयोजनाभावात्। कुलमित्यादावखण्डितं प्रभुत्वमेव निदर्शननिमित्तं तन्निवारणाङ्कुशः, शेषास्तु प्रासङ्गिका एव।

## साहित्यचूडामणिः

अत्र चिरन्तनचर्चितो विभागः उपजीव्य व्यवहर्तव्य इत्याह—एष चेति।

कुलमिति। अत्र निष्कलङ्कत्वेन शोभनस्य कुलस्य मूर्त्यादिभिः शोभनान्तरैर्योगः।

उक्तेति। दुर्वारा इत्यत्र। दुस्सहत्वादशोभनानां मन्मथबाणानां प्रेयः प्रवासा दिभिः शोभनान्तरैर्योगः।

## सम्प्रदायप्रकाशिनी

रुद्रटस्तु त्रिधान्यः सदसतोर्योग इति वक्ष्यमाणं गुणक्रियायौगपद्यलक्षणं समुच्चयमेव सद्योगे असद्योगे सदसद्योगे चेति पृथगलक्षयत्। न तथा लक्षणीयम्। तस्यापि समुच्चयस्य सद्योगादित्रैविध्यसम्भवादित्याह—एष एवेत्यादि। तथोदाहर्तुमाह—तथा हीति।

कुलमिति। अत्र कुलमूर्त्यादीनां सतां योगः।

दुर्वारा इत्यत्रासद्योग इत्याह—उक्तोदाहरणे त्विति । विरहासहत्वेहेतुत्वाविशेषान्निर्मलं कुलमप्यसत्त्वेन विवक्षितम् ।

**मधुमती**

अन्यैश्चालङ्कारिकैः अस्य त्रैविध्यमुक्तम्, तदपाकरोति—एष इति ।

**विस्तारिका**

अन्यैरुक्तं त्रैविध्यं निराकरोति—एष एवेति ।

कुलेति । अमलिनं कुलमेवातीव सुभगम्, तदुपरि भद्रमूर्त्यादयोऽपीत्यर्थः ।

**सारबोधिनी**

कुलमिति कुलमेवातिसुन्दरं तदुपरि मूर्त्यादयोऽपि इत्यर्थः ।

**काव्यप्रदीपः**

एष एवोक्तलक्षणः समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति यत्केनचित्पृथग्लक्षितास्तदयुक्तम् । यथाहि—

**'कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी**
**भुजवलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।**
**प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो**
**व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥'**

अत्र कुलादीनां समीचीनानामेव योगः । दुर्वारा इत्याद्युक्तोदाहरणे स्मरमार्गणादीनामसमीचानानाम् ।

**आदर्शः**

कुलमिति । स्फीता उद्वेगरहिता । अयं संसारी योजनस्त्वद्भिन्नः । दर्पमहङ्कारम् । अङ्कुशा दर्पनिवारकाः । अत्रेति । 'सताम् इति, उपादेयत्वात् । उक्तोदाहरणं दुर्वारा इत्यादिकम्, तेषामसत्त्वं दुःखदायकत्वेनानुपादेयत्वात् ।

**सुधासागरः**

अत्र कैश्चिदुक्तं त्रैविध्यं निराकरोति । एष एवेत्यादि । एष एवोक्तलक्षणः समुच्चयः सद्योगेऽसद्योगे च पर्यवस्यतीति यत्केनचित् पृथग्लक्षितस्तदयुक्तम् । तथा हि—कुलेति । हरिणी छन्दः । लक्षणमुक्तं प्राक् । अङ्कुशाः सङ्कोचहेतवः । स्पष्टमन्यत् । कुलमेवातिसुभगं तदुपरि भद्रमूर्तित्वादिकमुपात्तमिति बोध्यम् । अत्र कुलादीनां समीचीनानामेव योगः दुर्वारा इत्याद्युक्तोदाहरणे स्मरमार्गणादीनामसमीचीनानाम् ।

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणतः खलो मनसि सप्त शल्यानि मे ।। ५०९ ।।

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः ।।

---

### सङ्केतः

तथा एकमेव वस्तु सदसच्च, तादृशं तादृशेन सदसता यदा युज्यते, तदा सदसद्योगः । यथा—शशीति । स्वाकृतेः सुरूपस्य । धनपरायणः धनलुब्धः । नृपाङ्गणगतः राज्ञः प्रसादवित्तः पुमान् । सः तद्रूपः सन्, खलतया च असन् । अत्र शशी स्वयं सन्, धूसरत्वेन च असन् । कामिनीति सत्, गलितयौवनत्वं असत् । एवं अग्रेऽपि विशेष्यद्वारेण सत्ता, विशेषणद्वारेण च असत्ता एकस्यैव वस्तुनः सर्वत्र ज्ञेया । इह विशेष्यस्य सत्त्वं, विशेषणस्य च असत्त्वं प्रक्रान्तम्, ततः नृपाङ्गणगतः इति विशेष्यतया सद्वयख्येयम्, खलः इति विशेषणतया च असत् । अन्यमताभिप्रायेण विशेषणविशेष्ययोः अत्र वैपरीत्ये प्रक्रमभङ्गः । तथा नृपाङ्गणगतः खलः इति असन्, अन्ये तु सन्तः इति समुच्चीयमानस्य सतः तादृशेन असता योगः इति व्याख्यायां तु 'सहचरभिन्नोऽर्थः दुष्टः' इतिरूपः प्रक्रमभङ्गः । तथाह्यत्र सत एव सतः असत्त्वं एकस्यैव वस्तुनः इति विवक्षितम् । अत एव चारुत्वेनान्तः प्रविष्टान्यपि शश्यादीनि शल्यानीति प्रकारेण व्यथाहेतुत्वेनोक्तानि । 'दुर्वाराः स्मरे' त्यत्र तु 'कथं सोढव्यः' इति सर्वथा दुष्टत्वाभिप्रायेणोपन्यासः इति विवेकः ।

### सङ्केत (रुय्यकः)

तत्रेति—(तत्र) शशिनः शोभनत्वं प्रकृतिसौन्दर्य्यात् । अशोभनत्वं धूसरत्वो पादानात् । एवञ्चास्य सदसद्रूपस्य तादृशेनैव व्यापारेण योगादिह सदसद्योगः । शशिनि धूसर इति शोभनाशोभनत्वमुपदर्शितम् । शल्ये शल्यान्तराणीति शोभनाशोभनस्य तादृशेनैव योगः ।

### बालचित्तानुरञ्जनी

असद्योगस्य दुर्वारा इत्युक्तमेवोदाहरणमित्याह उक्तेति । तत्र दुःसहत्वादशोभनानां अशोभनान्तरैः प्रियवासादिभियोर्गः असद्योग इत्यर्थः । सदसद्योग उदाहरति शशीति । शशी दिवसधूसरः गलितयौवना कामिनी सरो विगतवारिजं स्वाकृतेर्मुखमनल्पसुन्दरं प्रभुर्धनपरायणः सज्जनः सततदुर्गतः नृपाङ्गणतः खलः मे मनसि सप्त शल्यानि । अत्र शोभनस्य शशिनः अशोभनेन दिवसधूसरत्वेन योगः, एवं पदां, पदान्तराणां शोभनानां पदान्तरेणा-

शोभनेन योगो द्रष्टव्यः। न च दुर्वारा इत्यादावपि सदसद्योगत्वप्रसङ्ग इति वाच्यम् शशिदिवसमार्गणादीनां स्वतः शोभनत्वस्य प्रसिद्ध्याभावात्।

### काव्यादर्शः

सदसतः शोभनाशोभनस्य तादृशेन सदसता समुच्चीयमानेन योगे, यथा-'शशी' इति। 'शल्यानि' इति एकत्रोपसंहृतानि सुन्दरत्वेनान्तः प्रविष्टान्यपि व्यथाहेतुत्वात्। शोभनाशोभनयोग इति तथा हि शशिनः शोभनत्वं प्रकृतिसौन्दर्याद्, अशोभनत्वं तु दिवसधूसरत्वादिति 'शशी दिवसधूसरः' इत्यस्य सदसद्रूपस्य तादृशैरेव 'गलित-यौवना कामिनी' इत्यादिभिः सदसद्रूपैः समुच्चय। अत्रापि 'कामिनी' इति सत्, 'गलितयौवना' इत्यसत्। एवमुत्त-रत्रापि। इह विशेष्यस्य शोभनत्वं प्रक्रान्तं, विशेषणस्य तु अशोभनत्वम्। 'नृपाङ्गनगतः खलः' इत्यत्र तु नृपाङ्गनगतत्वेन विशेषणस्य शोभनत्वं, विशेष्यस्य खलत्वेन अशोभनत्वमिति विपर्ययात् प्रक्रमभङ्गो दोषः। न त्वत्र कश्चित् समुच्चीयमानः शोभनः अन्यस्तु अशोभन इति सदसद्योगो व्याख्येयः। तथा ह्यत्र शोभनस्य सतोऽशोभ-नत्वविवक्षा, 'दुर्वाराः स्मर' इत्यत्र तु अशोभनानामेवेति विवक्षितम्। अत एव 'कथं सोढव्यः' इति सर्वथा दुष्टत्वाभिप्रायेण उपन्यस्तमिति अस्त्यनयोः प्रकारयोर्भेदः।

### विवेकः

शशिनि धूसर इति शोभनाशोभनत्वमुपदर्शितम्। शल्ये शल्यान्तराणीति शोभनाशोभनस्यैव तादृशेनैव योगः। यद्यपि नृपाङ्गनगतः खल इति नृपाङ्गनगतत्वेन शोभनत्वं खलत्वेनाशोभनत्वं तथाऽप्यत्र श्लोके विशेष्यस्य शोभनत्वं प्रक्रान्तं विशेषणस्याशोभनत्वम्। इदन्तत्वन्यथेति। चेत्, सत्यमेतत्, अत एव 'नृपाङ्गनगत' इत्यस्य विशेष्यत्वं 'खल'पदस्य तु विशेषणत्वमिति केचिद्व्याचक्षते। अपरे तु विपर्ययेणापि शोभनाशोभनत्वमुपदर्शयि-तुमित्थं निबद्धमित्याहुः। 'दुर्वारा' इत्यत्र यद्यपि स्मरमार्गणादयः सामान्यतः शोभनास्तथापि विरहिविषयतया तेषामशोभनानामेव सतां दुर्वारत्वादिभिरशोभत्वादिप्रकर्षो विवक्षितः। इह तु शोभनस्य सतोऽशोभनत्वं व्यथाऽतिशयनिष्पादकम्, अत एवोपसंहरति मनसि सप्त शल्यानीति सुन्दरत्वेनान्तः — प्रविष्टानामपि व्यथाहेतु-त्वात्, अपरत्र तु कथं सोढव्य इति दुष्टत्वाभिप्रायेण। तस्मादस्त्यनयोर्भिन्नविषयत्वमिति त्रैविध्यमुपपन्नम्" (अ. स. २०५ पृः)। "कमलनेषु तुषारो रूपविलासातिशयिनीषु जरा। रमणीष्वपि दुश्चरितं धातुर्लक्ष्मीश्च नीचेषु॥ (रु. का. अ. ७/२६) इत्यत्रापि कमलवनस्य तुषारस्य सदसतोस्तादृशत्वेन तरुणीजरयोः समुच्चयः, न तु कमलवनानां सतामसतां तुषारामां तेषां तुल्यकक्षत्वाविरहात्॥ (रु. सं. ६७-६८ पृ.)।

### दीपिका

शशीत्यादौ तु खलस्य सत्त्वं स्फुटयति—अत्रेति। शशिनि धूसरे शल्य इति विशिष्योक्तिः प्रकरणापे-क्षया सङ्गमनीया। अन्यः समुच्चयः।

## साहित्यचूडामणिः

शशीति। यत्र शशिप्रमुखस्य शोभनस्य खलेनाशोभनेन योगः। अन्ये तु शशिनः शोभनस्यापि दिवसधूरत्वादशोभनत्वम्। एवं कामिन्यादेर्गलितयौवनत्याद्यान्नेयम्। अन्ते च खलत्वादशोभनत्वं नृपाङ्गणतत्वेन च शोभनत्वम्। न च दुर्वारा इत्यादावपि सदसद्योगप्रसङ्ग इति वक्तुं युक्तं, शश्यादिवत् स्मरमार्गणादीनां स्वतः शोभनत्वप्रसिद्ध्याभावात्। यस्तु चन्द्रादेर्विशेष्यस्याशोभनत्वं नृपाङ्गणगतत्वस्यच विशेषणस्य शोभनत्वमिति व्यत्यासः, तदुभयथापि न प्रक्रमभङ्गमुल्लङ्घ्यतीत्याचक्षते।

## सम्प्रदायप्रकाशिनी

सदसद्योग उदाहरति—शशीति। अत्र शशिनः सतो धूसरत्वेन सदसतां शल्यान्तराणां योगः

तदेतदाह—अत्र शशिनीत्यादि।

## मधुमती

अत्रेति। शश्यादयः सन्तः दिवसधूसरत्वादयश्च असन्तः, अत एव अमीषां योगे शल्यता। अनेकशल्यानां उपादानाञ्च समुच्चयत्वम्।

## विस्तारिका

शोभनाशोभनयोग इति। शोभनाशोभनात्मनामनेकेषां योग इत्यर्थः। शश्यादीनां सहजकाम्यत्वाद् धूसरत्वादीनां च सहजनिन्द्यत्वाद् युक्तानां तेषां शोभनाशोभनात्मकता। तदुक्तम्—शशिनि धूसरे शल्ये शल्यान्तराणीति। अत्र च सदसतोर्विशेषणविशेष्यभावोऽविवक्षितः, नृपाङ्गणस्यापि खलसम्बन्धमात्रेणैव सदसदात्मकत्वस्य विवक्षित्वात्।

## सारबोधिनी

शशीति। स्वाकृतेः सुन्दरस्याशोभनाशोभनयोग इति। शोभनाशोभनात्मनामनेकेषां योग इत्यर्थः। शब्दादीनां सहजकाम्यत्वात्। तद्युक्तानां च तेषां शोभनाशोभनात्मकता। तदुक्तम्-शशिनि धूसरे शल्ये शल्यन्तराणि इति।

## काव्यप्रदीपः

'शशी दिवसधूसरौ गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे॥'

अत्र सदसतोर्योगः। दुर्जनस्यासत्त्वात् शश्यादीनां सत्त्वात्। एवच्चिन्त्यम्। पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनात्राप्यसम्यक्त्वमिति।

## आदर्शः

सदसद्योगे त्वाह—शशीति। मे मम मनसि सप्तैव शल्यानि दुःखदायकानि। किं किमित्याह—शशीति। गलितयौवनाऽपि कामिनी कामाकुला। प्रभुरपि धन परायणः नृपाङ्गणतोऽपि खलः परापकारी। एते त्रयः स्वाधीनदोषदुष्टत्वेन द्वेष्यत्वादशोभनाः। अन्ये तु दैवाधीनदोषदुष्टाः शोच्यत्वेन शोभनाः। एषां योग इत्याह—शोभनाशोभनयोरिति।

## सुधासागरः

शशीति स्पष्टम्। पृथ्वी छन्दः। 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात्। अत्रेत्यादि। शोभनाशोभनयोग इति। शोभनाशोभनात्मनामनेकेषां योग इत्यर्थः। शश्यादीनां सहजकाम्यत्वात्, धूसरत्वादीनां सहजनिन्द्यत्वात् तद्युक्तानां शोभनाशोभनात्मकता। तदुक्तम्—शंशिनीति।

यत्तु काव्यप्रदीपकारैरुक्तम्—अत्र सदसतोर्योगः, दुर्जनास्यासत्त्वात् शश्यादीनां शत्त्वात्। एतच्चिन्त्यम्। पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनाऽत्राप्यसम्यक्त्वामिति, तत्प्रामादिकम्। न खलु दूरस्थित्यादिविशेषणेन प्रतिपाद्यते, किन्तु सत्यपिरमणीयत्वे विरहासहतया तदवस्थायामसम्यक्त्वम्। धूसरत्वादीनां वैरूप्यं शश्यादीनां रमणीयत्वं साहजिकमित्युक्तमेव। इदन्तु बोध्यम्। शशी दिवसधूसर इत्यादौ विशेष्यं काम्यमिति सत्, विशेषणं निन्द्यमित्यसत्। नृपाङ्गणगतः खल इत्यत्र तु विशेषणं काम्यमिति सत्, विशेष्यं निन्द्यमित्यसत्। नैतावता विशिष्टेषु शल्येषु भेदोऽस्ति। तथा च दुर्जनस्यासत्त्वादित्याद्युक्तिः प्रदीपकाराणां प्रामाणिकीति वाग्देवतावतारोक्तं तत्त्वमेवेति मन्तव्यम्।

**(सू० १७९) स त्वन्यो युगपद् या गुणक्रियाः ॥ ११६ ॥**

गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः । क्रमेणोदाहरणम्—

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥५१० ॥

---

### सङ्केतः

गुणौ चेति । एतेन इत्युक्तम्—यत् व्यस्तत्वेन समस्तत्वेन च, क्रमेण व्युक्रमेण च गुणक्रियाणां त्रिधाऽयमन्यः समुच्चय इति ।

विदलितेति । अत्र भिन्नाधारयोः वैमल्यमालिन्ययोः गुणयोः समुच्चयः ।

### बालचित्तानुरञ्जनी

समुच्चयस्यैव लक्षमान्तरमाह स त्वन्य इति । अत्र गुणाश्च क्रियाश्चेति द्वन्द्वे गुणयोः क्रियाणां च समुच्चयो न स्यादिति कृतैकशेषाणां द्वन्द्व इत्याह गुणो च क्रिये च गुणक्रिया इति । तन्त्रेणोक्तमिति यावत् । गुणयोर्यौगपद्यमुदाहरति विदलितेति । भो राजन् विदलितं च इदं बलं आशु विमलं चाभवत् । तानि प्रखलानां मुखानि मलिनानि च जातानि । अत्र वैमल्यमालिन्ययोर्गुणर्योयौगपद्यम् ।

### काव्यादर्शः

गुणक्रिया इति बहुवचनं व्याप्त्यर्थम् । तेन गुणक्रियाणां व्यस्तत्वेन समस्तत्वेन च त्रिधायमपरः समुच्चय—इत्याह—गुणौ चेति ॥ 'विदलिते' ति । अत्र विमलत्वं मलिनत्वं युगपद् गुणाववस्थितौ, तयोर्बलं स्वं खलमुखानि चाधारः ।

### विवेकः

स त्वन्य इति समुच्चयः । गुणक्रिया इति बहुवचनम् । समुच्चयप्रयोजकतया व्याचष्टे गुणौ च क्रिये च गुणक्रिये च । तत्र भिन्नाश्रययोर्गुणयोरेककालमेकत्र देशे समुत्पत्त्या समुच्चयो यथा विदलितेत्यादि—अत्र मालिन्यामालिन्ययोर्यौगपद्यं चकारेण द्योत्यते ।

### दीपिका

गुणेन सहिताः क्रिया इति गुणक्रिया इति विशेषविवक्षाविरहात् सजातीययोगो विजातीययोगलक्षणायोगश्च संगृहीत इत्याह—गुणौ च क्रिये च विमलं च इत्यादौ गुणक्रिये चेत्यादिः । विमलत्वमलिनत्वे गुणौ ।

**दर्पणः**

अन्यः समुच्चयः विदानितेत्यादौ [विदलितेत्यादौ] विमलत्वमलिनत्व गुणौ। अयमित्यादावुपनत इति भवितव्यमिति च क्रिये।

**साहित्यचूडामणिः**

प्रकारान्तरेण समुच्चयमाह—स त्विति। बहुवचनानुकूलं विगृह्णाति—गुणौ च क्रिये च गुणक्रिये चेति। तन्त्रेणोक्तिरिति यावत्। यत् सूत्रम्—"गुणक्रियायौगपद्यं समुच्चयः" (अलङ्कार सू० ६६) इति।

**सम्प्रदायप्रकाशिनी**

समुच्चयान्तरमाह—स त्वन्य इति।

गुणक्रिया इत्येकशेष इत्याह—गुणौ च क्रिये च गुणक्रिये चेति। तद्यौगपद्यात्मा समुच्चयोऽयं त्रिधा।

विदलितेति। प्रखलमुखानि दुर्जनमुख्यानि तानि अरिबलानि। अत्र वैमल्यामालिन्ये गुणो युगपत्, द्वौ चकारौ यौगपद्यद्योतिनौ यतः।

**मधुमती**

समुच्चयान्तरमाह—स त्वन्य इति। गुणश्च क्रियाश्चेति द्वन्द्वे बहूनां गुणानां बह्वीनां क्रियाणामेव च समुच्चयः प्रतीयेतेति अन्यथा व्याचष्टे—गुणौ चेति। तथा च द्वयोरेव समुच्चयः इति भावः। अत्र एकशेषेण सजातीययोः, द्वन्द्वबलाश्च विजातीययोः समुच्चयो लभ्यते। एवं च—गुणयोः क्रिययोः गुणक्रिययोश्च समुच्चयः इति द्रष्टव्यम्।

विदलितेति। वैमल्य-मालिन्यगुणयोः अत्र समुच्चयः।

**विस्तारिका**

समुच्चयान्तरमाह—स त्वन्य इति। गुणाः स्वक्रियाश्चेति द्वन्द्वे बहूनां च क्रियाणामेव समुच्चयः प्रतीयत इति।

अन्यथा व्याचष्टे-गुणावित्यादि। तथा च द्वयोरेव समुच्चय इति भावः। अत्र गुणक्रियापदयोरेकशेषबलात् सजातीययोरितरेतरद्वन्द्वबलाच्च विजातीययोः समुच्चयः। एतत्स्फोरणार्थमेव गुणक्रिये चेति क्वाचित्कः पाठोऽपि।

विदलितेत्यादि। विमलं स्वच्छम्। अत्र गुणयोः समुच्चयः।

**सारबोधीनी**

समुच्चयस्यैव लक्षमान्तरमाह स त्वन्य इति। गुणाश्च क्रियाश्चेति समाहारद्वन्द्वे बहूनां गुणानां, बहूनां क्रियाणां च समुच्चयः[न] प्रतीयेतेत्यन्था व्याचष्टे एवमन्ययोरपीति[?]। विदलितेति। प्रखला रिपवः।

## काव्यप्रदीपः

समुच्चयान्तरमाह—

**स त्वन्यो युगपद्या गुणक्रिया ॥ ३० ॥**

अत्र गुणाः क्रियाश्चेति विग्रहे संख्याविशेषस्याविवक्षणात् विशेषविवक्षाविरहेण च सजातीयवद्विजातीयस्यापि यौगपद्यस्य लाभात् गुणौ च क्रिये च गुणक्रिये च युगपद्भवतः स त्रिरूपः समुच्चयः। तत्र गुणयोर्यौगपद्यं यथा—

'विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥'

अत्र विमलत्वमलिनत्वयोः

## काव्यप्रकाशखण्डनम्

स त्वन्यो युगपद् या गुणक्रियाः ॥ (का. ११६, ३०)

गुणौ [च] क्रिये च इति गुणक्रियाः।
नयनं तव रक्तं च मलिनाश्च रमेऽरयः।
धुनोति चासिं सहसा तनुषे च महद्यशः ॥

एवं गुणक्रिययोरपि बोध्यम्।

## आदर्शः

अन्यविधं समुच्चयमाह—स त्वन्य इति। युगपदिति, एककालवृत्तित्वेन निर्दिष्टा इत्यर्थः। गुणश्च विशेष्यस्य धर्ममात्रं क्रियाभिन्नम्, न तु वैशेषिकोक्तः, न वा विशेष्यः।

तत्र गुणयौगपद्यमाह—विदलितेति। तव बलं सैन्यं विदलितसकलशत्रुबलं सद् विमलं दृष्टम् आश्वभवदित्यर्थः। अत्र बलप्रखलमुखयोर्विशेष्ययोर्धर्मौ विमलत्वमलिनत्वे गुणावेककालवृत्तित्वेन चकाराभ्यां निर्दिष्टौ।

## सुधासागरः

समुच्चयस्यैव लक्षणान्तरमाह—स त्वेति।

गुणौ चेत्यादि। अत्र गुणाः क्रियाश्चेति विग्रहे सङ्ख्याविशेषस्याविवक्षणाद्विशेषविवक्षाविरहेण सजातीयवद्विजातीयस्यापि यौगपद्यस्य लाभाद् गुणौ च क्रिये च गुणक्रिये च युगपद्भवतः, स त्रिरूप इत्यर्थः। तत्र गुणयोर्यौगपद्ये यथा—विदलितेति। स्पष्टम्। आर्या छन्दः लक्षणमुक्तं प्राक्। अत्र विमलत्वमलिनत्वयोः।

**अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे।**

**नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥५११॥**

---

### सङ्केतः

अयमिति । अत्र तादृश्योरेव उपनतः इति भवितव्यं इति च क्रिययोः ।

### बालचित्तानुरञ्जनी

क्रियायोगपद्यमुदाहरति अयमिति । मे एकपदे तया प्रियया सुदुःसहः अयं वियोगश्चोपनतः नववारिधरोदयात् अहोभिश्च निरातपत्वरम्यैर्भवितव्यम् । अत्र वियोगोपनतिक्रियायाः विशेषणतया भवनक्रियायाश्च योगः ।

### काव्यादर्शः

क्रियासमुच्चयः, यथा—-'अयम्' इति । अत्र 'उपनतः' इति 'भवितव्यं च' इति क्रिये ।

### विवेकः

एवञ्च क्रिययोर्यथा अयमित्यादि । उर्वशीविप्रयुक्तस्य पुरूरवस इयमुक्तिः । तत्र 'उपनतश्च" भवितव्यञ्चे'ति क्रियासमुच्चयेन विप्रलम्भः पारप्राप्तोऽभिव्यज्यते । तदेतद्विभिन्नविषयत्वेनोदाहरणद्वयम् । अत्र गुणस्य क्रियायाश्च युगपदुपपत्तिमुदाहर्तुं पठनीयम् ।

### दीपिका

अयमित्यादाविपनत इति भवितव्यमिति च क्रिये ।

### साहित्यचूडामणिः

अयमिति । अत्र प्रियया वियोगोपनतेः अह्ना मुक्तविशेषणतया भावस्य च क्रिययोः समुच्चयः ।

### सम्प्रदायप्रकाशिनी

अयमेकपद इति । अत्रोपनतिभवने क्रिये ।

### मधुमती

अयमिति । अत्र उपनति- भवनक्रिययोः समुच्चयः ।

### विस्तारिका

अयमिति । एकस्मिन् कालेऽत्र भवितव्यमिति भूतमित्यर्थे । अवाचकं चिन्त्यम् । अत्रोपनतिभवनक्रिययोः समुच्चयः ।

### सारबोधिनी

अयमिति । एकपदे एकस्मिन् काले । भवितव्यमिति भूतमित्यर्थे: ।

### काव्यप्रदीपः

**अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।**
**नववारिधरोदयादहोमिर्भवितव्यं च निरातपत्वरम्यैः ॥**

अत्रोपगतो भवितव्यं चेति क्रिययोः ।

### आदर्शः

क्रिययोर्यौगपद्यमाह—अयमेकपदे इति । एकपदे एककालरूपे स्थाने । अहोभिदिवसैर्नववारिधरोदया-निरातपत्वेन आतपराहित्येन रम्यैर्भवित्व्यम्, भूतमित्यर्थः । अवाचकत्वदोषस्त्वत्रास्त्येव । अत्र वियोगाहनी विशे-ष्यत्वान्न गुणौ, अत उपनति क्रिया-भवितव्यत्वक्रियायोरेव यौगपद्यम् ।

### सुधासागरः

क्रिययोर्यथा—अयमेवेति । स्पष्टम् । 'मालाभारिणी छन्दः 'विषमे ससजा गुरु अनोजे सभरायश्च तु मालभारिणीयम्' इति लक्षणात् । अंत्रोपनतो भवितव्यं चेति क्रिययोः ।

**कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।**

**पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ ५१२ ॥**

'धुनोति चासिं तनुते च कीर्तिम्' इत्यादेः 'कृपाणपाणिश्च भवान् रणक्षितौ ससाधुवादाश्च सुराः सुरालये' इत्यादेश्च दर्शनात् 'व्यधिकरणे' इति 'एकस्मिन् देशे' इति च न वाच्यम् ॥

---

**सङ्केतः**

कलुषं चेति । अत्र कालुष्यगुण- पातक्रिययोः ।

धुनोतीतिति । अत्र ऐकाधिकरण्यं क्रिययोः । कृपाणपाणित्वसाधुवादौ सिद्धरूपत्वात् गुणौ । तयोः क्षितिः स्वर्गश्च भिन्नो देशः ।

न वाच्यमिति । यथोक्तं रुद्रटेन । यथा—

**'व्यधिकरणे वा यस्मिन्**

**गुणक्रिये चैककालमेकस्मिन् ।**

**उपजायेते देशे**

**समुच्चयः स्यात् तदाऽन्योऽसौ ॥' इति ।**

तदेवं पूर्वभेदत्रयेण सह समुच्चयः षोढा । इति समुच्चयः ।

**सङ्केतः (रुय्यकः)**

गुणौ च क्रिये च गुणक्रिये चेति—अत्र गुणस्य क्रियायाश्च युगपदुपपत्तिमुदाहर्त्तुं पठनीयम्—

**कलुषञ्च तवाहितेष्वकस्मात् सितपंकेरुहसुन्दरश्रि चक्षुः ।**

**पततिञ्च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥**

इति । न वाच्यमिति । —रुद्रटेन ह्युक्तम्—

**"व्यधिकरणे वा यस्मिन् गुणक्रिये चैककालमेकस्मिन् ।**

**उपाजायेते देशे समुच्चयः स्यात्तदन्योऽसौ ॥" इति**

**बालचित्तानुरञ्जनी**

गुणक्रियायोगमुदाहरति कलुषमिति । भो महीपतीन्द्र सितपङ्केरुहसोदरश्रि तव चक्षुः अहितेष्वकस्मात् कलुषं च तेषां वपुषि आपदां कटाक्षैः पतितं च । अत्र कलुषगुणस्य आपत्कटाक्षपातक्रियायाश्च यौगपद्यम् ।

अत्र वैयधिकरण्येनैव एकस्मिन्नेव देशे समुच्चययोगः नान्यत्रेति कश्चित्, तदसङ्गतमित्याह धुनोतीति । अत्र क्रिययोरेकाधिकरणयोः समुच्चयदर्शनादसङ्गतमित्यर्थः ।

**काव्यादर्शः**

'कलुषं च' इति । कलुषत्वं गुणः, पतनं च क्रिया, तयोर्युगपद् योगः । यथा वा—'न्यञ्चत्कुञ्चितमुत्सुकं हसितवत्साकूतमाकेकरम्' इत्यादौ । आकेकरादयो गुणशब्दा, न्यञ्चदादयः क्रियाशब्दा इति सामस्त्येन गुणक्रिया यौगपदी । 'प्रसदिसाप्रमे(?)' त्यादीनां च समासकृत्तद्धितेषु संबन्धाभिधानमिति संबन्धस्य वाच्यत्वात्तस्य च सिद्धधर्मरूपत्वेन गुणत्वाद् गुणानां यौगपद्यम् । रुद्रटेन तु—

**व्यधिकरणे वा यस्मिन् गुणक्रिये चैककालमेकस्मिन् ।**
**उपजायेते देशे समुच्चयः स्यात् तदान्योऽसौ ॥**

—इति यदुक्तं तन्न वाच्यमित्याह—'धुनोति' इति । तत्र एकाधिकरणक्रिययोः समुच्चयः । 'कृपाणे'त्यादि कृपाणपामित्वं साधुवादश्च गुणौ, तयोः क्षितिसुरालयौ भिन्नौ देशौ ॥ ११४ ॥ [३४ ॥]

**विवेकः**

कलुषश्च तवाहितेष्वकस्मात् सितपङ्केरुहसुन्दरश्रि चक्षुः । पततिश्च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ कटाक्षः शुभ्रो रक्तः कृष्णश्च । न वाच्यमिति रुद्रटेन ह्युक्तम् । (रु. का. ७/२७)

व्यधिकरणे वा यस्मिन् गुणक्रिये चैककालमेकस्मिन् । उपजायेति देशे समुच्चयः स्यात्तदन्योऽसाविति ॥ एकाधिकरणत्वेन धुनोत्यादि, भिन्नदेशतया कृपाणपाणिश्चेत्यादि ।

**दीपिका**

कलुषं चेत्यादौ कलुषत्वं गुणः । पतितमिति क्रिया ।

प्रकारवैचित्र्यं सूचयन्नाह—धुनोतीति । तच्च पूर्वोदाहृतिपर्यालोचनेन लभ्यम्, तत्र सर्वत्रैव समुच्चीयमानयोर्भिन्नाधारत्वात् । देशे आश्रये । न वाच्यमिति । लक्षणस्य साधारण्यलक्षणे चोभयथा दर्शनादित्यर्थः ।

**दर्पणः**

कलुषमित्यादौ 'कलुषत्वं गुणः । पतितमिति क्रियादेशे आश्रये एकाधिकरणे स्वभावोक्तेर्विषयत्वादिति बहिर्नेयं । [ज्ञेयं] भवति स्वयमेव क्रियते परेनेत्यर्थः ।

"श्रोणीबन्ध" इत्यादौ एकैव तनुतापूर्वं श्रोणीबन्धे भूत्वा मध्यभागेऽद्भुततरणगतयश्च । प्रथम पादयोर्भूत्वा नो च योयभूत्[?]'

अत्र तरणगतीनां प्रतिसम्बन्धभेदेऽपि जात्यभेदादेकत्वं अद्वितीयस्य च । पूर्वं वयमि सद्भावोऽनुक्तोऽपि सामर्थ्यादवसीयते ।

## साहित्यचूडामणिः

केचित् न केवलं गुणक्रियामां व्यस्तत्वे, यावत् समस्तत्वेऽपि समुच्चयं निश्चिन्वन्तीत्यागूर्योदाहरति— कलुषं चेति सितेति। पुण्डरीकसौम्यकान्ति। अत्र चक्षुःकालुष्यगुणस्य विपत्कटाक्षपातलक्षणायाश्च क्रियाया यौगपद्यम्। एवं च शुद्धयोर्गुणयोः क्रिययोश्च मिथो गुणक्रिययोश्च यौगपद्यं समुच्चय इत्युक्तं भवति।

अत्र सामानाधिकरण्यप्रयुक्ता विप्रतिपत्तिर्व्यर्थेरत्याह—न वाच्यमिति। उभयथाप्यभीष्टत्वात्।

## सम्प्रदायप्रकाशिनी

कलुषं चेति। अत्र कालुष्यपातौ गुणक्रिये। एष्वपि यथावत् सदसद्योगः। यत्तु रुद्रटेनैव—

**'व्यधिकरणे वा यस्मिन् गुणक्रिये चैककालमेकस्मिन्।**
**उपजायेते देशे समुच्चयः स्यात्तदन्योऽसौ॥'**

इत्येककालं वैयधिकरण्ये एकदेशत्वे च समुच्चयान्तरमुक्तं, तन्न वाच्यमिति सम्प्रत्युदाहरणमाह— धुनोति चेत्यादि। अत्र धूननतननयोरेककालमैकाधिकरण्याद् व्यधिकरण इति न वाच्यम्।

## मधुमती

कलुषं चेति। अत्र कालुष्यगुण-पतनक्रिययोः समुच्चयः।

अत्र 'देशभेदेऽपि कालरूपाधाराभेदमादाय समुच्चयः' इति कस्यचिन्मतं निराचष्टे—धुनोतीति। धुनोतीत्यत्र सामानाधिकरण्यात्, कृपाणेत्यत्र वैयधिकरण्याच्चेत्यर्थः। न च कालरूप एवैको देशः। सामानाधिकरण्स्य तदघटितत्वात्। एवं च सामानाधिकरण्य-वैयधिकरण्ययोः समुच्चयदर्शनात् नियमो नास्तीति तात्पर्यम्। इति समुच्चयः।

## विस्तारिका

अत्र देशभेदेऽपि कालरूपाधाराभेदमादाय समुच्चय इति कस्यचित् सम्मतं दूषयति—धुनोतीति।

अत्र सामानाधिकरण्यात् कृपाणेत्यत्र वैयधिकरण्यादित्यर्थः। न च काल एव भिन्ने दिश एककालीनानामेव समानदेशत्वस्य विवक्षितत्वेन कालस्यावच्छेदकत्वेनैव भानात्, न तु देशत्वेन, अन्यथा कालरूपाधिकरणमादाय तथात्वे भूतभाविनोरपि समुच्चयापत्तेरिति न वाच्यमिति रुद्रटादिभिरुक्तमिति शेषः। तथोक्तं रुद्रटेन व्यधिकरणे वा यस्मिन् गुणक्रिये चैककालमेकस्मिन्नुपजाते देशे समुच्चयः स्यात्, तदन्योऽसाविति। एवं च सामानाधिकरण्यवैयधिकरण्ययोः समुच्चयदर्शनान्नियमो नास्तीत्यत्र तात्पर्यम्।

## सारबोधिनी

अवाचकमिति। चिन्त्यम् कलुषमिति क्रोधितमित्यर्थः।

## काव्यप्रदीपः

गुणक्रियोर्यथा

'कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥'

अत्र कलुषत्वपतनयोर्गुणक्रिययोः । अत्र कश्चिद्वैयधिकरण्य एव समुच्चय इत्याह तन्न युक्तम् । 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादौ सामानाधिकरण्येऽपि दर्शनात् । केचित्तु सामानाधिकरण्य एवायमित्याहुस्तदपि न सम्यक् 'कृपाणपाणिश्च भवान्तरणक्षितौ ससाधुवादाश्च सुराः सुरालये' इत्यादौ वैयधिकरण्येऽपि तद्दर्शनात् ।

## आदर्शः

गुणक्रियायौगपद्यमाह—कलुषञ्चेति । अहितेषु रिपुषु विषयेषु सितपङ्केरुहश्रि तत्र चक्षुरकस्मात् कलुषमभवच्च । हे महीपतीन्द्र, प्रस्फुटं तेषामहितानामुपर्यापदां कटाक्षैः पतितञ्च । अत्र चक्षुषोर्धर्मः कलुषत्वं गुणः, कटाक्षाणां विशेष्याणां पातः क्रिया, तयोर्यौगपद्यम् । एषां यौगपद्यमेकाधिकरणे भिन्नाधिकरणे च दृश्यते, तद्भेदेनैतत् प्रभेदो न वक्तव्य इत्याह—धुनोतीति ।

## सुधासागरः

गुणक्रिययोर्यथा—कलुषमिति । छन्दः पूर्वोक्तमेव । हे महीपतीन्द्र तव सितपङ्केरुहसोदरश्रि चक्षुः अहितेषु शत्रुषु कलुषं च क्रूरतामुपगतं च तेषां शत्रूणां वपुषि आपदां कटाक्षैः प्रस्फुटं पतितं चेत्यन्वयः । अत्र कलुषत्वपतनयोर्गुणक्रिययोः ।

धुनोतीत्यादि । अयमाशयः—अत्र कश्चिद् वैयधिकरण्ये एव समुच्चय इत्याह । तन्न युक्तम् । 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादौ सामानाधिकरण्येऽपि दर्शनात् । केचित्तु सामानाधिकरण्य एवायमित्याहुः । तदपि न सम्यक् । 'कृपाणपाणिश्च भवान् रणक्षितौ ससाधुवादाश्च सुराः सुरालये'—इत्यादौ वैयधिकरण्येऽपि दर्शनादिति ।

(सू० १८०) एकं क्रमेणानेकस्मिन् पर्यायः

एकं वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा स पर्यायः। क्रमेणोदाहरणम्—

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम्॥ ५१३॥

---

सङ्केतः

क्रमेणेति। क्रमग्रहणाच्च पर्यायः इति सान्वयं नाम। युगपदेकस्य अनेकत्र वर्तने तु विशेषालङ्कारः। अत एव तत्रापि युगपदित्युक्तम्।

श्रोणीबन्धः इति। अत्र एकस्यैव तनुतादेः द्वये वृत्तिः दर्शिता। पूर्वं मुखस्य उपमानसद्भावात् सद्वितीयत्वमिति विनिमयो घटते। पूर्वार्धं अत्र उदाहरणम्।

नन्वाश्रयेति। अत्र एकस्य विषस्य बहुषु अब्ध्यादिषु वृत्तिः।

सङ्केतः (रुय्यकः)

क्रमेणेति प्रतीकानन्तरम्—

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संस्मृता लोचनाभ्याम्।
धत्ते वक्षः कुचसचिवतामद्वितीयञ्च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन॥ इति पाठः।

बालचित्तानुरञ्जनी

पर्यायालङ्कारं लक्षयति एकमिति। व्याकरोति एकं वस्त्विति। स्वतः सिद्धिरिति भावः। अन्येन प्रयोजकेनेत्याह करणमेव वयदेक [?] तद्भवति क्रियते चेति द्विधा। तत्राद्यमुदाहरति श्रोणीति। श्रोणीबन्धस्तनुतां त्यजति, मध्यभागः सेवते। पद्भ्यां तरलगतयः मुक्ताः लोचनाभ्यां संश्रिताः, वक्षः कुचसचिवतां धत्ते वक्त्रं तु अद्वितीयम्। यौवनेन तद्गात्राणां गुणविनिमयः कल्पितः। अत्रैकैकस्य तनुतादेरन्यत्र भवनम्। एकस्य बहुषु

भवनमुदाहरति नन्विति। अत्र एकस्य कालकूटस्य हृदादिष्वनेकेषु भवनं एकस्य पूर्वाश्रयमत्यजत एव। ननु भो कालकूट उत्तरोत्तरविशिष्टपदादयं स्थितिस्तव केनोपदिष्टा ? प्राक् अर्णवस्य हृदये, अथ अनन्तरं वृषलक्ष्मणो हरस्य कण्ठे, अधुना पुनः खलानां वचसि वससि।

## काव्यादर्शः

एकमिति। एकमाधेयमनेकस्मिन्नाधारे यत् तिष्ठति क्रियते वा स द्विधा पर्यायः।

ननु, एकस्यानेकत्र वृत्तौ विशेषालंकारो वक्ष्यते, तत् किमयमुच्यत इत्याशङ्क्याह—क्रमेणेति। इह क्रमप्रतिपादनं, अत एव तत्रापि युगपद् ग्रहणं कृतम्। क्रमाश्रयणाच्च पर्याय इति सान्वयं नाम। क्रमेण उदेति अनन्तरम्।

**श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः**
**पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्।**
**धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं**
**तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन॥**

—इत्ययं पाठः। 'तनुतामेव मध्यभागः सेवते' अत्र एकस्य तनुतादेर्द्वये वृत्तिर्दर्शिता। आद्यार्धमेव च श्लोकस्योदाहरणम्।

'नन्वाश्रये'ति। अत्र एकस्य विषयस्य अब्ध्यादिषु बहुषु वृत्तिः॥

## विवेकः

पर्याय इति यौगपद्यवैपरीत्यात् समुच्चयानन्तरमस्य लक्षमम्। अयञ्च द्विधा "तत्रैकमनेकस्मिन्नाधारे यद्भवति क्रियते वा स एकः पर्यायः। नन्वेकमनेकगोचरमिति विशेषालङ्कारोऽत्र तत् किमर्थमिदमुच्यत इत्याशङ्क्-चोक्तं क्रमेणेति इह क्रमप्रतिपादनात्तत्र यौगपद्यप्रतीतेरस्य ततो विभिन्नविषयत्वम्। क्रमाश्रयणादेव पर्याय इत्यन्व-र्थाभिधानम्। विनिमयाभावाच्च परिवृत्तेर्वैलक्षण्यम्।" (अ. स. १८९-९० पृ.)। नन्वित्यादि—अत्र कालकूट-मेकमनेकस्मिन्नसंहते समुद्रहृदयादौ क्रमेण स्थितिमन्निबद्धम्।

## दीपिका

एतेन सामानाधिकरण्यवैयधिकरण्यादमी प्रकाराः प्रत्येकं द्विधेत्यर्थ सिद्धम्।

केचित्तु यौगपद्यमनादृत्य जातिद्रव्ययोरप्येकाश्रयसमुच्चयमिच्छन्ति। तत्र जात्योर्यथा—

**"हेम्नां सरसिजानाञ्च सारैरस्याः कृतं मुखम्।**
**कुतोऽन्यथा स्फुरद्गौररससौरभहारि तत्॥"**

द्रव्ययोर्यथा—

**"भास्वतः शिशिरांशोश्च तेजोजालमुदित्वरम्।**
**यस्य प्रतापयशसी व्यञ्जयेतामहर्निशम्॥"**

भवतीति प्रयोजकानिर्देशमभिप्रैति, क्रियत इति तु तन्निर्देशः। ये तु भवतीत्यनेनैवावस्थितिः क्रियत इतिं चागन्तुकी विवक्षितेत्याहुस्तेषां खलवचनस्य कालकूटस्थितिर्वास्तवी प्रसज्येत। आश्रयस्थितिराश्रयव्यवस्था। उत्तरोत्तरं विशिष्टं पदं स्थानं यस्यामाश्रयस्थितौ सा तथा। रागस्यैकत्र लौहित्यात्मनः, अपरत्र स्नेहात्मनः। एकत्वमविरुद्धमिति। अतिशयोक्तिगर्भीकारतद्विरहाभ्यां प्रत्येकं द्वैविध्ये चतुर्विधमिदमलङ्करणमिति भावः। न च कण्ठेऽधुनेत्यत्राप्यतिशयोक्तेरसम्बन्धे सम्बन्धरूपाया विद्यमानत्वेन कथमेव व्यवस्थितम्, व्यङ्ग्यभेदाभेदरूपाया ध्रुवीकरणादिति।

**दर्पणः**

पर्यायालङ्कारः आश्रयस्थिति आश्रयव्यवस्था। उत्तरोत्तरं विशिष्टं स्थानं यस्यामाश्रयस्थितौ सा तथा।

**साहित्यचूडामणिः**

पर्यायमाह—एकमिति। क्रमग्रहणं वक्ष्यमाणद्वितीयविशेषालङ्कारव्यवच्छेदाय तत्र यौगपद्यस्यावस्थापयिष्यमाणत्वात्। तत एव पर्याय इत्यर्थाश्रयणं भवति।

क्रियते वेति। स्वतस्सिद्धिर्भावः, अन्येन प्रयोजनेनोत्पादनं करणम्। एवञ्च यदेकं तद् भवति क्रियते वेति द्विधा। यदनेकं तत् संहतमसंहतं चेति द्वि विधम्। श्लेषेणौपम्येन च विच्छित्त्यन्तरमिति चत्वारो भेदाः।

क्रमेणोदाहरति—नन्विति। आश्रयस्थितिराश्रयमर्यादा। अत्र कालकूटस्य...बिम्बोष्ठहृदययोः संहतयोर्वृत्तिर्दृश्यत इति स्वतः सिद्धिलक्षणोक्ता।

**सम्प्रदायप्रकाशिनी**

कृपाणेति। अत्र क्षितौ सुरालय इत्येककालदेशभेदादेकस्मिन् देश इत्यपि न वाच्यम्।

व्याचष्टे—एकं वस्त्विति। विशेषालङ्कारस्यावृत्त्यै क्रमग्रहः, तत्र हि यौगपद्यम्।

**मधुमती**

एकमिति। यथासङ्ख्ये तु प्रतिनिर्देश्यानामपि बहुत्वात् ततो भेदः। भवनं स्वतः सम्भवित्यम्, करणं च कविप्रतिभोत्थापितत्वम्।

उदाहरति—नन्वाश्रयेऽति। प्रथमं हृदये ततः कण्ठे, ततो मुखे इत्यर्थः, वाचा मुखोपलक्षणात्, अत्र कालकूटस्य अर्णवहृदय-वृषलक्ष्मकण्ठयोः निवासेऽपि खलमुखे निवासः कविप्रतिभोत्थः।

रागस्येति। तथाच रागशब्दवाच्यपरः रागशब्दः इति प्रकृतोदाहरणत्वम्। अत्र च स्वतः सम्भवित्वम्।

## विस्तारिका

एकमिति । क्रमेण कालभेदेन भवति, स्वत एव निष्पद्यते ।

नन्विति । आश्रयस्थितिः प्रथमं हृदि, ततः कण्ठे, ततो मुख इत्यर्थः । वा विमुख इत्यर्थात् ।

## सारबोधिनी

एकमिति । भवति स्वत एव निष्पद्यते क्रियते, कविप्रतिभोत्पादितेन कर्त्रा निष्पाद्यते । नन्विति ।

## काव्यप्रदीपः

**एवं क्रमेणानेकस्मिन्पर्यायः**

एकत्वेन विवक्षितं वस्तु यत्र क्रमेणानेकस्मिन्भवति क्रियते वा स एकः पर्यायः । अत्र क्रमेणेति समुच्चयव्यावर्तनाय । प्रयोजकानिर्देशतन्निर्देशौ भवतिकरोत्यर्थौ न तु स्वाभाविकत्वास्वाभाविकत्वे । वृषलक्ष्मणः कण्ठे कालकूटवासस्यास्वाभाविकत्वेन भवतीत्यत्रानुदाहरणत्वापत्तेः । तत्राद्यो यथा—

**'नन्वाश्रयस्थितिरियं तव कालकूट**
**केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।**

**प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ**
**कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥'**

अत्र कालकूटस्य वस्तुत एकस्यानेकत्र वासे प्रयोजकं किंचिदपि नोक्तम् ।

## काव्यप्रकाशखण्डनम्

एकं क्रमेणानेकस्मिन् पर्यायः (का. ११७, पू०)

एकं वस्तु क्रमेणानेकस्मिन् यदभिधीयते स पर्यायः । उदा०—

**नन्वाश्रयस्थितिरियं तव कालकूट**
**केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।**

**प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ**
**कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥**

हे कालकूट ! इयमाश्रयस्थितिस्तव केनोपदिष्टा कथिता ? कीदृशी ? उत्तरोत्तरं विशिष्टमुत्कृष्टं पदं स्थानं यस्यां सा । तथा प्राक् प्रथमतोऽर्णवस्य समुद्रस्य हृदये, अथानन्तरं वृषलक्ष्मणो महादेवस्य कण्ठे, अधुनेदानीं खलानां दुष्टानां वाचि मुखे वससीत्यर्थः । [प० ५४, २]

### आदर्शः

पर्यायालङ्कारमाह—एकमिति। भवतीति, स्वयं भवतीत्यर्थः। क्रियत इति, परेण क्रियत इत्यर्थः। क्रमेणेति, स्वयं भवनपरक्रियमामत्वक्रमेणेत्यर्थः।

नन्वाश्रयेति। हे कालकूट, तवोत्तरविशिष्टपदा उत्तरोत्तरच्चरूपप्रकृष्टस्थाना आश्रयस्थितिः केनोपदिष्टा। उत्तरोत्तरोच्चोच्चस्थानात्येवाह—प्रागित्यादि। हृदयात् कण्ठ उच्चस्ततोऽपि मुखस्था वागुच्चा इत्युत्तरोत्तरविशिष्टपदत्वम्। कलिकाल एव खलसत्त्वादधुनेत्युक्तम्। अधुना पुनरित्यन्वयः। अत्रैकस्य कालकूटस्य हृदयाद्यनेकस्थानेषु स्वयंभवनम्। व्यक्तिभेदेऽपि कालकूटस्यैक्यादैक्यम्, वाचि तु तत्तुल्यतापकत्वादारोप्यमेव बोध्यम्।

### सुधासागरः

एकमित्यादि। एकत्वेन विवक्षितं वस्तु यत्र क्रमेणानेकस्मिन् भवति क्रियते वा स एकः पर्याय इत्यर्थः। अत्र क्रमेणेति समुच्चयव्यावर्तनाय, वक्ष्यमाणविशेषालङ्कारद्वितीयभेदवारणाय च, तत्र यौगपद्यसत्त्वादिति बोध्यम्। प्रयोजकानिर्देशतन्निर्देशौ भवतिकरोत्यर्थौ, न तु स्वाभाविकत्वास्वाभाविकत्वे, वृषलक्ष्मणः कण्ठे कालकूटवासस्यास्वाभाविकत्वेन भवतीत्यत्रानुदाहरणत्वापत्तेः। एवं च स्वतःसम्भवित्वं कविप्रौढोक्तिसिद्धत्वं च कल्पयन्तो भ्रान्ताः।

उदाहरणम्—नन्वेति। वृषलक्ष्मणः शम्भोः। स्फुटमन्यत्। वसन्ततिलका छन्दः। लक्षणमुक्तं प्राक्। अत्र कालकूटस्य वस्तुत एकस्यानेकत्र वासे प्रयोजकं किञ्चिदपि नोक्तम्।

यथा वा

बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।

अधुना हृदयेऽप्येष मृगशावाक्षि लक्ष्यते ॥ ५१४ ॥

रागस्य वस्तुतो भेदेऽप्येकतयाध्यवसितत्वादेकत्वमविरुद्धम् ।

---

### सङ्केतः

बिम्बोष्ठे इति । अत्र पूर्वाश्रयात्यागादेव एकस्य रागस्य हृद्यपि वृत्तिः निबद्धा । यथावेति च प्रकारान्त-रोपक्षेपार्थम् ।

रागस्येति । ओष्ठे रागः ताम्बूलाख्यः, हृदि तु प्रेमाख्यः अन्यः ।

### बालचित्तानुरञ्जनी

अनेकत्र भवनमुदाहरति बिम्बोष्ठेति । हे तन्वि ! पूर्वं बिम्ब एवौष्ठरागः अदृश्यत । हे मृगशावाक्षि अधुना एष रागः हृदयेऽपि लक्षते, अत एकस्य रागस्य पूर्वमाश्रयं बिन्बोष्ठमत्यजत एव हृदये भवनं प्रदर्शितम् । ननु रागे, एकत्रारुण्यमन्यत्र भावविशेष इति कथमेकत्वमित्यत आह रागस्येति ।

### काव्यादर्शः

यथा वेति । प्रकारान्तरोपक्षेपार्थम् । 'बिम्बोष्ठे' ति । अत्र प्राच्यमाश्रयमत्यजत एव रागस्यैकस्यहृदयेऽपि वृत्तिर्निबद्धा । एवं लक्षणमवान्तरं भेदमाश्रित्य एकत्रैव उदाहरणत्रयं दर्शितम् ।

'रागस्य' इति । अन्यो हि राग ओष्ठगतस्ताम्बूलादिजनितोऽन्यश्च चित्त इति भेदेऽपि अभेदोपचारः ।

### विवेकः

बिम्बोष्ठ एवेत्यादि । "क्रमेणेतिं । प्रतीकानन्तरम्—श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् । धत्ते वक्षः कुचसचिवतामद्वितीयञ्च वक्त्रं तद्गात्राणां गुणविनिमयः कल्पितो यौवनेनेति पाठः । आद्यार्धमेव श्लोकस्योदाहरणम् ।" (रु. सं. ६८ पृः) । एकस्थानस्थितस्य वस्तुनः स्थानान्तरप्राप्तिमात्रमत्र विनिमयपदेन विवक्षितम् ।

### दीपिका

वस्तुतस्तु प्रकरणप्रायिक्यतिशयोक्तिरिति द्वितीयां विधामतिशयोक्तिगर्भीभूतां प्रथममुदाहरति-श्रोणीत केचित्, तत्र । अत्र तनुताया उभयत्रैकरूप्येण तरलगतीनाञ्च । प्रतिसम्बन्धिभेदेन द्वयोरप्युदाहरणत्वात् । धत्ते वक्ष इत्यत्रापि पूर्ववत् । वक्त्रस्याद्वितीयत्वमर्थं सामार्थ्यावसेयमित्यस्यालङ्कारस्य सम्भवः ।

## दर्पणः

रागः एकत्र लौहित्यं अन्यत्र स्नेहः, एकत्वमविरुद्धमिति अतिशयौक्ति गर्भाकारतद्विरहाभ्यां प्रतिभेदं द्वैविध्याच्चतुर्विधोऽयं समुच्चयप्रकार इत्यर्थः। किञ्चात्र प्रकरणेऽतिशयोक्तेः प्रायिकत्वं रक्ष्यति।

## साहित्यचूडामणिः

ननु रागः कदाचिदारुण्यम्। अन्यदा भावविशेष इत्यस्य कथमेकत्वमित्याह—रागस्येति। श्लेषोपश्लेषादेकत्वमविरुद्धमिति यावत्।

श्रोणीति। अत्र तनुताया एकस्य श्रोणीबिम्बमध्यभागयोः क्रमेण वृत्तिः। सा च गुणविनिमयः कल्पितो यौवनेनेत्युक्तत्वादन्योत्पादनरूपे करणे पर्यवस्यति। विनिमयोऽत्र व्यत्ययरूपो गौणः, न तु दानादानलक्षणो मुख्यः, तारुण्यादावूह्यम्। एकस्या नितम्बबिम्बस्य त्यागहेतुत्वान्मध्यभागस्य च सेवाहेतुत्वात् संहतत्वम्। एवं पादलोचनादीनां तरलगतिमोचनसंश्रयादावूह्यम्। तं ताणेति।

## सम्प्रदायप्रकाशिनी

श्रोणीबन्ध इति। यौवनेन गात्राणां बाल्यगुण विनिमयः कृतः। तथा हि—तनुतामुपचीयमानः श्रोणीबन्धस्त्यजति। अपचीयमानो मध्यभागः सेवते। पद्भ्यां मान्थर्यावलम्बिभ्यां तरलगतयस्त्यक्ताः त्यक्तमान्थर्याभ्यां लोचनाभ्यां श्रिताः। अद्वितीयं वक्षः कुचसचिवतां धत्ते। त्यक्तमातृकुचसाचिव्यं लोचनाभ्यां श्रिताः। अद्वितीयं वक्षः कुचसचिवतां धत्ते। त्यक्तमातृकुचसाचिव्यं वक्त्रमद्वितीयमनुपमं भवति। अत्रैकस्य तनुतादेरनेकत्र क्रमेण भावः।

## विस्तारिका

रागस्येति। तथा च रागशब्दवाच्यपरो रागशब्द इति भावः।

## सारबोधिनी

बिम्बेति। रागो लौहित्यमनुरागश्च।

## काव्यप्रदीपः

केवलमयं वास्तविक एकत्वे किं त्वारोपितेऽपि। यथा—

**'बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत।**
**अधुना हृदयेऽप्येष मृगशावाक्षि दृश्यते॥'**

अत्र प्रयोजकानिर्देशः स्फुट एव। रागपदार्थस्य त्वोष्ठे लौहित्यात्मकतया हृदये तु स्नेहाद्यात्मकत्वेन भेदेऽप्यभेदकत्वस्याध्यवसानान्नैकत्वविवक्षाविरोधः।

## आदर्शः

एकशब्दवाच्यत्वेनैकत्वाध्यासादप्याह—यथा वा—बिम्बोष्ठ एवेति । रागो रक्तिमा अनुरागश्च । अत्र परक्रियमाणत्वेनानुक्तत्वाद् दृश्यमानत्वेन च भवतीत्यवसीयते । अत्रेति । अध्यवसानमत्रैकरागशब्दवाच्यत्वात् ।

## सुधासागरः

न केवलमिदं वास्तविके एकत्वे किन्त्वारोपितेऽपि । यथा बिम्बोष्ठ इति । स्पष्टम् । रागस्येत्यादि । अत्र प्रयोजकानिर्देशः स्फुट एव । रागपदार्थस्य त्वोष्ठे लौहित्यात्मकतया, हृदये तु स्नेहाद्यात्मकत्वेन भेदेऽपि श्लेषेणैकत्वस्याध्यवसानान्नैकत्वविवक्षाविरोधः ।

**तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसं।**

**बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण ॥ ५१५ ॥**

---

### सङ्केतः

रागस्येति । ओष्ठे रागः ताम्बूलाख्यः, हृदि तु प्रेमाख्यः अन्यः ।

एवं एकस्य अनेकत्र स्थितिमुक्त्वा करममुदाह्रियते—तंताणेति । तत् सामर्थ्यं तेषां दैत्यानां इन्द्रस्यापि भयकृताम्, श्रीबन्धुरत्नानां आ सामस्त्येन हरणे तत्परमपि, कुसुमबाणेन मृदुशस्त्रेणापि सकलरत्नासारे बिम्बाधरे विक्रमं परित्यज्य मनः चुम्बनादिसक्तं कृतं इत्यर्थः । 'बिम्बाधरः सकलरत्नेभ्योऽधिकः' इति व्यङ्ग्यव्यतिरेकोऽपि । अन्ये तु 'सकलरत्नसारतुल्यः अधरः इति तेषां तत्र प्रीतिः वास्तवी' इति व्यङ्ग्योपमामाहुः अतिशयोक्तिगर्भता तु सर्वत्र ज्ञेया ।

### सङ्केतः (रुय्यकः)

आद्यार्धमेव श्लोकस्योदाहरणम्—

**तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम्।**
**बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥**

तेषामसुराणां, श्रीसहोदररत्नं कौस्तुभः । निवेशितं चुम्बनैकसक्तं कृतम् ।

### बालचित्तानुरञ्जनी

एवंलक्षणमवान्तरभेदमाश्रित्य एकस्यानेकत्र भवने उदाहरमत्रयमुक्तमिदानीं द्वितीयमुदाहरति । तत्तेषां सुराणां तत् हिअअं हृदयं, सिरिसहोअररअणाहरणम्मि श्रीसहोदररत्नाभरणे श्रीकृष्णे एक्करसं एकरसंकुसुमबाणेन पिआणं प्रियाणां, बिम्बाधरे णिवेसिअं निवेशितम् । अत्र एकस्य हृदयस्य यथोक्तरत्नाभरणबिंबाधरयोः असन्त-योर्वित्तिः कुसुमबाणेन त्यक्तत्वात् करणरूपत्वम्[?] ।

### काव्यादर्शः

एकमनेकत्र क्रियते, यथा—'तं ताण' इति । 'तद् हृदयं निःशङ्कव्यवसायं तेषामसुराणामिन्द्रमपि अभिभ-वतां श्रीसहोदराणां रत्नानामा समन्ताद्धरणे एकरसं तत्परं कुसुमबाणेन सुकुमारतरोपकरणेनापि प्रियाणां बिम्बाधरे निवेशितम् । चुम्बनादिसक्तं कृतं यद् अत्यन्तं विजिगीषा—जाज्वल्यमानमभूद्' इत्यर्थः । सकलरत्नसारतुल्यो बिम्बाधर इति तेषां बहुमानो वास्तव एवेति प्रतीयमानोपमापि ।

**विवेकः**

तं ताणेत्यादि—तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम्। बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥ तेषामसुराणां, श्रीसहोदररत्नं कौस्तुभः। निवेशितं चुम्बनैकसक्तं कृतमिति वाच्यं प्रतीतावनुरणनतया। कान्ताऽऽधरकौस्तुभयोः कान्तादिसाम्यादुपमाऽत्र प्रतीयमाना।

**दीपिका**

द्वितीयपर्यायमतिशयोक्तिरहितं प्रपञ्चार्थमुदाहरति—तमिति। ताणं तेषां पातालवासिनामसुराणामित्यर्थः।

**दर्पणः**

एवमेकस्यानेकत्र प्रपञ्चार्थं पर्यायस्य उदाहरमत्रयं दत्वा करणाख्ये भेदे उदाहरति तं ताणेति।

**तत्तेषां श्रीसहोदररत्नाभरणे सहृदयमेकरसं।**
**बिम्बाधरे प्रियाणां निवेशितं कुसमबाणेन ॥**

तेषां पातालवासिनामत्वराणां [?] अन्यः पर्यायाख्योऽलङ्कारः। मधुरिमित्यादौ। अमृतव्यक्तिरंतर्गतविषयकथनं चैकस्मिन् खलवचनस्य भूतान्तादित्यादेश्च काललक्षणप्रयोजननिर्देशात् क्रियत इति द्वितीयपक्षौदातिकत्वं [?]। इह च द्वितीयोदाहरणे कस्यचिद्रूपस्य परिहारपूर्वकं रूपान्तरापत्तेः। परिवृत्तिविषयत्वं नाशंकींयमित्याह अत्रेति। एकस्यैव कर्तुः हीनं स्त्री यस्य वस्तुनः परत्र समर्पणमुपादनं परकीग्रहणं अविवक्षितत्वादिति तथा विवक्षायां पुनः लतानामित्यादावितरयैवोपनिबन्धप्रसंग इति भावः।

**साहित्यचूडामणिः**

**तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम्।**
**बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥ इति।**

तेषां पातालवासिनामसुराणामिति प्रकरणात्। यैः क्रियासमभिहारतः पुरन्दरपुरामर्दनादि किं किं न कृतम्। श्री सहोदररत्नाहरणे श्रीसहोदराणामतएवानिर्वाच्योत्कर्षाणामित्यर्थः। तेषां रत्नानामासमन्ताद्धरणे एकरसं तत्परं यद्धृदयं तत् कुसुमबाणेन सुकुमारतरोपकरणसंभारेण प्रियाणां बिम्बाधरे निवेशितम् तदवलोकनपरिचुम्बनमात्रकृतकृत्यताभिमानयोगि, प्रियाणां बिम्बाधरे निवेशितम् तदवलोकनपरिचुम्बनमात्रकृतकृत्यताभिमानयोगि कृतं तेषां हृदयमिति, यदत्यन्तं विजीगीषाज्वलनजाज्वल्यमानमभूत्। अत्र हृदयस्यैकस्य यथोक्तरत्नाहरणबिम्बाधरयोरसंहतयोर्वृत्तिः निवेशितं कुसुमबाणेनेत्युक्तत्वात् करणरूपा। अर्थतो हृदयस्य रत्नाहरणचिन्तामपास्य बिम्बाधरैकशरणतया तयोरसंहतत्वम्।

**सम्प्रदाप्रकाशिनी**

तं ताणेति

**तत् तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम्।**
**बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन॥**

अत्र दानवानां कौस्तुभापहरणे सक्तस्य हृदयस्य प्रियाधरे निवेशनं करणम्।

**मधुमती**

तंताणेति। श्रीसहोदररत्नाभरणे कौस्तुभाभरणे श्रीहरौ इत्यर्थः।

**विस्तारिका**

तं ताणेति।

**तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम्।**
**बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन॥**

श्रीसहोदररत्नं कौस्तुभः।

**सारबोधिनी**

**तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम्।**
**बिम्बाधरे प्रियाणां निवेशितं कुसमबाणेन॥**

तेषां दैत्यानाम्। श्रीसहोदररत्नं कौस्तुभः।

**काव्यप्रदीपः**

द्वितीयो यथा—

**'तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम्।**
**बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेण॥'**

अत्र कुसुमबाणेनेति प्रयोजकनिर्देशः।

**आदर्शः**

क्रियत इत्युदाहरति—तं ताणेति।

**तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम्।**
**बिम्बाधरे प्रियाया निवेशितं कुसुमबाणेन॥ इति संस्कृतम्।**

श्रीसहोदररत्नं कौस्तुभोऽमृतञ्च तदाहरणे तयोराहरणनिमित्तं तेषां प्रबन्धगम्यानाम् असुराणामेकरसं हृदयं मोहिनीरूपायाः प्रियाया बिम्बाधरे कुसुमबाणेन निवेशितमित्यर्थः। मोहिनीकन्यागतहृदयैरसुरैः कौस्तुभामृते उपेक्षिते इत्यर्थः। अत्रासुराणां कौस्तुभामृत[गत]हृदयस्य प्रियाधरे कामेन क्रियमाणत्वम्।

परेण क्रियामाणत्वस्य सामान्यत उक्तौ विशेषाणामपि तथात्वलाभे उदाहरति—यथा वा—श्रोणीबन्ध इति। एकेन सन्त्यज्यमानस्यापरेण ग्रहणरूपस्तद्गात्राणां गुणविनिमयो यौवनेन कल्पितः। तदेव विशिष्य दर्शयति—श्रोणीबन्ध इति। बन्धः संस्थानं संस्थानविशिष्टा श्रोणीत्यर्थः। यौवने श्रोणीसंस्थानस्थौल्यान्मध्यभागक्षैण्याञ्च। पद्भ्यामिति हंसकुञ्जरगभीरगमनाल्लोचनतारल्याञ्च। धत्ते वक्ष इति। कुचसचिवतां कुचसद्वितीयत्वं तद्धरणाच्चाद्वितीयत्वत्यागोऽर्थवशलभ्यस्तदेवाद्वितीयत्वम् आस्यं कर्तृधत्ते इत्येवार्थः। ननु कथमेतत्? वक्षसः कुचसद्वितीयत्वधारणात् स्वाधेयद्वितीयराहित्यस्यैव धरणमिति विनिमयाभावात्, एकस्यानेकत्र स्थित्याभावाच्च। उच्यते—मनोहरणे कर्मणि वक्षः कुचरूपसद्वितीयवत्त्वं धत्ते कुचसहितवक्षसा मनोहरणात्। तथा च बाल्यकालीनस्य मनोहरणे सद्वितीयराहित्यस्य त्यागोऽवगम्यते, तदेव मनोहरणे सद्वितीयराहित्यमास्यं कर्त्तृ धत्त इत्यर्थः। अलङ्कारादिसद्वितीयं विनाऽप्यास्येनैव मनोहरणात्। अत्र तदङ्गानां गुणविनिमयस्य सामान्यतो यौवनेन क्रियमाणत्वोक्त्यैव मध्यभागादिना तनुताद्याश्रयणस्यापि यौवनेन क्रियमाणत्वलाभः।

### सुधासागरः

द्वितीयो यथा—तं ताणेति। आर्या छन्दः।

**यस्यां प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि।**
**अष्टादश द्वितीये पञ्चदश चतुर्थके सार्या॥ इति लक्षणात्।**

**तत् तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम्।**
**बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन॥**

इति संस्कृतम्। तेषां दैत्यानाम्। श्री सहोदररत्नं कौस्तुभः। प्राकृते लिङ्गवचनानियम इत्येकस्यां मोहिन्यां प्रियाणामिति बहुवचनम्। स्पष्टमन्यत्। अत्र एकस्य हृदयस्यानेकत्र स्थितौ कुसुमबाणेनेति प्रयोजकनिर्देशः। श्रोणीबन्धस्त्यजति तनुतामित्याद्युदाहरणन्तु प्रक्षिप्तमिति बोध्यम्।

(सू० १८१)

**अन्यस्ततोऽन्यथा।**

**अनेकमेकस्मिन् क्रमेण भवति क्रियते वा सोऽन्यः। क्रमेणोदाहरणम्—**

**मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति।**
**अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव॥ ५१६॥**

---

**सङ्केतः**

मधुरिमेति। अत्र एकस्मिन् वचसि विषममृतं च अनेकं निबद्धम्। तदेव वचनमेव।

**सङ्केतः (रुय्यकः)**

पुनः क्रमणेत्यादि प्रतीकानन्तरम्—

**मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति।**
**अथ कथयति मोहहेतुमन्तर्गतमिव हालाहलं विषं तदेव॥**

**बालचित्तानुरञ्जनी**

पर्यायस्यैव लक्षणान्तरमाह अन्य इति। व्याकरोति अनेकमिति। तत्राद्यमुदाहरति मधुरिमेति। अहो आश्चर्यम्। खलानां मधुरिमरुचिरं वचः प्रथमं अमृतं व्यनक्ति। अथ मोहहेतुः, तदेवान्तर्गतं हालाहलं विषमिव कथयति।

अत्रानेकममृतं विषं च एकस्मिन्नाधारभूते खलवचसि भवति।

**काव्यादर्शः**

'मधुरिमे' ति। अत्र अनेकममृतं हालाहलं च एवस्मिन् खलवचसि आधारे भूतम्।

**विवेकः**

अन्य इत्यादि—एकस्मिन्नाधारेऽनेकमाधेयं यत् स द्वितीयः पर्यायः। समुच्चयालङ्काररूपत्वं निराकर्तुं क्रमेणेति योजयति। अत एव समुच्चयलक्षणे युगपदग्रहणम्। अत्रापि "क्रमेणेत्यादि प्रतीकात् परम्—मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति। अथ कथयति मोहहेतुरन्तर्गतमिव हालहलं विषं तदेव॥

## दीपिका

अन्यः पर्याय इति शेषः। मधुरिमेति। आदावमृतव्यक्त्यन्तर्गतविषयकथने ह्येकस्मिन् खलवचसि प्रयोगमन्तरेणोपविबद्धमिति भवतीति पक्ष उदाहरणतापत्तिः।

## साहित्यचूडामणिः

अथैतद्विपर्ययादपरंपर्यायमाह—अन्य इति। यत् सूत्रम् "एकमनेकस्मिन् अनेकमेकस्मिन्वा क्रमेण पर्यायः" (अलङ्कारसू० ६१) इति। अत्रापि क्रमग्रहणानुवृत्त्या समुच्चयस्य व्यवच्छेदः, गुणक्रियायौगपद्यस्य तल्लक्षणस्योक्तेः। भवति क्रियते वेति प्राग्वत् संहतासंहतत्वयोरत्र न वैचित्र्यमित्युपेक्षा।

मधुरिमेति।अत्रैकस्मिन् खलवचने सुधाभिव्यक्तिकालकूटकथनयोरनेकयाः क्रमेण वृत्तिः। अतएव हि तदेवेत्युक्तम् व्यनक्ति कथयतीत्युक्तत्वात् स्वसिद्धिरूपो भावः।

## सम्प्रदायप्रकाशिनी

पर्यायान्तरमाह—अन्यस्ततोऽन्यथेति।

अन्यथात्वं दर्शयति—अनेकमेकस्मिन्नित्यादि।

मधुरिमेति। अत्र खलवचनस्यामृतहालाहलयोर्भावः।

## मधुमती

पर्यायन्तरमाह—अन्य इति। अनेकस्य आधेयस्य एकस्मिन्नेव आधारे सम्बन्धः द्वितीयः पर्यायः। अत्रापि कविप्रतिभोत्थापितत्वं, स्वतस्सम्भवित्वं च भेदद्वयमवगन्तव्यम्। तत्र मधुरिमेत्यत्र कविप्रतिभोत्थापितत्वम्।

## विस्तारिका

पर्यायान्तरमाह—अन्य इति। अनेकस्याधेयस्यैकस्मिन्नाधारे क्रमेण सम्बन्धे द्वितीयः पर्याय इत्यर्थः।

अत्रापि स्वतः सम्भवित्वं कविप्रतिभोत्थापितकर्तृनिष्पाद्यत्वं च भेदद्वयमवगन्तव्यम्।

मधुरिमेति। अत्रामृतव्यञ्जकत्वं हालहलकथकत्वं च स्वतःसम्भवि।

## सारबोधिनी

पर्यायान्तरमाह अन्य इति। अत्रापि स्वतःसम्भवित्वम् कविप्रतिभोत्थापितकर्तृनिष्पाद्यत्वं चेति भेदद्वयमवगन्तव्यम्।

मधुरिमेति। अमृतव्यञ्जकत्वं हालहलकथकत्वं च स्वतः संभवि।

## काव्यप्रदीपः

**अन्यस्ततोऽन्यथा।**

अनेकमेकस्मिन्क्रमेण यद्भवति क्रियते वा सोऽन्यः पर्याय इत्यर्थः। पूर्ववद्व्याख्येयम्। तत्र भवत्यर्थे यथा—

**'मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति।**
**अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव॥'**

अत्रैकस्मिन्खलवचसि क्रमेणामृतव्यञ्जने विषकथने च न प्रयोजकनिर्देशः।

## काव्यप्रकाशखण्डनम्

**अन्यस्ततोऽन्यथा।** (का. ११७,पृ०)

अनेकमेकस्मिन्नुच्यते सोऽन्यः।

**मधुरिमरुचिरं वचः खलानां अमृतमहो प्रथमं पृथु व्यनक्ति।**
**अथ कथयति मोहहेतुरन्तर्गतमिव हालहलं विषं तदेव॥**

## आदर्शः

अन्यविधं पर्यायालङ्कारमाह—क्रमे( ?)णान्य इति। अन्यत्वमन्यथात्वञ्च विवृणोति—अनेकमेकस्मिन् इति। अनेकमित्यस्य इत्यस्य विवृतिः, एकस्मिन्नित्यन्यथेत्यस्य। मधुरिमेति। मधुरिम्णा माधुर्येण रुचिरं खलानां वचः, अहो आश्चर्यं प्रथमममृतं व्यनक्ति अथान्तरं तदेव वचोऽन्तर्गतं हालहलाख्यं विषप्रभेदमिव कथयति प्रकाशयतीत्यर्थः। अत्रैकस्मिन् वचसि प्रकाशनाख्येन सम्बन्धेनामृतविषानेकभवनं क्रियत इत्युदाहरति।

## सुधासागरः

पर्यायान्तरं लक्षयति—अन्येति।

अनेकमित्यादि। अनेकमेकस्मिन् क्रमेण यद् भवति क्रियते वा सोऽन्यः पर्याय इत्यर्थः। अत्रापि पूर्ववद्भवतिकरोत्यर्थौ बोध्यौ। तत्र भवत्यर्थे यथा—मधुरिमेति। अहो महदाश्चर्यं मधुरिमरुचिरं माधुर्येण सुन्दरं खलानां वचो दुर्जनवाक्यं प्रथमं पृथु सम्पन्नममृतं व्यनक्ति, अथानन्तरं विचारदशायां तदेव वचः अन्तर्गतमुदरप्राप्तं हालाहलं विषमिव उग्रगरलमिव मोहहेतुं कथयतीत्यर्थः। पुष्पिताग्रा छन्दः। लक्षणमुक्तं प्राक्।

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिताम्
आश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥ ५१७ ॥

अत्र, एकस्यैव हानोपादानयोरविवक्षितत्वात् न परिवृत्तिः ॥

---

### सङ्केतः

तद्गेहमिति । अत्र एकस्मिन् द्विजे अनेकं गेहादि दिनैः क्रियमाणतया निबद्धम् । तच्चात्र नतभित्ति गृहादि त्यज्यत एव, न तु केनापि स्वीक्रियते । परिवृत्तौ तु यदेकेन त्यज्यते तदन्येन गृह्यते । क्रमेणेत्यधिकारात् न समुच्चयालङ्कारत्वम् । इति पर्यायः ।

### सङ्केतः (रुय्यकः)

तद्गेहं नलभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽप्यमियतीं भूमिं समारोपितः ॥

"अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न परिवृत्ति"रिति पाठः ।

### बालचित्तानुरञ्जनी

द्वितीयमुदाहरति तद्गेहमिति । नतभित्ति तद्गेहं दिवः हेतोर्लब्धावकाशं इदं मन्दिरं, जरती सा धेनुः, एताः घनाभाः करिणां घटाश्चरन्ति । क्षुद्रः मुसलध्वनिः । इदं योषिता कुलं सङ्गीतकम् आश्चर्य द्विजः दिवसैः इयन्तीं परां भूमिं प्रापितः । अत्र एकस्मिन् द्विजे दिवसैः अनेकगेहादिकं कृतम् । अस्य परिवृत्त्यलङ्कारशङ्कां निरस्यति अत्रेति । एकस्यैव कर्तुरिति यावत् ।

### काव्यादर्शः

'तद्गेहम्' इति । अत्र अनेकं गेहादि एकस्मिन् द्विजे दिवसैः कृतम् । एकस्यैवेति । यथा परिवृत्तौ 'मरुल्लास्यं त्यजति लताश्चोपाददते' इत्येवमेकस्यैव हानोपादाने विवक्षिते, न तथात्रेति । अत्र नतभित्ति गृहस्य हानमेव विवक्षितम् । अत्रापि 'क्रमेण' इति योज्यम्, अन्यथा समुच्चयालंकारविषयत्वं स्यात् । अत एव समुच्चय-लक्षणे युगपद्ग्रहणं कृतम् ॥ [३५]

### विवेकः

तद्‌गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः सा धेनुर्जरती नदन्ति करिणामेताः घनाभा घटाः । स क्षुद्रो मुषलध्वनिः कलमिदं सङ्गीतकं योषितामाश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥ अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न परिवृत्तिरिति पाठः ॥"(रु. सं. ६९ पृ.)

### दीपिका

तदित्यादौ तु दिवसैरिति काललक्षणप्रयोजकनिर्देशात् क्रियत इति पक्षोदाहृतित्वम् । न चैकस्य रूपस्य परिहारपूर्वकं रूपान्तरापत्तिरूपत्वादन्तिमोदाहरणे परिवृत्तिविषयतया नेदमलङ्करणं स्यादित्याह—अत्रेति । उदाहरण इत्यर्थः । एकस्यैव कर्तुर्हानमन्यस्य वस्तुनः परत्र समर्पणमुपादानम् । अविवक्षितत्वादिति तथाविधविवक्षायां लतानामित्यादाविव तथैवोपपत्तिरनुप्रसङ्गादिति भावः ।

### साहित्यचूडामणिः

तद्गेहमिति । अत्रैकमेव ब्राह्मणमधिकृत्य कृच्छगृहमहामन्दिरयोः जरद्धेनुमत्तकरिणोर्मुसलध्वनिसंगीतयोश्च क्रमेण वृत्तिः समारोपित इत्युक्त्या करणे पर्यवस्यति । परिवृत्तिभ्रमं निरस्यति—अत्रेति ।

**श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः**
**पद्भ्यां त्यक्तास्तरलगतयस्त्वाश्रिता लोचनाभ्याम् ।**

**धत्ते वक्षः कुचसचिवतां वक्त्रमप्यद्वितीयं**
**तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥**

एकस्यैव कर्त्तुरिति यावत् । अन्योधर्मएकस्यैव कर्तुस्तत्कारण( ?)त्वाविशेषात् न परिवृत्तिलङ्कारः ।

### सम्प्रदायप्रकाशिनी

तद्गेहमिति । अत्रैकत्र द्विजे विषये गेहमन्दिराद्यनेककरणम्

ननु प्रथमपर्यायस्य प्रथमोदाहरणे परिवृत्त्यलङ्कार इत्यत आह—अत्रैकस्यैवेत्यादि । हानोपादानयोरेककर्तृकत्वाविवक्षणान्न परिवृत्तिः । केचिदेतच्छ्लोकस्थाने—

**नन्वाश्रयस्थितिरियं तव कालकूट**
**केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।**

**प्रागर्णवस्य हृदय वृषलक्ष्मणोऽथ**
**कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥**

इति पठन्ति । तदन्याय्यम् । परिवृत्तिसन्देहस्याप्राप्त्या परिहारग्रन्थस्य निर्विषयत्वप्रसङ्गात् । नह्युदाहरणान्तरे परिवृत्तिसन्देहप्राप्तिः, हानोपादानानुपादानात् ।

## मधुमती

तद्गेहमित्यादौ स्वतस्सम्भवित्वमिति द्रष्टव्यम्। इति पर्यायः।

## विस्तारिका

तद्गेहमित्यादौ च कविप्रौढोक्तिनिष्पन्ना दिवसाः कर्तारः।

## सारबोधिनी

तद्गेहमित्यादौ कविप्रौढोक्तिनिष्पन्ना दिवसाः कर्तारः।

## काव्यप्रदीपः

करोत्यर्थे यथा—

**'तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः**
**सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः।**
**स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिता-**
**माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः॥'**

अत्रैकस्मिन्द्विजे तद्गेहतन्मन्दिराद्यैरनेकैः दिवसैरिति प्रयोजकनिर्देशः। न चेयं परिवृत्तिः। हानोपादानयो-रविवक्षितत्वात्।

## आदर्शः

तद् गेहमिति। सम्पत्तिकाले दरिद्रदामोदरस्य गृहादिकं दृष्ट्वा सविस्मयस्य कस्यचिदुक्तिरियम्। आश्चर्यम् अयं द्विजो दिवसैरर्थात् कतिपयैरियतीं भूमिमवस्थां समारोपितोऽर्थाद् विधिना। तत्र नतभित्तिगेहस्य जरत्या धेनोः क्षुद्रमुषलध्वनेश्च दारिद्र्यकालीनस्य प्रदर्शनम्। नतभित्ति नीचपिण्डीकम्, मुषलध्वनेः क्षुद्रत्वम् अवहन्तृदौर्बल्याद् हन्तव्यधान्याद्यल्पत्वाच्च। मन्दिरादित्रयस्य तु सम्पत्तिकालीनस्य प्रदर्शनम्। दिवः स्वर्गाल्ल-ब्धावकाशं स्वर्गप्रविष्टचूडम्। घटाः समूहाः। अत्र नतभित्तिगेहाद्यनेकमेकस्मिन् द्विजे स्वामित्वेन सम्बन्धेन विधिना क्रियमाणम्। आरोपित इति कर्मणि प्रत्ययेन कर्त्तृविधातुराक्षेपात्।

'नन्वकमनेकस्मिन् अनेकमेकस्मिंश्च इति द्विविधोऽपि पर्यायः परिवृत्त्यलङ्कारभिन्न एव, पूर्वत्र त्यक्तग्र-हणरूपत्वेन परत्र चैकत्यागेनान्यग्रहणरूपत्वेन परिवृत्तिसम्भवादित्यत आह—अत्रेति। पूर्वत्र एककर्त्तृकहानोपा-दानस्य परत्रैककर्त्तृकर्महानोपादानस्य परिवृत्त्यलङ्कारनिर्वाहकस्याभावादित्यर्थः। तथा चैकस्येत्यत्र एकस्य कर्त्तुरेकस्य कर्मणश्चेति बोध्यम्।

**सुधासागरः**

अत्रैकस्मिन् खलवचसि क्रमेणामृतव्यञ्जने विषकथने च न प्रयोजकनिर्देशः। करोत्यर्थे यथा—तद्रेह-मिति।

सुदाम्नो मन्दिराद्यैरनेकैः सम्बन्धे दिवसैरिति प्रयोजकनिर्देशः। न चेयं परिवृत्तिः, हानोपादानयोरविवक्षि-तत्वात्।

(सू० १८२) अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः ॥ ११७ ॥

पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनम्। धर्मिणि, अयोगव्यवच्छेदो व्यापकस्य साध्यत्वम्। यथा

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत् तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मर॥ ५१८॥

साध्यसाधनयोः पौर्वापर्यविकल्पे न किंचिद्वैचित्र्यमिति न तथा दर्शितम्॥

---

**सङ्केतः**

हेतुरिति। अन्वयव्यतिरेकभणनात् सपक्षसत्त्वं विपक्षव्यावृत्तिश्च क्रमेण लभ्यते। पक्षधर्मत्वं स्वेनोक्तमिति त्रैरूप्यम्। धर्मी शैलादिः, तत्र अस्तित्वं अयोगव्यवच्छेदः। व्यापकस्य अग्न्यादेः।

यत्रेता इति। यत्र कान्ते एताः कामिन्यः। अत्र कामिनीरूपः धर्मी, भ्रूव्यापरद्वारेण बाणपातः साधनम्। स्मरस्य अग्रगत्वं साध्यम्। अलङ्कारान्तररहितं साधनं निर्दिष्टम्। क्वचित् अलङ्कारान्तरगर्भितत्वे तु हेतुर्निर्दिश्यते। स्वं यथा—

यथा पङ्कजिनीपत्रे पदौघः प्रगुणीकृतः।
तथा मन्ये वियोगिन्यः स्मरमिल्लेन घातिताः॥

इति। प्रगुणीकृतः = प्रगुणीकर्तुमारब्धः। अत्र रूपकं अलङ्कारान्तरम्। एवं एकत्र प्रौढोक्त्या, अन्यत्र तु अलङ्कारान्तरगर्भीकारात् तर्कानुमानवैलक्षण्यम्। न दर्शितमिति। अयं भावः—साध्यसाधनयोः उक्तिः अलङ्कारः, स च तेन क्रमेण वा, व्युत्क्रमेण वेति भवतां वैचित्र्याभावात् किं तच्चिन्तयेति। तस्मात् रुद्रटवत् न वाच्यम्॥ इत्यनुमानम्।

**सङ्केतः (रुय्यकः)**

अञ्चित आकृष्टः। न दर्शितमिति—रुद्रटेन तु दर्शितम्। प्रकृतेति—क्वचित् प्रकृतनिष्ठं साम्यं यथा—

सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति।
अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव॥

इति समुच्चितोपमायाम्। क्वचित् प्रकृतनिष्ठं यथा कस्याञ्चित्तुल्ययोगितायां, क्वचिच्च तदुभयनिष्ठं यथाऽपह्नुत्यां, तच्चेह नास्ति, प्रकृतस्यैव सद्भावात्। व्यासङ्गे विरोधस्तस्माद् भंगो भयम्। अवगतं प्रतिपाद्येन ज्ञातम्। आर्यचरितं शिष्टैरनुष्ठितम्। धिषणा प्रज्ञा। युवतिरेव कामस्यास्त्रमायुधम्। वैचित्र्याभावादिति—गौणे ह्युपचारे सादृश्यसम्प्रत्ययाद्वैचित्र्यम्।·न तु शुद्धे, तद्विपर्ययात्।

**बालचित्तानुरञ्जनी**

अनुमानलङ्कारं लक्षयति अनुमानमिति। व्याकरोति पक्षेति। पक्षे सपक्षे धर्मत्वम्। विपक्षे व्यावृत्तिः न्वयः सपक्षे सत्त्वं, व्यतिरेको विपक्षाद्व्यावृत्तिः अबाधितविषयत्वादेः पक्षधर्माद्यन्तर्भावात् त्रैरूप्यमुक्तम्। अयोगव्यवच्छेद इति। अन्ययोगव्यवच्छेदे पक्षादपि व्यावृत्त्यापत्तेरुक्तमुदाहरति यत्रेति। यत् लहरीचलाचलदृशः एताः यत्र भ्रुवं व्यापारयन्ति तत्रैव मर्मस्पृशः अमी मार्गणाः सन्तः पतन्ति तत् तस्मात् कारणात् चक्रीकृतचापं यथा स्यात् तथा अञ्चितशरप्रेङ्खत्करः क्रोधनः आसां शासनधरः स्मरः सत्यं सदा अग्रत एव धावति। अत्र मार्गणपातः साधनं स्मरस्य शासनधरत्वं साध्यं साध्यसाधनभूतव्यापारो वा साधनम्। स्मरशासनधरत्वं साध्यम्। एतदुभयमेकत्रैव धर्मिणि लक्षणे वर्त्तते। अत्र निर्देशादेवालङ्कारत्वम्। ननु क्रमोच्चारणे व्यक्तधारणे वा वैचित्र्याभावादित्याह साध्येति।

**काव्यादर्शः**

अनुमानमिति। यत्र शब्दवृत्तेन पक्षधर्मः सपक्षसत्त्वं विपक्षाद् व्यावृत्तिरित्यन्वयव्यतिरेकवांस्त्रिरूपो हेतुः साध्यस्य निर्भासितस्यार्थस्य प्रतीतये निर्दिश्यते सोऽनुमानलंकारः। धर्मिणि पर्वतादौ अयोगव्यवच्छेदोऽस्तित्वं व्यापकस्य वह्न्यादेः साध्यम्।'यत्रैता' इति। 'अञ्चित आकृष्टः'। अत्र योषितां भ्रूव्यापारेण मार्गणपतनं साधनं, स्मरस्य पुरोगामित्वं साध्यं, योषिल्लक्षणो धर्मः प्रौढोक्तिमात्रनिष्पन्नार्थत्वेन च विशेषाश्रयणात् तर्कानुमानवैलक्षण्यम्, ततश्च 'अस्त्यत्राग्निर्धूमाद्' इति परिहृतम्।

क्वचित्तु अलंकारान्तरगर्भीकारेणापि अयं, यथा—

**यथारन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति**
**स्फुल्लिङ्गानां रूपं दधति च यथा कीटमणयः।**
**यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-**
**स्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः॥**

—अत्र धूमस्फुलिङ्गकपिलदिक्कानि वह्निलिङ्गानि त्रिरूपत्वाद् दवशब्दप्रतिपादितं वह्निं गमयन्तीति रूपकगर्भीकारे विच्छित्याश्रयान्न तर्कानुमानम्। 'आदौ साध्यस्य निर्देसः, पश्चात् साधनस्योपन्यासः, यद्वा आदौ साध्यस्तोयक्तिः।

साधनस्येति यथा रुद्रटेनोक्तं, न तथा निरूपितमित्याह—साध्यसाधनयोरिति। वाक्पतिपादाश्च दण्डापूपिकयार्थान्तरापतनमर्थापत्तिमपि अलंकारमाहुः। दण्डापूपौ विद्येते यस्यां नीतौ, मत्वर्थीयः प्रत्ययः। यद्वा, दण्डापूपयोर्भावो दण्डापूपिका 'द्वन्द्वमनोजादिभ्यश्च' इति बुक्, पृषोदरादित्वाद् वृद्ध्यभावः, यथा 'अहमहमिका' इति।

अत्र हि मूषिककर्तृकेण दण्डभक्षणेन तत्सहभावि अपूपक्षणमर्थात् सिद्धम्। एष दण्डापूपन्यायः। तद्वद् यत्कस्य-चिदर्थस्य निष्पत्तौ सामर्थ्याद् अर्थान्तरमापतति सार्थापत्तिः, यथा—

**पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः।**
**कमपरमवशं न विप्रकुर्युर्विभुमपि [चेद्] यदमी स्पृशन्ति भावाः॥**

—अत्र विभुवृत्तान्तः प्रस्तुतोऽपरजनवृत्तान्तमप्रस्तुतमर्थादाक्षिपति॥ यथा वा—

**निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि।**
**अन्यथानुपपन्नैव पयोधरभरस्थितिः॥**

—अत्र स्तनस्थितिरन्यथानुपपद्यमाना मध्यमनुपलभ्यमानमेवेदमिति॥ ११५॥ [३६॥]

## विवेकः

अनुमामिति सन्दिग्धसाध्यधर्मा धर्मी पक्षः, तद्धर्मवत्त्वं तद्वृत्तिता, अन्वयव्यतिरेकवत्त्वं व्याप्तत्वं—सपक्षे सत्त्वं, विपक्षे व्यावृत्तत्वमित्यर्थः। एवञ्च हेतोस्त्रिरूपस्यानुमापकत्वं यदाह—(स. क. आ. ३२७ पृ:) 'अनुमेयेन सम्बद्धं प्रसिद्धञ्च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥ अनुमेयेन संबद्धमिति सपक्षेण, तस्यैव साध्यवत्तयाऽनुमेयत्वात्। यदाह—स एव चोभयात्माऽयं गम्यो गमक इष्यते। असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः॥ धर्मिणीति सिषाधयिषितधर्मविशिष्टे पक्ष इत्यर्थः।' व्यापकस्य लिङ्गिनः। अयोगव्यवच्छेदः संसर्गाभा-वव्यावृत्तिः संसर्गनियम इति यावत्। 'विच्छित्तिविशेषश्चार्थादन्वेषणीयः। अन्यथा तर्कानुमानात् किं वैलक्षण्य-मिति?' (अ. स. १८४ पृ.)। एतच्च शुद्धमपि चमत्कारास्पदमिति शुद्धमलङ्कारान्तराश्रयणविरहेणानुमानमुदाहरति यत्रैता इत्यादि। अञ्चित आकृष्टः प्रेङ्क्षत्करः सुन्दरकरः। "अत्र योषितां भ्रूव्यापारेण मार्गणपतनं स्मरपुरोगामित्वे साध्ये साधनमित्यनुमानं शुद्धम्। तदिह भ्रुवः स्मरचापत्वं कटाक्षाणां बाणत्वमित्यादि कविप्रौढोक्तिमात्रनिष्पन्ना-र्थनिष्टत्वेन च विच्छित्तिविशेषाश्रयणाच्चारुत्वम्" (अ. स. १८५ पृः)। "यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः। यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभस्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः॥ अत्र धूमस्फुलिङ्गकपिलादिमत्वानि वह्निलिङ्गानि त्रिरूपत्वाद्दवशब्दप्रतिपादितं वह्निं गमयन्ती"—(अ. स. १८४ पृ.) ति रूपकगर्भीकारेण विच्छित्त्याश्रयणे चमत्कारास्प- दत्वात्। तर्कानुमानवैलक्षण्यं स्फुटमेव। साध्यसाधनयोरिति—यदाहुः—त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतो दृष्टश्चेति (न्या. सू. १/१/५)। अत्र पूर्वं कारणं तद्विद्यते विषयतया यस्य परामर्शज्ञानस्य तत् कार्येण कारणज्ञानं पूर्ववत्। कारणस्य प्रागुपयोगादनुपयुक्तं कार्यं शेषः, स विद्यते विषयतया यस्य परामर्शज्ञानस्य तत् कार्येण कारणानुमानं शेषवत्। अकार्यकारमभूतेनाविनाभाविना धर्मेण यदनुमानं तत् सामान्यतो दृष्टम्। रुद्रटोऽप्याह—(रु. का. अ. ७/५६) वस्तु परोक्षं यस्मिन् साध्यमुपन्यस्य साधकं तस्य। पुनरन्यदुपन्यस्येद्विपरीतं चैतदनुमानम्॥ इति। यथा—सानु(व) ज्ञमामिष्यन्नूनं पतितोऽसि पादयोस्तस्याः। कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम्॥ (रु. का. अ. ७/५८)। अत्र यावकरसतिलकपङ्क्तेः कार्यभूतायाः कारणभूतं पादपतनमनुमीयते। यदि वा व्यतिरेकात् पूर्वं प्रतीयत इति पूर्वान्वयः, स एव शुद्धोऽस्यास्तीति पूर्ववत्। केवलान्वयि विवक्षितजातीयोपपत्तौ विपक्षहीनम्,

यथाभिधेयो विशेषः प्रमेयत्वात्, यत् प्रमेयं तदभिधेयं तथा सामान्यं, तथा च विशेष स्तस्मादभिधेयः। न ह्यनभिधेयप्रमेयं वा किञ्चिदस्ति यो विपक्षः स्यात्। पश्चात् प्रतीयमानत्वाच्छेषो व्यतिरेकः, स एव शुद्धोऽस्यास्तीति शेषवत्, केवलव्यतिरेकी, पक्षव्यापकत्वे सपक्षाभावे विपक्षावृत्तिः, यथा—जीवच्छरीरं सात्मकं प्राणादिमत्त्वात्, यत् सात्मकं न भवति तन्न प्रामादिमत् यथा घटः। न च जीवच्छरीरं न प्राणादिमत्, तस्मात् [न तथा] सात्मकम्। यत्तु सामान्येनान्वयव्यतिरेकाभ्यां द्वाभ्यामपि तत् सामान्यतो दृष्टम्। (त. भा. ३९ पृ.)। अन्वयव्यतिरेके यथा पर्वतोऽग्निमान् धूमवत्त्वात्, यो धूमवान् सोऽग्निमान्, यथा महानसम्, तथैवायं तस्मात्तथा। अनुमानवदर्थापत्त्यादिप्रमाणान्यप्यत्रालङ्कारत्वेनान्ये परिगणयन्ति। तत्रैकेषां मतेऽर्थापत्तेस्तावत् प्रामाण्यं नाङ्गीक्रियते। तथाहि प्रत्यक्षादिप्रतीतौ योऽर्थः स येन विना नोपपद्यते तस्यार्थस्य कल्पनमर्थापत्तिरित्यार्थापत्तेर्लक्षणम्। तत्रेदं चिन्त्यते। योऽसौ प्रमाणप्रतीतोऽर्थः स यदि परिकल्प्यमानेन परोक्षार्थेन सह कश्चित्तादात्म्यलक्षणस्तदुत्पत्तिलक्षणो वा प्रतिबद्धोऽस्ति तदा स्वभावलिङ्गजा कार्यलिङ्गजाऽसौ प्रतिपत्तिरित्यर्थापत्तिरित्यनुमानमेव।

अथ नास्ति प्रतिबन्धस्तदानीमर्थापत्तिः प्रमाणमेव न भवति, असम्बन्धात् घटात् पटप्रतीतिवदिति। एवं नैयायिकस्योपमानप्रमाणप्रपञ्चः। तथा हि यः प्रतिपत्त्या गां जानाति न गवयं स चादिष्टः स्वामिनाऽरण्यं गत्वा गामानयेति। स च गवयशब्दवाच्यमजानानो वनेचरमन्यं वा तज्ज्ञं पुरुषं पृष्टवान् भ्रातः कीदृशो गवय इति? स चाह यादृग् गौस्तादृगेव गवय इति। तस्यारण्यगतस्य प्रेष्यस्य पुरुषातिदेशवाक्यार्थस्मरणसहकारि गवयसारूप्यज्ञानं कर्तृ अयमसौ गवयशब्दवाच्योऽर्थ इति प्रतिपत्तिं फलरूपां जनयत् प्रमाणम्। एतच्चायुक्तं यतः प्रामाण्यं नाम विषयवत्तया व्याप्तं, न चास्य निपुणमपि निरूपयन्तो विषयं पश्यामः। तथाहि [यः] समाख्यासम्बन्धस्तस्य विषयो वर्ण्यते। स च परमार्थत्वे नास्ति, दृश्यत्वे तस्यानुपलम्भेन बाधात्, अदृश्यत्वे तस्य सत्तासाधकं प्रमाणं नेक्ष्यते। किञ्च स हि सम्बन्धसम्बन्धिभ्यां भिन्नोऽभिन्नो वा? यदि भिन्नस्तदा तयोः सम्बन्धः केन सम्बन्धेनेति वाच्यम्। सम्बन्धान्तरकल्पनायामनवस्था। अथाभिन्नस्तदा सम्बन्धिनावेव केवलो न समाख्या नाम सम्बन्धः कश्चित्। अथैवं सम्बन्धबुद्धिजनकत्वं सम्बन्धस्तत्र युक्तं, यतः सम्बन्धावेताविति बुद्धिस्तुल्यहेतुबलात्, सम्बन्धवस्तुद्वयादपि सम्भाव्यमानो न सम्बन्धमाक्षेप्तुं प्रभवति। एवं मीमांसकोपवर्णितस्यापि प्रमाणं निराकर्तव्यम्। तथा हि सादृश्यविशिष्टः पिण्डः पिण्डविशिष्टं वा सादृश्यमुपमानस्य तेन विषयो वर्ण्यते। न च सदृशं वस्तुनोऽतिरिक्तं सादृश्यं, स्यात्तदा दृश्यानुपलम्भग्रस्तमेतत्। अथादृश्यं तथापि तत्प्रतिबद्धलिङ्गाभावादनुमानादपि सकाशात् कथं तत्सिद्धिः? सादृश्य प्रत्ययस्तु स्वहेतुबलात्तथोत्पन्नेन सदृशवस्तुनाऽपि क्रियमाणो घटत इति न तत्प्रत्ययादपि तत्प्रसिद्धिर्युक्ता। उपमानादेव सादृश्यसिद्धिरिति चेत्, न, यतः प्रमाणान्तरात् सिद्धयोरेव सादृश्यपिण्डयोर्यो विशेषणविशेष्यभावस्तस्योपमानविषयत्वं तेन वादिना कल्प्यते। तत्र कथं सादृश्यमात्रस्योपमानात् सिद्धिरिति? अभावस्य तु स्वरूपमेव तावन्नोपलभामहे, कुत एतस्य प्रामाण्यं भविष्यति? तथा हि प्रत्यक्षादिप्रमाणानामनुत्पत्तिरभावाख्यं प्रमाणं मीमांसकैरभिधीयते। तत्र केयमनुत्पत्तिः? किं प्रसज्यवृत्त्या प्रमाणानुत्पत्तिमात्रम्, अथ पर्युदासवृत्त्या वस्त्वन्तरम्? वस्त्वन्तरमपि जडरूपं ज्ञानरूपं वा? ज्ञानमपि किं ज्ञानमात्रमेकज्ञानसंसर्गिवस्तुनो ज्ञानं वा? तत्र न तावत् प्रसज्यरूपोऽभावो युज्यते, तस्य सर्वशक्तिशून्यत्वात् परिच्छेदकत्वं ज्ञानजनकत्वं वा कथं भवेत्? अत एव न केनापि तत् प्रतिपाद्यते। यदाह "न ह्यभावः कस्यचित् प्रतिपत्तिः, प्रतिपत्तिहेतुर्वा, तस्यापि वा कथं प्रतिपत्तिरिति।" (न्या. कु. अ.)। नापि जड़रूपं जड़स्य परिच्छेदकाभावात्। न हि जड़रूपं शकटादिकं घटादिकं

परिच्छिनत्तीति क्वापि दृष्टं श्रुतं वा । नापि ज्ञानमात्रं देशकालस्वभावविप्रकृष्टस्यापि सुमेरुशङ्खचक्रवर्तिपिशाचादेरपि ज्ञानमात्रादभावप्रमाणादभावप्रसङ्गात् । अथैकज्ञानसंसर्गभूतलादिवस्तुज्ञानमभावोऽभिधीयते तदा प्रत्यक्षविशेष्यस्यैवाभाव इति नामान्तरकरणम् । प्रत्यक्षं परिदृश्यमाना अपि पदार्था न तथा स्वदन्ते यथा वाग्मिनां वचोभिरावेद्यमाना इति (ध्व. आ. लो. ३/४ द्र:) स्वतःसम्भवि मनाक् कटाक्षितम् । शाब्दन्तु प्रमाणमत्रानुपयुक्तमेवेति प्रागेवोक्तम्, अतोऽनुमानमेवोदाहृतवान् ।

## दीपिका

साधनपदं निर्वक्ति—हेतुरिति । हेतुरपि क उच्यत इत्याकाङ्क्षानिरासायाह—त्रिरूप इति । पक्षधर्मान्वयव्यतिरेकेणेति भावपरोऽयं निर्देशः । पक्षधर्मस्यान्वयव्यतिरेकवत्त्वेनेत्यर्थसङ्गतिः । पक्षधर्मान्वयव्यतिरेकित्वेनेति पाठेऽन्वयव्यतिरेकौ विद्येते अस्येति अर्शआदित्वादचि भूते पक्षधर्मश्चान्वयव्यतिरेकश्चेति कर्मधारयानन्तरं त्वप्रत्ययः । पक्षधर्मत्वञ्च प्रकृते धर्मिणि सत्त्वम्, अन्वयः सपक्षधर्मत्वम्, व्यतिरेको विपक्षव्यावृत्तिः । यतश्चान्वयव्यतिरेकिणि सामग्रयम्, केवलव्यतिरेकिणि त्वन्याभावः, केवलान्वयिनि व्यतिरेकाभावो धर्मिण्यप्रकृतेऽयोगव्यवच्छेदो विद्यमानता व्यापकस्योद्देश्यस्योपलभ्यमानव्यापकधर्मवति अन्वये लभ्यमानव्यापकधर्मवर्णनमनुमानालङ्कारणमिति रहस्यार्थः ।

यत्रेति । कामिन्यो धनुर्धरस्मरपुरःसराः प्रपतन्मदनबाणत्वादिति च्छायया काव्यबन्ध इति प्रतिपादिता प्रकारावगतिः स्मरमार्गणपातः प्रत्यक्षवद् गम्यत इति कविमतसिद्धतया सिद्धोऽसिद्धो विते समर्पणीयः । न च तत्राप्यनुमानालङ्कारता, तच्छाययाऽनिर्देशात् । व्यङ्ग्यमस्त्विति चेद् व्यञ्जनया अपि तदाकारस्फुरणविरहात् ।

नन्वत्र प्रकारद्वयं सम्भवति, साधनस्य साध्यस्य वा प्राङनिर्देशात् । तत्राद्यं यथा—प्रकृतायामेवोदाहृतौ ।

द्वितीयं यथा—

**"मधु तिष्ठति वाचि योषितां हृदये चैव हलाहलं विषम् ।**
**अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥" इति ।**

तत् कुतः साधारण्येनैवाभिधानमित्याह—साध्येति । वैचित्र्यं न किञ्चिदिति प्रातीतिकमिति शेषः ।

## दर्पणः

अनुमानालङ्कारः । हैतोस्त्रैविध्यं दर्शयति पक्षेति । पक्षधर्मेति भावपरो निर्देशः । पक्षधर्मस्यानुपव्यतिरेकवत्वेनेवि [पक्षपर्धाभ्यामुभयव्यतिरेकत्वेनेति] वा सङ्गतिः । पक्षधर्मः प्रकृतधर्मिणि सत्वमन्वयः, सपक्षत्वं व्यतिरेको विपक्षव्यावृत्तिः । एवं च पक्षसत्त्वविपक्षव्यावृत्तत्वेन त्रिरूपो हेतुः । एतच्चानुमेयं व्यतिरेकानसामग्यं केवलव्यतिरेकितत्वत्रयाभावः, केवलान्वयिनि व्यतिरेकाभावः धर्मिणि प्रकृते व्यापकस्योद्देश्यस्य । एवञ्चोपलभ्यानव्याप्यधर्मवत्यपलभ्यमान व्यापकधर्मवर्णनमनुमानालङ्कृतिरिति रहस्यार्थः । पक्षधर्मतान्वयव्यतिरेक त्वमिति पाठे अनुज [अन्वयव्यतिरेकौ] इत्येते सत्येतदर्श आदित्वादचि कृते पक्ष धर्मश्चायमन्वयतिरेकश्चेति कश्चेति [?] कर्मधारयानंन्तरं त्वप्रत्ययः ।

यत्रेत्यादौ साधनस्य स्मरमार्गणपतनस्य मिथ्यात्वादि नाशङ्कनीयम् कविसंप्रदायसिद्धत्वात्। किंच कविप्रौढोक्त्यादिविच्छित्तिप्रयुक्तस्य पर्वतोऽयं वह्निमान् धूमादित्याद्यनुमानस्य नालङ्कारता वक्रोक्तेरलङ्कारवत्वात्। तदुक्तमस्मत्साहित्यदर्पणे अनुमानं तु विच्छित्या ज्ञान साध्यसाधने दिति साधनस्य प्रथमनिर्देशः।

इहैवोदाहरणे। साधनस्य तु अत्रैव द्वितीयार्धस्य प्रथमपाठे।

**साहित्यचूडामणिः**

अनुमानमिति।

यत्रशब्दवृत्तेन पक्षधर्मान्वयव्यतिरेकवत् साधनं साध्यसिद्धये निर्दिश्यते तदनुमानमित्याह—पक्षधर्मेति। पक्षधर्मत्वं पक्षे वृत्तिमत्वम् अन्वयः सपक्षे सत्त्वं व्यतिरेको विपक्षाद् व्यावृत्तिः। अवाधितविषयत्वादेः पक्षधर्मत्वाद्यन्तर्भावात्। यत्सूत्रम् "साध्यसाधननिर्दशोऽनुमानम्" (अलङ्कारसू० ५९) इति। अन्ययोगव्यवच्छेदे सपक्षादपि व्यावृत्त्यापत्तेः।

यत्रेति। अत्र योषितां भ्रूव्यापारे शराणां पतनं मन्मथपुरोगामित्वस्य साध्यस्य साधनमिति शुद्धमनुमानम्। केचित्तु तर्कानुमानवैलक्षण्यार्थं विच्छित्तिविशेषाश्रयणेनोदाहरन्ति—

**यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति**
**स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः।**

**यथा विद्युज्जालोल्लसनपरिपिङ्गाश्च ककुभ-**
**स्तथा मन्ये लग्नः पथिकतरुषण्डे स्मरदवः॥**

इति। अत्र रूपकरूपं विच्छित्यन्तरमाश्रयते। एवञ्च यस्मिन्नप्रतीतस्य तत्र प्रत्याय्यप्रत्यायकभावे च पदार्थस्य हेतुत्वेनोपादानमुपात्तस्य च हेतुत्वम् प्रत्यायनं इति द्वयी प्रक्रिया। पूर्वत्र नालङ्कारता। यथा—

**प्रजानां विनयाधानाद्रक्षणाद् भरणादपि। इति,**
**असकलहसितत्वात् क्षालितानीव कान्त्या**
**मुकुलितनयनत्वाद् व्यक्तकर्णोत्पलानि॥ इति च।**

उत्तरत्र काव्यलङ्गमेव यत्र तु वाक्यार्थो हेतुः तत्र हेतुत्वप्रतिपादकमन्तरेणोपन्यासे काव्यलिङ्गमेव ताटस्थ्येनोपन्यस्तस्य हेतुत्वेऽर्थान्तरन्यासः यथोदाहारि। ततश्च कार्यकारणयोर्वाक्यार्थत्वे काव्यलिङ्गमेव, नार्थान्तरन्यासः, ताटस्थ्याभावात् अतः सामान्यविशेषभाव एवार्थान्तरन्यासस्य विषयः न कार्यकारणभावः। "सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः" (अलङ्कार सू० ३६) इति सूत्रं काव्यलिङ्गलक्षणान्यथाकारयुक्त्या यत्सत्यमौद्भटीयमवलम्ब्येति।

ननु रुद्रटोक्तयुक्त्या साध्यसाधनयोः पौर्वापर्यविकल्पः किमिति न प्रदर्शित इत्यत्राह—साध्येति। तथेति पौर्वापर्यव्यतिरेकेण।

## सम्प्रदायप्रकाशिनी

अनुमानमिति। साध्यसाधनयोर्निर्देशोऽनुमानम्। सामर्थ्यात् तु विच्छित्त्यात्मनोः।

व्याचष्टे—पक्षधर्मेत्यादि। पक्षधर्मेत्यत्र त्वोऽभिसम्बध्यते। अन्वयव्यतिरेकेत्यत्र तु मतुबपि। साध्यधर्मविशिष्टे धर्मिणि व्याप्यधर्मवृत्तित्वं पक्षधर्मत्वम्। सपक्षे सत्त्वमन्यवत्त्वम्। विपक्षाद् व्यावृत्तिर्व्यतिरेकवत्त्वम्। एवं त्रैरूप्योपपन्नो हेतुः साधनम्। ननु सूत्रे साध्यपूर्वको निर्देशः, वृत्तौ साधनपूर्वक इति किं व्युत्क्रमेण। उच्यते। रुद्रटेन,

**"वस्तु परोक्षं यस्मिन् साध्यमुपन्यस्य साधकं तस्य।**
**पुनरन्यदुपन्यस्येद् विपरातं वै तदनुमानम्॥"**

इति साध्यसाधनयोः पौर्वापर्यनिबन्धनो भेदोऽनुशिष्टः। न तत्र वैचित्र्यविशेषोऽस्तीत्यनादराय। अल्पाच्तरमिति न्यायानुसारेण सौत्रो निर्देशः। वृत्तौ तु साधनायत्ता साध्यसिद्धिरित्यर्थस्थित्यनुसारेण साधनपूर्वा व्याख्या। वैचित्र्याभावं च प्रान्ते वक्ष्यति—साध्यसाधनयोः पौर्वापर्ये तथेत्यादिना। अतः सर्वमनाकुलम्।

यत्रैता इति। लहरीवच्चलाञ्चला दृशो यासां ताः। अत्र नार्यः पक्षः। शासनधरत्वेनाग्रतः सक्रोधाञ्चितशरप्रेङ्खत्करस्मरधावनं साध्यम्। भ्रूव्यापारानुसारेण मार्गणपतनं साधनम्। यत्र ह्येवं शरपातस्तत्रैव विशिष्टधानुष्कधावनं व्याप्तं, धावनाभावे पाताभावश्च।

## मधुमती

पक्षधर्मेति। अन्वयः सपक्षे, व्यतिरेकी यावद्विपक्षे। तेन—पक्षसत्त्व-सपक्षसत्त्व-विपक्षसत्त्वानि यस्य सन्ति तत् साधनमित्यर्थः। धर्मिणीति। पर्वतादौ पक्षे साध्यस्य अयोगव्यवच्छेदः असम्बन्धाभावः साध्यसाधनत्वेनाभिधानं प्रयोजकम्। तेन तर्के नातिव्याप्तिः।

यत्रैता इति। इह यत्र-तत्रेतिपदाभ्यां यद्योगप्राथम्याभ्यां भ्रूयुगव्यापार-मदनशरपतयोः व्याप्तिः प्रतीयते। एवं च तत्साहचर्यात् पक्षधर्मताऽप्याक्षिप्यते। तथाच—भ्रूव्यापारेण शरपातानुमानम्, तेन अग्रतोवर्तिमदनानुमानम्। अत्र च वस्तुस्थित्या व्याप्त्याभावेऽपि कविना प्रौढ्यैव तदभिधानमित्यलङ्कारत्वम्। अन्यथा 'वह्निमान् धूमात्' इत्यत्रापि तथात्वापत्तेः।

ननु अतिशयोक्तौ 'हृदयमधिष्ठितमादौ' इत्यादौ कार्यकारणपौर्वापर्यविपर्ययत्ववत्, अत्रापि साध्यसाधनयोः पौर्वापर्यविपर्ययेऽपि अनुमानं वक्तव्यम्। यथा—

**मधु तिष्ठति वाचि योषितां**
**हृदि हालाहलमेव केवलम्।**

**अत एव निपीयतेऽधरः**
**हृदयं मुष्टिरेव ताड्यते॥**

इति। तत् किं नोच्यते ?- इत्याह—साध्यसाधनयोरिति। विकल्पे वैपरीत्ये। इत्यनुमानम्।

## विस्तारिका

अनुमानमिति । साध्यत्वेन साधनत्वेन च प्रतिपादनमित्यर्थः ।

पक्षधर्मेति । पक्षधर्मत्वेत्यर्थः । तथा च पक्षसत्त्व-विपक्षासत्त्व-सपक्षसत्त्वाख्यत्रिरूपोपपन्नो हेतुः । धर्मिणि हेतुमतीत्यर्थः ।

अयोगव्यवच्छेद इति । हेतुमद्वृत्त्यन्ताभावप्रतियोगित्वं व्यापकत्वम्, साध्यपदप्रवृत्तिनिमित्वञ्चेत्यर्थः ।

यत्रैता इति । अत्र यत्र तत्रेति पदाभ्यां यद्योगप्राथम्याभ्यां भ्रूव्यापारमदनशरपातयोर्व्याप्तिः प्रतीयते । एवं द्वितीयचरणप्रथमस्थितत्यत्पदतृतीयचरणप्रथमस्थितततत्पदाभ्यां मार्गणपाताग्रतो वर्तिमदनयोर्व्याप्तिः प्रतीयते । तदयं प्रयोगः 'एताः पुरोगामिमदना मार्गणपातनियतभ्रूव्यापारवत्त्वात्' इति ।

अत्र च वस्तुगत्या व्यापारसत्त्वेऽपि कविप्रौढोक्त्यैव तथाभिधानमित्यलङ्कारत्वम्, अन्यथा 'वह्निमान् धूमात्' इत्यत्रापि तथात्वापत्तेरित्यवधेयम् ।

ननु कार्यकारणपौर्वापर्यमपि किं नोच्यत इत्याह—साध्येति । तत्र रूढिरिति कार्यकारित्वं विपर्ययनिर्देशसामर्थ्यादुच्यते, अत्र तु न तावत् किञ्चिदिति भावः ।

## सारबोधिनी

अनुमानमिति । ननु पक्षसाध्यहेतुदृष्टान्ताद्यनुमानमत्र तु साध्यसाधनयोर्वचनमात्रम् तदित्युच्यते । अत आह पक्षधर्मेति । तथा च साध्यसाधनग्रहणादेव सर्वं गृहीतमित्यर्थः । त्रिरूप इति । पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तानीति त्रीणि रूपाणि । धर्मिणि हेतुमतीत्यर्थः । अयोगव्यवच्छेद इति । हेतुमद्वृत्त्यत्यन्ताभावाप्रतियोगित्वमित्यर्थः । यत्रैता इति । यत्र-तत्रेति पदाभ्यां यद्योगप्राथम्याभ्यां भ्रूव्यापारमदनशरपातयोर्व्याप्तिः प्रतीयते । एवं द्वितीयचरणप्रथमस्थितयत्पद-तृतीयस्थितततत्पदाभ्यां मार्गणपाताग्रतोवर्त्तिमदनयोर्व्याप्तिः प्रतीयते । तदयं प्रयोगः 'एताः पुरोगामिमदनाः मार्गणपातनियतभ्रूव्यापारवत्त्वादि'ति । अत्र च वस्तुगत्या व्याप्यसत्त्वेऽपि कविप्रौढोक्त्यैव तथाभिधानं इत्यलङ्कारत्वम् अन्यथा वह्निमान् धूमादित्यत्रापि तथात्वापत्तेः । ननु कार्यकारणयोः पौर्वापर्यविपर्ययवत् साध्यसाधनयोः पौर्वपर्यविपर्ययोऽपि किं न स्यादित्यत आह साध्येति । अत्र झटिति कारणस्य कार्यकारित्वं विपर्ययनिर्देशसामर्थ्यात् प्रतीयते । अत्र तु न तादृक् किञ्चिदित्यर्थः ।

## काव्यप्रदीपः

**अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः ॥ ३१ ॥**

पक्षे संबन्धः सपक्षवृत्तित्वं विपक्षावृत्तित्वं चेति रूपत्रयवान्हेतुः साधनम् । व्यापकत्वाभिमतस्य पक्षेऽयोगव्यवच्छेदो व्यापकसंबन्धपर्यवसन्नः साध्यम् ।तदुभयवचनमनुमानालंकारः । यथा—

**'यत्रैता लहरी चलाचलदृशो व्यापारयन्ति भ्रुवं**
**यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः ।**

**तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो**
**धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥'**

अत्र पूर्वार्धे साधनस्य उत्तरार्धे साध्यस्य वचनम् । प्रयोगश्चैवम्—एताश्चक्रीकृतचापं सदा पुरोधावदञ्चितशरत्वादि विशिष्टमनोभावाः सततनिपतन्मर्मभेदिबाणकलसद्भ्रूव्यापारकस्थानत्वादिति । नन्वत्र पूर्व साधनवत्साध्यस्यापि वचनं संभवति । यथा—'मधु तिष्ठति वाचि योषितां' इत्यादि । तत्कथं सामान्यत एतदुक्तं न तु विशेषत इति चेत्, साध्यस्य पूर्वभागे तादृशवैचित्र्याभावादिति ।

### काव्यप्रकाशखण्डनम्

**अनुमानं तदुक्तं यत् साध्य-साधनयोर्वचः ॥ (का. ११७, उ०)**

बोध्य-बोधकयोरित्यर्थः । यथा—

**यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं**
**यत् तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः ।**
**तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो**
**धावत्यग्रत एव शासनधरः सत्यं सदाऽऽसां स्मरः ॥**

यद् यस्मात् यत्रैता लहरीचपलदृष्टयो वामलोचना भ्रुवं व्यापारयन्ति तत्रैवामी मर्मभिदः कामबाणाः सततं धारया पतन्ति । तत् तस्मात् मण्डलीकृतधनुर्यथा भवति तथा पूरिबाणः प्रसार्यमाणबाहुः क्रोधयुक्तः शासनधारकः सन्, आसां सदा स्मरः कामः अग्रत एव धावतीत्यन्वयः । अत्र पूर्वार्द्धे साधनस्य, उत्तरार्द्धे साध्यस्य वचनम् । अत्र वस्तुगत्या व्याप्त्यसत्त्वेऽपि कविप्रौढोक्तौ च तथाभिधानमित्यलङ्कारत्वम् । अन्यथा वह्निमान् धूमादित्यत्रापि तथा स्यात् ।

### आदर्शः

अनुमानलङ्कारमाह—अनुमानमिति । 'पक्षधर्मेति । द्वन्द्वात् परस्य भावप्रत्ययस्य सर्वत्रान्वयः, पक्षधर्मत्वेनान्वयव्यतिरेकित्वेन च त्रिरूप इत्यर्थः । धर्मिणीति, हेतुमद्धर्मिणीत्यर्थः । 'अयोगव्यवच्छेदो'ऽवश्यं सत्त्वम्, तन्निष्ठाभावाप्रतियोगित्वम् इत्यर्थः । व्यापकस्येति, तेनाव्यापकं यत्र साध्यते तत्र नेदृशं साध्यत्वमित्यर्थः । तत्र त्वनुमानाभास इत्यर्थः ।

यत्रैता इति । एता लहरीचलाञ्चलदृशस्तरङ्गवच्चञ्चलप्रान्तनयना नार्यो यत्र दिशि भ्रुवं व्यापारयन्ति तत्रैव दिशि यदमी मर्मस्पृशो मार्गणाः पतन्ति, तत् तस्मात् चक्रीकृतचापं यथा स्यात्तथा अञ्चितशरश्चालितबाणः प्रेङ्खत्करो वर्द्धमानहस्तः क्रोधनः कामिषु क्रोधवान् स्मरः आसां शासनधर आज्ञाकारी सन्नग्रत एव सदा धावतीत्यर्थः ।

अत्र, भ्रूव्यापारविशिष्टा दिक् पक्षः, तत्र मर्मस्पर्शिशरपातः साधनम्, तद्दिशि उक्तविशेषणविशिष्टस्मरधावनं साध्यम् ।प्रयोगश्चैवम्—आसां भ्रूव्यापारविशिष्टादिक् धावत्तत्द्विशेषणविशिष्टस्मरा, पतन्मर्मस्पृङ्मार्गणकत्वात् इति । मार्गणापाते च वैलक्षण्यविवक्षमान्न व्यभिचारः । साध्येति । पौर्वापर्य निर्देशे ।

**सुधासागरः**

ननु पक्षे साध्यहेतुदृष्टावनुमानम्, अत्र तु साध्यसाधनयोर्वचनमात्रं तदित्यत आह—पक्षधर्मेति । तथा च साध्यसाधनग्रहणादेव सर्वं सङ्गृहीतमित्यर्थः । त्रिरूप इति । पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्वानीति त्रीणि । धर्मिणि हेतुमतीत्यर्थः । अयोगव्यवच्छेद इति । हेतुमद्वृत्त्यत्यन्ताभावाप्रतियोगित्वमित्यर्थः ।

व्याख्यातं च प्रदीपकारैः—पक्षे सम्बन्धः (पक्षधर्मता पक्षवृत्तित्वम्) सपक्षवृत्तित्वं विपक्षावृत्तित्वं चेति रूपत्रयवान् हेतुः साधनम् । व्यापकत्वाभिमतस्य पक्षेऽयोगव्यवच्छेदो व्यापकसम्बन्धपर्यवसन्नः साध्यम् । तदुभयवचनमनुमानालङ्कार इति । यथा—यत्रैतेति ।

एताः पुरो दृश्यमानाः लहरीचलाचलदृशः तरङ्गवदत्यन्तचञ्चलाक्ष्यः कामिन्यो यत्र यस्मिन्विषये तरुणविशेषे भ्रुवं व्यापारयन्ति कटाक्षं कुर्वन्ति, तत्रैव तस्मिन्नेव नायके अमी अनुभूतप्रकर्षा मर्मस्पृशः सर्वमर्मभिदो मार्गणाः कामबाणाः सन्ततं पतन्ति इति यत्, तद्धेतोः शासनधरो योषिदाज्ञानुवर्ती अत एव क्रोधनस्तरुणमर्मभेदनोद्युक्तः अत एव चक्रीकृतः कर्षणेन वर्तुलीकृतश्चापो यस्मिन् कर्मणि तद्यथा स्यात्तथा अञ्चितशरेष्वनुसन्धीयमानशरेषु प्रेङ्खत्करोऽनवरतचलद्धस्तः स्मरः कामः आसां सुन्दरीणामग्रत एव सत्यं निश्चयेन सदा धावतीत्यर्थः । शार्दूलविक्रीडितं छन्दः 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्,' इति लक्षणात् ।

अत्र पूर्वार्धे साधनस्य उत्तरार्धे साध्यस्य वचनम् । प्रयोगश्चैवम् एताः, चक्रीकृतचापसदापुरोधावदञ्चितशरत्वादिविशिष्टमनोभवाः, सन्ततनिपतन्मर्मभेदिवाणक-लसद्भ्रूव्यापारक-स्थानकत्वादिति ।

साध्येत्यादि नन्वत्र पूर्वं साधनवत् साध्यस्यापि वचनं सम्भवति । यथा—'मधु तिष्ठति वाचि योषिताम्' इत्यादि, तत्कथं सामान्यत एतदुक्तम्, न तु विशेषत इति चेत् । साध्यस्य पूर्वत्वे तादृशवैचित्र्याभावात् इति भावः ।

(सू० १८३) विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।

अर्थाद्विशेष्यस्य । उदाहरणम्—

महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः ।

न संहतास्तस्य न भेदवृत्तयः प्रियामि वाञ्छन्त्यसुभिः समीहि-

तुम् ॥ ५१९ ॥

यद्यप्यपुष्टार्थस्य दोषताभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतः, तथा-प्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलंकारमध्ये गणितः ॥

---

**सङ्केतः**

महौजस इति । समीहितुं कर्तुम् । अत्र धनुर्भृतः इति विशेष्यम्, शेषाणि विशेषणानि । महौजसः इत्यस्य विशेषणस्य 'सबलत्वे सति स्वामिकार्यकरणे शक्ताः' इत्यभिप्रायः । एवं अग्रेतनेष्वपि विशेषणेषु । अत्र व्यङ्ग्यस्यांशस्य वाच्योन्मुखत्वमिति न ध्वनिविषयता । 'परिकरः' इति नाम च सान्वयम् ।

ननु पुष्टार्थग्रहणात् दोषत्यागमात्रमेतत् इत्याशङ्क्याह—यद्यपीति । इति परिकरः ।

**बालचित्तानुरञ्जनी**

परिकरालङ्कारं लक्षयति विशेषणैरिति । व्याकरोति अर्थादिति ।

साभिप्रायानेकविशेषणद्वारा यत्र विशेष्यातिशयप्रतीतिः स परिकर इत्यर्थः । उदाहरति महौजस इति । महौजसः मानधनाः धनार्चिताः संयति लब्धकीर्तयः न संहताः न भिन्नवृत्तयः धनुर्भृतः असुभिः तस्य प्रियाणि समीहितुं वाञ्छतन्ति । धनार्चिताः संयति लब्धकीर्तयः । प्राणैरपि प्रभोः वाञ्छितं पूरयितुं शक्यमिति आकूतमस्य विशेषणस्य. एवमन्यविशेषणेंष्वपि साकूतत्वं विचार्यम् विशेष्यपदं त्वत्र धनुर्भृत इति । नन्वपुष्टार्थपदं न प्रयोक्तव्यमिति वचनात् अत्र पुष्टार्थानि विशेषणानि उपात्तानि, अतो दोषत्यागमात्रमेतत् कथमलङ्कारणमित्यशङ्क्यपरिहरति ।

**काव्यादर्शः**

साकूतैरिति साभिप्रायैः' प्रतीयमानार्थगर्भीकृतैः, अत एव प्रसन्नगम्भीरपदत्वान्न ध्वनेर्विषयः । गम्यस्यांशस्य वाचोन्मुखत्वात् परिकर इति च सार्थकं नाम । विशेषस्येति । विशेषणैरूपलक्षितस्य विशेष्यस्योक्तिः ।

'महौजस' इति । बलिष्ठत्वे सति प्रभोः कार्यं पूरयितुं शक्यामिति आकूतमस्य विशेषणस्यैवमन्येष्वपि विशेषणेषु वाच्यम् । साकूतग्रहणाच्च 'न्यस्ताक्षरा धातुरसेन यत्र' इत्यत्र 'भुर्जत्वचः कुञ्जरबिन्दुशोणाः' इति विशेषणं वस्तुस्वरूपख्यापकमित्यस्य निरासः ।

'पुष्टार्थपदं न प्रयोज्यम्' इति पुष्टार्थानि विशेषणान्युपात्तानि अत्रेति दोषत्यागमात्रं, न त्वलंकार इत्याशङ्क्याह—यद्यपीति ॥ [३७ ॥]

न चैषेति । क्वचित्प्रकृतनिष्ठं साम्यं, यथा—

**सदयं बुभुजे महाभुजः सहसोद्वेगमियं व्रजेदिति।**
**अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव॥**

—इति समुचितोपमायाम् ।

### विवेकः

विशेषणैरिति—यथा लिङ्गेन लिङ्गिनो ज्ञानं तथा विशेषणेन विशेष्यस्येति सङ्गत्या तदनन्तरमस्य लक्षणम् । आकूतोऽभिप्रायः, विशेषणानां साकूतत्वं प्रतीयमानानङ्गीकारः । अत एव प्रसन्नगम्भीरत्वान्नायं ध्वनिविशेषः, प्रतीयमानाङ्गस्य वाच्योन्मुखत्वात् । परिकर इति सार्थकं नाम, कार्यस्योत्पत्त्यनुगुणं कारणं सामग्री परिकर इत्युच्यते । विशेषणबलात् प्रतीतिर्विशेष्यस्यैवोपजायत इति व्याचष्टे अर्थाद्विशेष्यस्येति । उक्तिरिति योजनीयम् । विशेष्यन्तु द्रव्यादिभेदाच्चतुर्विधमित्ययं चतुर्धेति रुद्रटः (रु. का. अ. ७/७२) महौजस इत्यादि—तस्य सुयोधनस्य प्राणैरपि प्रियाणि कर्तुमिच्छन्ति तदर्थं प्राणानपि जहतीत्यर्थः । न च ते तत्रासमर्था इत्यभिप्रेत्याह महौजस इति । एवं मानधना इत्यादावपि । 'हरेयुः संहता वित्तं भिन्नास्तेऽनुपकारिण इति प्रतिपादितदिशोक्तं न संहता इत्यादि । ननु (?) चापुष्टार्थता विरहाभावात् पुष्टार्थत्वनिबन्धनमत्रोपादेयत्वं न पुनरलङ्कारता, वैचित्र्यातिशयभावात् इत्यत आह तथापीत्यादि । अनेन कवेः शक्तिव्युत्पत्ती प्रतीयते यतः (?)

### दीपिका

साकूतैर्गर्भीकृतकिञ्चिद्रहस्यैः । संहताः परस्परानुपजप्याः भेदवृत्तयोऽन्योन्यस्पर्धया स्वामिकृत्यमप्युपेक्षमाणा असुभिरसुव्ययेनापि तस्य प्रियाणि समीहितुं कर्तुं वाच्छन्तीति योजना । दोषविपर्यासमात्रात्मतयाऽलङ्कारतामस्यासहमानान् प्रतिदोषविपर्यासमात्राधिक्येन चमत्कारानुगुण्यस्य विच्छित्तिविशेषानुभावकतयाऽस्यालङ्कृतित्वं दुरपह्नवमित्याह—यद्यपीति । बहूनां विशेषणानामिति । विशेषणैरिति सूत्रे वचनेन बहुविशेषणोपनिबन्ध एवेदं वैचित्र्यमुल्लसति । ततश्च तस्यामेव दशयामस्यालङ्करणत्वमेकत्वोपनिबन्धे तु दोषाभावमात्रत्वमिति सूत्रितमित्यभिप्रायः । एवमिति । प्रकृतोदाहृतिदृष्टरीत्या वैचित्र्यमित्यलमिति शेषः ।

### दर्पणः

परिकरालांरः विशेषणैरिति । बहुवचनस्य नैकेन चाभ्यां विशेषणाभ्यामिदं वैचित्र्यं । किञ्च स्पष्टार्थ एवेति भावः ।

साकूतैः सांभिप्रायैः । महौजस इत्यनेन ओजो हि नानामेवाकिञ्चित्करत्वम् नेतरथेत्यर्थः । ओजसद्भावेऽपि निरभिमानिनां च नायनादौ [नायकादौ] लज्जाभाव इत्यत आह मानधनाः । एवमापाटानुत्पादिभतसौहदानां [परकार्ये शैथिल्यमित्युक्तम् धनार्चिताः इति । एवं गुणविशिष्टानामपि शस्त्रश्रीविद्यायां तथानभ्यासे

नित्यतलतेत्यतोऽभिहितं धनुर्भृतः इति। एवं विधानामणि सङ्ग्राम नैपुण्ये विफलत्वमित्याह संयति लब्धकीर्तयः इति। तथापि सर्वेषामेकीभावे कथञ्चिदेकस्मिन् विमलसि [विमनसि] सर्वेऽपि विमनसः स्युरित्यताह न संहताः इति। एवं भू अपि ति हुशक्या [एवं भूत्वापि जेतुं शक्या] इत्यत आह न भेदवृत्तयः इति। अस्वभिः [असुभिः] प्राणव्ययेनापीत्यर्थः। समीहितुं चेष्टितुम् प्रति।

### साहित्यचूडामणिः

परिकरमाह—विशेषणैरिति। साकूतैः साभिप्रायैः।

कस्यैवमुक्तिरित्यपेक्षायामाह—अर्थादिति महौजस इति। अत्र प्रत्येकं विशेषणानि वर्णनीयार्थोपक्षीणानि।

सप्रमोल्लासग्रन्थविरोधमाशङ्क्य परिहरति—यद्यपीति। अपुष्टार्थत्वनिराकरणादर्थपोषयोगः न पुनर्विशेषणबाहुल्यनिबन्धनं वैचित्र्यमिति भावः। यत्सूत्रं "विशेषणसाभिप्रायत्वं परिकरः" [अलङ्कार सू० ३३] इति। यच्च व्याख्यानं विशेषणानां साभिप्रायत्वं प्रतीयमानार्थगर्भीकार इति। प्रतीयमानेन चांशेन वाच्यस्यैव परिष्क्रियमाणत्वाद् न ध्वनिविषयत्वशङ्का।

### सम्प्रदायप्रकाशिनी

विशेषणैरिति। साभिप्रायैर्विशेषणैर्विशेष्यस्योक्तिः अभिप्रायस्य वाच्याङ्गत्वात् परिकरः।

महौजस इति। महौजसो महाविक्रमाः। अनेन दुराक्रमता। मानधनाः न तु नश्वरमणिकनकादिधनाः। अनेनावमानासहिष्णुता। धनैरभिमतैरर्चिताः पूजापुरस्कारेण प्रसादिताः। अनेन प्रत्युपकारपरमोत्सुकता। धनुर्भृतः योद्धुमुपक्रान्तासन्नाहाः। अनेनादीर्घसूत्रता। संयतीति जात्याख्या। पूर्वं युद्धेषु जयेन समासादितयशसः। अनेन कार्येषु सिद्धिरूपता। न संताः स्वाधिकारेषु विभिन्नवृत्तयः। अनेन नैकामिषवृत्तिविरहः (?)। न भिन्नवृत्तयः षाड्गुण्ये संहताः। अनेन स्वामिकार्येष्वैकार्थ्यनित्यता। असुभिरपि प्रियाण्याचरितुमिच्छन्तीति परिसमाप्तत्वेनात्यन्तहितैषिता। यद्यपि निरभिप्रायतायमपुष्टार्थतेति साभिप्रायत्वमदुष्टत्वैव न त्वलङ्कारः, तथाप्येकस्य बहुभिर्विशेषणैः साभिप्रायैरेवं परिपोषो विच्छित्तिरूप इति परिकरालङ्कारः।

तदेतदाह—यद्यपीत्यादिना।

### मधुमती

साकूतैरिति। साभिप्रायैरित्यर्थः। अर्थादिति। विशेषणानां मिथोऽनन्वयात् 'गुणानां च परार्थत्वात्' इति न्यायादिति भावः।

महौजस इति। अत्र विशेषणानां परानभिभवनीयत्वाद्यभिप्रायकत्वात्, धनुर्भृतः इति विशेष्यस्य परिपुष्टिः। तेन च प्रधानस्य दुर्योधनस्य अतिशयः। अन्यविशेषणत्वेनोपात्तान्यपि वाक्यार्थमहिम्ना प्रधानमेव उपकुर्वन्तीति। इति परिकरः।

## विस्तारिका

साकूतैरिति । साभिप्रायैरित्यर्थः । उक्तिः परिपुष्टिः । अर्थादिति । विशेषणानां परस्परनिराकाङ्क्षत्वादिति भावः ।

महौजस इति । न संहता अपकर्तुमिति शेषः । न वा भिन्नव्यवसायः, प्रत्युतासुभिरप्यस्य सुयोधनस्य प्रियाणि समीहितुं निष्पादयितुं वाञ्छन्ति ।

अत्रोक्तगुणवतामपि सर्वेषां तदपकारासामर्थ्येन तस्योक्तसर्वगुणवत्त्वं प्रतीयत इति विशेष्यस्य प्रधानस्य परिपुष्टिः अत एव परिकर इति संज्ञापि लोके परिपुष्टिकारिष्वेव, परिकरपदप्रयोगात्, प्रकृतेऽप्यन्यविशेषणत्वेनोपात्तान्यपि महौजस्त्वादीनि वाक्यार्थमहिम्ना प्रधानमेवोपकुर्वन्तीति दिक् । वैचित्र्यमिति । अनुभवसिद्धिमिति शेषः ।

## सारबोधिनी

विशेषणैरिति । साकूतैरिति । रसाभिप्रायैरित्यर्थः । उक्तिः परिपुष्टिः । अर्थादिति विशेषणानां परस्परनिराकाङ्क्षत्वादिति भावः ।

महौजस इति । तस्य सुयोधनस्य प्रियाणि प्राणैरपि कर्तुं वाञ्छन्तीत्यन्वयः । महौजःशालित्वेनानाक्रमणीयत्वम् मानधनत्वेन लज्जातो न युद्धादितः पलायलम् । धनामर्चततत्वेनोपकृता इति । धनुर्भृत इत्यनेनास्त्रान्तरापेक्षया वैलक्षणयम् । संयतीत्यादिना व्यवसायः । न संहता इत्यनेन पृथगेव तत्कार्यकरणे क्षमत्वमन्यानपेक्षत्वमिति यावत् । अभेदवृत्तित्वेन तदेव प्रयोजनव्यग्रत्वं व्यज्यते । तेनायं संप्रति कृतकृत्यो रूढमूल इति प्रतीयते । वैचित्रयमिति । अनुभवसिद्धमिति शेषः ।

## काव्यप्रदीपः

**विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।**

साकूतैः साभिप्रायैः । उक्तिरर्थाद्विशेष्यस्य । उदारणम्—

**'महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः ।**
**न संहतास्तस्य न भेदवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥'**

अत्र महौजस्त्वादिविशेषणानि परानभिभवनीयत्वाद्यभिप्रायकाणि । न च वाच्यम्— अपुष्टार्थत्वस्य दोषत्वाभिधानादर्थसिद्धं पुष्टार्थत्वमिति दोषाभावमात्रतया कुतोऽलंकारमध्ये पठितोऽयमिति । एकनिष्ठत्वेन बहूनां विशेषणानामुक्तोदाहरणवदुपादाने वैचित्र्यमपि ह्यनुभवसिद्धं न तु दोषाभावमात्रमिति संप्रदायः । वयं त्वालोचयामः—तादृशैकविशेषणोपन्यासेऽप्यलंकारत्वमुचितम् । अपुष्टार्थत्वविरहस्य निर्विशेषणतयाप्युपपत्तेरनुभवसिद्धत्वाभावाद्वैचित्र्यस्य चानुभवसिद्धत्वात् । यथा—'शुद्धे सद्मनि पल्लविन्युपवने' इत्यादौ ।

## काव्यप्रकाशखण्डनम्

विशेषणैर्यत् साकूतैरुक्तिः परिकरस्तु सः । (का. ११८, पू०)

अर्थाद् विशेष्यस्य । यथा—

**महौजसो मानधना धनार्च्चिता धनुर्भृतः संयति लब्धकीर्त्तयः ।**
**न संहतास्तस्य न भेदवृत्तयः प्रियाणि वाञ्छत्यसुभिः समीहितुम् ॥**

भारवेः पद्यम् । अत्र महौजस्त्वादिविशेषणानि परानभिभवनीयत्वाद्यभिप्रायकाणि ।

### आदर्शः

परिकरालङ्कारमाह—विशेषणैरिति । बहुवचनाद् विशेषणबाहुल्यं विवक्षितम् । व्यक्तीभविष्यति चेदम् । साकूतैरिति, विशेष्यप्रकर्षे साभिप्रायैरित्यर्थः ।

महौजस इति । युधिष्ठिरं प्रति चरस्योक्तिरियम् । अत्र तस्य वीरा इति विशेष्यमूह्यम् । तथा च तस्य दुर्योधनस्य वीरा असुभिः प्राणैरपि तस्य प्रियाणि वाञ्छन्ति प्राणव्ययेनापि तत्प्रियं कर्त्तुमिच्छन्तीत्यर्थः । ननु निर्बलैस्तैः किं कर्त्तव्यम् इत्यत्राऽऽह—महौजस इति । मृत्युभीतानां बलवत्त्वमप्यकिञ्चित्करमित्यत्राऽऽह—मानधना इति, स्वमृत्युनाऽपि मानरक्षका इत्यर्थः । मानिनमप्यनुपकारिप्रभुकार्येषु उपेक्षा स्यादित्यत्राऽऽह—धनार्चिता इति । युद्धोपकरणभावे तेषामप्यकिञ्चित्करत्वमित्यत्राऽऽह—धनुर्भृत इति । कृतित्वाभावे तथाऽप्यकिञ्चित्करत्वमित्यत्राऽऽह—संयतीति । संयति युद्धे । बहुसमवायसापेक्षाणां न स्वतः कर्त्तुत्वमित्यत्राऽऽह—न संहता इति, समवायनिरपेक्षा इत्यर्थः । परस्परविरुद्धत्वे तथाऽपि न कार्यसाधकत्वमित्यत्राऽऽह—न भेदेति । अत्रैतैर्विशेषणैर्विशेष्याणां वीराणां प्रकर्षः । तथाऽपीति, विशेषणबाहुल्ये वैचित्र्यमनुभवसिद्धमित्यर्थः ।

### सुधासागरः

साकूतैः साभिप्रायैः, उक्तिः ।

धनुर्भृतः धानुष्काः अस्य सुयोधनस्य प्रियाण्यभिलषितानि । असुभिः समीहितुं वाञ्छन्ति प्राणैरपि कर्त्तुमिच्छन्ति, किम्भूताः महौजसः महान्त्योजांसि येषां तथाभूताः । एतेन परानभिभवनीयत्वं व्यज्यते, मानधनाः, एतेन लज्जया युद्धादपलायनत्वम् । धनार्चिताः, एतेन परैर्भेदं प्रापयितुमशक्या इति । संयति लब्धकीर्तयः, एतेन कीर्तिभङ्गभीरुत्वम् । न संहताः परस्परं सापेक्षा न भवन्तीत्यर्थः । एतेन प्रत्येककार्यकारणसामर्थ्यम् । न भेदवृत्तयः एतेन तदेकप्रयोजनापेक्षित्वं व्यज्यते । तेनायं रूढमूलो दुर्जय इति भावः । शुद्धविराट् छन्दः । 'जतौ जरौ शुद्धविराडिदं मतम्' इति लक्षणात् । परिकरणमुपस्करणम्, विशेषणव्यङ्ग्यार्थेन वाक्यार्थस्योपस्करणात् परिकर इत्युच्यते । न च वाच्यमपुष्टार्थत्वस्य दोषत्वाभिधानादर्थसिद्धं पुष्टार्थत्वमिति दोषाभावमात्रतया कुतोऽलङ्कारमध्ये पठितोऽयमिति । एकनिष्ठत्वेन बहूनां विशेषणानामुक्तोदाहरणवदुपादाने वैचित्र्यमपि ह्यनुभवसिद्धं न तु दोषाभावत्वमात्रमिति सम्प्रदायः ।

वयन्त्वलोचयामः—तादृशैकविशेषणोपन्यासेऽपि अलङ्कारत्वमुचितम् । अपुष्टार्थत्वविरहस्य निर्विशेषणतयाऽप्युपपत्तेः, पुष्टार्थत्वस्यार्थसिद्धत्वाभावात्, वैचित्र्यस्य चानुभवसिद्धत्वात् । यथा—'शुद्धे सद्मनि पल्लविन्युपवने' इत्यादाविति । विशेष्यस्यांशस्य साभिप्रायत्वे परिकराङ्कुरालंङ्कारः स्वीकृतो जयदेवादिभिः । स चासौ प्रामादिकः । तत्रापि विशेषणांशस्यैव साभिप्रायत्वात्, निर्धर्मकस्य विशेष्यांशमात्रस्य स्वप्नेऽपि साभिप्रायत्वासम्भवात् । अत एव खण्डितोऽस्माभिः कुवलयानन्दखण्डने ।

(सू० १८४) व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥११८॥

निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नुयते सा व्याजोक्तिः।

न चैषापह्नुतिः प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासंभवात्। उदाहरणम्—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्-
रोमाञ्चादिविसंष्ठलाखिलविधिव्यासङ्गभङ्गाकुलः।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥५२०॥

अत्र पुलकवेपथू सात्त्विकरूपतया प्रसूतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः ॥

---

सङ्केतः

न चैषेति। अयं भावः—अपह्नुतौ किल उभयनिष्ठं साम्यम्, अत्र तु प्रकृतस्यैव सद्भावात् प्रकृतनिष्ठमेव साम्यम् यथा—

'सदयं बुभुजे महाभुजः
सहसोद्वेगमयं व्रजेदिति।
अचिरोपनतां स मेदिनीं
नवपाणिग्रहणां वधूमिव' ॥ इति;

'ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च?।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति।'

इति च समुच्चितोपमायां, तथा अत्रापि प्रकृतिनिष्ठमेव साम्यमिति ।

शैलेन्द्रेति । शैलेन्द्रेण प्रतिपाद्यमाना या गौरी तत्कराश्लेषे शैलेन्द्रकरस्पर्शोऽपि शिवस्य विद्यते । व्यासङ्ग निरोध, तस्मात् भङ्गः भयं सात्विकभाव: इत्यर्त: । असमञ्जसनिखिलकर्तव्यताप्रसङ्गापह्नवाकुल इति तात्पर्यम् । उद्‌भटमते व्याजोक्त्यभावात् अत्र अपह्नुति: । तथा अत्र रोमाञ्चादिना उद्‌भिन्नो भाव: शैत्यप्रक्षेपात् अपलपितोऽपि सस्मितत्वन पुनरप्युद्‌भिन्नत्वेन प्रकाशित:, तथापि अपलापमात्रचिन्तया अस्य अलङ्कारस्य उल्लेख: । इति व्याजोक्ति: ।

### बालचित्तानुरञ्जनी

नचैषेति । अपह्नतौ हि उभयनिष्ठत्वम् न तथात्रेति भेद इति भाव: ।

उदाहरति शैलेन्द्रेति । शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्रोमाञ्चादिविसंष्ठुलाखिलविधि-व्यासङ्गभङ्गाकुल: हा । तुहिनाचलस्य करयो: शैत्यं इत्यूचिवान् । शैलान्त:पुरमातृमण्डलगणै: सस्मितं हृष्ट: शिव: । अत्र नृपस्य व्याजोक्तिं प्रकटयति अत्रेति ।

### काव्यादर्श:

क्वचिद् अप्रकृतनिष्ठं, यथा कस्यांचित्तुल्ययोगितायाम् । अपह्नुतौ तु प्रकृताप्रकृतनिष्ठं सादृश्यम् । न च तथेहास्ति, प्रकृतस्यैव सद्‌भावात् । उद्‌भटेन तु व्याजोक्त्यनभिधानाद् अत्रापि अपह्नुतिरुक्ता ।

'शैलेन्द्रे'ति । 'हिमाचलप्रतिपाद्यमानगौर्या हस्तोपगूहनमाश्लेष: । ततश्च हिमाचलकरस्पर्शोऽप्यस्ति शिवस्य । व्यासङ्गो निरोध:, तस्माद् भङ्गो भयम् । सात्त्विकरूपतयेति गौरीकरस्पर्शाद् उद्‌भिन्नत्वात् ।

### विवेक

व्याजोक्तिरिति—पूर्वत्रानुद्‌भिन्नस्य वस्तुन: प्रकाशनम्, इह तूद्‌भिन्नस्य निगूहनमिति वैधर्म्यादस्य सङ्गति: । कथमपीति केनापि निमित्तेन प्रभिन्नं प्रकटतां प्राप्तम् । केनापि व्यपदेशेनेति विशिष्टेनापदेशेन वस्त्वन्त-प्रक्षेपरूपेण व्याजेन यदपलप्यते सा व्याजस्य वचनाद्व्याजोक्तिरित्यन्वर्थं नाम । प्रकृताप्रकृतेति—"क्वचित्प्रकृत-निष्ठं साम्यं यथा—(र. वं. ८/७, व. जी. २०३-२०४ पृ:) सदयं बुभुजे महाभुज: सहसोद्वेगमियं व्रजेदिति । अचिरोपनतां स मेदिनीं नवपाणिग्रहणां वधूमिव ॥ इति समुच्चितोपमायाम् । क्वचिदप्रकृतनिष्ठं यथा कस्याश्चित् तुल्ययोगितायाम् । क्वचित् तदुभयनिष्ठं यथाऽपह्नुत्याम् । क्वचिदप्रकृतनिष्ठं यथा कस्याश्चित् तुल्ययोगिता-याम् । क्वचित् तदुभयनिष्ठं यथाऽपह्नुत्यामि । तच्चेह न विवक्षितं प्रकृतस्यैव सद्‌भावात्" (रु. सं. ६९ पृ:) । शैलेन्द्रेत्यादि—उपगूढमुपगूहनम् । विधिर्होमप्रदक्षिणादि: । व्यासङ्गो विरोधस्तस्माद्भङ्गो भयम् । ऊचिवान् भग-वानेव । मातृमण्डलमष्टो मातर: । सस्मितं शैलान्तर:पुरादिभिर्दृष्ट:, न तु सस्मितमूचिवानिति योजनीयं, तथा सत्युद्‌भिन्नस्य वस्तुन: प्रत्युत स्फुटत्वघटनात् । अत्र रोमाञ्चवेपथुभ्यामुद्‌भिन्नो रतिभाव: शैत्यप्रक्षेपेणापलापित: । भट्टोद्‌भटस्तु यथा सादृश्याय योऽपह्नव: साऽपह्नुतिस्तथाऽपह्नवायापि यत् सादृश्यं साऽपह्नुतिरित्यपह्नुतिप्रकार-त्वान्नेमं पृथक् लक्षयति (का. अ. सा. स. ५/५ द्र.) ।

## दीपिका

निगूढमप्यपरिस्फुटमपि तथाभूतस्यैव कुतश्चित् स्फुटीभावापलापे व्याजोक्तिः। लक्ष्यप्रसिद्ध्या सूत्रेऽनुपात्तमप्येतदुक्तम्। प्रभिन्नं स्फुटीकृतम्। यथाश्रुतानुसारेण लक्षणस्यातिव्याप्तिं परिहरति—न चेति। प्रकृताप्रकृतावेवोभयं तन्निष्ठस्य साम्यस्येहासम्भवात्। तदित्यनेन स्वरूपेण लक्षणस्य विशेषणीयत्वादित्यभिसन्धिः। ततश्च प्रथमस्फुटता ततः कुतश्चितदुद्भिन्नत्वं ततो गोपनमिति। इयं सामग्री नापह्नुतावस्ति। अपि तु वैधर्म्यमिह वाच्यम्, साम्यसम्भवे सत्यप्येवंविधवैचित्र्येऽपह्नुतेरङ्गीकारात्। यथा—

> **"आकृष्टादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे**
> **कण्ठे लग्नः स्वकण्ठे प्रभवति कुचयोर्दत्तागाढाङ्गसङ्गः।**
> **बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स एव प्रियो मे**
> **बाले लज्जा निरस्ता नहि नहि सरले चोलकः किं त्रपाकृत्॥"**

न चात्रापह्नवार्थं एव सादृश्योपक्षेपः। निर्विवादापह्नुतौ तु सादृश्यमेवापह्नवोपक्षेप इति नेयमपह्नुतिरिति वाच्यम्, उभयथाऽपि तदङ्गीकारात्। यदाह—

> **"सादृश्यव्यक्तये यत्रापह्नवः साऽपह्नुतिः।**
> **अपह्नवाय सादृश्यं यत्र सैषाऽप्यपह्नुतिः॥"** इति।

प्रतिपाद्यमानेति दीयमानेत्यर्थः। उपगूढ इति भावोक्तिः। रोमाञ्चादिना विसंष्ठुलो विहस्तश्चासावखिले स्तुतिपठनादौ बिधौ प्रस्तुतकृत्ये व्यासङ्गस्यान्यपरतया प्रवृत्तेर्भङ्गेनाकुलश्चेति विग्रहः। मातरः शचीप्रभृतयः। तासां मण्डलगणाः समूहपरिषदः। नन्वत्र पुलकादेस्ताद्रूप्येण प्रतीयमानत्वेन निगूहनाभावात् कथं व्याजोक्तिरित्याह—अत्रेति। पुलकवेपथू इति। रोमाञ्चादीत्यादिशब्देन वेपथुपरिग्रह इत्यभिप्रैति। अपलपितस्वरूपाविति। निह्नुतावान्तरवैजात्यावित्यर्थः।

## दर्पणः

व्याजोक्त्यलंकारः भिन्नं स्फुटीकृतम्। स्वाभ्यस्येत्यनन्तरं [साम्यस्येत्यनन्तरं] विवक्षाया इति शेषः। अपह्नुतौ द्वयोः सादृश्यद्रढीकरणाय प्रकृतं प्रतिषिद्धं [सत्] अप्रकृतं स्थाप्यते इह तु व्रीडादिनिवसनात्यर्थं प्रतिपाद्यमानोपादीयमाना। उपगूढ आश्लेषः। विषंस्थ्ल [विसंष्ठुल] आकुलीभूत इति यावत्।

## साहित्यचूडामणिः

व्याजोक्तिरिति।

यदुद्भिन्नस्य वस्तुनः छद्मना केनचिन्निगूहनमपलापः सा वस्त्वन्तरप्रक्षेपरूपस्य व्याजस्य वचनाद् व्याजोक्तिरित्याह—निगूढमिति। यत्सूत्रम्। "उद्भिन्नवस्तुनिगूहनं व्याजोक्तिः" (अलंकारसू० ७७) इति। गूढं वस्तु कुतश्चिन्निमित्तात् प्राप्तप्राकट्यं स्तद् वस्त्वन्तरादपलप्यते चेदयमलङ्कार इति यावत्। अपह्नुतिशङ्कामस्यापास्यति—नचेति। इहासम्भवात् तत्र सम्भवस्य निर्व्यूढत्वादिति भावः।

शैलेन्द्रेति । अतिविसंस्थुलता वेपथुमत्त्वम् । व्यासङ्गो निरोधस्तस्माद् भङ्गो भयम् ।

अत्र परमेश्वरस्य गौरीपाणिग्रहणे वेपथुपुलकोत्पत्तिरासीत् । सा च मेनया मातृमण्डलेन गणैश्च प्रत्यभेदि । सा देवीहस्तार्पणे हिमवत्पाणिसंस्पर्शशैत्यप्रयुक्तत्वोद्भावनेन वस्त्वन्तरप्रक्षेपणेन निगूह्यत इत्याह—पुलकवेपथू इति ।

## सम्प्रदायप्रकाशिनी

व्याजोक्तिरिति । उद्भेदः प्ररूढतामाक्षिपति । निगूहनाय व्याजवचनाद् व्याजोक्तिः ।

व्याचष्टे—निगूढमपीत्यादिना । अपह्नुतिवैलक्षण्यायाह—न चैषेत्यादि । प्रकृतं निषिध्याप्रकृतसमर्थने हेतोर्द्विष्ठस्य साम्यस्यासम्भवान्नासावपह्नुतिः ।

शैलेन्द्रेति । हस्तोपगूढश्चोल्लसद्भ्यां रोमाञ्चवेपथुभ्यां सात्त्विकभावाभ्यां विसंस्थुलानामखिलविवाहक्रियासमासङ्गानां भङ्गेनाकुलः किंकर्तव्यतानभिज्ञश्च, रोमाञ्चादिनिगूहनाय तुहिनाचलस्य करयोः शैत्यं हा आश्चर्यमित्युक्तवान्, निगूहननैपुणाभिज्ञतया शैलावरोधजनेन ब्राह्म्यादिमातृमण्डलेन स्वानुचरैर्गणैश्च सस्मितं दृष्टः शिवो युष्मान् अवतात् ।

योजयति—अत्र पुलकेत्यादि । हिमहेतुकतया प्रकाशने आदिशब्दसंग्राह्यो वेपथुरेवेत्यभिप्रायेणाह—पुलकवेपथू इति । अनयोः सात्त्विकतया प्रसूतिरुद्भेदः । शैत्यहेतुकतया प्रकाशनं स्वरूपापलपनम् ।

## मधुमती

निगूढमपीति । अनिगूढस्यानुद्भेदात् निगूढमपीत्युक्तम् । तथा च—प्रच्छन्नतया स्थितस्य कालादुद्भिन्नस्य तत्कार्यस्य हेत्वन्तरजन्यत्वप्रतिपादनेन यत्पुनर्निगूहनम्, सा व्याजोक्तिरित्यर्थः । निगूहनमात्रस्य अपह्नुतावपि सत्त्वादाह—नचेति । प्रकृतेत्यापाततः । परमार्थतस्तु—निह्नुतेः निषेधगर्भत्वात्, अस्याश्च तदगर्भितत्वात् भेदः । न ह्यत्र रोमाञ्चादिकं निषिध्य अन्यद्विधीयते । किन्तु तस्य हेत्वन्तरजन्यत्वं निह्नोतुं हेत्वन्तरजन्यत्वमुच्यते इति द्वयोरनयोर्भेदः ।

अत्रेति । पार्वतीविषयकस्नेहस्य (रतिभावस्य) प्रच्छन्नतया अनुवर्तमानस्य तत्करस्पर्शजन्यरोमाञ्चादिना उद्भिन्नस्य तद्रोमाञ्चादौ हिमालयकरस्पर्शजन्यत्वं प्रतिपादयता शिवेन पुनर्निगूहनात् अपलपितस्वरूपावेव पुलकवेपथू व्याजोक्तिं प्रयोजयतः इति भावः । इति व्याजोक्तिः ।

## विस्तारिका

व्याजोक्तिरिति । कपटेन ज्ञातवस्तुनो गोपनं व्याजोक्तिरित्यर्थः ।

निगूढमपीति । अतिगूढस्यानुद्भेदान्निगूढमपीत्युक्तम् । प्रकृताप्रकृतेत्युपलक्षणम् । तत्रोपमेयनिषेधपूर्वकमुपमानव्यवस्थापनम्, अत्र तु किञ्चिद् अनिषिध्यैव निमित्तान्तरोत्पन्नवस्तुनो निमित्तान्तरप्रयुक्तत्वव्यवस्थापनादित्यपि बोद्धव्यम् ।

शैलेत्यादि। अत्र पार्वतीविषयकरतिभावजन्यरोमाञ्चकम्पादेर्हिमवत्करस्पर्शनिमित्तकत्वप्रतिपादनाद् व्याजोक्तिः।

### सारबोधिनी

व्याजोक्तिरिति। गोपनीयं वस्तु केनापि हेतुना प्रतीतं, तस्य च केनापि व्याजेन निगूढनं व्याजोक्तिः। प्रकृताप्रकृतेत्युपलक्षणम्। तत्रोपमेयनिषेधपूर्वमुपमानव्यवस्थापनम्। अत्र तु किञ्चिदनिषिध्यैव निमित्तान्तरोत्पन्न-वस्तुनो निमित्तान्तरप्रयुक्तत्वव्यवस्थापनमित्यपि भेदकं बोद्धव्यम्।

### काव्यप्रदीपः

**व्याजोक्तिश्छद्मनोद्भिन्नरूपवस्तुनिगूहनम्॥ ३२॥**

उद्भिन्नत्वमस्फुटस्य प्रकाशः। तथा चास्फुटमपि वस्तुस्वरूपं कथंचिव्द्यक्तमथ केनापि यदपह्नुयते सा व्याजोक्तिः। न चेयमपह्नुतिः। प्रकृताप्रकृतयोः साम्ये तत्स्वीकारात्। अत्र तु तदभावात्। न च प्रथमं गूढस्यानन्तरं प्रकाशस्यापह्नव इति सामग्रीभेदादेवापह्नुतिभेद इति वाच्यम्। एवंविधे विषये साम्यसंभवेऽपह्नुतेरेवोपगमात्। ननु यत्रापह्नवार्थ सादृश्योपक्षेपः सा व्याजोक्तिः सादृश्यार्थमेव तु यत्रापह्नवोपक्षेपः सापह्नुतिरिति चेत्, न। तत्रोभयत्रा-प्यपह्नुतेरेवोपगमात्। यदाहुः—

**'साम्यायापह्नवो यत्र सा विज्ञेया त्वपह्नुतिः।**
**अपह्नाय सादृश्यं यस्मिन्नेषाप्यपह्नुतिः॥' इति॥**

उदाहरणम्—

**'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-**
**द्रोमाञ्चादि विसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः।**
**हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं**
**शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः॥'**

अत्र पुलकवेपथू सात्त्विकैकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशनादपलपितस्वरूपाविति व्याजोक्तिं प्रकाशयतः। वयं तु—पुलकवेपथुभ्यां सात्त्विकाभ्यां प्रकाशिता गूढावगतिस्तयोः शैत्यकारणताप्रकाशनेनापह्नु-तेति व्याजोक्तिरियम्।

### काव्यप्रकाशखण्डनम्

**व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम्॥ (का. ११८, उ०)**

निगूढमपि वस्तुनो रूपं स्वरूपप्रतिपन्नं केनापि व्यपदेशेन यदपह्नुयते सा व्याजोक्तिः। न चैषाऽपह्नुतिः, प्रकृताप्रतयोः साम्यस्येहाभावात्। यथा—

**शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसद्-**

**रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।**

**हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं**

**शैलान्तः पुर [प० ५५.१] मातृमण्डलगणैर्दृष्टोऽवताद् वः शिवः ॥**

वो युष्मान् शिवः अवायाद् रक्षतु । कीदृशः ? शैलेन्द्रेण हिमालचनेन प्रतिपाद्यमाना दीयमाना या गिरिजा पार्वती तस्या हस्तोपगूहेन हस्तस्पर्शेन उल्लसद् व्यक्तीभवद् यद् रोमाञ्चादि रोमाञ्चकं यः स्वरभङ्गादिः तेन विसंस्थुलो विसदृशः योऽखुलः समस्तो विधिर्विधानं तेन यो व्यासङ्गस्तस्य भङ्गे भङ्गार्थमाकुलो व्याकुलः, सस्मितं यथा स्यादेवं तुहिनाचलस्य हिमगिरेः, हा शैत्यमित्यूचिवान् कथितवान् शैलान्तःपुरे हिमाचलस्यान्तः पुरे यो मातृमण्डलानां गणः समूहस्तैर्दृष्टोऽवलोकित इत्यर्थः । अत्र पार्वतीस्नेहस्य प्रच्छन्नतया ऽनुवर्त्तमानस्य करस्पर्शज-न्यरोमाञ्चादिनोद्भिद्यमानस्य हिमालयकरस्पर्शजन्यत्वं प्रतिपादयता पुनर्निगूहनाद् व्याजोक्तिरित्यर्थः ।

## आदर्शः

व्याजोक्त्यलङ्कारमाह—व्याजेति । 'उद्भिन्नस्य' कुतोऽपि प्राप्तप्रकाशस्य वस्तुस्वरूपस्य च्छद्मना निगूहनमित्यर्थः । व्याचष्टे—निगूढमपीति । उद्भिन्नपदसामर्थ्यान्निगूढत्वलाभः । प्रकृताप्रकृतोभयेति, **(c)** उपमे-यनिषेधेनोपमानसाधनस्यैवापह्नुतित्वात् । शैलेन्द्रेति । शिवो बोऽवतात् । कीदृशः शैलेन्द्रेण हिमालयेन प्रतिपाद्य-मानाया दीयमानाया गिरिजाया हस्तस्य यदुपगूढं भावक्रान्तत्वादुपगूहनं सम्पर्कस्तेनोल्लसता रोमाञ्चादिना पुलकवेपथुभ्यां विसंष्ठुलस्य अव्यवस्थ्यस्य अखिलवैवाहिकविधिव्यासङ्गस्य भङ्गेन भङ्गभयेनाकुलः सन् हा आश्चर्य तुहिनसम्बन्धिनोऽचलस्य करयोः शैत्यमित्यूचिनवान्, अत एव शैलस्यान्तःपुरेणान्तः पुरस्थस्त्रीगणेन मातृमण्डलेन गौरीपद्मादिभिः स्वीयगणैर्नन्द्यादिभिश्च सस्मितं दृष्टः । सात्त्विकतयेति, सत्त्वगुणोद्रेक एव कामोद्भे-दात् ।

## सुधासागरः

उद्भिन्नत्वमस्फुटस्य प्रकाशः । तथा चास्फुटमपि वस्तुस्वरूपं कथञ्चिद् व्यक्तम्, अथ केनापि छद्मना यदपह्नूयते सा व्याजोक्तिरित्यर्थः । न चैषेत्यादि । न चेयमपह्नुतिः, प्रकृताप्रकृतयोः साम्ये तत्स्वीकारात्, अत्र तु तदभावादित्यर्थः । न च प्रथमं गूढस्यानन्तरं प्रकाशस्यापह्नव इति सामग्रीभेदादपह्नुतिभेद इति वाच्यम्, एवंविधेऽपि विषये साम्यसम्भवेऽपह्नुतेरेवोपगमात् । ननु यत्रापह्नवार्थं सादृश्योपक्षेपः सा व्याजोक्तिः, सादृश्यार्थमेव तु यत्रा-पह्नवोपक्षेपः साऽपह्नुतिरिति चेत्, न, तत्रोभयत्राप्यपह्नुतेरेवोपगमात् । यदाहुः—

**साम्यायापह्नवो यत्र सा विज्ञेया त्वपह्नुतिः ।**

**अपह्नवाय सादृश्यं यस्मिन्नेषाऽप्यपह्नुतिः ॥ इति ।**

उदाहरणम्—शैलेन्द्रेति ।

शैलेन्द्रेणहिमाद्रिणा प्रतिपाद्यमाना दीयमाना गिरिजा पार्वती तस्याः हस्तस्योपगूहः परिरम्भणं तेनोल्लसदाविर्भवद्रोमाञ्चादि तेन विसंष्ठुलः स्थगितो योऽखिलविधिव्यासङ्ग सकलेतिकर्तव्यतारूपो व्यापारस्तद्भङ्गेनाकुलः मद्रतिः प्रकटीभूतेति चकितः, अत एव शैलान्तःपुरमातृमण्डलगणैः सस्मितं दृष्टः सन्, रोमाञ्चादिसात्त्विकभावगोपनाय हा शैत्यं तुहिनाचलस्य करयोः हिमवद्धस्तयोर्महच्छैत्यमित्यूचिवान् शिवो वः युष्मानवत्वित्यर्थः । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्तं प्राक् ।

अत्र पुलकेत्यादि । पुलकवेपथू सात्त्विकैकरूपतया प्रसृतौ शैलेन्द्रशैत्यकारणकतया प्रकाशनादपलपितस्वरूपाविति व्याजोक्ति प्रकाशयत इति वृत्त्याशयं केचिद् वर्णयन्ति । वयन्तु पार्वतीविषयकस्नेहस्य रतिभावस्य प्रच्छन्नतयाऽनुवर्तमानस्य तत्करस्पर्शजन्यरोमाञ्चकम्पाभ्यामुद्भिन्नस्य तद्रोमाञ्चादौ हिमालयकरस्पर्शजन्यत्वं प्रतिपादयता शिवेन पुनर्निगूहनादपलापितस्वरूपावेव पुलकवेपथू व्याजोक्ति प्रयोजयत इति तदाशयं जानीमः ।

**(सू० १८५) किंचित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते।**

**तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता॥ ११९॥**

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्यवस्यति सा भवेत्परिसंख्या। अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टम्। तथा, उभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति चत्वारो भेदाः। क्रमेणोदाहरणम्—

**किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः**

**किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः।**

**किमाराध्यं पुण्यं किमभिलषणीयं च करुणा**

**यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति॥ ५२१॥**

---

**सङ्केतः**

परिसङ्ख्येति। परिः वर्जने। ततश्च कस्यापि परिवर्जनेन कस्यचित् सङ्ख्यानम्-वर्ण्यत्वेन गणनम्, सम्यक् प्रथमं वा परिसङ्ख्या। प्रमाणान्तरावगतम् प्रतिपाद्येन (प्रमाणान्तरेण) ज्ञानम्। प्रयोजनान्तराभावात्—सदृशवस्त्वन्तरव्यवच्छेदरूपं प्रयोजनं हित्वा नान्यत् प्रयोजनमस्तीत्यर्थः।

किमासेव्यमिति। अत्र श्लोके शास्त्रप्रमाणज्ञातमपि गङ्गातटादिप्रश्नेसति सेव्यध्येयादितय क्रमेण कामिनीसेवतातद्ध्यानपापहिंसानां निषेधायोक्तम्। निषेध्याश्चात्र गम्याः। यदासक्त्येत्यत्र यच्छब्दः पूर्वोक्तपरामर्शी।

**बालचित्तानुरञ्जनी**

परिसंख्यां लक्षयति किञ्चिदिति। चतुर्द्धा परिसंख्या। प्रश्नस्य वाच्यत्वमुन्नीयमानत्वञ्च, अपोह्यस्य वाच्यत्वमुन्नीयमानत्वञ्चेति। ननु शब्दानां स्वार्थाभिधानमात्रव्याप्ततायां कथमन्यव्यपोहे तात्पर्यमित्यत आह प्रमाणान्तरेति। प्रयोजनान्तराभावात् इत्यर्थः। अस्याश्चातुर्विध्यमाह अत्र चेति। प्रश्नपूर्वकथनं अप्रश्नपूर्वकथणञ्चेति द्वौ भेदावुभयत्र वर्जनीयस्य प्रतीयमानता वाच्यता चेति द्वे इति चत्वारो भेदाः। तत्र प्रश्नपूर्वकत्वे वर्जनीयस्य प्रतीयमानतामुदाहरति किमिति। पुंसामासेव्यं किम्? इति पुष्टे उत्तरं आपगाया श्रेष्ठं तटम्। एकान्ते किं ध्येयम्? विष्णोश्चरणयुगलम्। आराध्यं किम्? पुण्यम्। अभिलषणीयं किम्? करुणा। तेषु सरित्तटादिषु आसक्त्या

चेतो निरवधि यथा तथा मुक्त्यै प्रभवति। अत्र न त्वङ्गनेति पुण्यमिति पापमिति प्रतीयते। करुणेति न हिंसेति प्रतीयते।

### काव्यादर्शः

किंचित्पृष्टमिति। अन्यव्यवच्छेदाय या उक्तिः सा कस्यचित् परिवर्जनेन कुत्रचित् संख्यानं वर्णनीयत्वेन गणनं परिसंख्या। परिवर्जने प्रमाणान्तरावगतं प्रतिपाद्येनज्ञातं प्रयोजनान्तरभावादिति वस्त्वन्तरव्यवच्छेदलक्षणं प्रयोजनं विना यत् प्रयोजनान्तरं नास्ति। पृष्टे प्रतीयमानता, यथा—'किमासेव्यम्' इति। 'येषां पूर्वोक्तानामासक्त्या-वहितत्वेन'। अत्र 'किम्' इति प्रश्नानन्तरं आगमप्रमाणवगतस्य गङ्गातटस्य सेवनमुपनिबद्धम्। कान्तानितम्बसे-वानिषेधाय इतरनिषेधश्चात्र प्रतीयते, न तूच्यते। 'चरणयुगम्' इत्यत्रापि 'न मृगलोचना' इति गम्यम्। 'पुण्यम्' इति न 'पापम्' इति गम्यम्। 'करुणा' इति, न तु 'धनम्' इति व्यपोह्यार्थाः।

### विवेकः

किञ्चिदित्यादि—अवगतमपि प्रतिपाद्येन ज्ञातमपि। 'परिवर्जने' (पा. १/४/८८ द्र.) वर्जनार्थं संख्या कथनं परिसंख्या। तादृगन्यव्यपोहायेति व्याचष्टे सदृशवस्त्वन्तरेति। अलङ्कारप्रस्तावाच्च 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्या तु कीर्त्यते॥' इति वाक्यविदां लक्षणमनाश्रित्य पाक्षिक्या-मपि प्राप्तावयमिष्यते। अत एव 'याजनाध्यापनप्रतिग्रहैब्राह्मणो धनमर्जयेत्।' 'पञ्च पञ्चनखा भक्ष्या' इति नास्य विषयः। जिज्ञासाऽऽविष्करणं प्रश्नः, येन जिज्ञासा विक्रियते तद्वचनं प्रश्न इत्यर्थः। तत्पूर्वकं कथनं, वर्जनीयस्य प्रतीयमानत्ववाच्यत्वाभ्यामर्थाद्द्विधा। किमासेव्यमित्यादि। अत्रालौकिकं वस्तु गृह्यमाणं तत्सदृशसरिदन्तरादि-वस्त्वन्तरपरिच्छेदे पर्यवस्यति, व्यवच्छेद्यञ्च प्रतीयमानं सरिदन्तरसविधसेवनं युगपत्र सम्भवतीति पाक्षिकीयं प्राप्तिः।

### दीपिका

पृष्टमपृष्टं वेति विशेषसूत्रणम्। शेषस्तु परिसंख्यासामान्यलक्षणं किञ्चित् कथितम्। तादृगन्यव्यपोहाय यत् प्रकल्पते कथितस्य तादृशवस्त्वन्तरव्यवच्छेदन प्रतीत्यै यत् कल्पनं सा परिसंख्येत्यर्थः।

नन्वेकस्य कथने कथमितरेषां व्यवच्छेदप्रतीतिरित्याह—प्रमाणेति। यथा भोजयितव्यता बहुषूपस्थितेषु 'देवदत्तो भोजयितव्यः' इत्युक्ते परेषामभोजयितव्यमर्थसिद्धम्, तदा किमासेव्यमित्यादावपि गङ्गायाः सविधं सेव्यमित्युक्तेऽर्थादितरेषामसेव्यत्वप्रतिपत्तिः। तदाहुः—

**"तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते" इति।**

प्रयोजनान्तराभावादिति। एतदन्यप्रयोजनानामसङ्गततया बुद्ध्यनारोहेण शब्दप्रयोगस्य चावश्यकं किञ्चिदभिसन्धानपूर्वकत्वानुसन्धानेऽस्यैव स्फुराणादिति भावः। वाच्यत्वं चेति। यद्यप्यनुपादानेऽपि व्यपोहसि-द्धिस्तथापि व्यपोह्यं क्वचन शाब्दत्वादात्मनोऽत्यन्तासत्त्वप्रकटनेन प्रकृतविधेर्दार्ढ्यातिशयमाधत्ते। यया द्वयोरुप-स्थितयोर्मैत्रं स्मर मा चैत्रमित्यत्रेति भावः। चत्वार इति अतः पूर्वमत्रेति, प्रकारद्वये पूर्वमपोह्यस्य

व्यङ्ग्यत्ववाच्यत्वद्वयेन सङ्कलनयेति शेष: । पृष्ठमित्यस्य सूत्रे प्राथमिकत्वेन प्रश्नपूर्वकप्रकारयो: प्रथमत: शेषयोरित्यर्थ: । द्युसरित: सविधं न तु राजसदनादि । कौस्तुभभृतश्चरणयुगलं न तु धनसयादि । पुण्यं न तु वाणिज्यादि । करुणा न तु रणादि । निरवधि निष्प्रत्यूहं यथा स्यात् ।

### दर्पण:

परिसंख्यालंकार: तदन्यथा अप्रश्नपूर्वकं त्युसरित: । [द्युसरित:] सविसं, न तु राजसदनादि । कौस्तुभभृतश्चरणयुगलं न तु कान्तादिपुण्यं न तु भोगादिकरुणनातु भुवनदायादि [?] ।

### साहित्यचूडामणि:

परिसङ्ख्यामाह—किञ्चिदिति ।

शब्दानां स्वार्थाभिधानमात्रव्यापृतानां कथमन्यव्यपोहे तात्पर्यमित्याह—प्रमाणान्तरेति । प्रयोजनान्तराभावात् सदृशेति । असदृशवस्तुव्यवच्छित्तावनौचित्यात् । परिवर्जने । कस्यचित् परिवर्जनेन कुत्रचित् संख्यानं परिसङ्ख्या । यत् सूत्रम् । "एकस्यानेकत्र प्राप्तवेकत्र नियमनं परिसंख्या" (अलङ्कार सू० ६३) इति । यदेकं वस्तु युगपदुभयत्र सम्भाव्यते तत्र तस्यैकत्र द्वितीयपरिहारेण नियमनं परिसंख्येति यावत् । यदाहु:—"तत्र चान्यत्र च प्राप्ते परिसंख्येति कथ्यते ।" इति । अस्याश्च प्रश्नपूर्वकत्वमन्यथा चेति द्वैधम् । प्रत्येकं च वर्णनीयस्य शाब्दत्वार्थत्वभेदात् चातुर्विध्यमित्याह—अत्र चेति ।

किमिति । अत्र प्रश्नपूर्वकथनम् । अपोह्यमानस्य सरिदन्तरादे: प्रतीयमानत्वं स्पष्टम् ।

### सम्प्रदायप्रकाशिनी

किञ्चित् पृष्टमिति । कथनं मानान्तरज्ञातस्य शब्देन प्रतिपादनम् । अतोऽवगतमयोगव्यवच्छेदात्मकप्रयोजनान्तराभावात् कथनेन सदृशान्तरापोहे यत् पर्यवस्यति, सा अन्यवर्जनादन्यसङ्ख्यानमिति परिसङ्ख्या । पृष्टमपृष्टमिति भेदद्वयम् । चेति च भेदान्तरद्वयम् ।

व्याचष्टे—प्रमाणान्तरेत्यादि । परिदृष्टं, व्यवहार इति शेष: ।

किमासेव्यमिति । द्युसरित: सविधमासेव्यं, न राजकुलम् । कौस्तुभभृतश्चरणयुगलमेकान्ते ध्येयं, न विषय: । पुण्यमाराध्यं, न प्रभुचित्तम् । करुणा अभिलषणीया, न सम्पत् । सर्वत्रैवात्र हेतु:—यदासक्त्येति । राजकुलाद्यासक्त्या बन्धायेति यावत् । इयं सप्रश्ना प्रतीयमानापोह्या ।

### मधुमती

किञ्चिदिति । तदेतत् व्याचष्टे—प्रमाणान्तरेति । एवं च प्रमाणान्तरप्राप्तस्यापि प्रतिपादनं अर्थवादरूपतया सप्रयोजनम् । तत्र अन्यप्रयोजनाभावात्, व्यवच्छेद एव प्रयोजनमिति समुदायार्थ: । यद्यपि—

**'तत्र चान्यत्र च प्राप्तौ परिसङ्ख्यानमिष्यते ।'**

इत्यन्यत्रोक्तम्। न चात्र द्युसरिन्नद्यन्तरतीरयोः युगपत्सेवनं सम्भवति। तथापि व्यवच्छेदमात्रे परिसङ्ख्ये-त्यर्थः प्रकृतग्रन्थस्य ज्ञेयः। व्यपोह्यमानस्य प्रतिषिध्यमानस्य।

किमासेव्यमिति। अत्र प्रश्नपूर्वकं कथनं, फलं प्रतीयमानं व्यवच्छेदः।

**विस्तारिका**

किञ्चिदिति। किञ्चिद् वस्तु कथितं सत् तादृशेऽन्यवस्तुव्यावृत्तये यत् कल्पते, सा परिसंख्या स्मृतेत्य-न्वयः।

व्याचष्टे—प्रमाणान्तरेति। प्रमाणान्तरावगतप्रतिपादनस्यानुवादरूपतया सप्रयोजनत्वेन परिशेषादन्य-व्यावृत्त्येव प्रयोजनमित्यर्थः।

किमासेव्यमित्यत्र प्रश्नपूर्वकं कथनं व्यवच्छेद्यं प्रतीयमानम्।

**सारबोधिनी**

किञ्चिदिति। किञ्चित् वस्तु कथितं तादृगन्यवस्तु व्यावृत्तये यत् कल्पते सा परिसंख्या स्मृतेत्यन्वयः। प्रमाणान्तरेति। प्रकरणान्तरावगतं प्रतिपादकं शब्दस्यानुवादरूपतया सप्रयोजनत्वेन परिपोषादन्यव्यावृत्तिरेव प्रयो-जनमित्यर्थः। किमिति। यदासक्त्या प्रीत्या।

**काव्यप्रदीपः**

**किंचित्पृष्टामपृष्टं च कथितं यत्प्रकल्पते।**
**तादृगन्यव्यपोहाय परिसंख्या तु सा मता॥ ३३॥**

तादृक्तुल्यम्। व्यपोहाय व्यवच्छेदाय। यत्किंचित्कथितं सत्स्वतुल्यस्यान्यस्य व्यवच्छेदाय यत्कल्पते सा परिसंख्या भत्तेति लक्षणम्। अन्यस्य कथनमन्यव्यपोहाय कथं कल्पत इति चेत्। प्रमाणान्तरेणावगतस्यैव वस्तुनः पुनः शब्देन प्रतिपादनस्य प्रयोजनान्तराभावात्। पृष्टमपृष्टं चेति तु विभागः। कथनं हि किंचित्प्रश्नपूर्वकं किंचिच्चातत्पूर्वकमिति द्वैविध्यमित्यर्थः। ते च द्वे अपि विधे व्यवच्छेद्यस्य प्रतीयमानत्ववाच्यत्वाभ्यां प्रत्येकं द्विविधे। तत्र प्रश्नपूर्वके कथने व्यवच्छेद्यस्य प्रतीयमानता यथा—

**'किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः**
**किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः।**
**किमाराध्यं पुण्यं किमभिलषणीयं च करुणा**
**यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति॥'**

अत्रान्यनदीसविधादिव्यवच्छेद्यं प्रतीयमानम्।

## काव्यप्रकाशखण्डनम्

**किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते।**
**तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता॥ (का. ११९)**

प्रमाणान्तरावगतमपि वस्तुशब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय भवति पर्यवस्यति सा परिसंख्या। अत्र कथनं प्रश्नपूर्वकं तदन्यथा च। यथा—

**किं ध्येयं विष्णुपदं किं वक्तव्यं हरेर्नाम।**
**किं कार्यमार्यचरितैरभिलषितं पूजनं विष्णोः॥**

## आदर्शः

परिसङ्ख्यालङ्कारमाह—किञ्चिदिति। अस्य व्याख्या वृत्तावेव स्पष्टा। प्रयोजनान्तराभावादिति। प्रमाणान्तरावगतस्य तत्र प्रतिपादनरूपप्रयोजनाभावादिति भावः। प्रश्नपूर्वकमिति, पृष्टमपृष्टं वेत्यस्य विवरणमिदम्। सूत्रेऽनुक्तमप्युदाहरणे दृष्टत्वात् प्रभेदान्तरद्वयमाह—तथोभयत्रेति। 'प्रतीयमानत्वं' व्यङ्ग्यत्वम्।

किमासेव्यमिति। किमित्यादिः प्रश्नः, सविधमित्यादि प्रत्युत्तरम्। द्युसरितो गङ्गायाः सविधं सान्निध्यम्। एकान्ते मरणकाले। निरवधिविमुक्तिः आत्यन्तिकीमुक्तिः। सालोक्यादिमुक्तिव्यावर्त्तकमिदम्। अत्र नान्यदित्यादिकं प्रतीयमानम्, द्युसरित्सेवनादीनां पुराणादित एवावगतत्वादन्यासेवने पर्याप्तेः।

## सुधासागरः

प्रमाणान्तरेत्यादि। अयमाशयः—तादृक् तुल्यं, व्यपोहाय व्यवच्छेदाय, किञ्चित् कथितं सत् स्वतुल्यस्यान्यस्य व्यवच्छेदाय यत् कल्पते सा परिसङ्ख्येति लक्षणम्। अन्यस्य कथनमन्यव्यपोहाय कथं कल्पते इति चेत्, प्रमाणान्तरानवगतस्यैव वस्तुनः शब्देन प्रतिपादनस्य प्रयोजनान्तराभावात्। पृष्टमपृष्टं चेति तु विभागः। कथनं हि किञ्चित्प्रश्नपूर्वकम्, किञ्चिच्चातत्पूर्वकमिति द्वैविध्यमित्यर्थः। ते च द्वे अपि विधे व्यवच्छेद्यस्य प्रतीयमानत्ववाच्यत्वाभ्यां प्रत्येकं द्विविधे। तत्र प्रश्नपूर्वके कथने व्यवच्छेद्यस्य प्रतीयमानता यथा—किमासेव्यमिति। यदासक्त्या येषु प्रीत्या। स्फुटमन्यत्। शिखरिणी छन्दः। लक्षणमुक्तं प्राक्। अत्रान्यनदीसविधादि व्यवच्छेद्यं प्रतीयमानम्।

किं भूषणं सुदृढमत्रं यशो न रत्नं

किं कार्यमार्यचरितं सुकृतं न दोषः ।

किं चक्षुरप्रतिहतं धिषणा न नेत्रं

जानाति कस्त्वदपरः सदसद्विवेकम् ॥ ५२२ ॥

---

**सङ्केतः**

एवं निषेध्यं गम्यत्वेनोक्त्वा वाच्यत्वेनाह—किं भूषणमिति । आर्यैः चरितं—आर्यचरितम् । अत्र यशः प्रभृतेः भूषणत्वादिकं आगमतो ज्ञातमेवष न रत्नं इत्यादि निषेध्यं शाब्दम्, न तु पूर्वोदाहरणम् इव गम्यम् ।

**बालचित्तानुरञ्जनी**

प्रश्नपूर्वकत्वे वर्जनीयस्य वाच्यतामुदाहरति किं भूषणामिति । अत्र सुदृढं विभूषणं किम्? यशः । निरन्तरङ्कार्य किम्? आर्यचरितं सुकृतम् । न दोषः । अप्रतिहतं चक्षुः किं बुद्धिः? न नेत्रम् । हे राजन् त्वदपरः कः सदसद्विवेकं जानाति? अत्र न रत्नमित्यादि निषेध्यम् ।

**काव्यादर्शः**

पृष्टे वाच्यत्वं यथा—'किं भूषणम्' इति । 'आर्यचरितम्' इति शिष्टैरनुष्ठितम् । अत्र 'न रत्नम्' इत्यादि निषेध्यं शब्देनैव उक्तम् ।

**विवेकः**

किं भूषणमित्यादि—आर्यचरितमिति शिष्टैरनुष्ठितम् । धिषणा प्रज्ञा । अत्र न रत्नमित्यादिकं शाब्दं वर्जनीयम्, न च पौनरुक्त्यं विशेषपरत्वात् । प्रश्नं विना पूर्ववदेव द्विधा ।

**साहित्यचूडामणिः**

किं भूषणमिति । अत्र प्रश्नपूर्वकत्वे भूषणभूतस्य रत्नादेरपोह्यमानस्य वाच्यत्वं, न विभव इत्युक्तत्वात् ।

**सम्प्रदायप्रकाशिनी**

किं भूषणमिति । चरितमाचरितम् । इयं सप्रश्ना शाब्दपोह्या ।

**मधुमती**

किं भूषणं इत्यत्र निषेध्यं शाब्दम् । कथनं च प्रश्नपूर्वकमेव ।

**विस्तारिका**

किंभूषणमित्यत्र प्रश्नपूर्वकं कथनं व्यवच्छेद्यं शाब्दम् ।

**सारबोधिनी**

किंभूषणमिति । धिषणा ज्ञानम् ।

**काव्यप्रदीपः**

तत्रैव व्यवच्छेद्यं यथा—

**'किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः ।**
**किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम् ।।'**

स्पष्टम् ।

**आदर्शः**

वाच्यव्यपोह्यां प्रश्नपरिसंख्यामाह—किं भूषणमिति । आर्यैर्वशिष्ठादिभिश्चरितम् आचरितं किं वस्तु कार्यं करणीयं सुकृतमित्याद्युत्तरम् । न दोषा इति चाण्डालीगमनादयः । अप्रतिहतं व्यवधानेऽपि ग्राहकं चक्षुः किं धिषणा बुद्धिः । 'तदपर' इति पाठे 'तत्' पदं धिषणापरम्, तस्या एव सदसद्विवेचयितृत्वात् । 'त्वदपर' इति पाठे तु प्रत्युत्तरपरितुष्टस्य प्रष्टुः प्रत्युत्तरयितृप्रशंसावाक्यमिदम् ।

**सुधासागरः**

तत्रैववाच्यव्यवच्छेद्यं यथा—किं भूषणमिति । स्पष्टम् । वसन्ततिलका छन्दः । लक्षममुक्तं प्राक् ।

**कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।**
**काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ ५२३ ॥**

---

### सङ्केतः

प्रश्नपूर्वकथने भेदद्वयीमुक्त्वा प्रश्नाभावे द्विभेदीमाह—कौटिल्यमिति । कचनिचये न तु वाचि चिते वा इति गम्यम् । करादौ रागः न परपुंसि, कुचयोः काठिन्यं न चित्तावयवान्तरयोः, चक्षुषोः चापलम् नाचरणे । निषेध्याश्चात्र गम्याः ।

### बालचित्तानुरञ्जनी

प्रश्नव्यतिरेके वर्जनीयप्रतीयमानतामुदाहरति कौटिल्यमिति । कचनिचये कौटिल्यं वसति । करचरणाधरपल्लवेषु रागः । स्तनयुगले काठिन्यम् । चापलत्वं च नयनयोर्वसति । अत्र कचनिचय इति न तु वाचि हृदये वा कौटिल्यमिति प्रतीयते । करचरणाधरपल्लवेष्विति न तु परपुरुषे, कुचयुगले इति नावयवांतरे मानसे च । नयनयोरिति न तु भाव इति वर्जनीयस्य प्रतीयमानत्वम् ।

### काव्यादर्शः

अपृष्टे प्रतीयमानता यथा—'कौटिल्यम्' इति । 'न तु वाचि हृदये वेति गम्यम् । तथा करादिषु रागो, न परपुरुषे । तथा कुचयुगले काठिन्यं, न अवयवान्तरे मानसे च । नयनयोस्तरलत्वं, न तु स्वभावे ।'

### विवेकः

कौटिल्यमित्यादि—अन्यत्र रागो नास्तीति शेषः । अत्र रागपदेन रोषो विवक्षितः । अत्र कौटिल्यादीनामन्यत्र व्यवच्छेदः प्रतीयमानः ।

### दीपिका

अत्र जगति कौटिल्यं कुञ्चिततारूपं चेतसि, 'रागो लौहित्यरूपः करादिषु, न तु पक्षपातरूपो बुद्धौ, काठिन्यं दार्ढ्यरूपं कुचयोर्न तु कृपणत्वं हृदये भावप्राप्तिविलम्बनस्वरूपं सुरतेऽसौकुमार्यरूपं वा न त्ववयवान्तरे । तरलत्वं चलाचलतारूपं नयनायोर्नत्वस्थिरतारूपं प्रेम्णि व्यसनमासक्तिः ।

### दर्पणः

एवं कौटिल्यमित्युदाहरणेऽप्ययं व्यपोहो न्नय [उन्नेयः] युवतिकामास्त्रे ।

### सम्प्रदायप्रकाशिनी

कौटिल्यमिति । कचनिचये कौटिल्यं, न हृदये । करादिषु रागः, न लोभनीये वस्त्वन्तरे । कुचयुगले काठिन्यं, न शीले । नयनयोस्तरलत्वं, न स्वभावे । इयमप्रश्ना प्रतीयमानापोह्या ।

### मधुमती

कौटिल्यमित्यादौ प्रश्नं विना कथनम्, व्ययच्छेदो व्यङ्ग्यः। भक्तिर्भवेत्यादौ पूर्ववदेव कथनम्, व्यवच्छेदस्तु शाब्दः। इति परिसङ्ख्या।

### विस्तारिका

कौटिल्यमित्यादौ प्रश्नं विना कथनं व्यवच्छेद्यं प्रतीयमानम्।

### सारबोधिनी

कौटिल्यमिति। तरलत्वं चञ्चलत्वम्।

### काव्यप्रदीपः

अप्रश्नपूर्वके कथने व्यवच्छेद्यं प्रतीयमानं यथा—

**'कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।**
**काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति॥'**

### काव्यप्रकाशखण्डनम्

अप्रश्नपूर्वकं यथा—

**कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।**
**काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति॥**

### आदर्शः

प्रतीयमानव्यपोह्याम् अप्रश्नपरिसंख्यामाह—कौटिल्यमिति। अननुरागिणीं प्रशस्य रञ्जयितुरुक्तिरियम्। अत्र सर्वत्रैव न हृदीति प्रतीयमानम्। तथा च कौटिल्यकाठिन्यस्थिरबुद्धित्वानि ते हृदि न सन्ति, मयि तु तथाऽपि रागो नास्तीति वाक्यार्थः।

### सुधासागरः

कौटिल्यमिति। स्पष्टम्। आर्या छन्दः। लक्षममुक्तं प्राक्।

**भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।**

**चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्॥ ५२४॥**

---

**सङ्केतः**

भक्तिरिति। युवतिरूपं कामास्त्रं इति विग्रहः। अत्र न विभवे इत्यादिनिषेध्याः शाब्दाः।

श्लेषसम्पर्के तु अस्याः अतीव चारुत्वम्। यथा—

**'यतिषु दण्डग्रहः, करपीडा विवाहे, चित्रे वर्णसङ्करः।'**

इत्यादौ। इति परिसङ्ख्या।

**बालचित्तानुरञ्जनी**

प्रश्नव्यतिरेके वर्जनीयस्य वाच्यतामुदाहरति भक्तिरिति। भक्तिर्भवे न विभवे, व्यसनं शास्त्रेषु, युवतिरेव कामास्त्रं तस्मिन्, चिन्ता यशसि न वपुषि महतां प्रायः परिदृश्यते। अत्र अपोह्यमानस्य वाच्यत्वम् न विभव इत्याद्युक्तत्वात्।

**काव्यादर्शः**

अपृष्टे व्यवच्छेद्यस्य वाच्यत्वं यथा—'भक्तिः' इति। 'युवतिरेव कामास्त्रम्।' एकैकस्योदाहरणत्वाद् दीपकभ्रान्तिर्न कार्या।

**विवेकः**

युवतय एव कामस्यास्त्रमायुधम्। अत्र न विभव इत्यादि व्यवच्छेद्यं शाब्दम्।

**दीपिका**

युवतिकामास्त्र इति युवतिरूपे कामास्त्र इत्यर्थः।

**सम्प्रदायप्रकाशिनी**

भक्तिरिति। युवतिरूपे कामास्त्रे। इयमप्रश्ना शाब्दापोह्या।

**विस्तारिका**

भक्तिरित्यादौ प्रश्नं विना कथनं व्यवच्छेद्यं शाब्दम्।

**सारबोधिनी**

भक्तिरिति। युवतिरेव कामास्त्रम्।

**काव्यप्रदीपः**

अप्रश्नपूर्वक एव कथने व्यवच्छेद्यं वाच्यं यथा—

'भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्॥'

श्लेषेणाप्येषा संभवति—यथा—'चित्रेषु वर्णसंकराः' 'खलसंयोगः शालिषु' इत्यादि।

**आदर्शः**

वाच्यव्यपोह्याम् अप्रश्नपरिसंख्यामाह—भक्तिरिति। युवतिरूपे कामस्यास्त्रे। परिदृश्यत इत्यस्य भक्त्यादिकं कर्म बोध्यम्। अत्र विभवादयो व्यपोह्या वाच्याः।

**सुधासागरः**

अप्रश्नपूर्वके एव कथने व्यवच्छेद्यं वाच्यं यथा—भक्तीति। युवतिरेव कामास्त्रम्। स्पष्टमन्यत्। छन्दः पूर्वोक्तमेव।

**(सू० १८६) यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता।**

**तदा कारणमाला स्यात्**

उत्तरमुत्तरं प्रति यथोत्तरम्। उदाहरणम्—

**जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।**

**गुमप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः॥ ५२५॥**

**''हेतुमता सह हेतोरभिधानमभेदतो हेतुः।"**

इति हेत्वलंकारो न लक्षितः। आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति वैचित्र्याभावात्।

---

सङ्केतः

हेत्वलङ्कारः रुद्रटोक्तः। आयुरिति। घृतं हेतुः, आयुः हेतुमत्। लक्षणया तयोरभेदः। इमे चैवं प्रयोगाः—

'आयुर्घृतं, नदी पुण्यं, भयं चौरः, सुखं प्रिया।
वैरं द्यूतं, गुरुर्ज्ञानं, श्रेयो ब्राह्मणपूजनम्॥' इति॥

आदिशब्दात् अन्येऽपि लक्षणाभेदाः षट् ज्ञेयाः। यथा—'कुन्ताः प्रविशन्ती' त्युपादानलक्षणा, 'गौरय' मिति गौमी साध्यवसाना, 'आयुर्घृत' मिति शुद्धा सारोपा, 'आयुरेवेद' मिति शुद्धा साध्यवसानेति। परं गौण्यां या सादृश्यालक्षणा, तस्यां रूपकादिसद्भावात् वैचित्र्यम्। यथा—

इयं गेहे लक्ष्मीः, इयममृतवर्तिनयनयोः,
असावस्याः स्पर्शः वपुषि बहुलः चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकरसः,
किमस्या न प्रेयः? यदि परमसह्यस्तु विरहः॥

इति न त्वन्यस्याम्।

बालचित्तानुरञ्जनी

कारणमालालङ्कारं लक्षयति यथोत्तरमिति। उत्तरोत्तरस्य हेतुमतः पूर्वपूर्वहेतुश्चेत् तदा कारणमाला स्यादित्याह उत्तरमिति। उदाहरति जितेति। जितेन्द्रियत्वं विनयस्य कारणम् विनयात् गुणप्रकर्षः अवाप्यते। गुणप्रकर्षेण जनः अनुरज्यते। संपदः जनानुरागप्रभवा हि। अत्र इन्द्रियजयाहितया [विनयः]। विनयाद् गुणो-

त्कर्षः। तस्मात् जनानुरागः। तस्मात् संपदः भवन्तीति हेतुमाला। हेतुमतोः अभेदाभिधाने हेत्वलङ्कार इति रुद्रटादिभिरुक्तं किमिति त्वया न लक्षितमित्यत आह हेतुमतेति। कार्येण सह कारणस्याभेदाभिधानं हेतुः। स चायुर्घृतमित्यादिवत् उपचारव्यतिरेके वैचित्र्याय न कल्पते। अतो नालङ्कारतया लक्षित इति भावः।

### काव्यादर्शः

हेतुमतेति। रुद्रटेन हेतुलंकार उक्तः, स न वाच्यः। तथा हि षोढा लक्षणोक्ता—'कुन्ताः प्रविशन्ति' इत्यादौ उपादानलक्षणा १, 'गङ्गायां घोषः' इति लक्षणलक्षणा २, द्विरूपापीयं शुद्धोपचारेणामिश्रत्वात्। 'गौर्वाहीकः' इति गौणी सारोपा ३, 'गौरयम्, इति गौणी साध्यवसाना ४, 'आयुर्घृतम्' इति शुद्धा सारोपा ५, 'आयुरेवेदम्' इति साध्यवसाना शुद्धा ६, एषु चतुःषु उपचारमिश्रत्वम्। ततो गौणलक्षणायां सादृश्यसंप्रत्ययाद् वैचित्र्यं, यथा—'इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयोः' इत्यादौ अतिशयोक्तौ। यत्र तु—

**आयुर्घृतं नदीं पुण्यं भयं चौरः सुखं प्रिया।**
**वैरं द्यूतं गुरुर्ज्ञानं श्रेयो ब्राह्मणपूजनम्॥**

—इत्यादौ कार्यकारणसंबन्धोपचारे शुद्धलक्षणासद्भावः, तत्र सादृश्याभावेन हेतुमात्रस्य वैचित्र्याभावान्न हेतुरलंकारः।

### विवेकः

यथोत्तरमित्यादि—यदा पूर्वपूर्वं क्रमेणोत्तरोत्तरं प्रति हेतुतां भजते तदा कारणमालाऽऽख्योऽलङ्कारः। वीप्सालक्षण 'यथा'ऽर्थेऽव्ययीभाव इत्याह—उत्तरमुत्तरं प्रतीति। जितेन्द्रियत्वमित्यादि—अत्र कार्यकारण क्रम एव चारुताहेतुः "हेतुमता सह हेतोरभिधानमभेदकृद्भवेद्यत्र। सोऽलङ्कारो हेतुः स्यादन्येभ्यः पृथग्भूत" इति हेतुरलङ्कारो भट्टोद्भटरुद्रटादिभिः पृथग् लक्षित उदाहृतश्च।

### दीपिका

ननु पूर्वोत्तरशब्दयोः परस्परसम्बन्धित्वात् पूर्वशब्दे वीप्सादर्शनादन्यत्रापि तथाभावो युज्यते, न त्वेवं सूत्रे दृश्यत इत्याह—उत्तरमुत्तरं प्रति। यथा शब्द एवायं वीप्सार्थ इत्यर्थः।

ननु कार्यकारणताभावालङ्करणप्रपञ्चप्रसङ्गेनात्र हेत्वलङ्कारस्याप्यभिधानं प्राप्नोति तत् किमित्यसौ नोक्त इत्याह—हेतुमतेति।'अभेदतः सामानाधिकरण्येन। इतीत्यनन्तरं कैश्चिल्लक्षित इति शेषः। अत्र ग्रन्थे न लक्षित इति सूत्रेणेति शेषः। अनलङ्करणे किं बीजमित्याकाङ्क्षायां पृथग् लक्षणीयभावनायामुत्तरं हेतुमतेत्यादिपरलक्षमस्याभावादित्यर्थः। यथाश्रुत्यतिव्याप्तिं तावदाह—आयुरिति। एष इति लक्षणानुसारेण सम्भावित इत्यर्थः। भूषणतामलङ्कारताम्। वैचित्र्यभावादिति। आस्वादस्याविद्यमानत्वेनाङ्गोत्कर्षद्वारा तदुत्कर्षणस्यालङ्कारसामान्यलक्षणस्याभावादित्यर्थः।

## दर्पणः

कारणमालालंकारः उत्तरोत्तरं । यथाशब्दस्यात्र वीप्सार्थत्वादिति भावः । अत्र कार्यकारणभावमूलालङ्कृतिलक्षणप्रस्थावे ।

अभेदतः सामानाधिकरत्येन भूषणतामलङ्कारतां, कव्यरूपतामिति रूपं विद्यते अस्येत्यर्था, [अर्श] आदित्वादिति [चि] कृते पश्चान्तप्रत्ययः [?] एवं च काव्यस्वरूपवत्वमित्यर्थः समाम्नास्वसिसु [समाम्नासिषु] रित्यनन्तरं प्राच्या इति, शेषः [हेतुः] इत्यनन्तरं अस्मन्मत इति शेषः ।

हेतुः हेत्वलङ्कारनामा हेतुशब्दः लिङ्गशब्दार्थत्वात्, लिङ्गस्य हेतुशब्दापरपर्यायत्वादिति भावः ।

## साहित्यचूडामणिः

कारणमालामाह—यथोत्तरमिति । उत्तरोत्तरस्य हेतुमतः पूर्वपूर्वोऽर्थो हेतुश्चेत् तदा कारणमाला । यत् सूत्रं "पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला" (अलङ्कार सू० ५४) इति । शृङ्खलाधिकारादत्र वीप्सासिद्धिः ।

## सम्प्रदायप्रकाशिनी

यथोत्तरमिति ।

यथेति क्रमनिर्देशो वीप्सामाक्षिपतीत्याह—उत्तरमुत्तरमिति । अतः शृङ्खलाक्रमः ।

जितेन्द्रियत्वमिति । जितेन्द्रियत्वादीनां पूर्वपूर्वेषां विनयादिकमुत्तरमुत्तरं प्रति हेतुता ।

यत्तु रुद्रटेन,

> **"हेतुमता सह हेतोरभिधानमभेदकृद् भवेद् यत्र ।**
> **सोऽलङ्कारो हेतुः स्यादन्येभ्यः पृथग्भूतः ॥"**

इति हेतुमता सहाभेदतो हेत्वभिधानं काव्यलिङ्गादिभ्योऽन्यो हेत्वलङ्कार इत्युक्तं, न तदुपपन्नमित्याह—हेतुमता सहेत्यादि । अलक्षणे हेतुमाह—आयुर्घृतमिति । हेत्वलङ्कारसम्मतो ह्यमायुर्घृतमित्यादिवच्छुद्धसारोपलक्षणात्मको वैचित्र्याभावान्न कदाचिदलङ्कारतामर्हति ।

## मधुमती

यथोत्तरमिति । अत्र च कथितपदत्वं न दोषः, अनुवादरूपत्वात् । अत्र—"गौणसारोपसाध्यवसानयोः रूपकातिशयोक्तिवत्, कार्यकारणभावसम्बन्धनिबन्धनशुद्धसारोपसाध्यवसानयोः हेत्वलङ्कारः" इति प्राचां मतं दूषयितुमुपन्यस्यति—हेतुमतेति । वैचित्र्याभावादिति । कारणता प्रयोजकरूपाभिधानेन यत्र कार्यकारिता प्रतीयते तत्र वैचित्र्यसम्भवेन अलङ्कारत्वेऽपि, यत्र कारण मात्रप्रतिपादनं तत्र उक्तिवैचित्र्याभावात् नालङ्कारतेति भावः ।

## विस्तारिका

जितेन्द्रियत्वमित्यत्र विहितस्यैवानुवाद्यत्वात् कथितपदत्वं न दोषः ।

गौणसारोपाध्यवसानयो रूपकप्रथमातिशयोक्तिविशेषप्रयोजकत्ववत् कार्यकारणभावसम्बन्धनिबन्धनशुद्धसारोपाध्यवसानयोर्हेत्वलङ्कारप्रयोजकत्वमिति प्राचां मतं दूषयति- हेतुमतेति । वैचित्र्यभावादिति । कारणतावच्छेदकरूपाभिधानेन यत्र हेतुता प्रतीयते, तत्र वैचित्र्यस्यानुभवसिद्धत्वेनालङ्कारता, यत्र तु कारणता शब्देनाभिधया लक्षणया प्रतिपाद्यते तत्र स्फुटत्वाद् नालङ्कारतेत्यर्थ: ।

यद्यपि प्रकृतेऽपि शब्देनैव हेतुत्वप्रतिपादनम्, तथापि बहूनामुत्तरेषां प्रतिवक्तृणां पूर्वेषां हेतुत्वप्रतिपादनाद् विहितस्यैवानुवाद्यत्वात् चात्र वैचित्र्यमानुभविकमिति भाव: ।

## सारबोधिनी

जितेन्द्रियत्वमिति । विहितस्यैवानुवाद्यत्वात् न कथितपदत्वं दोष: । गौणसारोपसाध्यवसायनयो रूपकप्रथमातिशयोक्तिप्रयोजकत्वात् कार्यकारणभावसंबन्धनिबन्धनशुद्धसारोपा साध्यवसानयोर्हेत्वलङ्कारप्रयोजकत्वमित्युद्भटादिमतमवस्कन्दति हेतुमतेत्यादि । वैचित्र्याभावादिति ।

## काव्यप्रदीप:

**यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता ।**

**तदा कारणमाला स्यात्**

यथोत्तरमिति वीप्सायां यथाशब्द: । तेनोत्तरोत्तरं प्रतीत्यर्थ: । उदाहरणम्—

**'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।**
**गुणप्रर्षेण जनोऽनुरज्यते गुणानुरागप्रभवा हि संपद: ॥'**

नन्वत्र कार्यकारणभावालंकृतिप्रपञ्चनप्रसङ्गेन हेत्वलंकारोऽपि लक्षणार्ह: । उक्तश्चायं भट्टोदभटेन— 'हेतुमता सह हेतोरभिधानमभेदतो हेतु:' इति । तत्किं न लक्षित इति चेत्, आयुर्घृतमित्यादिरूपस्यास्य वैचित्र्याभावेनालंकारत्वस्यैवाभावात् ।

## काव्यप्रकाशखण्डनम्

**यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुना ।**

**तदा कारणमाला स्यात्, (का. १२०)**

उत्तरं उत्तरं प्रति यथोत्तरम् । यथा—

**जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।**
**गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपद: ॥**

### आदर्शः

कारणमालालङ्कारमाह—यथोत्तरमिति। मालादीपके पूर्वपूर्वस्यार्थस्योत्तरोत्तरक्रियां प्रति हेतुत्वेऽपि सर्वेषामेकक्रियान्वयः, अत्र तु न तथेति भेदः।

जितेन्द्रियत्वमिति। उद्वेजिकां द्रौपदीं सान्त्वयतो युधिष्ठिरस्याक्तिरियम्। स्पष्टम्। कारणमालालङ्कारप्रसङ्गेन स्मृतस्यान्योक्तहेत्वलङ्कारस्यानुक्तिबीजमाह—हेतुमतेति, हेतुमता कार्येण सहाभेदेन हेतोरभिधानमित्यर्थः।

### सुधासागरः

उत्तरमित्यादि। यथोत्तरमिति वीप्सायां यथाशब्दः। तेनोत्तरोत्तरं प्रतीत्यर्थः।

उदाहरणम्—जितेन्द्रिये-ति। स्पष्टम्। वंशस्थं वृत्तम्। लक्षणमुक्तं प्राक्।

हेतुमतेत्यादि। अयमाशयः—नन्वत्र कार्यकारणभावालङ्कृतिप्रपञ्चनप्रसङ्गेल हेत्वलङ्कारोऽपि लक्षणार्हः, लक्षितश्चायं भट्टोदभटेन—'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' इति। तत्किं न लक्षित इति चेत्। आयुर्घृतमित्यादिरूपस्यास्य वैचित्र्याभावेनालङ्कारत्वस्यैवाभावात्।

**अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।**
**रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः ॥ ५२६ ॥**

इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वलंकारकल्पनयेति पूर्वोक्तकाव्यलिङ्गमेव हेतुः ॥

---

### सङ्केतः

अविरलेति । अत्र वसन्तकालः हेतुः । शेषाः हेतुमन्तः । प्रभूतकमलविकासहेतुत्वात् अयं कालोऽपि विकासः । एवमग्रेऽपि । न त्वत्र विकासयति मदयति आनन्दयति पोषार्थतया बिभर्ति इति रुद्रटाशयेन व्युत्पत्तिः । हेतुहेतुमतोः अभेदाभावप्रसङ्गात् । समाम्नासिषुः भामहोद्भटाद्याः । अव्यभिचारितया विकासादेः नैरन्तर्येण करणं इह उपचार-प्रयोजनं व्यङ्ग्यम् । तच्च गुणीभूतमिति महिम्नैव इत्यत्र एवकारेण प्रतिपाद्यते । अस्मन्मते काव्यलिङ्गमेव हेतुः । रुद्रटस्तु भिन्नमूचे । इति कारणमाला ।

### सङ्केतः (रुय्यकः)

कोमलेति—यद्यप्यव्यभिचारितयैव च विकाशीदीनां नैरतर्येण जननमिहोपमानप्रयोजनं व्यंग्यं तदसुन्दरमपि गुणीभूतव्यंग्यनिबन्धनं भवतीति च प्राक् प्रतिपादितमेव, तथाप्यलंकारचिन्तायाः प्रक्रान्तत्वात्तदपह्नुत्यैवावधारणगर्भमिदमभिहतम्, अतएव तटस्थतयेवोक्तम् । समाम्नासिषुरिति—उद्भटादयः प्रत्यपादयन्निति ह्यत्रार्थः ।

### बालचित्तानुरञ्जनी

ननु हेतोरनलङ्कारत्वे अविरलेत्यादौ कथं काव्यरूपत्वमित्यत आह अविरलेति । अविरलः कमलविकासो यत्र । सकला ये अलयः तेषां महो यज्ञश्च कोकिलानन्दकरः लोकोत्कण्ठाकरः रम्योऽयं कालः संप्रति एति । समाम्नासिषुः प्रत्यपादयन् आचार्या इति शेषः । केवलानुप्रासादत्र काव्यत्वं न त्वलङ्कारादिति भावः । नन्वेवं तर्हि हेतुः कुत्र । अथालङ्कार एव न स्यादिति यत आह पूर्वोक्तमिति ।

### काव्यादर्शः

'अविरलकमले'ति । प्रभूतकमलविकासहेतुत्वाद् वसन्तकाल एव तथा । एवमुत्तरत्रापि । अत्र तत्पुरुषो, न तु 'अविरलानां कमलानां विकासो यत्र' इति बहुब्रीहिः, हेतुहेतुमतोरभेदाभावप्रसङ्गात् । अत्र तु रुद्रटोदाहृते 'काव्यत्वमनुप्रासादेव' इत्याह—कोमलानुप्रासेति । 'यद्यपि अव्यभिचारितयैव विकासादीनां नैरन्तर्येण जननमिहोपचारप्रयोजने व्यङ्ग्यं तद् असुन्दरमपि गुणीभूतव्यङ्ग्यनिबन्धनं भवतीति प्राक्प्रतिपादितमेव, तथापि अलंकारचिन्तायाः प्रक्रान्तत्वात् तद् अपह्नुत्यैवावधारणगर्भमिदमभिहतम्, अत एव तटस्थतयैव उक्तं 'समाम्नासिषुः' इति उद्भटादयः प्रत्यपादयन्निति ह्यत्रार्थः । काव्यलिङ्गमेवेति । काव्यलिङ्गस्यैव यदि परं हेतुरिति नाम, यद् भामहः—

हेतुश्च सू[क्ष्मो] लेशोऽथ नालंकारतया यतः ॥ [४० ॥]'

## विवेकः

अविरलेत्यादि—एवमप्यत्र यन्न पृथग् लक्ष्यते तत्र हेतुमाह वचित्र्याभावादिति । 'गौणे ह्युपचारे सादृश्यसम्प्रत्ययाद्वैचित्र्यम्, न तु 'आयुर्घृत'मित्या'दौ (रु. का. अ. टी. ७/८३) तद्विपर्ययात् । तर्हि उदाहृते कथं काव्यता निरलङ्कारत्वादित्यत आह कोमलानुप्रासमहिम्नैवेति । 'यद्यप्यव्यभिचरिततयैव विकाशादीनां नैरन्तर्येण जननमिहोपमानप्रयोजनं व्यङ्ग्यं तदसुन्दरमपि गुणीभूतव्यङ्ग्यनिबन्धनं भवतीति तु प्राक् प्रतिपादितमेव, तथाप्यलङ्कारचिन्तायाः प्रक्रान्तत्वात्तदपह्नुत्यैवावधारणगर्भमिदमभिहितम्। अत एव तटस्थतयैवोक्तम् समाम्नासिषुरिति—उद्भटादयः( ?) प्रत्यपादयन्निति ह्यत्रार्थः ।" (रु. सं. ६९ पृ:)

## दीपिका

अत्र तथाऽलङ्कारान्तरतया विशेषणीयं लक्षणमिति नातिव्याप्तिरिति चेदत्रासाम्प्रदायिकतया नादरणीयतामाह—अविरलेतिं । काव्यरूपतामिति । रूपं विद्यमातेऽस्येति अर्शआदित्वादचि कृते रूपं रूपवत् तस्य भावो रूपताऽलङ्कृतत्वमिति भावः । समाम्नासिषुः प्राचीनाः । न पुनः कल्पनयेत्यनन्तरं ततोऽस्माभिरपि तस्य लक्षणं न कृतमिति शेषः ।

ननु प्राचीनालक्षणत्वेऽपि सम्भवति विच्छित्तिविशेषे पृथग् लक्षणं न्याय्यमेव । यदुक्तम्—

> **"काव्यशोभाकारान् धर्मानलङ्कारान् प्रचक्षते ।**
> **ते चाद्यापि विकल्प्यन्ते कस्तान् कात्स्न्र्येन वक्ष्यति ।।"पूर्वोक्तमिति ।**

काव्यलिङ्गमिति तद्विशेषतया यथा पृथिव्येव घट इति हेतुरित्यनन्तः मतः पृथग् न लक्षितमिति शेषः । तथाहि रम्यत्वेनोत्कण्ठाकरत्वेऽविरतेनैकपदार्थरूपो हेतुरुपात्त इति काव्यलिङ्गमेवेदम् । अविरलेत्यादौ काव्यलिङ्गता काव्यत्वं कोमलानुप्रासमहिम्नाऽऽयातीति किमलङ्कारान्तरकल्पनया ? ततश्च काव्यलिङ्गत्वहेतुः काव्यलिङ्गपरपर्याय एव काव्यसीम्नि हेतुशब्दो न तु हेतुर्नामालङ्करणान्तरमस्तीति न ज्यायसी व्याख्या । अलङ्काराणां काव्यजीवातुतानिषेधात्, एकालङ्कारवत्यलङ्कारान्तरानुसरणनादावप्यतिशयोक्त्यविविक्ताविषयाणामुत्प्रेक्षादीनामप्यनादरणप्रसङ्गाद् हेतुपदस्य काव्यलिङ्गविशेषवाचकतया तत्पर्यायताऽयोगाच्च ।

## साहित्यचूड़ामणिः

नन्वविरलेत्यादौ हेतुरलङ्कार एव न स्यादिति चेदाह—पूर्वोक्तेति । काव्यलिङ्गमेवेति । न पुनः कोकिलानन्दो लोकोत्कण्ठाभरः काल इत्युपचारमात्रानुप्राणनोहेतुः ।

## सम्प्रदायप्रकाशिनी

एतदुदाहरणेऽपि वैचित्र्याभावं दर्शयति—अविरेलेति । अत्र कमलविकासालिमदयोः कोकिलानन्दोत्कण्ठयोश्च । हेतुहेतुमतोः कालविशेषणतया भेदनिर्देशो न किञ्चिद् वैचित्र्यमावहति । काव्यत्वं तु कोमलानुप्राससमहिनैवोद्भटादयः समाम्नासिषुः । अतः काव्यलिङ्गादन्यो न हेत्वलङ्कारः ।

### मधुमती

भामहाद्युक्तमुदाहरणं अन्यथा समर्थयति—अवरिलेति ।

ननु अनुप्रासस्य शब्दालङ्कारत्वात् अर्थालङ्कारभावे कथं काव्यता ? तस्मात् अन्यस्यालङ्कारस्य अत्राभावात् अगत्या निरुक्त एव हेत्वलङ्कारः स्यात् इति चेत्—मैवम् । 'कामोद्दीपकः कालो वर्तते' इति भङ्ग्यन्तरेणाभिधानात् पर्यायोक्तालङ्कारस्यैव विद्यमानत्वात् ।

पूर्वोक्तेति । उक्तरूपसत्त्वात् इति भावः । इति कारणमाला ।

### विस्तारिका

प्राचामुदाहरणं समर्थयति-अविरलेति । सकलः सम्पूर्णोऽलीनां मदो यस्मिन् सः । समाम्नासिषुरित्यत्र कर्ता कविः ।

नन्वनुप्रासस्य शब्दालङ्कारत्वेनार्थालङ्काराभावात् कथं काव्यत्वनिर्वाहः, सालङ्कारयोः शब्दार्थयोः काव्यत्वमिति चेत्, मैवम्, कामोद्दीपककालो वर्तत इति भङ्ग्यन्तरेणाभिधानात् पूर्वोक्तालङ्कारस्यैव विद्यमानत्वात्, पूर्वोक्तमिति हेतुर्हेत्वलङ्कारः । ततः पूर्वोक्तरूपसत्त्वादिति भावः ।

### सारबोधिनी

अविरलकमलेत्यादिषु वैचित्र्यमनुभवसिद्धमेवेत्युद्भटादिमतं समीचीनम्, इति नवीनाः । समाम्नासिषुरिति । समाम्नातवन्त इत्यर्थः ।

### काव्यप्रदीपः

नन्वेवम्—

**'अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।**
**रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः ॥'**

इत्यादौ प्राचां काव्यरूपताभिधानं विरुध्येत अलंकाराभावादिति चेत्, न । कोमलानुप्रासेनैव तत्संभवात् । तत्कि हेतेवलंकारो नास्त्येव । क एवमाह । कीदृशस्तर्ह्यसाविति चेत्, पूर्वोक्तं काव्यलिङ्गमेवेति ।

### काव्यप्रकाशखण्डनम्

अथ हेतोरभेदतः उक्तिर्हेतुमती हेतुः । यथा—

**अविरलकमलविकासः सकलालिमदः (दश्च) कोकिलानन्दः ।**
**रम्योऽयमेति सुन्दरि ! लोकोत्कण्ठाकरः कालः ॥**

संप्रति इदानीं कालः समयो रम्यः शोभनः अभ्यु [पं० ५५,२] पैति आगच्छति। कीदृशः? अविरलं निरन्तरं कमलानां कमलानां विकासः प्रफुल्लता यत्र सः। सकलानां समस्तानामलीनां भ्रमराणां मदो यत्र सः। कोकिलानामान्दो यत्र सः। लोकानां जनानामुत्कण्ठा औत्सुक्य तत्करस्तकर्त्ता इत्यर्थः।

**आदर्शः**

अविरलेति। अयं रम्यः काल एतीत्यन्वयः। अत्र परमते कमलविकाशादिना कार्येण सह हेतोः कालस्याभेदेनाभिदानमाहार्यबोधजनकतम्। स्वमते तु कमलविकाशादिजनके शुद्धसारोपा लक्षणैव. इदमुपलक्षणम्, अविरलः कमलविकाशो यत्रेत्यादिबहुब्रीहिणाऽपि विवक्षितार्थसिद्धेर्नायं हेत्वलङ्कार इत्यपि बोध्यम्।

ननु नायं ध्वनिर्न वा गुणीभूतव्यङ्ग्यम्, स्फुटलङ्काराभावान्नापि चित्रम्, तत् कथमिदं काव्यमित्यत आह—अत्रेति। कोमलेति। माधुर्यौजोव्यञ्जकवर्णातिरिक्तवर्णानुप्रासः कोमलानुप्रास इत्युक्तं प्राक् (४४० पृ०)। समाम्नासिषुः ऊचुः।

**सुधासागरः**

नन्वेवमविरलेत्यादौ प्राचां काव्यरूपताभिधानं विरुद्ध्येत, अलङ्कारत्वाभावादिति चेत् न, कोमलानुप्रासेनैव तत्सम्भवात्। तत्किं हेत्वलङ्कारो नास्त्येव, क एवामाह, कीदृशस्तर्ह्यसाविति चेत्, पूर्वोक्तं काव्यलिङ्गमेवेति।

(सू० १८७) क्रियया तु परस्परम् ॥ १२० ॥

वस्तुनोर्जननेऽन्योन्यम्

अर्थयोरेकक्रियामुखेन परस्परं कारणत्वे सति, अन्योन्यनामा, अलंकारः ।

उदाहरणम्—

हंसाणं सरेहिं सिरी सारिज्जइ अइ सराण हंसेहिं ।
अण्णोण्णं विअ एए अप्पाण्णं णवर गरुअन्ति ॥ ५२७ ॥

अत्रोभयेषामपि परस्परजनकता मिथः श्री सारतासंपादनद्वारेण ॥

---

**सङ्केतः**

हंसाणेति । सार्यते सारीक्रियते । गरयन्ति गुरूकुर्वन्ति । यत्तु—'हंसानां सरोभिः सरसां हंसैः श्रीस्सार्यते' इति सारणक्रिया एको धर्मः, ततो दीपकमिदम्, इति; तदसत् । हंससरसोः प्रकृतत्वात् । प्रकृताप्रकृतत्वे हि दीपकमिति । इत्यन्योन्यम् ।

**सङ्केतः (रुय्यकः)**

हंसानां सरोभिः श्रीः सार्य्यते शारीक्रियते अथ सरसां हंसैः ।
अन्योन्यमिव एत आत्मानं केवलं गरयन्ति गुरूकुर्वन्ति ॥

**बालचित्तानुरञ्जनी**

अन्योन्यालङ्कारं लक्षयति क्रिययेति । क्रिययेत्येकवचनमविवक्षितमित्यभिप्रेत्य व्याकरोति अर्थयोरिति ।

उदाहरति हंसेति । सरेहिं सरोभिः । हंसाणं हंसानाम् । सिरी श्रीः । सारिज्जइ सार्यते क्रियते । अह अथ । सरणं शरणम् । हंसेहिं हंसः । अण्णोण्णं विअअन्योन्यमेव । एए एते । णवर केवलम् । अप्पाणं आत्मानम् । गरुअंति गुरूकुर्वते । नन्वत्र हंससरसोर्मिथो जन्यजनकभावात् कथमन्योन्यालङ्कार इत्यत आह अत्रेति । हंसाः श्रीमन्तः सरोभिः क्रियन्ते । तैश्च सरांसोत्यन्योन्यमलङ्कारो भवतीति भावः ।

**काव्यादर्शः**

एकक्रियेति । एकक्रियाद्वारकं यत्र परस्परमुत्पादकत्वं, न स्वरूपनिबन्धनम् । 'हंसानां साराभिः श्रीः सार्यते सारीक्रियते ।' यथा वा—

**कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।**
**अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभावः॥**

अत्र शोभाक्रियामुखकं परस्परजनकत्वम्॥ [४१॥]

**विवेकः**

परम्परायाः कारणत्वेऽलङ्कारं लक्षयित्वा परस्परकारणत्वे लक्षयति—क्रियया त्विति—क्रियाद्वारकं परस्परोपपादकत्वं न तु स्वरूपनिबन्धनं, स्वरूपस्य यथार्थोक्तौ विरोधात्। अतः परस्परोपकारकत्वमत्रान्योन्यकारणत्वेन विवक्षितम्। उपाकारश्च विशेषाधानरूपः। यदाहुः—(रु. का. अ. ७/९१) यह परस्परमेकः कारकभावोऽभिधेययोः क्रियया। संजायते स्फारिततत्त्वविशेषस्तदन्योन्यम्॥ इति। विशेषस्तु नानारूपस्तत्र वाक्यार्थीभूतरसाद्यनुगामितया तत्र तत्र प्रतीयते। न त्वियं परिवृत्तिर्विनिमयाभावात्। हंसानां सरोभिः श्रीः सार्यते सारीक्रियते अथ सरसां हंसैः। अन्योन्यमेवैते आत्मानं केवलं गरयन्ति गुरु कुर्वन्ति॥

**दीपिका**

एकक्रियामुखेन परंस्परं कारणत्व इति। सिद्धस्वरूपयोर्वस्तुनोरेकजातीयक्रियाविशेषं प्रति परस्परं जनकत्व इत्यर्थः। सारिज्जइ सारीक्रियते.

**दर्पणः**

अन्योन्यालङ्कारः वस्तुनोरिति सूत्रपदव्याख्या अन्वयोरिति [अर्थयोरिति] परस्परं कारणत्वे परस्परस्य वैशिष्ट्यहेतुत्वे इत्यर्थः।]

**हंसानां सरोभिः श्रीः सार्यते अथ सरसा हंसैः।**
**अन्योन्यमेवेति आत्मानं केवलं गुरुकयन्ति॥**

**हंसानां सरोभिः श्रीः सार्यते, अथ सरसां हंसैः।**
**[अन्योन्यमेवते एते, आत्मानं केवलं गरयन्ति॥]**

सार्यते संगद्यते। परस्परजनकता परस्परवैशिष्ट्यहेतुता,

**साहित्यचूडामणिः**

अन्योन्यमाह—किययेति।

एकवचनं विवक्षितमित्याह—एकक्रियामुखेनेति। परस्परं कारणत्वे सतीति। तादृक् चमत्कारातिशयविवक्षायाम् अन्योन्यलङ्कारः। यत् सूत्रं "परस्परं क्रिया जननेऽन्योन्यम्" (अलङ्कारसू० ५०) इति। क्रियाद्वारकं मिथोजननमन्योन्यमिति यावत्।

हंसाणेति।

**हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः।**
**अन्योन्यमेवैत आत्मानं केवलं गुरूकुर्वन्ति॥ इति।**

नन्वत्र हंसासरसां मिथो जन्यजनकभाव इति चेदाह—श्रीति। हंसाः श्रीमन्तः सरोभिः क्रियन्ते, सरांसि चात्र हंसैरिति तात्पर्यम्। यदाह महाकविः—"कण्ठस्य तस्याः स्तनबन्धुरस्ये"त्यादि॥

## सम्प्रदायप्रकाशिनी

क्रियया त्विति। एकक्रियाद्वारा मिथः कारणत्वे अन्योन्यम्।

हंसाणेति।

**हंसानां सरोभिः श्रीः सारीक्रियतेऽथ सरसां हंसैः।**
**अन्योन्यमेवैतानि आत्मानं केवलं गुरूकुर्वन्ति॥**

मिथः श्रीसारतासम्पादनं क्रिया।

योजयति—अत्रोभयेषामिति।

## मधुमती

एकक्रियेति। एकजातीयक्रियामुखेनेत्यर्थः। एवं च पूर्वोत्पन्नयोरेव अन्योन्योपकारजननद्वारा अन्योन्यमुपकारित्वाभिधानमित्यर्थः।

ननु हंससरसोः न मिथो जन्यजनकभावः इत्यत आह—अत्रोभयेषामिति। इत्यन्योन्यम्।

## विस्तारिका

एकीक्रियेति। एकजातीयक्रियामुखेनेत्यर्थः।

**हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः।**
**अन्योन्यमेवैत आत्मानं केवलं गरयन्ति॥**

ननु पूर्वसतोर्हंससरसोर्न मिथो जन्यजनकभाव इत्यत आह—अत्रेति। तथा च पूर्वोत्पन्नयोरेवान्योन्योपकारोपरागेणान्योन्यजनकत्वाभिधानमिति लक्षणार्थ इति भावः।

## सारबोधिनी

हंसाणेति। हंसानां सरोभिः श्रीः सारीक्रियते। अपि च सरसां हंसैः। अन्योन्यमेवेति। आत्मानं केवलं गुरूकुर्वन्ति। ननु पूर्वसतोर्हससरसोर्न मिथो जन्यजनकभाव इत्यत आह। अत्रेति वाणिजक हस्तिदन्ता कुतोऽस्माकं व्याघ्रकृत्तयश्च।

उत्तरालङ्कारं लक्षयति उत्तरेति। व्याकरोति प्रतीति। अत्र प्रश्ने असति उत्तरश्रुतिमात्रेण प्रतिवचनोपलम्भेनैव यत्र प्रश्नोन्नयनं पूर्ववाक्यपरिकल्पनं तदेकमुत्तरम्। एक उत्तरालङ्कारः प्रथमार्द्धे उक्तः। तमुदाहरति

वाणिअति। हे वाणिअ अहो वाणिजक हत्थिदंता। हस्तिदन्ताः। वग्घकित्तीअ व्याघ्रकृत्तयश्च। अम्हाण अस्माकम्। कुत्तो कृतः। जावि यावत्। लुलिआलअमुही लुलितालकमुखा सुए स्नुषा अस्मिन् गृहे परिसक्कए परिष्वक्कति जरद्व्याधस्योक्तिरेषा। जरद्व्याधपुत्रः स्वकान्तायामतिसक्ततया क्षीणत्वेन हस्तिव्याघ्रहनने शक्त्यभावात् स्वगृहे दत्तकृत्यभाव[?] इति भावः। अत्र हस्तिदन्तादेरसंपत्त्यभिधानेन तदर्थिनो वणिजः तत्सद्भावप्रश्नः परिकल्प्यत इत्याह हस्तीति।

न त्वेतत्काव्यलिङ्गमस्तिवत्यत आह न चेति। ताद्रूप्य प्रश्नरूपत्वम्। प्रश्नोन्नायकस्य ताद्रूप्यम्। काव्यलिङ्गलक्षणं नैतत् तादृशमिति भेद इति भावः। सन्देहान्तरमाह नहीति। जनको हि हेतुः काव्यलिङ्गम्। नैवमुत्तरालङ्कारः, ज्ञापकत्वादिति भावः। तहर्यनुमानालङ्कारऽस्त्वत आह नापीति। अनुमानलक्षणाभावादिति भावः। उपसंहरति। इतीति।

## काव्यप्रदीपः

**क्रियया तु परस्परम्॥ ३४॥**

**वस्तुनोर्जननेऽन्योन्यम्**

वस्तुनोः परस्परं जन्यजनकभावोऽसंभवी। तस्य तं प्रत्येव पौर्वापर्ययोर्द्वयोरसंभवादित्यत उक्तं क्रिययेति। एकक्रियाजननद्वारेणेत्यर्थः। अविशिष्टं वस्तु तावदजातकल्पम्। तेन वैशिष्ट्यप्रयोजनक्रियाजनके जनकत्वोपचारः। तथा च मिथस्तादृशैकक्रियाजनकत्वमन्योन्यालंकार इति सारम्। उदाहरणम्—

**'हंसाणं सरेहिं सिरी सारिज्जइ अह सराण हंसेहिं।**
**अण्णोण्णं विअ ऐ अप्पाणं णवरि गरुअन्ति॥'**

अत्र श्रीसारणेन सरोहंसयोर्मिथो जनकता।

## आदर्शः

अन्योन्यालङ्कारमाह—क्रियया त्विति। एकजातीयक्रियासम्बन्धिनोर्वस्तुनोः क्रियया विशेषणीभूतया परस्परं जनन इत्यर्थः, एकक्रियासम्बन्धितारूपविशेषणस्यैव जननात्तत्सम्बन्धिनोरपि तद्द्वारा जननोपचार इत्यर्थः। हंसाणेति—

**हंसानां श्रीः सरोभिः सार्यते अथ सरसां हंसैः।**
**अन्योन्यमप्येत आत्मानं केवलं गरयन्ति॥ इति संस्कृतम्।**

सार्यते सारीक्रियते, नामकारितान्तात् सारशब्दात् कर्मणि प्रत्ययः। 'णवरे'ति केवले देशी। गरयन्ति गुरुशब्दस्य कारिते 'प्रियस्थिरे' त्यादिना गरादेशः। अत्र श्रीसारताकरणसम्बन्धितारूपपरस्परक्रियायाः परस्परेण जननात्तद्वतः परस्परस्यापि जननमुपचारादित्याह—अत्रेति।

## सुधासागरः

अर्थयोरित्यादि । अयमाशयः—वस्तुनोः परस्परं जन्यजनकभावोऽसम्भवी, तस्य तं प्रत्येव पौर्वापर्ययोर्द्वयोरसम्भवादित्यत उक्तं क्रिययेति । एकक्रियाजननद्वारेणेत्यर्थः । अविशिष्टं वस्तु तावदजातकल्पम् । तेन वैशिष्ट्यप्रयोजकक्रियाजनके जनकत्वोपचारः । तथा च मिथस्तादृशैकक्रियाजनकत्वमन्योन्यालङ्कार इति सारमिति ।

उदाहरणम्—'हंसाणे'-ति । आर्या । लक्षणमुक्तम् ।

**हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।**
**अन्योन्यमेवैत आत्मानं केवलं गरयन्ति ।। इति संस्कृतम् । स्पष्टम् ।**

(सू० १८८) उत्तरश्रुतिमात्रतः ।

**प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥१२१ ॥**

असकृद् यद् असंभाव्यमुत्तरं स्यात् तदुत्तरम् ।

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते तदेकं तावदुत्तरम । उदाहरणम्—

**वाणिअअ हत्थिदन्ता कुत्तो अम्हाण वग्घकित्ती अ ।**

**जाव लुलिआलअमुही घरम्मि परिसक्कए सोण्हा ॥५२८ ॥**

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी ताः, मूल्येन प्रयच्छेति क्रेतुर्वचनम् अमुना वाक्येन समुन्नीयते ।

न चैतत् काव्यलिङ्गम उत्तरस्य ताद्रुप्यानुपपत्तेः । नहि प्रश्नस्य प्रतिवचनं जनको हेतुः । नापीदमनुमानम् एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलंकारान्तरमेवोत्तरं साधीयः ।

---

सङ्केतः

उत्तरश्रुतीति । उत्तरश्रवणात् अनुक्तोऽपि प्रश्नः अवगम्यः इति तात्पर्यम् । तत्र वा इति प्रश्ने । उत्तरं उत्तराख्योऽलङ्कारः ।

वाणिजकेति । कृत्तिः चर्म । स्नुषा वधूः । परिष्वष्कते क्रीडति । उत्तरस्य प्रतिवचनस्य ताद्रूप्यानुपपत्तेः काव्यलिङ्गरूपतानुपपत्तेः । कुत इत्याह—न हीति । न जनकः, किन्तु ज्ञापकः । एकधर्मीति । प्रश्नोत्तरवाक्यद्वयी भिन्नवक्तृगतेति भावः । प्रश्नः साध्यम्, उत्तरं साधनम् ।

अन्योश्च प्रश्नप्रतिवचनयोः ।

सङ्केतः (रुय्यकः)

**वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।**

**यावद् विलुलितालकमुखी गृहे परिष्वस्कते विलसति स्नुषा ॥**

### बालचित्तानुरञ्जनी

उत्तरालङ्कारं लक्षयति उत्तरेति। व्याकरोति प्रतीति। अत्र प्रश्ने असति उत्तरश्रुतिमात्रेण प्रतिवचनोपलम्भेनैव अत्र प्रश्नोन्नयनं पूर्ववाक्यपरिकल्पनं तदेकमुत्तरम्। एक उत्तरालङ्कारः प्रथमार्द्धे उक्तः। तमुदाहरति वाणिएति। हे वाणिअ अहो वाणिजक हत्थिदंता। हस्तिदन्ताः। बाग्घकित्तोअ व्याघ्रकृत्तयश्च। अम्हाण अस्माकम्। कुत्तो कृतः। जावि यावत्। लुलिआलअमुही लुलितालकमुखा सुए स्नुषा अस्मिन् गृहे परिसक्कए परिष्वक्कति। जरद्व्याधस्योक्तिरेषा। जरद्व्याधपुत्रः स्वकान्तायामतिसक्ततया क्षीणत्वेन हस्तिव्याघ्रहनने शक्त्यभावात् स्वगृहे दत्तकृत्यभाव[?] इति भावः। अत्र हस्तिदन्तादेरसंपत्यभिधानेन तदर्थिनो वणिजः तत्सद्भावप्रश्नः परिकल्प्यत इत्याह हस्तीति। न त्वेतत्काव्यलिङ्गमस्त्वित्यत आह न चेति। ताद्रूप्यं प्रश्नरूपत्वम्। प्रश्नोत्रायकस्य ताद्रूप्यम्। काव्यलिङ्गलक्षणं नैतत् तादृशमिति भेद इति भावः। सन्देहान्तरमाह नही ति। जनको हि हेतुः काव्यलिङ्गम्। नैवमुत्तरालङ्कारः, ज्ञापकत्वादिति भावः। तर्ह्यनुमानालङ्कारोऽस्त्वत आह नापीति।

न त्वेतत्काव्यलिङ्गमस्त्वित्यत आह न चेति। ताद्रूप्यं प्रश्नरूपत्वम्। प्रश्नोन्नायकस्य ताद्रूप्यम्। काव्यलिङ्गलक्षणं नैतत् तादृशमिति भेद इति भावः। सन्देहान्तरमाह नहीति। जनको हि हेतुः काव्यलिङ्गम्। नैवमुत्तरलङ्कारः, ज्ञापकत्वादिति भावः। तहर्यनुमानालङ्कारोऽस्त्वत आह नापीति। अनुमानलक्षणाभावादिति भावः। उपसंहरति इतीति।

### काव्यादर्शः

उत्तरश्रुतीति। यत्र अनुपनिबद्धोऽपि प्रश्न, उत्तरात्प्रतीयत इत्यर्थः। तत्र वेति। प्रश्ने। 'वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्त[य]श्च, यावत् स्नुषा परिष्वक्कते विलसति॥' यथा वा—

**एकाकिनी यदबला तरुणी तथाह—**

**मस्मिन् गृहे गृहपतिश्च गतो विदेशम्।**
**किं याचसे तदिह वासमियं वराकी**
**श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ॥**

—अत्र 'मम निवासो दीयताम्' इति प्रश्न उत्तरादुन्नीयते।

### विवेकः

उत्तरश्रुतीति—यत्रानुपनिबध्यमानोऽपि प्रश्न उपनिबद्धादुत्तरादुन्नीयते तदेकमुत्तरम्, 'यत्न च प्रश्नपूर्वकं लोकोत्तरविषयत्वादसम्भावनीयमुक्तं तच्च न सकृत् तावन्मात्रण चारुत्वाप्रतीतेः, अतश्चासकृन्निबध्यते तद्द्वितीयमुत्तरम्।' (अ. स. २१६ पृ.) तत्राद्यं यथा वाणिअअ इत्यादि। वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च। यावद्विलुलितालकमुखी गृहे परिष्वक्कते विलसति स्नुषा॥ उत्तरेणात्र प्रश्न उन्नीयते न तु जन्यते, प्रश्नेऽपि सति क्वचिदुत्तरस्यादर्शनात्। ननु वह्निर्यथा धूमं जनयत्येवेति नियमः, धूमस्तु वह्निजन्य एव, तथाऽत्राप्युत्तरं प्रश्नजन्यमेवेति नियमादायातमनुमानससामग्र्यैवेत्यत आह—नापीति। अत्र हेतुः एकस्मिन् धर्मिणीति।

प्रश्नोत्तरयोरत्र साध्यसाधनत्वेनोपकल्पितयोः क्रेतृविक्रेतृगतत्वेन वैयधिकरण्यात् । नापीदं वाक्यं प्रश्नपूर्वकमुत्तर-त्वात् सम्प्रतिपन्नवदिति युक्तं साध्यविशेषात् । प्रश्नपूर्वकमेवोत्तरं यतः । अलङ्कारान्तरमेव साधीयोऽतिशयेन साधु श्रेष्ठम् ।

## दीपिका

तत्र प्रश्नेऽसम्भाव्यं चमत्कारि पूर्ववाक्यम् । कित्ती कृत्तयः (चर्माणि) । परिसक्कए परिष्वक्कते परिभ्र-मतीत्यर्थः । सोण्हा स्नुषा इत्यर्थः । हस्तिदन्तेत्यादि । वस्तुसद्भावजिज्ञासागर्भत्वेन प्रश्नत्वमुक्तम् । अमुना तूत्तररूपेण वाक्येन समुन्नीयते व्यज्यते । अत्र वाक्येनेति पाठेनास्यामुदाहृतौ क्रेतृवचनमुन्नीयते । केन हेतुनेत्यपे-क्षायमाह—वाक्येनेति ।

ननु हेतुर्वाक्यार्थतया काव्यलिङ्गमेवेदम् । न च हेतुमात्राच्छाब्दता नैवमिति वाच्यम्, अवान्तरप्रकार-तयाऽप्युपपत्तेरित्याह—न चेति । उत्तरस्येत्यनन्तरं प्रश्नं प्रतीति शेषः । ताद्रूप्येत्यत्र तदा पदार्थमात्रयोग्यत्वेनानुकृ-ष्यते । ततश्च लिङ्गविषयत्वानुपपत्तेरित्यर्थः । ननूत्तरं कार्यतामापद्यमानमेव प्रश्नोन्नयनोपायस्तत् कथं लिङ्गत्वानुपपत्तिरिति काव्यलिङ्गलक्षणे हेतुशब्देन ताद्रूप्येत्यत्र च तदनुकृष्यमाणत्वेन लिङ्गशब्देन जनक एवोच्यते । न चात्र तथा सङ्गच्छत इत्यर्थः ।

यद्वा उत्तरस्य शब्दरूपस्य ताद्रूप्यानुपपत्तेः काव्यलिङ्गव्यपदेशविषयपदार्थवाक्यार्थात्मकहेतुरूपत्वानुप-पत्तेः । उत्तरार्थस्य ताद्रूप्योपपत्तेर्भविष्यतीति चेदत्राह नहीति । हिरलङ्कारे । प्रश्नस्य प्रश्नविषयस्य प्रत्युच्यत इति प्रतिवचनमुत्तरार्थः । जनको हेतुरिति पूर्ववत् । अथवैतदिति समनन्तरोदाहृतिगतमलङ्करणमित्यर्थः । उत्तरस्यालङ्क-रणता द्रव्यानुपपत्तेः । कुत इत्याह—नहीति । प्रथमपक्षे योजना । न तूत्तरार्थः प्रश्नत्वं प्रति जनकतयाऽनुमानाल-ङ्कृतिरस्त्वित्याशङ्क्याऽप्यमत्र गौतमादितन्त्रप्रसिद्धानुमानप्रयोगच्छायाप्रतिपादनशरीरो न सम्भवतीत्याह — नीपिति । एकेत्यादौ साध्यसाधनयोरेकधर्मिनिष्ठतया निर्देशादप्रकाशितत्वादिति साध्यसाधनयोश्च तयोस्त्वनिर्दे-शाच्छब्देनाप्रतिपन्नत्वात् साध्यत्वे साधनत्वाकारेणानिर्देशादिति विवक्षितम् । एतच्च श्रुतिमात्रत इति सूचितमेव । श्रुतिमात्रेणोत्तराद्यनुसन्धानात् विप्रतिपत्तेः । अलङ्कारान्तरं काव्यलिङ्गानुमानाभ्यां भिन्नोऽलङ्कारः । साधीयः प्रशस्त-तरं निरवद्यमलङ्कारविषयमिति यावत् । प्रश्नादित्यतः पूर्वमुक्तादिति शेषः ।

## दर्पणः

अनुयनं [उन्नयनं] ज्ञानम् । तत्र वा "सतीत्यत्र" उत्तरार्द्धेन संबन्धः । तत्र प्रश्ने असंभाव्यं जनकारि[?] पूर्ववाक्यम् । वाणीय इति [वाणिअअ इति] ।

**बालक हस्तिदन्ताः कुतोऽस्माकं...घ्रकृत्तयश्च ।**
**यावन्ननितानकमुखी गृहे परि...तेषु षा ॥**

**[वाणिजक हस्तिदन्ता कुतोऽस्माकं व्याघ्रकृत्तायश्च ।**
**यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा । ।]**

वलिगिसबुद्धिः परिषु [?] क्वते परिभ्रमतीत्यर्थः। क्रेतृवचनम् प्रश्नवाक्यम्। उत्तरवाक्येन अनेनैवा-णीय [अनेनैव वाक्येन] इत्यादिना।

ननूत्तरवाक्यस्य प्रश्नवाक्यहेतुतया काव्यलिङ्गत्वमेवास्तु। न च हेतुमतो वाक्यस्याशब्दतया न तथेति वक्तुं युक्तं, तथा सत्यपि काव्यलिङ्गस्यावान्तरप्रकारतोपपत्तेरित्याह न चेति। ताद्रूप्यस्य प्रश्नं प्रति हेतुत्वस्यानुप-पत्तेः, कुत इत्याह नहीति। हि यस्मात् न जनकोऽपि तर्हि ज्ञापकः, जनकस्यैव हि हेतोः काव्यलिङ्गाकारप्रयोजकत्वं-मिति भावः। तथा हि-वपुः प्रादुर्भावादित्यादौ काव्यलिङ्गाकारे पूर्वापरजन्मनोऽनमनमपराधद्वयस्य जनकम्। ननु एवं यदि वाणी इह [वाणिअअ] इत्यादेः प्रश्नं प्रति ज्ञापकहेतुता तदनुमानालङ्कारोऽत्रास्त्वित्यत आह नापीति। साध्यसाधनयोरनिर्देशात् साध्यसाधनहाकारेण [रूपाकारेण] शब्देनाप्रतिवचनत्वात्। एवमेव हि सूत्रे मात्रतो न तु व्याकार्यादीति शेषः। []...त्यनुसंधानेन प्रश्नस्योन्नयनमित्युक्तम्। उत्तरमुत्तराख्यमलङ्कारमित्यतः पूर्वं काव्य-लिङ्गानुमानयोरिति शेषः।

## साहित्यचूडामणिः

उत्तरमाह—उत्तरेति। उत्तरश्रुतिमात्रेण प्रतिवचनोपलम्भनेनैव प्रश्नोन्नयनं पूर्ववाक्यपरिकल्पनमेकमुत्तरम्।

वाणिअएति।

वाणिअएति।

**वाणिजक ! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तिश्च।**
**यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा॥ इति।**

परिष्वक्कते सविभ्रमं चङ्क्रम्यते।

अत्र हस्तिदन्तादयः कुत इत्यभिधानेन तदर्थिनस्तद्भावप्रश्नः परिकल्पित इत्याह—हस्तीति। नन्वेतत् काव्यलिङ्गमस्त्विति चेदाह—नचेति। उत्तरतः प्रश्नोन्नयनस्य। ताद्रूप्यं काव्यलिङ्गलक्षणं, तदनुपपत्तेः ताद्रूप्यमेव स्मारयति—नहीति। जनको हि हेतुः काव्यलिङ्गं नैवमुत्तरम। अथानुमानमसित्वत्याशङ्क्याह—नापीति। तल्लक्षणाभावादित्याह— एकेति। साधीय इति। अलमन्यस्मिन्नन्तर्भावव्यसनेन।

## सम्प्रदायप्रकाशिनी

उत्तरेति। उत्तरश्रवणमात्रादप्रयुक्तस्य प्रश्नस्योन्नयनमेकमुत्तरम्। प्रश्ने सत्यसकृदसम्भाव्यमुत्तरं द्वितीयम्।

यथावद् व्याख्यायोदाहरति—प्रतिवचनेत्यादिना। प्रश्नस्य पूर्ववाक्यमित्युक्तिभयस्यापि वाक्यैकवि-षयतां द्योतयितुम्।

वाणिअएति

**वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च।**
**यावद् लुलितालकमुखी गृहे परिसर्पति स्नुषा॥**

अत्र निर्विण्णायाः श्वश्रुवाः दन्ताकृत्त्यभावोत्तरेण तदर्थिनो वाणिजकस्य प्रश्न उन्नीयते।

तदेतदाह—हस्तिदन्तेत्यादि। काव्यलिङ्गाद् वैधर्म्यमाह—न चैतदिति। ताद्रूप्यं (काव्य) लिङ्गरूपत्वम्। तदनुपत्तिं दर्शयति—न हीति। जनकत्वे हि काव्यलिङ्गता। अनुमानतोऽपि वैधर्म्यमाह—नापीदमिति। **नह्यत्रैक-धर्मिनिष्ठतया साध्यसाधनाभिमतयोः प्रश्नप्रतिवचनयोर्निर्देशः, भिन्नकर्तृकत्वात्। अत उत्तरमलङ्कारान्तरतयैव** बाढतरम्।

## मधुमती

पूर्ववाक्यमिति। प्रश्नवाक्यमित्यर्थः।

वाणिजकेति। एवं च—'तदासक्तः मत्सुतः सम्प्रति मृगयां न करोति' इति ध्वन्योऽर्थः।

उत्तरस्येति तद्रूप्यानुपपत्तेः कारणत्वानुपपत्तेः। एकेति व्याप्त्यनिर्देशादित्यर्थः।

## विस्तारिका

उत्तरेति। तत्र वा सतीति प्रश्ने सतीत्यर्थः। एतदप्यसकृदित्यादावन्वेति। पूर्ववाक्यं प्रश्नवाक्यमित्यर्थः।

**वाणिजक हस्तिदन्ता कुतोऽस्माकं व्याघ्रकृत्तयश्च।**
**यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा॥**

तस्यामासक्तोऽस्तीत्यतः सम्प्रति मृगयां न करोतीति व्यङ्ग्यम्। वृद्धस्य च व्याघ्रस्येयमुक्तिः।

ताद्रूप्यानुपपत्तेः कारणत्वानुपपत्तेरित्यर्थः। तदेवोपपादयति—नहीति। न तु कार्यकारणभावासत्त्वेऽपि ज्ञाप्यज्ञापकभावसत्त्वादनुमानालङ्कारः स्यादित्याह—नापीति। एकेति धर्मपक्षः।

## सारबोधिनी

**वाणिजक हस्तिदन्ता कुतोऽस्माकं व्याघ्रकृत्तयश्च।**
**यावल्लुलितालकमुखी गृहे परिष्वक्तते स्नुषा॥**

तस्यामसक्तो मे सुतः संप्रति मृगयां न करोतीति व्यङ्ग्यताद्रूप्यानुपपत्तेरिति कारणत्वानुपपत्तेरित्यर्थः।

प्रतिवचनं जनको हेतुरिति हेतुर्द्विधा भवति जनको ज्ञापकश्च। तत्रायं न जनको हेतुरपि तु। ज्ञापक एव हेतुः। अत एव पूर्वमुक्तम्। निमित्तत्वं कारकत्वं ज्ञापकत्वञ्चेति।

काव्यप्रदीपः

**उत्तरश्रुतिमात्रतः ।**

**प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥ ३५ ॥**

**असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम् ।**

यत्रोत्तरश्रवणमात्रेणानुपात्तमपि प्रश्नवाक्यं परिकल्प्यते तदेकमुत्तरम् । प्रश्ने सति लोकातिक्रान्तगोचरतयासंभाव्यं यदसकृत्प्रतिवचनं तत्पुनरपरम् । अत्र प्रश्नोत्तरयोः सकृदुपादानं न चमत्करोतीत्यसकृदित्युक्तम् । असंभाव्यं तु चमत्कारित्वमिति मान्याः । अप्रसिद्धत्वमिति तु वयम् । तच्च प्रमाणान्तरागोचरविषयत्वात् । अत एव प्रश्नपरिसंख्यातो भेदः । तत्र हि लोकसिद्धविषयस्योत्तरस्य प्रयोजनान्तराभावेनान्यव्यपोहे तात्पर्यम् । अत्र तु निगूढविषयतया वाच्य एव तात्पर्यविश्रामः । तत्राद्यं यथा—

**'वाणिअअहत्थिदन्ता कुत्तो अम्हाण वग्घकित्ती अ ।**
**जाव लुलिआलअमुही घरम्मि परिसप्पते सोहणा ॥'**

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी मूल्येन ताः प्रयच्छेति क्रेतृवचनमनेनोत्तरवाक्येनानुमीयते । सूत्रे च प्रश्नपदं पूर्ववाक्यमात्रपरमिति प्रश्नाभावेऽप्यदोषः । यद्वा हस्तिदन्तव्याघ्रकृत्तयस्तव सन्तीति प्रश्नवाक्यमिहोन्नेयम् । न च वाच्यमिदं काव्यलिङ्गविशेष एव उत्तरस्य प्रश्नं प्रति हेतुत्वादिति । उत्तरस्य तदनुत्पादकत्वात् काव्यलिङ्गस्य तदात्मकत्वात् । तर्हि ज्ञापकतयानुमानमेवेति चेत्, न । एकधर्मिगतत्वेन साध्यसाधननिर्देशो हि तत् । न चात्र तथा । तस्मादलंकारान्तरमेवोत्तरम् ।

काव्यप्रकाशखण्डनम्

**उत्तरः श्रुतिमात्रतः । (का. १२१, द्वि० पा०)**

यथा—

**गम्यतामन्यतः पान्थ ! तवेह वसतिः कुतः ।**
**दोषाय स्यादलं पान्थ ! वसतिर्योषिदालये ॥**

भो गृहिणि ! वासं देहीति वसतियाचकस्य कस्यचिद् वचनममुना वाक्येनोन्नीयते । असंभाव्यं लोकातिक्रान्तिगोचरं प्रतिवचनम्, यथा—

**का विष(स) मा दिव्वगई किं दुल्लभं जणो गुणग्गाही ।**
**किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥**

प्रश्नपरिसंख्यायामन्वयव्यपोह एव तात्पर्यम् । इह तु वाच्य एव विश्रान्तिरित्यनयोर्भेदः ।

## आदर्शः

द्विविधमुत्तरालङ्कारमाह—उत्तरेति। तत्र वेति, प्रश्ने वा सतीत्यर्थः। असकृदिति, काकाक्षिन्यायेन प्रश्नोत्तरयोरुभयत्रैव सम्बध्यते। 'असम्भाव्यं' लोकप्रसिद्ध्यगम्यं लोकविलक्षणमित्यर्थः। व्याचष्टे—प्रतिवचनेति। 'पूर्ववाक्यं' प्रश्नवाक्यम्।

वाणिअअ इति—

**वाणिजिक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च।**
**यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा॥ इति संस्कृतम्।**

स्नुषा पुत्रवधूः, परिष्वक्कते दीप्यते। सुन्दर्यां स्नुषायामासक्तो मम पुत्रो हस्तिनो व्याघ्रांश्च न मारयतीत्यर्थः। अत्रेति। अर्थीत्यनन्तरं किं ताः सन्तीति पूरणीयम्, तदैवैतद्वाक्यस्य प्रश्नरूपत्वोपपत्तेः। 'ताद्रूप्यं' जनकहेतुत्वम्। तदेव दर्शयति—न हीति ज्ञापकहेतुस्तु न हेत्वलङ्कार इति भावः। एकधर्मीति। एकधर्मी पक्षः। प्रकृते तु प्रश्नस्य धर्मी क्रेता प्रतिवचनस्य धर्मी विक्रेतेति भेदः।

## सुधासागरः

प्रतीति वृत्तिः स्पष्टा। सूत्रे प्रश्नोत्तरपदं पूर्वापरवाक्यस्योपलक्षकमिति भावः। वाणिजेति आर्या। लक्षणमुक्तं प्राक्।

**वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयः।**
**यावल्लुलितालकमुखी गृहे प्रतिवसति स्नुषा॥ इति संस्कृतम्। स्पष्टम्।**

एतस्यामासक्तो मत्सुतो मृगयां न करोतीति व्यङ्ग्यम्। वृत्तिः स्पष्टा।

हेतुर्द्विधा भवति। जनको ज्ञापकश्च। तत्रायं न जनको हेतुः किन्तु ज्ञापक एव। ननु तर्ह्यनुमानं स्यादित्यशङ्क्याह—नापीदमनुमानमिति। एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशात्, व्याप्तेरनिर्देशादित्यर्थः। अत एव जयरामपञ्चाननैर्व्याख्यातम् न च वाच्यमिदं काव्यलिङ्गमेव, उत्तरस्य प्रश्ने हेतुत्वाभावात्, उत्तरस्य तदनुत्पादकत्वात् तर्हि ज्ञापकतयाऽनुमानमेवेति चेत्। न। एकधर्मिगतत्वेन साध्यसाधननिर्देशे हिं तत्। न चात्र तथेति। तस्मादलङ्कारान्तरमेवोत्तरम्।

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यत् असंभाव्यरूपं प्रतिवचनं स्यात् तत् अपरमुत्तरम्। अनयोश्च सकृदुपादाने न चारुताप्रतीतिरित्यसकृदित्युक्तम्। उदाहरणम्—

का विसमा देव्वगई किं लद्धं जं जणो गुणग्गाही।
किं सोख्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥ ५२९ ॥

प्रश्नपरिसंख्यायमन्यव्यपोहे, एव तात्पर्यम्। इह तु वाच्ये, एव विश्रान्तिरित्यनयोर्विवेकः ॥

---

**सङ्केतः**

का विसमेति। अत्र दैवगत्यादि निगूढत्वात् असम्भाव्यरूपम्। प्रश्नपूर्विका परिसङ्ख्या प्रश्नपरिसङ्ख्या। अत्र प्रश्नात् उत्तरमात्रम्, न तु अन्यव्यपोहः इत्यर्थः। इत्युत्तरम्।

**सङ्केतः (रुय्यकः)**

का विषमा दैवगतिः किं लब्धं यज्जनो गुणग्राही।
किं सौख्यं सुकलत्रं किं दुग्राह्यं खलो लोकः ॥

**बालचित्तानुरञ्जनी**

उत्तरालङ्कारभेदमन्यमन्यं प्रतिवचनं तद्वितीयमित्यर्थः[?]। असकृद्ग्रहणस्य प्रयोजनमाह अनयोश्चेति। उदाहरति केति। का विषमा दैवगतिः। किं लभ्यं यत् जणो जनः गुणग्गाही गुणग्राही। किं सोख्खम्? किं सौख्यम् सुकलत्तं सुकलत्रम्। किं दुःखम्? खलो खलः लोओ लोकः। अत्र प्रश्नपरिसंख्याया अभेदमाशङ्क्याह प्रश्नेति। अत्र संभाव्योत्तरे वाच्य एव तात्पर्यम् नान्यव्यपोह इति सिद्धोऽस्य भेद इति भावः।

**काव्यादर्शः**

एतदिति उत्तराभिधानमलंकरणम्। उत्तरस्येति प्रतिवचनस्य। तद्रूपतेति काव्यलिङ्गतानुपपत्तेः। अत्रैव हेतुमाह—न हीति। एकधर्मीति। प्रश्नो ह्यन्यत्र प्रतिवचनं चान्यत्रेति। अनयोश्चेति प्रतिवचनयोः।

'का विसमे' ति अत्र दैवगत्यादि निगूढत्वाद् असंभावनीयमसत्कृत्प्रश्नपूर्वकमुत्तरं निबद्धम्। न चेयं परिसंख्या, व्यवच्छेद्यव्यवच्छेदकयोरत्र अभावात् इत्याह—प्रश्नपरिसंख्यायामिति। इह प्रश्नाद् उत्तरमात्रं, नान्यव्यपोहः ॥ [४२ ॥]

### विवेकः

द्वितीयमुत्तरं यथा का विसमेत्यादि—का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही। किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥ किं लद्धव्वमित्यत्र को लाहो इति पाठः सुन्दरः। अत्र दैवगत्यादि निगूढत्वाद्य-सम्भाव्यमसकृत्प्रश्नपूर्वकमुत्तरं निबद्धम्। न चेयं प्रश्नपूर्विका परिसंख्या व्यवछेद्यव्यवछेदपरत्वाभावादित्याह—प्रश्नपरिसंख्यायामिति। अन्यव्यपोह एवेति। न तु न वाच्यं, 'पञ्च पञ्चनखा भक्ष्या' इत्यादिन्यायेन वाक्यस्यातत्परत्वात्।

### दीपिका

लोकातिक्रान्तं वस्तु गोचरं विषयो यस्येति लोकातिक्रान्तगोचरं तस्य भावस्तत्ता तथा लोकातिक्रान्त-तयाऽनयोः प्रश्नोत्तरयोः सकृदुपादानादेकैकयोरुपादानात्। विषमादुर्ज्ञाना। लब्धं लाभः। यज्जनो गुणग्राही तल्लब्धमित्यर्थः। दुग्गेज्झं दुर्ग्राह्यम्। अन्यव्यपोह एव, न तु वाच्ये कर्हिचित्। तात्पर्यं वाक्यस्य परिविश्रामः। वाच्य एव न त्वन्यव्यपोहहेतुरननुभवादित्यर्थः।

### दर्पणः

द्विनीयमुत्तरं व्याचष्टे प्रश्नानन्तरमिति। प्रश्नादित्यनन्तरं पूर्वमुपात्तादिति शेषः। केति।

**का विषमा दैवगतिः किं लभ्यं यज्जनो गुणग्राही।**
**किं सौख्यं सुकलत्रं, दुर्ग्राह्यं खलो लोकः ॥**

विषमा दुर्विज्ञाना लभ्यं लाभः, यज्जनो गुणं गृह्णाति स एव लाभ इत्यर्थः। अन्यव्यपोह एव न तु वाक्ये किमपि तात्पर्यमित्यर्थः।

### साहित्यचूडामणिः

अथ मतभेदाद् द्वितीयमुत्तरमाह—तत्रेति। तत्र प्रश्ने सति प्रष्टुरभिप्रायानुगुण्येन लोकातिशायितया यदसम्भाव्यं प्रतिवचनं तद् द्वितीयमुत्तरम्। अनयोश्च प्रश्नप्रतिवचनयोः यद्यपि सकृदुपादानाद् वाक्यार्थसिद्धिः, तथापि न चमत्कारोत्पत्तिरित्यसकृत्त्वेन बन्ध इत्याह—अनयोश्चेति।

का विसमेति।

**का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही।**
**किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः ॥ इति।**

अस्य प्रश्नपरिसंख्यया वैलक्षण्यमित्याह—अन्यव्यपोह इति। "तादृगन्यव्यपोहाये"त्युक्तत्वात्। इह तु वाच्य एव, नतु व्यङ्ग्ये विश्रान्तिः। यत् सूत्रम् "उत्तरात् प्रश्नोन्नयनसकृदसंभाव्यमुत्तरं चोत्तरम्" **[अलङ्कार सू० ७५]** इति।

### सम्प्रदायप्रकाशिनी

द्वितीयमाह—प्रश्नादनन्तरमित्यादि। तथाविधयोरपि। प्रश्नोत्तरयोः सकृदचारुत्वादसकृत्त्वम्।

का विसमेति।

का विषमा दैवगतिः किं लब्धव्यं जनो गुणग्राही।
किं सौख्यं सुकलत्रं किं दुग्राह्यं खलो लोकः॥

प्रश्नपरिसङ्ख्यातो वैधर्म्यायाह—प्रश्नपरिसङ्ख्यायामित्यादि। वर्जन वाक्यस्य विधेयत्वाद् व्यापोह एव तात्पर्यम् इह तूत्तरस्य विधेयत्वाद् वक्तव्य एव।

### मधुमती

प्रश्नादिति। एतञ्च तत्र वा सति इति सूत्र प्रतीकार्थः। न चारुतेति। तत्प्रयोजकस्यैवालङ्कारत्वादिति भावः।

प्रश्नेति। न हि सर्वत्र निषेध एव वाक्यार्थः, विध्यपलापापत्तेः इति भावः। इत्युत्तरम्।

### विस्तारिका

प्रश्नेत्यादि। एतत् "तत्र वा सति" इत्यादिप्रतीकार्थः। न चारुतेति। तत्प्रयोजकस्यैवालङ्कारत्वादित्यर्थः।

का विषमा दैवगतिः किं लब्धव्यं यज्जनो गुणग्राही।
किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः॥

विश्रान्तिरिति। दैवगत्यादीनां विषमत्वाद्यतिशयप्रतिपादन एव तात्पर्यादिति भावः। तदिदमुक्तम् 'असम्भाव्यम्' इति।

### सारबोधिनी

प्रश्नादिति। एतत्तत्र वा सतीति प्रतीकार्थः। अनयोश्चेति प्रश्नोत्तरयोरित्यर्थः।

का विषमा दैवगतिः कि लब्धव्यं यत् जनो गुणग्राही।
किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः॥

विश्रान्तिरिति। दैवगत्यादीनां विषमत्वातिशयप्रतिपादन एव तात्पर्यादिति भावः। तदिदमुक्तम् संभाव्यमिति।

### काव्यप्रदीपः

'का विसमा देवगई किं लद्धं जं जणो गुणगगाही।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ॥'

अत्र दैवगत्यादेर्वैषम्यादि लोकप्रसिद्धमेव प्रकाश्यते । 'किमासेव्यं पुंसां' इत्यादि प्रश्नपरिसंख्यायामन्य-व्यवच्छेदे तात्पर्यम् । अत्र तु वाच्य एवेति ततो भेदः ।

**आदर्शः**

तत्र वा सतीत्यादिकं व्याचष्टे—प्रश्नानन्तरमिति । सूत्रे असकृदित्यस्य प्रश्नोत्तरयोर्द्वयोरप्यन्वयमभिप्रेत्य व्याचष्टे—अनयोरिति । का विसमेति ।

**का विषमा दैवगतिः किं लब्धव्यं यद् जनो गुणग्राही ।**
**किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः ॥ इति संस्कृतम् ।**

सौख्यं सुखोपयुक्तम् । अत्र प्रश्नोत्तरयोर्द्वयोरप्यसकृत्त्वाद् उत्तरस्य च लोकप्रसिद्ध्यगम्यत्वाद् यथोक्त-रूपत्वम् । अत्र प्रतीयमानव्यपोह्यायाः प्रश्नपरिसंख्यायाः प्रसक्तिं वारयति—प्रश्नेति । अत्र सहृदयानामनुभव एव प्रमाणम् ।

**सुधासागरः**

प्रश्नादनन्तरमिति । तत्र वा सतीति प्रतीकार्थः । अनयोश्चेति, प्रश्नोत्तरयोरित्यर्थः ।

व्याख्यातं च प्रदीपकारैः—प्रश्ने सति लोकातिक्रान्तगोचरतयाऽसम्भाव्यं यदसकृत्प्रतिवचनं तत्पुनरप-रम् । अत्र प्रश्नोत्तरयोः सकृदुपादानं न चमत्कारोतीत्यस कृदित्युक्तम् । असम्भाव्यत्वन्तु चमत्कारित्वमिति मान्याः अप्रसिद्धत्वमिति वयम् । तच्च प्रमाणान्तरगोचरविषयत्वात् । अत एव प्रश्नपरिसंख्यातो भेदः । तत्र हि लोकसि-द्धविषयस्योत्तरस्य प्रयोजनान्तराभावेनान्यव्यपोहे तात्पर्यम् । अत्र तु निगूढविषयतया वाच्य एव तात्पर्यविश्राम इति । उदाहरणम्—का विषमेति ।

आर्याः ।

**का विषमा दैवगतिः किं लब्धव्यं यज्जनो गुणग्राही ।**
**किं सौख्यं सुकलत्रं किं दुःखं यत् खलो लोकः ॥**

इति संस्कृतं स्पष्टम् । अत्र दैवगत्यादेर्वैषम्यादि लोकप्रसिद्धमेव प्रकाशयते । प्रश्नपरिसंख्यायामन्यव्यपोह एंव तात्पर्यमिह तु वाच्ये एव विश्रन्तिरित्यनयोर्विशेष इति ।

(सू० १८९) कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै

प्रकाश्यते ॥ १२२ ॥

धर्मेण केनचिद् यत्र तत् सूक्ष्मं परिचक्षते ।

कुतोऽपि, आकारादिङ्गिताद्वा सूक्ष्मस्तीक्ष्णमतिसंवेद्यः । उदाहरणम्—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा

भिन्नं कुङ्कुमं कापि कण्ठे ।

पुंस्त्वं तन्व्या व्यञ्जयन्ती व्यस्या स्मित्वा

पाणौ खड्गलेखां लिलेख ॥ ५३० ॥

अत्र, आकृतिमवलोक्य कयापि वितर्कितं पुरुषायितम् असिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतम् । पुंसामेव कृपाणपाणिता योग्यत्वात् ।

---

सङ्केतः

आकारादिति । अनेन कुतोऽपि इति व्याख्यातम् ॥

भिन्नम् व्याप्तम् । आकृतिम् स्वेदकृतकुङ्कुमभेदरूपम् ॥

सङ्केतः (रुय्यकः)

का विषमा दैवगतिः किं लब्धं यज्जनो गुणग्राही ।

किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥

बालचित्तानुरञ्जनी

सूक्ष्मालङ्कारं लक्षयति कुतोऽपीति । कुतोऽपीत्यस्यार्थमाह आकारादिति । सूक्ष्मशब्दार्थमाह तीक्ष्णेति । तीक्ष्णमतिभिः कुशाग्रमतिभिः संलक्ष्यः स्थूलबुद्धिभिरसंलक्ष्यश्च । उदाहरति । वक्त्रेति । कापि व्यस्या तन्व्याः वक्त्रात्स्यन्दिभिः स्वेदबिन्दुप्रबन्धैः भिन्नं कुङ्कुमं दृष्ट्वा तस्याः पुंस्त्वं व्यञ्जयन्ती सती स्मित्वा पाणौ खड्गलेखां लिलेख । उपरिसुरतमनया कृतमिति ज्ञात्वा तत् ज्ञापनार्थं पुरुषयोग्यां खड्गलेखां लिलेखेत्यभिप्रायः । अत्र वदनस्वेदप्रवृत्तकण्ठकुङ्कुमभेदलक्षणामाकृतिमवलोक्य सख्या परिज्ञातं पुरुषायितं पाणौ पुरुषैकयोग्यं खड्गलेखनलक्षणेन धर्मेण प्रकाशितमित्याह अत्रेति ।

### काव्यादर्शः

कुशाग्रीयमतिभिराकारेङ्गिताभ्यां संलक्षितस्यार्थस्य विदग्धं प्रति प्रकाशनं यत् तत् सूक्ष्मावगमकारणात् सूक्ष्ममलंकारः ।

'वक्त्रस्यन्दी'ति । रत्नाकरस्य हरिविजये श्लोकोऽयम् । अत्र स्वेदकृतकुङ्कुमभेदरूपेणाकारेण संलक्षितं पुरुषायितं पाणौ पुरुषोचितखड्गलेखनेन प्रकाशितम् । यथा वेति इङ्गितात् ।

### विवेकः

कुतोऽपीति—आभ्यन्तरोन्नयनप्रस्तावादस्य सङ्गतिः । 'इह सूक्ष्मस्थूलमतिभिरसंलक्ष्योयोऽर्थः स यदा कुशाग्रीयमतिभिराकारादिङ्गिताद्वा संलक्ष्यते तदा तस्य संलक्षितस्य विदग्धं प्रति प्रकाशनं सूक्ष्मं नामालङ्कारः ।'(अ. स. २१७ पृ.) अभिप्रायानुसारेण स्वयमाविर्भूतो रूपादेरन्यथाभाव आकारः । अन्यत् कुर्वाणस्य शरीरतदवयवव्यापारस्थानत्यागभ्रूक्षेपादिलक्षणमिङ्गितम् । तत्राकारात् यथा वक्त्रस्यन्दीत्यादि । प्रबन्धा अनुबन्धाः । स्वेदकृतकुङ्कुमभेदरूपभेदेनाकारेण संलक्षितं पुरुषायितं पाणौ पुरुषोचितखड्गलेखनेन प्रकाशितम् । विटसम्बन्धिनश्चेङ्गितस्य प्रतीयमानता ज्ञात्वेत्यादिना स्फुटैव ।

### दीपिका

कुतोऽपि कुतश्चित् सूक्ष्मोऽपीत्यपिना विस्मयद्योतकेन चमत्करणोपायत्वसूचनम् । केनचिद् धर्मेण लोकोत्तरेण ज्ञाने आकाराज्जीवनयोनिप्रयत्नजन्यात् स्वेदरोमाञ्चादेः । इङ्गितादिच्छापूर्वप्रयत्नजन्यानुष्ठानान्निमीलनादेः । तीक्ष्णमतिभिश्चिन्त्यः तीक्ष्णमतिभिः सूक्ष्ममतिभिश्चिन्तया गम्यः ।

### साहित्यचूडामणिः

सूक्ष्ममाह—कुतोऽपीति । लक्षणस्योपकरममुच्यते—धर्मेणेति । प्रकाशनस्य ।

सूक्ष्मशब्दार्थमाह—तीक्ष्णेति । तीक्ष्णमतिभिः कुशग्रीयबुद्धिभिः संलक्ष्यः स्थूलबुद्धिभिरसंलक्ष्यश्च यत् सूत्रम् "संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्मम् ।" [अलङ्कारसू० ७६] इति ।

वक्त्रेति ।

अत्र वदनस्वेदप्रयुक्तकण्ठकुङ्कुमभेदलक्षणामाकृतिमवलोक्य सख्या परिज्ञातं पुरुषायितं पुरुषैकयोग्यखड्गलेखनलक्षणेन धर्मेण प्रकाशितमित्याह—आकृतिमिति ।

### सम्प्रदायप्रकाशिनी

कुतोऽपीति । आकारादिना लक्षितः सूक्ष्मोऽर्थो निपुणक्रियात्मना केनचिद् धर्मेण यत्रान्यस्मै बोध्यते तत् सूक्ष्मम् ।

व्याचष्टे—कुतोऽपीत्यादि । अबुद्धिकारिताः स्तम्भस्वेदादयः सात्त्विकभावाः आकारः । बुद्धिकारिताश्चक्षुर्विकाराः इङ्गितम् । उक्तं हि मया भरतसंग्रहे—

"तारकापुटदृष्ट्यादेर्विकारानिङ्गितं विदुः ।
आकाराः सात्त्विका भावाः पूर्वे बुद्ध्या परेऽन्यथा ॥"

इति ।

वक्त्रस्यन्दीति । अत्र स्वेदेनाकारेण संलक्षितं पुरुषायितं पुरुषहस्तोचितखड्गलेखेन प्रकाशितम् ।

### मधुमती

अत्रेति । कथं असिलतालेखनेन पुरुषायिताभिव्यक्तिः ? अत आह—पुंसामेवेति । सूक्ष्म इत्यस्यार्थः तीक्ष्णेत्यादिना उक्तः ।आकारात् सूक्ष्मत्वोन्नयनम् । इङ्गितात् तदुन्नयनमाह—

### विस्तारिका

कुत इति । धर्मेण स्मारकेणेति शेषः । आकारः संस्थानविशेषः । इङ्गितं नेत्रभङ्ग्यादिरूपक्रियाविशेषः ।

वक्त्रेति । पुरुषायिते श्रमाधिक्यात् स्वेदस्यौत्कट्यम् ।

यद्यप्यत्र स्वेदविशेषपुरुषायितयोः साध्यसाधनयोरेकधर्मिगतत्वेनोपादानादनुमानमेवालङ्कारो भवितुमर्हति, ततापि स्ववैदग्ध्यप्रतिपिपादयिषयाऽन्यस्मै सूक्ष्मार्थप्रकाशनमुखेनैव चमत्कार इति स एवालङ्कारः । अनुमानं तु तदनुग्राहकमित्यन्यदेतत् । तदिदमुक्तं कुतोऽपि लक्षित इति ।

ननु कथं खड्गलेखालिखनेन पुरुषायिताभिव्यक्तिरित्यत आह—पुंसामेवेति ।

नन्विदमनुमानमेव, खड्गस्य पुंस्त्वव्याप्यत्वादिति चेत्, भ्रान्तोऽसि; खड्गस्य व्याप्यत्वेऽपि खड्गलताया अव्याप्यत्वात् । प्रकृते च तस्या एव स्मारकत्वेन विवक्षितत्वात् । व्याप्तिं विना साक्षाद् बन्धाभावेन कथं स्मारकत्वमिति चेत्, खड्गसमानाकारस्वरूपपरम्परासम्बन्धेनैव स्मारकत्वात् । किञ्च विज्ञापयितृवैदग्ध्यमुखेनैवात्र चमत्कारः, अनुमाने तु व्याप्त्यादिमुखेनैवेति विशेषः ।

### सारबोधिनी

कुत इति । धर्मेम स्मारकेणेति । शेषः । आकारः संस्थानविशेषः । इङ्गितं नेत्रभङ्ग्यादिरूपक्रियाविशेषः ।

तत्राकारमुदाहरति वक्रेति । वक्रस्यन्दिस्वेदात् कण्ठस्थकुङ्कमे भेदः पुरुषायितपरं भवति । अत्र स्वेदभिन्नं कुङ्कमे पुरुषायितमुन्नीतम् । पाणिखड्गाकारेण प्रकाशितमित्याह अत्रेति ।

### काव्यप्रदीपः

**कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥ ३६ ॥**

धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ।

कुतोऽपीति आकारादिङ्गिताद्वा सूक्ष्मस्तीक्ष्णमतिसंवेद्यः । तत्र रूपादेरन्यथात्वमाकारः । ततो यथा—

**'वक्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे।**
**पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या पाणौ स्मित्वा खड्गलेखां लिलेख ॥'**

अत्र कण्ठकुङ्कुमभेदलक्षणेनाकारेण लक्षितं पुरुषायितं संख्या सखीहस्ते खड्गलेखालेखनेन वैदग्ध्याद-भिव्यञ्जितम् । पुंसामेव पाणौ कृपाणस्य योग्यत्वात् ।

### काव्यप्रकाशखण्डनम्

**कुतोऽप्यलक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश(श्य) ते॥ (का. १२२, उ०)**

**धर्मेण केनचिद् यत्र तत्सूक्ष्मं प्रविचक्षतेदे। (का. १२३, पू०)**

कुतोऽपि आकारादिङ्गिताद् वा । सूक्ष्मः तीक्ष्णमतिवेद्यः । यथा—

**वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कामि(पि) कण्ठे।**
**पुंस्त्वं तन्व्या व्यञ्जयन्ती व्यस्याः स्मित्वा पाणौ खड्गलेखां लिलेख ॥**

कापि व्यस्या सखी तन्व्याः नायिकायाः पुंस्त्वं पौरुषं व्यञ्जयन्ती तस्याः पाणौ हस्ते खड्गलेखां खड्गाकृतिं लिलेख । किं कृत्वा ? कण्ठे कण्ठस्थले भिन्नं च्युतं कुङ्कुमं दृष्ट्वा । कैः ? वक्त्राद् मुखात् स्यन्दिभिः स्वेदबिन्दूनां प्रबन्धैः समूहैरित्यर्थः । अत्राकृतिमालोक्य कयापि वितर्किते पुरुषायिते असिलेखालेखनेन वैदग्ध्यादभिव्यक्ति-मुपनीते पुंसामेव कृपाणपाणितायोग्यत्वात् ।

सूक्ष्मालङ्कारमाह—कुतोऽपीति । केनचिद्धर्मेणान्यस्मै प्रकाश्यत इत्यन्वयः । 'आकारो' धर्मः, 'इङ्गितं' क्रिया ।

### आदर्शः

वक्त्रस्यन्दीति । काऽपि व्यस्या कस्याश्चित् कण्ठे वक्त्रस्यन्दीत्यादिभिर्भिन्नं रेखारूपकृतविभागं कुङ्कुमं दृष्ट्वा तस्याः पुंस्त्वं पुरुषायितत्वं व्यञ्जयन्ती प्रकाशयन्तीस्मित्वा तस्या एव पाणौ खड्गलेखां लिलेखेत्यन्वयः । लिखनं व्यञ्जकम् । पुरुषायित एव वक्त्रगलितस्वेदानां कण्ठगमनसम्भवो न तूत्तानसुप्ताया इत्यतः सूक्ष्ममपि पुरुषायितत्वं लक्षितम्, पुरुषधर्मखड्गलेखया प्रकाशितम् । कुङ्कुभेदोऽऽत्राकारः ।

### सुधासागरः

कुतोऽपीत्यादि । सहृदयैकवेद्य इति यावत् तत्र रूपादेरन्यथात्वमाकारः ।

ततो यथा—वक्त्रेति ।

अयमर्थः—काऽपि विदग्धा । वक्त्रात्स्यन्दिनः स्वेदस्य बिन्दूनां प्रबन्धैः अर्थान्नायिकामुखात्स्रुतप्रस्वेद-ततिभिः कण्ठे गले कुङ्कुमं भिन्नं दृष्ट्वा तन्व्यास्तन्नायिकायाः पुंस्त्वमुपर्यारोहणं व्यञ्जयन्ती सूचयन्ती व्यस्या पाणौ सखीहस्ते स्मित्वा विहस्य खड्गलेखां लिलेख। अङ्गुल्यैव खड्गाकारैः। रेखां चकारेति। शालिनी छन्दः। 'शालिन्युक्ता म्तौ तगौ गोब्धिलोकैः' इति लक्षणात् ।

संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥ ५३१ ॥

अत्र जिज्ञासितः संकेतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः॥

---

### सङ्केतः

सङ्केतेति। सङ्केतकाले ज्ञातव्ये मनः यस्य स तथा।

इङ्गितमात्रेण विटगतेन भ्रूक्षेपादिरूपेण। इङ्गितम्। साभिप्राया चेष्टा॥ इति सूक्ष्मम्।

### बालचित्तानुरञ्जनी

अत्रैवोदाहरणान्तरमाह सङ्केतेति। विदग्धया कयाचित् सङ्केतकाले ज्ञातव्ये मनो यस्य विकसद्भ्यां नेत्राभ्यामर्पितं आकूतं येन तादृशं विटं ज्ञात्वा लीलापद्मं निमीलितम्। अत्र विटस्य कस्यचित् संकेतजिज्ञासायां तदीयभ्रूभङ्गादिना इङ्गितोपलक्ष्यप्रगल्भया कयाचित् सायं समयोचितेन लीलाकमलनिमीलनेन सङ्केतसमयोऽभिव्यज्यत इत्याह अत्रेति।

### काव्यादर्शः

'संकेते'ति। 'संकेतकाले ज्ञातव्ये मनो यस्य स तथा।' अत्र संकेतकालाभिप्रायो विटसंबन्धिना भ्रूक्षेपादिना इङ्गितेन लक्षितो रजनिकालभाविना लीलापद्मनिमीलनेन प्रकाशितः। साभिप्रायः चेष्टा इङ्गितं, निरभिप्राया तु आकारः।

### विवेकः

लीलापद्मनिमीलनरूपात् सामर्थ्यादाक्षिप्तस्य रात्रावागन्तव्यं त्वयेति प्रतीयमानस्यापि संकेतकालमनसं हसन्नेत्रार्पितकूतमित्युक्त्यैव निवेदितत्वान्न ध्वनिव्यवहारः। उभाभ्यां यथा (का. आ. २/२६३) मदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्धत। उद्दामरागपिशुनाच्छाया काऽपि मुखाम्बुजे॥ इत्यत्र 'मदर्पितदृश' इतीङ्गितं, 'छाया काऽपी'त्याकारः। इहाभिप्रायानुकूलप्रवृत्तिविशेषो भाव इति भावाख्यमलङ्कारान्तरं केचिदाहुः। (रु. का. अ.) तस्य च वाच्यप्रतीयमानरूपतया द्विभेदेऽस्मिन्नेवालङ्कारेऽन्तर्भावो द्रष्टव्यः।

### दीपिका

आकारोदाहृतिमुक्त्वेङ्गितोदाहरणमाह—तथा चेति। उपभुक्तक्षीणसम्पत्तिर्नागरानुचरो विटः। ईषदापरितोषात् फुल्लेन नेत्रेणार्पितं दत्तं प्रकाशितमिति यावत्, आकूतं रहस्यं येनेति विटविशेषणम्। ये तु निमीलनक्रि-

याविशेषणमित्याहुस्तेषामिङ्गितमात्रेण विदित इत्युक्तग्रन्थानुपपत्तेः । इङ्गितानुपादाने ततोऽन्यतो वेति सन्देहाज्जिज्ञासित इत्यतः पूर्वं विटेनेति शेषः । लीलया वैदग्ध्यव्यञ्जकचेष्टया प्रतिपादितो बोधितः ।

### साहित्यचूडामणिः

सङ्केतेति । हसद् विकसत् । धूर्तस्य सङ्केतवेलाजिज्ञासां तदीयेन भ्रूभङ्गादिनेङ्गितेनोपलक्ष्य प्रगल्भया सायंसमयोचितेन लीलाकमलनिमीलनेन सङ्केतसमयोऽभिव्यज्यत इत्याह—जिज्ञासित इति। इङ्गितमात्रेणेति उदाहरणवैलक्षण्योक्तिः । लीलयेति । वैदग्धवत्तया ।

### सम्प्रदायप्रकाशिनी

सङ्केतेति । अत्र विटस्य नेत्रहासेनेङ्गितेन विदितस्तज्जिज्ञासितः सङ्केतकालः पद्मनिमीलनेन सन्ध्येत्यावेदितः ।

### मधुमती

सङ्केतेति । इति सूक्ष्मम् ।

### विस्तारिका

सङ्केतेति । ईषदित्यर्पणक्रियाविशेषणम् । अत्रेङ्गितात् सूक्ष्मोन्नयनं पूर्वत्राकरोदित्यर्थः ।

### सारबोधिनी

इङ्गितमुदाहरति सङ्केतेति । ईषदित्यर्पणक्रियाविशेषणम् । ईषन्नेत्रार्पिताकूतमिति विटमुत्यस्य विशेषणम् ।

### काव्यप्रदीपः

चेष्टाविशेष इङ्गितम् । तेन यथा—

**'संकेतकालमनसं विटं ज्ञात्वा विदग्धया।**
**हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥'**

अत्र नेत्रोत्साहरूपेणेङ्गितेन लक्षितः कामिनः संकेतकालभिलाषः कामिन्या निशासूचकेन पद्मसंमीलनेन लीलया प्रकाशितः ।

### आदर्शः

इङ्गितेन लक्षितत्वे त्वाह—यथा वा—सङ्केतेति । सङ्केतकाले मनो यस्य तम् । सङ्केतकालमत्र तज्जिज्ञासापरम् । ज्ञात्वेति हस्तसङ्केतादितदिङ्गितादिति शेषः । विटं धूर्त्तमुपनायकम् । हसन्नेत्रेति—हसता नेत्रेण अर्पिताभिप्रायकं यथा स्यात्तथा निमीलितमित्यर्थः । हर्षसूचकविकाश एव नेत्रस्य हासः । अर्पणमत्र ज्ञापनमित्यर्थः । इङ्गितमात्रेणेति, अर्थवशलभ्येनेति शेषः इङ्गितस्याशब्दत्वात् ।

## सुधासागरः

अत्राकृतिमित्यादि । अयम्भावः—विपरीतसुरतप्रसक्तायाः वक्त्रस्यन्दिस्वेदात् कण्ठस्थकुङ्कुमभेदः परं भवतीति कण्ठकुङ्कुमभेदलक्षणेनाकारेण लक्षितं तीक्ष्णमतिवेद्यतया सूक्ष्मं पुरुषायितं संख्या सखीहस्ते खड्गलेखालिखनेन वैदग्ध्यादभिव्यञ्जितम् । पुंसामेव पाणौ कृपाणस्य योग्यत्वादिति । चेष्टाविशेषः इङ्गितम्, तेन यथा—यथा वा संकेत'-ति ।

विदग्धया चतुरया कयाचित्, नेत्रेऽर्पितः एकस्मिन्नयने किञ्चिन्निमीलने कृतः आकूतोऽभिप्रायसूचको व्यापारविशेषो येन तादृशं विटमुपपतिं सङ्केतकालमनसं ज्ञात्वा लीलापद्मं क्रीडाकमलं हस्ते निमीलितपरहस्तेनाच्छादितमित्यर्थः । 'हस्ते' इत्यत्र ईषदिति पाठः । क्वचित् हसन्निति पाठः, सोऽपि सङ्केत एव ।

अत्रेत्यादि । अत्र नेत्रनिमीलनरूपेणेङ्गितेन लक्षितः कामिनः सङ्केतकालाभिलाषः कामिन्या निशासूचकेन कमलसम्मीलनेन लीलया प्रकाशितः । केचित्तु अत्रेङ्गितस्य नेत्रोत्साहरूपतामाहुः ।

**(सू० १९०) उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥ १२३ ॥**

**परः पर्यन्तभागः, अवधिर्यस्य धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः ।**

**उदाहरणम्—**

**राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम् ।**
**सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥ ५३२ ॥**

---

**सङ्केतः**

राज्य इति । न्याय्य एवार्थे सारशब्दः क्लीबः, अन्यत्र तु चिन्त्यः । अत्र अन्यापोहकृतं सारत्वमिति परिसंख्यैवेत्येके । तदसत् । सारत्वे हि अत्र विश्रान्तिः, न त्वन्यव्यपोहे । अत्र वराङ्गनारूपपर्यन्तभागः अवधिः । इति सारः ।

**बालचित्तानुरञ्जनी**

अत्रेति । सारालङ्कारं लक्षयपि उत्तरेति । पूर्वपूर्वापेक्षया उत्तरोत्तरस्य प्रकर्षकल्पनं सार इत्यर्थः । उदाहरति राज्यं इति । राज्ये भूमिः सारा, भूमौ पुरं, पुरे सौधं, सौधे तल्पं, तल्पे अनङ्गसर्वस्वं वराङ्गना । अत्र राज्यापेक्षया भूमेः साधुत्वं तदपेक्षया पुरस्येत्यादिपरिपाट्या वराङ्गनायामुत्कर्षो विश्राम्यति ।

**काव्यादर्शः**

पूर्वपूर्वापेक्षया उत्तरोत्तरस्य उत्कृष्टत्वनिबन्धनं सारः । 'राज्ये' इति । अत्र 'राज्यापेक्षया वसुधायाः सारत्वं, वसुधापेक्षया तदेकदेशस्य गृहस्य' इत्यादि योज्यम् । उत्कर्षे सारस्य पुंसि स्मरन्ति कवयस्तु नपुंसकेऽपीति ।

**विवेकः**

विभज्यमानस्य स्वरूपतया सूक्ष्मत्वात्तदनन्तरं सारमाह—उत्तरोत्तरमिति । पूर्वपूर्वापेक्षया क्रमेणोत्तरोत्तरस्योत्कृष्टत्वे निरतिशयसर्वस्वायमानोत्कर्षशाली पर्यन्तविश्रान्तः पदार्थः सार इत्यन्वर्थं नाम । राज्य इत्यादि । सप्ताङ्गेऽपि राज्ये 'राष्ट्रात् सर्वं प्रवर्तते' (का. नी. सा. ४/५४) इत्युक्तत्वात् । तदितरापेक्षया स्वामिनं प्रति वसुधायाः सारत्वम् । एवं वसुधाऽपेक्षया पुरस्येत्यादिकमङ्गनाप्रकर्षपर्यवसायि । गुणपताकाप्रश्ने मूलदेवोऽप्याह 'सारं महिलारत्नं स्व' मिति (कु. म.) । अत एवाङ्गनाविशेषणमनङ्गसर्वस्वमिति ।

**दीपिका**

पर्यन्तभागः पद्यस्य गद्यखण्डस्य वा ( ?) गुणक्रियाक्रमिकया सहृदयहृदयप्रकर्षतयोत्कर्षस्य गुणक्रियात्मनः । विश्रान्तेः स्वात्मना स्थिरीभावादित्यर्थः । अनैवंभूतस्थाने त्वलङ्कृत्यैव पर्याप्नोतीति भावः ।

## साहित्यचूडामणिः

सारमाह—उत्तरोत्तरमिति ।

विश्रान्तेरिति । आकाङ्क्षायाः पर्यवसानात् । यत् सूत्रम् "उत्तरोत्तरमुत्कर्षः सारः" (अलङ्कार सू०-५७) इति । पूर्वपूर्वापेक्षयोत्तरमुत्कर्षः सार इति यावत् ।

## सम्प्रदायप्रकाशिनी

उत्तरोत्तरमिति । उत्तरोत्तरं धारावाहिकया पर्यन्तनिवेशितप्रतीतिविश्रान्त्यास्पदं प्रकर्षः सारः ।

राज्ये सारमिति । अत्र राज्यवसुधादिषूत्तरोत्तरधारावाह्युत्कर्षोऽङ्गनायां विश्रान्तः ।

## मधुमती

धाराधिरोहितयेति । तथा च—यत्र उत्तरोत्तरं प्रतीतः प्रकर्षः वर्णनीयावधिः तत्रायमित्यर्थः ।

राज्य इति । अत्र कथितपदत्वं न दोषः । प्रत्युत तेनैव सर्वनाम्ना वा शब्देन निर्देशः युक्तः । अन्यथा उत्कर्षप्रतीतिस्थगनं स्यात् इत्यवधातव्यम् । इति सारः ।

## विस्तारिका

उत्तरोत्तरेति । उत्तरोत्तरं यत्रोत्कर्षः प्रतीयते स सारनामलङ्कार इत्यर्थः । स च परावधिवर्णनीयेच्छेव पर उदीच्योऽवधिर्विश्रान्तिस्थानं यस्येत्यर्थः । तदुक्तम्—धाराधिरोहितयेति ।

राज्य इति । राज्यपदं लोकविशिष्टभूमण्डलपरम् । अनङ्गसर्वस्वमिति । तद्व्यतिरेकेण गृहीतस्य किञ्चित्कार्याक्षमत्वादिति भावः ।

अत्रापि कथितपदत्वं न दोषः, प्रत्युत तेनैव सर्वनाम्ना वाऽनिर्देशे प्रतीतेः स्थगनं स्यादित्यवधेयम् ।

## सारबोधिनी

उत्तरोत्तरेति । उत्तरोत्तरं यत्रोत्कार्षः प्रतीयते स सारनामालङ्कार इत्यर्थः । स च परावधिः वर्णनीयं उदीच्योऽवधिरिति विश्रान्ति स्थानं यस्येत्यर्थः । तदुक्तं धारीधरोहितयेंति । राज्येति । तल्पं महार्हशय्या ।

## काव्यप्रदीपः

**उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥ ३७ ॥**

परावधिरिति परः पर्यन्तभागो गद्यस्य पद्यस्य वा अवधिरुत्कर्षसीमा यस्य । तेन पर्यन्तभागो यत्र सर्वोत्कृष्ट इत्यर्थः । धाराधिरोहितया तत्रैवोत्कर्षविश्रान्तेः ।

उदाहरणम्—

**'राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम् ।**
**सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥'**

### काव्यप्रकाशखण्डनम्

**उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः ॥ (का. १२३ उ०) ।**

परः पर्यन्तभागः अवधिरुत्कर्षसीमा यत्र धाराधिरोहिततया तत्रैव विश्रान्तेः यथा—

**भोजनभूषणमबलाकरकमलवर्त्तितं दुग्धम् ।**
**तदलङ्कारः कदलं तदलङ्कारः शर्करासारः ॥**

### आदर्शः

सारालङ्कारमाह—उत्तरोत्तरमिति । परावधिरिति, समापनमुत्तरोत्तरोत्कर्षेणेत्यर्थः । तथात्व एव वैचित्र्य-विशेषप्रतीतिरिति भावः । पर्यन्तभागः श्लोकस्येति बोध्यम् । राज्ये सारमिति । पुरादावपि सारमित्यस्यान्वयः । अनङ्गसर्वस्वं वराङ्गना सारमित्यन्वयः । सारशब्दो जहल्लिङ्गोऽजहल्लिङ्गश्च बोध्यः । 'तत् किं त्रिभुवनसारा तारा नाऽराधिता भवते'त्यागमे जहलिङ्गः; प्रकृते त्वजहल्लिङ्गः ।

नन्वत्र राज्य इत्यादिषु नाधिकरणसप्तमी, राज्याद्यधिकरणेषु वसुधादीनां किञ्चिदपेक्षया सारत्वाप्रतीतौ उत्तरोत्तरमुत्कर्षालाभात्; राज्य इत्यस्य वैयर्थ्यापत्तेश्च । वसुधाया राज्याधेयत्वाभावाच्च । नापि निर्द्धारणसप्तमी, राज्यवसुधादीनां सामान्यविशेषभावसत्व निर्द्धारणात् । पुरुषाणां क्षत्रियः शूरः इत्यादिषु सामान्यविशेषभावसत्त्व एव निर्द्धारणात् । उच्यते—राज्ये राज्ञत्वविषये यद् यद् वस्तु तत्र वसुधा सारम् । वसुधायां यद् यद् वस्तु तत्र पुरं सारमित्युक्तरीत्या सर्वत्र यद् यद् वस्तु तत्रेति पूरणाद् वसुधादिषु सर्वत्राधिकरणसप्तमी । पूरिते तत्रेत्यत्र तु निर्द्धारण सप्तमी .। राज्य इत्यत्र विषयसप्तमीति नानुपपत्तिः ।

### सुधासागरः

परः पर्यन्तेत्यादि । अयम्भावः-परावधिरिति । परः पर्यन्तभागो गद्यस्य पद्यस्य वाऽवधिरुत्कर्षसीमा यस्य । तेन पर्यन्तभागो यत्र सर्वोत्कृष्ट इत्यर्थः, धाराधिरोहितया तत्रैवोत्कर्षविश्रान्तेरिति । उदाहरणम्—राज्य इति । सारमित्यसय परत्राप्यन्वयः । स्फुटमन्यम् । आर्या छन्दः ।

**(सू० १९१) भिन्नदेशतयात्यन्तं कार्यकारणभूतयोः ।**

**युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसंगतिः ॥ १२४ ॥**

इह यद्देशं करणम् तद्देशमेव कार्यमुत्पद्यमानं दृष्टम् यथा धूमादि । यत्र तु हेतुफलरूपयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनम् सा तयोः स्वभावोत्पन्नपरस्परसंगतित्यागात् असंगतिः । उदाहरणम्—

**जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअं ।**

**दन्तक्खअं कवोले बहूए वेअणा सवत्तीर्ण ॥ ५३३ ॥**

एषा च विरोधबाधिनी न विरोधः, भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात् । विरोधे तु विरोधित्वम् एकाश्रयनिष्ठमनुक्तमपि पर्यवसितम् अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः तथा चैवं निदर्शितम् ॥

---

**सङ्केतः**

धूमादीति । न हि शैले अग्निः महानसे धूमं जनयति इति भावः । हेतुफलेति । हेतुः कारणम्, फलम् कार्यम् । अतिशयेनेति । अतिशयः कारणस्य कारणान्तराद्वैलक्षण्यम् । तच्चेदम्—यत्—भिन्नदेशे कार्यजननम्, युगपदिति । त्रुटितं धूमखण्डं भिन्ने काले किल कारणाद्भिन्नदेशतयाऽप्युपलभ्यते । तत् युगपद्ग्रहणात् निषिद्धम् । तयोः कार्यकारणयोः । स्वभावेति । अन्येषु कार्यकारणेषु एकदेशतया उत्पन्नायाः सङ्गतेः त्यागः ।

जस्सेअ इति । अत्र दन्तक्षतं कारणम्, वेदना कार्यम् । ते च भिन्नदेशस्थे ।

उत्सर्गस्येति । विरोधः सामान्यत्वात् उत्सर्गः । भिन्नाश्रयत्वेन उक्तत्वात् असङ्गतिर्विशेषः । तथा चैवमिति । विरोधालङ्कारेऽप्येकाधारत्वं विरोधस्योक्तमित्यर्थः । इत्यसङ्गतिः ।

**सङ्केत (रुय्यकः)**

अतिशयेनेति—अतिशयः कारणस्य कारणान्तरतो विलक्षणता ।

**यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम् ।**

**दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥**

**बालचित्तानुरञ्जनी**

असङ्गत्यलङ्कारं लक्षयति भिन्नेति। व्याकरोति इहेति।

उदाहरति जस्सेति। जस्सेअ यस्यैव व्रणो व्रणः। तस्सेअ तस्यैव, वेअणा वेदना, तं तत्, जणो जनः, अलिअं अलीकम्, भणइ भणति। बहुए वध्वाः, कवोले कपोले, दन्तक्खअ दन्तक्षतं, सवत्तीणं सपत्नीनाम्, वेअणा वेदना। अत्र व्रणनिमित्तसापत्न्यनिमित्तवेदनयोश्चाभेदाध्यवसायः। नन्वियं विरोधभेदेषु कश्चिदित्याशङ्क्याह एषेति। इयं विरोधस्यापवादिका न विरोध इत्यत्र हेतुमाह भिन्नेति। एकदेशत्वं भिन्नदेशत्वं च विरोधालङ्कारस्य विषय आसीत्, सामान्येनोक्तत्वात् असङ्गतिः विरोधस्यापवादिका। अतोऽस्या विरोधात् भेद इत्यर्थः।

**काव्यादर्शः**

यथा धूमादिति। न हि महानसदेशस्थो वह्निः पर्वतदेशस्थं धूमं जनयति। यदा त्वन्यदेशस्थं कारणमन्यदेशस्थं च कार्यं निबध्यते तदोचितसंगतेरभावाद् असंगतिरलंकारः। हेतुफलभूतयोरिति कारणकार्ययोः। अतिशयेनेति। अतिशयश्च कारणस्य कारणान्तरतो वैलक्षण्यं, तच्च एतदेव यद् भिन्नदेशे कार्यं तेन जन्यते।

ननु, त्रुटितधूमखण्डं भिन्नं काले किल कारणाद् भिन्नदेशतयाप्युपलभ्यते। सत्यम्, अत एव युगपद्ग्रहणम्। तयोः कारणकार्ययोः।

'जस्सेअ वणो इति। 'व्रणः'। अत्र वधूकपोलस्थं दन्तक्षतं कारणं सपत्नीस्था च वेदना कार्यमिति भिन्नदेशत्वम्। यथा वा—

**सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः**
**[सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्।**
**साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं**
**दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम्॥]**

—इत्यादौ अत्र अन्यदेशस्थं कारणमन्यदेशस्थं च कार्यम्। अत्र च बाल्यनिमित्तमप्रागल्भ्यमन्यदन्यच्च स्मरनिमित्तकमिति तयोरभेदाध्यवसायः। एवमन्यत्रापि।

ननु, कारणमन्यत्र कार्यमन्यत्रेति विरोधालंकार एवायमित्याशङ्क्याह—एषा चेति। उत्सर्गस्य विरोधस्य। तथा चैवमिति। विरोधालंकारेऽपि एकाधारत्वे उदाहृतमित्यर्थः।

**विवेकः**

भिन्ने "यद्देशमेव कारणं तद्देशमेव कार्यं दृष्टम्। न हि महानसस्थो वह्निः पर्वतदेशस्थं धूमं जनयति। यदा त्वन्यदेशस्थं कारणमन्यदेशस्थं च कार्यमुपनिबध्यते तदोचित्तसंगतिनिवृत्तेरलङ्कारः" (अ. स. १६४ पृ.)। तत्र हेतुः—केनाप्यतिशयेनेति, अतिशयः कारणस्य कारणान्तरतो विलक्षणता। जस्सेअ इत्यादि—यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम्। दन्तक्षतं कपोलं वध्वा वेदना सपत्नीनाम्॥ अत्र क्षतवेदनाऽन्या अन्या च तद्दर्शनादीर्ष्यासमुत्थेति तयोरभेदाध्यवसाय इत्यतिशयोक्तिर्मूलम्। एवं यथा—(अ. स. १६४ पृ:) सा बाला

वयमप्रगल्भवचसः सा स्त्री वयं कातराः सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्। सा क्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं दोषैरन्यसमाश्रयैरपटवो जाताः स्म इत्यद्भुतम्॥ इत्यत्र बाल्यनिमित्तक प्रगल्भवचनत्वमन्यत् अन्यच्च स्मरनिमित्तकमिति तयोरभेदाध्यवसाय इत्यतिशयोक्तिमूलत्वमवगन्तव्यम्। अस्याञ्च न विरोधमूलत्वम्, भिन्नाश्रयत्वेन तदपवादकत्वात् (का. अ. सू. वृ. द्र. ४/३/१२)। एवं विषमादिष्वपि द्रष्टव्यम्।

## दीपिका

भिन्नदेशतयेत्यस्यैवोपस्कारकम्, अत्यन्तमिति तु पृथगुपयुज्यमानार्थं भिन्नदेशताऽतिरिक्तप्रसक्त्यौपयिकार्थविरहाच्च। युगपदित्यपि स्वरूपानुवादमात्रं न तु लक्षणोपयोगि। यथोक्तं कार्यकारणयोर्भिन्नविषयत्वेऽसङ्गतिरिति। केनाप्यतिशयेनेति कमप्यतिशयमनुसन्धायेत्यर्थः। ख्यातिरित्यस्य विवृतिरवभासनमिति प्रतिपादनमित्यर्थः स्वभावोत्पन्नेति अनौपाधिकेत्यर्थः। सङ्गतित्यागादिति सामानाधिकरण्याख्यसम्बन्धाभावख्यापनशरीरत्वादित्यर्थः।

ननु कार्यकारणयोः भिन्नाधिकरणताविरोधात् तस्य चात्र भावाद् विरोधालङ्कृतिरेव न पृथगित्याह—एषा चेति। भिन्नाधारतयेत्युभयसम्बद्धत्वम्, तयोः सम्बन्धिनोर्भिन्नाधारतयैव प्रतिभासात्।

## दर्पणः

केनचिद्धर्मेण लोकोत्तरेण विज्ञानेनाकारात् स्वदरोमाञ्चादेः, इङ्गिताच्चक्षुरादिव्यापारात् विटलक्षणं [विलक्षणं]। यथा—

संभोगक्षीणसंपत्तिः धूर्तसहचरो विटः। सहता [हसता] विकासता नेत्रेण, अर्पितं प्रकाशं [प्रकाशितम्] आकूतं रहस्यं येनेति विटविशेषणं, लीलया वैदग्ध्यव्यञ्जकचेष्टया, प्रतिपादितः बोधितः, जस्सेति।

**यस्यैव [जनः] तस्यैव वेदना भवति तज्जनकोऽनीकम्।**
**दन्तक्षतं कपोले वध्वा वेदना सतीनामलीकमनृतम्॥**

धाराधिरोहिततया क्रमानुक्रमिकया भिन्नदेशतयेत्यस्यैवोपस्कारकम्। अत्यन्तं मिति युगपदिति स्वरूपानुवादमात्रम्, न तु लक्षणोपयोगि धूमादि।

अनुक्तमपीत्यतः पूर्वं विशिष्टस्येति शेषः। एवं च स्वरूपविरोधिनोः तदात्म्यनिबन्धः सहावस्थान [सहानवस्था] विरोधिनोर्वा सामानाधिकरण्यनिबन्धनो विरोधालङ्कृतेः शरीरम्। असङ्गतेस्तु तत्रावस्थितिनियतयोर्वैयधिकरण्यनिबन्धनं इति नानयोरेकरूप्यम्। नचैवमस्माभिरेवोक्तमित्याह तथाचेति। एवं निदर्शितं प्राच्यैरपीत्यर्थः कारणान्तरं कर्तुरनुष्ठितादन्यत् समाधीयते सम्यगाधीयते संपाद्यत इत्यर्थः। इह च काकतालीयन्यायेन कारणान्तरयोगः। समुच्चये तु खलेकपोतिकान्यायेन समकक्षतयेति भेदः।

## साहित्यचूडामणिः

असङ्गतिमाह—भिन्नेति। अत्यन्तमिति। न खलु धूमतद्ध्वजयोर्भूधराधित्यकायामूर्ध्वाधोभागव्यतिरेकादनेकदेश्यशङ्का।

यद्देशो हेतुः तद्देश एव न्यायोल्लङ्घनादस्या उत्थानमित्याह—यत्र त्विति। केनाप्यतिशयेन वर्णनीयार्थोत्कर्षपर्यवसायिना। युगपदवभासनंक्रमेणावभासने वस्तुनोः संगम्यमानत्वात्। निर्वक्ति—सेति। यत् सूत्रं "तयोर्भिन्नदेशत्वेऽसङ्गतिः" (अलङ्कारसू० ४५) इति। तद्वृत्तेन कार्यकारणयोः परामर्शः।

जस्सेति।

**यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम्।**
**दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम्॥ इति।**

व्रणनिमित्तायाः सापत्न्यनिमित्तायाश्च वेदनाया अभेदाध्यवसायः।

## सम्प्रदायप्रकाशिनी

भिन्नदेशतयेति। एकदेशनियतोरपि हेतुफलभूतयोर्धर्मयोर्वैलक्षण्याद् नातिशयेनात्यन्ताय (?) नानादेशतया युगपत्प्रतीतिर्मिथः स्वाभाविकसङ्गतित्यागादसङ्गतिः।

जस्सेएति

**यस्यैव व्रणास्तस्यैव वेदना इति यद् भणति तदलीकम्।**
**दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम्॥**

जन इति शेषः।

ननु विरोधोऽयमित्यत आह—एषां चेति। बाधेऽन्यत्वे च हेतुः—भिन्नेत्यादि। यत इहापवादात्मनि भिन्नाधारतयैव प्रतिभासः, अत उत्सर्गात्मनि विरोधे तद्विषयपरिहारेणैकाधार्यं पर्यवसितम्।

ऐकाधार्येणैवोदाहृतमित्याह—तथा चैवेति। कुरङ्गदृगाद्येकाश्रयत्वेनैव दर्शितम् 'अभिनवनलिनी' त्याद्युदाहरणेष्विति शेषः।

## मधुमती

भिन्नदेशेति। कार्यकारणभूतयोः द्वयोः अत्यन्तं भिन्नदेशतया युगपत् ख्यातिः यौगपद्यख्यातिः यत्र सैव असङ्गतिः इत्यर्थः। तदेतत् व्याचष्टे—इहेति। अत्र च असङ्गतत्वेनाभिधानं अभिमतम्। तेन कार्यकारणयौगपद्याभिधानरूपातिशयोक्तौ अतिव्याप्तिर्न भवतीति द्रष्टव्यम्।

जस्से अ इति। अत्र दन्तक्षतमित्यत्र 'दन्तव्रणं' इति पाठो युज्यते। ईदृशविषये तेनैव पदेन निर्देशस्य युक्तत्वात्। एवं च—लक्ष्मीस्वयंवरनाम्नि मत्कृते काव्ये जलविहारवर्णने यथा—

**'रागशान्तिमधरस्तदा दधौ**
**मुक्तिमाप सहसैव कुन्तलः।**
**रागिता नयनयोरुपागता**
**नीविका दृढमवाप बन्धनम्॥'**

इति। अत्र पद्येऽप्ययमेव। कार्यकारणभावोऽपि आकरोदाहरण इव प्रतीयमान एव। न च आकरोदाहरणे अपह्नुति:। प्रस्तुतनिषेधेऽपि अप्रस्तुताविधानात्। ननु विरोधस्योपलम्भात् विरोधालङ्कार एवात्र स्यात्? अत आह—एषा चेति। अत्र हेतुमाह—भिन्नेति। एवंच व्यधिकरणयो: यत्रैकाधिकरण्येन विरोधप्रतिसन्धानं स विरोध: यत्र तु समानाधिकरणयो: वैयधिकरण्येन विरोधप्रतिसन्धानं सा असङ्गति: इति द्रष्टव्यम्।

नन्वेवं—विषयभेदात् नोत्सर्गापवादभाव:, विषयैक्य एव तत्सद्भावात् इति चेन्न। विरोधस्य हि विरोधसामान्यमेव विषय:, असङ्गतेश्च कार्यकारणयो: भिन्नदेशतानिबन्धनो विरोधविशेष:। अत एव विशेषविषयया अनया सामान्यविषयविरोधबाध: इति द्रष्टव्यम्। इत्यसङ्गति:।

## विस्तारिका

भिन्नदेशतयेति। कार्यकारणभूतयोर्धर्मयोर्वृत्तिमतोरत्यन्तम्। भिन्नदेशतया युगपद्यत्र ख्याति:, सोऽसङ्गतिनामालङ्कार:।

एतद् व्याचष्टे—इहेति। अतिशयोक्ते: कार्यकारणयो: पौर्वापर्यविपर्ययो लक्षणम्; अस्यास्तु कार्यकारणवैयधिकरण्यमिति भेद:।

यस्य किञ्चित् प्रसङ्गे—

**यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम्।**
**दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम्॥**

अत्र कार्यकारणभाव: प्रतीयमान:।

**न वैषाऽपह्नुति:, प्रकृताप्रकृतोभयसाम्याभावात्।**

ननु विरोध एवार्थ: स्यादित्यत आह—एषा चेति। अत्र हेतुमाह—भिन्नेति। तथा च यत्र व्यधिकरणयोर्यत्रैकाधिकरण्यप्रतिसन्धानप्रयुक्तो विरोधबोध:, स विरोध:, यत्र तु समानाधिकरणयोर्वैयधिकरण्यप्रतिसन्धानप्रयुक्तो विरोध:, तत्रासङ्गतिरिति बोध्यम्।

नन्वेवं विषयभेदान्नोत्सर्गापवादभावो विषयैक्य एव तत्सम्भवादिति चेत्, न; विरोधाभासस्य हि विरोधसामान्यं विषय:। अस्माच्च कार्यकारणवैयधिकरण्यमात्रप्रयुक्तो विरोधविशेष इति समानविषयत्वस्योत्सर्गापवादभावस्य च सम्भवादिति। अत्र च व्रणक्षतपदयो: प्रक्रमभङ्गश्चिन्तनीय:।

## सारबोधनी

भिन्नदेशतयेति। कार्यकारणभूतयोर्धर्मयोरत्यन्तं भिन्नदेशतया युगपत यत्र ख्याति: सोऽसङ्गतिरिति नामालङ्कार:।

**यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम्।**
**दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम्॥**

ननु विरोध एवायं स्यादिति अत आह एषेति। हेतुमाह भिन्नेति। यत्र विरुद्धयोरैकाधिकरण्यप्रतिसंधानप्रयुक्तविरोधबोधः स विरोधः। यत्र समानाधिकरणयोर्वैयधिकरण्यप्रतिसंधानप्रयुक्तो विरोधस्तत्रासङ्गतिरिति बोध्यम्। ननु विषयभेदान्नोत्सर्गापवादभावो विषयैक्य एव तत्संभवादिति चेन्न। विरोधस्य विरोधसामान्यं विषयः, अस्याः कार्यकारणवैयधिकरण्यमात्रप्रयुक्तो विरोधविशेष इति समानविषयत्वस्योत्सर्गापवादभावस्य च संभवात्। अत्र व्रणक्षतपदयोरक्रमभङ्गश्चिन्त्यः।

**काव्यप्रदीपः**

**भिन्नदेशतयात्यन्तं कार्यकारणभूतयोः।**
**युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसंगतिः॥ ३८॥**

अत्रात्यन्तमिति देशभेदस्यैवोपकारकं न तु पृथगपि विवक्षितार्थम्। युगपदिति स्वरूपनिर्वचनम्। तेन कार्यकारणभूतयोर्धर्मयोर्यत्र भिन्नदेशतया संप्रतिपादनं सा असंगतिः। हेतुफलयोरग्निधूमाद्योरिव प्रसिद्धायाः समानदेशत्वरूपायाः संगतेः परित्यागात्। तथा प्रतिपादनं च कारणान्तरेभ्यो वैलक्षण्यात्। उदाहरणम्—

**'जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअम्।**
**दन्तक्खअं कवोले वहूएँ वेअणा सवत्तीणम्॥'**

स्पष्टम्। नन्वयं विरोधालंकार एव। हेतुफलयोर्वैयधिकरण्यस्य विरोधरूपत्वादिति चेत्, न। वैयधिकरण्यं ह्यसंगतिः। न च सैव विरोधः। किं तु तद्बोधिका। वैयधिकरण्येन तयोर्विरोधप्रतिभासनात्। नन्वेवमपि प्रतीयमानो विरोध एवालंकारोऽस्तु न तु तद्बोधिकासंगतिरपि साक्षात्। न च वाच्यं समानाधिकरण एव विरोधो विरोधालंकारनिर्वाहको न तु व्यधिकरणोऽपीति। लक्षणे सामान्यत एव विरोधस्योक्तत्वादिति। मैवम्। सामान्येनोक्तस्यापि विशेष एव पर्यवसानात्। अपवादविनिर्मुक्त एव देशे उत्सर्गः प्रवर्तते। विरोधालंकारस्य चासंगत्यलंकारोऽपवादक इति। व्यधिकरणविरोधस्यापवादक्रान्ततया तद्भिन्नविरोधे विरोधालंकार इति। अत एव तथैवोदाहृतम्।

**आदर्शः**

असङ्गत्यलङ्कारमाह—भिन्नदेशतयेति। कार्यकारमभूतयोर्धर्मयोरत्यन्तं भिन्नदेशतया स्थितत्वेन युगपत् ख्यातिः कथनम्। 'युगपत्ता च कथनमात्रे न तत्पत्तावित्यवधेयम्। अत्र एकत्रैव देशे अवच्छेदभेदेन भिन्नदेशताव्यवर्त्तनाय—अत्यन्तमिति। तेन 'दंशो भुजङ्गस्य पदेऽक्षि घूर्णते' इत्यत्र वास्तवकथने नातिव्याप्तिः, तत्र देशस्य शरीरस्यैकत्वात्। केनाप्यतिशयेनेति, व्यङ्ग्येन।

जस्स इति—

**'यस्य च व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम्।**
**दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम्॥ इति संस्कृतम्।**

वेदना इति द्वितीयबहुवचनान्तं भणतीत्यस्य कर्मपदम् इति । अत्र व्रणवेदनयोः कारणकार्ययोर्भिन्नदेशतया स्थितत्वेन युगपत् ख्यातिः । अत्र विरोधालङ्कारप्रसक्तिं वारयति एषेति । 'बाधिनी' बाधिका । भिन्नाश्रययोरेकाश्रयत्व इव एकाश्रययोर्भिन्नाश्रयत्वेऽपि विरोधप्रसक्तिरिति भावः । अनुक्तमपीति । एकाश्रयत्व एव विरोधालङ्कारो न भिन्नाश्रयत्वे इति विरोधलक्षणे अनुक्तमपीत्यर्थः । अपवाद इति । विशेषविधिरपवादः सामान्यविधिरुत्सर्गः । अयमेव गोवृषन्यायः । तथा चैवमिति, विरोधालङ्कारोदाहरणम् एकाधिकरम एव विरुद्धतयोदाहृतमित्यर्थः ।

## सुधासागरः

अत्रात्यन्तमिति देशभेदस्यैवोपकारकम्, न तु पृथगपि विवक्षितार्थम् । युगपदिति स्वरूपनिर्वचनम्, न तु व्यावर्तकम् । तेन कार्यकारणभूतयोर्धर्मयोर्यत्र भिन्नदेशतया सम्प्रतिपादनं साऽसङ्गतिः, हेतुफलयोरग्निमाद्योरिव प्रसिद्धयाः समानदेशत्वरूपायाः सङ्गतेः परित्यागात् । तथा प्रतिपादनं च कारणान्तरेभ्यो वैलक्षण्यात् । तदेतदाह—इहेति ।

जस्सेति । आर्या ।

**यस्यैव व्रणस्तस्यव वेदना भणति तज्जनोऽलीकम् ।**
**दन्तक्षतं कपोले वध्वाः वेदना सपत्नीनाम् ॥**

इति संस्कृतं स्पष्टम् । एषा चेत्यादि । अयमाशयः—नन्वत्र विरोधालङ्कार एव, हेतुफलयोर्वैयधिकरणस्य विरोधरूपत्वादिति चेत्, न । वैयधिकरण्यं ह्यसङ्गतिः । न च सैव विरोधः किन्तु तद्बोधिका, वैयधिकरण्येन तयोर्विरोधप्रतिभासनात् । नन्वेवमपि प्रतीयमानो विरोध एवालङ्कारोऽस्तु, न तु तद्बोधिकाऽसङ्गतिरपि साक्षात् । न च वाच्यं समानधिकरण एव विरोधो विरोधालङ्कारनिर्वाहको न तु व्यधिकरणोऽपीति, सामान्यत एव विरोधस्योक्तत्वादिति । मैवम् । सामान्येनोक्तस्यापि विशेषे एव पर्यवसानात् । अपवादविनिर्मुक्ते एव देशे उत्सर्गः प्रवर्तते । विरोधालङ्कारस्य चासङ्गत्यलङ्कारोऽपवादक इति व्यधिकरणविरोधस्यापवादक्रान्ततया तद्भिन्नविरोधे विरोधालङ्कार इति । अत एव तथैवोदाहृतमिति । अत एव रविभट्टाचार्यप्रभृतिभिरपि व्याख्यातम्—एषा चेति । अत्र हेतुमाह—भिन्नेति । एवञ्च व्यधिकरणयोर्यत्रैकाधिकरण्येन विरोधप्रतिसन्धानं स विरोधाभासः । यत्र तु समानाधिकरणयोर्वैयधिकरण्येन विरोधप्रतिसन्धानं साऽसङ्गतिरिति द्रष्टव्यम् । नन्वेवं विषयभेदान्नोत्सर्गापवादभावः, विषयैक्ये एव तत्सम्भवादिति चेत्, न । विरोधाभासस्य हि विरोधसामान्यमेव विषयोऽसङ्गतेश्च कार्यकारणयोर्भिन्नदेशतानिबन्धनो विरोधविशेषः । अत एव विशेष विषतया सामान्यविषयविरोधबाधः इति ।

(सू० १९२) **समाधिः सुकरं कार्यं कारणान्तरयोगतः।**

साधनान्तरोपकृतेन कर्त्रा यद् अक्लेशेन कार्यमारब्धं समीधीयते स समाधिर्नाम।

उदाहरणम्—

**मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः।**
**उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्॥ ५३४॥**

---

**सङ्केतः**

साधनान्तरेति। कारणान्तरकृतोपकारेण सम्यगाधानं समाधिः।

मानमिति। अत्र मानापनयनं कार्यम्। पादपातः हेतुः। घनगर्जितं हेत्वन्तरम्। यस्मात् अक्लेशेन कार्य सुकरं स्यादित्यर्थः। इति समाधिः।

**बालचित्तानुरञ्जनी**

समाधिं लक्षयति समाधिरिति। हेत्वन्तरानुदये सौकर्याभावः, तदुदये तु कर्तुः कार्यं प्रति सौकर्यमित्याह साधनान्तरेति। उदाहरति मानमिति। अस्या मानं निरावर्तुं पादयोः पतिष्यतः मे उपकाराय दिष्ट्या इदं घनगर्जितं उदीर्णम्। अत्रापरार्द्धेन यूना माननिराकरणलक्षणेन कार्येण पादावनतमात्रात् अदैवयोगात् घनगर्जितोदयस्तत्सौकर्याय कल्पते[?]।

**काव्यादर्शः**

साधनान्तरेति। कारणान्तरेण कृतोपकारेणेत्यर्थः। कर्तुः कार्यं कुर्वतः कार्यस्य कारणान्तरसंबन्धाद् यत् सुकरत्वं स सम्यगाधानात् समाधिः। 'मानम्' इति। अत्र माननिराकरणे कार्ये पादपतनं कारणम्। तस्य सौकर्यार्थं कारणान्तरस्य घनगर्जितस्य योगः।

**विवेकः**

समाधिरिति—असंगतिवैपरीत्यादत्र निर्देशः। "केनचिदारब्धस्य कार्यस्य सहकारिकारणान्तरसम्बन्धात् सुकरत्वं सम्यगाधानात् समाधिः।" (अ. स. २०५ पृ.) 'सहकार्यन्तरसम्बन्धश्च विवक्षितपूर्वोऽन्यथा वेति द्विविधः। अत्रापि प्रत्येकं दैवादैवकृतत्वेनायं चतुर्धा' (स. क. अ. ३०७ पृ.)। मानमित्यादि—दिष्ट्येत्यानन्दोक्तौ। उदीर्णमुद्गतं 'प्रणामान्तो मानं इति माननिराकरणे कार्ये प्रणतिरुपायः। तत्सौकर्यार्थं घनगर्जितस्य कारणान्तरस्य प्रक्षेपः। सौकर्यं चोपकारायेत्यादिना प्रकाशितं, तदियं दैवकृता सहायसम्पत्तिः। 'अविवक्षितपूर्वैव दैवकृता यथा (कि. अ.

२/५४) अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रजम् । स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥ अत्र भीमानुशासनोपक्रमकाल एव व्यासागमनस्य तदुपकाराय प्रक्षेपः'(स. क. आ. ३०७ पृ.) । एव चिन्ततपूर्वोऽपि द्रष्टव्यः ।

## दीपिका

समाधिरिति । असङ्गतिवैपरीत्यादत्र निर्देशः । केनचिदारब्धस्य कार्यस्य सहकारिकारणान्तरसम्बन्धात् सुकरत्वं सम्यगाधानात् समाधिः । सहकार्यन्तर सम्बन्धश्च विवक्षितपूर्वोऽन्यथा वेति द्विविधः । अत्रापि प्रत्येकं दैवादैवकृतत्वेनायं चतुर्धा । मानमित्यादि । दिष्ट्येत्यानन्दोक्तौ । उदीर्णमुद्गतं 'प्रणामान्तो मानः' इति माननिराकरणे कार्ये प्रणतिरुपायः । तत्सौकर्यार्थं घनगर्जितस्य कारणान्तरस्य प्रक्षेपः । सौकर्यं चोपकारायेत्यादिना प्रकाशितम्, तदियं दैवकृता सहायसम्पत्तिः । अविवक्षितपूर्वैव दैवकृता यथा—

**"अनुशासतमित्यनाकुलं नयवर्त्माकुलमर्जुनाग्रज ।**
**स्वयमर्थ इवाभिवाञ्छितस्तमभीयाय पराशरात्मजः ॥"**

अत्र भीमानुशासनोपक्रमकाल एव व्यासागमनस्य तदुपकाराय प्रक्षेपः । एवं चिन्तितपूर्वोऽपि द्रष्टव्यः ।

## साहित्यचूडामणिः

समाधिरिति ।

हेत्वन्तरानुदये सौकर्याभावः, तदुदये तु कर्तुः कार्यं प्रति सौकर्यमित्याह—साधनान्तरेति । आधीयते समाप्यते । आदधातिः करणे, समुपसर्गश्च सौकर्य इत्याकूतेनाह—अक्लेशेनेति । यत् सूत्रं "करणान्तरयोगात् कार्यसुकरत्वं समाधिः"(अलङ्कारसू० ६८) इति ।

(मानमिति) । अत्रापराद्धेन यूना माननिराकरणलक्षणे कार्ये पादपतनमात्रादारब्धे दैवयोगाद् घनगर्जित-प्रक्षेपः तत्सौकर्यायोपकल्पते यद् दिष्ट्येत्यनेन स्पष्टीक्रियते ।

## सम्प्रदायप्रकाशिनी

समाधिरिति । कारणान्तरं साधानान्तरम् । सुकरस्य सतः सम्यगाधानं समाधिः । कार्याक्षिप्तं कर्तारं शब्देनोपादाय व्याचष्टे—साधनान्तरेत्यादि ।

मानमिति । गर्जितोपकृतस्य निपततो मानः सुनिराकरः ।

## मधुमती

समाधिरिति । 'तत्सिद्धिहेतोरेकस्मिन्' इतिलक्षिते (कारण) समुच्चये अतिव्याप्तिः । तत्र एककार्यानु-कूलतया कारणानां अभिधानम्, अत्र तु कारणोपनिपातेन कार्यस्य सुकरत्वाभिधानमिति भेदात् । इति समाधिः ।

## विस्तारिका

समाधिरिति । यत्र कारणान्तरसम्बन्धात् कार्यं सुकरम्, तत्र समाधिनामालङ्कारः ।

व्याचष्टे—साधानान्तरेति। न च तत्सिद्धिहेतावित्यादिलक्षितसमुच्चयसङ्कर इति वाच्यम्, कारणानां मिलन एव तात्पर्यात् अत्र तु कार्यस्य सुकरत्व एव तात्पर्यमिति भेदात्।

किञ्च, तत्र संयोगादिविवक्षा, अत्र तु न तथेति दिक्।

### सारबोधिनी

समाध्यलङ्कारमाह समाधिरिति। सुकरं सुकरत्वेन विवक्षितमिति। न च तत्सिद्धिहेतावित्यादिलक्षितसमुच्चयसङ्कर इति वाच्यम्। तत्र कारणानामागम एव तात्पर्यम् अत्र तु कार्यस्य सुकरत्व च तात्पर्यमिति भेदः। मानमिति। उदीर्ण उद्भूतम्।

### काव्यप्रदीपः

**समाधिः सुकरं कार्य कारणान्तरयोगतः।**

इष्टात्कारणादन्येन कारणेनोपकृतः कर्ता यद्क्लेशेन कार्य करोति स समाधिः। सम्यगाधिः समाधिरिति व्युत्पत्तेः। उदाहरणम्—

**'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः।**
**उपाकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्॥'**

तयोस्तुल्यकक्षताविरहान्न समुच्चयालंकारान्तर्भावः।

### काव्यप्रकाशखण्डनम्

समाधिः सुकरं कर्म कारणान्तरयोगतः। (का. १२५, पू०)

सुकरं सुकरत्वेन विब्रक्षितमित्यर्थः। [प० ५६,१' यथा—

**मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः।**
**उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्॥**

### आदर्शः

समाध्यलङ्कारमाह—समाधिरिति। 'तत्सिद्धिहेतावेकस्मिन्नि'त्याद्युक्तसमुच्चयालङ्कारेऽपि कारणान्तरयोगोऽस्ति। अत्र तु कार्यस्य सुकरत्वं विशेषः।

मानमस्या इति। अत्रोद्दीपकेन घनगर्जितेन मानभङ्गः सुकरः।

### सुधासागरः

साधनान्तरेत्यादि। इष्टात्कारणादन्येन कारणेनोपकृतः कर्ता यदक्लेशेन कार्यं करोति स समाधिः। सम्यगाधिः समाधिरिति व्युत्पत्तेरित्यर्थः। उदाहरणम्—मानेति। उदीर्णमुद्भूतम्। स्फुटमन्यत्।

**(सू० १९३) समं योग्यतया योगो यदि संभावितः क्वचित्॥ १२५॥**

इदमनयोः श्लाघ्यमिति योग्यतया संबन्धस्य नियतविषयमध्यवसानं चेत्तदा समम् तत् सद्योगेऽसद्योगे च। उदाहरणम्—

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य।
जातं दैवात्सदृशमनयोः संगतं यत् तदेत-
च्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम्॥ ५३५॥

---

**सङ्केतः**

योग्यतयेति। वरस्य वरं योग्यम्, हीनस्य न हीनमेव योग्यम्। इति योग्यता।

धातुरिति। अत्र वरं वरेण सङ्घटितम्।

**बालचित्तानुरञ्जनी**

सममिति। व्याकरोति इदमनयोरिति। इदं संबन्धिरूपं वस्तु। उत्तमविषयं समं, अधमविषयं चेति समं द्विविधम्। तत्राद्यमुदाहरति धातुरिति। एषा मृगाक्षी धातुः शिल्पातिशयनिकषस्थानम्। अनुपमे रूपे अयं देवोऽपि स्मरस्य दत्तपत्रः। अनयोः दैवात् यत् सदृशं सङ्गतं मेलनं तदेतत् अधुना शृङ्गारस्य एकातपत्रं राज्यमुपनतम्।

**काव्यादर्शः**

योग्यतयेति। उत्कृष्टस्य उत्कृष्टं निकृष्टस्य निकृष्टं योग्यमिति योग्यता।

इदमिति संगतम्। योग्यतया सममिति व्यपदेशः।

'धातुः' इति। अत्र उचितस्य नायकयुगलस्य उचितं संघटनम्। यथा वेति निकृष्टविषयत्वेन।

**विवेकः**

सममित्यन्वर्थं नाम। सम्यक् साम्यादस्य प्रस्तावः। योग्यतास्वरूपमाह—इदमनयोः श्लाघ्यमिति। एतच्चाभिरूपानभिरूपविषयत्वेन द्विविधमिति क्रमेणोदाहरणमाह धातुरित्यादि—अत्राभिरूपस्यैव नायकयुगलस्य संघटनमुचितमुपात्तम्।

## दीपिका

सममित्यन्वर्थं नाम। सम्यक् साम्यादस्य प्रस्तावः। योग्यतास्वरूपमाह—इदमनयोः श्लाघ्यमिति। एतच्चाभिरूपानभिरूपविषयत्वेन द्विविधमिति क्रमेणोदाहरणमाह—धातुरित्यादि। अत्राभिरूपस्यैव नायकयुगलस्य संघटनमुचितमुपात्तम्।

## दर्पणः

समालङ्कारः संभावितः सम्मानितः सम्यक् साधित इति यावत् इदङ्गतं [?] योग्यतया। परस्परानुरूप्येण सम्बन्धस्य योगस्य नियतविषयं नियतं वर्णनीयद्वयं विषयीकृत्य यदध्य वसादानम्। अयमर्थः। वर्णनीयद्वयं विषयीकृत्य अनयोरिश्लाघ्यमिति ज्ञानं चेज्जायते तदा समाख्यमलङ्कारणमिति।

## साहित्यचूडामणिः

समालङ्कारमाह—समामिति। यदि सम्भवति इति। एवंविधे साम्यमलङ्कारः। यत् सूत्रं "तद्विपर्ययः समम्" (अलङ्कारसू० ४७) इति। तच्छब्देन विषयभेदः परामृश्यते। योगः सम्बन्धः तस्याभिरूपानभिरूपतया द्वैविध्यम्।

अनयोः सतोरसतोर्वा। श्लाघ्यमिति अश्लाघ्यमिति वा। नियतविषयमिति। यत्र तादृक् संभावनं तद्विषयं, न पुनरिच्छाधीनम्।

धातुरिति। एतदभिरूपयोरुदाहरणम्। एव 'त्वमेवं सौन्दर्ये'त्यूह्यम्।

## सम्प्रदायप्रकाशिनी

सममिति। क्वचिद्, अभिरूपयोरनभिरूपयोर्वा।

व्याचष्टे—इदमनयोरित्यादि।

धातुः शिल्पेत्यादि। शिल्पातिशयस्याभिरूप्यनिर्माणनैपुणकाष्ठायाः निकषस्थानं परीक्षाभूमिः। देवो नायकोऽप्ययं स्मरस्यानुपमे रूपे दत्तपादः तदतिशय्य वर्तत इत्यर्थः। शृङ्गारस्य रसस्य एकातपत्रं राज्यमुपनतं निस्सपत्नमाधिपत्यं सिद्धम्। अत्राभिरूपयोः।

## मधुमती

श्लाघ्यं उचितम्। सद्योग इति। सता उसतः, असता सतश्च योगः तुल्यत्वादेव उचितः। अत एव सदसतोर्योगे नायम्, तस्य अनुचितवात्। समुच्चर्य सतोः असतोर्वा कारणयोः समुच्चयः, अत्र तु तदन्ययोः तथाभूतयोरपि योगस्य उचितत्वाभिधानमिति विशेषः। इति समम्।

## विस्तारिका

सममिति। औचित्येन सम्बन्धिनोः सम्बन्धस्य सम्भावना समनामालङ्कारः।

व्याचष्टे—इदमनयोरिति । श्लाघ्यमुचितमित्यर्थः । सदिति । सता सतोऽसता चासतो योगस्तुल्यत्वादिवोचितः । अत एव सदसतोर्योगे नायम्, अनौचित्यात् ।

समुच्चये सतोरसतोर्वा कारणयोः समुच्चयः, अत्र तु तदन्ययोरपि तथाभूतयोर्योगस्योचितत्वाभिधानमिति भेदः ।

### सारबोधिनी

औचित्येन यत्र संबन्धिनोः संबन्धस्य संभावना स समनामालङ्कारः । श्लाघ्यमिति । उचितमित्यर्थः । सदिति । सतां सतेति असतां चासता योगस्तुल्यत्वादेवोचितः धातुरिति । यत्र पराजयः ।

### काव्यप्रदीपः

**समं योग्यतया योगो यदि संभावितः क्वचित् ॥ ३९ ॥**

योग्यता आनुरूप्यम् । संभावितः सर्वसम्मतः । तेनेदमनयोः समुचितमिति योग्यतया संबन्धस्य नियतविषयमध्यवसानं चेत्तदा समं नामालंकारः । योग्यता च प्रकर्षनिकर्षाभ्याम् । तत्र प्रकर्षेण यथा—

'धातुः शिल्पातिशयनिकपस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः संगतं यत्तदेत-
च्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥'

### काव्यप्रकाशखण्डनम्

**समं समतया योगो यदि संभावितः क्वचित् ॥**

(का. १२५, उ०)

अयमनयोर्योगः उचितः इत्यध्यवसानं चेत् तदा समनालङ्कारः । इदं सद्योगे असद्योगे [च] । क्रमेणोदाहरणानि 'त्वमेव सौन्दर्य'त्यादि ।

### आदर्शः

समनामकमलङ्कारमाह—सममिति । इदमनयोरिति, अनयोरेवेत्यर्थः । इदमेव नियतविषयत्वम् । सद्योग इति, उत्तमयोर्योगे योग्यतासम्भावनमित्यर्थः ।

धातुरिति । एषा मृगाक्षी धातुः शिल्पातिशयस्य निकषस्थानम् । एतत्परिणेता अयं देवोऽपि रूपेऽनुपमः । स्मरस्योपरि दत्तपादस्तदधिकरूपत्वात् । 'दत्तपत्र' इति पाठे पत्रं पत्रावलम्बनम् । अनयोः सङ्गतं मिलनं यद् दैवाज्जातं तदेतदधुना शृङ्गाररसस्य एकातपत्रं राज्यं राजत्वम् उपनतम् उपस्थितम्, प्राप्तयोग्याधिकरणत्वादिति भावः । अत्रोत्तमयोर्योगः शृङ्गारप्रशंसया योग्यतया सम्भावितः ।

**सुधासागरः**

इदमनयोरित्यादि । योग्यता आनुरूप्यम् । सम्भावितः सर्वसम्मतः तेनेदमनयोः समुचितमिति योग्यतया सम्बन्धस्य नियतविषयमध्यवसानं चेत्तदा समं नामालङ्कारः । योग्यता च प्रकर्षनिकर्षाभ्यामित्यर्थः । तत्र प्रकर्षेण यथा—धातुरिति ।

**चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं**
**जातो दैवादुचितरचनासंविधाता विधाता।**
**यन्निम्बानां परिणतफलस्फीतिरास्वादनीया**
**यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ ५३६ ॥**

---

### सङ्केतः

चित्रमिति । अत्र हीनं हीनेन सङ्घटितम्, निम्बकानां तथारूपत्वात् । इति समम् ।

### बालचित्तानुरञ्जनी

द्वितीयमुदाहरति चित्रमिति । विधाता उचितरचनासंविधाता दैवात् जातः । यतः निम्बानां परिणतफल-स्फीतिः आस्वादनीया । चित्रं चित्रं एतन्महच्चित्रम् ।

### काव्यादर्शः

'चित्रम्' इति । अत्र निकृष्टानां निम्बानां काकानां च योगः ॥ १२३ ॥ [४७ ॥]

### विवेकः

द्वितीयं यथा चित्रमित्यादि—अत्रानभिरूपाणां निम्बानां काकानाञ्चानुरूप्यात् समत्वव्यपदेशः ।

### दीपिका

द्वितीयं यथा—चित्रमित्यादि । अत्राभिरूपाणां निम्बानां काकानां चानुरूप्यात् समत्वव्यपदेशः ।

### साहित्यचूडामणिः

अनभिरूपयोराह—चित्रमिति ।

### सम्प्रदायप्रकाशिनी

चित्रं चित्रमिति । अनभिरूपयोः ।

### सारबोधिनी

चित्रमिति । स्फीतिर्वृद्धिः ।

### काव्यप्रदीपः

निकर्षेणयथा—

**'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं**
**जातो दैवादुचितरचनासंविधाता विधाता।**
**यन्निम्बानां परिणतफलस्फीतिरास्वादनीया**
**यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥'**

### काव्यप्रकाशखण्डनम्

द्वितीयं यथा—

**सुमहद्विचित्रमेतत् समुचितरचने विधिश्चतुरः।**
**आस्वाद्यं निम्बफलं तस्य यदास्वादकः काकः॥**

['चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रम्' इत्यादि।]

पुनः पुनरुक्तिः संभ्रमातिशयार्था। एतन्महच्चित्रं सर्वोत्कृष्टं पारमेश्वरं चित्रकर्म संसाराख्यं विचित्रं वर्त्तते। यथायोग्यमत्र सम्बन्धो दुर्लभः। प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः।

**'सर्वं रत्नमुपद्रवेणसहितम्।' 'देहिनां सदृशा योगा दुर्लभा जगतीतले।'**

इत्याद्युक्तत्वादित्यर्थः। एवं सति विधाता क्वचिद् दैवादुचितरचना संविधाता जाता। इदं चित्रम्, चित्रमत्यद्भुतमित्यर्थः। बत बत महान् संतोषः। बतामन्त्रणसंतोषखेदानुक्रोशविस्मये। यत् निम्बानां पिचुमन्दानां आस्वादनीया परिणतफलानां स्फीतिः। यच्चैतस्याः कवलनं ग्रासः तस्य कला शिक्षा तत्र कोविदः कुशलः काकलोको विधात्रा सृष्टः इत्यर्थः।

### आदर्शः

निकृष्टयोरप्याह—चित्रमिति। अतिहर्षे अतिविस्मये चात्र द्वित्रिरुक्तिः। अत्र निकृष्टयोर्निम्बफलकाकयोर्योगस्तन्निर्मातृप्रशंसया योग्यतया सम्भावितः।

### सुधासागरः

स्मरस्य दत्तपत्रः उत्कृष्टतरनायकतया कामपदे स्थापित इत्यर्थः। स्पष्टमन्यत्। मन्दाक्रान्ता छन्दः। 'मन्दाक्रान्ता जलधिषडगैर्म्भौं नतौ ताद् गुरु चेत्, इति लक्षणात्। निकर्षेण यथा—चित्रमिति। स्पष्टम्। छन्दः पूर्वोक्तमेव।

**(सू० १९४) क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्।**

**कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत्॥ १२६ ॥**

**गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये।**

**क्रमेण च विरुद्धे यत् स एष विषमो मतः॥ १२७॥**

द्वयोरत्यन्तविलक्षणतया यत् अनुपपद्यमानतयैव योगः प्रतीयते [१] यच्च किंचिदारभमाणः कर्ता क्रियायाः प्रणाशात् न केवलमभीष्टं यत् फलं न लभेत यावदप्रार्थितमप्यनर्थ विषयमासादयेत् [२] तथा सत्यपि कार्यस्य कारणरूपानुकारे तत् तयोर्गुणौ क्रिये च परस्परं विरुद्धतां व्रजतः [३/४] स समविपर्ययात्मा चतूरूपो विषमः। क्रमेणोदाहरणम्—

**शिरीषादभि मृद्वङ्गी क्वेयमायतलोचना।**

**अयं क्व चं कुकूलाग्निकर्कशो मदनानलः॥**

---

सङ्केतः

क्वचिदिति। तयोः कार्यकारणयोः। कारणसक्तौ क्रियागुणौ कार्यसक्तौ क्रियागुणौ च मिथो विरुध्येते इत्यर्थः।

सङ्केतः (रुय्यकः)

उदीर्णमुद्गतम्। कुकूलं तुषाग्निः।

बालचित्तानुरञ्जनी

विषमालङ्कारं लक्षयति क्वचिदिति। अतिवैधर्म्यात् वैलक्षण्यात् श्लेषो न घटनामित्यात् तदेकं विषमम्। क्रियायां सत्यामपि तस्य लाभानवाप्तौ वैषम्यमात्रतया प्रादुर्भावः। उपर्यतथातिपाते तस्योत्कर्ष इति द्वितीयकारणप्रक्रमेण कार्यारम्भ इति स्थित्या कार्यस्य कारणस्वभावानुपहारः। अथापि हेतुना द्वाभ्यां गुणक्रियाभ्यां हेतुमति द्वयोर्विरोध इति तृतीयम्। तस्यैव गुणक्रियाभेदात् तृतीयस्य द्वैविध्याच्चतुर्थमित्याह द्वयोरित्यादिना। आद्यमुदाहरति शिरिष दिति। शिरीषादपि सुकुमाराङ्गी इयमायतलोचना क्व; ककूलाग्निकर्कशोऽयं मदनानलः क्व? अत्रात्यन्तकोमलाङ्ग्याः अतिक्रूरः कामानलो नोपपद्यते।

### काव्यादर्शः

समप्रस्तावे विषमाह—क्वचिदिति।

तयोरिति कार्यकारणयोः। कारणसंबधिनी गुणक्रिये कार्यसंबन्धिगुणक्रियाभ्यां सह विरुद्धे स्याताम्। समविपर्ययात्मेति। अ[न]नुरूपसंसर्गे हि विषमः। 'शिरीषाद्' इति। अत्र मृद्वङ्गीकर्कशमदनानलयोरत्यन्ताननु-रूपयोर्योगेऽनुपपन्न एव प्रतीयते। यथा वा नवसाहसाङ्के पल्लवस्य—

**अरण्यानी क्वेयं धृतकनसूत्रः क्व स मृगः**
**क्व मुक्ताहारोऽयं क्व च सुतगमः क्वेयमबला।**
**क्व तत्कन्यारत्नं ललितमहिभर्तुः क्व च वयं**
**स्वमाकूतं धाता किमपि निभृतः पल्लवतयति॥**

—अत्र अननुरूपाणामरण्यान्यादीनां परस्परयोगः।

### विवेकः

क्वचिदिति समवैषर्म्यादत्र लक्षणम्। श्लेषोऽत्र संयोगः। अयं चतुर्धा। शिरीषादित्यादि—कुकूलं तुषामिः।

### दीपिका

क्वचिदिति समवैधर्म्यादत्र लक्षणम्। श्लेषोऽत्र संयोगः। अयं चतुर्धा। शिरीषादित्यादि। कुकूलं तुषाग्निः।

### दर्पणः

विषमालङ्कारः। एवं उष्कृष्टयोगे उदाहृत्य नीचयोगे उदाहरति एवमिति। स्फीतिः वृद्धिः, क्रियया..बभ्व [क्तृ] व्यापारस्य। अप्रार्थितमपि मनसा अनासिदितसपिनो कवित्यमानेतयोः [?] कार्यकारणतयाविरुद्धतां विजातीयतां कुकूलस्तुषादूलिः।

### साहित्यचूडामणिः

अथ विषमं बहुप्रकारमाह—क्वचिदिति। अतिवैषम्यस्य मात्रया प्रादुर्भावः। उपर्यनर्थाभिपाते तस्योत्कर्ष इति द्वितीयः। तथेति। कारणगुणप्रक्रमेण कार्यगुणारम्भ इति स्थित्या कार्यस्य कारणस्वभावानुकारः शास्त्रसिद्धोऽर्थः। यत् सूत्रं विरूपकार्यानर्थयोरुत्पत्तिर्विरूपसंघटना च विषमम्" [अलङ्कारसू० ४६] इति। विषमं भूषणं, विषमोऽलङ्कार इति वैवक्षिको लिङ्गनिर्देशः। एवमन्यत्रापि।

शिरीषादिति। अत्रातिकोमलाङ्ग्यामतिक्रूरकामानलान्वयो नोपपद्यते।

### सम्प्रदायप्रकाशिनी

क्वचिदिति। अतिविलक्षणयोरघटमानः सम्बन्ध एकः। न परं क्रियाफलानवाप्तिः, यावतानर्थोऽपीति द्वितीयः। कार्यस्य गुणेन कारणस्य गुणो विरुध्यत इति तृतीयः। क्रियया क्रियेति चतुर्थः।

व्याचष्टे—द्वयोरत्यन्तेत्यादि।

शिरीषादपीति। अत्र मृद्वङ्गमदनतापयोरघटमानः श्लेषः।

### मधुमती

अनुपपद्यमानयैव इत्यन्तं अतिवैधर्म्यादित्यस्यार्थः। प्रतीयते व्यज्यते। शब्दात् तथात्वेन योगस्य अनुपस्थितत्वात् व्यङ्ग्यता। परस्परेति। गुणेन गुणस्य, क्रियया क्रियायाश्चेत्यर्थः।

शिरीषादपीति। तथा च अनयोर्योगः अनुचितः इति व्यञ्जनया प्रतिपाद्यते।

### विस्तारिका

क्वचिदित्यनन्तरं सम्बन्धिनोरिति शेषः। श्लेषः सम्बन्धः। घटना निकृतिः। कर्तुः फलावाप्तिमात्र-मनर्थावाप्तिरपीत्यर्थः। कार्यस्य गुणक्रियाभ्याम्, कारणस्य क्रियया विरुद्धे इत्यन्वयः।

क्रमेति। कार्यगुणेन कारणगुणस्य विरोधः, कार्यक्रियया कारणक्रियाया विरोध इत्यर्थ।

क्वचिदित्यादि व्याचष्टे—द्वयोरिति। कर्तुरित्यादि व्याचष्टे—किञ्चिदिति। गुणेत्यादि व्याचष्टे—तथेति। कारणरूपेति। रूपं गुणक्रिया च तदनुकारस्तदनुविधानम्। अनुकार इत्यनन्तरमौत्सर्गिक इति शेषः। परस्परमिति क्रमेणेति पूरणीयम्।

पदार्थ व्याचष्टे—समविपर्ययात्मेति।

शिरीषादपीति। कुकूलं कुम्भकारपचनम्। स इव दुःसह इत्यर्थः। तथा चानयोर्योगोऽनुचित इति व्यञ्जनया प्रतीयते।

### सारबोधिनी

क्वचिदिति श्लेषो योगः घटनामौचित्यमियात् गच्छेत्। अनुकारस्तदनुविधानम्। अनुकार इत्यनन्तरं औत्सर्गिक इति शेषः। परस्परमिति। क्रमेणेति शेषः। शिरीषादिति। कुकूलं कुम्भकारपचनम्। तस्याग्निः स इव दुःखसहमित्यर्थः। तुषानल इत्यर्थः। तथा चानयोर्योगोऽनुचित इति व्यञ्जनया प्रतीयते।

### काव्यप्रदीपः

**क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात्।**
**कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत्॥ ४०॥**

**गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये।**
**क्रमेण च विरुद्धे यत्स एव विषमो मतः॥ ४१॥**

द्वयोरत्यन्तविलक्षणतया यत्क्वचिद्योगो घटनां नोपैति किं त्वनुपपद्यमानतयैव प्रतीयते स एको विषमः। यच्च क्वचित्कार्यमारभमाणः कर्ता बलवत्कारणान्तरेण विष्टम्भात्क्रियाफलं नाप्नोति प्रत्युतानिष्टं विषयमासादयेस्य द्वितीयः। यत्र क्रियाफललाभेऽपि कार्यकारणयोर्गुणौ क्रिये वा विरुद्धे भवतस्तौ तृतीयचतुर्थौ विषमौ। सर्वत्र समताया विपर्ययात्। तत्र प्रथमो यथा—

**'शिरीषादपि मृद्वङ्गी क्वयेमायतलोचना।**
**अयं क्व च कुकूलाग्निदुःसहो मलयानिलः॥'**

### काव्यप्रकाशखण्डनम्

**क्वचिद् यदतिवैधर्म्यान्न योगो घटनामियात्।**
**कर्तुः क्रियाफलं नैवानर्थश्च विषयो द्विधां॥ (का. १२६)**

द्वयोरत्यन्तविलक्षणतया यदनुपपद्यमानतयैव योगः प्रतीयते। यच्च किञ्चिदारभमाणः कर्त्ता क्रियायाः प्रणाशात् न केवलममीष्टं तत्फलं लभते यावदप्रार्थितमनर्थमासादयति। स द्विरूपो विषमः। क्रमेणोदाः—

**शिरीषादपि मृद्वङ्गी केयमायतलोचना।**
**अये (यं) क्व च कुकूलाग्निकर्कशो मदनानि (न) लः॥**

### आदर्शः

चतुर्विधं विषमालङ्कारमाह—क्वचिद् यदतीति। श्लेषो योगः घटनामुपपद्यमानतां नेयन्न प्राप्नोति। क्व-द्वयप्रयोग इदं बोध्यम्। 'क्रमेण विरुद्धे' यथासंख्योक्तक्रमेण विरुद्धे। तथा च कार्यकारणयोर्गुणयोः क्रिययोश्च विरोध इत्यर्थः। व्याचष्टे—द्वयोरिति। कर्तुः क्रियेत्यादिकं व्याचष्टे—यच्च किञ्चिदिति। क्रियायाः प्रणाशादित्यनेन कालान्तरेऽपि फलावाप्तिर्नास्तीति दर्शितम्। गुणक्रियाभ्यामित्यादिकं व्याचष्टे—तथा सत्यपीति। नियतेऽपीत्यर्थः। यद्यप्यवयवावयविरूपकारण कार्ययोरेव गुणक्रियानुकारनियमस्तथाऽपि तत्र तथा नियमदर्शनात् कविसृष्टौ सर्वत्रैव तथा नियमोऽध्यस्यते।

शिरीषादपीति।कुकूलास्तुषाः अत्र क्व-द्वयेन वामलोचनामदनानलयोर्योगोऽनुपपद्यमान इत्युक्तम्।

### सुधासागरः

द्वयोरित्यादि। द्वयोरत्यन्तविलक्षणतया यत्क्वचिद्योगो घटनां नोपैति, किं त्वनुपपद्यमानतयैव प्रतीयते, स एको विषमः। यच्च क्वचित्कार्यमारभमाणः कर्त्ता बलवत्कारणान्तरेण विष्टम्भात्क्रियाफलं नाप्नोति प्रत्युतानिष्टविषयमासादयेत्स द्वितीयः। यच्च क्रियाफललाभेऽपि कार्यकारणयोर्गुणौ क्रिये वा विरुद्धे भवतः तौ तृतीयचतुर्थौ विषमौ। सर्वत्र समताविपर्ययादित्यर्थः। तत्र प्रथमो यथा—शिरीषेति। कुकूलाग्नि स्तुषानलः। कर्कशो दुःसहः। स्पष्टमन्यत्।

**सिंहिकासुतासंत्रस्तः शशः शीतांशुमाश्रितः ।**

**जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ ५३८ ॥**

---

### सङ्केतः

तमन्यः इति । सिंहिकासुतौ राहुसिंहौ । अत्र शशस्य स्वाधारबाधात् आश्रयणक्रियाध्वंसः स्वस्य महान् अनर्थश्च ।

### सङ्केतः (रुय्यकः)

सिंहिकासुतः सिंहो राहुश्च । अत्र न परं शशेनात्मरक्षा समासादिता यावदेष स्वयमेवाधिगतमहाबाधः, स्वाश्रयबाधेनाश्रयणक्रियाध्वंसात् ।

### बालचित्तानुरञ्जनी

द्वितीयमुदाहरति सिंहिकेति । सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः । तत्र अन्यः सिंहिकासुतः साश्रयं तं ग्रसते । सिंही राहुमाता च । तदपत्ययोर्मध्ये पूर्वस्मात् संत्रस्तस्य प्रतीयमानोत्प्रेक्षास्पर्शे निशीथकिरणाश्रयणे क्रियाफलस्य निरुपद्रवस्य प्राप्तावान्तरभूतेन राहुणा तस्य स्वाश्रयेण चन्द्रेण सह यत् ग्रसनं तन्महानर्थरूपं संपद्यते ।

### काव्यादर्शः

'सिंहिके'ति । 'सिंहिकासुतः सिंहो राहुश्च, न परम् ।' शशेनात्मरक्षा न समासादिता यावदेव स्वाश्रयबाधेन आश्रयणक्रियाध्वंसात् स्वयमेवाधिगतमहानर्थश्च ।

### विवेकः

सिंहिकेत्यादि—सिंहिकासुतः सिंहो राहुश्च । अत्र न परं शशेनात्मरक्षा समासादिता यावदेष स्वयमेवाधिगतमहाबाधः । आश्रयबाधनमाश्रयणक्रियाध्वंसं चकारेत्यनर्थान्तरप्रापिकाऽऽश्रयणक्रिया । "तीर्थान्तरेषु मलपङ्कमयीं विहाय पुण्यां तनुं तनुभृतः प्रसभं लभन्ते । वाराणसि त्वयि तु मुक्तकलेवराणां लाभोऽस्तु मूलमपि यात्वपुनर्भवाय ॥ (अ. स. १६६ पृ.) । अत्रानर्थोत्पत्तिर्व्याजस्तुतिपर्यवसायिनीति सङ्कीर्णता ।

### दीपिका

सिंहिकेत्यादि । सिंहिकासुतः सिंहो राहुश्च । अत्र न परं शशेनात्मरक्षा समासादिता यावदेष स्वयमेवाधिगतमहाबाधः । आश्रयबाधनमाश्रयणक्रियाध्वंसं चकारेत्यनर्थान्तरप्रापिकाश्रयणक्रिया ।

"तीर्थान्तरेषु मलपङ्कमयीं विहाय पुण्यां तनुं तनुभृतः प्रसभं लभन्ते ।
वाराणसि त्वयि तु मुक्तकलेवराणां लाभोऽस्तु मूलमपि यावत्पुनर्भवाय ॥"

### दर्पणः

सिंहिंकासुतुः केशविकिशोरो[?] बाहुश्च। एवमिति। विषमालङ्काराणामेव सूत्रोक्तप्रकाराणां उपलक्षणतया सम्बन्धिनो वनरूपतायां [विषमरूपतायां] लक्षणानुसारिण्यन्येऽपि प्रकारा उदाहर्तव्या इत्यर्थः।

### साहित्यचूडामणिः

सिंहिकेति। सिंही राहुमाता च तदपत्यात् पूर्वस्मात् सन्त्रस्तस्य प्रतीयमानोत्प्रेक्षास्पर्शेन शीतकिरणाश्रयणे क्रियाफलस्य निरुपद्रवत्वलक्षणस्य प्राप्त्यभावो नाभूत्, तदुपर्यपि तेंनं सिंहकासुतेन स्वर्भानुना तस्य स्वाश्रयेण सह यद् ग्रसनं तन्महाननर्थः।

### सम्प्रदायप्रकाशिनी

सिंहिकेति। सिंहिका सिंहस्त्री राहुमता च। अत्र न केवलं सिंहभयं शशस्य, यावता साश्रयस्य राहुतोऽनर्थोऽपि।

### मधुमती

सिंहिकेति। अत्र च आश्रयनाशेन न केवलं आत्मरक्षारूपेष्टानवाप्तिः, प्रत्युत आश्रयविनाशाख्याधिकानर्थस्य प्राप्तिश्चेति वैषम्यम्।

### विस्तारिका

सिंहिकेति। सिंहिका मृगेन्द्रपत्नी राक्षसी च। तत्सुतो मृगेन्द्रशावको राहुश्च।

अत्र साश्रयग्रासेन न केवलमात्मरक्षारूपेष्टाप्तिः, प्रत्युताश्रयनाशलक्षणाधिकानर्थप्राप्तिश्चेति बोध्यम्।

### सारबोधिनी

सिंहिका सिंहपत्नी राहुमाता च तत्सुतः सिंहीसुतो राहुश्च।

### काव्यप्रदीपः

द्वितीयो यथा—

**'सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः।**
**जग्रसे साश्रयं तत्र नमन्यः सिंहिकासुतः॥'**

अत्र त्राणरूपफलाभावेऽन्येन ग्रासरूपोऽनर्थः।

### काव्यप्रकाशखण्डनम्

**सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः ।**
**जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥**

इयं शिरीषपुष्पादपि कोमलाङ्गी दीर्घनेत्रा क्व कुत्र ! अयं च मदनानलः कामाग्निः [पृ० ५६,] क्व ? कीदृशः कुकूलाग्निः करीषाग्निः तद्वत्कर्कशस्तीक्ष्ण इत्यर्थः । द्वितीयमुदाहरति—सिंहिकासुतः सिंहः तस्मात् संत्रस्तो भीतः शशः शीतांशुं चन्द्रं आश्रितः; तं शशं अन्यः सिंहिकासुतो राहुः साश्रयं सचन्द्रं जग्रसे भक्षितवानित्यर्थः । अत्र त्राणरूपफलाभावे अन्येन ग्रासरूपोऽनर्थः ।

### आदर्शः

कर्तुः क्रियेत्याद्युदाहरति—सिंहिकेति । सिंहिका सिंही, तत्सुतः सिंहः, तद्वत्रस्तत्वं शशस्य शीतांश्वाश्रयणादुत्प्रेक्षितमेव । साश्रयं सचन्द्रम् । सिंहिका राहुमाता, तत्सुतो राहुः । अत्र स्वक्रियायाः पलायनस्य फलं स्वत्राणम्, तदनाप्तिः, स्वाश्रयनाशोऽधिकोऽनर्थः ।

### सुधासागरः

द्वितीयो यथा—सिंहीति । सिंहीका सिंहपत्नी राहुमाता च । स्पष्टमन्यत् । अत्र त्राणरूपफलाभावेऽन्येन ग्रासरूपोऽनर्थः ।

**सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा।**
**तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते॥ ५३९॥**

---

### सङ्केत:

तमालेति। अत्र कृष्णगुणात् पाण्डुगुणोत्पत्तौ, कार्यगुण: कारणगुणेन विरुद्धः।

### बालचित्तानुरञ्जनी

तृतीयमुदाहरति सद्य इति। यस्य कृपाणलेखा रणे यस्य करस्पर्श अथवा तमालनीलापि सती त्रिलोकाभरणं शरदिन्दुपाण्डु यश: प्रसूत इति चित्रम्। अत्र करस्पर्शसंभागस्याग्रास्यतया उपलक्षणनिभात् कारणात् धवलकार्योदयो विरुध्यत इति गुण विरोध:।

### काव्यादर्श:

'सद्य: करे' त्यत्र कृष्णात् शुक्लस्य गुणस्योत्पत्तिर्विरुद्धेति विषमत्वम्।

### विवेक:

सद्य इत्यादि—अत्र कृष्णवर्णात् शुक्लवर्णस्योत्पत्ति:।

### दीपिका

अत्रानर्थोत्पात्तिर्व्याजस्तुति पर्यवसायिनीति संकीर्णता। सद्य इत्यादि।

### साहित्यचूडामणि:

सद्य इति। करस्पर्श: सम्भोगस्याग्राम्यतयोपलक्षणम्। नीलात् कारणाद् धवलकार्योदयो विरुध्यत इति।

### सम्प्रदायप्रकाशिनी

सद्य इति। करस्पर्श: पाणिग्रह:। अत्र गुणस्य विरोध:।

### मधुमती

सद्य इत्याद्युदाहरणे कार्यकारणयो: यश:-कृपाणलेखयो: पाण्डुरनीलरूपौ गुणौ विरुद्धौ।

### विस्तारिका

सद्य इति। करस्पर्शमात्रेणैव यश: प्रस्तुतेर्युद्धापेक्षयातीव दूरमित्यर्थ:।

### सारबोधिनी

सद्य इति । अत्र कार्यकारणयोर्यशः कृपाणयोः पाण्डुरनीलाख्यगुणयोर्विरोधः ।

### काव्यप्रदीपः

तृतीयो यथा—

**'सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा।**
**तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥'**

### आदर्शः

कार्यकारणयोर्गुणविरोधमाह—सद्य इति । तमालनीला कृपाणलेखा प्रतिरणं यस्य करस्पर्शमवाप्य शरदिन्दुवत् पाण्डु यशः प्रसूत इत्यन्वयः । अत्र नीलत्वं कारणस्य खड्गस्य, पाण्डुत्वं कार्यस्य यशसो गुणौ विरुद्धौ ।

### सुधासागरः

तृतीयो यथा—सद्य इति । स्पष्टम् । इन्द्रवज्रा छन्दः । 'स्यादिन्द्रवज्रा यदि तौ जगौ ग' इति लक्षणात् ।

**आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम्।**
**विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे॥ ४५०॥**

अत्रानन्ददानं शरीरतापेन विरुध्यते।

---

### सङ्केतः

आनन्दमिति। अत्र कारणानन्द कार्यतापक्रिये मिथो विरुद्धे। अत्र च स्त्री कारणम्, विरहः कार्यम्।

### सङ्केतः (रूय्यकः)

विपुलेनेति—अत्र हीनेन गुरुकार्यं कृतमिति विषमत्वम्। एवमधिकोऽपि यः स्वल्पमपि प्रयोजनं न विदधाति तदपि विषमं यथा—

"किं ददातु किमश्नातु भर्तव्यभरणाकुलः।
उदारमतिराप्तोऽपि जगत्त्रितयमात्रके॥" इति

### बालचित्तानुरञ्जनी

चतुर्थमुदाहरति आनन्देति। हे कुवलयदललोचने त्वं अमन्दमिमं आनन्दं ददासि। त्वयैव जनितः विरहः मे शरीरं तापयतितराम्। अत्र कारणनिष्ठानन्दनक्रियायाः कार्यनिष्ठः विरहक्रियाया विरोधः इति क्रिया विरोधः।

### काव्यादर्शः

'आनन्दम्' इति। अत्र आनन्ददानतापक्रिये अन्योन्यविरुद्धे।

### विवेकः

आनन्दमित्यादि—अत्र कारणगतयोः क्रिययोर्विरोधः।

### दीपिका

अत्र कृष्णवर्णात् शुक्लवर्णस्योत्पत्तिः आनन्दमित्यादि। अत्र कारणगतयोः क्रिययोर्विरोधः।

### साहित्यचूडामणिः

(अत्र) क्रियाविरोध इत्याह—आनन्ददानामिति।

### सम्प्रदायप्रकाशिनी

विरहान्तरितमपि प्रयोजकत्वात् क्रियाविरधमेककर्तृकत्वेन दर्शयति—अत्रानन्देति। भिन्नकर्तृकतयाप्यनुमतिरित्याह—एवमिति।

**मधुमती**

आनन्देत्यत्र तु क्रिययोर्विरोधः प्रतीयमानः ।अतएव नात्र विरोधः असङ्गतिर्वा । विरोधस्य अविवक्षितत्वात् कारणरूपाननुकरणमात्रस्यैवालङ्कारत्वात् ।

**विस्तारिका**

आनन्दमिति । लोचनेनैवानन्दं ददासीत्यर्थः ।

अत्र प्रथमे कथं कार्यकारणयोर्यशः कृपाणयोः पाण्डुरनीलाख्ययोर्गुणयोर्विरोधः ? स उत्तरत्र च नायिकाविरहयोः कार्यकारणयोरानन्दजननतापजननक्रिययोर्विरोधः प्रतीयमानः ।

न चात्र विरोधासङ्गतिर्वेति वाच्यम्, तत्र विरोधस्यैव चमत्कारप्रयोजकत्वात्, अत्र तु कार्यकारणयोर्विरुद्धगुणक्रियायोगस्य तथात्वात् ।

किञ्च विरोधे समानाधिकरण्यनैयत्यम्, असङ्गतौ च वैयधिकरण्यनैयत्यम्; अत्र तु तदन्यतरप्रतिसन्धानाद् विना कृतस्यैव कार्यकारणवृत्ति विजातीयगुणक्रियासम्बन्धमात्रस्य चमत्कारप्रयोजकतेति भेद इति तदुक्तम्—कार्यस्य कारणरूपानुकार इति ।

**सारबोधिनी**

आनन्द इति । अत्र तु क्रिययोर्विरोध इति । न चायं विरोधोऽसङ्गतिर्वेति वाच्यम् । विरोध सामानाधिकरण्यनैयत्यात्, असङ्गतौ च वैयधिकरण्यनैयत्यात् । अत्र तु तदन्यतरप्रतिसंधानं विना कृतस्यैव कार्यकारणवृत्तिविजातीयगुणक्रियासंबन्धमात्रस्य चमत्कारप्रयोजकतेति भेदात् । तदुक्तम्—कार्यस्य कारणरूपानुकार इति ।

**काव्यप्रदीपः**

चतुर्थो यथा—

> **'आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।**
> **विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥'**

अत्रानन्ददानशरीरतापनक्रिये विरुद्धे । सूत्रे विभाग उपलक्षणपरः । तेन संबन्धिनोरानुरूप्याभावात्मकस्य विषमस्यान्येऽपि भेदा भवन्ति ।

**आदर्शः**

कार्यकारणयोः क्रियाविरोधमाह—आनन्दमिति । कुवलयदललोचने इति सम्बोधनम् । अत्राऽऽनन्ददानं कारणीभूतनायिकायाः क्रिया, तत्कार्यस्य विरहस्य तु शरीरतापनं क्रिया तद्विरुद्धा । अत्र चाऽऽनन्दतापयोर्गुणयोर्विरोधो नाशङ्कनीयः, क्रियां विना कार्यकारणरूपधर्मिगतत्वेन तयोरनिर्देशात् ।

## सुधासागरः

चतुर्थो यथा—आनन्देति। स्पष्टम्। आर्या छन्दः।

'यस्यां प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये पञ्चदश चतुर्थके सार्या॥' इति लक्षणात्।

अत्रानन्दशरीरतापक्रिये विरुद्धे।

**विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये।**

**मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥ ५४१ ॥**

इत्यादावपि विषमत्वं यथायोगमवगन्तव्यम् ॥

---

### सङ्केतः

एतल्लक्षणानुसारेणाह—एवमिति। अत्र हीनो गुरुकार्यकारी इति वैषम्यात्। असकलया अपूर्णया।

अत्र अपिशब्दात् अधिकेन स्वल्पकार्यकरणे, विपरीतकार्यनिष्पत्त्यर्थं प्रयत्ने च विषमं मन्तव्यम्। आद्यं यथा—

'किं ददातु? किमश्नातु? भर्तव्यभरणाकुलः।
उदारमतिराप्तेऽपि जगत्त्रितयमात्रके ॥'

द्वितीयं यथा—

"उन्नत्यै नमति प्रभुम्, प्रभुगृहान् द्रष्टुं बहिस्तिष्ठति,
स्वद्रव्यव्ययमातनोति जडधीः आगामिवित्तेप्सया।
प्राणान् प्राणितुमेव मुञ्चति रणे, क्लिश्नाति भोगेच्छया,
सर्वं तद्विपरीतमेव कुरुते तृष्णान्धदृक् सेवकः ॥"

इति विषमम्।

### बालचित्तानुरञ्जनी

अथ कर्तृकर्मभावेऽपि इदमुदाहर्तव्यमित्याह एवमिति। यस्य सागरशस्य विपुलेन कुक्षिणा युगक्षये भुवनानि प्रतिरोपितानि स पुनः एकतमया स्वीयमदविभ्रमासकलया एकया दृशा पयसि सागरमवलोकित इत्यर्थः[?] एकस्याः स्त्रियाः एकत्वादेव परिमितत्वयोगिन्याः कर्तृभूतायाः दृशः सकलभुवनपानक्षमकुक्षिकुहरस्य हरेः कर्मभूतस्य पीयमानतायां पारिमित्यपारिमित्यलक्षणौ गुणौ विरुद्धाविति विषमत्वम् यथायोगं योगो युक्तिः कार्यकारणभावस्य कर्मकर्तृभावपर्यवसानलक्षणतामनतिक्रम्येत्यर्थः।

### काव्यादर्शः

एतल्लक्षणसूचितमुदाहरणान्तरमप्याह—एवं—'विपुलेने'ति। अत्र हीनेन गुरुकार्यकरणाद् विषमत्वम्। इत्यादावपीति, अपिशब्दाद्, यथा—

किं ददातु किमश्नातु भर्तव्यभरणाकुलः।
उदारमतिराप्तेऽपि जगत्त्रितयमात्रके ॥

—अत्र अधिकेनापि स्वल्पकार्यकारणाद् विषमत्वं ज्ञेयम् । यस्य च हेतोर्यत्फलं तस्य यदा तद्विपरीतं स्यात् तदा कारणविपरीतकार्यनिष्पत्त्यर्थं कस्यचित् प्रयत्नोऽपि विषमं, यथा—

**उन्नत्यै नमति प्रभुं प्रभुगृहान्, द्रष्टुं बहिस्तिष्ठति**
**स्वद्रव्यव्ययमातनोति जडधीरागामिवित्तेप्सया।**

**प्राणान् प्राणितुमेव मुञ्चति रणे क्लिश्नाति भोगेच्छया**
**सर्वं तद्विपरीतमेव कुरुते तृष्णान्धदृक् सेवकः ॥**

—अत्र नमन-बहिःस्थान-व्ययातनन-प्राणमोचन-क्लेशानां कारणानां क्रमाद् उन्नतिदर्शन-वित्तेप्सा- जीवन-भोगेच्छारूपाणि विपरीतकार्याणि प्रयत्नविषयत्वेन निबद्धानि ॥ १२५ ॥ [४८ ॥]

## विवेकः

एवं विपुलेनेत्यादि—अत्र हीनेन गुरु कार्यं कृतमिति विषमत्वम् । एवमधिकोऽपि यत्र स्वल्पमपि प्रयोजनं न विदधाति तदपि विषमं यथा—(रु. सं. ७० पृ.) किं ददातु किमश्नातु भर्तव्यभरणाकुलः । उदारमतिराप्तोऽपि जगत्त्रितयमात्रके । इति ।

## दीपिका

एवं वितुलेनेत्यादि । अत्र दीनेन गुरुकार्य कृतमिति विषमत्वम् । एवमधिकोऽपि यत्र स्वल्पमपि प्रयोजनं न विदधाति तदपि विषमं यथा—

**"किं ददातु किमश्नातु भर्तव्यभरणाकुलः ।**
**उदारमतिराप्तोऽपि जगत्त्रितयमात्रके ॥" इति ।**

## दर्पणः

तत्रदिद्यात्रमुदाकृत्य [दिङ्मात्रमुदाहृत्य] दर्शयति विप्रलेनेति [विपुलेनेति] असकलया असमग्रपातिन्या । यथायोगमिति । अत्रावयविवैषम्यं क्वचित्तु सजातीययोः असितमेकस्वरासितमप्यभूत्व [?] पुनरेषां पुन [अपर] विषमम् ।

[अपि निपीय स्वरे जतिक्षयं स्वयमुदेति पुनर्णवमार्णवं,] अत्र व्यतिरेकयोगेऽपि द्वयोः सङ्करो न तु विषमालङ्काराभावः ।

## साहित्यचूडामणिः

कथं कर्तृकर्मभावेऽपीदमुदाहर्तव्यमित्याह—विपुलेनेति । एकस्याः स्त्रिया एकत्वादेव परिमित्ययोगिन्याः कर्तृभूताया दृष्ट्या सकलभुवपानक्षमकुक्षिकुहरस्य हरेः कर्मभूतस्य पीयमानताया विरोधः । पानं प्रति पात्र्याः पेयस्य च पारिमित्यापारिमित्यलक्षणौ गुणौ विरुद्धाविति यावत् ।

यथायोगमिति। योगो युक्तिः कार्यककारणभावस्य मर्कृभावेपर्यवसानलक्षणा, तामनतिक्रम्य। यदाहुः 'कर्तृकर्मत्वे एव कार्यकारणतायामि'ति।

**सम्प्रदायप्रकाशिनी**

विपुलेनेति। असकलया कटाक्षाञ्चलमात्ररूपया।

यथायोगम्, उक्तचातुर्विध्ययोग्यतानतिक्रमेण।

**मधुमती**

इत्यादावपीति। अत्र जगदाधारपरमेश्वरलोचनकरणस्त्रीकर्तृकपानयोः अत्यन्तविलक्षणतया अनुपपद्य-मानतयैव योगः प्रतीयते इति विषमत्वं अवगन्तव्यम्। इति विषमम्।

**विस्तारिका**

एवमिति। मदविभ्रमयुक्ता चासावसकला चेति विग्रहः। असकलाया असम्पूर्णाया चक्षुःकोणमात्रेणैव पपे इत्यर्थः।

अत्र जगदाधारजगदीश्वरलोचनैकदेशकरणकस्त्रीकर्तृकपानयोरत्यन्तविलक्षणतया अनुपपद्यमान एव योगः प्रतीयत इति विषमत्वं बोध्यम्।

**सारबोधिनी**

एवमिति। असकलया असंपूर्णया चक्षुःकोणमात्रेणैव इत्यर्थः। अत्र जगदाधारजगदीश्वरत्वेन लोचनै-कदेशकरणकस्त्रीकर्तृकपानयोर्विलक्षणतया अनुपपद्यमान एव योगः प्रतीयत इति विषमस्तद्विधमधिकमिति योजना। प्रयोजनं च वर्णनीयप्रकर्षः।

**काव्यप्रदीपः**

तत्रावयवावयविनोर्वैषम्ये यथा—

**'विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये।**
**मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा॥'**

एवमन्यत्राप्यूह्यम्।

**आदर्शः**

'इत्थं निमित्तकारणकार्ययोः क्रियाविरोधमुदाहृत्य अवयवावयविरूपकार्यकारणयोः क्रियाविरोधमुदाह-रति'—एवं—विपुलेनेति। यस्य सागरशयस्य कृष्णस्य सागरशयनदशायां विपुलेन कुक्षिणा युगक्षयकाले भुवनानि पपिरे पीतानि, स कृष्णः पुनरेकतमया परस्त्रिया कर्त्र्या मदविभ्रमेणासकलया कटाक्षरूपया एकया दृशा करणभूतया पपे कटाक्षेण सर्वाङ्गीणं दृष्ट इत्यर्थः। अत्र कुक्षिरवयवः कारणम्, तत्कर्तृका पानक्रिया सागरशयस्या-

वयविनः कार्यस्य कर्मतासम्बन्धेन पानक्रियया विरुद्धा, भुवनपातृकुक्षिमत एकनार्येकलोचनैकदेशपेयत्वस्य विरुद्धत्वेनैव भानात् । यथायोगमिति । अनेन कर्तृताकर्मतोभयसम्बन्धाभ्यां क्रिययोरपि विरोधसम्भव इत्युक्तम् ।

**सुधासागरः**

सूत्रे विभाग उपलक्षणपरः । तेन सम्बन्धिनोरानुरूप्याभावात्मकस्य विषमस्यान्येऽपि भेदा भवन्ति । तत्रावयवावयविनोर्वैधर्म्ये यथा—विपुलेनेति ।

सागरशस्य विष्णोः । मदविभ्रमेणासकलयाऽसम्पूर्णया दृशा चक्षुःकोणमात्रेणेत्यर्थः । स्पष्टमन्यत् । मञ्जुभाषिणी छन्दः । 'सजसा जगौ भवति मञ्जुभाषिणी' इति लक्षणात् ।

(सू० १९५) महतोर्यन्महीयांसावश्रिताश्रययोः क्रमात्।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत्॥ १२८ ॥

आश्रितम् आधेयम् आश्रयस्तदाधारः, तयोर्महतोरपि विषये तदपेक्षया तनू, अप्याश्रया श्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यत् अधिकतरतां व्रजतः, तदिदं द्विविधम् अधिकं नाम। क्रमेणोदाहरणम्—

अहो विशालं भूपाल भुवनत्रितयोदरम्।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥ ५४२ ॥

---

### सङ्केतः

मातीति। अत्र मातुमशक्यत्वेन आधेयरूपः यशोराशिः महान्। जगत्त्रयं तु त्रिसंख्यत्वात् तुच्छम्। परं महतोऽपि यशोराशेः आधारतया महीयस्त्वेनोक्तम्। अन्यथा मानस्य असम्भवात्।

### सङ्केतः (रुय्यकः)

माति वर्त्तते—अनेनाश्रयस्य महीयस्त्वमुक्तमन्यथा मानस्यासम्भवात् सम्बन्धीति—सम्बन्धि वक्त्रं, तेनेन्दोः सम्बन्धः, समत्वात्।

### बालचित्तानुरञ्जनी

महतोरिति। व्याकरोति आश्रितमिति। अन्यत्र भावोऽपि यथार्थः महतः कस्यचिदाधेयस्यविषयेऽपि तदपेक्षया तनुरिति अध्यारोपि महत्त्वमध्यास्ते यत् तदेकम्। अधिकं महतः कस्यचिदाधारस्य विषये तदपेक्षया तनुरपि आधेयः महत्त्वमध्यास्ते तद् द्वितीयमधिकम्। तत्राद्यमुदाहरति अहो इति। अहो आश्चर्यम्। भूपाल! भुवनत्रितयोदरं विशालं यत् मातुमशक्योऽपि ते यशोराशिरत्र माति। अत्र आश्चर्यम्। भूपाल! भुवनत्रितयोदरं विशालं यत् मातुमशक्योऽपि ते यशोराशिरत्र माति। अत्र यशोलक्षणस्य महत आधेयस्य अपेक्षया अतन्वपि भुवनत्रितयोदरं यशः प्रकर्षविवक्षणादाधिक्योत्कर्षमनुप्राप्यते।

### काव्यादर्शः

'माति' इति वर्तते अनेनाश्रयस्य महीयस्त्वमुक्तमन्यथा मानस्यासंभवात्॥ १२६ ॥ [४९ ॥]

## विवेकः

महतोरित्यादि—वैषम्यप्रस्तावात्तदनन्तरमस्य लक्षणम् । महतोराधेयाधारयोर्विषये यथाक्रममाधाराधेयौ तनुत्वेऽपि यन्महीयांसौ स्यातां तदधिकं नामालङ्कार इति योजना । प्रयोजनञ्च वर्णनीयप्रकर्षः । तदाधारस्य तनोरप्यधिक्यं यथा अहो विशालमित्यादि—माति वर्तते । अत्राधेयस्य यशसो वैपुल्येऽपि तदपेक्षया तनोरपि भुवनत्रितयोदरस्याधारस्य महत्त्वमुक्तम्, अन्यथा मानस्यासम्भवात् । तदेतदाधिक्यमेव चारुत्वहेतुः ।

## दीपिका

महतोरित्यादि । वैषम्यप्रस्तावात् तदनन्तरमस्य लक्षणम् । महतोराधेयाधारयोर्विषये यथाक्रममाधाराधेयौ तनुत्वेऽपि यन्महीयांसौ स्यातां तदधिकं नामालङ्कार इति योजना । प्रयोजनं च वर्णनीयप्रकर्षः । तत्राधारस्य तनोरप्याधिक्यं यथा—अहो विशालमित्यादि । माति वर्तते । अत्राधेयस्य यशसो वैपुल्येऽपि तदपेक्षया तनोरपि भुवनत्रितयोदरस्याधारस्य महत्त्वमुक्तम्, अन्यथा मानस्यासम्भवात् । तदेतदाधिक्यमेव चारुत्वहेतुः ।

## दर्पणः

तनुत्वेऽपि महीयांसो धत [?] स्यातामिति संबन्धः । तत्पुनरधिकं न तु विषमम् । आश्रयाश्रयिविलक्षणाश्रयतया तदवाद [तदपवाद] रूपत्वादिति भावः । प्रस्तुतस्य वर्णनीयस्य ।

## साहित्यचूडामणिः

अधिकमाह—महतोरिति आधेयाधारयोः क्रमादधाराधेयौ तनूभूतावपि यन्महीयांसौ लक्ष्येते महत्प्रतिपत्तिविवक्षया । महीयस्त्वमाधिक्यम् अत उक्तम् अधिकतरतामध्यास्त इति । तदेकमधिकम् । यच्च महतः कस्यचिदाधारस्य विषये तदपेक्षया तनुरप्याधेयः पूर्ववद्विवक्षणादधिकतरत्वमनुभवति तद् द्वितीयम् । यत् सूत्रम् "आश्रयाश्रयिणोरनानुरूप्यमधिकम्" [अलङ्कारसू० ४९] इति ।

अहो इति । अत्र यशोलक्षणस्य महत आधेयस्यापेक्षया विवक्षया तन्वपि भुवनत्रयं यशः प्रकर्षविवक्षणादाधिक्योत्कर्षमनुप्राप्यते ।

## सम्प्रदायप्रकाशिनी

महतोरिति । महत आधेयस्य तनुरप्याधारः प्रकृतार्थोत्कर्षायाधिकतरतां यातीत्येकमधिकम् । विपर्यये द्वितीयम् ।

व्याचष्टे—आश्रितमाधेयमित्यादि ।

अहो विशालमिति । अत्राधेयस्य यशसो महतस्तनुरप्याधारो भुवनत्रयोदरं महीय उक्तम् ।

## मधुमती

प्रस्तुतेति । यथाक्रममिति । अधेयाधिक्याभिधानेन आश्रयस्य प्रकर्षविवक्षा, आश्रयाधिक्याभिधानेन तु आधेयस्य प्रकर्षविवक्षेत्यर्थः ।

अहो विशालमिति। अत्र यशोराशेः वस्तुतः क्वाचित्कत्वेन भुवनत्रयापेक्षया तनुत्वेऽपि, तदुत्कर्ष विवक्षया तन्मानमेव भुवनत्रयविशालत्वे हेतुर्वर्णितः॥

### विस्तारिका

महतोरिति। महतोराश्रिताश्रययोः। आश्रयाश्रयिणौ तनुत्वेऽपि यन्महीयांसौ स्याताम्, तदधिकनामालङ्कारः।

व्याचष्टे—आश्रितमित्यादि। तनू अपि तनुत्वेन विवक्षितावित्यर्थः। प्रस्तुतवस्तुप्रकर्षविवक्षया आधेयाधारयोः प्रकर्षविवक्षया आधेयाधिक्याभिधानेनाधारस्य प्रकर्षविवक्षा, आधाराधिक्याभिधानेनाधेयस्य प्रकर्षविवक्षेत्यर्थः। तयोर्महतोरित्यादि। अधिकतरतां व्रजत इत्यन्तवृत्तिग्रन्थस्यार्थः। विवक्षा शरीर एव द्रष्टव्यः। यथाश्रुते वक्ष्यमाणोदाहरणयोराधाराधेययोर्वस्तुगत्या आधारापेक्षयाऽधिकत्वेन तयोर्महतोरिति तदपेक्षया तनू अप्याश्रयाश्रयिणावित्यसङ्गत्यापत्तेः। तदिदमुक्तम्—प्रस्तुतवस्तुप्रकर्षविवक्षयेति, अन्यथा वस्तुगत्यैव प्रकर्षे विवक्षयेत्यनन्वयापत्तेः।

अहो विशालमिति। अत्र यशोराशेर्वस्तुतः क्वाचित्कत्वेन भुवनत्रयापेक्षया तनुत्वेन तदुत्कर्षविवक्षितत्वात्। तन्मानमेव विवक्षितापकर्षभुवनत्रयविशालत्वे हेतुरुक्तः।

### सारबोधिनी

अहो विशालमिति। अत्राधेयस्य यशसो वैपुल्येऽपि तदपेक्षया तनोरपि भुवनत्रितयोदरस्याधिक्यमेव चारुताहेतुः।

### काव्यप्रदीपः

**महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात्।**
**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत्॥ ४२॥**

वर्णनीयोत्कर्षपिक्षया यन्महत्याश्रिते विषये तदपेक्षया तनुरप्याश्रयो महीयान्स्यात् महीयस्तया वर्ण्यते महत्याश्रये वा विषये आधेय एव तथा वर्ण्यते तदुभयमधिकालंकारः। तत्राद्यं यथा—

**'अहो विशालं भूपाल भुवनत्रितयोदरम्।**
**माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥'**

अत्राश्रयस्य भुवनत्रितयस्य महत्तया वर्णनम्।

### काव्यप्रकाशखण्डनम्

**महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात्।**
**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत्॥ (का. १२८)**

आश्रिताश्रययोर्महतोरपि विषये तदपेक्षया तनू अपि आश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्ष, विवक्षया। यथाक्रमं याबधिकतां व्रजतः। तदेतद् द्विविधमधिकम्। क्रमेणोदा०—

**अहो विशालं भूपाल! भुवनत्रितयोदरम्।**
**माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥**

तत्र प्रथमं उदाहरति—हे भूपाल! भुवनत्रितयस्य उदरं मध्यं अहो आश्चर्ये विशालं विस्तीर्णं यद् यस्मात् अत्र मातुं अशक्योऽपि ते तव यशोराशिर्माति परिमातीत्यर्थः। अत्र यशोराशेर्वस्तुनः क्वाचित्कत्वेन भुवनत्रयपेक्षया तनुत्वेऽपि तदुत्कर्षविवक्षया तन्मानमेव भुवनत्रयविशालत्वे हेतुः।

## आदर्शः

अधिकनामकमलङ्कारमाह—महतोरिति। महतोराश्रिताश्रययोराश्रयाश्रयिणौ तन् अपि यन्महीयांसौ वर्णनावशात् स्याताम्, तद् यथासङ्ख्य द्विविधोऽधिकसंज्ञकोऽलङ्कार इत्यर्थः। तथा च महत आश्रितस्याऽऽश्रयस्तनुत्वेऽपि महीयान्, महत आश्रयस्याऽऽश्रितस्तनुत्वेऽपि महीयान् वर्णित इत्यर्थः। व्याचष्टे—आश्रितमिति। महतोरपि विषये इति, महतोरपि सम्बन्धिनावित्यर्थः। तनुत्वेऽपि महीयोवर्णनफलमाह—प्रस्तुतवस्त्विति, वर्ण्यमानवस्त्वित्यर्थः।

महत आश्रितस्याऽऽश्रयं महीयांसमाह—अहो इति। विशालत्वमुपपादयति—मातीति। मातुं परिमातुमश्योऽपि ते यशोरशिरत्र भुवनत्रितयोदरे यन्माति अवकाशं लभते अतो विशालमित्यर्थः। अत्राऽऽश्रितो यशोरशिर्महान्, तदपेक्षया तनुत्वेन कविविवक्षितमपि भुवनत्रितयोदरं विशालत्वरूपमहीयस्त्वेन वर्णितम्।

## सुधासागरः

आश्रितमित्यादि। वर्णनीयोत्कर्षपेक्षया यन्महत्वाश्रिते विषये तदपेक्षयातनुरप्याश्रयो महीयान् स्यात्—महीयस्तया वर्ण्यते। महत्याश्रये विषये आधेय एव तथा वर्ण्यते तदुभयमधिकालङ्कार इत्यर्थः। तत्राद्यं यथा—अहो इति। अत्र आश्रयस्य भुवनत्रयस्य महत्तया वर्णनम्।

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥ ५४३ ॥

---

### सङ्केतः

युगान्तेति । अत्र विष्णुतनुः आधारः । स च महान् । स्वल्पाः मुदस्तु आधेयाः । 'परं तनौ अमानेन महत्त्वं नीताः । इत्यधिकम् ।

### बालचित्तानुरञ्जनी

द्वितीयमदाहरति युगान्तेति । युगान्तकालप्रतिसंहृतात्मनः कैटभद्विषो यस्यां तनौ जगन्ति सविकाशमासत तत्र तपौ तपोधनाभ्यागमसंभवा नारदागमनसंभूता मुदो न ममुः । अत्र महतीं भगवत्तनुमाधारं प्रतिनारदागमप्रमोद-लक्षणाधेयस्य तनोरपि आधिक्योत्कर्षः ।

### विवेकः

युगान्तेत्यादि—अत्रैककैटभारितनोराधारस्य वैपुल्येऽपि तदपेक्षया तन्वीनामपि मुदां यन्महत्त्वमुक्तं तच्चारुताऽऽस्पदम् ।

### दीपिका

युगान्तेत्यादि । अत्रैककैटभारितनोराधारस्य वैपुल्येऽपि तदपेक्षया तन्वीनामपि मुदां यन्महत्त्वमुक्तं तच्चारुताऽऽस्पदम् ।

### साहित्यचूडामणिः

युगान्तेति। अत्रमहतीं भगवत्तनुमप्याधारं प्रतिनारदागमनप्रमोदलक्षणस्याधेयस्य तनोरप्याधिक्यो-त्कर्षः । एवं चोभयत्राप्याधेयस्योत्कर्षविवक्षा ।

### सम्प्रदायप्रकाशिनी

युगान्तेति । अत्र वपुष्याधारे महति मुदामाधेयानां तनूनामपि महीयस्त्वम् ।

### मधुमती

युगान्तेति। अत्र तपोधनाभिगमन प्रभवमुदः अल्पशरीरवृत्तित्वेन आधिक्यात् कैटभारिशरीरस्य तुनत्वेऽपि मुदः प्रकर्षविवक्षया तच्छरीरमानमेव हेतुतयोपात्तमिति मन्तव्यम् । इत्यधिकम् ।

### विस्तारिका

युगान्तेति। अन्यत्र शरीरवृत्तितपोधनाभ्यागमजन्यहर्षापेक्षया कैटभारिशरीरस्य तनुत्वेऽपि तदुत्कर्षविवक्षितत्वात्, तदमानमेव विवक्षितापकर्षाधिक्ये हेतुरुक्तः।

### काव्यप्रदीपः

द्वितीयं यथा—

**'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत।**
**तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥'**

अत्राधेयभूताय मुदो महीयस्त्वं विवक्षितम्।

### काव्यप्रकाशखण्डनम्

**युगान्तकालप्रतिसंहृतात्मने जगन्ति यस्यां सविकासमासत।**
**तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥**

द्वितीयमुदाहरति—कैटभद्विषो विष्णोर्यस्यां तनौ शरीरे जगन्ति चतुर्दशभुवनानि सविकासं सावकाशं आसत स्थितानि तत्र तनौ नारदस्तस्याभ्यागमनेनागमनेन संभवा उत्पन्ना मुदः प्रीतयः न ममुः अधिका बभूवुरित्यर्थः। यत्र तपोधनागमनप्रभवमुदोऽन्यशरीरवृत्तित्वेनाधिक्याति कैटभारिशरीरस्य तनुत्वेऽपि मुदः प्रकर्षविवक्षया तच्छरीरमानमेव हेतुतयोपात्तम्। अत्रान्यो विशेषो गुरुनाम्ना मत्कृतबृहट्टीकातो द्रष्टव्यः।

### आदर्शः

महत आश्रयस्य महीयांसमाश्रितमाह—युगान्तेति। नारदागमने कृष्णस्य हर्षवर्णनमिदम्। युगान्तकाले प्रतिसंहृताः स्वोदरे प्रवेशिता आत्मानः समस्तप्राणिनो येन तादृशस्य यस्य कैटभद्विषः कृष्णस्य यस्यां तनौ जगन्ति सविकाशम् अयन्त्रणम् आसत तस्य कृष्णस्य तस्यां तनौ तपोधनाभ्यागमसम्भवा मुदो न ममुर्नावकाशं लेभिरे। नित्यायस्ततनो (नित्यायास्तत्तनो) रवस्थामात्रभेद इति मतेन, ईश्वरतनुत्वेन तत्तनूनामेकत्वाध्यासाद् वेदं बोध्यम्। अत्र युगान्तेत्यादिविशेषणवशादाश्रयः कृष्णतनुर्महती तदाश्रिता मुदस्तन्वयोऽपि तत्रावकाशालाभान्महत्यो वर्णिताः।

### सुधासागरः

द्वितीयं यथा—युगान्तेति। माघकाव्ये नारदागमने श्रीकृष्णस्य मुदां वर्णनमिदम्। स्पष्टम्। शुद्धविराट् छन्दः। लक्षममुक्तं प्राक्। अत्राधेयभूताया मुदो महीयस्त्वं विवक्षितम्।

(सू० १९६) प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ।। १२९ ।।

न्यक्कृतिपरमपि विपक्षं साक्षान्नमिरसितुमशक्तेन केनापि यत् तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणम् तत् अनीकप्रतिनिधितुल्यत्वात् प्रत्यनीकमभिधीयते। यथा, अनीके, अभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयते, इत्यर्थः। उदाहरणम्—

त्वं विनिर्जतमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता।
पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ।। ५४४ ।।

---

**सङ्केतः**

तदीयस्येति। प्रतिपक्षप्रसक्तस्येत्यर्थः। तत्स्तुत्यै प्रतिपक्षस्तुत्यै। रिपुं बलवत्त्वात्। तिरस्कर्तुमशक्तः, यदा तदाश्रितं कोऽपि तिरस्करोति, तदा अयमलङ्कारः इत्यर्थः।

त्वमिति। अत्र 'तां त्वयि रक्तां कामः शरैः हन्ति' इति वास्तवोऽर्थः पश्चादुत्प्रेक्ष्यते। निर्जित्वोत्थादनुशयादिवेति व्यङ्ग्योत्प्रेक्षाऽपि। 'त्वं भवति' इति च प्रक्रमभङ्गः।

**बालचित्तानुरञ्जनी**

प्रत्यनीकालङ्कारं लक्षयति प्रतिपक्षेति। अशक्तेनेति। अनीकस्य कटकस्य प्रतिनिधिः प्रत्यनीकं, तत्सादृश्यादलंकारोऽपि। प्रतिपक्षसंबन्धिविषयं प्रत्यनीकमुदाहरति त्वमिति। भो सुन्दर विनिर्जतमनोभवरूपस्त्वं सा च भवत्यनुरक्ता। अथ कामः अनुशयात् पञ्चभिः शरैः तां युगपदेव ताडयति। अत्र कामः केनचिज्जितः। त्वयि प्रहर्तुमक्षमः तव सौन्दर्यातिशयद्योतनाय त्वदनुरक्तां ताडयति।

**काव्यादर्शः**

या तदीयस्येति प्रतिपक्षसंबन्धिनो दुर्बलस्य यत्नं बाधितुं तिरस्कारः क्रियते प्रतिपक्षस्यैव बलवत्त्वेन स्तुत्यर्थः तत् प्रत्यनीकमलंकारः ॥ 'त्वं विनिर्जिते' त्यत्र प्रतिपक्षसंबन्धिविषयं प्रत्यनीकम्।

### विवेकः

प्रतिपक्षमित्या। आश्रिताश्रयप्रस्तावादस्य सङ्गतिः। निकृतिरपकारः। अन्वर्थतामाह—अलीकेत्यादि। प्रतिपत्तृगतत्वेन बलवत्त्वख्यापनं प्रयोजनम्। त्वमित्यादि। अत्र त्वत्सम्बन्धिनीं स्मरस्तापयतीति तद्विषये स्मरस्याबलत्वं ख्याप्यते।

### दीपिका

प्रतिपक्षमिति। आश्रिताश्रयप्रस्तावादस्य सङ्गतिः। निकृतिरपकारः। अन्तर्थतामाह —अलीकेत्यादि। प्रतिपत्तृगतत्वेन बलवत्त्वख्यापनं प्रयोजनम्। त्वमित्यादि अत्र त्वत्सम्बन्धिनीं स्मरस्तापयतीति तद्विषये स्मरस्याबलत्वं ख्याप्यते।

### दर्पणः

असहेन [अशक्तेन] असमर्थेन, नाम निरुक्तिः अनीकेति। अनीकं सैन्यं, अनीकेत्यादि स्वोक्तमेव विवृणीति यथेति। तत्प्रतिनिधीभूतं, तदीयता यद्वदेव विषयीकृतं विग्रहो वैरं।

### साहित्यचूडामणिः

प्रत्यनीकमाह—प्रतिपक्षमिति। तदीयस्य प्रतिपक्षसम्बन्धिनः कस्यचिद् दुर्बलस्य। तत्स्तुत्यै प्रतिपक्षस्तोत्राय।

यद् बलवतः प्रतिपक्षस्य दुर्बलेन प्रतिपक्षेण प्रतिकारः कर्त्तु न पार्यते, पार्यते तु तत्सम्बन्धिन कस्यचिद् दुर्बलस्य, तत् प्रत्यनीकमित्याह—विकृतीति। साक्षादिति। तदीयनिरसनं हि विपक्षस्य किञ्चिद् व्यवहितं सन्निरसनम्। साक्षादिति। तदीयनिरसनं हि विपक्षस्य किञ्चिद् व्यवहितं सन्निरसनम्। औपचारिको व्यपदेश इत्याह—अनीकेति। एतदुपपादयति—यथेति। अनीकस्य सैन्यस्य प्रतिनिधिःप्रत्यनीकं, तत्सादृश्यादलङ्कारोऽपि तथा। यत् सूत्रं "प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम्" (अलङ्कार सू० ६९)।

त्वमिति। अत्र वर्णनीयः कामस्य विपक्षः तद्रूपापहाराद् अनुकर्तृत्वात्। प्रतिकर्तुमक्षमेण कामेन तदीया नायिका तिरस्क्रियते।

### सम्प्रदाप्रकाशिनी

प्रतिपक्षमिति। अभिभावुकमपि प्रतिपक्षं साक्षात् प्रतिकर्तुमशक्तेन तत्प्रकर्षायतत्सम्बन्धिनस्तिरस्करणमनीकप्रतिनिधिवदिति प्रत्यनीकम्।

व्याचष्टे—निकृतीत्यादि। तदीयः सम्बन्धी सम्बन्धिसम्बन्धी च।

त्वमिति। अत्र सम्बन्धिन्या नायिकायास्तिरस्कारः।

## मधुमती

प्रतिकर्त्तुंमिति । प्रतिपक्षं प्रतिकर्तुं अशक्तेन तदीयस्य तत्स्तुत्यै या तिरस्क्रिया तत् प्रत्यनीकमुच्यते इत्यन्वय: । तदेतत् व्याचष्टे—न्यक्कृतीति । प्रत्यनीकपदव्युतपत्तिमाह—तदनीकेति ।

## विस्तारिका

प्रतिपक्षमिति । प्रतिपक्षं प्रतिकर्तुमशक्तेन या तदीयतिरस्क्रिया प्रतिपक्षोत्कर्षफलिका सा प्रत्यनीकनामलङ्कार: ।

व्याचष्टे—न्यक्कृतीति । प्रतिपक्षमुत्कर्षयितुमिति । प्रतिपक्षोत्कर्षफलिका सा प्रत्यनीकनामालङ्कार: ।

व्याचष्टे—न्यक्कृतीति । प्रतिपक्षमुत्कर्षयितुमिति । प्रतिपक्षोत्कर्षफलकम् । तदाश्रितस्य तिरस्करणमित्यर्थ: । यथाश्रुते प्रतिपक्षोत्कर्षेच्छाया बाधित्वेन तुमर्थस्यासङ्गत्यापत्ते: । तथा चैतल्लक्षणं प्रविष्टमेव न भवति, किन्तु प्रतिपक्षव्यापारस्य विपरीतप्रयोजनकत्वसूचनाय, अत एव यथाऽनीकेऽभियोज्य इत्यादिग्रन्थेनैतद्विहायैव प्रतिपक्षीयाभियोग एव दृष्टान्तित इति ।

त्वं विनिर्जितेति । निर्जितमनोभवसौन्दर्य इत्यर्थ: । अनुशयाद् अक्रोशात् ।

## सारबोधिनी

प्रतिपक्षं प्रतिकर्तुमशक्यतया तदीयस्य तिरस्क्रिया प्रतिपक्षोत्कर्षफलक: स प्रत्यनीकनामालङ्कार: । प्रतिपक्षमुकर्षयितुमिति । प्रतिपक्षोत्कर्षफलकं तदाश्रितस्य तिरस्करणमित्यर्थ: । यथाश्रुतें प्रतिपक्षस्य प्रतिपक्षोत्कर्षेच्छाया बाधितत्वेन तुमर्थस्यासंगत्यापत्ते: । अनुशयात् इति दु:खात् ।

## काव्यप्रदीप:

**प्रतिपक्षमंशक्तेन प्रतिकर्तुं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥ ४३ ॥**

अपकारिणमपि विपक्षं साक्षादपकर्तुमक्षमेण केनापि तदीयस्य तिरस्करणं तमेवोत्कर्षयितुं तदुच्यते प्रत्यनीकम् । प्रतिनिधितुल्यत्वात् । यथानीकेऽभियोज्येऽशक्तेन तत्प्रतिनिधिभूत: कश्चिन्निगूढमभियुज्यते तथेहापि प्रतियोगिनि विजयेऽशक्तेन तदीयोऽन्यो विजीयत इत्यर्थ: । तदीयत्वं च साक्षात्संबन्धेन परम्परासंबन्धेन चेति द्विविधमेतत् । तत्राद्यं यथा—

**'त्वं विनिर्जितमनोभवरूप: सा च सुन्दर भवत्यनुरक्ता ।**
**पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादिव काम: ॥'**

अत्र कामिन्या: कामिनश्च साक्षादेव स्वस्वामिभाव: संबन्ध: ।

### काव्यप्रकाशखण्डनम्

**प्रतिपक्षमशक्तेन प्रकिर्त्तुं तिरस्क्रिया।**
**या तदीयस्य तत् स्तुत्यै प्रत्यनीकं तदुच्यते॥ (का० १२९)**

प्रतिपक्षं [प० ५७.१] तिरस्कर्तुमित्यन्वयः। तत्स्तुत्यै प्रतिपक्षस्तुत्यै। यथा—

**त्वं विनिर्जितमनोभवरूपः सा च सुन्दरि! भवत्यनुरक्ता।**
**पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादिव कामः॥**

अनुशयादिव क्रोधादित्यर्थः।

### आदर्शः

प्रत्यनीकालङ्कारमाह—प्रतिपक्षमिति। प्रतिपक्षं प्रतिकर्त्तुं निग्रहीतुमशक्तेन जनेन या तदीयस्यापरस्य तिरस्क्रिया तस्य प्रतिपक्षस्यैव स्तुत्यै पर्यवस्यति, सा प्रत्यनीकनामाऽलङ्कार इत्यर्थः। व्याचष्टे—न्यक्कृतीति। इदं प्रतिकरणबीजं दर्शितम्। संज्ञाव्युत्पत्तिमाह—अनीकेति। तदपि पुनर्विशदयति—यथेति।

त्वं विनिर्जितेति। नायके दूत्या उक्तिरियम्। भवत्यनुरुक्ता, अनेन तस्यास्तदीयत्वं दर्शितम्। अतोऽनुशयाद् दुःखादिव तां कामः पञ्चभिः शरैर्युगपदेव ताडयतीत्यर्थः। अत्र रूपनिर्जयात् कामस्य न्यक्कृतिपरो नायकः, तत् प्रतिकर्त्तुमशक्तेन कामेन तदनुरक्तनायिकातिरिस्क्रिया नायकस्यैव सौन्दर्यस्तुत्यै।

### सुधासागरः

तदीयत्वं च साक्षात्सम्बन्धेन परम्परासम्बन्धेन चेति द्विविधमेतत्। तत्राद्यं यथा—त्वमिति। रथोद्धता छन्दः। 'रान्नराविह रथोद्वता लगौ' इति लक्षणात्।

अत्र कामिन्याः कामिनश्च साक्षादेव स्वस्वामिभावः सम्बन्धः।

यथा वा

**यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।**

**कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥ ५४५ ॥**

इन्दोरत्र तदीयता संबन्धिसंबन्धात् ॥

---

### सङ्केतः

यथावेति । अत्र राहोः विष्णुः बलवान् प्रतिपक्षः इति विष्णवशक्तो राहुः, तदीयं वक्त्रं, तस्य च सम्बन्धी सादृश्यात् इन्दुः । तत्पराभवात् विष्णोः प्रकर्षावगतिः । तदाह—इन्दोरिति । सम्बन्धि वक्त्रम् । तेन हि इन्दोः सम्बन्धः, साम्यात् । तदीयता विष्णुसक्ता । इति प्रत्यनीकम् ।

### बालचित्तानुरञ्जनी

संबन्धसंबन्धिविषयमुदाहरति यथेति । कायनिग्रहगृहीतविग्रहः कृती राहुर्यस्य विष्णोः किञ्चिदपकर्तुमक्षमः कान्तवक्त्रसदृशाकृतिमिन्दुमधुनापि बाधते । अत्र भगवान् प्रतिपक्षः तमपकर्तुमक्षमेण राहुणा तदीयश्चन्द्रः तिरस्क्रियते । तत्कथमिन्दोर्भगवत्संबन्धित्वमित्यत आह इन्दोरिति । भगवत्संबद्धं मुखं तत्संबन्धश्च सादृश्यं चन्द्रे, यदुक्तं कान्तवक्षसदृशाकृतीति ।

### काव्यादर्शः

यथा वेत्यनेन प्रतिपक्षसंबन्धिनः संबन्धिविषयमुदाहरति—'यस्य' इति । अत्र राहोर्भगवान् विष्णुर्बलवान् प्रतिपक्षः, तदीयं वक्त्रम्, वक्त्रस्य च संबन्धी सादृश्यद्वारेण दुर्बलश्चन्द्रः, तत्तिरस्काराद् भगवतः प्रकर्षावगतिः' इत्याह—इन्दोरिति । संबन्धिवक्त्रँ तेन हीन्दोः संबन्धः समत्वात् ॥ १२७ ॥ [५ं ॥]

### विवेकः

यस्येत्यादि—'अत्र राहोर्भग- वान् कृष्णो बलवान् प्रतिपक्षः, तत्सम्बन्धि वक्त्रं, तेनोन्दोः सादृश्यमुखेन सम्बन्धः । तस्य दुर्बलस्य तिरस्काराद् भगवतः प्रकर्षाऽवगम्यते ।' (अ. स. २०७ पृ.)

### दीपिका

यस्येत्यादि । अत्र राहोर्भगवान् कृष्णो बलवान् प्रतिपक्षः, तत्सम्बन्धि वक्त्रं तेनेन्दोः सादृश्यमुखेन सम्बन्धः । तस्य दुर्बलस्य तिरस्काराद्भगवतः प्रकर्षोऽवगम्यते ।

### दर्पणः

तदीयता विषयीकृतं, विग्रहो वैरं, कृतीत्युपहासयुक्तं वचनम् ।

वस्तुस्थित्या स्वभावेन न त्वर्थभूतिवत् क्वचित्प्रतिभाविजृम्भवर्णता माहार्थ्यामात्रेण ।

### साहित्यचूडामणिः

अथ कथमिन्दोर्भगवत्सम्बन्धित्वमित्याह—इन्दोरिति । भगवत्सम्बद्धं मुखम, तत्सम्बद्धश्च तत्सादृश्याच्चन्द्रः । अत उक्तं—कान्तवक्त्रसदृशाकृतिमिति । सम्बन्धिसम्बन्धरूपाद् वैशिष्ट्याद् उदाहरणान्तरप्रदानमिति यावत् ।

### सम्प्रदायप्रकाशिनी

यस्येति । यस्य विष्णोः ।

योजयति—इन्दोरिति ।

### मधुमती

नन्वत्र कृष्णस्य चन्द्रमसा समं न स्वस्वामिभावादिः सम्बन्धः प्रतीयते । तथाच कथं तदीयत्वम्? अतदीयत्वेन च कथं प्रत्यनीकत्वम्? अत आह—इन्दोरिति । तथाच—कृष्णवक्त्रयोः अवयवावयविभावः अवच्छेद्यावच्छेदकभावो वा सम्बन्धः वक्त्रेन्द्वोस्तूपमानोपमेयभावः इति साक्षात् सम्बन्धाभावेऽपि परम्परासम्बन्धात् तदीयत्वमित्यर्थः । इति प्रत्यनीकम् ।

### विस्तारिका

यस्य किञ्चिदिति । यतः कायनिग्रहोऽपि गृहीतशरीरः, अत एव कृती ।

नन्विन्दोः कथं कृष्णपक्षीयत्वमित्यत आह—इन्दोरिति । सम्बन्धीति । सम्बन्धिनोऽवयवस्य मुखस्य सम्बन्धात् सादृश्यात्मकात् । तथा च साक्षात्सम्बन्धेन तदीयत्वविरहेऽपि परम्परासम्बन्धेन तदीयत्वमित्यर्थः ।

### काव्यप्रदीपः

**'यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।**
**कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥'**

अत्र यत्पदार्थेन मुखस्यावयवावयविभावः संबन्धस्तेन चन्द्रस्य सादृश्यलक्षण इति परम्परासंबन्धः ।

### काव्यप्रकाशखण्डनम्

**विधीयते यद् बलवत्सजातीयोपलम्भनैः ।**
**तिरस्करणमन्यस्य तन्मीलितमिति स्मृतम् ॥ (?का. १३०)**

तथा च बलवत्सजातीयग्रहणकृता ग्रहणात्मा अभिभव एव मीलितमिति मन्तव्यम् ।

मल्लिकामालधारिण्यः सर्वाङ्गीणाद्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥

## आदर्शः

प्रपञ्चयति—यथा वा—यस्येति । विष्णुना राहुशिरः कर्त्तनाद् विष्णुस्वरूपेण कृष्णेन राहोः कायनिग्रहः कृतः, ततो गृहीतमत्सरो राहुर्यस्य कृष्णस्य किञ्चिदपकर्त्तुमक्षमः सन् यस्य कमनीयवक्त्रसदृशाकृतिम् इन्दुम् अधुनाऽपि बाधते, यतः कृती कार्यकुशल इत्यर्थः । अत्रेन्दोः कृष्णसम्बन्धित्वं घटयति—इन्दोरत्रेति । कृष्णसम्बन्धि तद्वक्त्रं सादृश्यात्तत्सम्बन्धी इन्दुरिति सम्बन्धिसम्बन्धः ।

## सुधासागरः

द्वितीयं यथा-यस्येति । छन्दः पूर्वोक्तमेव । कायनिग्रहेण शिरःकर्तनेन गृहीतविग्रहो धृतवैरः कृती विचक्षणो राहुः, यस्य श्रीकृष्णस्य किञ्चिदपकर्तुमप्यपकारं कर्तुमक्षमोऽसमर्थः सन् कान्तं यद्वक्त्रमर्थात् कृष्णस्य तत्सदृशी आकृतियस्य तथाभूतमिन्दुमधुनापि बाधते इदानीमपिग्रसतीत्यर्थः ।

नन्वत्र कृष्णस्य न स्वस्वामिभावः सम्बन्धः प्रतीयते, तथा च कथं तदीयत्वम्, अतदीयत्वे च कथं प्रत्यनीकत्वमित्यत आह—इन्दोरत्रेत्यादि । तथा च यत्पदार्थस्य कृष्णस्य वक्त्रेणावयवावयविभावः सम्बन्धः । वक्त्रस्येन्दुनोपमानोपमेयभाव इति साक्षात्सम्बन्धाभावेऽपि परम्परासम्बन्धात्तदीयत्वमित्यर्थः । व्याख्यातं च प्रदीपकारैः—अत्र यत्पदार्थेन मुखस्यावयवावयविभावसम्बन्धः तेन चन्द्रस्य लक्षणा इति परम्परासम्बन्ध इति ।

(सू० १९७) समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते।
निजेनागन्तुना वापि तन्मीलितमिति स्मृतम्॥ १३०॥

सहजम् आगन्तुकं वा किमपि साधारणं यत् लक्षणम् तद्द्वारेण यत् किंचित् केनचिद्वस्तु वस्तुस्थित्यैव बलीयस्तया तिरोधीयते तत् मीलितमिति द्विधा स्मरन्ति। क्रमेमोदाहरणम्—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते॥ ५४६॥

अत्र दृक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकम् साधारणं च महोदयेन तत्राप्येतस्य दर्शनात्।

---

**सङ्केतः**

समेन लक्ष्मणा साधारणेनेत्यर्थः। निजेन स्वाभाविकेन। वस्तुना वस्त्वन्तरस्य तिरोधाने मीलितं सान्वयं नाम। बलीयस्तया इति वचनात् न सामान्यालङ्कारता। तत्र हि साधारणगुणाश्रयेण भेदानुपलक्षणम्, न तु उत्कृष्टगुणेन निकृष्टस्य तिरोधानम्।

अपाङ्गेति। अत्र दृष्टिरलत्वादिकं सहजं मदोदयकृतस्य दृष्टितरलत्वादेः तिरोधायकम्। तत्रापीति। महोदयेऽपीत्यर्थः। एतस्य दृष्टितरलत्वादेः।

**सङ्केतः (रूय्यकः)**

अपाङ्गेति—अत्राङ्गेन मदोदयस्य न धर्मसाम्यादैकात्म्यमतिशयाय विवक्षितमिति त्वनासादितं, तत् स्वभावसिद्धं वस्तु, त [त] एव बलीयस्त्वात्तस्य तिरोधानहेतुः।

**बालचित्तानुरञ्जनी**

मीलितालङ्कारं लक्षयति समेनेति। समेन निगूह्य साधारणेन लक्षणेन कृत्वा कस्यचिद्वस्तुनो निगूह्यस्य केनचिद्वस्त्वन्तरेण निगूहनं मीलितम्। सहजमागन्तुकमिति। आद्यमुदाहरति अपाङ्गेति। लोचने अपाङ्गचञ्चले, गिरः

मधुरवक्त्रवर्णाः, गतिः विलासभरमन्थरा, मुखमतीव कान्तमिति मृगदृशः अङ्गके लीलया स्वतः स्फुरितं तत् तस्मात् कारणात्। अत्र कृतपदोऽपि मदोदयो न संलक्ष्यते। अत्राङ्गनयासहजेन दृष्टितारल्यादिना लिङ्गभूतेन करणेन मदोदयो निगूह्यते। केचित्तु, समेन लक्ष्मणा वस्तुनेति सामानाधिकरण्यात् अन्वयमाचक्षाणाः अङ्गनालक्ष्मणा दृष्टितारल्यादिना मदोदयसाधारणेन मदोदयवर्ति तदेव तिरस्क्रियत इत्याहुः।

### काव्यादर्शः

समेनेति। येन स्वाभाविकेनागन्तुकेन वा लक्ष्मणा यद्वस्तुना वस्त्वन्तरं तिरोधीयते तदन्वर्थाभिधानं मीलितम्, न चायं सामान्योऽलंकारः, तत्र हि साधारणगुणयोगाद् भेदोऽनुपलक्षणं, अत्र तु उत्कृष्टगुणेन निकृष्टस्य तिरोधानं, न तु धर्मसाम्याद् ऐकात्म्यमित्यनयोर्भेदः। सहजेन, तथा—'अपाङ्गेति। अत्र दृक्तरलत्वादिना स्वाभाविकेन लक्ष्मणा मदोदयकृतं दृक्तारल्यादि तिरोहितम्। तत्रापीति। मदोदयेऽपि दृक्तारल्यादिदर्शनात्।

### विवेकः

समेनेति—तिरस्कारप्रस्तावदस्य सङ्गतिः। वस्तुना वस्त्वन्तरतिरोधानं मीलितमित्यन्वर्थं नाम। न चायं सामान्यालङ्कारः। 'तथा हि सहजेनापाङ्गतरल इत्यादावङ्गत्वेन मदोदयस्य न धर्मसाम्यादैकात्म्यमतिशयायाविवक्षितमपि नासादितम्। तत्स्वभावमिदं वस्तु, अत एव बलीयस्तया तस्य तिरोधानहेतुः। सामान्येन तु यत्रैकात्म्यं तदसदेव, प्रस्तुततिरोधानातिशयोक्त्या विवक्षितमिति सिद्धोऽस्य ततो व्यतिरेकः" (रु. सं. ७० पृः)। तेनात्र दृक्तारल्यादिना स्वाभाविकेन चिह्नेन महोदयो दैवकृता बाधा विदीयत इति मीलितम्।

### दीपिका

समेनेति तिरस्कारप्रस्तावादस्य सङ्गतिः। वस्तुना वस्त्वन्तरतिरोधानं मीलितमित्यन्वर्थं नाम। न चायं सामान्यालङ्कारः।

तथाहि—सहजेनापाङ्गतरल इत्यादावङ्गत्वेन मदोदयस्य च धर्मसाम्यादैकात्म्यमतिशयायाविवक्षितमपि नासादितम्। तत्स्वभावमिदं वस्तु, अत एव बलीयस्तया तस्य तिरोधानहेतुः। सामान्येन तु यत्रैकात्म्यं तदसदेव, प्रस्तुततिरोधानातिशयोक्त्या विवक्षितमिति सिद्धोऽस्य ततो व्यतिरेकः। तेनात्र दृक्तारल्यादिना स्वाभाविकेन चिह्नेन मदोदये दैवकृता बाधा विधीयत इति मीलितम्।

### दर्पणः

वर्णानां वक्रता वैदग्ध्यव्यञ्जकत्वात्, स्वत स्वभावतः न तु मादौ,

### साहित्यचूडामणिः

मीलितमाह—समेनेति। निगूह्यत इतिदीर्घविशिष्टः पाठो लेखकप्रमादजः, यकि सति गुणाभावाद् "ऊदुपधाया गोहः" (६-४-८९) इत्यूदादेशाभावात्। कस्यचिल्लक्षणभूतेन गुह्यसाधारणेन यत् कस्यचिद् वस्तुनो निगुह्यस्य केनचिद् वस्त्वन्तरेण निगूहनं तन्मीलितम्।

तच्च साधारणं लक्षणं सहजमागन्तुकमिति द्विधेत्याह—सहजमिति। वस्तुस्थित्येति। सामान्याद् व्यवच्छेदः। तस्य साधारणगुणयोगाद् भेदानुपलक्षं रूपम्, अस्य तूत्कर्षनिकर्षरूपेण। व्यतिरेकेण स्वरूपमात्रनिगूहनं निगुह्यस्येति न चेदं तद्गुणः। तत्र ह्यनपह्नुतस्त्वरूपमेव प्रकृतं वस्त्वन्तरगुणोपरक्त्या प्रतिपद्यते, अत्र तु प्रकृतं वस्त्वेव वस्त्वन्तरेणावच्छादितम्। इति। यत् सूत्रं "वस्तुना वस्त्वन्तरनिगूहन मीलितम्।" [अलङ्कारसू० ७१] इति।

अपाङ्गेति। अत्रापाङ्गेन कर्त्रा सहजेन दृष्टितारल्यादिना लिङ्गभूतेन करणेन मदोदयसाधारणेन स मदोदयो निगुह्यते। केचित्तु "समेन लक्ष्मणा वस्तुने"-ति सामानाधिकरण्यादन्वयमाचक्षाणाः अङ्गकवर्तिना दृष्टितारल्यादिना मदोदयसाधारणेन मदोदयवर्ति तदेव तिरस्क्रियते इत्याहुः।

## सम्प्रदायप्रकाशिनी

समेनेति। निजनागन्तुकेन वा गूहनीयसदृशेन लक्षणेन वस्तु वस्त्वन्तरं परमार्थतो यन्निगूहति तन्मीलितम्। वस्तुसामानाधिकरण्यधीर्लक्ष्मणो मा भूदिति विभक्तिविपरिणामेन वाक्यं भिन्दन् व्याचष्टे—सहजमित्यादि।

अपाङ्गेति। लीलया स्वत इति स्फुरितं स्वभावतो लीलैवेत्थं स्फुरति स्म।

योजयति—अत्रेति। गूहनस्य स्फुटत्वात् लिङ्गस्य निजत्वं साधारण्यं च दर्शितम्।

## मधुमती

तिरोधीयत इति। तथाच—एकेन अपरस्याभिभवः मीलितम्। अभिभवश्च—बलवत्सजातीयग्रहणकृतं ग्रहणम्। अतो न क्वापि दोषः। इति मीलितम्।

## विस्तारिका

समेनेति। स्वाभाविकेन सोऽप्यधिकेन वा साधारणधर्मेण वस्तुगत्यैव, किञ्च, किञ्चिद्वस्तु यन्निगूह्यते तन्मीलितनामालङ्कारः।

व्याचष्टे—सहजेति। लक्षणं चिन्हम्। वस्तुस्थित्येति वस्तुनेत्यस्य विवरणम्। तिरोधीयत इति। अभिभूयत इत्यर्थः।

तथा चैकेनापरस्याभिभवो मीलितमित्यर्थः। अभिभवश्च बलवत्सजातीयग्रहणकृतमग्रहणम्, अतो न व्याजोक्त्यतिव्याप्तिः। तत्र गृहीतस्यैव कपटेन गोपनात्। न चापह्नुत्यतिव्याप्तिः, उपमानोपमेयभावाभावात्।

अपाङ्गेति। अत्र स्वाभावाकिधर्मकरणकं निगूहनम्।

## सारबोधिनी

समेनेति। समेन साधारणधर्मेण निजेन स्वाभाविकेन लक्षणं चिन्हम्। वस्तुस्थित्येति। वस्तुनेत्यस्य विवरणम्। तिरोधीयत इति। अभिभूयत इत्यर्थः। तथा चैकेनापरस्याभिभवो मीलितमित्यर्थः। अभिभवश्च

बलवत्सजातीयग्रहणकृताग्रहणम्। अतो न व्याजोक्त्यतिव्याप्तिः। अत्र गृहीतस्यैव कपटेन गोपनान्नापह्नुत्यतिव्याप्तिः, उपमानोपमेयभावाभावात्। अपाङ्गेति। अत्र स्वाभाविकधर्मकरणकं निगूहनं स्थाप्यत इति।

## काव्यप्रदीपः

**समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते।**
**निजेनागन्तुकेनापि तन्मीलितमिति स्मृतम्॥ ४४॥**

निजं स्वाभाविकं लक्ष्म निगूहनीयसाधारणं चिन्हं तद्द्वारेण केनचिद्वस्तुना बलवत्तया यत्किंचिद्वस्तु वस्तुगत्यैव तिरोधीयते तन्मीलितालंकारः। तच्च द्विधा—लक्ष्मणः क्वचित्स्वाभाविकत्वात्क्वचिदागन्तुकत्वाच्चेत्यर्थः। तत्र स्वाभाविकेन लक्ष्मणा मीलितं यथा—

**'अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो**
**विलासभरमन्थरा गतिरतीव कान्तं मुखम्।**
**इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया**
**तदत्र न महोदयः कृतपदोऽपि संलक्ष्यते॥'**

अत्र दृक्तरलतादि अङ्गस्य स्वाभाविकं लिङ्गं समानं च तिरोधेयेन मदेन। तत्रप्येतदुपलम्भात्।

## काव्यप्रकाशखण्डनम्

**विधीयते यद् बलवत्सजातीयोपलम्भनैः।**
**तिरस्करणमन्यस्य तन्मीलितमिति स्मृतम्॥ (?का. १३०)**

तथा च बलवत्सजातीयग्रहणकृता ग्रहणात्मा अभिभव एव मिलितमिति मन्तव्यम्।

**मल्लिकामालधारिण्यः सर्वाङ्गीणाद्रचन्दनाः।**
**क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥**

## आदर्शः

मीलितालङ्कारमाह—समेनेति। निगूह्यमानस्य यल्लक्ष्म चिन्हं तत्समेन निगूहकस्य लक्ष्मणा निजेन आगन्तुकेन वा वस्तु यन्निगूह्यते अपरिचेयीक्रियते, तन्निगूहनमेव निजागन्तुकत्वभेदाद् द्विविधो मीलितालङ्कार इत्यर्थः। लक्ष्मण एव द्वैविध्यमस्तीत्याह— निजेनेति। व्याचष्टे—सहजमिति। निगूहने हेतुमाह—वस्तुस्थित्यैवेति।

अपाङ्गेति। मृगदृशामङ्गके लीलया स्वत एव इति स्फुरितम्। किन्तदित्यत्राऽऽह—अपाङ्गेति। तत्तस्मादत्रापाङ्गके मदोदयो मदिरामत्ततोदयः कृतपदोऽपि न संलक्ष्यत इत्यर्थः। अत्राङ्गस्य स्वाभाविकेन दृक्तरलत्वादिना लक्ष्मणा मदोदयसाधारणेन तत्तिरोधानं ग्राहयति—अत्रेति।

### सुधासागरः

सहजमित्यादि । निजं स्वभाविककम् । लक्ष्म निगूहनीयं साधारणं चिह्नम्, तद्द्वारेण केनचिद्वस्तुना बलवत्तया यत्किञ्चिद्वस्तु वस्तुगत्यैव तिरोधीयते तन्मीलितम् । तच्च द्विधा । लक्ष्मणः क्वचित्स्वाभाविकत्वात्क्वचिदागन्तुकत्वाच्चेत्यर्थः ।

तत्र स्वाभाविकेन लक्ष्मणा मीलितं यथा—अपाङ्ग इति ।

अयमर्थः—अपाङ्गयोः प्रान्तयोस्तरले चञ्चले दृशौ नेत्रे । मधुरा वक्रा गूढार्थाश्च वर्णा यासां तथाभूता गिरः । विलासभरेण मन्थरा मन्दा गतिः । अतीव कान्तमत्यन्तमनोहरं मुखम्, इत्येवं सर्वं मृगदृशां लीलया अङ्गके कोमलाङ्गे स्वतःस्फुरितम् स्वाभावादेवोल्लसितम्, तदत्र शरीरे महोदयः निरूढोऽपि गर्वप्रकाशः कृतपदोऽपि कृतस्पर्शोऽपि न संलक्ष्यते इति । पृथ्वी छन्दः । 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात् ।

अत्रेत्यादि । अत्र दृक्तरलताद्यङ्गस्य स्वाभाविकं लिङ्गम्, समानं च तिरोधेयेन मदेन, तत्राप्येतदुपलम्भादित्यर्थः । वस्तुतस्तु—'न मदः क्वचित् कृतपदोऽपि' इति पाठो युक्तः, मदो मदिरादिजन्यो धनादिजन्यो वा गर्वः कृतपदोऽपि निरूढोऽपि क्वचित्क्वाप्यवयवे न संलक्ष्यते । तथा चात्र सहजलीलाजन्यत्वात्स्वाभाविकं दृक्तरलताद्यङ्गनिष्ठं लिङ्गम् । तच्च लीलामदसाधारणचिह्नम्, मदेनापि जन्यत्वात् । एवञ्च प्रसिद्धतया बलिष्ठेन लीलारूपवस्तुना स्वाभाविकसाधारणलक्ष्मद्वारा मदरूपं वस्तु तिरोहितमिति भावः ।

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।

अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं तेषामहो
बत भियां न बुधोऽप्यभिज्ञः ॥ ५४७ ॥

अत्र तु सामर्थ्यादवसितस्य शैत्यस्य, आगन्तुकत्वात्तत्रभवोयोरपि कम्पपुलकयोस्ताद्रूप्यं समानता च भयेष्वपि तयोरुपलक्षितत्वात् ॥

---

**सङ्केतः**

बुधोऽपीति । शत्रुसम्बन्धित्वेन भियां बुधोऽपि कलने न दक्षः इति भावः । सामर्थ्यात् हिमाद्रिगुहानिवासरूपात् । तत्रभवयोः शैत्यजयोः । ताद्रूप्य आगन्तुकरूपत्वम् । समानतया साधारण्येन । तयोः कम्पपुलकयोः । उपलक्षितत्वात् दृष्टत्वात् । इति मीलितम् ।

**बालचित्तानुरञ्जनी**

द्वितीयमुदाहरति य इति । हे राजन् त्वत्पातशङ्कितधियः विवशा ये त्वद्द्विषः सदा हि अद्रेः कंदरासु निवसन्ति । अहो यत् आश्चर्यं सपुलकं सकम्पं अङ्गमुद्वहतामपि तेषां संबन्धिनीनां भियामभिज्ञः बुधोऽपि न । अत्र वर्णनीय विषयहिमकन्दरानिवासशैत्यसत्युद्भावे[?] ताभ्यां भयसाधारणाभ्यां तावेव कम्परोमाञ्चौ तिरस्क्रियेते ।

**काव्यादर्शः**

आगन्तुकेन यथा—'ये कन्दरासु' इति । 'शत्रूणां संबन्धित्वेन भयानां सुधूरपि न शिक्षितः ।' अत्र हिमाद्रिकन्दरानिवाससामर्थ्यप्रतिपन्नेन शैत्येन समुद्भावितौ आगन्तुकौ कम्परोमाञ्चौ भयकृतोस्तयोस्तिरोधायकौ । तत्रभावयोरिति शैत्यसमुत्थयोः । ताद्रूप्यमिति आगन्तुकरूपत्वम् । भयोत्थकम्पुलकसादृश्यं च, भयेष्वपि कम्पपुलकयोर्दृष्टात्वात् ॥ १२८ ॥ [५१ ॥]

**विवेकः**

आगन्तुकेन यथा ये कन्दरास्वित्यादि । त्वत्पातेति—पातः पातकम् । अत्र हिमाद्रिकन्दरनिवाससामर्थ्यप्रतिपन्नेन शैत्येन समुद्भावितावगन्तुकौ । कम्परोमाञ्चयोरुभयकृतयोस्तिरोधायकत्वादेव च मीलितव्यपदेशः ।

### दीपिका

आगन्तुकेन यथा—ये कन्दरास्वित्यादि। त्वत्पातेति। पात: पातनम्। अत्र हिमाद्रिकन्दरनिवाससामर्थ्यप्रतिपन्नेन शैत्येन समुद्भावितावागन्तुकौ। कम्परोमाञ्चयोर्भयकृतयोस्तिरोधायके तत्त्वादेव च मीलितव्यपदेश:।

### दर्पण:

ये नायात: [निवसन्ति] सरतप्रमाणम्। सानर्थ्यादवसितहिमाद्रिकन्दरानिवासोपादानाज्ञानस्स्यसूत्रस्थां समलक्ष्मतामुदाहरणे [?] प्रयोजयन्नाह समानतेति। न केवलं हिमाद्रिकन्दरा निवास इति शास्त्रार्थ:।

### साहित्यचूडामणि:

य इति अत्र वर्णनीयविद्विषां हिमवत्कान्तारनिवासशैत्यसमुद्भाविताभ्यां भयसाधारणाभ्यां कम्प्ररोमाञ्चाभ्यां तथैव भयवर्तिनौ कम्परोमाञ्चौ तिरस्क्रियेते इति। इत्थमुभयथापि ग्रन्थयोजना ग्रन्थकारस्यापि सम्मतेत्यत्र सहृदया: प्रमाणम्।

नन्वत्र कथं शैत्यस्य प्रतीतिरित्याह—सामर्थ्येति। ननु कथं कम्पपुलकयोरागन्तुकत्वमित्याह—शैत्यस्येति। शैत्यस्यागन्तुकत्वात् तत्कार्ययोस्तयोरपि तथात्वम्।

### सम्प्रदायप्रकाशिनी

ये कन्दरास्त्विति कम्पपुलकौ हि सामर्थ्यात्।

योजयति—अत्र त्विति। ताद्रूप्यमपृथङ्निर्देशात्।

### विस्तारिका

ये कन्दरास्तविति। अत्रागन्तुकधर्मशैत्यकरणत्वं निगूहनम्।

### काव्यप्रदीप:

आगुन्तकेन लक्ष्मणा यथा—

**'ये कंदरासु निवसन्ति सदा हिमाद्रे-**
**स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते।**

**अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं**
**तेषामहो बतं भियां न बुधोऽप्यभिज्ञ:॥'**

अत्र कम्पपुलके अङ्गस्य लिङ्गे हिमाद्रिकंदरनिवाससामर्थ्याधिगतशीतरूपकारणस्यागन्तुकत्वेन तत्कार्यभूतयोस्तयोरप्यागन्तुकत्वं भयै: समानता च। तेष्वपि तयोरुपलम्भात्।

## आदर्शः

आगन्तुलक्ष्मणा निगूहनमाह—ये कन्दरास्विति। त्वत्पातशङ्किता त्वदभिपाताशङ्कायुक्ता धीर्येषां तादृशा [विवशा]स्त्रासादिना अनायत्तेन्द्रियास्ते द्विषो ये हिमालयाद्रेः कन्दरासु निवसन्ति, अहो आश्चर्यम्, भयादुत्पुलकं सकम्पं चाङ्गमुद्वहतामपि तेषां भियामभिज्ञो बुधो विवक्षणजनोऽपि नेत्यर्थः, हिमसम्बन्धेनापि पुलकादिसम्भवादिति भावः। अत्र भयस्य शैत्यस्य च साधारणौ कम्पपुलकौ आगन्तुलक्ष्मणी, ताभ्यां भयस्य तिरोधानम्। ननु कम्पपुलकयोस्तदङ्गवृत्तित्वात् कथमागन्तुकत्वम् इत्यत आह—अत्रेति। 'सामर्थ्यात्' हिमाद्रिपदलभ्यहिमस्य, 'अवसितस्य' प्राप्तस्य। 'तादूप्यम्' आगन्तुत्वम्।

## सुधासागरः

आगन्तुकेन यथा—'ये कन्दरे'-ति।

अयमर्थः—हे राजन् त्वत्पातेन त्वदाक्रमणेन शङ्किता धीर्येषां तथाभूतास्ते द्विषस्त्वच्छत्रवो विवशाः सन्तो हिमाद्रेः कन्दरासु सदा निवसन्ति, उत्पुलकमुद्गतरोमाञ्चं सकम्पं चाङ्गमुद्वहतामपि तेषां शत्रूणां भियां तन्निष्ठाभयानाम्, अहो बतेति खेदातिशये बुधः पण्डितोऽपि नाभिज्ञ इति। वसन्ततिलका छन्दः। 'उक्ता वसन्ततिलका तभजा जगौ ग' इति लक्षणात्।

अत्र कम्पपुलके अङ्गस्य लिङ्गे; हिमाद्रिकन्दरनिवाससामर्थ्यादधिगतशीतरूपकारणस्यागन्तुकत्वेन तत्कार्यभूतयोस्तयोरप्यागन्तुकत्वं भयैः समानता च, तेष्वपि तयोरुपलम्भात्। एवञ्च हिमाद्रिसन्निधानतया बलिष्ठेन शीतरूपवस्तुना आगन्तुकसाधारणकम्पादिचिन्हद्वारा भयरूपं वस्तु तिरोहितमिति भावः।

(सू० १९८) स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम्।
विशेषणतया यत्र वस्तु सैकावली द्विधा॥ १३१॥

पूर्वं पूर्वं प्रति यथोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन तत् स्थापनं निषेधो वा संभवति सा द्विधा बुधैरेकावली भण्यते। क्रमेणोदाहरणम्।—

**पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्ग्यः।**
**रूपं समुन्मीलितसद्विलासम् अस्त्रं विलासः कुसुमायुधस्य॥ ५४८॥**

---

### सङ्केतः

स्थापनं विधिः, अपोहः निषेधः अन्यव्यवच्छेदः। सनियमो विधिरिति यावत्।

### बालचित्तानुरञ्जनी

एकावलीमलङ्कारं लक्षयति ख्याप्यत इति व्याकरोति पूर्वमिति। स्थापना विधिः। अपोहो निषेधः। तत्राद्यमुदाहरति पुराणीति। यस्यां पुराणि सवराङ्गनानि। वराङ्गनाः रूपपुरस्कृताङ्ग्यः। रूपं समुन्मीलितसिद्विलासम्विलासाः कुसुमायुधस्यास्त्रम्।

### काव्यादर्शः

स्थापनं विधिः। अपोहो निषेधोऽन्यव्यवच्छेदः। सनियमो विधिरित्यर्थः। स्थापने, यथा—'पुराणि' इति। अत्र वराङ्गनारूपमित्यादि ज्ञेयम्।

### विवेकः

स्थाप्यत इति मीलितवैपरीत्यादस्य सङ्गतिः। यथापूर्वमिति पूर्ववदव्ययी भावः। तेन पूर्वं पूर्वं प्रति यत्र परम्परं विशेषणत्वेन स्थाप्यते स एकावलीग्रन्थन्यायादेकावल्याख्योऽलङ्कारः। तत्र विशेषत्वं स्थापनेन वा निवर्त्तनेन वेति द्विधेति। अत्र स्थापनेन यथा पुराणि यस्यामित्यादि। पुराणि गृहाणि। अत्र वराङ्गनाः. पुराणां विशेषणं स्थापनीयत्वेन स्थितम्। एवं वराङ्गनानां रूपमित्यादि ज्ञेयम्।

### दीपिका

स्थाप्यत इति मिलितवैपरीत्यादस्य संङ्गतिः। यथापूर्वमिति पूर्ववदव्ययीभावः। तेन पूर्वं प्रति यत्र परं परं विशेषणत्वेन स्थाप्यते स एकावलीग्रन्थननयायादे कावल्याख्योऽलङ्कारः। तय विशेषणत्वं स्थापेनन वा निर्वतनेन वेति द्विधेति। तत्र स्थापनेन यथा पुराणि यस्यामित्यादि। पुराणि गृहानि। अत्र वराङ्गनाः पुराणां विशेषणं स्थापनीयत्वेन स्थितम्। एवं वराङ्गनाः रूपमित्यादि शेयम्।

**दर्पणः**

ख्याप्यते विधीयते, अहोवपे निषिध्यते ।

**साहित्यचूडामणिः**

एकावलीमाह—स्थाप्यत इति । स्थापनं विधिः । अपोहो निषेधः । पूर्वं पूर्वं प्रति परं परं यत्र विशेषण-त्वलक्षणं वैचित्र्यमनुभवति सैकावलीत्याह—पूर्वं प्रति इति । वीप्सयेति । अनेन यथापूर्वमिति समासः । परं परमिति च व्याख्यायते । यत् सूत्रं "यथापूर्वं परस्य विशेषणतया स्थापनेऽपोहने वैकावली" (अलङ्कारसू० ५५) इति । गृहाणीति । अत्र गृहाणां वराङ्गनाः, तासां रूपं, तस्य विलासः, तेषां च कुसुमायुधास्तत्वं विधीयते । एवं "सा गोष्ठी यत्र कविरि" (पृ० ३९)-त्यूह्यम् ।

**सम्प्रदायप्रकाशिनी**

स्थाप्यत इति । पूर्वं पूर्वं प्रत्युत्तरस्य विशेषणतया विधानमेका, निषेधोऽन्या । व्याचष्टे—पूर्वं प्रतीति । वीप्सया व्याप्तुमिच्छया आवृत्त्येत्यर्थः ।

पुराणीति । अत्र विधिः । उत्तरत्र निषेधः ।

**मधुमती**

पूर्वमिति । कारणमालायां तु पूर्वपूर्वस्य उत्तरोत्तरं प्रति हेतुता । अत्र तु उत्तरोत्तरस्य पूर्वपूर्वं प्रतिविशेषतया व्यवस्थापनं कर्तुमर्हति । अतः कथितपदत्वं च न दोषः वीप्सया बाहुल्येन । इत्येकावली ।

**विस्तारिका**

स्थाप्यत इति । परं परं वस्तु पूर्वं पूर्वं वस्तु प्रति निशेषणतया स्थाप्यते, निषिध्यते वा यत्र, सा द्विधैकावलीनामालङ्कारः ।

व्याचष्टे—पूर्व पूर्वमिति । वीप्सयेति । बाहुल्येनेत्यर्थः । तथैव चमत्काराभिधानादिति भावः ।

**सारबोधिनी**

परं परं वस्तु पूर्वपूर्वस्तुनि विशेषणतया स्थाप्यते निषिध्यते वा सा द्विधा एकावली नामालङ्कारः ।

**काव्यप्रदीपः**

**स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम् ।**
**विशेषणतया यत्र वस्तु सैकावली द्विधा ॥ ४५ ॥**

स्थापनं विधिः । अपोहो निषेधः । यथापूर्वमिति वीप्सायामव्ययीभावः । तेन पूर्वं पूर्वं वस्तु प्रति उत्तरस्य, वस्तुनो यत्र विशेषणतया बाहुल्येन विधिर्यत्र वा तथा निषेधः सा द्विधैकावली । विशेषणतया विधिरित्यस्य विधेर्विशेषणत्वमित्यर्थः । एवं विशेषणतया निषेधोऽपि । कश्चित्तु 'पूर्वकालविशेषणतया स्थितं वस्तु परं विशेष्यं

कृत्वा यत्र स्थाप्यतेऽपोह्यते वा सैकावलीति सूत्रार्थः' इत्याह। तत्तु पूर्वं प्रति यथोत्तरस्य वस्तुन इत्यादिप्रकाशविरुद्धम्। तत्र विधौ यथा—

'पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपरिष्कृताङ्ग्यः।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य॥'

अत्र पुराणामङ्गनास्तांसामङ्गविशेषणक्रियामुखेन रूपं तस्य विलासास्तेषामस्त्रत्वमिति क्रमेण विशेषणतया विधिः।

## काव्यप्रकाशखण्डनम्

**स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परस्परम्।**
**विशेषणतया यत्र वस्तु सैकावली द्विधा॥ (का. १३१)**

निषिध्यते। क्रमेणोदाहरणम्—

**पुराणि यस्यां सवराङ्गनानि वराङ्गनारूपपरिष्कृताङ्ग्यः।**
**रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य॥**

**न तज्जलं यन्न सुचारु पङ्कजं न पङ्कजं तद्यदलीनषट्पदम्।**
**न षट्पदोऽसौ न जुगुंज यः कलं न गुञ्जितं तन्न जहार यन्मनः॥**

यस्यां नगर्यां पुराणि शाखापुराणि सवराङ्गनानि सोत्तमस्त्रीकाणि। रूपेण परिष्कृतं सुन्दरं अङ्गं यासां ताः। समुन्मीलितो व्यक्तः समीचीनो विलोसो यत्र तादृशं कुसुमायुधस्य कामस्य विलासा एवास्त्रं इत्यर्थः।

## आदर्शः

एकावल्यलङ्कारमाह—स्थाप्यत इति। अपोह्यते निषिध्यते।

पुराणीति। यस्यां नगर्यां पुराणि गृहवाटिकाः पराङ्गनासहितानि, वराङ्गनाश्च रूपेत्यादयः। समुन्मीलित उद्बुद्धः सद्विलासः सल्लावण्यं यत्र, रूप तादृशम्, विलासाः कुसुमायुधस्यास्त्रमित्यन्वयः। अत्र विशेषणतया स्थापनं स्वयमग्रे ग्राहयिष्यति।

## सुधासागरः

स्थापनं विधिः अपोहो निषेधः। यथापूर्वमिति वीप्सायामव्ययीभावः। तेन पूर्वं पूर्वं प्रत्युत्तरस्य वस्तुनो यत्र विशेषणतया बाहुल्येन विधिः, यत्र वा तथा निषेधः, सा द्विधा एकावली। विशेषतया विधिरित्यस्य विधेर्विशेषणत्वमित्यर्थः। एवं विशेषणतया निषेधोऽपीत्यर्थः।

श्रीवत्सलाञ्छनादयस्तु पूर्वकालविशेषणतया स्थितं वस्तु परं विशेष्यं कृत्वा यत्र स्थाप्यतेऽपोह्यते वा सैकावलीति सूत्रार्थ इत्याहुः। तत्तु 'पूर्व प्रति यथोत्तरस्य वस्तुनः, इत्यादिप्रकाशविरोधादुपेक्ष्यम्। तत्र विधौ यथा—'पुराणी'ति। स्पष्टम्। उपेन्द्रवज्रा छन्दः। लक्षणमुक्तम्। अत्र पुराणामङ्गनाः, तासामङ्गविशेषणक्रियामुखेन रूपम्, तस्य विलासस्तेषामस्त्रमिति क्रमेण विशेषणतया विधिः।

न तज्जलं यन्न सुचारुपङ्कजं न
पङ्कजं तन् यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न
यो न गुञ्जितं तन्न जहार यन्मनः ॥ ५४९ ॥

पूर्वत्र पुराणां वराङ्गनाः तासामङ्गविशेषणमुखेन रूपम् तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते । उत्तरत्र प्रतिषेधेऽप्येवं योज्यम् ॥

---

**सङ्केतः**

न तदिति । अत्र जलादीनां सुचारुपङ्कजादीनि पराणि विशेषणानि निषेध्यत्वेन निबद्धानि । इत्येकावली ।

**बालचित्तानुरञ्जनी**

द्वितीयमुदाहरति न तदिति । तज्जलं न यत्र चारु पङ्कजं न तत् पङ्कजं न यत्र लीनः षट्पदो न । असौ षट्पदो न यः कल गुञ्जितो न । तद्गुञ्जितंन यन्मनो न जहार । क्रमेण विधायकत्वं चाह पूर्ववाक्येति ।

**काव्यादर्शः**

यथा—'न तद्' इति । अत्र जलादीनां सुचारुपङ्कजादीनि पराणि विशेषणानि निषेध्यत्वेन निबद्धानि ।

**विवेकः**

निवर्तनेन यथा न तज्जलमित्यादि—अत्र जलस्य सुचारुपङ्कजत्वं विशेषणं प्रतिषेधत्वेन निबद्धम् । एवं पङ्कजानां लीनषट्पदत्वमित्यादि ।

**दीपिका**

निवर्तनेन यथा—न तज्जलमित्यादि । अत्र जलस्य सुचारुरूपपङ्कजत्वं विशेषणं प्रतिषेधत्वेन निबद्धम् । एवं पङ्कजानां लीनषट्पदत्वमित्यादि ।

**साहित्यचूडामणिः**

न तदिति । अत्र जलस्य चारुपङ्कजत्वं, तस्य लीनषट्पदत्वं, तस्य च कलं कूजितं, तस्य च मनोहरत्वं पूर्ववद् विशेषणतयापोह्यते । एवं,

न सा कीर्ती राष्ट्रे दिशि दिशि न सौधे स्फुरति या
न ते सौधा नार्यो विदधति न यत्र व्यतिकरम्।
न ता नार्यो यासां विलसति न गीतिः श्रुतिमती
न सा गीतिर्यस्यां तव सुभग! मुद्रा न घटते ॥।

इत्याद्यूह्यम्। उत्तरोत्तस्य पूर्वं पूर्वं प्रत्युत्कर्षकारितायामेकावली पूर्वपूर्वस्योत्तरोत्तरं प्रति मालादीपकमिति विवेकः।

क्रमेण व्याचष्टे—पूर्वत्रेति कथं स्वातन्त्र्येण रूपस्य रूपिशेषत्वमित्याह—अङ्गेति। द्वितीयोदाहरणेऽप्येवैव शय्येत्याह—उत्तरत्रेति।

**सम्प्रदायप्रकाशिनी**

उभयत्र योजयति—पूर्वत्रेत्यादि। अङ्गविशेषणमुखेनेति भिन्नप्रक्रमाञ्जस्याय।

**काव्यप्रदीपः**

निषेधो यथा—

'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः॥'

अत्र जले पङ्कजस्य तत्र षट्पदानां तत्र गुञ्जितस्य तत्रापि मनोहारिताया विशेषणतया निषेधः।

**काव्यप्रकाशखण्डनम्**

निषेधेऽप्युदाहरति—तज्जलं न यत् सु सुष्ठु चारु मनोहरं पङ्कजं कमलं यत्र न, न लीनः षट्पदो भ्रमरो यत्र, तत् कलं अव्यक्तमधुरम्। स्पष्टमन्यत्।

पूर्वत्र पुराणां वराङ्गनाः, तासामङ्गविशेषणतामुखेन रूपम्, तस्य विलासाः, तेषामस्त्रम्, अमुना क्रमेण विशेषणं विधीयते। उत्तरत्र निषेधेऽप्येवमेव योज्यम्।

**आदर्शः**

विशेषणतया निषेधमाह—न तज्जलमिति। शरत्कालीनजलादिवर्णनमिदम्। श्लोकः स्पष्टार्थः। अत्र सुचारुपङ्कजत्वाभावमुद्दिश्य जलत्वाभावो विधेयः पूर्वं निर्दिष्टः। तद्वृत्तेरभावस्य प्रतियोगितया सुचारुपङ्कजत्वमुक्तम्। सुचारुपङ्कजत्वञ्च सुचारु पङ्कजं यत्रेति बहुव्रीहिणा सुचारुपङ्कजमेव विशेषणमपोहितम्, एवमुत्तरत्रापि। पूर्वश्लोके परस्परस्य पूर्वपूर्वविशेषणतया स्थापनं दर्शयति—पूर्वत्रेति।

'ननु वराङ्गनानां विशेषणं न रूपं किन्त्वङ्गमेव। तथा च समुन्मीलितेत्यादिकं कथं पूर्वनिर्दिष्टविशेषणतया स्थापितम्? अविशेषणे रूप एव स्थापितत्वादित्यतो रूपस्यापि परम्परया विशेषणत्वमुपपादयति—तासामङ्गवि-

शेषणमुखेनेति। रूपं न साक्षाद् वराङ्गनाविशेषणं किन्तु तासामङ्गं तस्य च परिष्कृतत्वं तस्य च रूपं विशेषणमितिपरम्परया रूपं तासां विशेषणमित्यर्थः। उत्तरश्लोके तु विशेषणतया निषेधं दर्शयति—उत्तरत्रेति। जले सुचारुपङ्कजत्वं पङ्कजे लीनषट्पदत्वं षट्पदे च कलं गुञ्जितं गुञ्जिते च मनोहरणं निषेधप्रतियोगित्वेनोक्तत्वादपोहितमित्यर्थः।

**सुधासागरः**

यथा—न तज्जलमिति। स्पष्टम्। शुद्धविराट् छन्दः। लक्षणमुक्तं प्राक्। अत्र जले पङ्कजस्य तत्र षट्पदानां तत्र गुञ्जितस्य तत्रापि मनोहारितायाः विशेषणतया निषेधः।

**(सू० १९९) यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः।**

**स्मरणम्।**

यः पदार्थः केनचिदाकारेण नियतः, यदा कदाचित् अनुभूतोऽभूत् स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति यत् तथैव स्मर्यते तत् भवेत् स्मरणम्। उदाहरणम्—

**निम्नाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः।**

**तद्भवैः कुहरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम्॥ ५५०॥**

---

**सङ्केतः**

दृष्टे इति। उपलब्धिमात्रे अत्र दृशिः।

तद्भवैरिति। प्लाविताम्भोभवैरित्यर्थः। कुहरुतानि। कुहकुहशब्दाः निम्नाभिदेशोत्थाः। स्मारिताः इति ह्रस्वाप्राप्तिः। घटादिपाठे व्यवस्थितविभाषितस्य वा इत्यस्यानुवृत्तेः। सादृश्यं विना तु स्मृतिः नालङ्कारः। यथा—

'लावण्यं तत्, असौ कान्तिः, तद्रूपं, स वचः क्रमः' इत्यादि,

'अत्रानुगोदं मृगयानिवृत्तः
तरङ्गवातैरपनीतखेदः।
रहस्तदुत्सङ्गनिषण्णमूर्धा
स्मरामि वानीरगृहेषु सुप्तम्॥'

इत्यादि च।

**सङ्केतः (रुय्यकः)**

सामान्ये तु यदैकात्म्यं तदसदेव, प्रस्तुतितरोधानातिशयोक्त्या विवक्षितमिति सिद्धोऽस्य ततो व्यतिरेकः। दृष्ट इति—दृशिरत्रोपलब्धिमात्रवचनः। स्मारिता इति—घटादिष्वपठितस्य स्मरतेर्मित्त्वेऽपि "मितां ह्रस्वः" इति [ह्रस्व] तद्विधौ "वे"—त्यस्यानुवृत्तस्य व्यवस्थितविभाषात्वात्।

### बालचित्तानुरञ्जनी

यथेति। व्याकरोति य इति। उदाहरति निम्नेति। लहरीति। चलदृशां निम्ननाभिविवरेषु यदम्भः प्लावितं सुरनार्यः तन्नवैः कुहरुतैः शब्दैः सुरतकण्ठरुतानां स्मारिताः। अत्र तत्सदृश इत्युक्त्या सादृश्यनिबन्धना स्मृतिरलङ्कारः। न स्मरणमात्रम्। अतः पूर्वानुभूतसुरतशब्दानां सदृशशब्दस्मरमेन स्मृतिलङ्कारः।

### काव्यादर्शः

दृष्ट इति। दृशिरत्र उपलब्धिमात्रवचनः। 'तद्भवैः प्लाविताम्भोभवैः कुहरुतैः कुहकुहशब्दैः नाभ्यादिनिम्नदेशोत्थैः। स्मारिता इति घटादिपाठे स्मरतेर्मानुबन्धत्वेऽपि 'न ह्रस्वो व्यवस्थितविभाषितस्य वा' इत्यस्यानुवृत्तेः। सादृश्यं विना तु स्मृतिर्न स्मरणलंकारः, यथा—

**अत्रानुगोदं मृगयानिवृत्तस्तरंगवातैरपनीतखेदः।**
**रहस्तदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम्॥**

### विवेकः

यथाऽनुभवमिति-दृष्ट इति दृशिरत्रोपलब्धिमात्रवचनः। तत्सदृश इति सदृशनुभवात् सदृशस्य वस्तुनः स्मृतिः स्मरणं नामालङ्कारः। "अविनाभावाभावादिदं नानुमानम्। सादृश्यं" विना तु स्मृतिर्नायमलङ्कारो यथा—(र. व. १३/३५) **अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः। रहस्तदुत्सङ्गनिषणामूर्धा स्मरामि वानीगृहेषु सुप्तः॥** प्रेयसोऽलङ्कारस्य तुसादृश्यव्यतिरिक्तनिमित्तोपस्थापिता स्मृतिर्विषयः" (अए. स. ४१-४२ पृ.)। यथा—"अहो कोपेऽपि कान्तं मुखम्" इति (५३ श्लो:)। निम्नेत्यादि—स्मारिता इति घटादिषु पठितस्य स्मरतेर्मित्त्वेऽपि 'मितां ह्रस्व' (पा. ६/४/९२) इति न ह्रस्वः। तद्विभाषा वेति (६/४/९२) व्यवस्थितविभाषायास्तत्रानुवृत्ताया आश्रयणात्।

### दीपिका

यथानुभवमिति। दृष्ट इति दृशिरत्रोपलब्धिमात्रवचनः। तत्सदृश इति सदृशानुभावात् सदृशस्य वस्तुनः स्मृतिः स्मरणं नामालङ्कारः। अविनाभावादिदं नानुमानम्। सादृश्यं विना तु स्मृतिर्नायमलङ्कारो यथा—

**"अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः।**
**रहस्तदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तः॥"**

प्रेयसोऽलङ्कारस्य तु सादृश्यव्यतिरिक्तनिमित्तोपस्थापिता स्मृतिर्विषयः। यथा—अहो कोपेऽपि कान्तं मुखम् इति। निम्नेत्यादि। 'स्मारिता' इति घटादिषु पठितस्य स्मरतेर्मित्त्वेऽपि 'मितां ह्रस्वः' इति न ह्रस्वः, 'तद्विभाषा वेति' व्यवस्थितविभाषायास्तत्रानुवृत्ताया आश्रयणात्।

**दर्पणः**

स्मरणालङ्कारः। यथानुतरमनुष्यस्मृतिरिति [यथानुभवमर्थस्य स्मृतिरिति] योजना। यथानु भवमिति च स्मृतिस्वरूपानुवादमात्रं, न तु लक्षणोपयोगि। समानः स्मृतिबोधः, धायिनीति। स्मर्यतेऽनेनेति स्मृतिः। प्राचीनानुभवजनितसंस्कारः। तथैवेति। यदाकारविशिष्टोऽनुभवः तदाकार एव स्मर्यत इत्यर्थः। कुहरितैः शब्दविशेषैः करोति।

**करमुपगृहीतयशोदास्तनमुखविनिवेशिताधिमुखस्य।**
**संस्मृतं पचजलस्य नमन कृ.....स्य रोमाञ्चं॥**

**साहित्यचूडामणिः**

स्मरणमाह—यथानुभवमिति। निम्नेति अत्र। सुरस्त्रीणां यानि पूर्वानुभूतानि सुरतकण्ठकूजितानि, तानि तत्सदृशैर्नाभिरन्ध्रप्रवहत्सलिलकुहूशब्दैः स्मार्यन्ते।

**सम्प्रदायप्रकाशिनी**

यथानुभवमिति। कालान्तरस्मरणर्हनियताकारस्यार्थस्य स्मृतिप्रबोधके तत्सदृशे दृष्टे यथानुभवं स्मृतिः स्मरणम्।

व्याचष्टे—पदार्थ इत्यादि।

निम्नेति। प्लावितमवगाहितम्। अत्राम्भोरुतानां विवरेषु कु(हरे ? हे) त्याकारः सदृशत्वात्। कन्या अतः स्मारिताः।

करेति।

**मधुमती**

स्मृतिरिति। स्मृतिपदेनात्र तज्जनकं संस्कारमुपलक्ष्यति। तथा च संस्कारोद्बोधकः इत्यर्थः पर्यवस्यति। तत्समाने इति। एवं च सदृशदृर्शनोद्बुद्धः संस्कारः यत्र स्मृतिं जनयति, तत्रैवायमलङ्कारः, न तु चिन्ताद्युद्बुद्धसंस्कारजन्याऽपि स्मृतिः। वैचित्र्याभावात्। तस्यास्तु व्यभिचारिभावे अन्तर्भावः इति भाव्यम्। इति स्मरणम्।

**विस्तारिका**

यथानुभवेति। सदृशदर्शनोद्बुद्धसंस्कारजन्या स्मृतिः स्मरणनामालङ्कारः।

व्याचष्टे—यः पदार्थ इति। स्मृतिप्ररोह उद्बोधः। तदाधायिनि तत् प्रयोजके, तत्समाने तत्सदृशे। तथा च सदृशदर्शनाद् या स्मृतिः सालङ्कारः, न तु स्मरणमात्रम्, वैचित्र्याभावादिति भावः।

निम्ननाभीति। सुरतकण्ठरुतानामिति कर्मणि षष्ठी।

## सारबोधिनी

यथानुभवमिति । स्मृतिः प्रबोध उद्बोधः । कदाचित् तत्प्रयोजके तत्समाने तत्सदृशे । तथा च सदृशदर्श-नोद्बुद्धसंस्कारजन्या स्मृतिः । सोऽलङ्कारः न तु स्मरणमात्रम् । वैचित्र्याभावादिति भावः । निम्नाभीति । सुरतक-ण्ठरुतानामिति कर्मणि षष्ठी ।

## काव्यप्रदीपः

**यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।**

**स्मरणं**

अत्रार्थस्य स्मृतिः स्मरणालंकार इति लक्षणम् । यथानुभवमिति स्मृत्याकार दर्शनम् । दृष्टे तत्सदृश इति तद्धेतुसंस्कारोद्बोधे हेतुनिर्देशः । अदृष्टादेरप्युपलक्षणात् । यद्वा अन्यादृशस्मृतेश्चारुत्वाभावेनालंकारत्वाभावाव्द्य-वच्छेदकतया लक्षणान्तर्गतमेवैतत् । तदयं वाक्यार्थः—केनचिदाकारेण नियतो यदाकदाचित्केनचित्प्रमाणेनानुभूतः स कालान्तरे संस्कारोद्बोधहेतौ तत्समानधर्मदर्शने सति यदनुभूतेन प्रकारेण स्मर्यते तत्स्मरणालंकारः । स द्विधा—एतज्जन्मनि जन्मान्तरे वानुभूतस्य स्मृतेः क्रमेणोदाहरणे ।

**'निम्नाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः ।**
**तद्भवैः कुहुरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥'**

## काव्यप्रकाशखण्डनम्

यथानुभवमर्थस्य दृष्टे तत्सदृशि स्मृतिः । (का. १३२, पू०)

तत्सदृशे अर्थ सदृशे दृष्टे सति अर्थस्य पदार्थस्य यथानुभवं अनुभवप्रकारेण स्मृतिः स्मरणमित्यर्थः । यथा—

**निम्नाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः ।**
**तद्भवैः कुहरूतैः सुरनार्यः स्मारिताः [प० ५७.२] सुरतकण्ठर(रु) तानाम् ॥**

चलदृशां निम्नाभिविवरेषु लहरीभिर्यदम्भः प्लावितं तद्भवैः लहरीप्रादुर्भूतैः कुहरुतैः शब्दविशेषैः सुरनार्यो देवाङ्गनाः सुरतकण्ठरुतानां सुरतकालीनकण्ठनादं स्मारिता इत्यर्थः ।

## आदर्शः

स्मरणालङ्कारमाह—यथानुभवमिति । सदृशे दृष्टे ज्ञाते सति अर्थस्य यथानुभवं स्मृतिरित्यर्थः । स्मृति-प्रबोधः स्मृत्युत्पत्तिः । तथैवेति, पूर्वानुभूतरूपेणैवेत्यर्थः । निम्नाभीति । अप्सरसां जलक्रीडावर्णनमिदम् । लहरी-भिस्तरङ्गैर्निम्नाभिगुहासु यदम्भः प्लावितं प्रवेशितं तद्भवैः कुहरुतैः कुहेत्यव्यक्तशब्दैः सुरनार्यः सुरतकालीनकण्ठरुतानां स्मारिताः । 'स्मृत्यर्थकर्मणि' इति कर्मणि षष्ठी । सुरतकाले स्त्रीणां कण्ठे तादृशध्वनिरु-च्चरतीति कविसम्प्रदायः ।

## सुधासागरः

यः पदार्थ इत्यादि । अयमाशयः—अर्थस्मृतिः स्मरणालङ्कार इति लक्षणम् । यथानुभवमिति स्मृत्याकारदर्शनम् । दृष्टे तत्सदृशे सति तद्धेतुसंस्कारोद्बोधे हेतुनिर्देशः, अदृष्टादेरप्युपलक्षणात् । यद्वा अन्यादृशस्मृतेश्चारुत्वाभावेनालङ्कारत्वाभावाद् व्यवच्छेदकतया लक्षणान्तर्गतमेवैतत् । तदयं वाक्यार्थः—केनचिदाकारेण नियतो यदा कदाचित्केनचित्प्रमाणेनानुभूतः स कालान्तरे संस्कारोद्बोधहेतौ तत्समानधर्मदर्शने सति यदनुभूतेन प्रकारेण स्मर्यते तत्स्मरणलङ्कारः । स द्विधा । एतज्जन्मानुभूतस्य जन्मान्तरे वाऽनुभूतस्य स्मृतेरिति । क्रमेणोदाहरणम्—निम्नेति । कुहेत्यनुकरणम् । सुरतकण्ठरुतानामिति कर्मणि षष्ठी । स्पष्टमन्यत् । स्वागता छन्दः । 'स्वागतेति रनभाद्गुरुयुग्मम्' इति लक्षणात् ।

यथा वा

**करजुअगहिअजसोआत्थणमुहविणिवेसिआहरपुडस्स।**
**समरिअपञ्चजण्णस्स णमह कण्हस्स रोमाञ्चं ॥ ५५१ ॥**

---

### सङ्केत:

करजुअ इति । अत्र पूर्वानुभूतस्य स्मरणम् । पूर्वत्र तु इहाभवानुभूतस्येति । इति स्मरणम् ।

### सङ्केत: (रुय्यक:)

करयुगगृहीतयशोदास्तनमुखविनिवेशितधरपुटस्य ।
संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥

### बालचित्तानुरञ्जनी

अत्रैवोदाहरणन्तरमाह करेति ।

### विवेक:

करजुअ इत्यादि—**करयुगगृहीत यशोदास्तनमुखविनिवेशिताधरपुटस्य । संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम्** । । अत्र भगवतो देहदेशान्तरानुभूतार्थस्मरणं सुप्रतिबुद्धस्येव पूर्वेद्युरवगतानामर्थानाम् । अत एव तदनुभावरोमाञ्चस्य नमस्कार: ।

### दीपिका

करजुअ इत्यादि—

"करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरमुटस्य ।
संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥"

अत्र भगवतो देहदेशान्तरानुभूतार्थस्मरणं सुप्रतिबुद्धस्येव पूर्वेद्युरवगतानामर्थानाम् । अत एव तदनुभावरोमाञ्चस्य नमस्कार: ।

### साहित्यचूडामणि:

करजुएति ।

करयुगगृहीतयशोदास्तनमुखविनवेशिताधरपुटस्य ।
संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥ इति ।

पूर्वत्र श्रावणम्, अपरत्र चाक्षुषं दर्शनमिति भेदः । एवम्

**आविर्भूतं बलभिदुपलश्यामलादम्बुवाहाद्**
**विद्युद्दाम्नो विजयनृपते! विभ्रमं प्रेक्षमाणाः ।**
**स्मारं स्मारं नवयवनिकामुल्लसत्खड्गलेखां**
**दुःखायन्ते रिपुनृपतयः प्रावृषोऽपि प्रसङ्गे ॥**

इत्याद्यनुसरणीयम् । सादृश्यविशिष्टमेव स्मरणमलङ्कारः । न ततोऽन्यथा । तस्माद् "अत्रानुगोदं मृगया-निवृत्त" इत्यादौ नेदमलङ्कारः ।

### सम्प्रदायप्रकाशिनी

**करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य ।**
**संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥**

रोमाञ्चो निजस्वरूपानुसन्धानप्रहर्षजः । अत्र सादृश्यं चाक्षुषवस्तुविषयम् ।

### विस्तारिका

करयुगेति ।

**करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य ।**
**संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥**

### काव्यप्रदीपः

**'करजुअगहि अजसो आथणमुहविणिवेसिआहरउडस्स ।**
**संभरिअपञ्चअण्णस्स णमह कण्हस्स रोमञ्चम् ॥'**

स्पष्टम् ।

### आदर्शः

प्रपञ्चयति—यथा वा, करजुअ इति—

**करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य ।**
**संस्मृतपाञ्चजन्यस्य प्रणमत कृष्णस्य रोमाञ्चम् ॥ इति संस्कृतम् ।**

अत्र विनिवेशिताधरपुटस्य स्तनस्य सादृश्यात् पाञ्चजन्यस्मरणम् ।

प्राकरणिकस्य । न चेति । प्राकरणिकस्याप्राकरमिकचन्द्रतुल्यत्वेन संवेदनाद् रूपकप्रसक्तिः । ननु रूपके मुखस्याऽऽरोपविषयस्य पदोपस्थाप्यत्वमत्र तु नेति भेदः स्यादित्यत आह—प्रथमा वेति । 'कमलमनम्भसी'त्यादा-

विव उपमेयनिगरणरूपेत्यर्थः । वस्तुतो भ्रमस्येति । आहार्यज्ञानविषयत्वात्तस्येत्यर्थः । अर्थानुगमेनेति । विषयता-सम्बन्धेन भ्रान्तिविशिष्ट इत्येवमर्थानुगमः । बाधावतारात् पूर्वं भ्रमः, बाधकालीनत्वाहार्यम् । तच्च भ्रमप्रमाभिन्नं तृतीयज्ञानमेवेति तत् सिद्धान्तः ।

**सुधासागरः**

यथा व—करजुअ इति ।

> **करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य ।**
> **संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥**

इति संस्कृतं स्पष्टम् । आर्येयं जघनविपुला । लक्षणमुक्तं प्राक् ।

(सू० २००) भ्रान्तिमान् अन्यसंवित्तत्तुल्यदर्शने ॥ १३२ ॥

तदिति अन्यत् अप्राकरणिकं निर्दिश्यते । तेन समानम् अर्थादिह प्राकरणिकम् आश्रीयते । तस्य तथाविधस्य दृष्टौ सत्यां यत् अप्राकरणिकतया संवेदनम् स भ्रान्तिमान् ।

न चैष रूपकं प्रथमातिशयोक्तिर्वा तत्र वस्तुतो भ्रमस्याभावात् इह च, अर्थानुगमनेन संज्ञायाः प्रवृत्तेः तस्य स्पष्टमेव प्रतिपन्नत्वात् । उदाहरणम्—

कपाले मार्जारः पय इति करान् लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान् हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ ५५२ ॥

---

**सङ्केतः**

प्रथमा वेति । निगीर्याध्यवसारूपेत्यर्थः । संज्ञायाः = भ्रान्तिः चित्तधर्मः अस्ति यत्र भणितिगुम्भे सः भ्रान्तिमान् इत्येवंरूपायाः । तस्य भ्रमस्य । भ्रान्तिश्चात्र प्रतिभोत्था सादृश्यहेतुका च ग्राह्या, न स्वरसोत्था, शुक्तिकारजतवत् । नापि प्रहारादिहेतुका, मूर्छायां वस्तुभ्रमणवत् । इति भ्रान्तिमान् ।

**बालचित्तानुरञ्जनी**

भ्रान्तिमदलंकारं लक्षयति भ्रान्तीति । व्याकरोति तदिति । तस्या अलङ्कारान्तरव्यावृत्तिमाशङ्क्य परिहरति न चेति । भ्रान्तिश्चित्तधर्मः स चमत्काराय विद्यते यत्र स भ्रान्तिमदलङ्कारः स्फुटेन प्रतीतेः । ततो नेदं स्फुटं इत्यलम् । उदाहरति कपाल इति । मार्जारः कपाले पतितान् शशिकरान् पय इति लेढि । करी वृक्षस्थितान् मृणालमित्या स्वादयति । वनिता रतान्ते तल्पस्थान् तान् अंशुकमिति हरति । प्रभामत्तश्चन्द्रः इदं जगत् विप्लवयति । अहो आश्चर्यम् । अत्र शशिकराणां प्राकरणिकानामुपलम्भेन तत्सदृशपयःप्रभृत्यप्राकरणिकं प्रतीयते । इतिशब्दस्तु तत्तदपारमार्थ्यद्योतनाय एष मालारूपः ।

**काव्यादर्शः**

—अत्र च कर्तृविशेषणानां स्मर्तव्यदशाभावित्वे स्मर्तव्यदशाभावित्वं न युक्तम् । प्रेयोलंकारस्य तु सादृश्यव्यतिरिक्तनिमित्तोत्थापिता स्मृतिर्विषयः, यथा—'कोपेऽपि कान्तं मुखम्' इति । भ्रान्तिमति च उपमानावगतिरेव, न तु उपमेयस्येति ततोऽस्य भेदः ॥ [५३ ॥]

प्रथमा[तिशयोक्तिः]वेति, निगीर्याध्यवसानलक्षणा। इह चार्थेति। भ्रान्तिश्चितधर्मो विद्यते अस्मिन् भणितिप्रकारे इत्यर्थान्वयेन भ्रान्तिमान्, इत्येवंरूपायाः संज्ञायाः प्रवृत्तेस्तस्य भ्रमस्य प्रतिपन्नत्वम्। भ्रान्तिश्चात्र असादृश्यहेतुकेति, न प्रहारादिहेतुज्ञानस्यालंकारस्य विषयः, यथा—

**दामोदरकराघातविह्वलीकृतचेतसा।**
**दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम्॥**

भ्रान्तिश्च विच्छित्त्यर्थं कविप्रतिभोत्थापितैव ग्राह्या, न स्वरसोत्थापिता शुक्तिकारजतवत्। एवं 'स्थाणुवापुरुषोऽयम्' इति संशयेऽपि ज्ञेयम्।

## विवेकः

भ्रान्तिमानिति भ्रान्तेः स्मृतिपूर्वकत्वात्तदनन्तरमस्य सङ्गतिः। अतस्मिन् तदिति निश्चयो भ्रान्तिश्चित्तधर्मः, स विद्यते यस्मिन् भणितिप्रकारे स भ्रान्तिमानिति। उत्तरकालभाविना सम्यग्ज्ञानेन यत्र बाधस्तदेव विपर्ययज्ञानम्, अतस्तद्रूपत्वाच्छुक्तिकाऽऽदो रजतादिबुद्धेरिव भ्रान्तेर्मुख्यत्वमेव, न तु गौणत्वमित्युक्तमेव। तुल्यदर्शन इत्यनेन गाढमर्मप्रहारादिजन्यभ्रान्तिरस्य न विषयः। यथा (अ. सं. ५८ पृ:) दामोदरकराघातव्याकुलीकृतचेतसा। दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम्॥ इति। सादृश्यहेतुकाऽपि भ्रान्तिर्विच्छित्त्यर्थं कविप्रतिभोत्थापितैव गृह्यते, न तु स्वरसोत्थापिता शुक्तिकारजतवदिति। यथा कपाल इत्यादि—कपालं घटादेः शकलं, कपोल इत्यपि पाठः। विह्वलयति विप्लवयति। अत्र प्रभामत्तस्य शशिनः करेषु मार्जरादीनां पयः प्रभृतिरूपभ्रान्तिः कविप्रतिभोत्थापितैव। प्रथमाऽतिशयोक्तिर्भेदेऽभेदरूपा।

## दीपिका

भ्रान्तिमानिति। भ्रान्तेः स्मृतिपूर्वकत्वात् तदनन्तरमस्य सङ्गतिः। अतस्मिन् तदिति निश्चयो भ्रान्तिश्चित्तधर्मः, स विद्यते यस्मिन् भणितिप्रकारे स भ्रान्तिमानिति—उत्तरकालभाविना सम्यग्ज्ञानेन यत्र बाधस्तदेव विपर्ययज्ञानम्, अतस्तद्रूपत्वाच्छुक्तिकाऽऽदौ रजतादिबुद्धेरपि भ्रान्तेर्मुख्यत्वमेव, न तु गौणत्वमित्युक्तमेव। तुल्यदर्शन इत्यनेन गात्रमर्मप्रहारादिजन्यभ्रान्तिरस्य न विषयः। यथा—

**"दामोदरकराघातव्याकुलीकृतचेतसा।**
**दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम्॥" इति।**

सादृश्यहेतुकाऽपि भ्रान्तिर्विच्छित्त्यर्थं कविप्रतिभोत्थापितैव गृह्यते, न तु स्वरसोत्थापिता शुक्तिका रजतवदिति। यथा कपाल इत्यादि। कपालं घटादेः शकलम्। कपोल इत्यपि पाठः। विह्वलयति विप्लवयति। अत्र प्रभामत्तस्य शशिनः करेषु मार्जारादीनां पयः प्रभृतिरूपभ्रान्तिः कविप्रतिभोत्थापितैव। प्रथमाऽतिशयोक्तिर्भेदेऽभेदरूपा।

## दर्पणः

भ्रान्तिमदलङ्कारः। अन्यसंवितिः, अन्यरूपतया ज्ञानम्। निर्दिश्यते प्रतिपाद्यते। भेदेप्यभेदरूपावर्णनो भ्रमस्याभावादिति तत्र साम्यातिशयप्रतिपत्त्यर्थमाह सारोपरूपत्वादित्यर्थः। वर्णन इति पाठे नो [?] वर्णनीयस्य विषयतया सम्बन्धी यो भ्रम स्वारसिकस्तस्या-भावादिति व्याख्या प्रोतावधः प्रतिहानु[?]।

**साहित्यचूडामणिः**

भ्रान्तिमानिति। अन्यसंविद् अप्राकरणिकप्रतीतिः अन्यथानुभव इति यावत्।

अन्यत्वं तद्वृत्तपरामृश्यत्वं चाप्राकरणिकस्येत्याह—तदिति। प्राकरणिकं प्रत्यप्राकरणिकतयोपलम्भो भ्रान्तिमानिति यावत्। अर्थानुगमेनेति। भ्रान्तिमानित्यन्वर्थसंज्ञाविधानात्। न चैतल्लक्षणस्य रूपके निगीर्याध्यवसानरूपायामतिशयोक्तौ वातिप्रसङ्ग इत्याह—नचेति। यत् सूत्रं 'सादृश्याद् वस्त्वन्तरप्रतीतिभ्रान्तिमान्' (अलङ्कारसू० १९) इति। भ्रान्तिश्चित्तधर्मश्चमत्काराय विद्यते यत्र।

कपाल इति। अत्र शशिकरस्य प्राकरणिकस्योपलम्भेन सदृशं पयःप्रभृत्य प्राकरणिकं प्रतीयते।

इतयस्तत्तदपारमार्थ्यद्योतनाय। एष च मालारूपः। अमलारूपोऽपि—

**अवतंसप्रवालानामादाने यत्र सुभ्रुवः।**
**पाणीनां तु मिथः स्पृष्टया त्रपन्ते विरलैः स्मितैः॥**

इत्याद्यानुधावनीयः अयमपि सादृश्यव्यतिरिक्तो नालङ्कारः। यथा—

**दामोदरकराघातचूर्णिताशेषवक्षसा।**
**दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम्॥ इति॥ ४६॥**

**सम्प्रदायप्रकाशिनी**

भ्रान्तिमानिति। प्रकृताप्रकृतदर्शने यदप्रकृतत्वेन प्रकृतसंवित् स भ्रान्तिमान्।

व्याचष्टे—तदित्यादि। नन्वयमभेदाद् रूपकं, भेदे अभेदरूपातिशयोक्तिर्वेत्यत आह—न चैष इति। तयोर्हि न स्वारसिको भ्रमः, अपि तु जानतोऽप्येतस्मिंस्तदिति कल्पनात्मा। इह तु भ्रान्तिमानिति संज्ञायाः स्वारसिकभ्रमानुगमेन प्रवृत्तेभ्रमस्य स्फुटा प्रतिपत्तिः।

कपाल इति। अत्र पयः प्रभृति सदृशशशिकरदर्शनानुगुणत्वात्।

कैमर्थक्यं प्रसाधनम्।

(ए) एहीति।

**अयि एहि तावत् सुन्दरि कर्णं दत्वा श्रृणुवचनीयम्।**
**तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन॥**

**मधुमती**

तदितीति। एवं च प्राकरणिकार्थदर्शनोद्बुद्धसंस्कारजन्यस्मृत्युपनीताप्राकरणिकात्मतया यत् प्राकरणिकज्ञानम्, तत् भ्रान्तिमान् इत्यर्थः। एवं च—तस्यैव तत्तया स्मृतिः स्मरणम्, अन्यस्य अन्यथा भानं भ्रान्तिमान्; इति भेदात् विसदृशसमुत्थत्वेन उभयोर्भेदकाभावः नाशङ्कनीयः। एवं च यत्र अनुभूयमानारोपः तत्र, यत्र वा प्रकारान्तरेण स्मरणे तथापि नायमलङ्कारः। यथा—

'दामोदरकराघातविह्वलीकृतचेतसा।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभःस्थलम् ॥'

इत्यादौ। रूपके अतिव्याप्तिं निरस्यति—तत्रेति। तस्य आहार्यारोपरूपतया विशेषदर्शनाप्रयोज्यत्वात्। तज्जन्यज्ञानस्यैव भ्रमत्वाभिधानात्। वस्तुतस्तु तत्र न भ्रमः इति प्रागुक्तमेव। इति भ्रान्तिमान्।

### विस्तारिका

भ्रान्तिमानिति। तत्तुल्यदर्शने सति याऽन्यस्य संवित् स भ्रान्तिनामालङ्कारः इत्यर्थः।

व्याचष्टे—तदितीति। तथा च प्राकरणिकार्थदर्शनोद्बुद्धसंस्कारजन्यस्मृत्युपनीताप्राकरणिकात्मतया प्राकरणिकज्ञानं भ्रान्तिमानित्यर्थः।

एवं चानुभूयमानारोपस्थले प्रकारान्तरजन्यस्मृत्युपनीतभ्रमवानयमलङ्कार इति भावः।

अर्थानुगमनेनेति। विशेषादर्शनप्रयोज्यज्ञानस्यैव भ्रमत्वेनाभिमतत्वादिति भावः।

### सारबोधिनी

भ्रान्तिमदलंकारमाह भ्रान्तिमानिति। तदिति। तथा च प्राकरणिकार्थदर्शनोद्बुद्धसंस्कारजन्यस्मृत्युपनीताप्राकरणिकात्मतया प्राकरणिकज्ञानं भ्रान्तिमानित्यर्थः। एवञ्चानुभूयमानारोपस्थले प्रकारान्तिरजन्यस्मृत्युपनीतभ्रमे च नायमलङ्कार इति भावः। अर्थानुगमेनेति। विशेषादर्शनप्रयोज्यज्ञानस्यैव भ्रमत्वेनाभिमतत्वात्। रूपकातिशयोक्त्योस्तु आहार्यरूपत्वात्ताभ्यां भेद इति भावः।

### काव्यप्रदीपः

**भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने ॥ ४६ ॥**

अत्राप्यन्यसंविदिति लक्षणम्। तत्तुल्यदर्शन इति हेतुनिर्देशः। अन्येति पदार्थं परामृशता तदित्यनेनाप्राकरणिकं निर्दिश्यते। तथा च तेन तुल्यमर्थादिहप्राकरणिकं लभ्यते। तेन प्राकरणिकस्याप्राकरणिकतुल्यस्य दर्शने सति यदप्राकरणिकत्वेन ज्ञानं स भ्रान्तिमानित्यर्थः। न च रूपके निगीर्याध्यवसानरूपायामतिशयोक्तौ चातिव्याप्तिः। तत्र वस्तुतो भ्रमाभावेऽप्यध्यवसानमात्रस्वीकारात्। इह त्वर्थानुगमेन संज्ञाप्रवृत्तेभ्रमोपगमस्य स्पष्टमेवोपगमात्। उदाहरणम्—

'कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्विसमिति करी संकलयति।
रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥'

## काव्यप्रकाशखण्डनम्

**भ्रान्तिमान् स यदन्यस्य संवत्तत्तुल्यदर्शने ॥**(का. १३२, उ०)

तदित्यन्यदित्यप्राकरणिकं निर्दिर्दश्यते। अन्यदित्यन्यस्य अन्यतया संभेदेनं भ्रान्तिमानित्यर्थः। व्यधिकरणप्रकारकं ज्ञानं तथा चानुभूयामानारोपस्य सामान्यालङ्कारस्यात्रैवान्तर्भावः।

## आदर्शः

भ्रान्तिमदलङ्कारमाह—भ्रान्तिमानिति। अप्राकरणिकतुल्यस्य प्राकरणिकस्य दर्शने सत्यन्यत्वेनाप्राकरणिकत्वेन प्राकरणिकस्य संविज्ञानमित्यर्थः। तत्तुल्येत्यत्र तत्पदस्याप्राकरणिकपरतां व्याचष्टे—तदितीति। 'तथाविधस्य' अप्राकरणिकतुल्यस्य प्राकरणिकस्य। न चेति। "प्राकरणिकस्याप्राकरणिकचन्द्रतुल्यत्वेन संवेदनाद् रूपकप्रसक्तिः"। ननु रूपके मुखस्याऽऽरोविषयस्य पदोपस्थाप्यत्वमत्र तु नेति भेदः स्यादित्यत आह—प्रथमावेति। 'कमलमनम्भसी' त्यादाविव उपमेयनिगरणरूपेत्यर्थः। "वस्तुतो भ्रमस्येति। आहार्यज्ञानविषयत्वात्तस्येत्यर्थः"। "अर्थानुगमेनेति। विषयतासम्बन्धेन भ्रान्तिविशिष्ट इत्येवमर्थानुगमः। बाधावतारात् पूर्वं भ्रमः, बाधकालीनन्त्वाहार्यम्। तच्च भ्रमप्रमाभिन्नं तृतीयज्ञानमेवेति तत्सिद्धान्तः।"

कपाले इति। अहो प्रभातमत्तश्चन्द्रो जगदिदं विभ्रमयति विशेषेण भ्रान्तं करोति। भ्रान्तिं दर्शयति—कपाले इति। कपाले स्थालीकपरि, पयः क्षीरमिति कृत्वेत्यर्थः। तरुच्छिद्रं तरुदलच्छिद्रं तेन [तत्र] प्रोतान् प्रविष्टान् शशिनः करानिति सर्वत्रान्वयः विसंमृणालम्, सङ्कलयति गृह्णाति। वनिता चात्र रतिलग्ना।

## सुधासागरः

तदित्यादि। अयमाशयः—अत्रान्यसंविदिति लक्षणम्। तत्तुल्यदर्शने इति हेतुनिर्देशः। अन्येति पदार्थ परामृशता तदित्यनेनाप्राकरणिकं निर्द्दिश्यते। तथा च तेन तुल्यमर्थादिह प्राकरणिकं लभ्यते। तेन प्राकरणिकस्याप्राकरणिकतुल्यस्य दर्शने सति यदप्राकरणिकत्वेन ज्ञानं स भ्रान्तिमानित्यर्थः। न च रूपके निगीर्याध्यवसानरूपायामतिशयोक्तौ वाऽतिव्याप्तिः। तत्र वस्तुतो भ्रमभावेऽपि अध्यवसानमात्रस्वीकारात्, इह त्वर्थानुगमेन संज्ञाप्रवृत्तेः भ्रमोपगमस्य स्पष्टमेवोपगमादिति।

अहो—महदाश्चर्यम्। प्रभया मत्तः कान्तिगर्वोन्मत्तः चन्द्रः इदं जगद्विभ्रमयति सर्वस्यापि भ्रममुत्पादयति। मत्ताः खलु भ्रमन्ति न तु परान्भ्रमयन्तीत्याश्चर्यम्। तथा हि-मार्जारो बिडालः कपाले करान् खर्परस्थकिरणान् पय इति लेढि दुग्धास्वादानुपलम्भेऽपि अयथार्थप्रभावशाज्जिह्वया खर्परं घर्षयतीत्यर्थः। करी हस्ती तरुच्छिद्रप्रोतान् वृक्षपल्लावाभ्यन्तरेण भूमिप्राप्तान् करान् बिसमिति सङ्कलयति स्पर्शानुपलम्भेऽपि शुण्डादण्डेनाददातीत्यर्थः। वनिता रतान्ते सुरतावसाने तल्पस्थान् करान् अंशुकमिति हरति रतिकलहच्युतवस्त्रबुद्ध्या गृह्णाति, पशूनां किं वक्तव्यमिति अपि शब्दार्थः। शिखरिणी छन्दः। लक्षणमुक्तं प्राक्।

(सू० २०१) आक्षेप उपमानस्य प्रतीपमुपमेयता।
तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम्॥ १३३॥

अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन यत् उपमानमाक्षिप्यते यदपि तस्यैवोपमानतया प्रसिद्धस्य, उपमानान्तरविवक्षयानादरार्थमुपमेयभावः कल्प्यते तत् उपमेयस्योपमानप्रतिकूलवर्तित्वात् उभयरूपं प्रतीपम्। क्रमेणोदाहरणम्—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमदो मुधैव किममी सृष्टाः कुलक्ष्माभृतः॥ ५५३॥

---

**सङ्केतः**

कैमर्थक्येनेति। कोऽर्थः अनेनेति भावः। आक्षिप्यते आलोच्यते। तस्यैव उपमानस्यैव। उपमानान्तरविवक्षया—मुखादेः अतिचारुतयोपमानकल्पनया॥

लावण्येति। अत्र इन्द्वादिकं उपमानं कैमर्थ्येनाक्षिप्तम्। यथासङ्ख्यालङ्कारोऽप्यत्रास्ति।

**बालचित्तानुरञ्जनी**

प्रतीपालङ्कारं लक्षयति आक्षेप इति। व्याकरोति। अस्येति। उपमेयमुपमानकार्यं कर्तुं क्षमम् किमुपमानेनेति तिरस्क्रियमाणमाक्षेपः। उपमानतया प्रसिद्धस्यापि उपमेयता परिकल्प्यते तत् द्वितीयः। तत्राद्यमुदाहरति लावण्येति। भो देव लावण्यौकसि सप्रतापगरिमणि त्यागिनामग्रेसरे अवनीभरक्षमभुजे त्वयि निष्पादिते सति वेधसा इन्दुः किं घटितः? एष पूषा सूर्यः किं विहितः? चिन्तारत्नमिदं किमुत्पादितम्? अमी कुलक्ष्माभृतः मुधैव किं सृष्टाः? अत्रोपमानानामिन्द्वादीनां कार्यमाह्लादनादिकं उपमेयभूतो राजैव कर्तुं क्षम इति तेषां नैरर्थक्येनाभिधानमाक्षिप्यते। द्वितीयमुदाहरति ए एहीति। ए अयि सुन्दरि! एहि। तुज्झ मुहेण तव मुखेन, चंदो चन्द्रः उअमिज्जइ उपमीयते। अत्र चन्द्रस्योपमानस्योपमेयतया परिकल्पनमाक्षेप इत्याह अत्रेति।

## काव्यादर्शः

आक्षेप इति। उपमेयस्य उपमानभारोद्वहनसामर्थ्याद् यद् उपमानस्य कैमर्थक्येन आक्षेप आलोचनं क्रियते तदेकं प्रतीपम्, यच्च उपमानत्वेन प्रसिद्धस्य चन्द्रादेरुमानान्तरप्रतिष्ठापयिषयानादरार्थमुपमेयत्वं कल्प्यते तद् द्वितीयम्।

'लावण्ये'ति। 'अत्र इन्द्वादय उपमानानि कैमर्थक्येनाक्षिप्तानि। अत्र यथासंख्यालंकारोऽपि यथा वा 'प्रमदानां चक्षुरेव सहर्जमुडमालामण्डनं भार कुवलयदलदामानि (?)॥

## विवेकः

आक्षेप इति—सादृश्यप्रस्तावादस्य प्रस्तावः। 'उपमेयस्यैवोपमानभारोद्वहन सामर्थ्यादुपमानस्य चन्द्रादेः कैमर्थक्येनाक्षेप आलोचनं क्रियते तदेकं प्रतीपम्। उपमानप्रतिकूलत्वादुपमेयस्य प्रतीप इति व्यपदेशः। यदप्युपमानतया प्रसिद्धस्योपमानान्तरप्रतितिष्ठापयिषयाऽनादरादुपमानत्वं कल्प्यते तत् पूर्वोक्तगत्या द्वितीयं प्रतीपम् (अ. स. २३७ पृ.)। तथाचोक्तं वामनेन 'उपमानेनाक्षेपश्चाक्षेप' इति (का. अ. सू. वृ. ४/३/२७)। क्रमेणोदाहरति लावण्येति—अत्र लावण्यनिदानत्वादित्थं वोढुं वर्णनीयो राजैव समर्थ इतीन्दुप्रभृतीनामुपमानानां कैमर्थक्यनिबन्धन आक्षेपः। अत्र यद्यपि यथासंख्यत्वमप्यस्ति (अ. स. २०८ पृ.) तथापि तदपेक्षयाऽऽक्षेपरूपैव विछित्तिश्चारुतरेत्युदाहृतवान्।

## दीपिका

आक्षेप इति। सादृश्यप्रस्तावादस्य प्रस्तावः। उपमेयस्यैवोपमानभारोद्वहनसामर्थ्यादुपमानस्य चन्द्रादेः कैमर्थक्येनाक्षेप आलोचनं क्रियते तदेकं प्रतीपम्। उपमानप्रतिकूलत्वादुपमेयस्य प्रतीप इति व्यपदेशः। यदप्युपमानतया प्रसिद्धस्योपमानान्तरप्रतिष्ठापयिषाऽनादरादुपमानत्वं कल्प्यते तत् पूर्वोक्तगत्या द्वितीयं प्रतीपम्। तथा चोक्तं वामनेन—"उपमानेनाक्षेपश्चायमाक्षेप"इति।

क्रमेणोदाहरति—लावण्येति। अत्र लावण्यनिदानत्वादित्यर्थ वोढुं वर्णनीयो राजैव समर्थ इतीन्दुप्रभृतीनानुपमानानां कैमर्थक्यनिबन्धन आक्षेपः। अत्र यद्यपि यथासंख्यत्वमप्यस्ति, तथापि तदपेक्षयाऽऽक्षेपरूपैव विच्छित्तिश्चारुतरेत्युदाहृतवान्।

## दर्पणः

आक्षेपालंकारः उपमेयतेत्यस्योत्तरार्धेन सम्बन्धः। तिरस्कारनिबन्धनम् उपमानस्यैवेत्यर्थः। उपमेयं प्रकृतम्। कैमर्थेन निरर्थकत्वाभिमानेन। तस्यैव चन्द्रादेः, अर्थादुपमेयस्य मुखादेः, उपमानत्वेन विवक्षया, उपमानात् यदन्तरं वैशिष्ट्यं तस्य विवक्षया वक्तुमिष्टया।

## साहित्यचूडामणिः

प्रतीपमाह—आक्षेप इति उपमानस्याक्षेपप्रतीतेरपकर्षणस्वरूपः। कैमर्थक्याच्च तस्याक्षेपः, उपमेयस्यैव प्रोजनवत्तया विवक्षितत्वाद् इत्येकं प्रतीपम्। अथोपमानतया प्रसिद्धस्य प्रत्युतोपमेयतया प्रकल्पनं द्वितीयम्।

यत्रोपमेयीभूतस्य व्याजस्तुतिद्वारा तिरस्कारानादरगोचरत्वं विवक्षयेत्याह—अस्येति। यत् सूत्रम्—"उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपम्"[अलङ्कार सू. ७०] इति प्रातिकूल्यात् प्रतीपव्यपदेशः तच्चोपमानस्योपमेयतादिकरणम्।

लावण्येति। अत्र क्रमोक्तविशेषोपपन्ने वर्णनीये तदुपमानभूता द्वन्द्वादयः किमर्थमेते पितामहेनोत्पादिता इत्याक्षिप्यन्ते प्रतिपत्तेरपकृष्यन्ते। यथासङ्ख्यमप्यत्रानुसन्धेयम्। इत्थं "कुन्दकोमले दन्तमुकुले सति सत्याभिधानमेव सौरभोत्तरमवधीरितकर्पूरपूरोपयोगमामोदयत्याननगर्भं, काव्यालाप एव ललितवृत्तो दूरीकृतहारभारं परिष्करोतिकण्ठोपकण्ठं शास्त्रश्रवणमेव संस्कारभासुरं खण्डितमणिकुण्डलमुद्भासयति कर्णद्वारम्" इत्याद्यनुगन्तव्यम्।

## मधुमती

आक्षेप इति। उपमानस्य आक्षेप एव प्रथमः प्रतीपः। तिरस्कारार्थं तस्यैवोपमानस्य यत् उपमेयता कल्प्यते सः द्वितीयः प्रतीपः इत्यर्थः। आक्षेपशरीरमाह—अस्येति। कैमर्थ्यं किम्प्रयोजनता। प्रतीपपदव्युत्पत्तिमाह—तदिति।

लावण्यौकसि इत्यादौ आद्यः।

## विस्तारिका

आक्षेपेति। उपमानस्याक्षेप उपमेयस्यैव तिरस्कारार्थम्, उपमेयताकल्पनं वा प्रतीकमित्यर्थः।

आक्षेपशरीरमाह—अस्येति। कैमर्थ्यं किम्प्रयोजनवत्ता। प्रतीपपदार्थमाह—तदिति। तथा चोपमानापकर्षबोधानुकूलो व्यापारः प्रतीपमिति सामान्यलक्षणमभिप्रेतमावयोरपीति।

## सारबोधिनी

आक्षेप इति। उपमानस्याक्षेप इति प्रथमं, द्वितीयञ्चोपमावस्यैव तिरस्कारार्थमुपमेयताकल्पनमिति द्विरूपं प्रतीपम्। आक्षेपशरीरमाह अस्येति। कैमर्थ्यं किंप्रयोजनकता। प्रतीपपदार्थमाह तदिति। तथा चापकर्षबोधानुकूलो व्यापारः प्रतीपमिति सामान्यलक्षणं बोध्यम्। तत्र प्रथममाह लावण्यौकसीति। द्वितीयमाह ए एहीति।

## काव्यप्रदीपः

**आक्षेप उपमानस्य प्रतीपमुमेयता।**
**तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना॥ ४७॥**

अस्य प्रयोजनं निर्वाहयितुमुपमेय एवालमित्यप्रयोजकतयोपमानं यदाक्षिप्यते यच्चोपमानतया प्रसिद्धस्योपमेये तस्माद्विशेषविवक्षया अनादरार्थमुपमेयभावः कल्प्यते तदुभयरूपं प्रतीपम्। उपमेयस्योपमाने प्रतिकूलवर्तित्वात्। तत्राद्यं यथा—

**'लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां**
**देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।**

**इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं**
**चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥'**

अत्र यथासंख्यसत्त्वेऽपि आक्षेप एव चमत्कारीत्याक्षेपोदाहरणता।

### आदर्शः

द्विविधं प्रतीपालङ्कारमाह—आक्षेप इति। निष्फलत्वेन कथनमत्राऽऽक्षेपः। तस्यैवोपमानस्य यदि वा तिरस्कारनिबन्धना उपमेयता कल्प्येत्यर्थः। 'निबन्धनं' निमित्तम्। व्याचष्टे—अस्येति। कैमर्थ्येन किमर्थतया वैयर्थ्येनेत्यर्थः। संज्ञाव्युत् पत्तिमाह—तदुपमेयस्येति। लावण्यौकसीति। हे देव, लावण्येत्यादिविशेषणचतुष्टय-विशिष्टे त्वयि वेधसा निष्पादिते सति इन्द्वादिचतुष्टयनिर्माणवैयर्थ्यमिति समुदायवाक्यार्थः। तत्र लावण्येत्यादिवि-शेषादिन्दोः, प्रतापगरिमसाहित्यात् पूष्णः सूर्यस्य, त्यागिनामग्रेसरत्वाच्चिन्तारत्नस्य अवनिभरक्षमभुजत्वात् कुलक्ष्माभृतां कुलाचलानां सर्जनवैयर्थ्यं यथासंख्यं बोध्यम्।

### सुधासागरः

अस्येत्यादि। कैमर्थ्यं किम्प्रयोजनकता। अयम्भावः—अस्य प्रयोजनं निर्वाहयितुमुपमेयमेवालमिति अप्रयोजकतयोपमानं यदाक्षिप्यते, यच्चोपमानतया प्रसिद्धस्योपमेये तस्माद्विशेषविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते तदुभयरूपं प्रतीपम्। उपमेयस्योपमानप्रतिकूलवर्त्तित्वात् इति।

तत्राद्यं यथा—लावेति। स्पष्टम्। शार्दूलविक्रीडितं छन्दः। लक्षणमुक्तम्। अत्र यथासंख्यसत्त्वेऽप्याक्षेप एव चमत्कारकारीत्याक्षेपोदाहरणता। द्वितीये तु क्वचिदुपमित्यनिष्पत्त्या तिरस्कारः, क्वचित्तु निष्पन्ना सैव तद्धेतुः। क्रमेणोदाहरणम्—ए एहीति।

**ए एहि दाव सुन्दरि कण्णं दाऊण सुणसु वअणिज्जं।**
**तुज्झ मुहेण किसोअरि चंदो उअमिज्जइ जणेण ॥ ५५४ ॥**

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वात् उपमित्यनिष्पत्त्या 'वअणिज्जम्' इति वचनीयपदाभिव्यङ्ग्यस्तिरस्कारः ।

---

### सङ्केतः

ए एहीति । अयि ! एहीत्यर्थः । अत्र उपमानतया ख्यातस्य इन्दोः अपकार्यार्थं उपमेयत्वमुक्तम् । मुखस्य अर्थादुपमांनत्वम् । अत्र चन्द्रस्य अल्पगुणत्वात् सादृश्याभावात् औपम्यस्य अनिष्पत्तिः ।

### काव्यादर्शः

'ए एहि' इति । अत्र उपमानत्वेन प्रसिद्धस्य चन्द्रस्य निकर्षार्थमुपमेयत्वं कल्पितम् । मुखस्य चोपमानत्वं प्रासङ्गिकम् । उपमित्यनिष्पत्त्येति । औपम्यस्यानिष्पत्तिरभावश्चन्द्रस्य स्वल्पगुणत्वात् सादृश्यं नास्तीत्यर्थः ।

### विवेकः

ए एहीत्यादि—अय्येहि तावत् सुन्दरि कर्णं दत्वा श्रृणुष्व वचनीयम् । तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन ॥ अयीति सम्बोधनमभिमुखीकरणाय । 'अत्रोपमानत्वेन प्रसिद्धस्य चन्द्रमसो निकर्षार्थमुपमेयत्वं कल्पितम् । वदनस्य चोपमानत्वविवक्षाऽत्रप्रयोजका । क्वचित् पुनर्निष्पन्नमेवौपम्यमनादरकारणम् ।

### दीपिका

ए एहीत्यादि ।

**"अय्येहि तावत् सुन्दरि कर्ण दत्वा श्रृणुष्व वचनीयम्।**
**तव मुखेन कृशोदरि ! चन्द्र उपमीयते जनेन ॥"**

अयीति सम्बोधनमभिमुखीकरणाय। अत्रोपमानत्वेन प्रसिद्धस्य चन्द्रमसो निकर्षार्थमुपमेयत्वं कल्पितम् । वदनस्य चोपमानत्वविवक्षात्र प्रयोजिका ।

### दर्पणः

एएहीति ।

**एह्येहि तावत् सुन्दरि कर्ण दत्वा श्रुणु वचनीयम्।**
**तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन ॥**

ए इति । स्याद्यतु न संबुद्धौ वचनसंबुद्धौ वचनीयं वाच्यम् । अत्र वादवत् इति यावत् । स्वल्पतरगुणत्व-मुपमेयत्वं उपमानत्वकल्पनायां न विद्यते ।

**साहित्यचूडामणिः**

द्वितीयमाह—ए एहीति । अत्र चन्द्र उपमानमुपमेयतया परिकल्प्यते ।

स्वल्पतरेति । मात्रया गुणापकर्षस्य सोढव्यत्वात् । उपमित्यनिष्पत्त्येति । यस्या मुखस्यानदरो व्याजस्तुत्यां पर्यवस्यति । अनेन वक्ष्यमाणोदाहरणाद् अस्य व्यवच्छेदः सूच्यते ।

**सम्प्रदायप्रकाशिनी**

योजयति—अत्र मुखेनेति । उपमीयमानस्योपमेयतयोपक्रान्तस्य । चचनीयपदेन ह्युपमित्यनिष्पत्तिर्व्य-ञ्जिता तिरस्कारिका, उपमेयभावस्यानिष्पत्तेः निष्पत्तावपि सम्भवतीत्याह—क्वचित्त्विति ।

**मधुमती**

ए एहि इत्यादौ द्वितीयः । उपमेयोपमायां मिथः तथा प्रत्ययः, अत्र तु तदभावः । न च उपमेयवैलक्षण्यप्र-तीत्या व्यतिरेकः, तत्र सादृश्यप्रतीतेः; अत्र तु तदभावात् । यत् वक्ष्यति—'उपमित्यनिष्पत्त्या' इति ।

**विस्तारिका**

अत्राक्षेपप्रयुक्त उपमानस्यापरकर्षबोधः । अत्रोपमानस्योपमेयताकल्पनप्रयोज्योऽपकर्षबोधः । उपमेयो-पमायां मिथ उपमानोपमेयभावप्रतीतिः, अत्र तु तदभाव इति न तत्र प्रसङ्गः । एवं व्यतिरेकालङ्कारेऽपि न प्रसङ्गः, उपमितिनिष्पत्तावपि उपमेयाधिक्यप्रतीतेः । अत्र तूपमितेरेवानिर्वाहात् । यद् वक्ष्यत्युपमित्यनिष्पत्त्येति ।

न च व्यतिरेके उपमितेरेकैकाङ्गदभानव्यतिरेको नाधिक इति वाच्यम्, उपमितेस्तत्र न व्यतिरेकनिर्वाहक-त्वात्, आधिक्यांशस्योपमित्यपेक्षया चमत्कारकारित्वस्यानुभविकत्वात्, अत एव नियमतस्तत्रेवादिपदप्र-योगोऽपीति दिक् ।

**काव्यप्रदीपः**

द्वितीये तु क्वचिदुपमित्यनिष्पत्त्या तिरस्कारः, क्वचित्तु निष्पन्ना सैव तद्धेतुः । क्रमेणोदाहरणम्—

**'ए एहि दाव सुन्दरि कण्णं दाऊण सुणसु पअणिज्जम् ।**
**तुज्झ मुहेण किसोअरि चन्दो उअमिज्जइ जणेण ॥'**

अत्र मुखोपमानस्य शशिनः स्वल्पगुणत्वादुपमित्यनिष्पत्तिर्वअणिज्जमिति पदेन द्योत्यते । सैव च तिरस्कारहेतुः ।

**आदर्शः**

उपमानस्योपमेयताकल्पनमाह—ए एहीति—

ए एहि तावत् सुन्दरि कर्णं दत्त्वा शृणु वचनीयम्।
तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन॥ इति संस्कृतम्।

ए इति प्राकृतसाक्षेपसम्बोधने। वचनीयं परिवादम्। अत्रोपमानस्य चन्द्रस्योपमेयता। एतावतैव चन्द्रस्य तिरस्कारः, विशेषतस्तु कल्प्यमानाऽप्युपमाऽनिष्पन्नैव इत्यतोऽपि तिरस्कारः। क्वचित्तु निष्पन्नैव सा तिरस्कारहेतुरितीमं विषयविभागमाह—अत्रेति।वचनीयपदव्यङ्ग्यया उपमित्यनिष्पत्त्या मुखेनोपमीयमानस्य चन्द्रस्य तिरस्कार इत्यर्थः। चन्द्रोपमेयकत्वमपि त्वन्मुखस्य वचनायं कलङ्क इत्युक्तत्वात् उपमित्यनिष्पत्तिः। क्वचित्तूपमितिर्निष्पद्यते तयैव तिरस्कार इत्याह—क्वचिन्निष्पन्नैवेति।

सुधासागरः

अयि एहि तावत् सुन्दरि कर्णं दत्वा शृणुष्व वचनीयम्।
तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन॥

इति संस्कृतम्। वचनीयं कलङ्कः। स्पष्टमन्यत्। अत्र मुखेनेत्यादि। अत्र मुखोपमानस्य शशिनः स्वल्पगुणत्वादुपमित्यनिष्पत्तिर्वअणिज्जमिति पदेन द्योत्यते, सैव तिरस्कारहेतुरित्यर्थः।

क्वचित्तु निष्पन्नैवोपमिति क्रिया, अनादरनिबन्धनम्। यथा

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि मुग्धे।

सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि॥ ५५५॥

इहोपमेयीकरणमोवोत्पलानामनादरः।

---

**सङ्केतः**

गर्वमिति। भद्रा वराकी। अत्र उत्कृष्टानां उत्पलानां उपमेयत्वकल्पनैव अनादरः। पूर्वत्र तु उपमित्यनिष्पत्तिरेव अनादरः। तत्कल्पनायामिति। उपमानत्वकल्पनायामित्यर्थः।

**बालचित्तानुरञ्जनी**

क्वचित्तु उपमितौ निष्पन्नायामपि अनादरो भवतीत्याह क्वचिदिति। उदाहरति गर्वमिति। हे मुग्धे! पराजितेन लोचनयुगलेन, असंवाह्यं अपरिमितं, इमं गर्वं, किं वहसि? दिशि दिशि सरस्सु ईदृशानि नलिनानि सन्ति। तव लोचनयुगं प्रति उत्पलानामुपमेयीकरणमेव तिरस्कार इत्याह इहेति। अस्तु उपमितेर्निष्पत्तिर्वा यत्र पुनरुपमानभावसंभावनैव नास्ति तत्राप्यनादराचरणतया प्रतीपमेवेत्याह अनयैवेति। रीतिः तिरस्कारनिबन्धनत्वकल्पनाकरणयुक्तिः। तया यदसामान्यगुणयोगात् अन्यसदृशगुणसंबन्धाभावाद् उपमानत्वमपि नानुभूतम्। वरं वस्तुकल्पनायामपि अलङ्कारः प्रतीपमेवेत्यर्थः।

**काव्यादर्शः**

'गर्वम्' इति। भग्ने वराके नेत्रयुगमुपमानम्, उत्पलानि उपमेयानि। यथा मुखसदृशश्चन्द्रः' इत्यत्र चन्द्र उपमेयः। अत्र उत्कर्षभाजामुत्पलानामुपमेयत्वं तिरस्कारकारणमित्याह—इहोपमेयीति। 'ए एहि' इत्यत्र तु उपमित्यनिष्पत्तिरेव अनादरनिबन्धनमित्यर्थः।

**विवेकः**

यथा (अ. स. २०९ पृ.) गर्वमित्यादि—असंवाह्यं गुरुतरं, भद्र इति वाच्यं चिन्त्यम्। 'अत्रोत्कर्षभाज उपमानस्य प्रादुर्भाव एव न्यक्कारकारणम्'। (अ. स. २०९ पृ.)।

**दीपिका**

क्वचित् पुनर्निष्पन्नमेवौपम्यमनादरकारणम्। यथा—गर्वमित्यादि। असंवाह्यं गुरुतरं भद्र इति वाच्यं चिन्त्यम्। अत्रोत्कर्षभाज उपमानस्य प्रादुर्भाव एव न्यक्कारकारणम्।

## साहित्यचूडामणिः

क्वचिदुपमतौ निष्पन्नायामनादरः सम्भवतीत्याह गर्वमिति । अत्र लोचने प्रत्युपन्नानाम् उपमेयीकरणमेव तिरस्कारकारणम् ।

## सम्प्रदायप्रकाशिनी

गर्वमिति । ईदृशानीति निष्पत्तिः । तयोपमेयीकरणमेवानादरः ।

## मधुमती

गर्वमिति । अत्र उपमितिनिष्पादेऽपि वैलक्षण्यप्रतीतेः न व्यतिरेकः । उपमानोपमेययोः मिथस्तथात्वं न शाब्दमिति नोपमेयोपमात्वमपि ।

## विस्तारिका

गर्वमसंवाह्यमिममिति । अत्रोपमितिनिष्पत्तावपि उपमेयाधिक्यप्रतीतेर्न व्यतिरेकः, उपमानोपमेययोर्मिथ-स्तथात्वं न शाब्दमिति नोपमानोपमेयतेति ध्येयम् । परन्तु प्रसिद्धानामप्रसिद्धत्वप्रतिपादननिबन्ध एवापकर्षः । अत एवेति सामान्यगुणयोगादुत्कटसाधारणधर्मानाश्रयत्वादित्यर्थः । उपमेयवृत्त्युत्कटधर्मवदेवोपमानत्वादिति भावः । एतच्चोपमानत्वाभावे हेतुः ।

## सारबोधिनी

द्वितीयमाह गर्वमिति । अत्रोपमितिनिष्पत्तावप्युपमेधिक्याप्रतीतेर्व्यतिरेकतो भेदः ।

## काव्यप्रदीपः

**'गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे ।**
**सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥'**

अत्र नलिनानां लोचनोपमेयीकरणमेवानादरहेतुः उपमेयस्य न्यूनगुणत्वस्थितेः । अनयैव रीत्या तदपि प्रतीपं द्रष्टव्यं यत्सामान्यगुणयोगाभावेनोपमानत्वाननुभवेऽप्यर्थस्योपमानत्वकल्पना । कथमिति चेत् । उपमानति-रस्कारस्यालंकारताबीजत्वात् ।

## आदर्शः

गर्वमिति । हे कुवलयदललावने, असंवाह्यं संवोढुमयोग्यमिमं गर्वं कथं वहसि । यत ईदृशानि दिशि दिशि सरःसु नीलनलिनानि सन्ति । अत्र इदं लोचनयुगलमिव दृश्यन्ते यानि तानीदृशानीत्यर्थः । नयनयुगलमुपमेयं तदुपमानानां नीलनलिनानां कल्प्यमाना उपमेयता वचनीयादिपदाभावान्निष्पन्नैव, किन्तु तेषामुपमेयत्वकल्पनेन तिरस्कार इत्याह—इहेति ।

**सुधासागरः**

गर्वमिति आर्या छन्दः । अत्र नलिनानां लोचनोपमेयीकरणमेवानादरहेतुः, उपमेयस्य न्यूनगुणत्वस्थितेः । अनयैवेत्यादि । अनयैव रीत्या तदपि प्रतीपं द्रष्टव्यम्, यत्सामान्यगुणयोगाभावनोपमानत्वाननुभवेऽप्यर्थस्योपमानत्वकल्पना । कथमिति चेन्न । उपमानतिरस्कारस्यालङ्कारताबीजत्वात् । तच्च द्विधा सम्भवति । उपमानत्वेनैव प्रसिद्धस्योपमेयत्वकल्पनया, असदृशत्वेन प्रसिद्धस्योपमानत्वकल्पनया वा ।

अनयैव रीत्या यत् असामान्यगुणयोगात् नोपमानभावमपि, अनुभूतपूर्वि तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम्। यथा

**अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः।**

**ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्**

**वचनानि दुर्जनानाम्॥ ५५६॥**

**अत्र हालाहलस्योपमानत्वमसंभाव्यमेवोपनिबद्धम्॥**

---

**सङ्केतः**

अहमेवेति। गुरुः उत्कृष्टः। अत्र-यथा विषं मारकं न तथा खलवाक्यमिति, विषस्य उपमानत्वं असम्भाव्यम्, अतः अत्र प्रतीपता। इति प्रतीपम्।

**सङ्केतः (रुय्यकः)**

अनयैव रीत्येति—अनेन बहुप्रकारं वैचित्र्यमस्य दर्शितम्। तेनोपमानस्योपमेयतोऽनुकम्प्यतामात्रप्रतिपादनमपि प्रतीपम्। यथा—

**वदनमिदं सममिन्दोः सुन्दरमपि ते कियच्चिरं न भवेत्।**

**मलिनावधः कपोलौ लोचनसलिलं हि कज्जलवदिति॥**

गुरुः प्रधानम्। गुणः शुक्लादिको धर्मः।

**बालचित्तानुरञ्जनी**

उदाहरति अहमिति। हे तात हालाहल! अहमेव सुदारुणानां गुरुः इति मा स्म दृप्यः। गर्वं मा कृथाः। अस्मिन् भुवने भवादृशानि दुर्जनानां वचनानि भूयः सन्ति। न त्वत्र दुर्जनवचनानि प्रति हालाहलस्य उपमानत्वमसंभवदेवोपनिबद्धमित्याक्षेप इत्याह अत्रेति। उपमानत्वस्य कथञ्चिन्निष्पत्तौ तदनिष्पत्तौ च त्रिधा द्वितीयं प्रतीपमुत्पद्यत इति भावः।

**काव्यादर्शः**

अनयैवेति। अनेन अस्य बहुप्रकारं वैचित्र्यं दर्शितम्। तेन उपमानस्य उपमेयताधानं विनानुकम्पनामात्रे प्रतिपादनमपि प्रतीतम्। यथा—

**वदनमिदं सममिन्दोः सुन्दरमपि ते कियच्चिरं न भवेत्।**
**मलिनयति यत्कपोलौ लोचनसलिलं हि कज्जलवत्॥**

तत्कल्पनायामपीति। उपमानत्वकल्पनापि तिरस्कारहेतुरित्यर्थः।

'अहम्' इति। 'गुरुः प्रधानम्' अत्र हालाहलं मारकं, दुर्जनवचांसि पुनर्न तथेति विषस्योत्कृष्टदोषत्वाद् असंभाव्यमानोपमानत्वं, तथापि उपमानत्वेन निबन्ध इति प्रतीपम्।

## विवेकः

अनयैव रीत्येति—"अनेन बहुप्रकारेण वैचित्र्यं सम्यग्दर्शितं तेनोपमानस्योपमेयताऽभिधानं विनाऽर्थकल्पनयऽत्र प्रतिपादनमपि प्रतीपम्। यथा वदनमिदं सममिन्दोः सुन्दरमपि ते इत्यादि" (रु. सं. ७१ पृ:)। ज्ञेयकल्पना प्रतीपमेव यथा अहमित्यादि—गुरुः प्रधानं, सुदारुणानां सम्प्रयुक्तदोषत्वादसम्भाव्यमानोपमानत्वमप्युपमेयत्वेन निबद्धम्।

## दीपिका

अनयैव रीत्यैव रीत्येति। अनेन बहुप्रकारेण वैचित्र्यं सम्यग् दर्शितम्, तेनोपमानस्योपमेयताऽभिधानं विनाऽर्थकल्पनयाऽत्र प्रतिपादनमपि प्रतीपम्। यथा—**"वदनमिदं सममिन्दोः सुन्दरमपि ते"** इत्यादि। हेयत्वकल्पना प्रतीपमेव। यथा अहमित्यादि। गुरु प्रधानम्। सुदारुणानां सम्प्रयुक्तदोषत्वादसम्भाव्यमानोपमानत्वमप्युपमेयत्वेन निबद्धम्।

## साहित्यचूडामणिः

अथास्तामुपमितेरनिष्पत्तिर्निष्पत्तिर्वा, यत्र पुनरुपमानभावसम्भावनैव नास्ति तत्राप्यनादरगोचतया प्रतीपमेवेत्याह—अनयैवेति। तिरस्कारनिबन्धनत्वकल्पनाकारायुक्तिः। यद् असमान्यगुणयोगाद् अन्यसदृशगुणसम्बन्धाभावाद् उपमानत्वमात्रमपि नानुभूतचरं वस्तु, कर्तरि क्तः भुक्ता ब्राह्मणा इतिवत्, तस्य तत्कल्पनायाम् उपमानत्वघटनायामप्यालङ्कार प्रतीपमेव।

अहमेवेति"स्मोत्तरे लङ्च" (३-३-१७६)। उपनिबन्धनं दुर्जनवचनसद्भावप्राबल्यात्। इत्थञ्च उपमानस्य कथञ्चिन्निष्पत्तौ च त्रिधा द्वितीयं प्रतीपमुत्थाप्यत इति भावः।

## सम्प्रदायप्रकाशिनी

एवं क्वचिदुपमानत्वनिष्पत्तिरप्यनादरात् प्रतीपमित्याह—अनयैवेत्यादि। पूर्वमनुभूतः अनुभूतपूर्वः।

अहमेवेति। भवादृशानीति वचनानमुपमेयत्वोक्त्या हालाहलस्यासम्भाव्यमुपमानत्वं निबद्धमनादरकृत्।

## मधुमती

अनयैवेति। रीत्या प्रकारेण। असामान्य गुणयोगात् उत्कटसाधारणधर्मानाश्रयत्वात्। एतच्च उपमानत्वाभावे हेतुः। इति प्रतीपम्।

## विस्तारिका

अहमेवेति। यद्यप्युत्कटदुःखजनकत्वं हालाहलेऽप्यस्ति, तथापि दुर्जनवचने स्ववृत्तिसमानजातीयदुःखजनकत्वं नास्तीति वैधर्म्यादुपमित्यनिष्पत्तिरिति ध्येयम्। तदुक्तम्—हालाहलस्योपमानत्वमसम्भाव्यमेवोपनिबद्धमितीति दिक्।

## सारबोधिनी

तृतीयमाह अनयेत्यादि। असामान्यगुणयोगादुत्कटानेकसाधारणधर्मानाश्रयत्वादित्यर्थः। उपमेयगतोत्कटानेकधर्मवत एवोपमानत्वात् तेन दुःखजनकत्वस्य यत् किञ्चित् धर्मस्य सत्त्वेऽपि न दोष इति। अनुभूतं पूर्वमनेनेत्यनुभूतपूर्वि, इन्नन्तं पदं कृतपूर्वी कटमितिवत्। मा स्म दृप्यः मा स्म गर्वीः।

## काव्यप्रदीपः

तच्च द्विधा संभवति। उपमानत्वेनैव प्रसिद्धस्योपमेयत्वकल्पनया असदृशत्वेन प्रसिद्धस्योपमानत्वकल्पनया वा। सूत्रं चोपलक्षणतया योज्यम्। उदाहरणम्—

**'अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः।**
**ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम्॥'**

अत्र हालाहलस्य खलवचनोपमानत्वमसंभाव्यमानमेवोपनिबद्धं तिरस्कारहेतुः।

## आदर्शः

न केवलमुपमानस्योपमेयताकल्पनमेव तिरस्कारहेतुरपि तूपमानस्याप्युमानताकल्पनायामपि यत्र तिरस्कारः प्रतीयते अनया रीत्या तत्राप्यलङ्कार इत्याह—अनयेति। तथा च 'तस्योपमेयता कल्प्ये'त्युपलक्षणम्, उपमानस्य तिरस्कारमात्रेऽयमलङ्कार इत्यर्थः। यदसामान्येति असामान्यस्यासाधारणस्य गुणस्य योगाद् य उपमानभावस्तं यन्न सहत इत्यर्थः। तदसहनञ्चाधिक्षेपवशादिति बोध्यम्।

'तस्य तत्कल्पनायाम्' उपमानताकल्पनायाम्।

अहमेवेति। हे हालाहल, हे तात, अहमेव सुदारुणानां गुरुः प्रधानमिति दृप्यो मा स्म एतादृशदर्पं मा कुर्वित्यर्थः। कथमित्यत्राऽऽह—न्विति। ननु भोः, अस्मिन् भुवने दुर्जनानां वचनानि भवादृशानि भूयो बहुलं यथा स्यात्तथा सन्तीत्यर्थः। क्रियाविशेषणमपि भूयस्त्वं क्रियाद्वारा वचनेष्वेवान्वेति। अत्र भवदिव दृश्यन्ते यानीत्यर्थेन सम्बोध्यमानं हालाहलमुपमानम्, तस्य चाधिकदारुणत्वरूपोऽसामान्यगुणस्तद्योगादुपमानत्वमनुभूतपूर्वमपि

दारुणत्वांशे दर्पनिषेधादननुभूतपूर्वमेव विवक्षितम् । उपमानस्य तस्य तादृशमुपमानत्वं कल्प्यमानमपि दर्पनिषेधात्तिरस्कारनिबन्धनमेव ।

## सुधासागर:

सूत्रं चोपलक्षणतया योज्यमिति भाव: । उदाहरणम्—अहमेवेति । मा स्म दृप्य: मा गर्वी: । स्पष्टमन्यत् । मालभारणी छन्द: । 'विषमे ससजा गुरू अनोजे सभरायश्च तु मालभरिणीयम्' इति लक्षणात् । अत्रेत्यादि । अत्र हालाहलस्य खलवचनोपमानत्वमसम्भाव्यमानमेवोपनिबद्धं तिरस्कारहेतुरित्यर्थ: ।

(सू० २०२) प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया।

ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम्॥ १३४॥

अतादृशमपि तादृशतया विवक्षितुं यत् अप्रस्तुतार्थेन संपृक्तमपरित्यक्त-निजगुणमेव तदेकात्मतया निबध्यते तत् समानगुणनिबन्धनात् सामान्यम्। उदाहरणम्—

मलयजरसविलिप्तनवो नवहारलताविभूषिताः

सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः।

शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः।

प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः॥ ५५७॥

अत्र प्रस्तुतदन्ययोरन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः, अत एव पृथग्भावेन न तयोरुपलक्षणम्।

---

सङ्केतः

मलयजेति। अत्र असतीचन्द्रद्युत्योः एकतरा प्रस्तुता, अन्या तु अप्रस्तुता। तथा अत्र श्रीखण्डाङ्गरागादेः चन्द्रांशुभिः सह 'अविभाव्यतां गतः' इत्यभेदेनोक्तिः। अष्टाविंशतिमात्रं द्विपदीच्छन्दः। तथा अत्रस्वगुणत्यागाभावात् न तद्गुणालङ्कारता। एकात्मता एकरूपत्वम्।

एकस्य निह्नवः अन्यस्य स्थाप्यमिति लक्षणाभावात् नापह्नुतिः।

बालचित्तानुरञ्जनी

सामान्यालङ्कारमाह प्रस्तुतेति। प्रस्तुतस्याप्रस्तुतेन वस्तुना साधारणगुणयोगात् ऐकरूप्यं सामान्यमित्याह अतादृशमपीति। न्यूनगुणमपि उत्कृष्टगुणेनैकात्मतया विवक्षितम्। वक्ष्यमाणतद्गुणनिराकरणार्थमाह अपरित्यक्तेति। तदेकोतपत्त्याप्रस्तुतैकरूपेणापि व्युत्पादयति तदिति। उदाहरति मलयजेति। मलयजरसविलिप्ततनवः नवहारलताविभूषिताः सिततरदन्तपत्रकृतवक्त्ररुचः रुचिरामलांशुकाः विततधाम्नि शशिभृति धरां धवलयति अविभाव्यतां गताः। अत एव निरस्तभियः अभिसारिकाः सुखमेव प्रियवसतिं प्रयान्ति। अत्र प्रस्तुतस्य चन्दनलेपादेः अप्रस्तुतया चन्द्रिकया समं अविभाव्यतां गता इति अभेदप्रतीतिः। साऽलङ्कारस्य मूलमित्याह अत्र प्रस्तुतेति। अभिसारिकाणां भयनिरासाय उच्यते न तयोरिति।

### काव्यादर्शः

अपरित्यक्तनिजेनेत्यनेन तद्गुणादस्य विशेषं दर्शयति, तत्र हि स्वगुणपरित्यागात्। 'मलयजे'ति। अत्र मलयजरसविलेपादीनां चन्द्रप्रभयाऽविभाव्यतां गता इति भेदाप्रतीतिर्दर्शिता। अत्र अष्टाविंशतिभिर्मात्राभिर्द्विपदीच्छन्दः। प्रस्तुततदन्ययोरिति। प्रकृताप्रकृतयोरभिसारिकाचन्द्रयोरेकात्मनि भेदानध्यवसायाद् एकरूपत्वम्। ततः समानत्वयोगात् सामान्यम्। न चेयमपह्नुतिः, किंचिन्निषिध्य कस्यचिद् अप्रतिष्ठापनात्।

### विवेकः

प्रस्तुतस्येति—गुणाः शुक्लादिधर्माः। अपरित्यक्तनिजगुणमेवेति तद्गुणादस्य विशेषं दर्शयति। अत्रैकस्य स्वगुणपरिहारात्तदेकात्मतः। भेदानध्यवसायादेकरूपत्वं 'समासकृत्तद्धितेषु सम्बन्धोऽभिधाननिमित्त'मिति समानत्वसम्बन्धात् सामान्यम्। न चेदमपह्नुतिः किञ्चिन्निषिध्य कस्यचिदप्रतिष्ठापनात्। मलयजेत्यादि—सिततरदन्तपत्रं शङ्खताटङ्कः। अत्र मलयजरसविलेपनादीनां चन्द्रप्रभया सहाविभाव्यतां गता इत्यादिभेदप्रतीतिर्दर्शिता।

### दीपिका

प्रस्तुतस्येति। गुणाः शुक्लादिधर्माः। अपरित्यक्तनिजगुणमेवेति तद्गुणादस्य विशेषं दर्शयति। अत्रैकस्य स्वगुणपरिहारात् तदेकात्मता। भेदानध्यवसायादेकरूपत्वं समासकृत्तद्धितेषु सम्बन्धोऽभिधाननिमित्तमिति समानत्वसम्बन्धभेदात् सामान्यम्। न चेदमपह्नुतिः, किञ्चिन्निषिध्य कस्यचिद्प्रतिष्ठापनात्। मलयजेत्यादि। सिततरदन्तपत्रं शङ्खताटङ्कः। अत्र मलयजरसविलेपनादीनां चन्द्रप्रभया सहाविभाव्यतां गता इत्यादि भेदप्रतीतिर्दर्शिता।

### दर्पणः

सामान्यलङ्कारः। सामान्यं समानता यस्य गुणस्य सः सामान्यः। न केवलं किञ्चित् विकृष्टमुपमेयभावमित्यपि शब्दार्थः।

अतादृश्यमपि वस्तुगत्या किञ्चित् निकृष्टगुणमपि अपित्यक्तनिक्तनिजगुथ [अपरित्यक्तनिजगुणं] इत्यनेन तद्गुणव्यवच्छेदः।

अत एवैकीभावप्रतीतेरेव मलयजेत्युदाहरणे नापि गतार्थत्वे [ऐकाक्षयेत्यादि]

### साहित्यचूडामणिः

प्रस्तुतस्याप्रस्तुतेन वस्तुना साधारणगुणयोगादैकरूप्यं सामान्यमित्याह—अतादृशमपीति। न्यूनगुणमत्युत्कृष्टगुणेनैकात्मतया विवक्षितम्।

वक्ष्यमाणतद्गुणनिराकरणार्थमाह—अपरित्यक्तेति। तदेकात्मतया अप्रस्तुतैकरूप्येण। व्युत्पादयति—समानेति। यत् सूत्रं "प्रस्तुतस्यान्येन गुणसाम्यादैकात्म्यं सामान्यम्" [अलङ्कार सू० ७२] इति।

मलयजेति ।

अत्र प्रस्तुतस्य चन्दनलेपादेः अप्रस्तुतया चन्द्रिकात्मतया "अविभाव्यतां गता" इत्यभेदप्रतीतिरलङ्कारस्य मूलमित्याह—प्रस्तुतदन्ययोरिति । अन्यतया विभाव्यतामभिसारिकाणां भीतिप्रसङ्गात् । अत एवेति । यतो धावल्यस्यैकात्म्यम् । तयोः प्रस्तुताप्रस्तुतयोः । इदमेव वृत्तवैकट्यपरिहारार्थमनुष्टुभीकृतं दण्डिना—

**मल्लिकामालाभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।**
**क्षौमवत्यो न दृश्यन्ते ज्योत्स्नायामभिसारिकाः ॥ इति ।**

एवं

**यत्राभिसारो भुजगाङ्गनानां धौतस्तनीनां हरिचन्दनेन ।**
**धातुस्थलैस्तुङ्गफणामणीनां सन्ध्यासु विध्यत्यरुणाङ्कानाम् ॥**

इत्याद्यन्वेषणीयम् ।

## सम्प्रदायप्रकाशिनी

प्रस्तुतस्येति । अतादृशस्याप्रकृतेन योगात् साम्यविवक्षयैकात्म्योपनिबन्धो गुणसामान्यात् सामान्यम् ।

व्याचष्टे—अतादृशमपीत्यादि । अपरित्यक्तनिजगुणमिति तद्गुणाद् वैधर्म्यम् ।

मलयजेति । अत्र प्रस्तुतानां मलयजरसादीनाम् अतादृशानामपरित्यक्तगुणनामेवाप्रस्तुतशशिधामयोगाद् अविभाव्यतया तादात्म्यम् ।

तदेतदाह—अत्र प्रस्तुतेत्यादि ।

## मधुमती

अतादृशमपीति । वस्तुस्थित्येति शेषः । एकात्मतयेति । पृथगप्रतीयमानतयेत्यर्थः । अत एव मीलितात् भेदः । तत्र एकस्य बलवत्त्वात् अपरस्य अग्रहरूपः अभिभवः, अत्र तु—तुल्यबलतया पृथगप्रतीतिः । एतच्च 'प्रस्तुताद्भिन्नयोः' इत्याद्यग्रिमग्रन्थेन वृत्तिकारः स्वयमेवाभिधास्यति ।

## विस्तारिका

प्रस्तुतेति । प्रस्तुतस्य प्राधान्येन वर्णनीयस्य यदन्येनाप्रस्तुतपदार्थेन योगादैकात्म्यम्, अपृथक्प्रतीयमानत्वं निबध्यते, तत्सामान्यालङ्कारः ।

एकगुणसाम्यविवक्षया समासगुणत्वं प्रतिपादयितुमित्यर्थः ।

विवक्षापदस्वरसलब्धं व्याचष्टे—अतादृशमपीति । पदार्थ व्याचष्टे—तादृशतयेति । योगादित्यस्यार्थविवरणं सम्पृक्तमिति । भ्रमस्य समानजातीयधर्मप्रयोज्यत्वादाह—अपरित्यक्तेति । एतेन तद्गुणाद् भेदः । तत्र स्वगुणपरित्यागपूर्वकमल्पगुणग्रहणादिति भावः । एकात्मतया अपृथक् प्रतीयप्रतीयमानतया । एतेन मीलिताद्

भेदः। तत्र बलवत्सजातीयग्रहणकृताग्रहणस्यैव विवक्षितत्वात्; अत्र च ग्रहणस्य विवक्षितत्वात्। तद्वक्ष्यति—पृथग्भावेनेत्यादि।

मलयजेति। दन्तपत्रेति। दन्तनिर्मिततताटङ्क इत्यर्थः।

अत एवेति। पृथग्भावेन त्वस्त्येवेति भावः।

## सारबोधिनी

प्रस्तुतस्येति। प्रस्तुतस्य प्राधान्येन वर्णनीयस्य यदन्येनाप्रस्तुतपदार्थेन योगादैकात्म्यं अपृथक्प्रतीयमानत्वं निबध्यते स सामान्यनामालङ्कारः। स च गुणसाम्यविवक्षया समानगुणतां प्रतिपादयितुमित्यर्थः। विवक्षापदस्वरसलब्धं व्याचष्टे अतादृशमपीति। योगादित्यस्यार्थविवरणम् संपृक्तमिति। तेन तद्गुणे नातिव्याप्तिः तत्र स्वगुणतिरस्कारात्। तदेकात्मतयाऽपृथक्प्रतीयमानतयेति निमीलिते नातिव्याप्तिः। तत्र बलवत्सजातीयग्रहणकृताग्रहणस्यैव विवक्षितत्वात् अत्र [पृथक्त्वेना-] ग्रहमविवक्षितत्वात्।

## काव्यप्रदीपः

**प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया।**
**ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम्॥ ४८॥**

अतादृशत्वेऽपि विवक्षितगुणसाम्यस्य प्रस्तुतस्यान्येनाप्रस्तुतेन गुणसाम्यविवक्षया ऐकात्म्यं बध्यते तत्सामान्यम्। समानगुणयोगात्। तत्रापरित्यक्तनिजगुणस्येत्यपि विशेषणं विवक्षितम्। अन्यथा तद्गुणालंकारेऽतिव्याप्तेः। बध्यत इत्यस्य प्रत्यायनमात्रमर्थो न तु शाब्दं प्रतिपादनम्। उदाहरणे 'अविभाव्यतां गताः' इत्यादावैकात्म्यस्याशाब्दत्वात्। उदाहरणम्—

**'मलयजरसविलिप्ततनवो नवहारलताविभूषणाः**
**सिततरदन्तपत्त्रकृतवक्त्ररुचो रुचिरामलांशुकाः।**

**शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः**
**प्रियवसतिं प्रयान्ति सुखमेव निरस्तमियोऽभिसारिकाः॥'**

अत्राभिसारिकाचन्द्रिकयोरेकात्मत्वप्रतीतिः।

## आदर्शः

सामान्यनामकमलङ्कारमाह—प्रस्तुतस्येति। अन्येन अप्रकृतेन पदार्थेन सह योगात् प्रस्तुतस्य पदार्थस्य तदैकात्म्यं तदेकात्मता बध्यते ज्ञाप्यत इत्यर्थः। तथात्वनिबन्धे हेतुमाह—गुणसाम्येति। एकात्मताबन्धश्च भेदेनानुपलभ्यमानतया पर्यवसित एव बोध्यः। योगं विनैकात्मताबन्धो रूपकेऽप्यस्ति तद्वारणाय—योगादिति, संयोगादित्यर्थः। वक्ष्यमामे तद्गुणालङ्कारेऽपि योगादेकात्मताज्ञापनमस्ति किन्तु तत्र निजगुणत्यागः, तद्वारणाय पूरयित्वा व्याचष्टे—अपरित्यक्तनिजगुणमेवेति।

मलयजेति। विततधाम्नि शशभृति धरां धवलयति सति मलयजेत्यादि बहुविशेषणवशाद् अविभाव्यताम् अपरिचेयतां गता अभिसारिका निरस्तपरपरिचेयत्वभियः सत्यः सुखमेव प्रियवसतिं प्रयान्तीत्यन्वयः। दन्तपत्रंल हस्तिदन्तकृतकर्णभूषाविशेषः। अत्रेति। प्रस्तुता अभिसारिकास्तदन्यश्चन्द्ररश्मिः, 'एकात्मताहेतुः' एकात्मताज्ञापकः, न तु रूपकवच्छाब्दी एकात्मतेत्यवधेयम्। न चैवमेतावतैव रूपक वारणसम्भवे योगादिति व्यर्थमिति वाच्यम्, लक्षणे शाब्दत्वाशाब्दत्वाप्रवेशात्।

**सुधासागरः**

अतादृशमपीत्यादि। अतादृशत्वेऽपि विवक्षितगुणसाम्यस्य प्रस्तुतस्यान्येन गुणसाम्यविवक्षया यत्तैनैकात्म्यं निबद्धयते तत्सामान्यम्, समानगुणयोगात्। तत्र परित्यक्तनिजगुणस्येत्यपि विशेषणं विवक्षितम्, अन्यथा तद्गुणालङ्कारेऽतिव्याप्तिः। 'बध्यते' इत्यस्य प्रत्यायनमात्रमर्थो न तु शाब्दं प्रतिपादनम्। उदाहरणे'अविभाव्यतां गता' इत्यादौ ऐकात्म्यस्याशाब्दत्वात्। उदाहरणम्—मलयजेति। स्पष्टम्। पादाकुलकं छन्दः।

**यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम्।**
**अनियतवृत्तपरिमाणसहितं प्रथितं जगत्सु पादाकुलकम्॥ इति लक्षणात्।**

अत्रेतिवृत्तिः स्पष्टा।

**वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।**

**भृङ्गा सहेलं यदि नापतिष्यन् कोऽवेदयिष्यन्नवचम्पकानि ॥५५८॥**

अत्र निमित्तान्तरजनितापि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते प्रतीतत्वात्तस्य प्रतीतेश्च बाधायोगात् ॥

---

### सङ्केतः

निमित्तान्तरेति । भृङ्गपातः निमित्तान्तरम्, नानात्वं भेदः । न व्युदसितुमिति । अत्र पूर्वं अभेदो भातः, पश्चात् भेदः । न हि भातमभातं स्यात् इत्यर्थः । तस्य अभेदस्य । इति सामान्यम् ।

### बालचित्तानुरञ्जनी

आर्थमुदाहरणान्तरमाह वेत्रेति । वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतः गण्डतलागतानि नवचम्पकानि भृङ्गाः सहेलं यदि नापतिष्यन् तर्हि चम्पकानि कोऽवेदयिष्यत् ।

### काव्यादर्शः

निमित्तान्तरेति । भृङ्गपातजनिता भेदप्रतीतिरभेदं न निरस्यति, तस्याभेदस्य प्रतीतत्वात् । प्रतीतेश्चेति । न हि भातमभातं भवतीति ।

### विवेकः

यथा वा वेत्रत्वचेत्यादि । पूर्वोदाहरणाद्विशेषं दर्शयति प्रतीतेश्चेति । न हि ज्ञानमज्ञानं भवतीति' (रु. स. ७१ पृ.) ।

### दीपिका

यथा वा वेत्रत्वचेत्यादि । पूर्वोदाहरणाद्विशेषं दर्शयति—प्रतीतेश्चेति । नहि ज्ञानमज्ञानं भवतीति ।

### दर्पणः

एत्रत्वचेत्यादि [वेत्रत्वचेत्यादि] पुनरुदाहरणस्य प्रयोजनमाह [अत्रेति] निमित्तान्तरं भङ्गपतनोऽपि [भृङ्गपयनोऽपि] न तावधानविशेषजनितवैधर्म्यं ग्रहणरूपं अभेदं गण्डचम्पकयोरित्यर्थः । अयमाशयः—भृङ्गपतनामेव हि गण्डचम्पकयोरित्यर्थः ।

भेदग्रहः तत्रप्रथमतः तत्तादात्म्यमिति प्रत्यायनादत्रायं सामान्यलङ्कारः । इति मिलिते उत्कृष्टगुणे निकृष्टगुणस्य विरोधालङ्कारः । इह भूतयोरल्पगुणतया भेदाग्रह इति विवेकः ।

## साहित्यचूडामणिः

अर्थवैचित्र्यासूत्रणाय पुनरुदाहरति—वेत्रेति। अत्र प्रस्तुतदन्ययोश्चम्पकगण्डस्थलयोरन्यूनातिरिक्तमनवसितभेदत्वमैकरूप्यहेतुः।

ननु क्रियातिपत्तिपर्यालोचने भृङ्गपातेन चम्पकानां परिज्ञातत्वम्, येन भेद प्रतीतिरिति कथं सामान्यौचित्यमिति चेदाह—निमित्तेति। निमित्तान्तरं भ्रमरपतनलक्षणं तज्जनिता या सामान्यविरोधितया शङ्क्यमाना भेदस्य प्रतीतिः सा प्राक्प्रतिपन्नभेदसामान्यरूपं निराकर्त्तुं न प्रगल्भते। तत्र हेतुः—प्रतीतत्वादिति। कृतं हेत्वन्तरगवेषणेन। यदभेदः प्रतीतिमस्राक्षीत् व्रजलेपवत् तस्याप्रकम्प्यत्वमिति यावत्। यथाहुरभियुक्ताः—[ईश्वरप्रत्यभिज्ञायां १.७.१२-१३]

एवं रूप्यविदाभावरूपा शुक्तिमतिर्भवेत्।
न त्वाद्य रजतज्ञप्तेः स्यादप्रामाण्यवेदिका॥

धर्म्यसिद्धेरपि भवेद् बाधा नाप्यनुमानतः॥ इति॥

यथाचोक्तं मया चमत्कारचिन्तामणौ "वस्तुचेत्कथमि" त्यारभ्य

रजतानुभवे शुक्तिर्न चिन्तामधिरोहति।
शुक्तिकायाः प्रतीतौ च दूरे रजतवासना॥

बाधेन मेलके भाव्यं स कदाचिन्न लभ्यते।
एवं बाधस्य दौर्बल्याद् भ्रान्तत्वं संविदो वृथा॥

यद् बुद्ध्योर्न विरोधोऽस्ति मिथो बाधानभिज्ञयोः। इति।

एवम्—आरब्धामपराहण एव महतीं श्रीवल्लभक्ष्मापते!
गायन्तीं विशदं यशस्तव मुदा गोष्ठीं दिवौकस्पतेः।

अज्ञानादुदयस्य चन्द्रमहसामामध्यरात्रं स्थिता-
मुल्लासेन सुगन्धिना विघटयत्युद्यानशेफालिका॥

इत्याद्यूह्यम्। न चेयमपह्नुतिः, किञ्चिन्निषिध्य कस्यचिदप्रतिपादनात्।

## सम्प्रदायप्रकाशिनी

क्वचित् प्रतीतचरस्यैकात्म्यस्याबाधे मानान्तराद् भेदः प्रतीतोऽपि न सामान्यबाधक इत्युदाहरति—वेत्रत्वचेति। वेत्रत्वक्साम्यं गौरता। इह भृङ्गपातान्नानात्वधीः।

योजयति—अत्र निमित्तेति।

**मधुमती**

वेत्रत्वचेति । ननु भृङ्गपातरूपविशेषदर्शनात् अत्र न पृथगप्रतीतिः ? अत आह—निमित्तान्तवेति । अभेदं साधारणधर्मवत्त्वम् । यद्वा—ऐकात्म्यं अभेदारोप एवेति ध्येयम् । इति सामान्यम् ।

**विस्तारिका**

वेत्रत्वचेति । यदि भृङ्गा सखेलं नापतिष्यन्, न तदा वधूनां कर्णाग्रतो गण्डतलगतानि नवचम्पकानि चम्पकत्वेन को वेदयिष्यदित्यन्वयः ।

ननु भृङ्गपातविशेषदर्शनादत्र नापृथक् प्रतीतिः, अत आह—निमित्तान्तरेति । अभेदं तादात्म्यम् । यद्यपि तयोस्तादात्म्ये अस्यालीकत्वात् तद्व्युदासोऽप्यनाशङ्कनीय एव, तथापि प्रथमोत्पन्नस्याभेदप्रत्ययस्य व्युदसितुमशक्यत्वादित्यत्र तात्पर्यम् ।

ननु प्रथमं प्रत्यययोऽपिं वस्तुत ऐकात्म्यं भवत्येवेत्यत आह-प्रतीतेश्चेति । तथा च प्रतीतिघटितमेव लक्षणम् । तच्चाबाधितमेवेति भावः ।

न च रूपकातिशयोक्तिविशेषसङ्कर इति वाच्यम्, तयोराहार्यारोपरूपत्वात्; अस्य च विशेषादर्शनजन्यत्वात् । भ्रान्तिमत्सङ्करोऽपि न, तस्य स्मर्यमाणारोपत्वात्, अस्य चानुभूयमानारोपत्वादिति ।

**सारबोधिनी**

वेत्रत्वचेति । तस्याश्चम्पकसवर्णता हि भवति । दन्तपत्रं दन्तनिर्मितताटकमित्यर्थः । अत एवेति । अपृथक्भावेन तु तयोरुपलक्षणमस्त्येवेति भावः । निमित्तान्तरेति । यतः साक्षात्काररूपा भ्रान्तिर्नानुमाने नापैति । साक्षात्कारभ्रमे साक्षात्कारनिवेशेस्य विरोधित्वात् । अत एव सूर्योदयेन प्राचीमनुमायापि मुह्यतीति । न च रूपकप्रथमातिशयोक्तिसङ्कर इति वाच्यम् । भ्रान्तिमत्सङ्करोऽपि न तस्य स्मर्यमाणारोपरूपत्वात् अस्य चानुभूयमानरोपरूपत्वादिति ।

**काव्यप्रदीपः**

क्वचित्प्रस्तुताप्रस्तुतयोरुत्तरकालीनविवेकादिना तदुन्नयनम् । यथा—

**'वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।**
**भृङ्गाः सहेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥'**

अत्र भृङ्गपातानन्तरं भेदप्रत्ययो न तु पूर्वमेव प्रतीतिः । ननु भृङ्गपातेन भेदप्रत्ययात्कथमेकात्मत्वप्रतीतिरिति चेत् । अग्रे तथात्वेऽपि प्राथमिकाभेदप्रत्ययस्यानिरासात्तस्य वृत्तत्वात् ।

**काव्यप्रकाशखण्डनम्**

यथा—

**वेत्रत्वचातुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि।**
**भृङ्गः सहेलं यदि नापतिष्यन् को वेदयिष्यन्नवचम्पकानि॥**

वधूनां कर्णाग्रतः गण्डतले आगतानि नवचम्पकानि को वेदयिष्यन् न कोऽपि, यदि सहेलं सलीलं भृङ्गा भ्रमरा नापतिष्यन्। वधूनां कीदृशीनाम्? वेत्रत्वचातुल्या रुचिर्यासां तास्तथा तासां इत्यर्थः। निमित्तान्तरजनितापि नानात्वप्रतीतिः प्रथमप्रतीतं अभेदेन व्युदसितुं उत्सहते। साक्षात्कारिभ्रमे साक्षात्कारिविशेषदर्शनं विरोधीति न्यायात्। न चैतद्रूपकं प्रथमातिशयोक्तिर्वा तयोराहार्यारोपरूपत्वात्। अन्वयस्य त्वनाहार्यत्वात्। यथा—

**धामधर्षि नवमैन्दवं महः प्रेक्ष्य संभ्रमवशादसाध्वसः।**
**वीतिहोत्र इति गेहिनीस्तनावाचकर्ष कलशौ धियाध्वगः॥**

## आदर्शः

पश्चाद् भिन्नात्मताबोधसम्भवेऽपि प्राथमिकैकात्मताबोधादप्ययमलङ्कार इति वक्तुं पुनरप्युदाहरति— यथा वा वेत्रत्वचेति। वेत्रविशेषः प्राच्यदेशे गौरत्वक्, तत्तुल्यरुचां गौराङ्गीणां वधूनां कर्णाग्रतो गण्डतलमागतानि नव-चम्पकानि तदा को गण्डतलभिन्नतया अवेदयिष्यत् पर्यचेष्यत्, सहेलं सलीलं यदि तत्र भृङ्गा नापतिष्यन्। अत्रेति। निमित्तान्तरं भृङ्गपातः। 'व्युदसितुम्' अप्रतीतीकर्त्तुम्। बाधायोगादिति, अप्रतीतिकरणायोगादित्यर्थः। पुनःप्रतीत्यजननरूपो बाधस्त्वस्त्येव।

## सुधासागरः

अत इत्यादि। अत एव तयोरभिसारिकाचन्द्रिकयोः पृथग्भावेन उपलक्षणं न, किन्तु एकात्मत्वप्रतीतिरि-त्यर्थः। क्वचित्प्रस्तुताप्रस्तुतयोरुत्तरकालीनविवेकादिना तदुन्नयनम्। यथा—वेत्रेति। स्पष्टम्। इन्द्रवज्रा छन्दः। लक्षममुक्तं प्राक्। अत्रेत्यादि। अयमर्थः—अत्र भृङ्गपातानन्तरं भेदप्रत्ययो न तु पूर्वमेव प्रतीतिः। ननु भृङ्गपातेन भेदप्रत्ययात्कथमेकात्मत्वप्रतीतिरिति चेत्, अग्रे तथात्वेऽपि प्राथमिकाभेदप्रत्ययस्यानिरासात्, तस्य वृत्तत्वादिति।

(सू० २०३) विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।

एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ १३५ ॥

अन्यत् प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।

तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥ १३६ ॥

प्रसिद्धाधारपरिहारेण यत् आधेयस्य विशिष्टा स्थितिरभिधीयते स प्रथमो विशेषः ।

उदाहरणम्—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।

रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥ ५५९ ॥

---

**सङ्केतः**

एकात्मा एकस्वभावा ।

दिवमिति । 'अनन्यत्र भावो विपर्यायः' इति अर्थात् कवयः विषयत्वेन आधाराः । तदभावोऽपि वाचां आधेयानां स्थितिः उक्ता ।

**बालचित्तानुरञ्जनी**

विशेषालङ्कारं लक्षयति व्याकरोति प्रसिद्धेति । आधेयोपस्थितिरनाधारतया निबध्यमाना प्रथमो विशेषः एकं स्वलक्षणकमेव वस्तु युगपदनेकेषु वर्तमानं द्वितीयो विशेषः । कस्यचिदुन्मादोत्कर्षात् कार्यमारभमाणस्य तेनैवारभेम्ण अपृथक् प्रवृत्तावशक्यमपि कार्यान्तरमारभमाणं तृतीयो विशेषः ।

तत्राद्यमुदाहरति दिवमिति । दिवमुपयातानामपि येषामनल्पगुणा गिरः आकल्पं जगन्ति रमयन्ति ते कवयः केषां न वन्द्याः । अत्र कवीनां वागाधारभूतानामभावेऽपि आधेयानां वाचां ऐहिकी वृत्तिर्विशेषः ।

**काव्यादर्शः**

एकात्मेति । एकस्वभावः । 'दिवम्' इति । अत्र कवीनामाधाराणामभावेऽपि आधेयानां गिरामवस्थितिः । अनन्यत्र भावो विषयार्थ इति विषयत्वेन तेषामाधारत्वात् ।

## विवेक:

विना प्रसिद्धमिति—इहाधारमन्तरेणाधेयं न वर्तत इति यत् परिहारेणाधेयस्योपनिबन्धः स एको विशेषालङ्कारः। दिवमित्यादि—अत्र कवीनामाधारानामभावेऽप्याधेयानां गिरामवस्थितिः। रमयन्तीत्यत्र भावो विषयार्थ इति विषयत्वेन तेषामाधारत्वात्।

## दीपिका

विना प्रसिद्धमिति। इहाधारमन्तरेणाधेयं न वर्तत इति यत् परिहारेणाधेयस्योपनिबन्धः स एको विशेषालङ्कारः। दिवमित्यादि। अत्र कवीनामाधाराणामभावेऽप्याधेयानां गिरामवस्थितिः। रमयन्तीत्यत्र भावो विषयार्थ इति विषयत्वेन तेषामाधारत्वात्।

## दर्पण:

विशेषालंकारः कार्या [एकात्मा] एकरूपिणी, न तु एकस्त्रिधा वससीत्यादिवत् प्रत्याश्रय विलक्षणेत्यर्थः। तथैव तेनैव प्रकारेण। एतदेव वक्ष्यति वृत्तिकृत् तेनैव यत्नेति। एवञ्च "धुनोति चासिं तनुते च कीर्तिमित्यादौ खड्गचम्पककीर्तिविस्तराणयोः एकप्रयत्ननिर्वाच्यत्वप्रतीतिविरहान्नायमलङ्कारः। दिवसप्युपजातानामित्यादौ [दिवमप्युपजातानामित्यादौ] नैयायिकादिनी ह्यगिरा [?] गगनाव धात्वं तथापि लोके कवय एव आधारत्वेन कथं विभावनायाः कारणाभावे कार्योत्पत्तिः किं विशेषोक्तौ कारणसामान्ये सत्यपि कार्यानुत्पत्तिः।

## साहित्यचूडामणि:

विशेषमाह—विनेति। आधेयस्थितिरनाधारतया विशिष्यमाणानां प्रथमं विशेषमुत्पादयति।

दिवमिति। कविषु किल वाचो वर्तन्ते अनन्यभावो विषयार्थ इति विषयत्वेन तेषामाधारत्वम्। तेषु स्वर्गतिष्वपि वाचमैहिकी वृत्तिर्महान् विशेषः।

## सम्प्रदायप्रकाशिनी

विना प्रसिद्धमिति। लोकसिद्धमाधारं विनाधेयस्य स्थैर्यादिविशिष्टावस्थितिरेकः।

दिवमपीति। अत्र कवीन् विना वचसामाकल्पमवस्थितिः।

## मधुमती

विनेति। न च रूपकातिशयोक्तिविशेषयोः सङ्करः। तस्याः आहार्यारोपरूपत्वात्, अस्य तु विशेषादर्शनजन्यत्वात्। न च भ्रान्तिमत्सङ्करः। तत्र स्मर्यमाणारोपात्, अत्र तु अनुभूयमानारोपात् इति।

### विस्तारिका

विनेति। प्रसिद्धाधारं विनाऽऽधेयव्यवस्थितिरेको विशेषः। एकात्मेति। एक आत्मा स्वभावोऽर्थाद् वृत्तिर्यस्यां तथा। स चानेकस्मिन् वर्तमाना इयमपरा। अन्यत् कार्यं कुर्वतः पुरुषस्येति तेनैव प्रयत्नेनान्यस्याशक्य-वस्तुनो यत्करणम्, सोऽपरो विशेष इत्यर्थः।

### सारबोधिनी

विशेषं लक्षयति विनेति। एकात्मा एक आत्मा स्वभावोऽर्थाद्वृत्तिः स्थिति यस्यां सा तथा सा च तथाभूता अनेकस्मिन् वर्तमानेत्यर्थः। दिवमिति। जगतां कर्मीभूतानि। द्वितीयमुदाहरति सा वसइ इति।

### काव्यप्रदीपः

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः।**
**एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा॥ ४९॥**

**अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः।**
**तथैव करणं चेति विशेषस्त्रिविधो मतः॥ ५०॥**

स एष त्रिधा। तत्र प्रसिद्धमाधारं विनाधेयस्य विशिष्टावस्थितिर्यदभिधीयते स एको विशेषः। तत्र प्रसिद्धमित्यनेनेदमुक्तं यदत्र वास्तवमाधारत्वं न विवक्षितं किं तु कविप्रसिद्धिमात्रसिद्धमिति। अत एव तथैवोदा-हरणम्—

**'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्।**
**रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः॥'**

अत्र कविरूपं प्रसिद्धमाधारं विना गिरां विशिष्टावस्थितिरुक्ता।

### काव्यप्रकाशखण्डनम्

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः।**
**एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा॥ (का. १३५)**

**अन्यस्तत् कुर्वतः कार्यं अशक्यस्यान्यवस्तुनः।**
**तथैव करणं चेति विशेषस्त्रिविधः स्मृतः॥ (का. १३६)**

एकात्मा एकस्वाभावः। तथा च एकमेव वस्तु एकेन स्वभावेन युगपद् अनेकेषु वर्त्तते तथैव तेनैव प्रकारेणेत्यर्थः। क्रमेणोदा०—

**दिवमप्युपजा (या) तानामाकल्पमनल्पगणगुणा येषाम्।**
**रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः॥**

ते कवयः कथमिव न वन्द्याः येषां गिरो वाण्यः जगन्ति [र० ५८,१] रमयन्ति । कीदृशानाम्? स्वर्गं गतानाम् । आकल्पं कल्पं व्याप्य अनल्पा बहुतरां गुणगणा येषां कवीनामित्यर्थः ।

### आदर्शः

त्रिविधं विशेषालङ्कारमाह—विना प्रसिद्धमिति । तत्र 'प्रसिद्धे'त्यादिनाप्रथमं विशेषं व्याख्यायोदाहरति—दिवमपीति । दिवमुपयातानामपि येषां कवीनामनल्पगुणगणा गिरो जगन्ति रमयन्ति, ते कवयः कथमिव न वन्द्या इत्यन्वयः । अत्र निर्मातृत्वेन प्रसिद्धाधारान्, कवीन् विनाऽपि काव्यरूपाणां गिरां स्थितिः ।

### सुधासागरः

प्रसिद्धेत्यादि । अयम्भावः स एष त्रिधा । तत्र प्रसिद्धमाधारं विनाऽऽधेयस्य विशिष्टाऽवस्थितिर्यदभिधीयते स एको विशेषः । अत्र प्रसिद्धमित्यनेनेदमुक्तम् । यदत्र वास्तवमाधारत्वं न विवक्षितम्, किन्तु प्रसिद्धिमात्रसिद्धमिति । अत एव तदेवोदाहरणं दिवमित्यादि । स्पष्टम् । आर्या छन्दः । अत्र कविरूपं प्रसिद्धमाधारं विना गिरां विशिष्टाऽवस्थितिरिक्ता ।

एकमपि वस्तु यत् एकेनैव स्वभावेन युगपदनेकत्र वर्तते स द्वितीयः।

उदाहरणम्—

**सा वसइ तुज्झ हिअए सा च्चिअ अच्छीसु सा अ वअणेसु।**

**अह्मारिसाण सुन्दर ओसासो कत्थ पावाणं॥ ५६०॥**

---

**सङ्केतः**

सा वसइ इति। अत्र एकैव स्त्री एकेनैव वसनरूपेण युगपत् चित्तादौ वर्तते।

**सङ्केतः (रुय्यकः)**

अपरित्यक्तेति—तद्गुणादस्य विशेषं दर्शयति। तत्रैकस्य गुणापरिहारात् प्रतीतेश्चेति—न हि ज्ञानमज्ञानं भवतीति।

**सा वसति तव हृदये सैवाक्षिषु सा च श्रवणयोः।**

**अस्मादृशानां सुन्दर अवकाशः कुत्र पापानाम्॥**

**बालचित्तानुरञ्जनी**

द्वितीयमुद्भाव्य उदाहरति सा वसइ इति। सती तपत्यनुरक्तं नायकं काचनोपालभते—सा वसइ तुज्झ हिअए सा वसति तव हृदये, स च्चिअ अच्छीसु, सा अ वअणेसु सा च वचनेषु, ओसासो अवकाशः, कत्थ कुत्र? अत्र एकस्या एव तस्या युगपदनेकत्र हृदयादिषु न्यासः विशेषः।

**काव्यादर्शः**

'सा वसइ' इति। 'अस्मादृशीनां सुन्दर अवकाशः कुत्र पापानाम्।' अत्र एकस्या योषित एकेनैव वसनस्वभावेन हृदयादौ युगपद् अवस्थानम्।

**विवेकः**

द्वितीयो यथा—**सा वसइ** इत्यादि। **सा वसति तव हृदये सैवाक्षिषु (?) सा च श्रवणयोः। अस्मादृशानां सुन्दर अवकाशः कुत्र पापानाम्॥** अत्रैकस्या एव योषितो हृदयादौ युगपदवस्थानाम्।

**दीपिका**

द्वितीयो यथा—सा वसइ इत्यादि। "सा वसति तव हृदये सैवाक्षिषु सा च श्रवणयोः। अस्मादृशानां सुन्दर अवकाशः कुत्र पापानाम्॥" अत्रैकस्या एव योषितो हृदयादौ युगपदवस्थानम्।

### दर्पणः

अत एव वक्रोक्त्यलङ्कार सामान्यलक्षणं कथमिव कथं पुनः [सारस इतिरभसेनेति] सा वसति तव हृदये सैवाक्ष्णोः सारदले । अस्मादृशानां सुन्दरि अवकाशः कुत्र पापानाम् ॥

### साहित्यचूडामणिः

एवं स्वलक्षणकमेव वस्तु युपदनेकत्र वर्तमानं द्वितीयं विशेषमुन्मेषयति । सेति ।

**सा वसति तव हृदये सैवाक्ष्योः सा च वचनेषु ।**
**अस्मादृशीनां सुन्दर ! अवकाशः कथं पापानाम् ॥**

अथ कस्यचिदुत्साहोत्कर्षात् कार्यमारभमाणस्य तेनैवारम्भेण पृथक् प्रवृत्तावशक्यमंपि कार्यान्तरमारभ्यमाणं तृतीयस्य विशेषस्य प्रयोजकम् ।

### सम्प्रदायप्रकाशिनी

द्वितीयं व्याचष्टे—एकमपीति ।

सा वसइ इति ।

**सा वसति तव हृदये सैवाक्ष्णोः सा च श्रवणयोः ।**
**अस्मादृशीनां सुन्दर अवकाशः कुत्र पापानाम् ॥**

अत्रैकस्या हृदयाक्ष्यादिष्वेकविधप्रेमपात्रतया युगपद्वृत्तिः ।

### मधुमती

सा वसतीति । पूर्वत्र पर्याय क्रमेण, अत्र तु एकदैव अनेकस्मिन् एकसम्बन्धः इति द्वयोर्भेदः ।

### विस्तारिका

**सा वसति तव हृदये सैवाक्षिषु सा च वचनेषु ।**
**अस्मादृशीनां सुन्दर अवकाशः कुत्र पापानाम् ॥**

न च पर्यायसङ्करः, तत्र क्रमेणैकस्यानेकसम्बन्धात्, अत्र त्वेकदैव एकस्यानेंकसम्बन्धस्य विवक्षित्वादिति ।

### सारबोधिनी

**सा वसति तव हृदये सैवाक्ष्णोः सैव वचनेषु ।**
**अस्मादृशां सुन्दर ! अवकाशः कुत्र पापानाम् ॥**

न च पर्यायसङ्करस्तस्य क्रमेणैकस्यानेकसंबन्धात् । अत्र त्वेकदैव एकपदस्यानेकपदसंबन्धस्य विवक्षितत्वादिति भेदात् ।

## काव्यप्रदीपः

एकस्य वस्तुनो युगपद्या एकात्मा अनेकवृत्तिः स द्वितीयो विशेषः। एकात्मेत्येकेन स्वभावेनेत्यर्थः। एतच्च विशेषणं "एकस्त्रिधा वससि—'इत्यादि यथासंख्यव्यावर्तनाय। युगपदिति पर्यायनिवारणाय। उदाहरणम्—

**'सा वसइ तुज्झ हिअए स च्चिअ अच्छीसु सा अ वअणेसु।**
**अम्हारिसाण सुन्दर ओआसो णत्थि पावाणम्॥'**

स्पष्टम्।

## काव्यप्रकाशखण्डनम्

**सा वसइ तुज्झ हिअए स च्चिअ अच्छीसु सा अ वअणेसु।**
**अम्हारिसाण सुंदर ओआसो णत्थि पावाणं॥**

## आदर्शः

एकात्मेत्यादिद्वितीयं विशेष 'मेकमपि'त्यादिना व्याख्यायोदाहरति—सा वसइ इति—

**सा वसति तव हृदये सा चैवाक्षिषु सा च वचनेषु।**
**अस्मादृशीनां सुन्दर अवकाशः कुत्र पापानाम्॥ इति संस्कृतम्।**

अस्मादृशीनां पापानामित्यन्वयः। अत्रैकेन नायकभाव्यमानत्वेन स्वभावेन हृदयाद्यनेकत्रोपनायिकायाः स्थितिः।युगपत्तया च पर्यायालङ्कारतो भेदः।

## सुधासागरः

एकमित्यादि। एकस्य वस्तुनो युगपद् यैकात्माऽनेकवृत्तिः स द्वितीयो विशेषः एकात्मेति, एकस्वभावेत्यर्थः। एतच्च विशेषणमेकस्त्रिधावससीत्यादियथासङ्ख्यव्यावर्त्तनाय। युगपदिति पर्यायनिवारणायेति भावः। उदाहरणम्—सा वसईति। आर्या छन्दः।

**स वसति तव हृदये सैवाक्ष्णेः सैव वचनेषु।**
**अस्मादृशीनां सुन्दर अवकाशः कुत्र पापानाम्॥**

इति संस्कृतं स्पष्टम्।

यदपि किंचिद्रभसेन, आरभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते सोऽपरो विशेषः । उदाहरणम्—

**स्फुरद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम्।**
**विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ ५६१ ॥**

---

### सङ्केतः

विधिनेति । अत्र येनैव यत्नेन स्फुरदद्भुतरूपं इत्यादिविशेषण वास्त्वं सृष्टः, तेनैव अशक्यं कामार्कगुरुरूपं कार्यान्तरमपि कृतम् । अत्र अशक्यग्रहणात्—'प्रस्नवति वृषो गच्छन्' 'हसन् पचति' इत्यादौ नायमलङ्कारः, अशक्यत्वाभावात् ।

### बालचित्तानुरञ्जनी

तृतीयमुदाहरति स्फुरदिति । नवः सविता ससृजे । नवः बृहस्पतिश्च ससृजे । अत्र वर्णनीयं कमपि सत्यं भुवि[?] स्रष्टुश्चतुर्मुखस्य ब्रह्मणः तेनैव कारणेनापृथक्सामग्रीसाध्यं जन्मना शक्यनिर्माणं मनोभवादीनां सृष्टिर्विशेषः ।

### काव्यादर्शः

'स्फुरद्' इति । अत्र त्वां सृजता तथैवाशक्यमपि स्मरसूर्यजीवलक्षणं कृतम् । अशक्यग्रहणात् 'हसन् पचति' इत्यादौ नालंकारः ।

### विवेकः

स्फुरदित्यादि—अत्र रभसेन त्वां सृजतो विधेस्तनैव प्रयत्नेनासम्भाव्यमानं भुवि मनोभुवः सवितुर्बृहस्पतेश्च कारणं निबद्धमिति लोकोत्तरवस्तु सम्पादनरूपोऽयं विशेषः ।

### दीपिका

स्फुरदित्यादि । अत्र रभसेन त्वां सृजतो विधेस्तेनैव प्रयत्नेनासम्भाव्यमानं भुवि मनोभुवः सवितुर्बृहस्पतेश्च कारणं निबद्धमिति लोकोत्तरवस्तुसम्पादनरूपोऽर्थ विशेषः ।

### दर्पणः

रमसेनेति अशक्यवस्तुनिष्पत्तेरविलंवस्त्राणां [स्फुरदद्भुत] मित्यादौ अशक्यवस्त्वन्तः कारणं साक्षात् ।

## साहित्यचूडामणिः

स्फुरदिति । अत्र वर्णनीयमेकं स्रष्टुमुन्मुखस्य चतुर्मुखस्य तेनैवारम्भेण पृथक् समग्रीसाध्यजन्मनां मनोजन्मादीनां सृष्टिर्विशेषः ।

## सम्प्रदायप्रकाशिनी

तृतीयं व्याचष्टे—यदपि चेति । कार्यान्तरं विधेयं निषेध्यं च ।

स्फुरदिति । अत्र नायकसर्गेण नवमनोभवादिविधिः ।

## मधुमती

यदपि चेति । तथा च प्रसङ्गविषये विशेषभेदोऽयम् । तत्र विषये तु समुच्चय एव, उभयोरप्युद्देश्यत्वात् । अत्र सर्ग-संहारयो- र्भेदात् उदाहरणयोर्भेदः ।

## विस्तारिका

यदपि चेति । न वास्य समुच्चयसङ्कर इति वाच्यम्, तत्रैकस्मिन्नेव कार्ये बहूनां हेतूनामन्वयस्य, अत्र त्वेकस्यैव हेतोरनेककार्यकारित्वस्य विवक्षिततत्वादिति भेदात् ।

स्फुरदिति । सृष्टिसंहारभेदादुदाहरणयोर्भेदः ।

## सारबोधिनी

तृतीयमुदाहरति स्फुरदिति । अनवद्याः विस्मरणादिदोषहीनाः ।

## काव्यप्रदीपः

रभसेनान्यत्कार्य कुर्वतः कर्तुर्यदशक्यस्यान्यस्यापि कार्यस्य तथैव करणं स तृतीयो विशेषः । अत्र तथैवेति तेनैव प्रकारेणेत्यर्थः । एतच्च 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादि समुच्चयव्यावर्तनाय । उदाहरणम्—

**'स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् ।**
**विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥'**

अत्रान्यस्य करणं शाब्दम् ।

## काव्यप्रकाशखण्डनम्

**स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम् ।**
**विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥**

त्वां सृजता विधिना नूतनो मनोभूः कामः ससृजे। सविता सूर्यः, बृहस्पतिर्गुरुः। त्वां कीदृशम्? स्फुरद्विकासदद्भुतं रूपं यस्य तम्। उद्गतः प्रताप एव ज्वलनोऽग्निर्यस्मात् तम्। अनवद्या निर्दोषा विद्या यस्य तं इत्यर्थः। अत्रान्यस्य करणं शाब्दम्।

## आदर्शः

'अन्यत् प्रकुर्वतः' इत्यादिकं तृतीयं विशेषं 'यदपि चे'त्यादिना व्याख्यायोदाहरति—स्फुरदिति। स्फुर-दित्यादिविशेषणविशिष्टं त्वां सृजता विधिना सत्यं मनोभ्वादित्रयं ससृजे, इति समुदयवाक्यार्थः। अत्र स्फुरद्भुतरूपं त्वां सृजता नवो मनोभूः ससृजे, त्वमेव नवा मनोभूरित्यर्थः। एवमुद्गतः प्रतापज्वलनो यस्य तादृशं त्वां सृजता नवः सविता भुवि सत्यं ससृजे, त्वमेव नवः सवितेत्यर्थः। सर्वत्रैव नव इति सम्बन्धः। तथा अनवद्यविद्यं त्वां सृजता नवो बृहस्पतिः ससृजे, त्वमेव नवो बृहस्पतिरित्यर्थः।

## सुधासागरः

यदपीत्यादि। रभसेनान्यत्कार्यं कुर्वतः कर्तुर्यदशक्यस्यान्यस्यापि कार्यस्य तथैव करणं स तृतीयो विशेषः। अत्र तथैवेति, तेनैव प्रकारेणेत्यर्थः, एतच्च 'धुनोति चासिं तनुते च कीर्त्तिम्' इत्यादौ समुच्चयव्यावर्त्तनायेति भावः। उदाहरणं— स्फुरेति। स्पष्टम्। मालभारिणी छन्दः। लक्षणमुक्तं प्राक्। अत्रान्यस्य करणं शाब्दम्।

यथा वा

**गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।**
**करुणाविमुखेन मृत्युना हरता त्वां बत किं न मे हृतम्॥ ५६२॥**

---

**सङ्केतः**

गृहिणीति। इदं निरलङ्कारत्वेनोदाहृतम्। पूर्वं तु सालङ्कारान्तरत्वेन। तत्र यथासङ्ख्यस्यापि भावात्।

**बालचित्तानुरञ्जनी**

विधिनिषेधप्रदर्शनार्थमाह गृहिणीति। हे इन्दुमति! त्वं गृहिणी सचिवः। मिथः सखी। ललिते कलाविधौ प्रियशिष्या। एवं विधां तां हरता करुणाविमुखेन मृत्युना मे किं न हृतम्। वद! अत्रैकस्या इन्दुमत्या हरणादेव गृहिणीसचिवादिकमनेकं हृतम्।

**विवेकः**

संहारे यथा—गृहिणीत्यादि। मिथः सखी रहस्यसखी। अत्रैकामेव नायिकां हरता मृत्युना गृहिण्यादि-कमनेकप्रकारं वस्तु हृतमिति विशेषोक्तिः।

**दीपिका**

संहारे यथा—गृहिणीत्यादि। मिथः सखी रहस्यसखी। अत्रैकामेव नायिकां हरता मृत्युना गृहिण्यादि-कमनेप्रकारं वस्तु हृतमिति विशेषोक्तिः।

**दर्पणः**

गृहिणी पतिवह [गृहिणी सचिवः] इत्यादौ तु किं न मे हतमपि किं न मे हृतम् तर्हि सर्वं हृतमिति व्यतिरेकमुखेनेति विषयव्याप्तये पुनरुदाहरणम्।

**साहित्यचूडामणिः**

गृहिणीति। अत्रैकस्या इन्दुमत्याः संहारादेव गृहिणीसचिवादीनां सर्वेषां संहार उक्तः। सृष्टिसंहारद्वारा विधिनिषेधवैचित्र्यप्रदर्शनार्थमुदाहरणभेदः। यत् सूत्रम् "अनाधारमाधेयमेकमनेकगोचरमशक्यवस्त्वन्तरकरणं च विशेषः" [अलङ्कार सू० ५१] इति।

**सम्प्रदायप्रकाशिनी**

गृहिणीति। अत्र नायिकाहरणेन गृहिण्यादिहृतिः। नन्वलङ्काराणां बहूनां चमत्कारप्रयोजकरूपा भेदेऽपि।

### सारबोधिनी

यथा वेति । संहारेऽपि दृश्यत इति भावः । नन्वलङ्काराणां बहूनां चमत्कारप्योजकरूपाभेदेऽपि ।

### काव्यप्रदीपः

क्वचित्तु व्यङ्ग्यम् । यथा—

**'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।**
**करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥'**

अत्र किं न मे हृतमिति सचिवादिसर्वहरणरूपकार्यकरणं व्यज्यते । नन्वाधारं विना वास्तवस्याधेयस्य व्यवस्थितरनुपपन्नैव एवमन्ययोरप्यनुपपत्तिरिति चेत्, न । अतिशयोक्तिमालम्ब्य तथाभिधानात् ।

### आदर्शः

एवमेकोत्पादनादन्योत्पादनमुदाहृत्य एकहरणादन्यहरणमप्युदाहरति—यथा वा गृहिणीति । इन्दुमत्यां मृतायाम् अजस्यायं विलापः । त्वां हरता करुणाविमुखेन मृत्युना मम किं न हृतं तद् वद । गृहिण्यादिकं सर्वमेव हृतमित्यादि—गृहिणीति । गृहिणी हृतेत्यादि सर्वत्रान्वयः । त्वमेव गृहिण्यादि सर्वम् इत्यर्थः । मिथो रहसि सखी समीहितकारित्वात् । ललितकलाविधिः कामकेलिः ।

### सुधासागरः

क्वचित्तु व्यङ्ग्यम्, यथा—गृहिणीति । रघुवंशपद्यमिदं स्पष्टम् । अपरवक्त्रं छन्दः । लक्षणमुक्तं प्राक् । सर्वत्रेत्यादि । अत्र किं न मे हृतमिति सचिवादिसर्वहरणरूपं कार्यकरणं व्यज्यते । नन्वाधारं विना वास्तवस्याऽऽधेयस्य व्यवस्थितिरनुपपन्नैव, एवमन्ययोरप्यनुपपत्तिरिति चेत्, न । अतिशयोक्तिमवलम्ब्य तथाऽभि धानात् ।

सर्वत्र, एवंविधविषयेऽतिशयोक्तिरेव प्रामत्वेनावतिष्ठते तां विना प्रायेणालंकारत्वायोगात्। अत एवोक्तम्

**"सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**

**यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना॥" इति॥**

---

**सङ्केतः**

सैषेति। सा वक्रोक्तिः एषैव अतिशयोक्तिरेव, नान्वेत्यर्थः। विभाव्यते विशिष्टतया भाव्यते। विनेति। एतेन सर्वालङ्कारबीजं एषा इति भामहायाः। इति विशेषः।

**बालचित्तानुरञ्जनी**

ननु भामहोक्तप्रक्रियायां सर्वमिदमतिशयोक्तावन्तर्भवतीत्याशङ्क्य तत् उपगतप्रायमित्याह सर्वत्र विश्वे प्राणत्वेन जीविततया सारभावेनेत्यर्थः। अत्र भामहग्रन्थं संवादयति सैषेति। वक्रोक्तिरतिशयोक्तिः। वक्रिमातिशययोरेकत्वात्। अनया वक्रोक्त्या विभाव्यते विविधतया भाव्यते।

**काव्यादर्शः**

'सैषा' इति। 'सा' इत्यनुवादकं, 'एषा' इति विधायकम्। सा वक्रोक्तिरेषैव अतिशयोक्तिरेव, नान्येत्यर्थः, 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः' इति वचनात्। शब्दार्थयोर्वक्रता लोकोत्तीर्णेन रूपेण अवस्थानम्। 'लोकोत्तरेति अथ चातिशयोक्तिः सर्वालंकारसामान्यम्' इति भामहः।

**विवेकः**

अतिशयोक्तिश्च सर्वप्राणितमित्युक्तमेव।

**दीपिका**

अतिशयोक्तिश्च सर्वप्राणितमित्युक्तमेव।

**दर्पणः**

ननु [सर्व] त्राधारद्वारेण कथमाधेयव्यवस्थितिः, कथ' वा एकस्यैकदा हने [?] नेकत्र वृत्तः। एवञ्च रीत्योक्तालङ्कारोदाहरणान्यपि सङ्गतानीत्याह एवं विधेत्यनेन। क्वचिदुपमादावतिशयो विरहसूचनम्। अतिशयोक्तिर्भेदेऽभेदादिरूपा। अत्र प्राचीनसम्मतिमाह अत एवोक्तमिति। वक्रोक्तिरतिशयोक्तिः। सैव विभाव्यते लोकोत्तररूपविशिष्ट्या विभाव्यते, अलङ्काराश्रयत्वव्यपदेशभाजनं क्रियते।

## साहित्यचूडामणिः

ननु भामहादिप्रक्रियायां सर्वमिदमतिशयोक्तावन्तः पततीत्याशङ्क्य तदभ्युपगतप्रायमित्याह—सर्वत्रेति। प्राणत्वेन जीविततया सारभावेनावतिष्ठते।

अत्र भामहग्रन्थं संवादयति—सैषेति। 'वक्राभिधेयशब्दोक्तिरिष्टावाचामलङ्क्रिये' ति युक्त्या सर्वोऽप्यलङ्कारोऽलङ्कार्यो वा वक्रोक्तिः यदनया सकलजनपुराणीकृतोऽप्यर्थो विचित्रतया भाव्यते, प्रमदादिभिर्वा भावो विभावतां प्राप्यते विशेषेण वा भाव्यत इति वक्रोक्तिरतिशयोक्तिः, वक्रिमातिशययोरेकत्वात्। तदेषैव सर्वालङ्कारनिर्वाहिका निगीर्याध्यवसानादिरविच्छिन्ना पारिभाषिक्यतिशयोक्तिः।

## सम्प्रदायप्रकाशिनी

नन्वत्र भेदत्रयेऽपि गिरादीनां भेदे अभेदाध्यवसाय इत्यत आह—सर्वत्र चेति। एवंविधे विषये अतिशयोक्तिरेव प्राणत्वेन विच्छित्तिबीजत्वेन। दाढर्यायाभियुक्तसंवादमाह—अतएवोक्तमित्यादि।

सैषा अभेदाध्यवसायरूपा वक्रोक्तिः। साध्यवसानलक्षणारूपत्वाद् विभाव्यते मुख्यातिशयत्वेन प्रत्याय्यते।

## मधुमती

नन्वत्र अलङ्काराणां बहूनामैक्यात् भेदो न युज्यते इत्यत आह—सर्वत्रेति। अतिशयोक्तिः चमत्कारिणी उक्तिः। तथाच अर्थाभेदेऽपि उक्तिभेदात् अलङ्कारभेदः। न तु अतिशयोक्तिः अलङ्कारविशेषोऽभिमतः। तस्य सर्वत्रासम्भावात्। अत एव सर्वालङ्कारेषु कविप्रतिभोत्थापितत्वं प्रयोजकम्। तेन तत्तदलङ्कारसमानार्थ प्रतिपादकोदासीनवाक्ये नातिव्याप्तिः इति द्रष्टव्यम्। इति विशेषः।

## विस्तारिका

नन्वलङ्काराणां बहूनां चमत्कारकत्वप्रयोजकाभेदेऽपि कथं पृथगलङ्कारत्वमित्याह—सर्वत्रेति। अतिशयोक्तिः। अतिशयाधायिन्युक्तिः। चमत्कारकारिण्युक्तिरिति यावत्। तथा चालङ्कारत्वप्रयोजकाभेदेऽप्युक्ति वैलक्षण्यादेवालङ्कारभेद इत्यर्थः। तदाह—-तां विना प्रायेणालङ्कारत्वायोगादिति।

नन्वतिशयोक्तिनामालङ्कारविशेषो विवक्षितः, सर्वत्र तस्यासम्भवात्। अत एव 'सैषा सर्वत्र' इत्यादौ प्रामाणिकसंवादे वक्रोक्तिपदमेवेति। अत एव कविप्रतिभोत्थापितत्वं तत्त्वं सर्वत्रालङ्कारे तत्र मूलम्। तथा च तत्समानार्थप्रतिपादकोदासीनवाक्ये चातिव्याप्तिरिति ध्येयम्।

## सारबोधिनी

सर्वत्रेति। अतिशयोक्तिश्चमत्कारविशेषकारिण्युक्तिरिति यावत्। तथा चालङ्कारताप्रयोजकरूपाभेदेऽपि उक्तिवैलक्षण्यम्।

**काव्यप्रदीपः**

सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणयिता। तां विना प्रायशोऽलंकारत्वाभावात्। अत एवाहुः (यदाहुः)—

**'सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविभिः कार्यः कोऽलंकारोऽनया विना॥' इति।**

विभाव्यत इति विशिष्टो भाव्यते चमत्कारविशेषविषयः क्रियत इत्यर्थः।

**आदर्शः**

ननु पूर्वापरश्लोकयोर्वस्तुतो मनोभ्वादिसृजन-सचिवादिहरणाभावाद् बाधेनाबोधकमिदं वाक्यद्वयमित्यत आह—सर्वत्र चैव मिति। 'अतिशयोक्तिः' आहार्यारोपोक्तिः। 'प्राणत्वेन' शोभकत्वेन। नहीन्दुमतीमरणदिने वस्तुतः सचिवादिमरणे ईदृश्युक्तिः शोभते। प्रायेणेत्यस्य व्यावृत्तिः स्वाभावोक्त्यलङ्कारे। सैषेति। 'वक्रा' आहार्या। 'विभाव्यते' शोभारूपेण विशेषेण भाव्यते ज्ञायते।

**सुधासागरः**

सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणयिता, तां विना प्रायशोऽलङ्कारत्वाभावात्। अत एवाहुः—सैषेत्यादि। विभाव्यत इति, विशिष्टो भाव्यते चमत्कारविषयः क्रियत इत्यर्थः।

(सू० २०४) स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।

वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥ १३७ ॥

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणया स्वगुणसंपदोपरक्तं तत्प्रतिभासमेव यत्समासादयति स तद्गुणः, तस्याप्रकृतस्य गुणोऽत्रास्तीति । उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।

रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥ ५६३ ॥

अत्र रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता ॥

---

सङ्केतः

विभिन्नेति । करीरं अङ्कुरः । प्रगुणवर्णता प्रकृष्टगुणवर्णता ।

मीलिते वस्तु वस्त्वन्तरेणाच्छादितं प्रतीयते, इह तु अनपह्नुतस्वरूपमेव वस्तु वस्त्वन्तरगुणोपरक्तं लक्ष्यते इति विवेकः । स्वगुणत्यागात् नापीदं सामान्यं अलङ्कारः । इति तद्गुणः ।

बालचित्तानुरञ्जनी

तद्गुणालङ्कारं लक्षयति स्वमिति । अत्युज्ज्वलगुणस्य वस्तुन इति शेषयोगात् संबन्धात् तस्य गुणस्यापि व्यञ्जकस्य प्रतिभासत्वम् अल्पगुणस्य प्रचुरगुणेन कवलीकारात् । तद्गुणशब्दं व्युत्पादयति तस्येति । उदाहरति विभिन्नेति । यत्र रैवतकपर्वते वंशकरीरनीलैः परितः स्फुरन्त्या रुचा गरुडाग्रजेन विभिन्नवर्णाः सूर्यस्य रथ्याः पुनः स्वामानिन्यिरे । अत्र सूर्यस्य स्यन्दनाश्वानां अरुणवर्णाश्वकालीनस्यापि गरुडमणिकिरणकवलीकरणमिति [?] । तद्गुणमिति तद्गुणद्वयमुक्तम् । न चेदं मीलितमेवेति नवाच्यम् । मीलिते प्रकृतं वस्तु वस्त्वन्तरेण बाधितत्वेन प्रतीयते । इह तु अनपह्नुतस्वरूपमेव वस्तु वस्त्वन्तरगुणक्रान्ततया प्रतीयते इत्यनयोर्भेदात् ।

काव्यादर्शः

'विभिन्ने'ति । 'करीरमङ्कुरः' । अत्र रविरथाश्वानामरुणवर्णस्वीकारः । तस्यापि गारुत्मतमणिप्रभास्वीकार इत्याह—रवीति । प्रगुणवर्णतेति, प्रकृष्टगुण वर्णना । न चेदं मीलितम् । मीलिते हि प्रकृतं वस्तु वस्त्वन्तरगुणोपरक्ततया प्रतीयत इत्यस्ति अनयोर्भेदः । एवं सामान्यालंकारेऽपि स्वगुणपरित्यागो नास्ति वस्तुन इति ततोऽप्यस्य भेदः ।

## विवेकः

स्वमुत्सृज्येति—'यत्र परिमितगुणस्य वस्तुनः समीपवर्तिप्रकृष्टगुणेन स्वीकरणं तस्योत्कृष्टगुणस्य गुणा अस्मिन्निति कृत्वा। न चेदं मीलितम्। तत्र हि प्रकृतं वस्तु वस्त्वन्तरेणाच्छादितत्वेन प्रतीयते, इह त्वपह्नुतस्वरूपमेव प्रकृतं वस्तु वस्त्वन्तरगुणोपरक्ततया प्रतीयत इत्यनयोर्भेदात्।' (अ. स. २१३ पृ.)। विभिन्नेत्यादि—गरुडाग्रजोऽरुणः। रथे साधवी रथ्याः, सूर्यस्येत्युक्तेरश्वप्रतीतिः। करीरमङ्कुरः, वंशपदसमभिव्याहारात्तु तत्सम्बन्धोऽत्रोऽधिकृतः। स एवात्र नीलः प्रतीयते। अत्र रविरथाश्वानामरुणवर्णस्वीकारः, तस्यापि गारुत्मतमणिप्रभास्वीकार इति तद्गुणत्वम्।

## दीपिका

स्वमुत्सृज्येति। यत्र परिमितगुमणस्य वस्तुनः समीपवर्तिप्रकृष्टगुणेन स्वीकरणं तस्योत्कृष्टगुणस्य गुणा अस्मिन्निति कृत्वा। न चेदं मीलितम्। तत्र हि प्रकृतं वस्तु वस्त्वन्तरेणाच्छादितत्वेन प्रतीयते। इह त्वपह्नुतस्वरूपमेव प्रकृतं वस्तु वस्त्वन्तरगुणोपरक्ततया प्रतीयत इत्यनयोर्भेदात्। विभिन्नेत्यादि। गरुडाग्रजोऽरुणः। रथे साधवो रथ्याः। सूर्यस्येत्युक्तेरश्वप्रतीतिः। करीरमङ्कुरः वंशपदसमभिव्याहारात्तु तत्सम्बन्धोऽत्राधिकृतः। स एवात्र नीलः प्रतीयते। अत्र रविरथाश्वानामरुणवर्णस्वीकारः, तस्यापि गारुत्मतामणिप्रभास्वीकार इति तद्गुणत्वम्।

## दर्पणः

तद्गुणालङ्कारः। तद्गुणतां ततः समानधर्मतां। वर्णः प्रगुणया उत्कृष्टतया, रथ्याः रथाश्रयाः, करीब प्रौढवंशालङ्कारः ?। अत्रोदाहरणे तद्गुणस्य तद्व्यवस्थितिरित्याह अत्रेति। अयमाशयः। अत्र रविरथ्याश्रयाणां गारुडकान्तिपरिग्रह इत्येकस्तद्गुणः। अश्वनिष्ठानां गारुडग्राहजगुणातां हरिन्मणिगुणग्रह इति द्वितीयः। धवलोऽसीति।

## साहित्यचूडामणिः

तद्गुणमाह—स्वमिति। अत्युज्जवलगुणस्य वस्तुनः सम्बन्धात् तस्य गुणो यत्र स तद्गुमः।

तद्गुणमाह—स्वमिति। अत्युज्जवलगुणस्य वस्तुनः सम्बन्धात् तस्य गुणो यत्र स तद्गुमः। स्वगुणसम्पदेति। स्वशब्देन समीपगतपरामर्शकिन प्रतियोगित्वं प्रकाश्यते। तत्प्रतिभासं तस्य गुणस्योपरञ्जकस्य प्रतिभासम् अल्पगुणस्य प्रचुरगुणेन कबलीकारात्। व्युत्पादयति—तस्येति। यत् सूत्रं "स्वगुणत्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुणः" (अलङ्कार सू० ७३) इति।

नचेदं मीलितम्। तत्र हि प्रकृतस्य वस्तुनो वस्त्वन्तरेणापह्नवः इह त्वपह्नुतस्वरूपमेव प्रकृतं वस्तु वस्त्वन्तरगुणोपरक्ततया प्रतीयते। यद उक्तं—स्वां रुचं पुनरानिन्यिर इत्याह—रवीति ॥ ५१ ॥

## सम्प्रदायप्रकाशिनी

स्वमुत्सृज्येति। अत्युज्ज्वलगुणयोगादुपरक्तं वस्तु स्वं गुणमुत्सृज्य तद्गुणतां यदेति सोऽप्रकृतगुणत्वात् तद्गुणः।

व्याचष्टे—वस्त्वित्यादि। तिरस्कृतेति। इहानिगूहितस्य तिरस्कारः मीलने निगूहनमिति विशेषः।

विभिन्नेति। विभिन्नवर्णाः योगादारुण्यं नीताः। वंशकरीरनीलैर्मरकतैः।

**मधुमती**

अत्रेति। न च मीलितसङ्करः, सामान्यसङ्करः, विशेषसङ्करो वा। प्रथमे धर्मिण एवाभिभवात्, अपरत्र तु तस्यैवान्यत्वेन प्रतिभासात्, पृथगप्रतिभासाद्वा। इह तु गुणमात्राभिभवः भ्रमो वा। अत एव तद्गुण इति अन्वर्थताऽपि सङ्गच्छते। उक्तिभेदाच्च अलङ्कारभेदः इत्यनन्तरमेवोक्तम्। अत एव—

**आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे**

**लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।**

**शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये**

**राजन्! गुञ्जनफलानां स्रज इति शबराः नैव हारं हरन्ति॥** इत्यत्र भ्रान्तिमद्धेतुत्वं तद्गुणस्याभिधीयतीति। इति तद्गुणः।

**विस्तारिका**

स्वमुत्सृज्येति। अत्युज्जवलगुणस्य वस्तुनो योगात् स्वं गुणमुत्सृज्य तद्गुणतामेति, तत् तद्गुणनामालङ्कार इत्यर्थः।

व्याचष्टे—वस्त्विति। अभिभवे वस्तुतः स्वगुणस्य त्यागाभावात्। अन्यथा व्याचष्टे—तिरस्कृतनिजरूपमिति। प्रगुणतया स्वगुणसम्पादकेनापि समीपगेन तिरस्कृतनिजरूपमिति सम्बन्धः। उपरक्तं सम्बद्धम्।

विभिन्नेति। परितः स्फुरन्त्या रुचा विभिन्नवर्णा इत्यन्वयः।

अत्रेति। न च मीलितसङ्करः, सामान्यसङ्करो वा। प्रथमे धर्मिण एवाग्रहात्, अपरत्र चापरित्यक्तस्वगुणस्यैवापृथक्प्रतिभासात्, इह तु गुणमात्रस्यैवाभिभवात्। तत्परिभवे धर्मिणः पृथक्प्रतिभासात्च्व न चायं भ्रान्तिमानिति वाच्यम्, तत्र स्मर्यमाणारोपस्यैव विवक्षितत्वात्, इह गृह्यमाणारोपस्येति भेदात्।

यत्त्वन्यधर्मस्यान्यत्र भानं परम्परासम्बन्धावगाहितया प्रथमत्वम्, प्रकृते च तथैव विवक्षितमिति न दोष इति तन्न, शोणं बिम्बोष्ठकान्त्या' इत्यादौ तद्गुणस्यात्रोपमानुग्राहकतनानपत्ते। विशेषदर्शने भ्रमयोगादिति।

**सारबोधिनी**

स्वसृज्येति। अत्युज्ज्वलगुमस्य योगतः स्वं गुणमुत्सृज्य तद्गुणतामेति स तद्गुणनामालङ्कार इत्यर्थः। वस्त्विति। अभिभवे वस्तुतः स्वगुणस्य त्यागभावादन्यथा व्याचष्टे तिरस्कृतनिजरूपमिति। प्रगुणया स्वगुणसम्पादा केनापि समीपगतेन तिरस्कृतनिजरूपमिति सम्बन्धः। उपरोक्तसंबन्धं विभिन्नेति। परितः स्फुरन्त्या रुचा विभिन्नवर्णा इत्यन्वयः। न च मीलितेन सामान्येन वास्य सङ्करः। प्रथमे धर्मिण एवाग्रहात्। इह तु गुणमात्रस्यैवाभिभवात्। इह तु गृह्यमाणारोपस्येति भेदात्। यत्तु अन्यधर्मस्यान्यत्र भासनस्य परम्परासंबन्धवगाहितया प्रमात्वं

प्रकृते च तथैव विवक्षितमिति न दोष इति। तत्र शोणं बिम्बोष्ठकान्त्येत्यादौ तद्गुणस्य भ्रमानुग्राहकतानापत्तेः। विशेषदर्शनेन प्रमायोगादिति।

### काव्यप्रदीपः

**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।**
**वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः॥ ५१॥**

अत्युत्कृष्टगुणस्याप्रस्तुतस्य योगात्तद्गुणसंपदुपरागात्स्वकीयं रूपं तिरस्कृत्य प्रस्तुतं वस्तु यत्तदनुकारमेवासादयति स तद्गुणो भण्यते। तस्याप्रस्तुतस्य गुणोऽत्रेति व्युत्पत्तेः। मीलिते वस्त्वन्तरेणाच्छादितस्य तस्यैव वस्तुनः प्रतीतिः। अत्र त्वनाच्छादितस्वरूपस्यैव वस्त्वन्तरगुणापत्तिरिति ततो भेदः। उदाहरणम्—

**'विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या।**
**रत्नैः पुनर्यत्र रुचा रुचिं स्वामानिन्यिरे वंशकरीरनीलैः॥'**

अत्र तद्गुणद्वयम्। रवितुरगापेक्षा गरुडाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रकृष्टगुणत्वात्तद्रूपतया प्रतीतेः। एतेन यत्केनचिद्व्याख्यातम् 'स्वगुणत्यागानन्तरं पुनस्तत्प्राप्तिस्तद्गुणः' इति, तदनादेयम्। तस्याप्रस्तुतस्य गुणोऽत्रास्तीति व्युत्पत्तिकथनप्रकाशविरोधात्। तत्र गुणद्वयकथनेन च तद्गुणद्वयव्युत्पादनात्। 'आत्ते सीमन्तरत्ने—' इत्यादौ वक्ष्यमाणे संकरोदाहरणे तद्गुणत्वाभावप्रसङ्गाच्च। नहि तत्र त्यक्तस्य स्वकीयरूपस्यावाप्तिः।

### काव्यप्रकाशखण्डनम्

**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।**
**वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः॥ (का. १३७)**

अत्र स्वगुणतिरस्कार एव स्वगुणत्यागः।

**विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या।**
**रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीनीलैः॥**

सूर्यस्य रथ्या अश्वाः गरुडाग्रजेन अरुणेन विभिन्नो भेदं प्रापितो वर्णो रूपं येषाम्। परितः स्फुरन्त्या रुचा रत्नैः स्वां रुचं रथ्या आनिन्यिरे नीताः। कीदृशैः रत्नैः? वंशकरीरनीलैः वंशकलिकावन्नीलवर्णैरित्यर्थः।

### आदर्शः

तद्गुणालङ्कारमाह—समुत्सृज्येति।

'राजेन्दुरप्येष सपत्नतापी सूर्यः प्रतापी सुहृदामनुष्णः'

इति रूपकसङ्कीर्णविरोधालङ्कारेऽतिव्याप्तिवारणाय योगादित्युक्तम्, सम्पर्कादित्यर्थः। तत्र तु राजेन्द्राद्राद्योर्न योगः किन्तु स्वीयशीतत्वादित्यागेन परकीयसपत्नतापित्वादिमात्रग्रहणम्। तद्गुणताम् उज्ज्वलगुणीयगुणवत्ताम्। वस्तु तिरस्कृतेति। वस्तुतः समुत्सृजनाभावात्तिरस्कार एव समुत्सृजनमिति भावः।

विभिन्नेति। यत्र गिरौ सूर्यस्य रथ्या अश्वा अर्थाद् हरिद्वर्णा अपि गरुडाग्रजेन विभिन्नवर्णा अरुणीकृताः वंशकरीनीलैः वंशाङ्कुरैरिव नीलैः रत्नैः पुनः स्वां रत्नीयाम् अर्थान्नीलां रुचमानिन्यिरे इत्यन्वयः। अत्र तद्गुणद्वयं ग्राहयति—अत्रेति।

## सुधासागरः

वस्त्वित्यादि। अत्युत्कृष्टगुणस्य प्रस्तुतस्य योगात् तद्गुणसम्पदुपरागात् स्वकीयं रूपं तिरस्कृत्य प्रस्तुतं वस्तु यत्तदनुकारमेवासादयति स तद्गुणो भण्यते। तस्याप्रस्तुतस्य गुणोऽत्रेति व्युत्पत्तेः। मीलिते वस्त्वन्तरेणाच्छादितस्य तस्यैव वस्तुनः प्रतीतिः, अत्र त्वनाच्छादितस्वरूपस्यैव वस्त्वन्तरगुणापत्तिरिति ततो भेद इति भावः। उदाहरणम्—विभिन्नेति। माघे द्वारकावर्णनमिदम्। अयमर्थः—गरुडाग्रजेनारुणेन विभिन्नो भेदं प्रापितो वर्णो येषां ते तादृशाः स्वतो हरिद्वर्णा अपि रक्तीकृताः, सूर्यस्य रथ्याः, रथं वहन्ति ते रथ्याः वाजिनो यस्यां द्वारकायां वंशकरीरवत् अच्छिन्नवंशाङ्कुवन्नीलैः अर्थात् प्रासादशिखरजटितमरकतैः रुचा स्वकान्त्या पुनः स्वां रुचं स्वकीयां हरिद्वर्णतामानिन्यिरे प्रापिता, इति। उपेन्द्रवज्रा छन्दः। 'उपेन्द्रवज्रा जतजास्ततो गौ' इति लक्षणात्।

(सू० २०५) तद्रूपाननुहारश्चेदस्य तत् स्यादतद्गुणः ।

यदि तु तदीयं वर्णं संभवन्त्यामपि योग्यतायाम् इदं न्यूनगुणं न गृह्णीयात् तदा भवेद तद्गुण नाम । उदाहरणम्—

धवलोसि जह वि सुन्दर तह वि तुए मज्झ रञ्जिअं हिअअं ।
राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तोसि ।। ५६४ ।।

अत्रातिरक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुणः ।

---

**सङ्केतः**

अतद्गुणः इति । तस्य अधिकगुणस्य अस्मिन्, गुणाः न सन्ति इत्यद्गुणः ।

धवलोऽसीति । धवलौ वृष भर्तारौ । रागौ रङ्गानुरागौ । अत्र पूर्वार्धे विरोधः नोत्तरार्धे । भिन्नाधारत्वेन रक्तारक्तत्वयोः प्रतीतेः । पूर्वार्धे धवलस्य विरुद्धरागजनकत्वेन विषमलङ्कारोऽपि ।

**सङ्केतः (रुय्यकः)**

**धवलाऽसि यद्यपि सुन्दर तथापि त्यज मम रञ्जितं हृदयम् ।**
**रागहतेऽपि (० भृतेऽपि) हृदये सुभग निहितो न रक्तोऽसि ।।**

धवलः कामुकोऽपि, रञ्जितं जनिताभिषङ्गं, रागप्रसक्तिरपि । अत्र पूर्वार्द्धे विरोधः न तूत्तरत्र, भिन्नाधारतयैव रक्तारक्तत्वयोः प्रतीतेः । किञ्चेति । स्फीततमोऽपि गुणो गुणान्तरसम्पर्केण किञ्चिदन्यथात्वं गतो दृष्टः, यदा तु न गच्छति तदाऽप्येतद्गुण इति प्रकारान्तराश्रयणम् । अङ्गेत्यभीष्टामन्त्रणे, सैव नान्यादृशी या न चीयत इत्यध्याहृतेन यदा समन्वयः ।

**बालचित्तानुरञ्जनी**

अतद्गुणं लक्षयति तद्रूपेति । अननुहारः अननुवर्तनं अग्रहणमिति यावत् । व्याकरोति यदि त्विति । तदीयमुत्कृष्टगुणसंबन्धिः, अन्यस्य गुणस्य स्वगुणागुणस्वीकारो न्यायः । अन्यथाभावश्चेत्तदानीमतद्गुणः । तस्योत्कृष्टस्य गुणा न सन्तीति ग्रहणमतद्गुणः ।

उदाहरति धवल इति । हे सुन्दर शिव ! जइवि यद्यपि धवलोऽसि, तहवि तथापि, तुए मज्झ, त्वया मम, हिअअं हृदयं, रंजिअं रञ्जितं, राअभरिएवि रागभरितेऽपि, हिअए हृदये, सुहअ अस्तु । णिहितो निहितः । ण रत्तोऽसि । अत्र पूर्वार्धधवलिमारुणिम्नोर्गुणयोर्विरोधः । उत्तरार्धेत्वतद्गुण इत्याह अतिरिक्तेनापीति ।

### काव्यादर्शः

तस्योत्कृष्टगुणस्य अस्मिन् गुणा न सन्तीति अतद्गुणः। 'धवलोऽसि' इति। रञ्जितं जनिताभिष्वङ्गमपि। रागः प्रसक्तिरपि। अत्र पूर्वार्धे विरोधोऽनन्तरं भिन्नाधारतयैव रक्तारक्तत्वयोः प्रतीतिः। अत्र अतिरक्तहृदयसंपर्काद् नायकस्य धवलशब्दवाच्यस्य न रक्तत्वं निष्पन्नमिति अतद्गुणः।

### विवेकः

तद्गुणप्रस्तावात्तद्विपर्यररूपमतद्गुणं कथयति—तद्रूपेति। "इह न्यूनगुणस्योत्कृष्टगुणपदार्थस्वीकारः प्रत्यासत्त्या न्याय्यः। यत् पुनरुत्कृष्टगुणसन्निधानेन योग्यतायामपि तद्रूपस्याननुहरणं न्यूनगुणेनानुवर्तनं भवति सोऽतद्गुणः, तस्योत्कृष्टस्य गुणा अस्मिन् सन्ती" ति (अ. स. २१४ पृ.)। धवलोऽसीति—'**धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम्। रागभृतेऽपि हृदये सुभग निहितो न रक्तोऽसि॥** धवलो धुरन्धरवृषः कामुकश्च। रञ्जितं जनिताभिष्वङ्गं रागप्रसक्तिरपि' (रु. स. ७१ पृ.)। अत्र पूर्वार्धे विरोधो न तूत्तरत्र भिन्नाधारतयैव रक्तारक्तयोः प्रतीतेः। तेनातिरक्तहृदयसम्पर्कात् कामुकस्य धवलपदवाच्यस्य प्राप्तमपि रक्तत्वं निष्पन्नमित्यतद्गुणः।

### दीपिका

तद्गुणप्रस्तावात् तद्विपर्यररूपमतद्गुणं कथयति-तद्रूपेति। इह न्यूनगुणस्योत्कृष्टगुणपदार्थस्वीकारः प्रत्यासत्त्या न्याय्यः। यत् पुनरुत्कृष्टगुणसन्निधानेन योग्यतायामपि तद्रूपस्याननुहरणं न्यूनगुणेनाननुवर्तनं भवति सोऽतद्गुणः, तस्योत्कृष्टस्य गुणा अस्मिन् सन्तीति।

**"धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम्।**
**रागभृतेऽपि हृदये सुभग निंहितो न रक्तोऽसि॥"**

धवलो धुरन्धरवृषः कामुकश्च। रञ्जितं जनिताभिष्वङ्गं रागप्रसक्तिरपि।

अत्र पूर्वार्धे विरोधो न तूत्तरत्र, भिन्नाधारतयैव रक्तारक्तयोः प्रतीतेः। तेनातिरिक्तहृदयसम्पर्कात् कामुकस्य धवलपदवाच्यस्य प्राप्तमपि रक्तत्वं निष्पन्नमित्यतद्गुणः।

### दर्पणः

धवलोऽसीति। धावलोऽसि यद्यपि सुन्दर तथापि दूया मम वंचितं हृदयम्। रागकृतेऽपि हृदये सुभगः निक्षिप्तो नक्तोसि।

धवलो निर्मलत्वेन आत्मनैव द्रयाभिमत इति सल्लोकः [?] वचनं, पक्षे श्वेतः रञ्जितं स्नेहनिर्भरीकृतं शोभनीकृतञ्च। अत्र गाथायां द्वितीयार्द्धमेव प्रकृतोदाहरणमित्याह अत्रेति। इह च सहृदयस्य सानुरागतानिवेदनमेव विवक्षितमिति संबोध्यस्याप्रकृतेति।

### साहित्यचूडामणिः

अथातद्गुणमाह—तद्रूपेति । रूपं वर्णः अननुहृतिरननुवर्तनम् । अत्र ग्रहणमिति यावत् ।

तदीयम् उत्कृष्टगुणसम्बन्धिनम् । सम्भवन्त्यामपीति । न्यूनगुणस्य हि प्रकृष्टगुणस्वीकारो न्याय्यः । अन्यथाभावश्चेत् तदानीमतद्गुणः । तस्योत्कृष्टगुणस्यात्र गुणा न सन्तीति । अनुत्कृष्टस्यापकृष्टगुणस्यात्र गुणा न सन्तीति । यत् सूत्रं "सति हेतौ तद्रूपाननुहारोऽतद्गुणः" (अलङ्कार सू० ७४) इति ।

धवल इति ।

**धवलोऽसि यद्यपि सुन्दर! तथापि त्वया मम रञ्जितं हृदयम्।**
**रागभरितेऽपि हृदये सुभग! निहितो न रक्तोऽसि॥ इति।**

रागस्य श्लेषादेकतयाध्यवसानम् । अत्र पूर्वार्धे धवलिमारुणिम्नोर्गुणयोर्विरोधः ।

उत्तरार्धेऽप्यतद्गुणइत्याह—अतिरक्तेनापीति । अयं पूर्वोक्ततद्गुणप्रतियोग्यतद्गुणः ।

### सम्प्रदायप्रकाशिनी

द्वाविह तद्गुणावित्याह—अत्रेत्यादि । न च मन्तव्यं स्वरूपानयनात् प्रथमस्य बोधो द्वितीयस्यानुदय इति । तिरस्कृतनिजरूपभेदाध्यवसायेन हरिन्मणिरुच एव स्वेति व्यपदेशात् । अतः प्रगुणवर्णने द्वे दर्शिते ।

तद्रूपेति । तदिति प्रकृत्याप्रकृतस्य चाधिकगुणस्य निर्देशः । अतो द्वैविध्यम् ।

आद्यं व्याख्यायोदाहरति—यदि त्वित्यादि । तदीयमधिकगुणप्रकृतसम्बन्धिनम् । योग्यतायां प्रत्यासत्तिलक्षणायाम् । सम्भवन्त्यां कविकल्पनया वस्तुतो वा । धवळोऽसीति ।

**धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम्।**
**रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि॥**

धवलो युवा सितश्च । रागो रतिरारुण्यं च ।

प्रथमार्धे विरुद्धकार्योत्पादनाद् विषमधीरिति द्वितीयार्धे योजयति—अत्रातिरिक्तेनापीति ।

### मधुमती

यदि त्विति । तस्य समीपस्थस्य गुणः इत्यर्थः ।

अत्रेति । संयुक्तः इत्यनेन व्यञ्जनायोग्यतां उपलक्षयति—तदितीति ।

### विस्तारिका

तद्रूपेति । चेच्छब्दो यदर्थे । तथा चास्य न्यूनगुणस्य प्रगुणरूपाननुहारो यत् तदतद्गुणनामालङ्कार इत्यर्थः ।

व्याचष्टे-यदीति। चेच्छब्दस्य यद्यर्थत्वमभिप्रेत्य यदीति वृत्तिग्रन्थः। वस्तुतस्तु तच्छब्दस्य नित्यसाकाङ्क्षत्वेन यत्पदाध्याहारापत्तेश्चेत्पदार्थानुरोधेन तत्पदस्यैव तदेत्यर्थः। उच्यते च विशेषलाभाद् यदर्थ एव चेच्छब्द इत्यर्थः। यद् वा चेच्छब्दो यद्यर्थक एव, तच्छब्दोऽपि तदेत्यर्थकः। तद् भवेदित्यतः पूर्वं तदेति च तच्छब्दव्याख्यानं पूरणीयम्। पूर्वकारिकास्थयोरेव विशेष्याभिधायकयोर्यत्तदोरनुकर्षः। एवं न काप्यनुपपत्तिरिति।

धवलोसीति।

**धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम्।**
**रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि॥**

## सारबोधिनी

तद्रूपेति। तद्रूपाननुहारः उत्कृष्टगुणाग्रहणम्। अस्य न्यूनगुणस्य तत्तदा।

धवलेति।

**धवलोऽसि यद्यपि सुन्दर तथापि त्वया रञ्जितं मम हृदयम्।**
**रागहतेऽपि हृदये सुभग निहितो न रक्तोऽसि॥**

धवलः शुद्धगुणः। अथ च धवलो वृषभः। धवलत्तणं इति पाठे प्राकृतसप्तशतीदर्शनाद्धवलशब्दस्य वृषभपरत्वं बोध्यम्। रागो लौहित्यमनुरागश्चं. तदितीति। पूर्वं तत्इदंपदयोरधिकगुणन्यूनगुणवाचित्वं विवक्षितम्। इह तु प्रकृताप्रकृतवाचित्वमिति भेदः।

## काव्यप्रदीपः

**तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः।**

तदिति प्रकृतेत्यर्थः। अस्याप्रस्तुतस्य। अत्युज्ज्वलगुणयोगेऽपि यदि न्यूनगुणोऽप्रकृतः प्रकृतस्य गुणं नानुहरति तदा अतद्गुणः। उदाहरणम्—

**'धवलोऽसि जहवि सुन्दर तहवि तुए मज्झ रञ्जिअं हिअअम्।**
**राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तोऽसि॥'**

अत्रातिरक्ते मनसि धृतस्याप्यरक्तत्ववचनादुत्तरार्धमेवोदाहरणम्। तत्र प्रकृतं हृदयं संबोध्यस्त्वप्रकृतः। स्वहृदयवृत्तान्तनिवेदनस्यैव विवक्षिततत्वात्।

## काव्यप्रकाशखण्डनम्

अतद्गुणालङ्कारमाह—

**तद्रूपाननुहारश्चेदस्य तत् स्यादतद्गुणः॥ (का. १३८, पू०)**

**आदर्श:**

अतद्गुणालङ्कारमाह—तद्रूपेति। परगुणाननुहार: परस्य स्वत: सिद्ध एवेति न तत्र वैचित्र्यम्, अतो वैचित्र्यार्थमाह—सम्भवन्त्यामपीति। योग्यतायामिति, अनुहरणयोग्यतायामित्यर्थ:। इदं न्यूनगुणं वस्तु कर्तृ उत्तमं गुणं न गृह्णीयादित्यन्वय:।

धवलोसीति—

**धवलोऽसि यद्यपि सुन्दर तथाऽपि त्वया मम रञ्जितं हृदयम्।**
**रागभृतेऽपि हृदये सुभग निहितो न रक्तोऽसि॥ इति संस्कृतम्।**

अत्र श्लेषवशादनुरागरक्तिम्नोरेकत्वाध्यासादतद्गुणं ग्राहयति—अत्रेति। आहार्य एवात्र तद्गुणग्रहणयोग्यताग्रहो बोध्यते। पूर्वार्द्धे धवलेन रञ्जनं विरोधालङ्कार:। इत्थं प्राकरणिकेनैव नायकेन प्राकरणिकस्य स्वहृदयस्य गुणाग्रहणमुक्तम्।

**सुधासागर:**

यदि त्वित्यादि। तदिति प्रकृतमित्यर्थ:। अस्य अप्रस्तुतस्य। अत्युज्ज्वलगुणयोगेऽपि यदि न्यूनगुणोऽप्रकृत: प्रकृतस्य गुणं नानुहरति, तदाऽतद्गुण इत्यर्थ:। उदाहरणम्—धवलोसीति। आर्या। लक्षणमुक्तं प्राक्।

**धवलोऽसि यद्यपि सुन्द तथाऽपि त्वया मम रञ्जितं हृदयम्।**
**रागभरितेऽपि हृदये सुभग निहिता न रक्तोसि॥**

इति संस्कृतम्। धवल: शुद्धगुणो रागरहित:। प्राकृते धवलशब्दो वृषवाचकोऽपि बोध्य:। रागो लौहित्यमनुरागश्च। स्पष्टमन्यत्।

किंच तदिति अप्रकृतम् अस्येति च प्रकृतमत्र निर्दिश्यते । तेन यत् अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तात् नानुविधीयते सोऽतद्गुण इत्यपि प्रतिपत्तव्यम् । यथा

**गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।**
**राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥ ५६५ ॥**

---

### सङ्केतः

गाङ्गमिति । अत्र प्रकृतहंसस्य अप्रकृतजलयोगेऽपि न तद्रूपतेति अतद्गुणः । इत्यतद्गुणः ।

### बालचित्तानुरञ्जनी

अतद्गुण इत्येतत् प्रकारान्तरेण व्याकरोति किञ्चेति । अस्मिन्नपि व्याख्याने उदाहरणमाह गाङ्गमिति । गाङ्गमम्बु सितं, यामुनं कज्जलम् । हे राजहंस जले यत्र मज्जतस्त्व सैवशुभ्रता न चीयते । नाप्यपचीयते । अत्र प्रकृतस्य हंसस्य शुभ्रता सत्यामपि योग्यतायां गङ्गाया पुनरुदकगुणे नानुलिप्यते ।

### काव्यादर्शः

'गाङ्गम्' इति । अङ्ग इतीष्टामन्त्रणे । सैव नान्यादृशी, या न चीयते । अत्र अप्रकृतगाङ्गयामुनजलस्य संपर्केऽपि प्रकृतस्य राजहंसस्य न तथारूपत्वमिति अतद्गुणः ।

### विवेकः

'किञ्चेति—स्फीततमोऽपि गुणो गुणान्तरसम्पर्केण किञ्चिदन्यथात्वं गतो दृष्टः । यदा तु न गच्छति तदाऽप्यतद्गुण इति प्रकारान्तराश्रयणम्' (अ. स. ७१-७२ पृ.) । गाङ्गमिति—अत्राप्रकृतस्य गङ्गायमुनाजलसम्पर्केऽपि हंसस्य प्रकृतस्य न तद्रूपतेत्ययमप्यतद्गुणः । अङ्गेत्यभीष्टामन्त्रणे । सैव नान्यादृशी या न चीयत इत्यध्याहृतेन यच्छब्देन योजना ।

### दीपिका

किञ्चेति । स्फीततमोऽपि गुणो गुणान्तरसम्पर्केण किञ्चिदन्यथात्वं गतो दृष्टः । यदा तु न गच्छति तदाप्यतद्गुण इति प्रकारान्तराश्रयणम् । गाङ्गमिति । अत्राप्रकृतस्य गङ्गायमुनाजलसम्पर्केऽपि हंसस्य प्रकृतस्य न तद्रूपतेत्ययमप्यतद्गुणः । अङ्गेत्यभीष्टामन्त्रणे । सैव नान्यादृसी या न चीयत इत्यध्याहृतेन यच्छब्देन योजना ।

**दर्पणः**

सूत्रस्थितस्यास्येत्यस्याप्रस्तुतस्येत्यर्थं तत्क्रद्येत्यर्थ तदाशे [?] प्रकृतार्थतेति पर्यवसानम्। किञ्चास्येति इदमप्रकृतं तत्क्रये हि [?] तदप्रकृतं च क्वचित्परामृश्यते, तेनाप्रकृतस्य प्रकृतरूपाननुहार एवेत्यन्योऽतद्गुणः। प्रकृतस्याप्रकृतरूपाननुहारो द्वितीय इति द्विविधोऽतद्गुणः। तत्र प्रथमपक्षे धवलोऽसीत्याद्युदाहृत्य गांगमित्यादि-द्वितीयपक्षमुदाहरन्नाह किञ्चेति। नानुविधीयते अनुहरणनिमित्तेसत्यपीति भावः। गांगमित्यादावप्रस्तुतप्रशंसायां यद्यपि राजहंसस्याप्यप्रकृतत्वम् तथापि गांगयमुनापेक्षया प्रस्तुतवर्णनीय राजप्रत्यासनुत्वात्[?] प्रकृत्वं विधीयते।

**साहित्यचूडामणिः**

प्रकारभेदेनाह—किञ्चेति। पूर्वं तद्वृत्तेनोत्कृष्टगुणं परामृष्टम् इदंवृत्तेन च न्यूनगुणम्, इदानीमप्रकृतं तद्वृत्तेन प्रकृतं चेदंवृत्तेन। प्रकृतत्वं च प्राधान्येन वाक्यार्थोपयुक्तत्वम् अप्राधान्यादप्रकृतत्वमित्यागूर्याह तदिति। प्रकृत-स्याप्रकृतस्याननुहारोऽतद्गुण इति।

यावत्। तस्याप्रकृतस्य गुणा नात्र सन्तीति। इत्यपीति। चिरन्तनैस्तथा व्याख्यातत्वात्।

गाङ्गमिति। अत्र प्रकृतस्य हंसस्य शुभ्रता सत्यामपि योग्यतायां गङ्गाम्भः - श्वेतिमानं यमुनाम्बुकालिमानं च नानुविधत्ते। इह च कार्यकारणविवक्षाया अभावान्न विषमालङ्कारत्वशङ्का।

**सम्प्रदायप्रकाशिनी**

द्वितीयं व्याख्यायोदाहरति—किञ्चेत्यादिना। अत्र द्वितीयभेदे। कुतोऽपि नैसर्गिकत्वादेः।

गाङ्गमिति। अत्र चयापचयाभावाद् अप्रकृताम्बुरूपाननुकारः।

**मधुमती**

गाङ्गमिति। गाङ्ग्यामुनाम्बुनोः अप्रकृतयोः रूपं प्रकृतेन राजहंसेनानुविहितमिति अतद्गुणत्वमित्यर्थः। इत्यतद्गुणः।

**विस्तारिका**

अत्रेति। संयुक्त इत्यनेन रञ्जनयोग्यतानुलक्षयति—तदितीति। पूर्वं तदिदम्पदयोरधिकगुणन्यूनगुणवा-चित्वं विवक्षितम्, इदानीं तु प्रकृताप्रकृतवाचित्वमित्यर्थः। अनयोः। सर्वनामपदत्वादुभयत्रापि तत्पर्यायाच्च न काप्यनुपपत्तिरिति भावः।

गाङ्गमिति । गङ्गायमुनाम्बुनोरप्रकृतयोर्गुणस्य प्रकृतेन राजहंसेन तद्गृहीतमित्यतद्गुणमित्यर्थः ।

### सारबोधिनी

गाङ्गेति । चीयते वर्द्धते ।

### काव्यप्रदीपः

चात्र सूत्रे तत्पदेन प्रकृतमिवाप्रकृतमप्युच्यते । तथास्येत्यनेनाप्रकृतमिव प्रकृतमप्युपस्थाप्यते । सामान्य-मुखप्रवृत्तत्वात् । तथाचाप्रस्तुतेन प्रस्तुतरूपाननुहरणवत्प्रस्तुतेनाप्रस्तुतरूपाननुहारोऽन्यः प्रकारः । यथा—

**'गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।**
**राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥"**

अत्रान्यापदेशपक्षे राजहंसस्याप्राकरणिकत्वे प्राकरणिकसत्पुरुषोपमानतयोपपादनीयम् । वाच्यमात्रवि-श्रान्तौ तु न काचिदनुपपत्तिः ।

### काव्यप्रकाशखण्डनम्

तस्याप्रकृतस्याननुहारोऽग्रहणम् । उदा—

**गाङ्गमम्बु सितमम्बुजा(या) मुनं कज्जलाभमुभयत्र मज्ञतः ।**
**राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥**

गाङ्गं गङ्गासम्बन्धि जलम्, यामुनं यमुनासम्बन्धि जलम्, सैव प्राचीना, न चीयते वर्द्धते, न चापचीयते नश्यतीत्यर्थः ।

### आदर्शः

क्वचित्तु प्रकृतेनाप्रकृतगुणाग्रहणेऽपि अयमलङ्कार इत्यतः प्रकृताप्रकृतोभयपरमेव तद्रूपेत्यत्र तत्पदमि-त्याह—किञ्च तदितीति । अप्रकृतमिति अप्रकृतमपीत्यर्थः ।अस्येति तु प्रकृतपरमेवेत्याह—अस्येति चेति ।

गाङ्गमिति । गाङ्गमम्बु सितं यामुनमम्बु च कज्जलाभमित्यन्वयः । अत्र प्रतिपाद्यो राजहंस एव प्रकृतः, यामुनमम्बु चाप्रकृतम्, तद्गुणस्य राजहंसेनाग्रहणम् । यद्यपि स्वसंसर्गिजनगुणाग्राही जन एवात्र प्रकृतो न राजहंसः, 'येनास्यभ्युदितेन चन्द्र गमित' इत्यादौ चन्द्र इव, तथाऽपि यामुनाम्बुराजहंसयोर्मध्ये यामुनाम्ब्वपेक्षया प्रतिपाद्यत्वेन राजहंसः प्रकृत इत्यवधेयम् ।

### सुधासागरः

अत्रेत्यादि । अयम्भावः—अत्रातिरक्ते मनसि धृतस्याप्यरक्तत्वकथनादुत्तरार्धमेवोदाहरणम् । तत्र प्रकृतं हृदयम् । सम्बोध्यस्त्वप्रकृतः, स्वहृदयवृत्तान्तनिवेदन स्यैव विवक्षितत्वात् । एवं चात्र सूत्रे तत्पदेन प्रकृतमिवा-

प्रकृतमप्युच्यते, तथा अस्येत्यनेनाप्रकृतमिव प्रकृतमप्युपस्थाप्यते, तच्छब्देदंशब्दयोः सर्वनाम्नोः सामान्यमुख प्रवृत्तत्वात् । तथा चाप्रास्तुतेन प्रस्तुतरूपाननुहरणत्वप्रस्तुतेनाप्रस्तुतरूपाननुहारोऽप्यन्यः प्रकार इति ।

चीयते वर्धते, स्पष्टमन्यत् । रथोद्धता छन्दः । लक्षणमुक्तं प्राक् । अत्रान्यापदेशपक्षे राजहंसस्य प्राकरणिकत्वं प्राकरणिकसत्पुरुषोपमानतयोपपादनीयम् । वाच्यविश्रान्तौ न काचिदनुपपत्तिः ।

**(सू० २०६) यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥ १३१ ॥**

**तथैव यद्विधीयेत स व्याघात इति स्मृतः ।**

येनोपायेन यत् एकेनोपकल्पितम् तस्यान्येन जिगीषुतया तदुपायकमेव यत् अन्यथाकरणम् स साधितवस्तुव्याहतिहेतुत्वात् व्याघातः । उदाहरणम्—

**दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।**

**विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥५६६ ॥**

---

**सङ्केतः**

दृशेति । अत्र दृग्रूपोपायेन येन हरः स्मरं अधाक्षीत्, तेनैव कान्ताः तं अजीजिवन् । दाहस्य च जीवनीयत्वं विपक्षः, तेन निष्पादितवस्तुव्याहतिहेतुत्वात् व्याघातता । विरूपाक्षस्य इति वामलोचनाः इति च व्यतिरेकगर्भौ शब्दौ । जयिनी इति व्यतिरेकोक्तिः, इति अत्र व्यतिरेकनिमित्तता । दृग्रूपोपाययोः भेदोऽपि अभेदातिशयोक्तिरपि । रसवदाद्यलङ्काराः प्रागुक्ताः । आशीस्तु नालङ्कारः, प्रियोक्तिमात्रत्वात्; स्नेहात्मरत्याख्याभावत्वे, भावध्वनित्वाद्वा । इति व्याघातः ।

**बालचित्तानुरञ्जनी**

व्याघातलङ्कारं लक्षयति यद्यथेति । व्याकरोति येनेति । कर्त्रा केनाप्युपायविशेषण निष्पादितं वस्तु अन्येन प्रतिद्वन्द्विना तस्मादेवोपायविशेषात् अन्यथा क्रियते स व्याघात इत्यर्थः । उदाहरति दृशेति । यादृशा दृशा दग्धं मनसिजं दृशैव जीवयन्ति विरूपाक्षस्य जयिनीस्ता वामलोचनाः स्तुवे । अत्र विरूपाक्षेण कर्त्रा दृष्टिरूपेणोपायेन स्मरस्य दाहः साधितः । स्त्रीभिस्तेनैव दृष्टिरूपेण तस्य जीवितं साधितम् ।

**काव्यादर्शः**

'दृशा दग्धम्' इति । अत्र दृष्टिलक्षणेन उपायेन स्मरस्य हरेण दाहविषयत्वं निष्पादितं मृगनयनाभिः पुनस्तेनैवपायेन तस्य जीवनीयत्वं क्रियते । तच्च दाहविषयत्वस्य प्रतिपक्षभूतम्, तेन व्याघातोऽलंकारः । सोऽपि व्यतिरेकनिमित्तत्वेन अत्रोक्तः । 'विरूपाक्षस्य' इति 'वामलोचनाः' इति च व्यतिरेकगर्भाविव वाचकौ, 'जयिनीः' इति व्यतिरेकोक्तिः । रसभावतदाभासतत्प्रशमानां गुणीभूतव्यङ्ग्यावसररसवत्प्रेयऊर्जस्विसमाहितानि तथा भावोदयभावसन्धिभावशबलताश्च पृथगलंकाराः प्राक् प्रतिपादिताः । आशीश्च अप्राप्तप्राप्तीछायारूपाशंसनप्रियोक्तिमात्रं अथवा स्नेहनिर्भरतया शाब्दप्रयोगे चित्तवृत्ति विशेषः । अन्ये च भोजराजोक्ताः केचिदुक्तेष्वन्तर्भवन्ति, केचिच्च न चमत्कारकारिणः केचित्तु काव्यशरीरमेवेति न सूत्रिताः ।

### विवेकः

यद्यथेति—'कञ्चिदुपायविशेषमवलम्ब्य केनचिन्निष्पादितं तत्ततोऽन्येन केनचित् तत्प्रतिद्वन्द्विनोपायविशेषेण यदन्यथा क्रियते स ह्यनिष्पादितं वस्तुव्याहतिहेतुत्वाव्व्याघातख्योऽलङ्कारः' (अ. स. १७३ पृ.)। दृशेत्यादि—"अत्र दृष्टिलक्षणोपायेन स्मरस्य हरेण दाहविषयत्वं निष्पादितम्। मृगनयनाऽऽदिभिः पुनस्तेनैवोपायेन तस्य जीवितत्वं क्रियते, तच्च दाहविषयत्वस्य प्रतिपक्षभूतमिति व्याख्यातव्यम्। एतच्च व्यतिरेकनिमित्तत्वेनोक्तम्। विरूपाक्षस्येति वामलोचना इति च व्यतिरेकगर्भाविव वाचकौ। जयिनीरिति व्यतिरेकोक्तिः" (अ. स. १७४-१७५ पृः)।

### दीपिका

[इति समाधिलक्षणात् प्रभृत्येतदन्तस्य विवरणं चण्डीदासमातृकयोर्द्वयोरेबादर्शनात् काव्यप्रकाशविवेकतो दीयते।]

'यदाह वृत्तिकृत्-तदुपायकमेवेति व्याघातनाम निर्वक्ति। साधितवस्तुव्याहतिहेतुत्वादिति विजिगीषुव्यापारस्येति शेषः। यद्वा साधितवस्तुव्याहतिर्हेतुर्मूलं यस्यालङ्करणस्य तस्य भावस्तत्त्वम्, तस्मात्। व्याहतिरेव हि वैचित्र्याश्रयेण व्याघातनामाऽलङ्कारः।

### दर्पणः

व्याघातलङ्कारः। अन्यां विधीयते इति संबन्धः। तथैव तेनैव प्रकारेण अयमेवार्थो वृत्तौ। तदुपायकमेवेति। स एवोपायो यत्र तत्तदुपायकं नाम। निरुक्तिः साधितत्वस्त्वति। साधितस्य वर्णनो व्याहतिमूलं यस्यालङ्कारस्य स तथा तस्य भावत्वम्।

### साहित्यचूडामणिः

व्याघातमाह—यदिति। कर्त्रा केनचिदुपायविशेषान्निष्पादितं वस्त्वन्येन प्रतिद्वन्द्विना तस्मादेवोपायविशेषादन्यथा क्रियते यत् स व्याघातः।

निरुक्तिः स इति। निष्पादितवस्तुव्याहतिहेतुत्वाद् व्याघात इति यावत्।

दृशेति। विरूपाक्षेण कर्त्रा दृष्टिरूपेणोपायेन स्मरस्य दाहः साधितोऽभूत्। तद्विजिगीषुभिस्तु चारुलोचनाभिस्तेनैव दृष्टिरूपेण तस्य जीवितत्वं साधितं, यद् दाहस्य प्रतिवादिभूतम्। व्यतिरेकोऽप्यत्र निमित्तं, यतो विरूपाक्षस्य चारुलोचनता इति तद्गर्भौ वाचकाविति।

इदमत्रावधातव्यं यद् भेदाभेदतुल्यत्वे सादृश्याश्रयेण उपमानन्वयोपमेयोपमास्मरणानि, अभेदप्राधान्य आरोपे रूपकसन्देहभ्रान्तिमदपह्नुतयः, तत्रापि विषयस्य सन्दिह्यमानत्वे ससन्देहः अपलापेऽपह्नुतिः असम्यग्ज्ञानतायां ससन्देहभ्रान्तिमन्तौ वस्त्वन्तरप्रतीतौ भ्रान्तिमदपह्नवौ अध्यवसायस्य साध्यत्व उत्प्रेक्षा सिद्धत्वेऽतिशोक्तिः, गम्यमानौपम्याश्रयणे दीपकतुल्ययोगितादृष्टान्तप्रतिवस्तूपमानिदर्शनाः, भेदप्राधान्ये व्यतिरेकसहोक्तिविनोक्त्यादयः, विशेषेण विच्छित्त्याश्रयणे समासोक्तिपरिकरौ, प्रस्तुताद् वाच्यादप्रस्तुतप्रतीतौ समासोक्तिः, विपर्ययादप्रस्तु-

तप्रशंसा, सामान्यविशेषयोरसदृशरूपयोर्वाच्यतायामर्थान्तरन्यासः, सदृशरूपयोस्तु दृष्टान्तः, गम्यत्वमात्रस्वीकारे पर्यायोक्तव्याजस्तुती, गम्यत्वस्य विशेषवत्त्व आक्षेपः यत्रेष्टादनिष्टनिषेधविधानयोर्मात्रया विरोधानुप्रवेशः, विरोधगर्भत्वे विरोधविभावनाविशेषोक्त्यसङ्गतिविषमाधिकान्योन्यविशेषव्याघातादयः, शृङ्खलाबन्धे कारणमाला, मालादीपकैकावलीसाराः, तर्कन्यायेन काव्यलिङ्गानुमाने, वाक्यन्यायेन यथासंख्यपर्यायपरिवृत्तिपरिसंख्यासमुच्चयसमाधयः, लोकन्यायेन प्रत्यनीकप्रतीपमीलितसामान्यतद्गुणातद्गुणाः, गूढार्थप्रतीतितात्पर्ये सूक्ष्मव्याजोक्त्यादयः, चित्तवृत्तिस्वभावविशेष उदात्तरसवदादयः, तेषु च पदार्थवृत्तयो दीपकप्रभृतयः, वाक्यार्थवृत्तयश्च प्रतिवस्तूपमादय इति । अथैतेषामुपमादीनामलङ्काराणां बाह्यानामिव सुवर्णमणिप्रभृतीनां पृथक् चारुत्वहेतुत्वेऽपि सङ्घटनाकृतेन वैचित्र्येणालङ्कारान्तरस्फुरत्ता न तु पृथङ्मात्र पर्यवसानमित्यासूत्रयते । तस्य च द्वैविध्यं संयोगन्यायात् समवायन्यायाच्च । यत्र भेदस्योत्कटतयावस्थितिस्तत्र संयोगन्यायः, यत्र त्वनुत्कटत्वेन तत्र समवायन्यायः । अथ चौत्कट्यावस्थाने तिलतण्डुलन्यायः, अनौत्कटयात् पुनर्नीरक्षीरन्यायः ।

### सम्प्रदायप्रकाशिनी

यद्यथेति । यदेकेन येनोपायेन साधितस्यान्येन विजिगीषया तेनैवोपायेनान्यथीकरणं साधितार्थव्याघातकत्वाद् व्याघातः ।

व्याचष्टे—येनोपायेनेत्यादि ।

दृशेति । दृशेत्येकोपायता ।

### मधुमती

तदुपायकमेवेति । अत एव व्याघातः ।

यद्यपि विरूपाक्षदृग्-वामलोचनादृशोः नैक्यम् । अत एव न व्याघातः । तथापि एकजातीयत्वात् ऐक्यं अध्यवसितम् । यद्वा-कार्य वैजात्यस्य कारणवैजात्यप्रयोज्यत्वात्, एकजातीयाद्विजातीकार्याभिधानेऽपि व्याघात एवेति तदभिप्रायकमेवेदम् । इति व्याघातः ।

### विस्तारिकाः

यद्यथेति । केनापि कर्त्रा येनोपायेन यद् वस्तुं सधितम्, तेनैवोपायेनापरेण तदन्यथा विधीयते यत् स व्याघातनामालङ्कार इत्यर्थः ।

व्याचष्टे-येनेति । दृशेति । अत्र दृशैव दाहो जीवनं च । यद्यपि विरूपाक्षदृग्वामलोचनादृशोर्नैक्यम्; तथा च न व्याघातः, तथाप्येकजातीयत्वा दैक्यं विवक्षित्वेदमुपपादनीयम् । यद् वा कार्यवैजात्यस्य कारणवैजात्यप्रयोजकत्वादेकजातीयाद् विजातीयकार्याभिधाने व्याघात एवेति विवक्षितमिति ध्येयम् ।

### सारबोधिनी

यद्यथेति । दृशेति । यद्यपि विरूपाक्षदृग्वामलोचनादृशोर्नैक्यं तथा च न व्याघातः, तथाप्येकजातीयत्वादैक्यं विवक्षित्वेदमुपपादनीयम् । यद्वा कार्यवैजात्यस्य कारणवैजात्यप्रयोज्यत्वादेकजातीयाद्विजातीयकार्याभिधाने व्याघात एवेति ध्येयम् ।

### काव्यप्रदीपः

**यद्यथा साधितं केनान्यपरेण तदन्यथा ॥ ५२ ॥**

**तथैव तद्विधीयेत स व्याघात इति स्मृतः ।**

यथा येनोपायेन तथा तेनोपायेनेत्यर्थः । तथा च केनापि कर्त्रा यद्वस्तु येनोपायेन यथा साधितं तदन्येन कर्त्रा जिगीषुतया तद्वस्तु तेनैवोपायेन ततोऽन्यथवा चेत्साध्यते स व्याघात इत्यर्थः । प्रथमसाधितस्य वस्तुनो व्याहतिहेतुत्वात् । उदाहरणम्—

**'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।**
**विरूपाक्षस्य जयितनीस्ताः स्तुवे वामलोचनाः ॥'**

अत्र दृशैव दाहो जीवनं च ।

### आदर्शः

व्याघातलङ्कारमाह—यद् यथेति । येनोपायेन केनापि साधितम् अपरेण च तथैव तेनोपायेनैव तदन्यथा विधीयतेत्यर्थः ।

दृशा दग्धमिति । हरस्य दृशेत्यर्थः । दृशैवेति कटाक्षरूपयेत्यर्थः । इत्थं क्रियया जयमुक्त्वा रूपेणापि जयमाह—विरूपाक्षस्येति । वामलोचना मनोज्ञनयनाः, एतावताऽपि जय इत्यर्थः । अत्र दृगुपायेन साधितस्य दाहस्य दृगुपायेनान्यथाकरणम् ।

### सुधासागरः

येनेत्यादि । यथा—येनोपायेन तथा तेनेत्यर्थः । तथा च केनापि कर्त्रा यद्वस्तु येनोपायेन यथा साधितं तदन्येन कर्त्रा जिगीषुतया तद् वस्तु, तथैव तेनैवोपायेन ततोऽन्यथा चेत्साध्यते स व्याघात इत्यर्थः । प्रथमसाधितस्य वस्तुनो व्याहरतिहेतुत्वादिति भावः । उदाहरणम्—दृशेति । स्पष्टम् ।

अत्र दृशैव दाहो जीवनं च । यद्यपि विरूपाक्षदृग्वामलोचनादृशोर्नैक्यम्, तथा च न व्याघातः, तथाऽप्येकजातीयत्वादैक्यं विवक्षित्वेदमुपपादनीयम् । यद्वा, कार्ये वैजात्यस्य कारणवैजात्यप्रयोज्यत्वादेकजातीयाद् विजातीयकार्याभिधाने व्याघात एवेति ध्येयम् ।

(सू० २०७) सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥ १३९ ॥

एतेषां समनन्तरमेवोक्तस्वरूपाणां यथासंभवमन्योन्यनिरपेक्षतया यत् एकत्र शब्दभागे एव, अर्थविषये, एव, उभयत्रापि वा, अवस्थानम् सा, एकार्थसमवायस्वभावा संसृष्टिः । तत्र शब्दालंकारसंसृष्टिर्यथा

वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोल-
दृशान्यया ॥ ५६७ ॥

अर्थालंकारसंसृष्टिस्तु

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ५६७ ॥

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः, उत्तरत्र तु तथाविधे, उपमोत्प्रेक्षे ।

---

**सङ्केतः**

यथासम्भवमिति । न सर्वेषामलङ्काराणाम्, किन्तु केषाञ्चित् । तत्रापि क्वचित् द्वयोः त्रयाणामित्यादि । शब्दार्थोभयलङ्कारविषयत्वेन त्रिरूपत्वेऽपि संसृष्टेः एकरूपत्वमेव, मिथोनैरपेक्ष्यस्वरूपस्य एकत्वात् । निरपेक्षतया इत्युक्त्या तिलण्डुलन्यायेन अलङ्काराणां योगे संसृष्टिः । सङ्करस्तु स्वरूपेणैव नानात्वेनोक्तत्वात् त्रिधैव । तत्र नैरपेक्ष्याभावात् क्षीरनीरन्यायेन अलङ्काराणां योगः ।

कुसुमेति । अत्र यमकानुप्रासाविति विजातीयालङ्कारसंसृष्टिर्यथा, तथा—

'लकलोलकलो' इति, 'कलोलकलोल'

इति च सजातीययमकालङ्कारसंसृष्टिरपि ॥

तथाविधे इति । मिथोनिरपेक्षे इत्यर्थः । उपमोत्प्रेक्षे उत्तरपूर्वार्धगे विजातीये । लिम्पतीव इति वर्षतीव इति च उत्प्रेक्षे सजातीये । तयोः । अत्र संसृष्टिः ।

### सङ्केतः (रुय्यकः)

यथासम्भवमिति—न सर्वेषामेव लक्षितानामपितु केषाञ्चित्। तत्रापि तेषां मध्ये क्वचिद् द्वयोः क्वचित् त्रिचतुर्णामिति यथायोगम्। संसृष्टेश्च विषयभेदेन त्रिरूपाया अपि संसृष्ट्या चैकरूपयेति। प्रागुक्तमभिधानं न विरुध्यते, नैरपेक्ष्यलक्षणस्य रूपस्याभिन्नत्वात्। सङ्करस्तु स्वरूपेणैव नानात्वेनावभासत इति युक्तस्तत्र त्रिरूपतया व्यवहारः।

### बालचित्तानुरञ्जनी

संसृष्ट्यलङ्कारं लक्षयति सेष्टेति। व्याकरोति एतेषामिति। तिलतण्डुलन्यायेन मिश्रणे संसृष्टिः। क्षीरनीरन्यायेन मिश्रणे तु सङ्करः। तत्र संसृष्टिः शब्दालङ्कारसंसृष्टिः, अर्थालङ्कारसंसृष्टिः, उभयालङ्कारः संसृष्टिश्चेति त्रिविधा। तत्राद्यमुदाहरति कुसुमेति। अत्र पूर्वार्धऽनुप्रासालङ्कारः। तयोः शब्दालङ्कारयोः संसृष्टिः। द्वितीयमुदाहरति लिम्पतीवेति। नभः अङ्गानि लिम्पतीव। नभः अञ्जनं वर्षतीव। असत्पुरुषसेवेव दृष्टिः निष्फलतां गता। अत्र पूर्वार्धे उत्प्रेक्षालङ्कारः। असत्पुरुषसेवेत्युत्तरार्धे उपमालङ्कारः। अनयोरर्थालङ्कारयोः संसृष्टिः। पूर्वोक्तश्लोकयोः कथं संसृष्टिरित्याकांक्षायां क्रमेणाह पूर्वत्रेत्यादिना। पूर्वत्र कुसुमेत्यादौ यमकानुप्रासौ कार्यसमवायव्यतिरेकेण मिथो निरपेक्षौ संसृष्टिलक्षणं वैशिष्ट्यं प्रयोजयतः। उत्तरत्र तु लिम्पतीत्यादौ परस्परनिरपेक्षे विद्यमानोत्प्रेक्षोपमें अर्थालङ्कारौ संसृष्टिगुणवैशिष्ट्यं प्रयोजयतः।

### काव्यादर्शः

एवं शुद्धानलंकारान् सप्रभेदानाख्याय यथा बाह्यालंकाराणां सौवर्णमणिमयप्रभृतीनां पृथक्-चारुताहेतुत्वेऽपि संघटनाकृतं चारुत्वान्तरं जायते तद्वत् प्रकृतालंकारणामपि संयोजनेन चारुत्वान्तरमुपलभ्यत इति संश्लेषमुत्थापितमलंकारद्वयमुच्यते। तत्रैषा तिलतण्डुलन्यायेन मिश्रत्वे शब्दालंकारगतत्वेनार्थलंकारगतत्वेन उभयगतत्वेन च त्रेधेति त्रिविधां संसृष्टिमाह—सेष्टेति। यथासंभवमिति न सर्वेषां लक्षितानां, अपि तु केषांचित् तत्रापि तेषां मध्ये क्वचिद् द्वयोः क्वचित् त्रिचतुराणामिति यथायोगम्। संसृष्टश्च विषयभेदेन त्रिरूपत्वेऽपि संसृष्ट्या चैकरूपयेति प्रागुक्तं न विरुध्यते, नैरपेक्ष्यलक्षणस्य रूपस्याभिन्नत्वात्। वक्ष्यमाणसंकरस्तु स्वरूपेणैव नानात्वेनावभासत इति युक्तस्तत्र त्रिरूपताव्यवहारः। सापि सजातीययोर्विजातीययोर्वालंकारयोः स्यात्।

यमकानुप्रासाविति विजातीयौ। अत्रैव 'लकलो-लकलो' इति तथा 'कलोल-कलोल' इति सजातीययोर्यमकयो [:] संसर्गः। तथाविधे परस्परनिरपेक्षे। उपमोत्प्रेक्षे इति विजातीये। अत्रैव 'लिम्पतीव' इति वर्षतीव' इत्युत्प्रेक्षयोः सजातीययोः संसृष्टिः।

**'एतां प्रसरल्लावण्यां तरुणानां हृदयलुण्टिं परिष्वक्कमाणां निवारयति॥' [छाया]**

### विवेकः

अधुना सर्वेषामलङ्काराणां संश्लेषसमुत्थापकमलङ्कारद्वयमुच्यते। सेष्टेति—'एतेषामिति—शब्दार्थवर्त्यलङ्काराणां, न सर्वेषामेव प्रागुक्तानामलङ्काराणामपि तु केषाञ्चित्तत्रापि तेषां मध्ये क्वचिद्द्वयोः क्वचित्त्रिचतुर्णा-

मित्याह यथायोगमिति। संसृष्टिश्च विषयभेदेन त्रिरूपाया अपि 'संसृष्टया चैकरूपये'तिप्रागुक्तं न विरुध्यते, नैरपेक्ष्यलक्षणस्य रूपस्याभिन्नत्वात्। सङ्करस्तु स्वरूपेणैव नानात्वेनावभासत इति युक्तस्तत्र त्रिरूपतया व्यवहारः' (सु. सं. ७२ पृ.)। संसृष्टिः संसर्गः सम्बन्ध इत्यनर्थान्तरम्। सम्बन्धश्चोपसर्जनयोः। एवञ्च मिथोऽनपेक्षयोरयं घटत इत्यत आह—एकार्थतेति। रूपरसवत् सहैवोपलभ्यमानत्वादेकस्मिन् धर्मे समवायलक्षणः सम्बन्धः। 'यथा बाह्यालङ्काराणां सौवर्णमणिमयप्रभृतीनां पृथक् चारुताहेतुत्वेऽपि संघटनाकृतं चारुताऽन्तरमुपजायते तद्वत् प्रकृताप्रकृतालङ्काराणां संयोजने चारुत्वान्तरमुपलभ्यत इतीदमलङ्कारान्तरमेव न त्वत्रालङ्काराः पृथक्त्वपर्यवसयिन' इति (अ. स. २४१-४२ पृ.)। तदुक्तम् (रसार्णवालङ्कारे ?)-पराऽपि भूषा संसृष्टिवर्णालङ्कारयोगतः। रचिता रत्नमालेव पृथगेवावभासते॥ 'अलङ्कारान्तरत्वे च स्फुटावगमे भेदस्योत्कटत्वमस्फुटावगमे भेदस्यानुत्कटत्वम्। पूर्वत्र संसृष्टिरुत्तरत्र सङ्करः। अतश्च तिलतण्डुलन्यायः क्षीरनीरन्यायश्च यथाक्रममनयोर्द्रष्टव्यः' (अ. स. २४७-२४८ पृ.) कुसुमेत्यादि—अलकवल्लोले दृशौ यस्याः। 'अत्रानुप्रासयमकयोर्विजातीययोः संसृष्टिः' (अ. स. २४५ पृ.)। लिम्पतीवेत्यादि—अत्र पूर्वार्ध उत्प्रेक्षा उत्तरार्ध उपमेति विजातीययोः।

## दीपिका

एवं शब्दार्थयोरलङ्कारान् विविच्य तेषां परस्परयोगे बद्धनिचितहिरण्मयाङ्गदवदधिकं रम्यत्वमुल्लसतीति सोऽपि पृथगलङ्कारतया वाच्यस्तेषां च सम्पर्क उद्भटभेदानां चेति द्विधा, तत्र प्रथमं संसृष्टिनाम्ना व्यवह्रियत इत्याह—सेष्टेति।

ननु यदि तेषां सम्पर्के भिन्नालङ्कारता तदा विभिन्नवर्णेत्यादावनेकालङ्कारसम्भेदादिरूपेणोदाहरणं युज्यत इति चेत्, सत्यम्, सम्पर्कस्यैव पृथगलङ्कारता, सम्पर्किणां तु प्रातिस्विकस्वभावपरित्याग एव। संसृष्टावङ्गाङ्गिभावैकाश्रयानुप्रवेशेषु सन्देहहेतुसन्दिह्यमानयोश्च विश्रान्तिविरहादेव न पृथगवस्थानसम्भवः। अङ्गाङ्गितायामपि स्वातन्त्र्येण विश्रान्तिविरह इति चेत्, न तत्र स्वरूपस्थितेरभावाद्।

केवलप्रादुष्कार्यप्रकर्षमनालम्बबप्रतीतेर्विश्रामविरह इति 'अविश्रामजुषामामिनि' इत्युच्यते। वस्तुतस्त्वस्त्येवाङ्गस्याङ्गिनश्च तदपेक्षस्य स्वरूपविश्रामः। एतच्च वृत्तिकृदेव सचेतसां प्रभूततरचमत्कृति निमित्तमिति वदन् स्फुटयिष्यति। उक्तस्वरूपाणां लक्षितस्वरूपाणामलङ्काराणां शब्दगतानामर्थगतानां च। यथासम्भवमिति लक्ष्यप्रसिद्धिमनुसरति। भेदेनेत्यस्य विवरणमन्योन्यनिरपेक्षतयेति। आश्रयतः स्वरूपतश्चेति शेषः। अत्राश्रयत इत्यनेनैकपदसमावेशलक्षतैकाश्रयानुप्रवेशसङ्करव्युदासः, स्वरूपत इत्यङ्गाङ्गिभावस्य व्यवच्छेदः। शब्दभाग इति। तथाविधार्थ विशिष्टात्मनः काव्यस्य शब्दरूपे विशेषात्मनिभागे स्वांश इत्यर्थः। एतच्च शब्दलङ्काराणां संसृष्टिग्रहणपरम्, अर्थविषय एवेत्यर्थालङ्काराणाम्। उभयत्रेति। शब्दालङ्कृतेरर्थालङ्कृतेश्चोभयालङ्काराणां वा लाटानुप्रासप्रभृतीनामवस्थानं विश्रान्तिरिति सन्देहसङ्करतिरस्कारः। एकार्थसमवायस्वभावेत्येकस्मिन्नेव विशिष्टात्मनि काव्ये समाश्रित भावात्मिकेत्यर्थः।

कुसुमेत्यादौ परिभ्रमद्भ्रमरेत्यनुप्रासः, कलकलोलकलोल इति यमकम्। अनुप्रासयमकयोश्च कलोऽलकलोल इति साधरणश्रयतया न ससृष्टिः किन्तु तृतीय सङ्कर एव। परस्परनिरपेक्षाविति पूर्वानुसारेण योज्यम्। तथाविधे परस्परनिरपेक्षे।

## दर्पणः

इत्थं प्रत्येकं शब्दार्थालङ्कारान्निरूप्य तेषां परस्परमिश्रणे संकराख्यौ भेदौ निरूपयति। यथाहि लौकिकालङ्काराणां हरेमुन्निकादिरूपाणां [?] अन्योन्य मिश्रणेन स्वर्ग......दि रूपताप्राप्त्या पृथगिह कश्चिद्विशेषः समुल्लसति, अनयोरपि तथाभावेन पृथगलङ्कारत्वात् तत्र प्रथममुकुटभेदतया मिश्रणे संसृष्टिमाह सेष्टाइति। उक्तस्वरूपाणां समनन्तरं लक्षितस्वभावानां शब्दालङ्काराणामित्यर्थः। यथासंभवं लक्ष्यप्रसिद्ध्यनुसारेण भेदेनेति कारिकापदार्थः। अन्योन्यनिरपेक्षतयेति। भेदश्चास्थितिः। भेदश्चाश्रयतः स्वरूपतश्च। तेन यथाक्रममेकाश्रयानुप्रवेशस्य अङ्गाङ्गिभावस्य च सङ्करस्य व्यवच्छेदः। शब्दभागे काव्यस्य शब्दरूपे भागेशे उभयत्र द्वयोरपि शब्दार्थभागयोरवस्थानमवस्थितिः। एवञ्च संदेहसंकरव्युदासः। एकार्थसमवायस्वरूपेति। एकस्मिन्नेव विशिष्टात्मनि काव्ये समाश्रितभावात्मिकेत्यर्थः।

कुसुमसौरभेत्यादावनुप्रासः। कनकलोकललेल [कलकलोलकलोल] इत्यत्र यमकम्। तेन द्वयोरत्र भेदेनावस्थितिः। इह च [कनकलोलकलोल कलकलोलकलोल] इति कलोलकलो चेति यमकरूपकस्य एकाश्रयानुप्रवेशः सङ्करः।

## साहित्यचूडामणिः

पूर्वत्र संसृष्टि। उत्तरत्र सङ्करः। यत् सूत्रम्—"एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टिः, क्षीरनीरन्यायेन तु सङ्करः" (अलङ्कार सू० ८५, ८६) इति। तत्र प्रथमं संसृष्टिमाह—सेष्टेति भेदेनेति। उत्कटत्वेनेति यावत्। प्रकान्तानामलङ्काराणां यथासम्भवमुदाहरणानुगुण्याद्मिथो नैरपेक्ष्यपर्यवसानस्य वक्ष्यमाणत्वात्। उक्तं हि—[उद्भटेन]

**अलङ्कृतीनां बह्वीनां द्वयोर्वापि समाश्रयः।**

**एकत्र निरपेक्षणां मिथः संसृष्टिरुच्यते॥ इति।**

सङ्करं तु मिथोव्यपेक्षाया अनुग्रह्यानुग्राहकत्वादिलक्षणाया वक्ष्यमाणत्वात्।

तत्र शब्दार्थालङ्कारयोः उभयस्य वाक्ये छन्दसि वा य एकार्थसमवायः सम्बन्धः सा संसृष्टिस्त्रिधेत्युद्भावयिष्यन्नादिमामुदाहर्तुमाह—तत्रेति।

कुसुमेति। कलो मेखलायाः काञ्च्याः कलकलः कोलाहलः।

द्वितीया यथा—लिम्पतीवेति। व्याख्यातं प्राक्। अत्रोत्प्रेक्षोपमे परस्परमनपेक्ष्यव्यवस्थिते संसृष्टिं प्रयोजयतः।

## सम्प्रदायप्रकाशिनी

इत्थं शब्दार्थोभयाश्रिता अलङ्काराः शुद्धतया विवेचिताः। अथ सम्भेदकृते वैचित्र्यान्तरप्रस्तावः। तत्र नैरपेक्ष्ये संसृष्टिमाह—सेष्टेत्यादिना। एतेषां निरूपितचरतया धीविनिवेशितानां भेदेन मिथो नैरपेक्ष्येण इह शब्देऽर्थे उभयत्र विषये यथायोगं यदवस्थितिः सा संसृष्टिः। एकार्थसमवायात्मा सम्बन्धः।

व्याचष्टे—एतेषामित्यादि। शब्दभाग एवेति। शब्दभा(गेन ? गत्वे) न हि निरवशेषः सन्दर्भः शब्दालङ्कारविषयः। अर्थविषये पदार्थवाक्यार्थलक्षणे विषये, अर्थालङ्काराणामुभयत्र सम्भवात्। स्वभावग्रहादेकार्थे समवायो लक्षणं संसृष्टेः, नैरपेक्ष्येणाङ्गाङ्गिभावासम्भवात्।

कुसुमेति। अलकव्याकुलदृशा मेखलाकलकलो विदधे। इह वृत्त्यनुप्रासयमकयोर्नैरपेक्ष्येण संसृष्टिः। लकलो लकलो इति कलोल कलोलेति यमकयोरपि।

लिम्पतीवेत्यादि। प्रथमेऽर्धे इवशब्दः सम्भावनायाम्। द्वितीये सदृशतायाम्।

उभयत्र योजयति—पूर्वत्रेत्यादि। तथाविधे निरपेक्षे। उपमोत्प्रेक्षे इति। नैरपेक्ष्येणार्थक्रमाविवक्षणात् कामचारेण उपमायाः पूर्वनिपातः।

### मधुमती

एवं शुद्धभेदानुदाहृत्य सङ्कीर्णान् उदाहरति—सैषेति। समनन्तरमेवेति। शब्दार्थोभयालङ्काराणामित्यर्थः। यथासम्भवमिति। शब्दालङ्कारयोः, अर्थालङ्कारयोः, उभयालङ्कारयोः अनुभयालङ्कारयोर्वा इत्यर्थः। अन्योन्येति भेदेनेत्यस्यार्थः। सैकेति। गद्य-पद्यरूपे एकार्थे सम्बन्धस्वभावेत्यर्थः।

उत्तरत्र त्विति। पूर्वार्धे उत्प्रेक्षा, उत्तरार्धे उपमेति द्रष्टव्यम्।

अनुप्रास इति। अनुप्रासोऽत्र स्पष्टः। हृदयलुण्ठनं इत्यत्र च रूपकम्।

लिम्पतीव इत्यत्र उत्प्रेक्षोपमासंसृष्टेश्च उभयालङ्कारसंसृष्टिः गतार्था।

### विस्तारिका

शुद्धभेदानुक्त्वा सङ्कीर्णभेदानाह—सेष्टेति। अनुप्रासोपमाप्रभृतीनां पृथक् चमत्कारप्रयोजकत्वेऽपि परस्परसाङ्कर्येमाधिकरामणीयकत्वमनुभवसिद्धमिति संसृष्टिसङ्करयोः पृथक्त्वम्। एकत्र काव्ये एतेषां शब्दार्थालङ्काराणां भेदेन या स्थितिः, सा संसृष्टिनामालङ्कार इत्यर्थः।

व्याचष्टे—एतेषामिति। समनन्तरोक्तानां शब्दार्थोभयालङ्काराणां यथा सम्भवमिति शब्दालङ्कारयोरर्थालङ्कारयोरुभयालङ्कारयोर्वेत्यर्थः। अन्योऽन्येति। भेदेनेत्यस्य विवरणम्। एकार्थेति। काव्यरूपैकार्थसम्बन्धस्वभावेत्यर्थः।

वदनेति। अत्र वृत्त्यनुप्रासयमकयोः संसृष्टिः।

लिम्पतीति। पूर्वार्द्धे उत्प्रेक्षा, उत्तरार्द्धे उपमा। अनयोः संसृष्टिः।

### काव्यप्रदीपः

एवं शुद्धालंकारा दर्शिताः। अस्ति पुनः कश्चिद्विषयो यत्राङ्गदादिसंबद्धपद्मरागप्रमुखमणिमेलकवत्प्रोक्तानामलंकाराणां संवलन एव चमत्कारः। तस्मात्सोऽप्यलंकारः। तत्र द्वयी गतिः। परस्परमनपेक्ष्य व्यवस्थितेस्तदभावाच्च। तत्र प्रथमा संसृष्टिरुच्यते द्वितीया तु संकरः। स च त्रिधेति प्रकारचतुष्टयं लक्षयति—

**सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥ ५३ ॥**

भेदः स्वरूपतो विषयतो वा परस्परमनपेक्ष्यत्वम्। यद्वा विषयभेदे सति परस्परानपेक्षत्वम्। स्थितिर्व्यवस्थितिः। एतेषामनन्तरमेवोक्तानामलंकाराणां भेदेन यत्स्थितिः सा संसृष्टिरिष्टा। संकरभेदास्तु नैवम्। अङ्गाङ्गिभावे स्वरूपतः सापेक्षत्वात्। अनिश्चये व्यवस्थितेरेवाभावात्। व्यवस्थिते विषयतः परापेक्षत्वाद्विषयाभेदाच्च। सेयं शब्दालंकारमात्रस्यार्थलंकारमात्रस्य शब्दार्थालंकारयोर्वेति त्रिप्रकारा। तत्राद्या। यथा—

**'वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया।**
**वनितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया॥'**

अत्रानुप्रासयमकयोः परस्परमनपेक्ष्य व्यवस्थितिः। द्वितीया यथा—

**'लिम्पतीव तमोऽङ्गानि किरतीवाञ्जनं नभः।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गताः॥'**

अत्रोत्प्रेक्षोपमे परस्परमनपेक्ष्य व्यवस्थिते संसृष्टिं प्रयोजतः।

## काव्यप्रकाशखण्डनम्

**सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥ (का. १३९, उ०)**

एतेषामलङ्काराणां भेदेन अन्योऽन्यनिरपेक्षतया शब्दभाग एव अर्थविषय एव उभयं तत्र वा यद् व्यवस्थानं सा संसृष्टिः। तत्र शब्दालङ्कारसंसृष्टिर्यथा—'तारतारतरै'मित्यादि।

अर्थालङ्कारसंसृष्टिर्यथा—

**लिम्पतीव [प० ५८.२] तमोऽङ्गानि वर्षतीवाञ्जनं नभः।**
**असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥**

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः। अत्र तु तथाविधे उपमोत्प्रेक्षे।

## आदर्शः

इत्थमलङ्कारान् प्रत्येकमुक्त्वा तेषां परस्परसंसर्गमाह—सैषेति। 'भेदेन' संशयास्पदत्वादित्रिरूपसङ्कर-राहित्येन एकत्र पद्ये स्थितिरित्यर्थः। भेदेनेत्यस्य विवरणम्—अन्योन्यनिरपेक्षतयेति। त्रिरूपसङ्करराहित्यमेवान्यो-न्यनिरपेक्षता। 'एकार्थसमवाय' एकपद्यस्थितिः।

वदनसौरभेति। 'पूर्ववर्णितनायिकातोऽन्यया नायिकया चलितया कलो गभीरो मेखलाकलकलः अव्यक्ततादृशशब्दो विदधे। कीदृश्या? वदनसौरभलोभेन परिभ्रमतो भ्रमरात् सम्भ्रमेण भयेन सम्भृता उत्पन्ना शोभा यस्यास्तादृश्या। इदं चलनहेतुः, अत एवालकलोलदृशा अलकेऽपि भ्रमरबुद्ध्या तत्र दृग्लोलनम्। अत्र पाद-त्रयेऽनुयासश्चतुर्थपादे यमकमिति संसृष्टिः।

लिम्पतीति। गाढतमोवर्णनमिदम्। श्लोकद्वयेऽलङ्कारद्वयसंसृष्टिं स्वतन्त्रेच्छत्वाद् व्युत्क्रमेणाऽह—पूर्वत्रेति। 'तथाविधे' परस्परनिरपेक्षे। उपमोत्प्रेक्षे इति। परार्द्धे उपमा पूर्वार्द्धे तत्प्रेक्षा।

## सुधासागरः

एवं शुद्धालङ्कारा दर्शिताः। अस्ति पुनः कश्चिद्विषयो यत्रोर्मिकादिसम्बद्धशोणरत्नप्रमुखमणिमेलकवत्त्रोक्तानामलङ्काराणां संवलने एव चमत्कारः, अतः सोऽप्यलङ्कारः। तत्र द्वयी विधा, परस्परनिरपेक्षव्यवस्थितेस्तदभावाच्च। तत्राद्या संसृष्टिः। द्वितीया तु सङ्कर इति प्रकारचतुष्टयं लक्षयति—

एतेषामित्यादि। भेदः स्वरूपतो विषयतो वा परस्परमनपेक्षत्वम्। यद्वा, विषयभेदे सति परस्परानपेक्षत्वम्। स्थितिर्व्यवस्थितिः। एतेषां समनन्तरमेवोक्तानामलङ्काराणां भेदेन यत्स्थितिः सा संसृष्टिरिष्टा। सङ्करभेदास्तु नैवम्। अङ्गाङ्गिभावे स्वरूपतः सापेक्षत्वात्, अनिश्चये व्यवस्थितेरेवाभावात्, व्यवस्थिते विषयतः परापेक्षत्वात्, विषयाभेदाच्च। सेयं संसृष्टिः शब्दालङ्कारमात्रस्यार्थालङ्कारमात्रस्य शब्दार्थालङ्कारयोर्वेति त्रिप्रकारेत्यर्थः। तत्राद्या यथा—वदनेति।

वदने यत् सौरभं पद्मिनीत्वेनाद्भुतसौगन्ध्यं तस्य लोभेन परितो भ्रमन्तः ये भ्रमरास्तेषां सम्भ्रमो भयं तेन सम्भृतोपचिता शोभा यस्यास्तथाभूतयाऽत एव चलितया, अलकैर्लोले चञ्चले दृशावक्षिणी यस्यास्तादृश्या अनया कयाचिन्नायिकया द्रुतविलम्बितं वृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात्। अत्रानुप्रासयमकयोः परस्परमनपेक्ष्य व्यवस्थितिः।

द्वितीयामुदाहर्त्तमाह—अर्थेति लिम्पतीति। अत्र तमस उत्कर्षो ध्वन्यते। क्रमेण व्याचष्टे—पूर्वत्रेति। उपमोत्प्रेक्षे इति तत्र पूर्वत्रार्ध उत्प्रेक्षा उत्तरत्रोपमा।

शब्दार्थालंकारयोस्तु संसृष्टिः ।

**सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णं ।**
**तरुणाण हिअअलूडिं परिसक्कन्तीं णिवारेइ ॥ ५६९ ॥**

---

अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे । संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ॥

सङ्केतः

महमहन्तेति । (महमहायमानलावण्यां) लसल्लावण्यामित्यर्थः । परिसक्कन्तीं परिष्वष्कमाणां, क्रीडन्तीमिति यावत् ।

रूपकं चेति । हृदयलुण्ठीमेव हृदयलुण्ठीं इति रूपकम् । एकत्र वाक्ये इति शब्दलङ्कारव्यक्तिः । छन्दसि इति अर्थालङ्कारोन्मेषः । इति संसृष्टिः ।

**सङ्केतः (रुय्यकः)**

**स नास्त्यत्र ग्रामे य एतां सर्वतः प्रसरल्लावण्याम् ।**
**तरुणानां हृदयलुण्ठिं परिष्वस्कमानां निवारयति ॥**

**बालचित्तानुरञ्जनी**

तृतीयमुदाहरति सो णेति । हे सखि ! अत्थ अत्र, ग्रामे ग्रामे, सो णत्थि स नास्ति । जो यः, तरुणाण हिअअलुडिं तरुणलावण्यं [?], णिवारेइ निवारयति । स्वायत्तीकृत्य पुरुषान्तरसंसर्गे व्यावर्तयति । अत्र लाटानुप्रासः शब्दालङ्कारः । हिअअलूडि इति रूपकालङ्कारः । अनयोः संसृष्टिरित्याह अत्रेति । ननु शब्दालङ्कारयोर्भिन्नविषयत्वात् कथं संसृष्टिरित्यत आह संसगश्चेति ।

**काव्यादर्शः**

रूपकं चेति । आरोप्यमाणरूपेण आरोपविषयस्य आरोपवतः क्रियमाणत्वात् । एकत्र वाक्य इति । अनेन शब्दालंकारनिर्देशपरामर्शः । छन्दसीत्यनेन तु अर्थालंकारोन्मेषः ।

**विवेकः**

संसृष्टिः सो णत्थीत्यादि । स नास्त्यज ग्रामे य एतां सर्वतः प्रसरल्लावण्ययाम् । तरुणानां हृदयलुण्ठिं परिष्वक्कमाणं निवारयति ॥ एतां हृदयलुण्ठिमिति रूपकम् । णत्थि एत्थ इति पूर्वार्धेऽनुप्रास उत्तरार्धे तु रूपकमिति कथमनयोः संसृष्टिरिति, अत आह संसर्गश्चेति । एकत्र च्छन्दसि गाथारूपे ।

## दीपिका

शब्दार्थालङ्कारयोरिति। एकस्य शब्दालङ्कारस्यापरस्यार्थालङ्कारस्येत्यर्थः। महमहन्तेति प्रतिक्षमं नवनवीभवदित्यर्थः। हिअअलूडिं हृदयाध्वन्यां महती सहृदयहृदयव्यामोहिनीमित्यर्थः। भूमिमिति पाठे परस्परस्पर्धाबन्धमित्यर्थः। परिसक्कन्तीम् अनुरूपं रमणमनासाद्येतस्ततः प्रसरन्तीम्। णिवारेइ स्वायत्तीकृत्य पुरुषान्तरप्रसङ्गाद् व्यावर्तयति। अनुप्रास इति। णत्थि एत्थेति। रूपकं हिअअलूडिमिति।

ननु अत्यन्तं विरहविषयत्वात् कथमनयोः संसृष्टिरित्याह—संसर्गश्चेति। वाक्ये परस्परव्याहतपदपदार्थात्मनि। यत्तच्छब्दापेक्षयाऽवान्तरवाक्यभेदमाश्रित्याह—छन्दसीति। पद्य इत्यर्थः। एतेनैवम्भूतमिश्रीभावे संसृष्टिः, अत्यन्तप्रसन्नतायां तु सङ्कर एवेति। सूचितम्। अनयैव दिशा भिन्नयोरुभयालङ्कारयोः शब्दोभयालङ्कारयोरर्थोभयालङ्कारयोश्चैतेषु प्रकारेषु बह्वलङ्कारसंसृष्टावुदाहृतिर्मृग्या।

## दर्पणः

[सोणथीति।]

**न नास्त्यत्र ग्रामे य एतां महमहल्लावण्यम्।**
**तरुणानां हृदयलुण्टानं परिष्वज्यमानानां निवारयति॥**

लावण्यस्य महमहत्वं प्रसभं प्रसरणं, हृदयलुण्ठनस्वरूपं परियुज्यमानानां परितो भ्रमन्ती। सोणत्थि एत्थेत्यत्रामनुप्रासः। हि अ अलूडिं [हि अ अनूडिं] इत्यत्र च रूपकम्।

च्छन्दो गाथारूपम्। अनयैव दिशा शब्दोभयालङ्कारयोरर्थोभयालङ्कारयोश्च संसृष्टावुदाहरणमनुसर्तव्यम्।

## साहित्यचूडामणिः

तृतीयामुदाहर्तुमाह—शब्दार्थेति सो इति।

**स नास्त्यत्र ग्रामे य एनां महमहायमानलावण्याम्।**
**तरुणानां हृदयलनिं परिष्वक्कमाणां निवारयति॥ इति।**

अत्र नत्थिएत्थेत्यादावनुप्रासः शाब्दोऽलंकारः। हृदयलूनिमिति तु रूपकमार्थः।

अथ किमाधारेयं संसृष्टिरिति संसृष्टिं व्याकर्तुमाह—संसर्गश्चेति। वाक्ये गद्यविवक्षायाम्। पद्यतात्पर्ये छन्दसि।

## सम्प्रदायप्रकाशिनी

सो णत्थीति।

**स नास्त्यत्र ग्रामे य एतामामोदमानलावण्याम्।**
**तरुणानां हृदयलुण्टिं परिसर्पन्तीं निवारयति॥**

लुण्टिर्लुण्टिका। आह्लादिना लावण्येन हृदयलुण्टिकायाः प्रसारनिवारको नोपलक्ष्यत इत्यर्थः। अत्र णत्थि एत्थ मएत्थेत्यनुप्रासस्य, हिअअलुण्टिमिति रूपकस्य च वाक्यैकवाक्यतायामेकत्र वाक्ये समवायः। वाक्यभेदापेक्षया छन्दसि।

तदेतदाह—अत्रानुप्रास इत्यादि।

**मधुमती**

उभयोरप्युभयालङ्कारत्वात्—

**"सकलकलं पुरमेतज्जातं**
**सम्प्रति सुधांशुबिम्बमिव॥"**

इत्यादौ हि उपमानुप्रासंसृष्ट्या उभयानुभयालङ्कारसंसृष्टिरुक्ता। इति संसृष्टिः।

**विस्तारिका**

सो णत्थीति।

**स नास्त्यत्र ग्रामे य एनां महमहायमानलावण्याम्।**
**तरुणानां हृदयलुण्ठाकीं परिष्वक्वमाणां निवारयति॥**

अत्र पूर्वार्द्धे छेकानुप्रासः, हृदयलुण्ठकीमिति रूपकं च संसृष्टि प्रयोजयत इत्याह—अत्रेति।

नन्वलङ्कारयोर्भिन्नधर्मिकत्वात् कथमुक्तैकार्थसम्बन्धस्वभावा संसृष्टिः, अत आह—संसर्गश्चेति। एकत्र काव्य इति। तथा च काव्यत्वरूपेणैकेनोपाधिनाऽनुगतयोः शब्दार्थयोरैक्यात् सङ्गतिरिति भावः। क्वचिद् वाक्य इति पाठः। तत्राप्यकाङ्क्षायोग्यतादिमत्पदकदम्बकस्यैव वाक्यत्वात्। योग्यतायाश्चार्थघटितत्वादर्थावच्छिन्नशब्दस्यैव वाक्यत्वम्। अन्यथा निरर्थकानामपि वाक्यत्वापत्तिः। तथा चैकं वाक्यमित्यादिप्रतीतिसाक्षिकमेकत्वमादाय शब्दार्थालङ्कारयोरेकार्थसमवाय इत्यर्थः।

छन्दसीति। 'रीतिरात्मा काव्यस्य' इति मतावष्टम्भेन तत्राप्युपपत्तिः पूर्ववदेव; अन्यथाऽऽनुपूर्व्यात्मके छन्दसि शब्दालङ्काराणां यथाकथञ्चिद् वृत्तावप्यर्थालङ्काराणां सर्वथैवावृत्त्योक्तदोषानिवृत्तेः। समवेतत्वात् सम्बन्धत्वात्।

यत्तु रसरूपे एकत्रैव धर्मिणि सर्वेषामुपकारकत्वात् साक्षात् परम्परासम्बन्धेन सर्वेषामेव सामानाधिकरण्यमस्तीति तमादायैवैकार्थसम्बन्धसमर्थनम्। 'एकत्र शब्दभागे एव' इत्यादिवृत्तिग्रन्थस्य वाक्ये छन्दसि वा' इत्युपसंहारग्रन्थस्य च तावत्पर्यन्तात्पर्यकत्वमिति तन्न, रसमादाय तथा समर्थने सर्वेषामेव शब्दार्थदोषाभावगुणालङ्काराणां संसृष्टि स्यात्, रसोपकारकत्वविशेषात्। रसोपकारकत्वाविशेषेऽप्यलङ्काराणामेव शब्दार्थोभयवृत्तित्वेन प्रतीतानामानुभाविकी चमत्कारप्रयाजकतेति चेत्, तर्हि शब्दार्थात्मकं काव्यमादायैव तत्समर्थनमुचितम् न तु रसमिति दिक्।

## सारबोधिनी

सो णत्थीति ।

स नास्त्यत्र ग्रामे य एतां महमहायमानलावण्याम्।
तरुणानां हृदयलुण्ठाकीं परिसंक्रामन्तीं निवारयति ॥

अत्र पूर्वार्द्धेऽनुप्रास: । उत्तरार्द्धे हृदयलुण्टाकीमिति रूपकम् ।

नन्वत्र रूपकमर्थालङ्कारोऽनुप्रासश्च शब्दनिष्ठ:, कथमुक्तैकार्थसम्बन्धस्वभावा संसृष्टिरित्यत आह संसर्गश्चेति । एकत्र वाक्य इति । तथा च काव्यरूपेणैकोपाधिनानुगतयो: शब्दार्थयोरैक्यात् सङ्गतिरिति भाव: । क्वचिद् वाक्य इति पाठ: । तत्राकाङ्क्षायोग्यतादिमत्पदकदम्बस्यैव वाक्यत्वम् । अन्यथा निरर्थकानामपि वाक्यत्वापत्ति: । तथा चैकं वाक्यमित्यादिप्रतीतिसाक्षिकमेकत्वामादाय शब्दार्थालङ्कारयोरेकार्थसमवाय इत्यर्थ: । रीतिरात्मा काव्यस्येति मतावष्टम्भेनोपपत्तिस्तु पूर्ववदेव, अन्यथाऽनुपूर्व्यात्मके छन्दसि वा शब्दालङ्काराणां यथाकथञ्चिद्वृत्तावपि, अर्थालङ्काराणां सर्वतैवावृत्या उक्तदोषानिवृत्ते: । समवेतत्वात् संबद्धत्वात् । केचितु रसस्वरूपनिरूपणे एकत्र धर्मिणि सर्वेषामुपकारकत्वात् साक्षात् संबन्धेन सर्वेषामेव सामानाधिकरण्यमित्याहु: ।

## काव्यप्रदीप:

अन्त्या यथा—

'सो णंत्थि एत्थ गामे जो एअं महमहन्तलाअण्णम्।
तरुणाण हिअअलूडिं परिसप्पन्ति णिवारेइ ॥'

अत्रानुप्रासरूपके शब्दार्थलंकारौ । नन्वनयो: शब्दार्थरूपाश्रयभेदेन कथमेकार्थसमवायलक्षणा संसृष्टिरिति चेत्, एकवाक्ये छन्दसि वा समवेततत्वात् ।

## काव्यप्रकाशखण्डनम्

शब्दालङ्कारयो: संसृष्टिर्यथा—'हिन्दोलिकेयमिन्दो: कलिके'त्यादौ । अनुप्रासो रूपकं च संसृष्टिं प्रयोजयत: ।

ननु शब्दालङ्कारस्य शब्दमात्रवृत्तित्वात् अर्थालङ्कारस्य अर्थवृत्तित्वमिति कथमुभयोरेकत्र संसृष्टिरिति चेत्, न । एकार्थसमवायरूपसम्बन्धेनार्थवृत्तित्वात् ।

## आदर्श:

सो णत्थीति—

न नास्त्यत्र ग्रामे य एनां महमहायमानलावण्याम् ।

तरुणानां हृदयलुण्टाकीं परिष्वक्कन्तीं निवारयति ॥ इति संस्कृतम् ।

'यौवनमदगर्वितायाः कस्याश्चिद् रतिविमर्देन दर्पक्षयकारक' मन्विष्यतः कस्यचिदुक्तिरियम्। महमहेति, उत्सवोत्सवायमानलावण्यामित्यर्थः। परिष्वक्कन्तीं दीप्यमानाम्। निवारयतीति यौवनगर्वादिति। शेषः। अत्रेति। 'णत्थि ऐत्थे'ति 'महमहे'ति चानुप्रासः, 'लुण्टाकी'ति रूपकञ्च। निरपेक्षत्वेऽपि संसृष्टिमुपपादयति— संसर्गश्चेति। नन्वेवं लिम्पतीत्यादौ वाक्यद्वयगतयोर्न संसृष्टिः स्यादित्यत आह—छन्दसि वेति। छन्दः पद्यम्, एकपद्ये इत्यर्थः। 'समवेतत्वं' सम्बन्धः।

## सुधासागरः

अन्त्या यथा—सो णत्थीति। आर्या।

तरुणानां हृदयलुण्टकीं परिष्वक्कमाणां निवारयति॥

इति संस्कृतम्। महमहल्लालण्यां नवनवीभवल्लावण्यां परिसक्कन्तीं स्वानुरूपरमणाभावादितस्ततो गच्छन्तीं निवारयति पुरुषान्तराद् व्यावर्त्तयति। स्फुटमन्यत्।

अत्रेत्यादि। अत्रानुप्रासरूपकौ शब्दार्थालङ्कारौ। नन्वनयोः शब्दार्थरूपाश्रयभेदेन कथमेवार्थसमवायलक्षणा संसृष्टिरिति चेत्, एकवाक्ये छन्दसि वा समवेतत्वा दित्यर्थः।

(सू० २०८) अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः।

एते, एव यत्रात्मनि, अनासादितस्वतन्त्रभावाः परस्परम् अनुग्राह्यानुग्राहकतां दधति स एषां संकीर्यमाणस्वरूपत्वात् संकरः। उदाहरणम्—

आत्ते सीमन्तररत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन् गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति॥ ५७०॥

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतम् तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृति निमित्तमित्यनयोरङ्गाङ्गिभावः।

---

**सङ्केतः**

अत्र तद्गुणमिति। 'शोणं बिम्बोष्ठकान्त्या' इति वाक्यगमित्यर्थः। भ्रान्तिमतेति। 'गुञ्जाफलानां स्रजः' इति प्रोक्तेनेत्यर्थः। तदाश्रयेण भ्रान्तिमदाश्रयेण।

**सङ्केतः (रुय्यकः)**

न विश्रान्तिजुषः अविश्रान्तिजुषः। ताटङ्कं कर्णाभरणभेदः। लुप्तायामिति—लुप्लृ छेदेने, छिन्नायामित्यर्थः।

तुलाकोटिर्नूपुरं, गुञ्जा रक्तिका। करा रश्मयः, करश्च पाणिः। वैराग्यं लौहित्यापगमो विषयवैतृष्ण्यञ्च।

**बालचित्तानुरञ्जनी**

सङ्करालङ्कारं लक्षयति अविश्रान्तीति। व्याकरोति एत इति। अङ्गमनुग्राहकम्। सीमन्तरत्न इति। हे राजन्! अरण्ये इत्वरीणां त्वदरिमृगदृशां सीमन्तचिन्हके मरकतिनि हेमताटंकपत्रे हृते मेखलायां लुप्तायां मणितुलाकोटियुग्मे झटिति हृते सति बिम्बोष्ठकान्त्या शोणं हारं गुञ्जाफलानां स्रज इति भ्रान्त्या नैव हरन्ति। अत्र हारस्य शुक्लिमपरित्यागात् शोणिमस्वीकारात् तद्गुणालङ्कारात् गुंजाफलानां स्रज इति स्थले भ्रान्तिमानलङ्कारः। अत्र तद्गुणपेक्षया भ्रान्तिमानङ्गे प्रादुरभूत्। तदाश्रयेण च तद्गुणः सचेतसां चमत्कारनिमित्तमिति तयोरङ्गाङ्गिभाव इत्याह।

### काव्यादर्शः

अथ क्षीरनीरन्यायेन मिश्रत्वे उपकार्योपकारकत्वेन संदेहेन एकवाचकानुप्रवेशेन च त्रिविधं संकरमाह—अविश्रान्तिजुषामिति, न विश्रान्तिजुषाम्। तुलकोटिर्नूपुरम्। तद्गुणमिति। 'शोणं बिम्बोष्ठकान्त्या' इति तद्गुणोऽलंकारः। 'गुञ्जफलानां स्रजः' इति वाक्ये भ्रान्तिमान्। तदाश्रयेणेति, भ्रान्तिमदाश्रयेण।

### विवेकः

अविश्रान्तीति—स्वातन्त्र्येणात्मलाभमनास्वादयन्त इत्यर्थः। एतेन संसृष्टेर्वैलक्षण्यं दर्शयति। सङ्कीर्यमाणस्वरुपत्वादित्यनेनान्वर्थतमाह—आत्त इत्यादि। ताटङ्कः कर्णाभरणभेदः। लुप्तायामिति 'लुप्लृ छेदने' छिन्नायामित्यर्थः। तुलाकोटिर्नूपुरः। गुञ्जा रक्तिका। हारो मुक्ताहारः। भ्रान्तिमतेति भ्रान्तिमदलङ्कारेण। अत्र बिम्बोष्ठगतशोणत्वाक्रान्तिनिबन्धना मुक्ताहारे गुञ्जाहारभ्रान्तिरिति तद्गुणालङ्कारो भ्रान्तिमतः समुत्थापकः। स च समुत्थितः समुत्थापकस्य तद्गुणस्य चमत्कारितानिबन्धनमित्यङ्गाङ्गिभावः।

### दीपिका

आत्मन्यनासादिस्वतन्त्रभावात्, अङ्गस्य चारुत्वोत्कर्षार्थमङ्ग्यपेक्षणात्, आत्मनश्च आत्मलाभार्थं तदपेक्षणादित्यर्थः। परस्परमनुग्राह्यानुग्राहकतां दधतीति। अङ्गनिष्पादनद्वाराऽङ्गिनमनुगृह्णन्ति। अङ्गी च चारुत्वप्रकर्षणद्वाराङ्गमिति भावः। संकीर्यमाणेति। परस्परानुयुज्यमानेत्यर्थः। लुप्तायाम् आच्छिन्नायाम्। तुलकोटौ नूपुरे। इत्वरीणामिति सृजीणनशां क्वरप्। परितो गमनशीलानामित्यर्थः। गुञ्जाफलानां गुञ्जाबीजानाम्। प्रादुर्भूतमिति। आत्मलिङ्ग इत्यर्थः। प्रभूता प्रकृष्टेत्यर्थः।

### दर्पणः

एवमुद्भटभेदत्वे संसृष्टिं निरूप्य [प्रकटभेदत्वे संसृष्टिं निरूप्य] अनुद्भटभेदत्वे [अप्रकटभेदत्वे] एवंविधं सङ्करं निरूपयति अविश्रान्तीति आत्मन्यविश्रन्तिरूपमित्यस्य विवृतिः एत एवेत्यादि। अङ्गाङ्गित्वामित्यस्यार्थं अर्थग्राह्यानुग्राहकता मिति पदं लक्षणभागार्थं अङ्गाङ्गिभावमित्यस्यार्थः अङ्गाङ्गिभावाख्यः सङ्करविशेष इति लक्षणार्थं चेति काकाक्षिन्यायेन पूर्वपरयोरुभयोरपि संबुध्यते। आत्मन्यनासादितस्वभावत्वं चाङ्गस्य चारुत्वोत्कर्षानुभङ्गभङ्ग्यपेक्षणादङ्गिनश्च स्वानुलाभार्थं तदेपेक्षणात् परस्परमनुग्राह्यानुग्राहकतां दधतीत्यर्थः। अङ्गनिष्पादनद्वारा अङ्गिनमनु, अङ्गीच चारुत्वप्रकर्षणद्वाराऽकुमिभावः [अक्रमाभावः] संकीर्यमाणत्वं परस्परमनुपयुज्यमानत्वम्।

### साहित्यचूडामणिः

अथ "सङ्करेण त्रिरूपेणे"ति ध्वनिकारनिर्णीतया युक्त्या त्रिविधं सङ्करमुल्लिङ्गयिष्यन् तस्य प्राथमिकं भेदमाह—अविश्रान्तीति। आत्मन्यविश्रान्तानामलङ्काराणामन्योन्यमङ्गाङ्गित्वं प्रथमः सङ्कर इति यावत्।

अन्यसापेक्षा हि न च स्वविश्रान्ताः स्वविश्रान्ताश्च नान्यसापेक्षाः। अपेक्षा च पर्यालोच्यमाना तेषामङ्गाङ्गित्वलक्षणेऽनुग्राह्यानुग्राहकत्वे संशयास्पदतायाम् एकवाचकानुप्रवेशे च प्रतिष्ठिति। विश्रान्तिः स्वातन्त्र्यलाभ इति तात्पर्येण व्याचष्टे—एत इति। अङ्गमनुग्राहकम् अनुग्राह्यमङ्गि। सङ्कीर्यमाणेत्यादि सामान्यलक्षणम्।

आत्त इति अत्रापहृतेष्वपि भूषणेषु शबरा हारं न हरन्ति तस्य बिम्बोष्ठकान्त्या शोणत्वात् यया गुञ्जाफलभ्रम इति तद्गुणभ्रान्तिमतोरङ्गाङ्गिभावः। तत्र तद्गुणमङ्गमपेक्ष्य भ्रान्तिमानङ्गी प्रादुरभूत्। अङ्गाङ्गिनोरुभयोः कुत्र चमत्कारातिशय इति 'मीमांस्यमानेऽङ्गभावनानीत्या भ्रान्तिमल्लक्षणादङ्गिनोऽप्यङ्गे तद्गुणे उत्पद्यते इत्याह—तदाश्रयेण चेति। यथा च—

**आलग्नापि तमालगुच्छरुचिरे वक्षः स्थले शार्ङ्गिणो**
**लक्ष्मीस्त्वां कुलशेखरक्षितिपते, शौर्योत्तरं ध्यायति।**

**यस्यास्त्वद्गुणवासना वितनुते तामेव कान्तिं तनो-**
**र्निर्व्याजस्मयमानपङ्कजदलश्लाघाक्षरोल्लाङ्गिनीम्॥' इति**

**अत्रातद्गुणेनोपमया च तद्गुणोऽनुगृह्यते। यथोक्तं [उद्भटेन]**
**परस्परोपकारेण यत्रालङ्कृतयः स्थिताः।**
**स्वातन्त्र्येणात्मभावं नो लभन्ते सोऽपि सङ्करः॥ इति।**

## सम्प्रदायप्रकाशिनी

अविश्रान्तीति। स्वरूपे स्वातन्त्र्यमलभमानानामङ्गाङ्गिभावो मिथः सङ्कीर्यमाणात्मकत्वात् सङ्करः।

व्याचष्टे—एत एवेति।

आत्त इति। इत्वरीणां पलायनपराणाम्। हारमिति जातौ, एकस्य स्रग्भिरसमन्वयात्।

योजयति—अत्र तद्गुणमित्यादि। तदाश्रयेण भ्रान्तिमदाश्रयेण। प्रभूतेति। शुद्धस्वरूपापेक्षया प्रभूतता। अतः परस्परमङ्गाङ्गिभावः।

## मधुमती

एत एवेति। उक्ता एव अलङ्काराः इत्यर्थः।

आत्ते इति। अत्र सीमन्तरत्ने इत्यनेन चिकुरनिकुरम्बलब्धपरभागताध्वनेन आदाने विलम्बाभावः। मरकतिनि इत्यनेन हेमताटङ्कग्रहणम्, न तु शुद्धहेमाभिधानम्। अन्यथा देहदीप्त्यमिभूतत्वात् न प्रकाशेत। बिम्बोष्ठकान्त्या इत्यनेन आननस्य आलस्यानतत्वम्। तेन च त्रपाधिक्यं व्यज्यते। अत्र—'शोणं बिम्बोष्ठकान्त्या' इत्यत्र तद्गुणः, 'गुञ्जाफलानां स्रजः' इत्यत्र भ्रान्तिमान्। अत्र अधरसान्निध्यासादितारुणिमाविशिष्टमुक्ताफलदर्शनेन गुञ्जाफलस्मरणात्, तत्तयाऽऽरोपे भ्रान्तिमान् इति द्वयोः हेतुहेतुमद्भावः प्रतीयते।

## विस्तारिका

सङ्करमाह-अविश्रान्तीति। आत्मनि आत्ममात्रेऽविश्रान्तिजुषामलङ्काराणामङ्गाङ्गिभावः सङ्करनामलङ्कार इत्यर्थः।

व्याचष्टे—एत एव इति विश्रान्तीत्यस्य विवरणम्। स्वतन्त्रभावा इति। स्वातन्त्र्यं चेतरसजातीयासहकारेण चमत्कारासाधारणप्रयोजकत्वम्। परस्परेति। कस्यचिदनुग्राह्यत्वम्, कस्यचिदनुग्राहकत्वमित्यर्थः। यद्वा स्वरूपयोग्यतापदमुभयत्रैवान्वेति। फलोपधाने तु कस्यचित् किञ्चिदिति भावः। पदार्थं व्याचष्टे-सङ्कीर्यमाणेति।

आत्त इति। अत्र सीमन्तत्वे इत्यनेन चिकुरसम्बन्धेनादाने विलम्बाभावः। मरकतिनीत्यनेन हेमताटङ्कहरणे विलम्बाभावः, अन्यथा देहकान्त्यभिभवाद् ज्ञायेतैव, न कुत आदानमिति व्यज्यते। बिम्बोष्ठकान्त्येत्यनेन मुखस्य नम्रत्वम्। तेन चारोप्यस्यासान्निध्येन भ्रमस्य गृह्यमाणारोपत्वमुत्कटत्वंव्यज्यते।

अत्रेति। 'शोणं बिम्बोष्ठकान्त्या' इत्यत्र तद्गुणः। 'गुञ्जाफलानां स्रजः' इत्यत्र भ्रान्तिमान्। अत्राधरसान्निध्यासादितारुणिम्ना भुक्ताफलं दर्शनेन।गुञ्जाफलानां स्मरणात् तदारोपे भ्रान्तिमानित्यनयोर्हेतुमद्भावः प्रतीयते। तदाश्रयणेनेति तन्निर्वहिणेत्यर्थः।

एतच्च प्रकृताभिप्रायेण, अन्यत्रान्यानुपष्टम्भकस्यापि तद्गुणस्य चमत्कृतिनिमित्तत्वादिति। तदाह—सचेतसामिति। तथा च प्रकृते तथैवानुभावदिति भावः।

## सारबोधिनी

सङ्करालङ्कारमाह अविश्रान्तीति। आत्मन्यात्ममात्रेऽङ्गाङ्गित्वमनुग्राह्यानुग्राहत्वत्वं तद्भूः सङ्कर इत्यर्थः। अविश्रान्तीत्यस्य विवरणं अनासादितस्वतन्त्रभावा इति। स्वातन्त्र्यञ्चाविजातीयासहकारेण चमत्कारासाधारणप्रयोजकत्वम्। एतेन संसृष्टेर्भेदा दर्शिताः।

आत्ते इति। ताटङ्कः कर्णालङ्कारभेदः। लुप्तायां छिन्नायाम्, लुप्तृछेदने इति धात्वनुसारात्। तुलाकोटिर्नूपुरम्। अत्रेति। शोणं बिम्बोष्ठकान्त्येति। अत्र तद्गुणवशेन गुञ्जाफलानामित्यत्र भ्रान्तिमान्।

## काव्यप्रदीपः

**अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः।**

तेषामेवालंकाराणां चारुत्वार्थं स्वरूपनिष्पत्तये वान्यापेक्षणादात्मन्यनासादितस्वतन्त्रभावानां परस्परमनुग्राह्यानुग्राहकत्वं स तु संकरः। संकीर्यमाणस्वरूपत्वात्। उदाहरणम्—

**'आत्ते सीमन्तरत्ने मरकतिनि हते हेमताटङ्कयुग्मे**
**लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।**

**शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये**
**राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति॥'**

अत्र बिम्बोष्ठकान्त्या शोणमिति तद्गुणमपेक्ष्य गुञ्जाफलानां स्रज इति भ्रान्तिमानात्मानं लभते। तद्गुणोऽप्यत्र न स्वातन्त्र्येण चमत्कारविशेषं करोति किं तु भ्रान्तिमदपेक्षयैवेति परस्परमनुग्राह्यानुग्राहकभावः। अत्र द्वयोरलंकारयोः संकरः।

## काव्यप्रकाशखण्डनम्

**अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः। (का. १४०, पू०)**

आत्मनि आत्ममात्रेऽविश्रान्तिजुषां अङ्गाङ्गित्वं अनुग्राह्यानुग्राहकत्वं तद्रूपः सङ्कर इत्यर्थः। इतरविजातीयसहकारेण चमत्कारकारित्वम्। एतेन संसृष्टेर्भेदो दर्शितः। यथा—

**आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे**
**लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।**
**शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणमरण्ये**
**राजन्! गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति॥**

आत्ते गृहीते सीमन्तरत्ने शिरोऽलङ्काररत्ने मरकतिनि मरकतयुक्ते हेम्नः सुवर्णस्य ताटङ्कपत्रे त्रोटीति प्रसिद्धे हृते सति, मेखलायां क्षुद्रघण्टिकायां लुप्तायां गृहीतायां झटिति शीघ्रं मणेः रत्नस्य तुलाकोटिर्नूपुरं तद्युग्मे गृहीते सति, हे राजन्! त्वच्छत्रुस्त्रीणां अरण्ये वने इत्वरीणां गमनशीलानां हारं शबरा भिल्ला न हरन्ति गृह्णन्ति। कीदृशम्? बिम्बप्रायस्यौष्ठस्य कान्त्या रुचा शोणं रक्तं गुञ्जाफलानां स्रज इति बुद्ध्येत्यर्थः। अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं तदाश्रयणेन तद्गुणः प्रभूतचमत्कारनिमित्तमित्येतयोरङ्गाङ्गिभावः। एवं रूपः सङ्करः शब्दालङ्कारयोरपि दृश्यते। उदाहरणं स्वयमवगन्तव्यम्।

## आदर्शः

अलङ्कारयोरङ्गाङ्गिभावरूपं सङ्करमाह—अविश्रान्तीति। विश्रान्तिः स्वातन्त्र्यम्, आत्मनि तदभावजुषामस्वतन्त्राणामित्यर्थः। सङ्कर इत्यत्र एक इति शेषः, सङ्करान्तरस्य वक्ष्यमाणत्वात्।

आत्ते इति। हे राजन्, अरण्ये इत्वरीणामटन्तीनां त्वदरिमृगदृशां सीमन्तरत्नादौ आत्ते गृहीतेऽपि शबराः किराता हारं नैव हरन्तीत्यन्वयः। अहरणे हेतुमाह—गुञ्जेति। गुञ्जाफलसम्भ्रमे हेतुमाह—शोणमिति। मरकतिनि मरकतयुक्ते। पूर्वापरयोर्द्वयोरेवेदं विशेषणम्। ताटङ्कपत्रं कर्णभूषणविशेषः। मणितूलाकोटिर्मणियुक्तो नूपुरः। अत्रेति। तद्गुणो हारेण बिम्बोष्ठशोणिमग्रहणम्। तमपेक्ष्येति, स्वकारणत्वात्तदपेक्षा। 'भ्रान्तिमता' गुञ्जाफलभ्रान्तिमता। तदाश्रयेण चेति। तादृशभ्रान्त्यजनने हारशोणत्वकथनस्य चमत्कारानर्हत्वादिति भावः। एतयोरङ्गाङ्गिभाव इति। तद्गुणस्य भ्रान्तिजनकत्वेन भ्रान्तिमदङ्गत्वम्, भ्रान्तिमतश्च तद्गुणचमत्कारित्वजनकतया तद्गुणाङ्गत्वमित्यर्थः।

## सुधासागरः

एत एवेत्यादि। अविश्रान्तीत्यस्य विवरणमनासादितस्वतन्त्रभावा इति। अङ्गाङ्गित्वमनुग्राह्यानुग्राहकभावः। यत्तु श्रीवत्सलाञ्छनभट्टाचार्यैरुक्तं स्वातन्त्र्यं चेतरसजातीयासहकारेण चमत्कारासाधारणप्रयोजकत्वम्

इति। तन्न रमणीयम्। एतादृशस्वातन्त्र्यस्याङ्गिभूतालङ्कारे जागरूकत्वात्, किन्तु स्वातन्त्र्यमन्यनिरपेक्षत्व मेव। अन्यापेक्षा चाङ्गस्य चारुत्वार्थम्,अङ्गिनस्तु स्वरूपसिद्ध्यर्थम्। अत एवाङ्गाङ्गिभावः सङ्गच्छते इति तत्त्वम्। एवं चोक्तानामेवालङ्काराणां चारुत्वार्थं स्वरूपनिष्पत्तये वाऽन्यापेक्षणादात्मन्यनासादितस्वतन्त्रभावानां यत्परस्परमनुग्राह्यानुग्राहकत्वं स तु सङ्करः, सङ्कीर्यमाणस्वरूपवादित्यर्थः। उदाहरणम्—आत्त इति।

हे राजन् शबराः भिल्लाः अरण्ये निर्जने वने इत्यवरीणां पलाय्य गच्छन्तीनां त्वदरिमृगदृशां मरकतं गारुत्मतमस्यास्तीति मरकति तस्मिन् मरकतिनि सीमन्तचिन्हे केशपाशभूषणे गृहीते सति मेखलायां क्षुद्रघण्टिकायां लुप्तायां छिन्नायां सत्यां 'लुप्लृच्छेदने' इति धातुः। झटिति शीघ्रं मणितुलाकोटियुग्मे रत्नजटितपादकटकद्वये गृहीते सति, बिम्बोष्ठकान्त्या शोणं रक्तं हारं मुक्तादाम गुञ्जाफलानां स्रज इति बुद्ध्या नै हरन्तीत्यर्थः। स्रग्धरा छन्दः। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात्।

यथा वा

**जटाभामिर्भाभिः करधृतकलङ्काक्षवलयो**

**वियोगिव्यापत्तेरिव कलितवैराग्यविशदः।**

**परिप्रेङ्खत्तारापरिकरकपालाङ्किततले**

**शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥ ५७१ ॥**

उपमा रूपकम् उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाङ्गितया प्रतीयन्ते।

---

**सङ्केतः**

जटेति। करौ रश्मि-हस्तौ। वैराग्यं लौहित्याभावोऽपि। अत्र जटाभामिरित्युपमा। वलय इति रूपकम्। व्यापत्तेरिवेत्युत्प्रेक्षा। वैराग्येति श्लेषः। कपालेति रूपकम्। तद्धेतुः अङ्किततले इति समानो धर्मः। पितृवन इवेति उपमायाः चमत्कृतिहेतुः। भस्मनेवापाण्डुः इत्युत्प्रेक्षा। अत्र श्लेषस्योपकारिणी उपमा। समुत्थापकत्वात्। श्लेषोऽपि रूपकोत्प्रेक्षयोरुपकारी। एतैः सर्वैरप्युपकृता सती उपमा चमत्करोति।

**बालचित्तानुरञ्जनी**

उदाहरणान्तरमाह जटेति। जटाभाभिः जटातुल्यैर्भाभिः किरणैः। करधृतकलङ्काक्षवलयः। करो रश्मिः पाणिश्च, वियोगिव्यापत्तेरिव कलितवैराग्यविशदः। वैराग्यं विषयव्यावृत्तिः। विरागता। भस्मापाण्डुः शशी पितृवनस्योपरि प्रेङ्खत्तारापरिकरकपालाङ्किततले व्योम्नि चलति। अत्र जटाभाभिरित्यार्थी उपमा करवैराग्यश्लेषस्याङ्गतां भजते।

**काव्यादर्शः**

'जटाभामिः' इति। 'करा रश्मयः, करः पाणिश्च। वैराग्यं लौहित्यविगमो विषयवैतृष्ण्यं च'। अत्र उपमा। 'कलङ्काक्षवलयः' इति रूपकम्। 'व्यापत्तेरिव' इति उत्प्रेक्षा। 'कलितवैराग्ये' इति श्लेषः। 'तारापरिरकपाल' इत्यत्र रूपकम्। 'अङ्किततले' इति तु साधारणो धर्मो रूपकहेतुः। 'भस्मनेव पाण्डुः' इति उत्प्रेक्षा। 'पितृवने' इति तु उपमाचमत्कृतिहेतुः। पूर्ववदिति। तथा ह्यत्र उपमा श्लेषस्य उत्थापकतया उपकारिणी। श्लेषोऽपि तथैव रूपकोत्प्रेक्षायाः। तैस्तु समस्तैः साक्षात् पारंपर्येण च यथासंभवमुपमा उपकृता। तदुपकृतैव सा सचेतसां चमत्कृतिं करोति।

## विवेकः

न केवलं द्वयोरेवालङ्कारयोर्यावद्बहूनामप्येवं संङ्करो भवतीत्युदाहरति जटाभिरित्यादि—लक्षणे तृतीया। "कराः रश्मयः, करश्च पाणिः।

व्यापत्तिनिंधनं, वैराग्यं लौहित्यापगमो विषयवैतृष्ण्ञ्च।" (रु. सं. ७२ पृ.) भस्मनेवापाण्डुः।

चत्वारोऽत्र पूर्ववदिति—"तथा ह्यत्रोपमा श्लेस्योत्थापकतयोपकारिणी, श्लेषोऽपि तथैव रूपकोत्प्रेक्षयोः,

## दीपिका

भाभिरिति विशेषणे तृतीया। करो रश्मिः हस्तश्च। अक्षवलयो मण्डलाकारग्रथितरुद्राक्षबीजानि। वियोगिव्यापत्तेरिति मुहुर्मुहुर्भाविताया इति ज्ञेयम्। वैराग्यमुदयदशादृष्टलौहित्यत्यागो निर्वेदश्च। विशदः शुक्लः प्रशान्तचेतो विकारश्च। परिकरः समूहः भस्मापाण्डुरिति लुप्तोपमा तृतीयया च तत्पुरुषः। पितृवने श्मशाने।

## दर्पणः

लुप्तायां च्छिन्नायाम्, तुलाकोटिर्नूपुरः इत्वरीणां गमनशीलानां। भाभिरिति शेषणे [करणे] तृतीया। करः किरणः हस्तश्च। वैराग्यं शोभणनारिगमः [?] निर्वेदश्च विष्वादः। श्वेतवर्णः निर्मलाशयश्च। भस्मवदापाण्डुः भस्मला आपाण्डुश्च। पितृवने श्मशाने। अत्र जटाभाभिरित्यत्र, भस्म पाण्डुरित्यत्र च उपमा, कलङ्का क्षवलय इत्यत्र परिकरं, कपालेति च रूपकम्, वियोगिव्यापत्तेरिवेत्युत्प्रेक्षा। पितृवन इवेत्यत्राप्युत्प्रेक्षेति। केनचित् करधृतेत्यत्र वैराग्यं विषाद इत्यत्र च श्लेषः। एवमत्र चत्वारोऽलङ्काराः कण्ठोक्ताः। शशिनि तिरयति व्यवहारासमारोपात् सर्वेषाममीषां चारुत्वोत्कर्षहेतुरङ्गीभूता पंच समासोक्तिः अङ्गाङ्गिभावतया प्रतीयन्त इति। तथाहि उत्प्रेक्षा वैराग्यविषाद इति। श्लेषो उत्पत्तिहेतुस्तदनुसंधानदेवार्थान्तरप्रतीतेः श्लेषस्वरूपकोपमेयोत्पत्तेर्निमित्तं निर्वेदप्रतीतिरेव निज शयघनयधावणप्रतीतिः [?]

## साहित्यचूडामणिः

(भस्मापाण्डुः) ईषद्भस्मना पाण्डुरित्यर्थः। एषु च पूर्वपूर्वस्याङ्गत्वम् उत्तरोत्तरस्याङ्गित्वम्। अङ्गस्याङ्गिनं प्रति चमत्कारोत्कर्षकारित्वप्रयोजकत्वं पर्यालोचनीयम्।

## सम्प्रदायप्रकाशिनी

शब्दार्थलङ्कारगतत्वेनाह—जटाभाभिरिति। आभाभिः सदृशीभिः। व्यापत्तेर्व्यापादनात्। विशदः शुचिः। भस्मवदापाण्डुः भस्मना च।

योजयति—उपमेत्यादि। भस्मापाण्डुः पितृवन इवेत्युपमा। कलङ्काक्षवलयेति रूपकम्। वैराग्यविशदेत्युत्प्रेक्षा। करेति श्लेषः। एषां परस्परमङ्गाङ्गिता। योजयति—उपमेयत्यादि।

पूर्ववत् परस्परम्।

### मधुमती

जटाभाभिरिति । करः रश्मिः पाणिश्च । वैराग्यं विगतरागता विषयव्यावृत्तत्वं च । अत्रेति । जटाभाभिरित्युपमालङ्कारः करवैराग्यश्लेषस्य अङ्गतां भजते । जटावत एव पाणिविषयव्यावृत्तत्वसम्बन्धयोग्यत्वात् । श्लेषालङ्कारोऽपि कलङ्क एवाक्षवलयः इति रूपकस्य अङ्गताम्, करधृतत्वस्यैवरूपकसाधकत्वेन अभिधास्यमानत्वात्; तच्च न केवलं रूपकस्याङ्गम्, अपि तु वियोगव्यापत्तेरिव इति उत्प्रेक्षाया अपि इति द्रष्टव्यम्; रश्मेः वियोगव्यापत्ति हेतुत्वयोग्यत्वात् । पितृवन इव इत्युपमायास्तु सर्वेऽप्युपकारकाः ।

### विस्तारिका

जटाभाभिरिति । करो रश्मिः पाणिश्च । वैराग्यं वीतरागता विषयव्यावृत्तिश्च । तत्र हेतुः-वियोगिव्यापत्तेरिति । वियोक्तुं शीलं येषां ते वियोगिनो विषया इत्यर्थः । तेषां व्यापत्तेर्नाशादित्यर्थः । विशदः पाण्डुरः शुद्धचित्तश्च । परिकरः समूहः । तलपदं स्वरूपार्थकम्, भस्मापाण्डुः भस्मना आपाण्डुः, भस्मेव आपाण्डुश्च ।

अत्रेति । जटाभाभिर्भाभिरित्युपमाया वियोगिव्यापत्तेरिवेत्युत्प्रेक्षाया अपि श्लेषोऽङ्गम् । रश्मेर्वियोगिव्यापत्तिमदयोग्यत्वात् पितृवन् इवेत्युपमायाः सर्वेऽप्युपकारकाः ।

### सारबोधिनी

न केवलं द्वयोरेव बहूनामपि सङ्करो भवतीत्याह जटाभाभिरिति । अत्र चन्द्रव्यवहारे महाव्रतिकत्वारोपरूपायाः समासोक्तेरुपमादयोऽङ्गानीत्याह उपमेति । करो रश्मिः पाणिश्च । वैराग्यं विषयगतरागिता विषयव्यावृत्तिश्च । तत्र हेतुर्वियोगिव्यावृत्तेरिति । वियोक्तृं शीलं येषां ते वियोगिनो विषयविरहिणश्च तेषां व्यापत्तेर्नाशादित्यर्थः । विशदः पाण्डरः, शुद्धचित्तश्च । परिकरः समूहः । तलपदं स्वरूपार्थकम् । अधः स्वरूपयोरस्त्री तलमित्यमरात् ! भस्मना पाण्डुर्भस्मेव पाण्डुश्च अत्रेति । जटाभाभिरित्युपमालङ्कारः करवैराग्यशब्दयोः श्लेषयोरङ्गतां भजते । जटाविषय एव पाणिविषयव्यावृत्तत्वयोग्यत्वात् श्लेषोऽपि च कलङ्क एवाक्षवलय इति रूपकस्याङ्गतां भजते ।

### काव्यप्रदीपः

बहूनामपि यथा—

**जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो**
**वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।**

**परिप्रेङ्खत्तारापरिकरकपालाङ्किततले**
**शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ।।'**

अत्र जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति चोपमा । कलङ्काक्षवलयेति तारापरिकरकपालेति च रूपकम् । वियोगिव्यापत्तेरिवेत्युत्प्रेक्षा । वैराग्यविशद इति श्लेषः । चत्वारोऽप्येते परस्परमङ्गाङ्गिभावेन प्रतीयन्ते ।

तत्रोत्प्रेक्षा श्लेषाङ्गम्। तद्वशादेव वैराग्यविशद इत्यत्र द्वितीयार्थानुसंधानात्। श्लेषश्च रूपकोपभयोरङ्गम्। तद्वशादवगतनिर्वेदमहिम्नैव जटाया अक्षवलयधारणस्य च संगतेः। तारापरिकरकपालेति। रूपकं पितृवन इवेत्युपमाया अङ्गम्। तद्बीजं हि सादृश्यम्। न च श्मशाने व्योम्ना सह तत्साहजिकं किं तु रूपितकपालाश्रयत्वेनैवेति। सर्वत्र चाङ्गिनां चारुत्वार्थमङ्गापेक्षा पूर्ववदूहनीया। सर्वेषां चैषां पार्यन्तिकचारुत्वहेतुरङ्गिभूता च समासोक्तिः। चन्द्रगतत्वेन महाव्रतवृत्तान्तप्रतीतेः। सा च व्यक्तैवेति प्रकाशकृता नोक्तेत्यवधेयम्।

## आदर्शः

इत्थमलङ्कारद्वयस्याङ्गाङ्गिभावमुक्त्वा बह्वलङ्काराणामपि तथात्वमुदाहरति—यथा वा जटाभाभिरिति। पितृवने श्मशान इव व्योम्नि शशी चरति। व्योम्नः श्मशानतुल्यत्वे हेतुमाह—परिप्रेङ्खदिति। परिप्रेङ्खन् चलन् यस्तारासमूहः स एव कपालानि भग्नभाण्डावयवास्तदङ्कितत्तले। तलं स्वरूपम्, तदङ्कितस्वरूपे इत्यर्थः। अत्र श्मशानतुल्यव्योमचरत्वेन शशिनः श्मशानचारिकापालिकतुल्यत्वं व्यङ्ग्यम्, अतः कापालिकतुल्यानि विशेषणानि शशिन आह—जटाभाभिरिति, जटातुल्यदीप्तिभिः। भाभी रश्मिभिर्विशिष्ट इत्यर्थः। विशेषणतृतीया। कापालिकस्यापि जटाऽस्ति। करो रश्मिः करो हस्तः, तेन धृतः कलङ्क एवाक्षवलयं येन तादृशः। कापालिकस्यापि हस्तधृताक्षवलयत्वमस्ति। तथा कलितं प्राप्तं यद् वैराग्यम् उदयकालीनं रक्तिमशून्यत्वं तदेव वैराग्यं विषयविरक्तता तेन विशदः विशदः शुभ्र एव विशदो निष्पापः। विषयवैराग्यकलने हेतुमुत्प्रेक्षते—वियोगीति। व्यापत्तिर्व्यापादनं तस्मादिव, वियोगोद्दीपकत्वेन वियोगिव्यापादनात् तत् पापेनेव वैराग्यकलनमित्यर्थः। कापालिकस्यापि विषयवैराग्यकलनमस्ति। तथा भस्मनेवाऽऽपाण्डुः। कापालिकस्यापि भस्मनापाण्डुत्वमस्ति।

अत्रालङ्काराणां परस्पराङ्गाङ्गिभां ग्राह्यति—उपमेति। पितृवन इवेत्यत्र जटाभाभिरित्यत्र चोपमा। तथा च शशिनि व्यङ्ग्यकापालिकोपमानिष्पत्तिस्तया च तस्याश्चमत्कारित्वम्, कापालिकोपमाऽलाभे पितृवनाद्युपमाया वैचित्र्याभावात्। एवं 'करधृते' त्यत्र 'कलङ्काक्षे'त्यत्र 'तारापरिकरकपाले' त्यत्र च रूपकं तेन च व्यङ्ग्यकापालिकोपमाचमत्कारः, कापालिकोपयुक्तत्वात्तस्य ।तथा करधृतेत्यज हस्तरूपणेनाक्षवलयरूपणस्य, तेन च कररूपणस्य चमत्कारः। तथा वियोगीत्यत्र भस्मपाण्डुरित्यत्र चोत्प्रेक्षा। 'करे' त्यत्र 'वैराग्ये'त्यत्र 'विशद' इत्यत्र च श्लेषस्तेन च रूपकोत्प्रेक्षयोर्निष्पत्तिस्ताभ्याञ्चस्व चमत्कारित्वमित्यर्थः।

## सुधासागरः

अत्रेत्यादि। अत्र बिम्बोष्ठकान्त्या शोणमिति तद्गुणमपेक्ष्य 'गुञ्जफलानां स्रज' इति भ्रान्तिमानात्मानं लभते, तद्गुणोऽप्यत्र न स्वातन्त्र्येण चमत्कारविशेषं करोति, किन्तु भ्रान्तिमदपक्षयैवेति परस्परमनुग्राह्यानुग्राहकभाव इत्याशयः। अत्र द्वयोरलङ्कारयोः सङ्करः। बहूनामपि यथा—'जटाभे'-ति।

भाभिरित्युपलक्षणे तृतीया, करो रश्मिः पाणिश्च वियोगिनो विरहिणः विगतयोगाभ्यासश्च, व्यापत्तिर्मरणं चन्द्रदर्शनात् तत्त्वज्ञानाभावाच्च वैराग्यं रक्तपीतादिरागत्यागाद् विगतरागिता विषयव्यावृत्तिश्च, विशदः पाण्डुरः शुद्धचित्तश्च, तलं स्वरूपम् 'अधः स्वरूपयोरस्त्री तलम्' इत्यमरः। भस्मना पाण्डुर्भस्मेव पाण्डुश्च। स्पष्टमन्यत्।

उपमेत्यादि । अत्र जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति चोपमा । कलङ्काक्षवलयेति तारापरिकर कपालेति च रूपकम् । वियोगिव्यापत्तेरिवेत्युत्प्रेक्षा, वैराग्यविशद इति श्लेषः, चत्वारोऽप्येते परस्परमङ्गाङ्गिभावेन प्रतीयन्ते । तत्रोत्प्रेक्षा श्लेषाङ्गम्, तद्वशादेव वैराग्यविशद इत्यत्र द्वितीयार्थानुसन्धानात् । श्लेषश्च रूपकोपमयोरङ्गम्, तद्वशावगतनिर्वेदमहिम्नैव जटाया अक्षवलयधारणस्य च सङ्गतेः । तारापरिकरकपालेति रूपकं पितृवन इवेत्युपमाया अङ्गम्, तद्बीजं हि सादृश्यम्, न च श्मशाने व्योम्ना सह तत्साहजिकं किन्तु रूपितकपालाश्रयत्वेनैवेति । सर्वत्र चाङ्गानां चारुत्वार्थमङ्ग्यपेक्षा पूर्ववदूहनीया । सर्वेषां चैषां पार्यन्तिकचारुत्वहेतुरङ्गिभूता च समासोक्तिः, चन्द्रगतत्वेन महाव्रतिवृत्तान्तप्रतीतेः । सा च व्यक्तैवेति वृत्तिकृद्भिर्नोक्तेत्यवधेयम् ।

कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करघृतत्वमेव साधकप्रमाणतां प्रतिपद्यते। अस्य हि रूपकत्वे तिरोहितकलङ्करूपम् अक्षबलयमेव मुख्यतयावगम्यते तस्यैव च करग्रहणयोग्यतायां सार्वत्रिकी प्रसिद्धिः। श्लेषच्छायया तु कलङ्कस्य करधारणम् असदेव प्रत्यासत्त्या, उपचर्य योज्यते शशाङ्केन केवलं कलङ्कस्य मूर्त्यैव, उद्वहनात्। कलङ्कोऽक्षवलयमिवेति तु, उपमायां कलङ्कस्य, उत्कटतया प्रतिपत्तिः। न चास्य करधृत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्।

---

### सङ्केतः

कलङ्काक्षेत्यत्र किमुपमया? रूपकेण वा समासः स्यात् इत्याह—कलङ्क एवेति। श्लेषच्छायाश्रयेण चन्द्रोऽपि करैः कलङ्कधार्येव। परं न मुख्यतया वृत्त्या इत्याह—श्लेषेति। चन्द्रबिम्बे कराः कलङ्कश्चेति कराः कलङ्कश्चेति प्रत्यासत्तिः। न चास्येति। अस्य कलङ्कस्य। मुख्येऽपीति। उपमापक्षे कलङ्के। उपाचर एवेति। उपाचारस्य अगतिकगतित्वात् नाङ्गीकारः।

### सङ्केतः (रुय्यकः)

पूर्ववदिति—तथा ह्यत्र उपमा श्लेषस्योत्थापकतयोपकारिणी, श्लेषोऽपि तथैव रूपकोत्प्रेक्षयोस्तैस्तु समस्तैः साक्षात् पारम्पर्येण च यथासम्भवमुपमोपकृता, तत्समकक्षतया एवं तस्याः सचेतसां प्रचुरचमत्कृतिहेतुत्वात्। मुख्येऽपीति—उपमापक्षे कलङ्क उपचार एवेति न तदाश्रयणं युक्तं, तस्यागतिकगतित्वात्। अतिपातिनो जवेन व्रजन्तः सारावाः सशब्दाः नदा यत्र तादृशीयं तटी भासते। अभिहतो दानवानां रासः सिंहनादो येनेति शंभोः सम्बोधनम्। सा चेयं गजसंहतिः यूथमतिपाति विशेषेण परित्रायते। अविस्तेन सन्ततेन दानेन मदेन वरा श्रेष्ठा, सारा स्थिरा, वनं दयते रक्षति या (दा) देङ् रक्षणे, अवनं रक्षणं ददाति या।

### बालचित्तानुरञ्जनी

अयं श्लेषालङ्कारोऽपि कलङ्क एवाक्षवलयमिति रूपकस्याङ्गतां भजते। अयं रूपकालङ्कारः वियोगिव्यापत्तेरित्युत्प्रेक्षाया अङ्गम्। पितृवन इवेति तु शाब्दी उपमा सर्वत्रोपकरोति। इति चतुर्णामङ्गाङ्गिभाव इत्याह उपमेति। ननु कलङ्कोऽक्षवलय इवेत्युपमितिसमासः किमिति न भवति व्याघ्रादानामाकृतिगणत्वादित्याह कलङ्कोऽक्षवलय इवेति। समासे उपमायां कलङ्कस्य प्राधान्येन प्रतीयमानत्वात्। नास्य करधृतयोग्यता न स्यात्। रूपके तु अक्षवलयस्य प्राधान्यात् तस्य करधृत्वं घटत इति रूपकमेवाङ्गीकर्तव्यमिति भावः। अनुकरैः रश्मिभिः धृतकलङ्कश्चन्द्र इति समाश्रयणे कलङ्कस्य करवरणं भवद्भिरपि स्वीकृतमेवेत्याशङ्क्याह श्लेषेति। शशाङ्कश्च करधृतकलङ्कश्चेति प्रत्यासत्तेः। करवरणोपचार इति भावः। उपमितसमासे तु उपचार एव शरणमिति प्रतिपादयितु कलङ्क इति।

### काव्यादर्शः

कलङ्कोऽक्षवलयमिवेति समासोपमायां कलङ्कस्य उपमेयस्य प्राधान्यं प्रतीयते । न च कलङ्कस्य करधृतत्वयोग्यता । 'कलङ्क एवाक्षवलयम्' इति तु रूपके वलयस्यैव उपमानस्य प्राधान्यम् । अक्षवलयस्य च करधृतत्वयोग्यतैव रूपकपरिग्रहे साधकं प्रमाणमित्याह—कलङ्क एवेति, न तु 'करैरश्मिभिर्धृतकलङ्कश्चन्द्रः' इति । श्लेषच्छाययेति । प्रत्यासत्त्येति । शशाङ्कतनौ कराः कलङ्काश्चेति प्रत्यासत्तिः मुख्येऽपीति । उपमापक्षे कलङ्के उपचार एवेति । न च तदाश्रयणं युक्तं, तस्य अगतिकगतित्वात् ।

### विवेकः

तैस्तु समस्तैः साक्षात् पारम्पर्येण च यथासम्भवमुपमोपकृताया एव तस्याः सचेतसामतिशयेन चमत्कृतिहेतुत्वात् । मुख्येऽपीति—उपमापक्षे कलङ्क उपचार एवेति, न च तदाश्रयणं युक्तं, तस्यागतिकगतित्वात्" (रु. सं. ७२ पृ.) । एवं द्वयोरर्थालकारयोर्बहूनाञ्च सङ्कर उदाहृतः ।

### दीपिका

चत्वारोऽत्र पूर्ववदङ्गाङ्गितया प्रतीयन्त इति । उत्प्रेक्षा वैराग्यविशद इति श्लेषोत्पत्तिहेतुः, तदनुसन्धानादेवार्थान्तरप्रतीतेः । श्लेषस्तु रूपकोपमयोरुत्पत्तिनिदानं निर्वेदप्रतीतावेव जटाक्षवलयधारणप्रतीतिसङ्गतेः । चन्द्रगततया महाव्रतिवृत्तान्तप्रतीतिरूपा समासोक्तिः पुनरमीषां सर्वेषामेव पर्यन्तभूता चारुत्वोत्कर्षहेतुः पञ्चमी सुव्यक्तैवेत्यतस्तामनादाय चत्वार इत्युक्तम् । ननु कलङ्काक्षवलय इति रूपकमुपमा वेति सन्देहात् कथमैकान्तिको रूपकव्यपदेश इति सन्देहसङ्करोदाहृति रूपोऽयं स्यादित्याह—कलङ्क एवेति ।

कथं पुनः करधृतत्वमित्याह—अस्य हीत्यादि । तिरोहितकलङ्करूपं स्थगितकलङ्कस्वात्मभूतभेदमक्षवलयं कलङ्कतादात्म्यानारोपितम् ।

ननु मा भूद् वलयस्य मुख्यतयाऽवभासः, न हि तेन किञ्चित् कलङ्कमस्तीत्याशङ्क्यान्यथा कलङ्कस्योद्भटत्वप्रतिभासे करधृतत्वमसङ्गतमित्याह—तस्यैवेति । वलयस्यैवेत्यर्थः । ननु कलङ्कस्य करधृत्वमप्रसिद्ध्या यदि नाद्रियते तदा करधृत इत्यादि पदं प्रकृतार्थसम्बद्धमेव स्यात्, तन्त्रे तद्वतोऽक्षबलयस्याभावादित्याह—श्लेषेति । छाया लेशः । करधारणमसदेव रश्मिभिरुद्वहनसम्भवमेव । कथं पुनरिदमित्याह—शशाङ्केनेति । ननूपमापक्षे कलङ्कस्य चन्द्रेणाक्षवलयस्य महाव्रतिना सम्बन्धः सम्भवति । न च धृतत्वं सम्भवति न कलङ्क इति वाच्यम्, तस्य कलङ्काक्षवलयेति समुदायसम्बन्धिनः प्रत्येकसम्बन्धस्यायत्नसिद्धत्वात् । उपचारः पक्षे कष्टदायी नाश्रितः स्यादित्याशङ्क्यते—उपमायामपह्नवेन कलङ्काक्षवलययोः संघटितभावात्मकः समुदायोऽपि न निर्वहतीति कुतः करधृतत्वस्य समुदायसम्बन्धः, कुतस्तरां च तद्द्वारकः प्रत्येकसम्बन्धः । उपचारग्रहश्चात्र केशग्रह इव बिमुञ्चतीत्याह—कलङ्क इत्यादि स्यादित्यन्तम् । उत्कटतया भिन्नतया । मुख्येऽपीत्यतः पूर्वं कलङ्कस्य चन्द्रसम्बन्धे सम्भवितयेति च परतश्च कृत इति शेषः ।

### दर्पणः

कलङ्काक्षवलय [कलङ्क एवाक्षवलय] मित्यत्र रूपकोपमासन्देहसङ्कराशङ्कां निरस्यति लिङ्ग एवेति। [कलङ्क एवेति] करधृतत्वस्य कपकसाधकत्वे [रूपकसाधकत्वे] हेतुमाह स्यकीति [अस्य हीति]। तिरोहित-मधः कृतम्, मुख्यतयावगम्यते अक्षरनये [अक्षवलये] कलङ्कतादात्म्यारोपात्। कलङ्कस्योत्कटतया प्रतीतौ दोषमाह तस्यैवेति। तस्याक्षवलयस्य। नन्वेवं कलङ्कस्य करधृतत्वाभावे कथं काव्यानुसङ्गतिरित्याह श्लेषेति। असदेव रश्मितिरुद्धनस्यासंभवात्[?] प्रत्यासत्या चन्द्रमूर्तेरित्यर्थः उपयुज्यते, न तु अक्षवलय इव तद्वतः मूर्तेव [?] न तु रश्मिभिः उत्कटतया मुख्यतया प्रतिपत्तिः। ततः किमित्याह न चेति। अस्य कलङ्कस्य मुख्येभ्युपचार एव शरणं स्यात् अयमाशयः यत्र विशेष्यस्य विश्लेषणस्य मुख्य गौणाद्यामन्वाभ्यां [?] व्यावृत्तिः। तत्र मुख्ये उपचारवृत्तिर्नोपपद्यते। किन्तु तदितरत्र। एवञ्च कलङ्काक्षवलय इत्यत्र उपमाकल्पनायां कलङ्कस्य मुख्यत्वे कथं तत्र विशेषणमुपचरितार्थम्। उपमानेन चाभिधेयार्थं वर्ततामित्यर्थः। एवंरूपोऽङ्गाङ्गिभावः।

### साहित्यचूडामणिः

ननु किं कलङ्कोऽक्षवलय इवेति कलङ्क एवाक्षवलय इत्युपमारूपकसंशयाकारो द्वितीयः सङ्करोऽयं, तत्रोद्दिष्टानां चतुर्णाम् अङ्गाङ्गिभावो विहन्येत, उभयथापि समाससिद्धेः। "उपमितं व्याघ्रादिभिः सामान्यप्रयोगे" (२-१-५६) इत्युपमायाः समासः। व्याघ्रादीनामाकृतिगणत्वात् "मयूरव्यंसकादयश्च" (२-१-७२) इति रूपकस्य। तेषामपि तथात्वादि'त्याशङ्कायाह—

कलङ्क एवेति। रूपकाङ्गीकारे करधृतत्वं साधनम्। यदा कलङ्कत्वं तिरोधीयते अक्षवलयत्वं चोद्रिच्यते तदा रूपकयोग्यता सार्वत्रिकी। यद्यपि श्लेषेण करैरंशुभिर्धृतत्वमित्युपमायाः रूपकादानुगुण्यं, तथापि करशब्दस्य किरणादपि पाणौ प्रसिद्धिविशेषः पाणिधृतत्वक्षवलयस्यैव सङ्गच्छत इति। यत् पुनरत्र श्लेषेण कलङ्कस्यापि करधृतत्वप्रतीतिः तदक्षवलयसान्निध्यप्रयुक्तं, न मुख्यं, येन मृगाङ्को मूर्त्या कलङ्कं वहति, न तु करेणेत्युपमापक्षेऽप्युप-चार एव शरणमित्याह—कलङ्कोऽक्षवलय इवेति। उपमायां हि कलङ्कस्य प्रतीतिः स्पष्टा अक्षवलयस्य करधृतत्वा-नौचित्यात्।

### सम्प्रदायप्रकाशिनी

ननु कलङ्काक्षवलयेत्यत्रोपमाया एव प्रतिभास इत्यत आह—कलङ्क एवेत्यादि। करधृतत्वं पाणिधृत-त्वम्। रूपकत्वे कोऽतिशयलाभ इत्यत आह—अस्य हीत्यादि। रूपकत्वे कलङ्करूपं तिरोधायाक्षवलयमेव मुख्यतयावगम्यते। तस्यैव करग्रहणयोग्यतायां भूयसी प्रसिद्धिः। प्रसिद्ध्यनुगमोऽतिशयलाभ इति यावत्। कथं तर्हि किरणापेक्षया संगतिरित्यत आह—श्लेषच्छाययेत्यादि। रूपकापेक्षया हि पाणिः प्राक्प्रतीतिकः तदनुग्रहाय तु श्लेषच्छाया। तदा किरणेन धारणं वस्तुतोऽसदेव कलङ्कप्रत्यासत्त्यास्तीत्युपचर्याक्षवलये योज्यते, मूर्त्यैव कलङ्कधारणात्। ननूपचाराश्रयणं चेदुपमायामपि कोऽतिभार इत्यत आह—कलङ्कोऽक्षवलयमिवेति। एवं हि कलङ्कस्योत्कटप्रतीतिकता। न च कलङ्कस्य करधृत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपमाभागे उपचार एव शरणं स्यात्, न केवलममुख्ये श्लेषभागे। यथा हि न वस्तुतः किरणैग्रहः कलङ्कस्य, तथा न पाणिनापि। रूपकपक्षे तु

मुख्येऽक्षवलयस्य पाणिना धृतौ नोपचारः, अपितवमुख्ये श्लेषांशे किरणैरेव कलङ्कस्य। अतः श्लेषस्य शब्दालङ्कारत्वात्। शब्दार्थालङ्कारसङ्करोऽयं रूपकेण।

### मधुमती

ननु कलङ्काक्षवलयः इत्यत्र रूपकोपमासन्देहात् सन्देहात्मा सङ्करः स्यात् इत्याशङ्क्याह—कलङ्क एवेति। कथं करधृतत्वं रूपकसाधकम्? अत आह—अस्य हीति। रूपके आरोप्यस्यैव प्राधान्यादित्यर्थः। तस्यैव अक्षवलयस्यैव। ननु तथापि सादृश्यं विना न रूपकम्, सादृश्यं च न करधृत्वेन, कलङ्के तदभावात्; नापि तदाकारत्वेन, आकारस्यापि भिन्नत्वात् इत्यत आह—श्लेषेति। छाया सामर्थ्यम्। तथा च श्लेषात् रश्मौ उपस्थिते, कलङ्कस्य तद्धृतत्वं उपचर्यते। असत्त्वे हेतुमाह—शशाङ्केनेति। यद्यप्येवमपि—कलङ्के रश्मिधृतत्वम्, अक्षबलये तु पाणिधृतत्वमिति। न साधारण्यम्। तथापि करशब्दवाच्यधृतत्वं समानो धर्मः इति द्रष्टव्यम्। नन्वेवं उपचारावश्यकत्वे उपमायामपि करधृतत्वमसदेव कलङ्के उपचर्यतामित्यत आह—कलङ्क इति। उत्कटतया मुख्यत्वेन। एवं च रूपके अक्षवलयस्य प्राधान्यम्, तत्र च करधृतत्वं प्रसिद्धमेव। रूपकप्रयोजकसादृश्ये तु उपचारः। उपमायां तु कलङ्कस्य मुख्यतया, मुख्ये कलङ्के अङ्गभूते वा अक्षवलये उभयत्रापि रश्मिधृतत्वोपचारः इति लाघवात् रूपकमेवेदम्। तथा च—रूपकबाधकप्रमाणासत्त्वात्, न सन्देहात्मा सङ्करः इति पर्यवसितोऽर्थः।

### विस्तारिका

ननु कलङ्काक्षवलय इत्यत्र रूपकोपमासन्देहात्मा सङ्कर एवेत्यत आह-कलङ्क एवेति। कथं करधृतत्वं रूपकसाधकम्, अत आह—अस्य हीति। उपमानत्वे कलङ्क एव प्राधान्येनावगम्येतेति भावः। तस्यैवेति। अक्षवलयस्यैवेत्यर्थः।

ननु तथापि सादृश्यं विना कथं रूपकम्? न च करधृतत्वमेव सादृश्यम्, कलङ्के तदभावात्। नाप्याकारसाम्यम्, तस्यापि भेदादित्यत आह—श्लेषच्छायेति। छाया सामर्थ्यप्रत्यासत्त्या करशालिचन्द्रवृत्तित्वरूपसान्निध्येनेत्यर्थः। करधारणासत्त्वे हेतुमाह—शशाङ्केनेत्यादि। यद्यपि कलङ्के रश्मिधृतत्वमक्षवलये च पाणिघृतत्वमिति न साधारण्यम्। तेन रूपकायोगः, तथापि करशब्दवाच्यधृतत्वं साम्यमिति रूपकोपपत्तिरिति ज्ञेयम्। फलतः करशब्द एव साधारणो धर्म इति ध्येयम्।

ननूपचारावश्यकत्वे उपमायामप्यसदेव करघृतत्वमुपचर्यताम्, को दोष इत्यत आह—कलङ्क इति। उत्कटतया मुख्यत्वेनेत्यर्थः। तथा च गुणप्रधानयोर्गौण एवोपचारः समुचित इति भावः।

### सारबोधिनी

करधृतत्वस्यैकरूपकसाधकत्वेन वक्ष्यमाणत्वात् वियोगिव्यापत्तेरिवेत्युत्प्रेक्षाया अप्यङ्गं श्लेषः। रश्मेर्वियोगिव्यापत्तिमदयोग्यत्वात्। सर्वे पितृवन इवेत्युपमाया उपकारकः। ननु कलङ्कोऽक्षिवलयमिवेत्युपमितिसमासो न कुत इत्यत आह कलङ्क एवाक्षवलयमित्यादि। कथं करधृतत्वं स्वरूपसापेक्षमत आह मुख्यतयेति। उपमितसमासे कलङ्क एव प्राधान्येनावगम्यते अक्षवलयं तूपसर्जनतया। एवं च कलङ्कस्य करधृतत्वं न क्वापि प्रसिद्धमिति भावः। तस्यैवाक्षवलयस्यैव। ननु तथापि सादृश्यं विना कथं रूपकं, न च करधृतत्वमेव सादृश्यं कलङ्के

तदभावात्। नाप्याकारसाम्यं तस्यापि भेदादित्याह श्लेषच्छाययेति। छाया सामर्थ्यम्। अथवा श्लेषच्छाया न श्लेषः एकस्याप्रकृतत्वात्। प्रत्यासत्त्या करशालिचन्द्रवृत्तित्वरूपसांनिध्येनासत्त्वे हेतुः। शशाङ्केनेत्यादि। यद्यप्येवमपि कलङ्के रश्मिधृतत्वं अक्षवलये च पाणिधृतत्वमिति न साधारण्यं, तथापि करशब्दवाच्यधृतत्वं फलतः करशब्द एव साधारणो धर्म इति ध्येयम्। उपमितसमासेऽप्युपचार एव शरणमिति प्रतिपादयितुमाह कलङ्कोऽक्षवलयमिवेत्यादिकलङ्कस्योत्कटतया। मुख्येति। उपमितसमासे कलङ्को मुख्यः। तथा च गुणप्रधानयोर्गेण एवोपचारः। समुचित इति। रूपकमेव साधीय इति भावः।

## काव्यप्रदीपः

ननु कलङ्काक्षवलयेति कथमेकान्ततो रूपकमुच्यते। उपमाया अपि संभवेन संदेहसंकरौचित्यादिति चेत्, न। रूपकपरिग्रहे करधृतत्वमेव साधकं प्रमाणमतः संदेहस्याभावात्कथमस्य साधकत्वमिति चेत्, इत्थम्—करधृतत्वरूपविशेषणस्याक्षवलय एव सार्वत्रिकी प्रसिद्धिः, न तु कलङ्के, अतः प्राधान्येनाक्षवलयप्रतीतिरेवोद्देश्य। सा च रूपकपरिग्रहेणैव संभवति। तत्र तिरोहितकलङ्करूपमक्षवलयत्वमेव मुख्यतयावगम्यते। नन्वेवमपि विशेषणमिदमसम्यगेव। चन्द्रपक्षे किरणेन कलङ्कधारणस्याभावात् मूर्त्यैव तेन तद्धारणादिति चेत्, न। श्लेषच्छायया हि कलङ्कस्याप्रधानस्य करधारणमसदेव प्रत्यासन्नतयोपचर्य योज्यते। तथा सत्यमुपरिग्रहे को दोष इति चेत्, कलङ्कोऽक्षवलयमिवेत्युपमायां कलङ्कस्य प्रधानत्वेन प्रतीतिः। न चास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्। मुख्यविषयोपचारापेक्षया चामुख्योपचार एव श्रेयनिति रूपकमेवाश्रीयते।

## आदर्शः

ननु कलङ्काक्षवलय इत्यत्र कलङ्कोऽक्षवलयमिवेत्युपमासमासस्यापि सम्भवात् सन्देहसङ्कर एव, कथमनुग्राह्यानुग्राहकभावसङ्कर इत्यत्रोपमां तत्र निस्यति—कलङ्क एवाक्षेति। करधृतत्वस्य कथं रूपकसाधकतेत्यत्राऽऽह—अस्य हीति। रूपके हि रूप्यमाणमक्षवलयमेव विशेष्यतयाऽवगम्यमानं करधृत्वविशेषणान्वयि भवति, कलङ्करूपता च कलङ्कस्य करधृतत्वविशेषणानन्वयितयाऽपलपितस्वरूपा भवतीत्यर्थः। मुख्यतयेति। धरणक्रियान्वयितया मुख्यता। ननूपमैवाऽऽस्ताम्, तथा च कलङ्क एव विशेष्यतया करधृतत्वान्वयी स्यादित्यत आह—तस्यैव चेति। कलङ्के करधरणस्य प्रसिद्ध्यभावादित्यर्थः। ननु रूपकपक्षेऽक्षवलयस्यैव करधृतत्वान्वयित्वेन कथं कलङ्केऽपि करधरणमनुभूयत इत्यत आह—श्लेषच्छायया त्विति। रूपकनिर्वाहकत्वेन करपदश्लेषस्य न श्लेषालङ्कारत्वम्, अत आह—श्लेषच्छायया त्विति। तथा कलङ्कस्य करधरणं हस्तधरणमसदेवासत्यमेव उपचर्य योष्यत इत्यर्थः। उपचारे हेतुमाह—प्रत्यासत्त्येति। हस्तवाचकरपदवाच्यरश्मिसामानाधिकरण्यमेव प्रत्यासत्तिः।

ननु रश्मिनैव ध्रियमाणस्य कलङ्कस्य कथं करधरणोपचारः, साक्षादेव रश्मिरूपकरधरणात्, इत्यत आह—शशङ्केनेति। 'मूर्त्या' मण्डलेन न तु रश्मिना। इत्थञ्च कलङ्कस्य हस्तेन धरणप्रतीतिरुपचारादेव, अक्षवलयस्य तु साक्षादित्यतोऽत्र रूपकमेवेति भावः। ननु करे रश्मौ हस्तरूपणमास्ताम्, किन्त्वक्षवलयतुल्यस्य कलङ्कस्योपमासमासे विशेष्यतया मुख्यस्य रश्मिनैव धरणान्वयादुपमैवाऽऽस्तामित्यत आह—कलङ्कोऽक्षते। 'उत्कटतया' विशेषत्यत्वेनातिरोहितकलङ्करूपतया करधृतत्वान्वयित्वेनेत्यर्थः। नन्वेवं मदुक्तस्यैवायमनुवादः कृत इत्युपमैवाऽऽस्तामित्यत आह— न चास्येति। यदि रश्मिनाऽपि धरणं तत्वतः स्यात्तदा उपचारमुपेक्ष्य उपमैव

गृह्येत, तदेव तु नेत्यत उपमायामप्युपचारावश्यकत्वेऽलक्षवलये साक्षादन्वयबोधकं रूपकमेव ग्राह्यमित्यर्थः। मुख्येऽपीति, अत्र मुख-शब्दाद् भाव-यणा मुख्यत्वेऽपीत्यर्थः।

## सुधासागरः

ननु कलङ्काक्षवलयेति कथमेकान्ततो रूपकामुच्यते, उपमाया अपि सम्भवेन सन्देहसङ्करौचित्यात् इति चेन्न। रूपकपरिग्रहे, करधृतत्वमेव साधकं प्रमाणमतः सन्देहस्याभावात्। कथमस्य साधकत्वमिति चेत्, इत्थम्। करधृतत्वरूपविशेषणस्याक्षवलये एव सार्वत्रिकी प्रसिद्धिः न तु कलङ्के। अतः प्राधान्येनाक्षवलयप्रतीतिरेवोद्देश्या। सा च रूपकपरिग्रहेणैव सम्भवति। तत्र तिरोहितकलङ्करूपमक्षवलयत्वमेव मुख्यतयाऽवगम्यते। नन्वेवमपि विशेषणमिदमसम्यगेव। चन्द्रपक्षे किरणेन कलङ्कधारणस्याभावात्। मूर्त्यैव तेन तद्धारणात् इति चेन्न, श्लेषच्छाया हि कलङ्कस्याप्रधानस्य करधारणमसदेव प्रत्यासन्नतयोपचर्य योज्यते। तथा सत्युपमापरिग्रहे को दोष इति चेत्, कलङ्कोऽक्षवलयमिवेत्युपमायां कलङ्कस्य प्रधानत्वेन प्रतीतिः। न चास्य करधृतत्वं मुख्यतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात्। मुख्यविषयोपचारापेक्षया चामुख्योपचार एव श्रेयान् इति रूपकमेवाश्रीयते इति भावः।

**एवं रूपश्च संकरः शब्दालंकारयोरपि परिदृश्यते। यथा**

**राजति तटीयमंभिहतदानवरासातिपातिसारावनदा।**

**गजता च यूथमविरतदानवरा सातिपाति सारा वनदा॥ ५७२॥**

**अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे।**

---

**सङ्केतः**

राजतीति। अभिहतः दानवानां रासः सिंहनादः येनेति शम्भोरामन्त्रणम्। अतिपातिनः वेगगामिनः सारावाः नदाः यस्यां सा तथा। सा च गजता अति-पाति रक्षति, विशेषेण परित्रायते यूथम्। अविरतं दानेन वरा सारा स्थिरा, वनं दयते वनदा, अवनं त्राणं वा ददाति अवनदा।

शब्दवत् शब्दालङ्कारयोः यमकचित्रयोः अत्र अङ्गाङ्गिभावाभावात् नैरपेक्ष्ये संसृष्टिरेवेत्याह—परस्परेति। मिथो विवेकेन द्वयोरिह वृत्तेरभावात्। अपेक्षैव च परस्परं अनुग्राह्यानुग्राहकभावः। अथवा असौ अनुग्राह्यः, असौ अनुग्राहकः इति निणतुमशक्यत्वे मिथः काऽपेक्षा शब्दालङ्कारयोः? इति संसृष्टिरेवात्र युक्ता। यद्वा—शब्दालङ्कारद्वयस्य एकवाचकगत्वे तृतीयः सङ्करः इति भाव्यम्। इति प्रथमः सङ्करः।

**सङ्केतः (रुय्यकः)**

परस्परापेक्षे इति—इतरेतरविवेकेन द्वयोरिहवृत्तेरसम्भवात्। अपेक्षैव च परस्परमनुग्राह्यानुग्राहकभावः, तद्वशेन तयोर्विदग्धानां चेतसि परं चमत्करणात्। द्वितीयः सङ्कर इति—न त्वनिश्चयाख्यः पृथगलंकारः सः। समुच्चयेन समुच्चयद्योतिना च-शब्देन।

**बालचित्तानुरञ्जनी**

न केवलमार्थेष्वलङ्कारेष्वयं सङ्करः यावता शाब्देष्वपीत्याह एवमिति। राजतीति। अभिहतः दानवानां रासः सिंहनादो येन शंभुना, तस्य संबोधनम्। हे अभिहतदानवरासः अतिपातिनः जनेन व्रजं सासारावाः सशब्दा नादा यत्र सेयं राजयते। अविरतेन सन्ततेन, दानेन मदेन, वरां श्रेष्ठां, सरसिजवनं दयति रक्षति। गजसमूहश्च पाति रक्षति। अत्र यमकमनुलोमप्रतिलोमलक्षणश्चित्रभेदश्चेति द्वावलङ्कारौ मिथः सापेक्षौ अङ्गाङ्गिभावसङ्करमनुभवत इत्याह अत्रेति। अलङ्कारयोः कथं परस्परापेक्षा इत्याशङ्क्यामाह पादद्वयेति। अपेक्षापरस्यानुग्राह्यानुग्राहकभाव इत्यर्थः।

**काव्यादर्शः**

'अतिपातिनो जवेन व्रजन्तः सारावा नदा यत्र। तादृशीयं तटी भ्राजते। अभिहतो दानवानां रासः सिंहनादो येनेति शम्भोः संबोधनम्। सा चेयं गजता। यूथं गजसमूहम् अतिपाति परित्रायतेऽविरतिना संततेन दानेन। वरा श्रेष्ठा। सारा स्थिरा। वनं दयते रक्षति या, अवनं रक्षणं वा ददाति'।

ननु, अत्र यमकचित्रयोः शब्दालंकारयोः शब्दवदुपकार्योपकारकत्वभावेन अङ्गाङ्गिभावाभावात् संसृष्टिरेव परस्परनिरपेक्षेत्याह—परस्परापेक्षे इति ।

**विवेकः**

एवंरूपश्चेति—शब्दालङ्कारः कैश्चिदुदाहृतो यथा राजतीत्यादि । "अतिपातिनो जवेन व्रजन्तः सारावाः सशब्दा नदा यत्र तादृशीयं तटी भासते । अभिहतो दानवानां रासो रवः सिंहनादो येनेति शम्भोः सम्बोधनम् । सा चेयं [गजता] गजसंहतिः यूथमतिपाति विशेषेण परित्रायते । अविरतेन सन्ततेन दानेन मदेन वरा श्रेष्ठा । साराः स्थिरा वनं दयते रक्षति दैङ् (?) रक्षणे, अवनं रक्षणं ददाति, वनानि वा द्यति खण्डयति या । (अलककृतटीका ह. वि. ७९ पृ:) । अत्र प्रथमपादगतोऽनुलोमप्रतिलोमख्यश्चित्र भेदो न यमकपेक्षत इत्यत आह—पादद्वयगते परस्परापेक्षे इति इतरेतरविवेकन द्वयोरिह वृत्तेरसम्भवात् । अपेक्षैव च परस्परमनुग्राह्यानुग्राहकभावः, तद्वशेन तयोर्विदग्धानां चेतसि परं चमत्कारकणात् । 'वस्तुतस्तु शब्दालङ्कारसंसृष्टिरेवात्र श्रेयसी ।' (रु. सं. ७२-७३ पृ.) । यद्वाऽत्र शब्दालङ्कारद्वयमेकवाचकानुप्रविष्टमिति वक्ष्यमाणस्तृतीयोऽत्र सङ्करो ज्ञेयः ।' (अ. स. २५० पृ.)

**दीपिका**

एवंरूपोऽनुग्राह्यानुग्राहकभावात्मकः । इयं तटी स्थली राजति । किम्भूता ? परस्परमभिहतानां विप्रतिपत्तिहतानां दानवानां रासेन संरम्भगर्जितेनातिपातिनोच्छलेन तटमतिक्रान्ताः सारावाः सशब्दनदा यस्याः सा । साऽतिप्रसिद्धा गजता गजः समूहः । अतिपाति अतिशयेन रक्षति । अबिरतेन सततप्रवृत्तेन दानेन मदेन वरा श्रेष्ठा । सारा उत्कृष्टा । वनं द्यति खण्डयति वनदा । अलोमप्रतिलोमश्चेति पुंस्त्वपाठे पादद्वयगत इति नपुंसकत्वं समाहारेऽन्यतरस्यामिति नपुंसकपाठे तु स्फुटमेव । परस्परापेक्षे इति यमकनिर्वाहप्रवृत्तस्य कवेः पृथक् प्रयत्ननिर्वर्त्यतयाऽनुलोमप्रतिलोमस्योत्पत्तौ यमकापेक्षिता । यमकञ्चात्र तदाश्रयेणैव दुष्करीतिवासनावासितानां मनसि कमप्यास्वादिकं परितोषमाधत्त इति प्राचीनानाभिसन्धिः । ग्रन्थकाराश्च गौरवेण तानेव प्रमाणीचकार ।

**दर्पणः**

राजतीति । इयं तटी राजति, अभिहतास्ताडिता ये दानवास्तेषां वासः [रासः] सरभसगर्जितं, तदतिपातिस्तदधिकाः सारावाऽसध्वलयो [?] नदा यस्यां सा । यजभा [गजता] गजसमूहश्च । यूथं अतिपाति अतिशयेन रक्षति अविरतमविश्रान्तं सद्दानं मदस्तेन रवशः श्रेष्ठाः, सारा उत्कृष्ठा । वलनदा दानवा नित्यति [निद्यति] सण्डयतीत्यर्थः ।

अनुलोमप्रतिलोमौ यत्रात्मनो न पठितापरसंततिः । प्रतिलोमपाठेऽपि तादृगेव पादद्वयं । द्वितीयपादः चतुर्थपादश्च परस्परापेक्षे । इह हि यमकनिर्वाहप्रवृत्तस्य करेरपृभथग्यत्न निवृत्तावानुलोमस्योत्पत्तौ यमकापेक्षिता । यमकं चात्र तदाश्रयेणैव दुष्करीतिवासना वासितानां मनसि कमप्याप्रासिकं [???] परिमितोऽयमाधत्तो एवञ्च ग्रन्थकारेण प्राचीनानुरोधेनैव लिखितं, वस्तुतस्त्वत्र न यमकस्य चित्रनिर्वाहकता, चित्रस्य वा यमकनिर्वाहकता । यदाहुः—यथा न शब्दयोः परस्परोपकारित्वं तथा शब्दा [र्था] लङ्कारयोरपीति । किञ्चानुलोमप्रतिलोमस्य पृथग्यत्न निर्वर्त्यत्वमनु भवसिद्धमेव । तेनात्रैकाश्रयानुप्रवेशाख्यः सङ्कर एव ज्यायान् ।

## साहित्यचूडामणिः

अथ न केवलमार्थेष्वेवालङ्कारेष्वयं सङ्करः, यावता शाब्देष्वपीत्याह—एवंरूप इति।

राजतीति। अभिहतानां दानवानां यो रासः शब्दः तदतिपातिनः सारावाः सजलकलकला नदा यस्याम्। गजता गजसमूहश्च। यूथमति पाति भृशं रक्षति। अविरतिर्विश्रान्तिशून्या मदस्य वरासा रेखा यस्या सारा श्रेयसी वनदा वनानि द्यतीति कृत्वा।

अत्र यमकमनुलोमप्रतिलोमलक्षणश्चित्रभेदश्च शाब्दावलङ्कारौ मिथः सापेक्षावङ्गाङ्गिभावरूपं सङ्करमनुभवत इत्याह—यमकमिति। इदं तु चिन्त्यं—यदुत शब्दालङ्कारयोरुपकार्योपकारकभावशून्यत्वादङ्गाङ्गिभावो युज्यते वा नवेति। तेन शब्दालङ्कारयोः संसृष्टिः संशयगोचरत्वलक्षणः सङ्करोऽपि वैचित्र्याद् भाव्यतां नाम, अलमनुग्राह्यानुग्राहकभआवनिर्बन्धेनेत्यन्ये।

इदमत्रावधात्व्यं—यदलङ्कारेषुकेषाञ्चिद् अलङ्कारविशेषोऽङ्गी भवति। यथा—

**कूटस्थः कुशली ययातिरिति ते मारव्यथाविह्वलो**
**वर्षीयानपि भोगलौल्यमगमद् बालास्विति श्रूयते।**

**बालोऽपि त्वमनेकपूर्वपुरुषप्रेमोत्तरां कौतुकी**
**धत्से दोष्णि करग्रहाद् भुवमहो चण्डान्वयप्रक्रिया॥**

इत्यादौ व्याजस्तुतेः प्रेयोऽलङ्कारः। अन्येषामलङ्कारमात्रं यथा—

**कालं वा कालकूटं वा कल्पाग्निं वा खलं तु वा।**
**तव देव! कृपाणस्य विधाता किमुपाददे॥**

इत्यादिसंदेहादीनामुपमादिः। अपरेषां परस्परगर्भता सम्भाव्यते यथा दीपकोपमयोः। तत्र दीपकस्योपमागगर्भत्वं स्पष्टम्। उपमा काचिद् दीपकानुकारिणी दृश्यते।

यथा—

**व्यालस्येव विषाणो दंष्ट्राङ्कुर इव दन्दशूकस्य।**
**खड्गो वीर! कठोरो नख इव सिंहस्य सहजमस्त्रं ते॥**

इत्यादिमालोपमा इति।

## सम्प्रदायप्रकाशिनी

शब्दालङ्काराणां शब्दानामिवाङ्गाङ्गिता न सम्भवतीति यदुक्तं तदयुक्तमित्यभिप्रायेण सम्भवमाह—एवंरूपश्चेति। एवंरूपः अङ्गाङ्गिभावलक्षणः न केवलः, एकवाचकात्मा स च दृश्यते। केवलानां हि शब्दानामर्थपरतन्त्रभावाद् गुणानां नाङ्गाङ्गिभावः। स्वरूपसाम्यादिविच्छित्तिपरत्वे तु दृश्यते, न परं युक्तिमात्रेण प्रतिपाद्यत इति भावः।

राजतीति। तटीयं राजति। कीदृशी। अभिहताः शिलादावास्फालिताः अत एव दानवानां रासमाक्रोशमतिपततन्तोऽतिवर्तमानाः सारावाः सात्कारसहिताः नदाः पुमभिमानिनो निर्झरा यत्र। गजता गजसमूहश्च यूथमतिपाति बाढमभिरक्षति। कीदृशी। अविरतेन दानेन वरा उत्कृष्टा। सा प्रसिद्धा। सारा बलतः। वनदा वनस्य खण्डयित्री।

योजयति—अत्र यमकेत्यादि। अनुलोमप्रतिलोमः अनुलोमप्रतिलोमपाठयोरैकरूप्यात्मा। पादद्वयगतत्वाद् यमकस्य परस्परापेक्षिता, अनुलोमप्रतिलोमस्य पुनरुभयत्रैकरूप्यात्।

## मधुमती

'शब्दालङ्कारयोः अयं सङ्करो न भवत्येव। शब्दार्थवदुपकार्योपकारकत्वरूपाङ्गाङ्गिभावाभावात्। किन्तु संसृष्टिरेव'—इति अलङ्कारसर्वस्वकारमतं दूषयति—एवंरूपश्चेति। चित्राभ्यां यमकनिष्पत्तेः परस्परापेक्षित्वमित्यर्थः। एकवाचकानुप्रवेशलक्षणः तृतीयोऽत्र सङ्करः इत्यन्ये।

राजनीति। इयं तटी राजति इत्यन्वयः। कीदृशी ? अविरतः दानवानां रासः शब्दः यस्यां सा तथा। अतिपाती शीघ्रगामी सारावः सशब्दः नदः अम्बुप्रवाहः यस्यां सा तथा—

**["शोणसिन्धुहिरण्याख्याः कोकलोहितघर्घराः।**
**शतद्रूश्च नदाः सप्त पावनाः परिकीर्तिता॥**

नद्यः प्राक्स्रोतसः, प्रत्यङ् नदास्स्युः नर्मदां विना"॥]

एवं सा प्रसिद्धा गजता गजसमूहः यूथं स्वकुलं अतिपाति अतिशयेन रक्षति। कीदृशी ? अविरतदानेन सन्ततमदजलेन वरा उत्कृष्टा, तथा सारा स्थिरा, तथा वनदा वनखण्डनकर्त्री। 'दो अवखण्डने' इति धात्वर्थानुसारात्।

अत्रेति। पादयकानुलोमप्रतिलोमयोः प्रत्येकमेव दुष्करतया विदग्धमनोऽनुरञ्जकमिति, किमुत तयोः साहित्यम्? इति भावः। केचित्तु—एकव्यञ्जकानुप्रवेशलक्षणः तृतीय एवात्र सङ्करः, न तु अनुग्राह्यानुग्राहकसक्षणः सङ्करः इत्याहुः। इति प्रथमः सङ्करः।

## विस्तारिका

'अनुग्राह्यानुग्राहकाख्यः सङ्करः शब्दालङ्कारयोर्न सम्भवति, शब्दस्वरूपवदुपकार्योपकारकत्वाभावेनाङ्गाङ्गिभावाभावात्, परन्तु संसृष्टिरेव' इत्यलङ्कारसर्वस्वमतं दूषयति—एवंरूपश्चेति।

राजतीति। इयं तटी राजतीत्यन्वयः। कीदृशी ? अभिहितो दानवानां रासः कालोहलो यस्याम्। तथा अतिपाती शीघ्रगामी सारावः सशब्दो नादो यस्यां सा इत्यर्थः। सा गजता च। यूथमतिशयेन पाति रक्षति। सापि कीदृशी ? अविरतेन दानेन अविरतमदेन वरा श्रेष्ठा। तथा सारा स्थिरा, तथा वनदा वनखण्डिका।

अत्रेति । चित्रभेद: चित्रनामा शब्दालङ्कार: । परस्परेति । चित्राभ्यां यमकनिष्पत्ते: परस्परापेक्षित्वमित्यर्थ: ।

एकव्यञ्जकानुप्रवेशलक्षणस्तृतीयोऽत्र सङ्कर इति केचित्, परस्पराक्षेपे इति नपुंसकानपुंसकयोर्नपुंसकमिति न्यायात् ।

## सारबोधिनी

एवं रूप इति । अनुग्राह्यानुग्राहकरूप इत्यर्थ: ।

राजतीति । इयं तटी राजतीत्यन्वय: । कीदृशी ? अभिहितो दानवानां रास: शब्दो यस्यां सा तथातिपाती शीघ्रपातीत्याराव: । स शब्दो नयो यस्यां गर्जता यूथमतिशयेन पाति रक्षति । सापि कीदृशी ? अवरलेन दानेन मदेन वरा श्रेष्ठा । तथा सारा स्थिरा । तथा वनदा वनसण्डिता । अत्रेति । चित्रभेद: । चित्रनामा शब्दालङ्कार: परम्परापेक्ष इति । नपुंसकानपुंसकयोर्नपुंसकमति न्यायात् ।

## काव्यप्रदीप:

शब्दालंकारयोरप्येष संकरो दृश्यत इति प्राञ्च: । उदाहरन्ति च—

**'राजति तटीयमभिहतदानवरासातिपातिसारावनदा ।**
**गजता च यूथमविरतदानवरा सातिपाति सारा वनदा ॥' इति ।**

तत्र यद्यपि यमकानुलोमविलोमचित्रभेदयोर्न स्फुटं परस्परापेक्षित्वं तथापि यमकनिर्वाहप्रवृत्तस्य कवेरपृथक्प्रयत्ननिर्वृत्ततयानुलोमविलोमस्योत्पत्तौ यमकापेक्षा यमकस्य तु चारुतातिशये तदपेक्षता । तदाश्रयेणातिदुष्करतयातिशयेन विदग्धमनोनुरञ्जकत्वादिति तेषामाशय: । वस्तुतस्तु यमकनिर्वाह एव कविप्रवृत्तिरिति निश्चायकं नास्ति । अस्तु वा तथा । तथापि यमकं न चित्रहेतु: । किं तु तत्प्रयत्न: । तस्मादेकाश्रयानुप्रवेशेनैवायं संकरो न त्वनुग्राह्यानुग्राहकतयेत्येव युक्तम् ।

## आदर्श:

राजति तटीति । अत्र विशेषणमहिम्ना तटी नदस्यैव बोध्या । तथा च इयं नदतटी राजति । कीदृशी ? अभिहतदानवरासा नाशितदानवक्रीडा, तन्नाशश्च परार्द्धस्वरसाद् गजयूथेनैव बोध्य: । तथा अतिपातिसारावनदा अतिवेगशील आरावसहितो नदो यस्यास्तादृशी, नदस्याऽऽरावसाहित्यं कल्लोलस्य जलपक्षिणश्च शब्दात् । तथा सा प्रसिद्धा गजता गजसमूहश्च यूयं स्वपालनीयगजयूथम् अतिपाति अतिशयं पालयति, यत: सारावनदा सारस्य प्रधानस्यावनस्य पालनस्य दात्री । गजसमूहस्य पालनीयोऽवान्तरस्वयूथो बोध्य: । एतावतैव च दानवक्रीडानाशने गजयूथस्य कर्तृत्वं लभ्यते । अत्रेति । दानवरासेत्याद्येद्वितीयचतुर्थचरणयोर्यमकम्, प्रतिलोमपाठरूपोऽनुलोमप्रतिलोमाख्यश्चित्रभेदश्च । अत्रैकवर्णान्यथात्व एव चित्रस्य यमकस्यापि भङ्ग इत्यनयो: परस्परसापेक्षत्वरूपोऽनुग्रह: ।

## सुधासागरः

एवं रूप इति। अनुग्राह्यानुग्राहकरूप इत्यर्थः। यथा—राजतीति।

इयं तटी राजतीति सम्बन्धः। कीदृशी, विरतो दानवानां रासः शब्दो यस्यां सा, अतिपाती साराव: सशब्दो नदो यस्यां सा। गजता च यूथमतिशयेन पाति रक्षति, किम्भूता अविरतेन दानेन वरा श्रेष्ठा सारा स्थिरा वनदा वनखण्डिकेत्यर्थः।

अत्रेत्यादि। यद्यपि यमकानुलोमविलोमचित्रभेदयोर्न स्फुटं परस्परापेक्षित्वम्, तथापि यमकनिर्वाहप्रवृत्तस्य कवेः पृथक् प्रयत्नानिवृत्ततयाऽनुलोमविलोमस्योत्पत्तौ यमकापेक्षा। यमकस्य तु चारुतातिशये तदपेक्षता। तदाश्रयेणातिदुष्करतयाऽतिशयेन विदग्धमनोऽनुरञ्जकत्वादित्याशयः।

**(सू० २०९) एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥ १४० ॥**

द्वयोर्बहूनां वा, अलंकाराणामेकत्र समावेशेऽपि विरोधात् न यत्र युगपदवस्थानम् न चैकतरस्य परिग्रहे साधकम् तदितरस्य वा परिहारे बाधकमस्ति येनैकतर एव परिगृह्येत स निश्चयाभावरूपो द्वितीयः संकरः समुच्चयेन संकरस्यैवाक्षेपात् ।

उदाहरणम्—

**जह गहिरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ ।**
**तह किं विहिणा एसो सरसवाणीओ जलणिही ण किओ ॥५७३ ॥**

अत्र समुद्रे प्रस्तुते विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः किमसौ समासोक्तिः किम् अब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेः, इयमप्रस्तुतप्रशंसा, इति संदेहः ।

---

**सङ्केतः**

समुच्चयेनेति । 'एकस्य च' इत्यत्र समुच्चयद्योतकेन चकारेणेत्यर्थः ।

सरसवाणीयः । सरसपानीयः सरसवाणीकश्च ।

**सङ्केतः (रुय्यकः)**

**यथा गभीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः ।**
**तथा किं विधिना स सरसपानीयो जलनिधिर्न कृतः ॥**

**बालचित्तानुरञ्जनी**

इति वाच्यम् शब्दालङ्कारसं-
न च शब्दालङ्कारयोः शब्दवत् परस्परोपकार्योपकारकत्वाभावेनाङ्गाङ्गिभाव इति वाच्यम् शब्दालङ्कारसंकरभेदान्तरमाह एकस्य चेति द्वयोर्बहूनामि-
सृष्टिस्त्वत्र ज्यायसीति अलङ्कारसर्वस्वकारेणोक्तत्वात् । शब्दालङ्कारसंकरभेदान्तरमाह एकस्य चेति द्वयोर्बहूनामि-त्यादि । नन्वेकस्य च ग्रहे इत्यादिनापि कथं सङ्कर एव प्रतिपद्यत इत्याशङ्क्याह समुच्चयेनेत्यादि । एकस्य च ग्रह इत्यादि । तत्र सङ्करसमुच्चयार्थश्चकारः । तेन समुच्चयेन समुच्चयद्योतकेन च शब्देन सङ्कर आक्षिप्यते । उदाहरति जहेति । गहिरो तीरो, यथा रहणिब्भरो यथा । अत्र समासोक्तिः । प्रस्तुतप्रसवायेत्याह अत्रेति । विशेषणसाम्यादित्यनेन समासोक्तेः लक्षणममुत्सार्यते । तत्समानगुणतयेत्यनेनाप्रस्तुतप्रशंसायाः ।

### काव्यादर्शः

निश्चयाभावेति, न तु अनिश्चयाख्यः पृथगलकारः। समुच्चयेनेति। एकस्य चेत्यत्र समुच्चयद्योतिना च-शब्देन।

'सरसवाणिओ सरसपानीयः सरसवाणीकश्च।' 'ता' इति तथेत्यर्थे निपातः। 'आशा दिश आस्थाश्च। तमस्तिमिरं मोहश्च'।

यथा वा—

**तद्वक्त्रचन्द्रे नवयौवनेन श्मश्रुच्छलादुल्लिखितश्चकास्ति।**
**उद्दामरामादृढमानमुद्राविद्रावणो मन्त्र इव स्मरस्य॥**

—अत्र 'वक्त्रं चन्द्र इव' इति किमुपमा, उत 'वक्त्रमेव चन्द्रः' इति रूपकमिति साधकप्रमाणभावे संशयः, उभयथापि समासस्य भावात्, 'उपमितं व्याघ्रादिभिः' इति ह्युपमासमासो, व्याघ्रादेराकृतिगणत्वाद्। मयूरव्यंसकादित्वातु रूपकसमासः, तस्यापि आकृतिगणत्वात्।

### विवेकः

अथ द्वितीयसङ्करस्य प्रकारं लक्षयति एकस्य चेति। इह 'उभयालङ्क्रियोल्लेखे' समं तद्वृत्त्यसम्भवे। एकस्य च ग्रहे न्यायदोषाभावे च सङ्करं' इति केचिल्लक्षयन्ति (का. अ. सा. सं. ६२ का.)। तत्र, बह्वलङ्कारसन्देहस्यापि दर्शनादित्यत आह—द्वयोर्बहूनां वेति। न चास्योपमाश्लेषादिरूपतेत्यत आह विरोधादिति। युगपदवस्थानमिति—एककालावस्थितिः। क्रमेण विरुद्धयोरपि समावेशः सम्भवत्येव येन चैक एव गृह्यते तादृगपि साधकम्। नापि तदितरस्य त्यागे बाधकं प्रमाणं यदा तदा न्यायप्राप्तः संशय इति निश्चयाभावरूपो द्वितीयः सङ्करो न त्वयमनिश्चयाख्यः पृथगलङ्कार इत्याह—स निश्चयाभावरूप इत्यादि। अत्र हेतुमाह—समुच्चयेनेति। एकस्य चेति समुच्चयद्योतिना 'च' शब्देन। जहेत्यादि—**यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायाः। तथा किं विधिनैषः सरसपानीयः सरसवाणीकश्च जलनिधिर्न कृतः॥** तहेति तथेत्यर्थे निपातः। (रु. सं. ७३ पृ.)। अत्र प्रस्तुताप्रस्तुतगोचरतया समासोक्त्यप्रस्तुतप्रशंसयोर्विरोधो न च कश्चित् साधकबाधक प्रमाणसद्भाव इति सन्देहसङ्करः।

### दीपिका

वस्तुतस्तुकविर्यमकनिर्वाहे चित्रनिर्वाहे वा प्रवृत्त इति नास्त्येव निश्चायकम्। अस्तु वा यमकनिर्वाहप्रयत्नादेव चित्रनिर्वाहः, तथापि चित्रोत्पत्तौ न हेतुर्यमकम्। एवं चित्रं यमकोत्पत्तिहेतुरित्यपि नास्ति। आस्वादिकन्तोषदानेऽपि न किमप्यपेक्ष्यमिति विविच्य न बुद्ध्यामहे मानचक्षुषः। यथाहुः—यथा न शब्दयोः परस्परोपकारकत्वं तथा शब्दालङ्कारयोरपीति। न चात्र संसृष्टिर्दुरविषयत्वात् तस्मादेकाश्रयानुप्रवेशसङ्कार एव ज्यायान्। यमकस्य चित्रव्यक्तिभ्यां सह द्वितीयपदे तुर्यपादे च दत्तपदत्वात्। अङ्गाङ्गिभावसन्देहयोस्तु सङ्करयोरर्थालङ्कार एव विषयः। तृतीयसङ्करस्य शब्दार्थगततया विजातीयालङ्कृतिमात्रविषयत्वं सजातीययोदाहृतिदर्शनेन विघटयिष्यामः।

समावेशेऽपीति। प्रतिभासमानतयाऽत्यन्तसत्त्वाविरहेऽपीत्यर्थः। यदुक्तम्–

**"अनेकालङ्क्रियोल्लेखे समं तद्वृत्त्यसम्भवे।**
**एकस्योपग्रहे न्यायदोषाभावे च सङ्करः॥" इति।**

अवस्थानमवस्थासम्भवो विश्रान्तिसम्भवः। स सन्देहविषयीभूतोऽलङ्कारः परिगृह्येत व्यवस्थिततया स्वीक्रियेत। समुच्चयेन प्रतिभासमानतया द्वयोरप्यत्यन्ताभावविरहेण। आक्षेपादर्थसिद्धत्वात्। सरसवाणीओ सुस्वादपानीयः कोमंलवाणीकश्च। अत्र प्रकरणाद्यनिश्चयाद् द्वावपि समासोक्त्यप्रस्तुतप्रशंसाऽलङ्काराविल्लिख्येते। न चैकतरनिर्धारणेऽस्ति किञ्चित् प्रमाणम्।

वस्तुतः पुनः समुद्रपुंसोरेकतरस्य प्रस्तुतत्वाद् द्वयोरलङ्कृत्योर्नास्ति वृत्तिः। सन्देहश्चायं नित्य एवेति नैकतरविश्रान्तिरित्याह—इतरस्य कस्यापि तत्समगुणतया समुद्रसमानधर्मतया प्रतीतेरित्यन्वयः।

## दर्पणः

अङ्गाङ्गिभावसन्देहसङ्करयोः पुनरर्थानुसन्धानेऽप्यलङ्कारमात्रं विषयः समावेशेऽवस्थाने एव इतव [?] निश्चयाभावेनेति भावः। विरोधात् एकविषये एकाकारीनारीस्थितिसाहित्यहेतुकात् यत्रेत्यनंतरं निश्चितत्वेनेति शेषः। कुतो निश्चयभाव इत्याह न चेति। साधकमुपपादकं बाधकं निरोधकं येन हेतुना परिगृह्यते निश्चिततयाङ्गीक्रियते। समुच्चयेन कारिकागतचकारार्थेन। सङ्करस्य प्रक्रान्तस्य। जहेति।

**यथा गंभीरः यथा निर्भरः यथा च निर्मलच्छायः।**
**तत्किं विधिना सस्वरसपानीयो जलधिर्न कृतः॥**

सुरसवाणी इति। [सरसवाणीओ] पदस्य पक्षे स्वरसवाणी को [?] मधुरावाणी को [?] मुधराणीति यावत्। प्रस्तुते वर्णनीयत्वादप्रसतुतोऽर्थः कश्चित्पुरुषविशेषः संदेहः प्रसरणात्य [त्व]ज्ञानादिति भावः।

## साहित्यचूडामणिः

अथ द्वितीयं संशयास्पदत्वलक्षणं सङ्करमाह—एकस्येति। न्यायः साधकं प्रमाणं यस्य साध्यं प्रत्यानुकूल्यम्। दोषो बाधकं यस्य साध्यं प्रति प्रातिकूल्यम्। अनिश्चयः संशयः कोट्यन्तरस्य निर्धारणाभावात्।

द्वयोरनेकेषां वा भूषणानाम् एका वाक्ये छन्दसि वा समावेशमात्रसद्भावेऽपि विरोधशङ्का न पार्यते प्रक्षालयितुम् एकस्यालङ्कारस्य गोचरमितरः कथमाक्रामत्विति। विरोधश्च सहानवस्थानस्वभावः। तस्मादेकतरस्य परिग्रहे साधकं परिहारे वा बाधकं प्रमाणवश्यमेषितव्यम्। तदसिद्धेश्चायमनिश्चयरूपः सङ्कर इत्याह—द्वयोरिति। यदाहुः [उद्भटः] —

**विरुद्धालंक्रियोल्लेखे समं ताद्वृत्त्यसम्भवे।**
**एकस्य च ग्रहे न्यायदोषाभावे च सङ्करः॥**

इति । संशयत्वं यस्य कस्यचिद्वास्तु, कुतः सङ्करस्यवेति नियम इति चेदाह—समुच्चयेनेति । एकस्य च ग्रह इत्यत्र चकारप्रतिपाद्येन ।

जहेति ।

**यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः ।**
**तथा किं विधिना स सरसपनीयो जलनिधिर्नकृतः ॥ इति ।**

अत्र समासोक्तिरप्रस्तुप्रशंसा वेति सन्देह इत्याह—समुद्र इति । विशेषणसाम्यादिति समासोक्तेर्लक्षणमनुस्मर्यते । तत्समानगुणतयेत्यप्रस्तुतप्रशंसायाः पञ्चमस्य भेदस्य ।

## सम्प्रदायप्रकाशिनी

सङ्करान्तरमाह—एकस्य चेत्यादि । चो भिन्नक्रमः, अनिश्चयश्चेति । न्याय आनुकूल्यलक्षणं साधकत्वम् । दोषः प्रतिकूल्यलक्षणं बाधकत्वम् ।

द्वयोरित्यादि । द्वयोर्बहूनां वेति भेदद्वयम् । एकत्र वाक्ये । समावेशेऽपि सन्देहविषयतासम्पातेऽपि । विरोधात् परस्परपरिहाररूपात् । न युगपदवस्थानम्, अतः संसृष्टेर्व्यावृत्तिः । साधकबाधकाभावान्नैकतरपरिग्रहः । अतोऽपि निश्चयाभावरूपो द्वितीयः, चेति समुच्चयेन प्रकृतसङ्कराक्षेपात् ।

जहेति ।

**यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः ।**
**तथा किं विधिना स सरसपानीयो जलनिधिर्न कृतः ॥**

यथा गाम्भीर्यादिगुणः तथा सरसपानीयः किं न कृतः । इह जलनिधिर्वाच्यः । तेनार्थान्तरं व्यज्यते । तयोः कतरत् प्रस्तुतमिति नावगम्यते, सन्देहविच्छित्त्यै साधकबाधकानुपन्यासात् । ततः समासोक्त्यप्रस्तुतप्रशंसयोः सन्देहसङ्करः ।

व्याचष्टे—अत्र समुद्र इत्यादि । प्रस्तुतकोटौ समुद्रे गाम्भीर्यादिविशेषणसाम्यादप्रस्तुतरूपनायकार्थप्रतीतेः किं समासोक्तिः, उतास्याप्रस्तुतकोटौ नायकस्यापि प्रस्तुतस्य प्रतीतेः किमप्रस्तुतप्रशंसेति ।

## मधुमती

एकस्य चेति । न्याय-दोषौ साधकबाधकमाने । तथा च साधकबाधकमानाभावात् संशय इति भावः । ननु एकस्य च ग्रहे इत्यादेः कथं सङ्करपरत्वम् ? अत आह-समुच्चयेनेति । समुच्चयवाचकेनेत्यर्थः । तथा 'एकस्य च ग्रहे' इत्यादि चकारेण सङ्करस्य समुच्चयः इति भावः ।

सन्देहः इति । इदं च समुद्रस्य प्रकृतत्वात् अप्रकृतत्वग्राहक प्रमाणाप्रवृतौ द्रष्टव्यम् । अन्यथा अन्यतरालङ्कारनिर्णयात् ।

## विस्तारिका

द्वितीयं सङ्करमाह—-एकस्य चेति। एकतरस्येत्यर्थः। न्यायदोषौ साधकबाधकमाने। तथा चोभयत्र साधकबाधकप्रमाणाभावप्रयुक्तस्तुल्यकोटिकः संशयः सन्देहसङ्कर इत्यर्थः।

व्याचष्टे—द्वयोर्बहूनामित्यादि। एकत्र च काव्ये। समावेशेऽपि स्वरूपतः सत्त्वेऽपि। विरोधादिति। कवितात्पर्यग्राहकयोरन्योन्यप्रतिबन्धादित्यर्थः। आक्षेपादिति। अनुकर्षणादित्यर्थः। अवस्थानं निश्चयः।

ननु वस्तुस्वरूपसत्त्वे किमिति न निश्चय इत्यत आह—न चेति। कारिकायां विशेष्यं पूरयति—समुच्चयेनेति। समुच्चयबोधकेन सूत्रस्थचकारेणेत्यर्थः।

यद्यपि वक्ष्यमाणेदाहरणेषु नयनानन्ददायीत्यादिष्वलङ्काराणां निश्चय एव, तथापि किमयमलङ्कारः, कवितात्पर्यविषयोऽयं वेत्याकारः सन्देहोऽत्र विवक्षितः। अत एवाह वृत्तिकारः—अलङ्काराणमेकत्र समावेशेऽपीति। अत एव च विरोधपदमन्यथैव योजितम्, अन्यथा समावेशेऽपि विरोधादित्यसङ्गत्यापतेः। एवं च निश्चयोऽपि कवितात्पर्यविषयत्वेन निश्चयो बोद्धव्य इति।

जह गम्हीर इति।

**यथा गभीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः।**
**तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः॥**

इदं च समुद्रस्य प्रकृतत्वाप्रकृतत्वग्राहकप्रमाणानवतारे द्रष्टव्यम्, अन्यथाऽन्यतरालङ्कारनिर्णयादेवोक्तनिश्चयापत्तेरिति ध्येयम्।

## सारबोधिनी

द्वितीयं सङ्करमाह एकस्य चेति। एकतरस्य चेत्यर्थः। न्यायदोषौ साधकबाधकप्रमाणे। तथा चोभयत्र साधकबाधकप्रमाणाभावाप्रयुक्तस्तुल्यकोटिकः संशयः संदेहसङ्कर इत्यर्थः। व्याचष्टे द्वयोर्बहूनामिति। एकत्र काव्ये समावेशेऽपि स्वरूपतः सत्त्वेऽपि विरोधात् कवितात्पर्यग्राहकयोरन्योन्यप्रतिबन्धात्। अवस्थानं निश्चयः। ननु वस्तुस्वरूपसत्त्वे किमिति न निश्चय इत्याह न चेति। कारिकायां विशेष्यं पूरयति समुच्चयेति। समुच्चयबोधकेन चकारेणेत्यर्थः। आक्षेपादनुकर्षणादित्यर्थः।

यद्यपि वक्ष्यमाणोदाहरणेषु नयनानन्ददायीत्यादिष्वलङ्काराणां निश्चय एव तथापि किमयमलङ्कारः कवितात्पर्यविषयोऽयमित्याकारः सन्देहोऽत्रविवक्षितः। अत एवाह वृत्तिकृत् अलङ्काराणामेकत्र समावेशेऽपीति। अत एव विरोधपदमन्यथैव योजनीयमन्यथा समावेशेऽपि विरोधादित्यसङ्गत्यापत्तेः। एवं निश्चयोऽपि कवितात्पर्यविषयत्वेन निश्चयो बोद्धव्यः। जह गंभीर इति

**यथा गंभीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः।**
**तथा किं विधिना एष सुरसपानीयो जलधिर्न कृतः॥**

अत्रेति। अयं च संदेहः समुद्रस्य प्रकृताप्रकृतत्वग्राहकप्रमाणानवतारे बोद्धव्यः।

## काव्यप्रदीपः

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥ ५४ ॥**

न्यायः साधकं प्रमाणसत्तादोषः प्रतिकूलसत्ता। ग्रहो व्यवस्थितिः। यत्र द्वयोर्बहूनां वालंकाराणामेकत्र योग्यत्वेऽपि विरोधात् एकदा व्यवस्थितः, न चैकतरस्य परिग्रहे साधकं तदितरपरिग्रहे बाधकं येन तदेव व्यवतिष्ठेत सोऽप्यनिश्चयरूपो द्वितीयः संकरः। सूत्रस्थचराकेण संकरस्यैवाक्षेपात्। उदाहरणम्—

**'जह गम्भीरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ।**
**ता किं विहिणा एसो सुरसवाणीओ जलणिही ण किओ॥'**

अत्र किं समुद्रे प्रस्तुते श्लिष्टविशेषणमहिम्नाप्रस्तुतपुरुषविशेषप्रतीतेरियं समासोक्तिः किं वाब्धेरप्रस्तुतात्प्रस्तुतस्य पुरुषविशेषस्य तत्समानगुणतया प्रतिपत्तेरप्रस्तुतप्रशंसेति संदेहः। एकस्यैकदा प्रस्तुताप्रस्तुतोभयरूपत्वाभावादनयोर्युगपदसंभवात्, न्यायदोषयोरसंभवाच्च। अयं द्वयोः संकरः।

## काव्यप्रकाशखण्डनम्

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः॥ (का. १४०, उ०)**

एकस्य एकतरस्येत्यर्थः। न्याय-दोषौ साधक-बाधकप्रमाणौ। तथा च एकत्र [प० ५९, १] काव्ये द्वयोर्बहूनां वाऽलङ्काराणां प्रसङ्गे संभवत्येकतरस्य परिग्रहे साधकबाधकप्रमाणाभावात् संशयः ससंदेहसङ्कर इत्यर्थः।

## आदर्शः

अलङ्कारयोरेकतरानिश्चयरूपसन्देहसङ्कालङ्कारमाह—एकस्येति। न्यायः साधकप्रमाणम्, दोषो बाधकप्रमाणम्, अनिश्चयः संशयः। व्याचष्टे—द्वयोरिति। 'निश्चयाभावरूपः' सन्देहरूपः। ननु निश्चय एवास्तु तस्य सङ्कररूपत्वं कथं लभ्यते इत्यत्राऽऽह समुच्चयेनेति। एकस्य चेति चकारस्य 'स्वस्थानेऽनुपयोगेन अनिश्चय प्रेत्येवंयोजनया तच्चकारलभ्यसमुच्चयेनानिश्चयश्च सङ्कर इत्यर्थलाभादित्यर्थः।

जह गंभीर इति—

**यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः।**
**तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः॥ इति संस्कृतम्।**

रत्ननिर्भरो रत्नबहुलः। अत्रालङ्कारयोः सन्देहं ग्राहयति—अत्रेति। प्रस्तुते प्राकरणिके। विशेषणसाम्यादिति, गम्भीरत्व-रत्नबहुलत्व-निर्मलच्छायत्वविशेषणनामप्रकृते पुरुषेऽपि सत्त्वादित्यर्थः। न च सरसपानीयत्वं पुरुषे नास्तीति वाच्यम्, तेनाऽऽक्षिप्तस्योपकारार्हविशेषगुणत्वस्योभयवृत्तित्वात्। किमब्धेरिति। पुरुषस्य प्रक्रान्तत्व इत्यर्थः।

सुधासागरः

जहेति । आर्या विपुला । लक्षणमुक्तं प्राक् ।

**यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः ।**
**तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः ॥**

यथा वा

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुनापि निरुद्धाशमविशीर्णमिदं तमः ।। ५७४ ।।

अत्र किं कामस्योद्दीपकः कालो वर्तते, इति भङ्ग्यन्तरेणाभिधानात् पर्यायोक्तम् उत वदनस्येन्दुबिम्बतया, अध्यवसानात् अतिशयोक्तिः किं वा, एतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशात् रूपकम् अथ वा तयोः समुच्चयविवक्षायां दीपकम् अथ वा तुल्ययोगिता किमु प्रदोषसमये विशेषणसाम्यादाननस्यावगतौ समासोक्तिः, आहोस्वित् मुखनैर्मल्यप्रस्तावात् अप्रस्तुतप्रशंसा, इति बहूनां संदेहादयमेव संकरः ।

---

**सङ्केतः**

नयनेति । आशा आस्थाऽपि । तमः मोहोऽपि ।

अतयोः वक्त्रबिम्बयोः ।

समुच्चयेति । बिम्बं मुखं चैतत् प्रसीदति इति भङ्ग्या, एकस्य प्रकृतत्वे अन्यस्य अप्रकृतत्वे च दीपकम् । द्वयोरप्यप्रकृतत्वे वा तुल्ययोगिता । अयमेव अनिश्चयात्मा ।

**सङ्केतः (रुय्यकः)**

तह इति तथेत्यर्थे निपातः । आशा दिशः प्रत्याशाश्च । तमस्तिमिरं मोहश्च । दीपकमिति—यद्येकस्य प्रकृतत्वमपरस्याप्रकृतत्वम् । तुल्ययोगितेति । यदि द्वयोरपि प्राकरणिकत्वमप्राकरणिकत्वं वा । अभिधीयत इति ।

**बालचित्तानुरञ्जनी**

एवं द्वयोः संदेहमुदाहृत्य बहूनामुदाहरति यथा वेति । नयनानन्ददायीन्दोः एतत् बिम्बं प्रसीदति । अधुना निरुद्धाशमपीतं तमः शीर्णम् । पर्यायोक्त्यतिशयोक्तिरूपकदीपकतुल्ययोगितासमासोक्त्यप्रस्तुतप्रशंसानां संशयात् संदेहलक्षणसङ्कर इत्याह किमिति । भङ्ग्यन्तरेण प्रकारान्तरेण । अथ तयोरिति मुखेन्दुबिम्बयोः समुच्चयविवक्षायां बिम्बं प्रसीदति तव मुखं प्रसीदति ग्रामस्थपुरुषपशुवत् समुच्चयप्रीतिसद्भावात् । प्रस्तुताप्रस्तुतयोश्च प्रमुखयोर्दीपकम् । मुखे नैर्मल्यप्रस्तावादिति मुखनैर्मल्ये प्रस्तुते चन्द्रप्रशंसेति अप्रस्तुतप्रशंसा । अयमेवानिश्चयात्मक इत्यर्थः ।

## काव्यादर्शः

बहूनां वेत्यभिप्रायेण 'नयने' त्युदाहरणम्। एतयोरिति मुखबिम्बयोः। 'बिम्बं प्रसीदति' इत्येतच्च 'मुखं प्रसीदति' इति। एकक्रियायोगे एकस्य प्रकृतत्वेऽन्यस्य अप्रकृतत्वे दीपकं तुल्ययोगितेति यदि द्वयोरपि प्रकृतत्वमेव वा।

## विवेकः

नयनेत्यादि—'आशा दिशः प्रत्याशाश्च—तमस्तिमिरं मोहश्च। दीपकमिति—यद्येकस्य प्रकृतत्वमपरस्य चाप्रकृतत्वम्। तुल्ययोगितेति—यदि द्वयोरपि प्राकरणिकत्वमप्राकरणिकत्वं वा। सन्देहादयमेवेति—सन्देहरूप एक सङ्कर इत्यर्थः।' (रु. सं. ७३-७४ पृ.)

## दीपिका

द्वयोः सन्देहमुदाहृत्य बहूनामुदाहरति—यथा वेति। निरुद्धाशं स्थगितसकलदिशम्। तमोऽन्धकारं वियोगः व्यामोहो वा। अतिशयोक्तिपक्षे आरोपविषयं वदनं निगीर्यावस्थितस्येन्दुरित्यस्य विशेषणमेतदिति तद्रूपारोपवशाद् इन्दुबिम्बरूपारोपविषयत्वात्। तद्रूपवशादिति पाठे तु नेत्रेषु बिम्बेन रूपवशादारोपवशादित्यर्थः। समुच्चयविवक्षायां प्रसीदतीत्येकक्रियासंवलिततया द्वयोर्विशकलितयोः समावेशविवक्षायाम्। अत्राप्येतदिति वक्तुं निर्दिश्येत्यनुषज्यते। दीपकमेकस्य प्राकरणिकत्वेऽपरस्याप्राकरणिकत्वे। तुल्ययोगिता वर्ण्यमानवस्त्वन्तरङ्गतया द्वयोरप्यप्रकृतत्वेन। प्रदोषवर्णन इति। चन्द्रबिम्बस्य प्रकृत्वमभिप्रेत्य। मुखनैर्मल्येत्यनन्तरं वर्णनेति। शेषः।

## दर्पणः

एवं द्वयोः सन्देहे उदाहृत्यानुकुलामुदाहरति [?] यथाचेति [यथावेति] विनिवद्धा [वनिरुद्धा] स्थगित सकलदिकं खण्डितामिमासञ्च, तमोऽन्धकारः मोहो वा। अत्र समासोक्तिपक्षे एतदिति द्वन्द्व विशेषणं न तु प्रकृतिनिर्देशनपरम्। एतच्च विविच्योक्तं गौणी लक्षणा, सरेतक्रयं [तद्वक्वं] द्वन्द्वरूपं, तत्क्रपतणादिति पाठे [तद्रूपवंशात्] तद्रूपेण वशादित्यर्थः। समुच्चयः। इदं वक्त्रमिन्दुमण्डलं चेत्येवमावगरः [?] दीपकं, मुखेन्द्रोः प्रकृताप्रकृतयोः प्रसीदतीत्येकक्रियात्वात् तुल्ययोगिता, मुखचन्द्रयोरपि वर्णनीयत्वेन प्रकृतत्वात् प्रदोषे वर्णनीय इत्यर्थः तत्र हि चन्द्रवर्णनाप्रकृतामुखनैर्मल्येत्यनन्तरं वर्णनीया इति शेषः।

## साहित्यचूडामणिः

एवं द्वयोरुक्त्वा, बहूनामाह—नयनेति। अत्र पर्यायोक्त्यतिशयोक्तिरूपके दीपकतुल्ययोगितासमासोक्त्यप्रस्तुतप्रशंसाप्रभृतीनां संशयास्पदत्वलक्षणः सङ्कर इत्याह—किमिति। भङ्ग्यन्तरेण प्रकारान्तरेण अतिशयोक्तिः भेदे अभेदाध्यवसायात् कमलमनम्भसीतिवत्। एतयोर्मुखचन्द्रयोः समुच्चयविवक्षया इन्दोर्बिम्बमेतन्मुखं चेति। अप्रयुज्यमानेऽपि चकारे क्वचित् समुच्चयः परिस्फुरति गामश्व पुरुषं पशुभि'त्यादिवत्।

इन्दुबिम्बे एतत्परामृष्टे च मुखे प्रसादक्रिया दीप्यते। तुल्ययोगितेति। इन्दुबिम्बस्य च मुखस्य च द्वयोरुपमानयोः उपमेययोर्वा व्यासेन विवक्षणात्। उपलक्षणं चैतत्। तेन समास एकत्वाध्यवसायेन विरोधः इन्दुबिम्बप्रसत्त्यन्धकाराविशरणलक्षणयोः क्रिययोर्विरोधात्। चन्द्रोदयेऽपि न तमो विशीर्यते इति विशेषोक्तिः। कामोत्कर्षशालिनो विप्रलम्भशृङ्गारस्याङ्गत्वाद् रसवांश्च स्वीक्रियते अयमेवेति। भावसन्धिशवलत्वन्यायेन द्वयोः संसृष्टिः अनेकेषामलङ्काराणां सङ्कर इत्येकदेशिकानां पक्षोऽप्यत्रोपक्षिप्यते।

### सम्प्रदायप्रकाशिनी

बहूनामुदाहरति—नयनानन्देति। विनिरुद्धा आशा दिक् मनोरथश्च येन तत्। तमो ध्वान्तं व्यामोहश्च।

योजयति—अत्र चेत्यादि। कामोद्दीपककालात्मनः कार्यस्य कारणभूतेन्दुवृत्ताभिधानात् किं पर्यायोक्तम् उत इन्दोर्बिम्बमिति वदनस्यैवाध्यवसायादतिशयोक्तिः, अथवैतदिति वदनमुद्दिश्य तत्रेन्दुबिम्बरूपारोपाद् रूपकम्, उत मुखेन्द्वोः प्रकृताप्रकृतयोः समुच्चयविवक्षायां दीपकम्, अथवोभयत्र प्रस्तुतत्वेन समुच्चयविवक्षायां तुल्ययोगिता, किमु प्रदोषसमये प्रस्तुते विशेषणसाम्यादप्रस्तुताननावगतौ समासोक्तिः, आहोस्विन्मुखनैर्मल्यप्रस्तावविवक्षणादप्रस्तुतेन्दुप्रसादप्रशंसेत्यप्रस्तुतप्रशंसा। अतः साधकबाधकाभावाद् बहूनां सन्देहात्मैवायं सङ्करः। परस्परपरिहारात् तु नाङ्गाङ्गिभावः।

### मधुमती

एवं द्वयोः सङ्करसमुदाहृत्य बहूनामुदाहरति—नयनेति। अथैतयोरिति। एतत्पदप्रतिपाद्याननचन्द्रयोः प्रकृताप्रकृतयोः प्रसादरूपैक्रियान्वयात् दीपकम्। समुच्चविवक्षायामिति। चन्द्रश्च मुखं चे'त्यत्रेव 'च'काराभावेऽपि'गामश्चं पुरुषं पशुम्' इत्यादाविव समुच्चयो द्योत्यः इति भावः। अथवेति। समुच्चय इत्यर्थः। न तु तुल्ययोगितैव। औपम्यप्रतीतेः।

एवं चायमलङ्कारः कवितात्पर्यविषयो न वा इत्याकारकः सन्देहोऽभि मतः। अलङ्कारस्वरूपाणां निश्चितत्वात्। अयमेवेति। सन्देहात्मक एवेत्यर्थः। नवनीतघृतवत् अचिरताप्रतीतेः।

### विस्तारिका

द्वयोः सङ्करमुक्त्वा बहूनां सङ्करमुदाहरति—नयनानन्देति। एतदिन्दोर्बिम्बं प्रसीदति। अधुनापि प्रदोषसमयेऽपि। इदं तमोऽविशीर्णमित्यर्थः। कीदृशम्? निरुद्धाशम्, निरुद्धा आशा दिशो येन दिवा तावच्छीर्णमेव इदानीमपीत्यर्थः।

समुच्चयविवक्षायामिति। 'चन्द्रः प्रसीदति, एतन्मुखं प्रसीदति' इति चकाराभावेऽपि 'गामश्वं पुरुषं पशुम्' इत्यादिवत् समुच्चयविवक्षायामित्यर्थः। एकस्य प्राकरणिकत्वेऽन्यस्याप्राकरणिकत्वे विवक्षिते दीपकम्, द्वयोः प्राकरणिकत्वविवक्षायामप्राकरणिकत्वविवक्षायां वा तुल्ययोगितापदेन क्रियासमुच्चयोऽत्र विवक्षितः। यत्त्वौपम्याप्रतीतेर्न तुल्ययोगितेति, तन्न, तुल्ययोगितायामुपमानोपमेयभावस्याघटकत्वात्। तथात्वे च 'पाण्डुक्षा-

मम्' इत्यादेस्तुल्ययोगितोदाहरणस्य स्वयं वृत्तिकृतैव वदति, तस्यासङ्गतत्वापत्तेः । तथा च तत्र प्रकृतत्वाप्रकृतत्वे प्राधान्येन वर्णनीयत्वदितरत्वे इति तत्त्वम् । अयमेवेति सन्देहात्मा सङ्कर इत्यर्थः ।

### सारबोधिनी

द्वयोः सङ्करमुक्त्वा बहूनां सङ्करमाह नयनेति । समुच्चयविवक्षायामित्यर्थः । तथैकस्यऽप्रकृतत्वे परस्या-प्रकृतत्वे दीपकम् । तयोरिति । चन्द्रः प्रसीदति । एतन्मुखं प्रसीदति इति चकाराभावेऽपि गामश्वं पुरुषं प्रभुमित्या-दिवत् समुच्चयविवक्षया प्रकृतत्वविवक्षायां अप्रकृतत्वविवक्षायां वा तुल्ययोगिता । अयमेवेति । संदेहात्मा सङ्करः इत्यर्थः ।

### काव्यप्रदीपः

बहूनां यथा—

**'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।**
**अधुनापि निरुद्धाशमविशीर्णमिदं तमः ॥'**

अत्र किं कामोद्दीपकः कालो वर्तत इति भङ्ग्यन्तरेणाभिधानात्पर्यायोक्तम्, किं वा एतदित्यस्य बिम्बपरा-मर्शकतया वदनस्येन्दुबिम्बेनाध्यवसानादतिशयोक्तिः, अथ वा एतदिति वक्त्रं निर्दिश्येन्दुबिम्बरूपणवशाद्रूपकम्, अथवा प्रसीदतीत्यस्योभयत्रान्वयविवक्षायामेकतरस्य प्ररकृतत्वाद्दीपकम् । द्वयोरपि प्रकृतत्वेऽप्रकृतत्वे वा तुल्य-योगिता किं वा प्रदोषवर्णने चन्द्रबिम्बस्य प्रकृतत्वे विशेषणसाम्यादाननप्रतीतौ समासोक्तिः आहोस्विन्मुखनैर्मल्य-वर्णनप्रस्तावाच्चन्द्रस्याप्रस्तुतत्वेनाप्रस्तुतप्रशंसेति संदेहः ।

### काव्यप्रकाशखण्डनम्

**नयनानन्ददायीन्दोर्बिम्बमेतत् प्रसीदिति ।**
**अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः ॥**

इदं इन्दोर्बिम्बं चन्द्रमण्डलं प्रसीदति प्रसादं प्राप्नोति । इदं तमः विशीर्णम् । कीदृशम्? विनिरुद्धा आच्छन्ना दिग् येनेत्यर्थः । प्रसीदतीत्यस्योभयत्रान्वयादित्यर्थः । अत्र किं कामस्योद्दीपनकालो वर्त्तते?—इति भङ्ग्यन्तरेण कथनात् किं पर्यायोक्तम्? उत तदाननस्येन्दु बिम्बस्य तथाध्यवसायादतिशयोक्ति? । किमेतदिति वक्त्रं निर्दिश्य तद्रूपारोपणाद् रूपकमिदमित्यादिबहूनां संदेहादयमेव सङ्करः ।

### आदर्शः

बहुनामलङ्काराणामपि सन्देहसङ्करमाह—यथा वा नयनेति । इन्दोरिदं नयनानन्ददायि बिम्बं प्रसीदति प्रसन्नं भवति । अधुनाऽपीदं निरुद्धाशं निरुद्धदिगन्तं तमोऽविशीर्णमनष्टम्, काकुवशात् कथमविशीर्णमित्यर्थः । भङ्ग्यन्तरेणेति, इन्दुबिम्बप्रसादलभ्यकामोद्दीपकत्वकस्य वर्त्तमानकालस्य व्यङ्ग्यस्यापि अधुनापदेनाधिकरणतया वाच्यत्वरूपभङ्ग्यन्तरेणेत्यर्थः । अतिशयोक्तिरिति, मानिनीवदनस्य प्रकृतस्यानिर्देशेन तदुपमानेन्दुबिम्बतया

तदध्यासात्। 'कमलमनम्भसी' तिवदुपमानेनोपमेयनिगरणरूपेत्यर्थः। किञ्चैतदिति, बिम्बमेतदित्यत्रैतपदेन नेन्दुबिम्बनिर्देशः किन्त्वेतन्मुखमेवेन्दुबिम्बमिति रूपकमित्यर्थः। अत्र पूर्वत्र च मानहेतुभूतस्तमोगुणः स्तमःपदार्थः। निरुद्धाशं निरुद्धकामिप्रत्याशमित्यर्थः। अथवैतयोरिति, रूप्यरूपकं विना इन्दुबिम्ब-वदनयोरप्रकृत-प्रकृतयोः प्रसादरूपैकधर्मान्वयरूपसमुच्चयविवक्षायामित्यर्थः। अथवा तुल्ययोगितेति, इन्दुबिम्बवदनयोर्द्वयोरपि प्रकृतत्वेऽप्रकृतत्वे वा तुल्ययोगितेत्यर्थः। दीपकतुल्ययोगितयोरेतन्मात्रभेदात् पूर्वत्रात्र च बिम्बमित्यत्र बिम्बञ्चेत्यर्थो बोध्यः। किमुतेति, प्रदोषकालीनचन्द्रस्य प्रकान्तत्वे इत्यर्थः। विशेषणसाम्यादिति, प्रसादरूपस्य विशेषणस्य। आहोस्विदिति, पदमिदं पक्षान्तरवाचि। स्पष्टमपरम्। अयमेवेति। अनिश्चय एव सङ्करः, निश्चयसत्त्वे तु न सङ्कर इत्यर्थः।

## सुधासागरः

एकस्यैकदा प्रस्तुताप्रस्तुतोभयरूपत्वाभावादनयोर्युगपदसम्भवात्, न्यायदोषयोरसम्भवाच्चेत्यर्थः। अयं द्वयोः सङ्करः। बहूनां यथा—नयनेति।

यत्र तु न्यायदोषयोरन्यतरस्यावतारः, तत्र, एकतरस्य निश्चयात् न संशयः। न्यायश्च साधकत्वम् अनुकूलता दोषोऽपि बाधकत्वं प्रतिकूलता। तत्र

सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः ॥ ५७५ ॥

इत्यत्र मुख्यतया, अवगम्यमाना हासद्युतिर्वक्त्रे, एवानुकूल्य भजते, इत्युपमायाः साधकम् शशिना तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता।

---

**सङ्केतः**

वक्त्रशशिनः इति। अत्र 'वक्त्रं शशीव' इत्युपमा, न तु 'वक्त्रमेव शशी' इति रूपकम् इत्याह—मुख्यतयेति। हासद्युतिः प्रकृतत्वात् मुख्या। सा च वक्त्रानुगुणेति। उपमासाधिका। तस्यां इति। हासद्युतेरित्यर्थः। एतस्याश्च शुक्लतया चन्द्रेऽपि किञ्चिदानुकूल्यमस्तीत्यतो न बाधकत्वम्।

**बालचित्तानुरञ्जनी**

न्यायदोषयोः संभवे अयं सङ्करो न संभवतीत्याह यत्र त्विति। न्यायशब्दार्थमाह न्यायश्चेति। मुख्यतया घटितत्वमनुकूलता साधकं प्रमाणं बाधकं दोष इति भावः। उपमारूपकयोः प्रत्येकं साधनम्। चत्वारो दोषाः उपमायाः साधनं न रूपकस्य दूषणम्। किन्तु एकस्य रूपकस्य साधनं नोपमाया दूषणम्। किन्तु ताटस्थ्यमिति द्वितीयः। उपमाया दूषणं रूपकताटस्थ्यमिति तृतीयः। रूपकस्य दूषणम् हासद्युतेर्मुख्यया वृत्त्या एवावस्थानात् शशिनस्तिरोधानं वक्त्रस्याविर्भाव इति तस्या आनुकूल्यं भजत इत्युपमायाः साधनमित्यर्थः। ननु शशिनि तस्याः प्रातिकूल्याद् रूपकलक्षणस्य दूषणमेवास्ति। अत आह शशिना नत्विति।

**काव्यादर्शः**

न संशय इति। यदि साधकं बाधकं वा प्रमाणमेकमेव स्यात् तदा एकतरस्यालंकारस्य निश्चयान्न संदेहसंकर इत्यर्थः। तत्रेति। साधकत्वबाधकत्वयोर्मध्यात् साधकत्वे, यथा—'सौभाग्यम्' इति। अत्र 'वक्त्रं शशीव' इत्युपमा। ननु, 'वक्त्रमेव शशी' इति रूपकम्' इत्याह—मुख्यतयेति। हासद्युतेः प्रकृतत्वात् ज्योत्स्नापेक्षया मुख्यतया। सा च वक्त्रस्यैव अनुगुणेति उपमायाः साधकं प्रमाणम्। न तथेति। शशिन्यपि हासद्युतेः शुक्लतया मनागानुकूल्यमस्तीति भावः। तस्या इति हासद्युतेः।

**विवेकः**

यत्र त्विति—शब्दस्यार्थे प्रवृत्तिनिमित्तं भावः। यदाहुः 'यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' इति (पा. ५/११२९ भा. वा.)। तत्र सम्बन्धोपाधिभावरूपतयाऽनुगतेरूपे निरुक्तया भावात् व्युत्पन्नस्य न्यायशब्दस्यार्थमाह साधकत्वमिति। सहकारित्वापरत्वख्यापनायेदमपि विवृणोति अनुकूलत्वमिति [-तेति]। एवं दोषोऽपीत्याह—बाधकत्वमित्यादि—यद्यपि सन्देहविरहस्योभयत्रापि समत्वं तथाऽप्येकत्र साधकप्रमाणस-

द्भावेनापरत्र बाधकप्रमाणसद्भावेनेति विशेषः । न च किमनेनेति वाच्यं साधकप्रमाणस्य स्वरूपतोऽनुकूलत्वेन सर्ववादिसम्मत्वात् । तत्र साधकत्वमुदाहरति सौभाग्यमित्यादि । अत्र वक्त्रं शशीवेति किमुपमा, वक्त्रमेव शशीति वा रूपकमिति संशयः । तत्रोपमां प्रति हासद्युतेः साधकत्वं चन्द्रापेक्षया वक्त्रे तस्यानुकूल्यात् । न च रूपकं प्रतिबाधकता, उपचरितायास्तस्याः शशिन्यपि सम्भवात् । अत एव साधकतया विशिमष्टि मुख्यतयेति । शशिनि तु न तथेति—यथा वक्त्रेऽनुकूला तथा तु न प्रतिकूला, तत्रोदासीनेत्यर्थः ।

## दीपिका

न्यायदोषशब्दौ करणसिद्धौ, अन्यथा साधकत्वमित्यादिना सामानाधिकरण्ययानुपपत्तिः साधकत्वबाधकत्वयोर्विवृत्तिः । अनुकूलता प्रतिकूलेति । मुख्यतयाऽवगम्यमाना, उपमेयतया निबद्धत्वात् । न तथा प्रतिकूलेति । तस्या असम्भवेऽपि तत्प्रतिकूलज्योत्स्नासम्भवात् अपरत्वमिन्दोरनुकूलमिति ।

## दर्पणः

एकस्यालङ्कारस्य साधकत्वमपि किमनुकुलेनेनेति । एवं बाधकप्रतिकूलतेति हासद्युतेर्मुख्यतयाऽवगम्यमानत्वं उपमेयतयोपनिबद्धत्वात् शशिनि तु न तथा प्रतिकूलता तस्यासंभवोऽपि तत्प्रतिनिधीभूतयोस्तयोः संभवात् अपत्व **[?]** मिन्दोरनुगुणं रक्तरूपकमेकस्मिन्निन्दौ सति किमपरेणेन्दुनेति भासात् । न तु वक्त्रस्य प्रतिकूलमिति इन्दुसमानगुणे तदुक्ते सति किमपरेणेन्दुनेति भासात् । न तु वक्त्रस्य प्रतिकूलमिति इन्दुसमानगुणे तदुक्ते सति किमयमपर इन्दुरुत्पद्यत इत्यपि प्रतिभासेऽत्यन्तासदित्यभावात् असंभवादनुपपत्तेः रूपकस्य बाधकमिति । अयमाशयः यत्र स्वल्पारोप्यमाणमुपमेयमवच्छादितस्वरूपं निजरूपेण व्यवहारयति तद्रूपकं । अत एवोपमानस्योत्कटत्वमित्याह तस्या अबाधकतेति ।

## साहित्यचूडामणिः

न्यायदोषयोस्तु जाग्रतोर्न सन्देहोत्पत्तिरित्याह—यत्र त्विति । परिजिघृक्षते न्यायः परिजिहीर्षते दोषः । साधकत्वमित्यादौ भावप्रत्ययः स्वरूपनिष्कर्षाय । उपमारूपकयोः प्रत्येकं साधनदूषणद्वारा चत्वारो भेदाः । उपमायाःसाधनं न रूपकस्य दूषणं किन्तु ताटस्थ्यमित्येकः । रूपकस्य साधनं नोपमाया दूषणं यावत् ताटस्थ्यमिति द्वितीयः । उपमाया दूषणं रूपके ताटस्थ्यमिति तृतीयः । रूपकस्य दूषणमुपमायास्ताटस्थ्यमिति तुरीय इति । तत्रेति । चतुर्णां मध्ये । सौभाग्यमिति । अत्र वक्त्रं शशीवेति वा वक्त्रमेव शशीतिवा संशये हासद्युतेर्मुख्यया वृत्त्या वक्त्र एवावस्थानात् शशिनस्तिरोधानं वक्त्रस्याविर्भाव इति तस्या आनुकूल्यम् । ननु शशिनि तस्याः प्रतिकूल्यात् कोट्यान्तरस्य रूपकलक्षणस्य बाधकमेवास्त्विति चेदाह—शशिनि त्विति । तथेति । गुणवृत्त्या घटमानत्वादित्युपमा, साध्यते, न पुनः रूपकं दूष्यते ।

## सम्प्रदायप्रकाशिनी

युगपद्विरोधाच्च न संसृष्टिः । साधकबाधकयोरेकतरसद्भावे तु नियतपरिग्रह इत्याह—यत्र त्वित्यादि । अवतरोऽवतारः । 'सौभाग्यमि'त्यत्र हि ज्योत्स्नासादृश्यविशिष्टतया मुख्या हसितद्युतिः

### मधुमती

अनुकूलतया मुख्यतया घटितत्वेन। प्रतिकूलतया अमुख्यतया घटितत्वेन। मुख्यतयेति। रूपके आरोप्यस्य शशिनः प्राधान्यात् तत्र हासान्वयः। उपमायां तु वक्त्रप्राधान्यात् हाससम्बन्धः घटते। अत्र 'द्युतिपदं शोभापरम्' इति निश्चये सति एतत् विनिगमकम्। अन्यथा द्युतिपदस्य प्रभापरत्वे 'हास एव द्युतिः' इति रूपकं 'वक्त्रमेव शशी' इति रूपकानुकुल्यं भजते इति सन्देहतादवस्थ्यात्। न तथेति। हासेन विकासलक्षणायां अर्थघटनात्। अपरत्वमित्यपरशब्दस्य पूर्वापेक्षित्वात् प्रथमेनेन्दुना अवश्यंभाव्यमिति।

### विस्तारिका

न्यायदोषपदार्थौ व्याचष्टे-न्यायश्चेत्यादि।

मुख्यतयेति। साक्षात्सम्बद्धतयेत्यर्थः। रूपके चन्द्रस्यैव प्रधान्येऽपि तत्र सहान्वयः, उपमायां तु प्रधाने मुखे साक्षादन्वयः सम्भवतीत्यार्थः। अत्र श्रुतिपदस्य शोभापरत्वनिश्चये सतीदं विनिगमकम्, अन्यथा श्रुतिपदस्य प्रभापरत्वे हास एव च द्युतिरिति रूपकम्, चक्रमेव शशीति रूपकस्यानुकूल्यं भजत एवेति सन्देहतादवस्थ्यात् न तथेति। हासेन विकासलक्षणायां कथञ्चिदर्थघटनादिति भावः।

### सारबोधिनी

मुख्यतयेति। स्वारस्येन लक्षणादिकं विनैव संबद्धतयेत्यर्थः। रूपके चन्द्रस्यैव प्राधान्येन तत्र हासान-न्वयात्। उपमायां तु प्रधाने मुखे स्वारस्यादन्वयः संभवतीत्यर्थः। अत्र द्युतिपदस्य शोभापरत्वनिश्चये सतीदं विनिगमकम्। अन्यथा द्युतिपदस्य प्रभापरत्वे हास एव द्युतिरिति रूपकं, वक्त्रमेव शशीति रूपकस्यानुकूल्यं भजत एवेति संदेहता। न तथेति। हासपदेन विकासलक्षणायां कथंचिदर्थघटनादिति भावः।

### काव्यप्रदीप:

न्यायदोषयोरभावात्। यत्र तु तयोरन्यतरस्यावतारस्तत्रैकतरनिश्चयान्न संशयस्तत्र 'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः' इत्यत्र मुख्यत्वेन प्रतीयमाना हसितद्युतर्वक्त्र एवानुकूल्यं भजते। तत्रैव मुख्यतत्स्तसंभवात्। वक्त्रस्य प्राधान्येन स्थितिरुपमायामेवेत्युपमासाधिका शशिनि तु नानुकूला। मुख्यतस्तत्र हासद्युतेरभावात्। नापि प्रतिकूला। गौणत्वेनाप्युपपत्तेरिति।

### काव्यप्रकाशखण्डनम्

**'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः।'**

इत्यादौ हासद्युतिर्वक्त्र एव संभवतीत्युपमायाः साधिका, रूपकस्य तु बाधिका।

### आदर्शः

तदेवाह—यत्र त्विति । ननु न्याय एवापरकोटेर्दोषः, एवं दोष एवापरकोटेर्न्यायस्तत् कथमिदं त्वया उक्तमित्यत आह—न्यायश्चेति । एकस्य साधकं नान्यस्य बाधकम्, किन्तु तदंशे उत्कटत्वरूपाऽनुकूलतैव तस्य, न त्वपरांशे सर्वथा बाधकत्वमित्यर्थः । एवं दोषेऽपि बोध्यम् ।

सौभाग्यमिति । ज्योत्स्नातुल्या हासद्युतिर्वक्त्रशशिनः सौभाग्यं वितनोतीत्यर्थः । वक्त्रमेव शशी वक्त्रं शशीवेति वा रूपकोपमयोः सन्देहे 'मुख्यतया' विशेष्यतयाऽवगम्यमाना हासद्युतिर्वक्त्र एवाऽऽनुकूल्यं भजते, वक्त्रं शशीवेत्युपमालब्धप्राधान्ये वक्त्र एव साक्षात्सम्बन्धेन प्रतीतिविषयत्वादुपमायामानुकूल्यं भजत इत्यर्थः । शशिनि त्विति । वक्त्रमेव शशीति रूपकलब्धप्राधान्ये शशिनि तु न तथा प्रतिकूला, वक्त्रभिन्नतया प्रतीयमाने शशिन्यपि वक्त्रधर्मस्य हासद्युतेः परम्परयाऽन्वयसम्भवादिति भावः । किन्तु परम्परापेक्षया साक्षात्त्वे आनुकूल्यमिति भावः ।

### सुधासागरः

न्यायदोषयोरभावादित्यर्थः ।

सौभाग्यमित्यादि । अत्र मुख्यत्वेन प्रतीयमाना सितद्युतिर्वक्त्रे एवानुकूल्यं भजते, तत्रैव मुख्यतस्तत्सम्भवात् । वक्त्रस्य प्राधान्येनावगतिरुपमायामेवेत्युपमासाधिका । शशिनि नानुकूला, मुख्यतस्तत्र हासद्युतेरभावात् । नापि प्रतिकूला, गौणत्वेनाप्युपपत्तेरिति न रूपकं प्रति साधिका वा ।

वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः ॥ ५७६ ॥

इत्यत्रापरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते न तूपमाया बाधकताम् ।

---

**सङ्केतः**

वक्त्रेन्दाविति । अत्र अपरत्वं रूपकस्य साधकतां प्रतिपद्यते इति योगः । अपरत्वमिति । वक्त्रस्य बहुत्वात् अपरत्वं अविस्मयावहमिति नानुकूलम् । चन्द्रे तु एकत्वात् विस्मयावहत्वेन अनुकूलमेव ।

**बालचित्तानुरञ्जनी**

गुणवृत्त्या द्वितीयमुदाहरति वक्त्रेन्दाविति । अत्र चन्द्रस्यानुकूलमपरत्वं वक्त्रस्य प्रतिकूलमिति रूपकम् साध्यते । तेनोपमा दुष्यत इत्यर्थः ।

**काव्यादर्शः**

यथा वा—'वक्त्रेन्दौ' इति । उपमानप्राधान्ये रूपकं, उपमेयप्राधान्ये तूपमा । अत्र च 'वक्त्रमेवेन्दु' इति रूपकं, तत इन्दोः प्राधान्यमिन्दौ चापरत्वं घटत इत्यानुकूल्यमेव रूपकस्य साधकं प्रमाणमित्याह—अपरत्वमिति । अपरत्वस्यैन्दौ विस्मयावहत्वाद् आनुकूल्यं वक्त्रे चापरत्वं संभाव्यत एव, वक्त्रस्य बहुविधत्वात् ।

**विवेकः**

एवं वक्त्रेन्दावित्यत्रा परशब्दस्य साधकत्वादानुकूल्यं द्रष्टव्यम् ।

**दीपिका**

वक्त्ररूपे एकस्मिन्निन्दौ किमपरेणेन्दुनेति प्रतिभासात् । न तु वक्त्रस्य प्रतिकूलमिति । इन्दुसामान्यगुणे तव वक्त्रे सति किमपर इन्दुरुदित इत्यपि प्रतिभासेऽन्ततोऽसङ्गत्यभावात् ।

**साहित्यचूडामणिः**

वक्त्रेन्दाविति । अत्र चन्द्रस्यापरत्वमनुकूलं, न वक्त्रस्य प्रतिकूलमिति रूपकं साध्यते,

**सम्प्रदायप्रकाशिनी**

वक्त्रं शशीवेत्युपममासाधिका यथा च वक्त्रेऽनुकूला न तथा च शशिनि प्रतिकूला, ज्योत्स्नासादृश्येनान्वयसम्भावनात् । अतो न रूपकबाधिका । 'वक्त्रेन्दावि'त्यत्र वक्त्रादपरत्वमिन्दोरनुकूलं, न तु वक्त्रप्रतिकूलमिति रूपकसाधकं, नोपमाबाधकम् इत्थं साधकादेकतरपरिग्रहः ।

## मधुमती

वक्त्रेन्दौ इति रूपकसा.धकम्, उपमायां तु वक्त्रस्य प्राधान्यात् इन्दोश्च अप्राधान्यात् अपरत्वप्रतीतिः न स्यात्। न त्विति। 'इन्दुतुल्ये मुखे सति किमपरेण अनुख्येन चन्द्रेण ?' इति यथाकथञ्चिदर्थघटनात् न प्रतिकूलम्। चन्द्रपरत्वेन मुख्यतयोपलक्षणात्। न तूपमाया इति। तथा च एतयोः उदाहरणयोः उत्कटः सन्देहः इति भावः।

## विस्तारिका

अपरत्वमिन्दोरनुगुणमिति। अपरशब्दस्य पूर्वापेक्षित्वात् प्रथमेनेन्दुनाऽवश्यं भाव्यमिति वक्त्रेन्दावित्यत्र वक्त्रे इन्दुतादात्म्यारोपरूपस्य रूपकस्य साधकम्, उपमायां तु वक्त्रत्वेनैव मुखस्य प्रतीतौ शीतांशावपरत्वप्रतीतिर्न स्यात्, इन्द्वन्तरस्याप्रतीतेरित्यर्थः।

## सारबोधिनी

ननु चेदनुकूल न कथं साधकं किञ्च साधकत्वपरिहारेण बाधकत्वोपादानं किमर्थमत आह विधीत्यादि। विधीत्यस्य स्वविरोधिकोटीत्यादिः। तथा च स्वविरोधिकोटेर्विध्युपमर्दिनो व्यतिरेकनिश्चायकस्य तदपेक्षया स्वसाधकापेक्षया उत्कटत्वेन बलत्त्वेन प्रतिपत्तेः सन्देहप्रतिबन्ध इति शेषः। तथाहि, उपमासाधकत्वमाखेऽभिहिते रूपकस्यापि कश्चित्साधकः स्यादिति सन्देहाहितसन्देहस्य तादवस्थ्याद् बालके त्वभिहिते तद्व्यवच्छेदप्रतीत्या सन्देहाविषयत्वमुपद्यते। एवञ्च सतोऽपि साधकश्याकिञ्चित्करतया बाधकमेव प्राधान्यादुपमासाधकमिति भावः।

## काव्यप्रदीपः

न रूपकं प्रति साधिका वाधिका वा 'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते' इत्यत्रापरत्वमिन्दावनुगुणम्। मुखरूपेन्दौ सति किमपरेणेन्दुनेति प्रतीतेः। तथाप्रतीतिश्च रूपकेण विना नेति रूपकं प्रति साधकतां प्रतिपद्यते न पुनवक्त्रस्य प्रतिकूलम्। इन्दुसमानगुणे वक्त्रे सति किमपर इन्दुरुदित इति प्रतीतावत्रात्यन्तासंगत्यभावात्। अतो नोपमाबाधकम्।

## आदर्शः

इत्थमुपमायाम् आनुकूल्यं दर्शयित्वा रूपके आनुकूल्यं दर्शयति—वक्त्रेन्दाविति। यदपर इत्यत्र तद् वृथेति शेषो बोध्योः। अपरत्वमिन्दोरनुगुणमिति, वक्त्रमेवेन्दुरिति रूपकलब्धप्राधान्यस्य इन्दोरनुगुणमित्यर्थः। 'अयमपरः पण्डितः' इत्यत्र यथा पण्डितान्तरापेक्षयैवापरत्वं प्रतीयते न घटाद्यपेक्षया, तथा "अयमपरः शीतांशुरि"त्युक्तावपि वक्त्रात्मकेन्द्वपेक्षयैवापरत्वप्रतीतिः, न त्विन्दुतुल्यवक्त्रापेक्षयेत्यर्थः। वक्त्रमिन्दुरिवेत्युपमायान्तु तस्य नैकान्तं प्रातिकूल्यमित्याह—न तु वक्त्रस्येति, वक्त्रमिन्दुरिवेत्युपमालब्धप्राधान्यस्य वक्त्रस्य तु न प्रतिकूलमित्यर्थः, वक्त्रापेक्षया परत्वस्याबाधित त्वादिति भावः। इन्द्वपेक्षया परत्वन्तु पुरस्फुर्त्तिकमिति तदानुकूल्यमिति भावः।

सुधासागरः

अत्रापरत्वमिन्दोरनुगुणम्, मुखरूपेन्दौ सति किमपरेणेन्दुनेति प्रतीतेः, तथा प्रतीतिश्च रूपकेण बिना नेति रूपकं प्रतिसाधकतां प्रतिपद्यते न पुनर्वक्त्रस्य प्रतिकूलम्, इन्दुसमानगुणे सति किमपरेन्दुरुदित इति प्रतीतवत्रासङ्गत्यभावात्, अतो नोपाबाधकम्। तत्पद्यं तु—

**किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं**
**वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम्।**
**वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतो**
**दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे॥ इति।**

राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।। ५७७ ।।

इत्यत्र पुनरालिङ्गनमुपमां निरस्यति सदृशं प्रति परप्रेयसीप्रयुक्तस्यालिङ्गन-स्यासंभवात् ।

---

### सङ्केतः

साधकत्वेनोक्त्वा, बाधकत्वेनाह—राजेति । राजैव नारायणः इति रूपकसमासः । उपमानप्राधान्ये रूप-कम्, उपमेयप्राधान्ये तु उपमा इति सर्वत्र ज्ञेयम् । सदृशं राजानम्, प्रेयसी लक्ष्मीः । निजपतितुल्यं अन्यं कान्ता नालिङ्गतीत्यर्थः ।

### बालचित्तानुरञ्जनी

तृतीयमुदाहरति राजेति । अत्रालिङ्गनमुपमायां प्रतिकूलम् । तदेवोपपादयति सदृशमिति ।

### काव्यादर्शः

बाधकत्वे यथा—'राजनारायणम्' इति । 'राजैव नारायणः' इति मयूरव्यंसकादित्वाद् रूपकसमासः, ततश्च उपमानस्य नारायणस्य प्राधान्यम् । तं प्रति लक्ष्मीप्रयुक्तमालिङ्गनं घटत इत्यालिङ्गनमुपमाया बाधकं प्रमाणम् । उपमायां हि उपमेयस्य राज्ञः प्राधान्यं, तत्रैव चित्तविश्रान्तेः । न च स्वभर्तृसदृशमन्यं प्रेयसी काचिद् आलिङ्गति । सदृशमिति, राजानम् ।

### दीपिका

सदृशं राजानम् । असम्भवादनुपादनाद् लक्ष्म्यालिङ्गनस्यानुपपत्तेश्चेति शेषः । रूपकस्य बाधकमिति ।

### साहित्यचूडामणिः

नोपमा दूष्यते राजनारायणमिति । अत्रालिङ्गनमुपमायाः प्रतिकूलम् । तदेवोपपादयति—सदृशमिति । न खलु स्वप्रियौपम्यात् परपुरुषपरिरम्भं प्रत्यौचित्यमित्युपमा दूष्यते, न रूपकं साध्यते ।

### सम्प्रदाप्रकाशिनी

बाधकादप्याह—राजेति । लक्ष्मीर्हरिप्रिया सम्पच्च । राजनारायणमित्यत्रालिङ्गनं राजा नारायण इवेत्यु-पमां निरस्यति, उपमेयं राजानं प्रति हरिप्रियाप्रयुक्तलिङ्गनासम्भवात् ।

### मधुमती

उपमायाः बाधकावतारे उदाहरति—राजनारायणमिति । सदृशमिति । रूपके तु नारायणस्य प्राधान्यात् तदालिङ्गनं युज्यते इति भावः ।

## विस्तारिका

ननु वक्त्रस्य प्रतिकूलमिति । इन्दुतुल्ये मुखे सति किमपरेण मुखेन चन्द्रेणेति यथाकथञ्चिदर्थघटनाद् वक्त्रप्राधान्ये न प्रतिकूलमित्युपमाया न बाधकमित्यर्थः । तथा चानयोस्तुल्यकोटिकः संशयो यत्कोटेः साधकमस्ति तदंशस्योत्कंटत्वात् लक्षणे च तुल्यकोटिकसंशयस्यैव विवक्षितत्वादिति भावः ।

सदृशं प्रतीति । अन्त्यानौचित्यादिति भावः ।

## काव्यप्रदीपः

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्' इत्यत्रालिङ्गनमुपमायां बाधकम् । स्वामिसदृशं प्रति प्रेयसी-प्रयुक्तस्यालिङ्गनस्यानौचित्यात् । न तु रूपके साधकम् ।

इदानीं दोषस्यैवैकत्र प्रातिकूल्योत्कटत्वरूपं बाधकं दर्शयति—राजनारायणमिति । राजैव नारायणः, राजा नारायण इवेति रूपकोपमयोः सन्देहे आलिङ्गनस्यौत्कट्यात् तां निरस्यतीत्यर्थः । प्रातिकूल्यं ग्राहयति—सदृशं प्रतीति । प्रेयसी नारायणस्य नारायणसदृशे तस्या आलिङ्गनबाधादित्यर्थः ।

पादाम्बुजं भवतु नो विजयाय मञ्जु-

मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ ५७८ ॥

इत्यत्र मञ्जीरशिञ्जितम् अम्बुजे प्रतिकूलम् असंभवादिति रूपकस्य बाधकम् न तु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते विध्युपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः । एवमन्यत्रापि सुधीभिः परीक्ष्यम् ॥

---

### सङ्केतः

पादाम्बुजमिति । अत्र उपमायां पादप्राधान्ये नूपुरध्वनियोगः घटते रूपके तु अम्बुजप्राधान्ये न घटते ।

विध्युपमर्दिनः इति । यद्यपि मञ्जीरशिञ्जितं रूपकविधिच्छेदेन बाधकम्, पादानुकूल्यात् उपमां प्रति साधकं च स्यात् । तथआपि बाधकत्वेन व्यपदेशः । 'प्रधानेन व्यपदेशाः भवन्ति' इति न्यायात् । साधकत्वापेक्षया बलिष्ठत्वेनोत्कटतया प्रतीतेः बाधकत्वमेव प्रधानम् । तदपेक्षया साधकत्वापेक्षया । इति द्वितीयः सङ्करः ।

### सङ्केतः (रूय्यकः)

यद्यपि साधकत्वं बाधकत्वं चोभयमस्यास्ति तथापि 'प्रधानेन व्यपदेशा भवन्ती'ति न्यायाद् बाधकत्वेनेवास्य तु व्यपदेशो न्याय्यः, बाधकत्वस्य बलीयस्त्वेनोत्कटतया प्रतीतेः । प्राधान्याद्रूपकं प्रति च बाधकं यत्तदेवोपमाविषयमिह साधकं पर्यवस्यति, प्रकरणान्तराभावात् ।

### बालचित्तानुरञ्जनी

चतुर्थमुदाहरति पादाम्बुजमिति । पादाम्बुजमिवेत्युपमा । अत्र मञ्जीरशिञ्जितं अम्बुजे प्रतिकूलमिति रूपकमिष्यत इत्यर्थः ।

ननु यत्र रूपकस्य दूषणं तत्र तत एवोपमासिद्धिरिति कथं नोपमा साध्यत इत्याह विध्युपमर्दिन इति । विधिना तयोर्व्यपदेशविकल्पौ बाध एव प्रकल्पत इति न्यायेन रूपकविध्युपमर्दिनो मञ्जीरशिञ्जितप्रतिकूललक्षणस्य बाधः स्यात् । तदाऽनुकूलतालक्षणसाधकपेक्षया उत्कटत्वेन विध्युपमर्दितत्वजनिताधिकेन परिज्ञानादित्यर्थः । साधकबाधकविषयेऽतिदेशमाह एवमिति । शरदेव प्रसर्पन्त्या तस्य कोदण्डसत्कृतो विनिद्रजृम्भितहरिर्दुग्धोदधिरजायतेत्यत्र विनिद्रजृम्भितहरिरिति नरसिंहद्वयविषयं यत्साधारण्येन विशेषणं तन्न दुग्धोदधिरिवेत्युपमाबाधितेन रूपकं साधयति सामान्याप्रयोग इत्युक्तत्वात् इत्यादि स्वयमेवोह्यमित्यर्थः ।

### काव्यादर्शः

आनन्दमन्थरपुरन्दरमुक्तामाल्यं मौलौ हठेन निहितं महिषासुरस्य ।

पादाम्बुजं भवतु... ।

इत्युत्तरार्धं चन्द्रचूडचरिते। अत्र 'पादाम्बुजमिव' इति उपमा। उपमायां हि पादस्य प्राधान्यं, पादे च मञ्जीरशिञ्जितयोगो घटते। 'पाद एवाम्बुजम्' इति रूपके चाम्बुजस्य प्राधान्यं, अम्बुजे च मञ्जीरशिञ्जितं न घटते इति प्रतिकूलत्वाद् रूपकबाधकत्वं, न तु 'पादेऽनुकूलम्' इति रूपकं प्रति यन्मञ्जीरशिञ्जितं बाधकं तदेव पादानुकूल्याद् उपमां प्रति साधकं प्रमाणमिति न वाच्यमित्याह विध्युमर्दिन इति। रूपकविधानच्छेदिनो बाधकस्य मञ्जीरशिञ्जितस्य यद्यपरि साधकत्वं बाधकत्वं चोभयमपि अस्ति, तथापि 'बाधकत्वेनैव व्यपदेशा भवन्ति' इति न्यायात् बाधकत्वस्यैव प्राधान्यं, साधकत्वापेक्षया बलीयस्त्वेन उत्कटतया प्रतीतेः। साधकबाधकाभावे तु संदेहसंकरः, यथा उदाहृतं प्राक्।

## विवेकः

बाधकत्वं यथा पादाम्बुजमित्यादि—उपमायाः साधकमभिधीयत इति। "यद्यपि साधकत्वं बाधकत्वञ्चोभयमस्ति तथापि 'प्राधानेन व्यपदेशा भवन्ती'ति न्यायाद्बाधकत्वेनैवास्य तु व्यपदेशो न्याय्यः, बाधकत्वस्य बलीयस्त्वेनोत्कटतया प्रतीतेः। प्राधान्याद्रूपकत्वं प्रति बाधकत्वं यत् तदेवोपमाविषय इह साधकं पर्यवस्यति प्रकारान्तराभावात्" (रु. सं. ७४ पृ.)। ननु साधकप्रमाणसद्भावेऽपि सामान्यालङ्कारोक्तन्यायेन सन्देहस्य प्रथमप्रतिपन्नत्वात् प्रतीतेश्च बाधाभावात् सन्देहालङ्कारप्रसङ्गः ? मैवं, आकाङ्क्षाऽनुसारेण वाक्यार्थप्रतीतेः। आकाङ्क्षा तु प्रतियोगिषु सर्वेषु न सहसैव युगपदुपजायते, अपि तु कारणोपनिपातात् क्रमेण। तथाहि क्रियायाः कर्तारमन्तरेणा[ना] रम्भात्तदवगतौ कर्तारं प्रथममपेक्षते। स च निष्करणे व्यापारे न प्रवर्तत इति स्वकर्मपिक्षते। व्यापारश्च करणेन शक्यः साधयितुमिति करणापेक्षा। एवमधिकरणादयः क्रियाकारकविशेषणादयश्चापेक्षणीयाः। तदुक्तं—कारणोपनिपातः स्यात् क्रियाऽऽदिषु यथा यथा। जिज्ञासा जायते बोद्धुः सम्बन्धेन तथा तथा॥ तदिह 'वितनोती'ति क्रियायां हासद्युतिः कर्त्री। सा च सौभाग्यमिति कर्माकाङ्क्षति। 'कर्म च धर्मरूपं धर्मिणमाकाङ्क्षति। ततो वक्त्रे शशिन इति पदं हासद्युतिसामर्थ्यादुपमानसमासव्युत्पन्नमेवोन्नीयत इति सन्देहप्रतीति...नात्र भवति। एवं वक्त्रेन्दावित्यादावप्युन्नेयम्।

## दीपिका

उपमाया उत्कटभेदतया स्वतन्त्रतया प्रतीतेन पादेन मज्जीरशिञ्जितसम्बन्धः सम्भवति, रूपके तु भेदस्थगनेनाच्छादितनिजस्वरूपेण पादेनाम्बुजतया प्रतीतौ न सम्भवति तत्सम्बन्ध इति भावः।

ननु यथा मञ्जीरशिञ्जितमम्बुजसम्भावनरूपकबाधकम्, तथा पादसम्भावनोपमासाधकमपि तत् कथं रूपकबाधकमात्रं तस्योक्तमित्याह—न त्विति। विध्युपमर्दिन इति। विधीयत इति विधिः कार्ये तदुपमर्दिनस्ततो बलीयसः।

एतदुक्तं भवति—मञ्जीरशिञ्जितस्य पादसम्भवमात्रेण नोपमा निश्चेतुं शक्यते यावदम्बुजेत्यत्र तद्विरहो न प्रतीयत इति। यद्वा बाधक एव प्रथमं बुद्धिमारोहति तन्मुखेनैव व्यपदेश इति। तदिदमाह—तदपेक्षया साधकापेक्षया, उत्कटत्वेन प्रतिपत्तेः प्रतीतेरिति।

## दर्पणः

यत्रोपमेयमुपमानावच्छादितरूपतया स्वतन्त्रमेव प्रतीयते तत्रोपमा। अत एवात्रोपमेयस्योत्कटत्वम्। एवञ्चात्राम्बुजस्य साञ्जरसिजिताधारतस्य [मञ्जीरशिञ्जिताधारस्य] अभावात् अम्बुजस्य नोत्कटतेति, न तु तर्हि पादस्य तत्सम्भवादुत्कटत्वमित्युपमायाः साधकत्वमपि कथन्नोच्यत इत्याह—नन्विति। साधकत्वाभिमाने हेतुमाह विधीति विधीयतेऽनेनेति विधिः। साधकं तदुपमर्दनस्ततो वनोयसः [गरीयसः] पादस्य खलु मञ्जीरशिञ्जितस्वभावमात्रेण नोपमा निश्चेतुं शक्यते। यथा मुखचन्द्रः शोभत इत्यादौ, मुखे शोभाया संभवेऽपि न रूपकबाधकता। किन्तु तत्र शोभायाः चन्द्रेऽसि संभवा दुपमारूपकन्देहसंकरः। यदि तु बाधकस्य प्रतीतिः तदैवान्यतमस्य निवास इत्येवमन्यत्रापि साधकबाधकत्वे बोद्धव्ये।

## साहित्यचूडामणिः

पादाम्बुजमिति। अत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलमिति रूपकं दूष्यते। ननु यत्र रूपकस्य दूषणं तत्र तत एवोपमायाः सिद्धिरिति कथं नोपमा साध्यते इत्याह—विध्युपमर्दिन इति। विधिबाधयोर्व्यपदेशविकल्पे बाध एव प्रगल्भत इति यावत्। बाधस्य स्वभावो विधि प्रत्युपमर्दः, उपमर्दनीयतालाभे जितकाशिता बाधस्य न्यक्कार इति तात्पर्यम्। तदपेक्षया विधिप्रतियोगिताया। औत्कट्यानौत्कट्यप्रयुक्तौ च व्यपदेशस्यान्वयव्यतिरेकौ। एवमिति। अन्यत्राप्येवं विचक्षणैः परीक्षणीयम्। यथा—

**शरदीव प्रसर्पन्त्यां तस्य कोदण्डठात्कृतौ।**
**विनिद्रजृम्भितहरिर्विन्ध्योदधिरजायत॥ इति।**

अत्र विनिद्रजृम्भितहरिरिति हरिहर्यक्षद्वयविषयं यत् साधारण्येन विशेषणं, तद् विन्ध्य उद्धिरिवेत्युपमां बाधते रूपकं च साधयति सामान्याप्रयोग इत्युक्तत्वात्। यद्वा रूपकोपमयोरिव भूषणान्तरेष्वप्ययं न्यायदोषावकाशः परीक्ष्य इत्युपदेशः।

यथा—

**शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।**
**दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥**

इत्यत्र दृष्टान्तो निदर्शना वेति सन्देहे निदर्शनायामानुकूल्यम्। यथावा—

**कुशलस्य क्रियौचित्यं खलेन यदि शिष्यते।**
**बिम्बमप्यम्बरमणेर्भस्मना परिशोध्यताम्॥ इति॥ ५४॥**

## सम्प्रदायप्रकाशनी

'पादाम्बुजमि'त्यत्र मञ्जीरशिञ्जितमम्बुजप्रातिकूल्याद् रूपकबाधकं, पादानुकूल्येऽपि नोपमासाधकं, साधकोपमर्दिनो बाधकस्य साधनापेक्षया प्रतीत्यौत्कट्यात्। इत्थं केवलात् साधकाद् बाधकाच्च नियतपरिग्रह उदाहृत्य दर्शितः। समुदिताभ्यां तु स्फुट इत्याह—एवमन्यत्रापीति।

### मधुमती

रूपकस्य बाधकावतारे उदाहरति—पादाम्बुजमिति। 'पाद एवाम्बुजम्' इति रूपके अम्बुजस्य प्राधान्यात् तत्र मञ्जुमञ्जीरशिञ्जितस्य बाधात्। न त्विति। इदमुपलक्षणम्—'राजनारायणं' इत्यत्रापि रूपक साधकत्वेन आलिङ्गनं नोक्तमिति। ननु—साधकपरिहारेण बाधकोपादानं किमर्थम्? अत आह—विधीति। आलिङ्गनस्य उपमाबाधकत्ववत् रूपकसाधकत्वम्। मञ्जीरशिञ्जितस्य च रूपकबाधकत्ववत् उपमासाधकत्वं च यद्यप्यस्ति। तथापि बाधकत्वमेव उपन्यस्तम्। अन्यथा सन्देहानिरासात्। उपमासाधकत्वे ह्यभिहिते स्वारसिकसन्देहव्युदासेऽपि, एतत्साधकत्वमिव रूपकसाधकत्वमपि किञ्चित् स्यात् इति सन्देहाहितस्य रूपकासन्देहस्य तादवस्थ्यात्। बाधके त्वभिहिते तद्व्यवच्छेदप्रतीत्या सन्देहाविषयत्वं उपपद्यते इति। तदिदमुक्तम्—विध्युपमर्दिनः इत्यादिना। इति द्वितीयः सङ्करः।

### विस्तारिका

अम्बुजे प्रतिकूलमिति। अम्बुजप्राधान्ये प्रतिकूलमित्यर्थः। तथा च तस्याप्राधान्यादुपमानत्वमेव, न त्वारोप्यत्वमिति भावः। न त्विति। पादेऽनुकूलमिति कृत्वा उपमासाधकत्वेन नाभिधीयत इत्यर्थः।

ननु चेदनुकूलं न कथं साधकम्? किञ्च साधकत्वपरिहारेण बाधकत्वोपादानं किमर्थमित्यत आह—विधीत्यादि। विधीत्यस्य स्वविरोधिकोटीत्यादिः। तथा च स्वविरोधिकोटेर्विध्युपमर्दिनो व्यतिरेकनिश्चायकस्य तदपेक्षया स्वसाधकापेक्षयोत्कटत्वेन बलवत्त्वेन प्रतिपत्तेः 'सन्देहप्रतिबन्धः' इति शेषः। तथाहि-उपमासाधाकत्वमात्रेऽभिहिते रूपकस्यापि कश्चित् साधकः स्यादिति सन्देहाहितसन्देहस्य तादवस्थ्याद् बाधके त्वभिहिते तद्व्यवच्छेदप्रतीत्या सन्देहाविषयत्वमुपपद्यते। एवं च सतोऽपि साधकस्याकिञ्चित्करतया बाधकमेव प्राधान्यादुपमासाधकमिति भावः।

### काव्यप्रदीपः

'पादाम्बुजं भवतु मे विजयाय मञ्जु मञ्जीरशिञ्जितमनोहरमम्बिकायाः' इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम्। तत्रासंभवात्। अतो रूपके बाधकम्। नन्वेतदुपमासाधकमपि भवति। पादेऽनुकूलत्वात्। तत्कथं रूपकबाधकतामात्रत्वमस्योच्यते न तूपमासाधकत्वमपीति। एवमन्यत्रापि यदेकत्रानुकूलं तद्बाहुल्येन परत्र प्रतिकूलम्, यच्चैकत्र प्रतिकूलं तत्तत एवान्यत्रानुकूलम्। अन्यथा तत्त्वस्यैवासंभवादिति चेत्, सत्यम्। किं तु यस्य यथात्वमुत्कटं प्रतीयते तत्र तस्य तथात्वव्यपदेशः। अत्र तु विध्युपमर्दिबाधकं साधकापेक्षयोत्कटत्वेन प्रतीयत इति तेनैव व्यपदेशो युक्तः। तदेतदुक्तं विध्युपमर्दिबाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेरिति। अन्ये तु तदन्यथा व्याचक्षते—विधीयतेऽनेनेति विधिः साधकं तदुपमर्दि तस्माद्बलीयः। एतदुक्तं भवति—मञ्जीरशिञ्जितस्य पादे संभवमात्रेण न तावदुपमासाधकत्वं निर्वहति यावदम्बुजे तद्विरहो न निश्चीयते। तथा च तद्वाचकस्यैव प्राथमिकत्वात्तन्मुखेनैव व्यपदेशः। एवमन्यत्रापि साधकबाधकसत्त्वं सुधीभिः परिभावनीयम्।

## काव्यप्रकाशखण्डनम्

**'पादाम्बुजं जयत्यस्या मञ्जुमञ्जीरसिञ्जिताम्।'**

इत्यत्र मञ्जीरसिञ्जितमम्बुजेनास्तीति रूपकस्य साधकमुपमायाश्च बाधकमिति तत्र न सन्देहसङ्करः। एवमन्यत्रापि भाव्यम्।

## आदर्शः

रूपके प्रातिकूल्यौत्कट्यं दर्शयति—पादाम्बुजमिति। पादोऽम्बुजमिव, पाद एवाम्बुजमिति च सन्देहः। अम्बुजे प्रतिकूलमिति, रूपकलब्धप्राधान्ये अम्बुज इत्यर्थः। प्रातिकूल्यं चाम्बुजे मञ्जीरबाधात्। न च मञ्जीरस्य भ्रमररूपणं व्यङ्ग्यमिति वाच्यम्, उपमासमाससम्भवे वाच्यमञ्जीरेणैवोपपत्तेर्व्यङ्ग्यबोधानुदयात्। 'गुणसिन्धु'-रित्यादौ तु वाच्यस्य गुणस्य सिन्धावनुपपत्त्या गुणे जलरूपणव्यञ्जनोदय इत्यवधेयम्। न तु पादेऽनुकूलमिति। पादोऽम्बुजमिवेत्युपमालब्धप्राधान्ये पादे मञ्जीरस्याऽऽनुकूल्येऽपि तदपेक्षया अम्बुजे मञ्जीरबाधस्य पुरस्फुर्त्तिक-तया उत्कटत्वाद् रूपकप्रातिकूल्यस्यैवोपमाग्राहकत्वं नोपमानुकूल्यं तद्ग्राहकमित्यर्थः। रूपकप्रातिकूल्यमेवाह—विध्युपमर्दिन इति। रूपकविध्युपमर्दिन इत्यर्थः।

## सुधासागरः

पादेति। अत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम्, तत्रासम्भवात्। अतो रूपके बाधकम्। श्लोकपूर्वा-र्धन्तु—

**आनन्दमन्थरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य॥ इति।**

नन्वेतदुपमासाधकमपि भवति, पादेऽनुकूलत्वात्। तत्कथं रूपकबाधकतामात्रमस्योच्यते न तूपमासाध-कत्वमपीति। एवमन्यत्रापि यदेकत्राऽनुकूलं तद्बाहुल्येनापरत्र प्रतिकूलम् यच्चैकत्र प्रतिकूलम्, तत्तत एवान्यत्रानु-कूलम्, अन्यथा तथात्वस्यैवासम्भवात् इति चेत्। सत्यम्। किन्तु यस्य यथा उत्कटत्वं प्रतीयते तत्र तस्य तथात्वव्यपदेशः। अत्र तु विध्युपमर्दि बाधकं साधकापेक्षयोत्कटत्वेन प्रतीयते इति तेनैव व्यपदेशो युक्तः। तदेतयुक्तम्—विध्युपमर्दिन इत्यादि।

अन्ये तु तदन्यथा व्याचक्षते विधीयतेऽनेनेति विधिः साधकम्, तदुपमर्दि च तस्माद्बलीयः। एतदुक्तं भवति-मञ्जीरशिञ्जितस्य पादे सम्भवमात्रेण न तावदुपमासाधकत्वं निर्वहति यावदम्बुजे तद्विरहो न निश्चीयते। तथा च तद्बाधकस्यैव प्राथमिकत्वात्तन्मुखेनैव व्यपदेश इति। एवमन्यत्रापि तथा च तद्बाधकस्यैव प्राथमिकत्वात्त-न्मुखेनैव व्यपदेश इति। एवमन्यत्रापि साधकबाधकत्वं सुधीभिः परिभावनीयम्।

(सू० २१०) स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वयम्।

**व्यवस्थितं च**

अभिन्ने, एव पदे स्फुटतया यत् उभावपि शब्दार्थालंकारौ व्यवस्थां समासादयत: सोऽप्यपर: संकर:। उदाहरणम्—

**स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-**
**विस्तीर्णकर्णिकमथो दिवसारविन्दम्।**
**श्लिष्टाष्टदिग्दलकलापमुखावतार-**
**बद्धान्धकारमधुपावलि संचुकोच॥ ५७९॥**

---

**सङ्केत:**

अत्र एकपदेति। अत्र यद्यपि एतदखिलावाक्यगं सावयवं रूपकम्, तथापि प्रतिपदं रूपकसद्भावात् तथा व्यपदेश: इति एकपदानुप्रवेश: उक्त:। शब्दार्थवृत्त्यलङ्कारसङ्करस्तु उद्भटोक्त: संसृष्टिरेवेति त्रिधैव।

**सङ्केत: (रुय्यक:)**

स्पष्टेति—यद्यपि साङ्गमिदं रूपकमखिलवाक्यव्यापि तथापि प्रत्यवयवं रूपकस्य सद्भावात्तथा व्यपदेश इत्येकपदानुप्रवेशोऽस्य न विरुध्यते।

**बालचित्तानुरञ्जनी**

एकपदानुप्रवेशस्वभावं तृतीयसङ्करमाह स्फुटमिति। य: कौमारहर इत्यादौ विभावनाविशेषोक्त्यो: अस्फुटतया न सङ्कर इति तदपोहार्थं स्फुटमित्युक्तम्। अभिन्नपदानामभावादस्फुटं निश्चितमित्यर्थ:। व्याकरोति अभिन्नेति। उदाहरति स्पष्टेति। अथो स्पष्टमुल्लसत्किरणा एव केसरा यत्र स्यात् तत् सूर्य बिम्बमेव विस्तीर्णकर्णिका यस्य श्लिष्टाष्ट दिश एव दलानि तेषां कलापमुख: अवतारो यस्य च चासौ बद्धान्धकार: स एव मधुपावलिर्यत्र। एवंविधं दिवस एवारविन्दं सञ्चुकोच सङ्कुचितवान् अत्र तयो: साङ्कर्यमित्यत आह अत्रेति।

**काव्यादर्श:**

अथैकस्मिन्वाचकेऽनेकालंकारानुप्रवेशलक्षणं तृतीयं संकरमाह—स्फुटमिति। अत्रैकपदेति। यद्यपि सावयवमिदं रूपकमखिलवाक्यव्यापि तथापि प्रतिपदं रूपकसद्भावात् तथाव्यपदेश इत्येकपदानुप्रवेशो न विरुद्ध:।

### विवेकः

तृतीयस्तु सङ्करो यत्रैकवाक्यानुप्रवेशः। स्पष्टेत्यादि—दिवसारविन्दमिति कर्तृपदम्। उषाऽवतारः प्रदोषः। यद्यपि साङ्गमिदं रूपकमखिलवाक्यव्यापि तथापि प्रत्यवयवं रूपकस्य सद्भावात्तथा व्यपदेश इत्येकपदानुप्रवेशो निरूप्यते।

### दीपिका

स्फुटं व्यवस्थितमिति सन्देहव्यवच्छेदः। एकत्र विषय इति विवृणोति—अभिन्ने पद इति। पदशब्दश्चात्रोपलक्षणार्थः क्वचिदपि 'पादेऽपि दृष्टः। एकस्मिन्नपृथग्भूते विषय इत्यपि पाठे विवरणार्थ एव। शब्दार्थालङ्काराविति शब्दार्थस्यालङ्कारार्थस्यालङ्कारौ। शब्दस्यैकोऽलङ्कारोऽर्थस्यापर इति द्विधाऽर्थः। तेन कश्चिद् (क्वचित्) यथाश्रुतदूषणेऽपि न क्षतिः, दूरस्यानभिज्ञानात्।

तत्राद्ये यथा—

**"विरचिता मधुनोपवनश्रियामभिनवादवपत्रविशेषकाः।**
**मधुलिहां मधुदानविशारदाः कुरवका रवकारणतां ययुः॥"**
**अत्र रवका रवका इति यमो यथा वरकाराद्यावाराशयापेक्षा।**

द्वितीये यथा—

**"अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु।**
**सोअइ पसारिअगीआण णच्चिअं मोरविन्दोश्णाणं॥"**

अत्र पथिकश्यामायितेत्युपमा। पथिकसामाजिकेष्विति च रूपकम्। पहिअसामाइएसु इत्येकाश्रयानुप्रविष्टे।

तृतीयमुदाहरति—स्पष्टेति। ऊषा रात्रिस्तस्या अवतार आविर्भावः। बद्धेति। सन्निरूद्धेति। सञ्चुकोच संक्षिप्तमासीत्, निमिमीलेति यावत्। एकपदेति समासे विभक्तिलोपेन पृथक्पदत्वखण्डनात्, आश्रयार्थो वा पदशब्दः। रूपकाऽनुप्रासौ। किरणकेसरसूर्यबिम्बेति विस्तीर्णकर्णिकेति श्लिष्टाष्टदिग्दलकलापबद्धान्धकारमधुपावलीति च व्यक्तिभेदेनावस्थितौ।

अत्र स्फुटमेकत्र विषय इति कारिकास्थाने एकत्राभिन्ने च पद इति पाठं निक्षिप्य तदनुकारिणीमेव वृत्तिमामनन्तः केचिद् भिन्नपदेऽप्यलङ्कारद्वयावस्थानसङ्करमेनं वाञ्छन्ति। सो णत्थि एत्थेत्येव च तदुदाहरणमित्याहुः, तदसत् संसृष्टिपार्थक्याभावात्। अत्र हि रूपकानुप्रासौ संसृष्टाविति पूर्वमेवोक्तम्।

**"मुरारिनिर्गता नूनं नरकस्य विरोधिनी।**
**तत्रापि मूर्ध्नि गङ्गेव चक्रधारा पतिष्यति॥'**

इत्यत्र

**"सप्ताक्षरोद् द्योतितरङ्गशोभिन्यमन्दमारब्धमृदङ्गवाद्ये।**
**उद्यानवापीपयसीव यस्यामेणीदृशो नाट्यगृहे रमन्ते ॥"**

इत्यत्र विशेषणपदस्य तु साधारणधर्मपरत्वेनोपनिबद्धतया श्लेषः। साधारणधर्मप्रतीतेश्चेवशब्दमाहात्म्यादुपमाश्रय इव शब्दश्लेषस्यानुप्रवेशादिति सङ्करमलङ्कारवृत्तिकारस्तदनुसारिणश्च धर्मदत्तप्रभृतयः। तदसङ्गसम्, विशेषणेषु श्लेषो विशेष्यासम्बन्धे च शब्द उपमेति विषयभेदात्।

वस्तुतस्त्वत्र श्लेषप्रयोजितं शब्दसाम्यमुपमामुत्थापयति, तौ च परम्पराश्रयेणाधिकं चमत्कारमावहत इत्यङ्गाङ्गिभावाङ्गीकृतिर्ज्यायसी। असौ सङ्करः पृथग्व्यवस्थाविरहितालङ्कारमिश्रीभावसामान्यलक्षकः। प्रकारान्तरेणावान्तरेणेत्यत्र सङ्कलनम्। आनन्त्यादिति सङ्कीर्यमाणालङ्कारप्रकारान्त्यप्रयोजितादिति भावः। प्रतिपादिता उल्लासद्वयेन।

### दर्पणः

स्फुटं व्यवस्थितमिति सम्बन्धः। एकत्र विषय इत्यस्य निवृत्तिः। अभिन्ने च पाद इति। पद इत्युपलक्षणम्। तेनापादेऽनेकपदेऽप्ययं सङ्करो बोद्धव्यः। शब्दार्थालङ्काराविति। शब्दार्थालङ्कारवन्नालङ्कारौ, शब्दार्थालङ्कारौ वा तत्र प्रथमे "कनकलोलदृशाऽन्यथा" इत्यत्र कनकलोलकलोल इति कलोलकललेति यमकद्वयम्। कलोकलो इत्यत्रैकाश्रेऽनुप्रविष्टम् यथा वा—

**कटाक्षेणापीय क्षणमपि निरीक्षेत यदि सा**
**तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः।**
**सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः**
**परीरंभारम्भः क इव भविताम्भोररुहदृशः॥**

अत्र क्षणयोः साम्यात् छंदकानुप्रासः [छेकानुप्रासः]। निरीक्षेतेत्यद्रक्षकारमादाह [?] वृत्यनुप्रासः। क्षणे क्षणेत्यत्राद्वितीये।

**अहिण अस ॐअ अरसि एअ अपहि असामा।**
**इएसु दिअदेसुं महइपसारिअणी आणणअंचो वविन्दानं॥**

अत्र पथिकानां श्यामायतेत्युपमा। पथिकजाकाजिकोस्विति [?] च रूपकम्। सामाइ....त्येकपदेऽनुप्रविष्टे।

### साहित्यचूडामणिः

अथैकपदानुप्रवेशस्वभावसङ्करं तृतीयमाह—स्फुटमिति।

विषयः पदम्। चकारो वाक्यार्थ इत्यागूर्य व्याचष्टे—अभिन्ने च पद इति। यथाहुः [उद्भटभट्टाः] —

**शब्दार्थवर्त्यलङ्कारा वाक्य एकत्र वर्तिनः।**

**सङ्करो वैकवाक्यांशप्रवेशाद् वाभिधीयते॥ इति।**

**सम्प्रदायप्रकाशिनी**

सङ्करान्तरमाह—स्फुटमिति। एकत्र श्लेषाद्यविभागादभिन्ने विषये पदात्मनि शब्दार्थोभयविषययोरल-ङ्कृत्योर्द्वयं यद्यवस्थितं स चापरः एकवाचकप्रवेशात्मा सङ्कर इत्यर्थः।

व्याचष्टे—अभिन्न इत्यादि।

स्पष्टेति। अत्र किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकमिति श्लिष्टाष्टदिग्दल कलापमिति च पदे अनुप्रास-रूपकयोः स्फुटं व्यवस्था।

तदेत्तदाह—अत्रेकेति। एवं शुद्धयोरेकवाचक प्रतिपाद्यत्वमुदाहर्यम्।

**मधुमती**

स्फुटमिति। एवं 'स्फुटमेकत्रे'ति वदता अस्फुटालङ्कारद्वयसंसर्गः चमत्कारानाधायकतया नालङ्कारताम-र्हतीति प्रतिपादितमिति केचित्।

अत्रेति। 'श्लिष्टाष्टदिग्दलकलापं' इत्यत्र पदे इत्यर्थः। इति सङ्करप्रकरणम्।

**विस्तारिका**

तृतीयं सङ्करमाह—स्फुटमिति। स्फुटमित्यनेनास्फुटालङ्कारद्वयसंसर्गश्चमत्कारानाधायकतया नालङ्का-रत्वमर्हतीति द्योतितम्।

व्याचष्टे—एकस्मिन्निति। व्यवस्थामवस्थितम्।

अत्रेति। श्लिष्टाष्टदिग्दलकलापेत्यादौ श्लोकार्द्धात्मके पदे दिग्दलेति अन्धकारमधुपावलीति च रूपक-द्वयं छेकानुप्रासश्चानुप्रविष्ट इत्यर्थः।

**सारबोधिनी**

तृतीयसंकरमाह स्फुटमिति। स्फुटमित्यनेनास्फुटालङ्कारद्वयसंसर्गश्चमत्काराधायकतया नालङ्कारत्वम-र्हतीत्युक्तम्। व्यवस्थामवस्थितिम्। स्पष्टेति। अत्र दिवसारविन्दं कर्तृ।

**काव्यप्रदीपः**

**स्फुटमेकत्र विषये शब्दार्थलंकृतिद्वयम्।**

**व्यवस्थितं च**

विषयः पदम्। तेनैकत्र पदे यदुभौ शब्दार्थालंकारौ स्फुटं व्यवस्थितौ भवतः सोऽप्यपरः संकरः।

उदाहरणम्—

**'स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-**
**विस्तीर्णकर्णिकमथो दिवसारविन्दम्।**

**श्लिष्टाष्टदिग्दलकलापसुखावतार-**
**बद्धान्धकारमधुपावलि संचुकोच॥'**

अत्र पादत्रये प्रत्येकं रूपकानुप्रासौ प्रविष्टौ। शब्दार्थालंकृतीति प्रायोवादः। शब्दालंकारयोरप्येतद्दर्श-नात्। यथा—'कलकलोऽलकलोलदृशान्यथा' इत्यादावनुप्रासयमकयोः।

### काव्यप्रकाशखण्डनम्

**स्फुटमेकत्र विषये शब्दार्थालङ्कृतिद्वयम्।**
**व्यवस्थितं च. (का. १४१, पू०)**

एकस्मिन्नेव स्पष्टतया यदुभावपि शब्दार्थलङ्कारौ व्यवस्थां संपादतः सोऽप्यपरः। यथा—

**स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-**
**विस्तीर्णकर्णिकमथो दिवसारविन्दम्।**

**श्लिष्टाष्टदिग्दलकलापमुखावतारे**
**बद्धान्धकारमधुपावलि संचुकोच॥**

### आदर्शः

इदानीमलङ्कारयोरेकपदप्रतिपाद्यत्वरूपं सङ्करमाह—स्फुटमिति। एकपदरूपे विषये वस्तुनीत्यर्थः। व्यवस्थाम् असन्देहेन सत्ताम्। व्यवस्थितञ्चेति च-कारलब्धं सङ्करत्वमाह—सोऽप्यपर इति।

स्पष्टोल्लसदिति। सन्ध्यावर्णनमिदम्। अथोऽनन्तरं दिवसरूपमरविन्दं सञ्चुकोच सङ्कुचितं बभूव, सन्ध्याऽभूदित्यर्थः। अरविन्दधर्मान् रूपयति—स्पष्टेति। स्पष्टं यथा स्यात्तथा उल्लसन्तो दीप्यमानाः किरणा एव केशराणि यत्र तादृशी सूर्यबिम्बस्वरूपा विस्तीर्णा कर्णिका यत्न तादृशम्। तथा श्लिष्टः परस्परसम्बद्धोऽष्टदिगा-त्मको दलकलापो यत्र तादृशम्। दिशां भेदानुपलम्भेन श्लिष्टता। तथा उषावतारे प्रभाते गुहाबद्धान्धकारा एव मधुपावलिर्यत्र तादृशम्। अत्रेति, सुगमम्।

## (सू० २११) तेनासौ त्रिरूपः परिकीर्तितः ॥ १४१ ॥

तदयमनुग्राह्यानुग्राहकतया संदेहेन, एकपदप्रतिपाद्यतया च व्यवस्थितत्वात्त्रिप्रकार एव संकरो व्याकृतः । प्रकारान्तरेण तु न शक्यो व्याकर्तुम् आनन्त्यात्तत्प्रभेदानामिति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलंकाराः ॥

---

### सङ्केतः

प्रकारान्तरेणेति । प्रकारत्रयादन्यप्रकारेणेत्यर्थः । सर्वे अलङ्काराः सङ्करे उदाहर्तुमशक्याः इत्यर्थः । तत्प्रभेदानामिति । तस्य सङ्करस्य प्रभेदास्तु त्रयः प्रकाराः । तेषामपि भेदाः तत्तदलङ्कारयोगाः इति । इति सङ्करप्रकरणम् ।

### सङ्केतः (रूय्यकः)

तत्प्रभेदानामिति (०प्रभेदेति)—तस्य प्रभेदास्त्रयः प्रकारास्तेषा भेदास्तत्तदलङ्कारयोगेनावान्तरविशेषा उत्प्रेक्षावयवादयः । विशिष्टस्येति—यत्राऽऽश्रयस्य नित्यता नास्ति नित्यत्वेऽपि हि न तस्यान्वयव्यतिरेकौ निबन्धनम्, नित्यस्य व्यतिरेकाभावात् ।

### बालचित्तानुरञ्जनी

निगमयति तेनेति । व्याकरोति तदिति । सर्वालङ्कारोदाहरणानि सङ्करे दर्शयितुं न शक्यत इत्याह प्रकारान्तरेणत्विति । तत्र हेतुमाह आनन्त्यादिति । तस्य संकरस्य प्रभेदाः । अगांगिभावसंदेहैकवाचकानुप्रवेशरूपाः तेषां भेदाः तदलङ्कारसङ्कररूपाः तेषामानन्त्यात् त्रिप्रकारतैवेति भावः । नवमदशमोल्लाससमर्दितं चरमप्रकरणार्थमुपसंहरति इति प्रतिपादिता इति ।

### काव्यादर्शः

त्रिप्रकारतयैवेति । एतेन—

**शब्दार्थवर्त्यलंकारा वाक्य एकप्रभाविनः ।**
**संकरो वैकवाक्यांशप्रवेशाद् वाभिधीयते ॥**

—इति भट्टोद्भटोक्तः संकरः संसृष्टावन्तर्भावित इति त्रेधैवायम् । तत्प्रभेदेति । तस्य संकरस्य प्रभेदास्त्रयः प्रकाराः, तेषां भेदास्तत्तदलंकारयोगेन अवान्तरविशेषः ।

भावाभावाविति अन्वयव्यतिरेकौ ।

### विवेकः

यस्तु भिन्नपदाभिधेयतया शब्दार्थगतालङ्कारसङ्करो भट्टोद्भटादिभिः प्रकाशितः स संसृष्टावङ्गाङ्गिभावनिबन्धनसङ्करे वाऽन्तर्भावनीय इति त्रिरूप एवात्र सङ्कर इत्युपसंहरति—तेनासावित्यादि । 'तत्प्रभेदभेदानामिति—

तत्रभेदास्त्रयः प्रकारस्तेषां भेदास्तत्तदलङ्कारयोगेनावान्तरविशेषा उत्प्रेक्षाऽवयवादयः' (रु. सं. ७४ पृ.)। "तत्रोत्प्रेक्षायाः साधक उत्प्रेक्षाऽवयवो (का. अ. सू. वृ. ४/३/३३) यथा—(कु. सं. ८/६३) अङ्गुलीभिरिव केशसञ्चयं संनिगृह्य तिमिरं मरीचिभिः। कुट्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी॥" अत्राङ्गुलीभिरिवेत्युपमा। मुखमारम्भवक्त्रयोरिति। आभ्यामभेदाध्यवसायरूपाऽतिशयोक्तिरनुगृह्यते। सा च चुम्बतीवेत्यस्या उत्प्रेक्षायाः समुत्थापिका। इति प्रतिपादितेति इतीति पूर्वोक्तालङ्कारप्रस्तावोपसंहारः। प्रतिपादिताः स्वकण्ठेनोक्ताः। त्रैविध्यजुष इति संक्षिप्य प्रकारस्वरूपनिर्देशः। शब्दालङ्कारोऽर्थालङ्कार उभयालङ्कारश्चेति तिस्रो विधाः।

## दीपिका

उक्तमत्रेति। अत्रालङ्काराणां शब्दादिगतत्वनियमने बीजं श्लेषप्रसङ्गे पूर्वमुक्तम्। तदेव स्मारयति—यथेति। शब्दार्थोभयगतत्वेनत्यस्य दोषगुणालङ्काराणामित्यनेन यथासम्भवमन्वयः, दोषगुणयोरुभयगतत्वनियमात्। न हि लाटानुप्रासाद्यलङ्कारवत् श्रुतिकटुप्रभृतयो दोषा उपचारेण शब्दार्थवृत्तयो यथा प्रसादादयो गुणा व्यासज्योभयवृत्तय उक्ताः निमित्तान्तरस्य परप्रतिपन्नस्याभावात्, अनुपपद्यमानत्वाद् अन्वयव्यतिरेकावन्तरेणाविद्यमानत्वात्।

## दर्पणः

तृतीयमुदाहरति स्पष्टेति। रुद्धा निरुद्धा, संचुंकोच संक्षिप्तमासीद्विनिमीलितञ्च। एकस्मिन् पदे आश्रये समस्तत्वाद्वारकूलमपि [?] पदानामेकपदत्वं एवमाकारेण चालङ्काराणां संसर्गभिन्नांनलङ्कारत्वेऽपि विभिन्नवर्णा इत्यादीनां तद्गुणोदाहरणत्वं न युक्तमिति न वाच्यम्। तथाचाहुः अलङ्काराणां संपर्कस्यैव पृथगलङ्कारता। संपर्किणां तु प्रातिस्विकस्वभावापरित्याग एव संसृष्ट्याङ्गाङ्गि समुनन प्रमुल्लार्यचारुत्व प्रकर्षमनालम्ब्य प्रतीते विश्रामविरहः। अत एवोक्तं—अविश्रान्तिद्विषा [जुषा] मात्मनीति।

किं चैवमलङ्काराणां परस्परसंसर्गाभावस्य प्रायिकत्वेऽप्येकैकस्य बुद्ध्यारोहेऽपि तत्कृतचमत्कारहानेर संभवात् एकेनापि व्यवहारः। यथा तु [यदा तु] समुदायमवलम्ब्य तत्कृतचमत्कारस्य बुद्ध्यारोहः तदा संसृष्ट्यादिव्यवहारः। एवञ्चैवंविधेषु स्थलेषु अस्यैव ग्रन्थकारस्य ध्वनिगुणीभूतव्यंग्यप्रस्तावोक्तो यद्यपि नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यंग्ययोः स्वप्रभेदादिभिः संकरः ससृंष्टिर्वा नास्ति तथापि प्रधाने [प्रधान्येन] व्यपदेशा भवन्तीति क्वचित् केनचिद्व्यवहार इति रीतिरनुसर्तव्या। उपसंहरति तेनेति। प्रकारान्तरेण भेदप्रभेदसंख्यानेन, आनन्त्यात् संकीर्यमाणानामलंकाराणां प्रकारानन्त्यप्रयोजित्वादिति भावः।

## साहित्यचूडामणिः

निगमयति—तेनेति। अनुग्राह्यानुग्राहकतया तेषामेवालङ्काराणां मिथः सापेक्षता स्पष्टा संशये च क्रोटिद्वयप्रतिपत्तये तस्या अवश्यंभावः। तृतीये त्वनुप्रविश्यमानपदापेक्षया तस्याः सम्भव इति।

ननु प्रकारान्तरोपकल्पने कः क्रोध इत्यत्राह आनन्त्यादिति। प्रभेदः कदाचित् प्राथमिका भेदाः प्राचार्य इतिवत्। कदाचिदनन्तरभेदा प्रशिष्य इतिवत्।

### सम्प्रदायप्रकाशिनी

सङ्करं निगमयति—तेनासाविति ।

त्रैरूप्यानतिक्रमे हेतुमाह—प्रकारान्तरेणेति । प्रकारान्तरेण सजातीयविजातीयद्विकत्रिकादिरूपेण ।

अथ सर्वानेव नवमदशमविवेचितान् निगमयति—इति प्रतिपादिता इत्यादि ।

### मधुमती

प्राचीनमतेऽपि एष्वेव अलङ्कारव्यवहारः इत्यभिप्रेत्याह—प्रतिपादिताः इति ।

### काव्यप्रदीपः

**तेनासौ त्रिरूपः परिकीर्तितः ॥ ५५ ॥**

तस्मादनुग्राह्यानुग्राहकतया संदेहेनैकपदप्रतिपाद्यतया व्यवस्थिततत्वाच्च त्रिप्रकारोऽयं संकरः कथितः । प्रकारान्तरेण तु न शक्यो व्याकर्तुम् । भेदानामनन्तत्वात् ।

इति प्रतिपादिताः शब्दार्थतदुभयगतत्वेन त्रिविधा अलंकाराः ।

### काव्यप्रकाशखण्डनम्

एकत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ । तेनासौ त्रिरूपः । तेनायमनुगग्राह्यानुग्राहकतया सन्देहेनैकपदप्रतिपाद्यतया च व्यवस्थिततत्वात् त्रिरूपतया सङ्करः कथितः । अत्रेदमबधातव्यम्—यत्र शब्दाः परिवृत्तिं न सहन्ते स शब्दालङ्कारः; यत्र न तथा सोऽर्थालङ्कारः । यत्र तु केचन सहन्ते केचन न सहन्ते स उभयालङ्करः । यथा पुनरुक्तवदाभासः परम्परितरूपकं च । [प० ५९, २] अर्थस्य तु तत्र वैचित्र्यमुत्कटतया प्रतीयत इति तयोरर्थालङ्कारमध्ये गणनं कृतमित्यन्यत्रापि बोध्यम् ।

### आदर्शः

प्रकारान्तरेण त्विति, एकोऽनुग्राहकः अपरोऽनुग्राह्यस्तयोर्वैपरीत्यञ्च परस्परानुग्राह्यानुग्राहकता च । अनुग्रहोऽपि जनकता चमत्कारिता च इत्यादिप्रकारान्तरेणेत्यर्थः । त्रैविध्येति । शब्दतदर्थतदुभयगतत्वेन त्रैविध्यम् । उक्त मत्रेति । श्लेषालङ्कारप्रसङ्गेनान्वयव्यतिरेकयोरेव तन्नियामकत्वमित्युक्तमित्यर्थः ।

### सुधासागरः

अभिन्न एवेत्यादि । विषयः पदम् । तेनैकत्र पदे यदुभौ शब्दार्थालङ्कारौ स्फुटं व्यवस्थितौ भवतः सोऽप्यपरः सङ्कर इत्यर्थः । उदाहरणम्—स्पष्टोल्लेति । स्पष्टमुल्लसन्तः किरणा एव केसराः किञ्जल्का यस्यां तादृशी सूर्यबिम्बात्मिका विस्तीर्णा कर्णिका यस्य तथाभूतम्, दिवसमेवारविन्दं पद्मम्, अथोऽनन्तरम्, स्रस्तानां प्रदोषागमत्रशात् सङ्कुचितानामष्टदिगात्मकदलानां कलापः समुदाय एव मुखं तत्रावतारेण प्रवेशेन बद्धा निरुद्धा अन्धकारात्मिका मधुपानामावलिः पङ्क्तिर्यत्र तादृशं सत् संचुकोच निमिमीलेत्यर्थः । वसन्ततिलका छन्दः । लक्षणमुक्तं प्राक् ।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलंकारः शब्दस्य कश्चिदर्थस्य कश्चोभयस्य, इति चेत् उक्तमत्र यथा काव्ये दोषगुणालंकाराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः, निमित्तान्तरस्याभावात् ततश्च योऽलंकारो यदीयान्वयव्यतिरेकावनुविधत्ते स तदलंकारो व्यवस्थाप्यते, इति ।

एवं च यथा पुनरुक्तवदाभासः परंपरितरूपकं चोभयोर्भावाभावानुविधायितया, उभयालंकारौ तथा शब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः । अर्थस्य तु तत्र वैचित्र्यम् उत्कटतया प्रतिभासते, इति वाच्यालंकारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः ।

---

### सङ्केतः

भावाभावाविति । भावः अन्वयः, अभावः व्यतिरेकः । प्रभृतयोऽपीति प्रभृतिभणनात् अपह्नुति-सहोक्ति-सङ्कर-संसृष्टि-दीपकाद्याः ज्ञेयाः । अर्थस्य त्विति । वस्तुतस्तु—परस्परितरूपकादेः उभयालङ्कारतया भिन्नत्वेन वक्तुं युक्तौ, अथापि अर्थालङ्कारेषु तत्पाठः अर्थस्य उत्कटतया वैचित्र्यात् । एवं पुनरुक्तवदाभासोऽपि शब्दस्योत्कटवैचित्र्यात् शब्दालङ्कारत्वेनोक्तः ।

### बालचित्तानुरञ्जनी

अलङ्काराणां शब्दार्थनैयत्यान्वययव्यतिरेकाभ्यां प्रतिसमाधातुमाक्षिपते कुत इति । प्रतिष्ठितो नियमः प्रतिनियमः । आश्रयाश्रयिभावः स्वीकारश्चेदपगम्यत इति भावः । समाधत्ते उक्तमत्रेति । प्रागप्युक्तप्रायमेतत् प्रतिपत्तिसौकर्यार्थं प्रपञ्चयत इत्यर्थः । शाब्दः, आर्थः उभयिक इति । अलङ्कारविवेके प्रमाणमन्वयव्यतिरेकावित्याह यदीयेति ।

फलितमाह एवं चेति । उभयालङ्कारान् दर्शयति यथेति । एवमेवान्यानुभयालङ्कारानाह तथेति । नन्वर्थान्तरन्यासादयो यद्युभयालंकाराः तर्हि तेऽर्थालङ्कारेषु कथं लक्षिता इत्याशङ्क्याह अर्थस्य त्विति । वाच्यालङ्कारः अर्थालङ्कारः । तर्हि कथं विवेकत्वमार्गः तत्राह वस्त्विति । तदनुसारेण पुनः पुनरुभयिका एवेति भावः ।

## काव्यादर्शः

ननु, पुनरुक्तवदाभासस्य तावच्छब्दस्य वैचित्र्यमुत्कटमिति उभयालंकारत्वमनपेक्ष्यैव शब्दालंकारत्वेनोक्तिः कृता, परंपरितरूपकादीनां तु किमर्थालंकारेषु पाठ इत्याह—अर्थस्य त्विति। वस्तुवृत्त्या तु भिन्नाः प्रतिपादयितुमुचिता इति भावः।

## विवेकः

तत्रैवं प्रतिपाद्य जिज्ञासामनूद्य प्रमाणमवतारयति कुत इत्यादि। उक्तमत्रेति शब्दश्लेषप्रस्तावे। एवञ्चेति—यथा लोके बधिरोऽपि चक्षुष्मानलोकयति सत्यपि श्रोत्र उपहतचक्षुर्नालोकयति रूपमित्यन्वयव्यतिरेकाभ्यां चक्षुः श्रोत्रसन्निधाने रूपालोकनं चक्षुषएव व्यवस्थाप्यते न श्रोत्रस्य, तथेहापि शब्दार्थात्मनि काव्ये शब्दार्थयोरत्यन्तसंसृष्टत्वेप्यलङ्कारा मिथः सम्बन्धित्वेनान्वयव्यरिकाभ्यामेव प्रविभज्यन्त इति व्यवस्थितौ। परम्परितरूपकञ्चेति श्लिष्टशब्दनिबन्धनम्। 'हि' शब्दहेतुकोऽर्थान्तरन्यासस्तेन समर्थकतायाः प्रतिपादनात्। एतत्प्रभृतय इति—अपि-सह-विनेत्यादिशब्दहेतुका विशेषादयः। तर्हि अर्थालङ्कारमध्येऽमीषामपि परिगणनमन्याय्यमित्याह अर्थस्य त्विति—अनयैव दिशा श्रौत्युपमाऽऽदीनामप्युभयालङ्कारता। तदुक्तं रसार्णवालङ्कारे—इह हीवादिभिः शब्दैः सादृश्यादिः प्रतीयते। अर्थोऽस्मात् सरयः प्राहुरुभयालङ्क्रिया इमाः॥ अथ येऽपि प्राचीनाः 'शब्दोभयतत्वेऽन्वयव्यतिरेकौ न निबन्धनं तौ तत्कार्यत्वे प्रयोजकौ, न तु तदलङ्कारत्वे, अन्यथा श्रौत्युपमाऽऽदीनामपि शब्दालङ्कारप्रसङ्गः स्यात्।

## दीपिका

दोषगुणालङ्कारेषु साधारण्येनोक्तान् प्रकृतेष्वलङ्कारेषु विविच्याह—ततश्चेति। यदीयान्वयेति नियम्य शब्दस्यार्थस्य वा भावे यस्यालङ्कारस्य भावः, अभावे चाभावः स तदलङ्कारस्तस्य शब्दार्थस्य वाऽलङ्कारो व्यवस्थाप्यते व्यवह्रियते। इत्युक्तमिति पूर्वेणानुषङ्गः। एवं व्यवस्थिते उभयोर्भावाभावानुविधायितयेति। तनुवपुरित्यादि। तनुशब्दस्थाने रूपादिशब्दप्रयोगे पुनरुक्तवदाभासो न भवतीत्यस्य शब्दान्वयव्यतिरेकानुविधायिता। वपुः शब्दस्थाने तु शरीरादिपदनिवेशनापि न क्षतिरिति तदन्वयव्यतिरेकानुविधायित्वमेव। एवं परम्परितरूपकेऽपि।

**"श्रीनृसिंह महीपाल स्वस्त्यस्तु तव बाहवे।**
**आहवे जगदुद्दण्डराजमण्डलराहवे॥**

अत्र राजमण्डलपरिवृत्तौ रूपकपरिवृत्तिः। राहुशब्दपरिवृत्तौ तु तादवस्थ्यमेव। एवं शब्दहेतुकार्थान्तरन्यासेऽपि हि शब्दाभावे तदभावादितरशब्दपरिवृत्तावपि चाभावादित्यर्थः। प्रभृतिशब्देन नाल्पः कविरिवस्वल्पश्लोकादेव महान् भवानिति श्लिष्टव्यतिरेकादिसंग्रहः। वस्तुस्थितिं सिद्धान्तव्यवस्थाम्।"

## दर्पणः

पूर्वं श्लेषप्रसङ्गे उक्तमपि द्रढीकर्तुं पुनः स्मारयति यथेति। शब्दार्थोभयगतत्वेनेत्यत्र यथासंभवमिति बोद्धव्यम्। दोषगुणयोरुभयगतत्वविरहात् अभावात् अनुपपन्नत्वांत् परम्परितरूपकं श्लिष्टशब्दनिबन्धनम्।

तथाहि—यत्र विद्वन्मानसहंसेत्यादौ मानसस्य परिवृत्यसहत्वं हंसशब्देन। तथा त्वंशब्दहेतुकाः श्लिष्टशब्दनिबन्धनाः प्रभूतिशब्देन व्यतिरेकादि विशेषसंग्रहः। वस्तुस्थितसिद्धान्तव्यवस्था।

**साहित्यचूडामणिः**

अथ नवमदशमोल्लासद्वयसमर्थितं परमं प्रकरणार्थमुपसंहरति—इतीति। औभयिकानामाप्राचुर्येऽपि तृतीयकोटिनिर्वाहः प्रौढत्वमिति।

अथालङ्काराणां शब्दार्थभागनेयत्यमाक्षिप्यान्वयव्यतिरेकाभ्यां प्रतिसमादधाति—कुत इति। प्रतिष्ठितो नियमः प्रतिनियमः आश्रयाश्रयिभावस्वीकारश्चेद् अभ्युपगम्यत इति भावः। समाधत्ते—उक्तमत्रेति। प्रागप्युक्तप्रायमेतत् प्रतिपत्तिसौकर्याय प्रपञ्च्यत इति भावः। शाब्द आर्थ औभयिक इत्यलङ्कारविवेके प्रमाणमन्वयव्यतिरेकावेवेत्याह—यथेति। किमलङ्कारैकचिन्तया दोषगुणावप्येवमित्याह—दोषगुणालङ्काराणामिति। आश्रयाश्रयिभावस्वभावस्य निमित्तान्तरस्य नियामकतायामनुपपत्तेः। तदीय इति। शाब्दो वार्थो वौभयिको वा। नत्वेकैकालङ्कारवदुभयालङ्काराणां तत्प्राचुर्यं न तल्लक्षणपरिक्षाप्रयासश्चेत्याह—एवञ्चेति। लाटानुप्रासद्युपलक्षणमेतत्। उभयालङ्काराविति। यथा तत्तदवसरे व्याकृतौ तद्वदन्येऽपि द्रष्टव्याः। हि शब्दो हेतौ समर्थ्यसमर्थकभावद्योतको यत्र तादृगर्थान्तर-न्यासादयोऽपि बहव औभयिकाः सम्भवन्ति।

संसृष्टिसङ्करेष्वपि क्वचिदौभयिकत्वयोग्यता। तर्हि ते कथमर्थालङ्कारेषु परीक्ष्यन्त इत्यत्राह—अर्थस्येति। हिशब्दहेतुकत्वाद् औभयिकत्वेऽपि तत्राधिक्यमुत्कृष्यते। तर्हि कथं विवेचकत्वगर्व इत्यत्राह—वस्त्विति। वास्तवीं सरणिम् अननुसृत्य अनादरादनपेक्ष्य, नत्वनवधानात्। अनुसरणे पुनरौभयिका एव।

**सम्प्रदाप्रकाशिनी**

विषयप्रतिनियममाक्षिपति—कुतः पुनरित्यादि। शोभातिशयहेतुत्वमाक्षेपबीजम्। परिहरति—उक्तमत्रेत्यादि। अत्र प्रतिनियमे। उक्तं निमित्तम्। श्लेषप्रस्ताव इति शेषः। उक्तप्रस्तावं यथावदनुवदति—यथा काव्य इत्यादि। निमित्तान्तरस्याश्रयाश्रयिभावस्य सति शब्दे शब्दालङ्कारोऽस्ति, असति नास्तीत्यादि भावाभावानुविधानम्। इतिः प्रकारे। अनेन प्रकारेणोक्तमित्यर्थः। इत्थं च सति प्रतिनियम इति दर्शयति—एवञ्चेत्यादि। पुनरुक्तवदाभासः उभयपौनरुक्त्यं श्लिष्टशब्दं, परम्परितरूपकं श्लेषं ताद्रूप्यारोपं चानुविधत्त इत्युभयालङ्कारौ यथा चेमौ, तथा हिशब्दहेतुकोऽर्थान्तरन्यासः छलादिशब्दहेतुका अपह्नुतिप्रभृतश्चोभयभावाभावानुविधानादुभयालङ्कारा द्रष्टव्याः। ननु 'तर्ह्यर्थालङ्कारमध्ये लक्षणमसङ्गतमित्यत आह—अर्थस्य त्वित्यादि।

**मधुमती**

उक्तमत्रेति। नवमोल्लासे श्लेषालङ्कारप्रकरणे इत्यर्थः। तथाशब्देति।

'क्षणदासावक्षणदा—'

इत्यादौ प्रागुदाहृतशब्दशक्तिमूलविरोधाङ्गभूतार्थान्तरन्यास-शब्दसाम्यनिबन्धनोपमादायः बोद्धव्याः।

नन्वेवं तेषां अर्थालङ्कारमध्ये गणनं कुतः? इत्यत आह—अर्थस्येति।

अत एव यत्र शब्दवैचित्र्यं उत्कटम् सः पुनरुक्तवदाभासः शब्दालङ्कार एव गणितः । वस्तुस्थितिमिति । तथा च वस्तुगत्या उभयालङ्कारत्वमेव ।

## विस्तारिका

उक्तमत्रेति । श्लेषाङ्कारप्रकरणे नवमोल्लास इति शेषः । यथेति । 'क्षणादा सा च क्षणदा' इत्यादौ शब्दशक्तिमूलकविरोधालङ्काराङ्गभूतार्थान्तरन्यासेत्यर्थः । 'सकलकलं पुरमेतत्' इत्यादिस्थलीयशब्दसाम्यनिबन्धनोपमादयो बोद्धव्याः । तदुक्तं रुद्रटेन—'स्फुटमर्थालङ्कारावेतौ' इत्यादि ।

ननूभयालङ्कारत्वेऽपि तेषां प्राथम्याच्छब्दालङ्कारमध्ये परिगणनमनुचितमित्याह-अर्थस्येत्यादि । अत एव शब्दवैचित्र्यमुत्कटमानुभविकम् । पुनरुक्तवदाभासे शब्दालङ्कारमध्ये परिगणित इति भावः । वस्तुस्थितिमिति । उभयालङ्कारत्वमविवक्षित्वैवेत्यर्थः । वस्तुगत्या पुनरुभयालङ्कार इति भावः ।

## सारबोधिनी

उक्तमत्रेति । श्लेषालङ्कारप्रकरणे नवमोल्लासे इत्यर्थः । यथेति क्षणादाऽसावक्षणदेत्यादौ । शब्दशक्तिमूलविरोधालङ्काराङ्गभूतार्थान्तरन्यासेति । सकलकलं पुरमेर्तादत्यादिस्थलीयशब्दसाम्यनिबन्धनोपमादयोऽपि द्रष्टव्याः ।

ननुभयालङ्कारत्वे तेषां प्राथम्यात् शब्दालङ्कारमध्ये गणनमनुचितमिति । अत एवाह अर्थस्येति । अत एव शब्दवैचित्र्यमुत्कण्ठमनुभवसिद्धं स पुनरुक्तवदाभासः शब्दालङ्कारमध्य एव गणितः । वस्तुस्थितिमिति । उपमालङ्कारत्वमविवक्षितमित्यर्थः, वस्तुगत्या पुनरुपमालङ्कार एवेति भावः ।

## काव्यप्रदीपः

ननु त्रिविधानामप्येषां काव्यशोभातिशयहेतुत्वस्य तुल्यत्वेऽपि कुत एव प्रतिनियमः यत्कश्चिच्छब्दस्य कश्चिदर्थस्य कश्चिच्छब्दार्थयोरिति चेत्, उक्तमत्र प्रागेव । दोषगुणालंकाराणां शब्दार्थोभयगतत्वव्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः । निमित्तान्तराभावात् । ततश्च योऽलंकारः शब्दार्थयोर्मध्ये यस्यान्वयव्यतिरेकावनुविधत्ते स तदलंकार इति व्यवस्थाप्यते । शब्दान्वयव्यतिरेकानुविधीयित्वं चैतदेव यच्छब्दपरिवृत्त्यसहत्वम् । नन्वेवं यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयभावाभावानुविधायित्वेनोभयालंकारस्तथार्थशब्दहेतुकार्थान्तरन्याससप्रभृतयोऽप्युभयालंकारा भवेयुरिति चेत्, न । इष्टापत्तेः । एवं तर्हि कथमुभयालंकारप्रस्तावमुल्लङ्घ्यार्थमात्रालंकारप्रस्तावे पठिता इति चेत्, तत्रार्थवैचित्र्यस्य प्रकटतया प्रतिभासात् ।

## आदर्शः

तदेव पुनः स्मारयति—यथेति । तथा शब्दहेतुकार्थान्तरन्यासेति । 'क्षणदाऽसावक्षणदे' (४र्थ ८२)त्यादौ शब्दहेतुकार्थान्तरन्यासः । आदिग्रहणा'च्छानिरशनिश्चे'-त्यादिषु विरोधस्य 'स्वयञ्च पल्लवाताम्रे'त्यादावुपमायाश्च परिग्रहः । ननु तर्ह्येते अलङ्काराः कथमर्थालङ्कारमध्ये लक्षिता इत्यत आह—अर्थस्येति ।

## सुधासागर:

ननु त्रिविधानामप्येषां काव्यशोभातिशयहेतुत्वस्य तुल्यत्वेऽपि कुत एष नियम: कश्चिच्छब्दस्य, कश्चिदर्थस्य, कश्चिदुभयोरिति चेत्, उक्तमत्र प्रागेव नवमोल्लासे श्लेषालङ्कारप्रकरणे दोषगुणालङ्काराणां शब्दार्थोभयगतत्वव्यवस्थायामन्वयव्यतिरेकावेव प्रभवत:, योऽलङ्कारो यदीयान्वयव्यतिरेकावनुविधत्ते स तदलङ्कार इति व्यवस्थाप्यते, शब्दान्वयव्यतिरेकानुविधायित्वं चैतदेव यच्छब्दपरिवृत्त्यसहत्वम्। नन्वेवं यथा पुनरुक्तवदाभास: परम्परितरूपकं चोभयभावानुविधायित्वेनोभयालङ्कार:। तथाशब्दहेतुकार्थान्तरन्यासप्रभृतयोऽप्युभयालङ्कारौ भवेतामिति चेत्। इष्टापत्ते:। एवं तर्हि कथमुभयाङ्कारप्रस्तावमुल्लङ्घ्यार्थमात्रलङ्कारप्रस्तावे पठिता इति चेत्, तथार्थवैचित्र्यस्य प्रकटतया प्रतिभासात्।

योऽलंकारो यदाश्रितः स तदलंकार इत्यपि कल्पनायाम् अन्वयव्यतिरेकावेव समाश्रयितव्यौ। तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयिभावस्याभावादित्यलंकाराणां यथोक्तनिमित्त। एव परस्परव्यतिरेको ज्यायान्॥

---

### सङ्केतः

ननु आश्रयाश्रयिभावः शब्दालङ्कारत्वे हेतुः, न तु अन्वयव्यतिरेकौ इत्याह—योऽलङ्कार इति। विशिष्टस्येति। यत्र आश्रयस्य नित्यता नास्ति। नित्यस्य हि नान्वयव्यतिरेकौ निबन्धनम्। नित्यस्य व्यतिरेकाभावात्। व्यतिरेको हि भेदः इति। इति निगमनम्।

### बालचित्तानुरञ्जनी

आश्रयाश्रयिभावेन शब्दार्थोभयालङ्कारस्य व्यवस्था न तु अन्वयव्यतिरेकाभ्यामित्यलङ्कारसर्वस्वकारादीनां मतं दूषयितुमनुवदति योऽलङ्कार इति। आश्रयाश्रयिभावस्याव्यभिचारे प्रमाणमन्वेषणीयम्। तच्चान्वयतिरेकरूपमेव प्रमाणमङ्गीकर्तव्यमिति। भावः विशिष्टस्य व्यवस्थितरूपस्य यथोक्तावन्वयव्यतिरेकौ निमित्तं यस्येति विग्रहः।

### काव्यादर्शः

ननु, लोकवदाश्रयाश्रयिभाव एव शब्दार्थालंकारत्वे निबन्धनमिति चिरंतनाः, तत् किमन्वयव्यतिरेकाभ्यामित्याह—योऽलंकारो यदाश्रित इति। विशिष्टस्येति। यत्र आश्रयनित्यता नास्ति, नित्यत्वं हि यस्य न तस्य अन्वयव्यतिरेकौ निबन्धनमित्यस्य व्यतिरेकाभावात्। व्यतिरेको भिन्नत्वम्॥ १३९॥ ६२॥

### विवेकः

लोकवदाश्रयाश्रयिभाव एव विभागव्यवस्थायां निमित्त'माहुः, (अ. स. २५६-२५७ पृ. द्र.) तैरप्यन्वयव्यतिरेकाववश्यमाश्रयणीयावित्याह योऽलङ्कार इति। विशिष्टस्येति—यत्राश्रयस्य नित्यता नास्ति। नित्यत्वेऽपि हि न तस्यान्वयव्यतिरेकौ निबन्धनं, नित्यस्य व्यतिरेकाभावात्।

उपसंहरति—इत्यलङ्काराणामिति। संसृष्टिसङ्करयोश्चानयोर्ध्वनिव्यतिरेको विषयः। व्यङ्ग्यत्वेन प्रतिभासमानेऽलङ्कारान्तरे यत्र तत्कृता चारुत्वातिशयप्रतीतिस्तत्रालङ्कारध्वनित्वमेव "यथा—**होइ ण गुणाणुराओ खलाण सिद्धिसरणाण। किर पहिणो सरइ ससिमणी चन्दे ण पिआमुहे दिट्ठे**॥ (ध्व. आ. लो. ४२ पृः)। अत्रार्थान्तरन्यासो वाच्यः। व्यतिरेकापह्नुती तु व्यङ्ग्यप्राधान्येन प्रतीयेते।

### दीपिका

कुतः पुनरव्यव्यतिरेकाभ्यां विनाऽलङ्काराणां शब्दार्थोभयगतत्वविभागो न सम्भवतीत्याह—योऽलङ्कार इति। अलङ्कार्यालङ्करणभावस्य लोकवदाश्रयाश्रयिभावेनावस्थितेरित्येव हि विबक्षायां परममन्त्रः। समाश्रयितव्या-

वङ्गीकार्याविति मूलतया भावेन व्यवस्था पकतयाऽङ्गीक्रियते, किमन्तर्गडुनाऽऽश्रयाश्रयिभावेनेति भावः । तदाश्रयमर्थव्यतिरेकाश्रयम् ! शब्दस्यार्थस्य वाऽन्वयव्यतिरेकानुविधानादेव हि तदाश्रयत्वं वाच्यम्, विशिष्टस्य नियतस्याभावादित्यतः पूर्व निश्चयेति शेषः । व्यतिरेको वैजात्यम् ।

### दर्पणः

अनुजव्यतिरेकावस्थ [अन्वयव्यतिरेकावस्य] मारोपितव्यौ । तौ विना शब्दार्थस्याश्रितद्वयस्याद्यभावादित्यर्थः । अत्र हेतुमाह तदाश्रयं, अन्वयव्यतिरेकाश्रयं, विशिष्टस्य नियतस्य व्यतिरेको भेदः ।

### साहित्यचूडामणिः

अथ चिरन्तनमतानुमत्या लोकवदाश्रयाश्रयिभावं नियामकमाशङ्कते दूषयितुं—च इति । आश्रयाश्रयिभावस्याप्यव्यभिचारे । प्रमाणमेषणीयम् । तच्च घट्टकुटीप्रभातन्यायादन्वयव्यतिरेकावेव । विशिष्टस्येति । व्यवस्थितरूपस्य । यथोक्तान्वयव्यतिरेकौ निमित्तं यस्य । एवकारेण सम्बन्धान्तरमनिमित्तम् । श्रेयान् इति प्रकाश्यते ।

### सम्प्रदायप्रकाशिनी

योऽलङ्कार इत्यादि । आश्रयाश्रयिभावस्य व्यवस्थापकत्वं चेत् कल्प्येत, तदाप्यन्वयव्यतिरेकाववश्याश्रयणीयौ, तयोराश्रयणं विना विशिष्टस्य प्रतिनियतस्याश्रयाश्रयिभावस्याभावात् । न ह्याश्रयाश्रयिभावमात्रेण व्यवस्था । कङ्कणादेः केयूरादिपदाश्रयणसम्भवात् । अतो यथोक्तान्वयव्यतिरेकानिमित्तमेव मिथो वैधर्म्यं ज्यायः ।

### मधुमती

अलङ्कारसर्वस्वकारमतं अपाकर्तुमाह—योऽलङ्कारः इति । विवक्षा बाधकमाह—तदाश्रयणमिति । आश्रयाश्रयिभावो हि न सम्बन्धेन विता, सम्बन्धश्च न प्रतिपाद्यप्रतिपादकभावः । सर्वेषां शब्दालङ्कारप्रभवत्वप्रसङ्गात् । शब्दस्यैव सर्वत्र प्रतिपादकत्वात् । न च तन्मुखप्रेक्षित्वम् । एवं हि शब्दस्य अर्थमुखप्रेक्षित्वेन अनुप्रासादीनामपि अर्थालङ्कारत्वप्रसङ्गः । तथा च—तदन्वयव्यतिरेकित्वमेव तथात्वे प्रयोजकमिति भावः । व्यतिरेकः इति । भेद इत्यर्थः । इति निगमनम् ।

### विस्तारिका

अलङ्कारसर्वस्वकारीयामुपपत्तिं दूषयति-योऽलङ्कार इत्यादि । विशिष्टस्येति । आश्रयाश्रयिभावकल्पनायामतिरिक्तसम्बन्धाभावेन स्वरूपसम्बन्ध एव विश्रान्तौ । तत्र चान्वयव्यतिरेकयोरेव निर्णायकत्वादित्यर्थः । 'आश्रयाश्रयिभावस्य' इत्यनन्तरम् 'अधिकस्य' इति पूरणीयम् ।

यद्यपि निर्णायकेन निर्णेयस्य नान्यथा सिद्धिः, अन्यथा वस्तुनः स्वरूपसम्बन्धासत्त्वे किं निर्णायकावन्वयव्यतिरेकौ; किञ्च, एते शब्दालङ्काराः, एतेऽर्थालङ्काराः, एते उभयालङ्कारा इति विशिष्टप्रत्ययसाक्षिकेण तेनैवोपपद्यते शब्दाद्यलङ्कारव्यवस्था, तथापि सर्वेषामेवालङ्काराणां सर्वालङ्कारत्वं शब्दाश्रयानामर्थशब्दीयत्वं वेति वादिविप्रतिपत्तिनिराकरणेऽन्वयव्यतिरेकौ विनाऽनुभवोऽपि प्रमाणयितुं न शक्यत इति तावेवोपन्यासार्हावित्यत्र तात्पर्यम् ।

तदुक्तम्-तदाश्रयमन्तरेणेति । व्यतिरेक इति भेद इत्यर्थ: । ज्यायानीति । समीचीन:, वादिनिराकरणे तस्यावश्यकत्वादिति भाव: । एतावतापि स्वरूपसम्बन्धपक्ष: परमसमीचीन:, तावता वादापरिसमाप्ते:, न तु सपक्ष एव न भवतीति स्मर्तव्यम् ।

### सारबोधिनी

उद्भटाचार्यमतेऽप्येवमिति दर्शयति योऽलङ्कार इति । आश्रयाश्रयिभावस्योत्पत्यनन्तरमधिकस्येति शेष: । व्यतिरेक इति । भेद इत्यर्थ: ।

### काव्यप्रदीप:

अथ योऽलंकारो यदाश्रित: स तदीय इत्येव किं न विभाग इति चेत्, तथा कल्पनायामप्यन्वयव्यतिरेकावेव समाश्रयितव्यौ । तव्यतिरेकेण विशिष्टस्याश्रयाश्रयिभावस्याभावात् । तस्मादलंकाराणामन्वयव्यतिरेकनिबन्धन एव परस्परं भेद इत्येव ज्याय: ।

### आदर्श:

नन्वलङ्काराणां शब्दतदनुरूपाश्रयभेद एव शब्दतदर्थालङ्कारत्वे नियामकोऽस्त्वित्यतस्तस्याप्युक्तरूपानतिरिक्तत्वमित्याह—योऽलङ्कार इति ।

### सुधासागर:

अथ योऽलङ्कारो यदाश्रित: स तदीय इत्येव किं न विभाग इति चेत् । उच्यते । तथाकल्पनायामन्वयव्यतिरेकावेवावश्यमाश्रयितव्यौ, तद्व्यतिरेकेण विशिष्टस्याश्रयाश्रयिभावस्याभावात् । तस्मादलङ्काराणामन्वयव्यतिरेकनिबन्धन एव परस्परं भेद इत्येव ज्याय इत्यर्थ: ।

**(सू० २१२) एषां दोषा यथायोगं संभवन्तोऽपि केचन।**
**उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः ॥ १४२ ॥**

तथाहि—अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति ये त्रयो दोषाः, ते प्रसिद्धिविरुद्धताम् अपुष्टार्थत्वम् प्रतिकूलवर्णतां च यथाक्रमं न व्यतिक्रामन्ति तत्स्वभावत्वात् क्रमेणोदाहरणम्—

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजाग्रा-
नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः।
रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥५८० ॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिः, अनुप्रासानुरोधेनैव कृता न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ॥

---

**सङ्केतः**

एषां अलङ्काराणाम्। उक्तेषु दोषेषु। अनर्थाः दोषाः।

प्रसिद्धीति। कदाचित् चक्री चक्रारप्रियोऽपि स्यात्। अन्यानि तु न घटन्त एव।

**बालचित्तानुरञ्जनी**

एषामलङ्काराणां दोषाः उक्तेष्वेव दोषेष्वन्तर्भूतत्वात् पृथक् नोच्यन्त इत्याह एषामिति। तत्रादौ शब्दालङ्कारेषु अनुप्रासदोषान् आद्योक्तेषु दोषेष्वन्तर्भावयति अनुप्रासस्येति। अनर्थाः दोषाः। तत्र प्रसिद्ध्यभावः प्रसिद्धिविरोधेऽन्तर्भवति। वैफल्यमपुष्टार्थतायां वृत्तिविरोधो वर्णप्रातिकूल्य इत्यर्थः। तन्मूलत्वात्। तेषां प्रसिद्ध्यभावादीनां प्रसिद्धिविरोधिलक्षणत्वादित्यर्थः। आद्यमुदाहरति चक्रीति। जगदुपकृतये ये नित्ययुक्तस्य अहिमरुचः सूर्यस्य, यस्य स्यन्दनस्य चक्रारपङ्क्तिं चक्रीं स्तौति। हरिरिन्द्रोऽपि हरीनश्वान् स्तौति। धूर्जटिः शिवः, धूः अङ्गविशेषः, तद्ध्वजान् स्तौति। नक्षत्रनाथश्चन्द्रोऽपि अरुणमनूरुं स्तौति। कुबेरः कूबराग्रं स्तौति। प्रसन्नः सः स्यन्दनः, वः अवतात्। अत्र स्तुतौ स्तुत्यव्यत्यासेऽपि न किञ्चिदनौचित्यम् अन्यत्र कवेरनुप्रासकुतूहलभङ्गादित्याह अत्रेति। चक्री कर्ता चक्रारपंक्तिमेव कर्मभूतां स्तौति नान्यत इत्येवंरूपेण स्तुतिरनुप्रासानुरोधेनैव कृता। न पुराणाद्यनुरोधात्, नाप्यर्थौचित्यादतः प्रसिद्धिविरोधो दोष इत्यर्थः।

### काव्यादर्शः

एषामिति अलंकाराणाम् । उक्तेष्विति दोषेषु । अनर्था इति । अनर्थशब्दोऽयं अपायोपनिपातवचनः, अपायश्च दोषः ।

### विवेकः

अथास्य ग्रन्थस्याव्यापकत्वं निरस्यति एषामिति—अलङ्काराणाम् । सम्भवन्तोऽपीति—न कस्याप्यत्र विमतिरिति दर्शयति । तथाऽप्यत्र यत्रोक्तास्तत्र हेतुमाह—उक्तष्विति । प्रागुक्तेषु दोषप्रकारेष्वन्तर्भावान्न पृथक् कीर्तिताः । चक्रीत्यादि—चक्रेष्वराश्चक्रान्तास्तेषां पंक्तिरिति । चक्री नारायणः । हरिरिन्द्रो हरयोऽश्वाः । धुरि रथाग्रे ध्वजास्तेषामन्तानिति । चक्रस्य मध्यभागोऽक्षः, अरुणः सारथिः । कूबरो युगन्धरः । रंहो वेगः । तदिह विष्णुप्रभृतयः कर्तारश्चक्रारपङ्क्तिप्रभृतीनि कर्माणि ।

### दीपिका

एषामुल्लासद्वयेनाभिप्रेतानामलङ्काराणां केषाञ्चित् । यथायोगमुक्तेष्वन्तः पतन्तीत्यन्वयः केवललक्ष्यप्रसिद्ध्या प्राचीनान्तरर्भावप्रकारमुपपादयति वृत्तिकृत्—तथाहीति । प्रसिद्ध्यभावः, प्रसिद्धार्थविरहः । वैफल्यमास्वादोत्कर्षकत्वविरहः । वृत्तेरनुप्रासभेदस्य प्रधानीभूतास्वादविरोधित्वं वृत्तिविरोधः । न अर्थ्यन्ते प्रार्थ्यन्त इत्यनर्था दोषाः । नातिक्रामन्ति न व्यभिचरन्ति । तेषां स्वभावः प्रतिनियतो धर्मो लक्षणं विद्यतेऽस्येति तत्स्वभावाः, तेषां भावस्ततत्त्वम्, तस्माद् विशेषरूपत्वादित्यर्थः ।

चक्री विष्णुः, हरिरिन्द्रः, हरीनश्वान् । तथा प्रतीतेरिति । प्रतीतिः प्रतिपादनमिति यावत् ।

### दर्पणः

संप्रत्यलङ्कारपरिज्ञानानन्तरं तद्गतदोषणां संज्ञानता [जिज्ञासता] भवतीति दोषनिरूपणप्रस्तावमुल्लङ्घ्य उक्तदोषेषु तदन्तर्भावं दर्शयति । एषामिति । एषां शब्दार्थालङ्कारणां यथायोगं उक्तेष्वन्तः पतन्तीव्यत्वयः [उक्तेष्वन्तर्भवन्तीव्यन्वयः] । उक्तेषु दोषेषु अन्तर्भावप्रकारमेव दर्शयति वृत्तिकृत्, तथाहीति प्रसिद्ध्यभावः प्रसिद्धानुता [?] विरहः । वैफल्यमास्वादोत्कर्षकताहानिः वृत्तेरर्थप्रास भेदस्य [अनुप्रास भेदस्य] विरोधः । प्रधानीभूतास्वादविरोधित्वम् । अनर्थाः अनर्थकारणानि दोषा इत्यर्थः । नातिक्रामन्ति नातिवर्तन्ते, तत्स्वावत्वात् तद्विशेषत्वात्, तेषां स्वभावः प्रतिनियतो भावो लक्षणं विविच्यते एष्विति विग्रहात् । चक्री इन्द्रः हरीनश्वान्, कर्तृकर्मप्रतिनियमेनेति । विशिष्टादीनां विशेष्यावकारयन्मादेः [?] प्रशंसा ।

### साहित्यचूडामणिः

इदानीमलङ्कारादोषानुन्मेषयिष्यंस्तेषां सप्तमोक्तदोषव्यतिरेकेण पृथक्त्वपक्षं प्रतिक्षिपति—एषामिति । यथायोगम् अस्यायं दोष इति वक्ष्यमाणप्रकारानुरूपम् । ननु "मुख्यार्थहतिर्दोष" इत्युक्तयुक्त्या रसवृत्तिव्याहृता दोषास्तद्द्वारा वाच्यवाचकभागोपक्षीणा वा न कदाचिदुक्तप्रकारपर्यवसायिनामलङ्काराणां सम्भवेयुः, अलमन्तर्भा-

वोपक्रमेणेति चेदाह—सम्भवन्तोऽपीति । सत्यमसम्भवे नानौचित्यम्, उक्तिवैचित्र्यद्वारा वाच्यवाचकयोः कथञ्चित् सम्भवेऽप्यन्तः पातः साध्य इत्यस्माकमाग्रह इत्यर्थः ।

तत्रादौ शब्दालङ्कारेष्वनुप्रासदोषान् उक्तेषु दोषेष्वन्तर्भावयति—अनुप्रासस्येति । अनर्था दोषाः । तत्र प्रसिद्ध्यभावः प्रसिद्धिविरोधं वैफल्यमपुष्टार्थतां, वृत्तिविरोधो वर्णप्रतिकूल्यं च क्रमान्नातिक्रामन्ति । तत्स्वभावत्वादिति । तेषां प्रसिद्ध्यभावादीनां प्रसिद्धिविरोधादिलक्षणकत्वात् ।

चक्रीति ।

अत्र स्तोतृस्तुत्यव्यत्यासेऽपि न किञ्चिदनौचित्यमन्यत्र कवेरनुप्रासकुतूहलादित्याह—कर्तृकर्मेति । कर्तारः चक्र्यादयः चक्रारपङ्क्त्यादीनि कर्मामि तेषां यः प्रतिनियमो निर्दिष्टप्रकारः तेन स्तुतिर्न पुराणाद्यनुरोधाद् नाप्यर्थौचित्यात् । यथा—"कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेने'-त्यादौ । किन्तर्हि, केवलमनुप्रासनिर्बन्धादिति प्रसिद्धिविरोधो दोषः ।

### सम्प्रदायप्रकाशिनी

अथैषामलङ्काराणां दोषाणां निरूपितचरशब्दार्थोभयदोषान्तर्भाविन इति न पृथक् प्रतिपादिता इत्याह—एषां दोषा इति ।

यथायोगं सम्भवतामपृथक्प्रतिपाद्यत्वं क्रमेण दर्शयितुमाह—तथाहीत्यादिना । अनुप्रासस्य ये दोषाः प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति अन्यैस्तु येऽनर्था उक्तास्ते प्रसिद्धिविरोधमपुष्टार्थतां प्रतिकूलवर्णतां च नातिवर्तन्ते, सालक्षण्यात् । चक्रीति । अत्र विष्ण्वादीनां कर्तृणां चक्रारपङ्क्त्यादिकर्मप्रतिनियता स्तुतिरनुप्रासानुसारेणैव कृता न पुराणादिष्वेवमस्तीति प्रसिद्धिविरोधः ।

### मधुमती

इदानीं अलङ्कारदोषान् अन्यैः पृथगुक्तान् उक्तदोषेष्वन्तर्भावयितुमाह—एषामिति ।

### विस्तारिका

इदानीमलङ्कारदोषानन्यैः पृथगुक्तानुक्तदोषान्तर्भूतत्वेन प्रतिपादयितुमाह-एषामिति । वैफल्यं चमत्काराप्रयोजकत्वम् । वृत्तीति । उपनागरिकादिवृत्तिविरोध इत्यर्थः । माधुर्यव्यञ्जकवृत्तौ शब्दत एव टवर्गपर्युदासात् । एवमोजोव्यञ्जकवृत्तावप्युद्धतगुम्फविधानमुखेन शिथिलबन्धस्यार्थतः पर्युदासादिति भावः ।

चक्रीति । अहिमरुचः सूर्यस्य रथः, योऽन्वहमवतादित्यन्वयः । यस्य स्यन्दनस्य चक्रकीलकपंक्तिम्, चक्री विष्णुः स्तौति । एवं धूर्जटिर्महेशः । धुरां रज्जूनां संयमनार्थायेति । युजान् तेषामग्रान्, अक्षं चक्रम्, नक्षत्रनाथश्चन्द्रः । अरुणं सारथिम्, वरुणो लोकपालः, कूबराग्रं युगं धराग्रं कुबेरश्च लोकपालः । रंहो वेगम्, सुराणां समूहः स्तौतीति सर्वत्रान्वयः कर्तव्यः । कथम्भूतस्य चक्रस्य ? जगतामुपकृतये नित्ययुक्तस्य, स्वयमेवाभियुक्तस्य; न तु केनापि नियोजितस्येत्यर्थः । सर्वदा सञ्चारित्वेन कदापि मोचनयोजनयोरभावात् । स वो युष्माकम् । प्रीत्या भक्त्या । प्रसन्नोऽनुकूलः ।

### सारबोधिनी

स्वग्रन्थस्य न्यूनतां परिहरति एषामिति। वैफल्यमिति। चमत्काराप्रयोजकत्वमित्यर्थः। वृत्तीति। उपनागरिकादिवृत्तिविरोधः इत्यर्थः। माधुर्यव्यञ्जकवृत्तौ शब्दत एव टवर्गपर्युदासात्। एवमोजोव्यञ्जकवृत्तावपि उद्धतगुम्फविधानमुखेन शिथिलबन्धस्यार्थतः पर्युदासादिति भावः। चक्रीति। अहिमरुचः सूर्यस्य, स स्यन्दनः वः अवतात् इत्यन्वयः। चक्रे अराश्चक्रारास्तेषां पंक्ति कीलपंक्तिमित्यर्थः। धरिति। धूः स्त्री क्लीबे यानमुखमित्यमरः।

### काव्यप्रदीपः

नन्वलंकाराणां दोषाः प्राचीनैरभिहितास्ते किं न सन्त्येव आहोस्वित्संभविनोऽप्युपेक्षिताः। आद्येऽनुभवविरोधः, अन्त्ये न्यूनतेत्यत आह—

**एषां दोषा यथायोगं संभवन्तोऽपि केचन।**
**उक्तेष्वन्तः पतन्तीति न पृथक्प्रतिपादिताः॥ ५६॥**

तथा हि अनुप्रासस्य तावत्त्रयो दोषाः, प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधश्च। ते च यथाक्रमं प्रसिद्धिविरोधापुष्टार्थत्वप्रतिकूलवर्णत्वेभ्यो नातिरिच्यन्ते। तत्स्वभावत्वात्। तत्र प्रसिद्ध्यभावो यथा—

**'चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजाग्रा-**
**नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः।**

रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य **स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः॥'**

अत्र चक्रिप्रभृतीनां कर्तृणां चक्रारपङ्क्त्यादीनां प्रति नियमेन स्तुतिरनुप्रासानुरोधेनैव निबद्धा न पुनरितिहासादिषु तथा प्रसिद्धेति प्रसिद्ध्यभावः। सोऽयं प्रसिद्धिविरोध एव।

### काव्यप्रकाशखण्डनम्

अथैषामलङ्काराणां दोषाः। अनुप्रासस्य प्रसिद्ध्यभावः, वैफल्यम्, वृत्तिविरोधः—त्रयो दोषाः। क्रमेण उदा०—

**अर्चनेन तव दिव्यवर्चसा स्यन्दनेन पदमैन्द्रमृच्छति।**
**चन्दनेन तव शैलनन्दने नन्दने च जन एष नन्दति॥**

अत्रार्च्चनादिना ऐन्द्रपदलाभादिफलं अनुप्रासानुरोधेनैव प्रतिपादितं न पुनः पुराणादिषु तथाप्रसिद्धिरिति प्रसिद्धिविरोधः।

## आदर्शः

इदानीं सम्भवतामप्यलङ्कारदोषाणामुक्तदोषान्तर्गतत्वमेवाह—एषामिति। यथायोगं यथासम्भवम्, तेन सर्वत्रालङ्कारे न दोषसम्भव इत्युक्तम्। प्रसिद्ध्यभाव इति। अनुप्रासितपदार्थयोर्विवक्षितेऽन्वये लोकतः शास्त्रतो वा प्रसिद्ध्यभाव इत्यर्थः। वैफल्यमिति, अनुप्रासितशब्दानुरूपस्य विशेषणस्य विशेष्यप्रकर्षानाधायकत्वाद् वैफल्यमित्यर्थः। वृत्तिविरोध इति। अनुप्रासघटकवर्णानां रसविशेषवति काव्ये स्थित्यनौचित्यमित्यर्थः। प्रतिकूलतां प्रतिकूलवर्णदोषताम्।

चक्रीति। अहिमरुचेः सूर्यस्य स स्यन्दनो वो युष्मान् अवतात् पायात्। जगदुपकृतये नित्ययुक्तस्य सततं धावितस्य यस्य चक्रारपङ्क्तिं चक्राग्रभागश्रेणीं चक्री विष्णुः स्तौति। हरिरिन्द्रो हरीन् अश्वान् स्तौतीत्यन्वयः एवमुत्तरोत्तरत्राऽपि। धूर्ध्वजान्तान् संमुखस्थध्वजप्रान्तान्। 'धूः स्त्री यानामुखम् इति कोषः। धूर्ध्वजाग्रानिति क्वचित् पाठः। अत्र चाग्रपदस्य पुंलिङ्गत्वं न दृष्टचरम्। अक्षं चक्रम्, नक्षत्रनाथश्चन्द्रः, अरुणं सूर्यस्यैव सारथिम्। कूबराग्रं युगन्धराग्रं 'कूबरोऽस्त्री युगन्धरः' इत्यमरः। रंहो वेगम्, सुराणां संघः समूहः। प्रीतिप्रसन्न इति सर्वेषामेव कर्तॄणां विशेषणम्। अत्र प्रसिद्धिविरोधं दर्शयति—अत्रेति।

## सुधासागरः

नन्वलङ्काराणां दोषाः प्राचीनैरभिहिताः ते किं न सन्त्येव, आहोस्वित्सम्भविनोऽप्युपेक्षिताः। आद्येऽनुभवविरोधः। अन्त्ये न्यूनतेत्यत आह—एषामिति।

तथाहीत्यादि। अन्तर्भावं दर्शयति। अनुप्रासस्य तावत् त्रयो दोषाः, प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधश्च। ते च यथाक्रमं प्रसिद्धिविरोधापुष्टार्थत्वप्रतिकूलवर्णेभ्यो नातिरिच्यन्ते, तत्स्वभावादित्यर्थः। तत्र प्रसिद्ध्यभावो यथा—चक्रीति।

चक्री विष्णुः जगदुपकृतये संसारोपकाराय नित्ययुक्तस्य सदासज्जितस्य यस्य रथस्य चक्रे आराश्चकारास्तेषां पङ्क्तिः कीलकपङ्क्तिः प्रातः प्रभातसमये प्रसन्नः सन् अन्वहं प्रतिदिनं स्तौति, एवं हरिरिन्द्रो हरीन् वाजिनः। धूर्जटिः शिवः धुरं। यानमुखं ध्यजाग्रान् पताकाग्रभागांश्च, नक्षत्रनाथश्चन्द्रोऽक्षं चक्रनाभिप्रोतं लोहदण्डम् वरुणः अरुणं सारथिं, कुबेरः कूबराग्रं युगन्धराग्रम्, सुराणां सङ्घो देवसमूहो रहः रथवेगं प्रातः कालेऽन्वहं स्तौति। सोऽहिमरुचेः सूर्यस्य स्यन्दनो वो युष्मानवतात् रक्षत्वित्यर्थः। स्रग्धराछन्दः। 'म्रनैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणात्।

अत्रेत्यादि। अत्र चक्रिप्रभृतीनां कर्तृणां चक्रारपङ्क्तयादीनां कर्मणां प्रतिनियमेन स्तुतिरनुप्रासनुरोधेनैव निबद्धा न पुनरितिहासादिषु तथा प्रसिद्धेति प्रसिद्ध्यभावः। सोऽयं प्रसिद्धिविरोध एवेत्यर्थः।

## सुधासागरः

अत्र वाच्यस्येत्यादि। क्रीडागृहं यदि गच्छसि तदा किमिति तव गमनं वृथा रणरणकं कुरुते इति वाक्यार्थे वैचित्र्याभावस्यानुभविकत्वेन केवलं शब्दमात्रपर्याप्तोऽनुप्रास इत्यर्थापरिपोषाददुष्टार्थतेत्यर्थः। तथा च शब्दालङ्कारत्वेऽपि अनुप्रासादीनामर्थोपकारत्वेनावश्यं भवितव्यमिति भावः। नहि शब्दलङ्काराणां सर्वथाऽर्थमपुरस्कृत्यैव रसोपकारकत्वम्। परम्परासम्बन्धेन शब्दवदर्थस्यापि घटकत्वात्। परंतु शब्दान्वयव्यतिरेकानुविधायित्वात् 'प्राधान्येन व्यपदेशः' इति न्यायात्तदीयत्वेन व्यपदेश इति, न तु सर्वथाऽर्थानपेक्षता। तदुक्तं यत्सोऽर्थान्तरयुक्तथेति। एवं चार्थोपकारकत्वरूपद्वारबाधात्प्रकृतानुप्रासस्य चमत्कारानुपयोगित्वमेवेत्याशयः।

अकुण्ठोत्कण्ठया (५८२ अ) इति। अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्त-रीत्या विरुध्यते, इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः ।।

---

### सङ्केतः

अकुण्ठेति। अत्र शृङ्गारप्रतिकूलाः वर्णाः। शृङ्गारे हि उपनागरिका वृत्तिर्योग्या।

### बालचित्तानुरञ्जनी

तृतीयमुदाहरति अकुण्ठेति। अकुण्ठोत्कण्ठया आकण्ठं पूर्णया हे कलकण्ठितीक्ष्णं कुरु। कण्ठार्तिमुद्धर। अत्रोपनागरिकां विमुच्य परुषाया अङ्गीकारात् यो वृत्तिविरोधः तं वर्णयति। तुल्यान्तान्नातिरिच्यत इत्याह शृङ्गार इति।

### काव्यादर्शः

'अकुण्ठे'ति। अत्र शृङ्गारप्रतिकूला वर्णाः। शृङ्गारे हि उपनागरिका वृत्तिरुचिता।

### दीपिका

कलकण्ठीति दूतीसम्बोधनम्। कण्ठार्तिं कण्ठपीडाम्। परुषवर्णाडम्बरः परुषवर्णतानिष्पाद्यश्चित्त-क्षोभः। प्रतिकूलवर्णतैव वृत्तिविरोधः पूर्वपदार्थो विधेयः। यमनं बन्धनम्। अप्रयुक्तत्वं कविपरम्पराप्रयोग विरहः। सदम्भा इत्यत्राम्भः शब्देन सप्रभाः।

### दर्पणः

परुषवर्णाडम्बरः परुषवर्णनिष्पाद्यः, चित्तक्षोभः, यमनं निबन्धनमप्रयुक्तत्वं कविपरम्पराप्रयोगविरहात्।

### साहित्यचूडामणिः

अकुण्ठेति अत्रोपनागरिकां विमुच्यत परुषाया अङ्गीकाराद् यो वृत्तिविरोधः स वर्णप्रातिकूल्यान्नातिरिच्यत इत्याह—शृङ्गार इति। परुषेति। मसृणानुप्रासौचित्याद् अस्य रसस्य।

### सम्प्रदायप्रकाशिनी

अकुण्ठोत्कण्ठयेत्यत्र शृङ्गारे टवर्गोत्तरः परुषवर्णाडम्बरो 'मूर्ध्नि वर्गान्त्यगाः स्पर्शा' इति पूर्वोक्त्या नीत्या विरुध्यत इति परुषानुप्रासे प्रतिकूलवर्णत्वमेव वैदर्भीवृत्तिविरोधः।

### मधुमती

वृत्तीति। उपनागरिकावृत्तिविरोध इत्यर्थः। माधुर्यव्यञ्जकवृत्तौ टवर्गपर्युदासादिति भावः।

अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम्।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते॥ ५८२ ॥

अत्र वाच्यस्य विचिन्त्यमानं न किंचिदपि चारुत्वं प्रतीयते, इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम्॥

---

### बालचित्तानुरञ्जनी

तत्तर्हि अनणुरणन्मणिमेखलं अविरतसिञ्जानमञ्जुमञ्जीरम्, ते परिसरणं अकारणं रणरणकं, किं कुरुते? अत्र यदनुप्रासस्य वैफल्यं तदर्थस्यापरिपोषेऽपि भविष्यति। तादृगनुप्रासप्रसाधितवाचकानीव वाच्यस्य तद्द्वारा वाक्याधीनत्वम्। परस्य वाच्यसिद्धेरित्याह वाच्यस्येति।

### काव्यादर्शः

'रमणमन्दिरं रतिवेश्म।' 'रमणस्य प्रेयसो मन्दिरम्' इति व्याख्यायां तु 'अकारणम्' इति असंगतं स्यात्।

### विवेकः

मकारणमित्यसंगतं स्यात्। परिसरणं परिभ्रमणं, रणरणकमुत्कलिकायास्तरलता।

### दीपिका

अकारणमिति क्रियाविशेषणम्। पूर्वानुरागं विनैव विचिन्त्यमानं निरूप्यमाणमपि। अकारणमिति क्रियाविशेषणम्।

### दर्पणः

अरुणचरणेति। संबुद्धिः। करुणरणकसुकंठां अदश्चेतिः **[?]** अस्यार्थ प्रतिकूलदोषवर्णन प्रस्तावे व्याख्यातः।

### साहित्यचूडामणिः

तादृगनुप्रासायाधिकवाचकनिवेशेऽपि वाच्यस्य तद्द्वारा वाक्यार्थीभूतस्य रसस्य वा चारुत्वासिद्धेरित्याह—वाच्यस्येति।

### विस्तारिका

अनणुरणन्मणिमेखलमिति, अविरलशिञ्जानमञ्जुमञ्जीरमिति च द्वयं परिसरणविशेषणम्। शिञ्जानं शब्दायमानम्, 'भूषणानां च शिञ्जितम्' इति कोषात्। रणरणकं चिन्ताम्।

अत्र वाच्यस्येति । क्रीडागृहं यदि गच्छसि, तदा किमित्यकारणं तव गमनं मम चिन्तां कुरुत इति वाक्यार्थे वैचित्र्याद् भावस्यानुभविकत्वेन केवलं शब्दमात्रपर्याप्तोऽनुप्रास इत्यर्थापरिपोषादपुष्टार्थतेत्यर्थः। तथा च शब्दालङ्कारत्वेऽप्यनुप्रासादीनामर्थोपकारकत्वेनावश्यंभवितव्यमिति भावः ।

## सारबोधिनी

अनणुरणन्मणिमेखलमिति अविरतसिञ्जानमञ्जुमञ्जीरमिति च द्वयं परिसरणविशेषणम् । शिञ्जानानां शब्दायमानभूषणानां च शिञ्जितमिति कोशात् । रणरणकं चिन्ता । अत्र वाच्यस्येति । क्रीडागृहं यदि गच्छसि तदा किमित्यकारणं मम चिन्तां कुरुते । तव गमनमिति वाक्यार्थे वैचित्र्याभावस्यानुभविकत्वेन केवलं शब्दमात्रपर्याप्तोऽनुप्रासः इत्यर्थापरिपोषादपुष्टार्थतेत्यर्थः । तथा च शब्दालङ्कारत्वेऽप्यनुप्रासादीनामर्थोपकारकत्वेनावश्यं भवितव्यमिति भावः । न हि शब्दालङ्काराणां सर्वथा अर्थमपुरस्कृत्यैव रसोपकारकत्वं परम्परासंबन्धेन शब्दवदर्थस्यापि घटकत्वात्। परन्तु शब्दान्वयव्यतिरेकानुविधायित्वात् 'प्राधान्येन व्यपदेश' इति न्यायात् तदीयत्वेन व्यपदेश इति । न तु सर्वथार्थानपेक्षता । तदुक्तम् 'यत्सोऽर्थान्तरयुक्' तथेति । एवञ्चार्थोपकारकत्वरूपद्वारबाधात् प्रकृतानुप्रासस्य चमत्कारानुपयोगित्वमेवेति दिक् ।

## काव्यप्रदीपः

यथा वा ।

**'अनणु रणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।**
**परिसरणरुणचरणे रणरणकमकारणं कुरुते ॥'**

अत्र वाच्यस्यार्थस्य विविच्यमानं न किंचिचारुत्वं प्रतीयत इत्यपुष्टार्थत्वमेवानुप्रासस्य वैफल्यमुच्यते ।

## काव्यप्रकाशखण्डनम्

तथा 'उर्व्यसावत्र तर्व्वाली'त्यादि । अत्र चानुप्रासेन चास्य विविच्यमानं न किञ्चिदपि चारुत्वं प्रतीयते । तथा साधारणधर्माश्रिते न्यूनत्वाधिकत्वं च दोषः ।

## आदर्शः

प्रपञ्चयति—यथा वा अनणुरणदिति । वेश्यां प्रति शान्तपुरुषस्योक्तिरियम् । हे अरुणचरणे, तव परिसरणं गमनं पुंसां रणरणकं कामचिन्ताम् अकारणं कुरुते, 'चिन्ता रणरणकञ्च तदि'ति कोषः । परिसरणं कीदृशम् ? अनणु अनल्पं रणन्ती मणियुक्ता मेखला यत्र । अविरतशिञ्जानं शब्दायमानं मञ्जु मञ्जीरं यत्र तादृशम् । अत्र शान्तपुरुषस्योक्तौ तत्सौन्दर्यबोधकं सम्बोधनं न चारुतावहमित्याह—अत्रेति । कामचिन्ताजननस्य निष्फलत्वकथनाद् वैराग्यवतः पुरुषस्यैवेयमुक्तिः, तत्र च तस्यां भावबोधकतच्चरणतद्गमनविशेषणवैयर्थ्यमिति भावः ।

**भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि।**

**यदि सल्लीलोल्लापिनि गच्छसि तत् किं त्वदीयं मे ॥ ५८१ ॥**

---

### सङ्केतः

रमणेति। रमणं-क्रीडा, न प्रियः। अन्यथा 'अकारण' मिति असङ्गतं स्यात्।

### बालचित्तानुरञ्जनी

द्वितीयमुदाहरति भणेति। आनन्दस्यन्दिसुन्दरेन्दुमुखि सल्लीलोल्लापिनि, तरुणि यदि मे रमणमन्दिरं रतिवेश्म गच्छसि।

### काव्यादर्शः

'कूबराग्रं रथाग्रम्। रहो वेगम्'। प्रसिद्धिविरोध इति। तदा हि चक्रिणश्चक्रारप्रियत्वं संभाव्येतापि, उत्तराणि तु न संगच्छन्ते।

### विवेकः

भणेत्यादि—रमणमन्दिरं रतिवेश्म, रमणस्य प्रेयसो मन्दिरमिति तु व्याख्याया।

### दीपिका

रमणमन्दिरं यदि गच्छसीत्यन्वयस्तदा त्वदीयं त्वन्मतं किमन्यत् प्रयोजनमस्तीत्यर्थः। अलघु उच्चैः। अरुणचरण इति सम्बुद्धिः।

### दर्पणः

भणिति यदि [भण तरुणि] रमणमन्दिरं गच्छसीति तु तत् त्वदीयं त्वत्सम्बन्धि मे मम किं किमपि प्रयोजनं नास्तीत्यर्थः।

### साहित्यचूडामणिः

भणेति।

अत्र यदनुप्रासस्य वैकल्यं एतदस्यापरिपोषेऽन्तः पतिष्यति।

### सम्प्रदायप्रकाशिनी

भण तरुणीत्यादिश्लोकद्वयेन यदपुष्टार्थत्वं तदेव वैफल्यम्।

### विस्तारिका

भण तरुणीति । हे तरुणि यदि रमणमन्दिरं गच्छसि, तत् किं त्वदीयं परिसरणं ममाकारणं रणरणकं कुरुत इत्यन्वयः । रमणमन्दिरं रतिमन्दिरमित्यर्थः । रमणस्य मन्दिरमित्यर्थे स्वोपेक्षाया एव रणरणकहेतोरविकलत्वेनाकरणमित्यनन्वयापत्तेः । आनन्दस्यन्दी, अत एव सुन्दरोऽद्भुत इन्दुः, स एव मुखं यस्याः सतील्लीला उल्लासयितुं शीलं यस्याः । क्वचिदुल्लापिनीति पाठः । तत्र सतीभिल्लीलाभिरुल्लपितुं वक्तुं शीलं यासामित्यर्थो बोध्यः ।

### सारबोधिनी

भण तरुणीति । हे तरुणि यदि रमणमन्दिरं गच्छसि तत् किं त्वदीयं परिसरणं, रणरणकं कुरुते इत्यन्वयः । रमणमन्दिरं आनन्दस्यन्दी सुन्दरः इन्दुः, स एव मुखं यस्याः सती लीला उल्लासयितु शीलं यस्याः । क्वचिदुल्लासयतीति पाठे तत्र सतीभिर्लीलाभिरुल्लपितं वक्तुं शीलं यस्याः इत्यर्थः ।

### काव्यप्रदीपः

वैफल्यं यथा—

**'भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।**
**यदि सल्लीलोल्लापिनि गच्छति तत्किं त्वदीयं मे ॥'**

### आदर्शः

वैफल्यं दर्शयति—भण तरुणीति ।रमणगृहगमनपथमनासाद्य व्याकुलामभिसारिकां प्रति वर्त्म दिदर्शयिषोः कस्यचिदुक्तिरियम् । हे तरुणि, यदि रमणमन्दिरं गच्छसि, तदा त्वदीयं किं वस्तु मे मम स्यात्, त्वं किं मह्यं दास्यसीत्यर्थः । अत्र बहुसम्बोधनमनुप्रासायैव न तु वर्त्मप्रदर्शनवेतनप्रार्थनोपयोगीत्यपुष्टार्थत्वम् ।

### सुधासागरः

भणेति वैफल्यं दर्शयति

हे आनन्दास्यन्दी सुन्दरो य इन्दुः शारदपूर्णिमाचन्द्रस्तद्वत्प्रकाशमानं मुखं यस्यास्तादृशि, सतीभिर्लीलाभिरुल्लपितुं शीलं यस्या तथाभूते, अरुणौ सालक्तकौ चरणौ यस्यास्तथाभूते, तरुणि नायिके अत्र सम्बोधनविशेषणैर्नायिकायाः स्वाधीनपतिकात्वं निःशङ्कत्वं च व्यज्यते, मे भण वद, यदि रमणमन्दिरं क्रीडागृहं गच्छसि तत्तर्हि अनणुरणन्तो बहुतरं शब्दायमाना मणयो यस्यां तादृशी मेखला यत्र तथाभूतम्, अविरतशिञ्जानानि मञ्जुमञ्जीराणि यत्र तादृशं त्वदीयं परिसरणं तवागमनम् किमकारणं किमिति व्यर्थं रणरणकमुत्कण्ठातिशयं कुरुते इत्यर्थः ।

## विस्तारिका

न हि शब्दालङ्काराणां सर्वथार्थमपुरस्कृत्यैव रसोपकारकत्वं परम्परासम्बन्धेन शब्दवदर्थस्यापि घटकत्वात्, परन्तु शब्दान्वयव्यतिरेकानुविधायित्वात् 'प्राधान्येन व्यपदेशः' इति न्यायात् तदीयत्वेन व्यपदेश इति, न तु सर्वथार्थानपेक्षेति।

किञ्च, शब्दस्यैवार्थमपुरस्कृत्य न रसोपकारकत्वम्, कुतस्तदाश्रितानामलङ्काराणामिति। तदुक्तम्—'यत्सोऽर्थान्तरयुक्तथा' इति।

एवं चार्थोपकारकत्वरूपद्वारबाधात् प्रकृतानुप्रासस्य चमत्कारानुपयोगित्वमेवेति। दिक्।

## काव्यप्रदीपः

वृत्तिविरोधो यथा—'अकुण्ठोत्कण्ठया—' इत्यादि। अत्र शृङ्गारे परुषवर्णाडम्बरो गुणविवेचनप्रस्तावोक्तरीत्या विरुद्ध इति प्रतिकूलवर्णतैव वृत्तिविरोध इत्युच्यते।

## आदर्शः

वृत्तिविरोधमुदाहरति—अकुण्ठेति। व्याख्यातमिदं दोषोल्लासे (३२९ पृ०)। अत्र शृङ्गारप्रतिकूलाष्टवर्गवर्णा अनुप्रासार्थमेवोपात्ताः।

## सुधासागरः

वृत्तिविरोधं दर्शयति अकुण्ठोत्कण्ठ्योत्यादि। अत्र शृङ्गारे परुषवर्णा पूर्वोक्तगुणविवेचनप्रस्तावोक्तरीत्या विरुद्धा इति प्रतिकूलवर्णतैव वृत्तिविरोध इत्युच्यते इत्यर्थः।

**यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः ।। यथा**

**भुजङ्गमस्येव मणिः सदम्भा ग्राहावकीर्णेव नदी सदम्भाः ।**

**दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं सदम्भाः ।।५८३ ।।**

---

### सङ्केतः

भुजङ्गमस्येति । 'सदं' शब्दो निपातः छान्दसः, सदाऽर्थः । सदं भासते सदम्भाः । सदम्भाः = सज्जलाः, सदम्भाः—खलाः ।

### बालचित्तानुरञ्जनी

यमकविषयं दोषमप्रयुक्तमेतदविषयि । यमकस्येति । उदाहरति यथेति । सदं सदा भाः कान्तिर्यस्याः सा, भुजङ्गमस्य मणिरिव, ग्राहैः जलग्राहैः, अवकीर्णा व्याप्ता सत् अम्भो यस्याः सा मदीयप्रमुखे आदौ दम्भेन सह वर्तन्त इति ते सदम्भाः खलाः, दुरन्ततां निर्णयतोऽपि जन्तोश्चित्तं कर्षन्ति । पादद्वये पादचतुष्टये क्वचिदेक उपादेययमकस्य प्रयोगाः ।

### काव्यादर्शः

'सदम्भाः सततप्रभः' । 'सदम्' इति सदेत्यस्यार्थे निपातश्छान्दसः । मणिशब्दः स्त्रीपुंसलिङ्गः । 'सत् शोभनमम्भो यस्याः' प्रमुखे आदौ सह दम्भेन वर्तन्ते सदम्भाः समायाः खला इत्यर्थः ।

### विवेकः

भुजङ्गमस्येत्यादि—[सदम्भाः] सततप्रभावो मणिः सदमिति सदेत्यस्यार्थे निपातश्छान्दसः । सत् शोभनमम्भो यस्य सदम्भः, दम्भेन सह वर्तन्त इति सदम्भाः ।

### दीपिका

द्वितीये तु जलमुच्यते, दुरन्ततां परिणामदुःखदायिताम् । निर्णयतो ननिश्चितवतः । सदम्भाः सकपटाः ।

### दर्पणः

सदंता सदम्भा इत्यत्र प्रथमेऽन्तः शब्देन रत्नप्रभा [?] द्वितीये जनं दुरंतरं दुर्व तलं [?] अनवस्थानेऽनर्थावहत्वमित्यर्थः । निर्णयतो निश्चयज्ञानतः, ससंभाः सदम्भाः एकपटाः [सकपटा] प्रमाणं तादृशि तथाविधे धर्मः साधारणः, तदाश्रये न्यूनाधिकत्वे धर्मस्य न्यूनत्वे चेत्यर्थः न व्यभिचरतः । नातिवर्तेते ।

### आदर्शः

उपमायामिति। उपमेयजात्यपेक्षया उपमानजातेर्न्यूनत्वमधिकत्वं वेत्यर्थः। एवमुपमेयप्रमाणपेक्षया उपमानप्रमाणस्य न्यूनत्वमभ्यधिकत्वं वेत्यर्थः। तादृशीति, तादृशकाव्य इत्यर्थः। धर्माश्रये त्विति, उपमेये निर्दिष्टो यो धर्म उपमानस्य तदाश्रितं न्यूनत्वमधिकत्वं वेत्यर्थः।

### सुधासागरः

उपमायामित्यादि। उपमायान्तु यौ न्यूनाधिकोपमानत्वे दोषौ, तत्रोपमाने उपमेयापेक्षया जातिगतं प्रमाण-गतं वा यन्न्यूनत्वमधिकत्वं वा तदनुचितार्थत्वम्। धर्मतो न्यूनाधिकत्वे यथाक्रम न्यूनपदत्वाधिकपदत्वे। तत्र जातिगते न्यूनत्वे यथा चण्डालैरिवेति।

# वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥ ५८५ ॥

### बालचित्तानुरञ्जनी

परिमाणन्यूनत्वमुदाहरति वह्नीति । भगवतः सहस्रधाम्नो ज्वलनस्फुलिङ्गलक्षणमुपमानं परिमाणन्यूनम् ।

### काव्यादर्शः

उपमेयस्य प्रमाणगतन्यूनत्वे, यथा—'वह्नी'ति ।

### विवेकः

तत्रैवोपमानस्य जातिगतन्यूनत्वे यत् चण्डालैरित्यादि प्रमाणगतं, वह्निस्फुलिङ्ग इवेत्यादि [च] ।

### साहित्यचूडामणिः

वह्नीति । भगवतः सहस्राधाम्नो ज्वलनस्फुलिङ्गलक्षणमुपमानं प्रमाणन्यूनम् ।

### सम्प्रदायप्रकाशिनी

वह्निस्फुलिङ्ग इति । अत्र प्रमाणगतं न्यूनत्वम् ।

### सारबोधिनी

वह्नीति । परिमाणे न्यूनोदाहरणम् ।

### काव्यप्रदीपः

प्रमाणगतं यथा—'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति' इति ।

### काव्यप्रकाशखण्डनम्

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥

### आदर्शः

प्रमाणगतं न्यूनत्वमाह—वह्नीति । अत्र स्फुलिङ्गपरिमाणं न्यूनम् ।

### सुधासागरः

अत्र चाण्डालत्वजातेर्न्यूनतया दुष्कर्मकारित्वव्यक्तेरनुचितार्थत्वम् । इदमवधेयम्—यदा साहसिकमात्रोपमानविवक्षया चाण्डालादिपदमुपादीयते, तदैवेदमुदाहरणं न तु दुष्कर्मकारित्वविवक्षायामपि । प्रमाणगतं यथा—वह्नीति ।

उपमायाम् उपमानस्य जातिप्रमाणगतन्यूनत्वम् अधिकता वा तादृशी, अनुचितार्थत्वं दोषः, धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः ॥ क्रमेणोदाहरणम्—

**चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥ ५८४ ॥**

---

### सङ्केतः

तादृशी जातिप्रमाणगता ।

चण्डालैरिति । अत्र जातिः न्यूना ।

### बालचित्तानुरञ्जनी

• पादत्रयगतत्वमप्रयुक्तान्नान्यद्दूषणामित्यर्थः । लिङ्गवचनभेदलक्षणाद्युपमादोषा अप्यत्र संभवन्तीति मत्वाऽर्थालङ्कारेषु भद्दवामनाद्युदाहृतानुपमादोषानत्र सङ्क्रामयति उपमायामिति । जातिः ब्राह्मणत्वम् । प्रमाणं वैशिष्ट्यम् । तद्वतिन्यूनत्वमधिकता । तादृशी अनुचितार्थान्निष्टदोषादित्यर्थः । उपमानस्य धर्मः साधारणः । तद्गतन्यूनत्वमाधिक्यं पृथग्दोषतयाऽन्यैरभिमन्यमानं क्रमेण न्यूनपदत्वमधिकपदत्वं च न व्यभिचरतः । किन्तु तददन्तः तु प्रविशत इत्याह धर्माश्रये त्विति । जातिन्यूनत्वमुदाहरति चण्डालैरिति । युष्मद्वृत्ति सन्तापानि [?] पुरुषान् प्रति चण्डालानामुपमानीकरणे जातिन्यूनत्वम् ।

### काव्यादर्शः

तादृशीति जातिप्रमाणगता । 'चण्डालैः' इति । अत्र वाच्यं साहसकारित्वमिव अस्पृश्यत्वाद्यपि व्यङ्ग्यमिति जातिगतं न्यूनत्वम् ।

### विवेकः

अथोपमायां हीनत्वाधिकत्वादयो ये दोषा अन्यैरुक्तास्तेषामुक्तेष्वेवान्तर्भावं दर्शयति—उपमायामिति ।

### दीपिका

प्रमाणं परिमाणम् । तादृशी जात्या प्रमाणे वा कृता शुभाश्रय उत्कृष्टे उपमानधर्माश्रयणीये अनुचितार्थत्वमिति पदं न्यूनाधिकत्वमित्यनेनैव गतार्थमित्यर्थः ।

### दर्पणः

अयमित्यादौ ब्रह्मणः प्रतिसङ्ग ब्रह्मणे भेदविधक्षया [विवक्षया] जातिशब्दत्वम् । यातः [यतः] प्रचार उपमेयस्य दृष्टस्य [?] ग्रहणं शब्देनोपादानं प्रतीयमानेनोपात्तादन्येन ।

## साहित्यचूडामणिः

अर्थालङ्कारेषु भट्टवामनाद्युदाहृतानुपमादोषानन्यत्र सङ्क्रामयति—उपमायामिति । जातिर्ब्राह्मणत्वादिः, प्रमाणं परिणाहादिपरिमाणवैशिष्ट्यं, तद्वर्ति न्यूनत्वम् अधिकता वा । तादृशीति । जातिप्रमाणगतान्यूनाधिक्यात् । पृथक् तौ दोषतयोरीकृतौ । यद् वामनः—"न्यूनाधिकत्वलिङ्गवचनभेदासादृश्यासम्भवास्तु तद्दोषाः, जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम्, तेनाधिकत्वं व्याख्यातम्" (अधि० ४ अध्या० २ सू० ८, ९, ११) जातिप्रमाणधर्माधिक्यमधिकत्वमिति । तयोरनुचितार्थत्वान्तःपात इत्याह—अनुचितार्थत्वं दोष इति । धर्माश्रये इति । उपमानस्य धर्मः साधारणः तद्गतं न्यूनत्वमाधिक्यं च पृथग्दोषतयान्यैराभिमन्यमानं क्रमेण न्यूनपदत्वमधिकपदतां च न व्यभिचरतः, किन्तु तदन्तरनुप्रविशतः । प्रत्येकजातिप्रमाणयुक्ते हीनाधिकत्वे अनुचितार्थान्तः पातिनी, धर्माश्रये तु ते न्यूनाधिकपदत्वपर्यवसायिनी इति तात्पर्यम् ।

## सम्प्रदायप्रकाशिनी

उपमायां विचारयति—उपमायामित्यादि । तादृशि अन्यूनानधिकजातिप्रमाणक उपमेये । धर्माश्रयतायां तु न्यूनाधिकपदत्वमेव ।

चण्डालैरिति । अत्रोपमानस्य जातिगतं न्यूनत्वमुपमेयं कदर्थयति ।

## विस्तारिका

उपमायामिति । न्यूनत्वमधिकत्वं चेत्यर्थः । यत्रेति शेषः । धर्माश्रये त्विति । तुः समुच्चयार्थः । धर्मः साधारणो धर्मः, आश्रयोः ययोः । तथा च साधारणधर्माश्रितत्वेन न्यूनत्वाधिकत्वे इत्यर्थः । उपमानस्य न्यूनधर्मत्वमधिकधर्मत्वं चेति फलितोऽर्थः ।

## सारबोधिनी

धर्माश्रये त्विति । तुः समुच्चयार्थः । धर्मः साधारणो धर्मः आश्रयो ययोस्तथा । साधारणधर्माश्रिते न्यूनाधिके इत्यर्थः । उपमानस्य न्यूनधर्मत्वमधिकधर्मत्वं चेति फलितार्थः । चण्डालैरिति जातिन्यूनोदाहरणम् ।

## काव्यप्रदीपः

उपमायां तु यौ न्यूनाधिकोपमनत्वे दोषौ तत्रोपमाने उपमेयापेक्षया जातिगतं प्रमाणगतं वा यन्यूनत्वमधिकता वा तदनुचितार्थम् । धर्मगते न्यूनत्वाधिकत्वे यथाक्रमं न्यूनपदत्वाधिकपदत्वे । तत्र जातिगतं न्यूनत्वं यथा—'चण्डालैरिव युष्माभिः साहसं परमं कृतम्' । अत्र चण्डालत्वजातेर्न्यूनतया दुष्कर्मकारित्वव्यक्तेरनुचितार्थत्वम् ।

## काव्यप्रकाशखण्डनम्

चण्डालैरिव युष्माभिः साहसं परम कृतम् ।

### साहित्यचूडामणिः

अथ यमकविषयमवद्यमप्रयुक्तेऽन्तर्भावयति—यमकस्येति । पादद्वये पादचतुष्टये क्वचिदेकत्र वा पादे यमकस्य प्रयोगः, न कदाचित् पादत्रये तद्‌गतत्वेन यम्यमानत्वमप्रयुक्तान्नान्यत् ।

भुजङ्गमस्येति । सदमित्यव्ययं सदेत्यर्थे वर्तते । सदं सर्वदा भाः कान्तिर्यस्य । सत् स्वच्छत्वादिगुणवद् अम्भो यस्याः । दम्भेन सह वर्तमानाः सदम्भाः पुरुषाः । लिङ्गवचनभेदलक्षण उपमादोषोऽप्यत्रान्तः पतति ।

### सम्प्रदायप्रकाशिनी

यमके पादत्रयगतत्वेन यमनप्रयुक्तम् ।

भुजङ्गमस्येवेति । सदेत्यर्थे सदमिति निपातः । सदंभाः सततप्रभः । सदम्भाः साधुजला । दुरन्ततां फलकाले दुष्टताम् । निर्णयतः निर्जानतोऽपि । प्रमुखे प्रारम्भे । सदम्भाः दम्भसहिताः ।

### मधुमती

भुजङ्गमस्येवेति । अम्भः तेजः, मणिपक्षे । यथा—'धाराजलैः' इत्यादौ ।

### विस्तारिका

भुजङ्गमस्येति । दम्भयुक्ताः खलाः स्वीयां दुरन्ततां निश्चिन्वन्तोऽपि जन्तोश्चेतः प्रमुखे आपाततः कर्षन्तीत्यन्वयः । सदम्भा इति । सदमिति । सदेत्यर्थेऽव्ययम् । तथा च सदाद्युतिरित्यर्थः । यदा वा अम्भस्तेजः, अत एव शस्त्रस्फटिकमौक्तिकादौ सपानीयमिदमिति व्यवहारः परीक्षकाणाम् । तथा च विद्यमानतेजा इत्यर्थः । नदीति । सम्यक् समीचीनम् अम्भो जलं यस्या इत्यर्थः ।

### सारबोधिनी

भुजङ्गमस्येति । सदम्भाः दम्भयुक्ताः खलाः, स्वीयां दुरन्ततां तां निश्चितन्वतोऽपि जन्तोः चेतः प्रमुखे आपाततः कर्षन्तीत्यन्वयः । सदम्भा इति । सदम्भमिति सदेत्यर्थेऽव्ययम् सदा द्युतिरित्यर्थः । यदा अम्भस्तेजः । अत एव शस्त्रस्फटिकादौ सपानीयमिति व्यवहारः परीक्षकाणाम् । तथा च विद्यमानतेजा इत्यर्थः । सत् अम्भो यस्याः सा सदम्भा इति नदीविशेषणम् । उपमायामिति । न्यूनत्वमधिकत्वं वा यत्रेति शेषः ।

### काव्यप्रदीपः

यमकस्य तु पादत्रयगतत्वेन यमनमप्रयुक्तत्वमेव । कविभिस्तथाप्रयोगात् । यथा—

**'भुजंगमस्येव मणिः सदम्भा ग्राहावकीर्णेव नदी सदम्भाः ।**
**दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रमुखे सदम्भाः ॥'**

## आदर्शः

भुजङ्गमस्येवेति। सदम्भा दाम्भिका जनास्तदीयां दुरन्ततां निर्णयतोऽपि जन्तोर्जनस्य चेतः प्रमुखे आपाततः कर्षन्ति। सदम्भाः सज्जलां भुजङ्गमस्य मणिरिव।

जलमत्र स्वच्छताहेतुरन्तर्गतं पानीयम्। भुजङ्गमसम्बन्धात्तस्य दुरन्तता, ग्राहावकीर्णनद्याश्च ग्राहसम्बन्धादेव दुरन्तता। सज्जलत्वेनाऽऽपाततश्चेतः कर्षणम्। अत्र चरणत्रयेऽन्त्यमकं कविभिरप्रयुक्तम्।

## सुधासागरः

यमकस्येत्यादि। यमकस्य यु पादत्रयगतत्वेन यमनमप्रयुक्तमेव, कविभिस्तथाप्रयोगात्।

अम्भस्तेजः। अत एव शस्त्रस्फटिकमौक्तिकादौ सम्पादनीयमिदमिति व्यवहारः परीक्षकाणाम्। तथा च भुजङ्गमस्य सर्षत्य सदम्भाः उत्कृष्टकान्तिः मणिरिव। तथा ग्राहावकीर्णा नक्रैर्व्याप्ता सदम्भाः स्वच्छतरजला नदीव सदम्भा दम्भयुक्ताः दुरन्ततां निर्णयतोऽपि अर्थात्तादृशमणि तादृशनदीतादृशपुरुषनिष्ठामनधिगम्यतां निश्चिन्वतोऽपि जन्तोः प्राणिनश्चेतश्चित्तं प्रसभं बलात्कारेण कर्षन्तीत्यर्थः।

**अयं पद्मासनासीनश्चक्रवाको विराजते।**
**युगादौ भगवान् वेधा विनिर्मित्सुरिव प्रजाः ॥ ५८६ ॥**

---

### बालचित्तानुरञ्जनी

जात्यधिकमुदाहरति वह्नीति। भगवतः सहस्रधाम्नो ज्वलनस्फुलिङ्गलक्षणमुपमानम्।

### विवेकः

एवमुपमानस्य जात्याधिक्यं यथा—अयमित्यादि।

### साहित्यचूडामणिः

अयमिति। चक्रवाकस्य भगवान् पितामहो जात्यधिकमुपमानम्। एवं

**बर्हमण्डलमुल्लास्य शिखण्डी ताण्डवे बभौ।**
**आकृष्टधन्वा भगवानाखण्डल इवाहवे ॥**

इत्यत्राप्यूह्यम्।

### सम्प्रदायप्रकाशिनी

अयं पद्मेति। युगादाविति प्रभावोक्तिः। अत्र जातिगतं युगादौ प्रजाविनिर्मित्सुत्वरूपमाधिक्यम्।

### विस्तारिका

अयं पद्मासेनेति। जात्यधिकत्वे तूदाहरणत्वम्। कल्पभेदेन ब्रह्मभेदात्। ब्रह्मत्वस्य जातित्वात्।

### सारबोधिनी

अयमिति जात्यधिकोदाहरणम्। कल्पभेदेन ब्रह्मभेदात् ब्रह्मत्वस्य जातित्वात्।

### काव्यप्रदीपः

धिकत्वं यथा—

**'अयं पद्मासनासीनश्चक्रवाको विराजते।**
**युगादौ भगवान्स्रष्टा विनिर्मित्सुरिव प्रजाः ॥'**

ब्रह्मणः कल्पभेदेन भेदाद्ब्रह्मत्वं जातिः।

## काव्यप्रकाशखण्डनम्

तथा—

**अयं पद्मासनासीनश्चक्रवाको विराजते।**
**युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥**

अत्यन्तोत्कृष्टस्योपमानत्वं अपकृष्टस्य उपमेयस्य उपहास एव पर्यवस्यति । दोषानभिधानमधिकत्वस्येति भावनीयम् ।

## आदर्शः

उपमानस्य जातिगतमभ्यधिकत्वमाह—अयमिति । अत्र ब्रह्मत्वजातिरभ्यधिका । ब्रह्मणामप्यनेकत्वात् सृष्टिजनकतावच्छेदकं ब्रह्मत्वं जातिः ।

## सुधासागरः

जातिगतमधिकत्वं यथा—अयमिति स्पष्टम् । ब्रह्मणः कल्पभेदेन भेदात् ब्रह्मत्वं जातिः ।

**पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ ।**

**वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥ ५८७ ॥**

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता ॥

---

### सङ्केतः

पातालमिति । पातः प्रवाहः । अत्र प्रमाणस्य आधिक्यम् । अयं पद्मेत्यत्र तु जातेः ।

### बालचित्तानुरञ्जनी

परिमाणाधिकमुदाहरति पातालमिति । अत्र नायिकायाः नाभिस्तनबेणीदण्डानां पातालक्षितिधरकालिन्दीप्रवाहाः परिमाणाधिकाः ।

### काव्यादर्शः

प्रमाणाधिक्यं, यथा—'पातालम्' इति । 'पातः प्रवाहः' ।

### विवेकः

प्रमाणेन यथा पातालमिवेत्यादि । कालिन्दीपातः यमुनाप्रवाहः । एषामनूचितार्थत्वं दर्शयति अत्रेत्यादि ।

### दीपिका

अयमित्यादौ वेधसो जातिशब्दत्वं प्रतिसर्गं ब्रह्मणो भेदात् पातः प्रवाहः । पात्रेणेत्यपि पाठे स एवार्थः, पात्रशब्दस्य जलाशयार्थत्वात् ।

### साहित्यचूडामणिः

पातालमिति । नायिकानाभिस्तनवेणीदण्डानाम् उपमानानि पातालक्षितिधरकालिन्दीपात्राणि क्रमेण प्रमाणाधिकानि ।

अत्र तेषामनुचितार्थत्वं व्याचष्टे—चण्डलादिभिरिति प्रस्तुत इति । साधर्म्येण चमत्काराय विवक्षितोऽर्थः । कदर्थितः प्रतिपत्तिपरिक्षेपणेन खलीकृतः । अत्यर्थमेवेति । यथा "यत्रोद्वेगो न धीमतामि" ति न्यायान्न स्वीकर्तुमौचित्यं "तथा विरसीकृतः ।

रूपकाद्यन्यालङ्कारान्तरे तु नानौचित्यम् । यथा ममैव नाभिगह्वरावशेषः पातालगुहा, कुचकलशोपशल्यभूमिः कुलशैलकूटपट्टाः, रोमलताप्रतियातना यमुनापयः प्रवाह" इत्यादि ।

### सम्प्रदायप्रकाशिनी

पातालमिवेति । अत्र परिमाणगतम् ।

चतुर्ष्वनुचितार्थत्वं दर्शयति—अत्र चण्डालादिभिरित्यादि । प्रस्तुत उपमेयः अनौचित्योपगमाद् वैसादृश्यं नीतः ।

### मधुमती

पातालमिवेति । अत्र यथाक्रमं निम्नत्व-काठिन्य-श्यामत्वमात्रेण साम्यविवक्षायां नायं दोषः । किन्तु आद्यन्तयोः अप्रयुक्तत्वम् । मध्यस्यतु तु निर्दोषत्वमेव । प्रसङ्गस्तु परिणामनिबन्धसाम्यविवक्षया द्रष्टव्यः ।

### विस्तारिका

पातालमिवेति । परिमाणाधिक्योदाहरणम् । एतेनात्र यथाक्रमं निम्नत्वकाठिन्यश्यामत्वमात्रेणोपमाविवक्षायां नायं दोषः, अपि त्वाद्यं तयोरप्रयुक्तत्वम्, मध्यस्य तु निर्दोषत्वमिति ध्येयम् ।

अत्रेति । यद्यपि चण्डालादेर्न्यूनत्वेनोपमेयस्य कथनेन ब्रह्मादिभिरुपमानैर्न तथा भवितुमर्हति, तथाप्यत्यन्तोत्कृष्टस्योपमानकत्वमपकृष्टस्योपमेयस्यासत्यतापर्यवसायितापर्यवसायितयोपहासायैव पर्यवस्यतीति तथोक्तमिति भावः ।

### सारबोधिनी

पातालमिवेति परिमाणाधिक्योदाहरणम् । अत्रेति । यद्यपि चण्डालादेन्यूनत्वेनोपमेयस्य कदर्थनेऽपि ब्रह्मादिभिरुपमानैर्न तथा भवितुमर्हति तथाप्यत्यन्तोत्कृष्टस्योपमानीकरणमपकृष्टस्योपमेयस्योपहास एव पर्यवस्यतीति तथोक्तमिति भावः ।

### काव्यप्रदीपः

**'पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।**
**वेणीदण्डः पुनरयं कालिन्दीपतिसंनिभिः ।।'**

एषु चण्डालादिभिरुपमानैरुपमेयभूता अर्था अत्यन्तमेव कदर्थिताः । निन्दोपहासप्रतीतेरित्युनुचितार्थता ।

### काव्यप्रकाशखण्डनम्

**पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।**
**वेणीदण्डः पुनरयं कालिन्दीपात्रसंनिभः ।।**

अत्र पातालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यन्तकदर्थितः इति कष्टत्वम् ।

## आदर्शः

परिमाणगतमभ्यधिकत्वमाह—पातालमिवेति। कालिन्दीपातः कालिन्दीप्रवाहः। अत्र पातालक्षितिधरकालिन्दीपातानां परिमाणस्यात्याधिक्यम्। यद्यपि प्रौढोक्तावधिकत्वं शोभत एव तथाऽप्यभ्यधिकत्वमनुचितमित्यभिप्रायः। 'अद्यापि स्तनशैलदुर्गविषमे' इत्यादौ तु रूपकमेव नोपमा। तत्राभेदस्यैवात्यधिकस्याप्याहार्यारोपोऽनुगुण एव। एवं नाभिह्लद इत्यादावपि बोध्यम्।

## सुधासागरः

प्रमाणगतमधिकत्वं यथा—पातालेति। स्पष्टम्।

एषु चण्डालादिभिरुपमानैरुपमेयभूता अर्था अत्यन्तमेव कदर्थिताः निन्दोपहासादिप्रतीतेरित्यनुचितार्थता। यद्यपि चण्डाले न्यूनत्वेनोपमेयस्य तिरस्कारेऽपि व्रह्मादिभिरुपमानैर्न तथा, तथाऽप्यत्कृष्टस्योपमानत्वमप्यपकृष्टस्योपमेयस्योपहासाय भवतीति बोध्यम्।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।

व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान्॥ ५८८॥

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षमो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम्॥

---

### बालचित्तानुरञ्जनी

धर्माश्रयन्यूनत्वमुदाहरति स इति। अत्र मौञ्जीलाञ्छितस्य कृष्णाजिनधारिणो मुनेः उपमेयस्य नीलजीमूत भागाश्लेषिणि सूर्ये उपमाने मौञ्जीसदृशविद्युतो नोक्तिरस्तीति धर्मन्यूनत्वमित्याहि अत्रेति।

### काव्यादर्शः

धर्मन्यूनत्वे, 'स मुनिः' इति।

### विवेकः

अत्र मौञ्जीप्रतिवस्तु तटिन्नास्त्युपमानमिति तटिद्रूपधर्मन्यूनत्वं, नवकृष्णाजिनपटमात्रस्यैवोपमेयत्वं युक्तं, मौञ्जथा, व्यर्थत्वप्रसङ्गात्। नवनीलजीमूतग्रहणेनैव तटित् प्रतिपाद्यते तत्र व्यभिचारात्। यत्र त्वव्यभिचारादेकधर्मनिर्देशादेवापरधर्मप्रतिपत्तिस्तत्र धर्मन्यूनता नास्त्येव। तदुक्तं वामनेन—धर्मयोरेकनिर्देशेऽन्यस्य संवित् साहचर्यादिती (का. अ. सू. वृ. ४/२/१०)।

### दीपिका

सम्भाव्यगुणवत्तया मौञ्जीस्थानीयो मौञ्जीप्रतिनिधिभूतः।उपमेयस्य कृष्णस्य शङ्खादेरेव।

### सम्प्रदायप्रकाशिनी

स मुनिरिति। अत्र धर्मविषये न्यूनपदत्वं, मौञ्ज्याः प्रतियोग्यनुपादानात्।

### विस्तारिका

न्यूनधर्मत्वमुदाहरति—स मुनिरिति।

### सारबोधिनी

न्यूनधर्मत्वमुदाहरति समुनिरिति।

### काव्यप्रदीपः

धर्मगतं न्यूनत्वं यथा—

'स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।
व्यराजन्नीलजीमूतभागश्लिष्ट इवांशुमान्॥'

अत्रोपमेयमौञ्जीस्थानीयस्तडिल्लक्षणो धर्मो न केनापि पदेन प्रतिपादितः। न चाक्षेपादिनापि स्पष्टं प्रतीयते। अविनाभावाद्यभावादिति न्यूनपदत्वमेवैतत्।

### काव्यप्रकाशखण्डनम्

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।
विरेजे नीलजीमूतभागाश्लिष्ट इवांशुमान्॥

स मुनिर्नारदो व्यराजत अशोभत। मौञ्ज्या लाञ्छितश्चिह्नितः कृष्णाजिनरूपं पटं वस्त्रं वहन् धारयन्। नीलवर्णस्य जीमूतस्य मेघस्य भागे एकदेशे श्लिष्टः संबद्धः अंशुमान् सूर्य इवेत्यर्थः। अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति न्यूनत्वम्।

### आदर्शः

धर्माश्रयं न्यूनत्वमुदाहरति—स मुनिरिति। स मुनिर्नारदः मौञ्ज्या मेखलाया लाञ्छितः कृष्णाजिनरूपं पटं वहंश्च व्यराजत्। नीलजीमूतस्य भागेनैकदेशेन श्लिष्टोऽशुमान् सूर्य इव। अत्र धर्मन्यूनत्वं दर्शयति—अत्रेति। तडिल्लक्षण इति। मौञ्ज्या अपि पिङ्गत्वात्। कृष्णाजिनस्थाने मेघैकदेश एवेति भावः।

### सुधासागरः

धर्मगतं न्यूनत्वं दर्शयति—स मुनीति। स्पष्टम्।

अत्रोपमेयमौञ्जीस्थानीयस्तडिल्लक्षणो धर्मो न केनापि पदेन प्रतिपादितः, न चाक्षेपादिनापि स्पष्टं प्रतीयते, अविनाभावाद्यभावादिति न्यूनपदत्वमैवेतत्।

**स पीतवासाः प्रगृहीतशाङ्‌र्गो: मनोज्ञभीमं वपुराप कृष्णः ।**

**शतह्लदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥ ५८९ ॥**

**अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमितिरिच्यते, इत्यधिकपदत्वम् ॥**

---

### बालचित्तानुरञ्जनी

धर्माश्रयाधिक्यमुदाहरति स पीतेति । पीतवाससः शाङ्‌र्गधरस्य चोपमेयीकरणे शतह्लदेन्द्रायुधत्वमत्र समुचिते न पुनः शशिनो ग्रहणं पाञ्चजन्यानिर्देशात् । अतो धर्माधिक्यमित्याह अत्रेति ।

### विवेकः

धर्माधिक्यं यथा स पीतेत्यादि—अत्र शशिनेवेत्याद्युपमा । तस्योपमानस्योपमेयो न निर्दिष्ट इत्युपमेयाभावाद्धर्माधिक्यम् ।

### दीपिका

शशिनो ग्रहणमिति । गृह्यते प्रतीयतेऽनेनेति ग्रहणं वाचकपदं शशिन इति शब्दपरं ग्रहणमुपादनम् ।

### साहित्यचूडामणिः

आधिक्यमुदाहरति—स इति । पीतवाससः शार्ङ्गधन्वनश्चोपमेयकरणे शतह्लदेन्द्रायुधवत्त्वमात्रमुपमानभूतमेवौचित्याय । यः पाञ्चजन्यानिर्देशेऽपि तत्प्रतिवस्तुन उपमानभागे शशिनः संसर्गनिर्देशः स धर्माधिक्यं प्रयोजयति, यदधिकपदत्वे निमज्जयति । अत्रापि भगवतः पाञ्चजन्याव्यभिचाराद् अनाधिक्यनिर्वाहः क्लेशमात्रम् ।

### सम्प्रदायप्रकाशिनी

स पीतेति । वाससः शतह्लदया साम्यान्मनोज्ञं शार्ङ्गस्येन्द्रायुधेन तु भीमम् । अत्रोपमेयतया पाञ्चजन्यस्यानुपादानाच्छशिनेति पदमधिकम् ।

### विस्तारिका

अधिकधर्मत्वमुदाहरति—स पीतवासा इति ।

यद्यप्युमानन्यूनाधिकधर्मत्ववदुपमेयाधिकधर्मत्वन्यूनधर्मत्वेऽप्युक्तोदाहरणयोः सम्भवत एव, तथाप्युदाहृतसमानजातीयतया वा नोदाहृते, तथैव बोध्ये इति ध्येयम् । अत एव 'धर्माश्रये तु न्यूनाधिकधर्मत्वे' इति प्रतिज्ञायामुपमानोपमेयनियमेनोक्तानुपमायामित्यादौ तूपमेयस्येति विशेष उक्त इति ।

### सारबोधिनी

स पीतवासा इति। अनयोः उपमानन्यूनाधिकधर्मत्वम् उपमेयाधिकन्यूनधर्मत्वेऽपि संभवत इति बोध्यम्।

### काव्यप्रदीपः

धर्मगतमधिकत्वं यथा—

**'सपीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः।**
**शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः॥'**

अत्रोपमेये शङ्खाद्यनिर्देशादुपमाने तत्तुल्यस्य शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वमेवैतत्।

### काव्यप्रकाशखण्डनम्

**स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः।**
**शतह्रदेन्द्रायुधवन्निशायां संसृज्यमानः शशिनेव मेघः॥**

स कृष्णः मनोज्ञं भीमं च वपुः शरीरमाप प्राप्त [प० ६०, १] वान्। पीतं वासो वस्त्रं यस्य सः। प्रगृहीतं शार्ङ्गं धनुर्येन सः। क इव ? शशिना चन्द्रेण संसृज्यमानः मेघ इव। कीदृशो मेघः ? शतह्रदा विद्युत् तदेव यदिन्द्रायुधं तद्वान् तद्युक्तः इत्यर्थः। अत्रोपमेयस्य शङ्खादेरनिर्देशात् शशिनो ग्रहणमतिरिच्यत इति। तथोपमानोपमेययोर्लिङ्ग-वचनभेदो दोषः। साधारणधर्मस्यैकमात्रागतत्वेन प्रतीतेः।

### आदर्शः

धर्मश्रयमाधिक्यं दर्शयति—स पीतेति। स कृष्णः मनोज्ञं भीमञ्च वपुराप। शार्ङ्गं विष्णोर्धनुः। वपुषः पीतवासस्त्वेन मनोज्ञत्वम्, शार्ङ्गग्रहणेन भीमत्वम्। शतह्रदा विद्युत्, इन्द्रायुधं शक्रधुनः, शशिना संसृज्यमानः संसर्ग प्राप्नुवन्। अत्र धर्माधिकत्वं दर्शयति—अत्रेति। शशिनो ग्रहणं निर्देशः। पीतवासः स्थाने शतह्रदा, शार्ङ्गधनुः स्थाने इन्द्रायुधम्, शङ्खानिर्देशात् शशिसंसर्गोऽतिरिच्यत इत्यर्थः।

### सुधासागरः

धर्मगतमधिकत्वं दर्शयति—स पीतेति।

अत्रोपमेयशङ्खाद्यनिर्देशादुपमाने तत्तुल्यस्य शशिनो ग्रहणमतिरिक्तमित्यधिकपदत्वमेवैतत्।

लिङ्गवचनभेदोऽपि, उपमानोपमेययोः साधारणं चेत् धर्ममन्यरूपं कुर्यात् तदा, एकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्मेम प्रतीयते, इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम्। यथा—

**चिन्तारत्नमिव च्युतोऽसि करतो धिङ्भन्दभाग्यस्य मे॥ ५९०॥**

**सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव॥ ५९१॥**

---

**सङ्केतः**

अन्यरूपमिति। उपमेयरूपं उपमानरूपं वा इत्यर्थः। तस्य धर्मिणः। प्रतीयमानेन। शब्दानुक्तेन उभयानुगमक्षमेण। शब्दोक्तसमानधर्मव्यतिरिक्तेन केनापीत्यर्थः। भग्नेति। उपमेयस्य विशेषणादिकं उपमाने चेत् न निर्व्यूढं, तदा प्रक्रमभङ्गः इति भावः।

चिन्तेति। अत्र च्युत्वादिको धर्मः उपमानोपमेययोः प्रत्येकं अन्यलिङ्गवचनः इति प्रक्रमभङ्गः। लिङ्गवचनविपरिणामेन यदि अपरस्यापि सम्बन्धः तदा, अभ्यास रूपवाक्यभेदे वाक्यद्वयी। तथा सति हि प्रकृतार्थप्रतीतिः व्यवधीयते। विपरिणामश्च साहित्ये न स्यात्।

**सङ्केतः (रुय्यकः)**

एकतरस्येति—यदि तु विपरिणमने लिंगवचसोऽपरस्याभिसम्बन्धस्तदाऽऽभ्यामलक्षणो वाक्यभेदः स्यात्। एवञ्चाव्यवधानेन प्रकृतार्थो न प्रतीयते।

**बालचित्तानुरञ्जनी**

इदानीं लिङ्गवचनभेदरचनादयो दोषाः क्रमभङ्गेऽन्तर्भवन्तीत्याह लिङ्गवचनेति। लिङ्गभेदेन वचनभेदेन वा अन्यरूपमित्यर्थः। सविशेषणस्यैवेति। वाक्ष्यमाणच्युतादिविशेषणकस्येत्यर्थः।

चिन्तेति अत्रोपमेये पुंसि च्युत इति उपमाने चिन्तारत्ने च्युतमिति। लिङ्गविकारेण स्निग्धस्य रक्तस्य वा कस्यचिदेव च्यवनलक्षणधर्मसमवायगते च्युतत्वरूपविशेषणशून्यस्योपमानत्वमुपमेयत्वं वा न घटत इति तस्य उभयशब्दत्वेन भाव्यम्। तद्वत् क्वचिदुच्यते, पुंसिचिन्तारत्ने तु केवलं प्रतीयत इति लिङ्गवैषम्यं यत् तत् क्रमभङ्गेऽन्तर्भवतीति भावः। तमुदाहरति सक्तव इति। अत्रोपमेयेषु सक्तुषु शुद्धा इति बहुवचनं उपमाने कुलवध्वां शुद्धेति एकवचनमिति वचनवैकृतेन सक्तूनां कुलवध्वाः कस्यचिदेव शुद्धिलक्षणधर्मसमन्वयावगाहः, शुद्धस्वरूपविशेषणशून्यस्योपमेयत्वमुपमानत्वं वा न घटत इति तस्योभयत्रान्वयेन भाव्यम्। तद्वत् क्वचिदुच्यते। सा कुलवध्वा तु प्रतीतिपरिस्खलनात् वचनभेदात् क्रमभङ्ग एवान्तर्भवतीति। भावः।

## काव्यादर्शः

अन्यरूपमिति। उपमानरूपमुपमेयरूपं वा। तस्येति धर्मिणः। प्रतीयमानेनापीति। शब्देन अनुपात्तेन उभयानुगमक्षमेण शब्दोपात्तच्युत्वादिधर्मव्यतिरिक्तेन केनचिदित्यर्थः। अनिर्वाहादिति। सविशेषणत्वं निर्विशेषणत्वं वा यद् उपमेये प्रक्रान्तम् उपमाने तस्य अनिर्वाहादित्यर्थः। 'चिन्तारत्नम्' इति। अत्र च्युतत्वमुपमानोपमेययोः साधारणो धर्मस्तस्यान्यरूपत्वं नपुंसकस्य, उपमेयविशेषणत्वे पुंस्त्वं, तत् उपमेयस्य साक्षाद्धर्मसमन्वयः, उपमानस्य तु प्रतीयमान इति शब्देन धर्मेण प्रक्रमे भग्नप्रक्रमत्वम्। यदि तु विपरिणामेन लिङ्गवचसोरपरस्यापि संबन्धस्तदा अभ्यासलक्षणो वाक्योभेदः स्यात्। द्वे वाक्ये स्यातामित्यर्थः। एवं च व्यवधानेन प्रकृतोऽर्थो न प्रतीयेत, विपरिणामश्च शास्त्रीयकाव्येषु न युक्तः।

## विवेकः

लिङ्गभेदवचनभेदयोर्भग्नप्रक्रमरूपतामाह लिङ्गेत्यादि। अन्यरूपमिति—उपमानोपमेययोरेकतरविशेषणत्वे न्यग्भावनां प्राप्तमित्यर्थः। तत्र लिङ्गभेदो यथा—चिन्तारत्नमिति। उपमेयः पुंलिङ्गः, च्यवनं सामान्यधर्मः, स चात्रोपमेयगतत्वेनोपात्तः। वाक्यार्थपर्यालोचनया तु लिङ्गवचनपरिमाणानामुपमानगतत्वेन प्रतीतावपि प्रतीतिस्खलनाद्भग्नप्रक्रमता। यत्तु पुंनपुंसकयोर्लिङ्गभेदमिच्छन्ति तत् प्रायिकं, तथा च 'इष्टं' पुंनपुंसकयोः प्रायेणे' ति। (का. अ. सू. वृ. ४/२/१३) लिङ्गभेदानुमतौ 'प्रायो' ग्रहणं वामनः कृतवान्। मुखं चन्द्रमिव पश्यामीत्यादिवदिन्दुरिव मुखं भातीत्येवंप्रायं नेच्छन्त्येव। वचनभेदो यथा—सक्तव इति। शुद्धत्वं सामान्यधर्मः।

## दीपिका

साधारणमुपभयप्रत्याशया निबद्धम्। अन्यरूपमेकरूपमसाधारणलिङ्गादियोगेन व्याहतसाधारण्यमित्यर्थः। प्रतीयमानेनोपात्तादन्येन। चिन्तारत्नमित्यादौत्रैलोक्यसारभूतत्वादिना धर्मेण गुणेन सक्तव इत्यादौ प्रतीयमानसाधर्म्यविरहः सूचितः। न चासौ सार्वत्रिकः। यत्राप्यस्ति, तत्रापि न दोषनिरसनक्षम इति प्रत्ययात् प्रक्रान्तस्येति। उपमानोपमेययोरेकस्य हि यादृशः सविशेषणो निर्विशेषणो वा क्रमः, सोऽपरस्यापि निर्वाह्य एवेति दण्डी। स्वरूपतो नोपपद्यते तथाऽवस्थितमेवोपमायोग्यं भवति। न तत्रैतद् दूषणावतारः। यथोक्तम्—**"न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा"** इत्यादि दण्डी। कृतार्थानुगमस्वभावत्वात् उभयसम्बन्धयोग्यस्वभावात्।

## दर्पणः

चिन्तारत्नमिवेत्यादौ त्रैलोक्यसारभूतत्वादिना क्वचित् संभविनेत्यर्थः। नानात्वेऽपि भिन्नरूपत्वे अस्य सामान्याभिधायिपदस्य अधमगमक्षस्वभावत्वात् [?]

## साहित्यचूडामणिः

अथोपमाया लिङ्गवचनभेदस्वभावो दोषः प्रक्रमभङ्गमध्यास्ते इत्याह—लिङ्गेति। साधारणं चेद्धर्ममन्यथाकुर्यादिति। अन्यथाकरणे तस्य न दोषः यथा प्रतीतिस्थगनादौ वक्ष्यते। अन्यथाकरणं यत् तदनौचित्योपारोहक्रमाह—तदिति। एकतरस्यैव, पुंसादेः षण्डादेर्वा एकस्यानेकस्य वा विवक्षितधर्मसमन्वयावगतेः, न

सामस्त्यादुभयोरपि। तस्य उपमानोपमेयाभिमतस्य। सविशेषणस्य, तस्मिन् निर्विशेषणस्यान्यथा साधर्म्यादप्रतीतेः।

चिन्तेति। अत्रोपमेये पुंसि च्युत इति, उपमाने तु चिन्तारत्ने च्युतमिति लिङ्गविकारेण पुंसश्चिन्तारत्नस्य वा कस्यचिदेव च्यवनलक्षणधर्मसमन्वयावगतेः च्युतत्वरूपविशेषणशून्यत्वस्योपमानत्वमुपमेयत्वं वा न घटत इति तत्रोभयत्रान्वयेन भाव्यम्। तच्च क्वचिदुच्यते पुंसि, चिन्तारत्ने तु केवलं प्रतीयत इति लिङ्गवचनवैषम्यं, यत् प्रक्रमभङ्गकक्ष्यामनुप्रविशति।

सक्तव इति। अत्रोपमेयेषु सक्तुषु शुद्धा इति, उपमाने कुलवध्वां शुद्धैति वचनवैकृतेन सक्तुना कुलवध्वा वा शुद्धिलक्षणेधर्मसमन्वावगतेः शुद्धत्वरूपविशेषणवन्ध्यस्योपमेयत्वमुपमानत्वं, वा न लभ्यत इति तस्योभयत्रान्वयेन भाव्यम्। तच्च क्वचिदुच्यते यथा सक्तुषु, कुलवध्वां तु प्रतीयत इति प्रतीतिपरिस्खलनं वचनदोषः यस्य प्रक्रमभङ्ग एव प्रतिष्ठा।

### सम्प्रदाप्रकाशिनी

लिङ्गवचनभेदात् साधारणधर्मवैरूप्ये प्रक्रमभङ्ग इत्याह—लिङ्गवचनेत्यादि। उपमानस्योपमेयस्य वा लिङ्गभेदो वचनभेदो वा साधारणधर्मं गुणक्रियात्मकं यद्यन्यरूपं कुर्यात् तदानयोरेकतरस्यैव लिङ्गवचनभेदयोगिनो भिन्नरूपतद्धर्मसमन्वयावगतेः प्रतीयमानेनापि धर्मेण यदुपमानत्वमुपमेयत्वं वा प्रतीयते तद् भिन्नरूपविशेषणसहितस्यैव न केवलस्येति स्फुटं प्रक्रान्तार्थानिर्वाहाद् भग्नप्रक्रमत्वम्।

### मधुमती

साधारणं रूपमिति। साधारणधर्मतया विवक्षितं इत्यर्थः। अन्यरूपं अन्यसाधारणम्। तदा एकतरस्यैवेति। असाधारणत्वादेव नोभयत्रान्वयोऽस्येति भावः। सविशेषणस्येति। तदसाधारणं रूपं यद्युपमान्वितं तदा विशिष्टस्यो पमानता, यद्युपमेयान्वितं तदा तादृशस्यैवोपमेयता इत्यर्थः। प्रतीयमानेनापीति। अपिशब्दात् शब्दोपस्थितेनेति समुच्चीयते। प्रक्रान्तार्थस्येति। विशिष्टस्य अविशिष्टस्य वा इत्यर्थः।

चिन्तारत्नमिवेति। अत्र च्युतोऽसि इति पुल्लिङ्गरूपासाधारणधर्मविशिष्टं उपमेयं प्रतीयते, न च तथाविधं उपमानं इति भग्नप्रक्रमत्वम्। सक्तवः इति। अत्र भक्षिताः इति बहुवचनरूपासाधारणधर्मवतः सक्तोः उपमानत्वं प्रतीयते एतच्च उपमेये वधूलक्षणे एकवचनावरुद्धे अनन्वितमिति भग्नप्रक्रमत्वम्।

### विस्तारिका

लिङ्गवचनभेदोऽपीति। साधारणत्वेन विवक्षितं चेद् धर्ममसाधारणरूपं कुर्यादित्यर्थः। एतेन यत्र चन्द्र इव मुखमाह्लादकम्' इत्यादावाह्लादकत्वस्य चन्द्रोऽतिप्रसिद्धत्वाद् मुखे च प्रत्यक्षादिसिद्धत्वाल्लिङ्गभेदेऽपि साधारणत्वेनैव प्रतिपत्तिः, तत्र न दूषणमिति सूचितमिति ध्येयम्। तदेकतरस्यैवेति। असाधारणत्वादेवोभयत्र नान्वय इत्यर्थः। सविशेषणेति। यदोपमानान्वित विशेषणम्, तदा विशिष्टस्योपमानता यदोपमेयान्वितम्, तदा विशिष्टस्योपमेयतेत्यर्थः।

ननूपात्तधर्मस्य विशेषनिष्ठत्वे साधारणधर्माभावात् कथमुपमानिर्वाह इत्यत आह—प्रतीयमानेनेति। शब्दोपस्थापितस्य विशेषनिष्ठत्वेऽपि प्रतीयमानेनैव साधारणधर्मेणोपमानिर्वाह इत्यर्थः। अपिशब्दाच्छब्दान्तरोपस्थापितस्यापि तेनेति समुच्चीयते। प्रक्रान्तस्येति। प्रस्तुतस्य विशिष्टस्याविशिष्टस्य वेत्यर्थः।

चिन्तारत्नमिति। अत्र च्युतत्वाख्यः साधारणो धर्मः पुंल्लिङ्गावरुद्धे उपमेयमात्रेऽन्वेति, न तु विरुद्धलिङ्गावरुद्धे उपमान इति विशिष्टा विशिष्टयोरुपमेयोपमानत्वप्रतीतेर्भग्नप्रक्रमत्वम्।

सक्तव इति। अत्र शुद्धत्वं साधारणो धर्मो बहुत्वावरुद्धेषु सक्तुषु उपमेयेष्वेवान्वेति। न तु विरुद्धसंख्यावरुद्धे वधूरूप उपमाने इति विशिष्टाविशिष्टयोरुपमानोपमानत्वाद् भग्नप्रक्रमत्वम्।

## सारबोधिनी

ननूपात्तधर्मस्य विशेषनिष्ठत्वे साधारणधर्माभावात् कथमुपमानिर्वाह इति, अत आह प्रतीयमानेनेति। शब्दोपस्थापितस्य विशेषनिष्ठत्वेऽपि प्रतीयमानेनैव साधारणधर्मोपमानिर्वाह इत्यर्थः। अपिशब्दात् शब्दान्तरोपस्थापितेनाऽपीति समुच्चीयते। चिन्तारत्नमिति। अत्र च्युतत्वाख्यः साधारणो धर्मः पुलिङ्गावरुद्धे उपमेयमात्रे अन्वेति न तु विरुद्धलिङ्गावरुद्धे उपमान इति। विशिष्टाविशिष्टयोरुपमेयोपमानत्वप्रतीतेर्भग्नप्रक्रमत्वम्। सक्तव इति। अत्र शुद्धत्वं साधारणो धर्मो बहुत्वावरुद्धेषु सक्तुषु उपमेयेष्वेवान्वेति, न तु विरुद्धसंख्यावरुद्धे वधूरूप उपमान इति विशिष्टाविशिष्टयोरुपमेयोपमानत्वात् भग्नप्रक्रमत्वम्।

## काव्यप्रदीपः

भिन्नलिङ्गत्वभिन्नवचनत्वे अप्युपमादोषौ नोक्तदोषातिरेकिणौ। तथा हि लिङ्गवचनयोर्भेदे यद्यप्युमानोपमेययोः साधारणधर्मवाचकं पदमन्यतरघटितलिङ्गं कुर्यात्, तदेकतरस्यैव तद्धर्मसमन्वयावगतेः कथमुपमानिर्वाहः। अथ प्रतीयमानं साधर्म्यमाश्रित्येयं स्यात्, तथाप्युपात्तधर्मविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा प्रतीयेत। न च तथा प्रस्तुतम्। अतः प्रक्रान्तस्याभावाद्भग्नप्रक्रमत्वमेव दोषः। यथा—'चिन्तारत्नमिव च्युतोऽसि करतो धिङ्चन्दभाग्यस्य मे।' अत्र च्युत इत्युपमेयमात्रेणान्वीयते। पुंलिङ्गत्वात्। वचनभेदे यथा—'सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव'। अत्र शुद्धा इत्युपमेयमात्रेणान्वीयते। लिङ्गभेदोऽत्र विद्यमानोऽप्यप्रधानम्। उपमानस्य बहुत्वे लिङ्गभेदेऽप्युभयान्वयसंभवात्।

## काव्यप्रकाशखण्डनम्

तथा—

**चिन्तारत्नमिव च्युतोऽसि करतो धिङ् मन्दभाग्यस्य मे।**

अत्र च्युत इत्युपमेयमात्रेणान्वीयते पुंल्लिङ्गत्वात्। यथा वा—

**सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव।**

अत्र शुद्धा इत्युपमेयमात्रेणान्वीयते। लिङ्गभेदो विद्यमानोऽत्राप्रधानम्। यत्र नानात्वेऽपि लिङ्गवचनयोः साधारणधर्मो नैकमात्रगामी भवति तत्र नायं दोषः।

**आदर्शः**

उपमानोपमेययोर्लिङ्गवचनभेदो बोद्धृणामुद्वेगाभावे सति न दोष इति, दण्डिना—

**न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा।**
**उपमादूषणायालं यत्रोद्वेगो न धीमताम्॥ (काव्यादर्शे २/५१)**

इत्यनेनोक्तम्। तत्रोद्वेगकारणसत्त्वे दोष इति लभ्यते। अत उद्वेगकारणं दर्शयन् लिङ्गवचनभेदस्य तत्सत्त्वे दोषत्वं भग्नप्रक्रमान्तर्गतमित्याह—लिङ्गेति। अन्यरूपमिति। विभिन्नलिङ्गवचनयोरुपमानोपमेययोः समन्वये तत्तल्लिङ्गवचनवशादन्यरूपमित्यर्थः। कुर्यादित्यत्र लिङ्गवचनभेदः कर्त्ता। उद्वेगश्चैतादृशस्थल एवेति बोध्यम्। तत्रोद्वेगहेतुत्वबीजं दर्शयति—तदेकतरस्यैवेति। यदेकतरसमानलिङ्गवचनः साधारणधर्मस्तदेकतरस्यैवेत्यर्थः। तथा च तद्धर्मस्यैकत्रान्वयान्न तस्य साधारणधर्मत्वम्, ततस्तद्विशेषणविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा प्रतीयमानेन व्यङ्ग्येन धर्मान्तरेण प्रतीयत इत्यर्थः। प्रक्रान्तस्येति। निर्दिष्टधर्मेणैवोपमायाः प्रक्रान्तत्वात्। तथा हि लिङ्गवचनभेदे साधारणधर्मस्तावदुपमेयोपमानयोरेकतरस्य समलिङ्गवचनतयैव निर्दिष्टो भवति, अतः स लिङ्गवचनभेदो यदि साधारणधर्ममन्यरूपकतरस्यैवान्वययोग्यं कुर्यात्तदा स धर्मो यदन्वययोग्यस्तत्रैव तद्धर्मान्वयावगमा तद्धर्मविशिष्टस्यैव उपमेयत्वमुपमानत्वं वा प्रतीयमानेन व्यङ्ग्येन धर्मान्तरेणैव प्रतीयत इत्यत उपक्रान्तेन धर्मेण उपमारूपस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमत्वमित्यर्थः।

तत्र लिङ्गभेदे उदाहरति—चिन्तारत्नमिवेति। अत्र च्युतिधर्मेणोपक्रान्ता उपमा न निर्वहति, च्युतेति स्त्रीलिङ्गनिर्दिष्टस्य उपमेयायां नायिकायामेवान्वयात्, अतः च्युतेति साधारणधर्मस्य रत्नान्वये च्युतमित्यन्यरूपता। अत उपादेयत्वेन व्यङ्ग्यनैव धर्मान्तरेणेयमुपमा भग्नप्रक्रमा। "वचनन्तु समानम्।

वचनभेदे उदाहरति—सक्तव इति। अत्र शुद्धा इति बहुवचनान्तस्य साधारणधर्मस्य कुलवध्वामन्वये शुद्धेत्यन्यरूपता। तथा च तत्राऽप्युपादेयत्वेन व्यङ्ग्यनैव धर्मेणोपमेति प्रक्रमभङ्गः। लिङ्गन्तु समानम्।

**सुधासागरः**

लिङ्गवचनभेदोऽपीत्यादि। अन्यरूपमित्यसाधारणरूपम्। तदैकतरस्यैवेति। असाधारणत्वादेवोभयत्र नान्वय इति भावः। सविशेषणेति। यदोपमानान्वितं विशेषणं तदा विशिष्टस्योपमानता। यदोपमेयान्वितं विशेषणं तदा विशिष्टस्योपमेयतेत्यर्थः। ननूपात्तधर्मस्य विशेष्यनिष्ठत्वे साधारणधर्माभावात्कथमुपमानिर्वाह इत्यत आह—प्रतीयमानेनानापीति। शब्दार्थोपस्थापितस्य विशेष्यनिष्ठत्वेऽपि प्रतीयमानेनैव साधारणधर्मेणोपमानिर्वाह इत्यर्थः। अपिशब्दाच्छद्वान्तरोपस्थापितेनापीति समुच्चीयते। व्याख्यातं च प्रदीपकारैः-भिन्नलिङ्गत्वभिन्नवचनत्वे अप्युपमादोषौ नोक्तदोषातिरेकिणौ। तथाहि—लिङ्गवचनयोः भेदे यद्युपमानोपमेययोः साधारणधर्मवाचकपदमन्यतरोचितलिङ्गं कुर्यात्तदैकतरस्यैव तद्धर्मसमन्वयावगतेः कथमुपमानिर्वाहः। अथ प्रतीयमानसाधर्म्यमाश्रित्येयं स्यात्, तथाऽप्युपात्तधर्मविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा प्रतीयेत। न च तथा प्रस्तुतमतः प्रक्रान्तस्याभावाद्भग्नप्रक्रमत्वमेव दोष इति। यथेति लिङ्गभेदं दर्शयति-चिन्तेति। अत्र च्युत इत्युपमेयमात्रेणान्वीयते पुंल्लिङ्गत्वात्। वचनभेदे यथा-सक्तव इति।

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नापद्यते न तत्रैतद्दूषणावतारः, उभयथापि, अस्य, अनुगमक्षमस्वभावत्वात्। यथा

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ॥ ५९२ ॥

---

### सङ्केतः

अनर्घैरिति। गुण-रत्नानां पुंक्लीबानां विशेषणत्वेऽपि न स्वरूप भेदः।

### बालचित्तानुरञ्जनी

असाधारणभेदस्यान्यथाकरणे निर्दोषत्वमाह यत्र त्विति। उपमानोपमेययोरवैषम्यप्रतीत्या प्रवर्तमानत्वादिति हेतुमाह उभयथेति। उदाहरति यथेति। अत्र गुणानां रत्नानां च तत्त्वतो लिङ्गभेदेऽपि तृतीयान्ततया तिरोधानात् लिङ्गभिदरूपः प्रक्रमभङ्गेऽन्तर्भवतीति भावः।

### काव्यादर्शः

यत्र सामान्याभिधायिशब्दभेदस्तत्रैव लिङ्गवचनभेदौ दुष्टावित्याह—यत्र त्विति।

### विवेकः

क्वचित्त्वयं दोषत्वेनावतरतीत्याह—यत्र त्विति—स्वरूपभेदभिन्नवचनयोरुपमानोपमेययोरेकतरनिष्ठत्वेन परित्यक्तसाधारणरूपत्वमित्यर्थः। गुणैरिति—अनर्घ्यत्वं सामान्यधर्मः, स च गुणानां पुंलिङ्गानां विशेषणत्वे तुल्यरूप इति नास्ति प्रतीतिखेदः। एवं 'स्त्रीव गच्छति षण्ढोऽयं वक्त्येषा स्त्री पुमानिवे'त्यादावपि (का. आ. २/५२) प्रतीतिखेदाभावाददुष्टत्वं द्रष्यव्यम्। अत्र हि गमनमान्द्यवचनप्रागल्भ्यादयः सामान्यधर्माः सन्तो लौकिकव्यवहारप्रसिद्धत्वात् झगित्येव प्रतीतिपथमवतरन्ति। तथा च 'लिङ्गभेदः प्रायेणे'त्यस्यान्तरं 'लौकिकयामुपमायां समासाभिहितायामुपमाप्रपञ्चे चे' ति (का. अ. सू. वृ. ४/२/१३-१४) वामनः।

### दीपिका

गुणैरित्यादि। अनर्घ्यैरिति गुणैरित्यादिपदद्वन्द्वेन प्रसक्तेरभिन्न रूपमिति नोभयानुगतिव्याहतिः।

### दर्पणः

उभयसंबन्धयोग्यस्वभावा परिसुरशालः [?] गुणैरित्यादौ गुणरत्नयोभिन्निलिङ्गत्वेऽनर्घ्यैरिति तद्विशेषणं नान्यथाभावमापन्नम्।

### साहित्यचूडामणिः

अथ साधारणधर्मस्यान्यथाकरणे निर्दोषत्वमाह—यत्र त्विति। स्वरूपभेदमिति। तत्त्वप्रतीत्या भेदेऽपि प्रतीतिवेलायां स्वरूपनानात्वापत्तौ लिङ्गवचनभेदस्य स्फुटप्रतीत्यनुदयात्। उभयथेति। उपमानोपमेयोरवैषम्यप्रतीत्या वर्तमानत्वात्।

गुणैरिति। अत्र गुणानां रत्नानां च तत्त्वतो लिङ्गभेदेऽपि तृतीयान्ततया तिरोधानात् प्रतीतिस्थगनमुखेन न लिङ्गभेदरूपः प्रक्रमभङ्गः। यथाहुः—

**"मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः।**
**मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति॥" (प्र० वा० २५७)**

### सम्प्रदायप्रकाशिनी

चिन्तारत्नमिति। अत्रोपमानस्य लिङ्गभेदात् च्युत इति क्रियात्मनो धर्मस्य च्युतमिति रूपभेदः। तथा भिन्नरूपच्युतत्वयोगो रत्नस्यैवावगम्यते। अतः प्रतीयमानेनापि धर्मेणोपमानत्वं प्रतीयते। तच्च च्युतमिति विशेषणसहितस्यैवेति च्युत इति प्रक्रान्तस्य स्फुटमनिर्वाहात् प्रक्रमभङ्गः।

सक्तव इति। अत्र वधूरूपस्योपमानस्य वचनभेदात् शुद्धा इति गुणात्मेति धर्मे शुद्धेति वचनभेदः। ततः पूर्ववत् प्रक्रमभङ्गः। एवमुपमानस्य प्रागुपादाने सत्युपमेयलिङ्गवचनभेदादावपि प्रक्रमभङ्गो ज्ञेयः।

धर्मस्य रूपभेदाभावे तु न दोष इत्याह—यत्र त्वित्यादि। सामान्याभिधायि साधर्म्याभिधायि। स्वरूपस्याश्लिष्टतया वा श्रुतस्य भेदं वैरूप्यम्। दोषानवतारे धर्मस्योभयानुगमक्षमस्वभावत्वं हेतुः।

गुणैरिति। अत्र रत्नानामुपमानानां लिङ्गभेदः प्रथित इति क्रियारूपस्य धर्मस्य न रूपभेदकृत्।

### मधुमती

यत्र त्विति। गुणैरिति। अत्र उपमेयोपमानवाचकयोः गुणरत्नयोः शब्दयोः लिङ्गभेदेऽपि अनर्घैः इत्यत्र तृतीयादौ द्वयोः तुल्यरूपत्वात् न दोषः।

### विस्तारिका

यत्र त्विति। यत्र लिङ्गवचनयोर्वा नानात्वेऽपि साधारणधर्माभिधायि पदं स्वरूपभेदमानुपूर्वी भेदं च नापद्यते, तत्र न दूषणमित्यर्थः।

उभयेति। समानानुपूर्वीदर्शनेन युगपदेन चोभयसंस्कारोद्बोधनादिति भावः।

गुणैरिति। अत्रोपमेयोपमानवाचकयोर्गुणरत्नशब्दयोर्लिङ्गभेदेऽप्यनर्घैरिति साधारणधर्माभिधायिपदस्य तृतीयाबहुवचनान्तरस्योभयलिङ्गेऽपि तुल्यरूपत्वान्न दोषः।

## सारबोधिनी

यत्रत्विति। यत्र लिङ्गयोर्वचनयोर्वा नानात्वेऽपि साधारणधर्माभिधायि पदं स्वरूपभेदमानुपूर्वीभेदं नापद्यते। तत्र नैतद्दूषणमित्यर्थः। समानानुपूर्वीदर्शनेन युगपदेवोपमेयोपमानोपस्थितेरिति भावः। गुणैरिति। अत्रोपमेयपमानवाचकयोर्गुणरत्नशब्दयोर्लिङ्गभेदेऽपि अनर्घ्यैरिति गुणरत्नसाधारणधर्माभिधायिपदस्य, तृतीयबहुचनान्तस्योभयलिङ्गे तुल्यरूपत्वान्न दोषः।

## काव्यप्रदीपः

यत्र तु लिङ्गवचनयोर्भेदेऽपि सामान्याभिधायिपदमुपात्तरूपभेदं नापद्यते किं तूपात्तेनैव रूपेणोभयत्रान्वेति तत्र दोषत्वमेव नास्ति। उभयत्राप्यस्यानुगमयोग्यस्वभावत्वात्। तत्र लिङ्गभेदे यथा—'गुणैरनर्घैः, प्रथितो रत्नैरिव महार्णवः'। अत्र लिङ्गभेदेऽपि विशेषणान्वयस्याविशेषाद्दोषत्वाभावः।

## काव्यप्रकाशखण्डनम्

**गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः।**

अत्र लिङ्गभेदेऽपि विशेषणान्वयस्याविशेषाद् दोषाभावः।

## आदर्शः

'इत्यमुद्वेगकारणं दर्शयित्वा ईदृशोद्वेगाभावे तु न दोष इत्याह—यत्र तु नानात्व इति। अत्र लिङ्गभेदे दर्शयति—गुणैरनर्घ्यैरिति। अत्र गुणरत्नयोरुपमेयोपमानयोः पुंनपुंसकलिङ्गपदार्थबोधकस्थानर्घ्यैरित्यस्य उभयत्रैरूपत्वाददोषता।

## सुधासागरः

अत्र शुद्धा इत्युपमेयमात्रेणान्वीयते। लिङ्गभेदोऽत्र विद्यमानोऽप्यप्रधानम्। उपमानस्य बहुत्वे लिङ्गभेदेप्युभयान्वयसम्भवात्।

यत्र तु लिङ्गवचनयोर्भेदेऽपि सामान्याभिधायि पदमुपात्तरूपभेदं नापद्यते। किन्तूपात्तेनैव रूपेणोभयत्रान्वेति, तत्र दोषत्वमेव नास्ति। उभयत्राप्यस्यानुगमग्यस्वभावत्वात्। तत्र लिङ्गभेदे यथा—गुणैरेति। अत्र लिङ्गभेदेऽपि विशेषणान्वयस्याविशेषाद्दोषत्वाभावः।

**तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।**

**दधते स्म परां शोभां तदीया विभ्रमा इव॥ ५९३॥**

---

### सङ्केतः

असदृश इति। टक् क्विबन्तत्वे स्यन्तं जसन्तं च। मधुरतया भृतः मधुरतां वा बिभ्रतीति मधुरताभृतः।

### बालचित्तानुरञ्जनी

वचनभेदस्यादोषत्वमुदाहरति तद्वेष इति। तस्याः वेषः आकारः असदृश इति कञ्प्रत्ययान्तमेकवचनम्, क्विप्प्रत्यान्तं बहुवचनं मधुरतरतया भृतः युक्त इत्येकवचनान्तं, मधुररतां बिभ्रतीति बहुवचन। दध धारण इत्यस्मात् एकवचनं दधत इति दधातेर्बहुवचनं बिभ्राणं वचनभेदेऽपि श्लेषबलात् प्रतीतिरस्थगितेति तद्भेदरूपो न प्रक्रमभङ्ग इति भावः।

### काव्यादर्शः

'असदृश' इति टगन्तत्वाद् एकवचनान्तं, क्विबन्तत्वाद् बहुवचनान्तं च। 'मधुरतया भृतो धृतः मधुरतां बिभ्रतीति च'। 'दधते' इति एकवचनबहुवचनाभ्याम्। अत्र लिङ्गवचनभेदेऽपि साधारणधर्माभिधायीनि पदानि न स्वरूपेण भिद्यन्त इति न भग्नप्रक्रमदोषः।

### विवेकः

वचनभेदे दुष्टत्वं यथा—तद्वेष इति। वेष उपमेयो विभ्रमा उपमानानि। एषाञ्च सदृशत्वादयः सामान्यधर्माः, तत्र कञन्तत्वादेकवचनान्तं क्विन्ताबहुवचनान्तञ्च। मधुरतयाभृतो धृतः, मधुरताञ्च बिभ्रति। दधत इति दध धारण इत्यस्य दधतोश्च यथाक्रममात्मनेपदैकवचनबहुवचनयोरपि।

### दीपिका

अन्याभिः स्त्रीभिः सदृशोऽन्यासु स्त्रीषु सम्भवन्तः। अत्र दधत इति मधुरताभृत इति च भेदेऽप्युभयगामिवचनभेदात्। दोषोदाहृतिस्तु वसुधामहित सुराजितनीरागमना भवांश्च वर्षा इति लिङ्गादि।

### दर्पणः

तद्वेग इत्यादौ वेगस्यैकत्वेन असदृश इत्यादि विशेषणान्यथाभावः। असदृश इति स्वप्रत्ययान्तत्वेन वेगस्य [वेषस्य] क्विप्रत्ययान्तत्वे परिभ्रमणांमधुरताभूत इति कप्रत्ययान्तत्वे बिभ्राणां [स्त्रीणां] विशेषणं दधत इति क्रियायां, वेषपक्षे दधधारणे, विभ्रमपक्षे च डुधाञ् धातुः। संबोध्यमाना वासवदत्ता, परभागः, शोभा, असंबोध्यमानमासा हि विभ्राजते न तु विभ्राजसे, एवंजातीयकस्य विध्यादि सदृशस्याशीमन्त्रणादेरित्यर्थः।

### साहित्यचूडामणिः

तद्वेष इति। सदृशत्वे सदृक्त्वे च कञ्क्विनोः श्लेष। भृतत्वे भृत्वे च निष्ठा क्वयोः। दधत इति श्लुशपोः। अत्र वेशस्य विभ्रमाणां च वचनभेदेऽपि श्लेषवशात् प्रतीतिस्थगने तद्‌भेदरूपो न प्रक्रमभङ्गः।

### सम्प्रदायप्रकाशिनी

तद्वेष इति। तस्या वेषः। भृतो भरितः विभ्रतश्च। अत्र वचनभेदो वेषस्य गुणात्मनो न रूपभेदकृत्। दधत इत्युपमेयमपेक्ष्य 'दध धारण' इत्येक वचनम्। उपमानापेक्षया तु 'डुधाञ्' इति बहुवचनम्। अत्र श्लिष्टत्वा-दुपमानवचनभेदान्न रूपभेदः।

### मधुमती

तद्वेष इति। वेषः इत्युपमेयम्। विभ्रमाः इत्युपमानम्। असदृशः इति कञन्तत्वात् एकवचनान्तम्, दधते इति दधातेः क्विबन्तत्वात्। तेन उभयोः तुल्यरूपत्वात् वचनभेदेऽपि न दोषः। एवं मधुराभृतः इति तु उभयत्र समानाकारावधारणमिति। यद्यप्येवमपि लिङ्गवचनभेदः तदवस्थ एव। तथापि न द्राक् प्रतीयते। किन्तु उपपत्तिप-र्यापलोचनया इति श्लेषमर्यादया न दोषः। अत इव—'येन ध्वस्तमनोभवेन' इत्यत्र अप्रयुक्तनिहतार्थयोः न दोषत्वम्।

### विस्तारिका

तद्वेष इति। तद्वेष इत्युपमेयम्, विभ्रमा इत्युपमानम्, असदृश इति मधुरताभृत इति दधत इति च साधारणधर्माभिधायिनि पदान्युभयत्राप्यन्वितानि। तत्र वचनभेदेऽपि रूपसाम्यान्न दोषः।

तथा हि 'असदृशः' इति पाणिनिमते कञन्तत्वात्, कलापमते दृगन्तत्वादेकवचनान्तक्विबन्तत्वाद् बहुव-चनान्तम्। एवम् 'मधुरताभृतः' इत्यपि मधुरतां भर्तुमारब्ध इत्यादि कर्मविहितकर्तृत्वाद् मधुरतया धृत इति कर्मक्रान्तत्वाद् वा एकवचनान्तम्, क्विबन्तत्वाद् बहुवचनान्तम्। एवं दधत इत दधृ धारण इत्यात्मनेपदैकवचना-न्तस्य दधातेश्च बहुवचनान्तस्य रूपमिति सर्वत्र साम्यमिति। अन्याभिरसदृश इति अन्यासां वेषैरित्यर्थः।

न चापत्यार्थं स्नेह इतिवद् यद्यपि रूपसाम्येऽपि लिङ्गवचनभेदस्तदवस्थ एव, तथापि श्लेषावच्छादितो द्राग् न प्रतीयत इति प्रतीतिस्थगनादत्र दोषः।

यत्तु लिङ्गवचनभेदश्च श्लेषमहिम्नैव न दोषः, अत एव 'येन ध्वस्तमनोभवेन' इत्यादौ श्लेषेऽप्रयुक्तनि-हतार्थयोरदोषत्वामिति तन्न, उभयार्थेत्यादिवृत्तिग्रन्थविरोधात्। तेन ह्यनुगमकस्वभावत्वं प्रतिपादयता उपमानिमि-त्तता च विलम्ब एवाभिहितः, अन्यथा श्लेषानिर्वाह एवोपन्यस्तः स्यात्।

किञ्च, श्लेषालङ्कारोऽत्र प्राधान्येन तात्पर्यविषय उपमानिर्वाहकः, प्रयत्नेन परं तन्निर्वाहः। अत एव 'येन ध्वत' इत्यादौ दोषोद्धारेऽप्रयुक्तनिहतार्थावपि श्लेषादिषु न दुष्टाविति श्लेषस्यैव निमित्तत्वमभिहितम्। किञ्च तद्दोषस्य पूर्वमेवोद्धतत्वात् पुनरुद्धारपौनरुक्त्यापत्तेश्चेति दिक्।

## सारबोधिनी

तद्वेष इति । अन्याभिरसदृशः अन्यासां वेषैरसदृशस्तद्वेष इत्युपमेयम् । विभ्रमा इत्युपमानम् । असदृश इति, मधुरताभृत इति, दधत इति साधारणधर्माभिधायिनि पदान्युभयत्रापि अन्वितानि । तत्र वचनभेदेऽपि रूपसाम्यान्न दोषः । अत्रासदृश इति अजन्तत्वे एकवचनान्तम्, हलन्तत्वे बहुवचनान्तम् । एवं मधुरताभृत इत्याद्यपि, दधत इति दध धारणे इत्यस्य, दधातेश्च यथाक्रममात्मनेपदैकवचनबहुवचनयोरपि रूपम् ।

## काव्यप्रदीपः

वचनभेदो यथा—

**'तद्वेषो ददृशेऽन्याभिः स्त्रीभिर्मधुरताभृतः ।**
**दधते स्म परां शोभां तदीया विभ्रमा इव ॥'**

अत्र वचनभेदेऽपि मधुरताभृत इत्यस्योभयान्वयाविशेषान्न दोषत्वम् । एवं कालपुरुषविध्यादिभेदेऽपि भग्नप्रक्रम एव दोषः । तथाप्रतीतेरस्खलितरूपतया विश्रान्त्यभावात् ।

## काव्यप्रकाशखण्डनम्

**तद्वेषो सदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।**
**दधते स्म परां शोभां तदीया विभ्रमा इव ॥**

तद्वेषः परां शोभां दधते । तदीया विभ्रमा विलासा इव । वेषः कीदृश ? अन्याभिः स्त्रीभिः असदृशः । पुनः कीदृशः ? मधुरतया भृतः पूर्णः । विभ्रमा अपि मधुरतां बिभतीर्ति मधुरताभृत् ते मधुरताभृत इत्यर्थः । वचनभेदोदाहरणमिदम् ।

## आदर्शः

वचनभेदस्याप्यन्यरूपत्वाभावेऽदोषत्वमाह—तद्वेष इति । मधुरतया भृतः पूरितस्तद्वेषोऽन्याभिः स्त्रीभिरसदृशोऽन्यस्त्र्यसाधारणः परां शोभां दधते स्म दधाति स्मेत्यर्थः । अत्र दध धारणे आत्मनेपदी । दोषः कीदृशः, तदीया विभ्रमा इव । अत्रापि परां शोभां दधते इत्यन्वयः । अत्र धाञो बहुवचनम् । विभ्रमाः कीदृशः ? अन्याभिः स्त्रीभिरसदृशो मधुरतां बिभ्रतश्च । अत्र सदृश-भृतपदे क्विबन्त-दृश-भृञ्-धातुभ्यां साधिते बहुवचनान्ते । उभयथाऽप्येकरूपता ।

## सुधासागरः

मधुरताभृतः, अत एवान्याभिः स्त्रीभिः अन्यस्त्रीणां वेषैरसदृशः तद्वेषः तस्या नायिकाया वेषः तदीया विभ्रमा इव परां शोभां दधते स्म इत्यन्वयः । तद्वेष इत्युपमेयम् । विभ्रमा इत्युपमानम् । असदृश इति, मधुरताभृत इति, दधते इति च साधारणधर्माभिधायीनि पदान्युभयत्राप्यन्वितानि । तत्र वचनभेदेऽपि रूपसाम्यान्न दोषः । अत्र असदृश इत्यजन्यत्वे एकवचनान्तम् । हलंन्तत्वे बहुवचनान्तम् । एवं मधुरताभृत इत्यपि । दधत इति 'दध' धारणे इत्यस्य दधातेश्च यथाक्रममात्मनेपदैकवचनबहुवचनयोरपि रूपमिति बोध्यम् ।

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्य सावपि भग्नप्रक्रमतयैव व्याप्तः । यथा

**अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।**
**पश्चिमात् यामिनीयामात् प्रसादमिव चेतना ॥ ५९४ ॥**

अत्र चेतना प्रसादमाप्नोति न पुनरापेति कालभेदः ।

---

**सङ्केतः**

न तथेति । कोविदप्रसिद्धाप्रकारेण ।

**बालचित्तानुरञ्जनी**

कालेति । कालो वर्तमानादिः । पुरुषः प्रथममध्यमोत्तमरूपः । विधिरप्रवृत्तप्रवर्ता । आदिपदान्निवर्तनम् । विश्रान्ति चमत्कारम् । अतिथिमिति । प्रसादं वैमल्यम् ।

**काव्यादर्शः**

यथा वा—'चन्द्रमिव सुन्दरं मुखं पश्यति' इत्यादौ । यत्रापि गम्यमानं साधारणधर्माभिधायिपदं तत्रापि न दोषः, यथा—'चन्द्र इव मुखं, कमलमिव पाणिः, बिम्बफलमिवाधरः' इत्यादौ । न तथेति तद्विदां प्रसिद्धेन प्रकारेण ।

**विवेकः**

कालभेदो यथा—अतिथिमित्यादि । विभक्तिविपरिणामे वाक्यभेदः स्यादित्यभिधायोदाहृतम् । पुरुषः प्रथममध्यमोत्तमरूपः ।

**दीपिका**

प्रतिपादितस्य विध्यादेरर्थस्योभयानुगमविरहो विध्यादिभेदः । अस्य च कालभेदे नान्तर्भावो लिङ्गादौ कालविशेषाविवक्षणात् । प्रतीतवाक्यार्थावगमेऽसंवलिततदाश्रयतया विश्रान्तिं नासादयन्तीति । अनैवंविधस्थले च निराकाङ्क्षा नोत्पद्यन्त एवेत्यर्थः । भग्नप्रक्रमतयैवेति । उपमानोपमेययोरेकं सक्रियं प्रक्रम्यापरत्र तथा निर्वाहविरहादिति भावः । प्राप्नोतीत्यनन्तरमिति युक्तमिति शेषः । न पुनरापेति । अत्र वृत्ताविरते वर्तमानैवेति युक्तेत्यर्थः ।

**साहित्यचूडामणिः**

इतोऽप्युपमादोषानुद्भटाद्युन्मेषात् (?) प्रक्रमभेदे निमज्जयति—कालेति । आदिपदेनामन्त्रणादि । तथेति । एषां तदभेदेऽपि । अस्खलितेति । प्रतीतिपरिस्खलनप्रयुक्त एव हि प्रक्रमभेदः असावपि कालादिभेदोऽपि ।

## सम्प्रदायप्रकाशिनी

कालादिभेदादपि प्रक्रमभङ्गमाह—कालपुरुषेत्यादि। कालादेरभेदे यथा विश्रान्तिमासादयति न तथा भेदे। असावपि कालादभेदोऽपि।

अतिथिमिति। चेतनाकर्तृकाया आप्तेः प्रारब्धाया अपरिसमाप्तिरिति वर्तमानकालता। कुमुद्वतीकर्तृकायास्तु परिसमाप्तिरिति भूतकालतेति प्रक्रमभङ्गः।

तदेतदाह—अत्र चेतनेत्यादि।

## मधुमती

कालेति। कालः वर्तमानादिः, पुरुषः प्रथममध्यमोत्तिमरूपः, विधिः अप्रवृत्तप्रवर्तनम्।

अतिथिमिति। अत्र कालभेदं दर्शयति—अत्रेति। यद्यपि—अतीतपश्चिमयामात् अतीतचेतनाप्रसादमिव' इति विवक्षिते क्व कालभेदः ? तथापि—पश्चिमयारात्रिजातीयात् अद्यापि चेतनाजातीयं प्रसादमाप्नोति इति उपमेये विविक्षिते तु न तथेति कालभेदः।

## विस्तारिका

कालेति। कालो वर्तमानादिः। पुरुषः प्रथममध्यमोत्तमरूपः विधिरप्रवृत्तप्रवर्तनम्। आदिपदान्निर्वर्तनम्, विश्रान्तिं चमत्कारम्।

अतिथिमिति। यद्यप्यतीतपश्चिमयामिनीयामात् चेतना प्रसादमापेति विवक्षितेन कालेन भेदः तथापि पश्चिमरात्रियामजातीयादद्यापि चेतनाजातीयं प्रसादमाप्नोति, उपमेये तु न तथेति कालभेदो द्रष्टव्यः।

## काव्यप्रदीपः

तत्र कालभेदे यथा—

**'अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती।**
**पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना॥'**

अत्र चेतना प्रसादमाप्नोतीति प्रकृतं न तु तमापेति कालभेदे प्रक्रमभेद एव।

## काव्यप्रकाशखण्डनम्

तथोपमायां कालपुरुषविध्यादिभेदोऽपि दोषः, उद्देश्यप्रतीतेरस्खलितरूपतया विश्रान्तेरभावात्। यथा—

**अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती।**
**पश्चिमाद् यामिनीयामात् प्रसादमिव चेतना॥**

कुमुद्वती स्त्री काकुस्थ्यात् अतिथिं पुत्रं आप। केव ? चेतना प्रसादमिवेत्यर्थः। अत्र चेतना प्राप्नोति न पुनरापेति कालभेदः।

## आदर्शः

कालपुरुष इति । कालोऽतीतवर्तमानादिः, पुरुषा नामयुष्मदस्मद्योगयोग्याः प्रथममध्यमोत्तमाः, विधिर-प्रवृत्तप्रवर्तनात्मकः सप्तम्यादिः, उपमानोपमेययोस्तद्भेद इत्यर्थः । अस्खलितेति । तेन किञ्चित्स्फलनादल्पदोष एवायं काव्येषु प्रायस्तिष्ठतीति सूचितम् । 'विश्रान्तिं' निराकाङ्क्षताम् ।

'अत्र कालभेदे उदाहरति अतिथिमिति काकुत्स्थात् कुशात् । न पुनरापेति ।अतीतप्राप्तिमात्रस्य तात्पर्या-विषयत्वादिति भावः ।

## सुधासागरः

कालेत्यादि । कालो वर्तमानादिः । पुरुषः । प्रथममध्यमोत्तमरूपः । विधिरप्रवृत्तप्रवर्तनम्, आदिपदान्नि-वर्त्तनम् । तथा च कालपुरुषविध्यादिभेदेऽपि भग्नप्रक्रम एव दोषः । तथाप्रतीतेरस्खलितरूपतया विश्रान्त्यभावात् । तत्र कालभेदे यथा—अतिथिमितिं । अत्र चेतना प्रसादमाप्नोति इति प्रकृतं न तु तमापेति कालभेदे प्रक्रमभेद एव ।

**प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता।**
**विभ्राजसे मकरकेतनमर्चयन्ती बालप्रवालविटपप्रभवा लतेव।५९५॥**

अत्र लता विभ्राजते न तु विभ्राजसे, इति संबोध्यमाननिष्ठस्य परभागस्य, असंबोध्यमानविषयतया व्यत्यासात् पुरुषभेदः।

---

### सङ्केतः

प्रत्यग्रेति। मज्जने स्नानब्रुडने, ताभ्यां विशेषेण विवक्ता शुद्धा मूर्तिः यस्याः सा तथा। अन्तशब्दः स्वरूपे सम्बन्धे वा। लता तु अंशुभिः कान्ता। अर्चयन्ती शोभयन्ती पूजयन्ती च। अत्र राज्ञी सम्बोध्या, न लता। परभागः युष्मदर्थः।

### सङ्केतः (रुय्यकः)

उच्चारितमिति—शब्दतः प्रादुर्भूतं यथा "प्रत्यग्रे'त्यत्र विविक्तकान्त्वादि।

### काव्यादर्शः

'मज्ज़नं स्नानं ब्रुडनं च। स्फुरन्नंशुकस्य अन्तो यस्याः, स्फुरद्भिरंशुभिश्च कान्ता। मकरकेतनः कामः समुद्रश्च।' संबोध्यमानेति। नायिका वासवदत्तात्र संबोध्यमाना तन्निष्ठस्य मध्यमपुरुषस्य असंबोध्यमानलता-विषयतया विपर्ययः। युष्ममदर्थश्च संबोधनार्थः।

### विवेकः

तद्भेदे यथा—प्रत्यग्रेति—मज्जनं स्नानमासेचनञ्च। स्फुरन्नंशुकस्यान्तो यस्याः, स्फुरद्भिरंशुभिः कान्तेति च। मकरकेतनः समुद्रः कामश्च। कालादिभेदे दोष एव नास्ति तदाऽस्यान्यत्रान्तर्भाव इत्यभिधानं गगनालेख्यप्रख्यमित्याशयवानाशङ्कते नन्विति। समानमुच्चारितमिति शब्दतः प्रादुर्भूतम्। प्रतीयमानं वा धर्मान्तरमिति कालाद्युपहितोपात्तधर्मातिरिक्तं यथा 'प्रत्यग्रे'त्यादौ विविक्तकान्तमूर्तित्वादिकं धर्ममुपादाय नायिकयोरौपम्ये पर्यवसितेऽनन्तरमुपात्तेन विभ्राजस इत्यनेन धर्मेण नायिकाया एवाभिसम्बन्धात् क्व पुरुषभेदः? एवं 'राम इवायं राजा विभाती'ति 'भासि त्वं हरिरिवावनीनाथे'ति 'दहतु भवान् दहन इति दिशः समग्रा'नित्यादौ रामादिगत-प्रतीयमानसमानधर्मनिमित्तोपमानसम्बन्धादनन्तरमुपादीयमानेन 'विभाती'त्यादिनोपमेयस्य सम्बन्ध इतरथा तु दुःसमन्वयत्वात्।

### दीपिका

न तु विभ्राजस इति। युष्मदर्थ एव मध्यमपुरुषाद्यनुशासनादिति भावः। असम्बोध्यमानो योऽसौ नायिकारूपोऽर्थस्तन्निष्ठस्य। परभागस्य क्रियमाणमध्यमपुरुषरूपेण विशेष्यावलीनस्य लतारूपोऽर्थस्तद्विषय-

तया व्यत्यासादसङ्गतः। परभावस्येति तु पाठे परशब्दोऽयं यत्परस्तत्पर इत्यादाविवायततवाचकः। तथा च सम्बोध्यनिष्ठस्य परभावस्य नायिकारूपार्थतत्त्वस्यासम्बोध्यमानविषयतया व्यत्यासाद् न तावताऽप्यर्थसम्बन्धस्यापि विवक्षिततया व्याघातादित्यर्थः।

## साहित्यचूडामणिः

पुरुषभेदमाह—प्रत्यग्रेति। अत्र सम्बोध्यमाना नायिका परभागेन मध्यमस्य पुरुषस्य विषयः, न तु तद्विपर्ययम्नत् प्रथमस्येत्याह—लतेति।

## सम्प्रदायप्रकाशिनी

प्रत्यग्रमज्जनेति। स्फुरन् अंशुकान्तो यस्याः सा, स्फुरद्भिरंशुभिः कान्ता च। अत्र विभ्राजस इति परभागस्य प्रत्ययभागस्य लताविषये विभ्राजत इति व्यत्यासात् पुरुषभेदः प्रक्रमभङ्गाय।

तदेतदाह—अत्र लतेत्यादि।

## मधुमती

अत्रेति। तथाच-देवीं सम्बोध्य अभिधानात् युष्मदर्थप्रतीतौ मध्यमपुरुषावश्यम्भवात् पुरुषभेदः इत्यर्थः॥

## विस्तारिका

प्रत्यग्रेति। विभक्तमूर्तिः, बालः प्रवालो नवकिसलयं स्वस्य, एवंविधो यो विटपस्तदुत्पत्तिस्थानमित्यर्थः।

अत्र लतेति। अचेतनत्वेन लतायाः सम्बोध्यत्वाभावादिति भावः।

ननु विभ्राजत इत्येवास्तु। तथा च 'देवी लतावद् विभ्राजते' इत्येवार्थ इत्यत आह—सम्बोध्यमानेति। सम्बोध्यविषयस्य तच्छक्तस्येत्यर्थः। देवीसम्बोध्याभिधानात्। तत्र च प्रथमपुरुषस्यासाधुत्वादिति भावः। व्यत्यासात् तत्परित्यागेनेतराध्याहारादित्यर्थः।

## सारबोधिनी

प्रत्यग्रेति। मज्जनं स्नानं आसेचनं च। स्फुरन्नंशुकस्यान्तो यस्याः स्फुरद्भिरंशुभिः कान्तिभिर्वा कान्ता विविक्तमूर्तिः शुद्धमूर्तिः बालप्रवालानामेव किसलयं यस्यैवंभूतो यो विटपस्तदुत्पत्तिस्थानमित्यर्थः। अत्र लतेत्यचेतनत्वेन लतायाः संबोध्याभावादिति भावः।

## काव्यप्रदीपः

पुरुषभेदे यथा—

**'प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता।**
**विभ्राजसे मकरकेतनमर्चयन्ती बालाप्रवालविटपप्रभवा लतेव॥'**

अत्र लता विभ्राजत इति प्रस्तुतं न तु सा विभ्राजस इति तस्मात्पुरुषभेदः। संबोध्यनिष्ठस्य भ्राजनस्या-संबोध्यविषयतया अप्रतीतेः।

### काव्यप्रकाशखण्डनम्

**[प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता।]**

**विभ्राजसे मकरकेतनमर्चयन्ती, बालप्रवालविटपप्रभवा लतेव।**

मकरकेतनं कामं अर्चयन्ती पूजयन्ती त्वं राजसे। कीदृशी? प्रत्यग्रं सद्यस्कं यन्मज्जनं स्नानं तस्य विशेषेण विविक्ता [प० ६०, २] व्यक्ता मूर्त्तिर्यस्याः सा। कौसुम्भरागेण रुचिरः स्फुरन्नंशुक्रस्य वस्त्रस्यान्तो यस्याः। केव? बालो नूतनः प्रवालः पत्रं यत्र एतादृशो यो विटपः शाखी तत्र प्रभव उत्पत्तिर्यस्यास्तादृशी लतेवेत्यर्थः। अत्र लता विभ्राजते न तु विभ्राजस इति पुरुषभेदः।

### आदर्शः

पुरुषभेदमाह—प्रत्यग्रेति। अशोके कामदेवमर्चयन्तीं स्नातां वासवदत्तां प्रति वत्सराजस्योक्तिरियम्। मकरकेतनं कामदेवमर्चयन्ती त्वं विभ्राजसे, नवीनोत्थितस्य समुद्रे वृक्षाकारप्रवालस्य विद्रुमस्य विटपजा लतेव। तद्विटपे लताभावेऽपि विटपान्तरे सम्भाविता सा उपमानम् अतो न वक्ष्यमाण उपमानासम्भवः। सम्भावनाऽसम्भव एव तत्त्वात्। साऽपि हि मकरकेतनं समुद्रमर्चयन्ती स्वशोभया पूज्यं कुर्वती। द्वयोरन्यद् विशेषणद्वयमाह—प्रत्यग्रेति कौसुम्भेति च। त्वं प्रत्यग्रेण तत्कालीनेन मज्जनविशेषेण स्नानविशेषेण विविक्तमूर्त्ति र्निर्णिक्तमूर्त्तिः। लता तु मज्जनविशेषाज्जलतलीभावात् प्रत्यग्रं तत्कालं विविक्तमूर्त्ति रुत्थितमूर्त्तिः। तथा त्वं कौसुम्भरागेण रुचिरं स्फुरताऽशुना रश्मिना कान्ता कमनीया। अत्र पुरुषभेदं ग्राहयति—अत्र लतेति। व्यत्यासादिति। अनेन व्यत्यासे किञ्चिद्विलम्बनमल्पदोष इति सूचितम्।

### सुधासागरः

पुरुषभेदे यथा—प्रत्यग्रेति।

हे सखि प्रत्यग्रं यन्मज्जनं स्नानं सेचनं च तेन विशेषतो विविक्ता स्वच्छा मूर्तिर्यस्याः सा तादृशी, कौसुम्भरागेण रुचिरः सुन्दरः स्फुरन् देदीप्यमानोंऽशुकान्तो वस्त्रमध्यभागो यस्याः सा तादृशी, मकरकेतनं कामदे-वमर्चयन्ती त्वं वालान्यभिनवतराणि प्रवालानि किसलयानि यत्र तादृशो विटपस्तदुत्पत्तिस्थानभूता या लता तद्वद् विभ्राजसे इत्यर्थः। वसन्ततिलका छन्दः। 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात्। प्रत्यग्रेत्यादि विशेषणं साधारणम्। कौसुम्भेत्यादि नायिकाविशेषणमेव, वालेत्यादि लताविशेषणमेव। एवं च अंशुभिः पुष्पधू-लिभिरिति श्रीवत्सलाञ्छनभट्टाचार्याणां व्याख्यानं प्रामादिकमेव। अंशुपदस्य परागवाचकत्वाभावात् प्रकृतार्था-सामञ्जस्याच्चेति सहृदयैराकलनीयम्।

अत्रेत्यादि। अत्र विभ्राजते इति प्रस्तुतम्, न सा विभ्राजसे इति, तस्मात् पुरुषभेदः। सम्बोध्यनिष्ठस्य भ्राजनस्यासम्बोध्यविषयतयाऽप्रतीतेरिति भावः।

**गङ्गेव प्रवहतु ते सदैव कीर्तिः ॥ ५९६ ॥**

इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु, इति, अप्रवृत्तप्रवर्तनात्मनो विधेः। एवंजातीयकस्य चान्यस्यार्थस्य, उपमानगतस्यासंभवाद्विध्यादिभेदः ॥

---

### सङ्केतः

विधेरिति। अप्रत्तप्रवृत्तिरूपस्य गङ्गायां असम्भवात् इति योगः। एवं जातीयकस्येति। निमन्त्रणादेः—

**'गमिष्याम्यपहास्यतां वामन इव।'**

इत्यादाविव क्वचित् कालपुरुषविध्यादियोगेनापि दोषः स्यात्।

### बालचित्तानुरञ्जनी

विधिभेदमुदाहरति गङ्गेति। गङ्गा प्रवहत्विति लोडन्त एव भवतु को दोष इत्याह अप्रवृत्तेति। अप्रवृत्तप्रवर्तनात्मा विधिः, विधिरित्यन्तमप्राप्त इत्युक्तत्वात् गङ्गायां न संभवति नित्यप्राप्तत्वात्तस्याः। एवं च कालपुरुषविध्यादीनामुपमेये केवलमौचित्यं नोपमान इति तद्भेदस्य प्रक्रमभङ्गेऽन्तर्भाव इति भावः।

### काव्यादर्शः

विधेरिति उपमानविधेर्भेदो, नहि गङ्गाया अप्रवृत्तायाः प्रवृत्तिर्विधीयते यथा कीर्तिः। अन्यस्येति। विधिजातीयस्य निमन्त्रणादेरपि उपमानेऽसंभवः।

### दीपिका

प्रवहत्वित्याशंसायां पञ्चमी प्रवहतीत्यप्रवृत्तौ वर्तमानाया एवानुशासनादिति भावः। एवं जातीयस्य पञ्चम्यभिधेयस्याशीर्निमन्त्रणादेः।

### साहित्यचूडामणिः

विधिभेदमाह—गङ्गेति। गङ्गा प्रवहत्विति लोडन्त एव को विरोध इत्यत्राह—अप्रवृत्तेति। अप्रवृत्तप्रवर्त्तनात्मा हि विधिः "विधिरत्यन्तमप्राप्त" इत्युक्तत्वाद् गङ्गायां न घटते नित्यप्रवृत्तत्वात् तस्याः।

### सम्प्रदायप्रकाशिनी

गङ्गवेति। अत्र गङ्गायाः प्रवाहस्याप्रवृत्तस्य प्रवर्तनाभावात् प्रवहत्विति कीर्त्यपेक्षया विधिभेदः। सदैवेति विधिविशेषणस्य सदात्वस्य चानाशास्यत्वासिद्धत्वेन भेदः। तदेतदाह—गङ्गा प्रवहतीत्यादि। एवञ्जातीयकस्य सिद्धस्य। अर्थस्य सदात्वलक्षणस्य। इदमादिशब्दार्थोपवर्णनम्।

### मधुमती

विधिभेदं दर्शयति—इत्यादाविति। 'प्रवहतु' इत्यत्र आशिषि लोट्प्रत्ययः। अविद्यमानस्यार्थस्य आशंसनं आशीः। न च कीर्तेरिव गङ्गायाः प्रवहनं अविद्यमानम्। तथाच 'गङ्गा प्रवहति, कीर्तिः प्रवहतु' इति विधिभेदः इति।

### विस्तारिका

विधिभेदं दर्शयति—गङ्गेति।

ननु प्रवहत्वित्येवोभयत्रान्वेति, अत आह—न त्विति। विधेरिति। व्यत्यासादित्यन्वेति। आशीर्विहित-लोट्प्रत्ययस्यानागतेष्टविषयार्थकत्वात् कीर्तावेवान्वयः, न तु विद्यमाने गङ्गाप्रवाहे। तथा च यथा गङ्गा प्रवहति तथा कीर्तिः प्रवहत्वित्यर्थे विधेर्भेदः।

ननु प्रवहणस्य सिद्धत्वेऽपि कस्यचिदेवानागतार्थस्य गङ्गानिष्ठस्य विधिविषयत्वं भविष्यतीत्यत आह—एवं जातीयकस्येति। असम्भवादिति। उपमेयेऽसम्भवादित्यर्थः। वस्तुतस्तु गतिमनुरुध्य तादृशधर्मान्तरस्योपमा-नगतस्य सम्भवेऽपि स्वप्रकृत्वनुपस्थापितत्वेन विधेस्तदन्वितस्वार्थबोधकत्वा देवेति ध्येयम्।

विध्यादिभेद इति। यद्यपि विधेरेकमात्रान्वयिनो भेदासम्भवः, तथापि प्रागुक्तो व्यत्यास एव भेदपदेन विवक्षित इति ध्येयम्।

### सारबोधिनी

विधिभेदं दर्शयति गङ्गेति। ननु प्रवहवत्वित्येवोभयत्रान्वेतु इत्यत आह नन्विति। विधेरिति। आशीर्वि-हितस्य लोट्प्रत्ययस्यानागतेष्टार्थविषयत्वात् कीर्तावेवान्वयो न गङ्गाप्रवहणे विद्यमाने। तथा च यथा गङ्गा प्रवहति तथा कीर्तिः प्रवहत्वित्यर्थे विधिभेदः।

### काव्यप्रदीपः

विधिभेदो यथा—'गङ्गेव प्रवहतु ते सदैव कीर्तिः' इत्यादावप्रवृत्तप्रवर्तनात्मनो विधेर्भेदः। यतो गङ्गा प्रवहतीति विवक्षितं न तु सा प्रवहत्विति। एवं विधस्यान्यस्यार्थस्योपमानगतस्यासंभवाद्विध्यादिभेदो द्रष्टव्यः।

### काव्यप्रकाशखण्डनम्

तथा—'गङ्गेव प्रवहतु ते सदैव कीर्त्तिः।' इत्यादौ गङ्गा प्रवहति, न तु प्रवहत्विति प्रवृत्तप्रवृत्तात्मनो विधेर्भेदः।

एवमुपमायासादृश्यमसंभवश्च दोषः। स्फुटमुदाहरणद्वयम्।

### आदर्शः

विधिभेदमाह—गङ्गेवेति । विधेरित्यत्र भेद इत्यन्वयः । अन्यस्याप्यर्थस्येति । मान्धातेव पुत्रो भविष्यतीत्यत्र मान्धातरि भविष्यत्त्वानन्वयः ।

### सुधासागरः

विधिभेदामुदाहरति—गङ्गेवेति ।

इत्यादाविति । अप्रवृत्तप्रवर्तनात्मनो विधेर्भेदः, यतो गङ्गा प्रवहतीति विवक्षितं न तु सा प्रवहत्विति । एवंविधस्यार्थस्योपमानगतस्यासम्भवाद् विध्यादिविभेदा द्रष्टव्याः । इदन्त्ववधेयम् उपमानोपमेयभावे लिङ्गवचनकालपुरुषाणां भेदः सजातीय एवं संभवति, विधेस्त्वेकमात्रान्विततया भेदो विजातीय एवेति ।

ननु समानम् उच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितयाम् उपमायाम् उपमेयस्य प्रकृतधर्माभिसंबन्धान्न कश्चित्कालादिभेदोऽस्ति। यत्राप्युपात्तेनैव सामान्यधर्मेण, उपमा, अवगम्यते यथा 'युधिष्ठिर इवायं सत्यं वदति' इति तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे। सत्यवादी सत्यं वदतीति च न पौनरुक्त्यम् आशङ्कनीयम्। रैपोषं पुष्णातीतिवत् युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्। सत्यमेतत् किं तु स्थितेषु प्रयोगेषु समर्थनमिदं न तु सर्वथा निरवद्यम् प्रस्तुतवस्तुप्रतीतिव्याघातादिति सचेतस एवात्र प्रमाणम् ॥

---

### सङ्केतः

उच्चारितम् शब्दोक्तम्। प्रतीयमानम् अनुक्तमपि गम्यम्। यथा 'पद्ममिव मुखम्' इत्यादौ 'भाती'त्यादिगम्यधर्मान्तरेणोपमा। कालादिभेदवाचकात्तु काव्ये साक्षादुक्तात् धर्मात् अन्यो धर्मः धर्मान्तरम्। प्रकृतेति। कालादिभेदवाची प्रकृतो धर्मः आपेत्यादिः। सामान्यधर्मेणेति। कालादिभेदवाचिनेत्यर्थः। 'युधिष्ठिरो ह्यवदत्, अयं तु वदति' इति कालभेदः व्यक्तः। सत्यवाद्ययमिति। 'युधिष्ठिर इव सत्यवादी सन् असौ सत्यं वदति' इति च णिनै कालनिर्देशात् न कालभेदः इत्यर्थः।

### बालचित्तानुरञ्जनी

ननु सर्वोऽपि सर्गबन्धादिव्यवहारः उक्तः अन्तः स्यादिति आलङ्कारिकं प्रतिकविराक्षिपति नन्विति। साक्षादुच्चरितस्य प्रतीयमानस्य वा धर्मस्य न वैषम्यं तन्मात्रोपादानेऽपि उपमायाः प्रसर्पणात् तत् सामान्येनोपमायां परिपूर्णायां यथोचितकालान्वय इति कोऽयं कालभेद इत्याक्षेपार्थः। साक्षादुच्चरितेऽपि धर्मे तदभिसंबन्ध्युपमेये पाक्षिक संबन्धः लक्षणा। यत्र भेदादेवेति। सर्वत्रोपमायाः स्वभाव इत्याह यत्रापीति। उपात्तेन साक्षादुच्चरितेन युधिष्ठिर इवायं पुरुषः सत्यं वदतीत्यत्रापि प्रयत्नबलात् सत्यवादीव सत्यं वदतीत्यर्थः पर्यवस्यति। सामान्यविशेषभावसंमिश्रोऽयमन्वयः उपमायां सार्वत्रिक इति प्रतिपत्स्यामहे इति प्रयत्नभेदमवलम्बमाना तस्मात् प्रतिकालादिभेदोद्भावनौचित्यमिति भावः। सत्यं वादी सत्यं वदतीति पौनरुक्त्यमित्याशङ्क्याह सत्येति। अर्थाङ्गीकारेण परिहरति सत्यमिति। यद्यपि चिरन्तनप्रयोगेषु कालभेदादि दृश्यते तथापि तन्मात्रमेव समर्थनीयम् न तु तद्वदन्येन प्रयोक्तव्यम् प्रस्तुतप्रतीति विधानात्। तथा चोक्तम्

**पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः।**
**तत्समाश्रित्य न त्याज्या इतरेषां मनीषिणाम्॥ इति॥**

### काव्यादर्शः

'ननु, समाने'त्यतो 'ऽर्थावगमाद्' इत्यन्तं पूर्वपक्षः। उच्चरितमिति शब्दतः प्रादुर्भूतं, यथा'प्रत्यग्रे'त्यत्र विविक्तमूर्तित्वादिति। प्रतीयमानमिति अनुक्तमपि गम्यमानम्। यथा 'राम इवायं राजा' इत्यादौ गम्यमानधर्मेण उपमानिर्वाहानन्तरं 'भाती'त्यादिना उपात्तेन धर्मेण संबन्धे। धर्मान्तरमिति। आप्त्यादिलक्षणात् कालादिभेदावभासकाद् धर्माद् अन्यता। प्रकृतेति। प्रकृतो धर्मः कालादिभेदावभासक आपेत्यादिकः। सामान्यधर्मेणेति, कालादिभेदावभासकेन। 'युधिष्ठिरो ह्यवदत्; अयं तु वदति' इति व्यक्तः किल कालभेद इत्याह—'सत्यवाद्ययम्' इति। सत्यवादित्वधर्मस्य प्रतीयमानस्य उपादानेन उपमाप्रतिपत्तिर्भविष्यति, ततः 'सत्यं वदति' इत्येतद् उपमेये एव योजयिष्यते; तत उपमानानिर्वाहानन्तरं 'सत्यं वदति' इत्युपादीयमानेन धर्मेण संबन्ध इति न कालभेदः स्यादिति भावः।

### विवेकः

नन्वेवं ह्यत्र कालविशिष्टेनोपात्तेनैव धर्मेणोपमायाः प्रतीतिस्तत्रेदमुक्तं कथं सङ्गच्छते? आह यत्रापीति। सत्यं वदतीति सत्यवादी, आवश्यके णिनिः। युधिष्ठिर इव सत्यवादीति प्रतीतेरत्रापि पूर्ववदेव कालभेदः। क्रिया कर्मावयवरूपाऽपि कुतः सम्भवति, अतोऽत्र न पौनरुक्त्यमाशङ्कनीयमित्याह रैपोषं पुष्णातीतिवदिति। तदित्थं प्रत्यवस्थितं निरूढशङ्काऽहङ्कारं शुद्धभावेनोत्तरयति सत्यमेवैतदिति। स्थितेष्विति प्रामाणिकप्रयुक्तेषु। समर्थनं यथाकथञ्चिदुपपादनम्। तदेतदाह न तु सर्वथेति। अत्र हेतुः प्रस्तुतेति। संवित्सिद्धतामत्र दर्शयति सचेतस इति—अप्रतीतैरेव गुणैर्यत्र सादृश्यं पदप्रतीतगुणसादृश्यमेकस्मिन्नुपमाने प्रतीत उपमानान्तरप्रयोगो न कथञ्चिद-र्थविशेषं पुष्णाति (का. अ. सू. वृ. ४/२/१७-१८)। 'अत एवासादृश्यहता ह्युपमा तन्निष्ठाश्च कवयं इत्यस्य बाधार्थ 'मुपमाऽऽधिक्यात्तदपोह' (४/२/१७-१८) इत्याहुः, यथा 'कर्पूरहारहरहाससितं यशस्त' इत्यादौ कर्पूरादिभिरुप-मानैर्यथा सौसादृश्यं भवति, तेषां शुक्लगुणातिरेकात्। तत्राप्याहुः—'नापुष्टार्थत्वमिति बलसिन्धुः सिन्धुरिव क्षुभित' इति प्रत्युक्तम्। (का. अ. सू. वृ. ४/२/१९)

### दीपिका

उच्चारितमुपात्तं वाचकम्। प्रतीयमानं धर्मान्तरं क्रियातोऽन्यं धर्ममुंपादायाश्रित्य। प्रस्तुतधर्मसम्बन्धात् प्रस्तुतविचाराश्रयक्रियाभिसम्बन्धाङ्गीकारात्। कश्चन कालादिभेदोऽस्तीत्युभयगामिक्रियासम्बन्धेऽनुभयगामि-कालादिनिबन्ध एव न पुनरेकमात्रगामिनि क्रियानिबन्धे तस्याभावादित्यर्थः। उपात्तेनैवेति। प्रतीयमानधर्मान्तरवि-रहात्। प्रतिपत्स्यामह इति।

युधिष्ठिरोपमाननिबन्धन ताच्छील्यस्य सुप्रतिपादितत्वादित्यभिसन्धिः। रैपोषमिति न व्ययपोषेण न त्वर्थकार्पण्येन यथाकथञ्चित् पुष्णाति संवर्धयतीत्यत्र यथा न पौनरुक्त्यमवशिष्टार्थविरहात्। यथा युधिष्ठिरवदा-जन्मस्वभावशुद्धत्वेन न तु लाभपूजाख्यातियुक्तेन। सत्यवादी। न च सत्यवादित्वप्रसिद्धिः, अयं महात्मा सम्प्रति सत्यं वदतीत्यर्थाद् वाक्यसामर्थ्यादेवावगमात् प्रतीतेः अत्रापि न पौनरुक्त्यमित्यर्थः।

सत्यमिति। अस्यैव विवृतिः सत्यमिति वचनमेतदित्यङ्गीकृतमेवैतदित्यर्थः। तर्हि क्व दुष्टत्वमित्याह— किन्त्विति। स्थितेषु संवृतिसिद्ध्या परम्परया व्यवस्थितेषु समर्थनं यथाकथञ्चित् समाधानं न तु सर्वथा निरवद्यमित्यर्थः वस्तुवृत्ताद्यसम्भवादिति भावः। प्रस्तुतेति। काव्ये प्रस्तुतस्य वस्तुनो रसादेः प्रतीतिव्याघातादास्वादनिरासात् सचेतसः सहृदयाः प्रमाणं साक्षिणः।

एतदुक्तं भवति—काव्यार्थानुभवात् कालान्तरमेव विजिगीषुकथामारभ्यात्मना विचारणम्। कथञ्चित् समर्थितेऽप्येवंविधानां निर्दोषत्वे काव्यार्थप्रतीतिप्रकर्षव्याहतिरन्यथा कृता न भवति, तदन्वयव्यतिरेकावाश्रित्यैवमस्माभिर्दोषतदभावविभागः क्रियत इति पार्श्ववचनम्। असादृश्यमुपमानोपमेययोः समानधर्मताविरहः। असम्भव उपमाऽर्णवाकाशत्वे शशविषाणसमगोत्रता। उपमायामिति। उत्प्रेक्षायां सम्भावनाप्राणायां नायं दोषः। तेन–

**"पतत्पतङ्गप्रतिमस्तपोनिधिः, पुरोऽस्य यावन्न भुवि व्यलीयत।**
**गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः॥"**

इत्युदाहृतोऽयमिति। लोकप्रसिद्ध्यभावादुत्प्रेक्षायां न दुष्टता।

### दर्पणः

अर्धारममादित्यन्तः पूर्वपक्षग्रन्थः। तच्चरितं प्रतीयमानं धर्मान्तरमिति संबन्धः। समानमुच्चरितंमुपात्तवाचकं, प्रतीयमानं व्यज्यमानं, उपादाय। आर्थेत्यं प्रथमकमलमिव स्वरति [सुरभि] तस्या वदनं पश्यामि। अ [उ] च्चरितं स्वरभिन्नं सामांन्यधर्ममाश्रित्य उपमाया विश्रान्तौ उपमेयस्य मुखस्य सकृत् दर्शनक्रिया संम्बन्धः। द्वितीयेऽत्रैव सुरभिपदाप्रयोगे।

यत्रापीति अपिः पूर्वोक्तसमुच्चये। अयमाशयः। न केवलं कमलमिव सुरभिमुखं पश्यामीत्यादिवत् दर्शनादिक्रियाया उपमेयमात्रगामित्वे कालादि भेदो नास्ति। अत्र यत्र युधिष्ठिर इवायं सत्यं वदतीत्यादौ सत्यवदनक्रियारुपेण उपन्नेनैव साधारण धर्मेणोपमा गम्यते तत्रापि कालादिभेददोषो नास्तीत्यर्थः।

कथमत्र न दोष इत्याह-अत्रेति। प्रतिपश्यामहे अयमर्थः इह यद्यपि सत्यं वदतीति क्रियायां उभयगामित्वं तथापि सत्यवादिनि प्रतीयमानं साधारणधर्ममाश्रित्य उपमाया विश्रान्तिरिति न कालभेददोष इति। एवं च न पुनरुक्तिरित्याह—सत्येति। वैश्रायमिति वैषोयं धनव्ययमोक्षणे नदुर्थे कार्व्य ? नैव यथा कथंचित् पुट्टभानि ? युधिष्ठिर सत्यवदनेन युधिष्ठिरवदाजन्मस्वभावसिद्धेन न तु लाभ पूजा क्षति काम्यप्रयुत्तेन सत्यं वदतीति संप्रतिपत्यर्थः सिद्धान्तमाह-सत्यमेवैतदिति। स्थितेष्वर्थालंकारेषु कुतो नालिवज्यमित्याह-अप्रस्तुतेति।

### साहित्यचूडामणिः

एवञ्च कालपुरुषविध्यादीनामुपमेये केवलमनौचित्यं, नोपमान इति तद्भेदस्य प्रक्रमभङ्गमध्यानुप्रवेशः। एषां चैव सर्वोऽपि सर्गबन्धादिव्यवहार उत्सन्नः स्यादित्यालंकारिकं प्रति कविः प्रत्यवतिष्ठते। नन्विति साक्षादुच्चारितस्य प्रतीयमानस्य वा धर्मस्य न वैषम्यं तन्मात्रोपादानेऽप्युपमायाः प्रसर्पणात्। ततश्च सामान्येनोपमायां

परिपूर्णायां पाश्चात्त्यो यथोचित्तकालाद्यन्वय इति कोऽयं कालादिभेदो नामेति चोद्यार्थ: । साक्षादुच्चारिते धर्मे तत्सम्बन्ध उपमेये वाच्यत्वेन, उपमाने तु वक्तृसम्बन्धित्वलक्षणात् प्रयत्नभेदादेवेति सर्वत्रोपमाया: त्वभाव इत्याह—यत्रापीति । उपात्तेन साक्षादुच्चारितेन युधिष्ठिर इवायं सत्यं वदतीत्यत्रापि प्रयत्नभेदबलावलम्बिनोऽस्मान् प्रति न कालादिभेदोद्भावनौचित्यमिति यावत् । ननु सत्यं वदतीत्यत्र प्रक्रमभेदपरिजिहीर्षया पौनरुक्त्याङ्गीकार इति चेन्नेत्याह—रैपोषमिति । सत्यमित्याद्यङ्गीकारे । वैषम्योन्मूलने उक्तरूपमेतत् प्राक्तनेषु प्रयोगेषु समर्थनं, यत् क्रुध्यता हृदयेन व्याख्यातृश्रोतृणां वैलक्षण्येन प्रतिक्रियते, न सर्वथा निरवद्यं प्रस्तुतवस्तुप्रतीतिविधातात्, यत्र सहृदया एव प्रमाणम् । यदाह [ध्वनिकृत्]

**पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः ।**
**तान् समाश्रित्य न त्याज्या नीतिरेषा मनीषिणाम् ।। इति ।**

### सम्प्रदाप्रकाशिनी

ननु क्रियारूपाद् धर्मादन्येनोच्चारितेन प्रतीयमानेन वा धर्मेणोपमासिद्धौ समनन्तरमुपमेये क्रियासमन्वय इति न कालादिभेद इत्याक्षिपति—ननु चेत्यादि । प्रकृतधर्म: आख्यातोक्त: क्रियारूप: । एवञ्च सति स्फुरदंशुकान्तत्वेनोच्चारितेन धर्मेणोपमासिद्धौ पश्चाद् विभ्राजस इत्युपमेयान्वय: । 'चेतनेव कुमुद्वती' 'गङ्गेव कीर्त्तिरि'त्यत्र तु पावनत्वप्रसन्नत्वादिना प्रतीयमानेन प्रागुपमासिद्धौ पश्चाद् 'आप' 'प्रवहत्वि' त्युपमेयाभिसम्बन्ध इति नास्ति कालादिभेद इत्याशय: । नन्वेवं तर्ह्युच्चरितत्वेन प्रतीयमानतया वा यत्र धर्मान्तरासम्भवस्तत्र कथमित्यत आह—यत्रापीत्यादि । सामान्यधर्मेण क्रियात्मना । 'युधिष्ठिर इव सत्यं वदती' त्यत्र युधिष्ठिर इव सत्यवादीत्युपमासिद्धौ पश्चात् सत्यं वदतीति प्रतिपत्स्यामहे । ननु तर्हि पौनरुक्त्यमित्यत आह—सत्यवादीत्यादि । पुष्णातीति सामान्यपुषेर्यथा रैपोषमिति विशेषपुषिर्विशेषणं, तथा सत्यवादित्वसामान्यस्य युधिष्ठिरसत्यवादित्वं विशेषणं युधिष्ठिरसत्यवदनेन सत्यवादीति । परिहरति—सत्यमेवमिति । रैपोषं पुष्णातीत्यादि सिद्धेषु प्रयोगेष्वेतत्समर्थनं, न त्वेतत्समर्थनानुसारेण प्रयोग उत्पाद्य: । प्रस्तुतप्रतीतिविघातकस्यास्य सर्वथा निरवद्यत्वाभावात् । सचेतसो ह्यत्र प्रमाणम् ।

### मधुमती

अत्र शङ्कते—नन्विति । समानमिति धर्मान्तरमित्यग्रिमेण सम्बध्यते । उच्चारितं साक्षाच्छब्दत: । प्रतीतं प्रतीयमानं अनुमानसामर्थ्यलभ्यं धर्मान्तरं कालादिभेदभिन्नम् । न कश्चन कालादिभेदोऽस्ति । रूपकताप्रयोजक इति शेष: । तथा च तादृशधर्ममादाय औपम्ये प्रतीते, पश्चात् प्रतीतोऽपि कालादिभेद: न दूषक: । 'काम इव सुन्दरोऽयं राजा भाति' इत्यादौ, 'काम इवायं राजा भाति' इत्यादौ च यथाक्रमं उच्चारितं प्रतीयमानं च सौन्दर्यरूपं धर्मान्तरमवलम्ब्य उपमा प्रतीयते, भति इति क्रिया च उपमेये राज्येवान्वेति, न तु उपमानभूते कामेऽपि इति कथं कालादिभेद: दोष: ? । अभिहितान्वयस्य पञ्चामोल्लासे व्यवस्थापितत्वात्, प्रथमं विशेषणेनैव कारकान्वय:, पश्चात् क्रियान्वय: इति प्रघट्टकार्थ: ।

ननु यत्र कालादिविशिष्टेनोपात्तेनैव धर्मेणे उपमापर्यवसानं, तत्र नेदमपि साधनमित्यत्राह—यत्रेति। युधिष्ठिर इवेति। अत्र हि सत्यवादित्वं, उपात्तमेव साधर्म्यं उपमाप्रयोजकम्। अत्र च अतीतवर्तमानलक्षणकाल-भेदेऽपि अस्त्येव उपमाप्रतीतिसमयः इत्यर्थः। दूषयति—तत्रेति। सत्यवादित्वं अतीतादिसाधारणमिति न वर्तमा-नमात्रकालप्रतीत्या कालभेदः इत्यर्थः। पौनरुक्त्यमाशङ्कते—सत्यवादीति। स्वपोषं पुष्णाति इत्यत्र यथा स्वपोषेण पुष्यतीत्यर्थः। प्रतीयते इत्यर्थः। युधिष्ठिरेति। युधिष्ठिरसत्यवचनेन सत्यवाद्यमित्यर्थः। युधिष्ठिरसम्बन्धित्वज्ञा-पनं तु साधारणधर्मतास्फोरणार्थम्। वस्तुतस्तु—'स्वपोषं पुष्णाति' इत्यत्र उपपदस्य पुषेः साधुत्वार्थकतया न पौनरुक्त्यशङ्का। प्रकृते च तदभावात् यद्यपि पौनरुक्तमेव प्रतिभाति। तथापि 'घटेन घटवद्भूतलम्' इत्वत् 'सत्यवचनेन सत्यवाद्यम्' इत्यर्थावगमात् न पौनरुक्त्यम्। प्रस्तुतेति। औपम्यप्रतीतावपि प्रस्तुतस्य कालादेर्भङ्गेन भग्नप्रक्रमत्वानपायादित्यर्थः।

### विस्तारिका

शङ्कते—नन्विति। समानमित्यग्रेतनेन धर्मान्तरमित्यनेनान्वेति। धर्मान्तरं कालपुरुषविध्यादिभेदविषय-भिन्नम्। उपमेयस्येति। उपमेयस्य कालपुरुषविध्यादिभेदविषयधर्मसम्बन्धनिबन्धनो न कश्चन कालादि-भेदोऽस्ति दूषकताप्रयोजक इति शेषः।

तथा च विशेषानवरुद्धं धर्ममादायैवोपमायां पर्यवसितायां पश्चात् प्रतीतोऽपि कालादिभेदो न दूषकः। तादृशधर्मप्रतीतिश्च शब्दाद् वाऽर्थादिति। समुदायार्थः।

अत्र काम इवायं राजा भाति' इत्यत्र साधारण धर्मस्य सौन्दर्यादेरनुपात्तत्वेऽप्यर्थसामर्थ्येन प्रतीयमानत्वात् कामदृश्यप्रतीतौ पश्चात्क्रियान्वये वर्तमानकालभानात् कालभेदोऽपि न दोषः, अभिहितान्वयस्य पञ्चमोल्लासे व्यवस्थापितत्वात्।

प्रथमं विशेषणेनैव कारकान्वयः पश्चात्क्रिययेति व्युत्पत्तेरिति द्रष्टव्यम्। ननु यत्र कालविशिष्टेनोपात्तेनैव साधारणधर्मेणोपमानिर्वाहः, तत्र नेदं समाधानमित्याह—यत्रापीति। सामान्यधर्मिणेति। वस्तुगत्या भिन्नकालेति शेषः। उपमा अवगम्यत इत्यस्य तत्रापि न कश्चन कालभेदोऽस्तीति शेषः।

उदाहरति—यथा युधिष्ठिर इत्यादि। अत्र सत्यवादित्वमुपात्तमेव साधर्म्यम्। तच्च वस्तुगत्या भिन्न-कालमेवेत्यर्थः।

निर्दोषत्वमुपपादयति-तत्रेति। अनिर्दिष्टार्थाः 'प्रत्ययारित्रष्वपि कालेषु भवन्ति' इति न्यायात् सत्यवादि-त्वमतीतादिसाधारणमेव प्रतीयत इति न वर्तमानकालनियन्त्रितमित्यर्थः।

यद्यपि सत्यं वदतीत्यपि समभिव्याहृतं पदमस्ति, तथापि ण्यन्तपदोपस्थापितेनैव तादृशेन सत्यवादित्व-रूपसाधारणधर्मेणोपमानिर्वहि पश्चात् क्रियान्वये प्रतीयमानोऽपि कालभेदो न दूषक इति मन्तव्यम्।

रैपोषमिति। यद्यपि रैपोषमित्यत्रानुप्रयोगस्य निराकाङ्क्षत्वेऽप्यानुशासनिकत्वेन प्रयोगसाधुत्वाद् राया पुष्णातीत्येवान्वयबोधः।

तत्र च न पौनरुक्त्यम्, प्रकृते च तदभावात् पौनरुक्त्यमेव भवितुमर्हतीति न दृष्टान्तसङ्गतिः, तथापि 'घटेन घटवद् भूतलम्' इति वत् सत्यवदनेन सत्यवादीति न निराकाङ्क्षत्वमिति शब्दाधिक्येऽपि न निराकाङ्क्षत्वमित्यत्र दृष्टान्त इति ध्येयम्।

ननु सर्वथा निरवद्यमिति 'युधिष्ठिर इवायं ब्रवीति' इति वाक्ये णिन्यन्तपदाश्रयणादध्याहारनिमित्ताभावात् श्रूयमाणलडर्थकतवर्तमानकृतेः परित्यागे हेत्वभावाच्च सत्यवदनेन सत्यवाद्यमित्याकारकस्यान्वयबोधस्यैवासिद्धे-रिति भावः।

तदुक्तम्—स्थितेष्वनुप्रयोगेष्विति। विद्यमानेष्वित्यर्थः।

किञ्च, 'घटेन घटवद् भूतलम्' इत्यादौ लौकिकवाक्ये यथाकथञ्चित् समर्थनेऽपि काव्ये कथितपदत्वापु-ष्टार्थत्वादिदोषो दुर्निवार एवेति दिक्।

प्रस्तुतेति। औपम्यप्रतीतावपि कालादेरेकमात्रान्वयित्वादन्यत्र भङ्गेन भग्नप्रक्रमत्वानपायादित्यर्थः।

## सारबोधिनी

शङ्कते नन्विति। धर्मान्तरं कालाद्युपहितोपात्तभिन्नरूपम्। तत्र प्रत्यग्रेत्यत्र विविक्तत्वादिसाधारणधर्म-मादाय नायिकालतिकयोरौपम्ये पर्यवसिते पश्चाद्विभ्राजस इति क्रियान्वयः। तेन क्रियाया एकमात्रान्वयात् कथं पुरुषभेदो दोष इत्यर्थः। अन्यत्राप्येवं विषये क्वचित् वाच्यं क्वचित् प्रतीयमानं समानधर्ममादायौपम्ये पर्यवसिते पश्चादुपमेयेन क्रियान्वयान्न पुरुषादिभिः। ननु यत्र नास्ति समानधर्मान्तरमपि तु तिङन्तवाच्यमेवौपम्यघटकं यथा—युधिष्ठिर इवायं सत्यं वदतीत्यत्र, तत्र का गतिः? युधिष्ठिरो हि सत्यमवादीन्न तु सत्यं वदति। तथा चात्र सत्यवादित्वमेव साधर्म्यतश्च वस्तुगत्या भिन्नमेवेति कथमत्र पूर्वोक्तं समाधानमित्याह यत्रेति। तत्रेति। तथात्रापि प्रतीयगानेन सत्यवादित्वेन प्रथमं युधिष्ठिर सादृश्यं प्रतीयते ततः सत्याभिधानं विधीयते।

युधिष्ठिर इव सत्यवादी अयं सत्यं वदतीति। चैवं पौनरुक्त्यम्। आवश्यकादौ णिन्विधानात्। रैपोषं पुष्णातीतिवदयं युधिष्ठिर इव सत्यवादी तस्मात् सत्यं वदतीति समुदायार्थलाभात् अत्रापि न कालादिभेदः। प्रस्तुतवस्त्विति। एकरसप्रसूताया धियो भङ्गात्। अयमभिप्रायः। रैपोषं पुष्णातीति स्थले आनुशासनिकत्वेनानु-प्रयोगस्य साधुत्वार्थमात्रता। प्रकृते चानुशासनाभावात् पौनरुक्त्यमेवेति। तदिदमुक्तं न तु सर्वथा निरवद्यम्। किन्तु स्थितेष्विति। स्थितेष्वबुप्रयोगेषु विद्यमानेष्वित्यर्थः। तथा चौपम्यप्रतीतौ कालादेरेकमात्रान्वयित्वादन्यत्र भङ्गेन भग्नप्रक्रमत्वानपायादिति। अनुचितार्थतायामिति। आपाततः, वस्तुतस्तु अप्रयुक्तत्वमेव दोषः।

## काव्यप्रदीपः

ननूदाहृतेषु कथं दुष्टता। भिन्नकालसंभिन्नाद्धर्मादतिरिक्तमुपात्तं प्रतीतं वा कंचित्साधारणं धर्ममुपादा-योपमापर्यवसाने पश्चाद्भिन्नकालादिसंभिन्नधर्मान्वयात्। तथा हि विभ्राजस इत्यत्र विविक्तमूर्तत्वादिना लताना-यिकयोरुपमापर्यवसाने पश्चाद्विभ्राजस इत्यस्य नायिकामात्रान्वयेऽपि को दोषः। अथ यत्रोपात्तेनैव धर्मेणोपमानिर्वाहः स च भेदः कालभेदासंभिन्न एव तत्र का गतिः। यथा—'युधिष्ठिर इवायं सत्यवादी' इति। युधिष्ठिरो हि सत्यमवादीत्, न तु वदतीति चेत्, उच्यते। तत्रापि सत्यवादीति प्रतीतधर्मेणैवोपमित्यव्याघातः। न च

तथा सति सत्यवाद्ययं सत्यं वदतीति पर्याप्तौ सत्यं वदतीति पुनरुक्तमिति वाच्यम्। 'रैपोषं पुष्णाति' इत्याद्यनुप्रयोगवददोषत्वात्। रैपोषमित्यत्रार्थव्ययेन पोषणस्येवात्राप्याजानिकसत्यवादित्वस्य प्रतीतेरिति। सत्यमात्थ। किंतु स्थितेष्वनुप्रयोगेषु क्वचित्तथा पुनरुक्तिमात्रसमर्थनं न तु सर्वथैव तन्निरवद्यम्। प्रस्तुतस्य रसादेः प्रतीतिस्खलनात्। न च तदसिद्धम्। सहृदयसंवेद्यत्वात्। किं च उपात्तमनाहृत्य प्रतीतेनोपमा इति तुच्छम्। उपात्तक्रिययैव तद्विवक्षणात्।

### आदर्शः

नन्वेषूदाहरणेषु विभिन्नकालादिकेन धर्मेण नोपमा, किन्तु कालादिभेदरहितेनैव धर्मान्तरेण; स च धर्मः क्वचिदुच्चारितः क्वचित्तु व्यङ्ग्य इत्यतो न दोष इत्याशङ्कते—ननु समानमिति, समानं साधारणं धर्मान्तरमुच्चारितं वा प्रतीयमानं व्यङ्ग्यं वा उपादाय पर्यवसितायामुपमायामित्यर्थः। उपमेयस्येति, उपमेयस्यैवेत्यर्थः। 'प्रकृतधर्मः' उपमानान्वितकालादिरूपः। ननु यत्राविभिन्नकालादिकेनैव धर्मेणोपमायां तात्पर्यं तत्र का गतिरित्यत्राऽऽह—यत्रापीति। उपात्तेनैवेति, विभिन्नकालादिकेनेति शेषः। तादृशं स्थलं दर्शयति—यथा युधिष्ठिर इवेति। युधिष्ठिरे वर्तमानसत्यवदनबाधात्। कालभेदेऽपि यत्र तेनैवोपमा गम्यते तत्रापि समाधानमाह—तत्रेति। सत्यवादित्वेन तदाक्षिप्तेन समानधर्मेणात्रोपमेत्यर्थः। तदा च सत्यं वदतीत्यस्य पौनरुक्त्यमाशङ्क्य निषेधति—रैपोषमिति। धनपोषमित्यर्थः। णमन्तमिदम्। णमन्तधात्वर्थस्य च अनुप्रयुक्तधात्वर्थकारणताऽवगम्यते, तथा च धनपोषेण पुष्यतीत्यर्थः। पोषणसामान्ये च पोषणविशेषस्य हेतुत्वान्नाऽऽत्माश्रयः। तद्वद् युधिष्ठिरतुल्यसत्यवदनेन सत्यं वदतीत्यर्थः। शिक्षितो नृत्यतीत्यादौ कर्तृविशेषणस्य शिक्षितत्वादेरिव कर्तृविशेषणस्य सत्यवादित्वस्य क्रियायां हेतुत्वावगमाद् युधिष्ठिरतुल्यसत्यवदनेनेति लभ्यते इति बोध्यम्। सत्यमित्यादिनाऽस्याल्पदोषत्वं न सर्वथा काव्ये हेयत्वप्रयोजकत्वमिति प्रतिपादितम्।

### सुधासागरः

ननु समानमित्यादि। अयमाशयः—ननूदाहृतेषु कथं दुष्टता, भिन्नकालसम्भिन्नाद्धर्मादतिरिक्तमुपात्तं प्रतीतं वा कञ्चित्साधारणं धर्ममुपादायोपमापर्यवसाने पश्चाद्भिन्नकालादिसम्भिन्नधर्मान्वयात्। तथाहि—'विभ्राजते' इत्यत्र विविक्तमूर्त्तित्वादिना लतानायिकयोरुपमापर्यवसाने पश्चात् 'विभ्राजते' इत्यत्र विविक्तमूर्त्तित्वादिना लतानायिकयोरुपमापर्यवसाने पश्चात् 'विभ्राजसे' इत्यस्य नायिकामात्रान्वयेऽपि को दोषः।

अथ यत्रोपात्तेनैव धर्मेणोपमानिर्वाहः स च धर्मभेदः कालभेदादिसम्भिन्न एव तत्र का गतिः, यथा युधिष्ठिर इवायं सत्यवादीति। युधिष्ठिरो हि सत्यवादीदिति चेत्। उच्यते। तत्रापि सत्यवादीति। युधिष्ठिरो हि सत्यमवादिति चेत्। उच्यते। तत्रापि सत्यवादीति प्रतीतधर्मेणैवोपमेत्यव्यघातः। न च तथा सति सत्यवाद्ययं सत्यं वदतीति पुनरुक्तमिति वाच्यम्। रैपोषं पुष्णातीत्यनुप्रयोगवददोषत्वात्। रैपोषमित्यत्रार्थव्यत्ययेन पोषणस्येवात्राजानिकसत्यवादित्वस्य प्रतीतेरिति। सत्यमात्थ। किन्तु स्थितेष्वनुप्रयोगेषु क्वचित्तथापुनरुक्तिमात्रसमर्थनं न तु सर्वथैव तन्निरवद्यम्, प्रस्तुतस्य रसादेः प्रतीतिस्खलनात्। न च तदसिद्धम्, सहृयवेद्यत्वात्। किञ्च उपात्तधर्ममनादृत्य प्रतीतेनोपमेति तुच्छम्, उपात्तक्रिययैव तद्विविक्षणात्। उपद्विस्थितसाधर्म्यं विहायानुपस्थितसाधर्म्यकल्पने श्रुतहान्यश्रुतकल्पनाभ्यामास्वादप्रकर्षप्रतिबन्धात्। एवञ्च 'गङ्गेव प्रवहतु' इत्यादौ अत्युज्ज्वलेत्यादिपदाध्याहारे दोषोद्धारेऽपि न सर्वथा निरवद्येतेति।

असादृश्यासंभवावप्युपमायाम् अनुचितार्थतायामेव पर्यवस्यतः । यथा
ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ॥ ५९ ॥

अत्र काव्यस्य शशिना, अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

---

### बालचित्तानुरञ्जनी

दोषा इति शेषः । इति परिहारग्रन्थः । असादृश्यमसंभवश्चेति उपमादोषावनुचितार्थतायामन्तर्भूताविति त्याह असादृश्येति । असादृश्यमुदाहरति यथेति । असादृश्यस्यानुचितार्थत्वमाह अत्रेति । ननु अर्था रश्मय इव प्रीतिदायिन इति साधर्म्यसिद्धेः काव्यशशिनोरपि सिद्धिरिति चेन्मैवम् इतरेतराश्रयपराहतत्वात् । तथा च वामनः "तदेवमितरेतराश्रयदोषो दुरुत्तरं" इति ।

### विवेकः

उपमानस्याप्यनुपपन्नत्वसम्भवः । तत्राद्यं यथा ग्रथ्नामीति—काव्यस्य शशिनाऽसादृश्यं, तत्र न कोऽपि प्रसिद्धो गुणः । "ननु चार्थानां रश्मितुल्यत्वें सति काव्यस्य शशितुल्यत्वं भविष्यति । काव्यस्य शशितुल्यत्वे सिद्धेऽर्थानां रश्मितुल्यत्वं सिध्यति, न त्वर्थऐनां रश्मीनाञ्च कश्चित् सादृश्यहेतुः प्रतीतो गुणोऽस्ति । तदेवमन्योन्यान्वयदोषो दुष्परिहर इति (का. अ. सू. वृ. ४/२/१६) ।

### दीपिका

ग्रथ्नामीत्यादौ ग्रथनमेव चन्द्रेऽसम्भावितयोपमानगमकम् तेनानुदयित्वादिकल्पनाऽपि न कारणं प्रसिद्धिविरहात् । अनुचितार्थत्वमिति ।

### दर्पणः

अप्रस्तुतेति प्रस्तुतं काव्ये मुख्यभूतं वस्तु रसादि चेत् सहृदयः प्रमाणं साक्षिणः असादृश्यं उपमानोपमेयोरसाधर्म्यं ग्रन्थामित्यादौ न केवलं ग्रथनादेरेव चन्द्राद्यसंभवित्वेन सादृश्यं किंत्वानंददायित्वादेरपि प्रसिद्ध-विराहात् । क्रोवोवदादय ? इत्यादि शब्देन मन्ये शंके न्यूनमित्यादि शब्दसंग्रहः केवलस्य दर्शितोदाहरणादन्यत्र प्रयुक्तस्य तस्य साधर्म्यमात्रस्य तस्यामुत्प्रेक्षितं संभावनाविषयं निरुपारव्यमनीकं शशविषाणादि प्ररव्यं तस्य संभावना विकस्य वस्तुनः सत्यसमनुनय उपपत्तिसंपादनाय संभावनयैव निराकृतायेत्यर्थः । उपमानविशेषं सदृशवस्तु विशेषणं प्रकृतगततया तद्व्यवहारं समारोपय अत्र पतितग्रंथोऽघः ।

### साहित्यचूडामणिः

यौ पुनरसादृश्यमसम्भव इत्युपमादोषौ तावनुचितार्थतया व्याप्तावित्याह—असादृश्येति । काव्यशशिनोः सादृश्ये प्रसिद्धिर्नास्ति । नन्वर्था रश्मय इव प्रीति प्रदायिन इति साधर्म्यसिद्धेः काव्यशशिनोरपि तत्सिद्धि-

रित्याशङ्क्याह—अर्थनामिति । इतरेतराश्रयपराहतमेतदिति यावत् । यद् वामनः "तदेवमितरेतराश्रयदोषो दुरुत्तरः (अधिः ४० अ. २ सू. १६) इति । तस्माद् 'असादृश्यहताप्युपमा तन्निष्ठाश्च कवय' इति न्यायाद् असादृश्येऽप्युपमाया निर्वाह इत्यनुचितार्थ त्वमिति ।

### सम्प्रदायप्रकाशिनी

असादृश्यमसम्भवश्चोपमायामनुचित्वमेवेत्याह—असादृश्येत्यादि ।

ग्रथ्नामीति । ग्रथनं काव्यधर्मत्वादुपमासाधकम् । अत्र काव्यशश्यादेरसादृश्यादनौचित्यम् ।

### विस्तारिका

अनुचितार्थतायामिति । इदमापाततः । वस्तुतस्त्वप्रयुक्तत्वमेवात्र दोषः, अन्यथा कष्टार्थोदाहरणे 'महाकाव्यव्योम्नि' इत्यादौ यथाकथञ्चित् साधर्म्येणेवात्राप्याह्लादकत्वादिना काव्यशशिनोरौपम्याक्षतेरिति मन्तव्यम् ।

### काव्यप्रदीपः

असादृश्यासं भवावप्युमादूषणे अनुचितार्थतायामेव पर्यवस्यतः । यथा 'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्' । अत्र काव्यस्य शशिनार्थानां च रश्मिभिः साधर्म्यं न क्वापि प्रसिद्धमिति तत्रोपमानिबन्धनमनुचितार्थमिति ।

### आदर्शः

असादृश्येति । सादृश्यराहित्यमुपमानासम्भवश्चेत्यर्थः । ग्रथ्नामीति । काव्यं शशीवेत्युपमा । यद्यपि रूपकमपीदं सम्भवति तथाऽपि तत्राप्युपमानोपमेयभावस्यैव प्रयोजकत्वात् तत्राप्यसादृश्यं दोष इति बोध्यम् । अत्र काव्यशशिनोरर्थरश्म्योश्च उपमायामसादृश्यं ग्राहयति—अत्रेति ।

### सुधासागरः

असादृश्येत्यादि । असादृश्यासम्भवावप्युपमादूषणे अनुचितार्थतायामेव पर्यवस्यतः । यथा—ग्रथ्नामीति ।

अत्र काव्यस्य शशिनाऽर्थानां च रश्मिभिः साधर्म्यं न क्वापि प्रसिद्धमिति तत्रोपमानिबन्धनमनुचितार्थत्वमिति ।

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।

जाज्वल्यमाना इव वारिधारा दिनार्धभाजः

परिवेषिणोऽर्कात् ॥ ५९८ ॥

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलात् निष्पन्त्यो न संभवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

---

**सङ्केतः**

न सम्भवन्तीति । कथं तदुपमानीभविष्यन्तीत्यर्थः ।

**बालचित्तानुरञ्जनी**

असंभवमुदाहरति निपेतुरिति । तादृशी वारिधारा उपमानतया नोपपद्यत इत्यनुचितार्थत्वं दोष इत्याह अत्रापीति ।

**काव्यादर्शः**

'परिवेषिणः' इति । अनेन धनुर्मण्डलमध्यभावत्वं प्रतिरूपितम् । न संभवन्तीति । न हि यन्न संभवति स्वयं तद् उपमानत्वेन स्यात् ।

**विवेकः**

द्वितीयं यथा निपेतुरिति । प्रथमतो दिनं शशाङ्क इति दिनानुभावः । अत्रानुचितार्थं व्यक्तमेव । तदाह भामहः—(का. अ. २/४८-५१) कथं पातोऽम्बुधाराणां स्वनन्तीनां विवस्वतः । पुञ्जीकृतमिव ध्वान्तमेष भाति मतङ्गजः ॥ सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोर्जितम् । असम्भवादयं युक्त्या तेनासम्भव उच्यते ॥ तत्रान्यदुपमात्वेन कः कुर्यादुपमां कृती । को नाम वह्निनौपम्यं कुर्वीत शशलक्ष्मणः ॥ यस्त्वत्रातिशयवानर्थः कथं सोऽसम्भवः सतः । दृष्टं चातिशयार्थत्वमुपमोत्प्रेक्षयोर्यथा । तस्माद्विरुद्धस्यातिसंग्रहो न कर्तव्य इति तात्पर्यार्थः ।

**दीपिका**

तादृशस्य तादृशं प्रत्युपमानानुचित्त्वात् उपनिबध्यमान इत्यनन्तरमयमिति शेषः । अनौचित्यमेव पुष्णातीत्यसदर्थोपनिबन्धस्यात्यनुचितत्वादिति भावः ।

**साहित्यचूडामणिः**

असम्भवमाह—निपेतुरिति । न सम्भवन्तीति । तादृश्यो वारिधारा उपमानतया नोपपद्यन्ते । तस्मादनुचितार्थत्वं दोषः ।

## सम्प्रदायप्रकाशिनी

निष्पेतुरिति । अत्र पुनर्मण्डलाज्ज्वलाद्वारिधारानिष्पातासम्भवादनौचित्यम् । उत्प्रेक्षायां यथाशब्द (स्य) सम्भावनायामशक्तिरवाचकत्वमित्याह—उत्प्रेक्षायामपीत्यादि । यथाशब्दो हि तथा शब्दसमभिव्याहृतः कदाचित् सम्भावनापरोऽपि स्यात् 'तथाह्लादकं मुखं यथैतच्चन्द्र' इत्यादौ । केवलस्तु साधर्म्यप्रतिपादन एव पर्याप्तः । साधर्म्यस्य च सम्भावनात्मिकायामुत्प्रेक्षायामविवक्षा ।

## विस्तारिका

असम्भवस्थलेऽपि यत्रोपमानमुपमेयं वात्यन्तमसम्भाव्यमेवोपनिबध्यते, तत्रैव दोषः, यथोदाहृते 'जाज्वल्यमाना' इत्यादौ वारिधाराजातीयस्य कदापि सूर्यजातीयत्वाप्रसिद्धेः । यथा 'मेरुगिरेः शृङ्गं तोयवर्षेण तोयद' इत्यादौ तु कुत्रचिद् गिरिजातीयशृङ्गे मेघजातीयकर्तृकवृष्टिसम्भवान्न दोष इति ध्येयम् ।

## सारबोधिनी

निपेतुरिति । दिनार्घभाजो मध्याह्नभाजः ।

## काव्यप्रदीपः

**"निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।**
**जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिमोऽर्कात् ॥'**

अत्रापि ज्वलदम्बुधारायाः सूर्यमण्डलान्निपतनमसंभवीति तन्निबन्धनमनौचित्यं पुष्णाति ।

## आदर्शः

उपमानासम्भवमुदाहरति—निष्पेतुरिति । आकर्षकृष्टाद्धनुषो वीरेण मुच्यमानानां शराणां वर्णनमिदम् । धनुर्मण्डलमध्यभाज आस्यादिव तस्य शराः निष्पेतुः । आकर्णधनुःकर्षणेन धनुर्मण्डलमध्ये आस्यदर्शनात् । परिवेषिणः परिवेषवेष्टिताद् दिनार्द्धभाजो मध्याह्नीयादर्काज्जाज्वल्यमाना वारिधारा इव । धनुर्मण्डलस्थाने परिवेषः । न चात्राभूतोपमेति वाच्यम्, सम्भावनयाऽपि प्रसिद्धिसम्भव एव तथात्वादिति व्याख्यातं 'जङ्घाकाण्डोरुनाल' इत्यादिश्लोकव्याख्यावसरे । असम्भवं ग्राहयति—अत्रापीति । न केवलं वाच्यार्थस्य निन्दाव्यञ्जनादेवानौचित्यम्, अपि तु वाच्यार्थस्यासम्भवोऽप्यनौचित्यमित्यपि-कारार्थः ।

## सुधासागरः

निपेतुरेति । स्पष्टम् । इन्द्रवज्रा छन्दः । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणात् ।

अत्रापि ज्वलदम्बुधारायाः सूर्यमण्डलान्निष्पतनं न सम्भवतीति तन्निबन्धनमनौचित्यं पुष्णाति ।

उत्प्रेक्षायामपि संभावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते न यथादोऽपि केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात् तस्य चास्याविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः । यथा

उद्ययौ दीर्घिकागर्भात् मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासंकुचितं यथा ॥ ५९९ ॥

---

### सङ्केतः

केवलस्य । असमासस्थस्य । समासस्थस्तु योग्यताद्यर्थवादी स्यात् । तस्य च साधर्म्यस्य च । अस्यां उत्प्रेक्षायाम् । तत्र सम्भावनाभिधाने ।

मेचकोत्पलं नीलोत्पलम् । प्रख्यं निर्गताभिधानप्रत्ययम् ।

### बालचित्तानुरञ्जनी

उत्प्रेक्षादोषमप्यवाचकत्वेऽन्तर्भावयति उत्प्रेक्षायामपीति । इवादय इव यथाशब्दोऽपि संभावना द्योतयितुमपकृतम्[?] तस्य तथा शक्त्यभावात् । क्वचित् समर्थस्यापि मन्ये शङ्के इत्यादेरुपमायामसामर्थ्यं केवलस्य समासरहितस्येत्यर्थः । अस्यामित्युत्प्रेक्षायाम् । सामर्थ्यप्रतिपादने शक्तिः सामर्थ्यमत्रेत्युत्प्रेक्षायां अवाचकत्वं दोषः । इव शब्दस्य साधर्म्यसंभावनां च प्रकटयितुं पाटवमस्ति । यथाशब्दस्य तु साधर्म्यमेवेति भावः । उत्प्रेक्षादोषमुदाहरति यथेति । नारीलोचनचातुर्यशङ्कासङ्कुचितं ध्रुवमित्युक्तः पाठः ।

### काव्यादर्शः

केवलस्येति, असमासस्थस्य । समासे तु असौ योग्यताद्यपि प्रतिपादयति । तस्य चेति, साधर्म्यस्य । तत्रेति, संभावनवाचकत्वे ।

### विवेकः

उत्प्रेक्षायामपीति—उपमायामतिशयस्येष्टत्वात् । केवलस्येति—असमासस्य, यथाशब्दस्य समासे त्वसौ योग्यताऽऽद्यपि प्रतिपादयति—उद्ययाविति । मेचकोत्पलमिति—नीले वक्तव्ये मेचकमपि चिन्त्यम् ।

### दीपिका

ध्रुवेवादय इत्यादिपदेन मन्ये किं प्रायो नूनमित्यादिसंग्रहः । केवलस्योदाहरणादन्यत्र प्रयुक्तस्य । न केवलस्य उत्प्रेक्षादन्यत्र प्रयुक्तस्येति व्याख्या ज्यायसी । इवादिसाधारण्यात् साधर्म्ये सादृश्यमेव, न तु सम्भावना ।

अविवक्षितप्रधानत्वादुत्प्रेक्षायामशक्तिः सम्भावनाबोधनासामर्थ्य प्रचुरतरप्रयोग विरहे सन्देहः । न निश्चितं तस्य यथा शब्दस्य शक्तिः कुत्रान्तर्भवतीत्यवाचकत्वं दोष इति ।

### साहित्यचूडामणिः

अथोत्प्रेक्षादोषोऽवाचकत्वाव्यभिचरित इत्याह—उत्प्रेक्षायामपीति । इवादय इव यथाशब्दोऽपि सम्भावनां द्योतयितुमर्हतीत्ययुक्तम, तस्य तथा शक्त्यभाषात्, क्वचित् समर्थस्याप्यन्यत्रासामर्थ्यदर्शनात् । यथोत्प्रेक्षां द्योतयितुं समर्थस्यापि मन्येशक्के-इत्यादेरुपमां द्योतयितुम सामर्थ्यं सम्भावनां च प्रकटयितुं पाटवमस्ति । यथा शब्दस्य तु साधर्म्यमेवेति यावत् ।

उद्ययाविति । ध्रुवमिति युतः पाठः ।

### सम्प्रदायप्रकाशिनी

उद्ययाविति । अत्र यथेत्यस्य सम्भावनावगतावशक्तिरवाचकत्वम् ।

उत्प्रेक्षितस्यापि तात्त्विकरूपविरहिणो निरुपाख्यकल्पस्य समर्थनायार्थान्तरन्यासो निर्विषयत्वादनौचित्यामित्यत आह—उत्प्रेक्षायामपीत्यादि । एतस्य अर्थान्तरन्यासस्य ।

### मधुमती

साधर्म्यमेवेति । अत्रावधारणं सम्भावनापेक्षया अर्थान्तरस्यापि यथाशब्दवाच्यत्वात् ॥

### विस्तारिका

केवलस्येति । असमस्तस्येत्यर्थः । यथायोगं यथार्थमित्यादौ यथाशब्दस्य योग्यानतिक्रमादिबोधकत्वादित्यर्थः ।

### सारबोधिनी

उद्ययाविति । मुकुलं मुकुलितम् । निरूपाख्यमलीकम् ।

### काव्यप्रदीपः

उत्प्रेक्षायामपि ध्रुवेवादय एव शब्दा व्यक्तमुत्सहन्ते, न तु यथाशब्दोऽपि । केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं समर्थत्वात् । अत उत्प्रेक्षायां यथाशब्दो पादानेऽवाचकत्वमेव । यथा—

**'उद्ययौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम् ।**
**नारीलोचनचातुर्यशङ्कासंकुचितं यथा ॥'**

निर्विषयत्वमप्युत्प्रेक्षादूषणमनुचितार्थमेव । यत्तात्त्विरूपाभावान्निरुपाख्यप्रख्यं तत्समर्थनाय यदर्थान्तरन्यासोपादानं तद्रूपं हि तत् ।

## काव्यप्रकाशखण्डनम्

उत्प्रेक्षायामपि संभावनध्रुवादयशब्दा एव वक्तुं प्रभवन्ति न तु यथाशब्दोऽपि। तत्र तदुपादानं दोष:।

यथा—

**उद्ययौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम्।**
**नारीलोचनचातुर्य्यशङ्कासंकुचितं यथा॥**

दीर्घिकागर्भात् सरोवरमध्यान्मुकुलं उद्ययौ मेचकोत्पलं कर्बुरकमलम्, नार्या: स्त्रियो लोचनानां चातुर्य्यं तस्मात् या शङ्का भयं तेन सङ्कुचितमिवेत्यर्थ:। एवं साधारणविशेषणबलादेव समासोक्तिरनुक्तमप्युपमान विशेषं प्रतिपादयतीति तस्यात्र पुनरुपादाने दोष:।

## आदर्श:

यथा-शब्दस्योत्प्रेक्षावाचकत्वाभावादुत्प्रेक्षायां तस्यावाचकत्वमेवं दोष इत्याह—उत्प्रेक्षायामपीति। केवलस्यास्येति असमासस्थस्येत्यर्थ:। समासे तु साधर्म्यार्थकत्वमस्य नास्तीति भाव:। यथासम्भवम्, यथायोगम्, यथार्थम्, यथासंख्यम्, यथानामगोत्रस्येत्यादिषु। तस्य चास्यामिति। तस्य साधर्म्यस्य अस्यामुत्प्रेक्षायामित्यर्थ:।

उद्ययाविति। मेचकम् उत्पलं पुष्पं यस्मात् तादृशं मुकुलं दीर्घिकागर्भादुद्ययौ इत्यर्थ:। अत्रोत्प्रेक्षते—नारीलोचनेति। शङ्का पराजयभयम्। अत्र यथा-शब्द उत्प्रेक्षाऽवाचक:। इव-शब्दतुल्यपर्यायकत्वमत्र शक्तिभ्रम-बीजम्।

## सुधासागर:

उद्ययाविति। मुकुलं मुकुलितं मेचकोत्पलं नीलोत्पलं नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा सुन्दरीनय-नचातुर्यमधिकमिति शङ्कया सङ्कुचितमिव दीर्घिकागर्भाद्, वापीमध्यादुद्ययौ प्रादुरासीदित्यर्थ:।

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वात् निरुपाख्यप्रख्यम् तत्समर्थनाय यत् अर्थान्तरन्यासोपादानम् तत् आलेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्य, अनुचितार्थतैव दोषः। यथा

**दिवाकराद्रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम्।**
**क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव॥ ६००॥**

अत्राचेतनस्य तमसो दिवाकरात्त्रास एव न संभवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम्। संभावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः।

---

### सङ्केतः

प्रतिभासमानस्य उत्प्रेक्षणरूपस्य। व्यर्थ एवेति। उत्प्रेक्षामात्रमेवात्र युक्तम्, न तत्समर्थकः अर्थान्तरन्यासः। 'दिवाभीत' शब्दस्य उलूकार्थत्वेन समुचितोपमाख्यायां नैतद्दोषावतारः।

### बालचित्तानुरञ्जनी

इदानीमुत्प्रेक्षामूलस्यार्थान्तरन्यासस्यापि अनुचितार्थत्वमेवेत्याह उत्प्रेक्षितमिति। निरुपाख्यप्रख्यमित्यसत्यप्रायं तत्समर्थनाय उत्प्रेक्षितस्यार्थस्य समर्थनाय। गगनतल इति। समर्थनीयस्य वास्तवस्याभावादित्यर्थः। उदाहरति यथेति। अत्रासंभावनैकशरणत्वं परिपोषयति अत्राचेतनस्येति। तदेकशरणतायां नार्थान्तरन्यासापेक्षा निर्विषयत्वात्। एवञ्चोत्प्रेक्षैव दुर्लक्ष्येत्याह। संभावितेनेति।

### काव्यादर्शः

व्यर्थ एवेति। उत्प्रेक्षामात्रमेवात्रोचितं, न त्वर्थान्तरोपन्यासस्तत्समर्थनार्थ इति तात्पर्यम्।

### विवेकः

निरुपाख्यप्रख्यं निर्विकल्पतुल्यमित्यर्थः। असमीचीनमसङ्गतम्। उच्चैः शिरसामनवतशिरसाम्।

### दीपिका

उत्प्रेक्षितं सम्भावनाविषयः। तर्हि केन स्वरूपेण निरुपाख्यमलीकं वाजिविषाणादिवदुत्प्रेक्षितम्। तादृगेतस्य सम्भाव्यमानस्य न कदाचिदननुपपत्तिरेव भवतीति सम्भावनयैव भगवत्या निखिलानुपपत्तिनिरासात्।

### साहित्यचूडामणिः

अथोत्प्रेक्षामूलस्यार्थान्तरन्यासस्याप्यनुचितार्थत्वमवद्यमित्याह—उत्प्रेक्षितमिति । निरुपाख्यप्रख्य-मिति । असत्यप्रायत्वात् । तत्समर्थनाय उत्प्रेक्षितस्यार्थस्य समर्थनाय । गगनतल इति । समर्थनीयस्य वास्तवस्या-भावात् । दिवाकरादिति ।

अत्र सम्भावनैकशरणत्वं दर्शयति—अचेतनस्येति । तदेकशरणतायां नार्थान्तरन्यासापेक्षा, निर्विषय-त्वात् । एवञ्च उत्प्रेक्षैव दुर्लक्षेत्याह—सम्भावितेनेति । स्वत;-सम्भावनमात्रप्रणीतस्य स्वरूपातिरिके कानुपपत्ति, कश्च तत्समर्थनार्थं यत्नः, इत्यलं महाकविप्रमादपरीक्षापातकेन ।

### सम्प्रदायप्रकाशिनी

दिवाकरादिति । अचेतनस्य तमसो दिवाकरात् त्राससम्भावनमतात्त्विकं, तत्प्रयोजितमद्रिणा त्राणं बाढ-मेवातात्त्विकमिति निर्विषयत्वान्नैतदर्थान्तरन्यास सामर्थ्यम् । अध्यवसितेन तु रूपेण भयत्राणयोर्ननूपपत्तिरिति समर्थननैरर्थक्यम् ।

तदेतदाह—अत्राचेतनस्येत्यादि ।

### मधुमती

दिवाकरादिति । इदं च अर्थस्य स्वतस्सम्भवितपक्षे । कविप्रौढोक्तिसिद्धे तु न दोषः ।

### विस्तारिका

निरुपाख्यमलीकम्, शशविषाणगगनकुसुमादि, तत्प्रख्यं तत्तुल्यमित्यर्थः ।

दिवाकरादिति । अत्र च स्वतःसम्भवित्वपक्षे दूषणमिदम्, कविप्रौढोक्तिनिष्पन्नपक्षे तु न दोषः ।

भीतमिवेत्यादावुत्प्रेक्षायाः स्वयमुदाहृतत्वादिति यद् भ्रान्तसमाधानम्, तन्मन्दम्, उत्प्रेक्षासमर्थकार्थान्तर-न्यासस्यैवात्र दूषितत्वात् । उत्प्रेक्षायाः पुनरदुष्टत्वादेवेति ।

### सारबोधिनी

दिवाकरादिति । अत्र स्वतः संभवितपक्षे दूषणमिदं कविप्रौढोक्तिनिष्पन्नत्वपक्षे पक्षे न दोषः । 'पीडनभीरु' इत्यादौ स्वयमुदाहृतत्वादिति ।

### काव्यप्रदीपः

यथा—

**'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।**
**क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥'**

अत्र तमसस्त्रास एवासंभवी । तमसोऽचेतनत्वात् । तत्कथं तत्प्रयुक्तमद्रिणा तत्परित्राणाम् । उत्प्रेक्षित-त्रासवत्तया प्रतीतस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनाथ यत्नः ।

## आदर्शः

उत्प्रेक्षितार्थस्यालीकत्वात् तत्समर्थनायार्थान्तरन्यासोऽप्यनुचितार्थान्तरगत इत्याह—उत्प्रेक्षितमपीति । तात्त्विकेन यथार्थेन; निरुपाख्यमुपाख्यारहितमलीकमित्यर्थः । उपाख्या संज्ञा । संसर्गालीकत्वेऽपि पदार्थानलीक-त्वात् तत्प्रख्यं तत्तुल्यमित्यर्थः । आलेख्यं चित्रम् । 'निर्विषयत्वम्' अर्थान्तरन्यासस्य तादृशविषयराहित्यम्, अमि-थ्याकरणरूपस्य समर्थनस्य अलीकार्थाविषयत्वादिति भावः ।

दिवाकरादिति । यो हिमालयो गुहासु लीनमन्धकारं दिवाकराद् रक्षति । तत्रोत्प्रेक्षते—दिवेति । दिवा दिवसे भीतमिव सूर्यादिति शेषः । दिवा दिवसे रक्षतीति वाऽन्वयः । तादृशभीतरक्षणं सामान्येन समर्थयति—क्षुद्रेऽपीति । न केवलं शरणपन्ने महति जन एव उच्चैः शिरसां विभुत्वाद्युन्नतशिरसाम् उच्चशिखराणाञ्च रक्षणप्र-योजकं ममत्वम् अपि तु क्षुद्रेऽपीत्यर्थः । अत्र वक्ष्यमाणशरणागतसामान्येन वक्ष्यमाणविशेषस्य तमसः समर्थनम् । उच्चैः शिरसां महताम् । अनौचित्यं ग्राहयति—अत्रेति । ननु यद्यलीकार्थसमर्थनायार्थान्तरन्यासोऽनुचितस्तत् कथं 'सुसितवसनालङ्कारा‌या' मित्यत्र श्रूयमाणकीन्यां वस्तुतोऽप्रकाशिकयाऽप्यभिसारिकाया निःशङ्कप्रियगृहगमनम-लीकं 'क्व नासी'त्यनेन समर्थितम्, इत्यत आह—सम्भावितेनेति । तत्र हि नोत्प्रेक्षा, किन्त्वलीकमपि कीर्त्या सुखेन प्रियगृहगगमनं प्रौढोक्तिवशादाहार्य निश्चितम् । अतस्तत्रानुपपत्त्यभावे तन्निराकरणाय तस्यार्थस्य सत्यताप्रति-पादनरूपं समर्थनमर्थान्तरन्यासेन कृतम् । प्रकृते उत्प्रेक्षया सम्भावितमेव गिरिणा तमसो मोक्षणमलीकत्वेनैव प्रतिभासमानम् अप्रौढोक्तिसिद्धत्वेनाऽऽहार्यज्ञानप्यविषयः । अर्थान्तरनिरसनीयानुपपत्तिस्तत्र नावतरत्येवेत्यर्थः ।

## सुधासागरः

उत्प्रेक्षितमपीत्यादि । निरुपाख्यमलीकम् । निर्विषयत्वमप्युत्प्रेक्षादूषणमनुचितार्थमेव । यत्तात्त्विकरूपा-भावान्निरुपाख्यप्रख्यं तत्समर्थनाय यदर्थान्तरन्यासोपादानं तद्रूपं हि तदिति भावः । यथा—दिवाकरेति । स्पष्टम् । उपेन्द्रवज्रा छन्दः । 'उपेन्द्रवज्रा जतजास्ततो गौ' इति लक्षणात् ।

अत्रेत्यादि । अत्र तमसस्त्रास एवासम्भवी, तमसोऽचेतनत्वात्, तत्कथं तत्प्रयुक्तमद्रिणा तत्परित्राणमि-त्यर्थः । ननु स्वतः सम्भवित्वपक्षे दूषणमिदम् । कविप्रौढोक्तिनिष्पन्नत्वपक्षे तु न दोषः । 'पीडनभीत' इत्यादौ उत्प्रेक्षाया, स्वयमुदाहृतत्वादित्यत आह—सम्भावितेनेत्यादि । अयमाशयः—उत्प्रेक्षितत्रासवत्तया प्रतीस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनाय यत्न इति ।

साधारणविशेषणवशादेवः समासोक्तिरनुक्तमपि, उपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावात् अनुपादेयत्वं यत् तत् अपुष्टार्थत्वं पुनरुक्तं वा दोषः । यथा

**स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।**

**अतनुमानपरिग्रहया स्थितं रुचिरया चिरयापि दिनश्रिया ॥६०१ ॥**

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन ॥

---

**सङ्केतः**

तस्य उपमानविशेषस्य ।

स्पृशतीति । तापः स्वेदोऽपि । मानशब्दः परिमाणाभिमानयोः । चिरयायिदिनः दीर्घाहोनिदाघः । सदृशेति । 'रवेः करैः' इति सदृशं अनुकूलं विशेषणम् । दिनश्रियास्तु 'तापये' ति विशेषणम् । नायकतयेति । नायकश्च नायिका चेत्येकशेषः । व्यक्तिः लिङ्गम् । तद्विशेषः पुंस्त्वं स्त्रीत्वं च ।

**सङ्केतः (रुय्यकः)**

केवलस्येति असमासस्थस्य, समासत्वेऽसौ योग्यताद्यपि प्रतिपादयति । कराः पाणयोऽपि । तापः खेदोऽपि । मानः परिमाणमभिमानश्च । चिरयापि (० यायि) दिनो दीर्घाहो निदाघः । व्यक्तेर्लिंगस्य विशेषः पुंस्त्वं स्त्रीत्वञ्च । नायकतयेति—नायकश्च नायिका चेत्येकशेषः । भास्वन्तौ करौ दीप्यमानौ पाणी, भास्वश्च कराः घृणयः, अस्वापं दुर्लभं यत् फलं तत्र लुब्धानामीहितं प्रददाति । स्वापस्य फले विश्रान्तौ यो न लुब्धस्तत्र हितं प्रददाति च । न कम्पते न बिभेतीत्यर्थः ।

**बालचित्तानुरञ्जनी**

अथ समासोक्ताबुपमानविशेषप्रकाशतेत्यवद्यमपुष्टार्थत्वं पुनरुक्तत्वं वा स्यादिति समर्थयति साधारणेति । एवकार उपमापेक्षामपहस्तयति । अनुक्तमपीति । तादृक्स्वभावत्वात् तस्याः । तस्योपमानस्य प्रयोजनाभावादपुष्टार्थता अनुपादेयत्वात् पौनरुक्त्यं वा दोष इत्यर्थः । उदाहरति यथेति । तिग्मरुचौ सूर्ये, करैः किरणैः, ककुभः दिशः, स्पृशति सति, दयितेव जृम्भिततापया अतनुमानपरिग्रहया रुचिरया चिरयाऽपि दिनश्रिया स्थितम्, करा रश्मयः पाणयोऽपि, अभिमानः मानं नाडिकाधिक्यम्[?] । अत्र समासोक्तेरपुष्टार्थत्वमाह अत्रेति । सदृशविशेषणमनुकूलविशेषणम् । रवौ करौ स्पृशतीति । दिनश्रिया विजृम्भिततापयेति विशेषणम् व्यक्तिविशेषेति । व्यक्तिर्लिङ्ग

तिग्मरुचावित्यत्र पुल्लिङ्गं; ककुभ इति दिनश्रियेति स्त्रीलिङ्गं; नायकतयेति। नायकश्च नायिका चेति पुमान्स्त्रियेति कृतैकशेषो नायकशब्दः। अन्यथा तिग्मरुचेः ककुभां च वक्तुमयुक्तत्वादतः किमति कृतं अपुष्टार्थेन पुनरुक्तेन दयितयेति स्वशब्दप्रयोगेनेत्यर्थः।

## काव्यादर्शः

समासोक्तिदोषानाह—साधारणेति। 'मानः परिमाणमभिमानश्च। चिरयायिदिनो दीर्घाहा निदाघः'। यथा सदृशविशेषणेति। 'रेवः करैः' इति सदृशमनुकूलं विशेषणं, दिनश्रियास्तु 'विजृम्भिततापया' इत्यादि सदृशं विशेषणम्। व्यक्तेर्लिङ्गस्य विशेषः पुंस्त्वं स्त्रीत्वं च। नायकतयेति। नायकश्च नायिका चेति एक शेषः।

## विवेकः

समासोक्तावुपमानमनुपादेयं प्रयोजनाभावादिति यदुक्तं तदप्रस्तुतार्थत्वपौनरुक्तथाभ्यां नातिरिच्यत इत्याह स्पृशतीत्यादि। कराः पाणयोऽपि, तापः खेदोऽपि, मानः परिमाणञ्च। दिनश्रिया इति—दीर्घाहो निदाघः। व्यक्तेर्लिङ्गस्य विशेषः। पुंस्त्वं स्त्रीत्वञ्च। नायकतयेति—नायको नायिका चेत्येकशेषः। अत्र तिग्मरश्मिर्नायको दिशश्च नायिका इति प्रतीतिः श्लिष्टविशेषणमहिम्ना। एवं नायिकान्तरानुरक्तनायकदर्शनसमुत्थेर्ष्यामानविशिष्ट-त्वेन दिवसश्रियः प्रतिनायिकात्वप्रतीतौ दयितयेति। पदमपुष्टार्थमर्थपुनरुक्तं वा।

## दीपिका

नहि वास्तव्युपपत्तिरलीके किञ्चिद् विवशाङ्गउपमानविशेषं सदृशवस्तुविशेषं प्रकाशयति प्रत्ययगततया च तद्दृष्टान्तप्रत्यायनाबुद्धिमङ्गीकरोति। प्रयोजनाभावादनुपादेयत्वं यत उपादानेऽपुष्टार्थत्वं दोषः। ननु अन्यलभ्य-स्यार्थस्य मुख्यानुत्कर्षकतायामेवापुष्टार्थता। अत्र चास्ति प्रकारान्तरलभ्यत्वं तस्यार्थस्येत्याशङ्क्य प्रकारान्तर-माह—पुनरुक्तता वेति। विजृम्भिततापया अतनुमानपरिग्रहया सौभाग्यगर्वस्थितया स्वीकृतात्यन्तदीर्घभावया वा, दिनश्रीपक्षे मानशब्दस्य परिमाणार्थत्वात्। नायिकापक्षे तु परिगृहीतेति। शामिताऽहङ्कारया विनयाबाह्यया वा। चिरया दीर्घया। तिग्मरुचौ ककुभः सदृशेति दिनश्रियाप्येवंभूतया स्थितयेत्यपि सङ्गतिः। व्यक्तिविशेषणपरिग्रहेण लिङ्गविशेषोपादानेन। नायकतयेति। पुनरेकशेषः।

## साहित्यचूडामणिः

अथ समासोक्तावुपमानविशेषप्रकाशनेऽप्युयमपुष्टार्थत्वं समर्थयते—साधरणेति। एवकार उपमानापे-क्षामपहस्तयति। अनुक्तमपीति। तादृक् स्वभावत्वात् तस्याः। तस्योपमानविशेषस्य प्रयोजनाभावादपुष्टार्थता अनुपादेयत्वात् पौनरुक्त्यं वा दोषः।

स्पृशतीति।

"पुमान् स्त्रिया" (१-२-६७) इति कृतैकशेषो नायकशब्दः, अन्यथा तिग्मरुचेः ककुभां चेति वक्तुमयुक्त-त्वात्। किमिति। कृतमपुष्टार्थेन पुनरुक्तेन वा दयितयेति स्वशब्दप्रयोगेण।

## सम्प्रदायप्रकाशिनी

समासोक्तौ विशेषणसाम्यानगमितस्योपमानस्योपादाने निष्प्रयोजनत्वाद् यदुपादेयता तदपोषादपुष्टार्थत्वं, ज्ञातस्योक्त्या पुनरुक्त्वं वा स्यादित्याह—साधारणधर्मविशेषणेत्यादि ।

स्पृशतीति ।

अत्र करस्पर्शाल्लिङ्गविशेषाच्च यथा तिग्मरुचेर्नायकत्वं ककुभां च नायिकात्वं, तथा विजृम्भिततापत्वेन लिङ्गविशेषेण च दिनश्रियः प्रतिनायिकात्वमगमितमिति (किं) दयितयेति । विशेषणेषु श्लिष्टतया साधारणेष्वप्युपमानोपादानं विना यत्राप्रतीतिरुपमायाः, स श्लेषोपमाया विषयः ।

## मधुमती

**'गाढालिङ्गनरभसोद्यते**
**दयिते लघु समपसरति ।**
**मनस्विन्या मानः**
**पीडनभीत इव हृदयात् ॥'**

इत्यादौ उत्प्रेक्षायाः व्यञ्जकस्य स्वयमेवोदाहृतत्वात् इति ध्येयम् ।

## विस्तारिका

कुत एव तदिति । तथा चायमाहार्यारोप एवेति भावः । एवमाहार्यारोपत्वेन सम्भावितेनेति विशेषदर्शनकालेनेति शेषः ।

स्पृशतीति । तिग्मांशौ ककुभः स्पृशति सति दिनश्रियाऽतनुमानपरिग्रहया स्थितमित्यन्वयः ।

यथा सदृशेति । तिग्मरुचेः करेण स्त्रीस्पर्शकारित्वं नायकोचितं विशेषणम्, ककुभां च करेण पुरु स्पृश्यत्वं नायिका योग्यं विशेषणमित्यर्थः । व्यक्तीति । लिङ्गविशेषेत्यर्थः । तिग्मरुचेः पुंल्लिङ्गपरिग्रहेण ककुभां स्त्रीलिङ्गपरिग्रहेणेत्यर्थः । रवेर्नायकताभिव्यक्तिरित्युपलक्षणम्, ककुभां नायिकात्वव्यक्तिरित्यपि बोध्यम् । भविष्यतीतिव्यक्तिरित्यनुषज्यते ।

## सारबोधिनी

नन्वद्रिणा तत्त्रणमुत्प्रेक्षितमुच्यत इत्यत आह संभावितेन त्विति । तदा नानुपपत्तिः । तथा च किं समर्थितं द्वितीयार्थेन । स्पृशतीति । ककुभस्तिग्मरुचौ करैः स्पृशति दिवसश्रिया अतनुमानग्रहया स्थितमित्यन्वयः । करैर्हस्तैः रश्मिभिश्च । तापशब्द उष्णतायां, खेदेऽपि । मानशब्दः परिमाणेऽभिमाने च । यथा सदृशेति । तिग्मरुचेः करेण स्त्रीस्पर्शकारित्वं नायकोचितं विशेषणम् । ककुभां च करेण पुरुषस्पृश्यत्वम् नायिकायोग्यं विशेषणमित्यर्थः । व्यक्तीति । लिङ्गविशेषस्य परिग्रहेणेत्यर्थः, तिग्मरुचेः पुंलिङ्गयोगेन, ककुभां च स्त्रीलिङ्गयोगेन ।

### काव्यप्रदीपः

यत्तु समासोक्तौ साधारणविशेषणबलादेवोपमानप्रतीतौ प्रयोजनाभावेन तदुपादानवैयर्थ्यं तदपुष्टार्थत्वं पुनरुक्तता वा दोषः । यथा—

**'स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।**
**अतनुमानपरिग्रहया स्थितं रुचिरया चिरयापि दिनश्रिया ॥'**

अत्र सदृशविशेषणबलेन लिङ्गविशेषपरिग्रहाच्च तिग्मरुचेर्नायकतया ककुभां तु नायिकात्वेन व्यक्तिः । तथा ग्रीष्मदिवसश्रियोऽपि तत एव प्रतिनायिकात्वेन भविष्यतीति दयितयेत्यपुष्टार्थम् । अर्थतः प्रतीतस्योपादाने यदि पुनरुक्तिस्तदार्थपुनरुक्तत्वं दोषः ।

### काव्यप्रकाशखण्डम्

**स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।**
**अतनुमानपरिग्रहया स्थितं रुचिरया चिरया दिवसश्रिया ॥**

तिग्मरुचौ सूर्ये ककुभो दिशः करैः स्पृशति सति दिवसशोभया मनोहरया चिरया दीर्घया, अतनु दीर्घो यो मानस्तस्य परिग्रहो ग्रहणं यस्यास्तया, स्थितं विजृम्भितो वर्द्धितः तापो यस्यास्तया । कयेव? दयितयेव प्रतिनायिकयेवेत्यर्थः । अत्र तिग्मरुचौ ककुभां च यथासदृशविशेषणबलेन व्यक्तिविशेषपरिग्रहेण च नायकतया व्यक्तिः ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वं प्रतिपादतीति किं दयितयेति स्वशब्दोपादानेन ?

### आदर्शः

समासोक्तिलभ्यार्थस्य शब्देन कथनमपुष्टार्थत्वे पुनरुक्तत्वदोषे वा विनिविशते इत्याह—साधारणेति । प्रकृतसाधारणविशेषणवशादनुक्तमप्युपमानविशेषं समासोक्तिः प्रकाशयतीत्यतस्तस्योपमानस्य शब्देन पुनः प्रतिपादने प्रयोजनाभावादनुपादेयतायां सत्यां यत् तदुपादानं तदत्रापुष्टार्थत्वं पुनरुक्तं वा दोष इत्यर्थः । तदपुष्टार्थत्वमिति । ननु विवक्षितार्थस्य शब्दवाच्यतैव पुष्टिरिति नापुष्टार्थत्वमत आह—पुनरुक्तता वेति ।

स्पृशतीति । दीर्घतरदिवसश्रीवर्णनमिदम् । तिग्मरुचौ सूर्ये करैः ककुभः स्पृशति सति चिरया दीर्घयाऽपि दिवसश्रिया अतनोरनल्पस्य मानस्य प्रतिग्रहो यस्यास्तादृश्या स्थितम् । अतनुना अनङ्गेन यो मानः क्रोधस्तत्परिग्रहया दयितयेव । दिनश्रीदयिततयोर्द्वयोरपि विशेषणान्तरद्वयमाह—विजृम्भितेति । चण्डकराधीनो दिनश्रियः, मानाधीनश्च दयितायास्तापः । रुचिरयेति मेघशिशिराद्यभावाद्दिनश्रियः, सौन्दर्याश्च दयिताया रुचिरता । अत्र तिग्मरुचेर्नायकत्वस्य ककुभः प्रतिनायिकात्वस्य च यथाऽशब्दत्वेऽपि व्यञ्जनया लाभस्तथा दिवसश्रियोऽपि नायिकात्वलाभसम्भवे दयितयेवेत्यस्य पुनरुक्त्वमेवेति ग्राहयति—अत्रेति । 'सदृशविशेषणं तिग्मरुचिनायकयोः करैः प्रतिनायिकास्पर्शित्वम् ककुप्प्रतिनायिकयोश्च तत्स्पृश्यमानत्वम् दिवसश्रीनायिकयोश्चातनुमानपरिग्रहो विजृम्भिततापत्वं रुचिरत्वञ्च बोध्यम् । व्यक्तिविशेषौ स्त्रीपुंल्लिङ्गे ।

## सुधासागरः

साधारणेत्यादि । अयम्भावः—यत्तु समासोक्तौ साधारणविशेषणबलादेवोपमानप्रतीतौ प्रयोजनाभावेन तदुपादानवैयर्थ्यं तदपुष्टार्थत्वं पुनरुक्तता वा दोष इति ।

स्पृशेति स्पष्टम् । द्रुतविलम्बितं वृत्तम् 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् । अत्रेत्यादि । अयमर्थः—अत्र सदृशविशेषणबलेन लिङ्गविशेषपरिग्रहाच्च यथा तिग्मरुचेर्नायकतया ककुभां नायिकात्वेन व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि तत एव प्रतिनायिकात्वेन भविष्यतीति दयितयेत्यपुष्टार्थम् । अर्थतः प्रतीतस्योपादाने यदि पुनरुक्तिस्तदार्थपुनरुक्तं दोषः ।

श्लेषोपमायास्तु स विषयः, यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः । यथा

**स्वयं च पल्लवाताम्रभास्वत्करविराजिता ।**
**प्रभातसंध्येवास्वापफललुब्धेहितप्रदा । ६०२ ।। इति ।।**

---

### सङ्केतः

ननु यथा—प्रियां स्पृशन्तं दृष्ट्वा अन्यस्याः तापः स्यात्, तथा अर्के दिशः स्पृशति सति ग्रीष्मश्रियोऽपि तापः स्यात् इति श्लेषोपमेयं इति युक्तमेव 'दयितया' इति पदम् इत्याह—श्लेषेति । न तथा समासोक्तिप्रतीतिः ।

स्वयं चेति । न सुखेनाप्यते इति अस्वापं दुर्लभं यत् फलं तल्लुब्धानां ईहितप्रदा । स्वापस्य शयनस्य फले विश्रान्तौ यो न लुब्धः तत्र हितप्रदा च । अत्र श्लेषोपमैव । सन्ध्योपमानोपादानं विना समासोक्तिप्रतीतेः अभावात् । रीत्या साधारणविशेषणरूपया ।

### बालचित्तानुरञ्जनी

ननु यथा दयिते दयितां करैः स्पृशति दयितान्तरस्य तापो भवति—तथा रवेः करैः ककुभः स्पृशति तथाविधसमये दिनश्रियोपि ताप इति श्लेषोऽयमित्युपादेयमेव दयितेति पदमित्याशङ्क्याह श्लेषति । उदाहरति तथेति । भास्वन्तौ करौ दीप्यमानौ पाणी भास्वतः स्वकरा रश्मयः । अस्येद दुर्लभं यत्फलं तत्र लुब्धानां ईहितं प्रददाति । स्वापस्य फले विश्रान्त्यां लुब्धः, तत्र हितं न प्रददाति च । अत्र गौर्या उपमेयत्वं अप्रस्तुतप्रशंसायामुपमेयस्योपमानीकरणं अपुष्टार्थत्वं पौनरुक्त्यं वा दोषः इत्याह प्रयोगेणेति । अनयैव समासोक्त्युक्तरीत्यैवाप्रस्तुतप्रस्तुतयोस्तुल्यनिबन्धनत्वादुपमानानां तदीपमेयप्रतीतौ किञ्चित्पदप्रयोगेण पुनरुपमेयस्योपमानीकरणेनेत्यर्थः ।

### काव्यादर्शः

ननु, यथा दयिते दयितां करैः स्पृशति सति दयितान्तरस्य तापो भवति तथा रवेः करैः ककुभः स्पृशति सति चिरयायिदिनश्रियोऽपि ताप इति श्लेषोपमेयमिति उपादेयमेव 'दयितया' इति पदमित्याह—श्लेषोपमायास्त्विति ।

### विवेकः

स्वयञ्चेति—अयं प्राग् व्याख्यात एव ।

### दीपिका

एतच्च नायकव्यवहार एव स्फुटयतीति बोद्धव्यमिति न सर्वसमासोक्तिग्रस्तविषयशिलष्टोमित्याह—श्लेषोपमायास्त्विति । तथा प्रतीति वैशद्येनोपमाप्रतीतिः । स्वयञ्चेति । प्रभातसन्ध्येव । स्वपदोपादानं न स्फुटप्रतिभानम् ।

### साहित्यचूडामणिः

श्लेषोपमासङ्करोऽयमस्तु न समासोक्तिः अन्यथा तयोः सङ्करस्य निर्विषयत्वापात इति चेदाह-श्लेषोपमाया इति । विषयं प्रदर्शयति—स इति । विशेषणसाधारण्यलाभेऽपि यत्रोपमानोपादानव्यतिरेकसामग्रीभङ्गः ।

स्वयमिति । अत्र प्रकरणाद् गौर्या उपमेयत्वम् । अप्रस्तुतप्रशंसायामपि उपमेयस्योपमानीकरणमपुष्टार्थत्वं पौनरुक्त्यं वा दोषमुन्मेषयति—अप्रस्तुतेति । अनयैव समासोक्त्युक्तयैव नीत्या । प्रस्तुताप्रस्तुतयोस्तुल्यत्वनिबन्धनत्वादुपमानान्तरादुपमेयप्रतीतौ किं तत्पदप्रयोगेण पुनरुपमेयस्योपमानीकरणम् ।

### सम्प्रदायप्रकाशिनी

स्वयं चेति । व्याख्यातः प्राक् । अत्र प्रभातसन्ध्येवेत्युपमानानुपादाने विशेषणसाधारण्येऽपि नोपमाप्रतीतिरिति ईदृगेव विषयः श्लेषोपमायाः, नान्यः ।

### मधुमती

नन्वेवं श्लिष्टोपमा निर्विषया स्यात्—अत आह—श्लेषेति । न तथा प्रतीतिरिति । इदमत्र तत्त्वम्—यत्र उपमानस्य स्वपदोपादानेऽपि न समासोक्तिभङ्गः, तत्र अवश्यकसमासोक्त्यैव चमत्कारात् उपमानस्य स्वशब्दोपादानं व्यर्थम् । यथा उदाहृते 'स्पृशती'त्यादौ । अत्र हि 'दयितया' इत्यनुपादानेऽपि तिग्मरुचेः नायकत्वं, दिवसश्रियश्च प्रतिनायिकात्वं यथायोग्यविशेषणवशेनैव प्रतीयते इति, समासोक्तेः आवश्यकत्वात् । यत्र तु उपमानोपादाने समासोक्तिः निवर्तते, तत्र उपमाया एव चमत्कारनिर्वाहकत्वात् उपादेयमेवोपमानम्, यथा 'स्वयं चे'त्यादौ । अत्र उपमानोपादाने समासोक्त्यप्रतीतेः इति ।

### विस्तारिका

नन्वयं श्लेषोपमाया एव विषयोऽस्तु, अत आह—श्लेषेति । न तथा प्रतीतिरिति ।

इदमत्राभिसंहितम्—यत्रोपमानस्य स्वपदोपादानेऽपि न समासोक्तिभङ्गः, तत्रावश्यकसमासोक्त्यैव चमत्कारादुपमानस्य स्वशब्दोपादानं व्यर्थम्, यथोदाहृते स्पृशतीत्यादौ । अत्र हि दयितयेत्युपादानेऽपि तिग्मरुचेर्नायकत्वम्, दिवसश्रियश्च प्रतिनायिकात्वं यथायोग्यविशेषणवशेन प्रतीयत एवेति समासोक्तेरावश्यकत्वम् ।

यत्र तूपमानोपादाने समासोक्तिर्निवर्तते, तत्रोपमाया एव चमत्कारनिर्वाहकत्वादुपादेयमेवोपमानम् । यथा—स्वयं चेत्यादौ ।

तत्रोपमानोपादाने समासोक्त्यप्रतीतेरिति । दिक् ।

### सारबोधिनी

श्लेषेति ।

## काव्यप्रदीपः

नन्वस्यापुष्टत्वे श्लेषोपमा निर्विषया स्यादिति चेत्, स हि तस्या विषयो यत्रोपमानोपादानं बिना श्लिष्टेवपि विशेषणेषु न स्फुटा प्रतिपत्तिः । यथा—

**'स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।**

**प्रभातसंध्येवास्वापफललुब्धेहितप्रदा ॥'**

अत्र प्रभातसंध्याया अनुपादानेन स्फुटा प्रतीतिः ।

## आदर्शः

ननु श्लेषोपमैवेयमित्यत आह—श्लेषोपमाया इति । स्वयं चेत्यादिकं व्याख्यातं प्राक् । अत्र प्रभातसन्ध्यापदेनैवोपमानप्रतीतिः ।

## सुधासागरः

नन्वस्यापुष्टत्वे श्लेषोपमा निर्विषया स्यादिति चेत् । न । स हि तस्या विषयो यत्रोपमानोपादानं विना श्लिष्टेष्वपि विशेषणेषु न स्फुटा प्रतिपत्तिः । यथा—स्वयमिति । व्याख्यातमेतत् । अत्र प्रभातसंध्यायाः अनुपादाने न स्फुटप्रतीतिः ।

अप्रस्तुतप्रशंसायामपि उपमेयम् अनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थतां नेयम्।

यथा

आहूतेषु विहंगमेषु मशको नायान् पुरो वार्यते
मध्येवारिधि वावसंस्तृणमणिर्धत्ते मणीनां रुचम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम्॥ ६०३॥

अत्र, अचेतनस्य प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तौ न युक्तमेव पुनः कथनम्॥

---

**सङ्केतः**

मध्ये वारिधीति। तृणप्रायो मणिः अप्रधानः काचादिः तृणमणिः। न कम्पते न बिभेति।

अप्रस्तुतेति। अप्रस्तुतं अचेतनत्वेन विशेषितं च यत् सामान्यं मशकादि तद्द्वारेणेत्यर्थः। तथा प्रस्तुतस्य प्रभोः प्रतीतौ प्रभुमिव इत्यधिक। यथा वा—

**'द्रविणमापदि भूषणमुत्सवे**
**शरणमात्मभये निशि दीपकः।**
**बहुविधार्थ्युपकारभरक्षमः**
**भवति कोऽपि भवानिव सन्मणिः॥'**

अत्र भवानिवेति।

**बालचित्तानुरञ्जनी**

उदाहरति यथेति। विहङ्गमेषु आहूतेषु पुर आयान्मशको न वार्यते। तृणमणिः अप्रधानमणिः काचादिः मणीनां मध्ये धुरि वा वसन् रुचं धत्ते। तेजस्विनां मध्ये खद्योतोऽपि प्रचलितुं न कम्पते न बिभेति। तत्त्वानां क्षुद्रमहतां अन्तरं विशेषः अनामृष्टमपरामृष्टं येन। अचेतनं प्रभुमिव साम्य, धिक्। अस्याप्यपुष्टार्थत्वं पुनरुक्तत्वञ्चेत्याह अत्रेति। अचेतनत्वेन विशिष्टं सामान्यम्।

## काव्यादर्शः

'अप्रधानो मणिस्तृणमणिः'। 'न कम्पते' न बिभेतीत्यर्थः। विशिष्टसामान्येति। अचेतनत्वेन विशेषितं यत् सामान्यं तद्द्वारेण प्रस्तुतस्य प्रभोः प्रतीतेः प्रभुमिवेत्यधिकम्। यथा वा—

**द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपकः।**
**बहुविधार्थ्युपकारभर क्षमो भवति कोऽपि भवानिव सन्मणिः॥**

—अत्र भवदर्थस्य अप्रस्तुतप्रशंसाबलेनैव आक्षेपाद् 'वानिव' इत्यधिकम्। अन्यऽपीति। यथोपमायां हीनपदत्वे—

**क्वचित्काले प्रसरता क्वचिदापत्य निघ्नता।**
**शुनेव सारंगकुलं त्वया भिन्नं द्विषां बलम्॥**

—अत्र शुनोपमानेन च कृतार्थकदर्थनेऽनुचितार्थत्वम्। 'क्वचित्काल' इत्यत्र क्वचिदर्थस्य सामान्येनोपक्रान्तस्य काललक्षणेन विशेषेण योगः। क्वचित्तु विशिष्टस्यैवार्थस्योपक्रमः, यथा—

**शक्या भङ्क्षुण्टसिति [?] बिसिनीकन्दवच्चन्द्रपादाः॥**

निन्दायां प्रोत्साहने चानुचितार्थत्वं गुणः, यथा—

**कुशलसखीजनवचनैरतिवाहितवासरा विनोदेन।**
**निशि चण्डाल इवायं मारयति वियोगिनीश्चन्द्रः॥**

**तथा—विशन्तु वृष्णयः शीघ्रं रुद्रा इव महौजसः॥**

अवाचकमुपमायां यथा—

**पतिते पतंगमृगराजिनिजप्रतिबिम्बरोषित इवाम्बुनिधौ।**
**अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे॥**

—अत्र नागयूथेन धर्मिणां साम्यं तमसो वक्तुमतिमतं न तद्धर्मेण मलिनत्वमात्रेण मृगपतौ पतिते तस्यैव निष्प्रतिपक्षतया स्वच्छाविहारोपपत्तेः, न तद्वन्मलिनानां तमसां पतंगस्य मृगपतिरूपेण अवैयर्थ्यप्रसङ्गात्। न च तत्साम्यं सुन्दर-हारि-सदृश-संनिभाशब्दा इव मलिनादि-शब्दा वक्तुं शक्नुवन्तीति अवाचकत्वम्। रूपके आधिक्यं, यथा—

**निर्मोकमुक्तिमिव गगनोरगस्य लीला ललाटिकामिव त्रिविष्टपविटस्य॥**

—अत्र रूपकेणैव साम्यस्य प्रतिपादितत्वाद् 'इव' शब्दोऽधिकः।

अन्यस्यालंकारविषयेऽलंकारान्तरनिबन्धेऽपि अधिकपदत्वम्। तत्र श्लेषविषये उपमानं, यथा—

**भैरवाचार्यस्तु दूरादेव दृष्ट्वा राजानं शशिनमिवजलधिश्चचाल॥**

—अत्र राजशब्द एवोभयार्थत्वाच्छशिनमाहेति श्लेषस्यायं विषयो युक्तः। यस्तु पृथक्त्वमुपादाय राजशशिनोरुपमानोपमेयभावनिबन्धः सोऽधिकः सह्यार्थ एव तद्विदां स्वदते, न शाब्दः॥ एवम्—

**दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव॥**

—इत्यत्रापि श्लेषस्य विषये रूपकमासूत्रितमनादृत्य उपमानुरागिणा कविना सैवोपनिबद्धा। न चासौ ताभ्यां स्पर्धितुमुत्सहते तयोः, यथा पूर्वं प्रतीयमानार्थसंस्पर्शातिरेकात् तदनुविधायिनः सहृदयैकसंवेद्यस्य चमत्कारस्य संभवादिति उपमाधिक्यम्। यदाहुः—

**वाच्यात् प्रतीयमानोऽर्थस्तद्विदां स्वदतेऽधिकम्।**
**रूपकादिरतः श्रेयानलंकारेषु नोपमा॥**

किं तु नात्र साम्यमात्रं विवक्षितं, अपि तु समुद्रे यथेन्दुर्जातस्तथा तत्कुले स द्वितीयश्चन्द्र इति चन्द्राभेद एव प्रतिपाद्यः। कुलस्य तु समुद्रसाम्यमेवाभिधित्सितम्।

विरोधस्य असंभवः, यथा—

**या धर्मभासस्तनयापि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः।**
**कृष्णापि शुद्धेरधिकं विधातृभिर्विहन्तुमंहांसि जलैः पटीयसी॥**

—अत्र विरोधस्यैकाधारतयैव उपपत्तिरित्युक्तम्। ततो धर्मभास्तनयात्वादीनां शीतलत्वादीनां च धर्माणां भिन्नाधारतयोक्तौ विरोधस्य असंभवः।

ननु, तस्या नद्या जलानां च तत्त्वत एकत्वमिति न दोषः। सत्यम्, शब्दसमर्पितं नानात्वमनुभूयतेऽयं च विरोधः शाब्द एवेष्यते। व्यतिरेके भग्नप्रक्रमत्वं, यथा—

**तरंगय दृशोऽङ्गणे पततु चित्रमिन्दीवरं**
**स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम्।**

**क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका-**
**मुदञ्चय मनाङ्मुखं भवतु च द्विचन्द्रं नभः॥**

—अत्र उपमानानामिन्दीवरादीनां निन्दाद्वारेण नयनादीनामुपमेयानां यस्तेभ्योऽतिशयो वक्तुं प्रक्रान्तः स मुखचन्द्रयो 'र्भवतु च द्विचन्द्रं नभः' इति सादृश्यमात्रप्रतिपादनाद् न निर्व्यूढम्। 'भवतु लक्ष्यलक्ष्मा शशी' इति तु युक्तम्।

**तथा—तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत् स्मितं का सुधा**
**सा चेद् कान्तिरतन्त्रमेव कनकं ताश्चेद्गिरो धिङ् मधु।**

**सा दृष्टिर्यदि हारितं कुवलयैः किं वा बहु ब्रूमहे**
**यत् सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः॥**

—अत्रापि उपमानाद् उपमेयस्यातिरेको वक्तुमिष्टः, तस्यार्थान्तरन्यासेन वस्तुसर्गपौनरुक्त्यस्य सादृश्यमात्रे पर्यवसानाद् भग्नप्रक्रमत्वम्। 'पुनरुक्तवस्तुविमुखः' इति तु युक्तम्।

यद्यपि निर्दोषगुणालंकारभाज एव शब्दार्थयुगलस्य काव्यत्वं तथापि आवापोद्धारिक्या बुद्ध्या शब्दार्थालंकारगुणानां विवेक [:] कृत एवेत्यलंकारदोष एवायं, नार्थविरोधलक्षणोऽर्थदोषः।

## विवेकः

आहूतेष्विति—तृणमणिः काचः, न कम्पते न बिभेतीत्यर्थः। एवमनेकवृत्तिसामान्यमनामृष्टतत्त्वान्तरमिति तद्विशेषणम् अचेतनं प्रभुमिवेति तु पूर्ववदत्राप्यपुष्टार्थत्वमर्थपौनरुक्त्यम् वा। 'यत्र तु प्रस्तुताप्रस्तुतनिबन्धनं नास्ति तत्र तस्योक्तिरुपपन्नैव। यथा—निम्नमुन्नतमवस्थितं चलं वक्रमार्जवगुणान्वितश्च यत्। सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हतान्तरम्॥ इति तमसां प्रस्तुतत्वात्तदुक्तेरसत्पुरुषमहत्त्वप्रतीतावसामर्थ्यमिति तद्वक्तुमेव न्याय्यम्' (व्य. वि. ३८३ पृ.)।

अन्येऽप्येवञ्जातीया इति। 'तत्र विरोधस्यासम्भवो यथा—या धर्मभासस्तनयाऽपि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः। कृष्णाऽपि शुद्धेरधिकं विधातृभिर्विहन्तुर्महांसि जलैः पटीयसी॥ (शि. पा. व. १२/६७)। अत्र धर्मभासस्तनयत्वा दीनां शीतलत्वादीनाञ्च धर्माणां भिन्नाधारतया विरोध उक्तः। स च न सम्भवत्येकाश्रयतयैव तस्योपपत्तेः, अन्यथाऽतिप्रसङ्गः स्यात्। 'यद्यपि यमुनायास्तज्जलादीनाञ्च तात्त्विकमेकत्वं तथापि तेषां शब्देन कर्तृकरणतया निर्देशाच्छाब्दं भिन्नत्वमनुभूयते, शाब्द एव च विरोधो वक्तुमिष्टः कवेः। तथा च तेषां भिन्ना-[श्रयतयाऽन-] भिहितवाच्यत्व एव पर्यवस्यति, एकाश्रयतया विवक्षितानां तथाऽभिधानात्। एवमन्येषामप्यलङ्कार दोषाणामुक्तेष्वन्तर्भाव उचितः' (रु. सं. ७६ पृ.)।

## दीपिका

अप्रस्तुतप्रशंसायामपीति। अप्रस्तुतप्रशंसया यत्र गतत्वं तत्र नोपमाग्रहः कार्य इत्यभिसन्धिः। उपमेयं प्रस्तुतम्। अनयैव रीत्या समासोक्तौ प्रस्तुतवर्णनेनाप्रस्तुतवर्णनयैव कार्यस्य गम्यत्वादित्यभिव्यक्तम्। प्रयोगेणेत्यतः पूर्वमुपमानेनेति शेषः। कदर्यता कल्पनादुष्टतया सहृदयविरागपात्रताम् आयान् आगच्छन्। वारणफलं प्रभातिशयाभ्यां हीनः कुतश्चित् कारणाल्लोके मणिशब्दवाच्यो मरकतादिमणिरूपतया मानहृत्। सामान्यं महत्त्वहीनमचेतनं विवेकरहितम्। अनामृष्टं न पर्यालोचितं तत्त्वान्तरं स्वरूपप्रकर्षाप्रकर्षविशेषो येन तमनामृष्टतत्त्वान्तरम्। अचेतनस्यातः प्रकृतस्य विशिष्टसामान्यद्वारेणेति। अनामृष्टतत्त्वान्तरत्वेन विशेषितस्य सामान्यद्वारेण समतयेत्यर्थः।

## साहित्यचूडामणिः

आहूतेष्विति। अत्राविवेकी प्रभुः प्रस्तुतः। अप्रस्तुतं च तत्तुल्यं सामान्यं यन्नित्यमेकमनेकवर्तीति लक्ष्यते, तस्य विशिष्टम्। अनामृष्टतत्त्वान्तरत्वं तत्त्वानां क्षुद्रमहतां यदन्तरं विशेषः तस्यामर्शो विमर्शः तदभावात्। अपरामर्शे हि सतोऽप्यसत्कल्पत्वम्। पुनः कथनं प्रतीपालङ्कारादचेतनं प्रभुमिवेत्युक्तरूपम्। तदर्थस्यापरिपोषे पुनरुक्तौ वा पर्यवस्यति। एवं "द्रविणमापदी"त्यादौ "भवानिवे" त्याद्यूह्यम्।

## सम्प्रदायप्रकाशिनी

यथैव समासोक्तावुपमानस्योपादानेन दोषः, तथाप्रस्तुतप्रशंसायामुपमेयस्येत्यात्राह—अप्रस्तुतप्रशंसायामपीत्यादि । अनयैव नीत्या विशेषणसाम्यरूपया ।

आहूतेष्विति । आयान् आगच्छन् । तृणमणिर्नीलः । तृणग्रहान्निकर्षेमेह विवक्षितः । हारादिमध्ये नायकत्वेन धुरि असङ्कीर्णालङ्कारतया मध्यन्तरकार्यधुरायाम् । प्रचलितुं सञ्चरितुम् । सामान्यं विहङ्गमत्वमणित्वादिरूपम् । अचेतनं जडं विवेकरहितं च । अनामृष्टतत्त्वान्तरम् असंसृष्टविजातीयवस्तुकम् अनाकलितस्वातिरिक्तलोकयाथात्म्यं च । अत्राप्रस्तुतैर्विहङ्गमादिवृत्तैर्विशिष्टं यत् प्रधानवाक्ये सामान्यं तद्द्वारेणाभिव्यज्यमानस्य निर्विवेकस्य प्रभोरुपादानमपुष्टार्थता पौनरुक्त्यं वा ।

## विस्तारिका

अप्रस्तुतप्रशंसायामपि इति । प्रतीतं व्यङ्ग्यम् उपनिबद्धव्यमिति शेषः ।

आहूतेष्विति । विहायसा गच्छतीति विहङ्गमः । आयान् अगच्छन् । मध्येवारिधि वारिधेर्मध्ये वेति भिन्नं पदम् । समुच्चये वावसन्निति चेत् कियतान्तम्, वा न कल्पत इति न त्रिकात् कुः । कल्पत एवेत्यर्थः । सामान्यं समानधर्मसम्बन्धमित्यर्थः । तद्धितस्य सम्बन्धवाचकत्वात्, अनामृष्टं पृच्छान्तरम् अपरामृष्टेतरभेदमित्यर्थ ।

## सारबोधिनी

अप्रस्तुतप्रशंसायामपीति ।

## काव्यप्रदीपं

अप्रस्तुतप्रशंसायामप्युपमेयस्योपादानवैयर्थ्यं यत्तदपुष्टार्थत्वमेव दोषः । तत्राप्युपमेयमनयैव रीत्यावगन्तव्यं न पुनः शब्दप्रयोगेण दुष्टतां नेयम् । यथा—

**'आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते**
**मध्ये वारिधि वावसंस्तृणमणिर्धत्ते मणीनां रुचम् ।**
**खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां**
**धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥'**

अत्राचेतसः प्रभोरुपमेयस्याप्रस्तुतनिष्ठसामान्यद्वारेण संभवादयुक्तमेव शब्देन कथनमित्युपुष्टार्थत्वं पुनरुक्तता चेति ।

## काव्यप्रकाशखण्डनम्

एवमप्रस्तुतप्रशंसायामपि उपमेयमनमैव रीत्या प्रतीतम् । न पुनः प्रयोगेणा कदर्थनीयम् ।

## आदर्शः

समासोक्तौ यथा प्रस्तुतकथनादेवाप्रस्तुतप्रतीत्या अप्रस्तुतं न वाच्यतां नेयम्, तथा अप्रस्तुतप्रशंसायामपि अप्रस्तुतकथनादेव प्रस्तुतप्रतीत्या अप्रस्तुतं न वाच्यतां नेयम्। तद्वाचकशब्दोपादाने तु पुनरुक्तत्वमेव दोष इत्यत आह—अप्रस्तुतप्रशंसायामपीति।

आहूतेष्विति। अचेतसम् विवेचनारहितं सामान्यं निकृष्टं जनं धिक्। अचेतस्त्वं धिग्हेतुः। अनामृष्टम् अपरिभावितं तत्त्वं यथार्थवस्तु यत्र तादृशमान्तरं चेतो यस्य तादृशं प्रभुमिव। सामान्यस्याचेतस्त्वं कथमित्यत्राऽऽह—आहूतेष्विति। विहङ्गमेषु विहायसा गच्छत्सु आहूतेषु सत्सु विहायसा गामित्वान्मशकोऽपि पुरः आयान् आगच्छन् न वार्यते, अवारणे तु आयात्येवेत्यतो मशकोऽप्यायातीत्येव विवक्षितार्थः, वारणस्य प्रकृते विधेयत्वानुपयोगात्। मध्ये अर्थादुपस्थितस्य यानस्य मध्ये वा धुरि यानमुखे वा सन् तृणमणिस्तृणापकर्षकोऽल्पमूल्यमणिः रथशोभाकरमहामूल्यमणीनां रुचं धत्ते। 'मध्येवारिधि वा वसन्नि' ति क्वचित् पाठः। तथा वारिधेर्मध्ये पुनः पुनर्वसन्नित्यर्थः। 'धूः स्त्री यानमुखम्' इति कोषः। न कम्पते न बिभेति। प्रचलितुं गन्तुम्। मध्येऽपीत्यपि-कारस्य तेजस्विनामपीति योजना। अत्र प्रभुमिवेत्यस्याप्रस्तुतमशकादिसामान्यकथनादेव लाभे तद्वाच्यत्वं पुनरुक्तिरेवेत्याह—अत्राचेतसः प्रभोरिति।

## सुधासागरः

अप्रस्तुतेत्यादि। अयम्भावः—अप्रस्तुतप्रशंसायामप्युपमेयस्योपादानवैयर्थ्ययत्तदपुष्टार्थत्वमेव दोषः। तत्राप्युपमेयमनयैव रीत्याऽवगन्तव्यं न पुनः शब्दप्रयोगेण दुष्टत्वं नेयम्।

अनामृष्टतत्त्वान्तरम् अशोधितवस्तुस्वरूपम् अविवेकिनमिति यावत्। प्रभुमिव अचेतनं जडं सामान्यं समानधर्मवत्त्वं विहङ्गमादिमत्त्वमिति यावत्। धिङ् न्यक्कारः। हेतुमाह यत्सामान्यवशाद्विहङ्गमेष्वाहूतेषु पक्षिष्वाकारितेषु मशकः मक्षिकातोऽप्यतिलघुः पुरः आयान् प्रथममागच्छन्, न वार्यते नोपरुध्यते तृणमणिर्विद्रुमः मध्येवारिधि वारिधेर्मध्ये वावसन् अतिशयेन वसन् मणीनां पद्मरागमरकतादीनां धुरं प्रतिष्ठाभारं धत्ते, खद्योतः ज्योतिरिङ्गणापरपर्यायः कीटविशेषोऽपि तेजस्विनां सूर्यादीनामपि मध्ये प्रचलितुं गन्तुं न कम्पत इति, काक्वा कम्पत एवेत्यर्थः। शार्दूलविक्रीडितं छन्दः। 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्।

अत्रेत्यादि। अयमर्थः—अत्राचेतसः प्रभोरुपमेयस्याप्रस्तुतनिष्ठसामान्यद्वारेणाभिव्यक्तिसम्भवादयुक्तमेव शब्देन कथनमित्यपुष्टार्थत्वं पुनरुक्तता वेति।

तदेतेऽलंकारदोषाः, यथासंभाविनोऽन्येवंजातीयकाः पूर्वोक्तयैव दोषजात्या, अन्तर्भाविताः, न पृथक् प्रतिपादनमर्हन्तीति संपूर्णमिदं काव्यलक्षणम् ॥

इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता संघटनैव हेतुः ॥ १ ॥

इति काव्यप्रकाशेऽर्थालंकारनिर्णयो नाम दशम उल्लासः ॥

॥ समाप्तश्चायं काव्यप्रकाशः ॥

---

## सङ्केत

अन्येऽपीति । उपमायां हीनपदत्वे यथा—

'क्वचित् काले प्रसरता क्वचिदापत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥'

अत्र शुनोपमानेन प्रकृतार्थकदर्थने अनुचितार्थता । क्वचिदिति सामान्येन निष्पाद्य, पश्चात् कालेन विशेषेण योगः । अन्यथा तु निन्दानिषेधः चिन्त्यः । प्रोत्साहननिन्दादौ तु अनुचितार्थताऽपि न दोषः । यथा—

'हनूमानिव प्रेषणे प्रेष्य एषः ।'

'कुशलसखीजनवचनैः
अतिवाहितवासरा विनोदेन ।
निशि चण्डाल इवायं
मारयति वियोगिनीश्चन्द्रः ॥'

'वियोगे मारकः स्त्रीणां चण्डाल इव चन्द्रमाः ।'
'विशन्तु वृष्णयः शीघ्रं रुद्रा इव महौजसः ॥'

इत्यादौ ॥—

'यस्यार्कसुभगा मूर्तिः सच्चक्रानन्ददायिनी ।'

इत्यत्र अर्केण सह मूर्तेः साम्यं वाच्यम्, न सुभगत्वमात्रम्; सच्चक्रेति विशेषणवैयर्थ्यप्रसङ्गात् । न च तत्साम्यं तुल्यादिशब्दवत् 'सुभग' शब्दो वक्ति इति, उपमां प्रत्यवाचकत्वम् ।

'भैरवाचार्यस्तु दूरादेव दृष्ट्वा राजानं शशिनमिव जलधिः चचाल ।'

'राजा कुवलयोल्लासी पीयूषांशुरिवारुचत् ।'

इत्यादौ राजन्शब्दस्य उभयार्थत्वेन श्लेषनिष्पत्त्या स्वार्थसिद्धौ यत् औपम्यकल्पनम्, तदधिकम् ।

औपम्यं हि आर्थमेव हृद्यम्, व्यङ्ग्यत्वात्, न तु शाब्दम् ॥ एवम्—

**'दिलीप इव राजेन्दुः इन्दुः क्षीरनिधाविव ।'**

इत्यत्रापि 'राजा' इति श्लेषं हित्वा 'इन्दुः क्षीरनिधाविव' इति उपमानुरागिणा कविना राजेन्दुरिति रूपकमुक्तम् । न चोपमा व्यङ्ग्यार्थाधिक्यवतोः श्लेषरूपकयोः समा स्यात्, व्यङ्ग्यार्थस्पर्शाभावात् । तस्मात् अत्र उपमा अधिका । यदाहुः—

**'वाच्यात् प्रतीयमानोऽर्थः तद्विदां स्वदतेऽधिकम् ।**
**रूपकादिरतः श्रेयान् अलङ्कारेषु नोपमा ॥'**

इति ।

**तथा—'निर्मोकमुक्तिमिव गगनोरगस्य,**
**लीलाललाटिकामिव त्रिविष्टपस्य ।'**

इत्यादौ रूपकेणैव साम्यस्य प्रतिपादितत्वात्, 'इवे' त्यधिकम् ।

तथा—

**'लक्ष्मीरप्यरविन्दसौधवलभीनिर्यूह पयङ्किका ।'**

इत्यत्र अरविन्दस्य केनापि साम्येन सौधत्वेन रूपणमस्तु, वलभ्यादीनां तु न किञ्चिद्रूप्यमस्तीति अधिकपदत्वम् । साध्यवसानलक्षणया किमपि औन्नत्यादि कल्प्यते चेत् तदपि न चमत्कारि इति । तथा—

**'या धर्मभासः तनयाऽपि शीतलैः**
**स्वसा यमस्यापि जनस्य जीवनैः ।**

**कृष्णाऽपि शुद्धेरधिकं विधातृभिः**
**विहन्तुमंहांसि जलैः पटीयसी ॥'**

इत्यत्र नद्याः पयोभिः परमार्थदैक्येऽपि शब्दार्पितनानात्वानुभवात् विरोधस्य भिन्नाधारत्वम्, तच्च असम्भवि । विरोधस्य एकाधारत्वेन उक्तत्वात् इति असम्भवो दोषः । तथा—

**'तरङ्गसदृशोऽङ्गणे पततु चित्रमिन्दीवरं**
**स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।**

**क्षणं वपुरापावृणु स्पृशतु काञ्चनं कालिकां**
**उदञ्चय मनाङ्मुखं भवतु च द्विचन्द्रं नभः ॥'**

इत्यत्र उपमानभूतेन्दीवरादेः अपकर्षणद्वारेण नेत्रादीनां व्यतिरेकः वक्तुं प्रक्रान्तः। स च—'भवतु च द्विचन्द्रं नभः' इत्युक्त्या साम्यमात्रप्रतीतौ न निर्व्यूढः इति व्यतिरेके भग्नप्रक्रमत्वम्। 'भवतु तद्द्विचन्द्रं नभः' इति तु युक्तम्। एवमपि नभोमुखयोः नान्वयसङ्गतिः। 'अङ्गणे उदञ्चय मनाङ्मुखम्' इत्युक्त्या मुखाञ्चितमङ्गणं चन्द्राञ्चितात् व्योम्नः अधिकम्, तद्द्वारेण च चन्द्रात् मुखं अधिकम् इति तु युक्तम्।

इत्येष इति। एषः अद्भुतः अलङ्काराध्वा विभिन्नोऽपीति। नानाग्रन्थगतत्वेन पार्थक्येन स्थितोऽपि यत् एकरूपो भवति, तत्र सङ्घटना विसंस्थुलस्य सुखबोधाय एकत्र संग्रहणमेव हेतुः। सर्वेऽपि ग्रन्थाः अत्र अन्तर्मग्नाः इत्यर्थः।

अथ चायं ग्रन्थः अन्येनारब्धः, अपरेण च समर्थितः इति द्विखण्डोऽपि, सङ्घटनावशात् अखण्डायते। सुघटं हि अलक्ष्यसन्धि स्यात् इत्यप्यर्थः।

श्रीभोजेन तु जैमिन्युक्तानि षट् प्रमाणानि सम्भवश्च अलङ्कारतया उक्तानि।

तत्र केषांचित् उक्तेष्वेव अन्तर्भावात्, केषांचित् अचमत्कारित्वात्, केषांचित् काव्यशरीरत्वाच्च तानि नात्र काव्यालङ्कारतया प्रतिपादितानीति शम्।

**गुणानपेक्षिणी यस्मिन् अर्थालङ्कारतत्परा।**
**प्रौढाऽपि जायते बुद्धिः सङ्केतः सोऽयमद्भुतः॥ १॥**

**नानाग्रन्थसमुद्भूतैः असकलैरप्येष संसूचितः**
**सङ्केतोऽर्थलवैः लविष्यति नृणां शङ्के विशङ्कं तमः**
**निष्पन्ना ननु जीर्णशीर्णवसनैः नीरन्ध्रविच्छित्तिभिः**
**प्रालेय प्रथितां न मन्थति कथं कन्थाव्यथां सर्वथा॥ २॥**

**श्रीशीलभद्रसूरीणां पट्टे माणिक्यसंनिभाः।**
**परमज्योतिषो जाताः भरतेश्वरसूरयः॥ ३॥**

**भरतेन परित्यक्तोऽस्मीति कोपं वहन्निव।**
**शान्तो रसः तदधिकं भेजे श्रीभरतेश्वरम्॥ ४॥**

**पदं तदन्वलंचक्रे वेरस्वामि मुनीश्वरः।**
**अनुप्रद्योतनोद्योतं दिवं इन्दुमरीचिवत्॥ ५॥**

**वाञ्छन् सिद्धिवधूं हसन् सितरुचिं कीर्त्या रतिं रोदयन्**
**पञ्चेषोर्मथनात् दहन् भववनं क्रामन् कषायद्विषः।**
**त्रस्यन् रागमलात् घनाघनशकृद्भस्त्राः त्यजन् योषितः**
**बिभ्राणः शममद्भुतं नवरसीं यस्तुल्यमस्फोरयत्॥ ६॥**

षट्तर्कीललनाविलासवसतिः स्फूर्जत्तपोऽहर्पतिः
तत्पट्टोदयचन्द्रमाः समजनि श्रीनेमिचन्द्रप्रभुः ।

निस्सामान्यगुणैः भुवि प्रसृमरैः प्रालेयशैलोज्जवलैः
यश्चक्रे कणभोजिनो मुनिपतेः व्यर्थं मतं सर्वतः ॥ ७ ॥

यत्र प्रातिभाशालिनामपि नृणां सञ्चारमातन्वतां
सन्देहैः प्रतिभाकिरीटपटली सद्यः समुत्तार्यते ।

नीरन्ध्रं विषमप्रमेयविटपिव्राताववकीर्णे सदा
तस्मिंस्तर्कपथे यथेष्टगमना जज्ञे यदीया मतिः ॥ ८ ॥

यस्मात् प्राप्य पृथुप्रसादविशदां विद्योपदेशात्मिकां
पत्री मुक्तिकरीमतीव जडतावस्वत्वन्विता मन्मतिः ।

विक्षिप्य भ्रमशौल्किकात् कलयतो लब्धाश्रयं मानसे
मध्ये वाङ्नपत्तनं प्रविशति द्वारि स्थिता तत्क्षणात् ॥ ९ ॥

मदमदनतुषारक्षेपपूषा विभूषा
जिनवदनसरोजावासिवागीश्वरीया ।

द्युमुखमखिलतर्कग्रन्थपङ्केरुहाणां
तदनु समजनि श्रीसागरेन्दुः मुनीन्द्रः ॥ १० ॥

माणिक्यचन्द्राचार्येण तदङ्घ्रिकमलालिना ।
काव्यप्रकाशसङ्केतः स्वान्योपकृतये कृतः ॥ ११ ॥

रसवक्त्रग्रहाधीशवत्सरे मासि माधवे ।
काव्ये काव्यप्रकाशस्य सङ्केतोऽयं समर्थितः ॥ १२ ॥

अदृष्टदोषात् स्मृतिविभ्रमाच्च
यदर्थहीनं लिखितं मयाऽत्र ।

तत्सर्वमार्यैः परिशोधनीयं
प्रायेण मुह्यन्ति हि ये लिखन्ति ॥ १३ ॥

"शुभमस्तु सर्वजगतां
परहितनिरताः भवन्तु भूतगणाः ।

**दोषाः प्रयान्तु नाशं**
**सर्वत्र सुखी भवतु लोकः ।। १४ ।।"**

**इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते दशमोल्लासः समाप्तश्चायं ग्रन्थः ।**

## सङ्केतः (रुय्यकः)

अन्येऽपीति—तद्यथा विरोधस्यासम्भवो यथा—

**"या धर्मभानोस्तनयाऽपि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः ।**
**कृष्णाऽपि शुद्धेरधिकं विधातृभिर्विहन्तुमंहांसि जलैः पटीयसीः ।।"**

इत्यत्र धर्मभानोस्तनयात्वादीनां शीतलत्वादीनाञ्च धर्माणां भिन्नाधारतया विरोध उक्तः । स च न सम्भवत्येकाश्रयतयैव तस्योपपत्तेः, अन्यथाऽतिप्रसंगः स्यात् । यद्यपि यमुनायास्तज्जलादीनाञ्च तात्त्विकमेकत्वं तथापि शब्दसमर्पितमेषां नानात्वमन्वभिभूयते । अयञ्च विरोधः शाब्द एवेष्यते । तथा च तेषां भिन्नाश्रयतया तदवस्थ एव तस्यासम्भवात्, स चाभिहितवाच्यत्व एव पर्यवस्यति, एकाश्रयतया विवक्षितानां तेषाममुना वाक्येनाभिधानादिति ।

इतीति—विदुषां ध्वनिकृत्प्रभृतीनां य एष मार्गः स्वसिद्धान्तस्तत्तद् ग्रन्थगतत्वेन पृथक् पृथग्व्यवसितोऽप्येकरूपतया प्रतिभासात् । एतेन च महामतीनां प्रसरणहेतुरेष ग्रन्थो ग्रन्थकृताऽनेन कथमप्यसमाप्तत्वात् परेण च पूरितावशेषत्वाद् द्विखण्डोऽप्यखण्डतया यदवभासते तत्र संघटनैव साध्वी हेतुः । न हि सुघटितस्य सन्धिबन्धः कदाचिल्लक्ष्यत इत्यर्थ शक्त्या ध्वन्यते ।

**इति काव्यप्रकाशसंकेते दशम उल्लासः ।**

**समाप्तश्चायं काव्यप्रकाशसंकेतः । कृती राजानकरुचकस्य ।**

## बालचित्तानुरञ्जनी

अवान्तरप्रकरणमुपसंहरति । तदिति । यथासंभविन इति । उद्भटादिभिरुपमादौ लक्षितपरीक्षिताः । अन्य इति । व्यक्तिविवेकादित्युक्त्या समासोक्त्यादौ परिकल्पिताश्च । एवंजातीयका इति । तत्तुल्यः तदीयं च योजनम् विषयान्तरेणान्तेसङ्ग्राह्या पूर्वोक्तयैव सप्तमसमर्थितयैव दोषजात्या अन्तर्भावयोग्यतया पृथक् प्रपञ्चनमप्यनौचित्यायेति । भावः । उक्तमर्थं प्रकरणार्थमुपसंहरति इति संपूर्णमिति । ननु प्राचीनाचार्यमतोल्लङ्घनेन विवेचितमिदमत्राप्रमाणमेव स्यादिति आशङ्क्याह इत्येष इति । विदुषां ध्वनिकारादीनां य एष मार्गः स्वसिद्धान्तः विभिन्नः विप्रकीर्णोऽपि अभिन्नरूपः एकत्र सङ्कलितः प्रतिभासत इति । संपूर्णमिति यत् तत् तद्विचित्रम् । यत् यस्मात् कारणात् अमुत्र ग्रन्थे सम्यग्विनिर्मिता संघटनैव हेतुः । येन पदसंदर्भेण विकीर्णं जातं सङ्कल्पं प्रतिपाद्यत स गद्यसन्दर्भा कृति इति नाप्रामाणिक इति भावः ।

पञ्च क्लेशानजैषुर्जगति सुकृतिनो दुश्चरैर्ये तपोभि-
र्येषां चेतोऽरविन्दे किल पुरहरो वासमङ्गीचकार।
येषां पादारविन्दे स्मृतिरपि जडताहारिणी देहभाजां
तैष्टीकेयं सरस्वत्युपपदविलसत्तीर्थसंज्ञैरकारि ॥ १ ॥

साहित्यकुमुदकाननिद्राविद्राणयामिनीनाथाः।
काव्यप्रकाशटीकां व्यरीरचंस्ते सरस्वतीतीर्थाः ॥ २ ॥

एवं सरस्वतीतीर्थयतिना तेन निर्मिता।
टीका काव्यप्रकाशस्य मुदे स्याद् विदुषां चिरम् ॥ ३ ॥

इति सरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां दशमोऽर्थालङ्कारनिर्णय उल्लासः ॥

## काव्यादर्शः

इत्येष इति। एष मार्गोऽद्भुतं वर्त्म विद्वदादीनां ध्वनिकारादीनां नानाग्रन्थतया विभिन्नोऽप्यनेकरूपोऽपि एकरूपतया यद् भाति तत्र संघटना—विशंस्थुलस्य सुखप्रतीत्यर्थमेकत्र संग्रहः, सैव हेतुः, तद्वशाद् एकात्मताप्रतीतेः। तत्तद्ग्रन्थानामत्र अन्तर्भाव इति भावः।

अथ च सुधियां विकासहेतुग्रन्थोऽयं कथंचिदपूर्णत्वाद् अन्येन पूरितशेष इति द्विखण्डोऽपि अखण्ड इव यद् भाति तत्रापि संघटनैव संनिमित्तम् ॥

स्वीकृत्य कल्पतरुतो मरुतः परागं दृष्टेः क्षतिं विदधते जगतोऽपि किं तैः।
भृङ्गः कृती तु परितः सुमनोमुखेभ्यः पीतं मधूद्वमति येन मदं करोति ॥

॥ छ ॥ इति भट्टश्रीसोमेश्वरविरचिते काव्यादर्शे काव्यप्रकाशसंकेते दशम उल्लासः ॥ छ ॥

## विवेकः

अथास्य ग्रन्थस्य व्यापकत्वमितरग्रन्थेभ्यो वैचित्र्यं दर्शयति—-इतीति-दशभिरुल्लासैरुक्तरूपप्रकारेणेत्यर्थः। विदुषां ध्वनिकृत्प्रभृतीनां सुधियान्। एष मार्गः स्वसिद्धान्तस्तत्तद्ग्रन्थगतत्वेन पृथक् पृथक् व्यवस्थितोऽप्येकरूपतया यत् प्रतिभाति तत्र सङ्घटनैवनिमित्तम्। विक्षिप्तस्य सुखबोधायैकत्र संग्रहः सङ्घटना तद्वशादेवैकात्मताप्रतिभासात्। एतेन महाजनानां प्रसरणहेतोरस्य ग्रन्थस्य सहृदयहृदयाह्लादिकाव्यस्वरूपज्ञानक्रिया प्रयोजनम्। तथा कवेरैहिकामुष्मिकामोदहेतु कीर्त्यादि प्रयोजनम्। श्रोतुः पुनः प्रीतिः प्रयोजनं चतुर्वर्गादिप्राप्तिकारणं व्युत्पत्तिप्रयोजनमुक्तमित्यभिधेयसम्बन्धप्रयोजनोपसंहारः। 'ग्रन्थश्चायं राजानकमम्मटेन कथमप्यसमाप्तत्वात् राजानकालकेन च पूरितावशेषत्वाद् द्विखण्डोऽप्यखण्डतया यदवभासते तत्र संघटनैव समीचीनो हेतु। न हि सुघटितस्य सन्धिबन्धः कदाचिदपि लक्ष्यत इत्यर्थशक्त्या ध्वन्यत इति' (रु. सं. ७६ पृ.)।

**इति तर्काचार्यश्रीश्रीधरविरचिते काव्यप्रकाशविवेके दशम उल्लासः ।**

## दीपिका

प्रकृतार्थमुपसंहारन् ग्रन्थस्य समाप्तिमाचष्टे—तदेतदिति । अन्येप्येवंजातीयका इत्यनुक्ता अप्युक्तानुसारेण मृग्या इत्यर्थः । यथाऽप्रस्तुतप्रशंसायां प्रकृताप्रकृतयो रसानुगुण्यमुत्प्रेक्षायां वर्णनीयविशेषप्रतिपत्तिरूपके विषयिणोः सादृश्यप्रसिद्धिरनुचितार्थत्वं दोषः । क्रमेणोदाहरणम्—

**"सद्वृत्ते महति प्रसादधवले यत्रास्ति बद्धो गुणै-**
**र्यस्ते संयुगहेतुतामुपगतो यत्रापि विश्राम्यति ।**

**तस्याक्षेपपरम्पराभिरभितो दोलायमानस्थिते-**
**रालानस्य मतङ्गजैष कलमा निर्मूलने दुर्ग्रहः ॥"**

अत्र गजस्यालान ग्रहो निर्मूलनग्रहो युक्त एवेति । नह्यालानं गजस्योपकरोति । प्रस्तुतस्य तु कृतघ्नस्य प्रचुरतरोपकारिमहापुरुषदौःस्थ्यापदेशेन प्रयुक्तप्रकृतवदितरयोरसारूप्यम् ।

**"नेत्रद्वयं नीलसरोजकान्ति विभाति कान्तावदनेन्दुबिम्बे ।**
**विधुन्तुदस्योद्ततदन्तदंशत्विषा विभक्तेव कलङ्करेखा ।"** ममायम् ।

अत्र नयनद्वयस्य द्विधाभूतकलङ्कलेखेथोत्प्रेक्षया वर्णनीयकान्तामुखस्य सकलङ्कचन्द्रप्रतीतिरित्यनुचितार्थता ।

**"कैलासः काव्यशम्भोः कुसुमशरकवेर्नाटयानान्दीविशेषः**
**सिद्धान्तः कोपिनीनां त्रिभुवनवलभी कान्तिरस्तप्रतापा ।**

**क्षीराब्धेः कीर्तिलोपस्त्रिदशपरिषदः सुप्रसन्नो गणानां**
**लक्ष्मीलावण्यपक्षी त्रिजगति जयति व्यञ्जनांशुः सुधांशुः ॥"**

अत्र काव्यशशिना नान्दीनिवेशस्य चन्द्रसादृश्यमप्रसिद्धं समासोक्तौ लिङ्गासङ्गतिरसमर्थत्वं दोषः, यावदर्थ विवक्षया कविना पदं निबद्धं तावति तस्य सामर्थ्यविरहात् ।

**'उत्सङ्गे ककुभो निधाय विरुतैरम्भोमुचां स्फोरयन्**
**मन्ये मुद्रितचन्द्रसूर्यनयनं व्योमापि निद्रायते ॥'**

अत्र व्योमपदेन नायकव्यवहारविशेषमाकाशं प्रत्याययितुमिष्टं कविना, न चास्य तावती शक्तिः पुंलिङ्गात्मकसहकारिविरहात् । यत्र तु भाषान्तरे लिङ्गविशेषविधिस्तत्र नास्य दोषस्यावकाशः । यथा मम—उअतिमिरेत्यादि । अत्र सरः शब्दस्य संस्कृते नपुंसकस्यापि न वसन्तप्रावृट्शरदः पुंसीति श्रीमदाचार्यकात्यायनानुशासनात् प्राकृते पुंस्त्वमिति तद्विदां मनसि नोद्वेगं इत्यदुष्टता । अत्यसभ्येन चार्थेन व्याजस्तुतावनुचितार्थमेव, यथा—

"आसीन्नाथ पितामही तव मही माता ततोऽनन्तरं
जाता सम्प्रति साऽम्बुराशिरशना जाया कुलोद्भूतये।
पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा
युक्तं नाम समस्तनीतिविदुषां लोकेश्वराणामिदम्॥"

अत्र भवद्वंशे पृथिवीस्वाम्यमनवच्छेदीति स्तुतौ विवक्षायामपि वाच्यस्यात्यन्तगर्हास्पदत्वेन दूषितता। एवमादयः शास्त्रतो लक्ष्यतश्चानुसन्धेयाः। दोषजात्या दोषपौनरुक्त्यादिना सम्यग् मात्रमपि न्यूनभावराहित्येन। पूर्णे समाप्तमस्माभिर्व्याख्यातं कारिकासमूहरूपमिदमित्यस्माभिर्निबद्धं तद्विवरणरूपम्। काव्यं साङ्गोपाङ्गं लक्ष्यतेऽत्रेति काव्यलक्षणम्। अत्रास्माकमुल्लासदशकव्याख्याने प्रमादादनैपुण्येन वा यद् दर्शितं तत् सूक्ष्मतरबुद्धिभिः पूरणीयमिति सर्वतः शिवम्।

काव्यप्रकाशतरुरेष कुसम्प्रदायव्याख्याविलोलमरुदाकुलितप्रतानः।
सिक्तः पुनश्च प्रतिपल्लवतामुपैतु श्रीचण्डिदासकविवागमृतप्रवाहैः॥

सायं सूर्यात्मजायाः पुलिनपरिसरे बालकैरावृतः सन्
धावन् धावन् [समन्तात्] कृतविविधरवो गोसमूहं विचिन्वन्।
स्वैरं गोपाङ्गनाभिः कृतविविधरसक्रीडनी दैत्यवंश-
ध्वंसी वंशीविलासी ब्रजकुलतिलकः पातु वो गोपवेशः॥

इति कापिञ्जल कुलतिलकषड्दर्शनीयचक्रवर्तिमहाकविचक्रचूडामणिसहृदयगोष्ठीगरिष्ठमहामहोपाध्यायश्री-चण्डीदासकृतौ। काव्यप्रकाशदीपिकायां दशम उल्लासः।

### दर्पणः

पत्रे लिखितं उपसंहार पूर्व ग्रंथसमाप्तिर्दर्शयति वृत्तिकृत्तदेत इति अन्येपीति एवं जातीया एवं दर्शितप्र-कारापेक्षत्वं जात्याक्रांता यथा उत्रेक्षाया वर्णनीय निकर्षप्रतिपत्तिः। व्याजस्तुतौ चात्यंतासत्येनार्थेन व्याजेन स्तुतावनुचितार्थत्वं क्रमेण यथा दृश्यते मुखचन्द्रे ते नेत्रे नीलोत्पले द्विषी। द्विघा भूता कलंकस्य रेखा वाहुदने-नकिं?॥ अत्र वर्णकांतामुखस्य सकलंकचन्द्रत्वप्रतीतिरित्यनुचितार्थेनापि महीन हारश्च मात्रा जायाधुनाधुना वर्षशते च पूर्णेस्थषभवित्रीर्ण परे धारित्री। युक्तं किमेतुदुदसत् प्रभूनां। अत्र पृथिव्याश्च वत्वंत कुलधर्ममिति स्तुते व्यंग्यत्वेपि वाच्यस्यातीवगर्भास्पदत्वमनुभवसिद्धिमिति अनुचितार्थत्वं समासोक्तौ लिंगासंगति रसमर्थत्वं एव-मादयो लक्षतः सात्रनश्च [शास्त्रतश्च] विज्ञेया इत्यर्थः।

संपूर्ण अशेषविवक्षितार्थयुक्ततया पूर्ण समाप्तं। कारिकारूपसूत्रावलिस्वरूपं अस्माकं तद्व्याख्याना-भिव्यक्तं काव्यस्यार्थात् सांगोपांगस्य लक्षणं लक्ष्यतेऽस्मिन्निति। व्युत्पत्या वाक्यजा....पं. लक्ष्मीर्वक्षोर्मुरारेस्विति कवयगतेर्भोगमालांगमौने-

मौर्नि सिंधुः स्वराणामधिवसति विधेर्भावता यावदस्य।

तावत् काव्यप्रकाशाखि न्ववधिगमान्वारभासार्ककोटि-
व्यख्यां विख्यातिमेषा कविमुकुटमणेर्विश्वनाथस्य यावत् [यायात्] ॥ इति

श्रीमन्नारायणचरणारविंदमधुकरालंकारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्याष्टादशभाषानिवासिनीभ जंगसंगीतविद्याविद्याधरकलाविद्यामालतीमधुकरविविधविद्यार्णवकर्णधारसान्धिविग्रहिकमहापात्र श्रीवि-श्वानाथकविराजकृतौ काव्यप्रकाशदर्पणे अर्थालंकारनिर्णयो नाम दशमोल्लासः ॥ शुभं भवतु कल्याणं ॥ संवत् १७३० रामकृष्णचरणे मम भक्तिरस्तु ॥

**साहित्यचूडामणिः**

अवान्तरं प्रकरणमुपसंहरति-तदिति । यथासम्भविन इति । उद्भटादिभिरुपमादौ लंक्षितपरीक्षिताः । अन्य इति । व्यक्तिविवेकयुक्त्या समासोक्त्यां परिकल्पिताश्च । एवंजातीयका इति ।

**तत्तुल्योहस्तदीयं च योजनं विषयान्तरे ।**
**शृङ्खला तस्य शेषे च त्रिधात्र मतिमत्क्रिया ॥**

इति युक्त्या सङ्ग्राह्यः सप्तमे समर्थियैव दोषजात्या अन्तर्भावयोग्यतया न पृथक प्रपञ्चनमौचित्यायेति भावः ।

अथारब्धमखण्डं प्रकरणार्थमुपसंहरति—इति सम्पूर्णमिति । दिष्ट्या प्रारब्धं निर्व्यूढमभूत् । तदलङ्कार-प्राचुर्येण काव्यलक्षणमिदं सम्पूर्णम् ।

अथोल्लासस्य प्रकरणग्रन्थस्य च परिसमाप्तौ ग्रन्थकारो ग्रन्थकर्तृवैदग्ध्यं सावहित्थं विकत्थमान आह—इत्येष इति । तथाहि उद्भटभामहप्रभृतयः सर्व व्यङ्ग्यमर्थं वाच्योपस्कारकारणात् अलङ्कारकक्ष्यानिक्षिप्तमाचक्षते, येन पर्यायोक्ता प्रस्तुतप्रशंसादौ वस्तुमात्रं, रूपकदीपकादावुपमालङ्कारः, रसवत्प्रेयादौ रसादिरपि वाच्योपस्काराय कल्पत इति त्रिविधमपि व्यङ्ग्यमलङ्कारपारतन्त्र्येण प्रत्यपादयन् । वामनोऽपि सादृश्यनिबन्धनायां लक्षणायां "सादृश्याल्लक्षणा वक्रोक्तिः" (अधि० ४, अ० ३, सू० ८) इति वक्रोक्त्यलङ्कारमलक्षयत् । भावालङ्कारमिव रुद्रटो ध्वनिविशेषमलङ्कारशरीरमनुप्रावीविशत् । कुन्तकोऽपि वैदग्ध्यभङ्गिभणितिस्वभावां वक्रोक्तिमेव काव्यजीवित-मुपस्थापयन् व्यापारप्राधान्यादुक्तिवैचित्र्यलक्षणालङ्कारमुखेन चमत्कारमूरीचकार । आचार्यानन्दवर्धनः पुनरभिधा-तात्पर्यलक्षणात्रयोत्तीर्णस्य ध्वननव्यापारस्यावश्याभ्युपगन्तव्यत्वाद् व्यापारस्य च वाक्यार्थत्वायोगात् ध्वनिलक्षणस्य गुणालङ्कारोपकार्यस्य व्यापार्यस्य रसादेः काव्यशरीरगोचरमात्मत्वं समर्थयाञ्चक्रे ।

इत्थं च तत्तद्ग्रन्थेष्वसारविस्तरपरित्यागेन सारसङ्कोचस्वीकारेण सौष्ठवोत्तरमुपकल्पिता सङ्घटनैव हेतुः निबन्धनं यद् आश्चर्यलक्षणाया असम्भावनाया अनुज्जृम्भणं "तद्भूमिकाः सर्वदर्शनस्थितय" इति न्यायात् । तन्मदीयेषु परिमलप्रभृतिषु प्रबन्धेष्वनुसन्धेयमिति सिद्धम् ।

**इति रसमुपकर्तुं व्याकृतो व्यासतोऽभू-**
**न्निपुणमतिविवेच्यो वाच्यभूषाप्रपञ्चः ।**

ध्वनिमुखरितमार्गाः पर्यवस्यन्त्यगाधे
सरित इव समुद्रे यत्र वाचो विचित्राः ॥

केचिद् वाचि परिस्खलन्ति कतिचिद्वाच्ये तथा का कथा
दूरोच्छूनचमत्क्रियार्हरमणीप्रौढावगाढे ध्वनौ।
संरम्भो मम किंफलोऽयमथवा जागर्ति तेषामपि
प्रत्यग्ज्योतिषि पर्वणि प्रतिफलन् सर्वोत्तरो धूर्जटिः ॥

दिशं दिशमविक्लवप्रहितोलोचनः सञ्चर-
न्नधीरपुरुषोज्झिते ध्वनिमहाध्वनि प्रेक्ष्यताम्।
अयं स परमो मम प्रतिभटोऽस्तु कोऽप्यस्ति चे-
दयं चतुरचण्डिमा विरुदडिण्डिमस्ताड्यते ॥

इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां
साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां दशम उल्लासः ॥ १० ॥

## सम्प्रदायप्रकाशिनी

तदेतदाह—अत्राचेतस इत्यादि।

एवमन्येऽपि पूर्वोक्तदोषजात्यन्तर्भूता इति दर्शयन् दोषप्रस्तावं निगमयति—तदेत इत्यादि। एवञ्जातीयकाः शब्दार्थोभयविषयाः।

शास्त्रं परिसमापयति—इति सम्पूर्णमिति। इतीति प्रथमोल्लासे प्रयोजनादिसहितस्य काव्यस्य सामान्यतः, द्वितीयेऽर्थधर्मिणोः शब्दार्थयोः, तृतीयेऽर्थव्यञ्जकतायाः, चतुर्थे ध्वनेः, पञ्चमे गुणीभूतस्याङ्गस्य, षष्ठे चित्रस्य, सप्तमे दोषाणाम्, अष्टमे गुणानां, नवमे शब्दालङ्काराणां, दशमे अर्थालङ्काराणां विवेचनप्रकारः प्रणेत्रा निर्दिश्यते। इदमिति निबन्धनं काव्यप्रकाशसंज्ञं लक्षणशास्त्रम्। सम्पूर्णमिति परिसमाप्तिप्रचयाप्तिभ्यां समस्तविद्वत्परितोषनानापुरुषार्थावाप्तिपर्यन्ततया प्रणीतम्। इति शिवम्।

प्रान्ते श्लोकमाह—इत्येष इति। निरूपणप्रकारभेदेऽपि ध्वनिमार्ग एवायमिति यदिह विदुषां सम्प्रत्ययः, न तच्चित्रं, सम्यक् समुचिताभिमतन्यायानुसारेण वैविध्येन च निर्मिता शास्त्रसङ्घटनैव तत्र हेतुर्यतः। निरूपणप्रकारवैचित्र्येण ध्वनिदर्शनमेवेत्थं विद्वत्प्रतिपत्तिसाक्षिकं यत् प्रतिष्ठाप्य प्रकाशितं तदस्मासु न चित्रमिति भावः। यद्वा मन्मथग्रन्थशेषं परिपूरितवतोऽप्यमलर्कस्य स्वापेक्षः श्लोकः। एष मार्गः ग्रन्थसन्दर्भसरणिः विदुषां विभिन्नोऽपि परस्परविलक्षणोऽपि अभिन्नरूपो यत् प्रतिभासते चित्रं विनिर्मिता स्वां रेखां परित्यज्य मन्मथविच्छित्त्यनुसारेण विविधमस्माभिर्विरचिता ग्रन्थसङ्घटनैव हेतुः। इतरसरण्यनुसारेणापि प्रणयनं निपुणत्वेन द्योतितमिति शिवम्।

सम्यक् समापिता सेयं श्रीविद्याचक्रवर्तिना।
टीका काव्यप्रकाशस्य सम्प्रदायपप्रकाशिनी॥

काव्यप्रकाशेऽलङ्कारसर्वस्वे च सचेतसाम्।
येनादरो महांस्तेन व्याख्यातमुभयं सह॥

यस्मिन्नंशे झटिति न भवत्यर्थसंवित्तिरस्यां
सोंऽशो मूले विषमविषमो मूलमालोक्य भूयः।

तत्सङ्गत्या पुनरिह मनाग् दृष्टिराधीयते चेद्
भावः सूक्ष्मो व्रजति विदुषां हस्तमुक्तामणित्वम्॥

सूक्ष्मामव्याकुलामत्र शास्त्रयुक्त्युपबृंहिताम्।
मीमांसामुपजीवन्तु कृतिनः काव्यतान्त्रिकाः॥

इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वजपैशाचीपरमेश्वरापभ्रंशराज-हंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्यकाव्यमीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरम्-योगीश्वरश्रीमत्त्रिभुवनविद्याचक्रवर्तिवंशावतंसमहाकविश्रीविद्याचक्रवर्तिकृतौ सम्प्रदायप्रकाशिन्यांकाव्य-प्रकाशबृहट्टीकायां दशम उल्लासः॥

मधुमती

अन्येऽपीति। यथा—

'या धर्मभासः तनयाऽपि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः।
कृष्णाऽपि शुद्धेरधिकं विधायिभिः
विहन्तुमंहांसि जलैः पटीयसी॥'

इत्यत्र तात्पर्यविषयीभूतस्य विरोधालङ्कारस्य, विरुद्धयोः सामानाधिकरण्यप्रतिभानमूलत्वात्, अत्र उष्ण-त्वादीनां वैयधिकरण्येन निर्देशात् अनभिहितवाच्यत्वं इति।

सम्पूर्णम् सम्यगेव पूर्णम्, लेशतोऽपि न्यूनताविरहादिति शम्।

अच्युतमन्त्रितनूभव-
मन्त्रिमनोधरसुतस्य गुणसिन्धोः।
गौरीतनयस्यैषा
श्रीरविपाणेः कृतिर्जयति॥ १॥

पित्रा काव्यप्रकाशस्य
कृतो यः काव्यदर्पणः
युक्तिचूर्णेन तस्येदं
मार्जनं विहितं मया॥ २॥

मत्तोऽनतिचिरं जाता
मृदुपदविन्यासजनितजनकुतुका।
भुवि मधुमति नाम्ना
टीका कन्या च गच्छु ख्यातिम्॥ ३॥

समस्तेत्यादि महासामन्ताधिपति–महामहोपाध्याय-मन्त्रि-मनोधरात्मज-श्रीरविपाणिविरचितायां काव्यप्रकाश-टीकायां मधुमत्यां दशमः उल्लासः ग्रन्थश्चायं समाप्तः

## विस्तारिका

अन्येऽपि इति।

या धर्मभासस्तनयापि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः।
कृष्णापि शुद्धेरधिकं विधायिभि-
र्विहन्तुर्महांसि जलैः पटीयसी॥

इत्यत्र प्रतिपाद्यविरोधालङ्कारस्य सामानाधिकरण्यप्रतिसमानविरुद्धद्वयमूलत्वादत्र चोलत्वादीनां वैयधिकरण्येनैव निर्देशादनभिहितवाच्यत्वमित्यादि स्वयमूहनीयम्।

जगदानन्दकन्दाय कृष्णाय परमात्मने।
योगेश्वराय हरये तस्मै विश्वात्मने नमः॥

इति परमानन्दचक्रवर्तिकृतायां काव्यप्रकाशविस्तारिकायामर्थालङ्कारनिरूपणं नाम दशमोल्लासः।

॥ सम्पूर्णेयं काव्यप्रकाशविस्तारिका॥

## सारबोधिनी

प्रस्तुतस्य मन्दमतेरीश्वरस्य लाभान्न पुनः कथनं युक्तमिति एवंजातीयका इति। यथा

या धर्मभासस्तनयापि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः।

कृष्णापि शुद्धेरधिकं विधायिभिर्विहन्तुर्महांसि जलैः पटीयसी।

अत्र धर्मभासस्तनयत्वादीनां शीतलत्वादीनां च विरोध उक्तः । स च भिन्नाधारतयैव निर्देशान्न संभवति । एकाश्रयत्वेनैव विरोधस्य निरूपितत्वादित्यनभिहितवाच्यत्वमेव, इत्यादि स्वयमूहनीयमिति दिक् ।

**इति श्रीमहामहोपाध्यायश्रीविष्णुभट्टाचार्यचक्रवर्तिपुत्रश्रीवत्सलाञ्छनभट्टाचार्यकृतौ काव्यप्रकाशटीकायां सारबोधिन्यां दशम उल्लासः । श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः । श्रीमहागणपतये नमः ।**

**नरसिंहतनूजेन सखारामेण धीमता ।**
**काव्यप्रकाशगा व्याख्या लिखिता गुरुतुष्टये ॥**

सं. १८९० कार्तिक दशमी ४ तद्दिने समाप्तोऽयं ग्रन्थः ।

## काव्यप्रदीपः

तदेतेऽलंकारदोषा यथासंभवमन्येऽप्येवंजातीयकाः प्रोक्तजात्यन्तर्भाविता इति पृथग्न प्रतिपादनमर्हन्तीति कल्याणमास्ताम् ।

**सम्पूर्ण काव्यलक्षणम् ।**

**ज्येष्ठे सर्वगुणैः कनीयसि वयोमात्रेण पात्रे धियां**
**गात्रेण स्मरगर्वखर्वणपरे निष्ठा प्रतिष्ठाश्रये ।**
**श्रीहर्षे त्रिदिवं गते मयि मनोहीने च कः शोधये-**
**दत्राशुद्धमहो महत्सु विधिना भारोऽयमारोपितः ॥**

**परिशीलयन्तु सन्तो मनसा संतोषशीलेन ।**
**इममद्भुतं प्रदीपं प्रकाशमपि यः प्रकाशयति ॥**

**दीपिकाद्वितयं कन्ये प्रदीपद्वितयं सुतौ ।**
**स्वमतौ सम्यगुत्पाद्य गोविन्दः शर्म विन्दति ॥**

**इति महामहोपाध्यायश्रीगोविन्दविरचिते काव्यप्रदीपेऽर्थालंकारनिर्णयो नाम दशम उल्लासः ।**

## काव्यप्रकाशखण्डनम्

नवीनास्तु एतान् दोषान् उक्तदोषेष्वन्तर्भावयन्तीति [प० ६१,१] युक्तमुत्पश्याम इत्युपरम्यत इति ॥

**कवेर्गिरां यद् यदवादि दूषणं पुरातनैर्गड्डरिकाप्रवाहतः ।**
**इदं सुवर्णे कृतमस्य खण्डनं मया बुधानां हृदयस्य भूषणम् ॥ १ ॥**

**प्रतापकृद्भानुरिवाहितानामानन्दकृच्चन्द्र इवेतरेषाम् ।**
**युक्तं तवैतत् किल वाचकेन्द्रश्रीभानुचन्द्रान्वयसंभवस्य ॥ २ ॥**

भानुः प्रतापं न च दृक्प्रमोदं दृग्मोदमिन्दुर्न पुनः प्रतापम्।
तनोषि चैतद् द्वयमप्यधीश! तस्मादमूभ्यामधिकोऽसि नूनम्॥ ३॥

कथं प्रभोऽपाकुरुषे प्रताप-यशः प्रभाभिर्वत भानुचन्द्रौ।
त्वं भानुचन्द्रानुचरोत्तमोऽपि यद्वा चरित्रं महतामचर्च्यम्॥ ४॥

स्वस्यापरेषामपि कार्यसिद्धि-विधानतः सिद्धिपदप्रतिष्ठा।
जगज्जनानन्दविधायकत्वात् त्वदाह्वये चन्द्रपदव्यवस्था॥ ५॥

प्रस्थापिताः स्वविषयात् शमिनः समेऽपि
श्रीशाहिना वत विनैव भवन्तमेकम्।

यद्वा युगान्तसमयोत्थिमारुतेन
शैलाः समेऽपि चलिता न तु नाकिशैलः॥ ६॥

॥ इयं शिष्यकृता प्रशस्तिः ॥

॥ इति पादशाहश्रीअकब्बरसूर्यसहस्रनामाध्यापक-श्रीशत्रुञ्जयतीर्थकरमोचनाद्यनेकसुकृतविधायक-

महोपाध्याय-श्रीभानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादशाहश्रीअकब्बर-

प्रदत्त-षु (ख) स्फहमापराभिधानमहोपाध्याय-श्रीसिद्धिचन्द्रगणिविरचिते

काव्यप्रकाशष (ख) ण्डने गुणनिर्णयो नाम दशम उल्लासः समाप्तः॥

संवत् १७३० वर्षे अश्व (श्वि) न शुदि ५ गुरौ लिखितम्॥श्रीः॥

## आदर्शः

उक्तेष्वन्तर्भन्तीत्युपसंहृत्य दर्शयति—तदेत इति। सम्पूर्णमिदं काव्यलक्षणमिति। तददोषौ शब्दार्थाविति। यत् काव्यलक्षणं तदुत्थापिताकाङ्क्षया शब्दतदर्थ-तद्द्वयदोष-तद्द्वयगुण-तद्द्वयालङ्काराणामुक्तया सम्पूर्णमित्यर्थः।

'वैषम्योद्भटनक्रचक्रसतताक्रान्तादशक्तात्मनां
दुष्प्रापैः प्रचितात् समर्थनिचयैः काव्यप्रकाशार्णवात्।

प्राप्तार्थात्मकमौक्तिकालिघटिता हारवलीयं सतां
भच्चाचार्यमहेश्वरेण रचिता काव्यप्रकाशोपरि॥

ये काव्यप्रतिदूषणैकनिरतास्ते केऽपि तेभ्यो नमो
ये तर्कैकरसाः कृतोऽञ्जलिरयं तेभ्योऽपि दूरान्मया।

**ये शब्दानुभवैकसंस्कृतहृदः काव्यार्थमर्मस्पृशो**
**द्वित्रास्ते जगतीति तान् प्रति मयैतावान् प्रयासः कृतः।**

**काव्यप्रकाशस्य कृता गृहे गृहे टीका तथाऽप्येष तथैव दुर्गमः।**
**सुखेन विज्ञातुमिमं य ईहते धीरः स एतां निपुणं विलोकताम्॥**

**इति श्रीमम्मटभट्टविरचितस्य काव्यप्रकाशस्य टीकारूपे श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यकृते आदर्शे ग्रन्थसमापकोऽर्थालङ्कारस्य दशमः प्रतिबिम्बः॥ १०॥**

## सुधासागरः

तदेत इति स्पष्टम्। एवंजातीयकाः। यथा—

**दिलीप इव राजेन्दुरिन्दुः क्षीरनिधाविव।**

इत्यत्र राजनि इन्दुतादात्म्यारोप उपमां विरुणद्धि। इत्यादि स्वयमूह्यम्।

सम्पूर्णमिदं काव्यलक्षणमिति। सम्यक् पूर्णलेशतोऽपि न्यूनताविरहादितिभावः। काव्यं लक्ष्यते स्वरूपतो विशेषतश्च ज्ञाप्यतेऽनेनेति काव्यलक्षणम्, प्रकृतग्रन्थः समाप्त इत्यर्थः।

अयमत्र सङ्ग्रहः।

ननु व्यञ्जनयैव ब्रह्मबोध इत्युक्तम्, तन्न स्पष्टीकृतमिति चेत्। अत्र ब्रूमः। महावाक्यैकवेद्यं ब्रह्मात्म्यैक्यमिति वेदान्तसिद्धान्तः। 'औपनिषद् पुरुषं पृच्छामि' इति श्रुतेः। उपनिषत्प्रधानं च तत्त्वमसीत्यादि महावाक्यमेव, निरवकाशत्वात्। द्वैतन्तु पञ्चकोशादिवदुपायभूतम्। तत्र वाच्यसम्बन्धो लक्षणा। सा च द्विधा—केवललक्षणा लक्षितलक्षणा च। केवललक्षणा त्रिविधा। जहल्लक्षणाऽहल्लक्षणा जहदजहल्लक्षणा चेति। वाच्यार्थपरित्यागेन तत्सम्बन्ध्यर्थान्तरे वृत्तिः जहल्लक्षणा। यथा—'गङ्गायां घोष' इत्यत्र गङ्गापदस्य तीरे शक्यार्थपरित्यागेन तत्सम्बन्ध्यर्थान्तरे वृत्तिः। अजहल्लक्षणा यथा 'मञ्चाः क्रोशन्ति' इत्यत्र मञ्चपदस्य मञ्चस्थे। शक्यैकदेशपरित्यागेनैकदेशवृत्तिर्जहदजहल्लक्षणा। यथा—'सोऽयं देवदत्त' इत्यत्र सोऽयमिति पदयोरतीतवर्त्तमानकालवैशिष्ट्यपरित्यागेन केवलं देवदत्तपिण्डे। एवं तत्त्वमसीत्यत्र तत्त्वंपदयोरीश्वरत्वजीवत्वपरित्यागेनाखण्डचैतन्ये जहदजहल्लक्षणेति वेदान्तिनः प्रतिपादयन्ति। न चात्राऽसङ्गे ब्रह्मणि लक्षणायाः सम्भवः।, 'असंयोगोऽयं पुमान्' इति श्रुतेः। किन्तु ब्रह्मात्मैक्यबोधिनी वृत्तिर्व्यञ्जनैव। किं तर्हि शङ्करप्रभृतिभिर्महद्भिर्वाच्यार्थपरित्यागेन लक्ष्ये समन्वयोऽङ्गीकृतोऽप्यप्रामाणिकः? क एवं शक्नोति वक्तुम्? किन्तु नैयायिकमीमांसकानुसारेण व्यञ्जनैव तैर्लक्षणापदेन व्यवहृतेति ब्रूमः।

**अद्वैततद्वैतधाम प्रकटमधिवसाम्यत्र वेदोः प्रमाणं**
**सर्वत्र श्रावयित्वा सकलवत्सु समादाय दूरं पलाय्य।**

**वैकुण्ठाधीश्वरोऽभूत्तदखिलवशर्तिं चोरयित्वा प्रयातो**
**भूमौ गोपीगृहेभ्यो दधिघृतपटहृद् याति वृन्दावनान्तः॥**

इत्थं कोलाहलेनाकुल इव मुरलीं बर्हिपत्राणि गुञ्जा–
हारं हत्वा वनान्तादपगत इह मे स्वान्तमाहर्त्तुकामः।
प्राणाभ्यन्तर्गतो यो वसति घनतनुः पीतवासाः कृतोऽयं
ग्रन्थस्तेनापहर्तुं निखिलबुधवरोद्दामपाण्डित्यगर्वम्॥ २॥

राजानो ह्यविवेकिनः क्षितितले प्रायो द्विजाः पण्डित–
म्मन्या न स्तुतिमाचरन्ति सुधियां नो वा विदन्ति श्रमम्।
साकल्यं तु तथापि गोपशिशुकः कुत्रापि कस्मिंश्चिद–
प्यार्द्रान्तःकरणे करिष्यति सुधासिन्धोः परं सज्जने॥ ३॥

संवद्ग्रहाश्वमुनिभूज्ञाते मासे मधौ सुदि।
त्रयोदश्यां सोमवारे समाप्तोऽयं सुधोदधिः॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षितभीमसेनकृते काव्यप्रकाशविवरणे सुधासागरेऽर्थालङ्कारनिर्णयो नाम दशमं उल्लासः॥ १०॥